Digitized By Siddhanta eGangotri Gyaan Kosha

मौलान्स्थिराञ्शुचीन्। तैः सार्धं चिन्तयेद्राजा विप्रेणाथ ततः स्वयम्' इति। तथा च कामान्दकीये—'इति स्म राज्यं सकलं समीरितं परा प्रतिष्ठास्य धनं सुसाधनम्। गृहीतमेतद्विपुलेन मन्त्रिणा त्रिवर्गनिष्पत्तिमुपैति शाश्वतीम्॥ राज्यभारावसन्नानां राज्ञां किल पदे पदे। स्थिरवृत्ताः कुलामात्याः स्वैरं विश्रान्तिभूमयः' इति। एतादृशस्य राज्ञो दशरथस्य सर्वधर्मानुष्ठानकर्तुः सुतोदयप्रयुक्तो धर्मो नासीत्। पुत्रोत्पत्तेश्च ऋणनिवर्तकत्वं नरकोद्धारकत्वम् उत्तमलोकप्रापकत्वं वंशाभिवृद्धिकरत्वं च श्रुतावुक्तम्। ऋणनिवर्तकत्वे तावत्— जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते, ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री' इति। नरकोद्धारकत्वे च 'पुन्नाम्नो नरकात्त्रायत इति पुत्रः' इति। उत्तमलोकप्रापकत्वे च 'नापुत्रस्य लोकोऽस्ति' इति। वंशाभिवृद्धिकरत्वे च 'प्रजातन्तुं मा व्यवच्छेत्सीः' इति। बोधायनोऽपि— 'पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते। अथ पुत्रस्य पौत्रेण नाकमेवाधिरोहति' इति।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

'सप्तावरान्सप्त पूर्वान्षडन्यानात्मसप्तमान् । सत्पुत्रमधिगच्छानस्तारयत्येनसो भयात् । तस्मात्प्रजासंतानमुत्पाद्य फलमवाप्नोति । तस्माद्यत्नवान्प्रजामुत्पादयेदात्मनः फललाभाय । तस्मात्पुत्रं चोत्पाद्यात्मानमेवोत्पादयति इति विज्ञायते 'आत्मा वै पुत्रनामासि' इति । एवं द्वितीय आत्मा जीवता द्रष्टव्यो यः पुत्रमुत्पादयति स यथा भवति' इति । तथा च आदिपर्वणि कुन्तीं प्रति पाण्डुवचनम्—'अप्रजस्य महाभागे न द्वारं प्रतिचक्षते । देहनाशे ध्रुवो नाशः पितॄणामेव निश्चयः । ऋणैश्चतुर्भिः संयुक्ता जायन्ते मानवा भुवि । पितृदेवर्षिमनुजदेवैः शतसहस्रशः ॥ एतानि तु यथाकालं यो न बुध्यति मानवः । न तस्य लोकाः सन्तीह धर्मवत्सु प्रतिष्ठिताः ॥ यज्ञैस्तु देवान्प्रीणाति स्वाध्यायैस्तपसा मुनीन् । पुत्रैः श्राद्धैः पितॄंश्चैव आनृशंस्येन मानवान् ॥ अपत्यं नाम लोकेषु प्रतिष्ठा धर्मसंहिता । इति कुन्ति विदुः प्राज्ञाः शाश्वतं धर्ममास्थिताः ॥ इष्टं दत्तं तपस्तप्तं नियमाश्च स्वनुष्ठिताः । सर्वमेवानपत्यस्य न पावनमिहोच्यते' । भारते आदिप-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


वेणि आस्तिक्ये— 'एतस्मिन्नेव काले तु जरत्कारुर्महातपाः । चचार पृथिवीं कृत्स्नां यत्र सायंगृहो मुनिः ।। चरन्दीप्त्या महातेजा दुश्चरामकृतात्मभिः । तीर्थेष्वाप्लवनं कुर्वन्पुण्येषु विचचार ह ।। वायुभक्षो निराहारः शुष्यन्नहरहर्मुनिः । स ददर्श पितॄन्गर्ते लम्बमानानधोमुखान् ।। एकतन्त्वावशिष्टं वै वीरणस्तम्बमाश्रितान् । तं च तन्तुं शनैराखुमाददानं बिलाश्रयम् ।। निराहारान्कृशान्दीनान्गर्तस्थांस्त्राणमिच्छतः । उपश्रुत्य स तान्दीनान्दीनरूपोऽभ्यभाषत ।। के भवन्तोऽवलम्बन्ते वीरणस्तम्बमाश्रिताः । कृच्छ्रामापदमापन्नाः प्रियं किं करवाणि वः ।। तपसोऽस्य चतुर्थेन तृतीयेनापि वा पुनः । अर्धेन वापि निस्तर्तुमापदं ब्रूत मा चिरम् ।। अथ वापि समग्रेण तरन्तु तपसा मम । पितरः— वृद्धो भवान्ब्रह्मचारी यो नस्त्रातुमिहेच्छति ।। न तु विप्राग्र्य तपसा शक्यमेतद्व्यपोहितुम् । अस्ति नस्तात तपसः फलं प्रवदतां वर ।। संतानप्रक्षयात्तस्मिन्पतामो निरयेऽशुचौ । संतानः परमो धर्म एवमाहुर्मनीषिणः ।। यायावरा नाम वयमृषयः संशित-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


व्रताः । लोकात्पुण्यादिह भ्रष्टाः संतानप्रक्षयाद्विभो ॥ प्रनष्टं नस्तपः पुण्यं न हि नस्तन्तुरस्ति वै । जरत्कारुरिति ख्यातो वेदवेदाङ्गपारगः ॥ नियतात्मा महात्मा च सुव्रतः सुमहातपाः । तेन स्म तपसो लोभात्कृच्छ्रमापादिता वयम् ॥ न तस्य भार्या पुत्रो वा बान्धवो वास्ति कश्चन। तस्माल्लम्बामहे गर्ते नष्टसंज्ञा ह्यनाथवत् । यांस्तु पश्यसि नो ब्रह्मन्वीरणस्तम्बमाश्रितान् ॥ सोऽद्यास्माकं कुले तन्तुरासीत्स कुलवर्धनः । यानि पश्यासि वै ब्रह्मन्मूलानीमानि वीरुधः ॥ एते नस्तन्तवस्तात कालेन परिभक्षिताः । यतस्त्वं पश्यसि ब्रह्मन्मूलमस्यार्धभक्षितम् ॥ तत्र लम्बामहे सर्वे सोऽप्येकस्तपसि स्थितः । यमाखुं पश्यसि ब्रह्मन्काल एष महाबलः ॥ स तं तपोरतं मन्दं दशनैः क्षिपते तुदन् । जरत्कारुं तपोलुब्धं मन्दात्मानमचेतसम् ॥ छिन्नमूलान्परिभ्रष्टान्कालोपहतचेतसः । नरकस्थान्प्रपश्यास्मान्यथा दुष्कृतिनस्तथा । अस्मासु पतितेष्वत्र सह पूर्वैः सहान्वयैः । छिन्नः कालेन सोऽप्यत्र गन्ता वै नरकं ततः ॥ तपो वाप्यथ वा यज्ञो यज्ञा-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


न्यत्पावनं महत् । तत्सर्वं न समं तात संतत्येति सतां मतम् ॥ एतच्छ्रुत्वा जरत्कारुर्दुःखशोकपरायणः । उवाच स्वान्पितॄन्दुःखाद्बाष्पसंदिग्धया गिरा ॥ अहमेव जरत्कारुः किल्बिषी भवतां सुतः । एवं दृष्ट्वा तु भवतः शकुन्तानिव लम्बतः ॥ मया निर्वर्तिता बुद्धिर्ब्रह्मचर्यात्पितामहाः । करिष्ये वः प्रियं कामं निवेक्ष्ये नात्र संशयः' । हरिवंशेऽपि सुपुत्रकामां रुक्मिणीं कृष्णो निजगाद— 'पुत्रेण लेभिरे लोकान्सता कामदुहो हि मे ॥ नरकं पुदिति ख्यातं दुःखं च विबुधा विदुः । पुतस्त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च ॥ अनन्ताः पुत्रिणो लोकाः पुरुषस्य प्रिये शुभाः । पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् ॥ तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । पुत्रवन्तं बिभेतीन्द्रः किं नु तेनाजितं भवेत् ॥ नापुत्री विन्दते लोकान्कुपुत्राद्वन्ध्यता वरा । कुपुत्रो नरको यस्मात्सुपुत्रः स्वर्ग एव हि ॥ तस्माद्विनीतं यत्पुत्रं श्रुतवन्तं दयापरम् । विद्या च विनयो यस्मात्तस्मात्पुत्रं सुधार्मिकम् ॥ इच्छेत्पुत्रं पुत्रकामः पुरुषो यत्नवान्बुधः' इति । एतादृशः पुत्रो

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

नास्तीति अष्टमसर्गे उक्तम्—

**तस्य त्वेवंप्रभावस्य धर्मज्ञस्य महात्मनः।**
**सुतार्थं तप्यमानस्य नासीद्वंशकरः सुतः॥**

अतः पुत्रोत्पत्त्युपायं चिन्तयतो धर्मप्रधानस्यास्य दशरथस्य प्राचीनभवपरम्परासादितसुकृतपरिपाकवशात् प्रकृष्टधर्म एवाभिलषितसाधने बुद्धिरासीत्—

**चिन्तयानस्य तस्यैवं बुद्धिरासीन्महात्मनः।**
**सुतार्थं हयमेधेन किमर्थं न यजाम्यहम्॥**

इति। तथा च अश्वमेधस्य पुत्रोत्पादकत्वमत्रैव स्फुटम्। प्रकृष्टत्वं च सकलपापनिवर्तकत्वाद्ब्रह्मलोकप्रापकत्वात् मुक्तिजनकत्वाच्च। पापनिवर्तकत्वं च 'सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इति श्रुतेः। ब्रह्मलोकप्रापकत्वं च 'तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत् तान्वायुरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधयाजिनो गच्छन्ति' इति श्रुतेः। तस्यैवोपासनासहितस्य समष्टिहिरण्यगर्भभावप्रापकत्वमुक्तं बृहदारण्यके— 'उषा

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वा अश्वस्य' इत्यारभ्य 'अप पुनर्मृत्युं जयति' इत्यन्तेन । एवं महाफलत्वात्सर्वोत्कृष्टोऽयमश्वमेधः । तथा च मनुः— 'ब्रह्महत्याश्वमेधाभ्यां न परं पुण्यपापयोः' इति । किं बहुना ? यतः यदपेक्षया उत्कृष्टं पापं नास्ति सापि ब्रह्महत्या अन्यदीयाश्वमेधावभृथस्नानेन मुच्यते । तथा चापस्तम्बाचार्यः— 'ब्रह्महा आश्वमेधिकं वावभृथमवेत्य मुच्यते' इति । तथा अन्यदापि 'येऽश्वस्य हुतस्य गन्धमाजिघ्रन्ति, सर्वे ते पुण्यलोका भवन्तीति विज्ञायते । सहपुण्यकृतः पापकृतश्च हस्तसंरब्धा ग्राममभ्युदायन्ति सर्वे ते पुण्यलोका भवन्तीति विज्ञायते' इति । महापुरुषः पुत्रत्वेन भावीत्यतोऽप्येवं सर्वोत्कृष्ट एव धर्मे बुद्धिरासीत् ॥

ततोऽब्रवीदिदं राजा सुमन्त्रं मन्त्रिसत्तमम् ।
शीघ्रमानय मे सर्वान्गुरूंस्तान्सपुरोहितान् ॥

ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः ।
समानयत्स तान्सर्वान्समस्तान्वेदपारगान् ॥


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् ।
पुरोहितं वसिष्ठं च ये चान्ये द्विजसत्तमाः ॥

तान्पूजयित्वा धर्मात्मा राजा दशरथस्तदा ।
इदं धर्मार्थसहितं श्लक्ष्णं वचनमब्रवीत् ॥

मम लालप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ।
तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ॥

तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा ।
कथं प्राप्स्याम्यहं कामं बुद्धिरत्र विचार्यताम् ॥

ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् ।
वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखेरितम् ॥

ऊचुश्च परमप्रीताः सर्वे दशरथं वचः ।
संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् ॥

सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ।
सर्वथा प्राप्स्यसे पुत्रानभिप्रेतांश्च पार्थिव ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता ।
ततः प्रीतोऽभवद्राजा श्रुत्वा तद्द्विजभाषितम् ॥

अत्र महर्षिभिरपि अनुग्रहं कृत्वा फलमवश्यंभावीति निश्चित्य कर्मारम्भोऽभ्यनुज्ञातः आ सर्गसमाप्तेः । नवमसर्गे—

एतच्छ्रुत्वा रहः सूतो राजानमिदमब्रवीत् ।
ऋत्विग्भिरुपदिष्टोऽयं पुरावृत्तो मया श्रुतः ॥

सनत्कुमारो भगवान्पूर्वं कथितवान्कथाम् ।
ऋषीणां संनिधौ राजंस्तव पुत्रागमं प्रति ॥

काश्यपस्य तु पुत्रोऽस्ति विभण्डक इति श्रुतः ।
ऋश्यशृङ्ग इति ख्यातः तस्य पुत्रो भविष्यति ॥

सवने नित्यसंरुद्धो मुनिर्वनचरः सदा ।
एतस्मिन्नेव काले तु रोमपादः प्रतापवान् ॥

अङ्गेषु प्रथितो राजा भविष्यति महाबलः ।
तस्य व्यतिक्रमाद्राज्ञो भविष्यति सुदारुणा ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


अनावृष्टिः सुघोरा वै सर्वभूतभयावहा ॥
अनावृष्ट्यां तु वृत्तायां राजा दुःखसमन्वितः ।

ब्राह्मणाञ्छ्रुतवृद्धांश्च समानीय प्रवक्ष्यति ॥
वक्ष्यन्ति ते महीपालं ब्राह्मणा वेदपारगाः ।

विभण्डकसुतं राजन्सर्वोपायैरिहानय ॥
आनीय च महीपाल ऋश्यशृङ्गं सुसत्कृतम् ।

प्रयच्छ कन्यां शान्तां वै विधिना तेन सत्कृतः ॥
आनीतोऽवर्षयद्देवं शान्ता चास्मै प्रदीयते ।

ऋश्यशृङ्गस्तु जामाता पुत्रांस्तव विधास्यति ॥
सनत्कुमारकथितमेतावद्व्याहृतं मया ॥

अनेन नवमसर्गेण ऋश्यशृङ्गस्य भगवतः अङ्गदेशे पादन्यासमात्रेण सकलराजदोषनिरसनेन देवो ववर्षेति प्रतिपादितम् । एतस्य विस्तरो दशमेऽभिहितः । एकादशे सर्गे—

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तं तु राजा दशरथो यशस्कामः कृताञ्जलिः ।
ऋष्यश्रृङ्गं द्विजश्रेष्ठं वरयिष्यति धर्मवित् ॥

यज्ञार्थं प्रसवार्थं च स्वर्गार्थं च नरेश्वरः ।
लभते च स तं कामं द्विजमुख्याद्विशांपतिः ॥

पुत्राश्चास्य भविष्यन्ति चत्वारोऽमितविक्रमाः ।
वंशप्रतिष्ठानकरास्त्रिषु लोकेषु विश्रुताः ॥

एवं स देवप्रवरः पूर्वं कथितवान्कथाम् ।
स त्वं पुरुषशार्दूल तमानय सुसत्कृतम् ॥

स्वयमेव महाराज गत्वा सबलवाहनः ।
अनुमान्य वसिष्ठं च सूतवाक्यं निशम्य च ॥

वसिष्ठेनाभ्यनुज्ञातो राजा संपूर्णमानसः ।
सान्तःपुरः सहामात्यः प्रययौ यत्र स द्विजः ॥

अनेन प्राचीनऋत्विगभ्यनुज्ञानेनैव अन्य आनेयः, न तु तदतिक्रमणेनेति सूचितम् । तथा च बोधायनः—

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


योऽस्य संस्तुततमः स्यात्तं प्रथमं वृणीत तेन सचिवेनान्यं लिप्सेतेति । तथा तस्य चेत्पूर्वपुरुषैर्वृताः स्युस्तानेव नातिवृणीत । अन्यवच्छिन्नाश्चेत्कौलेनाध्ययनेन मातुषेण शीलवृत्ताभ्यामिति । प्राचीनऋत्विगभ्यनुज्ञानेनैवान्य आनेयो न तु तदतिक्रमेणेत्ययमर्थोऽन्वयव्यतिरेकाभ्यां फलमुखेन स्पष्टीक्रियते । अन्वयस्तावत् अङ्गदेशानीतऋश्यशृङ्गकारितक्रतुना चत्वारः पुत्रा भविष्यन्तीति सनत्कुमारवाक्यं सुमन्त्रेण कथितं श्रुत्वा वसिष्ठाभ्यनुज्ञां विना ऋश्यशृङ्गानयनमयुक्तमिति निश्चित्य अवाप्य तदनुज्ञां मुदितमना दशरथः समानीय ऋश्यशृङ्गं वसिष्ठऋश्यशृङ्गाभ्यां कारितयागेन सकलदुरितनिरसनपूर्वकमभिलषितसिद्धिमवापेति । व्यतिरेकस्तावत्, एतद्वंश्यस्त्रिशङ्कुः सशरीरस्वर्गप्राप्तये यज्ञः कारयितव्य इति प्रार्थितेन वसिष्ठेन गुरुणा प्रत्याख्यातो गुरुपुत्रानासाद्य निवेदितपूर्ववृत्तान्तः गुरुपुत्रैरपि

**इक्ष्वाकूणां तु सर्वेषां पुरोधाः परमो गुरुः ।**
**न चातिक्रमितुं शक्यं वचनं सत्यवादिनः ॥**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


अशक्यमिति चोवाच वसिष्ठो भगवानृषिः ।
ते वयं वै समाहर्तुं क्रतुं शक्ताः कथं तव ॥
बालिशस्त्वं नरश्रेष्ठ गम्यतां स्वपुरं पुनः ॥

इति न्यायतः प्रतिषिद्धोऽपि तद्वचनातिक्रमात्प्राप्तनीचजातिः भगवन्तमुग्रे तपसि वर्तमानं लोकमर्यादामन्यथयितुं समर्थं विश्वामित्रं शरणं प्राप्तः । तेन,

पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर ।
एष त्वां स्वशरीरेण नयामि स्वर्गमोजसा ॥

दुःप्रापं सशरीरेण दिवं गच्छ नराधिप ।
स्वार्जितं किंचिदप्यस्ति मया हि तपसः फलम् ॥
राजंस्त्वं तेजसा तस्य सशरीरो दिवं व्रज ॥

इति प्रतिज्ञापूर्वकं सशरीरं स्वर्गं प्रापितोऽपि,

गुरुशापहतो मूढ पत भूमिमवाक्शिराः ।
एवमुक्तो महेन्द्रेण त्रिशङ्कुरपतत्पुनः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स तु अद्यापि अवाक्शिरा: अन्तरिक्षे लम्बमानस्तिष्ठतीति । एवं च महावंशप्रसूतस्यातिधर्मिष्ठस्य त्रिशङ्कोर्विश्वामित्रेण निखिलस्वतपोव्ययेन स्वर्गमारोपितस्यापि गुरुशापदोषेण महेन्द्रेण पातितस्यावाक्शिरसः अन्तराले अवस्थानात् गुरुशापोऽप्रतिकार्य इति सूचितम् । तस्मात् पूर्वपरिगृहीतऋत्विक्साचिव्येनैव अन्य आनेय इति सिद्धम् । अयमर्थो महाभारते आश्वमेधिके पर्वणि संवर्तमरुत्तीयेऽप्यभिहितः । तथा हि बृहस्पतिं प्रति मरुत्तवाक्यम्— 'भगवन्यन्मया पूर्वमधिगम्य तपोधन । कृतोऽभिसंधिर्यज्ञाय भवतो वचनाद्गुरो ॥ तदहं यष्टुमिच्छामि संभाराः संभृताश्च मे । याज्योऽस्मि भवतः साधो तत्प्राप्नुहि विधत्स्व च ॥ बृहस्पतिः— न कामये याजयितुं त्वामहं पृथिवीपते । वृतोऽस्मि देवराजेन प्रतिज्ञातं च तस्य मे ॥ मरुत्तः— पित्र्यमस्मि तव क्षेत्रं बहु मन्ये च ते भृशम् । तवास्मि याज्यतां प्राप्तो भजमानं भजस्व माम् ॥' तव पित्रा अङ्गिरसा याज्यत्वेन परिगृहीतोऽहं त्वयाप्यवश्यं याज्य इत्यर्थः । बृहस्पतिः— 'अमर्त्यं याज-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


यित्वाहं याजयिष्ये न मानुषम् । मरुत्त गच्छ वा मा वा निवृत्तोऽप्यन्ययाजनात् ॥ न त्वां याजयितास्म्यद्य वृणु त्वं यमिहेच्छसि । उपाध्यायं महाबाहो यस्ते यज्ञं करिष्यति ॥ एवं बृहस्पतिना प्रत्याख्यातो नारदं प्रत्युक्तवान्मरुत्तः— गतोऽस्म्यङ्गिरसः पुत्रं देवाचार्यं बृहस्पतिम् । यज्ञार्थमृत्विजं प्रष्टुं स च मां नाभ्यनन्दत ॥ प्रत्याख्यातश्च तेनाहं जीवितं नाद्य कामये ।' इति निरपराधिनः स्वस्य गुरुणा नाहं याजयिष्यामीति प्रत्याख्यानपूर्वकमन्यं वृणीष्वेत्यभ्यनुज्ञानेनान्यवरणे दोषाभावेऽपि अन्यवरणापेक्षया प्राणत्यागोऽपि वर इति क्लिश्यमानं मरुत्तं संजीवयन्निव नारदः प्रत्युवाच— 'राजन्नङ्गिरसः पुत्रः संवर्तो नाम धार्मिकः । चङ्क्रमीति दिशः सर्वा दिग्वासा मोहयन्प्रजाः । स गच्छ यदि याज्यं त्वां न वाञ्छति बृहस्पतिः ॥ प्रसन्नस्त्वां महातेजाः संवर्तो याजयिष्यति । मरुत्तः— संजीवितोऽहं भवता वाक्येनानेन नारद' इति परम्परागतगुरुपुत्रलाभान्मरणान्निवृत्तः संतुष्टोऽभवदित्यर्थः । तदनु नारदवचनानुसारेण संवर्तं याजकं प्राप्य


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तदुपदेशेन आराधितपरमेश्वरप्रसादलब्धबहुधनो यज्ञमारब्धवान् । तत इन्द्रकुबेरादिदेवानां गुरुरपि गुरुर्देवान् विहाय मर्त्यं न याजयिष्यामीति प्रतिज्ञां परित्यज्य अन्यं वृणीष्वेत्यभ्यनुज्ञां विस्मृत्य संवर्तप्रवर्तितमानवयज्ञवैभवश्रवणसंजातयाजनकामो लोभेनेन्द्रप्रेषितदूत्येन आर्त्विज्यं प्रार्थितवान् । मरुत्तोऽपि वृतसंवर्तपरित्यागे मित्रद्रोहान्महत्पापं भवतीत्याह— 'त्वं चैवैतद्वेत्थ पुरंदरश्च विश्वे देवा वसवश्चाश्विनौ च । मित्रद्रोहे निष्कृतिर्नास्ति लोके महत्पापं ब्रह्महत्यासमं तत्' इति दूतमुक्त्वा प्रत्याचख्यौ । प्रत्याख्यानेन क्रुद्धः स्वयमेतादृशदोषान् जानन्नपि देवानामपि अमार्गान्निवर्तयिता बृहस्पतिर्ब्राह्मणोत्तमं तपस्विनं निवृत्तिमार्गे वर्तमानं साक्षादनुजं संवर्तं सवनगतं मरुत्तं च राजानं हन्तुमिन्द्रं प्रेरितवान् । ततः मरुत्तहननाय वज्रोद्यतहस्तमिन्द्रं संवर्तः स्तम्भयामास । ततो मरुत्तः प्रार्थनेन इन्द्रादीन्देवान् स्वस्वभागग्रहणे यज्ञपरिचर्यायां च नियुक्तवान् । 'ततः संवर्तश्चित्यगतो महात्मा यथा वह्निश्चित्यगतो द्वितीयः । हवींष्युच्चैराह्वयन्देवसंघाञ्जुहावाग्नौ मन्त्रवत्संप्रतीतः ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ततः पीत्वा वलभित्सोममग्र्यं ये चाप्यन्ये सोमपा देवसंघाः । सर्वेऽनुज्ञाताः प्रययुः पार्थिवेन यथाजोषं तर्पिताः प्रीतिमन्तः' इति । अनेन निरपराधिनो यजमानस्य ऋत्विजा परित्यागो न कार्य इति सूचितम् । मरुत्तेन च त्रिशङ्कुवदन्यवरणमकृत्वा पूर्वपरिगृहीतऋत्विग्वंश्यस्यैव वरणमहिम्ना स्वप्रतिस्पर्धीन्द्रादिकारितपरिचर्यातिशयलब्धवैभवेन सर्वातिशायी यज्ञः प्राप्तः । एवं सति इदानीमपि ऋत्विग्यजमानैर्दोषाभावे परस्परापरित्यागेन स्थेयम् । सति तु दोषे परित्याग इत्ययमर्थः शक्तमदुष्टं चेति विशेषणाभ्यामवगम्यते । मनुः— 'ऋत्विजं यस्त्यजेद्याज्ये याज्यं चर्त्विक्त्यजेद्यादि । शक्तं कर्मण्यदुष्टं च तपो दण्डः शतं शतम्' इति । अयोध्याकाण्डेऽपि—

अदुष्टस्य हि संत्यागः सत्पथे निरतस्य च ।
निर्दहेदपि शक्रस्य द्युतिं धर्मनिरोधनात् ॥

तथा च गौतमः— 'निन्दितकर्माभ्यासिपतितात्यागयपतितत्यागिनः पतिताः' इति ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


आसाद्य तं द्विजश्रेष्ठं रोमपादसमीपगम् ।
ऋषिपुत्रं ददर्शादौ दीप्यमानमिवानलम् ॥

ततो राजा यथान्यायं पूजां चक्रे विशेषतः ।
सखित्वात्तस्य वै राज्ञः प्रहृष्टेनान्तरात्मना ॥

रोमपादेन चाख्यातमृषिपुत्राय धीमते ।
सख्यं संबन्धिकं चैव तदा तं प्रत्यपूजयत् ॥

एवं सुसत्कृतस्तेन सहोषित्वा नरर्षभः ।
सप्ताष्ट दिवसान्राजा राजानमिदमब्रवीत् ॥

शान्ता तव सुता राजन्सह भर्त्रा विशांपते ।
मदीयं नगरं यातु कार्यं हि महदुद्यतम् ॥

रोमपादः—
उवाच वचनं विप्र गच्छ त्वं सह भार्यया ।
ऋषिपुत्रः प्रतिश्रुत्य तथेत्याह नृपं तदा ॥

स नृपेणाभ्यनुज्ञातः प्रययौ सह भार्यया ।
अन्तःपुरं प्रवेश्यैनं पूजां कृत्वाथ शास्त्रतः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


कृतकृत्यं तदात्मानं मेने तस्योपवाहनात् ॥

द्वादशे सर्गे—

ततः काले बहुतिथे कस्मिंश्चित्सुमनोहरे ।
वसन्ते समनुप्राप्ते राज्ञो यष्टुं मनोऽभवत् ॥

ततः प्रसाद्य शिरसा तं विप्रं देववर्णिनम् ।
यज्ञाय वरयामास संतानार्थं कुलस्य वै ॥

तथेति च स राजानमुवाच च सुसत्कृतः ।
संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् ॥

ततः ऋश्यशृङ्गाद्यभ्यनुज्ञयापि यज्ञ आरब्धः । एतेन महतः कर्मण आरम्भे महाब्राह्मणानामभ्यनुज्ञा ग्राह्येत्ययं धर्मः सूचितः ॥

त्रयोदशे सर्गे—

पुनः प्राप्ते वसन्ते तु पूर्णः संवत्सरोऽभवत् ।
प्रसवार्थं गतो यष्टुं हयमेधेन वीर्यवान् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


अभिवाद्य वसिष्ठं च न्यायतः प्रतिपूज्य च ।
अब्रवीत्प्रश्रितं वाक्यं प्रसवार्थं द्विजोत्तमम् ॥

यज्ञो मे क्रियतां ब्रह्मन्यथोक्तं मुनिपुंगव ।
यथा न विघ्नः क्रियते यज्ञाङ्गेषु विधीयताम् ॥

भवान्स्निग्धः सुहृन्मह्यं गुरुश्च परमो भवान् ।
वोढव्यो भवता चेह भारो यज्ञस्य चोद्यतः ॥

अनेन यज्ञादिमहाकर्मारम्भे नूतनेषु ऋत्विक्षु सत्स्वपि प्राचीन एव सर्वज्ञे आस्तिके महाब्राह्मणे भारं विनिक्षिप्य तद्वचनानुसारेण कर्म कर्तव्यमिति सूचितम् ॥

तथेति च स राजानमब्रवीद्द्विजसत्तमः ।
करिष्ये सर्वमेवैतद्भवता यत्समर्थितम् ॥

ततोऽब्रवीद्द्विजान्वृद्धान्यज्ञकर्मसु निष्ठितान् ।
स्थपत्ये निष्ठितांश्चैव वृद्धान्परमधार्मिकान् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


यज्ञकर्म समीहन्तां भवन्तो राजशासनात् ।
दातव्यमन्नं विधिवत्सत्कृत्य न तु लीलया ॥

सर्वे वर्णा यथा पूजां प्राप्नुवन्ति सुसत्कृताः ।
न चावज्ञा प्रयोक्तव्या कामक्रोधवशादपि ॥

अवज्ञया न दातव्यं कस्यचिल्लीलयापि वा ।
अवज्ञया कृतं हन्याद्दातारं नात्र संशयः ॥

अत्र श्रद्धापुरःसरमेव दानं कर्तव्यम् । अश्रद्धया दानं निष्फलमित्युक्तम् । तथा च श्रुतिः— 'श्रद्धया देयम्' इति । भगवद्गीतायामपि— 'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह' इति ॥

ततः कैश्चिदहोरात्रैरुपयाता महीक्षितः ।
बहूनि रत्नान्यादाय राज्ञो दशरथस्य वै ॥

ततो वसिष्ठः सुप्रीतो राजानमिदमब्रवीत् ।
उपयाता नरव्याघ्र राजानस्तव शासनात् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मयापि सत्कृताः सर्वे यथार्हं राजसत्तमाः ।
यज्ञियं च कृतं राजन्पुरुषैः सुसमाहितैः ॥

निर्यातु च भवान्यष्टुं यज्ञायतनमन्तिकात् ।
सर्वकामैरुपहृतैरुपेतं वै समन्ततः ॥

द्रष्टुमर्हसि राजेन्द्र मनसेव विनिर्मितम् ।
तदा वसिष्ठवचनादृश्यशृङ्गस्य चोभयोः ॥

शुभे दिवसनक्षत्रे निर्यातो जगतीपतिः ।
ततो वसिष्ठप्रमुखाः सर्व एव द्विजोत्तमाः ॥

ऋश्यशृङ्गं पुरस्कृत्य यज्ञकर्मारभंस्तदा ।
यज्ञवाटगताः सर्वे यथाशास्त्रं यथाविधि ॥

अत्र यज्ञादिकं कर्म ब्राह्मणपुरःसरं कर्तव्यम् । अयं धर्मः सर्वेषां साधारणः । राज्ञां तु विशिष्य ब्रह्ममुखत्वं सर्वत्रातिशयाधायकम् । तथा च श्रुतिः— 'तस्माद्राजन्यो ब्राह्मणवानन्यं राजन्यम्' इति । गौतमश्च—'ब्राह्मणं

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


च पुरो दधीत विद्याभिजनवान्रूपवयःशीलसंपन्नं न्यायवृत्तं तपस्विनं तत्प्रसूतः कर्माणि कुर्वीत, ब्रह्मप्रसूतं हि क्षत्रमृध्यते न व्यथत इति च विज्ञायते' इति। महाभारते आदिपर्वणि तापत्येऽपि—'यस्तु स्यात्कर्मवृत्तोऽपि पार्थ ब्रह्मपुरस्कृतः। जयेन्नक्तंचरान्सर्वान्स पुरोहितधूर्गतः॥ तस्मात्तापत्य यत्किंचिन्नृणां श्रेय इहेप्सितम्। तस्मिन्कर्मणि योक्तव्या दान्तात्मानः पुरोहिताः॥ वेदे षडङ्गनिरताः शुचयः सत्यवादिनः। धर्मात्मानः कृतात्मानः स्युर्नृपाणां पुरोहिताः॥ जयश्च नियतो राज्ञः स्वर्गस्तस्मादनन्तरम्। यस्य स्याद्धर्मविद्वाग्मी पुरोधाः शीलवाञ्शुचिः॥ लाभं लब्धुमलब्धुं वा लब्धं च परिरक्षितुम्। पुरोहितं प्रकुर्वीत राजा गुणसमन्वितम्॥ पुरोहितमते तिष्ठेद्य इच्छेद्भूतिमात्मनः। प्राप्तुं वसुमतीं सर्वां सर्वशः सागराम्बराम्॥ न हि केवलशौर्येण तापत्याभिजनेन च। जयेदब्राह्मणः कश्चिद्भूमिं भूमिपतिः क्वचित्॥ तस्मादेवं विजानीहि कुरूणां वंशवर्धन। ब्राह्मणप्रमुखं राज्यं शक्यं पालयितुं चिरम्'

D. 9

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

इति ॥ तथा आरण्यके युधिष्ठिरदाल्भ्यसंवादेऽपि—'ब्रह्म क्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह । उदीर्णौ दहतः शत्रून्वनानीवाग्निमारुतौ ॥ नाब्राह्मणस्तात चिरं बभूषेदिच्छन्निमं लोकममुं च जेतुम् । विनीतधर्मार्थमपेतमोहं लब्ध्वा द्विजं नुदति नृपः सपत्नान् ॥ चरन्नैःश्रेयसं धर्मं प्रजापालनकारितम् । नाध्यगच्छद्बलिर्लोके तीर्थमन्यत्र वै द्विजात् ॥ अनूनमासीदसुरस्य कामैर्वैरोचनेः श्रीरपि चाक्षयासीत् । लब्ध्वा महीं ब्राह्मणसंप्रयोगात्तेष्वाचरन्दुष्टमथो व्यनश्यत् ॥ नाब्राह्मणं भूमिरियं स भूतिर्वर्णं द्वितीयं भजते चिराय । समुद्रनेमिर्नमते तु तस्मै यं ब्राह्मणः शास्ति नयैर्विनीतम् ॥ कुञ्जरस्येव संग्रामे परिगृह्याङ्कुशग्रहम् । ब्राह्मणैर्विप्रहीणस्य क्षत्रस्य क्षीयते बलम् ॥ ब्राह्मणान्न परा दृष्टिः क्षात्रमप्रतिमं बलम् । तौ यदा चरतः सार्धं तदा लोकः प्रसीदति ॥ यथा हि सुमहानग्निः कक्षं दहति सानिलः । तथा दहति राजन्यो ब्राह्मणेन समं रिपुम् ॥ ब्राह्मणेष्वेव मेधावी बुद्धिवीर्येण संचरेत् । अलब्धस्य

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


च लाभाय लब्धस्य परिवृद्धये ॥ अलब्धलाभाय च लब्धवृद्धये यथार्हतीर्थप्रतिपादनाय । यशस्विनं वेदविदं विपश्चितं बहुश्रुतं ब्राह्मणमेव वासय ॥ ब्राह्मणेषूत्तमा वृत्तिस्तव नित्यं युधिष्ठिर । तेन ते सर्वलोकेषु दीप्यते प्रथितं यशः' इति । चतुर्दशे सर्गे—

अथ संवत्सरे पूर्णे तस्मिन्प्राप्ते तुरंगमे ।
सरय्वाश्चोत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्तत ॥

ऋश्यशृङ्गं पुरस्कृत्य कर्म चक्रुर्द्विजर्षभाः ।
न चाद्भुतमभूत्तत्र स्खलितं वापि किंचन ।
दृश्यते ब्रह्मवत्सर्वं क्षेमयुक्तं हि चक्रिरे ॥

अनेन यज्ञकर्मणि विहिते काले यथाविध्यनुष्ठानकुशलैरभिज्ञैरास्तिकैर्ऋत्विग्भिरन्यूनानतिरेकेण अनुष्ठातव्यमिति सूचितम् ॥

न तेष्वहःसु श्रान्तो वा क्षुधितो वापि दृश्यते ।
अन्नपानैः सुविहितास्तस्मिन्यज्ञे महात्मनः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

**अन्नं हि विधिवत्स्वादु प्रशंसन्ति द्विजर्षभाः ।**
**अहो तृप्ताः स्म भद्रं त इति शुश्राव राघवः ॥**

अनेनाविशेषेणागताः सर्वे ब्राह्मणा मृष्टान्नदानेन तोषणीया इति सूचितम् ॥

**कर्मान्तरे तदा विप्रा हेतुवादान्बहूनपि ।**
**प्राहुः सुवाग्मिनो धीराः परस्परजिगीषया ॥**

अनेन दिदृप्सुभिः सदसो बहिरासीनैः प्रयोगाविरोधेन अन्तरालकाले स्वस्वविद्यातिशयप्रख्यापनाय वादकुशलैर्भवितव्यं न तु कर्मकाले इति सूचितम् । तथा च भारते सभापर्वणि— 'कर्मान्तरसमायत्ता जजल्पुरमितौजसः । इदमेवं न चाप्येवमेवमेव न चान्यथा ॥ प्रत्यूचुर्बहवस्तत्र वितण्डावादिनो द्विजाः । कृशानर्थांस्ततः केचिदकृशांस्तत्र कुर्वते ॥ अकृशांश्च कृशांश्चक्रुर्हेतुभिः शास्त्रनिश्चयैः । अर्थं मेधाविनः केचिदनुमानैः प्रपूरितम् ॥ विचिक्षिपुर्यथा श्येना नभोगतमिवामिषम् ॥ केचिद्धर्मार्थकुशलाः केचित्तत्र महाव्रताः । रेमिरे

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


कथयन्तश्च सर्वभाष्यविदां वराः' इति ॥

नाषडङ्गविदत्रासीन्नाव्रतो नाबहुश्रुतः ।
सदस्यस्तस्य वै राज्ञो नावादकुशलो द्विजः ॥

अनेन सदस्यैरपि नियतैः साङ्गवेदविद्भिस्तत्त्वनिर्धारणकुशलैर्बहुभिर्भवितव्यमिति सूचितम् ॥

पतत्रिणस्तस्य वपामुद्धृत्य नियतेन्द्रियाः ।
ऋत्विक्परमसंपन्नः श्रपयामास शास्त्रतः ॥

धूमगन्धं वपायास्तु जिघ्रति स्म नराधिपः ।
यथाकालं यथान्यायं निर्णुदन्पापमात्मनः ॥

अनेन अश्ववपाधूमगन्धाघ्राणस्य समस्तपापनिवर्तकत्वप्रतिपादनेनाङ्गिनोऽश्वमेधस्य फलातिशयः सूचितः । तथा च महाभारतेऽपि धूमगन्धाघ्राणं पावनमुक्तम्– 'तं वपाधूमगन्धं तु धर्मराजः सहानुजैः । उपाजिघ्रद्यथाशास्त्रं सर्वपापापहं तदा' इति ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ततः प्रीतमना राजा प्राप्य यज्ञमनुत्तमम् ।
पापापहं स्वर्णयनं दुस्तरं पार्थिवर्षभैः ॥

ततोऽब्रवीदृश्यशृङ्गं राजा दशरथस्तदा ।
कुलस्य वर्धनं तन्तुं कर्तुमर्हसि सुव्रत ॥

तथेति च स राजानमुवाच द्विजसत्तमः ।
भविष्यन्ति सुता राजंश्चत्वारस्ते कुलोद्वहाः ॥

पञ्चदशे सर्गे—

मेधावी तु ततो ध्यात्वा स किंचिदिदमुत्तरम् ।
लब्धसंज्ञस्ततस्तं तु वेदज्ञो नृपमब्रवीत् ॥

इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात् ।
अथर्वशिरसि प्रोक्तैर्मन्त्रैः सिद्धां विधानतः ॥

ततः प्राक्रमदिष्टिं तां पुत्रीयां पुत्रकारणात् ।
जुहावाग्नौ च तेजस्वी मन्त्रदृष्टेन कर्मणा ॥

CC-0. Prof. Satya Vrat Shastri Collection.

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
भागं प्रतिग्रहार्थं वै समवेता यथाविधि ॥

ताः समेत्य यथान्यायं तस्मिन्सदसि देवताः ।
अब्रुवँल्लोककर्तारं ब्रह्माणं वचनं महत् ॥

भगवंस्त्वत्प्रसादेन रावणो नाम राक्षसः ।
सर्वान्नो बाधते वीर्याच्छासितुं तं न शक्नुमः ॥

त्वया तस्मै वरो दत्तः प्रीतेन भगवन्पुरा ।
मानयन्तश्च तं नित्यं सर्वं तस्य क्षमामहे ॥

उद्वेजयति लोकांस्त्रीनुच्छ्रितान्द्वेष्टि दुर्मतिः ।
शक्रं त्रिदशराजानं प्रधर्षयितुमिच्छति ॥

ऋषीन्यक्षान्सगन्धर्वानसुरान्ब्राह्मणांस्तथा ।
अतिक्रामति दुर्धर्षो वरदानेन मोहितः ॥

नैनं सूर्यः प्रतपति पार्श्वे वाति न मारुतः ।
चलोर्मिमाली तं दृष्ट्वा समुद्रोऽपि न कम्पते ॥



CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तन्महन्नो भयं तस्माद्राक्षसाद्धोरदर्शनात् ।
वधार्थं तस्य भगवन्नुपायं कर्तुमर्हसि ॥

एवमुक्तः सुरैः सर्वैश्चिन्तयित्वा ततोऽब्रवीत् ।
हन्तायं विहितस्तस्य वधोपायो दुरात्मनः ॥

तेन गन्धर्वयक्षाणां देवदानवरक्षसाम् ।
अवध्योऽस्मीति वागुक्ता तथेत्युक्तं च तन्मया ॥

नाकीर्तयदवज्ञानात्तद्रक्षो मानुषं तदा ।
तस्मात्स मानुषाद्वध्यो मृत्युर्नान्योऽस्य विद्यते ॥

एतच्छ्रुत्वा प्रियं वाक्यं ब्रह्मणा समुदाहृतम् ।
देवा महर्षयः सर्वे प्रहृष्टास्तेऽभवंस्तदा ॥

एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः ।
शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः ।
ब्रह्मणा च समागम्य तत्र तस्थौ समाहितः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तमब्रुवन्सुराः सर्वे समभिष्टुत्य संनताः ।
त्वां नियोक्ष्यामहे विष्णो लोकानां हितकाम्यया ॥

राज्ञो दशरथस्य त्वमयोध्याधिपतेः प्रभो ।
धर्मज्ञस्य वदान्यस्य महर्षिसमतेजसः ॥

तस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च ।
विष्णो पुत्रत्वमागच्छ कृत्वात्मानं चतुर्विधम् ॥

तत्र त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम् ।
अवध्यं दैवतैर्विष्णो समरे जहि रावणम् ॥

स हि देवान्सगन्धर्वान्सिद्धांश्च मुनिसत्तमान् ।
राक्षसो रावणो मूर्खो वीर्योत्सेकेन बाधते ॥

ऋषयश्च ततस्तेन गन्धर्वाप्सरसस्तथा ।
क्रीडन्तो नन्दनवने रौद्रेण किल हिंसिताः ॥

वधार्थं वयमायातास्तस्य वै मुनिभिः सह ।
सिद्धगन्धर्वयक्षाश्च ततस्त्वां शरणं गताः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्वं गतिः परमा देव सर्वेषां नः परंतप ।
वधाय देव शत्रूणां नृणां लोके मनः कुरु ॥

एवमुक्तस्तु देवेशो विष्णुस्त्रिदशपुंगवः ।
पितामहपुरोगांस्तान्सर्वलोकनमस्कृतः ॥

अब्रवीत्त्रिदशान्सर्वान्समेतान्धर्मसंहितान् ।
भयं त्यजत भद्रं वो हितार्थं युधि रावणम् ॥

सपुत्रपौत्रं सामात्यं समित्रज्ञातिबान्धवम् ।
हत्वा क्रूरं दुरात्मानं देवर्षीणां भयावहम् ॥

दश वर्षसहस्राणि दश वर्षशतानि च ।
वत्स्यामि मानुषे लोके पालयन्पृथिवीमिमाम् ॥

एवं दत्त्वा वरं देवो देवानां विष्णुरात्मवान् ।
मानुषे चिन्तयामास जन्मभूमिमथात्मनः ॥

ततः पद्मपलाशाक्षः कृत्वात्मानं चतुर्विधम् ।
पितरं रोचयामास तदा दशरथं नृपम् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



ततो देवर्षिगन्धर्वाः सरुद्राः साप्सरोगणाः ।
स्तुतिभिर्दिव्यरूपाभिस्तुष्टुवुर्मधुसूदनम् ॥

त्वमुद्धतं रावणमृद्धतेजसं
प्रवृद्धदर्पं त्रिदशेश्वरद्विषम् ।
विरावणं साधुतपस्विकण्टकं
तपस्विनामुद्धर तं भयावहम् ॥

तमेव हत्वा सबलं सबान्धवं
विरावणं रावणमग्र्यपौरुषम् ।
स्वर्लोकमागच्छ गतज्वरश्चिरं
सुरेन्द्रगुप्तं गतदोषकल्मषम् ॥

इत्यनेन ऋश्यश्रृङ्गेण पुत्रोत्पत्त्यर्थं पुत्रेष्टिरारब्धा । तस्मिन्काले रावणोपद्रवपरिहारार्थं देवैर्ब्रह्मा याचितः । तेन तु मानुषेण तस्य वधं निश्चित्य भगवान्विष्णुर्नियोजितः । भगवता विष्णुनाप्येवं करिष्यामीति प्रतिज्ञातम् । रावणस्य दुराचारोऽपि प्रतिपादितः । इत्येत-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्सर्वं कथितम् । अनेन सर्वेश्वरस्य नियोज्यस्य निकृष्टमानुषतनुपरिग्रहपूर्वकं सकललोकबाधकरावणवधनियोगप्रतिपादनेन आपदि गुर्वादेरपि तदेकसाध्यकर्मणि नियोगो न दोषायेति सूचितम् । षोडशे सर्गे— 'ततो नारायणो देवः' इत्यारभ्य 'सुराणां विष्णुरात्मवान्' इत्यन्तेन देवैरुपायप्रतिपादनपूर्वकं प्रार्थितो विष्णुः ॥

पितरं रोचयामास तदा दशरथं नृपम् ।
स चाप्यपुत्रो नृपतिस्तस्मिन्काले महाद्युतिः ॥

अयजत्पुत्रियामिष्टिं पुत्रेप्सुररिसूदनः ।
स कृत्वा निश्चयं विष्णुरामन्त्र्य च पितामहम् ॥

अन्तर्धानं गतो देवैः पूज्यमानो महर्षिभिः ।
ततो वै यजमानस्य पावकादतुलप्रभम् ॥

प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम् ।
कृष्णं रक्ताम्बरधरं रक्तास्यं दुन्दुभिस्वनम् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


स्निग्धहर्यक्षतनुजं श्मश्रुप्रवरमूर्धजम् ।
शुभलक्षणसंपन्नं दिव्याभरणभूषितम् ॥

शैलशृङ्गसमुत्सेधं दृप्तशार्दूलविक्रमम् ।
दिवाकरसमाकारं दीप्तानलशिखोपमम् ॥

तप्तजाम्बूनदमयीं राजतान्तपरिच्छदाम् ।
दिव्यपायससंपूर्णां पात्रीं पत्नीमिव प्रियाम् ॥

प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयीमिव ।
समवेक्ष्याब्रवीद्वाक्यमिदं दशरथं नृपम् ॥

प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप ।
तमद्भुतं तदा राजा प्रत्युवाच कृताञ्जलिः ॥

भगवन्स्वागतं तेऽस्तु किमहं करवाणि ते ।
अथो पुनरिदं वाक्यं प्राजापत्यो नरोऽब्रवीत् ॥

राजन्नर्चयता देवानद्य प्राप्तमिदं त्वया ।
इदं तु नृपशार्दूल पायसं देवनिर्मितम् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्धनम् ।
भार्याणामनुरूपाणामश्नीतेति प्रयच्छ वै ॥

तासु त्वं प्राप्स्यसे पुत्रान्यदर्थं यजसे नृप ।
तथेति नृपतिः प्रीतः शिरसा प्रतिगृह्य ताम् ॥

पात्रीं दिव्यान्नसंपूर्णां देवदत्तां हिरण्मयीम् ।
अभिवाद्य च तद्भूतमद्भुतं प्रियदर्शनम् ॥

मुदा परमया युक्तः चकाराभिप्रदक्षिणम् ।
ततो दशरथः प्राप्य पायसं देवनिर्मितम् ॥

बभूव परमप्रीतः प्राप्य वित्तमिवाधनः ।
ततस्तदद्भुतप्रख्यं भूतं परमभास्वरम् ॥

निर्वर्तयित्वा तत्कर्म तत्रैवान्तरधीयत ।
हर्षरश्मिभिरुद्द्योतं तस्यान्तःपुरमाबभौ ॥

शारदस्याभिरामस्य चन्द्रस्येव नभोंशुभिः ।
सोऽन्तःपुरं प्रविश्यैव कौसल्यामिदमब्रवीत् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


पायसं प्रतिगृह्णीष्व पुत्रीयं त्विदमात्मनः ।
कौसल्यायै नरपतिः पायसार्धं ददौ तदा ॥

अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः ।
कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् ॥

प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् ।
अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः ॥

एवं तासां ददौ राजा भार्याणां पायसं पृथक् ।
तास्त्वेतत्पायसं प्राज्यं नरेन्द्रस्योत्तमाः स्त्रियः ॥
संमानं मेनिरे सर्वाः प्रहर्षोदितचेतसः ॥

ततस्तु ताः प्राश्य तदुत्तमस्त्रियो
महीपतेरुत्तमपायसं पृथक् ।
हुताशनादित्यसमानतेजसो-
ऽचिरेण गर्भान्प्रतिपेदिरे तदा ॥

ततस्तु राजा प्रसमीक्ष्य ताः स्त्रियः
प्ररूढगर्भाः प्रतिलब्धमानसः ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

बभूव हृष्टस्त्रिदिवे यथा हरिः
सुरेन्द्रसिद्धर्षिगणाभिपूजितः ॥

अनेन वेदोक्तपुत्रीयेष्ट्या सद्यस्तत्फलरूपपुत्रप्राप्त्या यथाविध्यनुष्ठितं सर्वं वैदिकं कर्म अवश्यं फलं प्रयच्छतीति ज्ञापितम् । सप्तदशे सर्गे—

पुत्रत्वं तु गते विष्णौ राज्ञस्तस्य महात्मनः ।
उवाच देवताः सर्वाः स्वयंभूर्भगवानिदम् ॥

सत्यसंधस्य वीरस्य सर्वेषां नो हितैषिणः ।
विष्णोः सहायान्बलिनः सृजध्वं कामरूपिणः ॥

मायाविदश्च शूरांश्च वायुवेगसमाञ्जवे ।
नयज्ञान्बुद्धिसंपन्नान्विष्णुतुल्यपराक्रमान् ॥

असंहार्यानुपायज्ञान्दिव्यसंहननान्वितान् ।
सर्वास्त्रगुणसंपन्नानमृतप्राशनानिव ।
सृजध्वं हरिरूपेण पुत्रानतुलविक्रमान् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


पूर्वमेव मया सृष्टो जाम्बवानृक्षपुंगवः ।
जृम्भमाणस्य सहसा मम वक्त्रादजायत ॥

ते तथोक्ता भगवता तत्प्रतिश्रुत्य शासनम् ।
जनयामासुरेवं ते पुत्रान्वानररूपिणः ॥

ऋषयश्च महात्मानः सिद्धविद्याधरोरगाः ।
चारणाश्च सुतान्वीरान्ससृजुर्वनचारिणः ॥

वानरेन्द्रं महेन्द्राभमिन्द्रो वालिनमूर्जितम् ।
सुग्रीवं जनयामास तपनस्तपतां वरः ॥

बृहस्पतिस्त्वजनयत्तारं नाम महाहरिम् ।
सर्ववानरमुख्यानां बुद्धिमन्तमनुत्तमम् ॥

धनदस्य सुतः श्रीमान्वानरो गन्धमादनः ।
विश्वकर्मा त्वजनयन्नलं नाम महाहरिम् ॥

पावकस्य सुतः श्रीमान्नीलोऽग्निसदृशप्रभः ।
तेजसा यशसा वीर्यादत्यरिच्यत वानरान् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रूपद्रविणसंपन्नावश्विनौ रूपसंमतौ ।
मैन्दं च द्विविदं चैव जनयामासतुः स्वयम् ॥

वरुणो जनयामास सुषेणं नाम वानरम् ।
शरभं जनयामास पर्जन्यः सुमहाबलम् ॥

मारुतस्यात्मजः श्रीमान्हनूमान्नाम वानरः ।
वज्रसंहननोपेतो वैनतेयसमो जवे ॥

सर्ववानरमुख्येषु बुद्धिमान्बलवानपि ।
ते सृष्टा बहुसाहस्रा दशग्रीववधे रताः ॥

अप्रमेयबला वीरा विक्रान्ताः कामरूपिणः ।
ते गजाचलसंकाशा वपुष्मन्तो महाबलाः ॥

ऋक्षवानरगोपुच्छाः क्षिप्रमेवाभिजज्ञिरे ।
यस्य देवस्य यद्रूपं वेषो यश्च पराक्रमः ॥

अजायत समस्तेन तस्य तस्य सुतः पृथक् ॥
सिंहशार्दूलसदृशा दर्पेण च बलेन च ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


शिलाप्रहरणाः सर्वे सर्वे पादपयोधिनः ।
नखदंष्ट्रायुधाः सर्वे सर्वे सर्वास्त्रकोविदाः ॥

विचालयेयुः शैलेन्द्रान्भेदयेयुः स्थिरान्द्रुमान् ।
क्षोभयेयुश्च वेगेन समुद्रं सरितां पतिम् ॥

दारयेयुः क्षितिं पद्भ्यामाप्लवेयुर्महार्णवम् ।
नभःस्थलं विशेयुश्च गृह्णीयुरपि तोयदान् ॥

गृह्णीयुरपि मातङ्गान्मत्तान्प्रव्रजितान्वने ।
नर्दमानाश्च नादेन पातयेयुर्विहंगमान् ॥

ईदृशानां प्रसूतानि हरीणां कामरूपिणाम् ।
शतं शतसहस्राणि यूथपानां महात्मनाम् ॥

ते प्रधानेषु यूथेषु हरीणां हरियूथपाः ।
सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् ॥

भ्रातरावुपतस्थुस्ते सर्वे एव हरीश्वराः ।
नलं नीलं हनूमन्तमन्यांश्च हरियूथपान् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ते तार्क्ष्यबलसंपन्नाः सर्वे युद्धविशारदाः ।
विचरन्तोऽर्दयन्दर्पात्सिंहव्याघ्रमहोरगान् ॥

तांश्च सर्वान्महाबाहुर्वाली विपुलविक्रमः ।
जुगोप भुजवीर्येण ऋक्षगोपुच्छवानरान् ॥

तैरियं पृथिवी सर्वा सपर्वतवनार्णवा ।
कीर्णा विविधसंस्थानैर्नानाव्यञ्जनलक्षणैः ॥

तैर्मेघवृन्दाचलकूटकल्पै-
र्महाबलैर्वानरयूथपालैः ।
बभूव भूर्भीमशरीररूपैः
समावृता रामसहायहेतोः ॥

अनेन अवतीर्णस्य श्रीरामस्य साहाय्याय ब्रह्मेन्द्रसूर्यवाय्वादयो देवाः स्वस्वांशेन जाम्बवद्वालिसुग्रीवहनुमदादिरूपेण ऋक्षवानरादिष्ववतीर्णा इति प्रतिपादनेन न्यायमार्गप्रवृत्तस्य देवा अपि नैकृष्ट्यमङ्गीकृत्य साहाय्याय कल्पन्ते इत्युक्तं भवति । अष्टादशे सर्गे—

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


निर्वृत्ते तु क्रतौ तस्मिन्हयमेधे महात्मनः ।
प्रतिगृह्य सुरा भागान्प्रतिजग्मुर्यथागतम् ॥

प्रविवेश पुरीं राजा सभृत्यबलवाहनः ।
उवास सुखितस्तत्र पुत्रोत्पत्तिं विचिन्तयन् ॥

ततो यज्ञे समाप्ते तु ऋतूनां षट् समत्ययुः ।
ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ॥

नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ।
ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ॥

प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ।
कौसल्याजनयद्रामं दिव्यलक्षणसंयुतम् ॥

विष्णोरर्धं महाभागं पुत्रमिक्ष्वाकुनन्दनम् ।
कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ॥

यथा वरेण देवानामदितिर्वज्रपाणिना ।
भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः।
अथ लक्ष्मणशत्रुघ्नौ सुमित्राजनयत्सुतौ॥

वीरौ सर्वास्त्रकुशलौ विष्णोरर्धसमन्वितौ।
पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः॥

सार्पे जातौ तु सौमित्री कुलीरेऽभ्युदिते रवौ।
राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक्॥

गुणवन्तोऽनुरूपाश्च रुच्याः प्रोष्ठपदोपमाः।
जगुः कलं च गन्धर्वा ननृतुश्चाप्सरोगणाः॥

देवदुन्दुभयो नेदुः पुष्पवृष्टिस्तु खाच्च्युता।
उत्सवश्च महानासीदयोध्यायां जनाकुलः॥

अत्र संवत्सरमुखोत्तरायणवसन्तचैत्रमासशुक्लपक्षदेवनक्षत्रदिवाभिजिल्लग्नपुण्यनक्षत्राद्युत्कृष्टकाले कर्कटकलग्ने उच्चस्थग्रहपञ्चके गुरुचन्द्रयोगे श्रीरामोत्पत्तिः तस्य सर्वोत्कृष्टतां सकलकल्याणगुणाभिरामतां सकलशिष्टादरणीयसंपत्तिं महापराक्रमं च सूचयति। संवत्सरमुखस्य प्रश-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


स्तता च— 'चित्रापूर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमासः' इति श्रुत्या चित्रापूर्णमासस्य संवत्सरमुखत्वेन प्रशस्तता प्रतिपादनात्सिद्धा । अनयैव श्रुत्या चैत्रमासस्यापि । तथा 'मुखं वा एतदृतूनां यद्वसन्तः' इति श्रुत्या वसन्तस्य 'यं कामयेत वसीयान्स्यादिति तं पूर्वपक्षे याजयेत् वसीयानेव भवति' इति श्रुत्या पूर्वपक्षस्य 'यान्येव देवनक्षत्राणि तेषु कुर्वीत यत्कारी स्यात्' इति श्रुत्या देवनक्षत्रस्य 'समानस्याहुः पञ्च पुण्यानि नक्षत्राणि' इति श्रुत्या पुण्यनक्षत्रस्य प्रशस्तता सिद्धा । तथा 'तृतीये वर्षे चौलम्' 'अष्टमे वर्षे ब्राह्मणमुपनयेत्' एतेन 'गोदानं षोडशे वर्षे' इत्यादिसूत्रैर्नियतसंवत्सरेषु चौलोपनयनगोदानादिषु 'उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः' 'वसन्ते ब्राह्मणमुपनयेत्' इत्यादिसूत्रकारैरुदगयनादिकालनियमं कुर्वद्भिः पुंसवनमनवलोभनं च यदि नाधीयात् 'तृतीये गर्भमासे चतुर्थे गर्भमासे सीमन्तोन्नयनम्' 'षष्ठेऽष्टमे वा' 'षष्ठे मास्यन्नप्राशनम्' इति


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सूत्रैर्नियतमासेषु पुंसवनादिकर्मसु आपूर्यमाणपक्षे 'यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्' इति सूत्रेण असंभावितोदगयनादिपरित्यागेन संभाविताापूर्यमाणपक्षादिनियमं कुर्वद्भिः आश्वलायनादिसूत्रकारैः तथा 'एकादशे द्वादशे वा पिता नाम कुर्यात्' इति श्रुतिनियतकाले नामकरणे असंभावितकालपरित्यागेनाह 'पुण्याहेषु कार्याणि' इति सूत्रेण संभावितमध्याह्नपुण्यनक्षत्रसंग्रहकृद्भिः आपस्तम्बाचार्यैश्च 'उदगयनपूर्वपक्षपुण्याहसंनिपाते यज्ञकालो नादेशः' इति वदद्भिः द्राह्यायणाचार्यैश्च उक्तानां कालानां सर्वेषु उत्कृष्टकर्मसु नियमनात्प्रशस्तता सिद्धा। जनने तत्कालस्य क्षणादिरूपस्य सूक्ष्मत्वात् । उदगयनादिनियमनासंभवात् सूत्रकारैरुदगयनादिकालानियमनेऽपि अर्थादेतादृशकालप्राप्तेः प्रशस्तता उक्तप्रायैव । अत एव एतद्व्यतिरिक्तकालोत्पन्नस्य दुष्टफलम् उक्तकालोत्पन्नस्य तु प्रशस्तं फलं प्रतिपादयद्भिर्ज्यौतिषिकैरपि उक्तकालानां फलमुखेन प्राशस्त्यमेव प्रतिपाद्यते । ज्यौतिषिके जातकाभरणे 'तत्र निन्दितकालफलानि'–तत्र दक्षिणाय-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


नस्य— 'अखर्वगर्वः कृषिकर्मकर्ता चतुष्पदाढ्योऽतिकठोराचित्तः । शठोऽप्यसह्यो ननु मानवानां याम्यायने ना जननं प्रपन्नः' । कृष्णपक्षस्य— 'प्रलापशीलोऽविचलश्च लोलः कलिप्रियः स्वीयकुलोद्धतश्च । मनोभवाधिक्ययुतो नितान्तं सितेतरे यस्य नरस्य जन्म' । रात्रिजननस्य— 'कूटकृद्गुहुकामार्तः क्षयरोगी मलीमसः । नर्तकोऽतिशठः कृष्णो रात्रिजातो नरो भवेत्' इति एवमादि निन्दितकालफलानि बहुशः सन्ति । विस्तरभिया दिक्प्रदर्शनमत्र कृतम् । अथ प्रशस्तफलानि— तत्र उत्तरायणस्य— 'शश्वत्प्रसन्नो ननु सूनुकान्तां संतोषयुक्तो नितरां चिरायुः । नरः सदाचारपरोऽत्युदारो धीरश्च सौम्यायनजातजन्मा' । वसन्तस्य— 'कंदर्परूपो मतिमान्प्रतापी संगीतशास्त्रे गणिते प्रवीणः । शास्त्रप्रसूनामलचेलचेता वसन्तजन्मा मनुजः प्रसन्नः' । चैत्रमासस्य— 'सत्कर्मविद्याविनयोपपन्नो भोगी नरः स्यान्मधुरान्नभोक्ता । सत्पात्रमित्रानुरतश्च मन्त्री चैत्रोद्भवश्चापि विचित्रमन्त्रः' । शुक्लपक्षस्य— 'चञ्चच्चिरायुः सुतरां सु-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


शीलः श्रीपुत्रवान्कोमलकायकान्तिः । सदा सदानन्दविनीतकालश्चेज्जन्मकालस्तु वलर्क्षपक्षे' । नक्षत्रस्य—'प्रभूतमित्रः कृतशास्त्रयत्नः सद्रत्नचामीकरभूषणाढ्यः । दाता प्रतापी वसुधा वसुश्च पुनर्वसू यस्य भवेत्प्रसूतिः' । दिवाजननस्य— 'तेजस्वी पितृसादृश्यः शुभदृष्टिर्नृपप्रियः । बन्धुपूज्यो धनाढ्यश्च दिवा जातो न संशयः' । कर्काटकलग्नस्य— 'मृष्टान्नभुक्साधुरतो विनीतो विलोलबुद्धिर्जलकेलिशीलः । प्रकृष्टसारोऽतितरामुदारो लग्ने कुलीरे हि नरो भवेत्सः' । उच्चग्रहयोगस्य— 'नभश्चराः पञ्च नीचोच्चसंस्थाः यस्य प्रसूतौ स तु सार्वभौमः' । गुरुचन्द्रयोगस्य— 'सदा विनीतो दृढगूढमन्त्रः स्वधर्मकर्माभिरतो नरः स्यात् । परोपकारादरणैकचित्तः सितद्युतौ वाक्पतिना समेते' । मेषगतसूर्यस्य— 'भवति साहसकर्मकरो नरो रुधिरपित्तविकारकलेबरः । क्षितिपतिः सुहितश्च सदा सुखी सुमहसां महसामधिपे क्रिये ॥ बलवतां शुभग्रहाणामाचारशौचशुभसत्ययुताः । सुरूपास्तेजस्विनः कृतविदो द्विजदेवभक्ताः ॥ पुष्पाम्बरोत्तम-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


विभूषणसादराश्च सौम्यग्रहैर्बलयुतैः पुरुषा भवन्ति' इति । तस्मादेतेषां कालानां जनने प्रशस्तत्वात् साधारणानामस्मिन्काले जननासंभवात् अस्य च श्रीरामस्य एतादृशकाले उत्पन्नत्वात् सर्वोत्कृष्टत्वं सकललोकादरणीयाचारवत्त्वं च सिद्धम् । तदा,

रथ्याश्च जनसंबाधा नटनर्तकसंकुलाः ।
गायकैश्च विराविण्यो वादकैश्च तथापरैः ॥

प्रदेयांश्च ददौ राजा सूतमागधवन्दिनाम् ।
ब्राह्मणेभ्यो ददौ वित्तं गोधनानि सहस्रशः ॥

अन्यत्र पुण्यकालः उत्सवकालो न भवति, उत्सवकालः पुण्यकालो न भवति । पुत्रोत्पत्तिकालस्तु पुण्योत्सवोभयात्मकः । तथा च व्यासः— 'देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् । आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा ॥ तत्र दद्यात्सुवर्णं च भूमिं गां तुरगं रथम् । छत्रं च गन्धमाल्यं च शयनं चासनं गृहम्' इति । अत्र पुण्यपूज्यशब्दाभ्यामह्नः उभयरूपत्वं स्पष्टम् ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तस्मिन्काले समागतानां देवानां पितॄणां च जातेष्टिवृद्धिश्राद्धादिना तृप्तिः कार्या। तथा च बोधायनः— 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति। 'जातमेव विदित्वा' इति शालीकिः। विष्णुपुराणे 'सचेलस्य पितुः स्नानं जाते पुत्रे विधीयते। जातकर्म तदा कुर्याच्छ्राद्धमाभ्युदयं चरेत्'। त्रिविधानि च दानानि देयानि— अदृष्टार्थं ब्राह्मणेभ्यो गवादिदानम्। उत्सवप्रयुक्ततया बान्धवानां प्रियशंसिने जनाय च यत्तत्प्रीतिदानम्। कीर्त्यर्थं नटे नर्तके दानम्। तथा च महाभारते— 'धर्मार्थं ब्राह्मणे दानं यशोर्थं नटनर्तके' इति। प्रियशंसिनेऽपि देयम, महतामाचारात्। तथा च माधवीये देवलः— 'दृष्ट्वा प्रियाणि श्रुत्वा हर्षाद्यद्यत्प्रयच्छति। हर्षदानमिति प्राहुर्दानं धर्मविचिन्तकाः' इति। अयोध्याकाण्डे रामाभिषेकप्रियवाक्यशंसिने जनाय,

**सा हिरण्यं च गाश्चैव रत्नानि विविधानि च।**
**व्यादिदेश प्रियाख्येभ्यः कौसल्या प्रमदोत्तमा।**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तथा सुन्दरकाण्डे सीतादर्शनवृत्तान्तं कथयन्तं हनूमन्तं प्रति रामवचनम्—

अहं च रघुवंशश्च लक्ष्मणश्च महाबलः ।
वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः ॥

इदं तु मम दीनस्य मनो भूयः प्रकर्षति ।
यदिहास्य प्रियाख्यातुर्न कुर्मि सदृशं प्रियम् ॥

स एव सर्वं भूतस्तु परिष्वङ्गो हनूमतः ।
मया कालमिमं प्राप्य दत्तश्चास्तु महात्मनः ॥

इत्युक्त्वा प्रीतिहृष्टाङ्गो रामस्तं परिषस्वजे ।
हनूमन्तं महात्मानं कृतकार्यमुपागतम् ॥

तथा युद्धकाण्डेऽपि रावणवधसमनन्तरं श्रीरामविजयं शंसन्तं हनूमन्तं प्रति सीतावचनम्—

प्रियमेतदुपश्रुत्य भर्तुर्विजयसंश्रुतम् ।
प्रहर्षवशमापन्ना निर्वाक्यास्मि क्षणान्तरम् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न हि पश्यामि सदृशं चिन्तयन्ती प्लवंगम ।
मत्प्रियाख्यानकस्येह तव प्रत्यभिनन्दनम् ॥

न हि पश्यामि तत्सौम्य पृथिव्यामपि वानर ।
सदृशं मत्प्रियाख्याने तव दातुं भवेत्समम् ॥

हिरण्यं वा सुवर्णं वा रत्नानि विविधानि च ।
राज्यं वा त्रिषु लोकेषु नैतदर्हति भाषितम् ॥

इति । तत्रैवाग्रे रावणवधसमनन्तरं विजयिनः श्रीरामभद्रस्यागमनं कथयन्तमाञ्जनेयं प्रति भरतवचनम्—

देवो वा मानुषो वा त्वमनुक्रोशादिहागतः ।
प्रियाख्यानस्य ते सौम्य ददामि ब्रुवतः प्रियम् ॥

गवां शतसहस्रं च ग्रामाणां च शतं परम् ।
सकुण्डलाः शुभाचारा भार्याः कन्याश्च षोडश ॥

हेमवर्णाः सुनासोरूः शशिसौम्याननाः स्त्रियः ।
सर्वाभरणसंपन्नाः संपन्नाः कुलजातिभिः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


इति । एवं श्रौतस्मार्तोत्सवयोग्यः पुत्रोत्पत्तिदिनसदृशोऽन्यो दिवसो नास्ति । किं बहुना, 'पुत्रस्ते जातः' इति शब्दोच्चारणमपि प्रियसत्यहितरूपत्वात् वाङ्मयतपोरूपम् । तथा च गीतायाम्— 'अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् । स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते' इति । भाष्यकारा अपि सत्यप्रियहितवचनत्वेन 'पुत्रस्ते जातः' इति वाक्यमुदाजह्रुः । एतादृशवाक्यवक्तुरपि सर्वं देयमित्याह कालिदासः— 'जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम् । अदेयमासीत्त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे' इति । अतो दशरथेन दानानि दत्तानि, इतरैरपि पुत्रजन्मन्येवमाचरणीयमित्ययं धर्मः सूचितः ॥

अतीत्यैकादशाहं तु नामकर्म तथाकरोत् ।
ज्येष्ठं रामं महात्मानं भरतं कैकयीसुतम् ॥

सौमित्रिं लक्ष्मण इति शत्रुघ्नमपरं तथा ।
वसिष्ठः परमप्रीतो नामानि कृतवांस्तदा ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ब्राह्मणान्भोजयामास पौरजानपदानपि ।
अददाद्ब्राह्मणानां च रत्नौघममितं बहु ॥

अनेन नामकर्मण्यपि ब्राह्मणपौरजानपदभोजनानि दानानि च कर्तव्यानि इति सूचितम् ॥

तेषां जन्मक्रियादीनि सर्वकर्माण्यकारयत् ।
तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः ।
बभूव भूयो भूतानां स्वयंभूरिव संमतः ॥

सर्वे वेदविदः शूराः सर्वे लोकहिते रताः ।
सर्वे ज्ञानोपसंपन्नाः सर्वे समुदिता गुणैः ॥

तेषामपि महातेजा रामः सत्यपराक्रमः ।
इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मलः ॥

गजस्कन्धेऽश्वपृष्ठे च रथचर्यासु संमतः ।
धनुर्वेदे च निरतः पितृशुश्रूषणे रतः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः ।
रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः ॥

सर्वप्रियकरस्तस्य रामस्यापि शरीरतः ।
लक्ष्मणो लक्ष्मिसंपन्नो बहिः प्राण इवापरः ॥

न च तेन विना निद्रां लभते पुरुषोत्तमः ।
मृष्टमन्नमुपानीतमश्नाति न हि तं विना ॥

यदा हि हयमारूढो मृगयां याति राघवः ।
तदैनं पृष्ठतोऽभ्येति सधनुः परिपालयन् ॥

भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हि सः ।
प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा प्रियः ॥

स चतुर्भिर्महाभागैः पुत्रैर्दशरथः प्रियैः ।
बभूव परमप्रीतो देवैरिव पितामहः ॥

ते यथाज्ञानसंपन्नाः सर्वे समुदिता गुणैः ।
ह्रीमन्तः कीर्त्तिमन्तश्च सर्वज्ञा दीर्घदर्शिनः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तेषामेवंप्रभावाणां सर्वेषां दीप्ततेजसाम् ।
पिता दशरथो हृष्टो ब्रह्मा लोकाधिपो यथा ॥

ते चापि मनुजव्याघ्रा वैदिकाध्ययने रताः ।
पितृशुश्रूषणरता धनुर्वेदे च निष्ठिताः ॥

अनेन जातकर्मादिसंस्कारविशिष्टस्यैव वेदाध्ययनादिसर्वविद्याधिकार इति सूचितम् । राज्ञां तु विशेषतो विद्याधिगमो वृद्धोपसेवनं नीतिमार्गानुसारित्वं विनयोपपन्नत्वं चात्यावश्यिकम् । तथा च कामन्दके— 'शास्त्राय गुरुसंयोगः शास्त्रं विनयवृद्धये । विद्याविनीतो नृपतिर्न कृच्छ्रेष्ववसीदति ॥ वृद्धोपसेवी नृपतिः सतां भवति संमतः । प्रेर्यमाणोऽप्यसद्वृत्तैर्नाकार्येषु प्रवर्तते ॥ आददानः प्रतिदिनं कलाः सम्यङ्महीपतिः । शुक्लपक्षे प्रविचरञ्शशाङ्क इव वर्धते ॥ जितेन्द्रियस्य नृपतेर्नीतिमार्गानुसारतः । भवन्त्युज्ज्वलिता लक्ष्म्यः कीर्त्तयश्च नभःस्पृशः ॥ गुरुस्तु विद्याधिगमाय सेव्यते श्रुता च विद्या मतये महात्मनाम् । श्रुतानुवर्तीनि मतानि वेध-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


सामसंशयं साधु भवन्ति भूतये ॥ भवति हि विनयोपबृंहितो नृपतिशमाय पदाय च क्षमः । सुनिपुणमुपसेव्य सद्गुरुं चिरमनुवृत्तिपरो विभूतये ॥ अविनयरतमादरादृते वशमवशं च नयन्ति विद्विषः । श्रुतविनयविधिः समाश्रितस्तनुरपि नैति पराभवं क्वचित्' इति ॥

अथ राजा दशरथस्तेषां दारक्रियां प्रति ।
चिन्तयामास धर्मात्मा सोपाध्यायः सबान्धवः ॥

अनेन विद्याग्रहणानन्तरं दारक्रियेति सूचितम् । तथा च गौतमः— 'विद्यान्ते गुरुरर्थेन निमन्त्र्य कृतानुज्ञातस्य वा स्नानम्' इति । याज्ञवल्क्योऽपि— 'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्' इति ॥

तस्य चिन्तयमानस्य मन्त्रिमध्ये महात्मनः ।
अभ्यागच्छन्महातेजा विश्वामित्रो महामुनिः ॥

प्रत्युज्जगाम संहृष्टो ब्रह्माणमिव वासवः ।
स दृष्ट्वा ज्वलितं दीप्त्या तापसं संशितव्रतः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

प्रहृष्टवदनो राजा ततोऽर्घ्यमुपहारयत् ।
स राज्ञः प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्मणा ।
कुशलं चाव्ययं चैव पर्यपृच्छन्नराधिपम् ॥

पुरे कोशे जनपदे बान्धवेषु सुहृत्सु च ।
वसिष्ठं च समागम्य कुशलं मुनिपुंगवः ॥

ऋषींश्चान्यान्यथान्यायं महाभागानुवाच ह ।
ते सर्वे हृष्टमनसस्तस्य राज्ञो निवेशनम् ॥

विविशुः पूजितास्तत्र निषेदुश्च यथार्हतः ।
अथ हृष्टमना राजा विश्वामित्रं महामुनिम् ॥

उवाच परमोदारो हृष्टस्तमभिपूजयन् ।
यथा मृतस्य संप्राप्तिर्यथा वर्षमनूदके ॥

यथा सदृशदारेषु पुत्रजन्म प्रशस्यते ।
प्रनष्टस्य यथा लाभो यथा हर्षो महोदयः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तथैवागमनं मन्ये स्वागतं ते महामुने ।
कं च ते परमं कामं करोमि किमु हर्षितः ॥

पात्रभूतोऽसि मे ब्रह्मन्दिष्ट्या प्राप्तोऽसि धार्मिक ।
अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥

पूर्वं राजर्षिशब्देन तपसा द्योतितप्रभः ।
ब्रह्मर्षित्वमनुप्राप्तः पूज्योऽसि बहुधा मया ॥

तदद्भुतमिदं विप्र पवित्रं परमं मम ।
शुभक्षेत्रगतश्चाहं तव संदर्शनात्प्रभो ॥

ब्रूहि यत्प्रार्थितं तुभ्यं कार्यमागमनं प्रति ।
इच्छाम्यनुगृहीतोऽहं त्वदर्थपरिवृद्धये ॥

कार्यस्य न विमर्शं च गन्तुमर्हसि कौशिक ।
कर्ता चाहमशेषेण दैवतं हि भवान्मम ॥

मम चायमनुप्राप्तो महानभ्युदयो द्विज ।
तवागमनजः कृत्स्नो धर्मश्चानुत्तमो मम ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

इति हृदयसुखं निशम्य वाक्यं
श्रुतिसुखमात्मवता विनीतमुक्तम् ।
प्रथितगुणयशा गुणैर्विशिष्टः
परमऋषिः परमं जगाम हर्षम् ॥

अत्र सकलगुणाभिरामस्य रामस्य दारक्रियां चिन्तयन्तं दशरथं प्रति विश्वामित्रागमनम् 'अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्' इति स्मरणात् चिन्तासमये महतामाकस्मिकप्राप्तिः चिन्तितार्थप्रदेति सूचयन्ति । तदागमनसमनन्तरं च तत्कृताभ्युद्गमनासनार्घ्यप्रदानाभीष्टदानं प्रतिज्ञाभिरन्येषामपि महदागमने एवं कर्तव्यता सूचिता । एकोनविंशे—

तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् ।
हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥

सदृशं राजशार्दूल तवैतद्भुवि नान्यतः ।
महावंशप्रसूतस्य वसिष्ठव्यपदेशिनः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


यत्तु मे हृद्गतं कार्यं तस्य कार्यस्य निश्चयम् ।
कुरुष्व राजशार्दूल भव सत्यप्रतिश्रवः ॥

अनेन महत्संनिधौ महापुरुषाधिष्ठितेन महावंशप्रसूतेन उपचारार्थमपि निर्वाह्यमेव वक्तव्यम्, अनिर्वाह्यं यत्किंचिन्न वक्तव्यम्, इति सूचितम् । अनन्तरम् 'अहं नियममातिष्ठे' इत्यादिना सुबाहुमारीचप्रयुक्तस्वयज्ञविघ्नमुपन्यस्य,

न च क्रोधं समुत्स्रष्टुं बुद्धिर्भवति पार्थिव ।
तथाभूता हि सा चर्या न शापस्तत्र मुच्यते ॥

इत्युक्तवान् । अनेन नियमनिष्ठेन स्वकर्मविरोधपरिहारार्थमपि कोपो न कर्तव्य इति सूचितम् ॥

स्वपुत्रं राजशार्दूल रामं सत्यपराक्रमम् ।
काकपक्षधरं शूरं ज्येष्ठं मे दातुमर्हसि ॥

शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा ।
राक्षसा विघ्नकर्तार एतेषामपि नाशने ॥


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


श्रेयश्चास्मै प्रदास्यामि बहुरूपं न संशयः ।
राजंस्त्रिष्वपि लोकेषु येन ख्यातिं गमिष्यति ॥

न च तौ राममासाद्य शक्तौ स्थातुं कथंचन ।
न च तौ राघवादन्यो हन्तुमुत्सहते पुमान् ।
न च पुत्रकृतं स्नेहं कर्तुमर्हसि पार्थिव ॥

अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् ।
वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः ॥

यदि त्वं धर्मलाभं च यशश्च परमं भुवि ।
स्थिरमिच्छसि राजेन्द्र रामं मे दातुमर्हसि ॥

इत्यनेन कल्पस्थायियशोलाभाय अतिबालः परमप्रेमास्पदं ज्येष्ठपुत्रोऽपि देय इति विश्वामित्रवचनेन अन्येनापि तादृशफलार्थिना परमप्रेमास्पदमपि वस्तु सत्पात्रे देयम् इति सूचितम् । ततः,

यद्यभ्यनुज्ञां काकुत्स्थ ददते तव मन्त्रिणः ।
वसिष्ठप्रमुखाः सर्वे ततो रामं विसर्जय ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


अनेन राज्ञा मन्त्रिपुरोहिताभ्यनुज्ञातेनैव कार्यं कर्तव्यम् इति सूचितम् । विंशैकविंशयोः—

षष्टिर्वर्षसहस्राणि जातस्य मम कौशिक ।
दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि ॥

चतुर्णामात्मजानां हि प्रीतिः परमिका मम ।
ज्येष्ठं धर्मप्रधानं च न रामं नेतुमर्हसि ॥

कथमप्यमरप्रख्यं संग्रामाणामकोविदम् ।
बालं मे तनयं ब्रह्मन्नैव दास्यामि पुत्रकम् ॥

इति ।

तच्छ्रुत्वा वचनं तस्य स्नेहपर्याकुलाक्षरम् ।
समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् ॥

पूर्वमर्थं प्रतिश्रुत्य प्रतिज्ञां हातुमिच्छसि ।
राघवाणामयुक्तोऽयं कुलस्यास्य विपर्ययः ॥

इति । एतद्वंश्यानामर्थिवैमुख्याकरणं धर्म उक्तः ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


अयमर्थः विष्णुपुराणे सौभरिणाख्यातः— 'निर्वेष्टुकामोऽस्मि नरेन्द्र कन्यां प्रयच्छ मे मा प्रणयं विभाङ्क्षीः। न ह्यर्थिनः कार्यवशादुपेताः ककुत्स्थवंशे विमुखाः प्रयान्ति॥ अन्येऽपि सन्त्येव नृपाः पृथिव्यां मान्धातरेषां तनयाः प्रसूताः। किं त्वर्थिनामर्थितदानदीक्षाकृतव्रतं श्लाघ्यमिदं कुलं ते' इति। तथा च कालिदासः— गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम्। गतो वदान्यान्तरमित्ययं मे मा भूत्परीवादनवावतारः' इति।

यदीदं ते क्षमं राजन्गमिष्यामि यथागतम्।
मिथ्याप्रतिज्ञः काकुत्स्थ सुखी भव सबान्धवः॥

तस्य रोषपरीतस्य विश्वामित्रस्य धीमतः।
चचाल वसुधा कृत्स्ना विवेश च भयं सुरान्॥

त्रस्तरूपं तु विज्ञाय जगत्सर्वं महामुनिः।
नृपतिं सुव्रतो धीरो वसिष्ठो वाक्यमब्रवीत्॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


इक्ष्वाकूणां कुले जातः साक्षाद्धर्म इवापरः ।
मतिमान्सुव्रतः श्रीमान्न धर्मं हातुमर्हसि ॥

संश्रुत्यैवं करिष्यामीत्युक्त्वा वाक्यमकुर्वतः ।
इष्टापूर्तवधो भूयात्तस्माद्रामं विसर्जय ॥

कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः ।
गुप्तं कुशिकपुत्रेण ज्वलनेनामृतं यथा ॥

एष विग्रहवान्धर्म एष वीर्यवतां वरः ।
एष बुद्ध्याधिको लोके तपसश्च परायणम् ॥

सर्वास्त्राणि भृशाश्वस्य पुत्राः परमधार्मिकाः ।
कौशिकाय पुरा दत्ता यदा राज्यं प्रशासति ॥

अपूर्वाणां च जनने शक्तो भूयश्च धर्मवित् ।
न रामगमने राजन्संशयं गन्तुमर्हसि ॥

तेषां निग्रहणे शक्तः स्वयं तु कुशिकात्मजः ।
तव पुत्रहितार्थाय त्वामुपेत्य हि याचते ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन पुत्रस्नेहेन प्रतिश्रुतार्थविमुखं राजानं तेन च कुपितं विमुखं विश्वामित्रमवेक्ष्य सकलभुवनक्षोभकरं विश्वामित्रक्रोधकृतसर्वनाशपरिजिहीर्षया प्रतिश्रुतार्थपरित्यागजनितेष्टापूर्तवधादिपरिजिहीर्षया च वसिष्ठकृतोपपत्तिप्रतिपादनपूर्वकं प्रतिश्रुतार्थदानप्रतिपादनेन उत्पथं प्रतिपन्नो राजा मन्त्रिभिः शिक्षणीय इति सूचितम् ॥

**इति मुनिवचनात्प्रसन्नचित्तो**
**रघुवृषभश्च मुमोद भास्वराङ्गः ।**
**गमनमभिरुरोच राघवस्य**
**प्रथितयशाः कुशिकात्मजाय बुद्ध्या ॥**

अनेन मन्त्रिणा समये कृतो हितोपदेशः भूष्णुना राज्ञाङ्गीकर्तव्य इति सूचितम् । तथा च कामन्दकः—'सज्जमानमकार्येषु निरुन्ध्युर्मन्त्रिणो नृपम् । गुरूणामिव चैतेषां शृणुयाद्वचनं नृपः ॥ नृपस्य ते हि सुहृदस्त एव गुरवो मताः । य एनमुत्पथगतं वारयन्त्यनिवारिताः ॥ सज्जमानमकार्येषु सुहृदो वारयन्ति ये । न केवलं ते सुहृदो गुरवो गुरवो हि ते' इति । द्वाविंशे—

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

कृतस्वस्त्ययनं मात्रा पित्रा दशरथेन च ।
पुरोधसा वसिष्ठेन मङ्गलैरभिमन्त्रितम् ॥

स्वपुत्रं मूर्ध्न्युपाघ्राय राजा दशरथः प्रियम् ।
ददौ कुशिकपुत्राय सुप्रीतेनान्तरात्मना ॥

अनेन गुरुजनैः स्वस्त्ययनपूर्वकमेव महाफलकार्याय पुत्रादिः प्रेषणीय इति सूचितम् । तथा च ऐतरेयब्राह्मणम्— 'ते देवा अब्रुवन् गायत्री त्वं न इमं सोमं राजानमाहर इति, सा तथेत्यब्रवीत्, तां वै मा सर्वेण स्वस्त्ययनेनानुमन्त्रयध्वमिति, तथेति सोदपतत्, तां देवाः सर्वेण स्वस्त्ययनेनान्वमन्त्रयन्त प्रेति चेति चेत्येतद्वै सर्वं स्वस्त्ययनं यत्प्रेति चेति, चेति तद्योऽस्य प्रियः स्यात्तमेतेनानुमन्त्रयेत प्रेति चेति चेति, स्वस्त्येव गच्छेति, स्वस्ति पुनरागच्छतीति' । तत्रापि प्रथमं मातृकृतमङ्गलप्रतिपादनेन इतरकृतमङ्गलापेक्षया मातृकृतमङ्गलस्यावश्यिकता व्यतिरेकेणान्वयेन च सूचिता । व्यतिरेकस्तावत् पाण्डवाञ्जेतुकामो दुर्योधनः 'शिवमाशंस मे मातः युध्यमान-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्य शत्रुभिः' इति अष्टादशाहान्यपि स्वमातरं गान्धारीं प्रार्थितवान्। सा च 'यतो धर्मस्ततो जयः' इति वदन्ती मङ्गलं न कृतवती। स च तदभावादेव विपरीतं फलं प्राप्तवान्। अयमर्थो महाभारते स्त्रीपर्वणि पुत्रशतवधजनितामर्षेण पाण्डवाञ्शप्तुमुद्युक्तां गांधारीं सान्त्वयता व्यासेन स्पष्टीकृतः। तथा हि— 'न कोपः पाण्डवे कार्यो गांधारि शममाप्नुहि। रजो निगृह्यतामेतच्छृणु चेदं वचो मम॥ उक्तास्यष्टादशाहानि पुत्रेण जयमिच्छता। शिवमाशंस मे मातर्युध्यमानस्य शत्रुभिः॥ सा तथा वाच्यमाना त्वं काले काले जयैषिणा। उक्तवत्यसि गांधारि यतो धर्मस्ततो जयः॥ न चाप्यतीतां गांधारि वाचं ते वितथामहम्। स्मरामि भाषमाणायास्तथा प्राणहिता ह्यसि' इति। अन्वयस्तु अयोध्याकाण्डे,

**शापितासि मम प्राणैः कुरु स्वस्त्ययनं मम।**

इति मातृमङ्गलमेव रामः प्रार्थितवान्। तस्मै सापि

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


यं पालयसि धर्मं त्वं धृत्या च नियमेन च ।
स वै राघवशार्दूल धर्मस्त्वामभिरक्षतु ॥

इत्यादिना ग्रन्थेन, स्वयं मङ्गलं विदधती

यन्मङ्गलं सुपर्णस्य विनताकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥

अमृतोत्पादने दैत्यान्घ्नतो वज्रधरस्य च ।
अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥

इति मातृमङ्गलान्येव प्रयुक्तम् ॥

विश्वामित्रो ययावग्रे ततो रामो महायशाः ।
काकपक्षधरो धन्वी तं च सौमित्रिरन्वगात् ॥

अनेन महान्तमनुसृत्य गन्तव्यमिति सूचितम् ।

अध्यर्धयोजनं गत्वा सरय्वा दक्षिणे तटे ।
रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

गृहाण वत्स सलिलं मा भूत्कालस्य पर्ययः।
मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा॥

पितामहसुते ह्येते विद्ये तेजःसमन्विते।
ददामि तव काकुत्स्थ सदृशास्त्वं हि धार्मिक॥

ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनः शुचिः।
प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः॥

गुरुकार्याणि सर्वाणि नियुज्य कुशिकात्मजे।
ऊषुस्तां रजनीं तीरे सरय्वाः सुसुखं त्रयः॥

अनेनाचार्येण सदृशे शिष्ये नियमोपदेशपूर्वकं मन्त्रोपदेशः शुचौ देशे कर्तव्यः शिष्येणापि कृतस्नानाचमनेन गुरुनियमेन मन्त्रं गृहीत्वा गुरुशुश्रूषणादिकमवश्यं कर्तव्यमिति सूचितम्। त्रयोविंशे—

प्रभातायां तु शर्वर्यां विश्वामित्रो महामुनिः।
अभ्यभाषत काकुत्स्थौ शयानौ पर्णसंस्तरे॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


कौसल्यासुप्रजा राम पूर्वा संध्या प्रवर्तते।
उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम्॥

अनेन 'पूर्वोत्था' इति स्मृतिसिद्धं पूर्वोत्थानादिकमध्वश्रमेणाकुर्वन्नपि शिष्यः आचार्येण प्रबोध्य नित्यकर्मसु नियोज्य इति सूचितम्॥

तस्यर्षेः परमोदारं वचः श्रुत्वा नरोत्तमौ।
स्नात्वा कृतोदकौ वीरौ जेपतुः परमं जपम्॥

कृताह्निकौ महावीर्यौ विश्वामित्रं तपोधनम्।
अभिवाद्याभिसंहृष्टौ गमनायोपतस्थतुः॥

अनेन प्रातरुत्थानध्यानवन्दनादि कृत्वा गुर्वभिवादनं कर्तव्यमिति सूचितम्। तथा च मनुः— 'अभिवादनशीलस्य नित्यं वृद्धोपसेविनः। चत्वारि तस्य वर्धन्ते ह्यायुः प्रज्ञा यशो बलम्'। कामन्दकेऽपि— 'वर्धयन्निह धर्मार्थौ सेवितौ साद्भिरादरात्। निगृहीतेन्द्रियग्रामः कुर्वीत गुरुसेवनम्' इति। ततो राघवौ गङ्गास-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


रयूसंगमे ऋष्याश्रमं दृष्ट्वा विश्वामित्रं पप्रच्छतुः । स च,

तयोस्तद्वचनं श्रुत्वा प्रहस्य मुनिपुंगवः ।
अब्रवीच्छ्रूयतां राम यस्यायं पूर्व आश्रमः ॥

कंदर्पो मूर्तिमानासीत्काम इत्युच्यते बुधैः ।
तपस्यन्तमिह स्थाणुं नियमेन समाहितम् ॥

कृतोद्वाहं तु देवेशं गच्छन्तं समरुद्गणम् ।
धर्षयामास दुर्मेधा हुंकृतश्च महात्मना ॥

दग्धश्चाभूद्धि रुद्रेण चक्षुषा रघुनन्दन ।
व्यशीर्यन्त शरीरात्स्वात्सर्वगात्राणि दुर्मतेः ॥

अनङ्ग इति विख्यातस्तदाप्रभृति राघव ।
स चाङ्गविषयः श्रीमान्यत्राङ्गं स मुमोच ह ॥

तस्यायमाश्रमः पुण्यः ।

इत्यनेन महापुरुषद्रोहिणो दुर्बलस्य स्वरूपनाशोऽपि भवति महापुरुषद्रोहः सर्वथा न कर्तव्य इति सूचितम् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तत्रत्यऋषिभिः पूजिताः

न्यवसन्सुसुखं तत्र स्थाण्वाश्रमपदे तदा।

चतुर्विंशे— ततः प्रभाते तदाश्रमवासिमुनिजनाहृत-नावा सरयू तरन्रामः सरिन्मध्ये तुमुलजलघोषं श्रुत्वा किमिदमिति पप्रच्छ। स च,

कथयामास धर्मात्मा तस्य शब्दस्य निश्चयम्।
कैलासशिखरे राम मनसा निर्मितं सरः।
ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः॥

तस्मात्सुस्राव सरसः सायोध्यामुपगूहते।
सरःप्रवृत्ता सरयूः पुण्या ब्रह्मसरश्च्युता॥

तस्यायमतुलः शब्दो जाह्नवीमभिवर्तते।
वारिसंक्षोभजो राम प्रणामं नियतः कुरु॥

ताभ्यां तु तावुभौ कृत्वा प्रणाममतिधार्मिकौ।
तीरं दक्षिणमासाद्य जग्मतुर्लघुविक्रमौ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन पुण्यतीर्थे दर्शनसमनन्तरमेव वन्दनादिपूजा कर्तव्येति सूचितम् ॥

स वनं घोरसंकाशं दृष्ट्वा नरवरात्मजः ।
अविप्रहतमैक्ष्वाकः पप्रच्छ मुनिपुंगवम् ॥

अहो वनमिदं दुर्गं झिल्लिकागणनादितम् ।
धवाश्वकर्णककुभैर्बिल्वतिन्दुकपाटलैः ॥

संकीर्णं बदरीभिश्च किं न्वेतद्दारुणं वनम् ।
तमुवाच महातेजा विश्वामित्रो महामुनिः ॥

एतौ जनपदौ स्फीतौ पूर्वमास्तां नरोत्तम ।
मलदाश्च करूशाश्च देवनिर्माणनिर्मितौ ॥

पुरा वृत्रवधे राम मलेन समभिप्लुतम् ।
क्षुधा चैव सहस्राक्षं ब्रह्महत्या समाविशत् ॥

तमिन्द्रं स्नापयन्देवा ऋषयश्च तपोधनाः ।
कलशैः स्नापयामासुर्मलं चास्य प्रमोचयन् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


सोऽस्मिन्देशे मलं त्यक्त्वा देवः कारूशमेव च ।
वृत्राभिद्रोहसंभूतं ततो हर्षमवाप्तवान् ।
ददौ देशस्य सुप्रीतो वरं प्रभुरनुत्तमम् ॥

इमौ जनपदौ स्फीतौ ख्यातिं लोके गमिष्यतः ।
मलदाश्च करूशाश्च मुदितौ धनधान्यतः ॥

कस्यचित्त्वथ कालस्य यक्षी वै कामरूपिणी ।
बलं नागसहस्रस्य धारयन्ती तदा ह्यभूत् ॥

ताडका नाम भद्रं ते भार्या सुन्दस्य धीमतः ।
इमौ जनपदौ नित्यं विनाशयति राघव ॥

सेयं पन्थानमावार्य वसत्यध्यर्धयोजने ।
अत एव च गन्तव्यं ताडकाया वनं यतः ॥

स्वबाहुबलमाश्रित्य जहीमां दुष्टचारिणीम् ।
मन्नियोगादिमं देशं कुरु निष्कण्टकं पुनः ॥

पञ्चविंशे— अथ मुनिवाक्यश्रवणसमनन्तरमबलायाः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

यक्षिण्याः कथं नागसहस्रबलमिति रामेण पृष्टो विश्वामित्रः सुतार्थं तप्यमानसुकेतुतोषितपितामहवरलब्धमदावलसहस्रबलावलेपात्सुन्दसंजातनिजतनयमारीचेन सह अगस्त्यशापप्राप्त्या राक्षसभावशापजनितक्रोधेन देवब्राह्मणदेशानुत्सादयन्तीं ताडकां जहीति रामभद्रमवादीत्। यत्तु स्त्रीवधे पापं गौतमधर्मे 'अनात्रेय्यां चैवम्' इति। अनात्रेयीस्त्रीवधे 'शूद्रे संवत्सरमृषभैकादशाश्च गा दद्यात्' इति शूद्रवधोक्तप्रायश्चित्तातिदेशात्। युद्धकाण्डेऽपि मायासीतावधोद्युक्तमिन्द्रजितं प्रति हनूमद्वाक्यम्—

ये च स्त्रीघातिनां लोका वीरलोकेषु कुत्सिताः।
इह जीवितमुत्सृज्य प्रेत्य तान्प्रतिपत्स्यसे॥

इति। भारते महाप्रस्थानेऽपि— 'प्रतिप्रदानं शरणागतस्य स्त्रियो वधो ब्राह्मणस्वापहारः। मित्रद्रोहस्तानि चत्वारि शक्र भक्तत्यागश्चैव समं मतो मे' इति यत्तदुष्टस्त्रीवधविषयमिति स्पष्टीकुर्वन्विश्वामित्रो राममाह—

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


एनां राघव दुर्वृत्तां यक्षीं परमदारुणाम् ।
गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमाम् ॥

न ह्येनां शापसंदुष्टां कश्चिदुत्सहते पुमान् ।
निहन्तुं त्रिषु लोकेषु त्वामृते रघुनन्दन ॥

न हि ते स्त्रीवधकृते घृणा कार्या नरोत्तम ।
चातुर्वर्ण्यहितार्थाय कर्तव्यं राजसूनुना ॥

नृशंसमनृशंसं वा प्रजारक्षणकारणात् ।
पातकं वा सदोषं वा कर्तव्यं रक्षता सताम् ॥

राज्यभारनियुक्तानामेष धर्मः सनातनः ।
अधर्म्यां जहि काकुत्स्थ धर्मो ह्यस्या न विद्यते ॥

इति दुष्टस्त्रीवधे दोषो नास्तीति शास्त्रेण न्यायेन चोक्त्वा स्वोक्तार्थे महतां संमतिमप्याह—

श्रूयते हि पुरा शक्रो विरोचनसुतां नृप ।
पृथिवीं हन्तुमिच्छन्तीं मन्थरामभ्यसूदयत् ॥



CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

विष्णुना च पुरा राम भृगुपत्नी दृढव्रता।
अनिन्द्रं लोकमिच्छन्ती काव्यमाता निषूदिता॥

एतैरन्यैश्च बहुभी राजपुत्र महात्मभिः।
अधर्मनिरता नार्यो हताः पुरुषसत्तमैः॥

एवमधर्मिष्ठाया लोकोपद्रवकारिण्याः स्त्रिया वधे दोषो नास्तीति विश्वामित्रेण प्रतिपादितम्। विष्णुपुराणे तु एतादृश्या वधस्य पुण्यप्रदत्वमप्युक्तम्। तथा हि पृथोरननुकूला पृथ्वी वधार्थमुद्युक्तं पृथुं प्राह— 'स्त्रीवधे त्वं महापापं किं नरेन्द्र न पश्यसि। येन मां हन्तुमत्यर्थं प्रकरोषि नृपोद्यमम्॥ पृथुरुवाच— एकस्मिन्यत्र निधनं प्रापिते दुष्टचारिणि। बहूनां भवति क्षेमस्तस्य पुण्यप्रदो वधः' इति। अनेन धर्मविचारपूर्वकं ताडकावधे दोषो नास्ति, पुण्यमेव भविष्यतीति तात्पर्येण महर्षिविश्वामित्रेणोक्तम्। इदानींतनैरपि बहूनां क्षेमार्थमेकस्य हनने दोषो नास्तीति ज्ञेयम्। विशेषतो राज्ञा जनपदरक्षणदीक्षितेन अवध्यवधोऽपि कर्तव्य इत्यपि सूचितम्। षड्विंशे—

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


मुनेर्वचनमक्लीबं श्रुत्वा नरवरात्मजः ।
राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच दृढव्रतः ॥

पितुर्वचननिर्देशात्पितुर्वचनगौरवात् ।
वचनं कौशिकस्येति कर्तव्यमविशङ्कया ॥

अनुशिष्टोऽस्म्ययोध्यायां गुरुमध्ये महात्मना ।
पित्रा दशरथेनाहं नावज्ञेयं च तद्वचः ॥

सोऽहं पितृवचः श्रुत्वा शासनाद्ब्रह्मवादिनः ।
करिष्यामि न संदेहस्ताडकावधमुत्तमम् ॥

एवमुक्त्वा धनुर्मध्ये बद्ध्वा मुष्टिमरिंदमः ।
ज्याघोषमकरोत्तीव्रं दिशः शब्देन नादयन् ॥

अनेन विश्वामित्रो गुरुस्तस्य वचनमविचारेण कर्तव्यम्, एवं सति दशरथेनापि 'कौशिको यद्वदति तत्कर्तव्यम्' इत्यनुशिष्टो रामः एकस्य गुरोर्वचनमनुल्लङ्घनीयम्, गुरुद्वयानुशिष्टं वचः कथं परिहर्तुं शक्यत इति स्त्रीवध-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

निषेधे सत्यपि ताडकावधमङ्गीकृतवान्। इतरैरपि गुरुशासने सति अविशङ्कयाधर्म्यमपि तदुक्तमवश्यं कर्तव्यम् इति सूचितम्। तथा अयोध्याकाण्डे कौसल्यां प्रति रामवचनम्—

ऋषिणा च पितुर्वाक्यं कुर्वता व्रतचारिणा।
गौर्हता जानता धर्मं कण्डुनापि विपश्चिता॥

जामदग्न्येन रामेण रेणुका जननी स्वयम्।
कृत्ता परशुनारण्ये पितुर्वचनकारणात्॥

इति गुरुवचनपरिपालनमेव गरीयान्धर्म इति रामेणाङ्गीकृतम्। ततो ज्याशब्दश्रवणप्रकुपितामभिद्रवन्तीं ताडकामभिलक्ष्य रामो लक्ष्मणमब्रवीत्—

एनां पश्य दुराधर्षां मायाबलसमन्विताम्।
विनिवृत्तां करोम्यद्य हृतकर्णाग्रनासिकाम्॥

न ह्येनामुत्सहे हन्तुं स्त्रीस्वभावेन लक्षिताम्।
वीर्यं चास्या गतिं चैव हनिष्यामीति मे मतिः॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


गुरुवचनगौरवात्ताडकावधं प्रतिश्रुत्य स्त्रीस्वभावेन लक्षितामेनां न हनिष्यामीति रामेण कथमुक्तमिति चेत्, स्त्रीवधः सहसा न कर्तव्यः विरूपकरणादिस्त्रीदण्डनमेव प्रथमतः क्रियते; तेन चातिक्रुद्धा स्वयमेवाततायिन्यागमिष्यतीति अनन्तरं तां हनिष्यामि, एवं च 'आततायिनमायान्तं हन्यादेवाविचारयन्' इति शास्त्रमप्यनुगृहीतं भवति; अनेन लोकापवादोऽपि परिहृतो भविष्यति; गुर्वाज्ञापि च पालिता भवतीत्येतदभिप्रायेण उक्तमिति न विरोधः। तद्वधोऽनभिमतश्चेन्मारीचवन्मानवास्त्रेण दूरे प्रक्षिपेत्। तथा अकृत्वा हस्तकर्णनासाच्छेदनादिमुखेनैव ताडका रामेण निषूदितेति उत्तरत्र प्रतिपादयिष्यते। एवं ब्रुवाणं रामं कोपेन पुनरभिद्रवन्तीं राघवाय जयमाशंसमानो विश्वामित्रः निर्भर्त्सयामास ताम्। मायाबलेनाश्मरजोवर्षं वर्षन्तीं निजशरनिकृत्तकरां सौमित्रिहृतकर्णाग्रनासिकां स्वघृणावशेषितप्राणां निशाचरबलवृद्धिकरसंध्याकालागमनभीतेन घृणां निषेधता विश्वामित्रेण संचोदितो रामः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


शरेणोरसि विव्याध सा पपात ममार च।

ततस्तत्कर्मसंतुष्टमानसैः करिष्यमाणनिशाचरवधोपयोगिभृशाश्वतनयास्त्रगणोपदेशं प्रार्थयमानैस्त्रिदशैः पूज्यमानेन विश्वामित्रमहर्षिणा आलिङ्गनादिपूर्वकमुपलाल्यमानौ सिद्धगणसंस्तूयमानौ तत्रैव सुखमूषतुः। सप्तविंशाष्टाविंशयोः- ततः प्रभाते ताडकावधसंतुष्टगाधिसुतोपदिष्टं सोपसंहारमस्त्रग्रामं गृहीत्वा गच्छन्दर्शनीयमृगाकीर्णं वृक्षषण्डं वीक्षमाणो रामः कस्यायमाश्रमः यज्ञविघ्नकरमारीचसुबाहुनिरसनपूर्वकं यज्ञक्रिया क्व रक्षणीयेत्यपृच्छत्। एकोनत्रिंशे—अथ विश्वामित्रोऽकथयत्—इह हि देववरे विष्णौ तपश्चरणाय बहुकालं वसति सति वैरोचनिरिन्द्रादीन्निर्जित्याक्रान्तत्रिभुवनो महान्तं यज्ञमारब्धवान्। तदा देवैरस्य याचकेभ्यः सर्वकामदातुरसमाप्ते क्रतौ मायायोगेन वामनत्वं गतोऽस्मत्कार्यं कुर्विति प्रार्थितो विष्णुरनेकवर्षतपश्चर्यापूर्वकमदित्या सह काश्यपकृतस्तुत्या संतुष्टः उपेन्द्रावतारेण देवसाहाय्याचरणरूपं वरं प्रदाय वामनरूपेणादित्यामवतीर्णो बलिं त्रीन्क्रमान्भिक्षित्वा मानेन त्रील्लो-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


कानाक्रम्येन्द्राय ददौ, अस्य वामनस्यायमाश्रमः, अत्रैव यज्ञविघ्नकरा राक्षसा निहन्तव्याः इति वदन्रामेण सह सिद्धाश्रमं प्रविश्य तत्र निवासिभिरर्घ्यादिभिः पूजितः रामलक्ष्मणाभ्यामद्यैव दीक्षां प्रविशेति प्रार्थितो विश्वामित्रो दीक्षां प्राविशत्। त्रिंशे— आरब्धयज्ञविघ्नकरमारीचसुबाहुमुखनिशाचरागमने समयाकाङ्क्षया षडहोरात्रा जागरूकावास्ताम्। तत्र रामः सुत्यादिनसमागतान्सुबाहुमारीचप्रमुखान्रुधिरौघेण वेदिमभिवर्षतो निशाचरान्मानवाग्नेयवायव्यास्त्रैस्ताडयामास। ततः मारीचनिरसनसुबाहुप्रमुखवधपूर्वकयज्ञसंरक्षणसंतोषितसकलमुनिगणपरिवृतेन गाधिसुतेन प्रीतेन संस्तूयमानः सलक्ष्मणो राम उवास। अनेन क्षत्रियेण जागरूकतया यज्ञादिधर्मानुष्ठातृसंरक्षणं कर्तव्यमिति सूचितम्। तथा च भारते राजधर्मे वसुमनोबृहस्पतिसंवादे— 'धर्मागमान्धर्मपरान्ये न रक्षन्ति मानवान्। पार्थिवाः पुरुषव्याघ्र तेषां पापं हरन्ति ते' इति। एकत्रिंशे— ततः प्रभाते महर्षयः

**विश्वामित्रं पुरस्कृत्य रामं वचनमब्रुवन्।**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मैथिलस्य नरश्रेष्ठ जनकस्य भविष्यति।
यज्ञः परमधर्मिष्ठो यत्र यास्यामहे वयम्।
त्वं चैव नरशार्दूल सहास्माभिर्गमिष्यसि॥

इति। अत्रानाहूतानामपि समीपे धर्मिष्ठयज्ञानुष्ठाने तद्दर्शनाय गमनं धर्म इति सूचितम्, अनाहूतगमननिषेधस्य आर्त्विज्येच्छुविषयत्वात्। तथा च गौतमः— 'न यज्ञमवृतो गच्छेद्दर्शनाय तु कामम्' इति। स्मृत्यन्तरमपि— 'अनाहूतोऽध्वरं गच्छेत्' इति। ततः

अद्भुतं च धनूरत्नं तत्र तद्द्रष्टुमर्हसि।

इति मुनिगणनिवेदितमाहेश्वरधनुःसंदर्शनसंजातकुतूहलेन दाशरथिना सह प्रस्थितो गाधिसुतः शोणाकूलमवाप। तं च रामः पप्रच्छ 'को न्वयं देशः' इति। द्वात्रिंशे—

ब्रह्मयोनिर्महानासीत्कुशो नाम महातपाः।
अक्लिष्टव्रतधर्मज्ञः सज्जनप्रतिपूजकः॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


वैदर्भ्यां जनयामास चतुरः सदृशान्सुतान्।
कुशाम्बं कुशनाभं च आधूर्तरजसं वसुम्॥

तानुवाच कुशः पुत्रान्धर्मिष्ठान्सत्यवादिनः।
क्रियतां पालनं पुत्रा धर्मं प्राप्स्यथ पुष्कलम्॥

कुशस्य वचनं श्रुत्वा चत्वारो लोकसंमताः।
निवेशं चक्रिरे सर्वे पुराणां नृवरास्तदा॥

कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत्पुरीम्।
कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम्॥

आधूर्तरजसो राम धर्मारण्यं महीपतिः।
चक्रे पुरवरं राजा वसुश्चक्रे गिरिव्रजम्॥

एतेन कुशाम्बादयः पितुरनुज्ञया तत्र तत्रावस्थाय पृथग्धर्ममाचरितवन्त इति गम्यते। ननु भ्रातॄणां मध्ये ज्येष्ठेन कर्मणि कृते सर्वैः कृतं भवति; तथा च मरीचिः—'बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः। सर्वेषां तु मतं

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


कृत्वा ज्येष्ठेनैव तु यत्कृतम् ।। द्रव्येण चाविभक्तेन सर्वै-रेव कृतं भवेत्'। तथा आश्वमेधिके पर्वणि युधिष्ठिरं प्रति कृष्णवचनम्— 'भीमसेनार्जुनौ चैव तथा माद्रवती-सुतौ। इष्टवन्तो भविष्यन्ति त्वयीष्टवति पार्थिव' इति। एवमादिषु बहुवचनेषु सत्सु रामयुधिष्ठिरादीनां महतामा-चारे च सति कथं पृथगनुष्ठानमिति चेत्, एतेषां वचना-नामविभक्तविषयत्वात् विभक्तानां तु पृथगेव धर्माचरणम्। तथा च बृहस्पतिः— 'एकपाकेन वसतां पितृदेवद्विजा-र्चनम्। एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे'। नार-दोऽपि— 'भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते। वि-भागे सति धर्मोऽपि भवेत्तेषां पृथक्पृथक्' इति। गौ-तमोऽपि— 'विभागे तु धर्मवृद्धिः' इति। मनुरपि— 'पितेव पालयेत्पुत्राञ्ज्येष्ठो भ्राता यवीयसः। पुत्रवच्चापि वर्तेर-ञ्ज्येष्ठे भ्रातरि धर्मतः। एवं सह वसेयुर्वा पृथग्वा धर्मका-म्यया। पृथग्विवर्धते धर्मस्तस्माद्धर्म्या पृथक्क्रिया' इति। नन्वेवं विभक्तानां भ्रातृणां पृथग्धर्मानुष्ठानसंभवेऽपि जी-वति पितरि कथं पुत्राणां पृथग्धर्माचरणम्, अनधिका-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


रात्? तथा च मनुः—'इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम्। गुरुशुश्रूषया चैव ब्रह्मलोकं समश्नुते॥ सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः। अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः॥ यावत्त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत्। तेष्वेव नित्यं शुश्रूषां कुर्यात्प्रियहिते रतः॥ तेषामनुपरोधेन पारत्र्यं यद्यदाचरेत्। तत्तन्निवेदयेत्तेभ्यो मनोवाक्कायकर्मभिः॥ त्रिष्वेतेष्विति कृत्यं हि पुरुषस्य समाप्यते। एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते' इति चेत् सत्यं पितुरनुज्ञाभावे नाधिकारः, अभ्यनुज्ञायां तु पितुराज्ञाकरणमेव मुख्यो धर्मः। तथा च मनुः—'एषां त्रयाणां शुश्रूषा परमं तप उच्यते। न तैरनभ्यनुज्ञातो धर्ममन्यं समाचरेत्' इति।

**जीवतो वाक्यकरणात्प्रत्यब्दं भूरिभोजनात्।**
**गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता॥**

इति पितृवाक्यस्य गौरवम् अयोध्याकाण्डे रामवाक्येनानुष्ठानेन च स्फुटम्। ननु 'ऊर्ध्वं पितुः पुत्रा रिक्थं भजेर-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न्मातुः' इति गौतमवचनेन 'ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः सह । भजेरन्पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥ त्रय एवाधना राजन्भार्या दासस्तथा सुतः । यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्' इति मनुवचनेन च पितुरूर्ध्वमेव विभागधनावगमात्, तत्पूर्वं विभागद्रव्याभावादनधिकार इति चेत्, जीवति पितरि पुष्कलधर्माचरणाय तेनैव विभागकरणे तदनुज्ञया धर्मानुष्ठानसंभवात् । अत एव श्रुतिः— 'मनुः पुत्रेभ्यो दायं व्यभजत' इति । आपस्तम्बोऽपि— 'जीवन्पुत्रेभ्यो दायं विभजेत्समम्' इति । गौतमोऽपि— 'जीवति चेच्छति पितरि' इति । तस्मात्पितुः कुशस्याज्ञया चतुर्भिः पुत्रैः पृथक्धर्माचरणं यत्कृतं तद्युक्तमेव । रामेणापि स्वयमेव स्वपुत्राणां भ्रातृपुत्राणां च राज्यानि विभज्य दत्तानि । तदुत्तरकाण्डे स्पष्टम् । अयं तु विभागः अधर्मिष्ठानां न भवति । तथा च मनुः— 'सर्वे एव विकर्मस्था नार्हन्ति भ्रातरो धनम्' इति । अत एव 'धर्मिष्ठान्सत्यवादिनः' इति तेषां विशेषणमुक्तम् । तेषु कौशाम्ब्यादिषु,

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


एषा वसुमती राम वसोस्तस्य महात्मनः ।
एते शैलवराः पञ्च प्रकाशन्ते समन्ततः ॥

सुमागधी नदी रम्या मगधान्विश्रुता ययौ ।
कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमम् ॥

जनयामास धर्मात्मा घृताच्यां रघुनन्दन ।
ताः सर्वगुणसंपन्ना रूपयौवनसंयुताः ॥

दृष्ट्वा सर्वगतो वायुरिदं वचनमब्रवीत् ।
अहं वः कामये सर्वा भार्या मम भविष्यथ ॥

तस्य तद्वचनं श्रुत्वा कन्याशतमथाब्रवीत् ।
प्रभावज्ञाः स्म ते सर्वाः किमस्मानवमन्यसे ॥

कुशनाभसुताः सर्वाः समर्थास्त्वां सुरोत्तम ।
स्थानाच्च्यावयितुं देवं रक्षामस्तु तपो वयम् ॥

पिता हि प्रभुरस्माकं दैवतं परमं च सः ।
यस्य नो दास्यति पिता स नो भर्ता भविष्यति ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन कन्यायाः पितृदानपूर्वको विवाहः प्रशस्त इति सूचितम्। तथा च बोधायनः— 'त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम्। ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम्'। याज्ञवल्क्योऽपि— 'पिता पितामहो भ्राता सकुल्यो जननी तथा। कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः' इति।

तासां तद्वचनं श्रुत्वा वायुः परमकोपनः।
प्रविश्य सर्वगात्राणि बभञ्ज भगवान्प्रभुः॥

ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम्।
स च ता दर्पिताः कन्या दीनाः परमशोभनाः॥

दृष्ट्वा भुग्नास्तदा राजा संभ्रान्त इदमब्रवीत्।
किमिदं कथ्यतां पुत्र्यः को धर्ममवमन्यते।
कुब्जाः केन कृताः सर्वा वेष्टन्त्यो नाभिभाषथ॥

त्रयस्त्रिंशे—

तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमतः।
शिरोभिश्चरणौ स्पृष्ट्वा कन्याशतमभाषत॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वायुः सर्वात्मको राजन्प्रधर्षयितुमिच्छति ।
पितृमत्यः स्म भद्रं ते स्वच्छन्देन वयं स्थिताः ॥

पितरं नो वृणीष्व त्वं यदि नो दास्यते तव ।
तेन पापानुबन्धेन वचनं न प्रतीच्छता ।
एवं ब्रुवन्त्यः सर्वाः स्म वायुना निहता भृशम् ॥

तासां तद्वचनं श्रुत्वा राजा परमधार्मिकः ।
प्रत्युवाच महातेजाः कन्याशतमनुत्तमम् ॥

क्षान्तं क्षमावतां पुत्र्यः कर्तव्यं सुमहत्कृतम् ।
ऐकमत्यमुपागम्य कुलं चावेक्षितं मम ॥

अलंकारो हि नारीणां क्षमा तु पुरुषस्य वा ।
दुष्करं तच्च वः क्षान्तं त्रिदशेषु विशेषतः ॥

क्षमा दानं क्षमा यज्ञः क्षमा सत्यं हि पुत्रिकाः ।
क्षमा यशः क्षमा धर्मः क्षमायां हि स्थितं जगत् ॥

इति कुशनाभस्य कन्याः प्रशस्य सदृशवरे प्रदानाय मन्त्रिभिः संमन्त्र्य सोमदानामकगन्धर्वीपरिचर्यासंतुष्टचू--

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

लिनामकमहर्षिदत्तं मानसं पुत्रं ब्रह्मदत्तनामकं काम्पिली-नामकनगरवासिनं राजानमाहूय तस्मै समीरणविगुणीकृतं कन्याशतकं दत्त्वा तत्करसंस्पर्शसमनन्तरमेव संप्राप्तपूर्व-रूपाः भर्त्रा ब्रह्मदत्तेन सह संतुष्टः काम्पिल्यां प्रेषयामास। सोमदापि स्वपुत्रसदृशस्नुषाशतदर्शनजनितसंतोषभरिता बभूव। चतुस्त्रिंशे— ततः कुशनाभः पुत्रलाभाय पुत्रीया-मिष्टिं कुर्वाणः ब्रह्मसुतकुशनामकस्वपित्रनुग्रहलब्धं गाधि-नामानं पुत्रमवाप। तेन गाधिना मम पित्रा ऋची-के प्रतिपादितां सत्यवतीं सशरीरं भर्त्रा सह स्वर्गं गतामंशान्तरेण कौशिकीति प्रसिद्धां सकललोकहित-चिकीर्षया हिमवत्पार्श्वे प्रवहन्तीं नदीमवेक्ष्य तत्स्नेहव-शलब्धतत्तीरनिवासः अध्वरानुष्ठानकाङ्क्षया प्राप्तसिद्धाश्रमः त्वत्तेजसा च समाप्तनियमोऽहमिति स्ववंशदेशस्योत्पत्तिं राघवाय कथयन् महर्षिभिः संस्तूयमानः सराघवो विश्वा-मित्रो निद्रामवाप। पञ्चत्रिंशे— ततः प्रातरुत्थाय कृत-पूर्वाह्निका विश्वामित्रपुरोगमाः शोणं नदं संतीर्य मध्यं गते सवितरि महर्षिबृन्दारकबृन्दसंसेवितां पुण्यसलिलां

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


जाह्नवीं दृष्ट्वा

तस्यास्तीरे ततश्चक्रुस्त आवासपरिग्रहम् ।
ततः स्नात्वा यथान्यायं संतर्प्य पितृदेवताः ॥

हुत्वा चैवाग्निहोत्राणि प्राश्य चानुत्तमं हविः ॥
विविशुर्जाह्नवीतीरे शुचौ मुदितमानसाः ।

अनेन प्रसङ्गात्पुण्यतीर्थादिगमनेऽपि तीर्थं उषित्वा पित्रादितृप्त्यै दानश्राद्धादिकमितरैरपि कर्तव्यमिति सूचितम् । तथा च शङ्खः— 'तीर्थं प्राप्य प्रसङ्गेन स्नानं तीर्थे समाचरन् । स्नानजं फलमाप्नोति तीर्थयात्राकृतां न तु' इति । 'हुत्वा चैवाग्निहोत्राणि' इत्यादिना आहिताग्नीनां यज्ञदर्शनादिधर्मार्थं गच्छतामग्निभिः सहैव प्रवासः नार्थार्थम् । अर्थार्थप्रवासे तु यथेच्छमिति सूचितम् । तथा च त्रिकाण्डमण्डनः— 'धनान्यार्जयितुं युक्तः प्रवासो ह्यग्निहोत्रिणः । धनैर्हि संभवेदिज्या तीर्थाद्यर्थं तु न व्रजेत् ॥ ब्रह्मा विष्णुः शिवः सूर्यो गोविप्राः पितृदेवताः । अग्निहोत्रगृहे सन्ति व्रततीर्थतपांसि

D 14

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


च ॥ त्रिस्थलीसेतौ ब्रह्मपुराणे— 'यस्येष्टिधर्मेष्वधिकारिताऽस्ति वरं गृहं गृहधर्माश्च सर्वे। एवं गृहस्थाश्रमसंस्थितस्य तीर्थे गतिः पूर्वतरैर्निषिद्धा ॥ सर्वाणि तीर्थान्यपि चाग्निहोत्रतुल्यानि नैवेति वयं वदामः। यज्ञाधिकारेऽप्यथ वा निवृत्ते विप्रस्तु तीर्थानि परिभ्रमेत्तु ॥ तीर्थेष्वलं यज्ञफलं हि यस्मात्प्रोक्तं मुनीन्द्रैरमलस्वभावैः ॥ सहाग्निर्वा सपत्नीको गच्छंस्तीर्थानि संयतः। सर्वपापविनिर्मुक्तो यथोक्तां गतिमाप्नुयात्। तथा च भारते— तीर्थे गच्छंश्चरेत्संध्यास्तिस्र एकत्र मानवः। नास्नातो नाशुचिर्गच्छेद्भुक्त्वा वा न च सूतकी' इति। तथा मध्याह्ने अवसाय पुनः प्रातः कृतपौर्वाह्णिकस्य प्रयाणप्रतिपादनात् माध्याह्निकसायंप्रातरग्निहोत्राणामेकत्र कर्तव्यता सूचिता ॥

**तां दृष्ट्वा पुण्यसलिलां हंससारसशोभिताम्।**
**संप्रहृष्टमना रामो विश्वामित्रमथाब्रवीत् ॥**

**भगवञ्श्रोतुमिच्छामि गङ्गां त्रिपथगां नदीम्।**
**त्रैलोक्यं कथमाक्रम्य गङ्गा नदनदीपतिम् ॥**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


एवं पृष्टो विश्वामित्रो हिमवतः मेनायामुत्पन्नं कन्याद्वयं गङ्गोमा च, लोकपावनार्थं गङ्गानदी देवेभ्यः गार्हस्थ्यार्थं रुद्रायोमा च हिमवता दत्तेत्युक्तवान् । षट्त्रिंशे—

उक्तवाक्ये मुनौ तस्मिन्नुभौ राघवलक्ष्मणौ ।
प्रतिनन्द्य कथां वीरावूचतुर्मुनिपुंगवम् ॥
दुहितुः शैलराजस्य ज्येष्ठाया वक्तुमर्हसि ।
विस्तरं विस्तरज्ञोऽसि दिव्यमानुषसंभवम् ॥
त्रीन्पथो हेतुना केन प्लावयेल्लोकपावनी ॥
कथं गङ्गा त्रिपथगा विश्रुता सरिदुत्तमा ॥

तथा ब्रुवति काकुत्स्थे विश्वामित्रस्तपोधनः ।
निखिलेन कथां सर्वामृषिमध्ये न्यवेदयत् ॥

पुरा राम कृतोद्वाहः शितिकण्ठो महातपाः ।
दृष्ट्वा च स्पृहया देवीं मैथुनायोपचक्रमे ॥

शितिकण्ठस्य देवस्य दिव्यं वर्षशतं गतम् ।
न चापि तनयो राम तस्यामासीत्परंतप ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ततो देवाः समुद्विग्नाः पितामहपुरोगमाः ।
यदिहोत्पद्यते भूतं कस्तत्प्रतिसहिष्यते ।
अभिगम्य सुराः सर्वे प्रणिपत्येदमब्रुवन् ॥

न लोका धारयिष्यन्ति तव तेजः सुरोत्तम ।
ब्राह्मेण तपसा युक्तो देव्या सह तपश्चर ॥

त्रैलोक्यहितकामार्थं तेजस्तेजसि धारय ।
रक्ष सर्वानिमाँल्लोकान्नालोकं कर्तुमर्हसि ॥

देवतानां वचः श्रुत्वा सर्वलोकमहेश्वरः ।
बाढमित्यब्रवीत्सर्वान्पुनश्चेदमुवाच ह ॥

धारयिष्याम्यहं तेजस्तेजस्येव सहोमया ।
त्रिदशाः पृथिवी सर्वा निर्वाणमधिगच्छतु ॥

यदिदं क्षुभितं स्थानान्मम तेजो ह्यनुत्तमम् ।
धारयिष्यति कस्तन्मे ब्रुवन्तु सुरसत्तमाः ॥

एवमुक्ताः सुराः सर्वे प्रत्यूचुर्वृषभध्वजम् ।
यत्तेजः क्षुभितं ह्येतत्तद्धरा धारयिष्यति ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


एवमुक्तः सुरपतिः प्रमुमोच महीतले ।
तेजसा पृथिवी येन व्याप्ता सगिरिकानना ॥

ततो देवाः पुनरिदमूचुश्चाथ हुताशनम् ॥
आविश त्वं महातेजो रौद्रं वायुसमन्वितः ।

तदग्निना पुनर्व्याप्तं संजातः श्वेतपर्वतः ॥
दिव्यं शरवणं चैव पावकादित्यसंनिभम् ॥

यत्र जातो महातेजाः कार्त्तिकेयोऽग्निसंभवः ।
अथोमां च शिवं चैव देवाः सर्षिगणास्तदा ॥

पूजयामासुरत्यर्थं सुप्रीतमनसस्तथा ।
अथ शैलसुता राम त्रिदशानिदमब्रवीत् ॥

समन्युरशपत्सर्वान्क्रोधसंरक्तलोचना ।
यस्मान्निवारिता चाहं संगता पुत्रकाम्यया ॥

अपत्यं स्वेषु दारेषु नोत्पादयितुमर्हथ ।
अद्यप्रभृति युष्माकमप्रजाः सन्तु पत्नयः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


एवमुक्त्वासुरान्सर्वाञ्शशाप पृथिवीमपि ।
अवने नैकरूपा त्वं बहुभार्या भविष्यसि ॥

न च पुत्रकृतां प्रीतिं मत्क्रोधकलुषीकृता ।
प्राप्स्यसि त्वं सुदुर्मेधे मम पुत्रमनिच्छती ॥

तान्सर्वान्व्रीडितान्दृष्ट्वा सुरान्सुरपतिस्तदा ।
गमनायोपचक्राम दिशं वरुणपालिताम् ॥

स गत्वा तप आतिष्ठत्पार्श्वे तस्योत्तरे गिरेः ।
हिमवत्प्रभवे शृङ्गे सह देव्या महेश्वरः ॥

एष ते विस्तरो राम शैलपुत्र्या निवेदितः ।
गङ्गायाः प्रभवं चैव शृणु मे सहलक्ष्मणः ॥

सप्तत्रिंशे—

तप्यमाने तपो देवे देवाः सर्षिगणाः पुरा ।
सेनापतिमभीप्सन्तः पितामहमुपागमन् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ततोऽब्रुवन्सुराः सर्वे भगवन्तं पितामहम् ।
यो नः सेनापतिर्देव दत्तो भगवता पुरा ॥

स तपः परमास्थाय तप्यते स्म सहोमया ।
यदत्रानन्तरं कार्यं लोकानां हितकाम्यया ॥

संविधत्स्व विधानज्ञ त्वं हि नः परमा गतिः ।
देवतानां वचः श्रुत्वा सर्वलोकपितामहः ॥

शैलपुत्र्या यदुक्तं तदप्रजाः स्थ स्वपत्निषु ।
तस्या वचनमक्लीबं सत्यमेव न संशयः ॥

इयमाकाशगा गङ्गा यस्यां पुत्रं हुताशनः ।
जनयिष्यति देवानां सेनापतिमरिंदमम् ॥

ज्येष्ठा शैलेन्द्रदुहिता मानयिष्यति तं सुतम् ।
उमायास्तद्बहुमतं भविष्यति न संशयः ॥

तच्छ्रुत्वा वचनं तस्य कृतार्था रघुनन्दन ।
प्रणिपत्य सुराः सर्वे पितामहमपूजयन् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ते गत्वा पर्वतं राम कैलासं धातुमण्डितम् ।
अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः ॥

देवकार्यमिदं देव समाधत्स्व हुताशन ।
शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज ॥

देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः ।
गर्भं धारय वै देवि देवतानामिदं प्रियम् ॥

इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत् ।
स अस्या महिमां दृष्ट्वा समन्तादवकीर्यत ॥

समन्ततस्तु तां देवीमभ्यषिञ्चत पावकः ।
सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन ॥

तमुवाच ततो गङ्गा सर्वदेवपुरोगमम् ।
अशक्ता धारणे देव तव तेजःसमुद्धतम् ॥

दह्यमानाग्निना तेन संप्रव्यथितचेतना ।
अथाब्रवीदिदं गङ्गां सर्वदेवहुताशनः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


शुभे हैमवते पार्श्वे गर्भोऽयं संनिवेश्यताम् ।
श्रुत्वाग्निवचनं गङ्गा तं गर्भमतिभास्वरम् ।
उत्ससर्ज महातेजाः स्रोतोभ्योऽपि तदानघ ॥

यदास्या निर्गतं तस्मात्तप्तजाम्बूनदप्रभम् ।
काञ्चनं धरणीं प्राप्तं हिरण्यमतुलप्रभम् ॥

ताम्रं कार्ष्णायसं चैव तैक्ष्ण्यादेवाभ्यजायत ।
मलं तस्याभवत्तत्र त्रपुसीसकमेव च ॥

तदेतद्धरणीं प्राप्य नाना धातुरवर्धत ।
निक्षिप्तमात्रे गर्भे तु तेजोभिरभिराञ्जितम् ॥

सर्वं पर्वतसंनद्धं सौवर्णमभवद्वनम् ।
जातरूपमिति ख्यातं तदाप्रभृति राघव ॥

सुवर्णं पुरुषव्याघ्र हुताशनसमप्रभम् ।
तं कुमारं ततो जातं देवाः सहमरुद्गणाः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


क्षीरसंभावनार्थाय कृत्तिकाः समयोजयन् ।
ताः क्षीरं जातमात्रस्य कृत्वा समयमुत्तमम् ॥

जातः पुत्रोऽयमस्माकं सर्वासामिति निश्चिताः ।
ततस्तु देवताः सर्वाः कार्त्तिकेय इति ब्रुवन् ॥

पुत्रस्त्रैलोक्यविख्यातो भविष्यति न संशयः ।
तेषां तद्वचनं श्रुत्वा स्कन्नं गर्भपरिस्रवे ॥

स्कन्द इत्यब्रुवन्देवाः स्कन्नं गर्भपरिस्रवात् ।
कार्त्तिकेयं महाभागं काकुत्स्थ ज्वलनोपमम् ॥

प्रादुर्भूतं ततः क्षीरं कृत्तिकानामनुत्तमम् ।
षण्णां षडाननो भूत्वा जग्राह स्तनजं पयः ॥

गृहीत्वा क्षीरमेकाहात्सुकुमारवपुस्तदा ।
अजयत्स्वेन वीर्येण दैत्यसैन्यगणान्विभुः ॥

सुरसेनागणपतिं ततस्तमनलद्युतिम् ।
अभ्यषिञ्चन्सुरगणाः समेत्याग्निपुरोगमाः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

एष ते राम गङ्गाया विस्तरोऽभिहितो मया ।
कुमारसंभवस्त्वेष धन्यः पुण्यस्तथैव च ॥

भक्तश्च यः कार्त्तिकेये काकुत्स्थ भुवि मानवः ।
आयुष्मान्पुत्रपौत्रैश्च स्कन्दसालोक्यमाप्नुयात् ॥

अष्टत्रिंशे—

तां कथां कौशिको रामे निवेद्य मधुराक्षरम् ।
पुनरेवापरं वाक्यं काकुत्स्थमिदमब्रवीत् ॥

अयोध्याधिपतिः शूरः पूर्वमासीन्नराधिपः ।
सगरो नाम धर्मात्मा प्रजाकामः स चाप्रजः ॥

विदर्भदुहिता राम केशिनी नाम नामतः ।
ज्येष्ठा सगरपत्नी सा धर्मिष्ठा सत्यवादिनी ॥

अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि ।
द्वितीया सगरस्यासीत्पत्नी सुमतिसंज्ञिता ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ताभ्यां सह तदा राजा पत्नीभ्यां तप्तवांस्तपः ।
हिमवन्तं समासाद्य भृगुप्रस्रवणे गिरौ ॥

अथ वर्षशते पूर्णे तपसा तोषितो मुनिः ।
सगराय वरं प्रादाद्भृगुः सत्यवतां वरः ॥

अपत्यलाभः सुमहान्भविष्यति तवानघ ।
कीर्त्तिं चाप्रतिमां लोके प्राप्स्यसे पुरुषर्षभ ॥

एका जनयिता तात पुत्रं वंशकरं तव ।
षष्टिं पुत्रसहस्राणि ह्यपरा जनयिष्यति ॥

अथ काले गते तस्मिञ्ज्येष्ठा पुत्रं व्यजायत ।
असमञ्ज इति ख्यातं केशिनी सगरात्मजम् ॥

सुमतेस्तु नरव्याघ्र गर्भतुम्बं व्यजायत ।
षष्टिः पुत्रसहस्राणि तुम्बभेदाद्विनिःसृताः ॥

अथ दीर्घेण कालेन रूपयौवनशालिनः ।
षष्टिः पुत्रसहस्राणि सगरस्याभवंस्तदा ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha 

स च ज्येष्ठो नरश्रेष्ठः सगरस्यात्मसंभवः ।
बालान्गृहीत्वा सलिले सरय्वा रघुनन्दन ॥

प्रक्षिप्य प्रहसन्नित्यं मज्जतस्तान्समीक्ष्य वै ।
एवं पापसमाचारः सज्जनप्रतिबाधकः ॥
पौराणामहिते युक्तः पित्रा निर्वासितः पुरात् ।

अनेन बहुतपःक्लेशलब्धः ज्येष्ठपुत्रोऽपि पापसमाचारः सज्जनबाधकः पौरजनाहितयुक्तः अविचारेण निरस्य इति सूचितम् । ननु 'ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः । पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति ॥ यस्मिन्नृणं संनयति येन चामृतमश्नुते । स एव धर्मजः पुत्रः कामजानितरान्विदुः' इति मनुवचनपर्यालोचनया ज्येष्ठपुत्रस्य ऋणत्रयनिवर्तकत्वात् उत्तमलोकप्रापकत्वात् वंशाभिवृद्धिकरत्वात् धर्मजत्वाच्च तत्परित्यागः कथमिति चेन्न, अहितकारिपतितदुष्टपुत्रपरित्यागस्य युक्तत्वात् । तथा च रामायणे सीतां प्रति रामवचनम्—

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


औरसानपि पुत्रान्हि त्यजन्त्यहितकारिणः ।
समर्थाः संप्रगृह्णन्ति जनानां हितकारिणः ॥

पतितलक्षणमाह गौतमः— 'द्विजातिकर्मभ्यो हानिः पतनम्' इति । मनुरपि– 'अकुर्वन्विहितं कर्म निन्दितं च समाचरन् । प्रसजंश्चेन्द्रियार्थेषु नरः पतनमृच्छति' इति । किं बहुना, दुष्टस्य गुरोरपि परित्यागः कथितो मनुस्मृतौ– 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य परित्यागो विधीयते' इति । न चैवं दोषे सति मातुरपि परित्यागः प्रसज्येतेति वाच्यम्, पतिताया अपि तस्याः संग्राह्यत्वात् । तथा च गौतमः— 'पतितायामपि तस्यां शुश्रूषे' इति । स्मृतिरपि— 'पतिता गुरवस्त्याज्या न तु माता कथंचन । गर्भधारणपोषाभ्यां तेन माता गरीयसी' इति । तथा च पतितानां मातृव्यतिरिक्तगुरुपुत्रभ्रातृसखिसंबन्धिबान्धवशिष्यसेवकानां परित्यागः सिद्धः । एतेषां च पतितानामपरित्यागे अपतितानां च परित्यागे च दोषः स्मर्यते । तथा च गौतमः— 'निन्दितकर्माभ्यासिपतितात्याग्यपतितत्यागिनः पतिताः पातसंयोजकाश्च तैश्चाब्दं

CC-0. Prof. Satya Vrat Shastri Collection.

समाचरन्' इति। छान्दोग्ये पञ्चाग्निविद्यायाम्— 'एते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैः' इति। रामायणेऽपि—

अदुष्टस्य हि संत्यागः सत्पथे निरतस्य च।
निर्दहेदपि शक्रस्य द्युतिं धर्मनिरोधनात्॥

न चैवं मानववचनानां का गतिरिति वाच्यम्, तेषामदुष्टज्येष्ठपुत्रविषयत्वात्। राज्ञां तु प्रजापरिपालनस्य मुख्यधर्मतया तत्परिपन्थिनो ज्येष्ठपुत्रस्यापि परित्यागेन तासां हितमवश्यं कर्तव्यमेव। तथा च गौतमः— 'हितं चासां कुर्वीत' इति। याज्ञवल्क्योऽपि— 'प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्' इति। मनुरपि— प्रजानां रक्षणं दानमिज्याध्ययनमेव च। विषयेष्वप्रसक्तिश्च क्षत्रियस्य समादिशेत्' इति। आपस्तम्बोऽपि— 'अभिषिक्तस्य च राज्ञः प्रजापालनं परमो धर्मः' इति। शान्तिपर्वण्यपि— 'नृपाणां प्रथमो धर्मः प्रजानामेव पालनम्। निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते॥ पालनेनैव भूतानां कृतकृत्यो महीपतिः। सम्यक् पालयिता भागं धर्मस्याप्नोति पुष्कलम्' इति। मार्कण्डेयपुराणेऽपि—

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

'पालनेनैव भूतानां कृतकृत्यो महीपतिः। सम्यक्पालयिता भागं धर्मस्याप्नोति पुष्कलम्' इति। ब्रह्माण्डपुराणे—'यदह्ना कुरुते धर्मं प्रजा धर्मेण पालयन्। दश वर्षसहस्राणि तस्य भुङ्क्ते महाफलम्' इति। मनुः—'रक्षन्धर्मेण भूतानि राजा वध्यांश्च घातयन्। यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः' इति। तादृशस्वकर्मपरिभ्रष्टस्य भवत्येव पातित्यम्। अतः निन्दितकर्माभ्यासेन पतितपुत्रसहवासप्रयुक्तस्वपातित्यनिवृत्तये बहुतपःक्लेशलब्धं ज्येष्ठमपि पुत्रं परित्यक्तवान्।

तस्य पुत्रोंऽशुमान्नाम असमञ्जस्य वीर्यवान्।
संमतः सर्वलोकस्य सर्वस्यापि प्रियंवदः।
ततः स सगरो राजा यष्टुं समुपचक्रमे॥

एकोनचत्वारिंशे—

विश्वामित्रवचः श्रुत्वा कथान्ते रघुनन्दनः।
उवाच परमप्रीतो मुनिं दीप्तमिवानलम्॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


श्रोतुमिच्छामि भद्रं ते विस्तरेण कथामिमाम् ।
पूर्वको मे कथं ब्रह्मन्यज्ञं वै समुपाहरत् ॥

एवं रामेण पृष्टो विश्वामित्र उवाच— सगरो हिमवद्विन्ध्यान्तरालप्रदेशे अश्वमेधमारब्धवान् । तत्र यज्ञियोऽश्वो राक्षसीं तनुमास्थाय वासवेनापहृतः । तस्मिन्नपहृते ऋत्विजो यजमानमब्रुवन्— अश्वः शीघ्रमानीयतामश्वहर्तारं च जहि ।

यज्ञच्छिद्रं भवत्येतत्सर्वेषामशिवाय नः ।
तत्तथा क्रियतां राजन्यथाच्छिद्रः क्रतुर्भवेत् ॥

अनेन यज्ञियाश्वहरणमृत्विग्यजमानाशुभकरमित्युक्तम् । तथा च तैत्तिरीयश्रुतिः— 'यो बलोऽश्वमेधेन यजते यद्मिला अश्वं विन्देरन् हन्येतास्य यज्ञः' इति । तथा चात्रैवोक्तम्—

विहतस्य च यज्ञस्य सद्यः कर्ता विनश्यति ।
अराक्षितारं राजानं घ्नन्ति दोषा नरेश्वर ॥



CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


इति च। सोऽपि राजा पुत्रसहस्राणां षष्टिमवेक्ष्य सर्वतो मेदिनीं विचित्याश्वो मन्त्रपूत आनेय इत्युक्तवान्। ते पुत्राः सर्वतो मेदिनीमवेक्ष्य न दृश्यतेऽश्व इत्युक्तवन्तः। पुनरपि राजा समुद्रमालिनी मेदिनी खन्यतां यावदश्वानयनमत्रैव ऋत्विगादिसहितः स्थास्यामीत्याह। ततः

ते सर्वे हृष्टमनसो राजपुत्रा महाबलाः।
जग्मुर्महीतलं राम पितुर्वचनयन्त्रिताः॥

योजनायामविस्तारमेकैको धरणीतलम्।
बिभिदुः पुरुषव्याघ्र वज्रस्पर्शसमैर्भुजैः॥

अनेन प्राणानपि तृणीकृत्यात्यन्ताशक्यमपि पितृवचनात्कर्तव्यमिति सूचितम्। तथा चायोध्याकाण्डे कौसल्यां प्रति रामवाक्यम्—

अस्माकं च कुले पूर्वं सगरस्याज्ञया पितुः।
खनद्भिः सागरैः पूर्वमवाप्तः सुमहानघः॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


इति। भिद्यमानां वसुमतीं वध्यमानराक्षसनागादियुक्तां देवादयो दृष्ट्वा संभ्रान्तमनसः पितामहमुपागम्य सगरपुत्रकृतलोकोपद्रवं शशंसुः। चत्वारिंशे– ततः पितामहोऽपि सगरपुत्रा अप्रमेयप्रभावकपिलहुंकारमात्रभस्मीकृता भविष्यन्तीति देवानाश्वासयामास। अनेन बहुप्राण्युपद्रवकारिणां देवा अपि वधोपायमभीप्सन्ति, दैवहतानां च तेषामचिरेण नाशो भवत्येवेति सूचितम्। तेऽपि पुत्राः कृत्स्नां महीं प्रादक्षिण्येन च खन्यमानाः पूर्वादिदिक्षु विरूपाक्षमहापद्मसौमनसभद्रनामकान्भूमिं बिभ्राणान्गजान्दृष्ट्वा प्रदक्षिणानामयप्रश्नादिपूर्वकमुत्तरपूर्वस्यां दिशि पुनरपि खननं कुर्वाणाः अविदूरे चरन्तमश्वं वासुदेवं कपिलं च दृष्ट्वा अयमश्वहर्तेति क्रोधादभ्यद्रवन्। ततः कोपसंरक्तनयनकपिलहुंकृतिदग्धा भस्मीकृता बभूवुः। अनेनाविचारितकर्मकर्तृणां महाब्राह्मणावमन्तृणां च एतादृशी गतिरिति सूचितम्। एकचत्वारिंशे— चिरप्रोषितान्पुत्राननागतान्विचिन्त्य अंशुमान्नामानमसमञ्जस्य पुत्रं पुत्रान्वेषणाय यज्ञियाश्वानयनार्थतया प्रेषयामास। स चाप्यं-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


शुमान्पितृव्यमार्गानुसारेण गच्छन्दिशागजान्पृष्ट्वा भस्मराशीकृतान्पितृव्यांस्तत्र चरन्तमश्वं च दृष्ट्वापि दुःखितः पितॄणां जलदानाय जलं गवेषमाणं तदलाभेन क्लिश्यमानमंशुमन्तं मातुलो वैनतेय आगत्यावादीत्—

कपिलेनाप्रमेयेन दग्धा हीमे महाबलाः ।
सलिलं नार्हसि प्राज्ञ दातुमेषां हि लौकिकम् ॥

गङ्गा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ ।
तस्यां कुरु महाबाहो पितॄणां तु जलक्रियाम् ॥

भस्मराशीकृतानेतान्पावयेल्लोकपावनी ।
तया क्लिन्नमिदं भस्म गङ्गया लोककान्तया ॥
षष्टिं पुत्रसहस्राणि स्वर्गलोकं नयिष्यति ।

इति । अनेन महाब्राह्मणापराधजनितपापवतां तच्छापमृतानामकृतप्रायश्चित्तानां क्रियायामनधिकारः दुर्मरणात् । तथा च बृहदारण्यके शाकल्ययाज्ञवल्क्यसंवादे याज्ञवल्क्यः— 'तं त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे न

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


विवक्ष्यसि मूर्धा ते विपतिष्यतीति । तं ह न मेने शाकल्यः तस्य ह मूर्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यजह्रुरमन्यमानाः' इति । अस्य भाष्यम्— तमौपनिषदं पुरुषं शाकल्यो न मेने न विज्ञातवान्किल । तस्य ह मूर्धा विपपात विस्पष्टं पतितः समाप्ताख्यायिका । श्रुतेर्वचनं तं ह न मेने इत्यादि । किं चापि हास्य परिमोषिणस्तस्कराः अस्थीन्यपि संस्कारार्थं शिष्यैर्नीयमानानि गृहान्प्रति अपजह्रुः अपहृतवन्तः । किंनिमित्तम्, अन्यद्धनं नीयमानं मन्यमानाः इति । यथा याज्ञवल्क्यापराधेन शाकल्यस्य सद्यः शरीरपतनं संस्काराभावश्च, तथा ब्रह्मिष्ठस्य ब्रह्ममार्गप्रवर्तकस्य भगवतो नारायणांशभूतकपिलमहामुनेरपराधेन सागराणां सद्यो भस्मीभावः संस्कारानर्हत्वं च युक्तमेव । तथा च गौतमः— 'गोब्राह्मणहतानामन्वक्षम्' इति । अन्वक्षम् आशौचाभाव इत्यर्थः । मिताक्षरायाम्—

क्रोधं प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम् । गिरिवृक्षप्रपातं वा ये कुर्वन्ति नराधमाः ॥ ब्रह्मदण्डहता ये च ये चपि ब्राह्मणैर्हताः । महापातकिनो ये च पतितास्ते

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकीर्तिताः ॥ पतितानां न दाहः स्यान्नान्तेष्टिर्नास्थिसंचयः। न चाश्रुपातः पिण्डो वा कार्या श्राद्धक्रिया न च' इति। याज्ञवल्क्योऽपि— 'हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम्' इति ॥

**सुपर्णवचनं श्रुत्वा सोऽंशुमानतिवीर्यवान्।**
**त्वरितं हयमादाय पुनरायान्महायशाः ॥**

ततः सगरोऽपि यज्ञं समाप्य गङ्गावतरणेऽदृष्टोपाय एव कालधर्मं गतवान्। द्विचत्वारिंशे— ततः प्रकृतयः धार्मिकमंशुमन्तं राज्येऽभिषिक्तवन्तः। सोऽपि स्वपुत्रं दिलीपं राज्येऽभिषिच्य बहुकालं तपस्तप्त्वा पितृव्याणां महागतिप्रदं स्वर्गङ्गावतारणमलब्ध्वा स्वर्गं गतः। दिलीपोऽपि बहुक्रतूननुष्ठाय राज्ये च स्वपुत्रं भगीरथं स्थापयित्वा गङ्गावतारणमलब्ध्वा इन्द्रलोकं जगाम। भगीरथोऽप्यनपत्यः प्रपितामहवधं श्रुत्वा दुःखितः सन् गोकर्णे पुण्यक्षेत्रे नियतेन्द्रियो मासाहारो वर्षसहस्रं तपस्तप्तवान् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


सुप्रीतो भगवान्ब्रह्मा प्रजानां पतिरीश्वरः ।
ततः सुरगणैः सार्धमुपागम्य पितामहः ॥

भगीरथं महात्मानं तप्यमानमथाब्रवीत् ।
भगीरथ महाभाग प्रीतस्तेऽहं जनेश्वर ।
तपसा च सुतप्तेन वरं वरय सुव्रत ॥

तमुवाच महातेजाः सर्वलोकपितामहम् ।
भगीरथो महाराजः कृताञ्जलिरुपस्थितः ॥

यदि मे भगवन्प्रीतो यद्यस्ति तपसः फलम् ।
सगरस्यात्मजाः सर्वे मत्तः सलिलमाप्नुयुः ॥

गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम् ।
स्वर्गं गच्छेयुरत्यन्तं सर्वे मे प्रपितामहाः ॥

देया च संततिर्देव नावसीदेत्कुलं च नः ।
इक्ष्वाकूणां कुले देव एष मेऽस्तु वरः परः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

उक्तवाक्यं तु राजानं सर्वलोकपितामहः ।
प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम् ॥

मनोरथो महानेष भगीरथ महारथ ।
एवं भवतु भद्रं ते इक्ष्वाकुकुलवर्धन ॥

इयं हैमवती गङ्गा ज्येष्ठा हिमवतः सुता ।
तां वै धारयितुं शक्तो हरस्तत्र नियुज्यताम् ॥

गङ्गायाः पतनं राजन्पृथिवी न सहिष्यते ।
तां वै धारयितुं वीर नान्यं पश्यामि शूलिनः ॥

तमेवमुक्त्वा राजानं गङ्गां चाभाष्य लोककृत् ।
जगाम त्रिदिवं देवः सह सर्वैर्मरुद्गणैः ॥

त्रिचत्वारिंशे—

देवदेवे गते तस्मिन्सोऽङ्गुष्ठाग्रनिपीडिताम् ।
कृत्वा वसुमतीं राम संवत्सरमुपासत ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः ।
उमापतिः पशुपती राजानमिदमब्रवीत् ॥

प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम् ।
शिरसा धारयिष्यामि शैलराजसुतामहम् ॥

ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता ।
तदा सातिमहद्रूपं कृत्वा वेगं च दुःसहम् ॥

आकाशादपतद्राम शिवे शिवशिरस्युत ।
अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा ॥

विशाम्यहं हि पातालं स्रोतसागृह्य शंकरम् ।
तस्यावलेपनं ज्ञात्वा क्रुद्धस्तु भगवान्हरः ॥

तिरोभावयितुं बुद्धिं चक्रे त्रिनयनस्तदा ।
सा तस्मिन्पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि ॥

हिमवत्प्रतिमे राम जटामण्डलगह्वरे ।
सा कथंचिन्महीं गन्तुं नाशक्नोद्यत्नमास्थिता ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

नैव सा निर्गमं लेभे जटामण्डलमोहिता ।
तत्रैवाबभ्रमद्देवी संवत्सरगणान्बहून् ॥

तामपश्यंस्ततस्तत्र तपः परममास्थितः ।
अनेन तोषितश्चासीदत्यर्थं रघुनन्दन ॥

विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति ।
तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे ॥

ह्लादिनी पावनी चैव नलिनी च तथापरा ।
तिस्रः प्राचीं दिशं जग्मुर्गङ्गाः शिवजलाः शुभाः ॥

सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी ।
तिस्रस्त्वेता दिशं जग्मुः प्रतीचीं च शुभोदकाः ।
सप्तमी चान्वगात्तासां भगीरथमथो नृपम् ॥

भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ।
प्रायादग्रे महातेजा गङ्गा तं चाप्यनुव्रजत् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


गगनाच्छंकरशिरस्ततो धरणिमागता ।
व्यसर्पत जलं तत्र तीव्रवेगपुरस्कृतम् ॥

मत्स्यकच्छपसंघैश्च शिशुमारगणैस्तथा ।
पतद्भिः पतितैश्चान्यैर्व्यरोचत वसुंधरा ॥

ततो देवर्षिगन्धर्वा यक्षाः सिद्धगणास्तथा ।
व्यलोकयन्त ते तत्र गगनाद्गां गतां तदा ॥

तच्छंकरशिरोभ्रष्टं भ्रष्टं भूमितले पुनः ।
व्यरोचत तदा तोयं निर्मलं गतकल्मषम् ॥

तत्र देवर्षिगन्धर्वा वसुधातलवासिनः ।
भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥

अनेनानवरतं स्वर्धुनीमवगाहमानानामपि देवादीनां भूमिष्ठभागीरथीस्नानप्रतिपादनेन स्वर्गङ्गापेक्षया 'पुण्ये रुद्रस्य मूर्धनि' 'शिवे शिवशिरस्युत' इत्यादिवचनागत-पुण्यभवाङ्गसंबन्धेन 'भूमिगतास्वप्स्वाचम्य प्रयतो भ-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वति' इत्यापस्तम्बवचनात् गतप्रायत्वहेतुना भ्रष्टं भूमितले भूसंबन्धेन भागीरथ्या अतिपावनत्वमुक्तं भवति। अग्रिमश्लोकैरपि पावनत्वमुच्यते—

पापात्प्रपतिता ये च गगनाद्वसुधातलम् ।
कृत्वा तत्राभिषेकं ते बभूवुर्गतकिल्बिषाः ॥

धूतपापाः पुनस्तेन तोयेनाथ सुभास्वता।
पुनराकाशमाविश्य स्वाल्लोकान्प्रतिपेदिरे ॥

मुमुदे मुदितो लोकस्तेन तोयेन भास्वता ।
कृताभिषेको गङ्गायां बभूव विगतक्लमः ॥

भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ।
प्रायादग्रे महातेजास्तं गङ्गा पृष्ठतोऽन्वगात् ॥

यतो भगीरथो राजा ततो गङ्गा यशस्विनी ।
जगाम सरितां श्रेष्ठा सर्वपापविनाशनी ॥

CC-0. Prof. Satya Vrat Shastri Collection.

ततो हि यजमानस्य जह्नोरद्भुतकर्मणः ।
गङ्गा संप्लावयामास यज्ञवाटं महात्मनः ॥

तस्यावलेपनं ज्ञात्वा क्रुद्धो जह्नुस्तु राघव ।
अपिबच्च जलं सर्वं गङ्गायाः परमाद्भुतम् ॥

ततो देवाः सगन्धर्वा ऋषयश्च सुविस्मिताः ।
पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् ॥

गङ्गां तामानयन्ति स्म दुहितृत्वे महात्मनः ।
ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत्पुनः ॥

तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च ।
जगाम च पुनर्गङ्गा भगीरथरथानुगा ॥

सागरं चापि संप्राप्ता सा सरित्प्रवरा तदा ।
रसातलमुपागच्छत्सिद्ध्यर्थं तस्य कर्मणः ॥

भगीरथोऽपि राजर्षिर्गङ्गामादाय यत्नतः ।
पितामहान्भस्मकृतानपश्यद्दीनचेतनः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


अथ तं भस्मनां राशिं गङ्गासलिलमुत्तमम् ।
प्लावयद्धृतपाप्मानः स्वर्गं प्राप्ता रघूत्तम ॥

चतुश्चत्वारिंशे—

स गत्वा सागरं राजा गङ्गयानुगतस्तदा ।
प्रविवेश तलं भूमेर्यत्र ते भस्मसात्कृताः ॥

भस्मन्यथाप्लुते राम गङ्गायाः सलिलेन वै ।
सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् ॥

तारिता नरशार्दूल दिवं याता हि देववत् ।
षष्टिः पुत्रसहस्राणि सगरस्य महात्मनः ॥

सागरस्य जलं लोके यावत्स्थास्यति पार्थिव ।
सगरस्यात्मजास्तावत्स्वर्गे स्थास्यन्ति देववत् ॥

इयं च दुहिता ज्येष्ठा तव गङ्गा भविष्यति ।
त्वत्कृतेन च नाम्नाथ लोके स्थास्यति विश्रुता ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


गङ्गा त्रिपथगा राजन्दिव्या भागीरथीति च ।
त्रीन्पथो भावयन्तीति ततस्त्रिपथगा स्मृता ॥

पितामहानां सर्वेषां त्वमत्र मनुजाधिप ।
कुरुष्व सलिलं राजन्प्रतिज्ञामपवर्जय ॥

पूर्वकेणापि ते राजंस्तेनातियशसा तदा ।
धर्मिणां प्रवरेणाथ नैष प्राप्तो मनोरथः ॥

तथैवांशुमता वत्स लोकेऽप्रतिमतेजसा ।
गङ्गां प्रार्थयता नेतुं प्रतिज्ञा नापवर्जिता ॥

राजर्षिणा गुणवता महर्षिसमतेजसा ।
मत्तुल्यतपसा चैव क्षत्रधर्मस्थितेन च ॥

दिलीपेन महाभाग तव पित्रातितेजसा ।
पुनर्न शङ्किता नेतुं गङ्गां प्रार्थयतानघ ॥

सा त्वया समतिक्रान्ता प्रतिज्ञा पुरुषर्षभ ।
प्राप्तोऽसि परमं लोके यशः परमसंमतम् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

यच्च गङ्गावतरणं त्वया कृतमरिंदम ।
अनेन च भवान्प्राप्तो धर्मस्यायतनं महत् ॥

प्लावयस्व त्वमात्मानं नरोत्तम सदोचिते ।
सलिले पुरुषश्रेष्ठ शुचिः पुण्यफलो भव ॥

पितामहानां सर्वेषां कुरुष्व सलिलक्रियाम् ।
स्वस्ति तेऽस्तु गमिष्यामि स्वं लोकं गम्यतां नृप ॥

इत्येवमुक्त्वा देवेशः सर्वलोकपितामहः ।
यथागतं तथागच्छद्देवलोकं महायशाः ॥

भगीरथोऽपि राजर्षिः कृत्वा सलिलमुत्तमम् ।
यथाक्रमं यथान्यायं सागराणां महायशाः ॥

कृतोदकः शुची राजा स्वपुरं प्रविवेश ह ।
समृद्धार्थो रघुश्रेष्ठ स्वराज्यं प्रशशास च ॥

प्रमुमोद च लोकस्तं नृपमासाद्य राघव ।
नष्टशोकः समृद्धार्थो बभूव विगतज्वरः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

अनेन स्ववंश्येन केनापि गङ्गास्नानतर्पणादि कृतं चेत्तद्वंश्यानां सर्वेषामुत्तमलोकप्राप्तिः इति सूचितम् । एतन्माहात्म्यं महाभारते विष्णुपुराणे च विस्तरेण श्रूयते । तथा चानुशासनिके युधिष्ठिरवाक्यं भीष्मं प्रति— 'के देशाः के जनपदाः केऽश्रमाः के च पर्वताः । प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यस्तदुच्यताम् ॥ भीष्मः—ते देशास्ते जनपदास्तेऽश्रमास्ते च पर्वताः । येषां भागीरथी गङ्गा मध्येनैति सरिद्वरा ॥ स्पृष्टानि येषां गाङ्गेयैस्तोयैर्गात्राणि देहिनाम् । न्यस्तानि न पुनस्तेषां त्यागः स्वर्गाद्विधीयते ॥ पूर्वे वयसि कर्माणि कृत्वा पापानि ये नराः । पश्चाद्गङ्गां निषेवन्ते तेऽपि यान्त्युत्तमां गतिम् ॥ यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति । तावद्वर्षसहस्राणि स्वर्गे लोके महीयते ॥ यस्तु सूर्येण निष्टप्तं गाङ्गेयं पिबते जलम् । गवां निर्हारनिर्मुक्ताद्यावकादतिरिच्यते ॥ अग्नौ प्रास्तं प्रदूयेत यथा तूलं द्विजोत्तम । तथा गङ्गावगाढस्य सर्वं पापं प्रदूयते ॥ प्रकृष्टैरशुभैर्ग्रस्तानन्नेकैः पुरुषाधमान् । पततो नरके गङ्गा संश्रितान्प्रेत्य तारयेत् ॥ विनयाचार-



CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

हीनाश्चाप्यशिवाश्च नराधमाः । ते भवन्ति शिवा विप्रा ये वै गङ्गामुपाश्रिताः ।। उपासते यथा बाला मातरं क्षुधयार्दिताः । श्रेयस्कामास्तथा गङ्गामुपासन्तीह देहिनः ।। जाह्नवीपुलिनोत्थाभिः सिकताभिः समुक्षितम् । आत्मानं मन्यते लोको दिविष्ठमिव शोभितम् ।। जाह्नवीतीरसंभूतां मृदं मूर्ध्ना बिभर्ति यः । बिभर्ति रूपं सोऽर्कस्य तमोनाशाय निर्मलम् ।। गङ्गोर्मिभिरथो दिग्धः पुरुषं पवनो यदा । स्पृशते सोऽस्य पाप्मानं सद्य एवापकर्षति ।। वाङ्मनःकर्मजैर्ग्रस्तः पापैरपि पुमानिह । वीक्ष्य गङ्गां भवेत्पूतः अत्र मे नास्ति संशयः ।। सप्तावरान्सप्त परान्पितॄंस्तेभ्यश्च ये परे । पुमांस्तारयते गङ्गां वीक्ष्य स्पृष्ट्वावगाह्य च ।। श्रुताभिलषिता पीता स्पृष्टा दृष्टावगाहिता । गङ्गा तारयते नृणामुभौ वंशौ विशेषतः ।। दर्शनात्स्पर्शनात्पानात्तथा गङ्गेति कीर्तनात् । पुनात्यपुण्यान्पुरुषाञ्शतशोऽथ सहस्रशः ।। य इच्छेत्सफलं जन्म जीवितं श्रुतमेव च । स पितॄंस्तर्पयेद्गङ्गामभिगम्य सुरांस्तथा ।। न सुतैर्न च वित्तेन कर्मणा न च

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तत्फलम्। प्राप्नुयात्पुरुषोऽत्यन्तं गङ्गां प्राप्य यदाप्नुयात्॥ वानप्रस्थैर्गृहस्थैश्च यतिभिर्ब्रह्मचारिभिः। विद्यावद्भिः श्रितां गङ्गां पुमान्को नाम नाश्रयेत्॥ उत्क्रामद्भिश्च यः प्राणैः प्रयतः शिष्टसंमतः। चिन्तयेन्मनसा गङ्गां स गतिं परमां लभेत्॥ महापुण्यां च गगनात्पतन्तीं वै महेश्वरः। दधार शिरसा गङ्गां तामेव दिवि सेवते॥ भूस्थैः स्वस्थैर्दिविस्थैश्च भूतैरुच्चावचैरपि। गङ्गा विगाह्या सततमेतत्कार्यतमं सताम्॥ विश्वलोकेषु पुण्यत्वाद्गङ्गायाः प्रथितं यशः। यत्पुत्रान्सगरस्येतो भस्माख्याननयद्दिवम्॥ पयस्विनीं घृतिनीमत्युदारां समृद्धिनीं वेगिनीं दुर्विगाह्याम्। गङ्गां गत्वा यैः शरीरं विसृष्टं गता धीरास्ते विबुधैः समत्वम्॥ यो वत्स्यति द्रक्ष्यति वापि मर्त्यस्तस्मै प्रयच्छन्ति सुखानि देवाः। तद्भाविताः स्पर्शनदर्शनेन इष्टां गतिं तस्य सुरा दिशन्ति॥ इयं गङ्गेति नियतं प्रतिष्ठा गुहस्य रुक्मस्य च भर्गयोषा। प्रातस्त्रिवर्गा घृतवाहा विपाप्मा गङ्गावतीर्णा वियतो विश्वतोया॥ मधुस्रवा घृतधारा घृतार्चिर्महोर्मिभिः शोभिता ब्राह्मणैश्च। दिवश्च्युता शिरसाप्ता

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शिवेन गङ्गावनीश्रा त्रिदिवस्य माता ॥ ऋषिष्टुतां विष्णुपदीं पुराणां सुपुण्यतोयां मनसापि लोके । सर्वात्मना जाह्नवीं ये प्रपन्नास्ते ब्रह्मणः सदनं संप्रयाताः ॥ प्रसाद्य देवान्स विभून्समस्तान्भगीरथस्तपसोग्रेण गङ्गाम् । गामानयत्तामभिगम्य शश्वत्पुंसां भयं नेह वामुत्र विद्यात् ॥ उदाहृतः सर्वथा ते गुणानां मयैकदेशः प्रसमीक्ष्य बुद्ध्या । शक्तिर्न मे काचिदिहास्ति वक्तुं गुणान्सर्वान्परिमातुं तथैव ॥ मेरोः समुद्रस्य च सर्वयत्नैः संख्योपलानामुदकस्य चापि । शक्यं वक्तुं नेह गङ्गाजलानां गुणाः ख्यातुं परिमातुं तथैव' इति । विष्णुपुराणेऽपि— 'एवमेतत्परं विष्णोस्तृतीयममलात्मकम् । आधारभूतं लोकानां त्रयाणां सृष्टिकारणम् ॥ ततः प्रभवति ब्रह्मन्सर्वपापहरा सरित् । गङ्गा देवाङ्गनाङ्गानामनुलेपनपिञ्जरा ॥ वामपादाम्बुजाङ्गुष्ठनखस्रोतोविनिर्गता । विष्णोर्बिभर्ति यां भक्त्या शिरसाहर्निशं ध्रुवम् ॥ ततः सप्तर्षयो यस्याः प्राणायामपरायणाः । तिष्ठन्ति वीचीमालाभिरुह्यमाना जटाजले ॥ वार्योघैः सततं यस्याप्लावितं शशिमण्डलम् । भूयोऽधिकतरां

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


कान्ति वहत्येतदहःक्षयम् ॥ मेरुपृष्ठे पतित्वोच्चैर्निष्क्रान्ता शशिमण्डलात् । जगतः पावनार्थाय या प्रयाति चतुर्दिशम् ॥ सीता चालकनन्दा च चक्षुर्भद्रा तथैव च । एकैव सा चतुर्भेदा दिग्भेदगतिलक्षणा ॥ भेदं चालकनन्दाख्यं यस्याः शर्वोऽपि लक्षणम् । दधार शिरसा प्रीत्या वर्षाणामधिकं शतम् ॥ शंभोर्जटाकलापाच्च विनिष्क्रान्तास्थिशर्करात् । प्लावयित्वा दिवं निन्ये या पापान्सगरात्मजान् ॥ स्नातस्य सलिले यस्याः सद्यः पापं प्रणश्यति । अपूर्वपुण्यप्राप्तिश्च सद्यो मैत्रेय जायते ॥ दत्ताः पितृभ्यो यत्रापस्तनयैः श्रद्धयान्वितैः । समात्रयं प्रयच्छन्ति तृप्तिं मैत्रेय दुर्लभाम् ॥ यस्यामिष्टा महायज्ञैर्यज्ञेशं पुरुषोत्तमम् । द्विजभूताः परामृद्धिमवापुर्दिवि चेह च ॥ स्नाननिर्धूतपापाश्च जायन्ते यतयस्तथा । केशवासक्तमनसः प्राप्ता निर्वाणमुत्तमम् ॥ श्रुताभिलषिता दृष्टा स्पृष्टा-पीतावगाहिता । सा पावयति भूतानि कीर्तिता च दिने दिने ॥ गङ्गा गङ्गेति यन्नाम योजनानां शतेष्वपि । स्थितैरुच्चारितं हन्ति पापं जन्मत्रयार्जितम् ॥ यतः सा

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

पावनी मूलं त्रयाणां जगतामपि। समुद्भूता परं तत्तु तृतीयं भगवत्पदम्' इति।

एष ते राम गङ्गाया विस्तरोऽभिहितो मया।
स्वस्ति प्राप्नुहि भद्रं ते संध्याकालोऽतिवर्तते॥

धन्यं यशस्यमायुष्यं स्वर्ग्यं पुत्र्यमथापि च।
यः श्रावयति विप्रेषु क्षत्रियेष्वितरेषु च॥

प्रीयन्ते पितरस्तस्य प्रीयन्ते दैवतानि च।
इदमाख्यानमव्यग्रो गङ्गावतरणं शुभम्॥

यः शृणोति च काकुत्स्थ सर्वान्कामानवाप्नुयात्।
सर्वे पापाः प्रणश्यन्ति आयुः कीर्त्तिश्च वर्धते॥

पञ्चचत्वारिंशे— ततः श्रुतगङ्गावतरणो रामः प्रभाते तामेव गङ्गां तीर्त्वा उत्तरकूलनिविष्टां विशालां पुरीमवेक्ष्य कस्येयमिति विश्वामित्रमपृच्छत्। ततः अमरत्वलिप्सुदेवासुरादिकृतक्षीरोदमथनाद्धन्वन्तर्यप्सरोवारुण्युच्चैश्रवःकौ-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्तुभक्रमेण संभूतेऽमृते तदर्थं विवदमानेषु देवासुरेषु देवजयाय गृहीतमोहिनीवेषेण भगवता नारायणेन लब्धामृतो वृद्धश्रवा निगृहीतासुरवर्गो राज्यमवाप । षट्चत्वारिंशे— ततः समन्युशतमन्युनिषूदितपुत्रक्लेशासहिष्णुदितिप्रार्थनया सहस्रसंवत्सरनियमलभ्यस्तनय इति स्वभर्तृकाश्यपानुग्रहेण पाकशासनपरिपाटनपटुपुत्रलाभाय कुशाप्लवने तपश्चरन्तीं गर्भहननायान्तरलिप्सया शाठ्येन शक्रो मातरं परिचचार । ततश्च

..................प्राप्ते मध्यं दिवाकरे ।
निद्रयापहृता देवी पादौ कृत्वाथ शीर्षतः ॥

दृष्ट्वा तामशुचिं शक्रः पादतः कृतमूर्धजाम् ।
शिरःस्थाने कृतौ पादौ जहास च मुमोद च ॥

अनेन व्रतस्थानां दिवा स्वापः, पादस्थाने शिरःस्थापनं चाशुचिकरम् इति सूचितम् । ततस्तस्या जठरं प्रविश्य गर्भं सप्तधा च्छित्त्वा प्रबुद्धया मात्रा न हन्तव्य इति प्रार्थितः कुलिशपाणिर्निर्जगाम । दितिरप्याखण्ड-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

लखण्डितखण्डांस्तदीयवरेण मारुताभिधानान्देवान्कारयित्वा दिवं प्रविष्टा। तदेतस्मिन्देशे इक्ष्वाकुनन्दनविशालनिर्मितां तद्वंशोद्भवसुमत्यध्युषितां विशालाभिधानां पुरीमद्याधिवसाम इति निश्चित्य संप्राप्तः राक्षसक्षयकरणदक्षयोर्दशरथकुमारयो रामलक्ष्मणयोर्विदितवृत्तान्तेन सुमतिना प्रत्युद्गमनादिना सम्यगभ्यर्चितः सराजपुत्रो विश्वामित्रस्तत्र निशीथिनीं नीत्वा मिथिलां प्रतस्थे। ततः मिथिलोपकण्ठे जनवर्जितमाश्रमं पश्यन्विश्वामित्रः—'अहल्याभिलाषिणमनार्यवृत्तं वृत्रहणं दृष्ट्वा, गौतमः

मम रूपं समास्थाय कृतवानसि दुर्मते।
अकर्तव्यमिदं यस्माद्विफलस्त्वं भविष्यसि॥

इति इन्द्रं शप्त्वा,

इह वर्षसहस्राणि बहूनि त्वं निवत्स्यसि।
वायुभक्षा निराहारा तप्यन्ती भस्मशायिनी।
अदृश्या सर्वभूतानामाश्रमे त्वं भविष्यसि॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


इति भार्यामपि शप्त्वा तपश्चरणाय हिमाद्रिं गतः' इति पूर्वकथावृत्तान्तं रामायाचचक्षे। अनेन परदाराभिमर्शनं कृतवतः प्राणात्ययो महान्क्लेशो वा भवति इति सूचितम्। तथा च युद्धकाण्डे सीतावाक्यम्—

**न हीदृशमनायुष्यं लोके किंचन विद्यते।**
**यादृशं पुरुषस्येह परदाराभिमर्शनम्॥**

इति। तथा स्वरूपनाशमकृत्वा वायुभक्षेत्यादिवयोनुरूपशापप्रदानेन चापल्यात्सकृत्परपुरुषप्रवृत्ता स्त्री नियमेन शोचयित्वा पुनः संग्राह्येति सूचितम्। अभ्यासे तु पातित्यम्। तथा च गौतमः— 'निन्दितकर्माभ्यासिपतितात्साग्यपतितत्यागिनः पतिताः' इति। एकोनपञ्चाशे— गौतममहर्षिकोपादफलमिन्द्रं पितृप्रार्थनालब्धेन मेषवृषणेन देवाः सफलं चक्रुः। तमिममाश्रमं प्रविश्य

**तारयैनां महाभागामहल्यां देवरूपिणीम्।**

इति विश्वामित्राज्ञयाश्रमं प्रविश्य रामः स्वपदविन्या-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ससमसमयमेव दृक्पथमारूढां तपोबलविशुद्धाङ्गीं तत्समयसंप्राप्तगौतमसंगतामहल्यां संपूज्य ताभ्यां च प्रतिनन्दितो विश्वामित्रपुरःसरो मिथिलामुपाजगाम। पश्चाद्येनानादिगन्तरागतऋषिगणसंपूर्णयज्ञवाटसंदर्शनसंजातकुतूहलेन रामेण कतमो देशोऽस्माकं निवासायेति पृष्टो विश्वामित्रः

**निवासमकरोद्देशे विविक्ते सलिलान्विते।**

अनेन द्विजावासः विविक्तसलिलान्वित एव कर्तव्य इति सूचितम्। तथा च गौतमः— 'एधोदकयवसकुशमाल्योपनिष्क्रमणमार्यजनभूयिष्ठमनलससमृद्धं धार्मिकाधिष्ठितं निकेतमावसितुं यतेत' इति। आपस्तम्बोऽपि— 'प्रभूतैधोदके ग्रामे यत्रात्माधीनं प्रयमणं तत्र वासो धर्म्यो ब्राह्मणस्य' इति। जनकोऽपि यज्ञवाटसमागतं विश्वामित्रमुपश्रुत्य शतानन्दादिऋत्विग्ब्राह्मणपुरस्कृतोऽर्घ्यादिना तपोधनं संपूज्य परमासनोपविष्टं विश्वामित्रमनु स्वयमपि सर्षिसंघ उपविश्य देवोपमाविमौ कुमारौ कस्येति पृष्ट-

CC-0. Prof. Satya Vrat Shastri Collection.

वान् । विश्वामित्रोऽपि दशरथसकाशात्सिद्धाश्रमे यज्ञरक्षणाय समानीतौ निगृहीतसुबाहुमारीचौ स्वसंदर्शनमात्रेण निवृत्तशापामहल्यां गौतममहर्षिणा संयोजितवन्तौ माहेश्वरधनुरारोपणं कर्तुकामौ दाशरथी रामलक्ष्मणावित्यवादीत् । एकपञ्चाशे— ततः जनककुलपुरोधाः शतानन्दः श्रुतजननीवृत्तान्तः गाधिनन्दनं दशरथनन्दनौ च प्रशस्य रामाय कौशिकप्रभावमकथयत्— पुरा खलु कुशिकवंशसंभूतोऽयं बहुवर्षसहस्रं धर्मतो राज्यं परिपालयन्सकलदेशदिदृक्षया स्वसैन्यपरिवृतो गाधिसूनुराश्रमान्बहुतपस्विसंसेवितान्विचरञ्श्रमविषण्णो भगवन्तं वसिष्ठं ददर्श । द्विपञ्चाशत्रिपञ्चाशयोः— वसिष्ठोऽपि स्वाश्रममभ्यागतं प्रणतं विश्वामित्रं स्वागतवचनादिभिरभिपूज्याग्निहोत्रादिषु कुशलं पृष्टवन्तं ससैन्यं राजानमातिथ्येन निमन्त्र्य कामधेनुकल्पितषड्रसोपेतभक्ष्यभोज्यादिसंतृप्तेन शबलामाहात्म्यसंदर्शनसंजातलोभेन विश्वामित्रेण

हैरण्यकक्ष्यान्ग्रैवेयान्सुवर्णाङ्कुशभूषितान् ।
ददामि कुञ्जराणां ते सहस्राणि चतुर्दश ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

हैरण्यानां रथानां च श्वेतानां च चतुर्युजाम् ।
ददामि ते शतान्यष्टौ किंकिणीकविभूषितान् ॥

हयानां देशजातानां कुलजानां महौजसाम् ।
सहस्रमेकं दश च ददामि तव सुव्रत ॥

नानावर्णाभियुक्तानां वयःस्थानां तथैव च ।
ददाम्येकां गवां कोटिं शबला दीयतां मम ॥

यावदिच्छसि रत्नं वा हिरण्यं वा द्विजोत्तम ।
तावद्ददामि तत्सर्वं शबला दीयतां मम ॥

एवं गवाश्वादिसहस्रै रत्नभूता शबला रत्नहारिणे मह्यं देयेति संप्रार्थितो वसिष्ठः

नाहं शतसहस्रेण नापि कोटिशतैर्गवाम् ।
राजन्दास्यामि शबलां राशिभी रजतस्य वा ॥

अस्यां हव्यं च कव्यं च प्राणयात्रा तथैव च ।
आयत्तमग्निहोत्रं च बलिर्होमस्तथैव च ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


स्वाहाकारवषट्कारौ विद्याश्च विविधास्तथा ।
एतदेव हि मे रत्नमेतदेव हि मे धनम् ॥

एतदेव हि सर्वस्वमेतदेव हि जीवितम् ।
दर्शश्च पूर्णमासश्च यज्ञाश्चैवाप्तदक्षिणाः ॥

एतदेव हि मे राजन्विविधाश्च क्रियास्तथा ।
अदोमूलाः क्रियाः सर्वा मम राजन्न संशयः ।
बहुना किं प्रलापेन न दास्ये कामदोहिनीम् ॥

इति प्रत्याचख्यौ । अनेन सकलवैदिककर्मविद्याजीवनादिकरत्वेनातिपवित्रत्वेन च गवामतिमाहात्म्यं गवामविक्रयतो पर्याप्तवृत्तिकानामत्याशानिषेधश्चेति त्रितयमपि सूचितम् । तथा महाभारते आनुशासनिके पर्वणि युधिष्ठिरं प्रति भीष्मवचनम्— अचरेभ्यश्च भूतेभ्यश्चरा श्रेष्ठा नराः सदा । ब्राह्मणाश्च ततः श्रेष्ठास्तेषु यज्ञाः प्रतिष्ठिताः ॥ यज्ञैरवाप्यते सोमः स च गोषु प्रतिष्ठितः । गोषु सोमः प्रतिष्ठित इति च तैत्तिरीयश्रुत्यावगम्यते । श्रुतिश्च— 'यो वै सोमं भक्षयित्वा संवत्सरं सोमं न पि-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


पिबति पुनर्भक्ष्योऽस्य सोमपीथो भवति, सोमः खलु वै सांनाय्यं य एवं विद्वान्सांनाय्यं पिबति अपुनर्भक्ष्योऽस्य सोमपीथो भवति' इति। एवं सोमात्मकसांनाय्यस्य गोषु प्रतिष्ठितत्वात् 'सोमो गोषु प्रतिष्ठितः' इति। 'हव्यं कव्यं तर्पणं शान्तिकर्म यानं वासो वृद्धबालस्य तुष्टिः। एतान्सर्वान्गोप्रदाने गुणान्वै दाता राजन्नाप्नुयाद्वै सदैव। अन्नं हि परमं गावो देवानां परमं हविः। स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ। गावो यज्ञस्य हि फलं गोषु यज्ञाः प्रतिष्ठिताः। नाकीर्तयित्वा गाः सुप्यात्ताः संस्मृत्यैव चोत्पतेत्। गवां मूत्रपुरीषस्य नोद्विजेत कथंचन। न चासां मांसमश्नीयाद्गवां पुष्टिं तथाप्नुयात्॥ समानवत्सां कपिलां धेनुं दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसंवीतां ब्रह्मलोके महीयते॥ यावन्ति रोमाणि भवन्ति धेन्वास्तावन्ति वर्षाणि महीयते सः। स्वर्गाच्च्युतश्चापि ततो नृलोके प्रसूयते वै विपुले गृहे सः॥ गावो ममाग्रतो नित्यं गावः पृष्ठत एव च। गावो मे सर्वतश्चैव गवां मध्ये वसाम्यहम्॥ इत्याचम्य जपेत्सायं प्रातश्च पुरुषः सदा।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


यदह्ना कुरुते पापं तस्मात्स परिमुच्यते ॥ नातः परतरं दानं नातः पुण्यतरं फलम् । नातो विशिष्टं लोकेषु भूतं भवितुमर्हति ॥ त्वचा लोम्नाथ शृङ्गैर्वा वालैः क्षीरेण मेदसा । यज्ञं वहति संभूय किमस्त्यभ्यधिकं ततः ॥ गावो महार्थाः पुण्याश्च तारयन्ति च मानवान् । धारयन्ति प्रजाश्चेमा हविषा पयसा तथा ॥ न हि पुण्यतमं किंचिद्गोभ्यो भरतसत्तम । एताः पुण्याः पवित्राश्च त्रिषु लोकेषु सत्तमाः ॥ देवानामुपरिष्टाच्च गावः प्रतिवसन्ति वै । दत्त्वा चैतास्तारयते यान्ति स्वर्गं मनीषिणः ॥ गाश्च शुश्रूषते यश्च समन्वेति च सर्वशः । तस्मै तुष्टाः प्रयच्छन्ति वरानपि सुदुर्लभान् ॥ निर्हृतैश्च यवैर्गोभिर्मासं प्रसृतयावकः । ब्रह्महत्यासमं पापं सर्वमेतेन शुध्यति ॥ श्रीः कृत्वेह वपुः कान्तं गोमध्येषु विवेश ह । अप्येकाङ्गेप्यधो वस्तुमिच्छामि च सुकुत्सिते ॥ न वोऽस्ति कुत्सितं किंचिदङ्गेष्वालक्ष्यतेऽनघाः । पुण्याः पवित्राः सुभगा मम वासं प्रयच्छथ ॥ वसेयं यत्र वो देहे तन्मे वक्तुमिहार्हथ । गावः— 'अवश्यं मानना कार्या तवास्माभिर्यशस्विनि ।

CC-0. Prof. Satya Vrat Shastri Collection.

 Digitized By Siddhanta eGangotri Gyaan Kosha


शकृन्मूत्रे वस त्वं हि पुण्यमेतद्धि नः शुभे'। श्रीः— 'दिष्ट्या प्रसादो युष्माभिः कृतो मेऽनुपहात्मकः ॥ एवं भवतु भद्रं वः पूजितास्मि सुखप्रदाः। एवं गोशकृतः पुत्र माहात्म्यं तेऽनुवर्णितम् ॥ ये च गां संप्रयच्छन्ति हुतशिष्टाशिनश्च ये। तेषां सत्राणि यज्ञाश्च नित्यमेव युधिष्ठिर ॥ ऋते दधिघृतेनेह न यज्ञः संप्रवर्तते। तेन यज्ञस्य यज्ञत्वमदोमूलं च कथ्यते ॥ यज्ञाङ्गं कथिता गावो यज्ञ एव च वासव। एताभिश्च विना यज्ञो न वर्तेत कथंचन। धारयन्ति प्रजाश्चैव पयसा हविषा तथा। एतासां तनयाश्चापि कृषियोगमुपासते ॥ जनयन्ति च धान्यानि बीजानि विविधानि च। ततो यज्ञाः प्रवर्तन्ते हव्यं कव्यं च सर्वशः ॥ तथा च बोधायनः— 'अपि वा द्यूतमोदनं पक्त्वा तस्योपरिष्टात्प्रभूतमाज्यं पयो वानीय तस्मादेतत्सर्वं करोति यद्गवा कार्यं विज्ञायते च धेन्वै वा एतद्रेतो यदाज्यं पयो वा अनडुहस्तण्डुला' इति। एतत्ते सर्वमाख्यातं पावनं च महाद्युते। पवित्रं परमं वापि गवां माहा-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


त्म्यमुत्तमम् ॥ कीर्तितं पुरुषव्याघ्र सर्वपापप्रमोचनम् । य इदं कीर्तयेन्नित्यं ब्राह्मणेभ्यः समाहितः ॥ हव्यकव्येषु यज्ञेषु पितृकार्येषु चैव ह । सार्वकामिकमक्षय्यं पितॄंस्तस्योपतिष्ठते ॥ गोषु भक्तश्च लभते यद्यदिच्छति मानवः । स्त्रियोऽपि भक्ता या गोषु ताश्च काममवाप्नुयुः । न किंचिद्दुर्लभं चैव गवां भक्तस्य भारत ॥ गुणवचनसमुच्चयैकदेशो नृवर मयैष गवां प्रकीर्तितस्ते । न च परमिह दानमस्ति गोभ्यो भवति न चापि परायणं तथान्यत् ' इति । एवं स्थलान्तरेऽपि युधिष्ठिरः— दर्शने कीदृशः स्नेहः संवासे च पितामह । महाभाग्यं गवां चैव तन्मे व्याख्यातुमर्हसि । भीष्मः— 'पुरा खलु परित्यक्तकामक्रोधं गङ्गायमुनासंगमे जलमध्ये तपश्चरन्तं धीवरैर्जालप्रक्षेपेण यादोभिः सह कूले समानीतं च्यवनमहर्षिमवलोक्य कृतनमस्कारेण नहुषेण किं कुर्याम् इति प्रार्थितो महर्षिर्मम मूल्यं मत्स्यमूल्यैः सह एभ्यो धीवरेभ्यः प्रयच्छेत्यवोचत् । ततः सहस्रलक्षकोटिधनेनार्धराज्यकृत्स्नराज्याभ्यां च क्रमेण निष्क्रये कृतेऽपि अननु-


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


रूपनिष्क्रयं मन्वानं च्यवनं विचिन्त्य अनुरूपनिष्क्रयालाभ-चिन्तया खिद्यमानो नहुषः गवि जातेन केनचिन्मुनिना प्रदर्शितानुरूपनिष्क्रयगवा निष्क्रयं कृत्वा उत्तिष्ठेत्युक्तवान्। च्यवनः— 'उत्तिष्ठाम्येष राजेन्द्र सम्यक्क्रीतोऽस्मि तेऽनघ ॥ गोभिस्तुल्यं न पश्यामि धनं किंचिदिहाच्युत। कीर्तनं श्रवणं दानं दर्शनं चापि पार्थिव ॥ गवां प्रशस्यते वीर सर्वपापहरं शिवम्। गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते ॥ अन्नमेव सदा गावो देवानां परमं हविः। स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ ॥ गावो यज्ञस्य नेत्र्यो वै तथा यज्ञस्य ता मुखम्। अमृतं ह्यव्ययं दिव्यं क्षरन्ति च वहन्ति च ॥ अमृतायतनं चैताः सर्वलोकनमस्कृताः। तेजसा वपुषा चैव गावो वह्निसमा भुवि ॥ गावो हि सुमहत्तेजः प्राणिनां च सुखप्रदाः। निविष्टं गोकुलं यत्र श्वासं मुञ्चति निर्भयम् ॥ विराजयति तं देशं पापं चास्यापकर्षति। गावः स्वर्गस्य सोपानं गावः स्वर्गे प्रपूजिताः ॥ गावः कामदुहो देव्यो नान्यत्किंचित्परं स्मृतम्।

CC-0. Prof. Satya Vrat Shastri Collection.

इत्येतद्गोषु मे प्रोक्तं माहात्म्यं भरतर्षभ ॥ गुणैकदेशवचनं शक्यं पारायणं न तु । ततो निषादा मुनिं प्रति ऊचुः—दर्शनं कथनं चैव सहास्माभिः कृतं मुने ॥ सतां सप्तपदं मैत्रं प्रसादं नः कुरु प्रभो । हवींषि सर्वाणि यथा ह्युपभुङ्क्ते हुताशनः ॥ एवं त्वमपि धर्मात्मन्पुरुषोऽग्निः प्रतापवान् । प्रसादयामहे विद्वन्भवन्तं प्रणता वयम् ॥ अनुग्रहार्थमस्माकमियं गौः प्रतिगृह्यताम्' । च्यवनः— 'कृपणस्य च यच्चक्षुर्मुनेराशीविषस्य च । नरं समूलं दहति कक्षमग्निरिव ज्वलन् । प्रतिगृह्णामि वो धेनुं कैवर्ता मुक्तकिल्बिषाः ॥ दिवं गच्छत वै क्षिप्रं मत्स्यैः सह जलोद्भवैः' इति । एवं श्रुतिस्मृतीतिहासपुराणादिषु बहुप्रकारेण प्रतिपाद्यमानं गोमाहात्म्यं वाचामगोचरम् इति दिक्प्रदर्शनमात्रं कृत्वा विरम्यते । एवं सर्वसाधारण्येन गोजातिमात्रस्यैतादृशं माहात्म्यं चेत्किमु वक्तव्यं सर्वकामदोहिन्या वसिष्ठधेनोर्माहात्म्ये ? प्रपञ्चितं च वसिष्ठकामधेनुमाहात्म्यं व्यासवाल्मीकिकालिदासादिभिरित्यलं विस्तरेण । इति गोमाहात्म्यम् ॥ अथ विक्रेयतायाम्—

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

**यावदिच्छसि रत्नं वा हिरण्यं वा द्विजोत्तम ।**
**तावद्ददामि तत्सर्वं शबला दीयतां मम ॥**

इत्युक्ते सर्वाभीष्टग्रहणपूर्वकं गोप्रदाने विक्रयो भवेदिति 'न दास्ये कामदोहिनीम्' इति परिहृतम् । अनेन गोविक्रयो न कर्तव्य इति व्यङ्ग्यमर्यादया उक्तं भवति । यज्ञे तु दक्षिणात्वेन विहितगोभूम्यादीनां स्वानुपयुक्तानां यजमानसकाशात् विनिमये न दोष इति दशरथाश्वमेधे रामायणं स्फुटम् । विक्रयस्तु निषिद्धः । तथा च भारते आनुशासनिके— 'ये दोषा यादृशाश्चैव द्विज यज्ञोपघातके । विक्रये चापहारे च ते दोषा ये श्रिता गवाम् । अपहृत्य तु यो गां वै ब्राह्मणाय प्रयच्छति । यावद्दाने फलं तस्यात्तावन्नरकमृच्छति' इति । तत्रैव वनपर्वणि— 'एका एकस्य दातव्या न बहूनां कदाचन । सा चेद्विक्रयमापन्ना हन्ति चासप्तमं कुलम्' इति गोरविक्रेयता ॥ 'अस्यां हव्यं च कव्यं च प्राणयात्रा तथैव च' इति हव्यकव्यप्राणयात्रानिर्वाहे सति अधिकाशा न कर्तव्येत्यपि व्य-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ङ्ग्यमर्यादया उक्तं भवति । तथा चापस्तम्बः— 'वृत्तिं प्राप्य विरमेत्' इति । चतुःपञ्चाशपञ्चपञ्चाशयोः— अथ बलावलेपेन विश्वामित्रो वसिष्ठवाक्यमनादृत्य ब्रह्मस्वहरणे महादोषं जानन्नपि बलादेव शबलामाचकर्ष । अस्ति च ब्रह्मस्वहरणे दोषः । तथा च बोधायनः— 'न त्वेव कदाचित्स्वयं राजा ब्राह्मणस्वमाददीत, अथाप्युदाहरन्ति 'न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते । ब्रह्मस्वं पुत्रपौत्रघ्नं विषमेकाकिनं हरेत् । तस्माद्राजा ब्राह्मणस्वं नाददीत परं ह्येतद्विषं यद्ब्राह्मणस्वम्' इति श्लोकमुदाजहार । तथा चानुशासनिके धर्मपुत्रं प्रति भीष्मवचनम्— 'शुभे पात्रे ये गुणा गोप्रदाने तावान्दोषो ब्राह्मणस्वापहारे ।। सर्वावस्थं ब्राह्मणस्वापहारो दाराश्चैषां दूरतो वर्जनीयाः । तत्रैव गोप्रदाने भ्रान्त्या अन्यब्राह्मणगवीप्रदानेन नृगस्य ब्राह्मणशापेन कृकलासभावमापन्नस्य कृष्णदर्शनेन शापविमोक्षानन्तरं वासुदेव इमं श्लोकमुदाजहार— 'ब्राह्मणस्वं हृतं हन्ति नृगं ब्राह्मणगौरिव'। महाप्रस्थाने इन्द्रं प्रति युधिष्ठिरवाक्यम्— 'प्रतिप्रदानं

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शरणागतस्य स्त्रियो वधो ब्राह्मणस्वापहारः । मित्रद्रोहस्तानि चत्वारि शक्र भक्तत्यागश्चैव समं मतो मे'। उद्योगपर्वणि प्रजागरे धृतराष्ट्रं प्रति विदुरवाक्यम्— 'अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः । ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥ ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति । रमते निन्दया चैषां प्रशंसां नाभिनन्दति ॥ नैतान्स्मरति कृत्येषु याचतश्चाभ्यसूयति । एतान्दोषान्नरः प्राज्ञो बुध्या बुद्ध्वा विवर्जयेत्' इति । सर्वधर्मज्ञस्यापि विश्वामित्रस्य एतादृशी बुद्धिरभूत् । यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् । बुद्धिं तस्यापकर्षन्ति सोऽर्वाचीनानि पश्यति ॥ बुद्धौ कलुषभूतायां विनाशे समुपस्थिते । अनयो नयसंकाशो हृदयान्नापसर्पति' इति । भवितव्यस्यापरिहार्यत्वात्कामक्रोधादिभिर्व्याप्तः सन्सर्वं विस्मृत्य वसिष्ठधेनुमाकर्षयामास । सापि असहमाना कामदोहिनी शान्त्या क्षमया युक्तं वसिष्ठमवोचत्—

न बलं क्षत्रियस्याहुर्ब्राह्मणा बलवत्तराः ।
ब्रह्मन्ब्रह्मबलं दिव्यं क्षत्रात्तु बलवत्तरम् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


नियुङ्क्ष्व मां महातेजस्त्वं ब्रह्मबलसंवृतः ।
तस्य दर्पबलं यत्तन्नाशयामि दुरात्मनः ॥

इति । तदनु वसिष्ठाभ्यनुज्ञातशबलानिर्मितपह्लवादिनिकृष्टजातिनिषूदितं स्वं बलं वसिष्ठहुंकारनिर्दग्धं पुत्रशतं चावलोक्य व्रीडितो विश्वामित्रः तपश्चरणसंतुष्टमहादेवप्रसादलब्धसर्वास्त्रगणः वसिष्ठाश्रमं पुनरागत्य नाशयामास । चिरसंवर्धिताश्रमविनाशसंजातकोपो वसिष्ठो भगवान्क्रोधादिदं वचनमब्रवीत् —

क्षत्रबन्धो स्थितोऽस्म्येष यद्बलं तद्विदर्शय ।
नाशयाम्यद्य ते दर्पं क्षत्रस्य तव गाधिज ॥

क्व च ते क्षत्रियबलं क्व च ब्रह्मबलं महत् ।
पश्य ब्रह्मबलं दिव्यं मम क्षत्रियपांसन ॥

इत्यभिधाय ब्रह्मदण्डमुद्यम्य तस्थौ । ततो विश्वामित्रप्रयुक्ताग्नेयादिब्रह्मास्त्रावधिसर्वास्त्रजातं स्वहस्तस्थितब्रह्मदण्डेन ग्रसमानस्य

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


त्रैलोक्यमोहनं रौद्रं रूपमासीत्सुदारुणम् ।
रोमकूपेषु सर्वेषु वसिष्ठस्य महात्मनः ॥

मरीच्य इव निष्पेतुरग्नेर्धूमाकुलार्चिषः ।
प्राज्वलद्ब्रह्मदण्डश्च वसिष्ठस्य करोद्यतः ॥

विधूम इव कालाग्निर्यमदण्ड इवापरः ।
ततोऽस्तुवन्मुनिगणा वसिष्ठं जपतां वरम् ॥

अमेयं ते बलं ब्रह्मंस्तेजो धारय तेजसा ।
निगृहीतस्त्वया ब्रह्मन्विश्वामित्रो महातपाः ॥

प्रसीद जपतां श्रेष्ठ लोकाः सन्तु गतव्यथाः ।
एवमुक्तो महातेजाः शमं चक्रे महातपाः ॥

अनेन स्वस्य परैरुपद्रवसहस्रे सत्यपि लोकानुग्रहाय क्रोधं निगृह्य क्षमैव कार्या, अयमेव ब्राह्मणस्य मुख्यो धर्म इति द्योत्यते । तथा च गीतायाम्— 'शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानविज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम्' इति । आदिपर्वणि शृङ्गिणं प्रति

CC-0. Prof. Satya Vrat Shastri Collection.

शमीकवाक्यम्— 'क्रोधो हि धर्मं हरति यतीनां दुःख-संचितम् । ततो धर्मविहीनानां गतिरिष्टा न विद्यते ॥ शम एव यतीनां हि क्षमिणां सिद्धिकारकः । क्षमावता-मयं लोकः परश्चैव क्षमावताम् ॥ तस्माच्चरेथाः सततं क्षमाशीलो जितेन्द्रियः । क्षमया प्राप्स्यते लोका-न्ब्राह्मण: समनन्तरान्' इति । आरण्यके पर्वणि द्रौपदीं प्रति धर्मपुत्रवाक्यम्— 'तस्माद्बलवता चैव दुर्बलेन च नित्यदा । क्षन्तव्यं पुरुषेणाहुरापत्सु च विजा-नता ॥ मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः । क्षमावतो जयो नित्यं साधोरिह सतां मतम् । सत्यं चानृततः श्रेयो नृशंसाच्चानृशंसता । तमेवं बहुदोषं तु क्रोधं साधुविवर्जितम् ॥ यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते । तेजस्विनं तं विद्वांसो मन्यन्ते तत्त्वद-र्शिनः ॥ हन्त्यवध्यानपि क्रुद्धो गुरून्क्रुद्धस्तुदत्यपि । तस्मात्तेजसि कर्तव्यः क्रोधो दूरे प्रतिष्ठितः ॥ तस्माच्छ-श्वत्त्यजेत्क्रोधं पुरुषः सम्यगाचरन् । हन्युर्हि पितरः पुत्रान्पुत्रांश्चापि तथा पितॄन् ॥ हन्युश्च पतयो भार्या


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

भार्याश्चापि तथा पतीन्। तस्मान्मन्युर्विनाशाय प्रजानामभवाय च॥ यस्मात्तु लोके दृश्यन्ते क्षमया पृथिवीसमाः। तस्माज्जन्म च भूतानां भवश्च प्रतिपद्यते॥ क्षन्तव्यं पुरुषेणेह सर्वापत्सु सुशोभने। क्षमावतो हि भूतानां जन्म चैव प्रकीर्तितम्॥ अत्राप्युदाहरन्तीमा गाथा नित्यं क्षमावताम्। गीताः क्षमावतां कृष्णे काश्यपेन महात्मना॥ क्षमा धर्मः क्षमा यज्ञः क्षमा वेदः क्षमा श्रुतम्। य एतदेवं जानाति स सर्वं क्षन्तुमर्हति॥ क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च। क्षमा तपः क्षमा शौचं क्षमयेदं धृतं जगत्॥ अतियज्ञविदां लोकान्क्षमिणः प्राप्नुवन्ति च। क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम्॥ अतिब्रह्मविदां लोकानति चापि तपस्विनाम्। अन्ये वै जपिनां लोकाः कर्मिणामपरे तथा। क्षमावतां ब्रह्मलोके लोकाः परमपूजिताः॥ क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम्। क्षमा सत्यं सत्यवतां क्षमा यज्ञः क्षमा यशः॥ तां क्षमां तादृशीं कृष्णे कथमस्मद्विधस्त्यजेत्। यस्यां ब्रह्म च सत्यं च यज्ञा

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

लोकाश्च धिष्ठिताः ॥ क्षन्तव्यमेव सततं पुरुषेण विजानता । यदा हि क्षमते सर्वं ब्रह्म संपद्यते तदा । क्षमावतामयं लोकः परश्चैव क्षमावताम् ॥ इह संमानमर्हन्ति परत्र च शुभां गतिम् । येषां मन्युर्मनुष्याणां क्षमयाभिहतः सदा ॥ तेषां परतरे लोकास्तस्मात्क्षान्तिः परा मता । इति गीता काश्यपेन गाथा नित्यं क्षमावताम् ॥ श्रुत्वा गाथाः क्षमायास्त्वं तुष्य द्रौपदि मा क्रुधः । एतदात्मवतां वृत्तमेष धर्मः सनातनः ॥ क्षमा चैवानृशंस्यं च तत्कर्तास्म्यहमञ्जसा' इति । विष्णुपुराणेऽपि पराशरं प्रति वसिष्ठवाक्यम्— 'संचितस्यापि महता वत्स क्लेशेन मानवैः । यशसस्तपसश्चैव क्रोधो नाशकरः परः ॥ स्वर्गापवर्गव्यासेधकारणं परमर्षयः । अलं निशाचरैर्दग्धैर्दीनैरनपराधिभिः ॥ सत्रं ते विरमत्वेतत्क्षमासारा हि साधवः' इति ।

**विश्वामित्रो विनिकृतो विनिश्वस्येदमब्रवीत् ।**
**धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् ।**
**एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


अत्र क्षत्रियग्रहणं प्रकृताभिप्रायम्, सर्वापेक्षयापि ब्राह्मणानामधिकत्वात्। तथा च मनुः— 'ऊर्ध्वं नाभेर्मेध्यतरः पुरुषः परिकीर्तितः। तस्मान्मेध्यतरं चास्य मुखमुक्तं स्वयंभुवा॥ उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैव धारणात्। सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः॥ तं हि स्वयंभूः स्वादास्यात्तपस्तप्त्वादितोऽसृजत्। हव्यकव्याभिवाह्याय सर्वस्यास्य च गुप्तये॥ यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकसः। कव्यानि चैव पितरः किं भूतमधिकं ततः॥ भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः। बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणास्तथा॥ उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती। स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते॥ ब्राह्मणो जायमानो हि पृथिव्यामधिजायते। ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये॥ सर्वं स्वं ब्राह्मणस्येदं यत्किञ्चिज्जगतीगतम्॥ श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति। स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च। आनृशंस्याद्ब्राह्मणस्य भुञ्जते हीतरे जनाः'। तथा अत्रैव गौतमकृत

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


इन्द्रनिग्रहः अहल्योपाख्याने उक्तः। आरण्यकाण्डेऽपि गृहीतब्राह्मणवेष इल्वलः संस्कृतेन मेषभूतस्यामिषेण श्राद्धं व्यपदिश्य निमन्त्रितान्ब्राह्मणान्भोजयित्वा 'वातापे निष्क्रमस्व' इत्यनुजमवदत्; वातापिरपि मेषवन्नदन्

भित्त्वा भित्त्वा शरीराणि ब्राह्मणानां विनिष्पतत्।

एवमनेकब्राह्मणवधसंजातखेदकलुषितान्तःकरणैस्तन्निग्रहासमर्थैः देवैः प्रार्थितो महर्षिरगस्त्यः तेन च श्राद्धे निमन्त्रितः तदनुजं मेषरूपिणं वातापिं भक्षयित्वा 'वातापे निष्क्रमस्व' इति वदन्तमिल्वलम्,

कुतो निष्क्रमितुं शक्तिर्मया जीर्णस्य रक्षसः।
भ्रातुस्ते मेषरूपस्य गतस्य यमसादनम्॥

इत्यब्रवीत्। इल्वलोऽपि भ्रातृवधजनितामर्षः सक्रोधं मुनिमभिद्रवन्

चक्षुषानलकल्पेन निर्दग्धो निधनं गतः।

इत्यगस्त्यकृतवातापील्वलनिग्रहो लक्ष्मणं प्रति रामेणोक्तः।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


एवं सुमेरुमिव मामपि प्रदक्षिणीकुर्विति विन्ध्यमहीधरसमुदीरितं वचनमाकर्ण्य दिनमणिः

नाहमात्मेच्छया शैलं करोम्येनं प्रदक्षिणम् ।
एष मार्गः प्रदिष्टो मे यैरिदं निर्मितं जगत् ॥

इत्यवादीत् ।

एवमुक्तस्ततः क्रोधात्प्रवृद्धः सहसाचलः ।
सूर्याचन्द्रमसोर्मार्गं रोद्धुमिच्छन्परंतप ॥

ततः समाक्रान्तताराापथं विन्ध्यभूधरमशक्यनिरोधमवलोक्य देवैः संप्रार्थितो महाप्रभावो महर्षिः विन्ध्यमहीधरमभिगम्य

दक्षिणामभिगन्तास्मि दिशं कार्येण केनचित् ।
यावदागमनं मह्यं तावत्त्वं प्रतिपालय ।
निवृत्ते मयि शैलेन्द्र ततो वर्धस्व कामतः ॥

इति समाज्ञाप्य दक्षिणाशाभूषणमभूत् । इत्यगस्त्य-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


कृतविन्ध्यनिग्रह उक्तः । उत्तरकाण्डे एवं मानवो दण्ड-नृपतिर्मृगयव्याजेन वनं प्रविष्टो भार्गवाश्रमसमीपे संचरन्तीमनवद्यसर्वावयवां मुनिकन्यकामवलोक्य

कुतस्त्वमसि सुश्रोणि कस्य वासि सुता शुभे ।

इति पृष्टया ऋषिकन्यया

भार्गवस्य सुतां विद्धि देवस्याक्लिष्टकर्मणः ।
अरजां नाम राजेन्द्र ज्येष्ठामाश्रमवासिनीम् ॥

इति प्रत्युक्तस्तद्रूपसंदर्शनसंदीप्तकामानलः कन्यामवादीत्—

प्रसादं कुरु सुश्रोणि न कालं क्षेप्तुमर्हसि ।
त्वत्कृते हि मम प्राणा विशीर्यन्ते शुभानने ॥

तथा चातिक्रुद्धस्वपितृशापमाशंसमानया बहुशः निराकृतोऽपि मदान्धः बलात्कारेण कन्यकां धर्षयामास । स च महर्षिर्भार्गवः तत्प्रधर्षितां रुदतीं कन्यकामवलोक्य

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सप्तरात्रेण राजासौ सभृत्यबलवाहनः ।
पापकर्मसमाचारो वधं प्राप्स्यति दुर्मतिः ।

समन्ताद्योजनशतं विषयं चास्य दुर्मतेः ।
धक्ष्यते पांसुवर्षेण महता पाकशासनः ।

दण्डस्य विषयो यावत्तावत्सर्वं समुच्छ्रयम् ॥
पांसुवर्षमिवालक्ष्यं सप्तरात्रं भविष्यति ।

इति शशाप ॥

तच्च राज्यं नरेन्द्रस्य सभृत्यबलवाहनम् ।
सप्ताहाद्भस्मसंभूतं यथोक्तं ब्रह्मवादिना ॥

ततः प्रभृति काकुत्स्थ दण्डकारण्यमुच्यते ।
तपस्विनः स्थिता यत्र जनस्थानमथोऽभवत् ॥

अत्रैव अथ भार्गवकृतदण्डनिग्रह उक्तो नृगोपाख्याने— एवं नृगनामको राजा अजस्रगोदानमाचरन्कस्यचिद्दरिद्रस्य गां स्वगवीभिः संसृष्टमन्यस्मै दत्तवान्; ततः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


क्षुधार्तेन दरिद्रेण स्वां गामन्वेषमाणेन कनखले कस्यचिद्ब्राह्मणस्य गृहे संचरन्तीं धेनुमवलोक्य मदीयेयं गौरिति अभिहितो ब्राह्मणः नृगराजेन मह्यमेव गौरियं प्रत्तेत्युक्तवान् ।

विवदन्तौ स्वतोऽन्योन्यं राजानमभिजग्मतुः ।
तौ राजभवनद्वारि अप्राप्य नृपशासनम् ॥

अहोरात्राण्यनेकानि वसन्तौ क्रोधमीयतुः ।
ऊचतुश्च महात्मानौ तावुभौ द्विजसत्तमौ ॥

क्रुद्धौ परमसंतप्तौ वाक्यं घोराभिसंहितम् ।
अर्थिनां कार्यसिद्ध्यर्थं यस्मात्त्वं नैषि दर्शनम् ॥

बहुवर्षसहस्राणि कृकलासो भविष्यसि ।
एवं तौ शापमुत्सृज्य ब्राह्मणौ विगतज्वरौ ॥

तौ गां हि दुर्बलां वृद्धां ददतुर्ब्राह्मणाय वै ।
एवं स राजा तं शापमुपभुङ्क्ते सुदारुणम् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


इति ब्राह्मणाभ्यां नृगनिग्रह उक्तः। विष्णुपुराणेऽपि—दुर्वासाः स्वेन दत्तां पुष्पमालां पुरंदरेणानादरेण ऐरावतस्कन्धदेशे निक्षिप्तामवलोक्य 'ऐश्वर्यमत्त दुष्टात्मन्नवलिप्तोऽसि वासव। श्रियो धाम स्रजं दिव्यां मद्दत्तां नाभिनन्दसि॥ अतोऽवमानमस्मासु मानिना भवता कृतम्। तस्मात्प्रणष्टलक्ष्मीकं त्रैलोक्यं ते भविष्यति' इति शशाप; 'ततःप्रभृति निश्रीकं सशक्रं भुवनत्रयम्। मैत्रेयासीदपध्वस्तं संक्षीणौषधिवीरुधम्॥ न यज्ञाः संप्रवर्तन्ते न तपस्यन्ति तापसाः। न च दानादिधर्मेषु मनश्चक्रे तदा जनः॥ लोभाभिभूता निश्रीका दैत्याः सत्त्वविवर्जिताः। श्रिया विहीनैर्निःसत्त्वैर्देवैश्चक्रुस्ततो रणम्॥ निर्जितास्त्रिदशा दैत्यैरिन्द्राद्याः शरणं ययुः। पितामहं महाभागं हुताशनपुरोगमाः' इति दुर्वाससा इन्द्रनिग्रह उक्तः। तत्रैव राजा दम्भोद्भवो नाम स्वभुजबलावलेपेन 'अस्ति कश्चिद्विशिष्टो वा मद्विधो वा भवेद्युधि। शूद्रो वैश्यः क्षत्रियो वा ब्राह्मणो वापि शस्त्रभृत्' इति स्वसंदर्शनाय समागतान्ब्राह्मणक्षत्रियविशः पर्यपृच्छत्।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


मन्त्रिपुरोहितादिभिरनुचितमिति बहुशः निवारितोऽपि तानविगणय्य सर्वोत्कृष्टमात्मानं मन्यमानः पुनरपि तथैव ब्राह्मणान्पर्यपृच्छत् । ततः 'उदीर्यमाणं राजानं क्रोधा-द्दीप्ता द्विजातयः । अनेकजयिनौ संख्ये यौ वै पुरुष-सत्तमौ ॥ तयोस्त्वं न समो राजन्भवितासि कदाचन' इत्यभिहितो राजा चतुरङ्गबलपरिवृतो युद्धाय नरनारा-यणाश्रमसमीपमागम्य ताभ्यां च अर्घ्यपाद्यादिभिरभ्य-र्चितोऽभूत् । किमागमनामिति पृष्टो राजा 'भवद्भ्यां युद्धमाकाङ्क्षन्नुपयातोऽस्मि पर्वतम् । आतिथ्यं दीयतामेत-त्काङ्क्षितं मे चिरं प्रति' इति पृष्टवान् । ततः शमप्रधा-ने तपोवने कुतो युद्धकथेति निवारयन् तत्कृतबहुप्रार्थन-याङ्गीकृतसंग्रामः नरः शस्त्रास्त्रवर्षेणानवकाशमाकाशं कु-र्वाणं सबलवाहनं राजानं प्रति ऐषीकमस्त्रं प्रायुङ्क्त । ततः 'तेषामक्षीणि कर्णांश्च नासिकाश्चैव मायया । निमि-त्तवेधी स मुनिः ऐषीकाभिः समार्पयत् । स दृष्ट्वा श्वेत-माकाशमिषीकाभिः समाचितम् । पादयोर्न्यपतद्राजा स्वस्ति मेऽस्त्विति चाब्रवीत्' इति नरेण दम्भोद्भवनि-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ग्रह उक्तः। एवमन्यत्रापि महर्षिप्रसादेन प्राप्तसमस्तराज्यो वेनोऽवलेपेन 'न यष्टव्यं न दातव्यं न होतव्यं कथंचन। भोक्ता यज्ञस्य कस्त्वन्यो ह्यहं यज्ञपतिः प्रभुः' इति जनपदेषु समुद्घोषयन् 'सकलजनहितकरदीर्घसत्रेण यज्ञेश्वरं भगवन्तं विष्णुमाराधयामः, तवापि तत्र भागो भविता' इति महर्षिप्रार्थनामनादृत्य 'कोऽयं हरिरिति ख्यातो यो वो यज्ञेश्वरो मतः। ब्रह्मा जनार्दनः शंभुरिन्द्रो वायुर्यमो रविः॥ हुतभुग्वरुणो धाता पूषा भूमिर्निशाकरः। नृपस्य ते शरीरस्थाः सर्वदेवमयो नृपः॥ भर्तृशुश्रूषणं धर्मो यथा स्त्रीणां परो मतः। ममाज्ञापालनं धर्मो भवतां च तथा द्विजाः' इत्याज्ञापयामास। तद्वचनश्रवणसंजातकोपा महर्षयः 'यो यज्ञपुरुषं विष्णुमनादिनिधनं प्रभुम्। विनिन्दत्यधमाचारो न स योग्यो भुवः पतिः॥ इत्युक्त्वा मन्त्रपूतैस्ते कुशैर्मुनिगणा नृपम्। निर्जघ्नुर्निहतं पूर्वं भगवन्निन्दनादिना' इति ब्राह्मणैर्वेननिग्रह उक्तः। आनुशासनिके पवनार्जुनसंवादे—'सहस्रभुजभृच्छ्रीमान्कार्तवीर्योऽभवत्प्रभुः। अस्य लोकस्य स-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


र्वस्य माहिष्मत्यां महाबलः ॥ स्ववित्तं तेन दत्तं तु दत्तात्रेयाय कारणे। आराधयामास च तं कृतवीर्यात्मजो मुनिम्' । एवमाराधितादत्तात्रेयात् कार्तवीर्यार्जुनः संग्रामे सहस्रबाहुत्वशत्रुजनाजेयतादिबहुवराँल्लब्ध्वा, 'अब्रवीद्वीर्यसंमोहात्को न्वस्ति सदृशो मम। धैर्यवीर्ययशःशौर्यैर्विक्रमेणौजसापि वा' इति। एवं बलावलेपसमुदीरितार्जुनवचनश्रवणसंजातकोपेन मातरिश्वना 'न त्वं मूढ विजानीषे ब्राह्मणं क्षत्रियाद्वरम्। सहितो ब्राह्मणेनेह क्षत्रियः शास्ति वै प्रजाः ॥ त्यजेमं कलुषं भावं ब्राह्मणेभ्यो नमस्कुरु। एतेषां कुर्वतः पापं राज्यक्षोभो भविष्यति ॥ अथ वा त्वां महीपाल शमयिष्यन्ति वै द्विजाः' इति प्रत्युक्तेनार्जुनेन 'कुर्यां भूतानि तुष्टोऽहं क्रुद्धो नाशं तथानये। कर्मणा मनसा वाचा न मत्तोऽस्ति वरो द्विजः ॥ ब्राह्मणाः संश्रिताः क्षत्रं न क्षत्रं ब्राह्मणाश्रितम्। अद्य ब्रह्मोत्तरं लोकं करिष्ये क्षत्रियोत्तरम् ॥ यादृशं पृथिवीभूतं तादृशं ब्रूहि मे द्विजम्। वायोर्वा सदृशं किंचिद्ब्रूहि त्वं ब्राह्मणोत्तमम् ॥ अपां वा सदृशं वह्नेर्ब्रूहि

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्वं नभसोऽपि वा ' इत्यधिक्षिप्तो वायुरकथयत् । अङ्ग-नृपतिप्रापितमात्मनो यज्ञदक्षिणाभावमवगत्य सकोपं भू-मिभावं विहाय ब्रह्मणः सदनं प्रविष्टां पृथिवीमवलोक्य परित्यक्तस्वदेहः परिगृहीतभूमिभावः काश्यपः सकल-प्रजाधारणाङ्कुरौदनप्रमुखपृथिवीकृत्यं त्रिंशद्वर्षसहस्रमक-रोत् । 'ब्रवीम्यन्यं ब्रूहि वा त्वं ब्राह्मणात्क्षत्रियं वरम्' इति । एवमुतथ्योऽपि भगवान्सोमदत्तां भद्राभिधां कन्यां कामपाशबद्धवरुणापहृतामवलोक्य 'अपिबत्तेजसा वारि विष्टभ्य सुमहातपाः । पीयमाने तु सर्वस्मिंस्तोये तु सलि-लेश्वरः ॥ अददाच्छरणं गत्वा भार्यामाङ्गिरसाय वै । ब्रवीम्यन्यं ब्रूहि वा त्वं ब्राह्मणात्क्षत्रियं वरम्' इति । एवं दानवकृतादितेयपरिभवमसहमानो भगवानगस्त्यः— 'प्रजज्वाल च तेजस्वी कालाग्निरिव संक्षये । तेन दीप्तां-शुजालेन निर्दग्धा दानवास्तथा । ब्रवीम्यहं ब्रूहि वा त्वं ब्राह्मणात्क्षत्रियं वरम्' इति । तथा देवदानवसंग्रामे स्वर्भानुकृतपराभवेन क्षीणतेजसि सचन्द्रमसि सवितरि च गाढान्धकारावृतासु दशसु दिक्षु दैतेयैर्हन्यमानान्देवा-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

नवलोक्य 'प्रकाशमकरोदत्रिस्तपसा स्वेन संयुगे । जगद्वि-तिमरं चापि प्रदीप्तमकरोत्तदा । व्यजयच्छत्रुसंघांश्च देवानां स्वेन तेजसा ॥ ब्रवीम्यन्यं ब्रूहि वा त्वं ब्राह्मणात्क्षत्रियं वरम्' इति । तथैव च्यवनो महर्षिरश्विनोर्मघवता सह सोमभागकल्पनाय समारब्धयज्ञस्तद्विघटनाय समुद्यतवज्रहस्तं पाकशासनमभिमन्त्रिताभिरद्भिः संस्तभ्य स्वतेजसा मदनामानं मन्त्राहुतिमयमसुरमसृजत् । 'तस्य दन्तसहस्रं तु बभूव शतयोजनम् । द्वियोजनशतास्तस्य दंष्ट्राः परमदारुणाः ॥ हनुस्तस्याभवद्भूमावास्यं चास्यास्पृशद्दिवम् । जिह्वामूले स्थितास्तस्य सर्वे देवाः सवासवाः' । तदनु तद्दर्शनसंजातसाध्वसं सुरपतिमश्विभ्यां सहाङ्गीकृतसोमपानं विधायासुरमपि मदनामानं चतुर्धा विभज्याक्षमृगयापानस्त्रीनिष्ठमकरोत् 'ब्रवीम्यन्यं ब्रूहि वा त्वं ब्राह्मणात्क्षत्रियं वरम्' इति । तथा च्यवननिर्मितमन्त्राहुतिमयमदनामकासुरमुखं प्रविष्टेषु देवेषु कपनामकदैत्यैराक्रान्तां द्यां भूमिं चावलोक्य 'गच्छत्वं शरणं विप्रानाशु सेन्द्रा दिवौकसः' इति ब्रह्मणा

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

समादिष्टैर्देवैः सम्यगर्थिता ब्राह्मणाः कपनाशनमाभिचारिकं कर्म समारेभिरे। 'तच्छ्रुत्वा प्रेषितो दूतो ब्राह्मणेभ्यो धनी कपैः। स च तान्ब्राह्मणानाह धनीकपवचो यथा॥ भवद्भिः सदृशाः सर्वे कपाः किमिह वर्तते। न जेष्यथ निवर्तध्वं निवृत्तानां सुखं हि वः' इति। तद्वनिवचनश्रवणजनितकोपाक्रान्तहृदयैर्ब्राह्मणैः प्रत्याख्यातेन धनिना श्रावितब्राह्मणवृत्तान्ताः 'गृहीत्वास्त्राण्यथो विप्रान्कपाः सर्वे समाद्रवन्'। ततः 'ब्रह्मसृष्टा हव्यभुजः कपान्हत्वा सनातनाः। नभसीव यथाभ्राणि व्यराजन्त नराधिप। ब्रवीम्यन्यं ब्रूहि वा त्वं ब्राह्मणात्क्षत्रियं वरम्' इति। एवं आदित्यान्समारब्धसत्रदीक्षानुकर्शितानवलोक्य खलिनो दानवा हन्तुकामास्तैरेव देवैर्हन्यमाना ब्रह्मदत्तं सरोऽवगाह्य जीवन्तः पर्वतपरिघादिनानाविधायुधैर्देवान्विक्षोभयामासुः; 'ततस्तैरर्दिता देवाः शरणं वासवं ययुः। स च तैः प्रार्थितः शक्रो वसिष्ठं शरणं ययौ'। ततः खलिबलार्दितानतिदुःखितान्सेन्द्रान्देवानवलोक्य परमकारुणिको वसिष्ठः 'अयत्नेनादहत्सर्वान्खलिनः स्वेन तेजसा। कैला-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


सं प्रस्थितांश्चैव नदीं गङ्गां महातपाः ॥ अनयत्तत्सरो दिव्यं तया भिन्नं च तत्सरः। ब्रवीम्यन्यं ब्रूहि वा त्वं वसिष्ठात्क्षत्रियं वरम्' इति। एवम् 'यथा समुद्रो नृपते पूर्णो मृष्टश्च वारिणा। ब्राह्मणैरभिशप्तः सन्बभूव लवणोदकः ॥ सुवर्णवर्णो निर्धूमः संगतोर्ध्वशिखः कविः। क्रुद्धेनाङ्गिरसा शप्तो गुणैरेतैर्विवर्जितः ॥ महतश्चूर्णितान्पश्य येऽध्यासत महोदधिम्। समो न त्वं द्विजातिभ्यः श्रेयो विद्धि नराधिप ॥ गर्भस्थान्ब्राह्मणान्सम्यङ्नमस्यति किल प्रभुः। दण्डकानां महद्राज्यं ब्राह्मणेन विनाशितम् ॥ तालजङ्घं महाजङ्घमौर्वेणैकेन नाशितम्। त्वया च विपुलं राज्यं बलं धर्मश्रुतं तथा। दत्तात्रेयप्रसादेन प्राप्तं परमदुर्लभम्। अथ वा ब्राह्मणं श्रेष्ठं सर्वभूतानुपालकम् ॥ कर्तारं जीवलोकस्य कस्माज्जीवन्न मुह्यसे। ब्राह्मणान्क्षत्रधर्मेण पालयस्वेन्द्रियाणि च ॥ भृगुभ्यस्ते भयं घोरं तत्तु कालाद्भविष्यति' इत्येवमर्जुनं प्रति वायुना ब्राह्मणमाहात्म्यं बहुधा प्रतिपादितम्। एवमादिपर्वणि 'भृगोः सुदयिता भार्या पुलोमेत्यभिविश्रुता। तस्यां समभवद्गर्भो भृगुवीर्यसमु-


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


द्भवः ॥ अभिषेकाय निष्क्रान्ते भृगौ धर्मभृतां वरे। आश्रमं तस्य रक्षोऽथ पुलोमाभ्यां जगाम ह ॥ इदमन्तरमित्येव हर्तुं चक्रे मनस्तदा। अथाग्निशरणे पश्यञ्ज्वलन्तं जातवेदसम् ॥ तमपृच्छत्ततो रक्षः पावकं ज्वलितं तदा । मत्पूर्वापहृता भार्या भृगुणानृतकारिणा ॥ सेयं यदि तथा मे त्वं सत्य-माख्यातुमर्हसि । तस्य तद्वचनं श्रुत्वा सप्तार्चिर्दुःखितो भृशम् ॥ भीतोऽनृताच्च शापाच्च भृगोरित्यब्रवीच्छनैः । अग्नेरथ वचः श्रुत्वा तद्रक्षः प्रजहार ताम् । ततः स गर्भो निवसन्कुक्षौ भृगुकुलोद्वहः ॥ रोषान्मातुश्च्युतः कुक्षेश्च्यवनस्तेन सोऽभवत् । तं दृष्ट्वा मातुरुदराच्च्युतमादि-त्यवर्चसम् ॥ तद्रक्षो भस्मसाद्भूतं पपात परिमुच्य ताम् । तं ददर्श पिता तत्र च्यवनं तां च भामिनीम् ॥ स पुलोमां ततो भार्यां पप्रच्छ कुपितो भृगुः । केनासि रक्षसे तस्मै कथिता त्वं जिहीर्षते' । पुलोमा उवाच— 'अ-ग्निना भगवंस्तस्मै रक्षसेऽहं निवेदिता । ततो माम-नयद्रक्षः क्रोशन्तीं कुररीमिव ॥ साहं तव सुतस्यास्य तेजसा परिमोक्षिता । भस्मीभूतं च तद्रक्षो मामुत्सृज्य

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


पपात वै'। सौतिरुवाच—'इति श्रुत्वा पुलोमाया भृगुः परममन्युमान्। शशापाग्निमपि क्रुद्धः सर्वभक्षो भविष्यसि' इति। एतेन च्यवनकृतपुलोमाख्यराक्षसनिग्रहः भृगुकृताग्निशापश्चोक्तः। एवमुद्योगपर्वणि धर्मराजं प्रति शल्यवचनम्— देवर्षिगणप्रसादसमासादितदेवराज्योऽपि नहुषः प्राज्यं देवराज्यं स्वभुजबलसमार्जितं मन्वानोऽवलेपेन तपःप्रधानानगस्त्यप्रमुखान्सप्तर्षीनपि स्वविमानधुर्यान्संविधायात्यल्पप्रमाणतया लब्धान्दोलिकादण्डं स्खलितगमनं दक्षिणाशाभूषणमगस्त्यमहर्षिं पुरतोऽवलोक्य मूर्ध्नि पदास्पृशत्। तत्प्रधर्षणजनितकोपः परमर्षिः 'अदुष्टं दूषयसि मां यच्च मूर्ध्न्यस्पृशः पदा। यच्चापि त्वमृषीन्मूढ ब्रह्मकल्पान्दुरासदान्। वाहान्कृत्वा वाहयसि तेन स्वर्गाद्धतप्रभः। ध्वंस पाप परिभ्रष्टः क्षीणपुण्यो महीतलम्। दश वर्षसहस्राणि सर्परूपधरो महान्। एवं भ्रष्टो दुरात्मा स देवराज्यादरिंदम'। अनेनागस्त्यकृतो नहुषनिग्रह उक्तः। मुसलपर्वणि— एवं सारणप्रमुखाः वृष्ण्यन्धका अपि धृतस्त्रीवेषं साम्बं विधाय कल्पानलकल्पकोपान्नारदविश्वामित्रक-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ण्वान्यदृच्छया समागतान्किमियं जनयिष्यतीति पप्रच्छुः। तद्वचनश्रवणमात्रेण प्राज्याज्यसिक्ता दीप्ताग्नय इव तत्कृतविप्रलम्भप्रधर्षणामसहमाना महर्षयः 'वृष्ण्यन्धकविनाशाय मुसलं घोरमायसम्। वासुदेवस्य दायादः साम्बोऽयं जनयिष्यति ॥ येन यूयं सुदुर्वृत्ताः नृशंसा जातमन्यवः। उच्छेत्तारः कुलं कृत्स्नमृते रामजनार्दनौ। समुद्रं यास्यति श्रीमांस्त्यक्त्वा देहं हलायुधः ॥ जरः कृष्णं महात्मानं शयानं भुवि भेत्स्यति' इत्यब्रुवन्। एतेन नारदादिकृतो वृष्ण्यन्धकनिग्रह उक्तः। वनपर्वणि— एवं वृत्रवधजनितामर्षेण त्रिलोकनाशाय त्रिजगन्मूलभूततपस्विजनवधाय समुद्युक्तैर्देवभयेन समुद्रं प्रविष्टै रात्रावागत्याश्रमनिवासिमुनिजनकदनमाचरद्भिः कालेयैः कृतं निःस्वाध्यायवषट्कारं नष्टोत्सवं च जगदवलोक्य तत्कृतोपद्रवपरिहाराय त्रिदशैः समभ्यर्थितो विष्णुः 'समुद्रस्य क्षये बुद्धिर्भवद्भिः संप्रधार्यताम्। अगस्त्येन विना को हि शक्तोऽन्योऽर्णवशोषणे' इत्यवादीत्। ततो देवास्तद्वचनश्रवणसमनन्तरमगस्त्यमहर्षिसमीपमागत्य 'एवं त्वयेच्छाम कृतं हि

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

कार्यं महार्णवं पीयमानं महात्मन् । ततो वधिष्याम सहानुबन्धान्कालेयसंज्ञान्हि सुरद्विषस्तान्' इति प्रार्थयामासुः । सोऽपि महर्षिः 'उवाच सहितान्देवानृषींश्चैव समागतान् । एष लोकहितार्थं वै पिबामि वरुणालयम् । भवद्भिर्यदनुष्ठेयं तच्छीघ्रं संविधीयताम्' इत्यभिधाय 'समुद्रमपिबत्क्रुद्धः सर्वलोकस्य पश्यतः' । ततस्त्रिदशाः संदर्शनपथमवतीर्णान्कालेयान्निषूदयामासुः इति । एतेन अगस्त्यकृतकालेयावकाशदातृसमुद्रनिग्रह उक्तः आनुशासनिके । एवं रौक्मिणेयेन ब्राह्मणपूजायां किं फलं कुतो वा तेषामीश्वरत्वम् इति पृष्टो जगन्नायकः श्रीकृष्णः, मामकोपयित्वा को वा गृहे वासयेदिति वदन्तमकालापेक्षितविविधान्नपानरसम् अतिकोपनं दुराराध्यतरं दुर्वाससं गृहमानीय अपेक्षितपायसाद्यन्नकल्पनेन संतर्प्य तदाज्ञया रुक्मिण्या सह तदुच्छिष्टोपलिप्तसर्वाङ्गोऽभवम्; तदनु 'मुनिः पायसदिग्धाङ्गीं रथे तूर्णमयोजयत् । तमारुह्य रथं चैव निर्ययौ च गृहान्मम । प्रतोदेनातुदद्बालां रुक्मिणीं मम पश्यतः ॥ न च मे

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्तोकमप्यासीद्दुःखमीर्ष्याकृतं तदा'। एवं ब्राह्मणकृतपरिभवमङ्गीकृत्य सह व्रजन्तं मां रथधुर्यभूतां प्रतोदेनासकृत्तुद्यमानामबलां मत्प्रियां रथस्थं तपस्विनं ब्राह्मणं चावलोक्य 'ब्राह्मणा एव जायेरन्नान्यो वर्णः कथंचन। को ह्येनं रथमास्थाप्य जीवेदन्यः पुमानिह। आशीविषविषं तीक्ष्णं ततस्तीक्ष्णतरो द्विजः। ब्रह्माशीविषदिग्धस्य नास्ति कश्चिच्चिकित्सकः' इति पौरजानपदाः परस्परमकथयन्। 'ततः परमसंक्रुद्धो रथादास्कन्द्य स द्विजः। पदातिरपथेनैव प्राधावद्दक्षिणामुखः॥ एवमनल्पकल्पानलकल्पकोपः अकारणादेव रथादवप्लुत्य धावन् प्रणिपातपुरःसरमभ्यर्थितो महर्षिः सर्वलोकोत्कृष्टत्वसकलजनमान्यत्वसर्वशत्रुजनाजेयतादिवरप्रदानपूर्वकं स्वोच्छिष्टानुपलिप्तपादतलस्थमृत्युं मामकथयत्। एवमननुकरणीयचरिता द्विजाः। 'एते हि सोमं राजान ईश्वराः सुखदुःखयोः। लोकलोकेश्वराश्चैव सर्वब्राह्मणपूर्वकाः। भस्म कुर्युर्जगदिदं क्रुद्धाः प्रत्यक्षदर्शिनः। अन्यानपि सृजेयुस्ते लोकाल्लोकेश्वरांस्तथा॥ कथं तेषु न वर्तेरन्सम्यग्जनाः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


सुतेजसः' इति। एतेन दुर्वाससो माहात्म्यपूर्वकं ब्राह्मण-सामान्यमाहात्म्यं कृष्णेन प्रतिपादितम्। वनपर्वणि—हैहयानां कुलकरो राजकुमारो मृगयामटन्कृष्णाजिनोत्तरासङ्गं मुनिपुत्रमविदूरे दृष्ट्वा मृगबुद्ध्या शरेणाविध्यावगतमुनिपुत्रभावः स्वभवनमागम्य हैहयान्स्वकृत्यमकथयत्। तद्वचनश्रवणसंजातखेदकलुषितस्वान्ता हैहयाः 'कस्यायं मुनिकुमारकः' इति इतस्ततो मार्गमाणास्तार्क्ष्याश्रममासाद्य, आसनपाद्याद्यर्घ्यादिभिरप्यभिपूजयितुमुद्युक्तं मुनिमवलोक्य ब्राह्मणहिंसका वयं न त्वया पूजितुमर्हा इत्यवदन्। तदनु स्वतपोमहिम्ना समुज्जीविततनयो महर्षिः क्वासौ युष्माभिर्घातितो मुनिकुमारकः गवेष्यतामित्यादिदेश। तदाज्ञया तं मुनिकुमारकं गवेषयमाणैस्तमदृष्ट्वा सव्रीलैः नासाद्यते मुनिकुमारक इत्यभिहितो मुनिः मदीय एव पुत्रः घातितो युष्माभिः संजीवितश्च मयेत्यवदत्। ततो विस्मयाविष्टहृदयैः केनोपायेन संजीवितोऽयं बालक इत्यभिहितो मुनिः 'सत्यमेवाभिजानीत नानृते कुर्महे मनः। स्वधर्ममनुतिष्ठामः तस्मान्मृत्युभयं न

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


नः । अतिथीनन्नपानेन भृत्यानप्यशनेन च ॥ संभोज्य शेषमश्नीमस्तस्मान्मृत्युभयं न नः । एतेन स्वधर्मनिरतानां ब्राह्मणानां मृत्युभयमपि नास्तीत्युक्तं भवति । आनुशासनिके युधिष्ठिरः— 'के पूज्याः के नमस्कार्याः कथं वर्तेत केषु च । किमाचारः कीदृशेषु पितामह न रिष्यते ॥ भीष्म उवाच— ब्राह्मणानां परिभवः सादयेदपि देवताः । ब्राह्मणांस्तु नमस्कृत्य युधिष्ठिर न रिष्यते ॥ ते पूज्यास्ते नमस्कार्या वर्तेथास्तेषु पुत्रवत् ॥ ते हि लोकानिमान्सर्वांस्तारयन्ति मनीषिणः । ब्राह्मणाः सर्वलोकानां महान्तो धर्मसेतवः ॥ धनत्यागाभिरामाश्च वाक्संयमरताश्च ये । रमणीयाश्च भूतानां निधानं च धृतव्रताः ॥ प्रणेतारश्च लोकानां शास्त्राणां च यशस्विनः । तपो येषां धनं नित्यं वाक्चैव विपुलं बलम् ॥ प्रभवश्चैव धर्माणां धर्मज्ञाः सूक्ष्मदर्शिनः । धर्मकामाः स्थिता धर्मे सुकृतैर्धर्मसेतवः ॥ यान्समाश्रित्य जीवन्ति प्रजाः सर्वाश्चतुर्विधाः । पन्थानः सर्वनेतारो यज्ञवाहाः सनातनाः । पितृपैतामहीं गुर्वीमुद्वहन्ति धुरं सदा ॥ धुरि ये नावसीदन्ति विषमे सद्गवा

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha 

इव । पितृदेवातिथिमुखा हव्यकव्याग्रभोजिनः ॥ भोजनादेव लोकांस्त्रींस्त्रायन्ते महतो भयात् । दीपाः सर्वस्य लोकस्य चक्षुश्चक्षुष्मतामपि ॥ सर्वशिल्पादिनिधयो निपुणाः सूक्ष्मदर्शिनः । गतिज्ञाः सर्वभूतानामध्यात्मगतिचिन्तकाः ॥ आदिमध्यावसानानां ज्ञातारश्छिन्नसंशयाः । परावरविशेषज्ञा गन्तारः परमां गतिम् ॥ विमुक्ता धूतपाप्मानो निर्द्वन्द्वा निष्परिग्रहाः । मानार्हा मानिता नित्यं ज्ञानवद्भिर्महात्मभिः ॥ चन्दने मलपङ्के च भोजनेऽभोजने समाः । समं येषां दुकूलं च तथा क्षौमाजिनानि च ॥ तिष्ठेयुरप्यभुञ्जाना बहूनि दिवसान्यपि । शोषयेयुश्च गात्राणि स्वाध्यायैः संयतेन्द्रियाः ॥ अदैवं दैवतं कुर्युर्दैवतं वाप्यदैवतम् । लोकानन्यान्सृजेयुस्ते लोकपालांश्च कोपिताः ॥ अपेयः सागरो येषामासीच्छापान्महात्मनाम् । येषां कोपाग्निरद्यापि दण्डकेनोपशाम्यति ॥ देवानामपि ये देवाः कारणं कारणस्य च । प्रमाणस्य प्रमाणं च कस्तानभिभवेद्बुधः ॥ येषां वृद्धश्च बालश्च सर्वः संमानमर्हति । तपो विद्याविशेषात्तु मानयन्ति परस्परम् ॥ अविद्वान्ब्राह्मणो

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

देवः पात्रं वै पावनं महत् ॥ विद्वान्भूयस्तरां देवः पूर्णसागरसंनिभः । अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ॥ प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् । श्मशाने ह्यपि तेजस्वी पावको नैव दुष्यति ॥ हविर्यज्ञे च विधिवद्गृह एवाभिशोभते । एवं यद्यप्यनिष्टेषु वर्तते सर्वकामसु ॥ सर्वथा ब्राह्मणो मान्यो दैवतं विद्धि तत्परम्' इति । आनुशासनिके पर्वणि युधिष्ठिरः— "के पूज्याः के नमस्कार्याः कान्नमस्यसि भारत । एतन्मे सर्वमाचक्ष्व येभ्यः स्पृहयसे नृप ॥ उत्तमापद्गतस्यापि यत्र ते वर्तते मनः । मनुष्यलोके सर्वस्मिन्यदमुत्रेह चाप्युत ॥ भीष्म उवाच— स्पृहयामि द्विजातिभ्यो येषां ब्रह्म परं धनम् । येषां स्वप्रत्ययः स्वर्गस्तपः स्वाध्यायसाधनम् । येषां बालाश्च वृद्धाश्च पितृपैतामहीं धुरम् । उद्वहन्ति न सीदन्ति तेभ्यो वै स्पृहयाम्यहम् । विद्यास्वभिविनीतानां दान्तानां मृदुभाषिणाम् ॥ श्रुतवृत्तोपपन्नानां सर्ववेदविदां सताम् । संसत्सु वदतां तात हंसानामिव संघशः ॥ मङ्गल्यरूपा रुचिरा दिव्या जीमूतनिस्वनाः । सम्यगुच्चारिता वाचः श्रूय-

CC-0. Prof. Satya Vrat Shastri Collection.

न्ते हि युधिष्ठिर ॥ शुश्रूषमाणे नृपतौ प्रेत्य चेह सुखावहाः । ये चापि तेषां श्रोतारः सदा सदसि संमताः । विज्ञानगुणसंपन्नास्तेभ्यश्च स्पृहयाम्यहम् ॥ सुसंस्कृतानि प्रयताः शुचीनि गुणवन्ति च । ददत्यन्नानि तृप्त्यर्थं ब्राह्मणेभ्यो युधिष्ठिर ॥ ये चापि सततं राजंस्तेभ्यश्च स्पृहयाम्यहम् । शक्यं ह्येवाहवे योद्धुं न दातुमनसूयितुम् ॥ शूरा वीराश्च शतशः सन्ति लोके युधिष्ठिर । तेषां संख्यायमानानां दानशूरो विशिष्यते ॥ धन्यः स्यां यद्यहं भूयः सौम्य ब्राह्मणकोऽपि वा । कुले जातो धर्मगतिस्तपोविद्यापरायणः ॥ न मे त्वत्तः प्रियतरो लोकेऽस्मिन्पाण्डुनन्दन । त्वत्तश्चापि प्रियतरा ब्राह्मणा भरतर्षभ ॥ यथा मम प्रियतमास्त्वत्तो विप्राः कुरूत्तम । तेन सत्येन गच्छेयं लोकान्यत्र स शंतनुः ॥ न मे पिता प्रियतरो ब्राह्मणेभ्यस्तथा भवेत् । न मे पितुः पिता वापि ये चान्येऽपि सुहृज्जनाः ॥ न हि मे वृजिनं किंचिद्विद्यते ब्राह्मणेष्विह । अणु वा यदि वा स्थूलं विद्यते साधु कर्मसु ॥ कर्मणा मनसा वापि वाचा वापि परंतप । यन्मे कृतं ब्राह्मणेभ्य-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्तेनाद्य न तपाम्यहम् ॥ ब्रह्मण्य इति मामाहुस्तया वाचास्मि तोषितः । एतदेव पवित्रेभ्यः सर्वेभ्यः परमं स्मृतम् ॥ पश्यामि लोकानमलाञ्शुचीन्ब्राह्मणयायिनः । तेषु मे तात गन्तव्यमह्नाय च चिराय च ॥ यथा भर्त्राश्रयो धर्मः स्त्रीणां लोके युधिष्ठिर । स देवः सा गतिर्नान्या क्षत्रियस्य तथा द्विजाः ॥ क्षत्रियः शतवर्षी च दशवर्षी द्विजोत्तमः । पितापुत्रौ च विज्ञेयौ तयोर्हि ब्राह्मणो गुरुः ॥ नारी तु पत्यभावे वै देवरं कुरुते पतिम् । पृथिवी ब्राह्मणालाभे क्षत्रियं कुरुते पतिम् । पुत्रवच्च ततो रक्ष्या उपास्या गुरुवच्च ते । अग्निवच्चोपचर्या वै ब्राह्मणाः कुरुसत्तम ॥ ऋजून्सतः सत्यशीलान्सर्वभूतहिते रतान् । आशीविषानिव क्रुद्धान्द्विजान्परिचरेत्सदा ॥ तेजसस्तपसश्चैव नित्यं बिभ्ये युधिष्ठिर । उभे चैते परित्याज्ये तेजश्चैव तपस्तथा ॥ व्यवसायस्तयोः शीघ्रमुभयोरेव विद्यते । हन्युः क्रुद्धा महाराज ब्राह्मणा ये तपस्विनः ॥ भूयः स्यादुभयं दत्तं ब्राह्मणाद्यदकोपनात् । कुर्यादुभयतः शेषं दत्तशेषं न शेषयेत् ॥ दण्डपाणिर्यथा गोषु पालो नित्यं हि रक्षयेत् ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ब्राह्मणान्ब्रह्म च तथा क्षत्रियः परिपालयेत् ।। पितेव पुत्रान्रक्षेथा ब्राह्मणान्धर्मचेतसः । गृहे चैषामवेक्षेथाः किंस्विदस्तीति जीवनम्' इति दानधर्मे भीष्मनिश्चयः ।।

तदेतत्प्रसमीक्ष्याहं प्रसन्नेन्द्रियमानसः ।
तपो महत्समास्थास्ये यद्वै ब्रह्मत्वकारकम् ॥

इति षट्पञ्चाशः सर्गः । ननु कामक्रोधादिकलुषितान्तःकरणस्य ब्रह्मस्वापहरणप्रवृत्तस्य गोब्राह्मणद्रोहिणः विश्वामित्रस्य क्षत्रियस्य चित्तशुद्धिः तत्पूर्वकं ब्रह्मत्वकारकतपश्चरणे प्रवृत्तिः तया च वक्ष्यमाणब्राह्मण्यावाप्तिश्चानुपपन्ना, ब्राह्मक्षेत्रे उत्पन्नेन मतङ्गेन चित्तशुद्धिपूर्वकं केवलतपश्चर्यायां बहुशः कृतायामपि ब्राह्मण्यानाप्तेः । तथा हि भारते आनुशासनिके मतङ्गो नाम तपस्वितनयः स्वपितृसमारब्धयज्ञोपकरणसंपादनाय रथमारुह्य गच्छन्द्रुततरगमनविधुरं गर्दभीतनयं प्रतोदतोदनेन संजातव्रणमकरोत् । सा च तद्व्रणसंजातदुःखजातमसहमानं निजतनयमवलोक्य 'उवाच मा शुचः पुत्र चण्डालस्त्वधितिष्ठति । ब्राह्मणे दारुणं नास्ति मैत्रो ब्राह्मण

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

उच्यते । स्वयोनिं मानयत्येष भावो भावं नियच्छति' इति । तद्वाक्यश्रवणसंजातखेदाविष्टहृदयेन तूर्णं रथादवतीर्णेन मतङ्गेन 'ब्रूहि रासभि कल्याणि माता मे येन दूषिता' इति पृष्टा रासभी 'ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन ह। जातस्त्वमसि चण्डालो ब्राह्मण्यं तेन तेऽनशत्' इत्येवमवादीत् । तद्वचनश्रवणसमनन्तरमेव संजातसंभ्रमं दुरवापब्राह्मण्यसंपादने कृतनिश्चयमुग्रे तपसि वर्तमानं मघवानेवमवादीत्— 'मतङ्ग दुर्लभमिदं विप्रत्वं प्रार्थ्यते त्वया। यस्मात्तु संवसन्योनीर्जायमानः पुनः पुनः ।। पर्यये तात कस्मिंश्चिद्ब्राह्मण्यमिह विन्दति । तिर्यग्योनिगतः सर्वो मानुष्यं यदि गच्छति ।। स जायते पुल्कसो वा चण्डालो वाप्यसंशयः । स तस्यामेव तु चिरं मतङ्ग परिवर्तते ।। ततो दशशते काले लभते शूद्रतामपि । शूद्रयोनावपि ततो बहुशः परिवर्तते ।। ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि । वैश्यतायां चिरं कालं तत्रैव परिवर्तते ।। ततः षष्टिगुणे काले राजन्यो नाम जायते । राजन्यत्वे चिरं कालं तत्रैव परिवर्तते । ततः षष्टिगुणे काले

CC-0. Prof. Satya Vrat Shastri Collection.

लभते ब्रह्मबन्धुताम् ॥ ब्रह्मबन्धुश्चिरं कालं ततस्तु परिवर्तते । ततस्तु द्विशते काले लभते काण्डपृष्ठताम् ॥ काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्तते । ततस्तु त्रिशते काले लभते जपतामपि ॥ तं च प्राप्य चिरं कालं तत्रैव परिवर्तते । ततश्चतुःशते काले श्रोत्रियो नाम जायते ॥ श्रोत्रियत्वे चिरं कालं तत्रैव परिवर्तते । तदैनं शोकहर्षौ तु कामद्वेषौ च पुत्रक ॥ अतिमानातिवादौ च प्रविशेते द्विजाधमम् । तांश्चेज्जयति शत्रून्स तदा प्राप्नोति सद्गतिम् ॥ अथ ते वैजयन्त्येनं तालाग्रादिव पात्यते । मतङ्ग संप्रधार्यैवं यदहं त्वामचूचुदम ॥ वृणीष्व काममन्यं त्वं ब्राह्मण्यं हि सुदुर्लभम् । एवमुक्तो मतङ्गस्तु भृशं शोकपरायणः ॥ अध्यतिष्ठद्गयां गत्वा सोऽङ्गुष्ठेन शतं समाः । सुदुर्वहं वहन्योगं कृशो धमनिसंततः ॥ त्वगस्थिभूतो धर्मात्मा स पपातेति नः श्रुतम् । तं पतन्तमभिद्रुत्य प्रतिजग्राह वासवः ॥ वराणामीश्वरो दाता सर्वभूतहिते रतः । शक्रः— मतङ्ग ब्राह्मणत्वं ते विरुद्धमिह दृश्यते ॥ ब्राह्मण्यं दुर्लभतरं संवृतं

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


परिपन्थिभिः । ब्राह्मणः सर्वभूतानां मतङ्ग पर उच्यते ॥ ब्राह्मणः कुरुते यद्धि यथा यद्यच्च वाञ्छति । बह्वीश्च संवसन्योनीर्जायमानः पुनः पुनः । पर्याये तात कस्मिंश्चिद्ब्राह्मण्यमिह विन्दति । तदुत्सृज्येह दुष्प्रापं ब्राह्मण्यमकृतात्मभिः ॥ अन्यं वरं वृणीष्व त्वं दुर्लभोऽयं हि ते वरः । चोदितस्तु महेन्द्रेण मतङ्गः प्राब्रवीदिदम् ॥ यथाकामविहारी स्यां कामरूपी विहंगमः । ब्रह्मक्षत्राविरोधेन पूजां च प्राप्नुयामहम् ॥ यथा ममाक्षया कीर्त्तिर्भवेच्चापि पुरंदर । कर्तुमर्हसि तद्देव शिरसा त्वां प्रसादये ॥ शक्रः— छन्दोदेव इति ख्यातः स्त्रीणां पूज्यो भविष्यसि । कीर्त्तिश्च तेऽतुला वत्स त्रिषु लोकेषु यास्यति ॥ एवं तस्मै वरं दत्त्वा वासवोऽन्तरधीयत । प्राणांस्त्यक्त्वा मतङ्गोऽपि संप्राप्तः स्थानमुत्तमम् ॥ एवमेतत्परं स्थानं ब्राह्मण्यं नाम भारत । तच्च दुष्प्रापमिह वै महेन्द्रवचनं यथा'। एवं ब्राह्मण्यस्य दुरवापतया तदुद्देशेन नातिक्षत्रियस्य वसिष्ठद्रोहिणो विश्वामित्रस्य कथं चित्तशुद्ध्यादिना वक्ष्यमाणब्राह्मण्यप्राप्तिरिति चेन्न; ब्राह्मणप्रसादादेव ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तथा हि आनुशासनिके पर्वणि— कुशिककुले आगामिनं वर्णसंकरदोषं विनिश्चित्य तन्निरसनाय निरपराधिनमपि कुशिकमपराधेन संयोज्य तदीयं कुलं निःशेषयितुकामश्च्यवनमुनिः समासादितकुशिकभवनः अभ्युत्थानासनार्घ्यपाद्यादिभिरभ्यर्चितः 'यदि राज्यं यदि धनं यदि गाः संशितव्रत। यज्ञदानानि च तथा ब्रूहि सर्वं ददामि ते' इति राज्ञानुनाथितः 'न राज्यं कामये राजन्न धनं न च योषितः। परिचर्योऽस्मि यत्ताभ्यां युवाभ्यामविशङ्कया' इति समाज्ञप्तवान्। स राजापि तद्वचनश्रवणसंजातसंतोषः सभार्यः सादरं परिचरन्निद्रामुद्रितलोचनं तमृषिमवलोक्य सुखसंस्पर्शसोपधानपर्यङ्कास्तरणाद्युपेतशयनं गृहं प्रवेश्य 'इयं शय्या भगवतो यथाकाममिहोष्यताम्' इति संप्रार्थितो भार्गवः अप्रबोधनेन पादसंवाहनपरिशीलनाभ्यां युवाभ्यामाप्रबोधं भवितव्यमित्यादिश्यैकेनैव पार्श्वेनैकविंशतिं दिनानि सुखं सुप्तः अकस्मादुत्थायान्तर्हितोऽभूत्। ततस्तदन्तर्धानजनितवेदनाकलुषितस्वान्तस्तेन विना सकलमपि जीवलोकं निरालोकं

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मन्वानः कुशिकः स्वभवनमागत्य तथैव शयनगृहे सुखसुप्तं तमृषिमवलोक्यामन्दानन्दहृदयोऽभूत् । सोऽपि महर्षिः पुनरपि तावन्तमनेहसं पार्श्वान्तरेण तथैव सुखसुप्तस्तेन च राज्ञा सभार्येण कृतपादसंवाहनः सहसैवोत्थाय कुशिकेन कृततैलाभ्यङ्गस्नानस्तदानीतं भक्ष्यभोज्यलेह्यचोष्याभ्यवहारजातमासनं शयनीयं च वस्त्रेणोपवेष्ट्यादीपयामास। तदवलोक्य, 'न च तौ चक्रतुः क्रोधं दंपती सुमहामती। तयोः संप्रेक्षतोरेव पुनरन्तर्हितोऽभवत्' । अथ तेन महर्षिणा पुरसंदर्शनाय सज्जीकृतसांग्रामिकरथेन सभार्यो मां वहस्वेत्याज्ञप्तो नरपतिः तत्कृतप्रतोदतोदनाजनितवेदनामविगणय्य मुनिकृतसर्वस्वदानमप्यनाकलय्य निर्विकारं सादरः परिचरन्ननुग्रहबुद्ध्या सुखसंस्पर्शपरमर्षिपाणितलपरिमर्शनेन निरस्तसमस्तश्रमः 'गम्यतां पुरं विश्रान्तः श्वो मां द्रष्टासि' इति परमर्षिणा समादिष्टः स्वपुरमाजगाम। भार्गवोऽपि कंचित्कालं रमणीये गङ्गातीरे नियममाचरन्स्वसंदर्शनजनितकौतूहलेन स्वसमीपमागताय सभार्याय कुशिकनृपतये चम्पकाशोकपुन्नागवकुलादिनानाविधवृक्ष-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


वीरुत्परिवृतं मणिस्तम्भोपेतकाञ्चनमयप्रासादमध्यमध्यासीनं समनन्तरमेव विविक्ते कौश्यां बृस्यां समासीनमात्मानं दर्शयामास। स च राजा विस्मयोत्फुल्लहृदयः 'अहो प्रभावो ब्रह्मर्षेश्च्यवनस्य महात्मनः। इच्छयैष तपोवीर्यादन्याँल्लोकान्सृजेदपि॥ ब्राह्मणा एव जायेरन्पुण्यवाग्बुद्धिकर्मिणः। ब्राह्मण्यं दुर्लभं लोके राज्यं हि सुलभं नरैः' इति मनसि चिन्तयन्नेव सभार्यस्तं प्रणम्य तेन च प्रसन्नेन परमर्षिणा वरैश्छन्द्यमानः 'एष एव वरो मुख्यः प्राप्तो मे भृगुनन्दन। यत्प्रीतोऽस्मि मया ब्रह्मन्कुलं त्रातं च मेऽनघ॥ अग्निमध्यगतेनैव भगवन्संनिधौ मया। वर्तितं भृगुशार्दूल यन्न दग्धोऽस्मि तद्ब्रहु' इत्युक्तवान्। पुनरपि वरैश्छन्द्यमानेन राज्ञानुनाथितब्राह्मण्यो भार्गवः 'एवमेतद्यथात्थ त्वं ब्राह्मण्यं तात दुर्लभम्। ब्राह्मण्ये सति चर्षित्वमृषित्वे च तपस्विता॥ भविष्यत्येष ते कामः कुशिकात्कौशिको द्विजः। तृतीयं पुरुषं तुभ्यं ब्राह्मणत्वं गमिष्यति॥ वंशस्ते पार्थिवश्रेष्ठ भृगूणामेव तेजसा। पौत्रस्ते भविता विप्र तपस्वी पाव-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


कद्युतिः’ इत्यभिहितवान् । वनपर्वणि तीर्थयात्रायाम्, ‘कान्यकुब्जे महानासीत्पार्थिवः सुमहाबलः । गाधीति विश्रुतो लोके वनवासं जगाम ह ॥ वने तु तस्य वसतः कन्या जज्ञेऽप्सरःसमा । ऋचीको भार्गवस्तां च वरयामास भारत ॥ गाधिना स्वकुलधर्मेणैकतः श्यामकर्णानां हयानां शुल्कं याचित ऋचीको वरुणसंप्रार्थनालब्धाश्वः कन्यां वरयामास । ‘गङ्गायां कान्यकुब्जे वै ददौ सत्यवतीं तदा ॥ धर्मेण लब्धां तां भार्यामृचीको द्विजसत्तमः । यथाकामं यथाजोषं तया रेमे सुमध्यया । तं विवाहे कृते राजन्सभार्यमवलोकतः । आजगाम भृगुः श्रेष्ठं पुत्रं दृष्ट्वा ननन्द ह ॥ ततः स्नुषां स भगवान्प्रहृष्टो भृगुरब्रवीत् । वरं वृणीष्व सुभगे दाता ह्यस्मि तवेप्सितम् ॥ सा वै प्रसादयामास तं गुरुं पुत्रकारणात् । आत्मनश्चैव मातुश्च प्रसादं च चकार सः ॥ भृगुः— ‘ऋतौ त्वं चैव माता च स्नाते पुंसवनाय वै । आलिङ्गेथां पृथग्वृक्षौ साश्वत्थं त्वमुदुम्बरम ॥ चरुद्वयमिदं भद्रे जनन्याश्च तवैव च । विश्वमावर्तयित्वा तु मया

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


यत्नेन साधितम् ॥ प्राशितव्यं प्रयत्नेन चेत्युक्त्वादर्शनं गतः । आलिङ्गने चरौ चैव चक्रतुस्ते विपर्ययम् ॥ ततः पुनः स भगवान्काले बहुतिथे गते । दिव्यज्ञानाद्विदित्वा तु भगवानागतः पुनः ॥ अथोवाच महातेजा भृगुः सत्यवतीं स्नुषाम् । उपयुक्तश्चरुर्भद्रे वृक्षे चालिङ्गनं कृतम् ॥ विपरीतेन ते सुभ्रु मात्रा चैवासि वञ्चिता । ब्राह्मणः क्षत्रवृत्तिर्वै तव पुत्रो भविष्यति ॥ क्षत्रियो ब्राह्मणाचारो मातुस्तव सुतो महान् । भविष्यति महावीर्यः साधूनां मार्गमास्थितः ' इति । ननु—

ब्रह्मर्षे स्वागतं तेऽस्तु तपसा स्म सुतोषिताः ।
ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक ॥

इति चतुर्मुखमुखोदीरितवचनपर्यालोचनया तपसैव ब्राह्मण्यावाप्तिदर्शनात् केवलतपसा ब्राह्मण्यप्राप्तिर्नास्तीति कथमुक्तमिति चेन्न । तथा सति 'तृतीयं पुरुषं तुभ्यं ब्राह्मणत्वं गमिष्यति' इति च्यवनकृतकुशिकवरप्रदानस्य भृग्वाज्ञप्तचरुभक्षणवृक्षालिङ्गनव्यत्यासस्य ब्रह्मकृतवरप्रदा-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


नवसिष्ठवचनयोरपि वैयर्थ्यापत्तेः 'विश्वामित्रं त्वजनयद्गाधेर्भार्या यशस्विनी। ऋषेः प्रसादाद्राजेन्द्र ब्रह्मर्षिं ब्रह्मवादिनः। ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः' इत्यानुशासनिके पर्वणि ऋचीकवचनादेव ब्राह्मण्यावाप्तिप्रतिपादनविरोधाच्च, मतङ्गेन केवलतपश्चर्यायां कृतायामपि ब्राह्मणानुग्रहाभावात् ब्राह्मण्यानवाप्तेश्च, तपश्चर्याभावेऽपि ब्राह्मणोत्तमभृगुवचनमात्रेणैव जात्या क्षत्रियस्य वीतहव्यस्य ब्राह्मण्यावाप्तिदर्शनाच्च। तथा चानुशासनिके—वीतहव्यपराभूतो दिवोदासः भरद्वाजमुन्यनुसंप्राप्तस्तदनुग्रहावाप्तप्रतर्दनाख्यजैत्रतनयस्तेन वीतहव्यं पराभाव्य भृग्वाश्रमशरणमकरोत्। तत्रापि वीतहव्यनिवासमसहमानः प्रतर्दनः भृगुनिकटमागम्य अस्मत्कुलोत्सादको वीतहव्यो विसर्ज्यतामिति प्रार्थितवान्। महर्षिरपि शरणागतविचक्षणः 'नेहास्ति क्षत्रियः कश्चित् सर्वे हीमे द्विजातयः' इत्यभिहितवान्। महर्षिणा भृगुणा परित्याजितक्षत्रभावं वीतहव्यमवगम्य प्रतिनिवृत्ते प्रतर्दने वीतहव्योऽपि करुणोदीरितमहर्षिवचनसमनन्तरमेव दुरवापं ब्रा-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ह्मण्यमवापेत्युक्तम् । तस्मात्केवलतपसा ब्राह्मण्यं दुर्लभतरम् । न चैवम् 'ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक' इति पूर्वोक्तवचनविरोधः, तस्य वचनस्य ब्रह्मस्वापहरणमहाब्राह्मणवसिष्ठद्रोहादिजनितप्रत्यवायपरिहारपूर्वकं देवताप्रसादं संपाद्य तत्प्रार्थितब्राह्मणवचनसंपादनेनैव ब्राह्मण्यावाप्तिरित्येवं तपसः परम्परासाधनत्वप्रतिपादकत्वाच्च विरोधः कर्मणां चित्तशुद्धिद्वारा आत्मज्ञानसंपादनेनैव मोक्षोपयोगित्ववत् । न चैतत्सर्वं तदा शोभते, यदि कर्मणां चित्तशुद्धिद्वारा हेतुत्वं स्यात् । तदेवासिद्धम्, साक्षादेव हेतुत्वसंभवात् । तथा हि श्रुतिः– 'अपाम सोमममृता अभूम' 'तदाहुः संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयन्तीति न तथा विद्यात् यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान् एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति प्रियां वाचमभिवदन्त्योऽर्पयन्त्यः एष वः पुण्यः सुकृतो ब्रह्मलोकः' इति । 'ततो मया नचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्' 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' 'उद्यन्त-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मस्तँ यन्तमादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद' 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः। वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः। तद्धि कुर्वन्यथाशक्ति प्राप्नोति परमां गतिम् ॥ योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः। स ब्रह्म परमाप्नोति वायुभूतः खमाप्लुतः ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः। यथोक्तचारिणः सर्वे गच्छन्ति परमां गतिम् ॥ एको वाप्याश्रमानेतान्योऽनुतिष्ठेद्यथाविधि। अकामद्वेषसंयुक्तः स परत्र महीयते ॥ चतुष्पदीह निश्रेणिर्ब्रह्मण्येषा प्रतिष्ठिता। एतामारुह्य निश्रेणिं ब्रह्मलोके महीयते ॥ संध्यामुपासते ये तु सततं संशितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्'। 'अग्निहोत्रादिति तु तत्कार्यायैव तद्दर्शनात्' इति श्रुतिस्मृतिसूत्रैः कर्मणां मोक्षहेतुत्वावगमात्। न च, 'ब्रह्मविदाप्नोति परम्' 'तरति शोकमात्मवित्' 'ब्रह्म वेद ब्रह्मैव भवति' 'तमेव विदित्वातिमृत्यु-

CC-0. Prof. Satya Vrat Shastri Collection.

मेति' 'तमेवं विद्वानमृत इह भवति' 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्' 'स यो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवति' 'तदिदमप्येतर्हि य एवं वेद अहं ब्रह्मास्मीति स इदं सर्वं भवति' 'आचार्यवान्पुरुषो वेद' 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये इति' 'इहैव सन्तोऽथ विद्मस्तद्वयम्' 'न चेदवेदीर्महती विनष्टिः य एतद्विदुरमृतास्ते भवन्ति' 'ब्रह्मसंस्थोऽमृतत्वमेति'। 'स हि सर्वेषु भूतेषु जङ्गमेषु ध्रुवेषु च। वसत्येको महानात्मा येन सर्वमिदं ततम्॥ सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि। यदा पश्यति भूतात्मा ब्रह्म संपद्यते तदा॥ यावानात्मनि वेदात्मा तावानात्मा परात्मनि। य एवं सततं वेद सोऽमृतत्वाय कल्पते' 'पुरुषार्थोऽतः शब्दादिति बादरायणः' इति श्रुतिस्मृतिसूत्राणां ज्ञानस्य मोक्षहेतुत्वप्रतिपादकानां का गतिरिति वाच्यम्। तेषां वचनानां मोक्षहेतुकर्मापेक्षितकर्त्रात्मज्ञानपरत्वात्। तथा हि, 'शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः' इति सूत्रेण कर्मशेषभूते कर्तृद्वारा आत्मज्ञानकर्मोपाययो-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

गियागसाधनीभूतव्रीहिद्वारा प्रोक्षणादिवत् ज्ञानफलश्रवणमपि अपापश्लोकश्रवणवदर्थवाद इति प्रतिपाद्य 'आचारदर्शनात्' इति सूत्रेण 'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेज इति यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' इत्येवमादिभिर्ब्रह्मविदामपि कर्मसंबन्धावगमात्, 'उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच' इति ब्रह्मविदोऽप्युद्दालकस्य पुत्रानुशासनदर्शनात्, ज्ञानादेव फलसिद्धौ 'अत्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायेन दुःखात्मके कर्मणि प्रवृत्तिर्न स्यात्, अतो न स्वतन्त्रा विद्येति प्रतिपाद्य, तच्छ्रुतेः 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति विद्यायाः कर्मशेषत्वश्रवणादिति प्रतिपाद्य 'समन्वारम्भणात्' 'तं विद्याकर्मिणी समन्वारभेते' इति विद्यायाः कर्मफलारम्भे उपयोगदर्शनात इति प्रतिपाद्य, 'तद्वतो विधानात्' आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि प्रतिष्ठाप्य अहिंसन्सर्वभूतान्यन्यत्र

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते 'न च पुनरावर्तते न च पुनरावर्तते' इति श्रुत्या समस्तवेदार्थज्ञानवतः कर्मण्यधिकारदर्शनात्, 'नियमाच्च' 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' इति। 'एतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वा ह्येतस्मान्मुच्यते मृत्युना वा' इत्येवंजातीयकात् आमरणमग्निहोत्रकर्मानुष्ठाननियमनादपि, कर्मशेषत्वमेव विद्याया इति चेन्न। 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' 'यः सर्वज्ञः सर्ववित्' 'यस्य ज्ञानमयं तपः' 'भीषास्माद्वातः पवते' 'महद्भयं वज्रमुद्यतम्' 'एतस्य वा अक्षरस्य प्रशासने गार्गि' 'तदैक्षत बहु स्यां प्रजायेय' 'तत्तेजोऽसृजत' इत्यादिश्रुतिभिः कर्तृत्वभोक्तृत्वशारीरत्वादिविरुद्धाकर्तृत्वाभोक्तृत्वापहतपाप्मत्वादिविशिष्टस्याधिकस्योपदेशात् तद्विज्ञानस्य तद्विरुद्धस्य कर्मशेषत्वासंभवात्। 'तुल्यं तु दर्शनम्' यदुक्तम् आचारदर्शनात्कर्मशेषो विद्या इति अत्रोच्यते— तुल्यमाचारदर्शनमकर्मशेषत्वेऽपि विद्यायाः, तथा हि— 'एतद्ध स्म वै

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे एतावदरे खल्वमृतत्वम् इति चोक्त्वा याज्ञवल्क्यः प्रवव्राज’ इत्यादिश्रुतिभिः याज्ञवल्क्यादीनामकर्मनिष्ठत्वप्रतिपादनात् । ‘यक्ष्यमाणो वै भगवन्तोऽहमस्मि’ इत्येतल्लिङ्गदर्शनस्य वैश्वानरविद्याविषयत्वात्प्रकरणाभवाच्च । यदुक्तम् ‘यदेव विद्यया करोति’ इति श्रुतिबलाद्विद्यायाः कर्माङ्गत्वमिति, तन्न संभवति । उद्गीथविद्यायाः प्रकृतित्वेन तस्याश्च श्रुतेः प्रकृतोद्गीथविद्यासंबन्धप्रतिपादकत्वेन सर्वविद्याविषयत्वात् । यदुक्तम् ‘तं विद्याकर्मणी समन्वारभेते’ इति, तत्रोच्यते—‘विभागः शतवत्’ ‘विद्यान्यं समारभते’ ‘कर्मान्यं समारभते’ इति विभागेनोपपत्तेः । यदुक्तम् ‘तद्वतोविधानात्’ इति तत्रोच्यते— अध्ययनमात्रवतः ‘आचार्यकुलाद्वेदमधीत्य’ इत्यस्य कर्मोपयुक्तज्ञानपरत्वेन औपनिषदात्मज्ञानपरत्वाभावात्; यदुक्तं यावज्जीवं विदुषः कर्मनियमः इति तदपि न, अविशेषात् ‘कुर्वन्नेवेह कर्माणि’ इत्यस्याः श्रुतेः अविद्वद्विषयत्वेनोपपत्तौ विद्वद्विषयत्वाभावात् । ‘स्तुतये-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ऽनुमतिर्वा' भवतु वा विद्वद्विषयं प्रकरणात्, तथापि विद्यास्तुत्यर्थत्वोपपत्तेः । तस्माद्विद्यायाः कर्मशेषत्वं नोपपद्यते इति स्वातन्त्र्येणैव हेतुत्वम् । तथा च पारमर्षं सूत्रम् 'पुरुषार्थोऽतः शब्दादिति बादरायणः' इति । नन्वेवमुभयोरपि समुच्चित्यैव हेतुत्वमस्तु । तथा हि 'एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यम्, तस्मान्न प्रमाद्येत्' 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्' 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' 'उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः । तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम् ।। तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामते' 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति श्रुतिस्मृतिसूत्रैः ज्ञानकर्मणोरुभयोरपि मोक्षहेतुत्वावगमात् इति चेन्न । ज्ञानकर्मणोः समुच्चितस्य मोक्षं प्रति साधनत्वं न संभवति, परस्परविरोधात् । कर्मणां हेतुत्वस्य श्रुतिनिषिद्धत्वाच्च, भिन्नमार्गत्वाच्च भिन्नफलत्वाच्च । तथा हि— 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता । अविद्यायामन्तरे

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनेव नीयमाना यथान्धाः ॥ न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥ प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ॥ एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति । अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः । यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ॥ नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति । परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ॥ अमृतस्य तु नाशास्ति वित्तेन' इति । वित्तसाध्येन कर्मणा इत्यर्थः । 'अथ त्रयो वा व लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा, कर्मणा पितृलोकः' इति पितृलोकपर्यवसानाच्च । 'अथ य आत्मा स सेतुर्विधृति-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


रेषां लोकानामसंभेदाय नैनं सेतुमहोरात्रे तरतः । न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः' इति ब्रह्मलोकप्राप्तेः पूर्वं कर्मणां विनाशप्रतिपादनात् । 'स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यते अशीर्यो न हि शीर्यते असङ्गो न हि सज्जते अशितो न व्यथते न रिष्यति एतमु है वै तेन तरतः इत्यतः पापमकरवम् इत्यतः कल्याणमकरवम्' इति 'उभौ ह्येवैष एते तरति नैनं कृताकृते तपतः तदेतदृचाभ्युक्तम्— एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् । तस्यैवास्मात्पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेनेति । तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तपति सर्वं पाप्मानं तपति नैनं पाप्मा तरति सर्वं पाप्मानं तरति विपापो विरजो विचिकित्सो ब्राह्मणो भवति, एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः । तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम् ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तद्यथा रथेन धावन् रथचक्रे पर्यवेक्षेत । एवमहोरात्रे पर्यवेक्षते । एवं सुकृतदुष्कृते सर्वाणि च द्वन्द्वानि । स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान्ब्रह्मैवाभिप्रैति । तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति । मार्गभेदविषये छान्दोग्ये— 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति । अर्चिषोऽहरन्ह आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति एष देवयानः पन्थाः' इति । तथा कौषीतकिब्राह्मणे— 'एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति, स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं ह तस्य वा एतस्य ब्रह्मलोकस्यारोह्रदो मुहूर्तायेष्टिहा विरजा नदील्यो वृक्षः सालज्यं संस्थानमपराजितमायतनमिन्द्रप्रजापती द्वारगोपौ विभुप्रमितं विचक्षणाः संध्यमितौजाः पर्यङ्कः प्रिया च मानसी प्रतिरूपा च चाक्षुषी पुष्पाण्या-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha 

दायावयतौ वै च जगत्यम्बाश्चाम्बायवाश्चाप्सरसोऽम्बया नद्यस्तमित्थंविदागच्छति तं ब्रह्माहाभिधावत मम यशसा विरजां वायं नदीं प्रापन्न वायं जिगीष्यतीति तं पञ्चशतान्यप्सरसां प्रतिधावन्ति शतं मालाहस्ताः शतमाञ्जनहस्ताः शतं चूर्णहस्ताः शतं वासोहस्ताः शतं कणाहस्तास्तं ब्रह्मालंकारेणालंकुर्वन्ति स ब्रह्मालंकारेणालंकृतो ब्रह्म विद्वान्ब्रह्मैवाभिप्रैति स आगच्छत्यारं ह्रदं तं मनसात्येति तमित्वा संप्रतिविदो मज्जन्ति स आगच्छति मुहूर्तान्येष्टिहांस्तेऽस्मादपद्रवन्ति स आगच्छाति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतं तद्यथा रथेन धावयन्रथचक्रे पर्यवेक्षेत एवमहोरात्रे पर्यवेक्षेत एवं सुकृतदुष्कृते सर्वाणि च द्वन्द्वानि स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान्ब्रह्मैवाभिप्रैति स आगच्छतील्यं वृक्षं तं ब्रह्मगन्धः प्रविशति स आगच्छाति सालज्यं संस्थानं तं ब्रह्मरसः प्रविशति स आगच्छत्यपराजितमायतनं तं ब्रह्मतेजः प्रविशति स आगच्छतीन्द्रप्रजापती द्वारगोपौ ताव-


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


स्मादपद्रवतः स आगच्छति विभुप्रमितं तं ब्रह्मयशः प्रविशति स आगच्छति विचक्षणामासन्दीं बृहद्रथन्तरे सामनी पूर्वौ पादौ श्यैतनौधसे चापरौ पादौ वैरूपवैराजे अनूच्ये शाक्वररैवते तिरश्ची सा प्रज्ञा प्रज्ञया हि विपश्यति स आगच्छत्यामितौजसं पर्यङ्कं स प्राणस्तस्य भूतं च भविष्यच्च पूर्वौ पादौ श्रीश्चेराचापरौ बृहद्रथन्तरे अनूच्ये भद्रयज्ञायज्ञीये शीर्षण्यमृचश्च सामानि च प्राचीनातानं यजूंषि तिरश्चीनानि सोमांशव उपस्तरणमुद्गीथ उपश्रीः श्रीरुपबर्हणं तस्मिन्ब्रह्मास्ते तमित्थंवित्पादेनैवाग्र आरोहति तं ब्रह्माह कोऽसीति तं प्रति ब्रूयादृतुरस्म्यार्तवोऽस्म्याकाशाद्योनेः संभूतो भार्यायै रेतः संवत्सरस्य तेजोभूतस्य भूतस्यात्मा भूतस्य त्वमात्मासि यस्त्वमसि सोऽहमस्मीति तमाह कोऽहमस्मीति सत्यमिति ब्रूयात्किं तद्यत्सत्यमिति यदन्यद्देवेभ्यश्च प्राणेभ्यश्च तत्सदथ यद्देवाश्च प्राणाश्च तद्यत्तदेतया वाचाभिव्याह्रियते सत्यमित्येतावदिदं सर्वमिदं सर्वमसीत्येवैनं तदाह तदेतच्छ्लोकेनाभ्युक्तम्— यजूदरः सामशिरा आसावृङ्मूर्तिरव्ययः । स ब्रह्मेति हि विज्ञेय

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ऋषिर्ब्रह्ममयो महानिति । तमाह केन पौंस्नानि नामान्याप्नोतीति प्राणेनेति ब्रूयात्केन स्त्रीनामानीति वाचेति केन नपुंसकनामानीति मनसेति केन गन्धानिति घ्राणेनेति ब्रूयात्केन रूपाणीति चक्षुषेति केन शब्दानिति श्रोत्रेणेति केनान्नरसानिति जिह्वयेति केन कर्माणीति हस्ताभ्यामिति केन सुखदुःखे इति शरीरेणेति केनानन्दं रतिं प्रजातीरित्युपस्थेनेति केनेत्या इति पादाभ्यामिति केन धियो विज्ञातव्यं कामानिति प्रज्ञयेति प्रब्रूयात्तमाहापो वै खलु मे ह्यसावयं ते लोक इति सा या ब्रह्मणि चितिर्या व्यष्टिस्तां चितिं जयति तां व्यष्टिं व्यश्नुते य एवं वेद य एवं वेद' इति। छान्दोग्येऽपि 'ब्रह्मलोके तृतीयस्यामितो दिवि तदैरंमदीयं सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितँ हिरण्मयम् । तद्य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाँ सर्वेषु लोकेषु कामचारो भवति' इति । गीतायामपि 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


जनाः' इति । भगवान्बादरायणोऽपि 'अर्चिरादिना तत्प्रथितेः' इति चतुर्थाध्यायतृतीयपादाद्यसूत्रेण विद्याप्रकरणभेदादिभिः प्रसक्तमार्गभेदे निराकरणपूर्वकं ब्रह्मप्राप्तिरर्चिरादिनैव 'ये चेमेऽरण्ये श्रद्धासत्यमुपासते' इत्युपसानान्तरशीलानां अर्चिरादिमार्गावगमान्नानाविशेषणविशिष्ट एक एव अर्चिरादिमार्ग इति प्रतिपाद्य, 'वायुमब्दादविशेषविशेषाभ्याम्' इत्यनन्तरसूत्रेण 'स एतं देवयानं पन्थानमापाद्याग्निलोकमागच्छति स वायुलोकम्' इत्यविशेषेण श्रुतस्य वायोः 'स वायुमागच्छाति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' इत्यादित्यात्पूर्वत्वदर्शनाद्विशेषात्, संवत्सरादित्ययोरन्तराले वायोर्निवेशः । तत्रापि 'मासेभ्यो देवलोकं देवलोकादादित्यम्' इति वाजसनेयके मासानन्तरं समाम्नातस्य देवलोकस्य माससंबन्ध्यब्दानन्तरं निवेशः देवलोकाच्च वायोर्निवेशः तत आदित्यस्य । सूत्रं तु च्छान्दोग्याभिप्रायमिति प्रतिपाद्य 'तटितोऽधिवरुणः संबन्धात्' इत्यनन्तरसूत्रेण 'चन्द्रमसो विद्युतम्' इति

CC-0. Prof. Satya Vrat Shastri Collection.

श्रुताया विद्युत उपरिष्टात्स वरुणलोकमित्युपादिष्टो वरुणः संनिवेश्यः विद्युद्वर्षाधिपतित्वाद्वरुणस्य, तदनन्तरमवशिष्टेन्द्रप्रजापत्योर्निवेशः, 'अन्ते तु बादरायणः' इति न्यायादित्यवधार्य तदनन्तरेण 'आतिवाहिकास्तल्लिङ्गात्' इति सूत्रेण अर्चिरादिपर्वणां मार्गचिह्नत्वं भोगभूमित्वं वा इत्याशङ्क्य 'तत्पुरुषोऽमानवः' इति अर्चिरादिप्रापकमानवपुरुषव्यावर्तकामानवत्वविशेषणात् संपिण्डितकरणस्य लोकान्तरगमनं चेतनान्तराधीनमिति आतिवाहिकत्वमेव, अतः अर्चिरभिमानिनीं देवतां प्राप्य तया अहरभिमानिनीं तया च पूर्वपक्षाभिमानिनीमित्येवंप्रकारेण संवत्सरदेवलोकवायुलोकादित्यलोकचन्द्रविद्युल्लोकपर्यन्तं पूर्वपूर्वलोकाभिमानिन्या देवतया उत्तरोत्तरलोकाभिमानिदेवतां प्रापितः क्रमेण तडिल्लोकं प्राप्त इति प्रतिपाद्य, 'वैद्युतेन तु तच्छ्रुतेः' इत्यनन्तरसूत्रेण ब्रह्मलोकाद्विद्युल्लोकमागतेन अमानवपुरुषेण तडिदभिमानिदेवतासहितेन वरुणलोकं नीतः तद्वरुणसहितेनेन्द्रलोकम्, इन्द्रसहितेन प्रजापतिलोकं प्रजापतिसहितेन ब्रह्मलोक-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


मित्येवंक्रमेण ब्रह्मलोकं प्राप्नोति इति प्रतिपाद्यं कार्यम् 'बादरिरस्य गत्युपपत्तेः' 'विशेषितत्वाच्च' इति सूत्राभ्यामकार्यव्यापकब्रह्मणो गन्तव्यत्वासंभवात् ब्रह्मलोकं गमयति, 'पराः परावतो वसन्ति' इति श्रुत्यन्तरे विशेषितत्वाच्च सगुणमेव ब्रह्म प्राप्यत इति प्रतिपाद्य 'संकल्पादेव तु तच्छ्रुतेः' इति सूत्रेण एवं कार्यब्रह्मलोकं गतस्य 'यं यं अन्तमभिकामो भवति यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति तेन संपन्नो महीयते' इति यत्ननिरपेक्षतया पित्राद्युत्पत्तिरिति प्रतिपाद्य, 'अत एव चानन्याधिपतिः' इति सूत्रेण अवन्ध्यसंकल्पादेवायमनन्याधिपतिरिति प्रतिपाद्य, 'अभावं बादरिराह ह्येवम्' इति सूत्रेण विदुषो देह एव नास्तीति च प्रतिपाद्य 'भावं जैमिनिर्विकल्पामननात्' इति सूत्रेण 'स एकधा भवति त्रिधा भवति' इत्यादिश्रुत्या प्रतिपाद्यमानानेकप्रकारत्वस्यैकप्रकारे आत्मनि शरीरमादायैव वक्तव्यत्वात्सेन्द्रियशरीरयुक्तस्यैवात्मनो भोग इति प्रतिपाद्य 'द्वादशाहवदुभयविधं बादरायणोऽतः' इति सूत्रेण सत्रा-

CC-0. Prof. Satya Vrat Shastri Collection.

हीनोभयात्मकत्वं द्वादशाहस्य यथा तद्वदुभयविधश्रुतिबलाच्छरीरित्वं चोपपन्नमिति प्रतिपाद्य, 'तन्वभावे संध्यवदुपपत्तेः' 'भावे जाग्रद्वत्' इति सूत्राभ्यां शरीरित्वाशरीरित्वयोः अविरोधं प्रतिपाद्य 'प्रदीपवदावेशस्तथा हि दर्शयति' इति सूत्रेण मुक्तः पुष्कलभोगाय स्वसंकल्पसृष्टानेकशरीरेषु प्रदीपवदाविश्य विद्याबलाद्विहरति सौभरिवत् 'स एकधा भवति' इति श्रुतेरिति प्रतिपाद्य, 'जगद्व्यापारवर्जं प्रकरणात्' इति सूत्रेण 'आप्नोति स्वाराज्यं सर्वस्मै देवा बलिमावहन्ति' इत्यादिश्रुत्यावाप्तनिरङ्कुशैश्वर्यस्य वियदादिस्रष्टृत्वमपि तद्वदेवास्त्वित्यशाङ्क्य 'आत्मन आकाशः संभूतः' 'तत्तेजोऽसृजत' इत्यादेः परमात्मप्रकरणस्थत्वात्तन्मात्रविषयत्वमिति प्रतिपाद्य, 'प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः' इत्यनेन 'आप्नोति स्वाराज्यम्' इति श्रुतिः आधिकारिकसवितृमण्डलमध्यस्थपरमेश्वरानुग्रहायत्ताणिमाद्यैश्वर्यमात्रविषया न तु जगत्स्रष्टृत्वपरा 'वाक्पतिश्चक्षुष्पतिः' इत्यादिविशेषग्रहणाच्च जगद्व्यापारवर्जमिति प्रतिपाद्य, 'भोगमात्र-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


साम्यलिङ्गाच्च’ ‘यथैव देवतां सर्वाणि भूतान्यवन्ति एवं हैवंविदं सर्वाणि भूतान्यवन्ति’ इति श्रुत्या भोगमात्रसाम्यावगमादपि जगद्व्यापारवर्जत्वम् न ह्येवं जगत्स्रष्टृत्वमसक्तस्य क्वचिद्व्यपदिश्यते, तेन ‘एतस्यै देवतायै सायुज्यं सलोकतां जयति’ इत्यादिभेदव्यपदेशलिङ्गेभ्यश्च जगद्व्यापारवर्जत्वमेवेति प्रतिपाद्य, ‘अनावृत्तिः शब्दादनावृत्तिः शब्दात्’ इत्यन्तिमसूत्रेण अर्चिरादिमार्गेण ब्रह्मलोकं गतानां न पुनरावृत्तिरिति ‘न स पुनरावर्तते’ इत्यादिशब्दाद्ब्रह्मलोकं गतस्य अपुनरावृत्तिं प्रतिपादितवान् । एवं श्रुतिस्मृतिसूत्रैः अहंग्रहोपासकानां पञ्चाग्निविद्यावतां च अर्चिरादिमार्गेण पुनरावृत्तिरहितं ब्रह्मलोकं गतानां ब्रह्मणा सह जगद्व्यापारवर्जं ब्राह्मणान्सर्वान्भोगाननुभूय तत्रोत्पन्नात्मज्ञानेन ‘ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे’ इति ‘ब्रह्मणा सह मुच्यन्ते कल्पान्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्’ इति श्रुतिस्मृतिसूत्रोक्तप्रकारेण मुक्तिर्भवति । ‘अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ते धूममभि संभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभि प्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसम्, एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति, त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते, अतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा, अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' इति। तथा कौषीतकिब्राह्मणेऽपि 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति तेषां प्राणैः पूर्वपक्ष आप्यायतेऽथापरपक्षे न प्रजनयत्येतद्वै स्वर्गलोकस्य द्वारं यश्चन्द्रमास्तं यत्प्रत्याहतमिति सृजते

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


य एनं प्रत्याहृतमिह वृष्टिर्भूत्वा वर्षति स इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परश्वा वा पुरुषो वान्यो वैतेषु स्थानेषु प्रत्याजायते यथाकर्म यथाविद्यम्' इति; यथाविद्यमङ्गावबद्धविद्यानुरूपमित्यर्थः। गीतायामपि— 'धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्। तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते। ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान् ॥ ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति। एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते' इति। एवं कर्मिणां धूमादिमार्गेण स्वर्गलोकं गतानां यथाकर्मफलभोगानन्तरं पुनर्वृष्ट्यादिद्वारा भुवं प्राप्य मनुष्यादिजन्मप्राप्तिर्भवति। निर्विशेषज्ञानवतां तु 'न तस्य प्राणा उत्क्रामन्ति, अत्रैव समवलीयन्ते, अत्र ब्रह्म समश्नुते। ब्रह्मैव सन्ब्रह्माप्येति, परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुत्या 'सर्वभूतात्मभूतस्य सर्वभूतहितैषिणः देवापि मार्गे मुह्य-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


न्ति अपदस्य पदैषिणः । शकुन्तानामिवाकाशे मत्स्यानामिव चोदके । यथा गतिर्न दृश्येत तथा ज्ञानविदां गतिः' इति स्मृत्या च 'संपद्याविर्भावः स्वेन शब्दात्' इति सूत्रेण च 'स्वेन रूपेणाभिनिष्पद्यते' इति निष्पद्यप्रतिपादनान्मोक्षस्य फलप्रसिद्धेश्च रूपान्तरापत्तिमाशङ्क्य, स्वेन रूपेणेति शब्देन स्वरूपाविर्भाव एवावगम्यते, अन्यथा स्वशब्दवैयर्थ्यात् अतो न रूपान्तरापत्तिरिति प्रतिपाद्य, 'मुक्तः प्रतिज्ञानात्' इति सूत्रेण आवृतस्वरूपस्य अवस्थात्रयराहित्यरूपो विशेषो मुक्त्यवस्थायामस्ति, 'य आत्मापहतपाप्मा' इत्युपक्रान्तस्यात्मनः 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामः' इत्यनुकृष्य 'अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः' इति अवस्थात्रयराहित्यप्रतिपादनात् 'रोगनिवृत्तोऽरोगो निष्पद्यते' इतिवन्निष्पत्तिव्यपदेशोपपत्तेश्च इति प्रतिपाद्य, 'आत्मा प्रकरणात्' इति सूत्रेण परमात्मप्रकरणात् 'तं देवा ज्योतिषां ज्योतिः' इत्यत्र ज्योतिःशब्दस्यात्मनि प्रयुक्तत्वात् 'य आत्मापहतपाप्मा' इति परमात्मप्रकरणस्थत्वाच्च 'परं ज्योतिरुपसं-

CC-0. Prof. Satya Vrat Shastri Collection.

पद्य' इति परमात्मप्राप्तिरेवेति प्रतिपाद्य, 'अविभागेन दृष्टत्वात्' इति सूत्रेण 'स तत्र पर्येति' इत्याधाराधेयभावावगमात् 'ज्योतिरुपसंपद्य' इति गन्तृगन्तव्यव्यपदेशाच्च मुक्तस्य भेदेनैवावस्थानमाशङ्क्य 'तत्त्वमसि' इति वाक्येन अविभागावगमात् भेदव्यपदेशस्य 'स्वे महिम्नि' इतिवदुपपत्तेः परस्मिन्ब्रह्मणि अविभागेनैव मुक्तोऽवतिष्ठत इति सूत्रैश्च गमनेन विना स्वस्वरूपावस्थानरूपैव मुक्तिरत्रैव प्रतिपादिता। एवं कर्मिणामुपासकानां निर्विशेषज्ञानवतां च गतितदभाववैलक्षण्येन गन्तव्यस्वस्वरूपावस्थानरूपफलभेदाच्च न समुच्चयः। 'कर्मणा बध्यते जन्तुर्विद्यया प्रतिमुच्यते। तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः॥ कर्म त्वेके प्रशंसन्ति स्वल्पबुद्धिरता नराः। तेन ते देहजालानि रमयन्त उपासते' 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा', सूत्रमपि 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्'; तस्य ब्रह्मणोऽधिगमे उत्तरेषां कर्मणामश्लेषः पूर्वेषां विनाशः।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तथा च श्रुतिः 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते, तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति। 'इतरस्याप्येवमसंश्लेषः पाते तु' इतरस्य पुण्यस्याप्यसंश्लेषः 'उभे ह्येवैष एते तरति' इति सुकृतदुष्कृतयोरविशेषश्रवणात्, 'उपमर्दं च' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति कर्तृकर्मप्रतिषेधात्। एवं श्रुतिस्मृतिसूत्रैर्ज्ञानविरोधित्वेन अनित्यफलत्वेन नश्वरत्वेन गतिमत्त्वेन च प्रतिपादितानां कर्मणां ज्ञानेन सह मोक्षे समुच्चयासंभवः। अत एव सर्वज्ञैर्वेदप्रामाण्यं समर्थयद्भिः कर्मकाण्डप्रवर्तकैः कर्मणां मोक्षहेतुत्वमनाशङ्कितमेव। ननु कर्मणां मोक्षहेतुत्वप्रतिपादकवचनानां का गतिरिति चेत्, तेषां चित्तशुद्धिद्वारा हेतुत्वाभिप्रायत्वात्। अत एव च श्रुतिः चित्तशुद्धिद्वारा विविदिषाहेतुत्वं कर्मणामाह—'तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति। यज्ञादिसहपाठात् यज्ञादीनि कर्माण्येवानुक्रमिष्यन्वेदानुवचनशब्दं प्रयुङ्क्ते। तस्मात्कर्मैव वेदानुवच-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

नशब्देनोच्यत इति गम्यते । कर्म हि नित्यस्वाध्यायः कथं पुनर्नित्यं स्वाध्यायादिभिः कर्मभिरात्मानं विविदिषन्ति; नैव हि तान्यात्मानं प्रकाशयन्ति यथोपनिषदः। नैष दोषः, कर्मणां विशुद्धिहेतुत्वात्, कर्मभिः संस्कृता हि विशुद्धात्मानः शुक्नुवन्त्यात्मानमुपनिषत्प्रकाशितमप्रतिबन्धेन वेदितुम्। तथा ह्याथर्वणे 'विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति। स्मृतिश्च—'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इत्यादि। कथं पुनर्नित्यानि कर्माणि संस्कारार्थानीत्यवगम्यते? 'सह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गं संस्क्रियते इदमनेनाङ्गमुपधीयते' इत्यादिश्रुतेः सर्वेषु च स्मृतिशास्त्रेषु कर्माणि संस्कारार्थान्येवाचक्षते 'अष्टाचत्वारिंशत्संस्काराः' इत्यादिषु। गीतासु च— 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' इति 'सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः' इति च। यज्ञेनेति द्रव्ययज्ञा ज्ञानयज्ञाश्च संस्कारार्थाः, संस्कृतस्य च विशुद्धसत्त्वस्य ज्ञानोत्पत्तिप्रतिबन्धो न भविष्यति। अतो यज्ञेन विविदिषन्ति दानेन, दानमपि पापक्षयहेतुत्वात् धर्महेतु-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्वाच्च । तपसा, तप इति विशेषेण कृच्छ्रचान्द्रायणादिप्राप्तौ विशेषणम् । अनाशकेन इति कामानशनमनाशकं न तु भोजननिवृत्तिः, भोजननिवृत्तौ म्रियत एव, नात्मवेदनं भवति । वेदानुवचनयज्ञदानतपःशब्देन सर्वमेव नित्यं कर्म लक्ष्यते । एवं काम्यवर्जितं नित्यं कर्मजातं सर्वमात्मज्ञानोत्पत्तिद्वारेण मोक्षसाधनत्वं प्रतिपाद्यते । ज्ञानकर्मसमुच्चयवादिनाप्ययमर्थोऽङ्गीकृत एव । तेन नित्यनैमित्तिककर्मणां प्रत्यवायपरिहारार्थत्वस्याप्यङ्गीकारात्प्रत्यवायपरिहारस्य चित्तशुद्धिरूपत्वादेवं प्रनाड्या मोक्षहेतुत्वं संभवति । पृथक्साक्षाद्धेतुत्वकल्पने प्रमाणाभावात् 'नान्यः पन्था विद्यतेऽयनाय' इति ज्ञानव्यतिरेकेण मोक्षे साधनान्तरप्रतिषेधाच्च । स्मृतिरपि 'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥ ज्ञानेन हि सदा जन्तुरज्ञानप्रभवं तमः । व्यपोहति तदा ब्रह्म प्रकाशति सनातनम्' 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये' 'ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा । शौचमाचारसंशुद्धिरिन्द्रियाणां

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

च निग्रहः ॥ एतैर्विवर्धते तेजः पाप्मानं चापकर्षति । सिध्यन्ति चास्य सर्वार्था विज्ञानं च प्रवर्धते' 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ॥ सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते । तपो विद्या च विप्रस्य नैश्रेयसकरं परम् ॥ तपसा कल्मषं हन्ति विद्ययामृतमश्नुते' इति। तस्मात्कर्मणां मोक्षं प्रति चित्तशुद्धिद्वारैव हेतुत्वं सिद्धम्। एवं तपसोऽपि देवताप्रसादद्वारा ब्राह्मणवचनेनैव ब्राह्मण्यप्रापकत्वमिति सर्वं सुस्थम् । एषां ब्राह्मणानां लीलोदीरितवचनमात्रमपि सकललोकनिग्रहानुग्रहसमर्थम्, दुर्लभब्राह्मण्यप्रापकं च । तेषां ब्राह्मणानां माहात्म्यं श्रुतिस्मृतीतिहासपुराणधर्मप्रधानकाव्यादिषु बहुधा प्रतिपाद्यमानं कृत्स्नश उपवर्णयितुमशक्यमिति प्रकरणानुरोधेन दिक्प्रदर्शनमात्रमत्र कृतम् । एवमतिप्रशस्ततरं ब्राह्मण्यं ब्राह्मणानुग्रहेण विना न प्राप्यमिति तत्संपादकतपश्चरणाय दक्षिणां दिशं प्रतस्थे । षट्पञ्चाशमारभ्य षष्टिपर्यन्तम्—

ततो दक्षिणां दिशमभिगम्य सहस्रवर्षपर्यन्तमुग्रे तपसि वर्तमानं विश्वामित्रम्—

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

जिता राजर्षिलोकास्ते तपसा कुशिकात्मज ।
अनेन तपसा त्वां तु राजर्षिरिति विद्महे ॥

इति पितामहः समभाषत । तद्वचनश्रवणसंजातमन्युर्विश्वामित्रः पुनरपि त्रैलोक्यभयंकरमत्युग्रं तपश्चरितुं समारभत । अत्रान्तरे सशरीरं स्वर्गगमनमभिलषंस्त्रिशङ्कुः स्वपुरोहितं वसिष्ठमभिगम्य, कथितनिजमनोरथस्तेन चातिदुर्घटमिदमिति सन्यक्कारमुक्तोऽपि, वसिष्ठपुत्राञ्शतसंख्यान्समासाद्य कृताञ्जलिस्तानभिवाद्य

शिरसा प्रणतो याचे ब्राह्मणांस्तपसि स्थितान् ।
ते मां भवन्तः सिद्ध्यर्थं याजयन्तु समाहिताः ॥

सशरीरो यथाहं हि देवलोकमवाप्नुयाम् ।
प्रत्याख्यातो वसिष्ठेन गतिमन्यां तपोधनाः ।
गुरुपुत्रादृते सर्वान्नाहं पश्यामि कंचन ॥

इत्यभ्यर्थितवान् । तं गुरुपुत्राः

अशक्यमिति होवाच वसिष्ठो भगवानृषिः ।


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तं वयं वै समाहर्तुं क्रतुं शक्ताः कथं तव ।
बालिशस्त्वं नरश्रेष्ठ गम्यतां स्वपुरं पुनः ॥

इति प्रत्याचख्युः । अनेन पित्रा गुरुणा च यत्कृतं तदनुसृत्यैव गन्तव्यं तयोर्निषेधो न कर्तव्य इत्ययं धर्मः सूचितः । 'गुरोरलीकनिर्बन्धो न कर्तव्यः कदाचन । अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युधिष्ठिर ॥ शिष्यो गुरौ नरश्रेष्ठ प्रतिकूलं न संचरेत्' इति विष्णुपुराणे ॥ ततः स राजा सक्रोधः क्रोधपर्याकुलाक्षरम्,

प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैस्तथैव च ।
अन्यां गतिं गमिष्यामि स्वस्ति वोऽस्तु तपोधनाः ।

इत्युक्तवान् ।

ऋषिपुत्रास्तु तच्छ्रुत्वा वाक्यं क्रोधाभिसंहितम् ।
शेपुः परमसंक्रुद्धाश्चण्डालत्वं गमिष्यसि ॥

इति ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


अथ रात्र्यां व्यतीतायां राजा चण्डालतां गतः ।
नीलवस्त्रधरो नीलः परुषो ध्वस्तमूर्धजः ॥

अनेन गुरोरतिनिर्बन्धोऽशास्त्रीयः, दुर्लभकामनया च प्रवृत्तस्य एतादृशी गतिर्भवतीति च सूचितम् । अतो गुरुनिर्बन्धो न कर्तव्यो यतोऽयं महापातकसदृशः । तथा च मनुः— 'महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥ अनृतं च समुत्कर्षे राजगामि च पैशुनम् ॥ गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया' इति । ततः स राजा धृतचण्डालवेषः, मन्त्रिपुरोहितजानपदैश्च राज्यात्परिभ्रंशितः, इतस्ततः संचरन्नुग्रे तपसि वर्तमानं विश्वामित्रमासाद्य, किमागमनकृत्यं केन वा निमित्तेन चण्डालरूपधारणम्' इति स पृष्टः, सर्वमस्मै निजवृत्तान्तमाचख्यौ । ततस्तद्वचनमाकर्ण्य करुणया स्पर्धया च त्रिशङ्कोः स्वशरीरेणैव स्वर्गगमनसंपादकयज्ञनिर्वाहाय नानादिगन्तवास्तव्यऋषिगणान्समानीय यज्ञसंभाराय शिष्यानाज्ञापयामास । विदितवृत्तान्ता वासिष्ठाः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

क्षत्रियो याजको यस्य चण्डालस्य विशेषतः ।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ॥

ब्राह्मणा वा महात्मानो भुक्त्वा चण्डालभोजनम् ।
कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण पालिताः ॥

इत्यवदन् । अनया क्षत्रिययाजकत्वनिन्दया ब्राह्मणानामेवार्त्विज्यमिति सूचितम् । तथा च आपस्तम्बः— 'ब्राह्मणानार्त्विज्यं सोमेन यक्ष्यमाणो ब्राह्मणार्षेयानृत्विजो वृणीते । ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः' इति। बोधायनोऽपि 'ब्राह्मणा ऋत्विजः' इति । जैमिनिरपि 'प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात्' इति द्वादशान्त्याधिकरणे विद्यावत्त्वाविशेषात्सर्वेषामार्त्विज्यं पूर्वपक्षं प्रापय्य, 'स्वकर्म ब्राह्मणस्य यजनं याजनमध्ययनमध्यापनं दानं प्रतिग्रहणम्' इति । गौतमोऽपि 'क्रत्वर्थतया ब्राह्मणानामेवार्त्विज्यम्' इति नियमनात् 'ब्राह्मणानामिदं हविः नेहाब्राह्मणस्यास्ति' 'एते वै देवाः प्रत्यक्षं यद्ब्राह्मणाः' इति मन्त्रलिङ्गाच्च ब्राह्मणानामेवा-

CC-0. Prof. Satya Vrat Shastri Collection.

त्विज्यमिति सिद्धान्तितवान्। 'चण्डालस्य विशेषत:' इति विशिष्य चण्डालयाजननिन्दाश्रवणात्सामान्यतोऽयाज्ययाजनं न कर्तव्यमिति गम्यते। तथा च्छन्दोगब्राह्मणमयाज्ययाजने 'दक्षिणास्त्यक्त्मासचतुर्थे काले भुञ्जान: कानीत्येतद्गायेत्' इति। सुमन्तुरपि— 'शूद्रयाजक: सर्वद्रव्यपरित्यागात्पूतो भवति'। वसिष्ठोऽपि— 'दक्षिणात्यागात्पूतो भवतीति च विज्ञायते'। मनुरपि— 'अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणाम्। कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रत:' इति। बोधायनोऽपि— 'बहु प्रतिग्राह्यस्य प्रतिगृह्याप्रतिग्राह्यस्य वा याज्यं वा याजयित्वानाश्यान्नस्य वान्नमशित्वा तरत्समन्दीयं जपेत्' इति। आश्वलायनोऽपि— 'अगमनीयां गत्वा अप्रतिग्राह्यं प्रतिगृह्य अयाज्यं याजयित्वा पुनर्मामित्यृचं जपेत्' इति। सुमन्तु:— 'अभिशस्तपतितपौनर्भवभ्रूणहपुंश्चल्याशुचिशस्त्रकरतैलिकचाक्रिकध्वजिस्वर्णकारालेख्यकपण्यकवार्धुषिकाश्च गणिकसौमिकव्याधनिषादरजकबुरुडचर्मकरा अभोज्यान्ना अप्रतिग्राह्या अयाज्याश्च' इति। अत्र

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सकलधर्मशास्त्रकारैश्चण्डालस्य अयाज्येषु परिगणनम्, चण्डालपतितावेक्षणे दुष्टमिति चण्डालदृष्टहविषो यज्ञानर्हतया तद्याजनमत्यन्तमप्रसक्तमिति। अत एव च मूले

क्षत्रियो याजको यस्य चण्डालस्य विशेषतः।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः॥

इति। एवमधिकारिणो यजमानस्य शुद्धैः ऋत्विग्भिः शुद्धद्रव्योपकरणैश्च कृत एव यागो देवताप्रीतिकर इति सूचितम्। तथा च श्रुतिः—'शुचिमध्वरं देवा जुषन्ति। शुचिकामा हि देवाः शुचयश्च। तदेषाभिवदति। शुची वो हव्या मरुतः शुचीनाम्। शुचिँ हिनोम्यध्वरँ शुचिभ्यः। ऋतेन सत्यमृतसाप आयन् शुचिजन्मानः शुचयः पावकाः' इति। महाभारते आनुशासनिकेऽपि—'सुशुद्धैर्यजमानैश्च ऋत्विग्भिश्च तथाविधैः। शुद्धैर्द्रव्योपकरणैर्यष्टव्यमिति निश्चयः॥ तथाविधेषु यज्ञेषु देवानां तोषणं भवेत्। तुष्टेषु देवसंघेषु यज्ञी यज्ञफलं लभेत॥ तस्माद्यज्ञाद्दिवं यान्ति अमरैः सह मोदते

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

इति । वनपर्वणि तार्क्ष्यसरस्वतीसंवादे— न चाशुचिर्नाप्यनिर्णिक्तपाणिर्नाब्रह्मविज्जुहुयान्नाविपश्चित् । बुभुक्षवः शुचिकामा हि देवा नाश्रद्दधानाद्धि हविर्जुषन्ति ॥ नाश्रोत्रियं देवहव्ये नियुञ्ज्यान्मोघं पुरा सिञ्चति तादृशो हि । अपूर्वमश्रोत्रियमाह तार्क्ष्य न वै तादृग्जुहुयादग्निहोत्रम्' इति ॥

**ब्राह्मणा वा महात्मानो भुक्त्वा चण्डालभोजनम् ।**
**कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण पालिताः ॥**

इत्यनेन चण्डालान्नमभोज्यमित्युक्तम् । तथा च पराशरः— भुङ्क्तेऽज्ञानाद्द्विजश्रेष्ठश्चण्डालान्नं कथंचन । गोमूत्रयावकाहारो दशरात्रेण शुद्ध्यति । अन्त्यावसायिनामन्नमश्नीयाद्यश्च कामतः । स तु चान्द्रायणं कुर्यात्तप्तकृच्छ्रमथापि वा ॥ चण्डालखातवापीषु पीत्वा सलिलमग्रजः । 'अज्ञानाच्चैव भक्तेन अहोरात्रेण शुध्यति' इति । आपस्तम्बोऽपि— 'तत्तोयं यः पिबेद्विप्रः कामतोऽकामतोऽपि वा । अकामान्नक्तभोजी स्यादहोरात्रेण

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

कामतः’ इति । ‘चण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् । गोमूत्रयवकाहारस्त्रिरात्राच्छुद्धिमाप्नुयात् ॥ चण्डालघटसंस्थं तु यस्तोयं पिबति द्विजः । तत्क्षणात्क्षिप्यते यस्तु प्राजापत्यं समाचरेत् ॥ यदि न क्षिप्यते तोयं शरीरे यस्य जीर्यते । प्राजापत्यं न दातव्यं कृच्छ्रं सांतपनं चरेत्’ इति । ततस्तद्वचनश्रवणसंजातकोपो विश्वामित्रः,

भस्मीभूता दुरात्मानो भविष्यन्ति न संशयः ।
श्वमांसनियताहारा मुष्टिका नाम निर्घृणाः ॥
विकृताश्च विरूपाश्च लोकाननुचरन्त्विमान् ।

इति शशाप । तेऽपि वासिष्ठाः समहोदयास्तच्छापोक्तदशामवापुः । अनेन महतां दूषणं न कर्तव्यम् इति सूचितम । ततस्तच्छापभयान्महर्षिभिः प्रवर्तिते यज्ञे स्वस्वभागग्रहणायानागतान्देवानवलोक्य

ततः क्रोधसमाविष्टो विश्वामित्रो महामुनिः ।
स्रुवमुद्यम्य सक्रोधस्त्रिशङ्कुमिदमब्रवीत् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha 

पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर ।
एष त्वां स्वशरीरेण नयामि स्वर्गमोजसा ॥

स्वार्जितं किंचिदप्यस्ति मया हि तपसः फलम् ।
राजंस्त्वं तेजसा तस्य सशरीरो दिवं व्रज ॥

इत्युक्तवान् । तद्वचनसमनन्तरमेव देवलोकगतं त्रिशङ्कु-मवलोक्य जातमन्युः शतमन्युः

त्रिशङ्को गच्छ भूयस्त्वं नासि स्वर्गकृतालयः ।
गुरुशापहतो मूढ पत भूमिमवाक्शिराः ॥

इति समाज्ञप्तवान् । अत्र गुरुशापदग्धानां प्रतिकारो नास्तीति पूर्वमेव निरूपितम् । तदाज्ञया पुनरपि स्वर्गात्पतन्तं तं त्रायस्वेति ब्रुवाणं त्रिशङ्कुमवलोक्य, क्रोधाकुलहृदयः दक्षिणमार्गस्थान्सप्तर्षीन्नक्षत्रमालां चासृजत् ।

अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः ।

इति वदन् दैवतानपि स्रष्टुमुपचक्रमे । ततः संभ्रान्त-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

देवर्षिगणप्रार्थनया वैश्वानरपथाद्बहिस्त्रिशङ्कोरवाक्शिरोरूपेणावस्थानमङ्गीकुर्वन्, स्वप्रतिज्ञानिर्वाहणजनितानन्दः, यज्ञसमाप्तिमकरोत् ॥

ततो देवा महात्मानो मुनयश्च तपोधनाः ।
जग्मुर्यथागतं सर्वे यज्ञस्यान्ते नरोत्तम ॥

अत्र विश्वामित्रस्य वसिष्ठस्पर्धया कर्मणि प्रवृत्तस्य चिरकालसमार्जिततपोव्ययेन, त्रिशङ्कोरप्युत्तमस्वर्गलोकानावाप्तिरिति प्रतिपादनात्, महता सह स्पर्धा न कर्तव्येति सूचितम् । एकषष्टितमसर्गे— दक्षिणदिगवस्थानमात्रेणैव स्वतपोविघ्नं मन्वानो विश्वामित्रः, पश्चिमां दिशमभिगम्य कन्दमूलफलैः कृतनियताहारः उग्रं तपस्तेपे । अत्रान्तरे समारब्धयज्ञमम्बरीषमिन्द्रापहृतयज्ञियपशुमवलोक्य

पशुरद्य हृतो राजन्प्रनष्टस्तव दुर्नयात् ।
अरक्षितारं राजानं घ्नन्ति दोषा नरेश्वर ॥
प्रायश्चित्तमहं मन्ये नरं वा पुरुषर्षभम् ।

CC-0. Prof. Satya Vrat Shastri Collection.

इति ऋत्विगब्रवीत् । अनेन यज्ञमरक्षितुः राज्ञो दोषोऽस्तीति सूचितम् ॥

आनयस्व पशुं शीघ्रं यावत्कर्म प्रवर्तते ।

इति तदुपाध्यायः समाज्ञप्तवान् । अम्बरीषोऽपि तदाज्ञया नरपशुसंपादनाय सर्वतः पर्यटन् भृगुतुङ्गे समासीनं सभार्यमृचीकमवलोक्य कथितनिजवृत्तान्तः

गवां शतसहस्रेण विक्रीणीषे सुतं यदि ।
पशोरर्थे महाभाग कृतकृत्योऽस्मि भार्गव ॥

इति पर्यपृच्छत् । तद्वचनश्रवणसमनन्तरं गोधनाशया

नाहं ज्येष्ठं नरश्रेष्ठ विक्रीणीयां कथंचन ।

इति स्वपित्रा ऋचीकेन कथिते, मात्रा

ममापि दयितं विद्धि कनिष्ठं शुनकं नृप ।
तस्मात्कनीयसं पुत्रं न दास्ये तव पार्थिव ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यभिहिते, तत्पुत्रो मध्यमः शुनःशेपः

पिता ज्येष्ठमविक्रेयं माता चाह कनीयसम्।
विक्रीतं मध्यमं मन्ये राजन्पुत्रं नयस्व माम्॥

इति राजानमब्रवीत्। स च राजा मुदितमनाः,

गवां शतसहस्रेण शुनःशेपं नरेश्वरः।
गृहीत्वा परमप्रीतो जगाम रघुनन्दन॥

इति द्विषष्टितमसर्गे। ननु दानं क्रयधर्मश्चापत्यस्य न विद्यते। 'आपदि व्यवहरेत पण्यानामपण्यानि व्युदस्यान्मनुष्यान्' इत्यापस्तम्बेन। तस्यापण्यमित्युपक्रम्य पुरुषवशा कुमारी वेहतश्चेति गौतमेन। 'अत्र गाथां यमे गीतां कीर्तयन्ति पुराविदः। यथान्योऽपि न विक्रेयः किं पुनः पुरुषः प्रजाः॥ यो मनुष्यो मनुष्यस्य विक्रयाद्धनमिच्छति। तस्य मूत्रं पुरीषं च स परत्रोपजीवति' इति मनुना चापत्यविक्रयस्य प्रतिषेधात् कथमत्र स कृत इति चेन्न; तेषां वचनानां ज्येष्ठपुत्रैकपुत्रनिषे-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

थपरत्वात् । तथा च मिताक्षरायां वसिष्ठः— 'न ज्येष्ठपुत्रं दद्याद्गृह्णीयाद्वा स हि संतानाय पूर्वेषाम्' । बोधायनोऽपि— 'न त्वेकपुत्रं दद्यात्स हि संतानाय पूर्वेषाम्' इति । दाननिषेधो विक्रयपरित्यागयोरप्युपलक्षकः । तथा च ज्येष्ठस्यैव कुलकरत्वेन तत्र तत्र प्रशंसा । श्रुतिस्तावत्— 'ऋणमस्मिन्स अपत्यमृतत्वं च गच्छति पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्' इति । स्मृतिरपि— 'ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः । पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति ।। यस्मिन्नृणं संनयति येन चामृतमश्नुते । स एव धर्मजः पुत्रः कामजानितरान्विदुः' इति मनुः । तस्माज्ज्येष्ठपुत्रैकपुत्रयोः अविक्रेयता ; द्वितीयादीनां तु विक्रयः संभावितः । न च तत्र प्रमाणाभावः, 'शोणितशुक्लसंभवो मातृपितृनिमित्तकः, तस्य प्रदानपरित्यागविक्रयेषु मातापितरौ भवतः' इति बोधायनवचनस्य सामान्यतो विक्रयप्रापकस्य प्रमाणान्तरेण ज्येष्ठैकपुत्रनिषेधपरेण, तदितरविशेषपर्यवसन्नस्यैव प्रमाणत्वात् । यद्यपि सर्वकनिष्ठस्य विक्रयः संभावितः, तथापि

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


मातुर्निरवधिकप्रीतिविषयत्वात्, मात्रा न विक्रीतः। सर्वकनिष्ठत्वं च प्रीतिविषयत्वम्। तथा च महाभारते सभापर्वणि सहदेवं प्रति कुन्तीवचनम्— 'सहदेव निवर्तस्व ननु त्वमसि मे प्रियः। शरीरादपि माद्रेय मामत्याक्षीः कुपुत्रवत्॥ व्रजन्तु भ्रातरस्तेऽपि यदि सत्याभिसंधिनः। मत्परित्राणजं धर्ममिहैव त्वमवाप्नुहि'। आश्रमवासे धर्मपुत्रं प्रति कुन्तीवाक्यम्— 'सहदेवे महाराज मा प्रमादं कृथाः क्वचित्। एष मामनुरक्तो हि राजंस्त्वां चैव सर्वदा'। तत्रैव— 'सहदेवस्तु वेगेन प्राधावद्यत्र सा पृथा। सा च बाष्पाकुलमुखी ददर्श दयितं सुतम्' इति। ततः शुनःशेपस्तु चिन्ताकुलहृदयस्तेन राज्ञा सह गच्छन्, मध्येमार्गं पुष्करक्षेत्रे उग्रे तपसि वर्तमानं स्वमातुलं विश्वामित्रमभिगम्य

**विषण्णवदनो दीनस्तृष्णया च श्रमेण च।**
**पपाताङ्के मुनेराशु वाक्यं चेदमुवाच ह॥**
**राजा च कृतकार्यः स्यादहं दीर्घायुरव्ययः।**
**पितेव पुत्रं धर्मात्मंस्त्रातुमर्हसि किल्बिषात्।**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

इति । तद्वचनश्रवणमात्रादेव संजातकरुणो विश्वामित्रः मधुष्यन्दादीन्स्वपुत्रानाहूय

यत्कृते पितरः पुत्राञ्जनयन्ति शुभार्थिनः ।
परलोकहितार्थाय तस्य कालोऽयमागतः ॥

अयं मुनिसुतो बालो मत्तः शरणमिच्छति ।
पशुभूता नरेन्द्रस्य तृप्तिमग्नेः प्रयच्छथ ॥
अस्य जीवितमात्रेण प्रियं कुरुत पुत्रकाः ।

इत्यवादीत् । अनेनात्मपुत्रपरित्यागेनापि शरणागतसंरक्षणमवश्यं कर्तव्यम् इति सूचितम् । तथा च श्रुतिः— 'तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छति' इति । तथा वनपर्वणि घोषयात्रायां भीमं प्रति युधिष्ठिरः— 'अस्मानभिगतांस्तात भयार्ताञ्शरणैषिणः । कौरवान्विषमं प्राप्तान्कथं ब्रूयास्त्वमीदृशम् ॥ य एव कश्चिद्राजन्यः शरणार्थमिहागतम् । परं शक्त्याभिरक्षेत किं पुनस्त्वं वृकोदर ॥ क इहार्यो भवेत्त्राणमभिधावेति चोदितः । प्राञ्जलि

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शरणापन्नं दृष्ट्वा शत्रुमपि ध्रुवम् ॥ वरप्रदानं राज्यं च पुत्रजन्म च पाण्डवाः । शत्रोश्च मोक्षणं क्लेशात्त्रीणि चैकं च तत्समम्' इति । महाप्रस्थानिके इन्द्रं प्रति युधिष्ठिरः— 'प्रतिप्रदानं शरणागतस्य स्त्रियो वधो ब्राह्मणस्वापहारः । मित्रद्रोहस्तानि चत्वारि शक्र भक्तत्यागश्चैव समं मतो मे' इति । ततः

**कथमात्मसुतान्हित्वा त्रायसेऽन्यसुतं विभो ।**
**अकार्यमिव पश्यामः श्वमांसमिव भोजने ॥**

इति प्रतिवदतो मधुच्छन्दादीन्स्वपुत्रान्सहस्रवर्षपर्यन्तम्

**श्वमांसभोजिनः सर्वे पृथिव्यामनुवत्स्यथ ।**

इति शशाप । अनेनौद्धत्येन पितुराज्ञाप्रतिकूलवचनरूपाद्यवज्ञया महान्दोषो भवति । तथा च मनुः— 'पितृमातृगुरूणां च येऽवज्ञां चक्रुरुद्धताः । त इमे पूयविण्मूत्रगर्ते मज्जन्त्यधोमुखाः ॥ गर्दभो जायते जन्तुः पित्रोश्चाप्यवमानकृत् ॥ आक्रुश्य मातापितरौ शारिका संप्रजायते । तावेव पीडयित्वा तु कच्छपः संप्रजायते ॥ परिवादी खरो भवति श्वा वै भवति निन्दकः । परिभोक्ता क्रिमिर्भ-

CC-0. Prof. Satya Vrat Shastri Collection.

वति कीटो भवति मत्सरी ॥ आचार्यश्च पिता चैव माता भ्राता च पूर्वजः । नार्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः' इति । आनुशासनिकेऽपि—'सम्यङ्मिथ्याप्रवृत्तेऽपि वर्तितव्यं गुराविह । गुरुनिन्दा दहत्यायुर्मनुष्याणां न संशयः' इति । ततो मुनिकुमारकाय अम्बरीषयज्ञसाद्गुण्यकरं सकृज्जपादेव इन्द्रतदनुजप्रीतिकरं गाथाद्वयमुपदिदेश । ततः समारब्धयज्ञेन राज्ञा पशुतया यूपे नियोजितमुनिकुमारकगीयमानगाथाद्वयश्रवणमात्रादेव तर्पितः सहस्राक्षः

दीर्घायुस्तु तदा प्रादाच्छुनःशेपाय राघव ।
स च राजा नरश्रेष्ठ यज्ञस्य च समाप्तवान् ॥

फलं बहुगुणं राम सहस्राक्षप्रसादजम् ।
विश्वामित्रोऽपि धर्मात्मा भूयस्तेपे महत्तपः ।
पुष्करेषु नरश्रेष्ठ दशवर्षशतानि च ॥

त्रिषष्टितमसर्गे— भूयोऽपि तपश्चरन्विश्वामित्रः


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ऋषिस्त्वमसि भद्रं ते स्वार्जितैः कर्मभिः शुभैः।

इति ब्रह्मणा समादिष्टोऽप्यपरिपूर्णमनोरथ एव पुनरपि तपश्चरन्रूपयौवनशालिनीं संदर्शनमात्रेण सकलजनमोहिनीं मेनकां संप्रेक्ष्य कंदर्पवशगः तया सह दश वर्षाणि सुखमन्वभवत्। ततस्तपोविघातमवेक्ष्य परित्यज्य मेनकां पुनरपि तपश्चरणायोत्तरस्यां दिशि कौशिकीतीरमासाद्य, तत्रोग्रं तपः समाचरन् ब्रह्मणा महर्षित्वप्रदानपूर्वकं सबहुमानमाहूतोऽपि ब्रह्मर्षित्वमभिलषन्

ऊर्ध्वबाहुर्निरालम्बो वायुभक्षोऽचरत्तपः।
घर्मे पञ्चतपा भूत्वा वर्षास्वाकाशसंश्रयः।
शिशिरे सलिलस्थायी रात्र्यहानि तपोधनः॥

चतुःषष्टितमपञ्चषष्टितमयोः— ततः स्वसमाधिभीरुभिर्देवैस्तपोविघाताय प्रहितां रम्भाम्

दश वर्षसहस्राणि शैली स्थास्यसि दुर्भगे।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha 

इति विश्वामित्रः शशाप । अनेन धर्मविघातो न कर्तव्यः इति सूचितम् ।

तस्य शापेन महता रम्भा शैली तदाभवत् ।
कोपेन स महातेजास्तपोपहरणे कृते ॥
इन्द्रियैरजितै राम न लेभे शान्तिमात्मनः ॥

अनेन जितेन्द्रियाणामेव तपःसिद्धिरिति इन्द्रियजयोऽवश्यं कर्तव्य इति च सूचितम् । तथा च मनुः— 'इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् । जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः । अकुर्वन्विहितं कर्म निन्दितं च समाचरन् ।। प्रसजंश्चेन्द्रियार्थेषु नरः पतनमृच्छति' इति । गीतायामपि— 'यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः । इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ।। तानि सर्वाणि संयम्य युक्त आसीत मत्परः । वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ।। इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते । तदस्य हरति प्रज्ञां

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वायुर्नावमिवाम्भसि ॥ तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता' इति। मनुरपि— 'वेदास्त्यागश्च यज्ञाश्च तपांसि नियमास्तथा। न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित् ॥ श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः। न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥ इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयः। संनियम्य तु तान्येव ततः सिद्धिं स गच्छति ॥ इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम्। तदस्य हरति प्रज्ञां दृतेः पादादिवोदकम् ॥ वशे कृत्वेन्द्रियग्रामं संनियम्य मनस्तथा। सर्वान्संसाधयेदर्थानक्षिण्वन्योगतस्तनुम्' इति। महाभारते राजधर्मे— 'प्रसृतैरिन्द्रियैर्दुःखितैरेव नियतैः सुखी। तस्मादिन्द्रियरूपेभ्यो यच्छेदात्मानमात्मनि' इति।

**बभूवास्य पुनश्चिन्ता तपोपहरणे कृते।**
**नैवं क्रोधं गमिष्यामि न च वक्ष्ये कथंचन ॥**

अनेन जितक्रोधानामेव तपआदिधर्मसिद्धेः क्रोधो

CC-0. Prof. Satya Vrat Shastri Collection.

न कर्तव्य इति सूचितम्। तथा च मनुः— 'क्रोधो हि धर्मं हरति यतीनां दुःखसंचितम्। ततो धर्मविहीनानां गतिरिष्टा न विद्यते'। वनपर्वणि द्रौपदीं प्रति युधिष्ठिरवचनम्— 'क्रोधो हन्ता मनुष्याणां क्रोधो भावयिता पुनः। इति विद्धि महाप्राज्ञ क्रोधमूलौ भवाभवौ। क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद्गुरूनपि। क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते'। एवमिन्द्रियनिग्रहक्रोधजयपूर्वकम्,

पूर्वां दिशमनुप्राप्य तपस्तेपे सुदारुणम्।
तस्य वर्षसहस्रस्य व्रते पूर्णे महाव्रतम्।
भोक्तुमारब्धवानन्नं तस्मिन्काले रघूत्तम॥

इन्द्रो द्विजातिर्भूत्वा तं सिद्धमन्नमयाचत।
तस्मै दत्त्वा तदा सिद्धं सर्वं विप्राय निश्चितः॥

अनेन वैश्वदेवान्ते समागतोऽतिथिः स्वयमुपोष्यापि स्वीयान्नप्रदानेन संभोज्य इति सूचितम्। तथा च कठवल्ल्यां नाचिकेताः स्वपितृसमारब्धयज्ञदक्षिणात्वेन

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

पीतोदकजग्धतृणदुग्धदोहनिरिन्द्रियगोप्रदानेन पितुरानन्दलोकगमने ऋत्वसंपत्तिनिमित्तमनिष्टं भवतीति तन्निरसनाय कस्मै मां दास्यसीति पुनः पुनः पप्रच्छ। पिता क्रोधेन मृत्यवे त्वा दास्यामीत्युवाच। स च पितुर्वचनपरिपालनमेव गरीयान्धर्म इति तद्वचनगौरवेण यमभवनं गत्वा, प्रोषिते यमे तिस्रो रात्रीरपूजित एव उवास। प्रोष्यागतं यमममात्या ऊचुः—'वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्। तस्यैताँ शान्तिं कुर्वन्ति हर वैवस्वतोदकम्। आशाप्रतीक्षे संगतँ सूनृतां चेष्टापूर्ते पुत्रपशूँश्च सर्वान्॥ एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे' इति। ततो मृत्युः 'तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः। नमस्तेऽस्तु ब्रह्मन्स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन्वरान्वृणीष्व' इत्येवं प्रसाद्य दिनत्रयमनशनेन स्वगृहनिवासदोषपरिहाराय वरत्रयं प्रादात् इति। तैत्तिरीयश्रुतावपि— 'यो मा ददाति स इदेव मा वा अहमन्नमन्नमदन्तमद्मि पूर्वमग्नेरपि दहत्यन्नम्' इति। बोधायनोऽपि— 'यो मामदत्त्वा पितृदेव-

CC-0. Prof. Satya Vrat Shastri Collection.

ताभ्यो भृत्यातिथीनां च सुहृज्जनस्य । संपन्नमश्नन्विषमत्ति मोहात्तमद्मि हन्तस्य च मृत्युरस्मि ॥ कृताग्निहोत्रः कृतवैश्वदेवो भृत्यातिथीन्बन्धुजनावशिष्टम् । तुष्टः शुचिः श्रद्धदत्ति यो मां तस्यामृतं स्यां स च मां भुनक्ति' इति । आपस्तम्बोऽपि— 'काले स्वामिनावन्नार्थिनौ न प्रत्याचक्षीयाताम् । अभावे भूमिरुदकं तृणानि कल्याणी वागित्येतानि वै सतोऽगारे न क्षीयन्ते कदाचन । इत्येवं वृत्तौ अनन्तलोकौ भवतः' इति । आपस्तम्बोदाहृतब्राह्मणमपि— 'स एष प्राजापत्यः कुटुम्बिनो यज्ञो नित्यः प्रततः । योऽतिथीनामग्निः स आहवनीयः यः कुटुम्बे स गार्हपत्यो यस्मिन्पच्यते सोऽन्वाहार्यपचनः ऊर्जं पुष्टिं प्रजां पशूनिष्टापूर्तमिति गृहाणामश्नाति । यः पूर्वोऽतिथेरश्नाति पय उपसेचनमन्नमग्निष्टोमसमितं सर्पिषोक्थ्यसंमितं मधुनातिरात्रसंमितं मांसेन द्वादशाहसंमितमुदके प्रजावृद्धिरायुषश्च प्रियाप्रियाश्चातिथयः स्वर्गं लोकं गमयन्तीति विज्ञायते स यत्प्रातर्मध्यंदिने सायमिति ददाति सवनान्येव तानि भवन्ति यदनुतिष्ठत्युदवस्यत्येव तत् ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


यत्सान्त्वयति सा दक्षिणा प्रशंसा यत्संसाधयति ते विष्णुक्रमाः । यदुपावर्तते सोऽवभृथ इति हि ब्राह्मणम्'। मनुरपि— 'कृत्वैतद्बलिकर्मैवमतिथिं पूर्वमाशयेत् । संप्राप्ताय त्वतिथये प्रदद्यादासनोदके ।। अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम् । अग्नौ हुत्वा विधानेन यत्पुण्यफलमश्नुते ।। तेन तुल्यं समं वापि ब्राह्मणे तर्पिते फलम् । अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।। स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति । सिलेनाप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः ।। सर्वं सुकृतमादत्ते ब्राह्मणो नार्चितो वसन्' इति । आश्वमेधिकेऽपि— 'साङ्गोपाङ्गांस्तथा वेदान्पठतीह दिने दिने । न चातिथिं पूजयति वृथा स पठति द्विजः ।। पाकयज्ञैर्महायज्ञैः सोमसंस्थाभिरेव च । ये यजन्ति न चार्चन्ति गृहेष्वतिथिमागतम् ।। तेषां यशोऽर्थकामानां दत्तमिष्टं च यद्भवेत् । वृथा भवति तत्सर्वमाशया हतया हतम् ।। वैश्वदेवान्तिके प्राप्तमतिथिं यो न पूजयेत् । स चण्डालत्वमाप्नोति सद्य एव न संशयः ।। नैव स्वयं तदश्नीयादतिथिं यन्न पूजयेत् । धन्यं यशस्य-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


मायुष्यं स्वर्ग्यं चातिथिपूजनम्' । तथा शातातपोऽपि—
'स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा । नावाप्नोति गृही लोकान्यथा त्वतिथिपूजनात्' इति । आनुशासनिके—'अतिथिः पूजितो यद्धि ध्यायते मनसा शुभम् । न तत्क्रतुशतेनापि तुल्यमाहुर्मनीषिणः' । आरण्यके पर्वणि तार्क्ष्यसरस्वतीसंवादे— 'यो दत्त्वातिथिभूतेभ्यः पितृभ्यश्च द्विजोत्तमः । शिष्टान्यन्नानि यद्भुङ्क्ते किं वै सुखतरं ततः ॥ अतो मृष्टतरं नान्यन्न्यूनं किंचिच्छतक्रतौ । दत्त्वा यस्त्वतिथिभ्योऽन्नं भुङ्क्ते तेनैव नित्यशः ॥ यावतो ह्यन्धसः पिण्डानश्नाति सततं द्विजः । तावता गोसहस्राणां फलमाप्नोति दायकः ॥ कपिलायां तु दत्तायां यत्फलं ज्येष्ठपुष्करे । तत्फलं भरतश्रेष्ठ विप्राणां पादधावने ॥ द्विजपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी । तावत्पुष्करपर्णेन पिबन्ति पितरो जलम् ॥ स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः । पितरः पादशौचेन अन्नाद्येन प्रजापतिः' इति ।

निःशेषितेऽन्ने भगवानभुक्त्वैव महातपाः ।


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तथैवासीत्पुनर्मौनमनुच्छ्वासं चकार ह ।
तस्यानुच्छ्वसमानस्य मूर्ध्नि धूमो व्यजायत ॥

त्रैलोक्यं येन संभ्रान्तमादीपितमिवाभवत् ।
व्याकुलाश्च दिशः सर्वा न च किंचित्प्रकाशते ॥

सागराः क्षुभिताः सर्वे विशीर्यन्ते च पर्वताः ।
प्रकम्पते च पृथिवी वायुर्वाति भृशाकुलः ॥

एवं त्रैलोक्यसंक्षोभकरं तपस्तपस्यन्तं तमृषिमवलोक्य

ब्रह्मर्षे स्वागतं तेऽस्तु तपसा स्म सुतोषिताः ।
ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक ॥

इति वदन्तं ब्रह्माणम्

कृत्वा प्रणाममुदितो व्याजहार महामुनिः ।
ब्राह्मण्यं यदि मे प्राप्तं दीर्घमायुस्तथैव च ।
ओंकारश्च वषट्कारो वेदाश्च वरयन्तु माम् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha 

क्षत्रवेदविदां श्रेष्ठो ब्रह्मवेदविदामपि ।
ब्रह्मपुत्रो वसिष्ठो मामेवं वदतु देवताः ॥

इति प्रार्थयामास ।

ततः प्रसादितो देवैर्वसिष्ठो जपतां वरः ।
सख्यं चकार ब्रह्मर्षिरेवमस्त्विति चाब्रवीत् ॥
ब्रह्मर्षिस्त्वं न संदेहः सर्वं संपत्स्यते तव ।

इति वसिष्ठवाक्येन ब्राह्मण्यं प्राप्तम्, ब्राह्मणसाधारणधर्माश्च सर्वेऽपि प्राप्ता इत्युक्तं भवति । इति पञ्चषष्टितमः सर्गः ।

तदनु वसिष्ठवचनसमनन्तरं प्राप्तब्रह्मर्षिभावः महाप्रभावोऽयं कौशिक इति शतानन्दवचनश्रवणेन जनितानन्दो जनकमहाराजः तं तपोनिधिं बहुधा प्रशस्य,

कर्मकालो मुनिश्रेष्ठ लम्बते रविमण्डलम् ।
स्वागतं तपतां श्रेष्ठ मामनुज्ञातुमर्हसि ॥

इति प्रार्थनापूर्वकं रामलक्ष्मणाभ्यां सह विश्वामित्रं

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


विससर्ज । षट्षष्टितमे— ततः प्रभाते कृतपूर्वाण्हिकक्रियो विश्वामित्रः रामलक्ष्मणाभ्यां सह जनकसमीपमागत्य तत्कृतासनपाद्याद्यर्घ्यपूजां प्रतिगृह्य, किं करोम्याज्ञापयतु भवानिति सादरं पृष्टः, त्वद्गृहे न्यासभूतं धनूरत्नं द्रष्टुकामाविमौ रामलक्ष्मणौ, तद्दर्शयतु भवानित्यब्रवीत् । स च राजा 'दक्षयज्ञे स्वभागपरिकल्पनजनितरोषेण सकलदेवनिषूदनाय धनुरायम्य प्रवृत्तेन महादेवेन सकलदेवप्रार्थनया निवृत्तकोपेन प्रत्तं धनूरत्नं देवाः निमेः षष्ठे देवराते न्यासं चक्रुः । अथ क्षेत्रं कृषतो मम भूतलादुत्थितां सीतां तद्धनुरारोपपण्यां कृतवते देयेति वीर्यशुल्कतया स्थापितामुपश्रुत्य, समागतैर्धनुषस्तोलनेऽप्यसमर्थानवगत्य प्रत्याख्यातैः, तेन च कोपेन संवत्सरं मिथिलामुपरुन्धद्भिः प्रक्षीणबलः, देवप्रार्थनया पुनर्लब्धचतुरङ्गबलेन सर्वांश्छितवानस्मि । तदाप्रभृति तदारोपणसमर्थं पुरुषं काङ्क्षतो मम इदं धनूरत्नं रामो यद्यारोपयिष्यति,

सुतामयोनिजां सीतां दद्यां दाशरथेरहम् ।

CC-0. Prof. Satya Vrat Shastri Collection.

इत्यकथयत् ॥

सप्तषष्टितमे,— ततो धनूरत्नमानीयतामिति विश्वामित्रसंचोदितो जनकः, अष्टचक्रमञ्जूषागतं महाबलयुक्तपञ्चशतमनुष्यैर्यत्नेन समानीतं धनूरत्नं विश्वामित्राय निवेदयामास । ततो विश्वामित्रेण संचोदितो रामः मञ्जूषामपावृत्य सलीलं धनूरत्नं मध्ये गृहीत्वा ज्यामारोप्य पूरयन् बभञ्ज—

तस्य शब्दो महानासीन्निर्घातसमनिस्वनः ।
भूमिकम्पश्च सुमहान्पर्वतस्येव दीर्यतः ॥

निपेतुश्च नराः सर्वे तेन शब्देन मोहिताः ।
वर्जयित्वा मुनिवरं राजानं तौ च राघवौ ॥

ततस्तीर्णप्रतिज्ञो जनको देवदानवादिभिरप्यशक्यारोपणधनूरत्नभञ्जनेन विस्मयाविष्टहृदयो विश्वामित्रेण सह रामाय सीताप्रदानं विनिश्चित्य, तदनुज्ञया दशरथानयनाय शीघ्रगान्दूतान्प्रेषयामास ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


अष्टषष्टितमसर्गे—

जनकेन समादिष्टा दूतास्ते क्लान्तवाहनाः ।
त्रिरात्रमुषिता मार्गे तेऽयोध्यां प्राविशन्पुरीम् ।
ते राजवचनाद्दूता राजवेश्म प्रवेशिताः ॥

राजानं प्रयता वाक्यमब्रुवन्मधुराक्षरम् ।
पृष्ट्वा कुशलमव्यग्रं वैदेहो मिथिलाधिपः ॥

कौशिकानुमते वाक्यं भवन्तमिदमब्रवीत् ।
पूर्वं प्रतिज्ञा विदिता वीर्यशुल्का ममात्मजा ॥

यदृच्छयागतैर्वीरैर्निर्जिता तव पुत्रकैः ।
तच्च राजन्धनुर्दिव्यं भग्नं रामेण धीमता ॥

अस्मै देया मया सीता वीर्यशुल्का ममात्मजा ।
शीघ्रमागच्छ भद्रं ते द्रष्टुमर्हसि राघवौ ॥

इत्युक्त्वा विरता दूता राजगौरवशंसिनः ।
सुप्रीतश्चाब्रवीद्राजा श्वो यातेति स मन्त्रिणः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


एकोनसप्ततितमे— ततः प्रभाते चतुरङ्गबलपरिवृतो राजा वसिष्ठवामदेवादिद्विजान्पुरस्कृत्य,

गत्वा चतुरहं मार्गं मिथिलामभ्युपेयिवान् ।

ततस्तदागमनजनितानन्देन जनकेन शतानन्दं पुरस्कृत्य स्वागतादिकुशलप्रश्नपूर्वकं पूजां कुर्वता

श्वः प्रभाते नरेन्द्रेदं निर्वर्तयितुमर्हसि ।
यज्ञस्यान्ते नरश्रेष्ठ विवाहमृषिसंमतम् ॥

इति पृष्टो दशरथः—

प्रतिग्रहो दातृवशः श्रुतमेतन्मया पुरा ।
यथा वक्ष्यसि धर्मज्ञ तत्करिष्यामहे वयम् ॥

इति प्रत्यवादीत् ।

सप्ततितमसर्गे— जनकोऽपि तद्वचनश्रवणसमनन्तरं शतानन्दाभ्यनुज्ञया भ्रातरं कुशध्वजं समानीय कथितनिजवृत्तान्तः तेन सह संमन्त्र्य सुदामानं मन्त्रिश्रेष्ठं

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्वगृहं प्रति दशरथानयनाय प्रेषयामास । दशरथोऽपि मन्त्रिपुरोहितबान्धवसमेतो जनकसमीपमागम्य—

विश्वामित्राभ्यनुज्ञातः सह सर्वैर्महर्षिभिः ।
एष वक्ष्यति धर्मात्मा वसिष्ठो मे यथाक्रमम् ॥

इत्यब्रवीत् । वसिष्ठोऽपि—

अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ।
तस्मान्मरीचिः संजज्ञे मरीचेः कश्यपः सुतः ॥

विवस्वान्कश्यपाज्जज्ञे मनुर्वैवस्वतः स्मृतः ।
मनुः प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः ॥

तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम् ।
इक्ष्वाकोस्तु सुतः श्रीमान्कुक्षिरित्येव विश्रुतः ॥

कुक्षेरथात्मजः श्रीमान्विकुक्षिरुदपद्यत ।
विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

बाणस्य तु महातेजा अनरण्यः प्रतापवान् ।
अनरण्यात्पृथुर्जज्ञे त्रिशङ्कुस्तु पृथोः सुतः ॥

त्रिशङ्कोरभवत्पुत्रो धुन्धुमारो महायशाः ।
धुन्धुमारान्महातेजा युवनाश्वो महाबलः ॥

युवनाश्वसुतः श्रीमान्मान्धाता पृथिवीपतिः ।
मान्धातुस्तु सुतः श्रीमान्सुसंधिरुदपद्यत ॥

सुसंधेरपि पुत्रौ द्वौ ध्रुवसंधिः प्रसेनजित् ।
यशस्वी ध्रुवसंधेस्तु भरतो नाम नामतः ॥

भरतात्सुमहातेजा असितो नाम जातवान् ।
यस्यैते प्रतिराजान उदपद्यन्त शत्रवः ॥

हैहयास्तालजङ्घाश्च शूराश्च शशिबिन्दवः ।
तान्स तु प्रतियुद्ध्यन्वै युद्धे राजा प्रवासितः ॥

हिमवन्तमुपागम्य भार्याभ्यां सहितस्ततः ।
असितोऽप्यबलो राजा मन्त्रिभिः सहितस्तथा ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरिति श्रुतिः।
एका गर्भविनाशाय सपत्न्यै सा गरं ददौ ॥

ततः शैलवनं रम्यं बभूवाभिरतो मुनिः।
भार्गवश्च्यवनो नाम हिमवन्तमुपाश्रितः॥

तत्रैका तु महाभागा भार्गवं देववर्चसम्।
ववन्दे पद्मपत्राक्षी काङ्क्षन्ती सुतमात्मनः॥

तमृषिं साभ्युपागम्य कालिन्दी चाभ्यवादयत्।
सतामभ्यवदद्विप्रः पुत्रेप्सुं पुत्रजन्मनि ॥

तव कुक्षौ महाभागे सुपुत्रः सुमहाबलः।
महावीर्यो महातेजा अचिरात्संजनिष्यति ॥

गरेण सहितः श्रीमान्मा शुचः कमलेक्षणे।
एवमुक्ता महाभागा असिते स्वर्गते सति ॥

विधाय चेतो नृपतौ विद्युल्लेखेव सुप्रभा।
च्यवनं तु नमस्कृत्य राजपुत्री पतिव्रता ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


पतिशोकातुरा तस्मात्पुत्रं देवी व्यजायत ।
सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया ॥

सह तेन गरेणैव जातः स सगरोऽभवत् ।
सगरस्यासमञ्जस्तु असमञ्जादथांशुमान् ॥

दिलीपोंऽशुमतः पुत्रो दिलीपस्य भगीरथः ।
भगीरथात्ककुत्स्थश्च ककुत्स्थस्य रघुः सुतः ॥

रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः ।
कल्माषपादो ह्यभवत्तस्माज्जातस्तु शङ्खणः ॥

सुदर्शनः शङ्खणस्य अग्निवर्णः सुदर्शनात् ।
शीघ्रगस्त्वग्निवर्णस्य शीघ्रगस्य मरुः सुतः ॥

मरोः प्रशुश्रुकस्त्वासीदम्बरीषः प्रशुश्रुकात् ।
अम्बरीषस्य पुत्रोऽभून्नहुषः पृथिवीपतिः ॥

नहुषस्य ययातिस्तु नाभागश्च ययातिजः ।
नाभागस्य बभूवाजः अजाद्दशरथोऽभवत् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तस्माद्दशरथाज्जातौ भ्रातरौ रामलक्ष्मणौ ।
आदिवंशाविशुद्धानां राज्ञां परमधर्मिणाम् ॥

इक्ष्वाकुकुलजातानां वीराणां सत्यवादिनाम् ।
रामलक्ष्मणयोरर्थे त्वत्सुते वरये नृप ॥

सदृशाभ्यां नरश्रेष्ठ सदृश्यौ दातुमर्हसि ।
एवं ब्रुवाणं जनकः प्रत्युवाच कृताञ्जलिः ।

श्रोतुमर्हसि भद्रं ते कुलं नः कीर्तितं परम् ।
प्रदाने हि मुनिश्रेष्ठ कुलं निरवशेषतः ॥

वक्तव्यं कुलजातेन तं निबोध महामुने ।
राजाभूत्त्रिषु लोकेषु विश्रुतः स्वेन कर्मणा ॥

निमिः परमधर्मात्मा सर्वसत्त्ववतां वरः ।
तस्य पुत्रो मिथिर्नाम जनितो मिथिपुत्रकः ॥

प्रथमो जनको नाम जनकादप्युदावसुः ।
उदावसोस्तु धर्मात्मा जातो वै नन्दिवर्धनः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

नन्दिवर्धनपुत्रस्तु सुकेतुर्नाम नामतः ।
सुकेतोरपि धर्मात्मा देवरातो महाबलः ॥

देवरातस्य राजर्षेर्बृहद्रथ इति स्मृतः ।
बृहद्रथस्य शूरोऽभून्महावीरः प्रतापवान् ॥

महावीरस्य धृतिमान्सुधृतिः सत्यविक्रमः ।
सुधृतेरपि धर्मात्मा धृष्टकेतुः सुधार्मिकः ॥

धृष्टकेतोस्तु राजर्षेर्हर्यश्व इति विश्रुतः ।
हर्यश्वस्य मरुः पुत्रो मरोः पुत्रः प्रतीन्धकः ॥

प्रतीन्धकस्य धर्मात्मा राज कीर्त्तिरथः सुतः ।
पुत्रः कीर्त्तिरथस्यापि देवमीढ इति स्मृतः ॥

देवमीढस्य विबुधो विबुधस्य महीध्रकः ।
महीध्रकसुतो राजा कीर्त्तिरातो महाबलः ॥

कीर्त्तिरातस्य राजर्षेर्महारोमा व्यजायत ।
महारोम्णः सुधर्मात्मा स्वर्णरोमा व्यजायत ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्वर्णरोमणस्तु राजर्षेर्ह्रस्वरोमा व्यजायत।
तस्य पुत्रद्वयं जज्ञे धर्मज्ञस्य महात्मनः।

ज्येष्ठोऽहमनुजो भ्राता मम वीरः कुशध्वजः॥
मां तु ज्येष्ठं पिता राज्ये सोऽभिषिच्य नराधिपः॥

कुशध्वजं समावेश्य भारं मयि वनं गतः।
कनीयानेष मे भ्राता अहं ज्येष्ठो महामुने॥

ददामि परमप्रीतो वध्वौ ते मुनिपुंगव।
सीतां रामाय भद्रं ते ऊर्मिलां लक्ष्मणाय च॥

वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम्।
द्वितीयामूर्मिलां चैव त्रिर्ददामि न संशयः॥

द्विसप्ततितमसर्गे— ततो जनकवचनश्रवणसमनन्तरं विश्वामित्रः कुलद्वयमपि प्रशस्य

सदृशो धर्मसंबन्धः सदृशो रूपसंपदा।

इति विश्वामित्रवचनेन च कुललक्षणादिपरीक्षापूर्वकं

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वधूवरयोः सदृशवयोरूपसंपन्नयोरेव विवाहः कर्तव्य इति सूचितम्। तथा चाश्वलायनाचार्याः— 'कुलमग्रे परीक्ष्यो मातृतः पितृतश्च' इति। 'यथोक्तं पुरस्तात्—' इति दशपेयोक्तम्। 'कुलपरीक्षणम्' इति दिष्टवान्— दशपेये च— 'ये मातृतः पितृतश्च दशपूरुषं समनुष्ठिताः। विद्यातपोभ्यां पुण्यैश्च कर्मभिरेषामुभयतः॥ नाब्राह्मण्यं निनयेयुः पितृत एक इत्येति' इति विवाहेऽप्यतिदिष्टवान्। मनुरपि—'महान्त्यपि समृद्धानि गोजाविधनधान्यतः। स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत्॥ हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम्। क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठकुलानि च' इति॥ यमः—'चतुर्दशकुलानीमान्यविवाह्यानि निर्दिशेत्। अनार्षेयं ब्राह्मणानामृत्विजां चैव वर्जयेत्॥ अत्युच्चमत्यतिह्रस्वमतिवर्णं च वर्जयेत्। हीनाङ्गमतिरिक्ताङ्गमामयाविकुलानि च॥ श्वित्रिकुष्ठिकुलादीनां कुर्याद्विपरिवर्जनम्। सदा कामकुलं वर्ज्यं रोमशानां च यत्कुलम्॥ अपस्मारिकुलं यच्च यच्च पाण्डुकुलं भवेत्। ये स्तेनाः पिशुनाः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


क्लीबा ये च नास्तिकवृत्तयः। विकर्मणा च जीवन्तो विकृताकृतयस्तथा ॥ प्रवृद्धवैराः शूरैर्ये राजकिल्बिषिणस्तथा। ब्रह्मस्वादाननित्याश्च कदर्याश्च विगर्हिताः ॥ न प्रजा येषु वंशेषु स्त्रीप्रजाप्रसवस्तथा। पतिघ्नश्च स्ववासिन्यस्ताश्च यत्नेन वर्जयेत्' इति। भारतेऽपि— 'यन्मूलं सर्वधर्माणां प्रजनस्य गृहस्य च। पितृदेवातिथीनां च तन्मे ब्रूहि पितामह' इति युधिष्ठिरप्रश्नस्य भीष्मोत्तरम्— 'शीलं वृत्तिं च विज्ञाय विद्यां योनिं च कर्म च। सद्भिरेवं प्रदातव्या कन्या गुणवते वरे' इति। उपादेयकुलान्युच्यन्ते। तत्र याज्ञवल्क्यः— 'दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात्' उपादेयेत्यर्थः ॥ मनुः— 'उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेत्सह। निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत् ॥ विशुद्धाः कर्मभिश्चैव श्रुतिस्मृतिनिदर्शितैः। अविप्लुतब्रह्मचर्या महाकुलसमन्विताः ॥ महाकुलेन संबद्धा महत्त्वे च व्यवस्थिताः। संतुष्टाः सज्जनहिताः साधवः समदर्शिनः ॥ लोभरागद्वेषमर्षणामोहादिविवर्जिताः। अक्रोधना सुप्रसादाः कार्याः संबन्धिनः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


सदा' इति । वरलक्षणमाह गौतमः— 'विद्याचारित्रबन्धुलक्षणशीललक्षणसंपन्नाय दद्यात्' । आपस्तम्बोऽपि— 'बन्धुशीललक्षनसंपन्नः श्रुतवानरोग इति वरसंपत्' इति । आश्वलायनोऽपि—'बुद्धिमते कन्यां प्रयच्छेत्' । इति । यमः– 'कुलं च शीलं च वपुर्वयश्च विद्यां च वित्तं च सनाथतां च । एतान्गुणान्सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम्' इति । कन्यालक्षणमाहाश्वलायनाचार्यः– 'बुद्धिरूपशीललक्षणसंपन्नामरोगामुपयच्छेत' । याज्ञवल्क्यश्च— 'अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् । उद्वहेत द्विजः कन्यामसपिण्डां यवीयसीम्' । मनुरपि— 'असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् । नालोमिकां नातिलोमां न वाचाटां न पिङ्गलाम् ॥ नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् । न पक्ष्यहिप्रेष्यनाम्नीं न विभीषणनामिकाम् ॥ अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् । तनुरोमकेशदशनां मृद्वङ्गीमुद्वहेत्स्त्रियम् ॥


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता। नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया'। आपस्तम्बोऽपि—'दत्तां गुप्तां द्योतामृषभां शरभां विनतां विकटां मुण्डां मण्डूषिकां सांकारिकां रातां पालीं मित्रां स्वनुजां वर्षकारीं च वर्जयेत्। नक्षत्रनामा नदीनामा वृक्षनामा च गर्हिताः। सर्वाश्च रेफलकारोपान्ता वरणे परिवर्जयेत्'। गौतमः—'गृहस्थः सदृशीं भार्यां विन्देत अनन्यपूर्वां यवीयसीम्' इति। विष्णुः—'न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम्। न घर्घरस्वरां क्षामां तथा काकस्वरां न च॥ नातिवृत्तेक्षणां तद्वद्वृत्ताक्षीं नोद्वहेद्बुधः। यस्याश्च रोमशे जङ्घे गुल्फौ यस्यास्तथोन्नतौ॥ गण्डयोः कूपरे यस्या हसन्त्यास्तां च नोद्वहेत्। नातिरूक्षच्छविं पाण्डुं करजामरुणेक्षणाम्। आपीनहस्तपादां च न कन्यामुद्वहेद्बुधः॥ न वामनां नातिदीर्घां नोद्वहेत्संहतभ्रुवम्। न चातिच्छिद्रदशनां न करालमुखीं नरः' इति।

इत्युक्त्वा भरतशत्रुघ्नाभ्यामपि कुशध्वजसुते प्रतिरूपे प्रदातव्ये इति जनकमवदत्—

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


जनकश्च—

एकाह्ना राजपुत्रीणां चतसृणां महामुने ।
पाणीन्गृह्णन्तु चत्वारो राजपुत्रा महाबलाः ॥

उत्तरे दिवसे ब्रह्मन्फल्गुनीभ्यां मनीषिणः ।
वैवाहिकं प्रशंसन्ति भगो यत्र प्रजापतिः ॥

इति विश्वामित्रं सादरमब्रवीत् । अनेन उत्तरफल्गुन्यां विवाहः प्रशस्त इति सूचितम् । तथा च बोधायनः— 'रोहिणी मृगशीर्षण्युत्तरफल्गुनी स्वातीति विवाहस्य नक्षत्राणि'। 'मघा मृगशिरो हस्तस्वाती मूलानुराधयोः। रेवती रोहिणी चैव उत्तराणि त्रयस्तथा ॥ आवाहे च विवाहे च विद्यासंग्रहणेषु च। वापयेत्सर्वबीजानि गृहं ग्रामं प्रवेशनम्'। ततः जनकवचनश्रवणसंजातसंतोषो दशरथः परमनुगृहीतोऽस्मि युवाभ्यामसंख्येयगुणाभ्यां भ्रातृभ्यामिति जनककुशध्वजावापृच्छ्य वसिष्ठविश्वामित्रपुरस्कृतः स्वमालयं जगाम ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


स गत्वा निलयं राजा श्राद्धं कृत्वा विधानतः।
प्रभाते काल्यमुत्थाय चक्रे गोदानमुत्तमम्॥

अनेन मङ्गलकर्मसु आदौ श्राद्धं कर्तव्यमिति सूचितम्। तथा च विष्णुपुराणे— 'सचेलस्य पितुः स्नानं जाते पुत्रे विधीयते। जातकर्म तदा कुर्याच्छ्राद्धमाभ्युदयं चरेत्॥ कन्यापुत्रविवाहेषु प्रवेशेषु च वेश्मनः। सीमन्तोन्नयने चैव पित्रादिमुखदर्शने' इति। ततः पुत्रवत्सलो राजा एकैकपुत्रोद्देशेन स्वर्णशृङ्गालंकृतानेकशतसहस्रगवीर्बहुधनवस्त्राभरणं च दत्तवान्। गोदाने आश्वलायनः— 'एतेन गोदानं षोडशे वर्षे' इति। खादिरगृह्ये— 'गोदाने चौलवत्कल्पः सलोमं वापयेत् गोअश्वाविमिथुनानि दक्षिणा'। त्रिसप्ततितमे— अथ स्वस्त्रीयसंदर्शनाय समागतं युधाजितं परमसत्कारैः संपूज्य अपरेद्युः कृतनित्यक्रियो वसिष्ठादिपरमर्षिसहितः कृतकौतुकमङ्गलैः सर्वाभरणभूषितैः पुत्रैः सहितो दशरथः, 'दातारं त्वामभिकाङ्क्षते' इत्यभिहितो जनकोऽपि तान्सर्वान्विवाहमण्डपं

प्रवेश्य

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

काश्यपश्च ऋषे सर्वैर्ऋषिभिः सह धार्मिक ।
रामस्य लोकरामस्य क्रियां वैवाहिकीं विभो ॥

इति वसिष्ठमब्रवीत् । वसिष्ठोऽपि गन्धपुष्पलाजपूर्णपात्रसाङ्कुरजलकुम्भादिभिः विवाहमण्डपमलंकृत्य मन्त्रपूर्वकं विवाहाग्निमुपसमाधाय यथाविधि होमं कृतवान् । ततो जनकः सर्वाभरणभूषितां सीतामग्नेः समक्षं संस्थाप्य राघवाभिमुखो भूत्वा सादरमिदमब्रवीत्––

इयं सीता मम सुता सहधर्मचरी तव ।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ॥

पतिव्रता महाभागा च्छायेवानुगता सदा ।
इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तदा ॥

नन्वनेनात्र श्रीरामभद्रस्य विवाह उक्तः । विवाहाश्चाष्टविधाः स्मृतिषु प्रसिद्धाः । तथा च मनुः–– 'ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः । गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥ आच्छाद्य चार्चयित्वा च श्रुति-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


शीलवते स्वयम् । आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः ॥ यज्ञे च वितते सम्यगृत्विजे कर्म कुर्वते । अलंकृत्य सुतादानं दैवं धर्मं प्रचक्षते ॥ एकं गोमिथुनं द्वे वा वरादादाय धर्मतः । कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते ॥ सहोभौ चरतां धर्ममिति वाचानुभाष्य च । कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥ ज्ञातिभ्यो द्राविणं दत्त्वा कन्यायै चैव शक्तितः । कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते ॥ इच्छयान्योन्यसंसर्गः कन्यायाश्च वरस्य च । गांधर्वः स च विज्ञेयो मैथुन्यः कामसंभवः ॥ हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात् । प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥ सुप्तां मत्तां प्रमत्तां वा रहो वा यत्र गच्छति । स पापिष्ठो विवाहानां पैशाचश्चाष्टमोऽधमः । एतेष्वष्टसु विवाहेषु अयं विवाहो न कोऽपि भवितुमर्हति, तदुक्तलक्षणाभावात् । तथा हि— न तावद्ब्राह्मः, आहूय दानाभावात्; नापि दैवः, क्षत्रियस्यार्त्विज्यासंभवात्; नाप्यार्षः, कन्यापित्रे गोमिथुनगोदानाभावात्; नापि प्राजापत्यः,

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वीर्यशुल्केति कथनात्; नाप्यासुरः, कन्यापितुर्द्रव्यदानाभावात्; नापि गांधर्वः, परस्परानुरागेण संसर्गाभावात्; नापि राक्षसः, छेदनहननादिना प्रसह्य कन्याहरणाभावात्; नापि पैशाचः, स्वापप्रमादान्यतमावस्थायुक्तायाः रहसि धर्षणाभावात्; तस्मात्कतमोऽयं विवाह इति चेत्, सहधर्मचरी तवेत्युक्त्वा प्राजापत्य एव विवाहः। तथा चाश्वलायनः—'सह धर्मं चरत इति प्राजापत्यः' इति। गौतमोऽपि—'संयोगमन्त्रः प्राजापत्ये सह धर्मं चर्यताम्' इति। मनुरपि—'सहोभौ चरतां धर्ममिति वाचानुभाष्य च। कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः' इति। बोधायनोऽपि—'आच्छाद्यालंकृत्यैषा सहधर्मं चर्यतामिति प्राजापत्यः' इति। ननु क्षत्रियाणां प्राजापत्यविवाहो न संभवति, वर्णविभागेन ब्राह्मादीनां विवाहानां धर्म्यत्वप्रशस्तत्वादिव्यवस्थां कुर्वद्भिः कैश्चिद्धर्मशास्त्रकृद्भिः प्राजापत्यव्यतिरिक्तविवाहानामेव क्षत्रियस्योक्तत्वात्। तथा हि एष्वष्टसु विवाहेषु 'षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान्। विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यान्नराक्षसान्।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

चतुरो ब्राह्मणस्याद्यान् प्रशस्तान्कवयो विदुः। राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः’ इति वचनाभ्यां ब्राह्मणस्य ब्राह्मदैवार्षप्राजापत्यासुरगान्धर्वाः धर्म्याः, क्षत्रियस्य आसुरगान्धर्वराक्षसपैशाचा धर्म्याः, विट्शूद्रयोः आसुरगान्धर्वपैशाचा धर्म्याः, ब्राह्मणस्य ब्राह्मदैवर्षिप्राजापत्याः प्रशस्ताः, राक्षसः क्षत्रियस्य, वैश्यशूद्रयोश्च आसुरः प्रशस्त इति मनुना प्रतिपादितत्वात्; बोधायनेनापि— ‘तेषां चत्वारः पूर्वे ब्राह्मणस्य तेष्वपि पूर्वः पूर्वः श्रेयान्’ ‘उत्तरेषामुत्तरोत्तरः पापीयान्’ ‘अत्रापि षष्ठसप्तमौ क्षत्रधर्मानुगतौ तत्प्रत्ययत्वात्क्षत्रियस्य’ ‘पञ्चमाष्टमौ वैश्यशूद्राणाम्’ ‘अयन्त्रितकलत्रा हि वैश्यशूद्रा भवन्ति’ ‘गान्धर्वमप्येके प्रशंसन्ति सर्वेषां स्नेहानुगतत्वात्’ इति सूत्रेण ब्राह्मणस्य ब्राह्मप्राजापत्यार्षदैवाश्चत्वारो विवाहाः। तेषां पूर्वः पूर्वः श्रेयान्। क्षत्रियस्यासुरराक्षसौ द्वौ। विट्शूद्रयोस्तु गान्धर्वपैशाचौ। सर्वेषां वा गान्धर्वो विवाह इति प्रतिपादितत्वात्; तथा चैवं स्मृतिपर्यालोचनया प्राजापत्यविवाहव्यतिरिक्तानामेव प्रशस्त-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्वधर्म्यत्वाभ्यां क्षत्रियविषयतया नियमितत्वात्, कथं क्षत्रियस्य दाशरथेः प्राजापत्यो विवाह उक्त इति चेन्न। मनुना 'पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह। पैशाचश्चासुरश्चैव न कर्तव्यौ कथंचन' इति। अस्यार्थः— 'पञ्चानां प्राजापत्यादीनां मध्ये प्राजापत्यगान्धर्वराक्षसा धर्म्याः धर्मादनपेताः। यथोक्तालाभे चतुर्णां वर्णानां द्वावधर्म्यौ। पैशाचासुरौ न कर्तव्यौ। तत्र क्षत्रियवृत्तिस्थस्य विप्रस्य राक्षसः। अयं तु आसुरपैशाचौ शूद्रविशोः विकल्पितौ। ब्राह्मादि ब्राह्मणस्यैव' इति राघवानन्दीये पूर्वोक्तवर्णविभागेन व्यवस्थितविवाहालाभे प्राजापत्यगान्धर्वराक्षसाः सर्ववर्णसाधारण्येन धर्म्या इति प्रतिपादनात् क्षत्रियस्य प्राजापत्यो विवाहः सिद्ध एवेत्युक्तम्। एवमष्टावेव विवाहान्प्रतिपाद्य, 'चत्वारो धर्म्याः प्रथमाः षडित्येके' इति सूत्रेण वर्णविभागानादरेण ब्राह्मादीनां चतुर्णां षण्णां वा विवाहानां धर्म्यत्वं प्रतिपादयद्भिर्गौतमाचार्यैः प्राजापत्यस्यापि क्षत्रियविषयेऽभ्यनुज्ञातत्वात्। तथा च मिताक्षरायां व्याख्यातम्। एवमष्टौ विवाहा

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

उक्ताः। तेषु चत्वारो धर्म्याः प्रथमाः आदितश्चत्वारो धर्म्याः धर्मादनपेताः प्रशस्ताः। अविशेषात्सर्वेषामेव वर्णानां षडित्येके एक आचार्या षट् धर्म्या इत्याहुः प्रथमा इत्येव। आपस्तम्बीयेऽपि— 'तेषां त्रय आद्याः प्रशस्ताः पूर्वः पूर्वः श्रेयान्' इति वर्णविभागं विना विशेषेणैव सर्वविषयत्वं प्रतिपादितम्। नन्वेवमपि क्षत्रियस्य राक्षसविवाहस्यैव प्रशस्ततया कथं प्राजापत्यः कृत इति चेन्न, युद्धकाण्डे मेघनादशरप्रहारवेदनया

ब्राह्ममस्त्रं प्रयोक्ष्यामि वधार्थं सर्वरक्षसाम्।

इति वदन्तं लक्ष्मणं प्रति

नैकस्य हेतो रक्षांसि पृथिव्यां हन्तुमर्हसि।

इति, उत्तरकाण्डे राजसूयाचरणे

पृथिव्यां राजवंश्यानां विनाशो यत्र दृश्यते।
सर्वेषां भविता तत्र क्षयः सर्वान्तकोपमः॥

इति वदन्तं भरतं प्रति

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

व्याहृतं पुरुषव्याघ्र पृथिव्याः परिपालनम् ।
इति तस्मादभिप्रायाद्राजसूयात्क्रतूत्तमात् ॥
निवृत्तो हि महाबाहो तव सुव्याहृतेन च ।

इत्यादिवचनैः श्रीरामभद्रस्य सकललोकदयापरत्वावगमात् । 'हत्वा च्छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात् । प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते' इति प्रसह्यादानरूपराक्षसस्य विवाहस्य अतिक्रूरकृत्यतया सकललोकदयापरेण रामेण तं परित्यज्य प्राजापत्यो विवाहः कृत इति न दोषः । ननु

वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम् ।
द्वितीयामूर्मिलां चैव त्रिर्ददामि न संशयः ॥

इत्यत्र शुल्कशब्दस्य क्रयसाधनवचनत्वात् वीर्यमेव शुल्कं क्रयसाधनीभूतं यस्या इति व्युत्पत्त्या शौर्येण सीतायाः क्रयः प्रतीयते तदनुचितम्, क्रयस्य निषिद्धत्वात् । तथा च मनुः— 'न कन्यायाः पिता विद्वान्गृह्णीयाच्छुल्कमण्वपि । गृह्णन्हि शुल्कं लोभेन स्यान्नरो-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ऽपत्यविक्रयी' इति। बोधायनोऽपि— 'शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः। आत्मविक्रयिणः पापाः महाकिल्बिषकारकाः। पतन्ति नरके घोरे घ्नन्ति चासप्तमं कुलम्' इति। काश्यपोऽपि— 'क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते। न सा दैवेन साविच्ये दासीं तां काश्यपोऽब्रवीत्'। न च क्रयश्रवणेऽपि आर्षवदनिषिद्धत्वं किं न स्यादिति वाच्यम्, आर्षविवाहस्यापि क्रयरूपतया बहुधा निषिद्धत्वात्। तथा च मनुः— 'आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्। अल्पोऽप्ययं महान्वापि विक्रयस्तावदेव सः' इति। तस्माद्वीर्यशुल्केति प्रतिपादनमसंगतमिति चेत्, नायमार्षः येनार्षे गोमिथुनं दद्यादित्यादि निषेधो भवेत्। नाप्यासुरः कन्यापितुर्द्रव्यदानाभावात्। नाप्ययमतिरिक्तः, सर्वधर्मशास्त्रकारैर्वीर्यशुल्केन विवाहान्तरस्याकथनात्। तस्मात् 'विद्यया ब्राह्मणः श्रेष्ठो वीर्येण क्षत्रियः स्मृतः। वैश्यस्तु धान्यधनतः शूद्रश्चैव तु जन्मतः' इति वचनेन क्षत्रियेषु वीर्यवर एव श्रेष्ठत्वात्तादृशाय कन्यां प्रदातुं वी-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

र्यपरिशोधनं कृतमिति शुल्केति कथनाच्छुल्कशब्द औपचारिकः । शुल्कनिषेधवचनानि तु स्वोपजीवनाय द्रव्यपरिग्रहविषयाणि । तथा च मनुः— 'स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः । नारी यानानि वस्त्रं वा ते पापा यान्त्यधोगतिम्' । 'अत्र गाथा यमोद्गीताः कीर्तयन्ति पुराविदः । यथान्योऽपि न विक्रेयः पूरुषः किं पुनः प्रजाः ॥ यो मनुष्यो मनुष्यस्य विक्रयाद्धनमिच्छति । तस्य मूत्रं पुरीषं च स परत्रोपजीवति' । भारतेऽपि— 'यो मनुष्यः स्वकं पुत्रं विक्रयाद्धनमिच्छति । यः कन्यां वा जीवितार्थाय शुल्केन प्रयच्छति ॥ सप्तावरे महाघोरे निरये कालसाह्वये । स्वेदं मूत्रं पुरीषं च तस्मिन्मूढः समश्नुते' इति कन्यार्थतया वरबान्धवदत्तवस्त्राभरणादिभिः कन्यालंकारेण विना स्वार्थतया द्रव्यग्रहणात्स्वेनानुपभुक्तत्वाच्च दोषः । तथा च मनुः— 'यासां नाददते शुल्कं ज्ञातयो न स विक्रयः । अर्हणं तत्कुमारीणामानृशंस्यं प्रचक्षते' इति । एवं च स्वानुपजीवने दोषाभाव इत्युक्तं भवति । तस्मादयं प्राजापत्य एव । अयं च

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


विवाहः महाफलः। तथा चाश्वलायनः— 'सह धर्मं चरत इति प्राजापत्यस्तस्यां जातोऽष्टावरानष्ट परान्पुनात्युभयतः' इति। गौतमोऽपि— 'दशैव प्राजापत्यात्' इति। मन्त्रपूतं जलमित्यनेनोदकपूर्वतयैव कन्यादानं कर्तव्यमिति सूचितम्। तथा चापस्तम्बः— 'सर्वाण्युदकपूर्वाणि दानानि' इति। देवलश्च— 'पूर्वे विवाहाश्चत्वारो धर्म्यास्तोयप्रदानिकाः' इति।

प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना।

इति। अत्र चैवं व्यवस्था, सवर्णासु पाणिग्रहणमेव नियतम्। असवर्णासु तु शरप्रतोदवस्त्रदशादिग्रहणम्। तथा च मनुः— 'पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते। असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि॥ शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया। वासोदशा शूद्रया तु वर्णोत्कृष्टस्य वेदने'। क्षत्रियया गृहीतः शरः उत्कृष्टेन वरेण ग्राह्यः, न तु वरेण गृहीतः शरः कन्यया; एवं प्रतोदादिषु॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


साधु साध्विति देवानामृषीणां वदतां तदा ।
देवदुन्दुभिनिर्घोषः पुष्पवर्षो महानभूत् ॥

एवं दत्त्वा तदा सीतां मन्त्रोदकपुरस्कृताम् ।
अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ॥

लक्ष्मणागच्छ भद्रं ते ऊर्मिलामुद्यतामिमाम् ।
प्रतीच्छ पाणिं गृह्णीष्व मा भूत्कालस्य पर्ययः ॥

तमेवमुक्त्वा जनको भरतं चाभ्यभाषत ।
गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन ॥

शत्रुघ्नं चापि धर्मात्मा अब्रवीज्जनकेश्वरः ।
श्रुतकीर्त्या महाबाहो पाणिं गृह्णीष्व पाणिना ॥

सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः ।
पत्नीभिः सन्तु काकुत्स्था मा भूत्कालस्य पर्ययः ॥

जनकस्य वचः श्रुत्वा पाणीन्पाणिभिरस्पृशन् ।
चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



काकुत्स्थैश्च गृहीतेषु सलिलेनैव पाणिषु ।
पुष्पवृष्टिर्महत्यासीदन्तरिक्षात्सुभास्वरा ॥

दिव्यदुन्दुभिनिर्घोषैर्गीतवादित्रनिस्वनैः ।
ननृतुश्चाप्सरःसङ्घा गन्धर्वाश्च जगुः कलम् ॥

अथोपकार्यां जग्मुस्ते सभार्या रघुनन्दनाः ।
राजाप्यनुययौ पश्यन्सर्षिसङ्घः सबान्धवः ॥

चतुःसप्ततितमे— ततो दशरथजनकावामन्त्र्य कुमारांश्च रामलक्ष्मणादीनाशीर्भिः संयोज्य प्रतियाते विश्वामित्रे दशरथोऽपि जनकमामन्त्र्य पुरीं प्रतस्थे ॥

अथ राजा विदेहानां ददौ कन्याधनं बहु ।
गवां शतसहस्राणि बहूनि मिथिलेश्वरः ॥

कम्बलानां च मुख्यानां क्षौमान्कोट्यम्बराणि च ।
हस्त्यश्वरथपादातं दिव्यरूपं स्वलंकृतम् ॥

ददौ कन्यापिता तासां दासीदासमनुत्तमम् ।
हिरण्यस्य सुवर्णस्य मुक्तानां विद्रुमस्य च ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ददौ परमसंहृष्टः कन्याधनमनुत्तमम् ॥

अनेन विवाहानन्तरं कन्यापित्रा कन्यायै गवाश्वादि बहुधनं देयमित्युक्तम् । तथा चादिपर्वणि द्रौपदीविवाहे यौतकम्— 'कृते विवाहे द्रुपदो धनं ददौ महारथेभ्यो बहुरूपमुत्तमम् । शतं रथानां वरहेममालिनां चतुर्युजां हेमखलीनशालिनाम् ॥ शतं गजानामपि पद्मिनां तथा शतं गिरीणामिव हेमशृङ्गिणाम् । तथैव दासीशतमग्र्ययौवनं महार्हवेषाभरणाम्बरस्रजम् ॥ पृथक्पृथक्चैव दशान्वितायुतं धनं ददौ सौमकिरग्निसाक्षिकम् । तथैव वस्त्राणि विभूषणानि प्रभावयुक्तानि महानुभावः ॥ कृते विवाहे तु ततस्तु पाण्डवाः प्रभूतरत्नामुपलभ्य तां श्रियम् । विजह्रुरिन्द्रप्रतिमा महाबलाः पुरे तु पाञ्चालनृपस्य तस्य' इति । सुभद्राविवाहे— तेषां ददौ हृषीकेशः कन्यार्थे धनमुत्तमम् । हरणं वै सुभद्राया ज्ञातिदेयं महायशाः ॥ रथानां काञ्चनाङ्गानां किङ्किणीजालमालिनाम् । चतुर्युजामुपेतानां सूतैः कुशलशिक्षितैः ॥ सहस्रं प्रददौ कृष्णो गवामयुतमेव च । श्रीमा-


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


न्माथुरदेश्यानां दोग्ध्रीणां पुण्यवर्चसाम् ॥ बडवानां च शुद्धानां चन्द्रांशुसमवर्चसाम् । ददौ जनार्दनः प्रीत्या सहस्रं हेमभूषणम् ॥ तथैवाश्वतरीणां च दान्तानां वातरंहसाम् । शतान्यञ्जनकेशीनां श्वेतानां पञ्च पञ्च च ॥ स्नानपानोत्सवे चैव प्रयुक्तं वयसान्वितम् । स्त्रीणां सहस्रं गौरीणां सुवेषाणां सुवर्चसाम् ॥ सुवर्णशतकण्ठीनामरोगाणां स्वलंकृताम । परिचर्यासु दक्षाणां प्रददौ पुष्करेक्षणः ॥ पृष्ठ्यानामपि चाश्वानां बाह्लीकानां जनार्दनः । ददौ शतसहस्राख्यं कन्याधनमनुत्तमम् ॥ कृताकृतस्य मुख्यस्य कनकस्याग्निवर्चसः । मनुष्यभारां दाशार्हो ददौ दश जनार्दनः ॥ गजानां तु प्रभिन्नानां त्रिधा प्रस्रवतां मदम् । गिरिकूटनिकाशानां समरेष्वनिवर्तिनाम् ॥ क्लृप्तानां पटुघण्टानां चारूणां हेममालिनाम् । हस्त्यारोहैरुपेतानां सहस्रं साहसप्रियः ॥ रामः पाणिग्रहणिकं ददौ पार्थाय लाङ्गली । प्रीयमाणो हलधरः संबन्धं प्रतिमानयन् ॥ स महाधनरत्नौघो वस्त्रकम्बलफेनवान् । महागजमहाग्राहः पताकाशैवलाकुलः ॥ पाण्डुसीरसमाविद्धः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

प्रविवेश महाधनः । पूर्णमापूरयंस्तेषां द्विषच्छोकावहोऽभवत् ॥ प्रतिजग्राह तत्सर्वं धर्मराजो युधिष्ठिरः' इति । अत्रान्तरे हरधनुर्भङ्गश्रवणकुपितजामदग्न्यागमनसंसूचकान्यशिवानि निमित्तानि संप्रेक्ष्य भयचकितान्तःकरणेन दशरथेन

किमिदं हृदयोत्कम्पि मनो मम विषीदति ।

इति पृष्टो वसिष्ठः

उवाच मधुरां वाणीं श्रूयतामस्य यत्फलम् ।
उपस्थितं भयं घोरं दिव्यं पक्षिमुखाच्च्युतम् ॥

मृगाः प्रशमयन्त्येते संतापस्त्यज्यतामयम् ।
तेषां संवदतां तत्र वायुः प्रादुर्बभूव ह ॥

कम्पयन्मेदिनीं सर्वां पातयंश्च द्रुमाञ्छुभान् ।
तमसा संवृतः सूर्यः सर्वा न प्रबभुर्दिशः ॥

भस्मना चावृतं सर्वं संमूढमिव तद्बलम् ।
वसिष्ठो मुनयश्चान्ये राजा च ससुतस्तदा ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ससंज्ञा इव तत्रासन्सर्वमन्यद्विचेतनम्।
तस्मिंस्तमसि घोरे तु भस्मच्छन्नेव सा चमूः॥

ददर्श भीमसंकाशं जटामण्डलधारिणम्।
भार्गवं जामदग्न्यं तं राजराजविमर्दनम्॥

कैलासमिव दुर्धर्षं कालाग्निमिव दुःसहम्।
ज्वलन्तमिव तेजोभिर्दुर्निरीक्ष्यं पृथग्जनैः॥

स्कन्धे चासज्ज्य परशुं धनुर्विद्युद्गणोपमम्।
प्रगृह्य शरमुख्यं च त्रिपुरघ्नं यथा हरम्॥

ततो वसिष्ठप्रमुखाः सर्वे च परमर्षयः क्षत्रस्योत्सादनं भूयः किं चिकीर्षितमिति सभयं तमर्घ्यपाद्यादिभिरभ्यर्चयामासुः।

प्रतिगृह्य तु तां पूजामृषिदत्तां प्रतापवान्।
रामं दाशरथिं रामो जामदग्न्योऽभ्यभाषत॥

पञ्चसप्ततितमे— ततस्त्वत्कृतधनुर्भङ्गश्रवणजनितविस्मयः वैष्णवधनुषः पूरणे ज्ञातबलोऽहं द्वन्द्वयुद्धं ते दा-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्यामीति जानकीनायकं प्रति जल्पन्तं जामदग्न्यं क्षत्ररोषात्प्रशान्तः सन् इतः परं शस्त्रं न गृहिष्यामीति सहस्राक्षसंनिधौ प्रतिज्ञापूर्वकं शस्त्रं निक्षिप्य काश्यपाय च दत्त्वा वसुधाम् उग्रे तपसि वर्तमानः कथं पुनर्मत्कुलविनाशाय संप्राप्तवानिति दशरथः समभाषत। जामदग्न्योऽपि अनादृत्य दशरथमुदीरितवचनं राममेवाभ्यभाषत; पुरा खलु विष्णुशितिकण्ठयोर्बलाबलं जिज्ञासमानैर्देवैः प्रार्थितेन ब्रह्मणा दक्षयज्ञवधे समुत्पादितपरस्परविरोधयोर्विश्वकर्मनिर्मितधनुषी आदाय परस्परजयैषिणोः प्रवृत्ते युद्धे शितिकण्ठो विष्णुहुंकारेण भग्नशरासनोऽभूत् ॥

जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः ।
अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तदा ॥

अनेन शिवाद्विष्णोरुत्कर्षः प्रतिपादितः। अयमेवार्थः विष्णुपुराणे कृष्णबाणासुरयुद्धे प्रतिपादितः। तथा हि— 'ततः समस्तसैन्येन दैतेयानां बलेः सुतः। युयुधे शंक-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


रश्चैव कार्त्तिकेयश्च शौरिणा ॥ हरिशंकरयोर्युद्धमतीवासीत्सुदारुणम् । जृम्भणास्त्रेण गोविन्दो जृम्भयामास शंकरम् ॥ जृम्भाभिभूतस्तु हरो रथोपस्थ उपाविशत् । न शशाक तदा योद्धुं कृष्णेनाक्लिष्टकर्मणा ॥ जृम्भिते शंकरे नष्टदैत्यसैन्ये गते गुहे । नष्टप्रमथसैन्ये च संक्षयं शार्ङ्गधन्वना ॥ नन्दीशसंगृहीताश्वमधिरूढो महारथम् । बाणस्तत्र ययौ योद्धुं कृष्णकार्ष्णिबलैः सह ॥ ततोऽर्कशतसंघाततेजसा सदृशद्युतिः । जग्राह दैत्यचक्रारिर्हरिश्चक्रं सुदर्शनम् ॥ मुञ्चतो बाणनाशाय तच्चक्रं मधुविद्विषः ॥ मुमोच बाणमुद्दिश्य च्छेत्तुं बाहुवनं रिपोः । क्रमेण तत्तु बाहूनां बाणस्याच्युतचोदितम् ॥ भेदं चक्रे सुरेशास्त्रं शस्त्रौघक्षपणादृतम् । भिन्ने बाहुवने तत्तु करस्थं मधुसूदनः ॥ मुमुक्षुर्बाणनाशाय विज्ञातस्त्रिपुरद्विषा । सहोपेत्याह गोविन्दं सान्त्वपूर्वमुमापतिः ॥ विलोक्य बाणं दोर्दण्डभेदासृक्स्राववर्षिणम् । शंकर उवाच— कृष्ण कृष्ण जगन्नाथ जाने त्वां पुरुषोत्तमम् । परेशं परमात्मानमनादिनिधनं परम् ॥ देवतिर्यङ्मनुष्येषु शरीरग्रहणा-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्मिका। लीलेयं सर्वभूतस्य तव चेष्टोपलक्षणा॥ तत्प्रसी-दाभयं दत्तं बाणस्यास्य मया प्रभो। तत्त्वया नानृतं कार्यं यन्मया व्याहृतं वचः॥ अस्मत्संश्रयदृप्तोऽयमपराधी तवाच्युत। मया दत्तवरो दैत्यस्ततस्त्वां क्षमयाम्यहम्॥ पराशरः— इत्युक्तः प्राह गोविन्दः शूलपाणिमुमापतिम्। प्रसन्नवदनो भूत्वा गतामर्षोऽसुरं प्रति॥ युष्मद्दत्तवरो बाणो जीवतामेष शंकर। त्वद्वाक्यगौरवादेतन्मया चक्रं निवर्तितम्॥ त्वया यदभयं दत्तं तद्दत्तमखिलं मया' इति विष्णुपराक्रमेण शिवस्य जृम्भणप्रतिपादनात्। तथा हरिवंशेऽपि— 'त्रिपुरान्तकरं बाणं जग्राह स चतुर्मुखम्। संदधत्कार्मुके चैव क्षेप्तुकामस्त्रिलोचनः॥ विज्ञातो वासुदेवेन चित्तज्ञेन महात्मना। जृम्भणं नाम सोऽप्यस्त्रं जग्राह मधुसूदनः॥ हरं स जृम्भयामास क्षिप्रकारी महाबलः। सशरः सधनुश्चैव हरस्तेनाशु जृम्भितः॥ संज्ञां न लेभे भगवान्विजेता सुररक्षसाम्। सशरं सधनुष्कं च दृष्ट्वात्मानं विजृम्भितम्॥ ततो ननाद भूतात्मा स्निग्धगम्भीरनिस्वनः। दृष्ट्वा तु भगवान्ब्रह्मा रुद्रं वचन-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मब्रवीत् । सृष्टो महासुरविधः किं भूयः परिरक्षसे । न च युद्धं महाबाहो तव कृष्णेन रोचते' इति विष्णुप्रहितः जृम्भणास्त्रेण शिवस्य जृम्भितत्वप्रतिपादनाद्विष्णुरेवाधिकपूज्यश्च, शिवस्तद्भक्ताग्रेसरः पूजकश्चेति केचिदाहुः । अयमर्थः सर्वपुराणेषु प्रसिद्धः विस्तरभयान्न लिखितः । अन्ये तु

श्रीमतो नीलकण्ठस्य कृत्यं हि दुरतिक्रमम् ॥

इत्युत्तररामायणे रामवचनेन

अत्र पूर्वं महादेवः प्रसादमकरोत्प्रभुः ॥

इति युद्धकाण्डे प्रतिप्रयाणे रामवचनेन च शिव एव विष्णोरधिकः । अयं चार्थः द्रोणपर्वणि शतरुद्रीये— अश्वत्थामा सेनासहितकृष्णार्जुनवधाय प्रयुक्तं नारायणास्त्रं मोघं दृष्ट्वा रथादाप्लुत्य धिग्धिगित्युक्त्वा गच्छन्मध्येमार्गं यदृच्छया यान्तं व्यासं दृष्ट्वा कथमेतादृशमस्त्रं मोघमभवादिति पप्रच्छ । व्यासः— 'महान्तमिममर्थं मां यत्त्वं पृच्छसि विस्मयात् । तं प्रवक्ष्यामि ते सर्वं

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

समाधाय मनः शृणु'। पुरा किल केनचित्कारणेन नारायणः धर्मस्य पुत्रो भूत्वा तुहिनगिरौ बहुवर्षसहस्राणि तपश्चरन् तपसा प्राप्तब्रह्मभावोऽभूत्। 'ततो विश्वेश्वरं योनिं विश्वस्य जगतः पतिम् । ददर्श भृशदुर्दर्शं सर्वदेवेशमीश्वरम् । अणीयांसमणुभ्यश्च बृहद्भ्यश्च महत्तरम् । रुद्रमीशानं वृषभं हरं शंभुं कपर्दिनम् । चेकितानं परां योनिं तिष्ठतो गच्छतश्च ह । दुर्वारणं दुर्दृशं तिग्ममन्युं महात्मानं सर्वहरं प्रचेतसम् । दिव्यं चापमिषुधी चाददानं हिरण्यवर्माणमनन्तवीर्यम् ॥ पिनाकिनं वज्रिणं दीप्तशूलं परश्वधिनं गदिनं स्वायतासिम् । यं पश्यन्ति ब्राह्मणाः साधुवृत्ताः क्षीणे पापे मनसा यं विशोकाः ॥ तं निष्टपन्तं तपसा धर्ममीड्यं तद्भक्त्या वै विश्वरूपं ददर्श । दृष्ट्वा चैनं वाङ्मनोबुद्धिदेहैः संहृष्टात्मा मुमुदे वासुदेवः ॥ ततो नारायणो देवं ववन्दे विश्वतोभवम् । मुमुदे पृथुचार्वङ्ग्या पार्वत्या सहितं प्रभुम् ॥ अजमीशानमव्यग्रं कारणात्मानमच्युतम् । अभिवाद्याथ रुद्राय सद्योऽन्धकनिपातिने ॥ पद्माक्षस्तं

D 27

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

विरूपाक्षमभितुष्टाव भक्तिमान् । नारायणः— 'त्वत्संभूता भूतकृतो वरेण्य गोप्तारोऽस्य भुवनस्यादिदेव । आविश्येमां धरणीं येऽभ्यरक्षन्पुरा पुराणीं तव देव दृष्टिम् ॥ ऐन्द्रं याम्यं वारुणं वैत्तपाल्यं पैत्रं त्वाष्ट्रं कर्म सौम्यं च तुभ्यम् । रूपं ज्योतिः शब्दमाकाशो वायुः स्पर्शः स्वाद्यः सलिलं गन्ध उर्वी ॥ कालो ब्रह्मा ब्रह्म च ब्राह्मणाश्च त्वत्संभूतस्थास्नु सरिन्सुचेदम् । भूतं भव्यं भविता चाप्रधृष्यं त्वत्संभूता भुवनानीह विश्वा । भक्तं च मां भजमानं भजस्व मा रीरिषो मामहिताहितेन । अस्तौषं त्वां तव संमानमिच्छन्विचिन्वन्वै सदृशं देववर्यम् ॥ सुदुर्लभान्देहि वरान्ममेष्टानभिष्टुतः प्रविकार्यश्च मायाम् ॥ व्यासः— 'तस्मै वरानचिन्त्याय नीलकण्ठः पिनाकधृक् । अर्हते वासुदेवाय प्रायच्छदृषिसंस्तुतः ॥ श्रीभगवानुवाच— मत्प्रसादान्मनुष्येषु देवगन्धर्वयोनिषु । अप्रमेयबलात्मा च नारायण भविष्यसि ॥ न च त्वां प्रसहिष्यन्ति देवासुरमहोरगाः । न सुपर्णास्तथा नागा न च विश्वे वियोनिजाः ॥ न कश्चित्त्वां तु देवोऽपि समरेषु

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

विजेष्यति। न शस्त्रेण न वज्रेण नाग्निना न च वायुना॥ न चार्द्रेण न शुष्केण चरेण स्थावरेण च। कश्चित्तव रुजां कर्ता मत्प्रसादात्कथंचन॥ अपि चेत् समरं गत्वा भविष्यसि समाधिकः। एवमेते पुरा लब्धा वरास्ते विद्धि शौरिणा॥ स एष देवश्चरति मायया मोहय-ञ्जगत्। तस्यैव तपसो जातं नरं नाम महामुनिम्॥ तुल्यमेतेन देवेन त्वं जानीह्यर्जुनं सदा। तावेतौ पूर्व-देवानां परमोपचितावृषी॥ लोकयात्राविधानार्थं संजा-येते युगे युगे। तथैव कर्मणा तूर्णं महतस्तपसोऽपि वा॥ तेजो मन्युं च बिभ्रंस्त्वं जातो रौद्रो महामुने। स भवा-न्देववत्प्राज्ञो ज्ञात्वा भवमयं जगत्॥ अनाकर्षस्त्वमा-त्मानं नियमैस्तत्प्रियेच्छया॥ शुद्धमन्त्रं हविः कृत्वा महापुरुषविग्रहम्॥ ईजिवांस्त्वं जपैर्होमैरुपहारैश्च मानद॥ स तथा पूज्यमानस्ते पूर्वदेहेऽप्यतूतुषत्। पुष्कलांश्च वरा-न्प्रादात्तव विद्वान्हृदि स्थितान्॥ जन्मकर्मतपोयोगास्तयो-स्तव च पुष्कलाः। ताभ्यां लिङ्गेऽर्चितो देवस्त्वयार्च्यायां युगे युगे॥ स एष रुद्रभक्तश्च केशवो रुद्रसंभवः। सर्व-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रूपं भवं ज्ञात्वा लिङ्गमर्चयति प्रभुम् ॥ आत्मयोगाश्च तस्मिन्वै शास्त्रयोगाश्च शाश्वताः । एतमेवाजयन्देवाः सिद्धाश्च परमर्षयः ॥ प्रार्थयन्ति परं लोके स्थाणुमेकं स सर्वकृत् । कृष्ण एव हि यष्टव्यो यज्ञैश्चैव सनातनः ॥ सर्वभूतभवं ज्ञात्वा लिङ्गमर्चति यः प्रभुम् । तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः ॥ तस्य तद्वचनं श्रुत्वा द्रोणपुत्रो महारथः । नमश्चकार रुद्राय बहुमेने न केशवम् ॥ हृष्टरोमा च वश्यात्मा नमस्कृत्य महर्षये । संग्रामेऽन्यहनच्छत्रूञ्शरौघैर्विमलैरहम् । अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ॥ ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते । तस्यां दिशि विशीर्यन्ते शत्रवो मे महामुने ॥ तेन भग्नानरीन्सर्वान्मद्भग्नान्मन्यते जनः । तेन भग्नानि सैन्यानि पृष्ठतो ननु हन्म्यहम् ॥ भगवंस्तं ममाचक्ष्व को वै स पुरुषोत्तमः । शूलपाणिर्मया दृष्टस्तेजसा सूर्यसंनिभः ॥ न पद्भ्यां स्पृशते भूमिं शूलं न च विमुञ्चति । शूलाच्छूलसहस्राणि निपेतुस्तस्य तेजसा ॥ व्यासः— प्रजापतीनां प्रथमं तेजसां प्रथमं प्रभुम् ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


भुवनं भूर्भुवं देवं सर्वलोकेश्वरं प्रभुम् ॥ ईशानं वरदं पार्थ दृष्टवानसि शंकरम्। तं गच्छ शरणं देवं वरदं भुवनेश्वरम् ॥ महादेवं महात्मानमीशानं जटिलं शिवम्। त्र्यक्षं महाभुजं रुद्रं शिखिनं चीरवाससम् ॥ महादेवं वरं स्थाणुं वरदं भुवनेश्वरम् । जगत्प्रधानमधिकं जगत्प्रीतिमधीश्वरम् ॥ जगद्योनिं जगद्बीजं जयिनं जगतो गतिम् । विश्वात्मानं विश्वसृजं विश्वमूर्तिं यशस्विनम् ॥ विश्वेश्वरं विश्ववरं कर्मणामीश्वरं प्रभुम् । शंभुं स्वयंभुं भूतेशं भूतभव्यभवोद्भवम् ॥ योगं योगेश्वरं शर्वं सर्वलोकेश्वरेश्वरम् । सर्वश्रेष्ठं जगच्छ्रेष्ठं वरिष्ठं परमेष्ठिनम् ॥ लोकत्रयविधातारमेकं लोकत्रयाश्रयम् । सुदुर्जयं जगन्नाथं जन्ममृत्युजरातिगम् ॥ ज्ञानात्मानं ज्ञानगम्यं ज्ञानिश्रेष्ठं सुदुर्विदम् । दातारं चैव भक्तानां प्रसादविहितान्वरान् ॥ तस्य पारिषदा दिव्या रूपैर्नानाविधैर्विभोः । वामना जटिला मुण्डा ह्रस्वग्रीवा महोरगाः ॥ महाकाया महोत्साहा महाकर्णास्तथापरे । आननैर्विकृतैः पादैः पार्थ वेषैश्च वैकृतैः ॥ ईदृशः स महादेवः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



पूज्यमानो महेश्वरः। स शिवस्तात तेजस्वी प्रसादाद्याति तेऽग्रतः ॥ तस्मिन्घोरे सदा पार्थ संग्रामे रोमहर्षणे। द्रोणकर्णकृपैर्गुप्तां महेष्वासैः प्रहारिभिः ॥ कस्तां सेनां तदा पार्थ मनसापि प्रधर्षयेत्। ऋते देवान्महेष्वासाद्बहुरूपान्महेश्वरात् ॥ स्थातुमुत्सहते कश्चिन्न तस्मिन्नग्रतः स्थिते। न हि भूतं समं तेन त्रिषु लोकेषु विद्यते ॥ गन्धेनापि हि संग्रामे यस्य क्रुद्धस्य शत्रवः। विसंज्ञा हतभूयिष्ठा वेपन्ति च पतन्ति च ॥ तस्मै नमस्तु कुर्वन्तो देवास्तिष्ठन्ति वै दिवि। ये चान्ये मानवा लोके ये च स्वर्गजितो नराः ॥ ये भक्ता वरदं देवं शिवं रुद्रमुमापतिम्। इह लोके सुखं प्राप्य ते यान्ति परमां गतिम् ॥ नमस्कुरुष्व कौन्तेय तस्मै शान्ताय वै सदा। रुद्राय शितिकण्ठाय कनिष्ठाय सुवर्चसे ॥ कपर्दिने करालाय हर्यक्षवरदाय च। याम्यायाव्यक्तकेशाय सद्वृत्ते शंकराय च ॥ काम्याय हरिनेत्राय स्थाणवे पुरुषाय च। भास्कराय सुतीर्थाय देवदेवाय रंहसे ॥ बहुरूपाय सर्वाय प्रियाय प्रियवादिने। सोष्णीषाय सुवक्त्राय सहस्राक्षाय मीढुषे ॥ हिरण्य-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


बाणचीराय उग्राय पतये दिशाम्। पर्जन्यपतये चैव भूतानां पतये नमः॥ वृषाणां पतये चैव गवां च पतये तथा। वृक्षैरावृतकामाय सेनान्ये मध्यमाय च॥ स्रुव-हस्ताय देवाय धन्विने भार्गवाय च। बहुरूपाय विश्वस्य पतये मुञ्जवाससे॥ सहस्रशिरसे चैव सहस्रनयनाय च॥ सहस्रबाहवे चैव सहस्रचरणाय च॥ शरणं गच्छ कौन्तेय वरदं भुवनेश्वरम्। उमापतिं विरूपाक्षं दक्षयज्ञ-निबर्हणम्॥ प्रजानां पतिमत्युग्रं भूतानां पतिमव्ययम्॥ कपर्दिनं वृषावर्तं वृषनाभं वृषध्वजम्॥ वृषदर्पं वृषपतिं वृषशृङ्गं वृषर्षभम्। वृषाङ्कं वृषभोदारं वृषभं वृषभेक्षणम्॥ वृषायुधं वृषशरं वृषभूतं महेश्वरम्। महोदरं महाकायं द्वीपिचर्मनिवासिनम्॥ लोकेशं वरदं मुण्डं ब्रह्मण्यं ब्राह्म-णप्रियम्। त्रिशूलपाणिं वरदं खड्गचर्मधरं शुभम्॥ पिनाकिनं खड्गधरं लोकानां पतिमीश्वरम्। प्रपद्ये देवमीशानं शरण्यं चीरवाससम्॥ नमस्तस्मै सुरेशाय यस्य वैश्रवणः सखा। सुवाससे नमो नित्यं सुव्रताय सुधन्विने॥ धनुर्धराय देवाय प्रियधन्वाय धन्विने। धन्वन्तराय

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


धनुषे धन्वाचार्याय ते नमः ॥ उग्रायुधाय देवाय नमः सुखकराय च । नमोऽस्तु बहुरूपाय नमस्ते बहुधन्विने ॥ नमोऽस्तु त्रिपुरघ्नाय भगघ्नाय च वै नमः । वनस्पतीनां पतये नराणां पतये नमः ॥ अपां च पतये नित्यं यज्ञानां पतये नमः । पूषदन्तविनाशाय त्र्यक्षाय वरदाय च ॥ हराय नीलकण्ठाय स्वर्णकेशाय वै नमः । कर्माणि यानि दिव्यानि महादेवस्य धीमतः ॥ तानि ते कीर्तयिष्यामि यथाप्रज्ञं यथाश्रुतम् । न सुरा नासुरा लोके न गन्धर्वा न राक्षसाः ॥ सुखमेधन्ति कुपिते तस्मिन्नपि गुहागताः । दक्षस्य यजमानस्य विधिवत्संभृतं पुरा ॥ विव्याध कुपितो यज्ञं निर्दयस्त्वभवत्तदा । धनुषा बाणमुत्सृज्य सघोषं विननाद च । तेन शर्म कुतः शान्तिं लेभिरे स्म सुरास्तदा ॥ विद्रुते सहसा यज्ञे कुपिते च महेश्वरे ॥ तेन ज्यातलघोषेण सर्वे देवाः समाकुलाः । बभूवुर्वशगाः पार्थ तिपेतुश्च सुरासुराः ॥ आपश्चुक्षुभिरे सर्वाश्चकम्पे च वसुंधरा । पर्वताश्च व्यशीर्यन्त दिशो नागाश्च मोहिताः ॥ अन्धेन तमसा लोका न प्राकाशन्त संवृताः । जाज्व-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


वान्सह सूर्येण सर्वेषां ज्योतिषां प्रभाम् ॥ चक्षुर्भय-भीताश्च शान्तिं चक्रुस्तथैव च । ऋषयः सर्वभूतानामा-त्मनश्च सुखैषिणः ॥ पूषाणमभ्यद्रवत शंकरः प्रहसन्निव । पुरोडाशं भक्षयतो दशनान्वै व्यशातयत् ॥ ततो निश्च-क्रमुर्देवा वेपमाना नताः स्म तम् । पुनश्च संदधे दीप्ता-न्देवानां निशिताञ्शरान् ॥ सधूमान्सस्फुलिङ्गांश्च वि-द्युत्तोयदसंनिभान् । तं दृष्ट्वा तु सुराः सर्वे प्रणिपत्य महेश्वरम् ॥ रुद्रस्य यज्ञभागं च विशिष्टं ते त्वकल्पयन् । भयेन त्रिदशा राजन् शरणं च प्रपेदिरे ॥ तेन चैवा-तिकोपेन स यज्ञः संधितस्तदा । भग्नाश्चापि सुरा आस-न्भीताश्चापातितं प्रति ॥ असुराणां पुराण्यासंस्त्रीणि वीर्यवतां दिवि । आयसं राजतं चैव सौवर्णं परमं महत् ॥ सौवर्णं कमलाक्षस्य तारकाक्षस्य राजतम् । तृतीयं तु परं तेषां विद्युन्मालिन आयसम् । न शक्तस्तानि मघवा भेत्तुं सर्वायुधैरपि ॥ अथ सर्वे सुरा रुद्रं जग्मुः शरणमर्दिताः । ते तमूचुर्महात्मानं सर्वे देवाः सवासवाः ॥ ब्रह्मदत्तवरा ह्येते घोरास्त्रिपुरवासिनः ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


पीडयन्ति वरं लोकं यस्मात्ते वरदर्पिताः ॥ त्वदृते देव देवेश नान्यः शक्तः कथंचन । हन्तुं दैत्यान्महादेव जहि तांस्त्वं सुरद्विषः ॥ रुद्र रौद्रा भविष्यन्ति पशवः सर्वकर्मसु । न पातयिष्यसे चैत्रानसुरान्भुवनेश्वर ॥ स तथोक्तस्तथेत्युक्त्वा देवानां हितकाम्यया । गन्धमादन-विन्ध्यौ च कृत्वा वंशध्वजौ हरः ॥ पृथ्वीं स सागरवनां रथं कृत्वा च शंकरः । अक्षं कृत्वा तु नागेन्द्रं शेषं कृत्वा त्रिलोचनः ॥ चक्रे कृत्वा तु चन्द्रार्कौ देवदेवः पिनाकधृक् । तूणीकृत्वैलपत्रं च पुष्पदन्तं च त्र्यम्बकः ॥ यूपं कृत्वा तु मलयमवनाहं च तक्षकम् । योक्राङ्गानि च सत्त्वानि कृत्वा शर्वः प्रतापवान् ॥ वेदान्कृत्वाथ चतुर-श्चतुरोऽश्वान्महेश्वरः । उपवेदान्खलीनांश्च कृत्वा लोक-त्रयेश्वरः ॥ गायत्रीं प्रग्रहं कृत्वा सावित्रीं च महेश्वरः । कृत्वोंकारं प्रतोदं च ब्रह्माणं चैव सारथिम् ॥ गाण्डीवं मन्दरं कृत्वा गुणं कृत्वा च वासुकिम् । विष्णुं सर्वोत्तमं कृत्वा शल्यमग्निं तथैव च । वायुं कृत्वाथ वाजाभ्यां पुङ्खे वैवस्वतं यमम् ॥ विद्युत्कृत्वाथ निश्राणं मेरुं कृत्वाथ वै

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ध्वजम् । आरुह्य स रथं दिव्यं सर्वदेवमयं शिवः ॥ त्रिपुरस्य वधार्थाय स्थाणुः प्रहरतां वरः । असुराणामन्तकरः श्रीमानतुलविक्रमः ॥ स्तूयमानः सुरैः पार्थ ऋषिभिश्च तपोधनैः । स्थानं माहेश्वरं कृत्वा दिव्यास्त्रप्रतिमं विभुः ॥ अतिष्ठत्स्थाणुभूतः स सहस्रं परिवत्सरान् । यदा त्रीणि समेतानि अन्तरिक्षे पुराणि च ॥ त्रिपर्वणा त्रिशल्येन तथा तानि बिभेद सः । पुराणि न च तं शेकुर्दानवाः प्रतिवीक्षितुम् ॥ शरं कालाग्निसंयुक्तं विष्णुसोमशिवायुतम् । पुराणि दग्धवन्तं तं देवी याता प्रवीक्षितुम् ॥ बालमङ्कगतं कृत्वा स्वयं पञ्चशिखं पुनः । उमा जिज्ञासमाना वै कोऽयमित्यब्रवीत्सुरान् ॥ असूयतश्च शक्रस्य वज्रेण प्रहरिष्यतः । बाहुं स वज्रं तं तस्य क्रुद्धस्यास्तम्भयत्प्रभुः ॥ प्रहस्य भगवांस्तूर्णं सर्वलोकेश्वरो विभुः । ततः संस्तम्भितभुजः शक्रो देवगणैर्वृतः ॥ जगाम ससुरस्तूर्णं ब्रह्माणं प्रभुमव्ययम् । ते तं प्रणम्य शिरसा प्रोचुः प्राञ्जलयस्तदा ॥ किमप्यङ्कगतं ब्रह्म पार्वत्या भूतमद्भुतम् । बालरूपधरं दृष्ट्वा नास्माभिरभिवा-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

दितः । तस्मात्त्वां प्रष्टुमिच्छामो निर्जिता येन वै वयम् ॥ अयुध्यता हि बालेन लीलया स पुरंदरः । तेषां तद्वचनं श्रुत्वा ब्रह्मा ब्रह्मविदां वरः । ध्यात्वा स शंभुं भगवान्बालं चामिततेजसम् । उवाच भगवान्ब्रह्मा शक्रादींश्च सुरोत्तमान् । चराचरस्य जगतः प्रभुः स भगवान्हरः । तस्मात्परतरं नान्यत्किंचिदस्ति महेश्वरात् । यो दृष्टो ह्युमया सार्धं युष्माभिरमितद्युतिः । स पार्वत्याः कृते देवाः कृतवान्बालरूपताम् ॥ ते मया सहिता यूयं प्रपद्यध्वं तमेव हि । स एष भगवान्देवः सर्वलोकेश्वरः प्रभुः ॥ न संबुबुधिरे चैनं देवास्तं भुवनेश्वरम् । स प्रजापतयः सर्वे बालार्कसदृशप्रभम ॥ अथाभ्येत्य ततो ब्रह्मा दृष्ट्वा च स महेश्वरम् । अयं श्रेष्ठ इति ज्ञात्वा ववन्दे स पितामहः ॥ ब्रह्मोवाच— त्वं यज्ञो भुवनस्यास्य त्वं गतिस्त्वं परायणम् । त्वं भवस्त्वं महादेवस्त्वं धाम परमं पदम् ॥ त्वया सर्वमिदं व्याप्तं जगत्स्थावरजङ्गमम् । भगवन्भूतभव्येश लोकनाथ जगत्पते ॥ प्रसादं कुरु शक्रस्य त्वया क्रोधार्दितस्य वै । व्यासः— पद्मयोनेर्वचः श्रुत्वा

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ततः प्रीतो महेश्वरः ॥ प्रसादाभिमुखो भूत्वा अट्टहा-
समथाकरोत् । ततः प्रसादयामासुरुमां चन्द्रं च ते
सुराः ॥ अभवच्च पुनर्बाहुः प्रकृतिस्थो हि वज्रिणः ॥
तेषां प्रसन्नो भगवान्सपत्नीको वृषध्वजः । देवानां त्रि-
दशश्रेष्ठो दक्षयज्ञविनाशनः ॥ स वै रुद्रः स च शिवः
सोऽग्निः सर्वः स सर्ववित् । स चेन्द्रश्चैव वायुश्च सो-
ऽश्विनौ च स विद्युतः ॥ स भवः स च पर्जन्यो महा-
देवः स चानघः । स चन्द्रमाः स चेशानः स सूर्यो
वरुणश्च सः ॥ स कालः सोऽन्तको मृत्युः स यमो
रात्र्यहानि च । मासार्धमासा ऋतवः संध्ये संव-
त्सराणि च ॥ धाता च स विधाता च विश्वात्मा वि-
श्वकर्मकृत् । सर्वासां देवतानां च धारयत्यवपुर्वसुः ॥
सर्वदेवैः स्तुतो देवः सैकधा बहुधा च सः । सहस्रधा
शतधा चैव तथा शतसहस्रधा ॥ द्वे तनू तस्य देवस्य
वेदज्ञा ब्राह्मणा विदुः । घोरा चान्या शिवा चान्या ते
तनू बहुधा पुनः ॥ घोरा तु या तनुस्तस्य सोऽग्निर्विष्णुः
स भास्करः । सौम्या तु पुनरेवास्य आपो ज्योतींषि

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

चन्द्रमाः ॥ वेदाङ्गाः सोपनिषदः पुराणाध्यात्मनिश्चयाः । यदत्र परमं गुह्यं स वै देवो महेश्वरः ॥ ईदृशश्च महादेवो भूयांश्च भगवानतः । न हि सर्वे मया शक्या वक्तुं भगवतो गुणाः ॥ अपि वर्षसहस्रेण सततं पाण्डुनन्दन । सर्वैर्ग्रहैर्गृहीतान्वै सर्वपापसमन्वितान् ॥ स मोचयति सुप्रीतः शरण्यः शरणागतान् । आयुरारोग्यमैश्वर्यं वित्तं कामांश्च पुष्कलान् ॥ स ददाति मनुष्येभ्यः स चैवाक्षिपते पुनः । सेन्द्रादिषु च देवेषु तस्यैवैश्वर्यमुच्यते ॥ स चैव व्यापृतो लोके मनुष्याणां शुभाशुभे । ऐश्वर्याच्चैव कामानामीश्वरश्च स उच्यते ॥ महेश्वरश्च भूतानां महतामीश्वरश्च सः । बहुभिर्बहुधा रूपैर्विश्वं व्याप्नोति वै जगत् ॥ तस्य देवस्य यद्वक्त्रं समुद्रे तदधिष्ठितम् । बडवामुखेति विख्यातं पिबत्तोयमयं हविः ॥ एष चैव श्मशानेषु रुद्रो वसति नित्यशः । यजत्येनं जनास्तत्र वीरस्थान इतीश्वरम् ॥ अस्य दीप्तानि रूपाणि घोराणि च बहूनि च । लोके यान्यस्य पूज्यन्ते मनुष्याः प्रवदन्ति च ॥ नामधेयानि लोकेषु

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

बहून्यस्य यथार्थवत् । निरुच्यन्ते महत्त्वाच्च विभुत्वा-त्कर्मणस्तथा ॥ वेदे चान्यसमाख्यातं शतरुद्रीयमुत्तमम् । नाम्ना चानन्तरुद्रेति ह्युपस्थानं महात्मनः । सकामानां प्रभुर्दिव्यो ये दिव्या ये च मानुषाः ॥ स विभुः स प्रभु-र्देवो विश्वं व्याप्नोति वै महत् । ज्येष्ठं भूतं वदन्त्येनं ब्रा-ह्मणा मुनयस्तथा ॥ प्रथमो ह्येव देवानां मुखादस्यानलो-ऽभवत् । सर्वथा यत्पशून्पाति तैश्च यद्रमते पुनः ॥ तेषा-मधिपतिर्यच्च तस्मात्पशुपतिः स्मृतः । दिव्यं च ब्रह्मचर्येण लिङ्गमस्य यथा स्थितम् ॥ महयत्येष लोकांश्च महेश्वर इति स्थितः । ऋषयश्चैव देवाश्च गन्धर्वाप्सरसस्तथा ॥ लिङ्गमस्यार्चयन्ति स्म तच्चाप्यूर्ध्वं समास्थितम् । पूज्य-माने ततस्तस्मिन्मोदते च महेश्वरः ॥ स्वयं प्रीतश्च भवति प्रहृष्टश्चैव शंकरः । यदस्य बहुधा रूपं भूतं भव्यमवस्थितम् । स्थावरं जङ्गमं चैव बहुरूपस्ततः स्मृतः । एकाक्षो जाज्वलन्नास्ते सर्वतोऽक्षिमयोऽपि वा ॥ क्रोधा-द्यश्चाविशल्लोकात्तस्मात्सर्व इति स्मृतः । धूम्ररूपं च यत्तस्य धूर्जटिस्तेन चोच्यते ॥ विश्वे देवाश्च यत्तस्मिन्विश्वरू-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

पस्तत: स्मृत: । समेधयति यन्नित्यं सर्वार्थान्सर्वकर्मसु ।। शिवमिच्छन्मनुष्याणां तस्मादेष शिवः स्मृतः। सहस्राक्षोऽयुताक्षो वा सर्वतोऽक्षिमयोऽपि वा ।। यच्च विश्वं महत्पाति महादेवस्तत: स्मृत: । तिस्रो देवीर्यदा चैव भजते भुवनेश्वर: ।। द्यामप: पृथिवीं चैव त्र्यम्बकश्च तत: स्मृत: । महत्पूर्वस्थितो यश्च प्राणोत्पत्तेः स्थितश्च यत् ।। स्थितलिङ्गश्च यन्नित्यं तस्मात्स्थाणुरिति स्मृत: । सूर्याचन्द्रमसोर्लोके प्रकाशन्ते रुचश्च या: ।। ता: केशसंज्ञितास्त्र्यक्षे व्योमकेशस्तत: स्मृत: । कपिश्रेष्ठ इति प्रोक्तो धर्मश्च वृष उच्यते ।। स देवदेवो भगवान्कीर्त्यतेऽस्माद्वृषाकपि: । ब्रह्माणमिन्द्रं वरुणं यमं धनदमेव च ।। निगृह्य हरते यस्मात्तस्माद्धर इति स्मृतः । निमीलिताभ्यां नेत्राभ्यां बलाद्देवो महेश्वर: ।। ललाटे नेत्रमसृजत्तेन त्र्यक्षः स उच्यते । विषमस्थ: शरीरेषु समश्च प्राणिनामिह ।। स वायुर्विषमस्तेषु प्राणापान: शरीरिषु । पूजयेद्विग्रहं यस्तु लिङ्गं चापि समर्चयेत् ।। लिङ्गं पूजयिता नित्यं महतीं श्रियम-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ह्नुते । ऊरुभ्यामर्धमाग्नेयं सोमार्धं च शिवा तनुः ॥
आत्मनोऽर्धं तथा चाग्निः सोमार्धं पुनरुच्यते । तैजसी
महती दीप्ता दैवी यास्य शिवा तनुः ॥ भास्वती मानुषे-
ष्वस्य तुनुर्घोराग्निरुच्यते । ब्रह्मचर्यं चरत्येष शिवा-
यास्य तनुस्तथा ॥ यास्य घोरतरा मूर्तिः सर्वानत्तिमहे-
श्वरः । यान्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान् ॥
मांसशोणितमज्जादो यत्ततो रुद्र उच्यते । एष देवो
महादेवो योऽसौ पार्थ तवाग्रतः ॥ सततं शात्रवा-
न्निघ्नंस्त्वया दृष्टः पिनाकधृक् । सिन्धुराजवधार्थाय
प्रतिज्ञाय त्वयानघ ॥ कृष्णेन दर्शितः स्वप्ने यस्तु
शैलेन्द्रमूर्धनि । एष वै भगवान्देवः संग्रामे याति ते-
ऽग्रतः ॥ तेन दत्तानि चास्त्राणि यैस्त्वया दानवा हताः ।
धन्यं यशस्यमायुष्यं पुण्यं वेदैश्च संमितम् ॥ देवदेवस्य
ते पार्थ व्याख्यातं शतरुद्रियम् । सर्वार्थसाधकं पुण्यं
सर्वकिल्बिषनाशनम् ॥ सर्वपापप्रशमनं सर्वदुःखविना-
शनम् ॥ चतुर्विधमिदं स्तोत्रं यः शृणोति नरः सदा ॥
विजित्य सर्वाञ्शत्रून्स रुद्रलोके महीयते । चरितं महा-


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्मनो दिव्यं सांग्रामिकमिदं शुभम् ॥ पठन्वै शतरुद्रीयं शृण्वंश्च सततोत्थितः । भक्तो विश्वेश्वरं देवं मानुषेषु च यः सदा ॥ वरान्स कामाँल्लभते प्रसन्ने त्र्यम्बके नरः । गच्छ युध्यस्व कौन्तेय न तवास्ति पराजयः ॥ यस्य मन्त्री च गोप्ता च पार्श्वस्थो हि जनार्दनः । संजयः— एवमुक्त्वार्जुनं संख्ये पराशरसुतस्तदा ॥ जगाम भरतश्रेष्ठ यथागतमरिंदम' इति शतरुद्रीये कृष्णस्य तपःप्रसादितपरमेश्वरवरलब्धमेव माहात्म्यमिति प्रतिपादनेन, अर्जुनं प्रति सकलधार्तराष्ट्रानीकवधः त्वदग्रयायित्रिशूलधारिपरमेश्वरकृत एवेति व्यासवचनेन, दक्षयज्ञविध्वंसनत्रिपुरदहननरेन्द्रहस्तस्तम्भप्रतिपादनेन च, शिव एव उत्कृष्ट इति प्रतिपादितम् । तथा द्रोणपर्वणि जयद्रथवधे— अर्जुनस्तु अभिमन्युवधजनितामर्षेण श्वोभूतेऽनस्तमित एव भगवति सहस्ररश्मौ जयद्रथं वधिष्यामि न चेदग्निं प्रवेक्ष्यामीति प्रतिज्ञां कृत्वा नैत्यकनैशशिवपूजार्थमुपाविशत् । 'ततः स्पृष्टोदके पार्थे विनीताः परिचारिकाः । दर्शयन्तोऽन्तिके चक्रुर्नैशं त्रैयम्बकं बलिम् ॥ ततः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

प्रीतमनाः पार्थो गन्धमाल्यैश्च माधवम्। अलंकृत्योप-
'हारं तं नैशं तस्मै न्यवेदयत्'। ततस्तेनानेकबलपरिवृतं
जयद्रथमशक्यवधमवलोक्य पृष्टः श्रीकृष्णः उदकमुप-
स्पृश्य ध्यानावगततद्वधोपायः परमेश्वरप्रसादलब्धपाशुप-
तास्त्रस्त्वं श्वोभूते जयद्रथं हन्तासीत्यवादीत्। ततः
कृष्णेनोपदिष्टोपायोऽर्जुन उपस्पृश्योदकमुपविश्यासने ध्या-
यन्कैलासपर्वते कृष्णेन नीयमानमात्मानं ददर्श। 'समा-
साद्य तु तं शैलं शैलाग्रे समवस्थितम्। तपोनित्यं महा-
त्मानमपश्यद्वृषभध्वजम्॥ सहस्रमिव सूर्याणां दीप्यमानं
स्वतेजसा। शूलिनं जटिलं गौरं वल्कलाजिनवाससम्॥
नयनानां सहस्रैश्च विचित्राङ्गं महौजसम्। पार्वत्या स-
हितं देवं भूतसंघैश्च भास्वरैः॥ स्तूयमानं स्तवैर्दिव्यै-
र्ऋषिभिर्ब्रह्मवादिभिः। गोप्तारं सर्वभूतानामिष्वास-
धरमच्युतम्। वासुदेवस्तु तं दृष्ट्वा जगाम शिरसा क्षि-
तिम्। पार्थेन सह धर्मात्मा गृह्णन्ब्रह्म सनातनम्॥
लोकादिं विश्वकर्माणमजमीशानमव्ययम्। मनसः परमं
योनिं खं वायुं ज्योतिषां निधिम्॥ स्रष्टारं वारिधा-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


राणां भुवश्च प्रकृतिं पराम् । देवदानवयक्षाणां मानवानां च साधनम् ॥ योगानां च परं ब्रह्म तृप्तब्रह्मविदां निधिम् । चराचरस्य स्रष्टारं प्रतिहर्तारमेव च ॥ कालकोपं महात्मानं शक्रसूर्यगुणोदयम् । ववन्दे तं सदा कृष्णो वाङ्मनोबुद्धिकर्मभिः ॥ यं प्रपद्यन्ति विद्वांसः सूक्ष्माध्यात्मपदैषिणः । तमजं कारणात्मानं जग्मतुः शरणं भवम् ॥ अर्जुनश्चापि तं देवं भूयो भूयोऽभ्यवन्दत । ज्ञात्वा तं सर्वभूतादिं भूतभव्यभवोद्भवम् ॥ ततस्तावागतौ दृष्ट्वा नरनारायणावुभौ । सुप्रसन्नमनाः शर्वः प्रोवाच प्रहसन्निव ॥ स्वागतं वां नरश्रेष्ठावुत्तिष्ठतां गतक्लमौ । किं च वामीप्सितं वीरौ मनसः क्षिप्रमुच्यताम् ॥ येन कार्येण संप्राप्तौ युवां तत्साधयामि किम् । व्रियतामात्मनः श्रेयस्तत्सर्वं प्रददामि वाम् ॥ ततस्तद्वचनं श्रुत्वा प्रत्युत्थाय कृताञ्जली । वासुदेवार्जुनौ शर्वं तुष्टुवाते महामती ॥ भक्त्या स्तवेन दिव्येन महात्मानावनिन्दितौ । कृष्णार्जुनावूचतुः— नमो भवाय शर्वाय रुद्राय वरदाय च । पशूनां पतये नित्यमुग्राय च

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

कपर्दिने ॥ महादेवाय भीमाय त्र्यम्बकाय च शान्तये । ईशानाय मखघ्नाय नमोऽस्त्वन्तकघातिने ॥ कुमारगुरवे नित्यं नीलग्रीवाय वेधसे । पिनाकिने हविष्याय सत्याय विभवे सदा ॥ विलोहिताय धूम्राय व्याधायानपराजिते । नित्यं नीलशिखण्डाय शूलिने दिव्यचक्षुषे । होत्रे पोत्रे त्रिनत्राये व्यासाय वसुरेतसे ॥ अचिन्त्यायाम्बिकाभर्त्रे सर्वदेवस्तुताय च । वृषध्वजाय मुण्डाय जटिने ब्रह्मचारिणे ॥ तप्यमानाय सलिले ब्रह्मण्यायाजिताय च । विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते । नमो नमस्ते सेव्याय भूतानां प्रभवे सदा ॥ ब्रह्मवक्त्राय शर्वाय शंकराय शिवाय च । नमोऽस्तु वाचां पतये प्रजानां पतये नमः ॥ नमो विश्वस्य पतये महतां पतये नमः । नमः सहस्रशिरसे सहस्रभुजमन्यवे ॥ सहस्रनेत्रपादाय नमोऽसंख्येयकर्मणे । नमो हिरण्यवर्णाय हिरण्यकवचाय च । भक्तानुकम्पिने नित्यं सिध्यतां नौ वरः प्रभो । संजयः— एवं स्तुत्वा महादेवं वासुदेवः सहार्जुनः ॥ प्रसादयामास भवं तदा

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ह्यस्त्रोपलब्धये । संजय उवाच— ततः पार्थः प्रसन्नात्मा प्राञ्जलिर्वृषभध्वजम् ।। ददर्शोत्फुल्लनयनः समस्तं तेजसां निधिम् । तं चोपहारं स्वकृतं नैशं नैत्यकमात्मनः ।। ददर्श त्र्यम्बकाभ्याशे वासुदेवनिवेदितम् । ततोऽभिपूज्य मनसा कृष्णं शर्वं च पाण्डवः ।। इच्छाम्यहं दिव्यमस्त्रमित्यभाषत शंकरम् । ततः प्रसन्नेन परमेश्वरेणामृतमयसरसि सर्वासुरनिबर्हणं सशरं धनुर्मया निहितम्, तदानीयताम्, प्रदास्यामि दिव्यमस्त्रमित्यभिहितौ कृष्णार्जुनौ, तत्सरःसमीपमागत्य सहस्रशिरोनागरूपधारिणं बाणं धनुश्च केवलनागरूपमवलोक्य, कृतशतरुद्रस्तोत्रलब्धनिजरूपं सशरं धनुरादाय देवाय निवेद्य महादेवपार्श्वे स्थितब्रह्मचारिप्रदर्शितज्यारोपमुष्टिबन्धशरमोक्षप्रकारः भवमुखावगतपाशुपतमन्त्रः तदुपदिष्टप्रकारेण स्वयमपि तथैव शरमारोप्य तस्मिन्नेव सरसि शरमोक्षणपूर्वकं धनुर्निक्षिप्य, संहृष्टरोमा दुर्धर्षः कृतं कार्यममन्यत । ववन्दतुश्च संहृष्टौ शिरोभ्यां तं महेश्वरम् । अनुज्ञातौ क्षणे तस्मिन्नेवार्जुनकेशवौ ।। प्राप्तौ स्वशिबिरं

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वीरौ मुदा परमया युतौ । तथा भवेनानुमतौ महासुर-
निघातिना' इति कृष्णार्जुनयोर्नतिस्तुत्यादिना प्रसन्नात्प-
रमेश्वरात्पाशुपतास्त्रप्राप्तिकथनेन च शिव एव उत्कृष्टः इति
प्रतिपादितम् । तथा च हरिवंशे— पुत्रार्थं तप्यमानया रु-
क्मिण्या संप्रार्थितः श्रीकृष्णः पतगराजमारुह्य कैलासम-
गमत् । तत्र जपोपवासहोमादिनियमानाचरन्स्वाभिल-
षितप्रदानाय संप्राप्तमुमासहायं महेन्द्रादिसकलदेवगणसं-
स्तूयमानं भगवन्तमुमापतिमवलोक्य संजातसंतोषः प्रण-
म्यास्तौषीत्—'नमस्ते शितिकण्ठाय नीलग्रीवाय वेधसे ।
नमस्ते शोचिषे अस्तु नमस्त उपवासिने ॥ नमस्ते अस्तु विदुषे
नमस्ते गदिने हर । नमस्ते विश्वकर्त्रे ते वृषाय वृषरूपिणे ॥
अमूर्ताय च मूर्ताय नमस्तेऽस्तु पिनाकिने । नमः कुब्जाय
कक्ष्याय शिवाय शिवरूपिणे ॥ नमो हिताय विप्राय
नमो हरिहराय च । नम आद्याय बीजाय शुचये भस्मरू-
पिणे ॥ हराय हरिरूपाय नमस्ते तिग्मतेजसे । भक्तप्रियाय
भक्ताय भक्तानां वरदायिने ॥ नमो दक्षमखघ्नाय भृगु-
नेत्रापहारिणे । उमापते नमस्तुभ्यं कैलासनिलयाय च ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

आदिदेवाय देवाय भवाय भवरूपिणे। नमः कपालहस्ताय मनोजमथनाय च ॥ त्र्यम्बकाय नमस्तुभ्यं त्र्यक्षाय च शिवाय च। वरदाय वरेण्याय नमस्ते चन्द्रशेखर ॥ नम इध्माय हविषे स्रुवाय च कुशाय च। नमस्ते शतघुम्नाय नागपाशप्रियाय च ॥ विरूपाय सुरूपाय भद्रयानप्रियाय च। श्मशानरतये नित्यं जपशब्दप्रियाय च। स्वरप्रियाय शर्वाय स्वराय स्वररूपिणे। भद्रप्रियाय भद्राय भद्ररूपधराय च ॥ रक्ष देव जगन्नाथ लोकान्सर्वान्महाहर। त्राहि भक्तान्महादेव भक्तप्रिय सदा हर ॥ ततो वृषध्वजो देवः शूली साक्षादुमापतिः। करं करेण संस्पृश्य विष्णोश्चक्रधरस्य ह ॥ प्रोवाच भगवान्रुद्रः केशवं गरुडध्वजम्'। पुरा केनचित्कारणेन तपः कुर्वाणस्य मम शुश्रूषया समीपे संचरन्त्यां च पार्वत्यां मत्समाधिभीरुणा महेन्द्रेण वसन्तकोकिलमलयानिलादिपरिवारेण मत्समीपं प्रेषितं मन्मथं तपोविघातार्थमुद्धृतप्रसूनायुधं मदीयनिटिलानलज्वालयानङ्गतामापन्नमवलोक्य चतुर्मुखमुखमखभुजः प्रसादयामासुः। ततः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

संजातकरुणेन मया मन्मथः प्रद्युम्ननामा तव पुत्रो भवितेति अनुगृहीत इति अभिहितवानिति कृष्णस्य स्वतपश्चर्याप्रसादितपरमेश्वरेण प्रद्युम्नाख्यपुत्रलाभप्रतिपादनेन शिव एव उत्कृष्टः विष्णुस्तद्भक्ताग्रेसरः पूजकश्च इति मन्यन्ते। एवमन्यतरोत्कर्षं वदतामन्यतरग्रन्थाप्रामाण्यं प्रसज्यते। तत्तु श्रुतिस्मृतीतिहासपुराणप्रामाण्याभ्युपगन्तृभिः आस्तिकैरङ्गीकर्तुं न शक्यते। अतः कृत्स्नप्रामाण्यमुपपादयतां परस्पराविरोधाय शिवविष्ण्वोः अभेदाभ्युपगममन्तरा नान्या गतिः। स चाभेदः शिवविष्णूत्कर्षप्रतिपादकत्वेन भवदुदाहृततत्तदाख्यायिकास्वेव प्रतिपादितः। तथा हि तत्रैव विष्णुपुराणे बाणासुरयुद्धे— 'कृत्तो विभिन्नमात्मानं द्रष्टुमर्हसि शंकर। योऽहं स त्वं जगच्चेदं सदेवासुरमानुषम्॥ अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः' इति। तथा हि हरिवंशे— 'न च युद्धं महाबाहो तव कृष्णेन रोचते। नावबुध्यसि कृष्णं त्वमात्मानं च द्विधाकृतम्' इति पितामहेनोक्तः शंकरः, 'ततः शरीरयोगेन भगवानव्ययः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


प्रभुः । प्रविश्य पश्यते कृत्स्नांस्त्रीँल्लोकान्सचराचरान् ॥
आत्मानं कृष्णदेहस्थं पश्यते ह्येकयोनिजम् । ततोऽभि-
सृत्य कृष्णस्तु न्यस्तवादोऽभवन्मृधे ॥ ब्रह्माणं चाब्रवी-
द्रुद्रो न योत्स्ये भगवन्निति । ततः कृष्णोऽथ रुद्रश्च परि-
ष्वज्य परस्परम् ॥ परां प्रीतिमुपागम्य संग्रामादथ ज-
ग्मतुः' इति । एवं द्रोणपर्वणि शतरुद्रीये व्यासं प्रति
अर्जुनवचनम्— 'संग्रामे न्यहनच्छत्रून्शरौघैर्विमलैर-
हम् । अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ॥ ज्वलन्तं
शूलमुद्यम्य यां दिशं प्रतिपद्यते । तस्यां दिशि विशी-
र्यन्ते शत्रवो मे महामुने ॥ तेन भग्नानरीन्सर्वान्म-
द्भग्नान्मन्यते जनः । तेन भग्नानि सैन्यानि पृष्ठतो
ऽनु हन्म्यहम् । भगवंस्तन्ममाचक्ष्व को वै स पुरुषो-
त्तमः' । व्यासः— 'ईशानं वरदं पार्थ दृष्टवानसि
शंकरम् । तं गच्छ शरणं देवं वरदं भुवनेश्वरम् ॥ एष
देवो महादेवो योऽसौ पार्थ तवाग्रतः । सततं शात्रवा-
न्निघ्नंस्त्वया दृष्टः पिनाकधृक् ॥ सिन्धुराजवधार्थाय प्रति-
ज्ञा परवयामव । कृष्णेन दर्शितः स्वप्ने यस्तु शैलेन्द्र-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


मूर्धनि । एष वै भगवान्देवः संग्रामे याति तेऽग्रतः । तेन दत्तानि चास्त्राणि यैस्त्वया दानवा हताः ॥ गच्छ युध्यस्व कौन्तेय न तवास्ति पराजयः । यस्य मन्त्री च गोप्ता च पार्श्वस्थो हि जनार्दनः' इति । अनेन भगवता शिवेन भारतीयानां हननं कृतम् । सव्यसाची तु निमित्तमात्रमिति व्यासेन प्रतिपादितम् । एवं गीतायां भगवद्वाक्यम्— श्री भगवानुवाच—'कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः । ऋतेऽपि त्वा न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम् । मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥ द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान् । मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान्' । अनेन भारतीयं सर्वसैन्यं श्रीकृष्णेन संहृतमिति भगवतैवोक्तम् । एवं शतरुद्रीयगीतास्थवचनाभ्यामितरनिवृत्तिपूर्वकं स्वेनैव हतमित्यवगमाच्छिवविष्ण्वोश्च भेदे वचनविरोधपरि-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

हारोऽत्तिदुर्घटः । तस्मात्सकलश्रुतिशिरःसंमताभेदः सिद्धः। तथा द्रोणपर्वणि अर्जुनस्वप्नदर्शने 'ततः प्रीतमनाः पार्थो गन्धमाल्यैश्च माधवम् । अलंकृत्योपहारं तं नैशं तस्मै न्यवेदयत् ॥ तं चोपहारं स्वकृतं नैशं नैत्यकमात्मनः । ददर्श त्र्यम्बकाभ्याशे वासुदेवनिवेदितम्' इति वचनाभ्यां अर्जुनकृतविष्णुपूजायाः शिवशिरसि दर्शनप्रतिपादनेन तयोरभेदः सिद्धः। तत्रैव हरिवंशे रुक्मिणीपुत्रप्राप्तौ मार्कण्डेयनारदौ प्रति ब्रह्मवचनम्— हरिहरस्तोत्रम्— पितामहः— मन्दरस्य गिरेः पार्श्वे नलिन्यां भवकेशवौ । रात्रौ स्वप्नान्तरे ब्रह्मचर्यधरं हरिम् ॥ गरुडध्वजं चैव हरं हरिं च वृषभध्वजम । विस्मयो मे महान्ब्रह्मन्दृष्ट्वा तत्परमाद्भुतम् ॥ एतदाचक्ष्व भगवन्याथातथ्येन सुव्रत । मार्कण्डेयः— शिवाय विष्णुरूपाय शिवरूपाय विष्णवे ॥ अथान्तरं न पश्यामि तेन तौ दिशतः शिवम् । अनादिमध्यनिधनमेतदक्षरमव्ययम् ॥ तदेव ते प्रवक्ष्यामि रूपं हरिहरात्मकम् । यो वै विष्णुः स वै रुद्रो यो रुद्रः स पितामहः ॥ एकमूर्तिस्त्रयो देवा रुद्र-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

विष्णुपितामहाः । वरदा लोककर्तारो लोकनाथाः स्वयंभुवः ॥ अर्धनारीश्वरास्ते तु व्रतं तीव्रं समास्थिताः । यथा जले जलं क्षिप्तं जलमेव तु तद्भवेत् ॥ रुद्रं विष्णुं प्रविष्टं तु तथा रुद्रमयोऽभवत् । अग्निरग्निं प्रविष्टस्तु अग्निरेव यथा भवेत् । तथा विष्णुं प्रविष्टस्तु रुद्रो विष्णुमयोऽभवत् ॥ रुद्रमग्निमयं विद्याद्विष्णुः सोमात्मकः स्मृतः । अग्नीषोमात्मकं चैव जगत्स्थावरजङ्गमम् ॥ कर्तारौ चापहर्तारौ स्थावरस्य चरस्य च । जगतः शुभकर्तारौ प्रभू विष्णुमहेश्वरौ ॥ कर्तृकारणकर्तारौ कर्तृकारणकारकौ । भूतभव्यभवौ देवौ नारायणमहेश्वरौ ॥ एते चैव प्रवर्षन्ति भान्ति पान्ति सृजन्ति च । एतत्परतरं गुह्यं कथितं ते पितामह ॥ यश्चैनं पठते नित्यं यश्चैनं शृणुयान्नरः । प्राप्नोति परमं स्थानं विष्णुरुद्रप्रसादजम् ॥ देवौ हरिहरौ स्तोष्ये ब्रह्मणा सह संगतौ । एतौ च परमौ देवौ जगतः प्रभवाप्ययौ ॥ रुद्रस्य प्रभवो विष्णुर्विष्णोश्च प्रभवः शिवः । एक एव द्विधा भूत्वा लोके चरति नित्यशः ॥ न विना शंकरं विष्णुर्न

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

विना केशवं शिवः । तस्मादेकत्वमापन्नौ रुद्रोपेन्द्रौ स्तुतौ पुरा ॥ नमो रुद्राय कृष्णाय नमः संहतचारिणे । नमः षडर्धनेत्राय सद्विनेत्राय वै नमः ॥ नमः पिङ्गलनेत्राय पद्मनेत्राय वै नमः । नमः कुमारगुरवे प्रद्युम्नगुरवे नमः ॥ नमो धरणिधाराय गङ्गाधराय वै नमः । नमो मयूरपिच्छाय नमः केयूरधारिणे ॥ नमः कपालमालाय वनमालाय वै नमः । नमस्त्रिशूलहस्ताय चक्रहस्ताय वै नमः ॥ नमः कनकदण्डाय नमस्ते व्रतदण्डिने । नमश्चर्मवसनाय नमस्ते पीतवाससे ॥ नमोऽस्तु लक्ष्मीपतये पार्वतीपतये नमः । नमः खट्वाङ्गधाराय नमो मुसलधारिणे ॥ नमो भस्माङ्गरागाय नमः कृष्णाङ्गधारिणे । नमःश्मशानवासाय नमस्त्वाश्रमवासिने ॥ नमो वृषभवाहाय नमो गरुडवाहिने । नमोऽस्त्वनेकरूपाय बहुरूपाय वै नमः ॥ नमः प्रलयकर्त्रे च नमः सागरशायिने । नमोऽस्तु सौम्यरूपाय नमो भैरवरूपिणे ॥ विरूपाक्षाय देवाय नमः सौम्येक्षणाय च । दक्षयज्ञविनाशाय बलेर्नियमनाय च ॥ नमः पर्वतवासाय नमः सागरशायि-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ने । नमः सुररिपुघ्नाय त्रिपुरघ्नाय वै नमः ॥ नमोऽस्तु नरकघ्नाय नमः कामाङ्गशायिने । नमस्त्वन्धकनाशाय नमः कैटभनाशिने ॥ नमः सहस्रहस्ताय नमोऽसंख्येयबाहवे । नमः सहस्रशीर्षाय बहुशीर्षाय वै नमः ॥ दामोदराय देवाय मुञ्जमेखलिने नमः । नमस्ते भगवन्विष्णो नमस्ते भगवञ्छिव ॥ नमस्ते भगवन्देव नमस्ते देवपूजित । नमस्ते सामभिर्गीत नमस्ते यजुभिः स्तुत ॥ नमस्ते सुरशत्रुघ्न नमस्ते सुरपूजित । नमस्ते कर्मिणां कर्म नमोऽस्त्वमितविक्रम ॥ हृषीकेश नमस्तेऽस्तु स्वर्णकेश नमोऽस्तु ते । इमं स्तवं तु रुद्रस्य विष्णोश्चैव महात्मनः ॥ समेत्य ऋषिभिः सर्वैः स्तुतौ तौ सुमहात्मभिः । व्यासेन वेदविदुषा नारदेन च धीमता ॥ भारद्वाजेन गार्ग्येण विश्वामित्रेण वै तदा । अगस्त्येन पुलस्त्येन धौम्येन च महात्मना । यश्चेदं पठते नित्यं स्तोत्रं हरिहरात्मकम् ॥ अरोगी बलवांश्चैव जायते नात्र संशयः । श्रियश्च लभते नित्यं न च सर्गान्निवर्तते ॥ अपुत्रो लभते पुत्रं कन्या विन्दति सत्पतिम् । गुर्विणी शृणुते

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

या तु वरं पुत्रं प्रसूयते ।। राक्षसाश्च पिशाचाश्च भूतानि च विनाशकाः । भयं तत्र न कुर्वन्ति यत्रायं पठ्यते स्तवः' इति । तस्माद्भवदुदाहृतस्थले एवाभेदप्रतिपादनादभेदः सिद्ध एव । नन्वेवमुभयोरुत्कर्षापकर्षप्रतिपादकवचनानां का गतिरिति चेन्न, औपाधिकभेदमादाय तत्तत्कार्योपाधिकोत्कर्षापकर्षप्रतिपादकत्वे विरोधाभावात् । अन्यथा दाशरथिपरशुरामयोः परमार्थतः विष्णुस्वरूपेणाभिन्नयोरुत्कर्षापकर्षप्रतिपादनमनुपपन्नं स्यात्, स्वस्यैव स्वापेक्षयोत्कर्षापकर्षासंभवात् । यदि च दाशरथिपरशुरामयोः समयभेदेन तत्तत्कार्यवशात्प्रकर्षापकर्षौ परमार्थतस्त्वैक्यमेव, तदा वैकुण्ठशितिकण्ठयोरपि कार्यवशादेवोत्कर्षापकर्षौ परमार्थतस्त्वैक्यमेवेति स्वीकर्तव्यम् । अत एव शिवविष्णवोः भेदस्यापारमार्थिकत्वप्रतिपादनपूर्वकपरतया प्रवृत्तानि अभेदवचनानि । तथा च विष्णुपुराणे 'सृष्टिस्थित्यन्तकरिणीं ब्रह्मविष्णुशिवात्मिकाम् । स संज्ञां याति भगवानेक एव जनार्दनः ।। योऽहं सत्यं जगच्चेदं सदेवासुरमानुषम् । अविद्यामोहितात्मानः पुरुषा

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

भिन्नदर्शिनः' इति। कालिदासोऽपि 'एकैव मूर्तिर्बिभिदे त्रिधासौ सामान्यमेषां प्रथमावरत्वम्। विष्णोर्हरस्तस्य हरिः कदाचिद्वेधास्तयोस्तावपि धातुराद्यौ' इति। विष्णुपुराणे— यथाह वसुधा सर्वं सत्यमेतद्दिवौकसः। अहं भवो भवन्तश्च सर्वं नारायणात्मकम्॥ विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्मण एव च। कुतर्कमतयो मुढाः पच्यन्ते नरकेष्वधः॥ ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः। ब्रह्माणं च तथा तेषां भ्रूणहत्यासमं त्वघम्' किं बहुना, प्रपञ्चजीवपरब्रह्मणां परस्परभेदनिषेधमभेदं च प्रतिपादयन्ति श्रुतिस्मृतिसूत्राणि। भेदनिषेधे श्रुतिरपि 'नान्यदतोऽस्ति द्रष्टा' 'उदरमन्तरं कुरुते अथ तस्य भयं भवति' 'नान्यदतोऽस्ति श्रोता' 'द्वितीयाद्वै भयं भवति' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद' 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः'। भेदनिषेधे स्मृतिरपि— अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणका-


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


र्यजातम् । ईदृग्ज्ञानो यस्य न तस्य भूयो भवोद्भवा द्वन्द्व गता भवन्ति ॥ न तदस्ति विना देव यत्ते विरहितं जगत् । यदासीद्वर्तते यच्च यच्च भावि जगत्पते ॥ सर्वं त्वमेव देवेश विना किञ्चित्त्वया न हि । सितनीलादिभेदेन यथैकं दृश्यते नभः ॥ भ्रान्तदृष्टिभिरात्मापि तथैकः सन्पृथक्पृथक् ॥ ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् । एकः स देवः परमः परेशः स वासुदेवो न तदन्यदस्ति ॥ एकः समस्तं यदिहास्ति किंचित्तदच्युतो नास्ति परं ततोऽन्यत् । सोऽहं समस्तं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥ अभेदे श्रुतिः— 'एक एव रुद्रो न द्वितीयाय तस्थे' 'एको देवः सर्वभूतेषु गूढ एको वशी सर्वभूतान्तरात्मा' 'सदेव सोम्येदमग्र आसीत्' 'एकमेवाद्वितीयम्' 'ब्रह्मवेदममृतं पुरस्तात्' 'सर्वं खल्विदं ब्रह्म' 'सर्वो वै रुद्रस्तस्मै रुद्राय नमोऽस्तु' 'ब्रह्म वा इदमग्र आसीत्' 'एकमेव आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्' 'स एवेदं सर्वं ब्रह्मैवेदं सर्वम्' 'हिरण्यगर्भः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


समवर्तताग्रे त्वमेकोऽसि बहूननुप्रविष्टः ऐतदात्म्यमिदं सर्वम्' 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' 'एको देवो बहुधा निविष्टः एकः सन्बहुधा विचारः' 'एक एव महानात्मा' 'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' 'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्' 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्' 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः। सर्वेषां भूतानामन्तरतमः स आत्मेति विद्यात्' 'एकं सद्विप्रा बहुधा वदन्ति एकं सन्तं बहुधा कल्पयन्ति। एको विममे त्रिभिरित्यादिभिः एको दधार भुवनानि विश्वा' इत्यादिभिः। भूतेषु स्मृतिरपि 'यदा सर्वेषु पुमानेको

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


न्यवस्थितः । तदा ह्येको भवान्सोऽहमित्येतद्विफलं वचः ॥ एकः समस्तं यदिहास्ति किंचित्तदच्युतो नास्ति परं ततोऽन्यत् ॥ सकलमिदमहं च वासुदेवपरः पुमान्परमेश्वरः स एकः । इति मतिरचला भवत्यनन्ते हृदयगते व्रज तान्विहाय दूरात्' इति । सूत्राणि 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इत्यादीनि । एवं श्रुतिस्मृतिसूत्रादिभिर्भेदमात्रनिषेधपूर्वकमभेदस्यैव प्रतिपादनात् कैमुतिकन्यायेन वचनैश्च शिवविष्ण्वोरभेदः सिद्धः । उत्कर्षादिप्रतिपादनं तु कार्येणाधिकमिति सर्वमवदातम् । प्रकृते 'अधिकं मेनिरे विष्णुम्' इति रामायणवचनं तु अग्रे कर्तव्यसकलराक्षसवधहेतुभूतवैष्णवधनुषः प्राशस्त्यप्रतिपादनपरं ज्ञेयम् । अयमर्थोऽग्रे स्फुटः । ततः विष्णुकृतपराभवजनितकोपेन पुनरपि समारब्धयुद्धं शितिकण्ठमवलोक्य देवाः प्रसादयामासुः । प्रसन्नेन च शितिकण्ठेन तद्धनूरत्नं निमेः षष्ठे देवराते न्यासीकृतम् । तदिदमसारं त्वया भग्नम्, युद्धात्प्रतिनिवृत्तेन विष्णुना च स्वीयं धनुः ऋचीके न्यासीकृतम् । तेन चास्मत्पितरि न्यासी-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

कृतम् । न्यस्तशस्त्रं चास्मत्पितरं सहस्रभुजनिषूदितमवलोक्य, अकारणपितृवधामर्षेण त्रिः सप्तकृत्वः पृथिवीं निःक्षत्रियामकरवम् । ततः स्वभुजबलार्जितामखिलां महीं काश्यपाय महर्षये यज्ञे दक्षिणात्वेन प्रदाय महेन्द्रकृतानिकेतनोऽहं नभस्तलसंचारिदेवर्षिगणश्लाघ्यमानशितिकण्ठधनुर्भङ्गश्रवणसंजातविस्मयः असारधनुर्भङ्गमात्रेणाानिर्णीतपराक्रमः सारतरवैष्णवधनुरारोपणेन विज्ञातभुजवीर्यस्त्वया सह द्वन्द्वयुद्धं कर्तुमागतोऽस्मि इति अकथयत् । षट्सप्ततितमे— जामदग्न्यवचनश्रवणसंजातसंरम्भः समीपवर्तिपितृगौरवेणापरिकीर्तितस्वपराक्रमो दाशरथिर्ब्राह्मणगौरवेण विश्वामित्रकृते च त्वामुपेक्ष्यावस्थितं वीर्यहीनं प्राकृतं क्षत्रियमिव मां नावमन्तुमर्हसि, पश्य मे पराक्रमम् इत्यभिधाय तत्करात्सशरं धनुरादाय सज्ये धनुषि शरमारोप्यामोघोऽयं शरः क वा मोक्तव्य इत्यवादीत् । ननु

ब्राह्मणोऽसीति पूज्यो मे विश्वामित्रकृतेन च ।
तस्माच्छक्तो न ते राम मोक्तुं प्राणहरं शरम् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

इति वचनेन 'ब्राह्मणो न हन्तव्यः' इति जानता रामेण परशुरामवधोद्यमः कथं कृतः इति चेत्, न; केवलब्राह्मणस्यावध्यत्वेऽपि

तदहं ते बलं दृष्ट्वा धनुषोऽस्य प्रपूरणे ।
द्वन्द्वयुद्धं प्रदास्यामि वीरश्लाघ्यमिदं तव ॥

इति युद्धार्थं प्रवृत्तो गुरुरपि ब्राह्मणः क्षत्रधर्मं पुरस्कृत्य क्षत्रियेण हन्तव्य एव । तथा च राजधर्मे कृष्णं प्रति भीष्मः— 'पितॄन्पितामहान्पित्र्यान्गुरून्संबन्धिबान्धवान् । मिथ्याप्रवृत्तान्यः संख्ये निहन्याद्धर्म एव सः ॥ समयत्यागिनो लुब्धान्गुरूनपि च केशव । निहन्ति यस्तान्समरे क्षत्रियो यः स धर्मवित्' इति । तथा उद्योगपर्वणि परशुरामं प्रति भीष्मः—'उद्यतेषुमथो दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत् । यो हन्यात्समरे क्रुद्धो युध्यन्तमपलायिनम् ॥ ब्रह्महत्या न तस्य स्यादिति धर्मेषु निश्चयः । क्षत्रियाणां स्थितो धर्मे क्षत्रियोऽस्मि तपोधन । यो यथा वर्तते यस्मिंस्तथा तस्मिन्प्रवर्तयन् ॥ नाधर्मं समवाप्नोति न चाश्रेयश्च विन्दति । एते देवाः शरीरस्था

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ब्राह्मण्यं यश्च ते महत् ॥ तपश्च सुमहत्तप्तं न तेभ्यः प्रहराम्यहम् । प्रहरे क्षत्रधर्मस्य यत्त्वं राम समास्थितः ॥ ब्राह्मणः क्षत्रियत्वं हि याति शस्त्रसमुद्यमात्' इति । अत एव गुरुभिर्भीष्मद्रोणकृपादिभिः सह पाण्डवैर्युद्धं कृतमिति भारते प्रतिपादितम् । विस्तरभिया न लिखितम् । तस्माद्युद्धार्थमागतपरशुरामजयो न दोषायेति । ततः

तेजोऽभिहतवीर्यत्वाज्जामदग्न्यो जडीकृतः ।
रामं कमलपत्राक्षं मन्दं मन्दमुवाच ह ॥

राम, काश्यपाज्ञया भूमिभागं परित्यज्य महेन्द्रभूधरं गच्छामि त्वं च मे तपोबलार्जिताँल्लोकाञ्जहीत्यभिहिते, रामेण च तथा कृते, सकलदेवगणसंस्तूयमानमहिमानं रामभद्रं सादरं प्रदक्षिणीकुर्वन्

अक्षय्यं मधुहन्तारं जानामि त्वां सुरोत्तमम् ।
धनुषोऽस्य परामर्शात्स्वस्ति तेऽस्तु परंतप ॥

एते सुरगणाः सर्वे निरीक्षन्ते समागताः ।
त्वामप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न चेयं मम काकुत्स्थ व्रीडा भवितुमर्हति ।
त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः ॥

सप्तसप्ततितमे— गतो जामदग्न्यः, चातकालिर्जलमिव त्वच्छासनमभिकाङ्क्षति चतुरङ्गिणी सेना, तदाज्ञापयतु भवानित्यवदत् । अथ दशरथोऽपि तद्वचनामृतधारया सञ्जीवितमिव ससुतमात्मानं मन्यमानस्तं परिष्वज्य मूर्ध्नि चोपाघ्राय पताकाध्वजमालिनीं सिक्तराजपथप्रकीर्णकुसुमोत्करां स्वागमनश्रवणसंजातहर्षप्रत्युद्गतपौरजानपदसमाकीर्णराजपथामयोध्यां विवेश ॥ ततः

पुत्रैरनुगतश्रीमाञ्श्रीमद्भिश्च महायशाः ।
प्रविवेश गृहं राजा हिमवत्सदृशं पुनः ॥

ननन्द सजनो राजा गृहे कामैः सुपूजितः ।
कौसल्या च सुमित्रा च कैकेयी च सुमध्यमा ॥

वधूप्रतिग्रहे युक्ता याश्चान्या राजयोषितः ।
ततः सीतां महाभागामूर्मिलां च यशस्विनीम् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

कुशध्वजसुते चोभे जगृहुर्नृपपत्नयः ।
मङ्गलालम्भनैश्चैव शोभिताः क्षौमवाससः ॥

देवतायतनान्याशु सर्वास्ताः प्रत्यपूजयन् ।
अभिवाद्याभिवाद्यांश्च सर्वा राजसुतास्तदा ॥

स्वं स्वं गृहमथासाद्य कुबेरभवनोपमम् ।
गोभिर्धनैश्च धान्यैश्च तर्पयित्वा द्विजोत्तमान् ॥

रेमिरे मुदिताः सर्वा भर्तृभिः सहिता रहः ।
कुमाराश्च महात्मानो वीर्येणाप्रतिमा भुवि ॥

कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः ।
शुश्रूषमाणाः पितरं वर्तयन्ति नरर्षभाः ॥

अत्र 'प्रविवेश गृहं राजा' इति वचनेन पाणिग्रहणानन्तरं क्रियमाणो गृहप्रवेशः, 'मङ्गलालम्भनैश्चैव शोभिता' इति वचनेन स्त्रीकर्तृकमङ्गलानि, 'देवतायतनान्याशु सर्वास्ताः प्रत्यपूजयन्' इत्येतेन च देशकुलधर्माः, 'गोभिर्धनैश्च धान्यैश्च तर्पयित्वा द्विजोत्तमान्' इति वचनेन

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वैवाहिकब्रह्मचर्यादिव्रतसमाप्त्यर्थं ब्राह्मणसंतर्पणपूर्वकं स्वस्त्ययनवाचनम्, 'रेमिरे मुदिताः सर्वा भर्तृभिः सहिता रहः' इति वचनेन क्रमप्राप्तं संवेशनारूपं कर्म चोक्तं भवति। तथा च आश्वलयनः– "प्रयाण उपपद्यमाने 'पूषा त्वेतो नयतु हस्त गृह्य' इति यानमारोहयेत् 'अश्मन्वतीरीयते संरभध्वम' इत्यर्धर्चेन नावमारोहयेत्। उत्तरेणोत्क्रमयेत् 'जीवं रुदन्ती' इति रुदत्यां विवाहाग्निमग्रतोऽजस्रं नयन्ति। कल्याणेषु देशवृक्षचतुष्पथेषु 'मा विदन्परिपन्थिन' इति जपेत् 'वासे वासे सुमङ्गलीरियं वधूरिति' ईक्षकानीक्षेत। 'इह प्रियं प्रजया ते समृध्यताम्' इति गृहं प्रवेशयेद्विवाहाग्निमुपसमाधाय पश्चादस्यानडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायाम् 'आ नः प्रजां जनयतु प्रजापतिः' इति चतसृभिः प्रत्यृचं हुत्वा, 'समञ्जन्तु विश्वेदेवाः' इति दध्नः प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वानक्ति हृदये। अक्षारलवणाशिनौ ब्रह्मचारिणावधःशायिनौ स्यातामत ऊर्ध्वं त्रिरात्रं द्वादशरात्रं संवत्सरं वैक ऋषिर्जायत इति चरितव्रतः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सूर्याविदे वधूवस्त्रं दद्यादन्नं ब्राह्मणेभ्योऽथ स्वस्त्ययनं वाचयीत" अत्र ब्रह्मचारिणावधःशायिनौ स्यातामिति व्रतसमाप्तिपर्यन्तं ब्रह्मचर्यकथनात्। 'यत्तु समानं तद्वक्ष्यामः' इति सूत्रव्याख्यानावसरे विवाहे विदेहेषु सद्य एव व्यवायो दृष्टः। त्रिरात्रमिति गृह्ये ब्रह्मचर्यं विहितम। अत्र गृह्योक्तमेव कार्यम्। न सद्यो व्यवाय इति वृत्तिकृद्वाक्याच्च त्रिरात्रानन्तरमेव संवेशनाख्यं कर्म कर्तव्यमित्युक्तं भवतीति। अथ खलु 'उच्चावचजनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात्' इति। बोधायनोऽपि— "अनुनयन्त्येतमग्निम्, अथैनां पितुरङ्कादुद्वहति गुरोर्वा 'ये वध्वः' इति। अथैनां दक्षिणे हस्ते गृहीत्वा स्वरथमारोप्य स्वान्गृहानानयति 'पूषा त्वेतो नयतु' इति। पन्थानमनुमन्त्रयते 'सुगं पन्थानम्' इति। अथ ओषधिवनस्पतयो नद्यो वनान्यनुमन्त्रयते 'या ओषधयः' इति। अथ जायामानीय स्वान्गृहान्प्रपादयति 'भद्रान्गृहान्' इति। अथैनामानडुहे चर्मण्युपवेशयति 'इह गावः' इति। अत्राभ्यासमात्या बीजान्यारोपयन्ते। अथ वाचं यच्छत आ नक्षत्राणामुदयात्।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अथाहोरात्रयोः संधिमनुमन्त्रयते 'नीललोहिते भवतः' इति । अथोदितेषु नक्षत्रेषूपनिष्क्रम्य ध्रुवमरुन्धतीं च दर्शयति 'ध्रुवोऽसि' इति ध्रुवम् 'सप्तर्षयः' इत्यरुन्धतीमिति। अथ स्थालीपाकं श्रपयत्या धेनुवरप्रदानात् । अथाज्यशेषेण हिरण्यमन्तर्धाय मूर्ध्नि संस्रावं जुहोति व्यस्तसमस्तव्याहृतिभिः । अथैनां प्रदक्षिणमग्निं पर्याणयति 'अर्यम्णो अग्निम्' इति । अथ संवेशनम् , 'अथ श्रीमन्तमागारं संमृष्टोपलिप्तं गन्धवन्तं पुष्पवन्तं धूपवन्तं दीपवन्तं तल्पवन्तं साधिवासं दिक्षु सर्पिः सूत्रेन्धनप्रद्योतितम् उदकुम्भादर्शौच्छ्रिरसं प्रपाद्य तस्मिन्नेनां संवेश्य तस्या अन्तिके जपति 'उदीर्ष्वातः' इति । अथैनामुपसंवेशयति 'प्रजापतिः स्त्रियाम्' इति । अथास्याः स्तोकोतिं विवृणोति 'प्रजायै त्वा' इति । सा यद्यश्रु कुर्यात् तामनुमन्त्रयते 'जीवां रुदन्ती' इति । ब्राह्मणेन ब्राह्मण्यामुत्पन्नः प्रागुपनयनाज्जात इत्यभिधीयते उपनीतमात्रो व्रतचारी वेदानां किंचिदधीत्य ब्राह्मण एकां शाखामधीत्य श्रोत्रियो भवति अङ्गाध्याय्यनूचानः कल्पाध्यायी ऋषिकल्पः सूत्रप्रवचनाध्यायी भ्रूणः

CC-0. Prof. Satya Vrat Shastri Collection.

चतुर्वेदादृषिः अत ऊर्ध्वं देवः। यदि कामयेत श्रोत्रियं जनयेयमित्यरुन्धत्युपस्थानान्तं कृत्वा त्रिरात्रमक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणावासाते अहतानां च वाससां परिधानं सायंप्रातश्चालङ्करणम्। इषुप्रतोदयोश्च धारणम्। अग्निपरिचर्या च। चतुर्थ्यां पक्वहोम उपसंवेशनं च। अथ यदि कामयेतानूचानं जनयेयमिति द्वादशरात्रमेतद्व्रतं चरेत्। व्रतान्ते पक्वहोम उपसंवेशनं च। अथ यदि कामयेत ऋषिकल्पं जनयेयमिति मासमेतद्व्रतं चरेत्। व्रतान्ते पक्वहोम उपसंवेशनं च। अथ यदि कामयेत भ्रूणं जनयेयमिति चतुरो मासानेतद्व्रतं चरेद्व्रतान्ते पक्वहोम उपसंवेशनं च। अथ यदि कामयेत ऋषिं जनयेयमिति षण्मासानेतद्व्रतं चरेत्। व्रतान्ते पक्वहोम उपसंवेशनं च। अथ यदि कामयेत देवं जनयेयमिति संवत्सरमेतद्व्रतं चरेद्व्रतान्ते पक्वहोम उपसंवेशनं च। अथ यदा मलवद्वासाः स्यात् इत्यादिना 'सर्वाण्युपगमनानि मन्त्रवन्ति भवन्तीति बोधायनः। 'यथादौ यथार्ताविति शालीकिः' इत्यन्तेन गृहप्रवेशान-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


न्तरकर्तव्यसंवेशनप्रसङ्गादृतुसंवेशनमुक्त्वा, गृहप्रवेशात्पञ्चमेऽहनि मत्स्यबलिं वदति— 'अथाभ्यां पञ्चमेऽहनि नापितकर्म कुर्वन्ति। नापिताय पयोदनं दत्त्वा ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य यत्रैकमुदुम्बुरमूलं पश्यन्ति, तं प्रदक्षिणं परिसमूह्य प्रदक्षिणं गन्धैरनुलिम्पन् जपति 'यथा त्वं वनस्पते' इति। सुमनोभिः प्रच्छादयति 'यथा त्वं वनस्पते' इति। अत्रैव त्रिवृतान्नेन बलिमुपहरति, मन्त्रं चोदाहरन्ति— 'ऊर्जस्वान्पयस्वान्' इति। अन्नं संस्कृत्य ब्राह्मणान्संपूज्याशिषो वाचयित्वा, जानुदघ्नमुदकमवतीर्य प्राचीनदशेनाहतेन वाससा मत्स्यान्गृह्णीतो ब्रह्मचारिणं पृच्छतः, 'ब्रह्मचारिन्किं पश्यसि' इति। स पृष्टः प्रतिब्रूयात् 'पुत्रांश्च पशूंश्च' इति। अथैनान्मत्स्यानुदुम्बुरमूले बकानां बलिमुपाहरति 'दीर्घायुत्वाय वर्चसे' इति। अत्रैव निर्माल्यानि परिभुक्तानि वासांसि प्रतिसरांश्च प्रतिमुच्य उदुम्बरशाखायां संसृजति। अथावगाह्यान्योन्यस्य पृष्ठे धावयित्वा उदकान्तं प्रति यौति 'प्रतियुतो वरुणस्य पाशः' इति। अन्योन्य-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


मलंकृत्य रक्तानि वासांसि परिधायाहतेन वाससा वेति। यानेन पद्भ्यां वा गृहं गत्वा प्रक्षालितपाणिपादौ अप आचम्य वाग्यतौ शयनमारभेते। श्वोभूते वैश्वदेवेन प्रतिपद्यते। मासिश्राद्धे न चापरपक्षे" इति। आपस्तम्बोऽपि 'तां ततः प्रवाहयेत् प्रवाहारयेत्' इत्यादि 'गृहानुत्तरया संकाशयति' 'गृहान्प्रपादयन्नुत्तरां वाचयति दक्षिणेन पदा' 'न च देहलीमधितिष्ठति' 'उत्तरपूर्वदेशेऽगारस्याग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते परिषेचनान्तं च कृत्वा, उत्तरया चर्मण्युपविशतः उत्तरो वरः' 'अथास्याः पुँस्त्रोर्जीवपुत्रायाः पुत्रमङ्क उत्तरयोपवेश्य तस्मै फलान्युत्तरेण यजुषा प्रदाय उत्तरे जपित्वा वाचं यच्छत आ नक्षत्रेभ्यः' 'उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य उत्तराभ्यां यथालिङ्गं ध्रुवमरुन्धतीं च दर्शयति' इत्यादि। 'तं चतुर्थ्यापररात्र इत्युपक्रम्य जयादि प्रतिपद्यते। परिषेचनान्तं कृत्वा उत्तरास्तिस्रो जपित्वा शेषं समावेशने जपेत्' इति। शेषम् अनुवाकशेषम्—आरो-

CC-0. Prof. Satya Vrat Shastri Collection.

होरुमित्येवमादि। समावेशने समावेशनकाले जपेत्। समावेशनं च तस्मिन्नेवापररात्रे नियमेन भवति। इदमेव समावेशनं मन्त्रवन्नान्यानि। परिषेचनान्तवचनमानन्तर्यार्थम्। परिषेचनान्ते एतदेव कर्म यथा स्यात् तेन भोजनं प्रागेव भवतीत्यनाकुलायाम्। अथात्र श्रीमन्तमित्यादिना स्तोकोतिं विवृणोतीत्यन्तेन, चतुर्थ्यां पक्वहोम उपसंवेशनं चेत्यनेन व्रतान्ते पक्वहोम उपसंवेशनं चेत्येवंरूपैर्वचनैश्च, अथाभ्यां पञ्चमेऽहनीत्यारभ्य वाग्यतौ शयनमारभेते इत्यन्तेन प्रसिद्धमुपसंवेशनमिति। सूत्रेण प्रवेशहोमानन्तरसंवेशनमनूद्य श्वोभूत इत्यारभ्य अथास्तमितादित्येऽन्योन्यमलंकृत्य उपरि शय्यायां शयाते। वधूमभिमन्त्रयते सुमङ्गलीरियं वधूरिति। अथैनां सर्वसुरभिगन्धमाल्यानक्तीति परिभाषासूत्रेण सर्वाण्युपगमनानि मन्त्रवन्ति भवन्तीति बोधायनो यज्ञादौ यज्ञान्ताविति शालीकिरित्यनेन च, त्रिरात्रमुभयोरधःशय्या ब्रह्मचर्यं क्षारलवणवर्जनं चेत्यापस्तम्बसूत्रे, यदि कामयेत श्रोत्रियं जनयेयमित्युपक्रम्य ब्रह्मचारिणावधःशायिनौ स्याता-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मिति बोधायनसूत्रे, 'अत ऊर्ध्वमक्षारलवणाशिनौ ब्रह्मचारिणावधःशायिनौ स्यातां त्रिरात्रं द्वादशरात्रं संवत्सरं वैकऋषिर्जायते' इत्याश्वलायनसूत्रे च त्रिरात्रादिकालविशेष एव स्त्र्युपगमनाभावरूपब्रह्मचर्यप्रतिपादनेन साक्षात्संवेशनप्रतिपादकैः चतुर्थ्यां पक्वहोमसंवेशनं चेत्यादिवचनैश्च ऋतुकालात्प्राक् संवेशनानि सिद्धानि। तथा ऋतौ च संनिपातोदारेणानुव्रतमिति। अस्यार्थः रजोदर्शनादारभ्य षोडशाहोरात्रा ऋतुस्तत्र संनिपातः संप्रयोगोऽक्षरेण सह कर्तव्यः। छान्दसमेकवचनम्। शास्त्रीयो नियमः। स च आद्याश्चतस्रो वर्ज्याः एकादशी त्रयोदशी च शेषा दश ग्राह्या इत्येवमादिरूपः। अनुव्रतं तदनुरोधेन, आपस्तम्बोक्तिस्तु 'नियमः चतुर्थीप्रभृति षोडशीमुत्तरामुत्तरां युग्मां प्रजा निश्रेयसमृतुगमन इत्युपदिशन्ति' इति। तत्र च उत्तरामुत्तरामिति वचनात् षोडश्यां रात्रौ मद्यादियोगाभावे गच्छतः उत्कृष्टः पुत्रो भवति चतुर्थ्यामवमः। एवं पञ्चदश्यामुत्कृष्टा कन्या। पञ्चम्यामवमा। एवं मध्ये कल्प्यम्। षोडशस्वेव रात्रिषु गमनं गर्भहेतुः।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तत्रापि प्रथमं तथान्तरालेऽपि दार एव अन्तरालं मध्यम् ऋतोरन्तराले मध्येऽपि संनिपातः स्याद्दार एव कामे सति ब्राह्मणवचनाच्च संवेशनम् । यदिदमनन्तरोक्तं संवेशनं तत्र ब्राह्मणवचनं प्रमाणम् 'काममाविजनितोः संभवाम' इति। आविजनितोः पुत्रोत्पत्तिपर्यन्तं यथेच्छं संगच्छेमहि इत्यर्थः । एवमुक्तानि सर्वाण्यपि संवेशनानि दिवा न कर्तव्यानि । तथा चाथर्वणी श्रुतिः— 'प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते' इति । आपस्तम्बोऽपि—'अहन्यसंवेशनम्' इति । एवं चोदाहृतवचनैर्विवाहप्रभृति आर्तवात्पुरस्तादृतावन्तराले गर्भकाले च संवेशनानि रात्रौ कर्तव्यानीति स्थितम् । तत्र विशेषमाह आपस्तम्बः— 'सदा निशायां दारं प्रत्यलंकुर्वीत' इति । तथा स्त्रीवाससैव सांनिपातः स्याद्यावत्संनिपातं च सहशय्या ततो नानोदकस्पर्शनमपि वा लेपान्प्रक्षाल्याचम्य प्रोक्षणमङ्गानाम्' इति । नन्विदमसंगतम् । 'प्राग्रजोदर्शनात्पत्नीं मोहाद्गत्वा पतत्यधः । व्यर्थीकारेण शुक्रस्य ब्रह्महत्यामवाप्नुयात्' इति

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


रजोदर्शनप्राग्भाविसंभोगस्य शुक्लवैयर्थ्यप्रयुक्तब्रह्महत्याल-क्षणपातित्यापादकत्वप्रतिपादकवचनाविरोधादिति चेन्न । 'काममाविजनितोः संभवाम' इति । तस्माद्दत्त्विया: स्त्रियः प्रजां विन्दन्ते काममाविजनतोः संभवन्तीति गर्भधारणप्रभृत्याप्रसवं संभोगप्रतिपादकश्रुत्या विरो-धात् । विरोधे त्वनपेक्षं स्यात् । विप्रतिषेधे श्रुतिलक्षणं बलीय इति जैमिन्यापस्तम्बसूत्राभ्यां सापेक्षश्रुतेर्निरपेक्ष-श्रुत्या बाधात् । आपस्तम्बसूत्रे यदा मलवद्वासाः स्यादित्या-दिना सप्रकारम् ऋतुसमावेशनमभिधाय एतदेव ऋतुगम-नम्, ऋतौ च संनिपात इत्यनेनानूद्य अन्तरालेऽपि दार एवेत्यनेन ऋत्वोरन्तरालेऽपि गमनमभिधाय तत्र गर्भधार-णप्रभृत्याप्रसवं संवेशनस्य प्रतिपादितत्वात् । तस्माद्दत्वि-यास्त्रियः प्रजां विन्दते काममाविजनितोः संभवन्तीति श्रुतिं ब्राह्मणवचनाच्च संवेशनमित्यनेन सूत्रेण अनृतुकाल-गमनत्वाविशेषेण हेतुना प्रमाणत्वेनोदाहरता आचार्येण तेनैव हेतुना आर्तवात्पूर्वमभिसंवेशने इयमेव श्रुतिः प्रमाण-मित्युक्तं भवति । अत एव [illegible] गृहप्रवेशनप्रभृति त्रिरात्रम्,

CC-0. Prof. Satya Vrat Shastri Collection.

 Digitized By Siddhanta eGangotri Gyaan Kosha 

ह्मचर्यप्रतिपादनपूर्वकं चतुर्थदिने संवेशनम्। तथा 'ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्जम्' इति गौतमवचनेन 'ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा। पर्ववर्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया' इति। भार्याप्रार्थनया अनृतावपि गमनप्रतिपादकमनुवचनेन, 'यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्' इति काममाविजनितोरिति श्रुतिसिद्धयर्थेष्टगमनप्रतिपादकयाज्ञवल्क्यवचनेन, ऋतुकालाभिगमनं पुंसा कार्यं प्रयत्नतः। 'सदैवापर्ववर्जं स्त्रीणां मतं हि तत्' इति बृहस्पतिवचनेन, अथ ऊर्ध्वं ब्रह्मचर्यमित्युपक्रम्य स्वदार इत्येकं मन्त्रवत्प्रयोग इत्येकमृतावित्यपरमथाधिब्रह्मचर्ये विवाहे त्रिरात्रमृतौ त्रिरात्रममावास्यायां पौर्णमास्यां श्राद्धं दत्त्वा च भुक्त्वा चैकरात्रं परस्त्रीषु यावज्जीवमग्न्याधेये द्वादशरात्रमाग्रयणेष्टिपशुबन्धानामुपवसथेष्वेकरात्रमेवमेव, सर्वेषु वेदकर्मसु चातुर्मास्येषु संवत्सरं यथाप्रयोगमन्येषु यज्ञक्रतुषु अन्यत्रतोर्दीर्घसत्रेषु धर्मव्रतेषु च तदेतद्धन्यमिति उक्तकालवर्जामितरकाले स्त्रीगमनस्य ब्रह्मचर्यत्वप्रतिपादकबोधायनपरिभाषासूत्रेण च अनृतु-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


कालेऽपि स्त्र्युपगमनाङ्गीकारेण सुखार्थं शुक्लविमोकस्यादोषत्वावगमनेन एकस्य वचनस्य बहुस्मृतिविरोधे विप्रतिषिद्धधर्मसमवाये भूयसां स्यात् स्वधर्मत्वमिति न्यायेन बहुभिरेकस्य बाधोऽभ्युपगन्तव्य इत्यप्रमाणमेव निषेधवचनम्। ननु विरोधे सति अप्रामाण्यं स्यात्। स एव नास्ति। आर्तवानन्तरं विवाहाङ्गीकारेण उभयोरविरोधेन प्रामाण्यसंभवात्। कुन्तीसत्यवत्योः पुत्रोत्पत्त्यनन्तरमपि विवाहदर्शनेन आर्तवानन्तरविवाहस्य कैमुतिकन्यायसिद्धत्वात् इति चेत्तदुच्यते। रजोदर्शनात्पूर्वमेव स्मृतिषु विवाहस्य विहिततया रजोदर्शनानन्तरं विवाहस्य कन्यादानस्य च निन्दिततया च ऋत्वनन्तरं कन्यादानविवाहयोर्योग्यत्वं वक्तुमशक्यत्वात्। तथा च बृहस्पतिः— 'गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत्। कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम्'। संवर्तोऽपि— अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी। दशवर्षा भवेद्गौरी अत ऊर्ध्वं रजस्वला' विवाहस्त्वष्टवर्षायाः कन्यायास्तु प्रशस्यते 'प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥ माता चैव पिता चैव ज्येष्ठभ्राता तथैव च । त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत् । यस्तां समुद्वहेत्कन्यां ब्राह्मणो मदमोहितः ॥ असंभाष्यस्त्वपाङ्क्तेयः स विप्रो वृषलीपतिः' इति । इत्येवमादिभिर्बहुभिः स्मृतिभिः रजोदर्शनानन्तरं विवाहकन्याप्रदानयोर्निन्दितत्वेन रजोदर्शनानन्तरकालीनविवाहस्यात्यन्तनिन्दितत्वात् । कुन्तीसत्यवत्योस्तु अधर्म्योऽपि पुत्रोत्पत्त्यनन्तरो विवाहः दोषाभावस्य कन्यकात्वस्य चानुग्रहेण तेजोविशेषेण च प्रत्यवायाधायको न भवति । इतरेषां तु प्रत्यवायकर एव । तथा चापस्तम्बः— 'दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषां तेषां तेजोविशेषेण प्रत्यवायो न विद्यते, तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरः' इति । तस्मात्प्राग्रजोदर्शनादिति वचनमादरणीयमेव । यद्वा चातुर्मास्यान्तरालकाले— 'न मांसमश्नाति न स्त्रियमुपैति ऋत्वेवाजायां नोपरियास्ते' इत्यापस्तम्बसूत्रेण चातुर्मास्यव्रतान्युपेयान्मधुमांसलवणक्षारलवणानि च व-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha 

र्जयेत् । ऋतौ भार्यामुपेयादित्याश्वलायनसूत्रेण, ऋतुकाल एव गमनस्याभ्युपगतत्वात् । अनृतुकाले गमनस्य प्रतिषिद्धत्वाच्च, चातुर्मास्ययाजिनः अन्तरालकाले अनृतौ गमनप्रतिषेधकतया प्रामाण्यं समर्थनीयम् । युक्तं चैतत् । मोहादिति विशेषणेन निषेधपरामर्शनप्रतिपादनात्, पत्नीशब्देन यज्ञसंयोगस्य विशेषणत्वावगमाच्चेति । ननु 'प्राग्रजोदर्शनात्' इति वचनेन प्रथमरजोदर्शनात्पूर्वं समावेशनं प्रतिषिध्यते । आधानं तु जातपुत्रः कृष्णकेशोऽग्नीनादधीतेति वचनेन, पुत्रोत्पत्त्यनन्तरं विहितम् । एवं सति कः प्रसङ्गः प्राग्रजोदर्शनाच्चातुर्मास्यान्तरालव्रतानामिति चेन्न । विवाहसमाप्तौ अत्राग्न्याधेयस्य कालः जायामवाप्य दशमेऽहन्यग्निमादधीत इति बोधायनवचनेन, विवाहानन्तरं दशमदिन एव अग्न्याधेयस्य विहितत्वात् । अग्न्याधेयप्रभृत्यथेमान्यजस्राणि भवन्ति । यथैतदग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणमुदगयनदक्षिणायनयोः पशुश्चातुर्मास्यानि ऋतुमुखे षड्ढोता वसन्ते ज्योतिष्टोम. इत्येवं क्षेमप्रापणमिति वचनेन च चातुर्मास्यानामपि

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

विहितत्वात् आर्तवात्पूर्वं चातुर्मास्यानामस्त्येव प्रसङ्गः। एवमन्यानप्येवंजातीयकानि– आर्तवात्पूर्वं गमनप्रतिषेधकानि वचनानि नियमयुक्तगृहस्थपरतया यथायोग्यं योजनीयानि। तस्मात् 'रेमिरे मुदिताः सर्वाः भर्तृभिः सहिता रहः' इति वचनेन विवाहसमनन्तरमेव यत्संवेशनं भगवता वाल्मीकिना उक्तं तत्सर्वं शास्त्रसंमतमेव इति सिद्धम्। यदुक्तं स्त्रीकर्तृकमङ्गलानीति तत्रापस्तम्बः– तथा 'मङ्गलान्यवृतश्च आ स्त्रीभ्यः प्रतीयेरन्' इति 'स्त्रीभ्यः सर्ववर्णेभ्यो धर्मशेषान्प्रतीयात्' इति च 'एतेन देशकुलधर्मा व्याख्याताः' इति च। आश्वलायनोऽपि– 'ब्राह्मण्यश्च वृधाजीवपत्न्यो जीवप्रजा यद्यदुपदिशेयुस्तत्तत्कुर्युः' इति। कालिदासोऽपि 'प्रायेणैवंविधे कार्ये पुरन्ध्रीणां प्रगल्भता' इति। कुलधर्मस्यावश्यकतामाह भगवान्गीतायाम् 'उच्छिन्नकुलधर्माणां मनुष्याणां जनार्दन। नरके नियतं वासो भवतीत्यनुशुश्रुम:' इति। आदिपर्वण्यपि भीष्मं प्रति शल्यवचनम्— 'पूर्वं प्रवर्तितं किंचित्कुलेऽस्मिन्नृपसत्तमैः। साधु वा यदि वासाधु तन्नातिक्रान्तमु-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


त्सहे ॥ व्यक्तं तद्भवतश्चापि विदितं नात्र संशयः । न च युक्तं तथा वक्तुं भवान्देहीति सत्तम ॥ कुलधर्मः स नो वीर प्रमाणं परमं च तत् । तं भीष्मः प्रत्युवाचेदं मद्रराजं महामतिः ॥ धर्म एष परो राजन् स्वयमुक्तः स्वयंभुवा । नात्र कश्चन दोषोऽस्ति पूर्वैर्विधिरयं कृतः ॥ विदितेऽयं च ते शल्य मर्यादा साधुसंमता' । ततः शल्यः भीष्मप्रदत्तं बहुविधं धनं प्रगृह्य स्वसारं दत्तवानिति । रत्नमालायां विवाहप्रकरणेऽपि— 'न शास्त्रदृष्ट्या विदुषा कथंचिद्विलङ्घनीयाः कुलदेशेषु धर्माः । मूलं हि तेषूच्यते वेदशाखाभूयानधर्मास्थितिभङ्गदोषात्' । एवं च पाणिग्रहणगृहप्रवेशस्त्रीकृतमङ्गलदेशकुलधर्मसंवेशनाद्यङ्गयुक्तो विवाहः प्रतिपादितः । ततो दशरथभरताह्वानाय समागतं चिरकालोषितं युधाजितमवलोक्य चतुरङ्गबलपरिहृतं सशत्रुघ्नं भरतं मातुलकुलं प्रापयामास ।

गतेषु भरते रामो लक्ष्मणश्च महाबलः ।
पितरं देवसंकाशं तोषयामासतुस्तदा ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

एवं दशरथः प्रीतो ब्राह्मणा नैगमास्तथा ।
रामस्य शीलवृत्तेन सर्वे विषयवासिनः ॥

प्रिया तु सीता रामस्य दाराः पितृकृता इति ।
गुणाद्रूपगुणाच्चापि प्रीतिर्भूयो व्यवर्धत ॥

'ततः उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेत्सह । निनीषुः कालमुत्कर्षमवमानवमांस्त्यजेत् ' इति मनुना उत्तमकुलविवाहेन कुलोत्कर्षकथनात् सर्वैरपि स्वस्वकुलोत्कर्षाय उत्तमकुले विवाहः कर्तव्य इति सूचयन्, प्रकृते राजर्षिसुतः उत्तमराजकन्ययेति च विशेषणद्वयेन वधूवरयोः उत्तमकुलोत्पन्नयोर्विवाहं निगमयति ।

तया स राजर्षिसुतोऽभिरामया
समेयिवानुत्तमराजकन्यया ।
अतीव रामः शुशुभेऽतिकामया
विभुश्श्रिया विष्णुरिवामरेश्वरः ॥



CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ये धर्मैकनिसर्गसिद्धरुचयो ये वेद्‌वेद्ये परे
पुंसि ब्रह्मणि मैथिलीसहचरे भक्ता रघूणां वरे ।
ये वा कौतुकिनो रघूद्वहकथाशैलीसमाकर्णने
ये वा मर्मविदस्त एतदुररीकुर्वन्तु तैस्तैर्गुणैः ॥

प्रतिदिनमपि श्रीयज्ञेशप्रसादमुपेयुषा
गुरुपरकृपाधाम्ना श्रीमत्त्रियम्बकयज्वना ।
प्रथमरचिते काण्डे रामायणस्य महर्षिणा
प्रकटितमिदं धर्माकूतं यथामति गृह्यताम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये
चतुर्विंशत्साहस्रिकायां संहितायां
**बालकाण्डः समाप्तः ॥**



CC-0. Prof. Satya Vrat Shastri Collection.

# DHARMAKUTAM

## VOL. II.

# AYODHYAKANDA

## PART I.

BY

TRYAMBAKARAYA MAKHI.



SRIRANGAM:

SRI VANI VILAS PRESS.

1924

*Copyright Registered.*

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

॥ श्रीः ॥

# ॥ धर्माकूतम् ॥

तञ्जानगराधीशश्यैङ्कोजिमहाराजस्य मन्त्रिणो गङ्गाधरा-
ध्वरिणः पुत्रेण शहजिशरभोजिमहीपालयोरमात्येन

**त्र्यम्बकरायमखिना**

विरचितम् ।



## २. अयोध्याकाण्डः

(प्रथमो भागः ।)



श्रीरङ्गम्

श्रीवाणीविलासमुद्रायन्त्रालयः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

॥ श्रीः ॥

# ॥ धर्माकूतम् ॥

## अयोध्याकाण्डः ॥

---

अथ श्रीरामचरितवर्णनमुखेन धर्मनिरूपणाय प्रवृत्तो भगवान्वाल्मीकिः, भगवतो दाशरथेरवतरणप्रभृतिदारपरिग्रहपर्यन्तचरितवर्णनमुखेन धर्मान्प्रतिपाद्य तदनन्तरचरितवर्णनमुखेन धर्मान्प्रतिपादयितुमयोध्याकाण्डमारब्धवान् । तत्र प्रथमे सर्गे—

गच्छता मातुलकुलं भरतेन तदानघः ।
शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥

एवं प्रीतिपुरस्कृतेन शत्रुघ्नेन सह मातुलकुलं गतो भरतः मातुलेनाश्वपतिना तत्तत्समयोचिताभीष्टप्रदानादिना पुत्राधिकस्नेहेन लालितस्तत्रैव सुखमुवास । श्रीरामो-



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

ऽपि प्रीतिविषयेषु चतुर्ष्वपि पुत्रेषु, स्वयंभूरिव गुणव-
त्तरः उदीर्णरावणवधायावतीर्णः, परिचर्यादिना पितु-
रत्यन्तं प्रीतिकरो बभूव ॥

स हि रूपोपपन्नश्च वीर्यवाननसूयकः ।
भूमावनुपमः सूनुर्गुणैर्दशरथोपमः ॥

स तु नित्यं प्रशान्तात्मा मृदुपूर्वं च भाषते ।
उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते ॥

कथंचिदुपकारेण कृतेनैकेन तुष्यति ।
न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥

शीलवृद्धैर्वयोवृद्धैर्ज्ञानवृद्धैश्च सज्जनैः ।
कथयन्नास्त वै नित्यमस्त्रयोग्यान्तरेष्वपि ॥

बुद्धिमान्मधुराभाषी पूर्वभाषी प्रियंवदः ।
वीर्यवान्न तु वीर्येण महता स्वेन विस्मितः ॥

न चानृतकथो विद्वान्वृद्धानां प्रतिपूजकः ।
अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरज्यते ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सानुक्रोशो जितक्रोधो ब्राह्मणप्रतिपूजकः ।
दीनानुकम्पी धर्मात्मा नित्यं प्रग्रहवाञ्शुचिः ॥

कुलोचितमतिः क्षात्रं धर्मं स्वं बहु मन्यते ।
मन्यते परया कीर्त्या महत्स्वर्गफलं ततः ॥

नाश्रेयसि रतो विद्वान्न विरुद्धकथारुचिः ।
उत्तरोत्तरयुक्तौ तु वक्ता वाचस्पतिर्यथा ॥

अरोगस्तरुणो वाग्मी वपुष्मान्देशकालवित् ।
लोके पुरुषसारज्ञः साधुरेको विनिर्मितः ॥

स तु श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः ।
बहिश्चर इव प्राणो बभूव गुणतः प्रियः ॥

सम्यग्विद्याव्रतस्नातो यथावत्साङ्गवेदवित् ।
इष्वस्त्रे च पितुः श्रेष्ठो बभूव भरताग्रजः ॥

कल्याणाभिजनः साधुरदीनः सत्यवागृजुः ।
वृद्धैरभिविनीतश्च द्विजैर्धर्मार्थदर्शिभिः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

धर्मकामार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान् ।
लौकिके समयाचारे कृतकल्पो विशारदः ॥

अप्रधृष्यश्च संग्रामे क्रुद्धैरपि सुरासुरैः ।
निभृतः संवृताकारो गुप्तमन्त्रः सहायवान् ॥

अमोघक्रोधहर्षश्च त्यागसंयमकालवित् ।
दृढभक्तिः स्थिरप्रज्ञो नासद्ग्राही न दुर्वचाः ॥

निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित् ।
शास्त्रज्ञश्च कृतज्ञश्च पुरुषान्तरकोविदः ॥

यः प्रग्रहानुग्रहयोर्यथान्यायं विचक्षणः ।
सत्संग्रहप्रग्रहणे स्थानविन्निग्रहस्य च ॥

आयकर्मण्युपायज्ञः संदृष्टव्ययकर्मवित् ।
श्रैष्ठ्यं शास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषु च ॥

अर्थधर्मौ च संगृह्य सुखतन्त्रो न चालसः ।
वैहारिकाणां शिल्पानां विज्ञातार्थविभागवित् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आरोहे विनये चैव युक्तो वारणवाजिनाम् ।
धनुर्वेदविदां श्रेष्ठो लोकेऽतिरथसंमतः ॥

अभियाता प्रहर्ता च सेनानयविशारदः ।
अनसूयो जितक्रोधो न दृप्तो न च मत्सरी ॥

न चावमन्ता भूतानां न च कालवशानुगः ।
एवं श्रेष्ठगुणैर्युक्तः प्रजानां पार्थिवात्मजः ॥

संमतस्त्रिषु लोकेषु वसुधायाः क्षमागुणैः ।
बुद्ध्या बृहस्पतेस्तुल्यो वीर्येणापि शचीपतेः ॥

तथा सर्वप्रजाकान्तैः प्रीतिसंजननैः पितुः ।
गुणैर्विरुरुचे रामो दीप्तः सूर्य इवांशुभिः ॥

तमेवं वृत्तसंपन्नमप्रधृष्यपराक्रमम् ।
लोकपालोपमं नाथमकामयत मेदिनी ॥

अत्र ऐवंगुणाढ्यस्यैव मेदिनीमनोविषयत्वप्रतिपादनेन एतादृश एव महीपतिः कर्तव्य इति सूचितम् । तथा च याज्ञवल्क्यः— 'महोत्साहः स्थूललक्षः कृतज्ञो

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वृद्धसेवकः। विनीतः सत्त्वसंपन्नः कुलीनः सत्त्ववाञ्शुचिः॥ अदीर्घसूत्रो द्युतिमान्न क्षुद्रोऽपरुषस्तथा। धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित्॥ स्वरन्ध्रगोप्तान्वीक्षिक्यां दण्डनीत्यां तथैव च। विनीतस्त्वथ वार्त्तायां कार्यश्चैव नराधिपः’ इति। राजधर्मेऽपि— ‘कुलीनं शिक्षितं प्राज्ञं ज्ञानविज्ञानपारगम्। सर्वशास्त्रार्थतत्त्वज्ञं सहिष्णुं सहजं तथा॥ कृतज्ञं बलवन्तं च क्षान्तं दान्तं जितेन्द्रियम्। अलुब्धं लब्धसंतुष्टं स्वामिमित्रबुभूषकम्॥ सचिवं देशकालज्ञं सत्त्वसंग्रहणे रतम्। सततं युक्तमनसं हितैषिणमतन्द्रितम्॥ युक्ताचारं स्वविषये संधिविग्रहकोविदम्। राज्ञस्त्रिवर्गवेत्तारं पौरजानपदप्रियम्॥ खातकं व्यूहतत्त्वज्ञं बलहर्षणकोविदम्। इङ्गिताकारतत्त्वज्ञं पात्रापात्रविशारदम्॥ हस्त्यश्वशिक्षातत्त्वज्ञमहंकारविवर्जितम्। प्रगल्भं दक्षिणं दान्तं बलिनं युक्तिकारिणम्॥ शुद्धं चौक्षसमाकीर्णं सुवेषं सुखदर्शनम्। नायकं नीतिकुशलं गुणचेष्टासमन्वितम्॥ अस्तब्धं प्रसृतं श्लक्ष्णं मृदुवादिनमेव च। धीरं श्लक्ष्णं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महर्षिं च देशकालोपपादकम् ॥ सचिवं यः प्रकुरुते न चैनमवमन्यते । तस्य विस्तीर्यते राष्ट्रं ज्योत्स्ना ग्रहपतेरिव ॥ एतैरेव गुणैर्युक्तो राजा शास्त्रविशारदः । एष्टव्यो धर्मपरमः प्रजापालनतत्परः ॥ धीरोऽमर्षः शुचिस्तीक्ष्णः काले पुरुषकारवित् । शुश्रूषुः श्रुतवाञ्श्रोताप्यूहापोहविशारदः ॥ मेधावी धारणायुक्तो यथायुक्तोपपादकः । दान्तः सदा प्रियाभाषी क्षमावांश्च विपर्यये ॥ दानच्छेदे स्वयंकारी साध्वाचारः सुदर्शनः । आर्तहस्तप्रदो नित्यमाप्तामात्यो नये रतः ॥ नाहंवादी न निर्द्वन्द्वो न यत्किंचनकारकः । कृते कर्मण्यमात्यानां कर्ता भृत्यजनप्रियः ॥ संगृहीतजनः स्तब्धः प्रसन्नवदनः सदा । सदा भृत्यजनावेक्षी अक्रोधी सुमहामनाः ॥ युक्तदण्डो न निर्दण्डो धर्मकार्यानुशासकः । चारनेत्रः परावेक्षी धर्मार्थकुशलः सदा ॥ राजा गुणशताकीर्ण एष्टव्यस्तादृशो भवेत्' इति ।
एवं धर्मप्रधानेषु स्मृतीतिहासपुराणेषूक्तगुणविशिष्टो राजैव एष्टव्य इत्युक्तम् । अर्थप्रधाने कामन्दकीये नीतिशास्त्रेऽपि एते गुणा आवश्यिकत्वेनोक्ताः— 'कुलं सत्यं वयः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

शीलं दाक्षिण्यं क्षिप्रकारिता । दैवसंपन्नता बुद्धिरक्षुद्रपरिवारिता ॥ शक्यसामन्तता चैव तथा च दृढभक्तिता । दीर्घदर्शित्वमुत्साहः शुचिता स्थूललक्षता ॥ विनीतता धार्मिकता गुणाः साध्वाभिगामिकाः । वाग्मी प्रगल्भः स्मृतिमानुदग्रो बलवान्वशी ॥ नेता दण्डस्य निपुणः कृतविद्यः सुविग्रहः । पराभियोगप्रसहो दृष्टसर्वप्रतिक्रियः ॥ परच्छिद्रान्ववेक्षी च संधिविग्रहतत्त्ववित् । गूढमन्त्रप्रचारश्च देशकालविभागवित् ॥ आदाता सम्यगर्थानां विनियोक्ता च पात्रवित् । क्रोधलोभभयद्रोहस्तम्भचापलवर्जितः ॥ परोपतापपैशुन्यमात्सर्येर्ष्यानृतातिगः । वृद्धोपदेशसंपन्नः शुक्लो मधुरदर्शनः ॥ गुणानुरागी स्मितवागात्मसंपत्प्रकीर्तिता । इत्यादिगुणसंपन्ने लोकयात्रा विदुः स्थिरा ॥ निर्वृतः पितरो वास्ते यत्र लोकः स पार्थिव' इति ॥ एते राजगुणाः श्रीराम एव तिष्ठन्ति नेतरत्र । अत एव सर्वोत्कृष्टे दशरथे धर्मतो राज्यं पुत्रवत्परिपालयितरि सत्यपि जनानां ह्वत एव रामेऽभिलाषो बभूव । अयं चार्थो द्वितीयसर्गे

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पौरवाक्यैः स्पष्टः। अत्र स हि रूपोपपन्नश्चेत्यारभ्य, अकामयत मेदिनीत्यन्तेन, श्रीरामभद्रस्य गुणाः साकल्येन प्रतिपादिताः। संस्कारास्तु सम्यग्विद्याव्रतस्नात इत्यादिना स्नानान्ताः कतिपया एव वचनप्रतिपादिताः। नन्वत्र 'अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः' इत्यादि युद्धकाण्डस्थसीतावचनम्। तथापि तेषां राज्यपरिपालनानुपयोगादिति चेत् तर्हि स्नानान्तानां संस्काराणां वा कथमुपयोग इति चेत्, स्नानान्तैः संस्कारैरसंस्कृतस्य राज्यानर्हत्वात् आश्रमधर्मेष्वधिकाराभावाच्च सर्वत्र स्नानान्तसंस्कारा उपयुक्ता इति स्नानान्ता एव संस्काराः प्रतिपादिताः। स्नानान्तसंस्काराणां सर्वत्रोपयोगश्च आपस्तम्बाचार्यैरुक्तः 'सर्वेषामुपनयनप्रभृत्याचार्यकुले वासः सर्वेषामनूत्सर्गो विद्यायाः, बुद्ध्वा कर्माणि यत्कामयेत तदारभेत' इति। अस्यार्थः– सर्वाश्रमिणामुपनयनप्रभृत्याचार्यकुले वासः समानः। यतः सर्वाश्रमाणां विद्याया अपरित्यागोऽपेक्षितः। अतश्च आचार्यकुलाद्विद्यामधीत्य कर्माणि स्वरूपतः फलतोऽधिकारतश्च विविच्य बुद्ध्वा स्वस्वशक्त्यानुष्ठेया इति।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

एतदभिप्रायेणैव नैव स्नानान्तरसंस्कारमात्रप्रतिपादनमत्र भगवता वाल्मीकिना कृतम्। गुणास्तु सर्वेऽपि राज्यपरिपालनेऽपेक्षिता इति साकल्येन प्रतिपादिताः। न केवलमैहिकराज्यपरिपालनार्था एव गुणाः संस्काराश्च, अपि तु, आमुष्मिकब्रह्मलोकादिसाधका अपि भवन्ति। तथा च गौतमः— 'गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनम्, चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानं देवपितृमनुष्यभूतब्रह्मणामेतेषां चाष्टका पार्वणश्राद्धश्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्तपाकयज्ञसंस्थाः अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणम् चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्तहविर्यज्ञसंस्थाः अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्तसोमसंस्थाः' इत्येते चत्वारिंशत्संस्काराः। अथाष्टावात्मगुणाः— दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति। यस्यैते चत्वारिंशत्संस्कारा न चाष्टावात्मगुणा न स ब्रह्मणः सालोक्यं च

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गच्छति । यस्य तु खलु चत्वारिंशत्संस्काराणामेकदेशोऽपि अष्टावात्मगुणाः अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति' इति । गौतमसूत्रस्यायमभिप्रायः—यस्य चत्वारिंशत्संस्कारा अष्टावात्मगुणास्तस्य ब्रह्मलोकावाप्तिरनुक्तसिद्धैव । यस्य चत्वारिंशत्संस्कारा न चाष्टावात्मगुणा न तस्य ब्रह्मलोकावाप्तिः । चत्वारिंशति संस्कारेषु गृहस्थ एवाधिकारी । यस्त्वेतेषां साकल्येनानुष्ठानेऽशक्तः तस्य ब्रह्मचारिवानप्रस्थयतीनां च स्वस्वाश्रमविहितानां यथाशक्त्यवश्यानुष्ठानेऽपि दयाद्यात्मगुणानां साकल्येन सत्त्वे ब्रह्मणः सायुज्यं सालोक्यं च गच्छतीति । ननु आचार्यैः संस्काराणामेकदेशोऽपीत्युक्तम्, शक्त्या सर्वेऽपि संस्काराः कर्तव्या इति कथमुक्तमिति चेत्तत्र स्नानान्तसंस्काराणां सर्वाश्रमाधिकारसंपादकत्वात् तेष्वेकदेशानुष्ठानेनाश्रमधर्मेऽधिकाराभावात्ते सर्वे अवश्यमनुष्ठेया एव । आश्रमपरिग्रहोत्तरं तत्तदाश्रमे विहितसंस्काराणां मध्ये शक्यानां परित्यागे प्रत्यवायो भवति । तथा चाथर्वणी श्रुतिः—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

'यस्याग्निहोत्रमदर्शमपौर्णमासमनाग्रयणमतिथिवर्जितं च अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान्हिनस्ति' इति। बोधायनोऽपि 'यस्य नित्यानि लुप्तानि तथैवागन्तुकानि च। विपथस्थो न हि स्वर्गं गच्छेत्तु पतितो हि सः' इति। अतः स्वस्वाश्रमविहितसंस्कारापरित्यागेनावश्यानुष्ठेया इति शक्यसर्वानुष्ठानमेव सूत्रस्थैकदेशशब्दार्थ इति न विरोधः। तथा च मनुः-- 'अधीत्य विधिवद्वेदान्पुत्रानुत्पाद्य धर्मतः। इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्'। अत्र सूत्रे पूर्वोक्तगुणमध्ये दयादीनां केषांचिदेव गुणानां कथनं सर्वाश्रमसाधारण्या इत्यभिप्रायेण। तथा च विष्णुपुराणे— 'दया समस्तभूतेषु तितिक्षा नातिमानिता। सत्यं शौचमनायासो मङ्गलं प्रियवादिता॥ मैत्री तथास्पृहा तद्वदकार्पण्यं नरेश्वर। अनसूया च सामान्या वर्णानां कथिता गुणाः॥ आश्रमाणां तु सर्वेषामेते सामान्यलक्षणा' इति। विशेषतस्तु राज्यपरिपालने स हि रूपोपपन्नश्चेत्यादिना उक्ता अपि गुणाः अपेक्षणीया

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्युक्तं नीतिशास्त्रे । एवं चोक्तप्रकारेण ऐहिकराज्यपरिपालनामुष्मिकब्रह्मलोकावाप्त्योः आवश्यिकसकलगुणानामवश्यिकस्नानान्तसंस्काराणां च प्रतिपादनं युक्तमेव । ननु एवंगुणाढ्यत्वमिदानीं किमिति प्रतिपाद्यते, उत्पत्त्यनन्तरमेव एवंगुणाढ्य इति वक्तुं शक्यत्वादिति चेन्न, तदानीं सत्संग्रहप्रग्रहणसज्जनप्रतिपूजकत्वादिगुणानां वक्तुमशक्यत्वात् । यद्यपि रूपोपपन्नत्वप्रशान्तात्मत्वादिसहजगुणास्तदानीमपि वक्तुं शक्याः तथापि तेषां गुणानां तस्मिन्काले‌ऽनुपयोगात्, एवमपि ब्रह्मचर्यसमये शान्त्यादिगुणानां संभवत्युपयोगः तथापि केषांचिदेवोपयोगो न सर्वेषां गृहस्थस्य तु सर्वगुणोपयोगो वर्तत इत्यभिप्रायेण दानपरिग्रहसमनन्तरमेव सर्वे गुणाः प्रतिपादिताः । अत एव 'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य, कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न च पुनरावर्तते' इति च्छान्दोग्ये गृहस्थेनैवोपसंहारदर्शनान्न तुरीयाश्रम इत्याशङ्कायां भगवान्बादरायणः— 'कृत्स्नभावात्तु गृहिणोपसंहारः' इति सूत्रेण ब्रह्मचारिणामुक्तसत्यवचनादेः गृहस्थाश्रमोक्ताग्निहोत्रादिकर्मणां वानप्रस्थतुरीयाश्रमयोरुक्तशान्त्यादीनामपि कृत्स्नशः गृहस्थे संभवात् गृहस्थेनोपसंहारः न तुरीयाश्रमाभावादिति प्रतिपादितवान् । तस्मात्सर्वेऽपि गुणाः दारपरिग्रहानन्तरमेव स्वरूपत उपयोगतश्च सुलभा इति । उपपन्नमेवेदानीं गुणवर्णनम् । ततो वृद्धो दशरथः सकलकल्याणगुणालंकृतं श्रीरामं मन्त्रिभिः सह युवराजं निश्चित्य, पौरजानपदसंपूर्णां सभां प्रविवेश । द्वितीये— ततो धर्मतो राज्यपरिपालनेन परिश्रान्तोऽहं राममेव युवराजं कर्तुमिच्छामि ॥

यद्यप्येषा मम प्रीतिर्हितमन्यद्विचिन्त्यताम् ।
अन्या मध्यस्थचिन्ता तु विमर्दाभ्यधिकोदया ॥

इति वदन्तं राजानं पौरजानपदाः सानन्दमभिनन्द्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रामं हि युवराजानमभिषिञ्चस्व धार्मिकम् ।
इच्छामो हि महाबाहुं रघुवीरं महाबलम् ।
गजेन महता यान्तं रामं छत्रावृताननम् ॥

इत्यवोचन् । ततो राजा पौरजानपदाभिप्रायं जानन्नपि तन्मुखेन द्रढयितुमजानान इव धर्मतो राज्यं प्रशासति मयि किमिति राममेव युवराजमिच्छथ इत्यपृच्छत् ।

ते तमूचुर्महात्मानं पौरजानपदैः सह ।
बहवो नृप कल्याणा गुणाः पुत्रस्य सन्ति ते ॥

गुणान्गुणवतो देव देवकल्पस्य धीमतः ।
प्रियानानन्दनान्कृत्स्नान्प्रवक्ष्यामोऽथ ताञ्शृणु ॥

दिव्यैर्गुणैः शक्रसमो रामः सत्यपराक्रमः ।
इक्ष्वाकुभ्योऽपि सर्वेभ्यो ह्यतिरिक्तो विशांपते ।

रामः सत्पुरुषो लोके सत्यधर्मपरायणः ।
साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

प्रजासुखत्वे चन्द्रस्य वसुधायाः क्षमा गुणैः।
बुद्ध्या बृहस्पतेस्तुल्यो वीर्ये साक्षाच्छचीपतेः॥

धर्मज्ञः सत्यसंधश्च शीलवाननसूयकः।
क्षान्तः सान्त्वयिता शक्यः कृतज्ञो विजितेन्द्रियः॥

मृदुश्च स्थिरचित्तश्च सदा भव्योऽनसूयकः।
प्रियवादी च भूतानां सत्यवादी च राघवः॥

बहुश्रुतानां वृद्धानां ब्राह्मणानामुपासिता।
तेनास्येहातुला कीर्त्तिर्यशस्तेजश्च वर्धते॥

देवासुरमनुष्याणां सर्वास्त्रेषु विशारदः।
सम्यग्विद्याव्रतस्नातो यथावत्साङ्गवेदवित्॥

गान्धर्वे च विभुः श्रेष्ठो बभूव भरताग्रजः।
यदा व्रजति संग्रामं ग्रामार्थे नगरस्य वा॥

गत्वा सौमित्रिसहितो नाविजित्य निवर्तते।
संग्रामात्पुनरागम्य कुञ्जरेण रथेन वा॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पौरान्स्वजनवन्नित्यं कुशलं परिपृच्छति ।
पुत्रेष्वग्निषु दारेषु प्रेष्यशिष्यगणेषु च ॥

निखिलेनानुपूर्व्याच्च पिता पुत्रानिवौरसान् ।
शुश्रूषन्ते च वः शिष्याः कच्चित्कर्मसु दंशिताः ॥

इति नः पुरुषव्याघ्रः सदा रामोऽभिभाषते ।
व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ॥

उत्सवेषु च सर्वेषु पितेव परितुष्यति ।
सम्यग्योक्ता श्रेयसां च न विगर्ह्यकथारुचिः ॥

प्रजापालनसंयुक्तो न रागोपहतेन्द्रियः ।
शक्यस्त्रैलोक्यमप्येष भोक्तुं किं नु महीमिमाम् ॥

नास्य क्रोधः प्रसादश्च निरर्थोऽस्ति कथंचन ।
हन्त्येष नियमाद्वध्यानवध्येषु न कुप्यति ।
युनक्त्यर्थैः प्रहृष्टश्च तस्मै यत्र स तुष्यति ॥



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

इत्येवंविधैः कल्याणगुणैरनुरक्तानस्मानकरोत् । अपि च,

आशंसते जनः सर्वो राष्ट्रे पुरवरे तथा ।
आभ्यन्तरश्च बाह्यश्च पौरजानपदो जनः ॥

स्त्रियो वृद्धास्तरुण्यश्च सायं प्रातः समाहिताः ।
सर्वान्देवान्नमस्यन्ति रामस्यार्थे यशस्विनः ॥

राममिन्दीवरश्यामं सर्वशत्रुनिबर्हणम् ।
पश्यामो यौवराज्यस्थं तव राजोत्तमात्मजम् ॥

तं देवदेवोपममात्मजं ते
सर्वस्य लोकस्य हिते निविष्टम् ।
हिताय नः क्षिप्रमुदारजुष्टं
मुदाभिषेक्तुं वरद त्वमर्हसि ॥

इति सकललोकहितकरश्रीरामाभिषेकरूपमेव वरं प्रार्थयामासुः । अनेन सर्गेण सर्वप्रजाभ्यनुज्ञयैव अभिषिक्तो राजा श्रेयान्भवतीति सूचितम् । तथा च

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भारते आदिपर्वणि प्रकृतीः प्रति ययातिवचनम्— 'भवतोऽनुनयाम्येवं पूरू राज्येऽभिषिच्यताम्'। प्रकृतय ऊचुः— 'यः पुत्रो गुणसंपन्नो मातापित्रोर्हितः सदा। सर्वमर्हति कल्याणं कनीयानपि सत्तमः॥ अर्हः पूरुरिदं राज्यं यः सुतः प्रियकृत्तव' इति। तत्रैव स्थलान्तरेऽपि धर्मपुत्रमुद्दिश्य प्रकृतिवचनम्— 'गुणैः समुदितान्दृष्ट्वा पौराः पाण्डुसुतास्तथा। कथयांचक्रिरे तेषां गुणान्संसत्सु भारत॥ राज्यप्राप्तिं च संप्राप्तं ज्येष्ठं पाण्डुसुतं तदा। कथयन्ति स्म संभूय चत्वरेषु सभासु च॥ ते वयं पाण्डवं ज्येष्ठं तरुणं वृद्धशीलिनम्। अभिषिञ्चाम साध्वद्य सत्यकारुण्यवेदिनम्'। तत्रैव च दुर्योधनं प्रति धृतराष्ट्रवचनम्— 'गुणवाँल्लोकविख्यातः पौराणां च सुसंमतः। कथं स शक्यतेऽस्माभिरपाकर्तुं बलादितः। ते पुरा सत्कृतास्तात पाण्डुना नागरा जनाः। कथं युधिष्ठिरस्यार्थे न नो हन्युः सबान्धवान्' इति॥

तृतीये— ततो राज्ञा प्रजाभिप्रायमवलोक्य,

अभिषेकाय रामस्य यत्कर्म सपरिच्छदम्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदद्य भगवान्सर्वमाज्ञापयितुमर्हसि ॥

इति समुदीरितो वसिष्ठः—

सुवर्णादीनि रत्नानि बलीन्सर्वौषधीरपि ।
शुक्लमाल्यानि लाजांश्च पृथक्क मधुसर्पिषी ॥

अहतानि च वासांसि रथं सर्वायुधान्यपि ।
चतुरङ्गबलं चैव गजं च शुभलक्षणम् ॥

चामरे व्यजने शुभ्रे ध्वजं छत्रं च पाण्डरम् ।
हिरण्यशृङ्गं वृषभं समग्रं व्याघ्रचर्म च ॥

शतं च शातकुम्भानां कुम्भानामग्निवर्चसाम् ।
उपस्थापयत प्रातरग्न्यगारं महीपतेः ॥

यदन्यत्किंचिदेष्टव्यं तत्सर्वमुपकल्प्यताम् ।
अन्तःपुरस्य द्वाराणि सर्वस्य नगरस्य च ॥

चन्दनस्रग्भिरर्च्यन्तां धूपैश्च घ्राणहारिभिः ।
प्रशस्तमन्नं विधिवद्दधिक्षीरोपसेचनम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्विजानां शतसाहस्रे यत्प्रकाममलं भवेत्।
सत्कृत्य द्विजमुख्यानां श्वः प्रभाते प्रदीयताम्॥

घृतं दधि च लाजांश्च दक्षिणाश्चापि पुष्कलाः।
सूर्येऽभ्युदितमात्रे च भविता स्वस्तिवाचनम्॥

ब्राह्मणाश्च निमन्त्र्यन्तां कल्प्यन्तामासनानि च।
आबध्यन्तां पताकाश्च राजमार्गश्च सिच्यताम्॥

सर्वे च तालावचरा गणिकाश्च स्वलंकृताः।
कक्ष्यां तृतीयामासाद्य तिष्ठन्तु नृपवेश्मनः॥

देवायतनचैत्येषु सान्नभक्षाः सदक्षिणाः।
उपस्थापयितव्याः स्युर्माल्ययोग्याः पृथक्पृथक्॥

दीर्घासिबद्धयोधाश्च संनद्धा मृष्टवाससः।
महाराजाङ्गणं सर्वे प्रविशन्तु महोदयम्॥

इत्येवं समादिश्य राजकीयान्यथानिदेशं सुविहित-मिति निवेदयामास। अनेन सुवर्णादीनि रत्नानीत्यादि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

प्रविशन्तु महोदयमित्यन्तेन सर्वौषधिरत्नादीनां. राजाभिषेके सामग्रीत्वमुक्तं भवति । यथा च सामविधानब्राह्मणे— 'राजानमभिषेचयेत्तिष्येन श्रवणेन वा । व्रीहियवैस्तिलमाषैर्दधिमधुसुमनोजातरूपैर्यशस्विनीभ्यो नदीभ्यः समुद्राच्चोदकान्याहृत्यौदुम्बरे भद्रासने वैयाघ्रे चर्मण्युत्तरलोम्न्यासीनं जीवन्तीनां गवां शृङ्गकोशैरभिषिञ्चेत् । अभ्रातृव्य इति रहस्येन यं कामयेतैकराजः स्यान्नास्य चक्रं प्रतिहन्येतैकवृषेणाभिषिञ्चेत् । अभिषेक्त्रे दद्याद्ग्रामवरं दासीशतं सहस्रं तदधीनश्च भवेत्' इति । ततश्च राजनियुक्तेन सुमन्त्रेण समानीतो रामभद्रः स्वावलोकनमात्रेण समुदितानन्दसंदोहमांसलं दशरथमवलोक्य

स प्राञ्जलिरभिप्रेत्य प्रणतः पितुरन्तिके ।
नाम स्वं श्रावयन् रामो ववन्दे चरणौ पितुः ॥

अनेन बद्धाञ्जलिपुटः सन्नुपसृत्य स्वनाम संकीर्त्य गुर्वाद्यभिवादनं कुर्यात् इति सूचितम् । तथा च गौतमः—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'स्वं नाम प्रोच्यायमहामित्यभिवादः' इति । मनुरपि—
'अभिवादात्परं विप्रो ज्यायान्सममभिवादयन् । असौ नामाहमस्मीति स्वनाम परिकीर्तयेत् ॥ भोःशब्दं कीर्तयेदन्ते स्वस्वनाम्नोऽभिवादने' नम इति अभिवादये इति शब्दमुच्चार्य पश्चान्नामाहं भोः इति ब्रूयादित्यर्थः । प्रत्यभिवादनानभिज्ञस्य नाभिवादनं कर्तव्यमित्याह मनुः—
'यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् । नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः' इति । प्रत्यभिवादनप्रकारोऽपि मनुना दर्शितः— 'आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने । अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरप्लुतः' इति । यस्तु जानन्नपि प्रत्यभिवादं न करोति, तस्य दोषमाह स एव— 'अभिवादे कृते यस्तु न करोत्यभिवादनम् । आशिषं वा कुरुश्रेष्ठ स याति नरकान्बहून्' इति । यमोऽपि—'अभिवादे तु यः पूर्वमाशिषं न प्रयच्छति । यद्दुष्कृतं भवेत्तस्य स तस्याघं प्रपद्यते ॥ तस्मात्पूर्वाभिभाषी स्याच्चण्डालस्यापि धर्मवित् । सुरां पिबेति वक्तव्यमेवं धर्मो न हीयते' इति ।

-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Ko

ब्राह्मणादिषु कर्तव्यपूर्वाभिभाषणे विशेषमाह मनुः– 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च' इति । आपस्तम्बस्तु— 'कुशलमवरवयसं वयस्यं वा पृच्छेत्' 'अनामयं क्षत्रियम्' 'अनष्टं वैश्यम्' 'आरोग्यं शूद्रम्' इति । चतुर्णामपि वर्णानां पूर्वभाषणे विशेषमाह यमः— 'स्वस्तीति ब्राह्मणो ब्रूयादायुष्मानिति भूमिपः । वर्धतामिति वैश्यस्तु शूद्रस्तु स्वागतं वदेत्' इति । स्त्रियं प्रति पूर्वभाषणे विशेषमाह मनुः— 'परपत्नी तु या स्त्री स्यादसंबद्धा तु योनितः । तां ब्रूयाद्भवतीत्येव सुभगे भगिनीति च' इति । अभिवादने तु वर्ज्यानाहापस्तम्बः— 'न सोपानद्वेष्टितशिरा अवहितपाणिर्वाभिवादयीत' इति । स एवाह—'अप्रयतेन नाभिवाद्यम्' इति । शङ्खोऽपि— 'नोदकुम्भहस्तोऽभिवादयेद्भैक्षं चरन्नक्तपुष्पान्नहस्तो नाशुचिर्न जपन्न शयानः' इति । अभिवाद्येषु वर्ज्यानाह आपस्तम्बः— 'विषमगतायागुरवे नाभिवाद्यम्, तथाप्रयताय' इति । तथान्यत्रापि स एव—'समित्पुष्पकुशा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ज्यार्घ्यमृदन्नाक्षतपाणिकः । जपं होमं च कुर्वाणो नाभिवाद्यास्तथा द्विजाः । पाषण्डं पतितं व्रात्यं महापातकिनं शठम् । नास्तिकं चाकृतघ्नं च नाभिवादेत्कथंचन ॥ धावन्तं च प्रमत्तं च मूत्रोच्चारकृतं तथा । भुञ्जानमातुरं मार्गे नाभिवादेद्द्विजोत्तमः ॥ वमन्तं जृम्भमाणस्य कुर्वन्तं दन्तधावनम् । अभ्यक्तशिरसं चैव स्नास्यन्तं नाभिवादयेत् ॥ स्रक्पाणिकमनाज्ञातमशक्तं रिपुमातुरम् । योगिनं च तपःसक्तं कनिष्ठं नाभिवादयेत्' । शातातपोऽपि— 'उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीम् । अभिवाद्य द्विजो मोहादहोरात्रेण शुध्यति' । इदं चाभिवादनं ज्यायस एव कर्तव्यम् । तथा च मनुः— 'अभिवादपरो विप्रो ज्यायांसमभिवादयेत्' इति । तत्र कियता ज्यायस्त्वमित्यत्र विशेषमाहापस्तम्बः— दशवर्षं पौरसख्यं पञ्चवर्षं तु चारणम् । त्रिवर्षपूर्वः श्रोत्रियः अभिवादनमर्हति' इति । गौतमोऽपि— 'दशवर्षवृद्धः पौरः पञ्चभिः कलाभरः श्रोत्रियस्त्रिभिः' इति । मनुरपि— 'दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कलाभृ

-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Ko

ताम्। त्र्यब्दपूर्वं श्रोत्रियाणां स्वल्पेनापि स्वयोनिषु' इति। अस्यार्थः–समानपुरवासिनामश्रोत्रियाणां दशभिर्वर्षैः पूर्वः सखा भवति; ततोऽधिको ज्यायान्। कलाभृतां गीतादिविद्यावतां पञ्चाब्दपूर्वः सखा भवति; ततोऽधिको ज्यायान्। श्रोत्रियाणां वेदाध्यायिनां त्र्यब्दपूर्वः सखा भवति, ततोऽधिको ज्यायान्। स्वयोनिषु भ्रात्रादिषु स्वल्पेनापि वयसा पूर्वः सखा भवति; ततोऽधिको ज्यायान् इति। स्त्रीणां ज्यायस्त्वे विशेषमाहापस्तम्बः—'पतिवयसः स्त्रियः' इति। यवीयस्यपि पत्युर्वयसा ज्यायसी अभिवाद्या। अप्रयतो न प्रत्यभिवदेदित्याहापस्तम्बः— 'अप्रयतश्च न प्रत्याभिवदेत्' इति। नमस्कार्याणामपि श्वशुरमातुलादीनां यवीयस्त्वे विशेषमाह गौतमः—'ऋत्विक्श्वशुरपितृव्यमातुलानां तु यवीयसां प्रत्युत्थानम्। अनभिवाद्या' इति। बोधायनस्त्वाह— 'ऋत्विक्श्वशुरपितृव्यमातुलानां तु प्रत्युत्थानमभिभाषणम्' इति। आपस्तम्बोऽपि—'ऋत्विक्श्वशुरपितृव्यमातुलानवरवयसः प्रत्युत्थायाभिवदेत्' इति। अत्र अभिवादोऽभिभाषणम; एतच्चाभिवादनं सर्वैरपि ब्राह्मणानां

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

कर्तव्यम् । तथा च शातातपः— 'अभिवाद्यो नमस्कार्यः शिरसा वन्द्य एव च । ब्राह्मणः क्षत्रियाद्यैस्तु श्रीकामैः सादरं सदा ॥ वयसाधिकोऽपि क्षत्रियो ब्राह्मणेन नाभिवाद्य इत्याहापस्तम्बः— 'दशवर्षस्तु ब्राह्मणः शतवर्षस्तु क्षत्रियः । पितापुत्रौ च तौ विद्धि तयोस्तु ब्राह्मणः पिता' इति । शातातपोऽपि— 'नाभिवाद्यास्तु विप्रेण क्षत्रियाद्याः कथंचन । ज्ञानकर्मगुणोपेता यद्यप्येते बहुश्रुताः' इति । प्रमादादनभिवाद्यानामभिवादने प्रायश्चित्तमाह देवलः— 'अभिवाद्य द्विजः शूद्रं सचेलं स्नानमाचरेत् । ब्राह्मणानां शतं सम्यगभिवाद्य विशुध्यति' इति । सभासु नाभिवादनं किं तु नमस्कार एवेत्याह विष्णुः— 'सभासु चैव सर्वासु यज्ञे राजगृहेषु च । नमस्कारं प्रकुर्वीत ब्राह्मणान्नाभिवादयेत्' इति । गुर्वाद्यभिवादने विशेषमाह गौतमः— 'गुरोः पादोपसंग्रहणं प्रातर्ब्रह्मानुवचनं च' इति । आपस्तम्बोऽपि— 'उदिते त्वादित्ये आचार्याय समेत्योपसंग्रहणं सदैवाभिवादनम्' इति । उपसंग्रहणप्रकारमाह मनुः— 'व्य-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

व्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः। सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः' इति। बोधायनोऽपि— 'श्रोत्रे संस्पृश्य मनः समाधायाधस्ताज्जान्वोरा पद्भ्याम्' इति; उपसंग्रहणं कुर्यादिति शेषः। आपस्तम्बोऽपि—'दक्षिणेन पाणिना दक्षिणं पाणिमधस्तादभ्यधिमृश्य सकुष्ठिकमुपसंगृह्णीयात्' 'उभाभ्यामेवोभावभिपीडयत उपसंग्राह्यावित्येके' इति। एकहस्तेनाभिवादने दोषमाह विष्णुः—'जन्मप्रभृति यत्किंचिच्चेतसा धर्ममाचरेत्। सर्वं तं निष्फलं याति एकहस्ताभिवादनात्' इति। उपसंग्रहणं गुर्वादिपत्नीनामपि कर्तव्यम्। तथा च मनुः— 'गुरुवत्प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः। असवर्णास्तु संपूज्याः प्रत्युत्थानाभिभाषणैः' इति। भ्रातृभार्यादिषु सवर्णासूपसंग्रहणे विशेषमाह मनुः— 'भ्रातृभार्योपसंग्राह्या सवर्णाहन्यहन्यपि। विप्रोष्य तूपसंग्राह्या ज्ञातिसंबन्धियोषितः' इति। एवं सर्वासां गुरुभार्याणां प्राप्ते विशेषमाह मनुः— 'गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः। पूर्णविंशतिवर्षेण गुणदोषौ विजानता॥ अभ्यञ्जनं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

स्नापनं च गात्रोद्वर्तनमेव च । गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम्' इति । गौतमोऽपि—'नोच्छिष्टाशनस्नापनप्रसाधनपादप्रक्षालनोन्मर्दनोपसंग्रहणानि विप्रोष्योपसंग्रहणं गुरुभार्याणां नैके युवतीनाम्' इति । किं तर्हि तत्र कर्तव्यमिति अपेक्षायामाह मनुः— 'कामं तु गुरुपत्नीनां युवतीनां युवा भुवि । विधिवद्वन्दनं कुर्यादसावहमिति ब्रुवन् ॥ विप्रोष्य पादग्रहणमन्वहं चाभिवादनम् । गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन्' इति । अत्र यद्यपि गुरुपत्न्या युवत्याः भूमावेव वन्दनं कुर्यादिति कथनात्, जनन्या अपि भूमावेव वन्दनं प्राप्नोति । तथापि अग्रे—

पुत्रस्ते वरदः क्षिप्रमयोध्यां पुनरागतः ।
कराभ्यां मृदुपीनाभ्यां चरणौ पीडयिष्यति ।

इति कौसल्यां प्रति सुमित्रावचनपर्यालोचनया जनन्याः पादयोरेवाभिवादनमवगम्यते । भार्यया क्रियमाणे भर्तृनमस्कारे विशेषमाह गौतमः— 'स्त्रीपुंयोगेऽभिवादतो

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

नियममेके' इति । अस्यार्थः– अभिवादने क्रियमाणे अभिवादनीयनाम्ना अभिवादननियमो नास्ति; किं तु तत्तत्कालोपस्थितव्यवहारोपयुक्तयत्किंचिन्नाम्नाभिवादनं कर्तव्यम्' इति । एतादृशाभिवादनस्य फलमाह मनुः— 'अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । चत्वारि तस्य वर्धन्ते ह्यायुः प्रज्ञा यशो बलम्' इति । आपस्तम्बोऽपि 'स्वर्गमायुश्चेप्सन्' इति स्वर्गायुषोः फलत्वमाह । श्रीरामभद्रोऽपि एवमकरणे प्रत्यवायकरं करणे अभ्युदयकरं नमस्कारं कृतवान् । ततः

तस्मै चाभ्युदितं दिव्यं मणिकाञ्चनभूषितम् ।
दिदेश राजा रुचिरं रामाय परमासनम् ॥

तदासनवरं प्राप्य व्यदीपयत राघवः ।
स्वयैव प्रभया मेरुमुदये विमलो रविः ।

अनेन गुर्वाद्यभ्यनुज्ञयैव तत्संनिधौ आसने उपवेष्टव्यमिति सूचितम् । तथा च मनुः— 'आस्यतामिति चोक्तः सन्नासीताभिमुखो गुरोः' इति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

तं पश्यमानो नृपतिस्तुतोष प्रियमात्मजम् ।
अलंकृतमिवात्मानमादर्शतलसंस्थितम् ॥

अत्र पुत्रः पितुः प्रतिबिम्ब इत्युक्तं भविष्यति इति । तथा च शाकुन्तलोपाख्याने दुष्यन्तं प्रति शकुन्तलावचनम् 'त्वदङ्गेभ्यः प्रसूतोऽयं पुरुषात्पुरुषोऽपरः । सरःस्विवामल आत्मानं द्वितीयं पश्य वै सुतम् । यथा ह्याहवनीयोऽग्निर्गार्हपत्यात्प्रणीयते । तथा त्वत्तः प्रसूतोऽयमेकः सन्द्विधा कृतः' इति ।

स तं सस्मितमाभाष्य पुत्रं पुत्रवतां वरः ।
उवाचेदं वचो राजा देवेन्द्रमिव कश्यपः ॥

ज्येष्ठायामसि मे पत्न्यां सदृश्यां सदृशः सुतः ।
उत्पन्नस्त्वं गुणैः श्रेष्ठो मम रामात्मजः प्रियः ॥

अत्र ज्येष्ठायां पत्न्यां सदृश्यामिति विशेषणत्रयेण सुतो गुणाढ्य आत्मजः प्रिय इति विशेषणचतुष्टयेन च अज्येष्ठाजाताद्यपेक्षयापि ज्यैष्ठिनेयादीनां प्राबल्यमुक्तं भ-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

वति। तथा च ज्येष्ठभार्याजातस्य उद्धाराधिक्यकथनेन प्राबल्यमाविष्करोति मनुः— 'पुत्रः कनिष्ठो ज्येष्ठायां कनिष्ठायां च पूर्वजः। कथं तत्र विभागः स्यादिति चेत्संशयो भवेत् ॥ एकं वृषभमुद्धारं संहरेत स पूर्वजः। ततोऽपरे ज्येष्ठवृषास्तदूनानां स्वमातृतः ॥ ज्येष्ठस्तु जातो ज्येष्ठायां हरेद्वृषभषोडशाः। ततः स्वमातृतः शेषा भजेरन्निति धारणा' इति। गौतमोऽपि 'वृषभोऽधिको ज्येष्ठस्य वृषभषोडशा ज्यैष्ठिनेयस्य' इति। कनिष्ठायामुत्पन्नस्य ज्येष्ठस्य एको वृषभः, ज्यैष्ठिनेयस्य वृषभाधिकाः पञ्चदश गाव इत्यर्थः, कनिष्ठायामुत्पन्नस्य ऋषभोद्धारेण विना ज्येष्ठायामुत्पन्नयवीयसा समो भाग इति वदन् ज्येष्ठाप्राबल्यमाविष्करोति गौतम एव— 'समं वा अज्यैष्ठिनेयेन यवीयसामिति, कनिष्ठायामुत्पन्नेन जन्मतो ज्येष्ठेन ज्येष्ठायामुत्पन्नानां यवीयसां समो भाग इत्यर्थः। प्रवासप्रकरणे त्रिकाण्डमण्डनोऽपि— 'ज्येष्ठा चेदग्निसंयुक्ता ह्यन्या गच्छेद्यथासुखम्। यजमानेन सहिता यद्वा ता एव केवलाः'। तत्रैव स्थलान्तरे– 'भार्याः सन्तीह याव-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

स्वस्ताभिः सर्वाभिरन्वितः । यद्वाधानादुपव्यूढकामपत्नी-विवर्जितः ॥ आधानानन्तरोढा सवर्णापि कामपत्नी-त्यर्थः इति । कात्यायनोऽपि— 'प्रथमा धर्मपत्नी स्याद्वि-तीया रतिवर्धनी । दृष्टमेव फलं तत्र नादृष्टमुपपद्यते' इति । अत्र ज्येष्ठाप्राबल्यकथनात्तत्पुत्रस्य श्रेष्ठत्वमर्थसि-द्धम् । एवं ज्यैष्ठिनेयप्राबल्यमुक्तं पत्न्यामिति विशेषणाच्च । पत्नी पाणिगृहीती, तस्यामुत्पन्न एव प्रबल इति गम्यते । तथा चापस्तम्बः तस्यैव भागार्हत्वं धर्म्यत्वं चाह— 'सवर्णापूर्वशास्त्रविहितायां यथर्तु गच्छतः पुत्रांस्तेषां क-र्मभिः संबन्धः' 'दायेनाव्यतिक्रमश्चोभयोः' इति ॥ स-वर्णा च अनन्यपूर्वा च शास्त्रोक्तविवाहसंस्कृता च या भार्या तस्यामुत्पन्न एव धर्म्यो रिक्थभाक्चेत्यर्थः । स एवापरिणीतायामुत्पन्नस्य दोषमप्याह— 'पूर्ववत्यामसं-स्कृतायां वर्णान्तरे च मैथुने दोषः' 'तत्रापि दोषवान्पुत्र एव' अतिशयेन दोषवानित्यर्थः ॥ तथा च पत्न्यामुत्पन्नः प्रबलः । सदृश्यामिति विशेषणेन सवर्णाजातः प्रबलः । तथा च बोधायनः— 'द्वितीय आत्मा जीवता द्रष्टव्यो यः



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

पुत्रमुत्पादयति स तथा भवति तस्मान्नात्मा कचिदक्षेत्र संमुत्स्रष्टव्यः आत्मानमेव मन्यते हि यो यथात्मानमुत्पादयति स तथा भवति तस्मादादित एव क्षेत्रमन्विच्छेत् । सवर्णे संस्कृतमुपदेशेन तस्मिन्दारसंयोगे प्रजामुत्पादयेदौषधमन्त्रसंयोगेन' इति। भारतेऽपि– 'एवं जातिषु सर्वासु सवर्णाः श्रेष्ठतां गताः। पत्युः शरीरशुश्रूषां धर्मकार्यं च नैत्यकम् ॥ स्वास्वैव कुर्यात्सर्वेषां नासजातिः कथंचन'। कात्यायनोऽपि—'अग्निहोत्रादिशुश्रूषां बहुभार्यः सवर्णया कारयेत्तद्बहुत्वे च ज्येष्ठया गर्हिता न चेत्' इति। मनुरपि— 'सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि। कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः' इति। भारते आनुशासनिके– 'तिस्रः कृष्ण पुरो भार्याः पश्चाद्विन्देत ब्राह्मणीम्। सा ज्येष्ठा सा च पूज्या स्यात्सा च भार्या गरीयसी ॥ स्नानं प्रसाधनं भर्तुर्दन्तधावनमञ्जनम्। हव्यं कव्यं च यच्चान्यद्धर्मयुक्तं गृहे भवेत् ॥ न तस्यां जातु तिष्ठन्त्यामन्या तत्कर्तुमर्हति। ब्राह्मणी त्वेव कुर्याद्वै ब्राह्मणस्य युधिष्ठिर ॥ अन्नं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

पानं च माल्यं च वासांस्याभरणानि च। ब्राह्मण्यैतानि देयानि भर्तुः सा हि गरीयसी॥ अथ चेदन्यथा कुर्याद्यदि कामाद्युधिष्ठिर। यथा ब्राह्मणचण्डालपूर्वदृष्टस्तथैव सः' इति। याज्ञवल्क्योऽपि– 'सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत्॥ सवर्णासु विधौ धर्मे ज्येष्ठया न विनेतराः' इति। सवर्णाज्जातस्य उद्धारप्रतिपादनेन प्राबल्यमाविष्करोति मनुः– 'बह्वीषु चैकजातानां नानास्त्रीषु निबोधत। ब्राह्मणस्यानुपूर्व्येण चतस्रः स्युर्यदि स्त्रियः॥ तासां पुत्रेषु जातेषु विभागेऽयं विधिः स्मृतः। कीनाशो गोवृषोयानमलंकारश्च वेश्म च। विप्रस्यौद्धारिकं देयमेकांशश्च प्रधानतः॥ त्र्यंशं दायाद्धरेद्विप्रो द्वावंशौ क्षत्रियासुतः। वैश्याजोऽध्यर्धमेवांशमर्धं शूद्रासुतो हरेत्॥ सर्वं वा रिक्थभागं तं दशधा प्रविभज्य तु। धर्म्यं विभागं कुर्वीत विधिनानेन धर्मवित्॥ चतुरोंशान्हरेद्विप्रस्त्रीनंशान्क्षत्रियासुतः। वैश्यापुत्रो हरेद्व्यंशमंशं शूद्रासुतो हरेत्॥ यद्यपि स्यात्सपुत्रस्तु यद्यपुत्रोऽपि वा भवेत्। नाधिकं दशमाद्दद्याच्छूद्रापु-

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

त्राय धर्मवित् ॥ भारतेऽपि पूर्ववर्णोत्पन्नपुत्रासत्त्वेऽपि वा शूद्रपुत्राय दशममेव भागं दद्यात् इत्युक्तम् । 'अविद्यमानमृक्थं तु संप्रवक्ष्यामि भारत । लक्षण्यं गोवृषो यानं यत्प्रधानतमं भवेत् ॥ ब्राह्मण्यास्तद्धरेत्पुत्र एकांशं वै पितुर्धनात् । शेषं तु दशधा कार्यं ब्राह्मणस्वं युधिष्ठिर ॥ तत्र तेनैव हर्तव्यश्चत्वारोंशाः पितुर्धनात् । क्षत्रियायास्तु यः पुत्रो ब्राह्मणः सोऽप्यसंशयः ॥ स तु मातृविशेषेण त्रीनंशान्हर्तुमर्हति । वर्णे तृतीये जातेन वैश्यायां ब्राह्मणादपि । द्विरंशस्तेन हर्तव्यो ब्रह्मणः स्याद्युधिष्ठिर ॥ शूद्रायां ब्राह्मणाज्जातो नित्यदेयधनः स्मृतः । अल्पं वापि प्रदातव्यं शूद्रपुत्राय भारत ॥ दशधा प्रविभक्तस्य धनस्यैष भवेत्क्रमः । सवर्णासु च जातानां समान्भागान्प्रकल्पयेत् ॥ एष एव क्रमो हि स्यात्क्षत्रियाणां युधिष्ठिर । अष्टधा तु भवेत्कार्यं क्षत्रियस्वं जनाधिप ॥ क्षत्रियाया हरेत्पुत्रश्चतुरोंशान्पितुर्धनात् । युद्धावहारिकं यच्च पितुः स्यात्स हरेत तत् ॥ वैश्यापुत्रस्तु भागांस्त्रीञ्शूद्रापुत्रस्तथाष्टमम् । सोऽपि दत्तं हरेत्पित्रा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

नादत्तं हर्तुमर्हति ॥ एकैव हि भवेद्भार्या वैश्यस्य कुरुनन्दन। द्वितीया तु भवेच्छूद्रा न तु दृष्टान्ततः स्मृता ॥ वैश्यस्य वर्तमानस्य वैश्यायां भरतर्षभ। शूद्रायां चापि कौन्तेय तयोर्विधिरयं स्मृतः ॥ पञ्चधा तु भवेत्कार्यं वैश्यस्य भरतर्षभ। तयोरपत्ये वक्ष्यामि विभागं च जनाधिप ॥ वैश्यापुत्रेण हर्तव्याश्चत्वारोंशाः पितुर्धनात्। पञ्चमस्तु स्मृतो भागः शूद्रापुत्राय भारत ॥ सोऽपि दत्तं हरेत्पित्रा नादत्तं हर्तुमर्हति। त्रिभिर्वर्णैः सदा जातः शूद्रो देयधनो भवेत् ॥ शूद्रस्य स्यात्सवर्णैव भार्या नान्या कथंचन' इति सदृश्यां जातस्य प्रावल्यमुक्तम्। सुत इति विशेषणेन इतरापेक्षया रिक्थभाक्त्वेन प्राबल्यमुक्तम्। तथा च श्रुतिः— 'मनुः पुत्रेभ्यो दायं व्यभजत' इति। आपस्तम्बोऽपि— 'जीवन्पुत्रेभ्यो दायं विभजेत्समम्'। गौतमोऽपि— 'ऊर्ध्वं पितुः पुत्रा रिक्थं भजेरन्'। आपस्तम्बोऽपि—'पुत्राभावे यः प्रत्यासन्नः सपिण्डः'। अतः सुतः प्रबलः। गुणैर्युक्तैरित्यनेन च गुणवाञ्श्रेष्ठः। तथा च बोधायनः—'गुण-

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

वान्हि शेषाणां भर्ता भवति ' इति । पतितज्येष्ठांशं प्रत्याह मनुः-- ' ज्येष्ठांशं प्राप्नुयात्तस्य यवीयान्गुणतोऽधिकः ' इति । आपस्तम्बोऽपि— ' सर्वे हि धर्मयुक्ता भागिनः ' ' यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोऽपि तमभागं कुर्वीत ' इति । गौतमोऽपि- ' राजन्यापुत्रो ज्येष्ठो गुणसंपन्नस्तुल्यभाक् ' इति निर्गुणज्येष्ठेन ब्राह्मणीपुत्रेण राजन्यापुत्रः कनिष्ठोऽपि गुणसंपन्नस्तुल्यभागी इत्यर्थः। स एव—' अवैद्येभ्यो वैद्यः कामं न दद्यात् ' इति। अविदुषे विद्वान्दद्याद्वा न वेत्यर्थः । गौतमोऽपि—सवर्णापुत्रोऽप्यन्यायवृत्तो न लभत एकेषाम् । अन्यायवृत्तः निन्दितवृत्तिः, सवर्णापुत्रोऽपि रिक्थं न लभते इत्येके । भारतेऽपि ' सर्वे चापि विकर्मस्था भागं नार्हन्ति सोदराः ' इति । आत्मज इत्यनेन च औरसः प्रबल इत्युक्तम् । तल्लक्षणमाह बोधायानः— ' सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं विद्यात् ' । प्राबल्यमप्याह मनुः— ' स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् । तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम् ।। एक एवौरसः पुत्रः पित्र्य-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

स्य वसुनः प्रभुः । शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् । नियुक्तायामपि पुमान्नार्यां जातोऽविधानतः । नैवार्हः पैतृकं रिक्थं पतितोत्पादितो हि सः ॥ नियुक्ता ह्यन्यतः पुत्रं देवराद्वाप्यवाप्नुयात् । तं कामजमरिक्थार्हं मिथ्योत्पन्नं प्रचक्षते ' इति । एवं च औरसः प्रबलः । प्रियस्य श्लाघ्यत्वे, 'योऽस्य पुत्रः प्रियस्यात्तं प्रति पूर्णमुन्नयेत्' इत्याश्वलायनः । आपस्तम्बोऽपि— 'प्रियस्य पुत्रस्य नाम गृह्णाति तामाशिषमाशासे तं शतव इत्यजातस्य अमुष्मा इति जातस्येत्यग्निहोत्रप्रकरणे दर्शपूर्णमासयोरपि ज्योतिषे तं तवोद्भासाद्यनुमातन्वच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यः छेदि देव्याद्धाम्नो मा चिच्छि मानुषादिति प्रियस्य पुत्रस्य नाम गृह्णाति' इति । तस्मादुक्तसर्वविधश्रैष्ठ्यसत्त्वात् श्रीराम एव राज्यार्ह इति सिद्धम् ॥

**गुणवत्यपि तु स्नेहात्पुत्र वक्ष्यामि ते हितम् ।**

अनेन गुणवानपि पुत्रः पित्रानुशासनीय इत्युक्तम् । तथा च बृहदारण्यके— 'तस्मात्पुत्रमनुशिष्टं लोक्यमाहु-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

स्तस्मादेनमनुशासते' इति। आपस्तम्बोऽपि— 'पुत्रमिवै-नमनुकाङ्क्षन् सर्वधर्मेष्वनपच्छादयमानः सुयुक्तो विद्यां ग्राहयेत्' इति। अस्यार्थः— एनं शिष्यं पुत्रमिव सर्व-धर्मेष्वगूहमानो विद्यां ग्राहयेत् इति। अत्र सूत्रे पुत्रानु-शासनं सिद्धवत्कृत्य तद्दृष्टान्तेन शिष्योऽनुशासनीय इत्यु-क्तम्। तथा च्छान्दोग्येऽपि— 'श्वेतकेतुर्हारुणेय आस तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्म-त्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति' इति। तथा 'ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्' इति। राजधर्मे-ऽपि— 'विदितं हि यथा सर्वं लोकवृत्तमिदं तव। विदिते चापि वक्तव्यं सुहृद्भिरनुरागतः' इति।

'भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः।
कामक्रोधसमुत्थानि त्यजेथा व्यसनानि च॥

परोक्षया वर्तमानो वृत्त्या प्रत्यक्षया तथा।
अमात्यप्रभृतीः सर्वाः प्रकृतीश्चानुरञ्जय॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

कोष्ठागारायुधागारैः कृत्वा संनिचयान्बहून् ।
तुष्टानुरक्तप्रकृतिर्यः पालयति मेदिनीम् ॥

तस्य नन्दन्ति मित्राणि लब्ध्वामृतमिवामराः ।
तस्मात्त्वमपि चात्मानं नियम्यैवं समाचर ॥

अनेन प्रजापालनं कुर्वतो राज्ञ एतादृशा गुणा अपेक्षिता इत्युक्तं भवति । तत्र विनयस्यावश्यिकत्वे मनुर्विनीतानभिधायाह— 'तेभ्योऽधिगच्छेद्विनयं विनीतात्मापि नित्यशः । विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित्' । विनयाविनययोः फलमाह स एव— 'बहवोऽविनयान्नष्टा राजानः सपरिच्छदाः । वनस्थाश्चैव राज्यानि विनयात्प्रतिपेदिरे ॥ वेनो विनष्टोऽविनयान्नहुषश्चैव पार्थिवः ॥ सुदासो यवनश्चैव सुमुखो निमिरेव च ॥ पृथुस्तु विनयाद्राज्यं प्राप्तवान्मनुरेव च । कुबेरश्च धनैश्वर्यं ब्राह्मण्यं चैव गाधिजः' । तथा च कामन्दकोऽपि— 'भवति हि विनयो ह बृहतो नृपतिपदाय शमाय च क्षमः । अविनयरतमादराहते वशमवशं च नयन्ति विद्विषः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

श्रुतविनयविधिः समाश्रितस्तनुरपि नैति पराभवं क्वचित्। इति स्म राजा विनयं नयान्वितो निषेवमाणो नरदेव-सेवितम्। पदं समाक्रामति भास्वरं श्रियः शिरो महारत्न-गिरेरिवोन्नतम्॥ इयं हि लोकोक्तिरलोकवर्तिनी स्व-भावतः पार्थिवता समुद्धता। बलात्तदैनां विनयेन यो-जयेन्नयस्य सिद्धौ विनयः पुरःसरः। परं विनीतः समु-पैति सेव्यतां महीपतीनां विनयो हि भूषणम्। प्रवृत्तदानो मृदुसंचरत्करः करीव भद्रो विनयेन शोभते॥ नयवि-क्रमसंपन्नः सूत्थानश्चिन्तयेच्छिवम्। नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः॥ विनयो हीन्द्रियजयस्तद्युक्तः शास्त्रमृच्छति। तन्निष्ठस्य हि शास्त्रार्थाः प्रसीदन्ति ततः श्रियः' इति। एवं विनयस्यावश्यिकत्वमुक्तम्। इन्द्रिय-जयस्यावश्यिकत्वे मनुः— 'इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम्। जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः'। कामन्दकोऽपि —'जितेन्द्रियस्य नृपते-र्नीतिमार्गानुसारिणः। भवन्त्युज्ज्वलिता लक्ष्म्यः कीर्त-यश्च नभःस्पृशाः॥ प्रकीर्णे विषयारण्ये धावन्तं वि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

प्रमाथिनम् । ज्ञानाङ्कुशेन कुर्वीत वश्यमिन्द्रियदन्ति-
नम् ॥ एकस्यापि नयः शक्तो मनसः संनिबर्हणे ।
महीं सागरपर्यन्तां स कथं नु विजेष्यति ॥ क्रियावसान-
विरसैर्विषयैरपहारिभिः । गच्छत्याक्षिप्तहृदयः करीव नृप-
तिर्ग्रहम् । सज्जमानोऽप्यकार्येषु विषधीविकृतेक्षणः । आव-
हत्युग्रभयदां स्वयमेवापदं नृपः ॥ शब्दः स्पर्शश्च रूपं च रसो
गन्धश्च पञ्चमः । एकैकमलमेतेषां विनाशप्रतिपत्तये ॥
शुचिशष्पाङ्कुराहारो विदूरक्रमणक्षमः । लुब्धकाद्गीतिलो-
भेन मृगो मृगपतेर्वधम् ॥ गिरीन्द्रशिखराकारो लीलयो-
न्मूलितद्रुमः । करिणीस्पर्शसंमोहादालानं याति वारणः ॥
स्निग्धदीपशिखालोकविलोभितविलोचनः । मृत्युमृच्छत्य-
संमोहात्पतङ्गः सहसा पतन् ॥ दूरेऽपि हि भवन्दृष्टेरगाधे
सलिले चरन् । मीनस्तु सामिषं लोहमास्वादयति मृत्यवे ॥
गन्धलुब्धो मधुकरो दानासवपिपासया । अभ्येत्य सुखसं-
चारान्गजकर्णझलज्झलान् ॥ कामो द्यूतं तथा पानं गर्हिता-
नि महीभुजाम् । दृष्टास्तेभ्यस्तु विपदः पाण्डुनैषधवृष्णिषु'
इति व्यसनपरित्यागस्यावश्यिकतोक्ता । प्रजारञ्जने काम-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

न्दकः— 'प्राधान्येन हि सर्वत्र सर्वा वै रञ्जयेत्प्रजाः। तासां तु रञ्जनाद्राजा सर्वाङ्गीं श्रियमश्नुते ॥ सदानुरक्त-प्रकृतिः प्रजापालनतत्परः। विनीतात्मा हि नृपतिर्भू-यसीं श्रियमश्नुते' इति। मार्कण्डेयपुराणेऽपि— 'वत्स राज्याभिषिक्तेन प्रजारञ्जनमादितः। कर्तव्यमविरोधेन स्वधर्मस्य महीभृता'। कामन्दके— 'क्व च नरपतिगर्वः संग्रहः क्व प्रजानां मधुरवचनयोगाल्लोकमभ्याददीत। मधुरवचनपाशैरायतालानितः सन्पदमपि न हि लोकः सुस्थितेर्भेदमेति'। कामक्रोधजयविषये कामन्दकः— 'कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा। षड्वर्गमु-त्सृजेदेनं यस्मिंस्त्यक्ते सुखी भवेत् ॥ दाण्डक्यो नृपतिः कामात्क्रोधाच्च जनमेजयः। लोभादैलस्तु राजर्षिर्वातापि-र्हर्षतोऽसुरः ॥ पौलस्त्यो राक्षसो मानान्मदाद्दम्भोद्भवो नृपः। प्रयाता निधनं ह्येते शत्रुषड्वर्गमाश्रिताः ॥ शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेन्द्रियः। अम्ब-रीषश्च नाभागो बुभुजाते चिरं महीम्'। काम-न्दके द्रव्यसंग्रहे— 'कोष्ठागारेऽभियुक्तः स्यात्तदायत्तं हि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

जीवितम्। नान्यार्घ्यं च व्ययं कुर्यात्प्रत्यवेक्षेत चान्वहम् ।। कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरं वनादानं शून्यानां च निवेशनम् ।। अष्टवर्गमिमं साधु स्वच्छवृत्तो विवर्धयेत् । बह्वादानोऽल्पनिस्रावः ख्यातः पूजितदैवतः ।। ईप्सितद्रव्यसंपूर्णो हृद्यैराप्तैरधिष्ठितः । मुक्ताकनकरत्नाढ्यः पितृपैतामहोच्छ्रितः । धर्मार्जितो व्ययसहः कोशः कोशज्ञसंमतः । धर्महेतोस्तथार्थाय भृत्यानां भरणाय च ।। आपदर्थं च संरक्ष्यः कोशः कोशवता सदा’। जनानुरागे कामन्दकः— ‘जितेन्द्रियत्वं विनयस्य लक्षणं गुणप्रकर्षो विनयादवाप्यते । गुणाधिके पुंसि जनोऽनुरज्यते, जनानुरागप्रभवा हि संपदः’ इति । ततः

**तच्छ्रुत्वा सुहृदस्तस्य रामस्य प्रियकारिणः ।**
**त्वरिताः शीघ्रमभ्येत्य कौसल्यायै न्यवेदयत् ॥**

**सा हिरण्यं च गाश्चैव रत्नानि विविधानि च ।**
**व्यादिदेश प्रियाख्येभ्यः कौसल्या प्रमदोत्तमा ॥**

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

अनेन प्रियाख्यातृभ्यः प्रीतिदानं कर्तव्यमिति सूचितम्। तच्च बालकाण्डे रामोत्पत्तिप्रकरणे प्रपञ्चितम्। ननु स्त्रियाः धनाभावात्कथं दानेऽधिकारः? तथा च मनुः— 'भार्या पुत्रश्च दासश्च त्रय एतेऽधनाः स्मृताः। यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्' इति। 'तस्मात्स्त्रियो निरिन्द्रिया अदायादाः' इति श्रुतिश्चेति चेत्, न, अस्ति तासामपि न्यायतो धनागमः। तथा च मनुः— 'अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्मणि। मातृभ्रातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्' इति। अत्र कात्यायनः— 'विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसंनिधौ। तदध्यग्निः स्मृतं सद्भिः स्त्रीधनं परिकीर्तितम्' इति। 'यत्पुनर्लभते नारी नीयमाना हि पैतृकात्। अध्यावहनिकं नाम स्त्रीधनं परिकीर्तितम्' इति च। एवं न्यायप्राप्तस्य स्त्रीधनस्य विभागविशेषमाह मनुश्चतुर्भिः श्लोकैः— 'अन्वाधेयं च यद्दत्तं पत्या प्रीतेन चैव यत्। पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत्'। अस्यार्थमाह कात्यायनः— 'विवाहात्परतो यत्तु

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

लब्धं भर्तृकुले स्त्रियः । अन्वाधेयं तदुक्तं तु सर्वबन्धुकुले तथा' इति । 'ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम् । अप्रजायामतीतायां भर्तुरेव तदिष्यते ॥ यत्त्वस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु । अप्रजायामतीतायां मातापित्रोस्तदिष्यते ॥ स्त्रियाश्च यद्भवेद्वित्तं पित्रा दत्तं कथंचन । ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत्' इति । स्त्रियाः धनस्वामित्वाभाववचनं तु भर्तृकुले साधारणद्रव्यपरं भर्तृद्रव्यपरं च । तथा च स एवाह— 'न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यगात् । स्वकादपि च वित्ताद्धि स्वस्य भर्तुरनाज्ञया' । अत्र 'निर्हारः' आदानम्, 'कुटुम्बाद्बहुमध्यगात्' इति देवरादिसाधारणद्रव्यात्, 'स्वकादपि च वित्तात्' इति भर्तुः स्वस्य च साधारणादर्थात् । आपस्तम्बोऽपि— 'न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ति' इति । अस्यार्थः— भर्तुरनुज्ञया नित्यदाने दोषप्रसक्तिरेव नास्ति । नैमित्तिके पूर्णपात्रादिषु भर्तुराज्ञाविरहेऽपि न दोषः, अन्यथा कर्मवैगुण्यापत्तेः' इति, एवं च भर्तुराज्ञां विना कर्मानुपयुक्त

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

यथेच्छप्रदाने स्तेयदोषोऽस्त्येव । तस्मात्स्त्रिया अपि न्यायतो धनागमस्तत्र स्वामित्वं च । अत एव अग्रे श्रीरामं प्रति लक्ष्मणवचनमपि—

कौसल्या बिभृयादार्या सहस्रमपि मद्विधान् ।
यस्याः सहस्रं ग्रामाणां संप्राप्तमुपजीवनम् ॥

तदात्मभरणे चैव मम मातुस्तथैव च ।
पर्याप्ता मद्विधानां च भरणाय यशस्विनी ॥

इति । एवं स्त्रिया अपि धनसत्त्वात्कौसल्याकृतं प्रीतिदानं युक्तमेव ॥

अथाभिवाद्य राजानं रथमारुह्य राघवः ।
ययौ स्वं द्युतिमद्वेश्म जनौघैरभिनन्दितः ॥

अनेन गमनसमयेऽपि गुरवोऽभिवादनीया इत्युक्तं भवति । तथा च भारते आदिपर्वणि— 'पाण्डवास्तु रथान्युक्तान्सदश्वैरनिलोपमैः । आरोहमाणा भीष्मस्य पादौ जगृहुरार्तवत् ॥ राज्ञश्च धृतराष्ट्रस्य द्रोणस्य च महात्मनः ।

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

अन्येषां चैव वृद्धानां कृपस्य विदुरस्य च ।। एवं सर्वान्कुरून्वृद्धानभिवाद्य यतव्रताः । समालिङ्ग्य समानांश्च बालैश्चाप्यभिवादिताः ।। गुरूनप्यर्चयित्वा च कृत्वा चैव प्रदक्षिणम् । सर्वाः प्रकृतयश्चैव प्रययुर्वारणावतम्' इति । चतुर्थे— ततो मन्त्रिभिः सह संमन्त्र्य राममानयेति राज्ञा नियुक्तः सुमन्त्रः शारदनीरदपाण्डरमभ्रंकषशिखरं राममन्दिरमयासीत् ।।

**द्वाःस्थैरावेदितं तस्य रामायागमनं पुनः ।**
**प्रवेश्य चैनं त्वरितं रामो वचनमब्रवीत् ॥**

अनेन अतिपरिचितोऽपि राजाभ्यनुज्ञामन्तरेण राजभवनं न प्रविशेदिति सूचितम् । तथा च उद्योगपर्वणि द्वाःस्थं प्रति विदुरवाक्यम्— 'प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत् । ईश्वरस्त्वां महाराजो महाप्राज्ञो दिदृक्षति ।। एवमुक्तस्तु विदुरः प्राप्य राजनिकेतनम् । अब्रवीद्धृतराष्ट्राय द्वाःस्थं मां संनिवेदय ।। द्वाःस्थ उवाच— 'विदुरोऽयमनुप्राप्तो राजेन्द्र तव शासनात् । द्रष्टुमिच्छति



C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

ते पादौ किं करोतु प्रशाधि माम् ॥ धृतराष्ट्रः—
'प्रवेशय महाप्राज्ञं विदुरं दीर्घदर्शनम् । अहं हि विदुरस्यास्य नाकल्पो जातु दर्शने ॥ द्वाःस्थ उवाच—प्रविशान्तःपुरं क्षत्तर्महाराजस्य धीमतः । न हि ते दर्शने कल्पो जातु राजाब्रवीद्धि माम् ॥ वैशम्पायनः—'ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम् । अब्रवीत्प्राञ्जलिर्वाक्यं चिन्तयानं नराधिपम्' इति । विनाज्ञां प्रवेष्टुर्निन्दामाह स एव— 'अनाहूतः प्रविशति अपृष्टो बहु भाषते । अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ ततः सुमन्त्रवचनेन ससंभ्रममुपदीकृतप्रणामं रामभद्रं परिष्वज्य निर्दिष्टासनमुपविशन्तमवलोक्य दशरथ आह—

राम वृद्धोऽस्मि दीर्घायुर्भुक्ता भोगा मयेप्सिताः ।
अन्नवद्भिः क्रतुशतैर्यथेष्टं भूरिदक्षिणैः ॥

जातमिष्टमपत्यं मे त्वमद्यानुपमं भुवि ।
दत्तमिष्टमधीतं च मया पुरुषसत्तम ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

अनुभूतानि चेष्टानि मया वीर सुखान्यपि।
देवर्षिपितृविप्राणामनृणोऽस्मि तथात्मनः॥
न किंचिन्मम कर्तव्यं तवान्यत्राभिषेचनात्॥

अनेन न्यायार्जितधनो धर्माविरोधेन भुक्तभोगः अपाकृतऋणषट्कः पुत्राय वृत्तिं कल्पयेदित्युक्तं भवति। तथा च शङ्खलिखितौ– 'पुत्रमुत्पाद्य संस्कृत्य वेदमध्याप्य वृत्तिं विधाय दारैः संयोज्य गुणवति पुत्रे कुटुम्बमावेश्य कृतप्रस्थानलिङ्गो वृत्तिविशेषाननुक्रमेत्' इति। प्रजागरे धृतराष्ट्रं प्रति विदुरः—'उत्पाद्य पुत्राननृणांश्च कृत्वा वृत्तिं च तेभ्योऽनुविधाय कांचित्। स्थाने कुमारीः प्रतिपाद्य सर्वा अरण्यसंस्थोऽथ मुनिर्बुभूषेत्' इति। मनुरपि—'महर्षिपितृदेवानां गत्वानृण्यं यथाविधि। पुत्रे सर्वं समावेश्य वसेन्माध्यस्थ्यमाश्रितः' इति। भारते मोक्षधर्मेऽपि— 'देवर्ष्यतिथिभृत्येभ्यः पितृभ्यश्चात्मनस्तथा। ऋणवाञ्जायते मर्त्यस्तस्मादनृणतां व्रजेत्॥ स्वाध्यायेन महर्षिभ्यो देवेभ्यो यज्ञकर्मणा। पितृभ्यः श्राद्धदानेन नृणा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

मभ्यर्चनेन च ॥ पाकशेषाच्च भृत्यानां पालनेनात्मनोऽपि च' इति ।

अपि चाद्याशुभान्राम स्वप्नान्पश्यामि दारुणान् ।
सनिर्घाता महोल्का च पतितेह महास्वना ॥

अवष्टब्धं च मे राम नक्षत्रं दारुणैर्ग्रहैः ।
आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः ॥

प्रायेण च निमित्तानामीदृशानां समुद्भवे ।
राजा वा मृत्युमाप्नोति घोरां वापदमृच्छति ॥

अनेन दुष्टस्वप्नदर्शनस्य दुर्निमित्तानां च अनिष्टफलसूचकत्वमुक्तम् । तथा च बह्वृचारण्यके—'स यश्चायमशरीरः प्रज्ञात्मा यश्च सा चादित्य एकमेतदित्यवोचाम तौ यत्र विहीयेते चन्द्रमा इवादित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति लोहिनी द्यौर्भवति यथा मञ्जिष्ठा व्यस्तः पायुः काककुलाय गान्धिकमस्य शिरो वायति संपरेतोऽस्यात्मा न चिरमिव जीविष्यतीति विद्यात् अथापि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

यत्र च्छिद्र इवादित्यो दृश्यते रथानाभिरिवाभिख्यायेत
छिद्रां वा च्छायां पश्येत्तदप्येवमेव विद्यादथाप्यादर्शे वोदके
च । वाजिमशिरसं वात्मानं पश्येद्विपर्यस्ते वा कन्याके
जिह्मेन वा दृश्येयातां तदप्येवमेव विद्यादथाप्यपिधाया-
क्षिणी उपेक्षेत तद्यथा वटरकाणि संपतन्तीव दृश्यन्ते
तानि यदा न पश्येत्तदप्येवमेव विद्यादथाप्यपिधाय कर्णा-
वुपशृणुयात्स एषोऽग्निरिव प्रज्वलतो रथस्येवोपद्विस्तं
यदा न शृणुयात्तदप्येवमेव विद्यादथापि यत्र नील इवा-
भिर्दृश्यते यथा मयूरग्रीवामेघे वा विद्युतं पश्येन्मध्ये वा
विद्युतं न पश्येन्महामेघे वा मरीचीरिव पश्येत्तदप्येवमेव
विद्यादथापि यत्र भूमिं ज्वलन्तीमिव पश्येत तदप्येवमेव
विद्यादिति प्रत्यक्षदर्शनान्यथा स्वप्नाः पुरुषं कृष्णं कृष्ण-
दन्तं पश्यति स एनं हन्ति वराह एनं हन्ति मर्कट एन-
मास्कन्दयति । आशु वायुरेनं प्रवहति सुवर्णं खादित्वा-
पगिरति मध्वश्नाति बिसानि भक्षयति एकं पुण्डरीकं
धारयति खरैर्वराहैर्युक्तैर्याति कृष्णां धेनुं कृष्णवत्सां नल-
दमाली दक्षिणामुखो व्राजयतीति' ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

अतस्त्वामभिषेक्ष्यामि यौवराज्ये परंतप ।
तस्मात्त्वयाद्य व्रतिना निशेयं नियतात्मना ।
सह वध्वोपवस्तव्या दर्भप्रस्तरशायिना ॥

अनेन यत्किंचिद्विहितं कर्म भार्यया सहैव कर्तव्यमित्युक्तं भवति । तथा चापस्तम्बः— 'पाणिग्रहणाद्धि सहत्वं कर्मसु तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च' इति ।

सुहृदस्त्वप्रमत्तास्त्वां रक्षन्त्वद्य समन्ततः ।

अनेन राज्ञां स्वापकालेष्वाप्तैः संरक्षणं कर्तव्यमिति सूचितम् । तथा च कामन्दके— 'अन्तर्वंशिकसैन्यं च संनद्धं साधु संमतम् । रक्षेदायुक्तकुशलमन्तःपुरगतं नृपम् ॥ विचार्य सर्वावयवान्दिनक्षये विसृज्य लोकं प्रमदादृतक्रियः । अशास्त्रवध्येन हि साधु पाणिना स्वप्यादसक्तं परमाप्तरक्षितः' इति ।

भवन्ति बहुविघ्नानि कार्याण्येवंविधानि हि'

श्रेयसां बहुविघ्नत्वं लोकप्रसिद्धम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

विप्रोषितश्च भरतो यावदेव पुरादितः ।
तावदेवाभिषेकस्ते प्राप्तकाले मतो मम ॥

अत्र 'विप्रोषितश्च भरतः' इत्यादिना भरतागमे रामाभिषेकप्रतिबन्धो भवेत् भरतागमनात् प्रागभिषेकः कर्तव्यमिति चोत्युक्तं तदनुपपन्नम् ।

श्रुतेन बालस्थानेन जन्मना भवतो ह्यहम् ।
स कथं पालयिष्यामि भूमिं भवति तिष्ठति ॥

इति चित्रकूटे श्रीरामं प्रति भरतवचनेन

इक्ष्वाकूणां हि सर्वेषां राजा भवति पूर्वजः ।
पूर्वजेनावरः पुत्रो ज्येष्ठो राज्येऽभिषिच्यते ॥

स राघवाणां कुलधर्ममात्मनः
सनातनं नाद्य विहातुमर्हसि ।
प्रभूतरत्नामनुशाधि मेदिनीं
प्रभूतरत्नां पितृवन्महायशाः ॥

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

तत्रैव वसिष्ठवचनेन—

'रामो राज्ञः सुतो ज्येष्ठो यौवराज्यमतोऽर्हति'

इति कैकयीवचनेन,—

'तस्माज्ज्येष्ठो हि कैकयि राज्यतन्त्राणि पार्थिवाः।
स्थापयन्त्यनवद्याङ्गि गुणवत्स्वितरेष्वपि'

इति मन्थरावचनेन च; न्यायतो रामस्यैव राज्याभिषेकावगमेन अभिषेकप्रतिबन्धशङ्काया एवाभावादिति चेन्न ।

पुरा भ्रान्तः पिता नः स मातरं ते समुद्वहन् ।
मातामहे समश्रौषीद्राज्यशुल्कमनुत्तमम् ॥

इति चित्रकूटे भरतं प्रति रामवचनेन भरतस्यापि राज्याधिकारसंभवात्तदागमनात्प्रागारम्भो युक्त एव । न चैवं प्राक्प्रतिश्रुतराज्याप्रदाने धार्मिकस्य राज्ञः सत्यप्रतिज्ञत्वभङ्गः प्रसज्येतेति वाच्यम् । विवाहादिषु

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

प्रतिज्ञाया असत्यत्वेऽपि दोषाभावात्। तथा च भारते— 'विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे । विप्रस्य चार्थेऽप्यनृतं वदेत पञ्चानृतान्याहुरपातकानि' इति । मनुरपि— 'कामिनीषु विवाहेषु गवां भक्ते तथेन्धने । ब्राह्मणस्य विपत्तौ च शपथे नास्ति पातकम्' इति । अत एवाग्रे भरतराज्याभिषेकोपायं वदन्त्या कुब्जया विवाहकालीनप्रतिज्ञाया असत्यत्वमाशङ्कमानया युद्धकाले प्रतिश्रुतवरद्वयेनैव राज्यं प्रार्थयस्वेत्यभिहिता कैकेयी वरद्वयमेव प्रार्थितवती । तर्हि धार्मिकभरतसंनिधानेऽपि रामाभिषेकस्य निर्वर्तयितुं शक्यत्वादिदमयुक्तमिति चेन्न ।

किं तु चित्तं मनुष्याणामनित्यमिति मे मतिः ।
सतां च धर्मनित्यानां कृतशोभि च राघव ॥
तावदेवाभिषिञ्चस्व चला हि प्राणिनां मतिः ।

इति दशरथवचनेन स्वस्य भरतस्य च मनश्चापल्यसंभवेन तत्परिहाराय प्रागारम्भ उपपन्न एव ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

इत्युक्तः सोऽभ्यनुज्ञातः श्वोभाविन्यभिषेचने ।
व्रजेति रामः पितरमभिवाद्याभ्ययाद्गृहम् ॥

ततो दाशरथिर्मातृगृहमागत्य श्रुतयौवराज्याभिषेकाम्

तत्र तां प्रवणामेव मातरं क्षौमवासिनीम् ।
वाग्यतां देवतागारे ददर्शायाचतीं श्रियम् ॥

प्रागेव चागता तत्र सुमित्रा लक्ष्मणस्तदा ।
सीता चानायिता श्रुत्वा प्रियं रामाभिषेचनम् ॥

अत्र कौसल्यया देवताध्यानादिकं कृतमित्यवगम्यते, तन्न संघटते । स्त्रीणां पातिशुश्रूषणमेव धर्मः तस्मादेव च सर्वफलवाप्तिः इतरधर्मानुष्ठाने स्वस्य च भर्तुश्चानिष्टं स्वस्य पातित्यं च । अत्रैव कौसल्यां प्रति रामवचनम्—

शुश्रूषामेव कुर्वीत भर्तुः प्रियहिते रता ।
एष धर्मः पुरा दृष्टो लोके वेदे श्रुतः स्मृतः ॥

इति । अत्रैव

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

भर्तुः शुश्रूषया नारी लभते स्वर्गमुत्तमम् ।
अपि या निर्नमस्कारा निवृत्ता देवपूजनात् ॥

इति । मनुरपि— 'नास्ति स्त्रीणां पृथग्धर्मो न व्रतं नाप्युपोषणम् । पतिं शुश्रूषते या तु तेन स्वर्गे महीयते' इति । आश्वलायनोऽपि—'शूद्राणां द्विजशुश्रूषा विहिता ब्रह्मणा यथा । स्त्रीणां स्वभर्तुः शुश्रूषा तथैव विहिता सदा'। शङ्खलिखितावपि— 'न व्रतोपवासनियमेज्यादानं दमो वानुग्रहकारः स्त्रीणामन्यत्र पतिशुश्रूषायाः' इति । स्कान्देऽपि— 'नास्ति स्त्रीणां पृथग्धर्मो न व्रतं नाप्युपोषणम् । भर्तृशुश्रूषयैवैता लोकानिष्टाञ्जयन्ति हि' इति । अत्रिरपि— 'न व्रतेनोपवासेन धर्मेण विविधेन च । नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात्' इति । यद्देवेभ्यो यच्च पित्रादिकेभ्यः कुर्याद्भर्ताभ्यर्चनं सत्क्रियां च । तस्य ह्यर्धं सा फलं नान्यचित्ता नारी भुङ्क्ते भर्तृशुश्रूषणेन' इति । तथा अन्यधर्मफलावाप्तिः पतिशुश्रूषयैव । तथा च स्कान्दे, अत्रैव—'व्रतोपवासनिरता या नारी परमोत्तमा । भर्तारं नानुवर्तेत तस्याः पापा गतिर्भ-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

वेत्' इति । पराशरोऽपि— 'पत्यौ जीवति या नारी उपोष्य व्रतचारिणी । आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत्' इति । मनुरपि— 'जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् । देवताराधनं चेति स्त्रीशूद्रपतनानि षट्' इति । तस्मात्स्त्रीणां पतिशुश्रूषणमेव धर्मः नान्यदिति । किं बहुना, काले स्वामिनावन्नार्थिनं न प्रत्याचक्षीयाताम् । आतिथिः पूजितो यद्धि ध्यायते मनसा शुभम् । न तत्क्रतुशतेनापि तुल्यमाहुर्मनीषिणः । पात्रं त्वातिथिमासाद्य शीलाढ्यं यो न पूजयेत् ॥ स दत्त्वा दुष्कृतं तस्य पुण्यमादाय गच्छति । तस्माद्गृहाश्रमस्थस्य नान्यदैवतमस्ति वै ॥ ऋतेऽतिथिम्' इत्यादिशास्त्रपर्यालोचनयावश्यकर्तव्यातिथिपूजनादपि स्त्रीणां भर्तृशुश्रूषणस्यैव श्रैष्ठ्यमुक्तम् । अरण्यपर्वणि तपश्चरणाय ऋष्याश्रमे संचरन्कौशिकः तरुमूलमुपाश्रित्य वेदानुच्चारयन्स्वशिरसि पुरीषमुत्सृजन्तीं बलाकामवलोक्य क्रोधाकुलहृदयः समपाध्यायत् । तत अपध्यानमात्रेण गतसत्त्वां पुरतो निपतितां बलाकामभि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

वीक्ष्य भृशं संतप्तहृदयः सकरुणं विलप्य भैक्षार्थी गृहाद्गृहं संचरन्, कयाचित्स्त्रिया भैक्ष्यप्रदानाय निमन्त्रितः। तदागमनसमयं प्रत्यपालयत्। 'एतस्मिन्नन्तरे राजन्क्षुधासंपीडितो भृशम्। भर्ता प्रविष्टः सहसा तस्या भरतसत्तम ॥ सा तु दृष्ट्वा पतिं साध्वी ब्राह्मणं व्यपहाय तम्। पाद्यमाचमनीयं च ददौ भर्तुस्तदासनम् ॥ प्रह्वा पर्यचरच्चापि भर्तारमसितेक्षणा। आहारेणाथ भक्ष्यैश्च भोज्यैः सुमधुरैस्तथा। उच्छिष्टं भाविता भर्तुर्भुङ्क्ते नित्यं युधिष्ठिर ॥ दैवतं च पतिं मेने भर्तुश्चित्तानुसारिणी। कर्मणा मनसा वाचा नान्यचित्तात्यगात्पतिम् ॥ तं सर्वभावोपगता पतिशुश्रूषणे रता। साध्वाचारा शुचिर्दक्षा कुटुम्बस्य हितैषिणी ॥ भर्तुश्चापि हितं यत्तत्सततं सानुवर्तते। देवतातिथिभृत्यानां श्वश्रूश्वशुरयोस्तथा ॥ शुश्रूषणपरा नित्यं सततं संयतेन्द्रिया। सा ब्राह्मणं तदा दृष्ट्वा संस्थितं भैक्षकाङ्क्षिणम्। कुर्वती पतिशुश्रूषां सस्माराथ शुभेक्षणा ॥ व्रीडिता साभवत्साध्वी तदा भरतसत्तम। भिक्षामादाय विप्राय निर्जगाम यशस्विनी'। ततश्चिरेण

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

भैक्ष्यमादाय समागतां स्त्रियमवलोक्य संजातकोपेन द्विजवरेण 'ब्राह्मणा न गरीयांसो गरीयांस्ते पतिः कृतः। अवलिप्ते न जानीषे वृद्धानां न श्रुतं त्वया' इत्यधिक्षिप्ता स्त्री समभाषत— 'क्षन्तुमर्हसि मे विद्वन्भर्ता मे दैवतं महत्। स चापि क्षुधितः श्रान्तः प्राप्तः शुश्रूषितो मया'। ब्राह्मणः— 'ब्राह्मणा न गरीयांसो गरीयांस्ते पतिः कृतः। गृहस्थधर्मे वर्तन्ती ब्राह्मणानवमन्यसे॥ इन्द्रोऽप्येषां प्रणमते किं पुनर्मानवा भुवि। अवलिप्ते न जानीषे वृद्धानां न श्रुतं त्वया॥ ब्राह्मणा ह्यग्निसदृशा दहेयुः पृथिवीमपि'। स्त्र्युवाच— 'नाहं बलाका विप्रेन्द्र त्यज क्रोधं तपोधन। अनया क्रुद्धया दृष्ट्वा क्रुद्धः किं मां करिष्यसि॥ नावजानाम्यहं विप्रान्देवैस्तुल्यान्मनस्विनः। अपराधमिमं विप्र क्षन्तुमर्हसि मेऽनघ॥ जानामि तेजो विप्राणां महाभाग्यं च धीमताम्। अपेयः सागरः क्रोधात्कृतो हि लवणोदकः॥ तथैव दीप्ततपसां मुनीनां भावितात्मनाम्। येषां क्रोधाग्निरद्यापि दण्डके नोपशाम्यति॥ ब्राह्मणानां परि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

भवाद्वातापिः सुदुरात्मवान्। अगस्त्यमृषिमासाद्य जीर्णः क्रूरो महासुरः॥ बहुप्रभावाः श्रूयन्ते ब्राह्मणानां महात्मनाम्। अस्मिंस्त्वतिक्रमे ब्रह्मन्क्षन्तुमर्हसि मेऽनघ॥ पतिशुश्रूषया धर्मो यः स मे रोचते द्विज। दैवतेष्वपि सर्वेषु भर्ता मे दैवतं परम्॥ अविशेषेण तस्याहं कुर्यां धर्मं द्विजोत्तम। शुश्रूषायाः फलं पश्य पत्युर्ब्राह्मण यादृशम्। बलाका हि त्वया दग्धा रोषात्तद्विदितं मम'। ब्राह्मणः—'प्रीतोऽस्मि तव भद्रं ते गतः क्रोधश्च शोभने॥ उपालम्भस्त्वयात्युक्तो मम निःश्रेयसं परम्। स्वस्ति तेऽस्तु गमिष्यामि शाधयिष्यामि शोभने'। मार्कण्डेयः—'तया विसृष्टो निर्गत्य स्वमेव भवनं ययौ॥ विनिन्दन्स स्वमात्मानं कैशिको द्विजसत्तमः' इति। अतः स्त्रियाः भर्तृशुश्रूषणव्यतिरिक्तधर्मेषु कुत्राप्यनधिकारात्कथं कौसल्यया देवताराधनं कृतमिति चेन्न। भर्त्रनुज्ञया धर्माचरणे पूर्वोक्तदोषाभावात्। तथा च शङ्खलिखितौ 'कामं तु भर्तुरनुज्ञया व्रतोपवासनियमादीनामभ्यासः'। स्त्रीधर्मे कात्यायनोऽपि— 'भार्या

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

भर्तृमतेनैव व्रतादीनाचरेत्सती' इति । आदित्यपुराणे 'नारी खल्वननुज्ञाता भर्त्रा वापि सुतेन वा । विफलं तद्भवेत्तस्या यत्करोत्यौर्ध्वदैहिकम्' इति । और्ध्वदैहिकं पारलौकिकम् । भर्तुरनन्तरं पुत्राज्ञा । कात्यायनः—'भार्या पत्युर्मतेनैव व्रतादीनाचरेत्सदा' इति । तस्माद्भर्तुरनुज्ञया तच्छुश्रूषानुरोधेनैव यत्किंचिद्धर्माचरणे दोषो नास्तीत्यत्यल्पमिदमुच्यते । तदाज्ञया पातित्याधायककर्माचरणमपि श्रेयःसाधनमित्युक्तम् । 'अपत्यं धर्मफलदं श्रेष्ठं विन्दन्ति मानवाः । आत्मा शुक्रादपि पृथे मनुः स्वायंभुवोऽब्रवीत् । तस्मात्प्रहेष्याम्यद्य त्वां हीनः प्रजननात्स्वयम् ॥ सदृशाच्छ्रेयसो वा त्वं विद्ध्यपत्यं यशस्विनि । शृणु कुन्ति कथामेतां शारदण्डायनीं प्रति ॥ सा वीरपत्नी गुरुणा नियुक्ता पुत्रजन्मनि । पुष्पेण प्रयता स्नाता निशि कुन्ति चतुष्पथे ॥ वरयित्वा द्विजं सिद्धं हुत्वा पुंसवनेऽनलम् । कर्मण्यवसिते तस्मिन्सा तेनैव सहावसत् ॥ तत्र त्रीञ्जनयामास दुर्जयादीन्महारथान् । तथा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

त्वमपि कल्याणि ब्रह्मणात्तपसाधिकात्। मन्नियोगा-द्यतः क्षिप्रमपत्योत्पादनं प्रति॥ अथ त्विदं प्रवक्ष्यामि धर्मतत्त्वं निबोध मे। पुराणमृषिभिर्दृष्टं धर्मविद्भिर्महात्मभिः॥ अनावृताः खलु पुरा स्त्रिय आसन्वरानने। कामचारविहारिण्यः स्वतन्त्राश्चारुलोचने॥ तासां व्युच्चरमाणानां कौमारात्सुभगे पतीन्। नाधर्मोऽभूद्वरारोहे स हि धर्मः सनातनः॥ अद्याप्यनुविधीयन्ते कामद्वेषविवर्जिताः। प्रमाणदृष्टो धर्मोऽयं पूज्यते च महर्षिभिः॥ श्वेतकेतोः किल पुरा समक्षं मातरं पितुः। जग्राह ब्राह्मणः पाणौ गच्छाव इति चाब्रवीत्॥ ऋषिपुत्रस्ततः कोपं चकारामर्षचोदितः। क्रुद्धं तु तं पिता दृष्ट्वा वेपमानमुवाच ह॥ मा तात कोपं कार्षीस्त्वमेष धर्मः सनातनः। अनावृता हि सर्वेषां वर्णानामङ्गना भुवि॥ यथा गावः स्थितास्तात स्वे स्वे वर्णे तथा प्रजाः। ऋषिपुत्रस्तु तं धर्मं श्वेतकेतुर्न चक्षमे। चकार चैव मर्यादामिमां स्त्रीपुंसयोर्भुवि॥ मानुषेषु महाभागे न त्वेवान्येषु जन्तुषु। तदाप्रभृति मर्यादास्थितेऽयमिति नः श्रुतम्॥ भ्रूणहत्या-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

कृतं पापं भविष्यत्यसुखावहम् । व्युच्चरन्त्याः पतिं नार्या अद्यप्रभृति पातकम्॥ भार्यां तथा व्युच्चरतः कौमारब्रह्मचारिणीम् । पतिव्रतामेतदेव भविता पातकं भुवि । पत्या नियुक्ता या चैव पत्नी पुत्रार्थमेव च। न करोति वचस्तस्य भविष्यत्येतदेव हि ॥ इति तेन पुरा भीरु मर्यादा स्थापिता बलात् । उद्दालकस्य पुत्रेण धर्म्या वै श्वेतकेतुना ॥ सौदासेन च रम्भोरु नियुक्तापत्यजन्मनि । मदयन्ती जगामर्षिं वसिष्ठमिति नः श्रुतम् ॥ तस्माल्लेभे च सा पुत्रमश्मकं नाम भामिनी । एवं कृतवती सा तु भर्तुः प्रियचिकीर्षया ॥ अस्माकमपि ते जन्म विदितं कमलेक्षणे । कृष्णद्वैपायनाद्भीरु कुरुवंशविवृद्धये ॥ अत एतानि सर्वाणि कारणानि समीक्ष्य वै । ममैतद्वचनं धर्म्यं कर्तुमर्हस्यनिन्दिते ॥ ऋतावृतौ राजपुत्रि स्त्रिया भर्ता पतिव्रते । नातिवर्तव्य इत्येवं धर्मं धर्मविदो विदुः॥ शेषेष्वन्येषु कालेषु स्वातन्त्र्यं स्त्री किलार्हति । धर्ममेतं जनाः सन्तः पुराणं परिचक्षते । भर्ता भार्यां राजपुत्रि धर्म्यं वाधर्म्यमेव वा ॥ यद्ब्रूयात्तत्तथा कार्यमिति धर्म-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

विदो विदुः। मन्नियोगात्सुकेशान्ते द्विजातेस्तपसाधिका-त्॥ पुत्रान्गुणसमायुक्तानुत्पादयितुमर्हसि। त्वत्कृतेऽहं पृथुश्रोणि गच्छेयं पुत्रिणां गतिम्' इति। गुरुतल्पं हि गुर्वर्थे न दूषयति मानवम्। उद्दालकः श्वेतकेतुं जनयामास शिष्यतः॥ एवमेवासूत कुन्ती पाण्डुं परपुरंजयम्। प्रत्युवाच वरारोहा भर्तुः प्रियहिते रता॥ त्वयाहमभ्यनुज्ञाता विद्धयस्मिन्कर्मणि स्थिताम्'। तथा आनुशासनिके सुदर्शनोपाख्याने धर्मपुत्रं प्रति भीष्मः, अग्निसकाशात्सुदर्शनायामुत्पन्नः सुदर्शनाख्योऽग्निपुत्रः नृगराजस्य वंशजामौघवतीं कन्यां परिणीय— 'कुरुक्षेत्रेऽवसद्राजन्नौघवत्या समन्वितः। गृहस्थश्चावजेष्यामि मृत्युमित्येव स प्रभो। प्रतिज्ञामकरोद्धीमान्दीप्ततेजा विशांपते॥ तामथौघवतीं राजन्स पावकसुतोऽब्रवीत्। अतिथेः प्रतिकूलं ते न कर्तव्यं कथंचन॥ येन येन च तुष्येत नित्यमेव त्वयातिथिः। अप्यात्मनः प्रदानेन न ते कार्या विचारणा॥ एतद्व्रतं मम सदा हृदि संपरिवर्तते। गृहस्थानां च सुश्रोणि नातिथेर्विद्यते परम्॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

प्रमाणं यदि वा मोहवचस्ते मम शोभने । इदं वचनमव्यग्रा हृदि त्वं धारयेः सदा ॥ निष्क्रान्ते मयि कल्याणि तथा संनिहितेऽनघे । नातिथिस्तेऽवमन्तव्यः प्रमाणं यद्यहं तव ॥ तमब्रवीदोघवती तथा मूर्ध्नि कृताञ्जलिः । न मे त्वद्वचनात्किंचिन्न कर्तव्यं कथंचन ॥ जिगीषमाणस्तु गृहे तदा मृत्युः सुदर्शनम् । पृष्ठतोऽन्वगमद्राजन्रन्ध्रान्वेषी तदा तदा ॥ इध्मार्थं तु गते तस्मिन्नग्निपुत्रे सुदर्शने । अतिथिर्ब्राह्मणः श्रीमांस्तामाहौघवतीं तदा ॥ आतिथ्यं कर्तुमिच्छामि त्वयाद्य वरवर्णिनि । प्रमाणं यदि धर्मस्ते गृहस्थाश्रमसंमतम् ॥ इत्युक्त्वा तेन विप्रेण राजपुत्री यशस्विनी । विधिना प्रतिजग्राह वेदोक्तेन विशांपते । आसनं चैव पाद्यं च तस्मै दत्त्वा द्विजातये ॥ प्रोवाचौघवती विप्रं केनार्थः किं ददामि ते । तामब्रवीत्तदा विप्रो राजपुत्रीं सुदर्शनीम् ॥ त्वया ममार्थः कल्याणि निर्विशङ्कैतदाचर । यदि प्रमाणं धर्मस्ते गृहस्थाश्रमसंमतम् ॥ प्रदानेनात्मनो राज्ञि कर्तुमर्हसि मे प्रियम् । स तया च्छन्द्यमानो-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

ऽन्यैरीप्सितैर्नृपकन्यया ॥ नान्यमात्मप्रदानात्स तस्या वव्रे वरं द्विजः । सा तु राजसुता स्मृत्वा भर्तुर्वचनमादितः ॥ तथेति लज्जमाना सा तमुवाच द्विजर्षभम् । ततो विहस्य विप्रर्षिः सा चैवाथ विवेश ह ॥ संस्मृत्य भर्तुर्वचनं गृहस्थाश्रमकाङ्क्षिणः । अथेध्मं समुपादाय स पावकिरुपागमत् ॥ तस्मै प्रतिवचः सा च भर्त्रे न प्रददौ तदा । कराभ्यां तेन विप्रेण स्पृष्ट्वा भर्तृमती सती ॥ उच्छिष्टास्मीति मन्वाना लज्जिता भर्तुरेव च । तूष्णीभूताभवत्साध्वी न चोवाचाथ किंचन ॥ अथ तां पुनरेवेदं प्रोवाच स सुदर्शनः । कुतः साध्वी क्व सा याता गरीयः किमतो मम । पतिव्रता सत्यशीला नित्यं चैवार्जवे रता । कथं न प्रत्युदेत्यद्य स्मयमाना यथा पुरा । उटजस्थस्तु तं विप्रः प्रत्युवाच सुदर्शनम् ॥ अतिथिं विद्धि संप्राप्तं ब्राह्मणं पावकं च माम् । अनया च्छन्द्यमानोऽहं भार्यया तव सत्तम ॥ तैस्तैरतिथिसत्कारैर्ब्रह्मन्नेषा वृता मया । अनेन विधिना सेयं मामृच्छति शुभानना ॥ अनुरूपं यदत्रान्यत्तद्भवान्कर्तुमर्हति । कूटमुद्गरहस्तस्तु मृत्युस्तं वै

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

समन्वगात् । हीनप्रतिज्ञमत्रैनं वधिष्यामीति चिन्तयन् । सुदर्शनस्तु मनसा कर्मणा चक्षुषा गिरा ॥ त्यक्तेर्ष्यस्त्यक्तमन्युश्च स्मयमानोऽब्रवीदिदम् । सुरतं तेऽस्तु विप्राग्र्य प्रीतिर्हि परमा मम ॥ गृहस्थस्य हि धर्मोऽग्र्यः संप्राप्तातिथिपूजनम् । अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति ॥ नान्यस्तस्मात्परो धर्म इति प्राहुर्मनीषिणः । प्राणा हि मम दाराश्च यच्चान्यद्विद्यते वसु ॥ अतिथिभ्यो मया देयमिति मे व्रतमाहितम् । निःसंदिग्धं यथा वाक्यमेतन्मे समुदाहृतम् ॥ तेनाहं विप्र सत्येन स्वयमात्मानमालभे । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ बुद्धिरात्मा मनः कालो दिशश्चैव गुणा दश । नित्यमेव हि पश्यन्ति देहिनां देहसंश्रिताः । सुकृतं दुष्कृतं चापि कर्म धर्मभृतां वर ॥ यथैषां नानृता वाणी मयाद्य समुदीरिता । तेन सत्येन मां देवाः पालयन्तु दहन्तु वा ॥ ततो नादः समभवद्दिक्षु सर्वासु भारत । असकृत्सत्यमित्येव नैतन्मिथ्येति सर्वतः ॥ उटजात्तु ततस्तस्मान्निश्चक्राम स वै द्विजः । वपुषा द्यां च

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

भूमिं च व्याप्य वायुरिवोद्यतः ।। स्वरेण विप्रः शैब्येण त्रीँल्लोकाननुनादयन् । उवाच चैनं धर्मज्ञं पूर्वमामन्त्र्य नामतः ।। धर्मोऽहमस्मि भद्रं ते जिज्ञासार्थं तवानघ । प्राप्तः सत्यं च ते ज्ञात्वा प्रीतिर्मे परमा त्वयि ।। विजितश्च त्वया मृत्युर्योऽयं त्वामनुगच्छति । रन्ध्रान्वेषी तव सदा त्वया धृत्या वशीकृतः । न चास्ति शक्तिस्त्रैलोक्ये कस्यचित्पुरुषोत्तम । पतिव्रतामिमां साध्वीं तवोद्वीक्षितुमप्युत ।। रक्षिता त्वद्गुणैरेषा पतिव्रतगुणैस्तथा । अधृष्या यदिदं ब्रूयात्तत्तथा नान्यथा भवेत् । एषा हि तपसा स्वेन संयुक्ता ब्रह्मवादिनी ।। पावनार्थे च लोकस्य सरिच्छ्रेष्ठा भविष्यति । अनेनैव च देहेन लोकांस्त्वमिह पत्स्यसे ।। अर्धेनौघवती नाम त्वामर्धेनानुयास्यति । शरीरेण महाभागा योगो ह्यस्या वशे स्थितः । अनया सह लोकांश्च गन्तासि तपसार्जितान् ।। यत्र नावृत्तिमभ्येति शाश्वतांस्तान्सनातनान् । अनेनैव च देहेन लोकांस्त्वमभिपत्स्यसे ।। निर्जितश्च त्वया मृत्युरैश्वर्यं च तवोत्तमम् । पञ्च भूतान्यतिक्रान्तः स्ववीर्याच्च मनोजवः ।। गृहस्थ-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

धर्मेणानेन कामक्रोधौ च ते जितौ । स्नेहो रागश्च तन्द्री च मोहो द्रोहश्च केवलः ॥ तव शुश्रूषया राजन्राजपुत्र्या विनिर्जिता' इति । अतश्च— पतिशुश्रूषावत्तदाज्ञापनपरिपालनमपि मुख्यो धर्मः । तथा च विज्ञानेश्वरीये 'स्त्रीभिर्भर्तुर्वचः कार्यमेष धर्मः सनातनः' । एतदुभयाकरणेऽपि प्रत्यवायः, करणे तु ऐहिकामुष्मिकसकलफलावाप्तिरित्यवगतम् । एवं च, वनं प्रति गमनसमये सीतां प्रति सकलपतिव्रताधर्मोपदेशेन स्वकीयनिष्ठुरभाषणप्रयुक्तदोषपरिहाराय बहुधा भर्तुः प्रसादनेन च सकलपतिव्रताधर्माभिज्ञा कौसल्येत्यवगम्यते । रामेणापि

शुश्रूषामेव कुर्वीत भर्तुः प्रियहिते रता ।

इति धर्मान्तरं निराकुर्वतः

अग्निकार्येषु च सदा सुमनोभिश्च देवताः ।
पूज्यास्ते मत्कृते देवि ब्राह्मणाश्चैव सुव्रताः ॥
नियतानियताहाराः भर्तृशुश्रूषणे रताः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

इति धर्मान्तराचरणस्याभ्यनुज्ञानेन कौसल्यायाः धर्मान्तराचरणे भर्तुराज्ञास्तीत्यवगम्यते। अतः भर्तुराज्ञां विना स्वतन्त्रतया धर्माचरणं न करिष्यति, दासीवच्च सखीवच्च मातृवद्भगिनीवच्च भार्यावच्चोपतिष्ठत इत्यादि दशरथवचनगतपतिशुश्रूषणानुरोधेन तदनुज्ञयैव ध्यानादिधर्माचरणं कृतवतीति न किंचिदनुपपन्नम्। अत एव

उवाच रामो वचनं हर्षयंस्तामनिन्दिताम्।
अम्ब पित्रा नियुक्तास्मि प्रजापालनकर्मणि॥

यानि यान्यत्र योग्यानि श्वोभाविन्यभिषेचने।
तानि मे मङ्गलान्यद्य वैदेह्याश्चापि कारय॥

इत्यभिहितवान्। ततश्च संजातसंतोषया कौसल्यया

वत्स राम चिरं जीव हतास्ते परिपन्थिनः।
ज्ञातीन्मे त्वं श्रिया युक्तः सुमित्रायाश्च नन्दय॥

कल्याणे बत नक्षत्रे मया जातोऽसि पुत्रक।
येन त्वया दशरथो गुणैराराधितः पिता॥



C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

अमोघं बत मे क्षान्तं पुरुषे पुष्करेक्षणे ।
येऽयमिक्ष्वाकुराज्यश्रीः पुत्र त्वां संश्रयिष्यति ॥

सततं प्रियकामा मे प्रियपुत्र प्रियंवद ।
न मया सत्कृता देवी सत्कारार्हा कृते तव ॥'

इति । भक्त्या शुश्रूषमाणा कौसल्या सत्कारार्हापि त्वत्कृते न मया सत्कारैरभिनन्दितेत्यग्रे कैकेयीविवाहसमये राज्यस्य शुल्कत्वेन प्रतिज्ञया च राज्यश्रीः परमप्रेमास्पदकैकेयीपुत्रस्यैवेति निश्चितापि मत्कृततपश्चर्यासंतुष्टपुष्करेक्षणप्रसादपात्रभूतेन कल्याणनक्षत्रोत्पन्नेन त्वया स्वगुणाराधितपितृप्रीतिवशादधिगतेत्युक्तम् । तथा चादिपर्वणि पूर्वयायाते राज्यानर्हस्य कनिष्ठस्यापि स्वगुणैः पित्राराधनजनितपितृप्रीत्या राज्यप्राप्तिरुक्ता । मातापित्रोर्वचनकृद्धितः पथ्यश्च यः सुतः । स पुत्रः पुत्रवद्यश्च वर्तते पितृमातृषु ॥ यदुनाहमनुज्ञातस्तथा तुर्वसुनापि च । द्रुह्युना चानुना चैव मय्यवज्ञा कृता भृशम् ॥ पुरुणानुकृतं वाक्यं मानितं च विशेषतः ।

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

कनीयान्मम दायादो धृता येन जरा मम ॥ भवतोऽनु-
नयाम्येवं पुरू राज्येऽभिषिच्यताम्' इति राज्ञा पृष्टाः
प्रकृतय ऊचुः— 'यः पुत्रो गुणसंपन्नो मातापित्रोर्हितः
सदा । सर्वमर्हति कल्याणं कनीयानपि सत्तमः ॥
अर्हः पूरुरिदं राज्यं यः सुतः प्रियकृत्तव' इति । ततो
रामः पार्श्वतः समासीनं प्राञ्जलिं लक्ष्मणमवलोक्य—

**लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुंधराम् ।**
**द्वितीयं मेऽन्तरात्मानं त्वामियं श्रीरुपस्थिता ॥**

**सौमित्रे भुङ्क्ष्व भोगांस्त्वमिष्टान्राज्यफलानि च ।**
**जीवितं च हि राज्यं च त्वदर्थमभिकामये ॥**

अनेन श्रीरामस्य ऐश्वर्याद्युपभोगो भ्रातृभिः सहैवा-
भिमतः' इति गम्यते । तथा च बालकाण्डे—

**सर्वप्रियकरस्तस्य रामस्यापि शरीरतः ।**
**लक्ष्मणो लक्ष्मिसंपन्नो बहिःप्राण इवापरः ॥**

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

न च तेन विना निद्रां लभते पुरुषोत्तमः।
मृष्टमन्नमुपानीतमश्नाति न हि तं विना ॥

तथा अग्रेऽपि चित्रकूटे भरतागमे ससंभ्रमं लक्ष्मणं प्रति

इच्छामि भवतामर्थे एतत्प्रतिशृणोमि ते।
भ्रातॄणां संग्रहार्थं च सुखार्थं चापि लक्ष्मण।

राज्यमप्यहमिच्छामि सत्येनायुधमालभे।
यद्विना भरतं त्वां च शत्रुघ्नं चापि मानद ॥
भवेन्मम सुखं किंचिद्भस्म तत्कुरुतां शिखी।

इति। एवं च, इतरैरपि संप्राप्तमैश्वर्यं भ्रातृभ्यो दत्त्वैव भोक्तव्यमित्युक्तं भवति। तथा च भारते राजधर्मे युधिष्ठिरं प्रति व्यासः—'धर्ममर्थं च कामं च भ्रातृभिः सह भारत। अनुभूय ततः पश्चात्प्रस्थातासि विशां पते' इति। स्वर्गारोहणिकेऽपि 'भीमं च भीमविक्रान्तं प्राणेभ्योऽपि प्रियं मम। अर्जुनं चेन्द्रसंकाशं यमौ चैव यमोपमौ ॥

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

द्रष्टुमिच्छामि तां चाहं पाञ्चालीं धर्मचारिणीम् । न चेह स्थातुमिच्छामि सत्यमेव ब्रवीमि वः ॥ किं मे भ्रातृविहीनस्य स्वर्गेऽपि सुरसत्तमाः । यत्र ते मम सर्गो वा अयं स्वर्गो मतो मम ॥ न तैरहं विना रंस्ये भ्रातृभिर्ज्ञातिभिस्तथा' इति ।

इत्युक्त्वा लक्ष्मणं रामो मातरावभिवाद्य च ।
अभ्यनुज्ञाप्य सीतां जगाम स्वं निवेशनम् ॥

पञ्चमे— ततो राजनियोगेन ब्राह्मं रथं समास्थाय कक्षात्रयमपि रथेनैव संप्राप्तं कुलपुरोहितं वसिष्ठमुपश्रुत्य ससंभ्रममुपागतो रामभद्रः

ततोऽवतारयामास परिगृह्य रथात्स्वयम् ।

अनेनान्यैरपि एवमेव गुर्वादीनां पूजा कर्तव्या इति सूचितम् । तथा च मनुः— 'प्रतिश्रवणसंभाषे शयानो न समाचरेत् । नासीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः ॥ आसीनस्य स्थितः कुर्यादभिगच्छंस्तु तिष्ठ-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

तः । प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः ॥ पराङ्मुखस्याभिमुखो दूरस्थस्यैत्य चान्तिकम् । प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ॥ नीचं शय्यासनं चास्य नित्यं स्याद्गुरुसंनिधौ । गुरोश्च चक्षुर्विषये न यथेष्टासनो भवेत्' इति । गौतमोऽपि— 'गुरुदर्शने चोत्तिष्ठेद्गच्छन्तमनुव्रजेत्' इति । स एवान्यत्र 'गुरुदर्शने कर्णप्रावृतावसक्थिकापाश्रयणपादप्रसारणानि च' इति । आपस्तम्बोऽपि— 'देवमिवाचार्यमुपासीत' इति । विष्णुपुराणेऽपि 'स्थिते तिष्ठेद्व्रजेद्याति नीचैरासीतवासिते ॥ शिष्यो गुरुं नरश्रेष्ठ प्रतिकूलं न संचरेत्' इति । तत आसनार्घ्यपाद्यादिभिः समागतमाचार्यमभिपूज्य तदनुज्ञया स्वयमप्यासन उपविवेश । ततो वसिष्ठोऽपि

उपवासं भवानद्य करोतु सह सीतया ।
प्रातस्त्वामभिषेक्ता हि यौवराज्ये नराधिपः ॥

इत्युक्त्वा स तदा राममुपवासं यतव्रतम् ।
मन्त्रवत्कारयामास वैदेह्यासहितं मुनिः ॥

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

अनेन राज्याभिषेकात्पूर्वदिने विहितं कर्मजातं कारितमित्युक्तम् । तत्र अभिषेकात्पूर्वदिनकृत्यमाह बोधायनः 'अथातो राजाभिषेकविधिं व्याख्यास्यामः— पूर्वपक्षस्य पञ्चम्यां त्रयोदश्यां तिष्ये श्रोणायां वा यानि चान्यानि शुभनक्षत्राणि तेषु पूर्वेद्युरेव युग्मान्ब्राह्मणान्भोजयेत् । आशिषो वाचयित्वा योनिगोत्रश्रुतवृत्तसंपन्नं ब्राह्मणं पुरोहितं वृणीत 'आकूत्यै त्वा कामाय त्वा समृधे त्वेति पुरोहितो जपति–आकुतिमस्यावसे काममस्य समृद्ध्यै इन्द्रस्य युञ्जते धियः' इति । स्वयं जपति— आकूतिं देवीं मनसः पुरोदधे यज्ञस्य माता सुहवा मे अस्तु । यदिच्छामि मनसा सकामो विदेयमेनद्धृदये निविष्टमिति । अथास्तमित आदित्ये पञ्चाकृतिं मण्डपं कृत्वा उपकल्पयते, व्रीहियवैस्तिलमाषैः पञ्चगव्यैः सामुद्राश्चापो नद्याश्चौदुम्बरं भद्रासनं व्याघ्रचर्म हेमकलशैर्गोशृङ्गैश्च संभृत्य सह सादयति यत्सह सर्वाणि मानुषाणीत्येतस्माद्ब्राह्मणात् उत्तरपूर्वदेशेऽगारस्य पाकयज्ञविधानेन व्रीहिभिर्यवैस्तिलमाषैर्व्याहृतिभिः सावित्र्या च त्र्यम्बकेनाष्टसहस्रं जुहोति । अथ

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

दक्षिणार्धे श्रीसूक्तविधानेन श्रीदेवीमाराध्य मकुटं प्रक्षालयति । 'गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम् । आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि शुक्रमसीत्याज्यं देवस्य त्वेति कुशोदकम्' इति मकुटं प्रक्षाल्य प्रतिसरं बध्नाति— 'प्रतते अद्य शिपिविष्ट' इति । राजानं राजवाहनं चाभिषिञ्चेदेतां रात्रिमुपविशेत्संविशेद्वा' इति । ततो यथावद्रामेण समभ्यर्चितो वसिष्ठः रामाभिषेकश्रवणसमयसमुदितानन्दसंदोहतुन्दिलपौरजनावलोकनजनितहर्षप्रकर्षः सर्वं सुविहितमिति राज्ञे निवेद्य तदनुज्ञया स्वभवनमाससाद । षष्ठे—

गते पुरोहिते रामः स्नातो नियतमानसः ।
सह पत्न्या विशालाक्ष्या नारायणमुपागमत् ॥

अत्र 'स्नात' इत्यनेन विशेषणेन कर्माङ्गं स्नानमुक्तम् ॥ तथा च बोधायनः— 'वेदकर्माणि प्रयोक्ष्यन्नादित एव तीर्थे स्नात्वा' इति । गौतमोऽपि— 'मनः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

प्रसादात्सत्योक्त्या तपसा स्नानकर्मणा । आचान्त्या च मनःशुद्धिं कृत्वा कर्म समारभेत्' इति । विष्णुपुराणेऽपि— 'नित्यक्रियार्थं स्नायीत गिरिप्रस्रवणेषु च' इति । व्यासोऽपि— 'न हि स्नानं विना पुंसां प्रायत्यं कर्मसु स्मृतम् । होमे जप्ये विशेषेण तस्मात्स्नानं समाचरेत्' इति । 'नियतमानसः' इत्यनेन निगृहीतान्तःकरणेन कर्म कर्तव्यमित्युक्तं भवति ।

**प्रगृह्य शिरसा पात्रीं हविषो विधिवत्तदा ।**
**महते दैवतायाज्यं जुहाव ज्वलितेऽनले ॥**

अत्र 'ज्वलितेऽनले' इत्यनेन प्रज्वलितेऽग्नावेव होमः कर्तव्यो न धूमाद्यवस्थायामित्युक्तम् । तथा चाथर्वणी श्रुतिः— 'यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने । तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेत्' इति । आपस्तम्बोऽपि— 'यदा वीतार्चिर्लोलायतीवाग्निरथाहुतीः' इति । विष्णुरपि— 'बहुशुष्केन्धने चाग्नौ सुसमिद्धे हुताशने । विधूमे लेलिहाने च होतव्यं कर्मसिद्धये'



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

इति । स एवानर्चिषि होमे अनिष्टफलमाह— 'योऽन॰र्चिषि जुहोत्यग्नौ व्यङ्गारे चैव मानवः । मन्दाग्निरामयावी च दरिद्रश्चोपजायते' इति ।

**शेषं च हविषस्तस्य प्राश्याशास्यात्मनः प्रियम् ।**

अत्र हुतशिष्टस्य भक्षणादिना प्रतिपत्तिः कर्तव्या इत्युक्तं भवति । तथा च बृहदारण्यके— 'अथाभिप्रातरेव स्थालीपाकावृताज्येन चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहानुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहा इति हुत्वोद्धृत्य प्राश्नाति' इति । 'तच्छेषेऽप्यायुष्यचरौ अपरेणाग्निं प्राङ्मुख उपविश्य, वाग्यतः स्थालीपाकं सगणः प्राश्नाति' इति । तैत्तरीयश्रुतिरपि हविर्दाने— 'ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति' इति । आपस्तम्बोऽपि—'अत्रैव ऋत्विजो हविःशेषान्भक्षयन्ति यजमानपञ्चमा इडां प्राश्य इति सोमान्हविःशेषान्' इति, 'सुत्येऽहनि भक्षयति' इति च । बोधायनोऽपि— 'एतस्मिन्काल आग्नीध्रे यजमानः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

पुरोडाशानां प्राश्नाति'। आश्वलायनोऽपि— 'हविरुच्छिष्टं सर्वे प्राश्नीयुः' इति। 'आशास्यात्मनः प्रियम्' इत्यनेन फलवति कर्मणि फलप्रार्थनं कर्तव्यमित्युक्तम् ॥ तथा च बोधायनापस्तम्बौ— 'क्रत्वादौ क्रतुकामं कामयेत यज्ञाङ्गादौ यज्ञाङ्गकामम्' इति, 'हुत्वा ध्यायेद्यत्कामः स्यात्' इति च।

**ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे।**

अत्र सत्कर्मसु परमेश्वरध्यानं कर्तव्यमित्युक्तम्। तथा च गोपालकारिकायाम्— 'ईश्वरो नित्यकालात्मा चिन्तनीयः सुकर्मसु' इति। 'स्वास्तीर्णे कुशसंस्तरे' इत्यनेन व्रतदिने खट्वादिवर्जनपूर्वकं कुशेषु शयनं कर्तव्यमित्युक्तम। तथा च बोधायनः— 'नासन्द्यां शयीत' इति। आपस्तम्बोऽपि— 'उपरित्वे न शयीत' इति। यमोऽपि— 'खट्वासनं च शयनं वर्जयेद्दन्तधावनम्। स्वपेदेकः कुशेष्वेव न रेतः स्कन्दयेत्कचित्' इति।

**वाग्यतः सह वैदेह्या भूत्वा नियतमानसः।**

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

'जपकाले न भाषेत व्रतहोमादिकेषु च' इति ।

श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः ॥

अनेन लक्ष्मीपूजां कृत्वा पट्टाभिषेकपूर्वदिने देवतागृहे शयनं कर्तव्यमित्युक्तम् । अयमर्थः— 'श्रीदेवीमाराध्यैतां रात्रिमुपविशेत्संविशेद्वा' इति पूर्वोदाहृतबोधायनसूत्रे स्पष्टः ।

एकयामावशिष्टायां रात्र्यां प्रतिविबुध्य सः ।
अलंकारविधिं कृत्स्नं कारयामास वेश्मनः ॥

अत्र सूर्योदयात्प्रागेव गृहस्य संमार्जनाद्यलंकरणं कारयितव्यमित्युक्तम् । गृहस्यालंकरणादिविधिः स्त्रिया कर्तव्यमित्युक्तं मार्कण्डेयपुराणे– 'स्त्रीधर्मः परं शृणु त्वं स्त्रीधर्माननु विस्तरात् । उदुम्बरे वसेन्नित्यं भावनी सर्वदेवता ॥ ततः सा प्रत्यहं पूज्या गन्धपुष्पाक्षतादिभिः । अशून्या देहली कार्या प्रातःकाले विशेषतः ॥ यस्याः शून्या भवेत्सा तु शून्यं तस्याः कुलं भवेत् ॥ पादस्य स्पर्शनं तत्र

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

असंपूज्या च लङ्घनम् । कुर्वन्नरकमाप्नोति तस्मात्तत्परिवर्जयेत् ॥ प्रातःकाले स्त्रिया कार्यं गोमयेनानुलेपनम् । प्रत्यहं सदने तस्मान्नैव दुःखिनि पश्यति ॥ स्पृशन्ति रश्मयो यस्य गृहं संमार्जनादृते । भवन्ति विमुखास्तस्य पितरो देवमातरः ॥ निशायाः पश्चिमे यामे धान्यसंस्करणादिकम् । क्रियमाणं हि नारीणां सर्वश्रेयोधनावहम् ॥ संध्याकाले तु संप्राप्ते धान्यसंस्करणादिकम् । कुरुते या तु मोहेन वन्ध्या जन्मनि जन्मनि । संध्याकाले तु संप्राप्ते मार्जनं न करोति या । भर्तृहीना भवेत्सा तु निःस्वा जन्मनि जन्मनि ॥ अकृतस्वस्तिका या तु क्रामेल्लिप्तां च मेदिनीम् । तस्यास्त्रीणि विनश्यन्ति वित्तमायुर्यशस्तथा ॥ मार्जनीं चुल्लिकां काष्ठं दृषदश्चोपलांस्तथा । नाक्रमेदङ्घ्रिणा जातु पुत्रदारधनक्षयात् ॥ ऊलूखलं च मुसलं तथा चैव घरट्टकम् । पदाक्रमणात्पापी यो नाप्नुयादुत्तमां गतिम्' । तथा संग्रहे— 'यद्गृहं राजते नित्यं रङ्गवल्ल्यानुलेपनैः । तद्गृहे वसते लक्ष्मीर्नित्यं पूर्णकलान्विता ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

तत्र शृण्वन्सुखा वाचः सूतमागधवन्दिनाम् ।

अत्र सुखा वाचः शृण्वन्प्रतिविबुध्येत्युक्त्या सुखसंसुप्तोऽस्य राजा श्रुतिसुखवीणावेणुमृदङ्गशब्दैः स्तुतिभिश्चोषसि प्रबोध्यः इति सूचितम् । तथा च भारते आदिपर्वणि—'मधुरेणैव गीतेन वीणाशब्देन चैव ह । प्रबोध्यमानो बुबुधे स्तुतिभिर्मङ्गलैस्तथा' इति । शान्तौ राजधर्मेऽपि—'ततः प्रविश्य भवनं प्रशिश्ये मधुसूदनः । याममात्रावशेषायां यामिन्यां प्रत्यबुध्यत ।। संज्ञानपदमाविश्य सर्वज्ञानानि माधवः । अवलोक्य ततः पश्चाद्दध्यौ ब्रह्म सनातनम् ।। सूताः स्तुतिपुराणज्ञा रक्तकण्ठाः सुशिक्षिताः । अस्तुवन्विश्वकर्माणं वासुदेवं प्रजापतिम् ।। पठन्ति पाणिस्वनिनो गाथा गायन्ति गायकाः । शङ्खानकमृदङ्गाश्च प्रावाद्यन्त सहस्रशः ।। वीणापणववेणूनां स्वनश्चापि मनोरमः । प्रभात इव विस्तीर्णः शुश्रुवे तस्य वेश्मनि । तथा युधिष्ठिरस्यापि राज्ञो मङ्गलसंनिभाः । उच्चैर्मधुरा वाचो गीतवादित्रसंयुताः ।। तत उत्थाय दाशार्हः स्नातः प्राञ्जलिरच्युतः' इति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

कालिदासोऽपि— 'तं कर्णभूषणनिपीडितपीवरांसं शय्योत्तरच्छदविमर्दकृशाङ्गरागम् । सूतात्मजाः सवयसः प्रथितप्रबोधं प्राबोधयन्नुषसि वाग्भिरुदारवाचः' इति।

एकयामावशिष्टायां रात्र्यां प्रतिविबुध्य सः ।

इत्यनेन ब्राह्मे मुहूर्ते उत्थाय कर्तव्यहितचिन्तनादिकर्मोक्तं भवति । तथा च मनुः— 'ब्राह्मे मुहूर्ते बुध्येत धर्मार्थावनुचिन्तयेत् । कायक्लेशांश्च तन्मूलान्वेद तत्त्वार्थमेव च' इति । याज्ञवल्क्योऽपि— 'ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् । धर्मार्थकामान्स्वे काले यथाशक्ति न हापयेत्' इति । विष्णुपुराणेऽपि— 'ब्राह्मे मुहूर्ते चोत्थाय मनसा मतिमान्नृप । विबुद्धश्चिन्तयेद्धर्ममर्थं चाप्यविरोधिनम् ॥ अपीडया तयोः काममुभयोरपि चिन्तयेत् । परित्यज्य चार्थकामौ धर्मपीडाकरौ नृप ॥ धर्ममप्यसुखोदर्कं लोकविद्विष्टमेव च' इति । कूर्मपुराणेऽपि— ब्राह्मे मुहूर्ते उत्थाय धर्मार्थावनुचिन्तयेत् । कायक्लेशं तदुद्भूतं ध्यायीत परमेश्वरम् ' इति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

तत्र सूर्योदयादर्वागर्धप्रहरः द्वौ मुहूर्तौ, तत्राद्यो ब्राह्मः, द्वितीयो रौद्रः, तत्राद्यस्य लक्षणमुक्तं स्मृतिभास्करे— 'रात्रेस्तु पश्चिमे यामे मुहूर्तो ब्राह्म उच्यते' इति। तत्र गुर्वादीनामपि स्मरणं कर्तव्यमित्याह शौनकः— 'गुरुं विष्णुं नमस्कृत्य मातापित्रोस्तथैव च' इति। स्मृत्यन्तरेऽपि— 'षोढा विभज्य रजनीं चरमांशे प्रबोधिताः। पत्न्या सह हरिं ध्यात्वा धर्ममर्थं च चिन्तयेत्' इति। ध्यानप्रकारमाह व्यासः— ब्रह्मासुरारिस्त्रिपुरान्तकश्च भानुः शशी भूमिसुतो बुधश्च। गुरुश्च शुक्रः शनिराहुकेतवः कुर्वन्तु सर्वे मम सुप्रभातम्' इति। तदा दर्शनीयानाह कात्यायनः— 'श्रोत्रियं सुभगं गां च अग्निमग्निचितं तथा। प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते' इति। अदर्शनीयानप्याह— 'पापिष्ठं दुर्भगं मद्यं नग्नमुत्कृत्तनासिकम्। प्रातरुत्थाय यः पश्येत्तु तत्कुरूपलक्षणम्' इति। नोपरुद्धः क्रियाश्चरेदित्यादिवचनैर्मलमूत्राद्युपरुद्धस्य कर्मानधिकारदर्शनात्तदुत्सर्गप्रकारमाह अङ्गिराः— 'उत्थाय पश्चिमे रात्रौ तत आचम्य चोदकम्। अन्त-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

र्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥ वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः । कुर्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः' इति । आपस्तम्बोऽपि— 'शिरः प्रावृत्य मूत्रपुरीषे कुर्याद्भूम्यां किंचिदन्तर्धाय' इति । तृणविशेषानाह अङ्गिराः 'शिरः प्रावृत्य कुर्वीत शकृन्मूत्रविसर्जनम् । अयज्ञियैरनार्द्रैश्च तृणैः संच्छाद्य मेदिनीम्' इति । अत्र निवीतमाह बोधायनः— 'नक्तमुष्णीषी मूत्रपुरीषोत्सर्गेषु च निवीती' इति । अङ्गिरास्तु 'कृत्वा यज्ञोपवीतं तु कण्ठतः पृष्ठलम्बितम् । विण्मूत्रं तु गृही कुर्याद्यद्वा कर्णे समाहितम्' इति । कर्णनिधानमेकवस्त्रविषयम्; तथा च सांख्यायनः— 'यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा मूत्रपुरीषोत्सर्गं कुर्यात्' इति । कर्णविशेषमाह स एव 'यज्ञोपवीतं कर्णे च दक्षिणे च निधाय च । कुर्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः' इति । तत्र कालभेदेन दिङ्नियममाह गौतमः— 'मूत्रपुरीषे दिवा कुर्यादुदङ्मुखः संध्ययोश्च रात्रौ तु दक्षिणामुखः' इति । यमस्तु— 'प्रत्यङ्मुखस्तु पूर्वाह्णे सायाह्ने प्राङ्मुखस्तथा । उदङ्मु-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

खस्तु मध्याह्ने निशायां दक्षिणामुखः' इति। एतद्वचनं सूर्याभिमुखत्वनिवृत्तिपरम्। तथा च भारते— 'प्रत्यादित्यं प्रत्यनलं प्रति गां च प्रति द्विजम्। मेहन्ति चेत्पतिष्यन्ति भवन्ति च गतायुषः' इति। मनुरपि— 'मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः। दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा' इति। विण्मूत्रादि च दूरादेव कर्तव्यम्। तथा च मनुः— 'दूरादावसथान्मूत्रं दूरात्पादावसेचनम्। उच्छिष्टान्ननिषेकं च दूरादेव समाचरेत्' इति। स एव वर्ज्यदेशविशेषानाह— 'न श्मशाने न च पथि न भस्मनि न गोव्रजे। न फालकृष्टे न जले न चित्यां न च पर्वते॥ न जीर्णदेवायतने न वल्मीके कदाचन। ससत्त्वेषु च गर्तेषु न गच्छन्नापि वा स्थितः॥ न नदीतीरमासाद्य न च पर्वतमस्तके। वाय्वग्निविप्रानादित्यमपः पश्यन्स्तथैव गाः॥ न कदाचन कुर्वीत विण्मूत्रस्य विसर्जनम्' इति। गौतमोऽपि— 'न भस्मकरीषकृष्टच्छायापथिकाम्येषु' इति। न वाय्वग्निविप्रादित्यापोदेवता गाश्च प्रतिपश्यन्त्वा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

मूत्रपुरीषामेध्यान्व्युदस्येत्' इति च । आपस्तम्बोऽपि— 'न सोपानद्विण्मूत्रपुरीषे कुर्यात्कृष्टे पथ्यप्सु च च्छायायां मूत्रपुरीषयोः कर्म वर्जयेत्, अग्निमादित्यमपो ब्राह्मणं गोदेवताश्चाभिमुखो मूत्रपुरीषयोः कर्म वर्जयेत्' इति । तदनन्तरकृत्यमाह याज्ञवल्क्यः— 'गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतोदकैः । गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः' इति । देवलोऽपि— 'आशौचान्नोत्सृजेच्छिश्नं प्रस्रावोच्चारयोरपि । गुदं हस्तं च निर्मृज्य मृदम्भोभिर्मुहुर्मुहुः' । गौतमोऽपि— 'लेपगन्धापकर्षिणे शौचममेध्यस्य तदद्भिः पूर्वं मृदा च' इति । दक्षोऽपि—'तीर्थे शौचं न कुर्वीत कुर्वीतोद्धृतवारिणा' इति । अपामुद्धरणासंभवे विशेषमाह विवस्वान्— 'रत्निमात्रं जलं त्यक्त्वा कुर्याच्छौचमनुद्धृते । पश्चाच्छोधयेत्तीर्थमन्यथा ह्यशुचिर्भवेत्' इति । शौचयोग्यां मृदमाह यमः–'आहरेन्मृत्तिकां विप्रः कूलात्ससिकतां तथा' इति । तत्रैव विशेषमाह मरीचिः— विप्रे शुक्ला तु मृत्प्रोक्ता रक्ता क्षत्रे विधीयते । हारिद्रवर्णा वैश्यस्य शूद्रे कृष्णेति निर्दिशेत्' उक्तविशेषा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

भावे या काचन ग्राह्या । तथा च मनुः— 'यस्मिन्देशे तु यत्तोयं या च यत्रैव मृत्तिका । सैव तत्र प्रशस्ता स्यात्तया शौचं विधीयते' इति । विष्णुपुराणे वर्ज्या मृदो दर्शिताः— 'वल्मीकमूषिकोत्खातां मृदमन्तर्जलां तथा । शौचावशिष्टां गेहाच्च नादद्याल्लेपसंभवाम् ॥ अणुप्राण्युपपन्नां च फालोत्क्रान्तां न कर्दमाम्' इति । देवलोऽपि— 'अङ्गारतुषकीटास्थिशर्करावालुकान्विताम् । ग्रामबाह्यान्तरालस्थां वालुकापांसुरूपिणीम् ॥ आहृतामन्यशौचार्थमाददीत न मृत्तिकाम्' इति । हस्तनियममाह देवलः— 'धर्मविद्दक्षिणं हस्तमधः शौचे न योजयेत्' । मृत्परिमाणमाह शातातपः— 'आर्द्रामलकमात्रास्तु ग्रासा इन्दुव्रते स्थिताः । तथैवाहुतयः सर्वाः शौचार्थे याश्च मृत्तिकाः' इति । स एव मृत्संख्यामाह— 'एका लिङ्गे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः । मूत्रशौचं समाख्यातं शकृति द्विगुणं भवेत्' इति । मनुरपि— 'एका लिङ्गे गुदे तिस्रः तथैकत्र करे दश । उभयोः सप्त दातव्याः मृदः शुद्धिमभीप्सता ॥ एतच्छौचं गृहस्थस्य द्विगुणं तु ब्रह्मचारिणः । त्रिगुणं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

वनस्थस्य यतीनां तु चतुर्गुणम्' इति । स्त्रीशूद्रयोरर्धशौचम् । तथा चादित्यपुराणे– 'स्त्रीशूद्रयोरर्धमानं प्रोक्तं शौचं मनीषिभिः । दिवा शौचस्य निश्यर्धं पथि पादं विधीयते ॥ देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत्' इति । उक्तसंख्यया गन्धलेपनिवृत्तौ मनुः— 'यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृतः । तावन्मृद्वारि देयं स्यात्सर्वद्रव्यविशुद्धिषु' । मनस्तुष्ट्यभावे देवलः— 'यावत्तु शुद्धिं मन्येत तावच्छौचं विधीयते' इति । शौचस्यावश्यकर्तव्यतामाह दक्षः— 'शौचे यत्नः सदा कार्यः शौचमूलो यतो द्विजः । शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः' इति । तत आचमनमाह पराशरः— 'कृत्वाथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः । निबद्धशिखकच्छस्तु तत आचाममाचरेत् ॥ कृत्वोपवीतं सव्येन वाङ्मनःकायसंयतः' इति । आचमनप्रकारमाह आपस्तम्बः— 'आसीनस्त्रिराचामेद्धृदयंगमाभिरद्भिः' इति । याज्ञवल्क्योऽपि— 'अन्तर्जानुः शुचौ देशे उपविष्ट

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

उदङ्मुखः। प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्' इति। गौतमोऽपि—'शुचौ देशे आसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीत्या मणिबन्धात्पाणी प्रक्षाल्य वाग्यतो हृदयस्पृशस्त्रिश्चतुर्वाप आचामेत्' इति। खादिरगृह्येऽपि—'त्रिराचम्यापो द्विः परिमृजीत पादावभ्युक्ष्य शिरोऽभ्युक्ष्येन्द्रियाण्यद्भिः संस्पर्शयेदन्ततः प्रत्युपस्पृश्य शुचिर्भवति' इति। 'ब्राह्मेण तीर्थेनोपस्पृशेत्' इत्युक्तम्; तत्र ब्राह्मादितीर्थलक्षणमाह याज्ञवल्क्यः—'कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य तु। प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्' इति। एतदेव शङ्खलिखिताभ्यां स्पष्टीकृतम्। 'अङ्गुष्ठमूलस्योत्तरतः प्रागग्रायां ब्राह्मं तीर्थं प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यं कनिष्ठातलयोरन्तरा प्राजापत्यं पूर्वेणाङ्गुलिपर्वणि दैवम्' इति। आचमनार्थमुदकं विशिनष्टि पराशरः—'अद्भिः समुद्धृताभिस्तु हीनाभिः फेनबुद्बुदैः। वह्निना च न तप्ताभिरक्षाराभिरुपस्पृशेत्' इति। याज्ञवल्क्योऽपि—'अद्भिस्तु प्रकृतिस्थाभिः हीनाभिः फेनबुद्बुदैः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हृत्कण्ठतालुकाभिश्च यथासंख्यं द्विजातयः॥ शुद्धेरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः' इति। प्रचेता अपि—'अनुष्णाभिरफेनाभिः पूताभिर्वस्त्रचक्षुषा। हृद्गताभिरक्ताभिस्त्रिश्चतुर्वाद्भिराचमेत्' इति। तत्रापवादमाह यमः—'रात्राववीक्षितेनापि शुद्धिरुक्ता मनीषिणाम्। ...तथोष्णेनोष्णपायिनाम्' इति। उदकस्य ग्रहणप्रकारं परिमाणं चाह भरद्वाजः—'आयतं पर्वतः कृत्वा गोकर्णाकृतिवत्करम्। संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः॥ मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं चरेत्। माषमज्जनमात्रास्तु संगृह्य त्रिः पिबेदपः' इति। 'सव्यपाणिर्दक्षिणो द्रष्टव्यः त्रिः पिबेद्दक्षिणेनाम्बु' इति पुराणवचनात्। उदकपानानन्तरभाविनीमितिकर्तव्यतामाह दक्षः— 'संहत्याङ्गुलिमूलेन द्विः प्रमृज्य ततो मुखम्। संहताभिश्चतसृभिः पूर्वमास्यमुपस्पृशेत्' अङ्गुष्ठेन प्रदेशिन्या घ्राणं स्पृष्ट्वा त्वनन्तरम्। अङ्गुष्ठानामिकाभ्यां तु चक्षुःश्रोत्रे ततः परम्॥ कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयं तु तलेन वै। सर्वाभिश्च शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत्' इति।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

आपस्तम्बोऽपि–'त्रिरोष्ठौ परिमृजेद्द्विरित्येके सकृदुपस्पृशेदित्येके दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाण्युपस्पृशेच्चक्षुषी नासिके श्रोत्रे चाथाप उपस्पृशेत्' इति। गौतमोऽपि—'द्विः परिमृज्य पादौ चाभ्युक्षेत्खानि चोपस्पृशेच्छीर्षण्यानि मूर्धनि च दद्यात्' इति। आचमननिमित्तान्याह मनुः—'कृत्वा मूत्रं पुरीषं च खान्याचान्त उपस्पृशेत्। वेदमध्येष्यमाणश्च अन्नमश्नंश्च सर्वदा' इति। आपस्तम्बोऽपि—'मूत्रं कृत्वा पुरीषं वा मूत्रपुरीषलेपानन्नलेपानुच्छिष्टलेपान्रेतसश्च ये लेपास्तान्प्रक्षाल्य पाणी पादौ चाचम्य प्रयतो भवति' इति। स एवान्यत्र—'स्वप्ने क्षवथौ शृङ्खाणिकाश्चालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं च गत्वामेध्यं चोपस्पृश्याप्रयतं च मनुष्यं नीवीं च परिधायाप उपस्पृशेत्' 'आर्द्रं वा शकृदोषधीर्भूमिं वा' इति। सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतं वचः। रथ्यां श्मशानं चाक्रम्य आचामेत्प्रयतोऽपि सन्। बृहस्पतिस्तु 'अधो वायौ समुत्क्रान्ते आक्रन्दे क्रोधसंभवे। मार्जा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रमूषिकस्पर्शे प्रहासेऽनृतभाषणे ॥ निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नुपस्पृशेत्' इति । यमोऽपि— 'उत्तीर्योदकमाचामेदवतीर्य तथैव च । एवं स्यात्तेजसा युक्तो वरुणोऽपि तु पूजितः' इति । आचमनासंभवे मार्कण्डेयः— 'सम्यगाचम्य तोयेन क्रियाः कुर्वीत वै शुचिः । देवतानामृषीणां च पितॄणां चैव यत्नतः ॥ कुर्वीतालम्भने चापि दक्षिणश्रवणस्य वा । यथा विभवतो ह्येतत्पूर्वाभावे ततः परम् ॥ न विद्यमाने पूर्वोक्ते उत्तरप्राप्तिरिष्यते' इति । बोधायनोऽपि— 'नीवीं विसृज्य परिधाय उपस्पृशेदार्द्रतृणं भूमिं गोमयं वा संस्पृशेत्' इति । पुनराचमननिमित्तमाह याज्ञवल्क्यः— 'स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे । आचान्तः पुनराचामेद्वासो विपरिधाय च' इति । कूर्मपुराणेऽपि 'प्रक्षाल्य पाणी पादौ च भुञ्जानो द्विरुपस्पृशेत् । शुचौ देशे समासीनो भुक्त्वा च द्विरुपस्पृशेत् ॥ ओष्ठावलोमकौ स्पृष्ट्वा वासो विपरिधाय च । रेतोमूत्रपुरीषाणामुत्सर्गेऽशुद्धभाषणे ॥ ष्ठीवित्वाध्ययनारम्भे कासश्वासागमे तथा । चत्वरं वा श्म-



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

शानं वा समागम्य द्विजोत्तमः । सन्ध्ययोरुभयोस्तद्वदाचान्तोऽप्याचमेत्ततः' इति । अशुद्धभाषणे निष्ठुरभाषणे आचमनापवादमाह बोधायनः— 'दन्तवद्दन्तलग्नेषु धारणम्' इति । दन्तलग्नदन्तसक्तयोः निर्हार्यानिर्हार्यरूपेण भेदः, अत एव देवलः— 'भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् । दन्तलग्नमसंहार्यं लेपमन्ये तदन्तवत् ॥ न तत्र बहुशः कुर्याद्यत्नमुद्धरणे पुनः' इति । अथाचमनफलमाह व्याघ्रपादः— 'य एवं ब्राह्मणो नित्यमुपस्पर्शनमाचरेत् । ब्रह्मादिस्तम्बपर्यन्तं जगत्संपरितर्पयेत्' इति । अथ दन्तधावनम् । तत्रात्रिः— 'मुखे पर्युषिते नित्यं भवन्त्यप्रयता नराः । तदार्द्रकाष्ठं शुष्कं वा भक्षयेद्दन्तधावने' इति । तत्र वृक्षविशेषमाह अङ्गिराः— 'आम्रपुन्नागबिल्वानामपामार्गशिरीषयोः । भक्षयेत्प्रातरुत्थाय वाग्यतो दन्तधावनम्' इति । स्मृत्यर्थसारे तु— 'अङ्गुल्या धावयेद्दन्तान्वर्जयेत्तु प्रदेशिनीम् । मध्यमानामिकाङ्गुष्ठैर्दन्तदार्ढ्यं भवत्यपि' । वर्ज्यानाह उशनाः— अङ्गुलीभिर्दन्तान्प्रक्षालयेदिति रिक्तविषयम् । दक्षिणाभि-

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

मुखो भूत्वा नाद्यात्तिलकदम्बकम् ॥ तिन्दुकेङ्गुदिबन्धूका-
मोचामरजाबिल्वकम् । कर्पासं दन्तकाष्ठं च विष्णोरपि
हरेन्छ्रियम् ॥ न भक्षयेत पालाशं कार्पासं शाङ्कमेव च ।
एतानि भक्षयेद्यस्तु क्षीणपुण्यः स जायते' इति । वर्ज्य-
तिथीनाह विष्णुः—'प्रतिपद्दर्शषष्ठीषु चतुर्दश्यष्टमीषु च ।
नवम्यां भानुवारे च दन्तकाष्ठं विवर्जयेत्' इति । यमोऽपि—
'श्राद्धे जन्मदिने चैव विवाहे जीर्णदोषतः । व्रते चैवो-
पवासे च वर्जयेद्दन्तधावनम्' इति। स्मृत्यन्तरे—'तृण-
पर्णैः सदा कुर्यादम एकादशीं विना । तयोरपि च कुर्वीत
जम्बूप्लक्षरसालकैः' इति । अलाभे दन्तकाष्ठानां निषि-
द्धायां तिथौ तथा । अपां द्वादशगण्डूषैर्विदध्युर्दन्तधाव-
नम्' इति । 'मुक्त्वा चानामिकाङ्गुष्ठौ वर्जयेद्दन्त-
धावनम्' इति च । अथ स्नानम्, तत्र कूर्मपुराणे—
'प्रक्षाल्य दन्तकाष्ठं वै भक्षयित्वा यथाविधि । आचम्य
प्रयतो नित्यं प्रातः स्नानं समाचरेत्' इति । दक्षोऽपि—
'अस्नात्वा नाचरेत्कर्म जपहोमादि किंचन । लालास्वेदस-
माकीर्णः शयनादुत्थितः पुमान् ॥ अत्यन्तमलिनः कायो

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

नवच्छिद्रसमन्वितः। स्रवत्येव दिवारात्रं प्रातःस्नानं विशोधनम् ॥ प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टफलं हि तत्। सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम्' इति। व्यासः— 'ऋषीणामृषिता नित्यं प्रातःस्नानान्न संशयः। अलक्ष्मीः कालकण्ठी च दुःस्वप्नदुर्विचिन्तनम् ॥ प्रातःस्नानेन पापानि पूयन्ते नात्र संशयः। अज्ञानाद्यदि वा मोहाद्रात्रौ दुश्चरितं कृतम्। प्रातःस्नानेन तत्सर्वं शोधयन्ति द्विजातयः' इति। स्नानप्रकारश्च चतुर्विंशतिधा दर्शितः। स्नानमब्दैवतैर्मन्त्रैर्वारुणैश्च मृदा सह। कुर्याद्व्याहृतिभिर्वाथ यत्किंचेदमृचापि वा ॥ दन्तान्प्रक्षाल्य नद्यादौ गृहे चेदममन्त्रवत्। अमन्त्रवदिति मन्त्रसंक्षेपोऽभिहितः। प्रातः संक्षेपतः स्नानं होमलोपाविगर्हितः। कालनियममाह जाबालिः— 'सततं प्रातरुत्थाय दन्तधावनपूर्वकम्। आचरेदुषसि स्नानं तर्पयेद्देवमानुषम्' इति। तत्र स्नाने अघमर्षणमाह शौनकः— 'स्नात्वाचान्तो वारिमध्ये त्रिः पठेदघमर्षणम्' इति। स्नानानन्तरं वस्त्रनिष्पीडनं कर्तव्यम्। तत्राह भार-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

द्वाजः— 'वस्त्रोदकमपेक्षन्ते ये मृता ज्ञानकर्मणि । तस्मात्सर्वं प्रयत्नेन जलं भूमौ निपातयेत्' । निष्पीडनमन्त्रः— 'ये के चास्मत्कुले जाताः अपुत्रा गोत्रिणो मृताः । ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम्' इति । अत्र उक्तस्नानं द्विविधम्; तथा च स्मृत्यन्तरे— 'स्नानं तु द्विविधं प्रोक्तं गौणमुख्यप्रभेदतः । तयोस्तु वारुणं मुख्यं तत्पुनः षड्विधं भवेत् ॥ नित्यं नैमित्तिकं वाक्यं क्रियाङ्गं मलकर्षणम् । क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्तितम्' इति । एतेषां लक्षणमाह शङ्खः— 'अस्नातस्तु पुमान्नार्हो जप्याग्निहवनादिषु । प्रातःस्नानं तदर्थं तु नित्यस्नानं प्रकीर्तितम् । चण्डालशवधूमादि स्पृष्ट्वा स्नातां रजस्वलाम् । स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तकं हि तत् ॥ पुष्पस्नानादिकं यत्तु दैवज्ञविधिचोदितम् । तद्धि काम्यं समुद्दिष्टं नाकामस्तत्प्रयोजयेत् ॥ मलापकर्षणं स्नानमभ्यङ्गादिप्रपूर्वकम् । मलापकर्षणार्थाय प्रवृत्तिस्तस्य नान्यथा ॥ जप्तुकामः पवित्राणि ह्यर्चिष्मान्देवताः पितॄन् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

स्नानं समाचरेद्यस्तु क्रियाङ्गं तत्प्रकीर्तितम् ॥ सरःसु देवखातेषु तीर्थेषु च नदीषु च । क्रियास्नानं समुद्दिष्टं स्नानं तत्र मता क्रिया'; स्नानमेव क्रिया कार्यतया विहिता इत्यर्थः । अथ प्रसङ्गान्माध्याह्निकस्नानम् । तत्र बोधायनस्त्वाह— 'ततो मध्याह्नसमये पुनः स्नानं समाचरेत् । सूर्यस्य चाप्युपस्थानं जपहोमादिकं ततः' । तत्र विशेषमाह विष्णुः–'प्रातः स्नातोऽपि विधिवत्स्नानं मध्यंदिने चरेत् । शक्तश्चेदन्यथा रोगी शाट्या संमार्जनं चरेत' इति । तत्राश्रमभेदेन व्यवस्थामाह दक्षः— 'प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः । यतेस्त्रिषवणं स्नानं सकृत्तु ब्रह्मचारिणाम्' इति । स्मृत्यर्थसारे तु–'सर्वे वापि सकृत्कुर्युरशक्तौ चोदकं विना' इति । एतच्च मध्याह्नस्नानं सावकाशतया समन्त्रकं कर्तव्यम् । तत्र मन्त्रस्नानावश्यिकतामाह व्यासः— 'मन्त्रपूतजलैः स्नानमाहुः स्नानफलप्रदम् । न वृथा वारिमग्नानां यादसामिव तत्फलम्' इति । विष्णुस्तु— 'ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते । तूष्णीमेव तु शूद्रस्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्त्रीणां च कुरुनन्दन' इति । बोधायनोऽपि— 'अपोऽवगाहनं स्नानं विहितं सार्ववर्णिकम्' 'मन्त्रवत्प्रोक्षणं चापि द्विजातीनां विशिष्यते' इति । स्नानार्हजलमाह मनुः— 'नदीषु देवखातेषु तटाकेषु सरित्सु च । स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च' इति । वर्ज्यान्याह स एव– 'परकीयनिपानेषु स्नायाद्वै न कदाचन । पञ्चपिण्डान्समुद्धृत्य स्नायाद्वा संभवे पुनः' इति । समुद्रस्नानं प्रशस्तमित्युक्तं भारते— 'आजन्मशतसाहस्रं यत्पापं कुरुते क्वचित् । मुच्यते सर्वपापेभ्यः स्नात्वैव लवणाम्भसि' इति । अथ नैमित्तिकस्नानमाह मनुः— 'दिवाकीर्त्यमुदक्यां च पतितं सूतिकां तथा । शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति' । दिवाकीर्त्यः चण्डालः । गौतमोऽपि— 'पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचेल उदकोपस्पर्शनाच्छुध्येत् । शुनश्चेति पतितादिस्पृष्टिनं समारभ्य तृतीयस्य सचेलं स्नानं न चतुर्थस्य उदकोपस्पर्शनमेव । तथाह मरीचिः— 'उपस्पृशेच्चतुर्थस्तु तदूर्ध्वं प्रोक्षणं भवेत्' इति । संग्रहकारस्त्वाह— 'अबुद्धिपूर्वसं-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

स्पर्शे द्वयोः स्नानं विधीयते । त्रयाणां बुद्धिपूर्वं तु तत्स्पृष्टिन्यायकल्पना इति ॥ जलविशेषमाह नैमित्तिकस्नाने गर्गः— 'कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च । नित्यं यादृच्छिकं चैव यथारुचि समाचरेत्' इति । काम्यस्नानमाह पुलस्त्यः— 'पुष्ये च जन्मनक्षत्रे व्यतीपाते च वैधृतौ । अमायां च नदीस्नानं पुनात्यासप्तमं कुलम्' इति । अथ क्रियाङ्गस्नानं कूर्मपुराणे— 'धर्मक्रियां कर्तुमनाः पूर्वं स्नानं समाचरेत् । क्रियाङ्गं तत्समुद्दिष्टं स्नानं वेदपरैर्द्विजैः' इति । मलापकर्षणस्नानमभ्यङ्गस्नानम्, तत्र भास्करादिवारेषु क्रमेण गुणदोषा उक्ताः, ज्योतिषिके— 'संतापः कान्तिरल्पायुर्धनं निर्धनता तथा । अनारोग्यं सर्वकामः अभ्यङ्गाद्भास्करादिषु' । तिथिविशेषे मनुरपि— 'पक्षे च रवौ षष्ठ्यां रिक्तायां च तथा तिथौ । तैलेनाभ्यज्यमानस्तु धनायुर्भ्यां विहीयते' इति । गर्गोऽपि— 'पञ्चदश्यां चतुर्दश्यामष्टम्यां रविसंक्रमे । द्वादश्यां सप्तमीषष्ठ्योस्तैलस्पर्शं विवर्जयेत्' । निषिद्धकालेऽपि तैलविशेषमनुजानाति प्रचेताः— 'सार्षपं गन्धतैलं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

च यत्तैलं पुष्पवासितम् । अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन' इति । उक्तसर्वविधस्नानमपि उष्णोदकेन न कर्तव्यम् । तथा च शङ्खः-- 'स्नातस्य वह्नितप्तेन तथैव परवारिणा । शरीरशुद्धिर्विज्ञेया न तु स्नानफलं भवेत्' इति । याज्ञवल्क्योऽपि— 'वृथा तूष्णोदकस्नानं वृथा जप्यमवैदिकम् । वृथा त्वश्रोत्रिये दानं वृथा भुक्तमसाक्षिकम्' । अशक्तानामुष्णोदकस्नानमनुजानाति यमः—'आदित्यस्य करैः पूतं पुनः पूतं च वह्निना । आम्नातमातुरस्नाने प्रशस्तं तु शृतोदकम्' इति । स्मृत्यर्थसारेऽपि— 'वाप्यां कूपे तटाके च पारक्ये चोष्णवारिणि । प्रातः स्नानं नरः कुर्यादुष्णेनैव सदातुरः' इति । 'अशक्तौ शोभनगृहे शोभनाहे च सर्वथा । न शीतलजलस्नानं कार्यं चैवोष्णसेचनम्' इति च । नद्याद्यभावे अनातुरस्यापि स एवाह— 'नित्यं नैमित्तिकं चैव क्रियाङ्गं मलकर्षणम् । तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः' इति । तत्र विशेषमाह व्यासः— 'शीतास्वप्सु निषिच्योष्णा मन्त्रसंभारसंभृताः । गेहेषु शस्यते स्नानं तद्धीनमफलं बहिः'



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

इति। एतच्च स्नानं रात्रौ नद्यादिषु न कर्तव्यम्। तथा च स्मृत्यर्थसारे— 'क्रियास्नानं च काम्यं च पारक्योष्णेषु वर्जयेत्। नद्यां नास्तमिते स्नायाद्विशेषान्मध्ययामयोः॥ अग्निं प्रज्वाल्य वा स्नायाद्वाप्यादिषु महाजले। राहुदर्शनसंक्रान्तिविवाहोत्क्रान्तिवृद्धिषु॥ स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च। अस्पृश्यस्पर्शनं स्नानं निश्युष्णेन जलेन च' इति। उक्तस्नानस्यापवादमाह स एव— 'न स्नायादुत्सवेऽतीते माङ्गल्यं विनिवर्त्य च। अनुव्रज्य सुहृद्बन्धूनर्चयित्वेष्टदेवताः' इति। केषांचिदशिरस्कं स्नानमाह स एव— 'यत्र पुंसः सचेलं स्यात्स्नानं तत्र सुवासिनी। कुर्वीतैवाशिरः स्नानं शिरोरोगी जटी तथा' इति। गौणस्नानान्याह व्यासः— 'अशक्तावशिरस्कं वा स्नानमात्रं विधीयते। आर्द्रेण वाससा वाङ्गमार्जनं कापिलं स्मृतम्॥ अप्रायत्ये समुत्पन्ने स्नानमेव समाचरेत्। ब्राह्मादीन्यथ वाशक्तौ स्नानान्याहुर्मनीषिणः॥ ब्राह्ममाग्नेयमुद्दिष्टं वायव्यं दिव्यमेव च। वारुणं यौगिकं चैव षोढा स्नानं प्र-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कीर्तितम् ॥ ब्राह्मं तु मार्जनं मन्त्रैः कुशैः सोदकबिन्दुभिः । आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ॥ यत्तु सातपवर्षेण तत्स्नानं दिव्यमुच्यते । वारुणं चावगाहं च मानसं चात्मवेदनम् ॥ यौगिकं स्नानमाख्यातं योगो यद्विष्णुचिन्तनम् । आत्मतीर्थमिति ख्यातं सेवितं ब्रह्मवादिभिः' इति । गौतमस्तु— 'भस्मोद्धूलनमित्युक्तं प्रथमं मन्त्रसंयुतम् । वारुणं मानसं मन्त्रं भौमं स्नानं तु पञ्चमम् ॥ षष्ठं दिव्यं च वायव्यमष्टमं च कुशोदकम् । गोमूत्रं नवमं ज्ञेयं विप्रपादोदकं दश' इति । तत्रैव 'गुणा दशस्नानपरस्य पुंसो रूपं च तेजश्च बलं च शौर्यम् । आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्ननाशश्च तपश्च मेधाः ॥ स्नाने मनःप्रसादः स्याद्देवा अभिमुखाः सुधीः । सौभाग्यं श्रीः सुखं पुष्टिः पुण्यं विद्या यशो धृतिः ॥ महापापान्यलक्ष्मीश्च दुरितं दुर्विचिन्तनम् । शोकदुःखादिहरणं प्रातःस्नानं विशेषतः' इति । ततो वस्त्रधारणम्; तथा च मत्स्यपुराणे— 'एवं स्नात्वा ततः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

कुर्यादाचम्य च विधानतः । उत्थाय वाससी शुक्ले शुद्धेति परिधाय च' इति । कुर्यादित्यत्र कर्मेति शेषः । वस्त्रविषये गौतमः— 'सति विभवे न जीर्णमलवद्वासाः स्यात्' 'न रक्तमुल्बणमन्यधृतं वा वासो बिभृयात्' इति । आपस्तम्बोऽपि— 'सर्वान्रागान्वाससि वर्जयेत्कृष्णं च स्वाभाविकमनूद्भासि वासो वसीत प्रतिकृष्टं च शक्तिविषये' इति । अनूद्भासि अबहुमूल्यमित्यर्थः । प्रतिकृष्टं निकृष्टं जीर्णं मलवत् स्थूलं च तद्विपरीतम्, अप्रतिकृष्टं तादृशं च वासो वसीत शक्तौ सत्यामित्यर्थः । योगयाज्ञवल्क्योऽपि— 'स्नात्वैवं वाससी धौते त्वच्छिद्रे परिधाय च' इति । तत्र विशेषमाह व्यासः— 'नोत्तरीयमधः कुर्यान्नोपर्याधस्त्यमम्बरम् । नान्तर्वासो विना जातु न वसेद्वसनं बुधः' इति । मार्कण्डेयपुराणे तु— 'अवमृज्यान्न च स्नातो गात्राण्यम्बरपाणिभिः । न च निर्धुनियात्केशान्वासश्चैव न निर्धुनुयात्' इति । वस्त्रलक्षणमाह— 'ईषद्धौतं नवं श्वेतं सदसंपन्नधारितम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अहतं तद्विजानीयात्सर्वकर्मसु पावनम्' इति । भृगुस्तु वर्णभेदेन वस्त्रविशेषमाह— 'ब्राह्मणस्य सितं वस्त्रं नृपे रक्तमनुल्बणम् । पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते ॥ क्षौमं वासः प्रशंसन्ति तर्पणे सदृशं तथा । काषायं धातुरक्तं वा नोल्बणं तत्र कर्हिचित्' इति । बोधायनस्तु— 'कर्तव्यमुत्तरं वासः पञ्चस्वेतेषु कर्मसु । स्वाध्यायोत्सर्गदानेषु भुक्त्वाचमनयोस्तथा' इति । एतच्च सर्वकर्मोपलक्षणार्थम्, अनुत्तरीयस्य कर्ममात्रनिषेधात् । तथा च विष्णुपुराणे— 'होमदेवार्चनाद्यासु क्रियासु पठने तथा । नैकवस्त्रः प्रवर्तेत द्विज आचमने जपे' इति । नग्नस्यानधिकारमाह भृगुः— 'विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च । श्रौतं स्मार्तं तथा कर्म न नग्नश्चिन्तयेदपि' इति । नग्नलक्षणमाह व्यास एव— 'नग्नो मलिनवस्त्रः स्यान्नग्नश्चार्द्रपटः स्मृतः । नग्नस्तु दग्धवस्त्रः स्यान्नग्नः स्यूतपटस्तथा' इति । अलाभे गौणवस्त्रमाह भृगुः— 'अलाभे धौतवस्त्रस्य शाणाक्षौमाविकानि च । कुतपं योगपट्टं च विवासास्तु न वै भवेत्' इति । 'कुतपं

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

योगपट्टं च धारयेत्' इति शेषः ॥ ततः

पूर्वां संध्यामुपासीनो जजाप यतमानसः।

अनेन काले प्राप्ते रामेण संध्योपासनात्सर्वैरपि काले प्राप्ते संध्योपासनं कर्तव्यमिति सूचितम्। संध्यायाः कालं स्वरूपमनुष्ठानप्रकारं च प्रश्नप्रतिवचनाभ्यां ताण्डिनः समामनन्ति— 'ब्रह्मवादिनो वदन्ति कस्माद्ब्राह्मणः सायमासीनः संध्यामुपास्ते कस्मात्प्रातस्तिष्ठन्, का च संध्या कश्च संध्यायाः कालः किं च संध्यायाः संध्यात्वं देवाश्च वासुराश्चास्पर्धन्त ते सुरा आदित्यमभिद्रवन् स आदित्योऽबिभेत्तस्य हृदयं कर्मरूपेणातितिष्ठत्। स प्रजापतिमुपाधावत्। तस्य प्रजापतिरेतद्भेषजमपश्यदृतं च सत्यं च ब्रह्म चोंकारं च त्रिपदां च गायत्रीं ब्राह्मणो मुखमपश्यत्। तस्माद्ब्राह्मणो रात्रस्य संयोगे संध्यामुपास्ते स ज्योतिष्याज्ज्योतिषो दर्शनात्सोऽस्य कालः, सा संध्या तत्संध्यायाः संध्यात्वं यत्सायमासीनः संध्यामुपास्ते तया वीरस्थानं जयति अथ यदपः प्रयुङ्क्ते ता विप्रुषो वज्रीभवन्ति ता वि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुषो वज्रीभूत्वासुरानपाघ्नन्ति ततो देवा अभवन्परासुरा भवति आत्मना परास्य भ्रातृव्यो भवति य एवं वेद इति यत्सायमासीनः संध्यामुपास्ते तया वीरस्थानं वीरस्थानं च संततमविच्छिन्नं भवति य एवं वेद' इति। आश्वलायनोऽपि— 'नित्योदकः संध्यामुपासीत वाग्यतः सायमुत्तरमभिमुखः अन्वष्टमदेशमर्धास्तमिते मण्डलमा नक्षत्रदर्शनात् । एवं प्रातः प्राङ्मुखस्तिष्ठन्ना मण्डलदर्शनात्' इति । आपस्तम्बोऽपि— 'संध्योश्च बहिर्ग्रामादासनं वाग्यतश्च' इति । गौतमोऽपि— 'बहिः संध्यत्वं च तिष्ठेत्पूर्वमासीतोत्तराम्' इति । अत्र संध्योपासने संध्यायां देवताभिध्यानं तथा च तैत्तरीयश्रुतिः—'उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद' इति। अस्यार्थः— 'सव्याहृतिं सप्रणवामिति मन्त्राद्युक्तप्रकारेण प्राणायामं कुर्वन्यथोक्तनामरूपविशिष्टं संध्याशब्दवाच्यमादित्यं ब्रह्मेति ध्यायन्नैहिकमामुष्मिकं च सकलं भद्रमश्नुते। य एवमु-

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

क्तध्यानेन शुद्धान्तःकरणो ब्रह्म साक्षात्कुरुते स पूर्वमपि ब्रह्मैव सन्नज्ञानाज्जीवत्वं प्राप्तः यथोक्तज्ञानेनाज्ञानापगमे सति ब्रह्मैवाप्नोति' इति । व्यासस्तु— 'न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह । सोऽहमस्मीत्युपासीत विधिना येन केनचित्' इति । तत्र संध्यास्वरूपमाह दक्षः— 'अहोरात्रस्य यः संधिः सूर्यनक्षत्रवर्जितः । सा तु संध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः' इति । तत्र भवा क्रिया वा संध्या, इयं च संध्या अहरहः कर्तव्या; तथा च श्रुतिः 'अहरहः संध्यामुपासीत' इति । योगयाज्ञवल्क्यस्तु—'संध्योः संध्यामुपासीत नास्तमे नोद्गते रवौ' इति । देवताभेदपूर्वकं संध्यात्रैविध्यमाह व्यासः— 'गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने । सरस्वती च सायाह्ने सैव संध्या त्रिधा मता' इति । एवं त्रिविधापि संध्या कर्तव्येत्याहात्रिः— 'संध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा' इति । संध्यानुष्ठानप्रकारमाह योगयाज्ञवल्क्यः— 'प्राणानायम्य संप्रोक्ष्य त्रिचैनाब्दैवतेन तु' इति । बृहस्पतिरपि— 'बध्वासनं नियम्यास-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न्स्मृत्वाचार्यादिकं तथा । संनिमीलितदृङ्मौनी प्राणाया-
मान् समभ्यसेत्' इति । प्राणायामलक्षणमाह मनुः—
'सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः
पठेदायतप्राणः प्राणायामः स उच्यते' इति । प्राणायाम-
संख्या कूर्मपुराणे दर्शिता– 'प्राणायामत्रयं कृत्वा ध्याये-
त्संध्यामिति श्रुतिः' इति । योगयाज्ञवल्क्यस्तु प्राणायाम-
प्रकारमाह— 'भूर्भुवःस्वर्महर्जनस्तपः सत्यं तथैव च ।
प्रत्योंकारसमायुक्तं तथा तत्सवितुः परम् ॥ ओमापो ज्यो-
तिरित्येतच्छिरः पश्चात्प्रयोजयेत् । त्रिरावर्तनयोगात्तु
प्राणायामस्तु शब्दितः' इति । ततो मार्जनमाह व्यासः
— 'आपो हि ष्ठेत्यृचा कुर्यान्मार्जनं तु कुशोदकैः । प्रण-
वेन तु संयुक्तं क्षिपेद्वारि पदे पदे ॥ विप्रुषोऽष्टौ क्षिपेदू-
र्ध्वमधो यस्य क्षयाय जित् । रजस्तमो मोहजाताञ्जाग्र-
त्स्वप्नसुषुप्तिजान् ॥ वाङ्मनःकायजान्दोषान्नवैतान्नवभिर्दहे-
त्' इति । प्रजापतिरपि— 'ऋगन्ते मार्जनं कुर्यात्पादान्ते
वा समाहितः । अर्धर्चान्तेऽथ वा कुर्याच्छिष्टानामीदृशं स-
मम्' इति । उक्तमार्जने तीर्थविशेषमाह व्यासः– 'मार्जना-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

र्चनबलिकर्मभोजनानि देवतीर्थेन कुर्यात्' इति। मार्जनानन्तरं सूर्यश्चेत्याचमनं कर्तव्यम्। तथा च भारद्वाजः—'सायमग्निश्च मेत्युक्त्वा प्रातः सूर्येत्यपः पिबेत्। आपः पुनन्तु मध्याह्ने ततश्चाचमनं चरेत्' इति। कात्यायनोऽपि 'शिरसो मार्जनं कुर्यात्कुशैः सोदकबिन्दुभिः। प्रणवो भूर्भुवः स्वर्वो गायत्री च तृतीयकम्॥ अब्दैवत्या ऋचश्चैव चतुर्थमिति मार्जनम्' इति। मार्जनानन्तरं कर्तव्यमाह प्रजापतिः—'जलपूर्णं तदा हस्तं नासिकाग्रे समर्पयेत्। ऋतं चेति पठित्वा तु तज्जलं तु क्षितौ क्षिपेत्' इति। एवं प्रोक्षणमन्त्राचमनादिना परिपूतेनार्घ्यप्रदानं कर्तव्यम्। अर्घ्यप्रदानप्रकारस्तैत्तिरीये—'तानि ह वा एतानि रक्षाँसि गायत्र्याभिमन्त्रितेनाम्भसा शाम्यन्ति तदुह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्र्याभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति ता एता आपो वज्रीभूत्वा तानि रक्षाँसि मन्देहारुणे द्वीपे प्रक्षिपन्ति' इति। व्यासोऽपि—'कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम्। आदित्याभिमुखस्तिष्ठंस्त्रिरूर्ध्वमथ क्षिपे-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

तु' इति । ततः प्रदक्षिणं कर्तव्यम्; तथा च तैत्तरीयश्रुतिः 'यत्प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमवधून्वन्ति' इति । प्रदक्षिणानन्तरमुदकस्पर्शनमप्युक्तं पुराणे— 'सायं मन्त्रवदाचम्य प्रोक्ष्य सूर्याय चाञ्जलिम् । दत्त्वा प्रदक्षिणं कृत्वा जलं स्पृष्ट्वा विशुध्यति' इति । ततो देवताभिध्यानं कर्तव्यम् । तथा च तैत्तरीयश्रुतिः— 'उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति' इति । अर्घ्यप्रदानानन्तरं कर्तव्यमाह बोधायनः— 'दर्भेष्वासीनो दर्भान्धारयमाणः सोदकेन पाणिना प्रत्यङ्मुखः सावित्रीं सहस्रकृत्व आवर्तयेत्' 'प्राणायामशो वा शतकृत्वः' 'उभयतः प्रणवां ससप्तव्याहृतिकां मनसा वा दशकृत्वस्त्रिभिश्च प्राणायामैः' इति । जपभेदोऽभिहितः पुराणे— 'वाचिकश्च उपांशुश्च मानसस्त्रिविधः स्मृतः । त्रयाणां जपयज्ञानां श्रेयान्स्यादुत्तरोत्तरम्' इति । तेषां च लक्षणानि 'यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः । मन्त्रमुच्चारयेद्वाचा वाचिकोऽयं जपः स्मृतः ॥ शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रचालयेत् । अपरैरश्रुतं किंचित्स उपांशुजपः स्मृतः। ध्येया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् । शब्दार्थचिन्तनं भूयः कथ्यते मानसो जपः' इति । त्रयाणां तारतम्यमपि— 'उत्तमं मानसं जप्यमुपांशुर्मध्यमं स्मृतम् । अधमं वाचिकं प्राहुः सर्वमन्त्रेषु वै द्विजाः ॥ वाचिकस्यैकमेकं स्यादुपांशोः शतमुच्यते। सहस्रं मानसे प्रोक्तः स चात्रिभृगुनारदैः'। जपे नियममाह शौनकः– 'कृत्वोत्तानौ करौ प्रातः सायं चाधोमुखौ करौ । मध्यस्तब्धकराभ्यां तु जप एवमुदाहृतः । जपसंपदमाह मनुः— 'मनःसंतोषणं शौचं मौनं मन्त्रार्थचिन्तनम् । अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतवः ॥ पूर्वां संध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् । पश्चिमां तु समासीनः सम्यगृक्षविभावनात्' इति । मध्याह्ने जपनियममाह— 'तथा मध्याह्नसंध्यायामासीनः प्राङ्मुखो जपेत्' इति । जपसमये वर्ज्यानाह— 'न चङ्क्रमन्न च हसन्न पार्श्वमवलोकयेत् । नापश्रितो न जल्पंश्च नाप्रावृतशिरास्तथा ॥ न पदा पादमाक्रम्य न चैव हि तथा करौ । न चासमा-

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

हितमना न च संश्रावयञ्जपेत्' इति। बोधायनोऽपि— 'नाभेरधः संस्पर्शनं कर्मयुक्तो वर्जयेत्' इति। व्यासोऽपि— 'जपकाले न भाषेत व्रतहोमादिकेषु च' इति। वाग्यमलोपे प्रायश्चित्तमाह योगयाज्ञवल्क्यः— 'यदि वाग्यमलोपः स्याज्जपादिषु कदाचन। व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम्'। संवर्तोऽपि— 'लोकवार्तादिकं श्रुत्वा दृष्ट्वा स्पृष्ट्वा च दूषितम्। संख्यां विना च यज्जप्यं तत्सर्वं निष्फलं भवेत्॥ क्रोधं मान्द्यं क्षुधां निद्रां निष्ठीवनं विजृम्भणम्। दर्शनं च श्वनीचानां वर्जयेज्जपकर्मणि॥ आचमेत्संभवे चैषां स्मरेद्विष्णुं सुरार्चितम्' इति। 'ज्योतींषि च प्रपश्येद्वा कुर्याच्च प्राणसंयमम्। ज्वलनं गाश्च विप्रांश्च यतिनोऽपि विशुद्धये' इति। देशनियममाह मनुः—'अपां समीपे नियतो नैत्यकं विधिमास्थितः। सावित्रीमप्यधीयीत गत्वारण्यं समाहितः॥ याज्ञवल्क्योऽपि— 'अग्न्यगारे जलान्ते वा जपेद्देवालयेऽपि वा। पुण्यतीर्थे गवां गोष्ठे द्विजक्षेत्रेऽथ वा गृहे' इति। शङ्खोऽपि— 'गृहे त्वेकगुणं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जप्यं नद्यादौ द्विगुणं स्मृतम्। गवां गोष्ठे शतगुणमग्न्यगारे शताधिकम्॥ सिद्धक्षेत्रेषु तीर्थेषु देवतायाश्च संनिधौ। सहस्रशतकोटीनामनन्तं विष्णुसंनिधौ'। कूर्मपुराणेऽपि— 'गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं यतः। एकान्ते तु शुभे देशे तस्माज्जप्यं समाचरेत्'। जपसंख्यामाह मनुः— 'सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः। महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते' इति। आश्रमभेदेन संख्याभेदमाह योगयाज्ञवल्क्यः— 'ब्रह्मचार्याहिताग्निश्च शतमष्टोत्तरं जपेत्। वानप्रस्थो यतिश्चैव सहस्रादधिकं जपेत्' इति। यतिः कुटीचकबहूदकावित्यर्थः। यमोऽपि— 'सहस्रपरमां देवीं शतमध्यां दशावराम्। गायत्रीं तु जपेन्नित्यं सर्वपापप्रणाशिनीम्' इति। बोधायनोऽपि— 'दर्भेष्वासीनो दर्भान्धारयमाणः सोदकेन पाणिना प्राङ्मुखः सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वोपरिमितकृत्वो वा दशावरम्' इति। तत उपस्थानम्; तथा च बोधायनः— 'वारुणीभ्यां रात्रिमुपतिष्ठते इमं मे वरुण तत्त्वायामीति द्वाभ्याम्। एवं प्रातः

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

प्राङ्मुखस्तिष्ठन्मैत्रीभ्यामहरुपतिष्ठते– मित्रस्य चर्षणी धृतः मित्रो जनान्यातयतीति द्वाभ्याम् इति। तस्य फलमाह—'यदुपस्थकृतं पापं पद्भ्यां वा यत्कृतं भवेत्। बाहुभ्यां मनसा वापि वाचा वा यत्कृतं भवेत्। सायंसंध्यामुपस्थाय तेन तस्मात्प्रमुच्यते'। रात्र्या चापि संधीयते न चैनं वरुणो गृह्णाति। एवमेव प्रातरुपस्थाय रात्रिकृतात्पापात्प्रमुच्यते। अह्ना चापि संधीयते मित्रश्चैनं गोपायति आदित्यश्चैनं स्वर्गं लोकमुन्नयति एवमेवाहरहोरात्रयोश्च संधिषूपतिष्ठमानो ब्रह्मपूतो ब्रह्मभूतो ब्राह्मणः शास्त्रमनुवर्तमानो ब्रह्मलोकमभिजयतीति विज्ञायते। एवमुपस्थानस्य फलप्रतिपादनादिदमेव प्रधानमिति केचित्। अत एव च भारते—ते तथैव महाराज दंशिता रणमूर्धनि। संध्यागतं सहस्रांशुमादित्यमुपतस्थिरे' इति। इतरत्सर्वं परित्यज्य उपस्थानमेव कृतमिति प्रतिपादितम्। वस्तुतस्तु उपस्थानवत्संध्याशब्दवाच्यादित्योद्देश्यकार्घ्यप्रदानादित्याभिध्यानादित्यप्रतिपादकगायत्रीजपानां संध्योपासनरूपत्वेन फलत्वेन च अकरणे प्रत्यवायजनकत्वेन च प्राधान्यं वक्तुमु-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चितमिति चतुष्टयमपि प्रधानमेव । 'ते तथैवेत्यादि' भारतवचनं तु असंभवत्क्रियाणां तत्करणमन्त्रजप एव। संभवन्तीनां तु स्वरूपेणानुष्ठानमिति । आपत्कालीनानुकल्पाभिप्रायम् । अत एव क्रियाया असंभवे तन्मन्त्रजप- उक्तो बोधायनधर्मे— 'प्राणाग्निहोत्रमन्त्रांस्तु निरुद्धे भोजने जपेत् । त्रेताग्निहोत्राणां द्रव्यालाभे यथा जपे' इति । अत एव आपदि अर्घ्याद्यसंभवे अर्घ्योपस्थानादिकरणैः सर्वैरपि मन्त्रैरुपस्थानमेव कुर्यादित्याह व्यासः— 'देशक्षोभे महापातौ मार्जनार्घ्याद्यसंभवे । संध्यागतं सहस्रांशुं मन्त्रैः कुर्यादुपस्थितम्' इति । तस्माच्चतुर्णामपि प्राधान्ये न कोऽपि विरोधः । ननु अर्घ्यप्रदानाभिध्यानगायत्रीजपोपस्थानात्मकं मार्जनादिसर्वाङ्गोपेतं संध्यावन्दनं रामेण कृतमित्युक्तम् । तन्न संभवति ।

अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः ॥

इति युद्धकाण्डस्थसीतावचनपर्यालोचनया रामस्य आहिताग्नित्वावगमेन संध्यावन्दनस्याग्निहोत्रस्य च एककालत्वेन तस्मिन्काले श्रौतस्याग्निहोत्रस्य कर्तव्यत्वेन

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

संध्यावन्दनस्य कर्तुमशक्यत्वात् । संध्याकालेऽग्नि-होत्रस्य कर्तव्यत्वे आश्वलायनः— 'अपराह्णे गार्हपत्यं प्रज्वाल्येत्युपक्रम्य अस्तमिते होम इत्येवं प्रातर्व्युष्टायामिति प्रातरुद्धरणमुक्त्वा एवं प्रातरुपोदयं व्युषित उदिते वा' इति । बोधायनोऽपि— 'पुरादित्यस्यास्तमयात् गार्हपत्यमुपसमाधायान्वाहार्यपचनमाहृत्याहवनीयमुद्धरति तथा पुरादित्यस्योदयाद्गार्हपत्यम्' इति । कात्यायनोऽपि— 'गार्हपत्यादाहवनीयस्य उद्धरणमनस्तमितानुदितयोः' इति । भारद्वाजोऽपि— 'अस्तमित आदित्ये नक्षत्रं दृष्ट्वा प्रदोषे वा सायमग्निहोत्रं जुहोति व्युष्टायामुषसि वा प्रातरग्निहोत्रमुपोदयमुदिते समयाविषिते वार्वाक् प्रवदेत्तर्हि होतव्यमित्येकेषाम्' इति । आपस्तम्बोऽपि— 'अधिवृक्षसूर्य अविः सूर्ये वेत्युपक्रम्य नक्षत्रं दृष्ट्वा प्रदोषे निशायां वा सायम् उषस्युपोदयं समयाविषित उदिते वा प्रातः' इति । तस्मात्संधौ होतव्यमिति च । अनुदितादीनां लक्षणमाह व्यासः— 'रात्रेस्तु षोडशे भागे ग्रह-



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नक्षत्रभूषिते। काले त्वनुदितं प्राहुर्होमं कुर्याद्विचक्षणः॥ ततः प्रभातसमये नष्टनक्षत्रमण्डले। रविर्यावन्न दृश्येत समया विषितस्तु सः॥ रेखामात्रस्तु दृश्येत रश्मिभिस्तु समन्वितः। उदितं तद्विजानीयात्तत्र होमं प्रकल्पयेत्' इति। एवमादिवचनैः संध्याकालस्यैवाग्निहोत्रकालत्वावगमात् संध्यावन्दनकाल एव प्रणयनेनाग्निहोत्रस्य प्रक्रमे सति श्रौतेनाग्निहोत्रेण बाधात्संध्यावन्दनं कर्तुमशक्यमेवेति चेत्, न। 'प्रदोषान्तो होमकालः सङ्गवान्तः प्रातर्नक्षत्रं दृष्ट्वा प्रदोषे निशायां वा सायं यर्हि वाक्प्रवदेत् वै तर्हि होतव्यम्' इत्यादिवचनैः अग्निहोत्रस्य कालान्तरावगमेन सावकाशत्वात् संध्यावन्दनस्य च सकलस्मृतिपर्यालोचनया कालान्तरभावेन निरवकाशत्वात् 'सावकाशनिरवकाशयोर्निरवकाशं बलीयः' इति न्यायेन स्वकाल एव संध्यावन्दनं कर्तव्यम्। अग्निहोत्रहोमस्तु पुरस्तात्परस्ताद्वा कर्तुं शक्य एव। नन्वेवमपि 'अपराह्णे गार्हपत्यं प्रज्वलयेत्' इति सूत्रपर्यालोचनया संध्यावन्दनात्पूर्वं प्रणयनस्य कर्तव्यत्वावगमेन 'यस्याग्निमनुद्धृतं सूर्यो-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

ऽभिनिम्लोचति' इत्यादितैत्तरीयश्रुत्या 'तदाहुर्यस्याग्निहो-
त्रमनुद्धृत्यमादित्योऽभ्युदियाद्वाभ्यस्तमियाद्वा' इत्यादि ऐ-
तरेयब्राह्मणेन 'अथैकेषां यस्याग्निमनुद्धृतं सूर्योऽभिनि-
म्लोचेदभ्युदियाद्वा' इत्यापस्तम्बसूत्रेण 'यद्याहवनीयमप्र-
णीतमभ्यस्तमित्याद्याश्वलायनसूत्रेण च उदयास्तमया-
भ्यां पूर्वमनुद्धरणे प्रायश्चित्ताम्नानेन च, उदयात्प्रा-
गेव प्रणयने अनुष्ठिते अत ऊर्ध्वमाहिताग्निर्व्रतच-
र्याहोमादनुदितहोमी चौदयादिसूत्रेण 'नो एवाभ्युदि-
यान्नास्तमियाद्वा' इति सूत्रोक्तत्रिव्रतविधानेन आ हो-
माद्विहारं विहाय बहिर्गन्तुमशक्यत्वात्, ग्रामाद्बहिः
कर्तव्या संध्या कथमनुष्ठातुं शक्येतेति चेत्, न । संध्या-
वन्दनाकरणे बहुशः प्रत्यवायश्रवणात् सर्वकर्मसु अधि-
कारसंपादकत्वादकृतसंध्यावन्दनस्य श्रौतस्मार्तकर्मानधि-
काराच्च संध्यावन्दनं कर्तव्यमेव । तत्र बोधायनः—
'अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम् । संध्यां नो-
पासते विप्राः कथं ते ब्राह्मणाः स्मृताः' । स्मृत्यन्त-
रेऽपि 'एकाहं जपहीनस्तु संध्याहीनो दिनत्रयम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्वादशाहमनग्निस्तु शूद्र एव न संशयः' 'सायं प्रातः सदा संध्यां ये विप्रा न उपासते। कामं तान्धार्मिको राजा शूद्रकर्मसु योजयेत्' इति। मनुरपि— 'नानुतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम्। स शूद्रवद्बहिः कार्यः सर्वस्माद्द्विजकर्मणः' इति। विष्णुरपि— 'उपतिष्ठन्ति ये संध्यां ये न पूर्वां न पश्चिमाम्। व्रजन्ति ते दुरात्मानस्तामिस्रं नरकं नृप' इति। कूर्मपुराणेऽपि— 'योऽन्यत्र कुरुते यत्नं धर्मकार्ये द्विजोत्तमः। विहाय संध्याप्रणतिं स याति नरकायुतम्' इति। याज्ञवल्क्योऽपि— 'अनार्त्त उत्सृजेद्यस्तु स विप्रः शूद्रसंमतः। प्रायश्चित्ती भवेच्चैव लोके भवति निन्दितः' इति। अत्रिरपि— 'नोपतिष्ठन्ति ये संध्यां स्वस्थावस्थासु ते द्विजाः। हिंसन्ति वै सदा पापा भगवन्तं दिवाकरम्' इति। 'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु। यत्किंचित्कुरुते कर्म न तस्य फलभाग्भवेत्' इति। तथा च प्रत्यवायपरिहारार्थं कर्माधिकारसंपादनार्थं च स्मार्तेमपि संध्यावन्दनमविरुद्धं कर्तव्यमेव, विरुद्धं तु न-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

हिरवस्थानं कामं बाध्यताम् । एतदभिप्रायेणैव आपस्तम्बाचार्यैरुक्तम्— 'विप्रतिषेधे श्रुतिलक्षणं बलीयः' इति । ननु विरुद्धांशमपहायावशिष्टं संध्यावन्दनं कर्तव्यमित्युक्तं तन्न संभवति । उदाहृतवचनबलाच्छ्रुतिविरुद्धस्मार्तस्य स्वरूपतः परित्यागावगमादिति चेन्न, एवं वदता वक्तव्यं श्रौतं कर्म कुर्वता स्मार्तकर्ममात्रं न कर्तव्यम्, उत संध्यावन्दनमेव न कर्तव्यम्, आहोस्वित्संध्यावन्दनकरणे उक्तवचनयोर्विषयः क इति वा । न तावच्छ्रौतकर्म कुर्वता स्मार्तं कर्म न कर्तव्यमिति वक्तुं शक्यम्, तथा निषेधवचनाभावात्, प्रत्युत स्मार्तकर्मकरणस्याभ्यनुज्ञादर्शनात् । तथा चाथर्वणी श्रुतिः— 'यस्याग्निहोत्रमदर्शपूर्णमासमनाग्रयणमतिथिवर्जितमहुतमवैश्वदेवमविधिनाहुतमासप्तमांस्तस्य लोकान्हिनस्ति' इति । बोधायनोऽपि— 'ब्राह्मणं प्रतिपद्याश्नीयात्' इति । नापि संध्यावन्दनं न कर्तव्यमिति तद्वचनस्यार्थः, तद्वचने आहत्य संध्यावन्दननिषेधाभावात्, प्रत्युत 'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु' इत्यादिवचनैः अवश्यक-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

र्तव्यत्वावगमात् तदकरणे प्रत्यवायश्रवणात्। तथा च स्मृत्यन्तरेऽपि 'एकाहं जपहीनस्तु संध्याहीनो दिनत्रयम्। द्वादशाहमनग्निस्तु शूद्र एव न संशयः' इति उक्तवचनयोर्विषयः क इति चेत्, यदंशे विरोधस्तदंशनिषेधविषयत्वेनाप्युपपत्तौ स्वरूपनिषेधस्य विषयत्वे मानाभावात्। न चैवम् 'न हि कर्मणि कर्मान्तरारम्भः' इति न्यायात्, श्रौताग्निहोत्रस्यान्तराले स्मार्तं संध्यावन्दनं न कर्तव्यमेवेति वाच्यम्, 'न हि कर्मणि—' इति न्यायस्य सावकाशकाम्यकर्मविषयत्वाच्छ्रौतकर्मणि स्मार्तस्याभ्यनुज्ञानाच्च। तथा च बोधायनः— 'प्राकृते तन्त्रे प्राकृतं न्यायमनधिगच्छन् ग्रामन्यायं प्रतीयादयमिहार्हतां समारम्भः' इति वदञ्श्रौतकर्मणि नैमित्तिकं स्नानाचमनादि स्मार्तकर्म कर्तव्यमित्यनुज्ञातवान्। लौगाक्षिरपि— 'पक्षान्तं कर्म निर्वृत्य वैश्वदेवं तु साग्निकः। पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः' इति। बोधायनोऽपि— 'वेदं करोति। प्रागुत्तरात्परिग्रहादथापराह्णे पिण्डपितृयज्ञेन चरति' इति। एवं श्रौतकर्मणि प्रवृत्ते श्रौ-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तान्तरस्याप्यभ्यनुज्ञा । तथा च बोधायनः— 'अथ सायं हुतेऽग्निहोत्रे उत्तरेण गार्हपत्यं तृणानि संस्तीर्य' इति, 'अथ प्रातर्हुतेऽग्निहोत्रे हस्तौ संमृशेत' इति च । आपस्तम्बोऽपि— 'प्रणीते चेदग्निहोत्रे काल एतस्मिन्नेवाग्निहोत्रं जुहुयादेवमन्यत्र विप्रक्रान्ते तन्त्रे' इति । तस्माद्विरुद्धबहिरवस्थानांशमपहाय अवशिष्टं संध्यावन्दनरूपमग्निहोत्रहोमे प्रक्रान्तेऽपि कर्तुं शक्यमिति यदुक्तं तद्युक्तमेव । तत्रायं क्रमः— ब्राह्मे मुहूर्ते उत्थायेष्टदेवतां ध्यात्वा कृतशौचः नद्यादौ स्नातः, अर्घ्यं प्रदायादित्यमाभिध्याय तत्रैव दशावरं कृतगायत्रीजपः गृहमभ्येत्य विहृत्याग्नीन्व्रतचारी यजमानायतन उपविश्य गायत्रीजपं ध्यानं वा कृत्वा उदित आदित्ये उपस्थायाग्निहोत्रं जुहुयादित्युदितहोमिनः । अनुदितहोमिनस्तु स्नानार्घ्यप्रदानाभिसंधानगायत्रीजपप्रणयनाग्निहोत्रहोमव्रताचरणगायत्रीजपोपस्थानानीति क्रमः । तत्र प्रमाणानि स्नानस्य सर्वकर्माधिकारसंपादकत्वात्संध्यायाः पूर्वमुषःकाले कर्तव्यत्वमाह जाबालिः— 'सततं प्रातरुत्थाय दन्तधावनपूर्वकम् । आचरेदु-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वासि स्नानं तर्पयेद्देवमानुषान्' इति । स्नानानन्तरं प्रातःसंध्योपासनकालमाह दक्षः— 'रात्र्यन्तयामनाडी द्वे संध्यादिः काल उच्यते । दर्शनाद्रविरेखायास्तदन्तो मुनिभिः स्मृतः' इति । स्नानदेशे अर्घ्यप्रदानानन्तरं यथाशक्ति जपकरणमाह गौतमः— 'यस्मिन्देशे कृतं स्नानं तत्र संध्यां समाचरेत् । यत्र देशे कृता संध्या तत्रैव जपमाचरेत् । संध्याप्रदेशे तत्रैव यथाशक्ति जपेद्द्विजः' इति । तदनन्तरं व्युष्टायां प्रणयनमाहाश्वलायनः— 'एवं प्रातर्व्युष्टायाम्' इति । तदनन्तरमग्न्यगारे गायत्रीजपमाह याज्ञवल्क्यः— 'अग्न्यगारे जलान्ते वा जपेद्देवालयेऽपि वा । पुण्यतीर्थे गवां गोष्ठे द्विजक्षेत्रेऽथवा गृहे' इति । जपसंख्यामाह योगयाज्ञवल्क्यः— 'ब्रह्मचार्याहिताग्निश्च शतमष्टोत्तरं जपेत् । वानप्रस्थो यतिश्चैव सहस्रादधिकं जपेत्' इति । उदयानन्तरमुपस्थानं कर्तव्यम् । तत्र पराशरः— 'ततः सूर्यमुपस्थाय सम्यगाचम्य च द्विजः' इति । संध्यावन्दनाग्निहोत्रब्रह्मयोस्तच्छेषे पौर्वापर्यमाह बोधायनः— 'कथमु खलु नित्या-

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

नामनुक्रमः' इति संध्योपासनमग्न्युपासनं नित्यस्वाध्याय-
गृहकर्मस्नानादित्योपस्थानतर्पणजपयज्ञगृहदेवार्चनवैश्वदे-
वपञ्चमहायज्ञात्मयज्ञसंध्योपासनाग्निहोत्रात्मयज्ञसंवेशना-
नीत्येतान्युदितहोमिनोऽजस्राग्निहोत्रिणोऽनुदितहोमिनो-
ऽग्निहोत्रं संध्योपासनमिति क्रम एतानि नित्यान्यु-
पव्युषमारभ्या संवेशनात्सिद्धम्' इति । दक्षोऽपि—
'संध्याकर्मावसाने तु स्वयं होमो विधीयते' इति । यदि
तीर्थस्य दूरतया बहिः संध्यावन्दनकरणे अग्निहोत्रप्रण-
यनादिकालातिक्रमो भवेत्तदा गृह एव संध्यावन्दनद्वयं
कर्तव्यम् । तथा च अत्रिः— 'संध्यात्रयं तु कर्तव्यं
द्विजेनात्मविदा सदा । उभे संध्ये तु कर्तव्ये ब्राह्मणैश्च
गृहेष्वपि' इति । अयं क्रमः अनाहिताग्नेर्गृहस्थस्यापि
तुल्यः । आश्वलायनाचार्यैः 'तस्याग्निहोत्रेण प्रादुष्क-
रणहोमकालौ व्याख्यातौ होम्यं च मांसवर्जम्' इति ।
औपासने अग्निहोत्रद्रव्यकालातिदेशात् । खादिरगृह्येऽपि
'प्रागस्तमयोदयाभ्यां प्रादुष्कृत्यास्तमिते होम उदिते चा-
नुदिते वा' इति अग्निहोत्रकालस्यैव औपासनकालत्वेन

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधानात् । स्मृत्यर्थसारेऽपि– 'य आहिताग्नेर्धर्मः स्यात्स औपासनिकस्य तु' इति अग्निहोत्रिधर्मस्यातिदेशात् । एवं च संध्ययोश्च बहिर्ग्रामादित्यादि सूत्रं स्नातकनिरग्निकवानप्रस्थकुटीचकप्रवासिविच्छिन्नोत्सृष्टाग्नियायावरविधुरादिविषयं द्रष्टव्यमिति । एवं कृतपौर्वाह्णिकक्रियो दाशरथिः

तुष्टाव प्रणतश्चैव शिरसा मधुसूदनम् ।
विमलक्षौमसंवीतो वासयामास च द्विजान् ॥

तेषां पुण्याहघोषोऽभूद्गम्भीरमधुरस्वरः ।
अयोध्यां पूरयामास तूर्यघोषानुनादितः ॥

अनेनाचारप्राप्तकर्माङ्गस्वस्तिपुण्याहवाचनं कृतमिति सूचितम । ततश्च रामाभिषेकमाकर्ण्य हर्षभरमेदुरैः पौरैरलंकृतेषु रथ्याचत्वरराजमार्गेषु पौरजानपदाः

कथयन्तो मिथस्तत्र प्रशशंसुर्नराधिपम् ॥

अहो महात्मा राजायमिक्ष्वाकुकुलवर्धनः ।
ज्ञात्वा यो वृद्धमात्मानं रामं राज्येऽभिषेक्ष्यति ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

सर्वे ह्यनुगृहीताः स्मो यन्नो रामो महीपतिः ।
चिराय भविता गोप्ता दृष्टलोकपरावरः ।

अनुद्धतमना विद्वान्धर्मात्मा मातृवत्सलः ॥
यथा च भ्रातृषु स्निग्धस्तथास्मास्वपि राघवः ।

चिरं जीवतु धर्मात्मा राजा दशरथोऽनघः ॥
यत्प्रसादेनाभिषिक्तं रामं द्रक्ष्यामहे वयम् ॥

इति । सप्तमे—ततश्च यदृच्छया सुधाधवलमत्युन्नतं प्रासादमारुह्य रथ्याचत्वरराजमार्गालंकरणसमुत्सुकपौरजनावलोकनेन संजातविस्मयया मन्थरया किमिदमतिमात्रहर्षकारणमकाण्डे इति पृष्टा धात्री: 'श्वः पुष्येण दशरथो राघवं यौवराज्येऽभिषेक्ष्यति तन्निमित्तश्चायं पौरजनप्रमोदः' इत्यवादीत् । ततो मन्थरा सरभसं भवने शयानां कैकेयीमभ्येत्य

उत्तिष्ठ मूढे किं शेषे भयं त्वामभिवर्तते ।
उपप्लुतमघौघेन किमात्मानं न बुध्यसे ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अक्षय्यं सुमहद्देवि प्रवृत्तं त्वद्विनाशनम् ।
रामं दशरथो राजा यौवराज्येऽभिषेक्ष्यति ॥

धर्मवादी शठो भर्ता श्लक्ष्णवादी च राघवः ।
शुद्धभावे न जानीषे तेनैवमतिसंधिता ।

शत्रुः प्रतिप्रवादेन मात्रेव हितकाम्यया ॥
आशीविष इवाङ्केन बाले परिधृतस्त्वया ।

यथा हि कुर्यात्सर्पो वा शत्रुर्वा प्रत्युपेक्षितः ॥
राज्ञा दशरथेनाद्य सपुत्रा त्वं तथा कृता ।

सा प्राप्तकालं कैकेयि क्षिप्रं कुरु हितं तव ।
त्रायस्व पुत्रमात्मानं मां च विस्मयदर्शने ॥

इत्यवादीत् । एवं पापदर्शिन्या कुब्जया सामर्षमभिहिताप्यकलुषितहृदया कैकेयी रामाभिषेकश्रवणसंजातहर्षप्रकर्षा तस्यै स्वहस्ताभरणं प्रदाय

न मे परं किंचिदितस्त्वया पुनः
प्रियं प्रियार्हे सुवचं वचोवरम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तथा ह्यवोचस्त्वमतः प्रियोत्तमं
परं वरं ते प्रददामि तं वृणु ॥

इत्यवादीत् । अष्टमे– ततः स्वकृतपारितोषिकप्रदानमसंमतं मन्वानां समुदश्चितकोपमुत्सृष्टाभरणां वाक्शरैः पुनः पुनर्मर्माणि विदारयन्तीं मन्थरां पुनरप्यवलोक्य रामगुणाकृष्टहृदया कैकेयी तमेव भूयो भूयः प्रशशंस—

धर्मज्ञो गुरुभिर्दान्तः कृतज्ञः सत्यवाक्शुचिः ।
रामो राज्ञः सुतो ज्येष्ठो यौवराज्यमतोऽर्हति ॥

भ्रातॄन्भृत्यांश्च दीर्घायुः पितृवत्पालयिष्यति ।
संतप्यसे कथं कुब्जे श्रुत्वा रामाभिषेचनम् ॥

भरतश्चापि रामस्य ध्रुवं वर्षशतात्परम् ।
पितृपैतामहं राज्यमवाप्य पुरुषर्षभः ॥

यथा मे भरतो मान्यस्तथा भूयोऽपि राघवः ।
कौसल्यातोऽतिरिक्तं च स तु शुश्रूषते हि माम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

राज्यं यदि हि रामस्य भरतस्यापि तत्तथा ।
मन्यते हि यथात्मानं तथा भ्रातॄंश्च राघवः ॥

इति । ततश्च मन्थरा सरलतरं कैकेयीवचनमाकर्ण्य

भविता राघवो राजा राघवस्य तु यः सुतः ।
राजवंशात्तु भरतः कैकेयि परिहास्यते ॥

न हि राजसुताः सर्वे राज्ये तिष्ठन्ति भामिनि ।
स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत् ॥

तस्माज्ज्येष्ठे हि कैकेयि राज्यतन्त्राणि पार्थिवाः ।
स्थापयन्त्यनवद्याङ्गि गुणवत्स्वितरेष्वपि ॥

यदा हि रामः पृथिवीमवाप्स्यति
ध्रुवं प्रणष्टो भरतो भविष्यति ।
अतो हि संचिन्तय राज्यमात्मजे
परस्य चाद्यैव विवासकारणम् ॥

इत्येवमादिभिर्वचनैः पुनरपि कैकेयीमनः क्षोभया-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मास इति। नवमे— ततः तत्क्षणप्रसरदक्षिकषायभाव-विशदीकृतकोपया कैकेय्या भरताभिषेकरामवनवासयोः कमुपायं पश्यसीति पृष्टा मन्थरा समभाषत 'पुरा खलु देवदानवसंग्रामे देवराजसाहाय्यमाचरन्दशरथः तिमिध्वजासुरेण सह कृते शस्त्राशस्त्रिसंप्रहारे संजातमूर्च्छापनोदकेन त्वत्कृतोपचारेण संतुष्टः सन्वरद्वयं प्रादात्।

तौ वरौ याच भर्तारं भरतस्याभिषेचनम्।
प्रव्राजनं च रामस्य वर्षाणि नव पञ्च च॥

चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम्।
रूढश्च कृतमूलश्च शेषं स्थास्यति ते सुतः॥

एवं प्रव्राजितश्चैव रामोऽरामो भविष्यति।
भरतश्च हतामित्रस्तव राजा भविष्यति।

येन कालेन रामश्च वनात्प्रत्यागमिष्यति।
तेन कालेन पुत्रस्ते कृतमूलो भविष्यति॥

अत्र चिरेण संजातप्रकृतिस्नेहस्य राज्ञो भरतस्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्थिरराज्यत्वकथनात्प्रकृतिष्वरूढमूलो राजा अचिरेण उच्छेत्तुं सुकर इति सूचितम् । तथा च संभवपर्वणि धृतराष्ट्रं प्रति दुर्योधनवचनम्— 'एतत्कृत्यतमं राजन्नस्माकं भरतर्षभ । अयं हि शकुनिर्वेद स विद्यामक्षसंपदम् ॥ दृढमूला वयं राज्ये मित्राणि परिगृह्य च । सारवद्विपुलं सैन्यं सत्कृत्य च दुरासदम् ॥ ते च त्रयोदशे वर्षे पारयिष्यन्ति तद्व्रतम् । जेष्यामस्तान्वयं राजन्रोचतां ते परंतप' इति । कालिदासोऽपि 'अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् । न च संरोहणशिथिलस्तरुरिव सुकरः समुद्धर्तुम्' इति ।

तथातिविद्धा महिषीति कुब्जया
समाहता वागिषुभिर्मुहुर्मुहुः ।
निधाय हस्तौ हृदयेऽतिविस्मिता
शशास कुब्जां कुपिता पुनः पुनः ॥

अहं हि नैवास्तरणानि न स्रजो
न चन्दनं नाञ्जनपानभोजनम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

न किंचिदिच्छामि न चेह जीवितं
न चेदितो गच्छति राघवो वनम् ॥

इत्यभिधाय कनकमयान्यभरणानि दिव्यानि च वासांसि सुरभीणि च माल्यान्यपनीय मलिनवासाः क्रोधागारं विवेश । अत्र अशनवसनादिना दशरथकृतपरिपालनमनालोच्य पतिदूषणपूर्वकमकारणादेव रामाभिषेकमसहमानया मन्थरयाधर्मोपचितैस्तैस्तैर्हेतुवादैः कैकेयीचित्तकालुष्यकरणात् मन्थरातिदुष्टा इति । तत्सहवासेन चोत्तमकुलोत्पन्नाया अपि कैकेय्या अमार्गप्रवृत्त्या अनर्थाधायको दुष्टसहवासः सर्वथा परित्याज्य इत्यप्युक्तं भवति । तथा च भारते वनपर्वणि— 'एकशीलश्च मित्रत्वं भजते पापकर्मणः । स तेन दुःखमाप्नोति परत्र च विपद्यते' । आदिपर्वणि— 'अन्याय्यमवदन्साधुर्यथा हि परितप्यते । तदा परिवदन्न्याय्यं तुष्टो भवति दुर्जनः ॥ अभिवाद्य यथा वृद्धान्सन्तो गच्छन्ति निर्वृतिम् । एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः ॥ सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः । यत्र वाच्यां परैः सन्तः



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परानाहुस्तथाविधान् ॥ अतो हास्यतरं लोके किंचिदन्यन्न विद्यते । यत्र दुर्जन इत्याह दुर्जनः सज्जनं स्वयम्' इति । कामन्दकेऽपि— 'दीयते स्वस्थहृदयैः पिण्डो येनैव पाणिना । मार्जार इव दुर्वृत्तस्तमेव हि विलुम्पति । असाध्यं साधुमन्त्राणां तीव्रं वाग्विषमुद्वमन् । द्विजिह्वं वदनं धत्ते दुष्टो दुर्जनपन्नगः' इति । प्राचीना अपि 'विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः । यदयं न-कुलद्वेषी स कुलद्वेषी पुनः पिशुनः' इति । तथा दुष्टसंगमपरित्यागे आदिपर्वणि— 'सत्यधर्मच्युतात्पुंसः क्रुद्धयदाशीविषादिव । अनास्तिकोऽप्युद्विजते जनः किं पुनरास्तिकः ॥ तस्माद्दुर्जनसंसर्गः परित्याज्यो मनीषिभिः' इति । वनपर्वण्यपि युधिष्ठिरं प्रति पौरववचनम्— 'वस्त्रमापस्तिलान्भूमिं गन्धो वासयते यथा । पुष्पाणामधिवासेन तथा संसर्गजा गुणाः ॥ मोहजालस्य योनिर्हि मूढैरेव समागमः । असतां दर्शनात्स्पर्शात्संजल्पाच्च प्रहासनात् ॥ धर्माचाराः प्रहीयन्ते सिध्यन्ति न च मानवाः । बुद्धिश्च हीयते पुसां नीचैः सह समागमात् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शुष्केणार्द्रं दह्यते मिश्रभावात्तस्मात्पापैः सह सन्धिं न कुर्यात्' इति । कामन्दकेऽपि 'तिलाश्चम्पकसंश्लेषात्प्राप्नुवन्त्यधिवासताम् । रसो न भक्षास्तद्वन्यं सर्वे साङ्क्रामिका गुणाः ॥ अपां प्रवाहो गाङ्गोऽपि समुद्रं प्राप्य तद्रसः । भवत्यपेयस्तद्विद्वान्न श्रियेदशुभात्मकम् ॥ ग्रीष्मसूर्यांशुसंतप्तमुद्वेजनमनाश्रयम् । मरुस्थलमिवोदग्रं त्यजेद्दुर्जनसंगतम् ॥ सतः शीलोपसंपन्नानकस्मादेव दुर्जनः । अन्तः प्रविश्य दहति शुष्कान्वृक्षानिवानलः ॥ विश्वासोद्गीर्णहुतभुग्धूमधूम्रीकृताननैः । वरमाशीविषैः सङ्गं कुर्यान्न त्वेव दुर्जनैः' इति ॥

दशमैकादशयोः— ततः अस्तंगते सवितरि संजातकामो दशरथो रत्यर्थं कैकेयीभवनमागत्य तत्र तामपश्यन् केदानीं मत्प्रियेति पृष्ट्या प्रतिहार्या निवेदितदेवीक्रोधागारप्रवेशस्तद्भवनमागत्य

**स वृद्धस्तरुणीं भार्यां प्राणेभ्योऽपि गरीयसीम् ।**
**अपापः पापसंकल्पां ददर्श धरणितले ॥**

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ततस्तद्दर्शनसमुज्जृम्भितसंभ्रमः करेण तां परिमृश्य ससान्त्वमेवमवादीत्— देवि नाहमपराधमात्मकृतं कंचित्पश्यामि, केन वा विमानितासि कस्य वाप्रियं कार्यम्,

करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे ॥

इति सरलहृदयेन दशरथेन सादरमुदीरितं वचनमाकर्ण्य कुटिलहृदया कैकेयी तद्वचनं द्रढीकर्तुकामा 'प्रतिज्ञां प्रतिजानीष्व' इति व्याजहार ।

तमुवाच महाराजः कैकेयीमीषदुत्स्मितः ।
अवलिप्ते न जानीषे त्वत्तः प्रियतमो मम ॥

मनुजौ मनुजव्याघ्राद्रामादन्यो न विद्यते ।
तेनाजय्येन मुख्येन राघवेण महात्मना ॥

शपे ते जीवनार्हेण ब्रूहि यन्मनसेच्छसि ।
यं मुहूर्तमपश्यंस्तु न जीवेयमहं ध्रुवम् ॥

तेन रामेण कैकेयि शपे ते वचनक्रियाम् ।
आत्मना वात्मजैश्चान्यैर्वृणे यं मनुजर्षभम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तेन रामेण कैकेयि शपे ते वचनक्रियाम्।
बलमात्मनि जानन्ती न मां शङ्कितुमर्हसि॥
करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे।

इति। ततो दशरथकृतशपथसान्त्वनशतैरप्यसंभृतविस्रम्भा कैकेयी ससंभ्रममुत्थाय

यथाक्रमेण शपसि वरं मम ददासि च।
तच्छृण्वन्तु त्रयस्त्रिंशद्देवाः साग्निपुरोगमाः॥

इति सर्वानपि देवान्साक्षीकृत्य काममोहितं राजानमेवमवोचत्।

वरौ यौ मे त्वया दत्तौ तदा देव महीपते।
तौ तावदहमद्यैव वक्ष्यामि शृणु मे वचः॥

योऽभिषेकसमारम्भो राघवस्योपकल्पितः।
अनेनैवाभिषेकेण भरतो मेऽभिषिच्यताम्॥

यो द्वितीयो वरो देव दत्तः प्रीतेन मे त्वया।
तदा दैवासुरे युद्धे तस्य कालोऽयमागतः॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः ।
चीराजिनजटाधारी रामो भवतु तापसः ॥

इति । अत्र निकामकामासक्तदशरथेन शपथं कारयित्वा सर्वदेवतासाक्षीकरणपूर्वकवरद्वयं प्रार्थितवतीति कथनात् स्त्रियोऽत्यन्तकामासक्तान्पुरुषान्वशमानीय सङ्कटे पातयन्ति । अतः तासु अतिस्नेहद्वेषविश्रम्भादिकं न कर्तव्यमिति सूचितम् । तथा च मनुः— 'अविद्वांसमलं लोके विद्वांसमपि वा पुनः । प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम्' इति । कामन्दकेऽपि– 'निकामासक्तमनसां कान्तामुखविलोकने । गलन्ति गलदश्रूणां यौवनेन सह श्रियः । नामापि स्त्रीति संह्लादि विकरोत्येव मानसम् । किं पुनर्दर्शनं तस्या विलासोल्लासितभ्रुवः । रहःप्रचारकुशला मृदुगद्गदभाषिणी ॥ कं नु नारी न कुरुते रक्तं रक्तान्तलोचना । मुनेरपि मनोऽवश्यं सरागं कुरुतेऽङ्गना ॥ प्रसन्नकान्तिजननं संध्येव शशिमण्डलम् । मनः प्रह्लादयन्तीभिर्मन्दं यान्तीभिरप्यलम् ॥ महान्तोऽपि हि भिद्यन्ते स्त्रीभिरद्भिरिवाचलाः' इति । प्रा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

चीना अपि— 'स्मितेन रागेण च लज्जया भिया पराङ्मुखैरर्धकटाक्षवीक्षणैः । वचोभिरीर्ष्याकलहेन लीलया समस्तभावैः खलु बन्धनं स्त्रियः ॥ सन्तु विलोकनभाषणविलासपरिहासकेलिपरिरम्भाः । स्मरणमपि कामिनीनामलमिह मनसो विकाराय' इति । आनुशासने विपुलोपाख्यानेऽपि— 'नासां स्नेहो नरैः कार्यस्तथैवेर्ष्या जनेश्वर । खेदमास्थाय भुञ्जीत धर्ममास्थाय चैव ह ॥ निहन्यादन्यथा कुर्वन्नरः कौरवनन्दन' इति । कामन्दकेऽपि— 'अत्यन्तवल्लभोऽस्मीति विस्रम्भं स्त्रीषु न व्रजेत् । देवी तु काशिराजानं निजघान रहोगतम् ॥ विषाक्तेन च सौवीरं मेखलामणिना नृपम् । नूपुरेण च वैरासं जाल्माषं दर्पणेन च ॥ वेण्यां शस्त्रं समाधाय तथा चापि विदूरथम्' इति ॥

द्वादशे— ततः स राजा व्याघ्रीदर्शनसंत्रस्तो मृग इव क्षुभितान्तःकरणः कैकेयीमेवमवोचत्—

**नृशंसे दुष्टचारित्रे कुलस्यास्य विनाशिनि ।**
**किं कृतं तव रामेण पापे पापं मयापि वा ॥**

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सदा ते जननीतुल्यां वृत्तिं वहति राघवः।
तस्यैव त्वमनर्थाय किं निमित्तमिहोद्यता॥

कौसल्यां वा सुमित्रां वा त्यजेऽहमपि वा श्रियम्।
जीवितं वत्स नो रामं न त्वेव पितृवत्सलम्॥

तिष्ठेल्लोको विना सूर्यं सस्यं वा सलिलं विना।
न तु रामं विना देहे तिष्ठेत्तु मम जीवितम्॥

न हि किंचिदयुक्तं वा विप्रियं वा पुरा मम।
अकरोस्त्वं विशालाक्षि तेन न श्रद्दधाम्यहम्।

अनृतैर्बत मां सान्त्वैः सान्त्वयन्ती स्म भाषसे॥
गीतशब्देन संरुध्य लुब्धो मृगमिवावधीः।

अत्र— कैकेयी स्वपुत्रस्य राज्यप्राप्तिरूपवरलाभावधि पत्युर्विप्रियं कृतवतीति कथनात्स्त्रियः स्वभावतः अतिक्रूराः तासां पत्यौ स्नेहः स्वप्रयोजनायैव, न तु स्वारसिक इति सूचितम्। तथा च शाकलसंहितायां पूरूरवसा प्रार्थ्यमाना ऊर्वशी तमाह— 'न वै स्त्रै-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

णानि सख्यानि सन्ति सालावृकाणां हृदयान्येताः' इति ।
बृहदारण्यके मैत्रेयीब्राह्मणेऽपि 'न वा अरे पत्युः कामाय
पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो
भवति' इति । अस्य भाष्यम्— नवाशब्दः प्रसिद्धस्म-
रणार्थः प्रसिद्धमेतल्लोके पत्युर्भर्तुः कामाय प्रयोजनायैव
भार्यायाः पतिः प्रियो भवति' इति । भाष्यदीपिकाया-
मपि 'मैत्रेयि जाया न हिता न पत्यौ मुदं विधत्ते पति-
कामसिद्ध्यै । किं त्वात्ममोदाय मुधा हिताभिर्लीलाभि-
रानन्दयति स्म कान्तम् ॥ तावत्प्रियः स्यात्पतिरङ्गनानां
सिध्यन्ति यावन्निखिलाः स्वकामाः । पूर्णेषु पूर्णेषु च तेषु
योषा विगर्हयन्त्येनमथ द्विषन्ति ॥ यः प्रीणयेदन्वहमा-
त्मजायां विलेपनालंकरणादिदानैः । न लग्नमस्या हृदयं
यदि स्यादयं तृणायापि तया न गण्यः' इति । आनुशा-
सनिके विपुलोपाख्यानेऽपि 'असाध्याश्चापि दुर्वृत्ताः कुल-
घ्न्यः पापनिश्चयाः । विज्ञेया लक्षणैर्दुष्टैः स्वगात्रसहजै-
र्नृप ॥ एता हि मनुजव्याघ्रतीक्ष्णास्तीक्ष्णपराक्रमाः ।
एताः कृत्याः स्वकार्याश्च कृताश्च भरतर्षभ' इति ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रोचयस्यभिरामस्य रामस्य प्रियदर्शने ।
तव शुश्रूषमाणस्य किमर्थं विप्रवासनम् ॥

शुश्रूषां गौरवं चैव प्रणामं वचनक्रियाम् ।
कस्ते भूयस्तरां कुर्यादन्यत्र मनुजर्षभात् ॥

बहूनां स्त्रीसहस्राणां बहूनां चोपजीविनाम् ।
परिवादोऽपवादो वा राघवे नोपपद्यते ॥

सत्येन लोकाञ्जयति दीनान्दानेन राघवः ।
गुरूञ्शुश्रूषया वीरो धनुषा युधि शात्रवान् ॥

सत्यं दानं तपस्त्यागो मित्रता शौचमार्जवम् ।
विद्या च गुरुशुश्रूषा ध्रुवाण्येतानि राघवे ॥

क्षमा यस्मिन्दमस्त्यागः सत्यं धर्मः कृतज्ञता ।
अविहिंसा च भूतानां तमृते का गतिर्मम ॥

तदलं त्यज्यतामेष निश्चयः पापनिश्चये ।
अपि ते चरणौ मूर्ध्ना स्पृशाम्येष प्रसीद मे ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मम वृद्धस्य दीनस्य गतान्तस्य तपस्विनः ।
दीनं लालप्यमानस्य कारुण्यं कर्तुमर्हसि ॥

अञ्जलिं कुर्मि कैकेयि पादौ चापि स्पृशामि ते ।
शरणं भव रामस्य माधर्मो मामिह स्पृशेत् ॥

इति दुःखाभिसंतप्तं विलपन्तमचेतनम् ।
घूर्णमानं महाराजं शोकेनाभिपरिप्लुतम् ॥

परं शोकार्णवस्याशु प्रार्थयन्तं पुनः पुनः ।
प्रत्युवाचाथ कैकेयी रौद्रा रौद्रतरं वचः ॥

यदि दत्त्वा वरौ राजन्पुनः प्रत्यनुतप्यसे ।
धार्मिकत्वं कथं वीर पृथिव्यां कथयिष्यसि ॥

यदा समेता बहवस्त्वया राजर्षयः सह ।
कथयिष्यन्ति धर्मज्ञास्तत्र किं प्रतिवक्ष्यसि ॥

किल्बिषत्वं नरेन्द्राणां करिष्यसि नराधिप ।
यो दत्त्वा वरमद्यैव पुनरन्यानि भाषसे ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सत्यं धर्मं परित्यज्य रामं राज्येऽभिषिच्य च ।
सह कौसल्यया नित्यं रन्तुमिच्छसि दुर्मते ॥

भवत्वधर्मो धर्मो वा सत्यं वा यदि वानृतम् ।
यत्त्वया संश्रुतं मह्यं तस्य नास्ति व्यतिक्रमः ॥

स्वप्राणविप्रयोगनिदानभूतरामविप्रवासनाद्विरमेति दशरथेनासकृत्सकरुणमभियाचितापि परुषतराणि वचनानि श्रावयन्ती कैकेयी भर्तृप्राणत्यागमविगणय्य भरतस्य राज्याभिषेकः रामस्य च प्रव्राजनमिति वरद्वयं प्रार्थितवती इति कथनात् स्त्रीणां भर्त्रपेक्षया पुत्रेषु स्नेहातिशयः सूचितः । तथा चादिपर्वणि स्त्रियं जरितां प्रति मन्दपालवचनम्— 'न हि भार्येति विश्वासः कार्यः पुंसा कथंचन । न हि कार्यमनुध्याति नारी पुत्रवती सती' । तथा पुत्रोपरोधजनितकोपा देवी रहोगतं भर्तारं विलोभ्य एकभाजनस्थानविषयान् लाजान्स्वयं भक्षयन्ती विषमिश्रैर्लाजान्भोजयित्वा जघानेत्याह कामन्दकः— 'लाजान्विषेण संयोज्य मधुनेति विलोभ्य तम् । देवी तु

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काशिराजेन्द्रं निजघान रहोगतम्' इति ।

अहं हि विषमद्यैव पीत्वा बहु तवाग्रतः ।
पश्यतस्ते मरिष्यामि रामो यद्यभिषिच्यते ॥

एकाहमपि पश्येयं यद्यहं राममातरम् ।
अञ्जलिं प्रतिगृह्णन्तीं श्रेयो ननु मृतिर्मम ॥

भरतेनात्मना चाहं शपेऽयं मनुजाधिप ॥
यथा नान्येन तुष्येयमृते रामविवासनात् ।

स्थाप्य राज्ये मम सुतं कृत्वा रामं वनेचरम् ॥
निःसपत्नां च मां कृत्वा कृतकृत्यो भविष्यसि ॥

एकाहमपि पौरजनाञ्जलीन्प्रतिगृह्णन्त्याः कौसल्याया दर्शनात्प्राणत्यागो वरमिति रामप्रव्राजनपूर्वकं भरतराज्याभिषेकेण निःसपत्नां मां कुर्विति कैकेयीवचसा स्त्रीणां सपत्नीवृद्धिरतिदुःसहेति सूचितम् । तथा च भारते आदिपर्वणि पाण्डुना माद्र्या पुत्रार्थं पुनः प्रचोदिता कुन्ती तमाह— 'उत्कासकृद्द्वन्द्वमेषा लभे तेनास्मि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वञ्चिता । बिभेम्यस्या ह्यभिभवात्कुस्त्रीणां गतिरीदृशी ॥ नाज्ञासिषमहं मूढा द्वन्द्वाह्वाने फलद्वयम् । तस्मान्नाहं तु वक्तव्या त्वयैषोऽस्तु वरो मम' इति । आदिपर्वणि तत्रैव सुभद्राविवाहानन्तरमर्जुनं प्रति द्रौपदीवाक्यम्— 'तत्रैव गच्छ कौन्तेय यत्र सा सात्वतात्मजा । सुबद्धस्यापि भारस्य पूर्वबन्धः श्लथायते' इति । तत्रैव खाण्डवदाहे जरितां द्वितीयभार्यां प्रति मन्दपालः— 'न स्त्रीणां विद्यते किंचिदमुत्र पुरुषान्तरात् । सापत्नकमृते लोके नान्यदर्थविनाशनम् ॥ वैराग्निदीपनं चैव भृशमुद्वेगकारि च । सुव्रता चापि कल्याणि सर्वभूतेषु विश्रुता ॥ अरुन्धती महात्मानं वसिष्ठं पर्यशङ्कत । विशुद्धभावमत्यन्तं सदा प्रियहिते रतम् ॥ सप्तर्षिमध्यगं वीरमवमेने च तं मुनिम् । अपध्यानेन सा तेन धूमारुणसमप्रभा । लक्ष्मलक्ष्या नाभिरूपा निमित्तमिह पश्यती ॥ अपत्यहेतोः संप्राप्तं तथा त्वमपि मामिह । इष्टमेवं गते हि त्वं सा तथैवाद्य वर्तते' इति । पाण्डुं प्रति माद्रीवचनम् 'गान्धार्यां चैव नृपते जातं पुत्र-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शतं तथा । श्रुत्वा न मे तथा दुःखमभवत्कुरुनन्दन ॥
इदं तु मे महद्दुःखं तुल्यतायामपुत्रता' इति ॥

भूतोपहतचित्तेव ब्रुवन्ती मां न लज्जसे ।
शीलव्यसनमेतत्ते नाभिजानाम्यहं पुरः ॥

बालायास्तत्त्विदानीं ते लक्षये विपरीतवत् ।
नृशंसे पापसंकल्पे क्षुद्रे दुष्कृतकारिणि ॥

यदा यदा हि कौसल्या दासीवच्च सखीव च ।
भार्यावद्भगिनीवच्च मातृवच्चोपतिष्ठते ॥

सततं प्रियकामा मे प्रियपुत्रा प्रियंवदा ।
न मया सत्कृता देवी सत्काराहा कृते तव ।

अत्र कौसल्याकृतशुश्रूषासंतुष्टेन दशरथेन दासीवत्सखीवद्भार्यावद्भगिनीवन्मातृवच्चोपतिष्ठत इति परोक्षे गुणकथनात्स्त्रीणामेवमादिभिः पतिसंतोषणं परमो धर्म इति ।

न मया सत्कृता देवी सत्काराहा कृते तव ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति वचनेन सपत्नीप्रीत्यर्थं भर्त्रा कृतमसत्कारमविगणय्य भर्तृशुश्रूषणमेव कृतवत्याः कौसल्यायाः सत्कारा-करणस्य दोषत्वावगमात्पतिव्रतानां सत्कारपूर्वकं भरणं भर्तुर्धर्म इति सूचितम् । तथा च पतिव्रतानां धर्मजातं पूज्यत्वं च प्रतिपादितं धर्मशास्त्रेषु—तत्र पारिजाते आश्वलायनः— 'शूद्राणां द्विजशुश्रूषा विहिता ब्रह्मणा यथा । स्त्रीणां स्वभर्तृशुश्रूषा तथैव विहिता सदा ॥ अप्रियेष्वप्रिया भर्तुः सुप्रियेषु प्रिया सती । भवेत्स से समा नित्यं प्रत्यक्षे वा परोक्षके ॥ स्नेहं पुत्रेष्वपि त्यक्त्वा स्वदेहे चाङ्गना सती । भर्तृचित्तानुगा नित्यं भवेद्भर्तृहिते रता ॥ अशनादि च यत्पथ्यं भर्त्रा यच्च विवर्जितम् । स्वात्मनश्च तथा च स्याच्छयने चासने तथा ॥ न स्याज्जपतपोहोमदानव्रतमखादिकम् । स्त्रीणां पतिपराणां तु पत्या जीवति किंचन ॥ तदाज्ञया तु कर्तव्यमकार्यमपि नेच्छया । श्वश्रूश्वशुरयोश्चैतत्कार्यं भर्तृवदादरात् ॥ भर्ता यद्यप्यनुज्ञाता पित्रोस्तस्याङ्गना सती । शक्त्यां

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कुर्यात्परोक्षेऽपि हितान्यप्रिययोरपि ॥ जडं वा बधिरं पङ्गुं काणमन्धं कुणिं तथा । कुष्ठिनं च कृशं वाढ्यं प्रियं वाप्रियमेव च ॥ सुरूपं वा विरूपं वा युवानं वृद्धमेव च ॥ प्रत्यक्षदेववत्साध्वी भर्तारं पूजयेत्सदा ॥ कुणिर्हस्तरहितः । गृहार्चनपरा नित्यं सम्यङ्निर्निक्तभाजना । निर्मलालंकृता चैव शुश्रूषेत्पतिमीश्वरम् ॥ नेक्षेत दुष्टचित्तानां दुःस्त्रीणां पापचेतसाम् । तस्मात्संरक्ष्य चात्मानमनन्या स्यात्सदा सती ॥ परसक्ताः स्त्रियो याश्च वञ्चयित्वा स्वकं पतिम् । निन्द्याः स्युः सर्वलोकैस्ता निरये च मृताश्चिरम् ॥ बाल्ये पितृवशा नारी दत्ता भर्तृवशा भवेत् । वृद्धा पुत्रवशा नारी न स्त्री स्वातन्त्र्यमर्हति ॥ भर्तुरप्यबलिप्तस्य कार्याकार्यमजानतः । पत्न्याथ कार्या तस्याज्ञा पतिस्तस्याश्च सर्वदा' इति । विज्ञानेश्वरः—'स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः सनातनः । अशुद्धे संप्रतीक्ष्यो हि महापातकदूषितः ॥ संयतोऽमस्करा दक्षादुष्टा व्ययपराङ्मुखी । कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा ॥ पतिप्रियहिते युक्ता स्वाचारविजिते-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न्द्रिया । सेह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम्' इति । स्कान्दे— 'पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम । स्वप्नोऽन्यगेहवासश्च नारीणां दूषणानि षट्' इति । दक्षिणाभिमुखा या तु या विदिक्संमुखापि वा । केशान्संस्कुरुते नारी धननाशं सुविन्दति । शङ्खः—'अनुक्तान्नानुग्रहान्नानुगच्छेन्नानुगच्छेन्नानुत्तरीयाश्च त्वरितं व्रजेत न परपुरुषमभिभाषेतान्यत्र वणिक्प्रव्रजितवैद्यविद्येभ्यो न नाभिं दर्शयेदागुल्फाद्वासः परिदध्यान्न स्तनौ विवृतौ कुर्यान्न हसेदपावृतं भर्तारं तद्बन्धून्वा न द्विष्यात् न गणिकाधूर्त्ताभिसारिणी प्रव्रजिता प्रेक्षणिकानाययाकुहकारिकारिकादुःशीलाभिः सहैकत्र वसेत्संसर्गेण चारित्रं दुष्यति' इति । मनुः— 'भर्तारं लङ्घयेद्या तु जातु स्त्री गुणदर्पिता । तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते' इति । ब्रह्मपुराणे— 'परित्याज्या च या भार्या भर्तुर्वचनलङ्घिनी । तत्र दोषो न चास्तीति त्वं हि वेत्थ यथातथम ॥ सर्वलक्षणयुक्तापि या तु भर्तुर्व्यतिक्रमम् । करोति सा परित्याज्या एष धर्मः सनातनः' इति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

व्यासः– 'कुरूपो वा कुवृत्तो वा दुःखभावेऽपि वा पतिः ।
रोगान्वितः पिशाचो वा मद्यपः क्रोधनोऽपि वा ॥
वृद्धो वाथ विदग्धो वा मूको वा बधिरोऽपि वा ।
आढ्यो वाथ दरिद्रो वा कदर्यः कुत्सितोऽपि वा ॥
कातरः कितवो वापि ललनालम्पटोऽपि वा । सततं
देववत्पूज्यो मनोवाक्कायकर्मभिः ॥ लोभितोऽपि परेणार्थैः
सा सती लोकभूषणा । दैन्येन प्रार्थिता वापि बलेन
विधृतापि वा ॥ वस्त्राद्यैर्वासिता वापि नैवान्यं भजते
सती । वीक्षिता वीक्षते नान्यं हसिता न हसत्यपि ।
भाषिता भाषते नैव सा साध्वी साधुलक्षणा ॥ रूपयौवन-
युक्तापि गीतनृत्येऽपि कोविदा । स्वानुरूपं चापि दृष्ट्वा
न याति विकृतिं सती ॥ सुरूपं तरुणं रम्यं कामिनीनां
च वल्लभम् । या नेच्छति परं कामं विज्ञेया सा महास-
ती । भुक्ते भुङ्क्ते च या पत्यौ दुःखिते दुःखिता च या ।
मुदिते मुदितात्यर्थं प्रोषिते मलिनाम्बरा ॥ सुप्ते च स्वे-
च्छया शेते पूर्वमेव प्रबुध्यते । नान्यं कामयते चित्ते सा
विज्ञेया पतिव्रता ॥ भक्तिं श्वशुरयोः कुर्यात्पत्युश्चापि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विशेषतः । धर्मकार्येऽनुकूलत्वमधर्मकार्येऽपि संयमम् ॥ प्रागल्भ्यं कामकार्येषु शुचित्वं निजविग्रहे । मङ्गलं सततं पत्युः सततं प्रियभाषणम् । भाव्यं मङ्गलकारिण्या कृतमङ्गलशीलया ॥ गृहोपस्करसंस्काररतया प्रतिवासरम् । क्षेत्राद्वनाद्वा ग्रामाद्वा भर्तारं गृहमागतम् ॥ अभ्युत्थानाभिवादाभ्यामासनेनोदकेन वा । प्रसन्नभाण्डा मृष्टान्ना काले भोजनदायिनी । गुरूणां पुत्रमित्राणां बन्धूनां कर्मकारिणाम् ॥ आश्रितानां च भृत्यानां दासीदासजनस्य च । अतिथ्यभ्यागतानां च भिक्षुकाणां च लिङ्गिनाम् ॥ भोजनासनदानाद्यैर्वस्त्रैश्च प्रियभाषणैः । तत्तद्गुणानुसारेण प्राप्ते काले यथोचितम् ॥ दक्षया सर्वदा भाव्यं भार्यया गृहमुख्यया । दानार्थमपि यद्द्रव्यं लोकार्तिकचिच्च साधयेत ॥ भर्तुराज्ञां विना नैव स्वबन्धुभ्यो दिशेद्धनम् । यच्च भर्ता न पिबति यच्च भर्ता न खादति । यच्च भर्ता न चाश्नाति सर्वं तद्वर्जयेत्सती ॥ मार्जनं चैव दन्तानामलकानां प्रसाधनम् । तैलाभ्यङ्गं तथा स्नानं शरीरोद्वर्तनक्रियाम् ॥ भोजनं वसनं निद्रां परिधानं च

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

वाससाम् । आरम्भं मण्डनानां च न कुर्यात्पश्यति प्रिये ॥ हरिद्रां कज्जलं चैव सिन्दूरं कुङ्कुमं तथा । कूर्पासकं च ताम्बूलं माल्यमाभरणं शुभम् ॥ केशसंस्कारकबरीकरकर्णविभूषणम् । भर्तुरायुष्यमिच्छन्ती दूषयेन्न पतिव्रता ॥ आर्द्रपादा शयाना स्त्री पतिसङ्गं समाचरेत् । आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत् । कञ्चुकेन समं नारी भर्तुः सङ्गं समाचरेत् । त्रिभिर्वर्षैश्च मध्ये वा विधवा भवति ध्रुवम् ॥ तालपत्रगलत्कर्णा दयिता मैथुनं व्रजेत् । पञ्चमे सप्तमे वर्षे वैधव्यमिह जायते ॥ पादलग्नतनुश्चैव ह्युच्छिष्टं ताडनं तथा । कोपं क्रोधं च निर्भर्त्स्य संयोगेषु न दोषकृत् ॥ ऋतुस्नाता तु या नारी पतिं नैवोपविन्दति । शुनी वृकी शृगाली स्यात्सूकरी च पुनः पुनः ॥ कुङ्कुमं चाञ्जनं चैव तथा हारिद्रचन्दने । धौतवस्त्रं च ताम्बूलं संयोगं च शुभावहम् ॥ पादौ भर्तुर्नमस्कृत्य पश्चाच्छय्यां समाविशेत् । प्रीतिमाह्लादसंयुक्तं कृत्वा संयोगमाचरेत्' इति । स्कान्दे लोपामुद्राप्रशंसाव्याजेन बृहस्पतिः—'पतिव्रतेयं कल्याणी लोपामुद्रा सव-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

र्मिणी। तवाङ्गच्छायया तुल्या यत्कथा पुण्यकारिणी॥ पतिव्रतास्वरूपवत्या सावित्र्या ह्यनसूयया। शाण्डिल्यया च सत्या च लक्ष्म्या च शतरूपया। मेनया च सुनीत्या च संज्ञया स्वाहया तथा। यथैषा वर्ण्यते श्रेष्ठा न तथान्येति निश्चितम्॥ भुक्ते भुङ्क्ते त्वयि मुने तिष्ठति त्वयि तिष्ठति। विनिद्रिते च निद्राति प्रथमं प्रतिबुध्यति॥ अनलंकृतमात्मानं तव नो दर्शयेत्कचित्। कार्यार्थं प्रोषिते कापि सर्वमण्डनवर्जिता॥ न च ते नाम गृह्णाति तवायुष्याभिवृद्धये। पुरुषान्तरनामापि न गृह्णाति कदाचन॥ समाक्रुष्टापि नाक्रोशेत् ताडितापि प्रसीदति। इदं कुरु कृतं स्वामिन्मन्यतामिति वक्ति च॥ आहूता गृहकार्याणि त्यक्त्वागच्छति सादरा। किमर्थमाहूता नाथ सुप्रसादो विधीयताम्॥ न चिरं तिष्ठति द्वारि न द्वारमुपसेवते। अदापितं त्वया किंचित्कस्मैचिन्न ददात्यपि॥ पूजोपकरणं सर्वमनुक्ता साधयेत्स्वयम्। नियमोदकबर्हींषि यत्र पुष्पाक्षतादिकम्॥ प्रतीक्षमाणावसरं यथाकालोचितं हि तत्। तदुपस्थापयेत्सर्वमनुद्विग्नातिहृष्टवत्॥ सेवते भर्तुरुच्छिष्ट-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मन्नपानफलादिकम्। महाप्रसाद इत्युक्त्वा पतिदत्तं प्रतीच्छति॥ अविभज्य च नाश्नीयाद्देवपित्रतिथिष्वपि। परिचारकवर्गेषु गोषु भिक्षुकुलेषु च॥ संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी। कुर्यात्त्वयाननुज्ञाता नोपवासव्रतादिकम्॥ दूरतो वर्जयेदेषा समाजोत्सवदर्शनम्। नगच्छेत्तीर्थयात्रादिविवाहप्रेक्षणादिषु॥ सुखसुप्तं सुखासीनं रममाणं यथेच्छया। आन्तरेष्वपि कार्येषु पतिं नोत्थापयेत्क्वचित्॥ स्त्रीधर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्शयेत्। स्ववाक्यं श्रावयेन्नापि यावत्स्नाता न शुध्यति॥ सुस्नाता भर्तृवदनमीक्षतेऽन्यस्य नो क्वचित्। अथ वा मनसि ध्यात्वा पतिं भानुं विलोकयेत्॥ हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा। कूर्पासकं च ताम्बूलं मङ्गल्याभरणं शुभम्॥ केशसंस्कारकबरीकरकर्णविभूषणम्। भर्तुरायुष्यमिच्छन्ती दूषयेन्न पतिव्रता॥ न रजक्या न हेतुक्या तथा श्रमणया न च॥ न च दुर्भगया क्वापि सखित्वं कुरुते सती। भर्तृविद्वेषिणीं नारीं नैषा संभाषते क्वचित्। नैकाकिनी क्वचिद्भूयान्न नग्ना स्नाति

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वै क्वचित् । विना व्यवायसमयं प्रागल्भ्यं न क्वचिच्चरेत् ॥ यत्र यत्र रुचिर्भर्तुस्तत्र प्रेमवती सदा । इदमेव व्रतं स्त्रीणामयमेव वृषः परः ॥ इयमेका देवपूज्या भर्तुर्वाक्यं न लङ्घयेत् ॥ क्लीबं वा दुःखसंस्थं वा व्याधितं वृद्धमेव वा ॥ सुस्थितं दुःस्थितं वापि पतिमेकं न लङ्घयेत् । हृष्टा हृष्टे विषण्णा स्याद्विषण्णास्ये प्रिये सदा ॥ एकरूपा भवेत्पुण्या संपत्सु च विपत्सु च । सर्पिर्लवणतैलादिक्षयेऽपि च पतिव्रता ॥ पतिं नास्तीति नो ब्रूयादायासेषु न योजयेत् । तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत् ॥ शंकरादपि विष्णोर्वा पतिरेकोऽधिकः स्त्रियाः ॥ व्रतोपवासनियमं पतिमुल्लङ्घ्य याचरेत् । आयुष्यं हरते भर्तुर्मृता निरयमृच्छति ॥ उक्ता प्रत्युत्तरं दद्याद्या नारी क्रोधमूर्च्छिता । जायते सूकरी ग्रामे सृगाली निर्जने वने ॥ स्त्रीणां हि परमश्चैको नियमः समुदाहृतः । अभ्यर्च्य चरणौ भर्तुर्भोक्तव्यं कृतनिश्चयम् ॥ उच्चासनं न सेवेत न व्रजेत्परवेश्मनि । न त्रपाकरवाक्यानि वक्तव्यानि कदाचन । अपवादो न वक्तव्यः कलहं दूरतस्त्य-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जेत् । गुरूणां संनिधौ क्वापि नोच्चैर्ब्रूयान्न वा हसेत् ॥ या भर्तारं परित्यज्य रहश्चरति दुर्मतिः । उलूकी जायते क्रूरा वृक्षकोटरवासिनी ॥ ताडिता ताडितुं चेच्छेत्सा नारी वृकदंशिका । कटाक्षयति यान्यं वै केकराक्षी तु सा भवेत् ॥ या भर्तारं परित्यज्य मृष्टमश्नाति केवलम् । ग्रामे सा सूकरी भूयाद्वल्गुली वा स्वविड्भुजा ॥ या हुंकृत्य प्रियं ब्रूते सा मूका जायते खलु । या सपत्नीः सदेर्ष्येत दुर्भगा सा पुनः पुनः ॥ दृष्टिं विलुप्य भर्तुर्या कंचिदन्यं समीक्षते । काणापि विमुखी चापि कुरूपा चापि जायते । बाह्यादायान्तमालोक्य त्वरिता च जलाशनैः । ताम्बूलैर्व्यजनैश्चैव पादसंवाहनादिभिः । तथैव चाटुवचनैः खेदसंनोदनैः परैः । या प्रियं प्रीणयेत्प्रीता त्रिलोकी प्रीणिता तया ॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः । अमितस्य हि दातारं भर्तारं का न पूजयेत् । भर्ता देवो गुरुर्भर्ता धर्मस्तीर्थव्रतानि च । तस्मात्सर्वं परित्यज्य पतिमेकं समर्चयेत् ॥ पितृवंश्या मातृवंश्या पतिवंश्यास्त्रयस्त्रयः । पतिव्र-



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तायाः पुण्येन स्वर्गसौख्यानि भुञ्जते ।। शीलभङ्गेन दुर्वृत्ताः पातयन्ति कुलत्रयम् । पितुर्मातुस्तथा पत्युरिहामुत्र च दुःखिताः ।। पतिव्रतायाश्चरणो यत्र यत्र स्पृशेद्भुवम् । तत्रेति भूमिर्मन्येत नात्र भारोऽस्ति पावनी ।। बिभ्यत्पतिव्रतास्पर्शं कुरुते भानुमानपि । सोमो गन्धवहश्चापि स्वपावित्र्याय नान्यथा ।। आपः पतिव्रतास्पर्शमभिलष्यन्ति सर्वदा । अद्य जाड्यविनाशो नो जातास्त्वद्यातिपावनाः ।। गृहे गृहे न किं नार्यो रूपलावण्यगर्विताः । परं विश्वेशभक्त्यैव लभ्यते स्त्री पतिव्रता ।। भार्या मूलं गृहस्थस्य भार्या मूलं सुखस्य च । भार्या धर्मफलावाप्त्यै भार्या संतानवृद्धये ।। परलोकस्त्वयं लोको जीयते भार्यया द्वयम् । देवपित्र्यातिथीज्यादि नाभार्यः कर्म चार्हति ।। गृहस्थः स हि विज्ञेयो यस्य गेहे पतिव्रता । ग्रस्यतेऽन्यः प्रतिपदं राक्षस्या जरयाथ वा ।। यथा गङ्गावगाहेन शरीरं पावनं भवेत् । तथा पतिव्रतादृष्ट्या शुभया पावनं भवेत् । न गङ्गायास्तया भेदो या नारी पतिदेवता । उमा शिवसमा साक्षात्तस्मात्तां पूजयेद्बुधः ।' इति । आदिपर्वण्यपि दुष्यन्तं प्रति

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शकुन्तलावचनम्—'सा भार्या या गृहे दक्षा सा भार्या या प्रजावती । सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ।। भार्यावन्तः क्रियावन्तः सभार्या गृहमेधिनः । भार्यावन्तः प्रमोदन्ते भार्यावन्तः श्रियान्विताः ।। सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः । पितरो धर्मकार्येषु भवन्त्यार्तस्य मातरः ।। कान्तारेष्वपि विश्रामो जनस्याध्वनिकस्य वै । यः सदारः स विश्वास्यस्तस्माद्दाराः परा गतिः ।। संसरन्तमपि प्रेतं विषमेष्वेकपातिनम् । भार्यैवान्वेति भर्तारं सततं या पतिव्रता ।। प्रथमं संस्थिता भार्या पतिं प्रेत्य प्रतीक्षते । पूर्वं मृतं च भर्तारं पश्चात्साध्व्यनुगच्छति' इति । भारते आपद्धर्मे कपोतीलुब्धकीये— 'मितं ददाति हि पिता मितं भ्राता मितं सुतः । अमितस्य हि दातारं भर्तारं का न पूजयेत् ।। नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखम् । विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ।।' तत्रैव कपोतवाक्यम् —'अथ वृक्षस्य शाखायां विहङ्गः ससुहृज्जनः । दीर्घकालोषितो राजंस्तत्र चित्रतनूरुहः ।। तस्य कल्यगता

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भार्या चरितुं नाभ्यवर्तत । किं नु तत्कारणं येन साद्यापि न निवर्तते ॥ अपि स्वस्ति भवेत्तस्याः प्रियाया मम कानने । तया विरहितं हीदं शून्यमद्य गृहं मम ॥ पुत्रपौत्रवधूभृत्यैराकीर्णमपि सर्वतः । भार्याहीनं गृहस्थस्य शून्यमेव गृहं भवेत् ॥ न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते । गृहं तु गृहिणीहीनमरण्यसदृशं मतम् ॥ न भुङ्क्ते मय्यभुक्ते या न स्नाते स्नाति सुव्रता । तिष्ठत्युपतिष्ठते न शेतेऽशयिते मयि ॥ हृष्टे भवति सा हृष्टा दुःखिते मयि दुःखिता । प्रोषिते दीनवदना क्रुद्धे च प्रियवादिनी ॥ पतिप्रिया पतिप्राणा पतिप्रियहिते रता । यस्य स्यात्तादृशी भार्या धन्यः स पुरुषो भुवि ॥ सा हि श्रान्तं क्षुधार्तं च जानीते मां तपस्विनी । अनुरक्ता स्थिरा चेह भक्ता स्निग्धा यशस्विनी ॥ वृक्षमूलेऽपि दयिता यस्य तिष्ठति तद्गृहम् । प्रासादोऽपि तया हीनः कान्तारमिति निश्चयः ॥ धर्मार्थकामकालेषु भार्या पुंसः सहायिनी । तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च ॥ नास्ति भा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

र्यासमं किंचिन्नरस्यार्त्तस्य भेषजम् । नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः ॥ नास्ति भार्यासमो लोके सहायो धर्मसंग्रहे । यस्य भार्या गृहे नास्ति साध्वी च प्रियवादिनी । अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्' इति । आनुशासनिके महेश्वरं प्रति उमावचनम्— 'स्त्रीधर्मः पूर्व एवायं विवाहे बन्धुभिः कृतः । सहधर्मचरी भर्तुर्भवत्यग्निसमीपतः ॥ सुखभावा सुवचना सुवृत्ता सुखदर्शना । अनन्यचित्ता सुमुखी भर्तुः सा धर्मचारिणी ॥ सा भवेद्धर्मपरमा सा भवेद्धर्मभागिनी । देववत्सततं साध्वी भर्तारं प्रतिपश्यती ॥ शुश्रूषां परिचर्यां च देवतुल्यं प्रकुर्वती । नान्यभावा ह्यविमनाः सुव्रता सुखदर्शना ॥ या साध्वी नियताहारा सा भवेद्धर्मचारिणी । परुषाण्यपि चोक्ता या दृष्टा दुष्टेन चक्षुषा ॥ सुप्रसन्नमुखी भर्तुर्या नारी सा पतिव्रता । न चन्द्रसूर्यौ नतरुं पुन्नाम्नो या निरीक्षते ॥ भर्तृपूज्य वरारोहा सा भवेद्धर्मभागिनी । दरिद्रं व्याधितं दीनमध्वना परिकर्शितम् ॥ पतिं पुत्रमिवोपास्ते सा नारी धर्मभागिनी । न कामेषु न भोगेषु नै-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्वर्ये न सुखे तथा। स्पृहा यस्या यथा पत्यौ सा नारी धर्मभागिनी। या नारी प्रयता दक्षा या नारी पुत्रिणां भवेत्॥ पतिप्रिया पतिप्रीणा सा नारी धर्मभागिनी। अग्निकार्यपरा नित्यं सदा पुष्पबलिप्रदा॥ देवतातिथिभृत्यानां निर्वाप्य पतिना सह। शेषान्नमुपभुञ्जाना यथान्यायं यथाविधि॥ तुष्टपुष्टजना नित्यं नारी धर्मेण युज्यते। श्वश्रूश्वशुरयोः पादौ तोषयन्ती गुणान्विता॥ मातापितृपरा नित्यं या नारी सा तपोधना। ब्राह्मणान्दुर्बलानातान्दीनान्धकृपणांस्तथा॥ बिभर्त्यन्नेन या नारी सा पतिव्रतभागिनी। व्रतं चरति या नित्यं दुश्चरं लघुसत्त्वया॥ पतिचित्ता पतिहिता सा पतिव्रतभागिनी॥ पुण्यमेतत्तपश्चैव स्वर्गश्चैव सनातनः। या नारी भर्तृपरमा भवेद्भर्तृव्रता सती॥ पतिर्हि देवो नारीणां पतिर्बन्धुः पतिर्गतिः। पत्या समा गतिर्नास्ति दैवतं वा यथा पतिः॥ पतिः प्रसादः स्वर्गो वा तुल्यो नार्या न वा भवेत्। यद्यकार्यमधर्मं वा यदि वा प्राणनाशनम्। पतिर्ब्रूयाद्दरिद्रो वा व्याधितो वा कथंचन॥ आपन्नो रिपुसंस्थो वा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ब्रह्मशापार्दितोऽपि वा । आपद्धर्ममनुप्रेक्ष्य तत्कार्यमविश-
ङ्कया ॥ एष देव मया प्रोक्तः स्त्रीधर्मो वचनात्तव । या
त्वेवंभाविनी नारी सा पतिव्रतभागिनी' इति । तत्रैव
स्थलान्तरे युधिष्ठिरः— 'सत्स्त्रीणां समुदाचारं सर्व धर्म
विदां वर । श्रोतुमिच्छाम्यहं त्वत्तस्तन्मे ब्रूहि पितामह' ॥
भीष्मः— 'सर्वज्ञा सर्वतत्त्वज्ञा देवलोके मनस्विनी । कैकेयी
सुमना नाम शाण्डिलीं पर्यपृच्छत । केन वृत्तेन कल्याणि
समाचारेण केन वा ॥ इमं लोकमनुप्राप्ता त्वं हि तत्त्वं वद-
स्व मे इति । पृष्टा सुमनया मधुरं चारुहासिनी । शाण्डिली
निभृतं वाक्यं सुमनामिदमब्रवीत् ॥ नाहं काषायवसना
नास्मि वल्कलधारिणी । न च मुण्डा न जटिला भूत्वा
देवत्वमागता । अहितानि च वाक्यानि सर्वाणि परु
षाणि च । अप्रमत्ता च भर्तारं कदाचिन्नाहमब्रवम् ॥
देवतानां पितृणां च ब्राह्मणानां च पूजने । अप्रमत्ता
सदा युक्ता श्वश्रूश्वशुरवर्तिनी ॥ पैशुन्ये न प्रवर्तामि
न ममैतन्मनोगतम् । पुनर्द्वारि न तिष्ठामि चिरं न
कथयामि च ॥ असद्वा हसितं किंचिदहितं वापि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कर्मणा । रहस्यमरहस्यं वा न प्रवर्तामि सर्वथा ॥ कार्यार्थे निर्गतं चापि भर्तारं गृहमागतम् । आसनेनोपसंयोज्य पूजयामि समाहिता । यदन्नं नाभिजानाति यद्भोज्यं नाभिनन्दति ॥ भक्ष्यं वा यदि वा लेह्यं तत्सर्वं वर्जयाम्यहम् । कुटुम्बार्थं समानीतं यत्किंचित्कार्यमेव तु । प्रातरुत्थाय तत्सर्वं कारयामि करोमि च ॥ नोत्थापयामि भर्तारं सुखसुप्तमहं सदा । आतरेष्वपि कार्येषु तेन तुष्यति मे मनः । नायासयामि भर्तारं कुटुम्बार्थे च सर्वदा । गुप्तगुह्या सदा चास्मि सुसंमृष्टनिवेशना ॥ इमं धर्मपथं या हि पालयत्यखिलं सदा । अरुन्धतीव नारीणां स्वर्गलोके महीयते'। भीष्मः—'एतदाख्याय सा देवी सुमनायै तपस्विनी । पतिधर्मं महाभागा जगामादर्शनं तदा ॥' इति । वनपर्वणि सत्यभामां प्रति द्रौपदीवचनम्— 'वर्तम्यहं तु यां वृत्तिं पाण्डवेषु महात्मसु । तां सर्वां शृणु मे सत्यां सत्यभामे यशस्विनि' ॥ अहंकारं विहायाहं कामक्रोधौ च सर्वदा । सादरा पाण्डवान्नित्यं प्रयतोपचराम्यहम् ॥ प्रणयं प्रतिसंहृत्य निधायात्मानमात्मनि । शुश्रूषु-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निरभीमाना पतीनां चित्तरक्षिणी । दुर्व्याहृताच्छङ्कमाना दुश्चित्ताद्दुरवेक्षितात् ॥ दुरासिताद्दुर्व्रजितादिङ्गिताध्यासितादपि । सूर्यवैश्वानरसमान्सोमकल्पान्महारथान् । सेवे चक्षुर्हणः पार्थानुग्रवीर्यप्रतापिनः ॥ देवो मनुष्यो गन्धर्वो युवा चापि स्वलंकृतः । द्रव्यवानभिरूपो वा न मेऽन्यः पुरुषो मतः ॥ नाभुक्तवति नास्नाते नासंविष्टे च भर्तरि । न संविशामि नाश्नामि सदा कर्मकरेष्वपि ॥ क्षेत्राद्वनाद्वा ग्रामाद्वा भर्तारं गृहमागतम् । अभ्युत्थायाभिनन्दामि आसनेनोदकेन च ॥ प्रमृष्टभाण्डा मृष्टान्नकाले भोजनदायिनी । संयता गुप्तधान्या च सुसंमृष्टा निवेशना । अतिरस्कृतसंभाषा दुःस्त्रियो नानुसेवती । अनुकूलवती नित्यं भवाम्यनलसा सदा । अनर्म चापि हसितं द्वारस्थानमभीक्ष्णशः ॥ अवस्करे चिरं स्थानं निष्कुटेषु च वर्जयेत् । निरताहं सदा सत्ये भर्तॄणामुपसेवने ॥ सर्वथा भर्तृरहितं न ममेष्टं कथंचन । यदा प्रवसते भर्ता कुटुम्बार्थं न केनचित् । सुमनोवर्णकापेता भवामि व्रतचारिणी ॥ यच्च भर्ता न पिबति यच्च भर्ता न खा-



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दाति । यच्च नाश्नाति मे भर्ता सर्वं तद्वर्जयाम्यहम् ॥ यथोपदेशं नियता वर्तमाना वराङ्गने । स्वलंकृता सुप्रयता भर्तुः प्रियहिते रता ॥ ये च धर्माः कुटुम्बेषु श्वश्वा मे कथिताः पुरा । भिक्षा बलिः श्राद्धमिति स्थालीपाकाश्च पर्वसु ॥ मान्यानां मानसत्कारा ये चान्ये विदिता मम । तान्सर्वाननुवर्तामि दिवारात्रमतन्द्रिता ॥ विनयान्नियमाच्चैव सर्वात्मानं सदाश्रिता । मृदून्सतः सत्यशीलान्सत्यधर्मानुपालिनः । आशीविषानिव क्रुद्धान्पतीन्परिचराम्यहम् । पत्याश्रयो हि मे धर्मो मतः स्त्रीणां सनातनः ॥ स देवः सा गतिर्नान्या तस्य का विप्रियं चरेत् । अहं पतिं नातिशये नात्यश्ने नातिभूषये । नापि परिवदे श्वश्रूं सर्वदा परियन्त्रिता । अवधानेन सुभगे नित्योत्थिता तथैव च ॥ भर्तारो वशगा मह्यं गुरुशुश्रूषयैव च । नित्यमार्यामहं कुन्तीं वीरसूं सत्यवादिनीम् । स्वयं परिचराम्येतां पानाच्छादनभोजनैः । नैतामतिशये जातु वस्त्रभूषणभोजनैः ॥ नाहं परिवदे वादं तां पृथां पृथिवीसमाम् । अष्टावग्रे ब्राह्म-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

णानां सहस्राणि स्म नित्यदा। भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने ॥ अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः। त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ॥ दशान्यानि सहस्राणि येषामन्नं सुसंस्कृतम्। क्रियते रुक्मपात्रीभिर्यतीनामूर्ध्वरेतसाम् ॥ तान्सर्वानग्रहारेण ब्राह्मणान्वेदवादिनः। यथार्हं पूजयामि स्म पानाच्छादनभोजनैः ॥ शतं दासीसहस्राणि कौन्तेयस्य महात्मनः। कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलंकृताः ॥ महार्हमाल्याभरणाः सुवर्णाश्चन्दनोक्षिताः। मणीन्हेम च बिभ्रत्यो नृत्तगीतविशारदाः। तासां नाम च रूपं च भोजनाच्छादनानि च। सर्वासामेव वेदाहं कर्म चैव कृताकृतम्। शतं दासीसहस्राणि दश नागायुतानि च। युधिष्ठिरस्यानुयात्रमिन्द्रप्रस्थनिवासिनः ॥ एवमासीत्तदा राज्ञो यन्महीं पर्यपालयन्। येषां संख्याविधिं चैव प्रदिशामि शृणोमि च। अन्तःपुराणां सर्वेषां भृत्यानां चैव सर्वशः ॥ आगोपालाविपालेभ्यः सर्वं वेद कृताकृतम्। सर्वं राज्ञः समुदयमायं च व्ययमेव च ॥ एकाहं वेद्मि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कल्याणि पाण्डवानां यशस्विनी । मयि सर्वं समासज्ज्य कुटुम्बं भरतर्षभाः ॥ उपासनरताः सर्वे घटन्ति स्म वरानने । तमहं भारमासक्तमनाधृष्यं दुरात्मभिः ॥ सुखं सर्वं परित्यज्य रात्र्यहानि घटामि वै । अधृष्यं करुणस्येव निधिपूर्णमिवोदधिम् ॥ एकाहं वेद्मि कोशं वै पतीनां धर्मचारिणाम् । अनिशायां निशायां च सहाया क्षुत्पिपासयोः ॥ आराधयन्त्याः कौरव्यांस्तुल्या रात्रिरहश्च मे । प्रथमं प्रतिबुध्यामि चरमं संविशामि च ॥ नित्यकालमहं सत्ये एतत्संवननं मम । एतज्जानाम्यहं कर्तुं भर्तृसंवननं महत् ॥ असत्स्त्रीणां समाचारं नाहं कुर्यां न कामये'। वैशम्पायनः— 'तच्छ्रुत्वा धर्मसहितं व्याहृतं कृष्णया तदा । उवाच सत्या सत्कृत्य पाञ्चालीं धर्मचारिणीम् ॥ अभिपन्नास्मि पाञ्चालि याज्ञसेनि क्षमस्व मे । कामकारः सखीनां हि सोपहासं प्रभाषितम्' ॥ द्रौपद्युवाच— 'इदं तु ते मार्गमपेतमोहं वक्ष्यामि चित्तग्रहणाय भर्तुः । अस्मिन्यथावत्सखिवर्तमाना भर्तारमाच्छेत्स्यसि कामिनीभ्यः ॥ नैतादृशं दैवतमस्ति सत्ये सर्वेषु लोकेषु

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सदैवकेषु । यथा पतिस्तुष्यति सर्वकामा लभ्याः प्रमादा-
त्कुपितश्च हन्यात् । तस्मादपत्यं विविधाश्च भोगाः शय्या-
सनान्युत्तमदर्शनानि । वस्त्राणि माल्यानि तथैव गन्धाः
स्वर्गश्च लोको विपुला च कीर्त्तिः ॥ सुखं सुखे-
नेह न जातु लभ्यं दुःखेन साध्वी लभते सुखानि ।
सा कृष्णमाराध्य सौहृदेन प्रेम्णा च नित्यं प्रतिक-
र्मणा च ॥ तथासनैश्चारुभिरग्र्यमाल्यैर्दाक्षिण्ययोगैर्वि-
विधैश्च गन्धैः । अस्याः प्रियोऽस्मीति यथा विदित्वा
त्वामेव संश्लिष्यति तद्विधत्स्व ॥ श्रुत्वा स्वरं द्वारगतस्य
भर्तुः प्रत्युत्थिता तिष्ठ गृहस्य मध्ये । दृष्ट्वा प्रविष्टं त्व-
रितासनेन पाद्येन चैनं प्रतिपूजयस्व ॥ संप्रेषितायामथ
चैव दास्यामुत्थाय सर्वं स्वयमेव कार्यम् । जानातु
कृष्णस्तव भावमेतं सर्वात्मना मां भजतीति सत्ये ॥ त्वत्सं-
निधौ यत्कथयेत्पतिस्ते यद्यप्यगुह्यं परिरक्षितव्यम् । कश्चि-
त्सपत्नी तव वासुदेवं प्रत्यादिशेत्ते न भवेद्विरागः ॥
प्रियांश्च रक्तांश्च हितांश्च भर्तुस्तान्भोजयेथा विविधैरु-
पायैः । द्वेष्यैरपक्षैरहितैश्च तस्य भिद्यस्व नित्यं कुहको-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्यूतैश्च ॥ मदं प्रमादं पुरुषेषु हित्वा संयच्छ भावं प्रतिगृह्य मौनम् । प्रद्युम्नसाम्बावपि ते कुमारौ नोपासितव्यौ रहिते कदाचित् ॥ महाकुलीनाभिरपापिकाभिः स्त्रीभिः सतीभिस्तव सख्यमस्तु । चण्डाश्च शौण्डाश्च महाशनाश्च चौराश्च दुष्टाश्चपलाश्च वर्ज्याः ॥ एतद्यशस्यं भगदैवतं च स्वर्ग्यं तथा शत्रुनिबर्हणं च । महार्हमाल्याभरणाङ्गरागा भर्तारमाराधय पुण्यगन्धा' इति । पतिशुश्रूषणादिकमेव परमो धर्मः । ताश्च भर्त्रा भरणीयाः सत्कार्याश्च इति सिद्धम् ॥

मां च पञ्चत्वमापन्नं रामं च वनमाश्रितम् ।
कृपणा बत वैदेही जीवितं परिहास्यति ॥

सा नूनं विधवा राज्यं सपुत्रा कारयिष्यसि ।
न हि प्रव्राजिते रामे देवि जीवितुमुत्सहे ॥

सतीं त्वामहमत्यन्तं व्यवस्याम्यसतीं सतीम् ।
रूपिणीं विषसंयुक्तां पीत्वेव मदिरां नरः ॥

अनृतैर्बत मां सान्त्वैः सान्त्वयन्ती स्म भाषसे ।
गीतशब्देन संरुध्य लुब्धो मृगमिवावधीः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

चिरं खलु मया पापे त्वं पापेनाभिरक्षिता ।
अज्ञानादुपसंपन्ना रज्जुरुद्बन्धिनी यथा ॥

रममाणस्त्वया सार्धं मृत्युं त्वां नाभिलक्षये ।
बालो रहसि हस्तेन कृष्णसर्पमिवास्पृशम् ॥

कौसल्यां च सुमित्रां च मां च पुत्रैस्त्रिभिः सह ।
प्रक्षिप्य नरके सार्धं कैकेयि सुखिता भव ॥

प्रियं चेद्भरतस्यैतद्रामप्रव्राजनं भवेत् ।
मा स्म मे भरतः कार्षीत्प्रेतकृत्यं गतायुषः ॥

हन्तानार्ये ममामित्रे सकामा भव कैकयि ।
मृते मयि गते रामे विधवा कारयिष्यसि ॥

धिगस्तु योषितो नाम शठाः स्वार्थपराः सदा ।
न ब्रवीमि स्त्रियः सर्वा भरतस्यैव मातरम् ॥

अनर्थभावेऽर्थपरे नृशंसे
ममानुतापाय निविष्टभावे ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विनाशकामामहिताममित्रा-
मावासयन्मृत्युमिवात्मनस्त्वा ॥
चिरं बताङ्केन धृतासि सर्पी
महाविषा तेन हतोऽस्मि मोहात् ।
नृशंसवृत्ते व्यसनप्रहारिणि
प्रसह्य वाक्यं यदिहाद्य भाषसे ॥
न नाम ते केन मुखात्पतत्यधो
विशीर्यमाणा रसना सहस्रधा ।
स भूमिपालो विलपन्ननाथव-
त्स्त्रिया गृहीतो हृदयेऽतिमात्रया ॥
पपात देव्याश्चरणौ प्रसारिता-
वुभावसंस्पृश्य यथातुरस्तथा ।

त्रयोदशे— एवं सकरुणं विलप्य पादप्रणामपूर्वक-मभिहितापि

अनर्थरूपासिद्धार्था ह्यभीता भयदर्शिनी ।
पुनराकारयामास तमेव वरमङ्गना ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्वं कथ्यसे महाराज सत्यवादी दृढव्रतः ।
मम चेह वरं कस्माद्विदारयितुमिच्छसि ॥

एवमुक्तो दशरथः पुनस्तामाह—

साधुवृत्तस्य दीनस्य त्वद्गतस्य गतायुषः ।
प्रसादः क्रियतां देवि मम राज्ञो विशेषतः ॥

इति ।

विशुद्धभावस्य सदुष्टभावा
ताम्रेक्षणस्याश्रुकलस्य राज्ञः ।
श्रुत्वा विचित्रं करुणं विलापं
भर्तुर्नृशंसा न चकार वाक्यम् ॥

अत्र दशरथोक्तबहुविधसान्त्ववचनमनादृत्य परुषतरं ब्रुत्याः कैकेय्या अतिदुष्टत्वावगमेन स्वभावतः स्त्रियोऽतिदुष्टा दुश्चरित्राश्च; अतस्तासु विश्वासो न कर्तव्य इति सूचितम् । तथा चात्रैव सीतां प्रति कौसल्यावचनम्—

असत्यः सर्वलोकेऽस्मिन्सततं सत्कृताः प्रियैः ।
भर्तारं नानुमन्यन्ते विनिपातगतं स्त्रियः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एष स्वभावो नारीणामनुभूय पुरा सुखम् ।
अल्पामप्यापदं प्राप्य दुष्यन्ति प्रजहत्यपि ॥

असत्यः शीलविकृता दुर्ग्राह्यहृदयाः सदा ।
युवत्यः पापसंकल्पाः क्षणमात्राद्विरागिणः ॥

न कुलं न कृतं विद्यां न दत्तं नापि संग्रहम् ।
स्त्रीणां गृह्णाति हृदयमनित्यहृदया हि ताः ॥

तथैव दशरथवाक्यम्—

धिगस्तु योषितो नाम शठाः स्वार्थपराः सदा ।
न ब्रवीमि स्त्रियः सर्वा भरतस्यैव मातरम् ॥

अत्रैवानसूयावचनम्—

कामवक्तव्यहृदया भर्तृनाथाश्चरन्ति याः ।
प्राप्नुवन्त्ययशश्चैव धर्मभ्रंशं च मैथिलि ॥
अकार्यवशमापन्नाः स्त्रियो याः खलु तद्विधाः ॥

तथा चारण्यकाण्डेऽगस्त्यवचनम्—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एषा हि प्रकृतिः स्त्रीणामा सृष्टे रघुनन्दन ।
समस्थमनुरञ्जन्ति विषमस्थं त्यजन्ति च ॥
शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा ।
गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः ॥

इति । तथा च मनुः—'पुंश्चल्यश्चलचित्ताश्च निःस्नेहाश्च स्वभावतः । रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥ शय्यासनमलंकारं कामं क्रोधमनार्यताम् । द्रोहभावं कुचर्यां च स्त्रीभ्यो मनुरकल्पयत्'। संवर्तोऽपि—'प्रतिकूलकलत्रस्य द्विदारस्य विशेषतः । जलूकावत्स्त्रियः सर्वा भूषणाच्छादनासनैः ॥ सुपूजिताः सुखाढ्यापि पुरुषं ह्यपकर्षति । जलूका रक्तमादत्ते केवलं सा तपस्विनः ॥ इतरा तु धनं चित्तं मांसं वीर्यं तथा बलम्' इति । आनुशासनिके अष्टावक्रसंवादे—'नैता जानन्ति पितरं न कुलं न च मातरम् । न भ्रातॄन्न च भर्तारं न च पुत्रांश्च देवरान् ॥ लीलावत्यः कुलं घ्नन्ति कूलानीव सरिद्वरा' इति । आनुशासनिके नारदं प्रति पञ्चचूडावाक्यम्—'कुलीना रूपवत्यश्च नाथवत्यश्च योषितः । मर्यादासु न

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तिष्ठन्ति स दोषः स्त्रीषु नारद। न स्त्रीभ्यः किंचिद-न्यद्वै पापीयस्तरमस्ति वै॥ स्त्रियो हि मूलं दोषाणां तथा त्वमपि वेत्थ ह। समाज्ञातानृद्धिमतः पतिरूपा-न्वशे स्थितान्॥ पतीनन्तरमासाद्य नालं नार्यः प्रती-क्षितुम्। असद्धर्मस्त्वयं स्त्रीणामस्माकं भवति प्रभो॥ पापीयसो नरान्यद्वै लज्जां त्यक्त्वा भजामहे। स्त्रियं हि यः प्रार्थयते संनिकर्षं च गच्छति। ईषच्च कुरुते सेवां तमेवेच्छन्ति योषितः॥ अनर्थित्वान्मनुष्याणां भ-यात्परिजनस्य च। मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु॥ नासां कश्चिदगम्योऽस्ति नासां वयसि निश्च-यः। विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते॥ न भया-न्नाप्यनुक्रोशान्नार्थहेतोः कथंचन। न ज्ञातिकुलसं-बद्धात्स्त्रियस्तिष्ठन्ति भर्तृषु॥ यौवने वर्तमानानां मृष्टाभरणवाससाम्। नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः। याश्च शश्वद्बहुमता रक्ष्यन्ते दयिताः स्त्रियः। अपि ताः संप्रसज्जन्ते कुब्जान्धजडवामनैः॥ पङ्गुष्वथ च देवर्षे ये चान्ये कुत्सिता नराः। स्त्रीणाम-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गम्यो लोकेऽस्मिन्नास्ति कश्चिन्महामुने ॥ यदि पुंसां गतिर्ब्रह्मन्कथंचिन्नोपपद्यते । अप्यन्योन्यं प्रवर्तन्ते न हि तिष्ठन्ति भर्तृषु ॥ अलाभात्पुरुषाणां हि भयात्परिजनस्य च। वधबन्धभयाच्चापि स्वयं गुप्ता भवन्ति ताः ॥ चलस्वभावा दुःसेव्या दुर्ग्राह्या भावतस्तथा । प्राज्ञस्य पुरुषस्येह यथा वाचस्तथा स्त्रियः ॥ नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः । नान्तकः सर्वभूतानां न पुंसा वामलोचनाः ॥ इदमन्यच्च देवर्षे रहस्यं सर्वयोषिताम्। दृष्ट्वैव पुरुषं हृद्यं योनिः प्रक्लिद्यते स्त्रियाः ॥ कामानामपि दातारं कर्तारं मनसां प्रियम् । रक्षितारं न मृष्यन्ति स्वभर्तारमलं स्त्रियः ॥ न कामभोगान्विपुलान्नालंकारान्न संश्रयान् । तथैव बहु मन्यन्ते यथा रत्यामनुग्रहम् ॥ अन्तकः पवनो मृत्युः पातालं बडवामुखम् । क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः ॥ यतश्च भूतानि महान्ति पञ्च यतश्च लोका विहिता विधात्रा । यतः पुमांसः प्रमदाश्च निर्मितास्तदैव दोषाः प्रमदासु नारद' इति । तत्रैव

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भीष्मं प्रति धर्मराजप्रश्नः— 'एता हि रममाणास्तु वञ्चयन्तीह मानवान् । न चासां मुच्यते कश्चित्पुरुषो हस्तमागतः । गावो नवतृणानीव गृह्णन्त्येता नवं नवम् ॥ शम्बरस्य च या माया या माया नमुचेरपि । बलेः कुम्भीनसेश्चैव सर्वास्ता योषितो विदुः ॥ हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्ति च ॥ अप्रियं प्रियवाक्यैश्च गृह्णते कालयोगतः ॥ उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः । स्त्रीबुद्ध्या न विशिष्येते तास्तु रक्ष्याः कथं नरैः ॥ अनृतं सत्यमित्याहुः सत्यं चाप्यनृतं तथा । इति यास्ताः कथं वीर संरक्ष्याः पुरुषैरिह ॥ स्त्रीणां बुद्ध्यर्थनिष्कर्षादर्थाः शास्त्राणि शत्रुहन् । बृहस्पतिप्रभृतिभिर्मन्ये सद्भिः कृतानि वै ॥ संपूज्यमानाः पुरुषैर्विकुर्वन्ति मनो नृषु । अपास्ताश्च तथा राजन्विकुर्वन्ति मनः स्त्रियः ॥ इमाः प्रजा महाबाहो धार्मिकय इति नः श्रुतम् । सत्कृता असत्कृताश्चापि विकुर्वन्ति मनः सदा ॥ यदि जिह्वासहस्रं स्याज्जीवेच्च शरदां शतम् । अनन्यकर्मा स्त्री दोषाननुक्त्वा निधनं व्रजेत् ॥ मानवानां प्रमोहार्थं कृत्या

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

नार्योऽसृजत्प्रभुः। ताभ्यः कामान्यथाकामं प्रादाद्धि प्रपितामहः ॥ क्रोधं कामञ्च देवेश साहाय्यं चासृजत्प्रभुः । न च स्त्रीणां क्रिया काचिदिति धर्मो व्यवस्थितः ॥ निरिन्द्रिया ह्यशास्त्राश्च स्त्रियोऽनृतमिति श्रुतिः' इति । एवमुक्तप्रकारेण स्त्रियः स्वाभावतोऽतिदुष्टाः; तस्मान्न विश्वसनीया इति ।

यस्ते मन्त्रकृतः पाणिरग्नौ पापे मया धृतः ।
तं त्यजामि स्वयं वापि तव पुत्रं सह त्वया ॥

अनेन च दुश्चरित्रा स्त्री परित्याज्येति सूचितं भवति। तथा च माधवीये पुराणवचनम्—'धर्मविघ्नकरीं भार्यामसतीं चातिकोपनाम्। त्यजेद्धर्मस्य रक्षार्थं सदैवाप्रियवादिनीम्' इति। ननु उदाहृतवचनावगतपरित्यागहेतूनां चतुर्णां मध्ये एकस्याप्यभावात्कैकेयीपरित्यागो नोपपद्यते। तथा हि—न तावद्धर्मविघ्नकरीत्वात्परित्यागः संभवति, पूर्वं भर्तृदत्तवरद्वयमात्रप्रार्थनेन धर्मविघातस्यानाचरणात्। नाप्यसतीति च परित्यागः, 'असती कुल-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

टेत्वरी’ इति नैघुण्टुकव्यवहारात् व्यभिचारिण्या एवा-
सतीत्वेन कैकेय्यां तत्प्रसक्त्यभावात् । नापि कोपनेति च, द्रौपद्या अपि भर्तृषु बहुकोपकरणेन तस्या अपि परित्या-गापत्तेः । तथा हि भारते विराटपर्वणि— ‘अभ्यभाषत पाञ्चाली भीमसेनमनिन्दिता । उत्तिष्ठोत्तिष्ठ किं शेषे भीमसेन मृतो यथा ॥ नामृतस्य हि पापीयान्भार्यामा-लभ्य जीवति । भ्रातरं च विगर्हस्व ज्येष्ठं दुर्द्यूतदेवि-नम् ॥ यस्यास्मि कर्मणा प्राप्ता दुःखमेतदनन्तकम्’ इति । नाप्यप्रियवादित्वात्त्यागः, सीताकौसल्यादीनां भर्तरि अप्रियवचनसत्त्वेऽपि परित्यागादर्शनात् । तथा हि अत्रैव रामं प्रति सीतावाक्यम्—

किं त्वामन्यत वैदेहः पिता मे मिथिलाधिपः ।
राम जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥
अनृतं बत लोकोऽयमज्ञानाद्यद्धि वक्ष्यति ।
तेजो नास्ति परं रामे तपतीव दिवाकरे ॥
स्वयं तु भार्यां कौमारीं चिरमध्युषितां सतीम् ।
शैलूष इव मां राम परेभ्यो दातुमिच्छसि ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति । तत्रैव दशरथं प्रति कौसल्यावाक्यम्

हतं त्वया राज्यमिदं सराष्ट्रं
हतस्तथात्मा सह मन्त्रिभिश्च ।
हता सपुत्रास्मि हताश्च पौराः
सुतश्च भार्या च तव प्रहृष्टौ ॥

इति । तस्मात्परित्यागहेतुभूतदोषचतुष्टयाभावात् 'अदुष्टां विनतां भार्यां यौवने यः परित्यजेत् । सप्तजन्म भवेत्स्त्रीत्वं वैधव्यं च पुनः पुनः' इति भार्यापरित्यागे दोषश्रवणाच्च कैकेयीपरित्यागो नोपपद्यते; न च कैकेय्या दुष्टत्वादिकमसिद्धमिति वाच्यम्,

न हि किंचिदयुक्तं वा विप्रियं वा पुरा मम ।
अकरोस्त्वं विशालाक्षि तेन न श्रद्दधाम्यहम् ॥

इत्यादि दशरथवचनेन अदुष्टात्वविनतात्वयोः

स वृद्धस्तरुणीं भार्यां प्राणेभ्योऽपि गरीयसीम् ।
अपापः पापसंकल्पां ददर्श धरणीतले ॥



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यनेन यौवनस्याप्यवगमात् । न च

यस्ते मन्त्रकृतः पाणिरग्नौ पापे मया धृतः ।
तं त्यजामि स्वयं चापि तव पुत्रं सह त्वया ॥

इति वचनं रामप्रव्राजनरूपवरयाचनविरमणार्थविभीषिकापरमेव न परित्यागपरमिति वाच्यम् । रामप्रव्राजनप्राक्कालीनस्य 'यस्ते मन्त्रकृतः पाणिः' इति वचनस्य विभीषिकार्थत्वेऽपि रामप्रव्राजनसमनन्तरम्

कैकेयि मा ममाङ्गानि प्राक्षीस्त्वं दुष्टचारिणी ।
न हि त्वां द्रष्टुमिच्छामि न भार्या न च बान्धवी ॥

ये च त्वामुपजीवन्ति नाहं तेषां न ते मम ।
केवलार्थपरां हि त्वां त्यक्त्वा धर्मं त्यजाम्यहम् ॥

अगृह्णां यच्च ते पाणिमग्निपर्ययणं च यत् ।
अनुजानामि तत्सर्वमस्मिँल्लोके परत्र च ॥

भरतश्चेत्प्रतीतः स्याद्राज्यं प्राप्येदमव्ययम् ।
यन्मे दद्यात्स तृप्त्यर्थं मा तद्दत्तमन्वगात् ॥

ग्निम् पर्यणयं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

इत्यादिदशरथसमुदीरितवचनानां सिद्धे प्रयोजने, बिभीषिकायाः प्रयोजनाभावेन तादर्थ्यानुपपत्तेः । किं च युद्धकाण्डे रावणवधसमनन्तरम्

कुरु प्रसादं धर्मज्ञ कैकेय्या भरतस्य च ।
सपुत्रां त्वां त्यजामीति यदुक्ता केकयी त्वया ।
स शापः केकयीं घोरः सपुत्रां न स्पृशेत्प्रभो ॥

इति स्वसंदर्शनार्थमागतं दशरथं प्रति रामकृतप्रार्थनानुपपत्तेश्च । तस्मादुत्तरवाक्यपर्यालोचनया पूर्ववाक्यस्यापि बिभीषिकार्थत्वानुपपत्त्या परित्यागपरत्वमेव स्वीकर्तव्यम् । तच्च नोपपद्यते, परित्यागनिमित्तहेतुचतुष्टयाभावस्य पूर्वमेवोक्तत्वात् । अत्रोच्यते— पूर्वोक्तहेतूनां सत्त्वादेव परित्यागः संभवत्येव । तथा हि—

इक्ष्वाकूणां हि सर्वेषां राजा भवति पूर्वजः ।
स राघवाणां कुलधर्ममात्मनः
सनातनं नाद्य विहातुमर्हसि ॥

इति रामं प्रति वसिष्ठवचनावगतकुलपरंपरागतं ज्येष्ठं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुत्रं राज्याभिषेकरूपधर्मविघाताचरणेन सगरः असमञ्ज-मिव दशरथो रामभद्रं वने वासयत्विति वदन्तीं कैकेयीं प्रति

अदुष्टस्य हि संत्यागः सत्पथे निरतस्य च।
निर्दहेदपि शक्रस्य द्युतिं धर्मनिरोधनात् ॥

इति महामात्रवचनात् अदुष्टस्य धार्मिकस्य रामस्य वनप्रेषणे धर्मनिरोधावगमेन च धर्मविघातकत्वसंभवात्। यदुक्तं वरद्वयाचरणमपि धर्म इति तत्रोच्यते— स्वमुख्य-धर्माविरोधेनैव वरद्वयनिर्वाहसंभवे तद्बाधनस्यान्याय्य-त्वात्, पत्यनुकूलाचरणस्यैव मुख्यधर्मत्वात्। तथा च भारते आपद्धर्मे लुब्धककपोतीये कपोतीवाक्यम्— 'न सा स्त्रीत्यभिमन्तव्या यस्यां भर्ता न तुष्यति। तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥ अग्निसाक्षिकमित्येव भर्ता वै दैवतं परम्। दावाग्निनेव निर्दग्धा सपुष्पस्तबका लता ॥ भस्मीभवतु सा नारी यस्यां भर्ता न तुष्यति। विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः। न कार्यमिह मे नाथ जीवितेन त्वया विना ॥ मितं ददाति हि पिता

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मितं भ्राता मितं सुतः । अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखम् । विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ॥ तत्रैव 'परुषाण्यपि चोक्ताया दृष्टा दुष्टेन चक्षुषा । सुप्रसन्नमुखी भर्तुर्या नारी सा पतिव्रता ॥ न कामेषु न भोगेषु नैश्वर्ये न सुखे तथा । स्पृहा यस्या यथा पत्यौ सा नारी धर्मभागिनी ॥ पतिचित्ता पतिहिता सा पतिव्रतभागिनी । पतिप्रसादात्स्वर्गो वा तुल्यो नार्या न वा भवेत् ॥ यद्यकार्यमधर्मं वा यदि वा प्राणनाशनम् । प्रतिब्रूयाद्दरिद्रो वा व्याधितो वा कथंचन ॥ आपन्नो रिपुसंस्थो वा ब्रह्मशापार्दितोऽपि वा । आपद्धर्माननुप्रेक्ष्य तत्कार्यमविशङ्कया' इति । रागद्वेषादिना पत्यनुकूलाकरणे दोषः श्रूयते भारते— कामाद्द्वेषान्मत्सराद्वा भर्तारं यावमन्यते । सा सप्तजन्मकं यावन्नारकी स्यान्न संशयः ॥ जीवितेनापि नारी न भर्तारं वञ्चयेत्तथा । क्रिमियोनिशतं गत्वा पुल्कसी जायते ततः ॥ दरिद्रं व्याधितं मूर्खं भर्तारं यावमन्यते । सा मृता जायते स्त्री तु सूकरी च

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुनः पुनः' इति । बोधायनोऽपि— 'भर्तृहिते यतमानाः स्वर्गलोकं जयेरन् व्यतिक्रमे कृच्छ्रे' इति । तस्माद्धर्मविघ्नकरीत्वमस्ति । तथा—

सतीं त्वामहमत्यन्तं व्यवस्याम्यसतीं सतीम् ।

इति दशरथवचनेनैव असतीत्वमपि । न च 'असती कुलटेत्वरी' इति नैघण्टुकव्यवहारात् व्यभिचारिणीपर एव असतीशब्द इति वाच्यम, भर्तुराज्ञया परपुरुषसंगतानां कुन्त्योघवत्यादीनां असतीत्वं नास्तीति प्रागेवाभिहितत्वात् । भर्तृत्वं च नोपरोधादिना परपुरुषसंगता असतीति वक्तव्यम् । एवं च नाद्याभावे तदाज्ञया करणे असतीत्वं नास्ति । उपरोधवञ्चनादिसत्त्वे असतीत्वमित्यन्वयव्यतिरेकाभ्यां भर्तुरुपरोधवञ्चनादिकमेवासतीत्वे नियामकम् । तथा च वनपर्वणि सत्यभामाद्रौपदीसंवादे— 'अथाब्रवीत्सत्यभामा कृष्णस्य महिषी प्रिया । सात्राजिती याज्ञसेनीं रहसीदं सुमध्यमा ॥ केन द्रौपदि वृत्तेन पाण्डवानधितिष्ठसि । लोकपालोपमान्वीरान्यूनः परमसंहतान् ॥ कथं च वशगास्तुभ्यं

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

न कुप्यन्ति च ते शुभे। तव वश्याश्च सततं पाण्डवाः
प्रियदर्शने ॥ सुखप्रेक्ष्याश्च ते सर्वे तत्त्वमेतद्ब्रवीहि मे।
व्रतचर्या तपो वास्ति स्नानमन्त्रौषधानि वा। विद्या-
वीर्यं मूलवीर्यं जपहोमागदास्तथा॥ ममाद्याचक्ष्व पाञ्चालि
यशस्यं भगदैवतम्। येन कृष्णे भवेन्नित्यं मम कृष्णो
वशानुगः॥ एवमुक्त्वा सत्यभामा विरराम यशस्विनी।
पतिव्रता महाभागा द्रौपदी प्रत्युवाच ताम्॥
असत्स्त्रीणां समाचारं सत्ये मामनुपृच्छसि। असदाचरिते
मार्गे कथं स्यादनुकीर्तनम्॥ अनुप्रश्नः संशयो वा नैत-
त्त्वय्युपपद्यते। तथा ह्युपेता बुद्ध्या त्वं कृष्णस्य महिषी
प्रिया॥ यदैव भर्ता जानीयान्मन्त्रमूलपरां स्त्रियम्।
उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव॥ उद्विग्नस्य कुतः
शान्तिरशान्तस्य कुतः सुखम्। न जातु वशगो भर्ता
स्त्रियाः स्यान्मन्त्रकर्मणा। अमित्रप्रहितांश्चापि गदान्परम-
दारुणान्। मूलप्रचारैर्हि विषं प्रयच्छन्ति जिघांसवः॥
जिह्वया यानि पुरुषस्त्वचा वाप्युपसेवते। तत्र चूर्णानि
दत्तानि हन्युः क्षिप्रमसंशयम्॥ जलोदरसमायुक्ताः श्वि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्रिणः पलितास्तथा। अपुमांसः कृताः स्त्रीभिर्जडान्धबधिरास्तथा॥ पापानुगास्तु पापास्ताः पतीनुपसृजन्त्युत' इति। तस्माद्भर्तृनिर्बन्धनादिरूपासन्मार्गप्रवृत्त्या असतीत्वमप्यस्ति। अत एव राजर्षिर्दशरथः असतीत्युक्तवान्। तथा

क्रोधनामकृतप्रज्ञां दृप्तां सुभगमानिनीम्।
मम तां मातरं विद्धि नृशंसां पापनिश्चयाम्॥

इति भरद्वाजं प्रति भरतवचनेन कोपनात्वमप्यस्ति। न च द्रौपद्यादिष्वपि कोपो दृश्यते इत्युक्तमेवेति वाच्यम्, द्रौपदीकृतकोपस्य कुलसंरक्षणाभिप्रायकत्वेन भर्त्रनिष्टपर्यवसायित्वाभावात्। अनिष्टपर्यवसितस्यैव कोपस्य परित्यागे हेतुत्वात्; अन्यथा प्रणयकोपस्य सर्वास्वपि संभवेन सर्वासां परित्यागापत्तेः। कुलसंरक्षणाभिप्रायकत्वे च विराटपर्वणि भीमं प्रति द्रौपदी— 'आर्तयैतन्मया भीम कृतं बाष्पप्रमोचनम्। अपारयन्त्या दुःखानि न राजानमुपालभे॥ तद्धर्मे यतमानानां महान्धर्मो न शिष्यति। समयं रक्ष्यमाणायाः प्रजा भवति रक्षिता॥

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः ।। किमुक्तेन व्यतीतेन भीमसेन महाबल । उपस्थितस्य कालस्य कार्यस्यानन्तरो भव' इति । तस्मात्परित्यागहेतुभूतकोपनात्वमप्यस्ति । तथा—

सत्यं धर्मं परित्यज्य रामं राज्येऽभिषिच्य च ।
सह कौसल्यया नित्यं रन्तुमिच्छसि दुर्मते ॥

अहं हि विषमद्यैव पीत्वा बहु तवाग्रतः ।
पश्यतस्ते मरिष्यामि रामो यद्यभिषिच्यते ॥

इत्यादिना अप्रियवादित्वमपि अस्याः स्पष्टम् । सीताकौसल्यादीनामप्रियवचनं तु भर्तुरनिष्टपर्यवसन्नं न भवत्येव । तथा हि— 'शैलूष इव मां राम' इति सीतावचनम् । त्वद्विनाकृतायाः मम अतिदुष्टकैकेयीसमीपे अवस्थानं पातिव्रत्यभङ्गकरमतिक्लेशकरं च । अतः अनन्यगतिकामवश्यसंरक्षणीयां मामपि गृहीत्वा सहैव वनं प्रविशेत्येवं धर्मसंरक्षणपरमेव । एवं पुत्रवियोगमसहमानायाः कौसल्यायाः शोकपारवश्यादुदीरितं हतं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्वया राज्यमित्यादि वचनमपि न भर्तुरनिष्टापादकम्। अत एव च उत्तरत्र भर्तृनिन्दाजनितानुतापया कौसल्यया भर्तृप्रसादनं कृतम् ॥ तथा हि—

प्रसीद शिरसा याचे भूमौ निपतितास्मि ते।
याचितास्मि त्वया देव क्षन्तव्याहं न हि त्वया ॥

नैषा हि सा स्त्री भवति श्लाघनीयेन धीमता।
उभयोर्लोकयोर्वीर प्रत्ययात्संप्रसाद्यते ॥

जानामि धर्मं धर्मज्ञ त्वां जाने सत्यवादिनम्।
पुत्रशोकार्तया तत्तु मया किमपि भाषितम् ॥

इति। इयं तु कैकेयी सप्रणामं सकरुणं भर्त्रा प्रसादितापि परुषभाषणपूर्वकमहितमेव कृतवतीति। तस्य वचनं भर्तुः पुत्रस्य कुलस्य धर्मस्य चानिष्टपर्यवसाय्येव। तथा च दशरथवाक्यम्—

एतद्वचो नेच्छसि पापवृत्ते
हितं न जानासि ममात्मनो वा।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

आस्थाय मार्गं कृपणं कुचेष्टा
चेष्टा हि ते साधुपथादपेता ॥

इति । वसिष्ठवाक्यमपि—

अतिप्रवृत्ते दुर्मेधे कैकेयि कुलपांसनि ।
वञ्चयित्वा तु राजानं न प्रमाणेऽवतिष्ठसे ॥

यद्यपि त्वं क्षितितलाद्गगनं चोत्पतिष्यसि ।
पितृवंशचरित्रज्ञः सोऽन्यथा न करिष्यति ॥
तत्त्वया पुत्रगर्द्धिन्या पुत्रस्य कृतमप्रियम् ।

इति । सुमन्त्रवाक्यम्—

यस्यास्तव पतिस्त्यक्तो राजा दशरथः स्वयम् ।
न ह्यकार्यतमं किंचित्तव देवीह विद्यते ॥

पतिघ्नीं त्वामहं मन्ये कुलघ्नीमपि चान्ततः ।
मावमंस्था दशरथं भर्तारं वरदं प्रियम् ॥

भर्तुरिच्छा हि नारीणां पुत्रकोट्या विशिष्यते ।
यथावयो हि राज्यानि प्राप्नुवन्ति नृपक्षये ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इक्ष्वाकुकुलनाथेऽस्मिंस्तल्लोपयितुमिच्छसि ॥
मा त्वं प्रोत्साहिता पापैर्देवराजसमप्रभम् ।
भर्तारं लोकभर्तारमसद्धर्ममुपारुधः ॥

इति । एवं च पूर्वोदाहृतैकैकनिमित्तमात्रेण परित्यागस्यावश्यकर्तव्यत्वे निमित्तचतुष्टयसत्त्वे परित्यागो युक्त एव। किं च— 'परित्याज्या त्वया भार्या भर्तृवचनलङ्घनी । तत्र दोषो न चास्तीति त्वं हि वेत्थ यथातथम् ॥ सर्वलक्षणयुक्तापि या तु भर्तृव्यतिक्रमम् । करोति सा परित्याज्या एष धर्मः सनातनः ॥ इति ब्राह्मपुराणवचनपर्यालोचनयापि भर्तृवचनोल्लङ्घनी इयं परित्याज्यैव। यत्तोक्तमदुष्टत्वादिगुणविशिष्टायाः परित्यागे दोषश्रवणादिति तन्नोपपद्यते । रामप्रव्राजनप्राक्कालीनचर्यया कैकेय्याः दुष्टत्वाद्यपरिस्फूर्तावपि समनन्तरचर्यया दुष्टत्वौद्धत्यादीनां स्फुटत्वात्; अत एव पूर्वोदाहृतवचने पुरा ममेत्युक्तम् । तस्माद्दशरथसमुदीरितकैकेयीपरित्यागवचनं युक्तमेव । चतुर्दशप्रभृति आसप्तदशपर्यन्तम्— ततः कैकेयी पुत्रशोकार्दितं रजानमेवमवदत्—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

आहुः सत्यं हि परमं धर्मं धर्मविदो जानः ।
सत्यमाश्रित्य हि मया त्वं च धर्मे नियोजितः ॥

संश्रुत्य शैब्यः श्येनाय स्वां तनुं जगतीपतिः ।
प्रदाय पक्षिणे राजञ्जगाम गतिमुत्तमाम् ॥

तथा ह्यलर्कस्तेजस्वी ब्राह्मणे वेदपारगे ।
याचमाने स्वके नेत्रे उद्धृत्य सुमना ददौ ॥

सरितां तु पतिः स्वल्पां मर्यादां सत्यमन्वितः ।
सत्यानुरोधात्समये वेलां स्वां नातिवर्तते ॥

सत्यमेकं परं ब्रह्म सत्ये धर्मः प्रतिष्ठितः ।
सत्यमेवाक्षया वेदाः सत्येनैवाप्यते परम् ॥
सत्यं समनुवर्तस्व यदि धर्मे धृता मतिः ।

अत्र

आहुः सत्यं हि परमं धर्मं धर्मविदो जनाः ॥

इत्यादि कैकेयीवचनेन सर्वधर्मापेक्षया सत्यमेव परमो धर्म इति सूचितम् । तथा च तैत्तरीयश्रुतिः— 'सत्ये

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सर्वं प्रतिष्ठितं तस्मात्सत्यं परमं वदन्ति'। मनुरपि— 'नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम्। स्थितिश्च लोकधर्मश्च तस्मात्सत्यं विशिष्यते ॥ सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव' इति। आदिपर्वणि शकुन्तलोपाख्यानेऽपि— 'वरं कूपशताद्वापी वरं वापीशतात्क्रतुः। वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरम् ॥ अश्वमेधसहस्रं च सत्यं च तुलया धृतम्। अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ सर्ववेदाधिगमनं सर्वतीर्थावगाहनम्। सत्यं च वचनं राजन्समं च स्यान्न वा समम् ॥ नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम्। नास्ति तीव्रतरं किंचिदनृतादिह विद्यते ॥ राजन्सत्यं परं धर्मं सत्यं च समयः परः। मा स्राक्षीः समयं राजन्सत्यं संगतमस्तु ते' इति। आपद्धर्मेऽपि— 'सत्यं सत्सु सदा धर्मः सत्यं धर्मः सनातनः। सत्यमेव नमस्येत सत्यं हि परमा गतिः ॥ सत्यं धर्मस्तपो योगः सत्यं ब्रह्म सनातनम्। सत्यं यज्ञः परः प्रोक्तः सर्वं सत्ये प्रतिष्ठितम्' इति। आनुशासनिकेऽपि— 'सत्येन सूर्यस्तपति सत्ये-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नाग्निः प्रदीप्यते। सत्येन देवाः प्रीयन्ते पितरो ब्राह्मणास्तथा। सत्यमाहुः परो धर्मस्तस्मात्सत्यं न लङ्घयेत्॥ मुनयः सत्यनिरता मुनयः सत्यविक्रमाः। मुनयः सत्यशपथास्तस्मात्सत्यं विशिष्यते॥ सत्यवन्तः स्वर्गलोके मोदन्ते भरतर्षभ' इति। अत एवाग्रे चित्रकूटे भरतं प्रति श्रीरामवचनम्—

सत्यमेवानृशंस्यं च राजवृत्तं सनातनम्।
तस्मात्सत्यात्मकं राज्यं सत्ये लोकः प्रतिष्ठितः॥

ऋषयश्चैव वेदाश्च सत्यमेव हि मेनिरे।
सत्यवादी हि लोकेऽस्मिन्परमं गच्छति क्षयम्॥

उद्विजन्ते यथा सर्पान्नरादनृतवादिनः।
धर्मः सत्यं परो लोके सत्यं पद्मा समाश्रिता॥
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम्॥

दत्तमिष्टं हुतं चैव तप्तानि च तपांसि च।
वेदाः सत्यप्रतिष्ठानास्तस्मात्सत्यपरो भव॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति। ततः सफलः स वरो मेऽस्तु रामाभिषेकसंभारै-र्भरतं सत्वरमभिषेचय रामं च विपिनं प्रवेशय, अन्यथा तवाग्रतो जीवितं परित्यक्ष्यामीत्येवमादिभिः परुषतरैः कैकेयीवचनैरतिसंतप्तहृदयो राजा,

धर्मबन्धेन बद्धोऽस्मि नष्टा च मम चेतना।
ज्येष्ठं पुत्रं प्रियं रामं द्रष्टुमिच्छामि धार्मिकम्॥

इत्यवादीत्। नन्वत्र वनं गते रामे रामदर्शनं दुर्लभं मत्वा रामं द्रष्टुमिच्छामीति वदतो दशरथस्य कैकेयी-प्रार्थितवरद्वयप्रदानं धर्मत्वेनाभिमतमित्यवगम्यते, तदनुपपन्नम्। पूर्वदिनप्रतिज्ञातज्येष्ठपुत्ररामाभिषेकरूपधर्मा-न्तरविरोधापत्तेरिति चेत्, न। उभयोर्धर्मत्वाविशेषेऽपि, आपत्संरक्षणसंजातसंतोषेण दत्तवरद्वयपरिपालनस्य 'कृतघ्ने नास्ति निष्कृतिः' इति धर्मशास्त्ररीत्या कृतघ्नतादोषप-रिहारार्थत्वेन गरीयस्त्वात्; एवं च परमप्रेमास्पदज्येष्ठ-पुत्रप्रव्राजनमप्यङ्गीकृत्य धर्मपरिपालनात्, इतरैरपि स्त्री-पुत्रस्वप्राणादिपरित्यागेनापि धर्मसंरक्षणं कर्तव्यमिति सूचितम्। तथा च भारते— 'न जातु कामान्न भयान्न

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः । नित्यो धर्मः सुख-दुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः' इति । मनुरपि— 'धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः । तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतो वधीत् ॥' इति । न च 'सत्यं समनुवर्तस्व' इति कैकेयीवचनस्य 'सत्यपाशेन बद्धोऽस्मि' इत्येव प्रतिवचनमुचितम्, न तु 'धर्मपाशेन बद्धोऽस्मि' इतीति वाच्यम्; सत्यधर्मयोरभेदात् । तथा च बृहदारण्यके 'यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तमाहुः सत्यं वदतीति' । एवं च श्रुतिस्मृतीतिहासपुराणादिषु सत्या-सत्यधर्मयोः पृथक्पृथक्प्रशंसनं सामान्यविशेषरूपत्वादुपपन्नम् । तथा च मनुः— 'ब्राह्मणो वा मनुष्याणामादित्यस्तेजसामिव । शिरो वा सर्वगात्राणां धर्माणां सत्यमुत्तमम्' इति । अतस्तया कैकेय्या प्रार्थितं सत्यपरिपालनमेव धर्मत्वेन व्यवहृतवानिति न विरोध इति । ततः प्रभातायां रजन्यां कैकेयी वसिष्ठाभ्यनुज्ञया राजानं प्रबोधयितुकामं सुमन्त्रम्— 'निद्रापरवशो राजा न प्रबोधनीयः, इहैव



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्वरितं राममानय' इत्यवोचत् । ततः सुमन्त्रोऽपि तदाज्ञया अपरमिव महेन्द्रभवनं राममन्दिरमासाद्य 'कैकेयीसहितो राजा त्वां द्रष्टुमिच्छति' इति रामभद्रमवादीत् । तद्वचनश्रवणसंभृतहर्षेण रामेण 'देव्या कैकेय्या सह संमन्त्र्य मां यौवराज्येऽभिषेचयितुमाकारयति राजा, अतस्तं द्रष्टुमभिगच्छामि, त्वमपि सहैताभिः सखीभिः सुखं विहर' इत्यभिहिता सीता

आद्वारमनुवव्राज मङ्गलान्यभिदध्युषी ।
पूर्वां दिशं वज्रधरो दक्षिणां पातु ते यमः ।
वरुणः पश्चिमामाशां धनेशस्तूत्तरां दिशम् ॥

अत्र भार्यया सीतया श्रीराममुद्दिश्य मङ्गलस्य कृतत्वात्, महाप्रयोजनं साधयितुं व्रजतः निकटस्थेन येन केनचिदवश्यं मङ्गलं कर्तव्यम्, महतामसंनिधाने भार्ययापि कर्तव्यमिति सूचितम् । यथा चानुशासनिके साम्बोत्पत्तौ कृष्णं प्रति जाम्बवती मङ्गलं कृतवतीति श्रूयते— 'यथा ते जनिताः पुत्रा रुक्मिण्यां चारुविक्रमाः । तथा ममापि तनयं प्रयच्छ मधुसूदन ॥ इत्येवं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

चोदितो देव्या तामबोचं सुमध्यमाम् । अनुजानीहि मां राज्ञि करिष्ये वचनं तव ॥ सा च मामब्रवीद्गच्छ शिवाय विजयाय च । ब्रह्मा शिवः काश्यपश्च नद्यो देवा मनोनुगाः ॥ देवौषध्यो यज्ञभागाश्छन्दांस्यृषिगणा धरा । समुद्रा दक्षिणास्तोभौ ऋक्षाणि पितरो ग्रहाः ॥ देवपत्न्यो देवकन्या देवमातर एव च । मन्वन्तराणि गावश्च चन्द्रमाः सविता हरिः ॥ सावित्री ब्रह्मविद्या च ऋतवो वत्सरास्तथा । क्षणा लवा मुहूर्ताश्च निमेषा युगपर्ययाः ॥ रक्षन्तु सर्वत्रगतं त्वां यादवसुखाय च । अरिष्टं गच्छ पन्थानमप्रमत्तो भवानघ ॥ एवं कृतस्वस्त्ययनस्तथाहं ततोऽभ्यनुज्ञाय नरेन्द्रपुत्रीम्' इति । आरण्यपर्वण्यपि 'तौ परिष्वज्य बीभत्सुः कृष्णामामन्त्र्य चाप्युभौ । अभ्यवादयत प्रीतः तपस्विप्रवरानपि ॥ मनांस्यादाय सर्वेषां प्रयातः पुरुषर्षभः । तं सिंहमिव गच्छन्तं सिंहस्कन्धोरसं तथा ॥ प्राञ्जलिः पाण्डवं कृष्णा देवानां कुर्वती नमः । वाग्भिः परमशुक्लाभिर्मङ्गलाभिरभाषत ॥ नमो धात्रे च संधात्रे स्वस्ति गच्छ वनाद्वनम् । धर्मस्त्वां जुषतां पार्थ भास्करश्च

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विश्वावसुः ॥ ब्रह्मा त्वां ब्राह्मणाश्चैव पालयन्तु धनंजय। ज्येष्ठाय चापि ज्येष्ठस्य भ्रातुर्वचनमास्थितः । प्रपद्येथा वसून्रुद्रानादित्यान्समरुद्गणान् ॥ विश्वेदेवांस्तथा साध्याञ्शान्त्यर्थं भरतर्षभ । स्वस्ति तेऽस्त्वन्तरिक्षेभ्यो दिव्येभ्यो भरतर्षभ ॥ पार्थिवेभ्यश्च सर्वेभ्यो ये केचित्परिपन्थिनः' इति । ततः सौमित्रिणा सह दिव्याश्वयुक्तमलंकृतं रथवरमास्थाय सकलजनानन्दनो रघुनन्दनोऽम्बरचुम्बिनीः सौधमालाः पश्यन्

चतुष्पथान्देवपथांश्चैत्यान्यायतनानि च ।
प्रदक्षिणं परिहरञ्जगाम नृपतेः सुतः ॥

अत्र देवायतनादीन्प्रदक्षिणं परिगत्य रामो गत इत्यनेन इतरैरप्येवं प्रदक्षिणीकृत्यैव गन्तव्यमिति सूचितम् । तथा च गौतमः— 'प्रशस्तमाङ्गल्यदेवायतनचतुष्पथान्प्रदक्षिणमावर्तयेत' इति । मनुरपि— 'मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन्' इति । आनुशासनिकेऽपि— 'प्रदक्षिणं च कुर्वीत सर्वानेव वनस्पतीन् । चतुष्पथांश्च कुर्वीत सर्वानेव प्रदक्षि-

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

णम्' इति । अष्टादशे— ततो रामो राजभवनमभ्येत्य कैकेय्या सह समासीनं विषण्णवदनं राजानमवलोक्य चिन्ताकुलहृदयः, 'किंनिमित्तोऽयमभूतपूर्वो राज्ञो विकारः, किं वा कोपकारणम्, कुतो वा यथापूर्वं मां नाभिनन्दति,

अतोषयन्महाराजमकुर्वन्वा पितुर्वचः ।
मुहूर्तमपि नेच्छेयं जीवितुं कुपिते नृपे ॥

यतोमूलं नरः पश्येत्प्रादुर्भावमिहात्मनः ।
कथं तस्मिन्न वर्तेत प्रत्यक्षे सति दैवते ॥

नाहमात्मकृतमपराधं कंचित्पश्यामि तदाख्यातु भवती' इति कैकेयीमवदत् । अत्र, अतोषयन्नित्यादिश्लोकद्वयेन स्वोत्पत्तिकारणभूतत्वात् प्रत्यक्षदैवते पितरि कथं न वर्तेत, अतस्तत्संतोषणं तद्वचनपरिपालनं चाकृत्वा मुहूर्तमपि न जीवेयमिति प्रतिपादनेन इतरैरपि स्वोत्पत्तिकारणभूतानां मातापित्राचार्याणां त्रयाणां शुश्रूषणं तेषां वचनपरिपालनं संतोषणं च कर्तव्यम् । प्रत्यक्षे सति दैवते

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यनेन च, अतीन्द्रियदेवतोपासनायाः असुकरत्वात् तत्प्रसादस्य च अप्रत्यक्षत्वात् उपासनायामङ्गवैकल्यप्रयुक्तदोषस्य संभावितत्वाच्च इतरदेवतोपासनापेक्षया प्रत्यक्षदेवतीभूतानां मातापित्राचार्याणामुपासनमेव श्रेष्ठमिति सूचितम् । ननु मातापित्रोर्जनकत्वे सत्यपि, आचार्यस्य जनकत्वं नोपपद्यत इति चेन्न । मातापित्रोः शरीरजनकत्ववत् आचार्यस्यापि विद्यातः जनकत्वात् । तथा चापस्तम्बाचार्याः 'स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म शरीरमेव मातापितरौ जनयतः' इति । तस्माज्जनकत्वाविशेषात् मातापित्राचार्याणां त्रयाणामपि शुश्रूषणादिकं कर्तव्यमिति यदुक्तं तद्युक्तमेव । तत्र तेषां शुश्रूषायां मनुः— 'यावत्त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत् । तेष्वेव नित्यं शुश्रूषां कुर्यात्प्रियहिते रतः ॥ सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः । अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः' ॥ उशना अपि— 'यः सावयति या सूते येन विद्योपदिश्यते । ज्येष्ठभ्राता च भर्ता च पञ्चैते गुरवस्तथा ॥ आत्मनः सर्वयत्नेन प्राणत्यागेन वा पुनः । पूज-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नीयां विशेषेण पञ्चैते भूतिमिच्छता ॥ यावत्पिता च माता च द्वावेतौ जनिकारकौ । तावत्सर्वं परित्यज्य पुत्रः स्यात्तत्परायणः’। अत्रैवाग्रे—

न सत्यं दानमानौ वा न यज्ञाश्चाप्तदक्षिणाः ।
तथा बलकराः सीते यथा सेवा पितुर्मता ॥

स्वर्गो धनं वा धान्यं वा विद्या पुत्राः सुखानि च ।
गुरुवृत्त्यनुरोधेन न किंचिदपि दुर्लभम् ॥

देवगन्धर्वगोलोकान्ब्रह्मलोकांस्तथा नराः ।
प्राप्नुवन्ति महात्मानो मातापितृपरायणाः ॥

इति । वनपर्वणि पितरौ पूजनीयावित्यत्र ब्राह्मणं प्रति धर्मव्याधवचनम्— ‘त्वया विनिकृता माता पिता च द्विजसत्तम । अनिसृष्टोऽसि निष्क्रान्तो गृहात्ताभ्यामनिन्दित ॥ तव शोकेन वृद्धौ तावन्धीभूतौ तपस्विनौ । तौ प्रसादयितुं गच्छ मां त्वां धर्मोऽतिगादयम् ॥ तपस्वी त्वं महात्मा च धर्मे च निरतः सदा । सर्वमेतदपार्थं ते क्षिप्रं तौ संप्रसादय ॥ श्रद्दधत्स्व च मम ब्रह्मन्नान्यथा कर्तुमर्हसि ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गम्यतामद्य विप्रर्षे श्रेयस्ते कथयाम्यहम् ॥ अतन्द्रितः कुरु क्षिप्रं मातापित्रोर्हि पूजनम् । अतः परमहं धर्मं नान्यं पश्यामि कंचन' ॥ ब्राह्मणः—'पतमानोऽद्य नरके भवतास्मि समुद्धृतः । राजा ययातिर्दौहित्रैः पतितस्तारितो यथा ॥ सद्भिः पुरुषशार्दूल तथाहं भवता त्विह । मातापितृभ्यां शुश्रूषां करिष्ये वचनात्तव ॥ नाकृतात्मा वेदयति धर्माधर्मविनिश्चयम्' । तत्रैव धर्मव्याधवचने शुश्रूषाविषये— 'एतदर्थं मम प्राणा भार्या पुत्राः सुहृज्जनाः । सपुत्रदारः शुश्रूषां नित्यमेवं करोम्यहम् ॥ स्वयं च स्नापयाम्येतौ तथा पादौ प्रधावये । आहारं संप्रयच्छामि स्वयं च द्विजसत्तम ॥ एतौ पुष्पैः फलै रत्नैस्तोषयामि सदा द्विज । अनुकूलं तथा वच्मि विप्रियं परिवर्जयन् ॥ अतन्द्रितः सदा विप्र शुश्रूषां वै करोम्यहम् । पञ्चैते गुरवो ब्रह्मन्पुरुषस्य बुभूषतः ॥ पिता माताग्निरात्मा च गुरुश्च द्विजसत्तम । एतेषु यस्तु वर्तेत सम्यगेव द्विजोत्तम ॥ भवेयुरग्नयस्तस्य परिचीर्णास्तु नित्यशः । गार्हस्थ्ये वर्तमानस्य एष धर्मः सनातनः' । पित्रादिवचनपरिपालने अत्रैव—

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

स मां पिता यथा शास्ति सत्यधर्मपथे स्थितः ।
तथा वर्तितुमिच्छामि स हि धर्मः सनातनः ॥

पितुर्हि वचनं कुर्वन्न कश्चिन्नाम हीयते ।
प्रतिसंश्रुत्य पितुर्वाक्यं पितुर्वा ब्राह्मणस्य वा ॥

न कर्तव्यं वृथा वीर धर्ममाश्रित्य तिष्ठताम् ।
त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया ॥

पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः ।
पिता हि दैवतं तात दैवतानामपि स्मृतम् ॥
तस्माद्दैवतमित्येव करिष्यामि पितुर्वचः ।

भारते आनुशासनिके— 'मातुः पितुर्गुरूणां च कार्यमेवानुशासनम् । हितं वाप्यहितं वापि न विचार्यं नरर्षभ' इति । पित्रादिसंतोषकरणे मनुः— 'तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा । तेषु हि त्रिषु तुष्टेषु तपः सर्वं समाप्यते' । उशना च— 'पिता माता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि । स पुत्रः सकलं कर्म प्राप्नुयात्तेन कर्मणा ॥ तयोर्नित्यं प्रियं कुर्यात्कर्मणा मनसा गिरा' । तेषां सकलदेवतास्वरूपत्वे मनुः— 'आचार्यो ब्रह्मणो मूर्तिः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पिता मूर्तिः प्रजापतेः । माता पृथिव्या मूर्तिस्तु भ्राता स्वो मूर्तिरात्मनः ॥ त एव हि त्रयो लोकास्त एव त्रय आश्रमाः । त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥ पिता वै गार्हपत्योऽग्निर्माता वै दक्षिणः स्मृतः । गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ॥ नास्ति मातृसमं दैवं नास्ति पित्रा समो गुरुः' इति । वनपर्वणि पतिव्रतोपाख्याने कौशिक-धर्मव्याधसंवादे व्याधः— 'पिता माता च भगवानेतौ मे दैवतं परम् । यद्दैवतेभ्यः कर्तव्यं तद्देवाभ्यां करोम्यहम् ॥ त्रयस्त्रिंशद्यथा देवाः सर्वे शक्रपुरोगमाः । संपूज्याः सर्व-लोकस्य तथा वृद्धाविमौ मम ॥ उपहारानाहरन्तो देव-तानां यथा द्विजाः । कुर्वन्ति तद्वदेताभ्यां करोम्यहमत-न्द्रितः ॥ एतौ मे परमं ब्रह्मन्पिता माता च दैवतम् । एतावेवाग्नयो मह्यं यान्वदन्ति मनीषिणः ॥ यज्ञा वेदाश्च चत्वारः सर्वमेतौ मम द्विज । यावत्त्रयस्ते जीवेयुस्तावन्ना-न्यं समाचरेत् ॥ त्रिष्वप्रमाद्यन्नेतेषु ब्रह्मलोकं समश्नुते । तेषामनुपरोधेन पारक्यं यद्यदाचरेत् ॥ तत्तन्निवेदये-त्तेभ्यो मनोवाक्कायकर्मभिः । त्रिष्वेतेष्वितिकृत्यं हि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुरुषस्य समाप्यते ॥ एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते । तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा ॥ न ताभ्यामननुज्ञातो धर्ममन्यं समाचरेत्' इति । ततश्चायं वित-तश्चायं विकारो न त्वदीयापराधेन नापि शरीरोपद्रवेणा-न्येन वा केनचिज्जनितः, किंतु त्वदनिष्टभूतमत्प्रार्थितवर-द्वयनिर्वाहः कथं भवेत्, कथं वा प्रियार्हं त्वामप्रियं वक्तुं प्रभवामीति चिन्तासमुत्पन्नोऽयं विकारः, तद्भवाञ्शु-भमशुभं वा राज्ञो मनोगतं यदि करिष्यति तदा तदाख्या-स्यामीति कैकेय्या निर्लज्जमभिहितः श्रीरामभद्रस्तामेव-मवोचत्—

अहं हि वचनाद्राज्ञः पतेयमपि पावके ।
भक्षयेयं विषं तीक्ष्णं मज्जेयमपि चार्णवे ॥

नियुक्तो गुरुणा पित्रा नृपेण च हितेन च ।
तद्ब्रूहि वचनं देवि राज्ञो यदभिकाङ्क्षितम् ॥
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ।

इति । अत्र पित्राज्ञया परोपद्रवरूपावध्यवधादिकं क्रियत इत्यनुक्त्वा स्वोपद्रवमात्रपर्यवसन्नाग्निपतनविषभ-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्षपार्णवमज्जनानि क्रियन्त इत्युक्त्वा परोपद्रवः सर्वथा न चिन्तनीय इति सूचितम्। तथा च विष्णुपुराणे— 'अन्येषां यो न पापानि चिन्तयत्यात्मनो यथा। तस्य पापागमस्तात हेत्वभावान्न विद्यते' इति। 'नियुक्तो गुरुणा पित्रा नृपेण च हितेन च' इत्यादिद्वितीयश्लोकेन गुरुपितृनृपहितकारिणां वचनं कर्तव्यमित्युक्तम्। तत्र गुरुपित्रोर्वचनकरणे प्राक्प्रमाणं प्रतिपादितम्। नृपवचनकरणे विष्णुपुराणे— 'ब्रह्मा जनार्दनः शंभुरिन्द्रो वायुर्यमो रविः। हुतभुग्वरुणो धाता पूषा भूमिर्निशाकरः॥ नृपस्यैते शरीरस्थाः सर्वदेवमयो नृपः। भर्तृशुश्रूषणं धर्मो यथा स्त्रीणां परो मतः॥ ममाज्ञापालनं धर्मो भवतां च तथा द्विजाः' इति वेनस्य राज्ञो वचनेन नृपवचनं कर्तव्यमेव। हितकारिणां वचनकरणे, आदिपर्वणि धृतराष्ट्रं प्रति विदुरवचनम्— 'प्रियं हितं च तद्वाक्यमुक्तवान्कुरुसत्तमः। भीष्मः शान्तनवो राजन्प्रतिगृह्णीष्व तच्च वै' इति। एवं पृथक् चतुर्णामपि वचनानां परिपालनीयत्वेन एक एव दशरथः, गुरुः, पिता, प्रियः, राजा, चेति,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तद्वचनमवश्यं परिपालनीयमेव । ततः एवं ब्रुवाणमति-सरलहृदयं राममवलोक्य— 'प्राक्प्रतिश्रुतवरद्वये एकेन त्वद्विवासनमन्येन च भरताय राज्यप्रदानं कुर्वित्यभिहितोऽयं राजा त्वयि स्नेहपारवश्येन वक्तुं न प्रभवति, तद्वरद्वयनिर्वहणेन सत्यप्रतिज्ञं राजानं कुरु' इत्यवोचत् । एकोनविंशे— ततः कठोरतरं कैकेयीवचनमाकर्ण्याप्यकलुषितहृदयेन रामभद्रेण 'प्रतिज्ञामनुपालयन् परिगृहीतमुनिवेषोऽहं वनं यास्यमि, मातुलकुलाद्भरतानयनायाद्यैव शीघ्रजवैर्हयैः प्रेष्यतां दूतवर्गः' इत्यभिहिता कैकेयी समभाषत—

एवं भवतु यास्यन्ति दूताः शीघ्रजवैर्हयैः ।
न त्वहं क्षमं मन्ये नोत्सुकस्य विलम्बनम् ॥

यावत्त्वं न वनं यातः पुरादस्मादभित्वरन् ।
पिता तावन्न ते राम स्नास्यते भोक्ष्यतेऽपि वा ॥

इति । ततो हृदयशल्यभूतं कैकेयीवचनमाकर्ण्य मूर्छया भूमौ निपतितं राजानं पुनरासन उपवेश्य कशयाभि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हतो जात्यश्व इव कैकेयीवचसा वनगमने कृतत्वरो रामभद्रस्तामेवमवादीत् ।

नाहमर्थपरो देवि लोकमानस्तमुत्सहे ।
विद्धि मामृषिभिस्तुल्यं केवलं धर्ममास्थितम् ॥

अत्र धर्म एव संपादनीयः, अर्थस्त्वप्रयोजक इत्युक्तं तदनुपपन्नम् । अर्थस्यापि धर्मसाधनत्वेनापेक्षणीयत्वात् । तथा च श्रुतिः बृहदारण्यके— 'अथ वित्तं मे स्यादथ कर्म कुर्वीयेति' इति । युद्धकाण्डे रामं प्रति लक्ष्मणवाक्य-मपि—

धर्ममूलं त्वया छिन्नं राज्यमुत्सृजता तदा ।
अर्थेभ्योऽथ विवृद्धेभ्यः संवृत्तेभ्यस्ततस्ततः ॥

क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ।
अर्थेन हि वियुक्तस्य पुरुषस्याल्पतेजसः ॥

व्युच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ।
सोऽयमर्थं परित्यज्य सुखकामः समेधितः ॥

पापमारभते कर्तुं ततो दोषः प्रवर्तते ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ॥

यस्यार्थाः स पुमान् लोके
यस्यार्थाः स च पण्डितः ।
यस्यार्थाः स च विक्रान्तो
यस्यार्थाः स च बुद्धिमान् ॥

यस्यार्थाः स महाभागो
यस्यार्थाः स गुणान्वितः ।
यदि धर्मो भवेद्भूतः
सत्यधर्मपराक्रमः ॥

अर्थस्यैते परित्यागे दोषाः प्रव्याहृता मया ।
यस्यार्था धर्मकामार्थास्तस्य सर्वे प्रदक्षिणाः ॥

हर्षः कामश्च दर्पश्च धर्मः क्रोधः शमो दमः ।
अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ॥

येषां नश्यत्ययं लोकश्चरतां धर्मचारिणाम् ।
तेऽर्थास्त्वयि न दृश्यन्ते दुर्दिनेषु यथा ग्रहाः ॥

इति । विष्णुपुराणे—'सोमसंस्था हविःसंस्थाः पाक-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संस्थाश्च संस्थिता:। धने यतो मनुष्याणां यतेतातो धनार्जने ॥ भारते आरण्यके पर्वणि युधिष्ठिरं प्रति भीष्मवचनम्—दानं यज्ञ: सतां पूजा वेदधारणमार्जवम्। एष धर्म: परो राजन् बलवान् प्रेत्य चेह च। एष नार्थविहीनेन शक्यो राजन्निषेवितुम्॥ अखिला: पुरुषव्याघ्र गुणा: स्युर्यद्यपीतरे। धर्ममूलं जगद्राजन् नान्यद्धर्मो विशिष्यते॥ धर्मश्चार्थेन महता शक्यो राजन्निषेवितुम्। न चार्थो भैक्ष्यचर्येण नापि क्लैब्येन कर्हिचित्॥ वेत्तुं शक्य: सदा राजन् केवलं धर्मबुद्धिना'। तस्माद्धर्मसाधनत्वेन अर्थस्यापेक्षणीयत्वात् अर्थानपेक्षा कुत इति चेन्न। नाहमर्थपर इति वचनं धर्मविरुद्धार्थनिषेधपरम्। तथा च मनु:— 'परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ'। विष्णुपुराणेऽपि— 'परित्यजेदर्थकामौ धर्मपीडाकरौ नृप'। तत्रैव 'प्रबुद्धश्चिन्तयेद्धर्ममर्थं चास्याविरोधिनम्। स्वधर्मस्याविरोधेन नरैर्लभ्यं धनं सदा'। आपस्तम्बोऽपि धर्मार्थसंनिपाते— 'अर्थग्राहिण एते देव'। अत्रैव

धर्मार्थकामा: खलु तात लोके
समीहिता धर्मफलोदयेषु।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ते तत्र सर्वे स्युरसंशयं मे
भार्येव वश्याभिमता सपुत्रा ॥
यस्मिंस्तु सर्वे स्युरसंनिविष्टा
धर्मो यतः स्यात्तदुपक्रमेत ।
द्वेष्यो भवत्यर्थपरो हि लोके
कामात्मना खल्वपि न प्रशस्ता ॥

इति । तस्मात् उक्तप्रकारेण धर्मविरुद्धार्थपरित्यागस्य युक्तत्वात् प्रकृते पितृवाक्यपरिपालनरूपधर्मविरुद्धस्य राज्यरूपार्थस्य धर्मज्ञेन रामेण कृतः परित्यागो युक्त एव ।

न नूनं मयि कैकेयि कंचिदाशंससे गुणम् ।
यद्राजानमवोचस्त्वं ममेश्वरतरा सती ॥

तदद्यैव त्वद्वचनाद्दण्डकान्प्रविशामीत्यभिधाय शोकवशेन सस्वनं प्ररुदन्तं पितरमभिवाद्य प्रदक्षिणीकृत्याभिषेकसंभारानापृच्छ्य च सुहृज्जनं परित्यज्य राज्यचिह्नानि विसृज्य च पौरजनान् स्वसुहृज्जनविपत्तिशङ्कया तत्समयसमुदितं सहजधैर्येण संनिगृह्य हर्षोत्कर्षमेव प्रकटीकुर्वन् अश्रुपूर्णनयनेन लक्ष्मणेनानुगम्यमानः मातुरनुज्ञां ग्रहीतुमन्तःपुरान्निर्जगाम ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विंशे सर्गे—

तस्मिंस्तु पुरुषव्याघ्रे निष्क्रामति कृताञ्जलौ ।
आर्तशब्दो महान् जज्ञे स्त्रीणामन्तःपुरे तदा ॥

रामस्तु भृशमायस्तो निःश्वसन्निव कुञ्जरः ।
जगाम सहितो भ्रात्रा मातुरन्तःपुरं वशी ॥

ततो द्वारपालकावेदितरामागमनवृत्तान्तया व्रताचरणकर्शितया कौसल्यया संतोषातिशयेन प्रत्युद्गम्याशीर्भिरभिनन्द्य मणिमयमासनमिदमत्रास्यतामिदं च दिव्यमन्नमुपभुज्यतामिति समाज्ञप्तो रामभद्रः,

देवि नूनं न जानीषे महद्भयमुपस्थितम् ।
इदं तव च दुःखाय वैदेह्या लक्ष्मणस्य च ॥

भरताय महाराजो यौवराज्यं प्रयच्छति ।
मां पुनर्दण्डकारण्ये विवासयति तापसम् ॥

स षट् चाष्टौ च वर्षाणि वत्स्यामि विजने वने ।
आसेवमानो वन्यानि फलमूलैश्च वर्तयन् ॥

गमिष्ये दण्डकारण्यं किमनेनासनेन मे ।
विष्टरासनयोग्यो हि कालोऽयं मामुपस्थितः ॥

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

इत्यब्रवीत् । ततश्च तद्वचनश्रवणमात्रेण परशुसंकृत्तां कदलीमिव भूमौ निपतितां पांसुरूषितसर्वाङ्गीं मातरं ससंभ्रमं स्वासने उपवेश्य तद्गात्रसंलग्नं पांसुनिकरं सुख-संस्पर्शेन पाणितलेन परिममर्श । तत्करतलस्पर्शमात्रेण लब्धसंज्ञा कौसल्या,

यदि पुत्र न जायेथा मम शोकाय राघव ।
मा स्म दुःखमतो भूयः पश्येयमहमप्रजाः ॥

न दृष्टपूर्वं कल्याणं सुखं वा पतिपौरुषे ।
अपि पुत्रेऽपि पश्येयमिति रामास्थितं मया ॥

सा बहून्यमनोज्ञानि वाक्यानि हृदयच्छिदाम् ।
अहं श्रोष्ये सपत्नीनामवराणां वरा सती ॥

नित्यक्रोधतया तस्याः कथं नु खरवादि तत् ।
कैकेय्या वदनं द्रष्टुं पुत्र शक्ष्यामि दुर्गता ॥

दश सप्त च वर्षाणि तव जातस्य राघव ।
आसितानि प्रकाङ्क्षन्त्या मया दुःखपरिक्षयम् ॥

इदं तु दुःखं यदनर्थकानि मे
व्रतानि दानानि च संयमाश्च हि ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तपश्च तप्तं यदपत्यकारणा-
त्तन्निष्फलं बीजमिवोप्तमूषरे ॥

भृशमसुखममर्षिता तदा
बहु विललाप समीक्ष्य राघवम् ।
व्यसनमुपनिशाम्य सा मह-
त्सुतमिव बद्धमवेक्ष्य किन्नरी ॥

एकविंशे— ततो लक्ष्मणः सकरुणां विलपन्तीं कौसल्यां वनवासाय कृतनिश्चयं रामं चावेक्ष्य तत्काल-सदृशमेवमवादीत् । कैकेयीप्रेरणेन कार्याकार्यविवेक-विधुरस्य राज्ञो दशरथस्य वचनं न प्रमाणीकर्तुमर्हति भवान् ।

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥

अतो राजानं निगृह्य मदीयभुजबलनिरस्तारातिमण्डल-मखिलमपि महीमण्डलं पालयतु भवान् । को हि नाम ज्येष्ठातिलङ्घनेन कनिष्ठाय राज्यं प्रदास्यति । तदलं शो-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कावेगेनेत्यवोचत् । ततः लक्ष्मणवचनश्रवणमात्रेण निर-स्तसमस्तशोका कौसल्या राममेवमेवावोचत् ।

भ्रातुस्ते वदतः पुत्र लक्ष्मणस्य श्रुतं त्वया ।
यदत्रानन्तरं कार्यं कुरुष्व यदि रोचते ॥

धर्मज्ञ यदि धर्मिष्ठ धर्मं चरितुमिच्छसि ।
शुश्रूष मामिहस्थस्त्वं चर धर्ममनुत्तमम् ॥

शुश्रूषुर्जननीं पुत्र स्वगृहे नियतो वसन् ।
परेण तपसा युक्तः काश्यपस्त्रिदिवं गतः ॥

यथैव राजा पूज्यस्ते गौरवेण तथास्म्यहम् ।
त्वां नाहमनुजानामि न गन्तव्यमितो वनम् ॥

इति । ततो रामभद्रः सकरुणं विलपन्तीं कौसल्यां सान्त्वनशतैः परिसान्त्व्य पार्श्वतो बद्धाञ्जलिं लक्ष्मण-मवलोक्य मयि स्नेहवशेन मातुः क्लेशनिरसनाय च धर्म-विरुद्धं वदति भवानपि धर्मस्वरूपाभिज्ञः ।

धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् ।
धर्मसंश्रितमेतच्च पितुर्वचनमुत्तमम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संश्रुत्य च पितुर्वाक्यं मातुर्वा ब्राह्मणस्य वा ।
न कर्तव्यं वृथा वीर धर्ममाश्रित्य तिष्ठता ॥

तथाचानुशासनिके—गुरूणां चैव निर्बन्धो न कर्तव्यः कदाचन । अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युधिष्ठिर ॥ सम्यङ् मिथ्याप्रवृत्तेऽपि वर्तितव्यं गुराविह । गुरुनिन्दा दहत्यायुर्मनुष्याणां नराधिप ॥ इति ।

तदेनां विसृजानार्यां क्षत्रधर्माश्रितां मतिम् ।
धर्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धिरनुमन्यताम् ॥

इति अभिधाय पुनरपि सप्रणामं कौसल्यामेवमवदत् ।

अनुमन्यस्व मां देवि गमिष्यन्तमितो वनम् ।
शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे ॥

वनवासादिहैष्यामि पुनः कृत्वा पितुर्वचः ।
त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया ॥

पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः ।
वनवासकृता बुद्धिर्मम धर्म्यानुवर्त्यताम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स मातरं चैव विसंज्ञकल्पा-
मार्तं च सौमित्रिमभिप्रतप्तम् ।
धर्मे स्थितो धर्म्यमुवाच वाक्यं
यथा स एवार्हति तत्र वक्तुम् ॥

धर्मार्थकामाः किल तात लोके
समीक्षिता धर्मफलोदयेषु ।
ते तत्र सर्वे स्युरसंशयं मे
भार्येव वश्याभिमता सपुत्रा ॥

यस्मिंस्तु सर्वे स्युरसंनिविष्टा
धर्मो यतः स्यात्तदुपक्रमेत ।
द्वेष्यो भवत्यर्थपरो हि लोके
कामात्मता खल्वपि न प्रशस्ता ॥

गुरुश्च राजा च पिता च वृद्धः
क्रोधात्प्रहर्षाद्यदि वापि कामात् ।
यद्व्यादिशेत्कार्यमवेक्ष्य धर्मं
कस्तं न कुर्यादनृशंसवृत्तिः ॥

स वै न शक्नोमि पितुः प्रतिज्ञा-
मिमामकर्तुं सकलां यथावत् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स ह्यावयोस्तात गुरुर्नियोगे
देव्याश्च भर्ता स गतिः स धर्मः ॥

तस्मिन्पुनर्जीवति धर्मराजे
विशेषतः स्वे पथि वर्तमाने ।
देवी मया सार्धमितोऽपगच्छे-
त्कथं स्विदन्या विधवेव नारी ॥

अनेन स्त्रिया भर्तुर्यावदवस्थानं तावत्तत्समीपे अवस्थानं तत ऊर्ध्वं पुत्रस्य समीपे अवस्थानमिति सूचितम् । तथा च मनुः— 'बाल्ये पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने । पुत्राणां भर्तरि प्रेते न भजेत स्वतन्त्रताम् ॥' इति ।

सा मानुमन्यस्व वनं व्रजन्तं
कुरुष्व च स्वस्त्ययनानि देवि ।
यथा समाप्ते पुनराव्रजेयं
यथा हि सत्येन पुनर्ययातिः ॥

यशो ह्यहं केवलराज्यकारणा-
न्न पृष्ठतः कर्तुमलं महोदयम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अदीर्घकाले न तु देवि जीविते
वृणेऽवरामद्य महीमधर्मतः ॥

द्वाविंशे—

निगृह्य रोषं शोकं च धैर्यमाश्रित्य केवलम् ।
अवमानं निरस्येमं गृहीत्वा हर्षमुत्तमम् ॥
उपक्लृप्तं हि यत्किंचिदभिषेकार्थमद्य मे ।
सर्वं विसर्जय क्षिप्रं कुरु कार्यं निरत्ययम् ॥
सौमित्रे योऽभिषेकार्थे मम संभारसंभ्रमः ।
अभिषेकनिवृत्त्यर्थे सोऽस्तु संभारसंभ्रमः ॥
यस्या मदभिषेकार्थे मानसं परितप्यते ।
माता मे सा यथा न स्यात्सविकारं तथा कुरु ॥
तस्याः शङ्कामयं दुःखं मुहूर्तमपि नोत्सहे ।
मनसि प्रतिसंजातं सौमित्रे मामुपेक्षितुम् ॥
न बुद्धिपूर्वं नाबुद्धं स्मरामीह कदाचन ।
मातॄणां वा पितुर्वाहं कृतमल्पं च विप्रियम् ॥
सत्यः सत्याभिसंधश्च नित्यं सत्यपराक्रमः ।
परलोकभयाद्भीतो निर्भयोऽस्तु पिता मम ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्यापि हि भवेदस्मिन्कर्मण्यप्रतिसंहृते ।
सत्यं नेति मनस्तापस्तस्य तापस्तपेच्च माम् ॥
अभिषेकविधानं तु तस्मात्संहृत्य लक्ष्मण ।
अन्वगेवाहमिच्छामि वनं गन्तुमितः पुनः ॥

मम प्रव्राजनादद्य कृतकृत्या नृपात्मजा ।
सुतं भरतमव्यग्रमभिषेचयिता ततः ॥
मयि चीराजिनधरे जटामण्डलधारिणि ।
गतेऽरण्यं च कैकेय्या भविष्यति मनःसुखम् ॥
बुद्धिः प्रणीता येनेयं मनश्च सुसमाहितम् ।
तं तु नार्हामि संक्लेष्टुं प्रव्रजिष्यामि मा चिरम् ॥
कृतान्तस्त्वेव सौमित्रे द्रष्टव्यो मत्प्रवासने ।
राज्यस्य च वितीर्णस्य पुनरेव निवर्तने ॥
कैकेय्याः प्रतिपत्तिर्हि कथं स्यान्मम पीडने ।
यदि भावो न दैवो हि कृतान्तविहितो भवेत् ॥
जानासि हि यथा सौम्य न मातृषु ममान्तरम् ।

अत्र रामः सर्वा अपि मातृः कौसल्यावत्पश्यतीत्यर्थः । अयमर्थोऽग्रे रामगमनसमये

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

कौसल्यायां महातेजा यथा मातरि वर्तते।
तथा यो वर्ततेऽस्मासु स महात्मा क गच्छति॥

इति राज्ञोऽवरोधजनसमुदीरितवचनेन

यथा मे भरतो मान्यस्तथा भूयोऽपि राघवः।
कौसल्यातोऽतिरिक्तं च सोऽनुशुश्रूषते हि माम्॥

इति मन्थरां प्रति कैकेयीवचनेन

यां वृत्तिं वर्तते रामः कौसल्यायां महाबलः।
तामेव नृपनारीणामन्यासामपि वर्तते॥

सकृद्दृष्टास्वपि स्त्रीषु नृपेण नृपवत्सलः।
मातृवद्वर्तते वीरो मानमुत्सृज्य धर्मवित्॥

इति अनसूयां प्रति सीतावचनेनापि स्पष्टः। तस्मादेवमितरैरपि सर्वाः पितृपत्न्यः जननीव द्रष्टव्या इत्युक्तं भवति। तथा च वनपर्वणि यक्षं प्रति युधिष्ठिरः—
'यथा कुन्ती तथा माद्री विशेषो नास्ति मे तयोः।
मातृभ्यां सममिच्छामि नकुलो यक्ष जीवतु॥' इति।

भूतपूर्वं विशेषं वा तस्या मयि सुतेऽपि वा।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सोऽभिषेकनिवृत्त्यर्थैः प्रवासार्थैश्च दुर्वचैः ॥
उग्रैर्वाक्यैरहं तस्या नान्यद्दैवात्समर्थये ।
कथं प्रकृतिसंपन्ना राजपुत्री तथागुणा ॥
ब्रूयात्सा प्राकृतेव स्त्री मत्पीडां भर्तृसंनिधौ ।
यदचिन्त्यं तु तद्दैवं भूतेष्वपि न हन्यते ।
व्यक्तं मयि च तस्यां च पतितो हि विपर्ययः ॥
कश्चिद्दैवेन सौमित्रे योद्धुमुत्सहते पुमान् ।
यस्य न ग्रहणं किंचित्कर्मणोऽन्यत्र दृश्यते ॥
सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ ।
यच्च किंचित्तथाभूतं न हि दैवस्य कर्म तत् ॥
ऋषयोऽप्युग्रतपसो दैवेनापि प्रपीडिताः ।
उत्सृज्य नियमांस्तीव्रान्भ्रंश्यन्ते काममन्युभिः ॥
असंकल्पितमेवेह यदकस्मात्प्रवर्तते ।
निवर्त्यारम्भमारब्धं ननु दैवस्य कर्म तत् ॥
एतया तत्त्वया बुद्ध्या संस्तभ्यात्मानमात्मना ।
व्याहतेऽप्यभिषेके मे परितापो न विद्यते ॥
तस्मादपरितापः संस्त्वमप्यनुविधाय माम् ।
प्रतिसंहारय क्षिप्रमाभिषेचनिकीं क्रियाम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एभिरेव घटैः सर्वैरभिषेचनसंभृतैः ।
मम लक्ष्मण तापस्य व्रतस्नानं भविष्यति ॥
अथवा किं ममैतेन राजद्रव्यमयेन तु ।
उद्धृतं मे स्वयं तोयं व्रतादेशं करिष्यति ॥

मा च लक्ष्मण संतापं कार्षीर्लक्ष्म्या विपर्यये ।
राज्यं वा वनवासो वा वनवासो महोदयः ॥

न लक्ष्मणास्मिन्खलु कर्मविघ्ने
माता यवीयस्यतिशङ्कनीया ।
दैवाभिपन्ना हि वदत्यनिष्टं
जानासि दैवं च तथाप्रभावम् ॥

अत्र 'न लक्ष्मणास्मिन्खलु कर्मविघ्ने माता यवीयस्यतिशङ्कनीया' इति स्वोपद्रवकारिण्यपि यवीयसी माता न शङ्कनीया इति कथनेन निन्दा न कर्तव्या इति सूचितम् । तथा च मनुः— 'परीवादी खरो भवति श्वा वै भवति निन्दकः । परिभोक्ता क्रिमिर्भवति कीटो भवति मत्सरी' इति । 'दैवाभिपन्ना हि वदत्यनिष्टम्' इत्यनेन स्वस्य परैरुपद्रवसहस्रे सत्यपि स्वप्रारब्धाधीनं मत्वा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परस्मिन्दोषो नारोपणीय इति सूचितम् । तथा चारण्यके—

विषमां च गतिं प्राप्य देवान्गर्हति वै भृशम् ।
आत्मनः कर्मदोषाणि न विजानाति पण्डितः ॥

इति । युद्धकाण्डेऽपि,

इमास्तु खलु राक्षस्यो यदि त्वमनुमन्यसे ।
हन्तुमिच्छाम्यहं सर्वा याभिस्त्वं तर्जिता पुरा ॥

इति वदन्तम्,

उवाच धर्मसहितं हनूमन्तं यशस्विनी ।
भाग्यवैषम्ययोगेन पुरा दुश्चरितेनच ॥

मयैतत्प्राप्यते सर्वं स्वकृतं ह्युपभुञ्जते ।
प्राप्तव्यं तु दशायोगं मयैतदिति निश्चितम् ॥

न परः पापमादत्ते परेषां पापकर्मणाम् ।
समयो रक्षितव्यस्तु सन्तश्चारित्रभूषणाः ॥

इति । तथा चाभियुक्तवचनमपि— 'नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावणो वारणः । इत्थं सर्वबलान्वितोऽपि बलभिद्भग्नः परैः संगरे तद्युक्तं ननु दैवमेव शरणं धिग्धिग्वृथा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

पौरुषम् ' 'सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा । अहं करोमीति वृथाभिमानं स्वकर्मसूत्रग्रथितो हि लोकः' । त्रयोविंशे दैवबलात्स्वाभिषेकप्रतिबन्धं मन्वानं रामभद्रमतिकोपोग्रेणाक्ष्णा वीक्षमाणो मुहुश्च हस्ताग्रं विधुन्वल्लँक्ष्मणः सरभसमेवमवादीत्—

धर्मदोषप्रसङ्गेन लोकस्यानतिशङ्कया ।
कथं ह्येतदसंभ्रान्तस्त्वद्विधो वक्तुमर्हति ॥

यथा दैवमशौण्डीरं शौण्डीर क्षत्रियर्षभ ।
किं नाम कृपणं दैवमशक्तमभिशंससि ॥

विक्लवो वीर्यहीनो यः स दैवमनुवर्तते ।
वीराः संभावितात्मानो न दैवं पर्युपासते ॥

दैवं पुरुषकारेण यः समर्थः प्रबाधितुम् ।
न दैवेन विपन्नार्थः पुरुषः सोऽवसीदति ॥

द्रक्ष्यन्ति त्वद्य दैवस्य पौरुषं पुरुषस्य च ।
दैवमानुषयोरद्य व्यक्ता व्यक्तिर्भविष्यति ॥

ब्रवीहि कोऽद्यैव मया वियुज्यतां
तवासुहृत्प्राणयशःसुहृज्जनैः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा तवेयं वसुधा वशे भवे-
त्तथैव मां शाधि तवास्मि किंकरः ॥

इति। अनेन च दैवापेक्षया पौरुषमेव प्रबलमिति प्रतिपादितम् । तथा च भारते--"कर्मणः फलनिर्वृत्तिं स्वयमश्नाति कारकः । प्रत्यक्षं दृश्यते लोके कृतस्याप्यकृतस्य च ॥ शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा । कृतं फलति सर्वत्र नाकृतं भुज्यते क्वचित् ॥ कृती सर्वत्र लभते प्रतिष्ठां भाग्यसंयुताम् । अकृती लभते भ्रष्टः क्षते क्षारावसेचनम् ॥ तपसा रूपसौभाग्यं रत्नानि विविधानि च । प्राप्यते कर्मणा सर्वं न दैवादकृतात्मना ॥ तथा स्वर्गश्च भोगाश्च निष्ठा या च मनीषिता । सर्वं पुरुषकारेण कृतेनेहोपलभ्यते ॥ ज्योतींषि त्रिदशा नागाः यक्षाश्चन्द्रार्कमारुताः । सर्वे पुरुषकारेण मानुषा देवतां गताः ॥ अर्थो वा मित्रवर्गो वा ऐश्वर्यं वा कुलान्वितम् । श्रीश्चापि दुर्लभा भोक्तुं तथैव कृतकर्मभिः ॥ एवं चेत्कर्मफलं न स्यात्सर्वमेवाफलं भवेत् । लोको दैवं समालम्ब्य उदासीनो भवेन्न तु ॥ अकृत्वा मानुषं कर्म यो दैवमनुव-

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

र्तते । वृथा श्राम्यति संप्राप्य पतिं क्लीबमिवाङ्गना ॥"
इति । ननु

न लक्ष्मणास्मिन्खलु कर्मविघ्ने
माता यवीयस्यतिशङ्कनीया ।
दैवाभिपन्ना हि वदत्यनिष्टं
जानासि दैवं च तथाप्रभावम् ॥

इत्यादिवचनैः पुरुषकारापेक्षया दैवमेव प्रबलमिति प्रतिपादितम् ।

यथा दैवमशौण्डीरं शौण्डीर क्षत्रियर्षभ ।
किं नाम कृपणं दैवमशक्तमभिशंससि ॥

इत्यादिलक्ष्मणवाक्यैर्दैवापेक्षया पुरुषकार एव प्रबल इति प्रतीयते । एवं च परस्परविरुद्धत्वात् उभयोः प्राबल्यमसंगतमिति चेत्, सत्यम् । पुरुषकारेण विना दैवमेव कार्यसाधकम्, दैवेन विना पुरुषकारो वा इत्येवं परस्परानपेक्षत्वरूपं प्राबल्यमिह न विवक्षितम्, येन विरोधो भवेत् । किं तु दैवं पुरुषकारेण विना न कार्यक्षमम् । पुरुषकारोऽपि दैवं विना न कार्यक्षमः । अतः



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कार्याय उभयमप्यवश्यापेक्षणीयमिति। एतदभिप्रायक-मुभयप्राबल्यवचनम्। तथा च भारते—'नाबीजं जायते किंचिन्न बीजेन विना फलम्। बीजाद्बीजं प्रभवति बीजादेव फलं स्मृतम्॥ यथा बीजं विना क्षेत्रमुप्तं भवति निष्फलम्। तथा पुरुषकारेण विना दैवं न सिध्यति॥ क्षेत्रं पुरुषकारस्तु दैवं बीजमुदाहृतम्। क्षेत्र-बीजसमायोगात्ततः सस्यं समृध्यते॥ कृतः पुरुषकारस्तु दैवमेवानुवर्तते। न दैवमकृते किंचित्कस्यचिद्दातुमर्हति॥ यथाग्निः पवनोद्धूतः सूक्ष्मोऽपि सुमहान्भवेत्। तथा कर्मसमायुक्तं दैवं साधु विवर्धते॥' इति। न चैवमुभयो-रावश्यिकत्वे श्रीरामेण लक्ष्मणोक्तपुरुषकारः किमिति परित्यक्तः, तत्रापि दैवानुकूल्यसंभवादिति वाच्यम्। लक्ष्मणोक्तपुरुषकारस्य पितृवचनपरिपालनरूपधर्मविरु-द्धतया परित्यागसंभवात्। वस्तुतस्तु दैवमेव प्रबलम्। तथा च विष्णुपुराणे—'न चिन्तयति को राज्यं को धनं नाभिवाञ्छति। तथापि भाव्यमेवैतद्भूतयं प्राप्यते नरैः॥ सर्व एव महाभाग महत्त्वं प्रति सोद्यमः। तथा हि पुंसां

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

भाग्यानां नोद्यमा भूतिहेतवः ॥ जडानामविवेकानामशूराणामपि प्रभो । भाग्यभोग्यानि राज्यानि सत्यं नीतिमतामपि ॥ तस्माद्यतेत पुण्येषु यदीच्छेन्महतीं श्रियम् ।' इति । भारतेऽपि—'न दैवस्यातिभारोऽस्ति न चैवास्या निवर्तनम् । इति चाप्यागमनं भूयो दैवस्य प्रतिपालये ॥ दैवेन किल यस्यार्थः सुनीतोऽपि विपद्यते । दैवस्य चागमे यत्नः तेन कार्यो विजानता ॥' इति । चतुर्विंशे ततो बाष्पपरिपूर्णनयना कौसल्या वनवासाय कृतोद्योगं रामचन्द्रमत्रश्लोकैरेवमवादीत्—

मयि जातो दशरथात्कथमुञ्छेन जीवति ।
क एतच्छ्रद्दधेच्छ्रुत्वा कस्य वा न भवेद्भयम् ॥

नूनं तु बलवाँल्लोके कृतान्तः सर्वमादिशन् ।
लोके रामाभिरामस्त्वं वनं यत्र गमिष्यसि ॥

त्वया विहीनामिह मां शोकाग्निरतुलो महान् ।
प्रधक्ष्यति यथा कक्षं चित्रं भानुर्हिमात्यये ॥

कथं हि धेनुः स्वं वत्सं गच्छन्तं नानुगच्छति ।
अहं त्वानुगमिष्यामि यत्र पुत्र गमिष्यसि ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति ।

तथा निगदितं मात्रा तद्वाक्यं पुरुषर्षभः ।
श्रुत्वा रामोऽब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥

कैकेय्या वञ्चितो राजा मयि चारण्यमाश्रिते ।
भवत्या च परित्यक्तो न नूनं वर्तयिष्यति ॥

भर्तुः पुनः परित्यागो नृशंसः केवलं स्त्रियाः ।
स भवत्या न कर्तव्यो मनसापि विगर्हितः ॥

यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः ।
शुश्रूषा क्रियतां तावत्स हि धर्मः सनातनः ॥

मया चैव भवत्या च कर्तव्यं वचनं पितुः ।
राजा भर्ता गुरुः श्रेष्ठः सर्वेषामीश्वरः प्रभुः ॥

इमानि तु महारण्ये विहृत्य नव पञ्च च ।
वर्षाणि परमप्रीतः स्थास्यामि वचने तव ॥

जीवन्त्या हि स्त्रिया भर्ता दैवतं प्रभुरेव च ।
भवत्या मम चैवाद्य राजा प्रभवति प्रभुः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

न ह्यनाथा वयं राज्ञा लोकनाथेन धीमता ।
यथा मयि तु निष्क्रान्ते पुत्रशोकेन पार्थिवः ॥

श्रमं नावाप्नुयात्किंचिदप्रमत्ता तथा कुरु ।
दारुणश्चाप्ययं शोको यथैनं न विनाशयेत् ॥

राज्ञो वृद्धस्य सततं हितं चर समाहिता ।
व्रतोपवासनिरता या नारी परमोत्तमा ॥

भर्तारं नानुवर्तेत तस्याः पापा गतिर्भवेत् ।
भर्तुः शुश्रूषया नारी लभते स्वर्गमुत्तमम् ॥

अपि या निर्नमस्कारा निवृत्ता देवपूजनात् ।
शुश्रूषामेव कुर्वीत भर्तुः प्रियहिते रता ॥

एष धर्मः पुरा दृष्टो लोके वेदे श्रुतः स्मृतः ।
अग्निकार्येषु च सदा सुमनोभिश्च देवताः ॥

पूज्यास्ते मत्कृते देवि ब्राह्मणाश्चैव सुव्रताः ।
एवं कालं प्रतीक्षस्व ममागमनकाङ्क्षिणी ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नियता नियताहारा भर्तुः शुश्रूषणे रता।
प्राप्स्यसे परमं कामं मयि प्रत्यागते सति ॥

तथा हि रामं वनवासनिश्चितं
समीक्ष्य देवी परमेण चेतसा।
उवाच रामं शुभलक्षणं वचो
बभूव च स्वस्त्ययनाभिकाङ्क्षिणी ॥

धर्मज्ञ यदि धर्मिष्ठो धर्मं चरितुमिच्छसि।
शुश्रूष मामिहस्थस्त्वं चर धर्ममनुत्तमम् ॥

शुश्रूषुर्जननीं पुत्रः स्वगृहे नियतो वसन्।
परेण तपसा युक्तः काश्यपस्त्रिदिवं गतः ॥

यथैव राजा पूज्यस्ते गौरवेण तथास्म्यहम्।
त्वां नाहमनुजानामि न गन्तव्यमितो वनम् ॥

इति मात्रा कौसल्यया आज्ञप्तोऽपि धर्मज्ञः श्रीरामभद्रः तद्वचनमकुर्वन् पितृवाक्यानुरोधेन वनगमनकृतनिश्चयः,

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे ।

इति प्रार्थितवान्, तदनुपपन्नम्, पितृवचनवन्मातृवचनस्यापि परिपालनीयत्वात् । तथाचानुशासनिके—'मातुः पितुर्गुरूणां च कार्यमेवानुशासनम् । हितं वाप्यहितं वापि न विचार्यं नरर्षभ ॥' वनपर्वण्यपि— 'मातापित्रोर्गुरूणां च पूजा बहुमता मम । अत्र मुक्तो नरो लोकान्यशश्च महदश्नुते ॥ यश्च तेऽभ्यनुजानीयुः कर्म तात सुपूजिताः । धर्मं धर्मविरुद्धं वा तत्कर्तव्यं युधिष्ठिर ॥' इति । प्रत्युत पित्रपेक्षया मातुर्गरीयस्त्वेन तद्वचनपरिपालनस्यैवावश्यकर्तव्यत्वाच्च । तथा च मनुः—'उपाध्यायाद्दशाचार्या आचार्याणां शतं पिता । सहस्रं तु पितुर्माता गौरवेणातिरिच्यते ॥ द्वौ गुरू पुरुषस्येह पिता माता च सर्वदा । पिता गुरुतरस्तावन्माता गुरुतमा भवेत् ॥' भारतेऽपि—'दशैव तु सदाचार्यः श्रोत्रियानतिरिच्यते । दशाचार्यानुपाध्यायः उपाध्यायान्पिता दश ॥ पितृन्दश तु मातैका सर्वां वा पृथिवीमपि । गुरुत्वेनाभिभवति नास्ति मातृसमो गुरुः ॥' इति । गौतमोऽपि—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'आचार्यः श्रेष्ठो गुरूणां मातेत्येके' इति । किं च

**उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ।**

इति अमार्गप्रवृत्तस्य पितुः शासनविधानाभावात्, प्रत्युत शुश्रूषैव विधीयते । तथाचापस्तम्बः— 'माता पुत्रत्वस्य भूयांसि कर्माण्यारभते तस्यां शुश्रूषा नित्या पतितायामपि' इति । 'पतिता गुरवस्त्याज्या न तु माता कथंचन । गर्भधारणपोषाभ्यां तेन माता गरीयसी ॥' इति । तस्मात् उक्तप्रकारेण मातुर्गरीयस्त्वात्, तद्वचनानादरोऽयुक्त इति चेत्, सत्यम् ।

**स ह्यावयोस्तात गुरुर्नियोगो**
**दैव्याश्च भर्ता स गतिः स धर्मः ॥**

इति रामवचनेन पितुरपि सर्वगुर्वपेक्षया गरीयस्त्वावगमात् । तथा च विष्णुपुराणे— 'मान्यः पिता समस्तानां गुरूणां परमो गुरुः ।' पुराणसमुच्चयेऽपि— 'तयोरपि पिता श्रेयान्बीजप्राधान्यदर्शनात् ।' भारते मोक्षधर्मे— 'पिता परं दैवतं मानवानां मातुर्विशिष्टं परमं वदन्ति' इति । न चैतावता मातृवचनाकरणे किमागतमिति वाच्य-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

म्, उभयोर्गुरुत्वाविशेषेऽपि 'पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति' इति मनुवचनपर्यालोचनया अस्वतन्त्राया मातुराज्ञाकरणे सामर्थ्याभावेन भर्तृविरुद्धाज्ञाकरणं दूरापेतम्। अतस्तद्वचनपरिपालनमप्रसक्तमेव। न चैवं मातृगौरवप्रतिपादकवचनानां का गतिरिति वाच्यम्, सर्वप्रकारेण माता पोषणीयेत्येतदभिप्रायकत्वात्। अत एव तस्यां शुश्रूषा नित्येति आपस्तम्बवचनेऽपि शुश्रूषैव मुख्येति प्रतिपादितम्। भारतेऽपि—'मातुर्भरणमात्रेण प्रीतिः स्नेहः पितुः प्रजाः। पितुराज्ञा परो धर्मः स्वधर्मो मातृरक्षणम्' इति। पिता तु स्वतन्त्रत्वात् आज्ञाकरणे समर्थ एवेति तद्वचनमेव परिपालनीयम्। एतदभिप्रायेणैव राम आह—

नास्ति शक्तिःपितुर्वाक्यं समतिक्रमितुं मम।
ऋषिणा च पितुर्वाक्यं कुर्वता व्रतचारिणा।
गौर्हता जानता धर्मं कण्डुना च विपश्चिता॥
अस्माकं च कुले पूर्वं सगरस्याज्ञया पितुः।
खनद्भिः सागरैर्भूमिमवाप्तः सुमहान्वधः॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जामदग्न्येन रामेण रेणुका जननी स्वयम् ।
कृत्ता परशुनारण्ये पितुर्वचनकारिणा ॥

नाहं धर्ममपूर्वं ते प्रतिकूलं प्रवर्तये ।
पूर्वैरयमभिप्रेतो गतो मार्गोऽनुगम्यते ॥

तदेतत्तु मया कार्यं क्रियते भुवि नान्यथा ।
पितुर्हि वचनं कुर्वन्न कश्चिन्नाम हीयते ॥

भारतेऽपि—'पितुराज्ञा परो धर्मः स्वधर्मो मातृरक्षणम् । अनवज्ञा पितुर्युक्ता धारणं मातृरक्षणम् ॥ पिता यदाह धर्मः स वेदेष्वपि सुनिश्चितः । शरीरादीनि देयानि पिता त्वेकः प्रयच्छति ॥ तस्मात्पितुर्वचः कार्यं न विचार्यं कदाचन । पातकान्यपि पूयन्ते पितुः शासनकारिणः ॥' इति । तस्मान्मातावश्यं शुश्रूषणीया । मात्रादिवधप्रसक्तावपि पितृवचनपरिपालनमवश्यं कर्तव्यमिति सिद्धम् । अयमर्थो मोक्षधर्मे चिरकारिकोपाख्याने युधिष्ठिरं प्रति भीष्मः— 'व्यभिचारे तु कस्मिंश्चिद्व्यतिक्रम्यापरान्सुतान् । पित्रोक्तः कुपितेनाथ

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जहीमां जननीमिति । स तथेति चिरेणोक्त्वा स्वभावा-
च्चिरकारिकः । विमृश्य चिरकारित्वाच्चिन्तयामास वै
चिरम् ॥ पितुराज्ञां कथं कुर्यां न हन्यां मातरं कथम् ।
कथं धर्मच्छले नास्मिन्निमज्जेयमसाधुवत् । पितुराज्ञा परो
धर्मः स्वधर्मो मातृरक्षणम् ॥ अस्वतन्त्रं च पुत्रत्वं किं नु
मां नानुपीडयेत् । अनवज्ञा पितुर्युक्ता धारणं मातृरक्ष-
णम् । युक्तक्षमावुभावेतौ नातिवर्तेत मां कथम् ॥
पिता ह्यात्मानमाधत्ते जायायां जज्ञिवानिति । शील-
चारित्रगोत्रस्य धारणार्थं कुलस्य च ॥ सोऽहं मात्रा स्वयं
पित्रा पुत्रत्वेन कृतः पुनः । विज्ञानं मे कथं नु स्याद्द्वौ
बुध्ये चात्मसंभवम् ॥ जातकर्मणि यत्प्राह पिता यच्चोप-
कर्मणि । पर्याप्तः स दृढीकारः पितुर्गौरवनिश्चये ॥ गुरु-
रग्र्यः परो धर्मः पोषणाध्यापनान्वितः । पिता यदाह
धर्मः स वेदेष्वपि सुनिश्चितः ॥ प्रीतिमात्रं पितुः पुत्रः
सर्वं पुत्रस्य वै पिता । शरीरादीनि देयानि पिता त्वेकः
प्रयच्छति ॥ तस्मात्पितुर्वचः कार्यं न विचार्यं कदाचन ।
पातकान्यपि पूयन्ते पितुः शासनकारिणः ॥ भोग्ये

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भोज्ये प्रवचने सर्वलोकनिदर्शने । भर्त्रा चैव समायोगे सीमन्तोन्नयने तथा ॥ पिता धर्मः पिता स्वर्गः पिता हि परमं तपः । पितरि प्रीतिमापन्ने सर्वाः प्रीयन्ति देवताः ॥ आशिषस्ता भजन्त्येनं पुरुषं प्राह यत्पिता । निष्कृतिः सर्वपापानां पिता यच्चाभिनन्दति ॥ मुच्यते बन्धनात्पुष्पं फलं वृन्तात्प्रमुच्यते । क्लिश्यन्नपि सुतस्नेहैः पिता पुत्रं न मुञ्चति ॥ एतद्विचिन्तितं तावत्पुत्रस्य पितृगौरवम् । पिता नाल्पतरं स्थानं चिन्तयिष्यामि मातरम् ॥' इति । मातृगौरवं तत्रैव चिरकारिकोपाख्याने— 'अस्य मे जननी हेतुः पावकस्य यथारणिः । मातृदेहोऽरणिः पुंसां सर्वस्यार्तस्य निर्वृतिः ॥ मातृलाभे सनाथत्वमनाथत्वं विपर्यये । न च शोचति नाप्येनं स्थाविर्यमपकर्षति ॥ श्रिया हीनोऽपि यो गेहमम्बेति प्रतिपद्यते । पुत्रपौत्रोपपन्नोऽपि जननीं यः समाश्रितः ॥ अपि वर्षशतस्यान्ते स द्विहायनवच्चरेत् । समर्थं वासमर्थं वा कृशं वाप्यकृशं तथा । रक्षत्येव सुतं माता नान्यः पोष्टा विधानतः । तदा स वृद्धो भवति तदा भवति दुःखितः ॥ तदा

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

शून्यं जगत्तस्य यदा मात्रा वियुज्यते । नास्ति मातृसमा च्छाया नास्ति मातृसमा गतिः ॥ नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रिया । कुक्षिसंधारणाद्धात्री जननाज्जननी स्मृता ॥ अङ्गानां वर्धनादम्बा वीरसूत्वेन वीरसूः । शिशोः शुश्रूषणाच्छुश्रूर्माता देहमनन्तरम् । चेतनावान्नरो हन्याद्यस्य नाशुषिरं शिरः ॥ दम्पत्योः प्राणसंश्लेषे योऽभिसंधिः कृतः किल । तं माता च पिता चेति भूतार्थो मातरि स्थितः ॥ माता जानाति यद्गोत्रं माता जानाति यस्य सः । मातुर्भरणमात्रेण प्रीतिः स्नेहः पितुः प्रजाः ॥ पाणिबन्धं स्वयं कृत्वा सहधर्ममुपेत्य च । यदि यास्यन्ति पुरुषाः स्त्रियो नार्हन्ति याच्यताम् ॥ भरणाद्धि स्त्रिया भर्ता पात्याच्चैव स्त्रियाः पतिः । गुणस्यास्य निवृत्तौ तु न भर्ता न पुनः पतिः ॥ एवं स्त्री नापराध्नोति नर एवापराध्यति । व्युच्चरंश्च महादोषं नर एवापराध्यति ॥ स्त्रिया हि परमो भर्ता दैवतं परमं स्मृतम् । तस्यात्मना तु सदृशमात्मानं परमं ददौ ॥ नापराधोऽस्ति नारीणां नर एवापराध्यति । सर्वकार्यापराध्यत्वान्नापरा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ध्यन्ति चाङ्गना: ॥ यश्च नोक्तोऽथ निर्देश: स्त्रिया मैथुनतृप्तये । तस्य स्मारयतो व्यक्तमधर्मो नास्ति संशय: ॥ एवं नारीं मातरं च गौरवे चाधिके स्थिताम् । अवध्यां तु विजानीयुः पशवोऽप्यविचक्षणा: ॥ देवतानां समावायमेकस्थं पितरं विदु: । मर्त्यानां देवतानां च स्नेहादभ्येति मातरम् ॥' इति । एवं च पूर्वोदाहृतमानवादिवचनजातेन एतदाख्यायिकया च पित्रोर्गौरवावगमेऽपि शुश्रूषाविषये मातु: प्राबल्यम् । आज्ञाविषये तु पितु: प्राबल्यमित्यप्यवगम्यते । तस्मान्मातु: कौसल्याया: वचनमनादृत्य श्रीरामेण पितुर्दशरथस्य वचनमनतिक्रमणीयमित्युक्तं युक्तमेव । एवं पितृवचनमाहात्म्यमितिहासपुराणादिषु बहुधा प्रतिपाद्यमानं कृत्स्नशो निरूपयितुमशक्यमिति विस्तरभियोपरम्यते । तस्मात्पितृवचनपरिपालनस्य सर्वोत्कृष्टधर्मत्वेन धर्मज्ञ: श्रीरामभद्रो मातृवचनमकृत्वैव पितुर्वचनपरिपालनमेव कृतवानिति युक्तमेव । पञ्चविंशे—

सापनीय तमायासमुपस्पृश्य जलं शुचि: ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

चकार माता रामस्य मङ्गलानि मनस्विनी ॥

न शक्यसे वारयितुं गच्छेदानीं रघूत्तम ।
शीघ्रं च विनिवर्तस्व वर्तस्व च सतां क्रमे ॥

यं पालयसि धर्मं त्वं धृत्या च नियमेन च ।
स वै राघवशार्दूल धर्मस्त्वामभिरक्षतु ॥

येभ्यः प्रणमसे पुत्र चैत्येष्वायतनेषु च ।
ते च त्वामभिरक्षन्तु वने सह महर्षिभिः ॥

यानि दत्तानि तेऽस्त्राणि विश्वामित्रेण धीमता ।
तानि त्वामभिरक्षन्तु गुणैः समुदितं सदा ॥

पितृशुश्रूषया पुत्र मातृशुश्रूषया तथा ।
सत्येन च महाबाहो चिरं जीवाभिरक्षितः ॥

समित्कुशपवित्राणि वेद्यश्चायतनानि च ।
स्थण्डिलानि च चित्राणि शैला वृक्षाः क्षुपा ह्रदाः ॥

पतङ्गाः पन्नगाः सिंहास्त्वां रक्षन्तु नरोत्तम ।
स्वस्ति साध्याश्च विश्वे च मरुतश्च महर्षिभिः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वस्ति धाता विधाता च स्वस्ति पूषा भगोऽर्यमा ।
लोकपालाश्च यक्षाश्च मासाः संवत्सराः क्षपाः ॥

दिनानि च मुहूर्ताश्च स्वस्ति कुर्वन्तु ते सदा ।
स्मृतिर्धृतिश्च धर्मश्च पान्तु त्वां पुत्र सर्वतः ॥

स्कन्दश्च भगवान्देवः सोमश्च स बृहस्पतिः ।
सप्तर्षयो नारदश्च ते त्वा रक्षन्तु सर्वतः ॥

ये चापि सर्वतः सिद्धा दिशश्च सदिगीश्वराः ।
स्तुता मया वने तस्मिन्पान्तु त्वां पुत्र नित्यशः ॥

शैलाः सर्वे समुद्राश्च राजा वरुण एव च ।
द्यौरन्तरिक्षं पृथिवी नद्यः सर्वास्तथैव च ॥

नक्षत्राणि च सर्वाणि ग्रहाश्च सर्वदेवताः ।
अहोरात्रे तथा संध्ये पान्तु त्वां वनमाश्रितम् ॥

ऋतवश्चैव षट् पुण्या मासाः संवत्सरास्तथा ।
कलाश्च काष्ठाश्च तथा तव शर्म दिशन्तु ते ॥

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

महावनानि चरतो मुनिवेषस्य धीमतः।
तवादित्याश्च दैत्याश्च भवन्तु सुखदाः सदा ॥

राक्षसानां पिशाचानां रौद्राणां क्रूरकर्मणाम्।
क्रव्यादानां च सर्वेषां मा भूत्पुत्रक ते भयम् ॥

प्लवगा वृश्चिका दंशा मशकाश्चैव कानने।
सरीसृपाश्च कीटाश्च मा भूवन्गहने तव ॥

महाद्विपाश्च सिंहाश्च व्याघ्रा ऋक्षाश्च दंष्ट्रिणः।
महिषाः श्रृङ्गिणो रौद्रा न ते द्रुह्यन्तु पुत्रक ॥

नृमांसभोजिनो रौद्रा ये चान्ये सत्त्वजातयः।
मा च त्वा हिंसिषुः पुत्र मया संपूजितास्त्विह ॥

आगमास्ते शिवाः सन्तु सिध्यन्तु च पराक्रमाः।
सर्वसंपत्तये राम स्वस्तिमान्गच्छ पुत्रक ॥

स्वस्ति तेऽस्त्वन्तरिक्षेभ्यः पार्थिवेभ्यः पुनः पुनः।
सर्वेभ्यश्चैव देवेभ्यो ये चैव परिपन्थिनः ॥



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शक्रः सोमश्च सूर्यश्च धनदोऽथ यमस्तथा ।
पान्तु त्वामर्चिता राम दण्डकारण्यमाश्रितम् ॥

अग्निर्वायुस्तथा धूमो मन्त्राश्चर्षिमुखाच्च्युताः ।
उपस्पर्शनकाले तु पान्तु त्वां रघुनन्दन ॥

सर्वलोकप्रभुर्ब्रह्मा भूतभर्ता तथर्षयः ।
ये च शेषाः सुरास्ते त्वां रक्षन्तु वनवासिनम् ॥

इति माल्यैः सुरगणान्गन्धैश्चापि यशस्विनी ।
स्तुतिभिश्चानुरूपाभिरानर्चायतलोचना ॥

ज्वलनं समुपाधाय ब्राह्मणेन महात्मना ।
हावयामास विधिवद्रामम‌ङ्गलकारणात् ॥

घृतं श्वेतानि माल्यानि समिधः श्वेतसर्षपान् ।
उपसंपादयामास कौसल्या परमाङ्गना ॥

उपाध्यायः स विधिना हुत्वा शान्तिमनामयम् ।
हुतहव्यावशेषेण बाह्यं बलिमकल्पयत् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

मधुदध्यक्षतघृतैः स्वस्तिवाच्यद्विजांस्ततः ।
वाचयामास रामस्य वने स्वस्त्ययनक्रियाम् ॥

ततस्तस्मै द्विजेन्द्राय राममाता यशस्विनी ।
दक्षिणां प्रददौ काम्यां राघवं चेदमब्रवीत् ॥

यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥

यन्मङ्गलं सुपर्णस्य विनताकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥

अमृतोत्पादने दैत्यान्घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥

ऋतवः सागरा द्वीपा वेदा लोका दिशश्च ते ।
मङ्गलानि महाबाहो दिशन्तु तव कानने ॥

इति पुत्रस्याशिषश्च कृत्वा शिरसि भामिनी ।
गन्धैश्चापि समालभ्य राममायतलोचना ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ओषधीं चापि सिद्धार्थां विशल्यकरणीं शुभाम् ।
चकार रक्षां कौसल्या मन्त्रैरपि जजाप च ॥

उवाचातिप्रहृष्टेव सा दुःखवशवर्तिनी ।
वाङ्मात्रेण न भावेन वाचा संसज्जमानया ॥

आनम्य मूर्ध्नि चाघ्राय परिष्वज्य यशस्विनी ।
अवदत्पुत्र सिद्धार्थो गच्छ राम यथासुखम् ॥

अरोगं सर्वसिद्धार्थमयोध्यां पुनरागतम् ।
पश्यामि त्वां सुखं वत्स सुस्थितं राजवर्त्मनि ॥

प्रणष्टदुःखसंकल्पा हर्षविद्योतितानना ।
द्रक्ष्यामि त्वां वनात्प्राप्तं पूर्णचन्द्रमिवोदितम् ॥

भद्रासनागतं राम वनवासादिहागतम् ।
द्रक्ष्यामि त्वामहं पुत्र तीर्णवन्तं पितुर्वचः ॥

मङ्गलैरुपसंपन्नो वनवासादिहागतः ।
वध्वा मम च नित्यं त्वं कामान्संवर्धयाशु भोः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मयार्चिता देवगणाः शिवादयो
महर्षयो भूतमहासुरोरगाः ।
अभिप्रयातस्य वनं चिराय ते
हितानि कुर्वन्तु दिशश्च राघव ॥

इतीव चाश्रुप्रतिपूर्णलोचना
समाप्य च स्वस्त्ययनं यथाविधि ।
प्रदक्षिणं चैव चकार राघवं
पुनः पुनश्चापि निपीड्य सस्वजे ॥

तया हि देव्या च कृतप्रदक्षिणो
निपीड्य मातुश्चरणौ पुनः पुनः ।
जगाम सीतानिलयं महायशाः
स राघवः प्रज्वलितः स्वया श्रिया ॥

षड्विंशे मात्रा कृतमङ्गलो रामभद्रो वैदेहीभवनमागत्य स्वमुखविकारदर्शनचकितहृदयां सीतामेवमब्रवीत् ।

चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया ।
पित्रा मे भरतश्चापि यौवराज्ये नियोजितः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनम् ।
भरतस्य समीपे तु नाहं कथ्यः कदाचन ॥
ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम् ।

इति । अनेन श्रीमतां समीपे परस्तवो न कर्तव्य इति सूचितम्—

याते मयि च कल्याणि वनं मुनिनिषेवितम् ।
व्रतोपवासरतया भवितव्यं त्वयानघे ॥

अनेन प्रोषिते भर्तरि व्रतोपवासनिरतया स्थेयमिति सूचितम् । तथा च भारते आनुशासनिके शाण्डलीवचनम्— 'प्रवासं यदि मे याति भर्ता कार्येण केनचित् । मङ्गलैर्बहुभिर्युक्ता भवामि नियता तदा ॥ अञ्जनं रोचनां चैव स्नानमाल्यानुलेपनम् । प्रसाधनं च निष्क्रान्ते नाभिनन्दामि भर्तरि ॥' इति । तत्रापि द्रौपदीवचनम्— 'यदा प्रवसते भर्ता कुटुम्बार्थेन केनचित् । सुमनोवर्णकापेता भवामि व्रतचारिणी ॥' इति ।

काल्यमुत्थाय देवानां कृत्वा पूजां यथाविधि ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

स्त्रीणामपि भर्त्रनुज्ञया देवतापूजनमस्तीति प्राक् प्रपञ्चितम्।

वन्दितव्यो दशरथः पिता मम नरेश्वरः॥

माता च मम कौसल्या वृद्धा संतापकर्षिता।
धर्ममेवाग्रतः कृत्वा त्वत्तः संमानमर्हति॥

विप्रियं च न कर्तव्यं भरतस्य कदाचन।
स हि राजा प्रभुश्चैव देशस्य च कुलस्य च॥

अनेन राजविप्रियं न कर्तव्यमिति सूचितम्। तथा च मनुः—'बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः। महती देवता ह्येषा नररूपेण तिष्ठति॥ यस्तु तं द्वेष्टि संमोहात्स विनश्यत्यसंशयः। यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे॥ मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः।' इति।

आराधिता हि शीलेन प्रयत्नैश्चोपसेविताः।
राजानः संप्रसीदन्ति कुप्यन्ति च विपर्यये॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अहं गमिष्यामि महावनं प्रिये
त्वया हि वस्तव्यमिहैव भामिनि ।

इति । सप्रविंशे— ततः स्वं विना वनगमने कृतनिश्चयं रामभद्रमवगत्य सकोपमेवमवादीत्—

आर्यपुत्र पिता माता भ्राता पुत्रस्तथा स्नुषा ।
स्वानि पुण्यानि भुञ्जानाः स्वं स्वं भाग्यमुपासते ॥

भर्तुर्भाग्यं नायिका तु प्राप्नोति पुरुषर्षभ ।
न पिता नात्मजो नात्मा न माता न सखीजनः ॥

इह प्रेत्य च नारीणां पतिरेको गतिः सदा ।
प्रासादाग्रैर्विमानैर्वा वैहायसगतेन वा ॥

सर्वावस्थां गता भर्तुः पादच्छाया विशिष्यते ।
अनुशिष्टास्मि मात्रा च पित्रा च विविधाश्रयम् ॥

साहं रंस्ये त्वया वीर वनेषु मधुगन्धिषु ।
एवं वर्षसहस्राणां शतं वाहं त्वया सह ॥

व्यतिक्रमं न वत्स्यामि स्वर्गोऽपि हि न मे मतः ।

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

इति । अनेन भर्तुरतिक्लेशसमयेऽपि तं विहाय न स्थेयमिति सूचितम् । तथा च वनपर्वणि नलं प्रति दमयन्तीवचनम्—'हृतराज्यं हृतद्रव्यं विवस्त्रं तृट्श्रमान्वितम् । कथमुत्सृज्य गच्छेयमहं हि विजने वने ॥ श्रान्तस्य ते क्षुधार्तस्य चिन्तयानस्य तत्सुखम् । वने घोरे महाराज नाशयिष्यामि ते क्लमम् ॥ न च भार्यासमं किंचिद्विद्यते भेषजं महत् । नित्यं हि सर्वदुःखेषु सत्यमेतद्ब्रवीमि ते ॥' इति । अष्टाविंशे—एवं ब्रुवाणामतिक्लेशेन बाष्पपरिपूर्णनयनां सीतामवलोक्य तां निवर्तयितुं ससान्त्वमेवमब्रवीत्—

इहाचर स्वधर्मं त्वं मा कृथा मनसोऽसुखम् ।
बहुदोषं हि कान्तारं वनमित्यभिधीयते ॥

सुप्यते पर्णशय्यासु स्वयं भग्नासु भूतले ।
अहोरात्रं च संतोषः कर्तव्यो नियतात्मना ॥

फलैर्वृक्षात्प्रपतितैः सीते दुःखमतो वनम् ।
उपवासश्च कर्तव्यो यथाप्राणेन मैथिलि ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जटाधारश्च कर्तव्यो वल्कलाम्बरधारिणा ।
देवतानां पितृणां च कर्तव्यं विधिपूर्वकम् ॥

प्राप्तानामविधीनां च नित्यशः प्रतिपूजनम् ।
कार्यस्त्रिरभिषेकश्च काले काले च नित्यशः ॥

उपहारश्च कर्तव्यः कुसुमैः स्वयमाहृतैः ।
आर्षेण विधिना वेद्यां बाले दुःखमतो वनम् ॥

यथालब्धेन कर्तव्यः संतोषस्तत्र मैथिलि ।
यताहारैर्वनचरैर्नित्यं दुःखमतो वनम् ॥

क्रोधलोभौ विमोक्तव्यौ कर्तव्या तपसे मतिः ।
न भेतव्यं च भेतव्ये नित्यं दुःखमतो वनम् ॥
तदलं ते वनं गत्वा क्षमं न हि वनं तव ।

अनेन वानप्रस्थधर्माः कथिताः । तथा च मनुः— 'वसीत चर्म चीरं वा सायं स्नायात्प्रगे तथा । जटाश्च बिभृयान्नित्यं श्मश्रुलोमनखानि च ॥ यद्भक्ष्यं स्यात्ततो दद्याद्बलिं भिक्षां च शक्तितः । अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतम् ॥' आपस्तम्बोऽपि— 'तस्यारण्यमाच्छादनं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

विहितं ततो विहितैः फलैः पर्णैस्तृणैरिति वर्तयंश्चरेत् ।' गौतमोऽपि—'वैखानसो वने मूलफलाशी तपः शीलयेत्' इति । कूर्मपुराणे — 'ब्रह्मचारी भवेन्नित्यं न पत्नीं प्रतिसंश्रयेत् । यस्तु पत्न्या समं गत्वा मैथुनं कामतश्चरेत् ॥ तद्व्रतं तस्य लुप्येत प्रायश्चित्तीयते द्विजः ॥' मनुरपि — 'वर्जयेन्मधुमांसानि' इति । ननु गृहस्थेन सता रामेण कथं वानप्रस्थधर्मा अनुष्ठेया उच्यन्ते? नायं दोषः । रामस्य वनप्रस्थापनसमये जटावल्कलादीनां कैकेय्या प्रत्तत्वेन अपरित्यक्तगृहस्थधर्मस्यैव रामस्य वानप्रस्थधर्माः केचन अनुष्ठेयाः कथिताः । अन्यथा मधुमांसभक्षणस्त्र्युपगमनपुनर्नगरप्रवेशराज्यपरिपालनादीनां दर्शनं विरुध्यते इति । एकोनत्रिंशे — तद्वचनश्रवणसंजातदुःखा सीता, स्वनिवर्तनपरं रामभद्रमेवमवादीत् । त्वद्रूपसंदर्शनसंजातसंत्रासेन पलायमानेषु भयहेतुभूतेषु हिंस्रमृगेषु त्वया सह निर्भयं वनं प्रविशामि । त्वदुदाहृतमखिलमपि दोषजातं गुण इत्येवमपि गुरुजनाज्ञया त्वया सह वनगमनमेव श्रेयः, त्वद्विना चाहं क्षणमपि जीवितुं न प्रभवामि ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रुतिर्हि श्रूयते पुण्या ब्राह्मणानां यशस्विनाम् ।
इह लोके च पितृभिर्या स्त्री यस्य महामते ॥

अद्भिर्दत्ता स्वधर्मेण प्रेत्यभावेऽपि तस्य सा ।
भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः ॥

नेतुमर्हसि काकुत्स्थ समानसुखदुःखिनीम् ।
यदि मां दुःखितामेवं वनं नेतुं न चेच्छसि ।
विषमग्निं जलं वाहमास्थास्ये मृत्युकारणात् ॥

इति सकरुणमभिदधानामपि सीतां निवर्तनैकमती रामभद्रः पुनरपि बहुप्रकारं सान्त्वयामास । ततः

सान्त्व्यमाना तु रामेण मैथिली जनकात्मजा ।
प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवम् ॥

किं त्वामन्यत वैदेहः पिता मे मिथिलाधिपः ।
राम जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥
अनृतं बत लोकोऽयमज्ञानाद्यद्धि वक्ष्यति ।
तेजो नास्ति परं रामे तपतीव दिवाकरे ॥
किं हि कृत्वा विषण्णस्त्वं कुतो वा भयमस्ति ते ।
यत्परित्यक्तुकामस्त्वं मामनन्यपरायणाम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

अत्र सीताकृतभर्त्रधिक्षेपः प्रणयमूलत्वान्न दोषावहः । अत एव प्रणयाच्चाभिमानाच्चेत्युक्तम् । इदं तु प्रागेव प्रतिपादितम् ।

द्युमत्सेनसुतं वीरं सत्यवन्तमनुव्रताम् ।
सावित्रीमिव मां विद्धि त्वमात्मवशवर्तिनीम् ॥

अत्र अन्यासु वह्वीषु पतिव्रतासु सतीषु सावित्र्या एव दृष्टान्तत्वेनोपादानं तस्या भर्त्रात्मपितृमातृश्वश्रूश्वशुरोद्धारकत्वेन सर्वापेक्षयातिशयितत्वात् । तथा च भारते, मद्रदेशाधिपतिः सुतार्थं सावित्रीं परिचर्य तत्प्रसादादनवद्यसर्वावयवां रूपिणीमिव श्रीदेवीं सावित्रीनाम्नीं कन्यकामवाप्य सदृशवरालाभप्रसेदखिद्यमानमानसस्तामेव दुहितरमभिलषितवरान्वेषणाय प्रेषयमास । सा तु हैमं रथवरमास्थाय वृद्धैरमात्यैः सह नगरोपवनानि सर्वाणि च तीर्थानि सर्वानाश्रमानभिगम्य पुनरपि सभायां नारदेन सह तास्ताः कथाः कथयन्तं स्वपितरमासाद्य सविनयमिदमभाषत—'अस्ति खलु साल्वाधिपतिर्द्युमत्सेनो नाम नरपतिः । स चागतिपरिगृहीतराज्यो बालपुत्रया भार्यया

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सह वनं प्रविश्य तपस्तप्यमानः कालेनान्धो बभूव; तत्पुत्रः सत्यवानखिलकलाकुशलः दर्शनमात्रेण हृदयानन्दकरो ममानुरूपो भर्तेति मनसा निश्चयमकरवम्' इति। ततः कोऽयं किमाचार इति राज्ञा पृष्टो देवर्षिर्नारदः समुदाजहार—'महेन्द्र इव वीरश्च वसुधेव क्षमान्वितः। सांकृते रन्तिदेवस्य स्वशक्त्या दानतः समः। ब्रह्मण्यः सत्यवादी च शिबिरौशीनरो यथा॥ ययातिरिव चोदारः सोमवत्प्रियदर्शनः। रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली। एक एवास्य दोषो हि गुणानाक्रम्य तिष्ठति॥ संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति' इति। तद्वचनादन्यं वृणीष्व नायं तवानुकूलो वर इति वदन्तं स्वपितरं सावित्र्युवाच— 'सकृदंशो निपतति सकृत्कन्या प्रदीयते। सकृदाह ददामीति त्रीण्येतानि सकृत्सकृत्॥ दीर्घायुरथ वाल्पायुः सगुणो निर्गुणोऽपि वा। सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम्॥ मनसा निश्चयं कृत्वा ततो वाचाभिधीयते। क्रियते कर्मणा पश्चात्प्रमाणं मे मनस्ततः॥' इति। ततः स्थिरबुद्धिं दुहितरम-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

वलोक्य सत्यवता पाणिं ग्राहयामास। सावित्र्यपि, अप-रमिव दैवतं भर्तारं परिचरन्ती नारदोक्तपतिमरणदिवसं संनिहितमेवावगत्य त्रिरात्रं व्रतमकरोत् । प्राप्ते च तस्मिन्दिवसे विधिवदग्निं प्रज्वाल्य हुत्वा चाहुतीः श्वशुरौ समीपवर्तिनौ ब्राह्मणांश्च प्रणम्य तेभ्यश्चावैधव्याशिषः परिगृह्य समिदाहरणाय वनमभिगच्छन्तं भर्तारमनुवव्राज। सत्यवानपि काष्ठानयनजनितशिरोवेदनया तस्या उत्सङ्गे सुखं सुष्वाप। ततः सा नारदवचो विमृशन्ती तपस्विनी। तं मुहूर्तं क्षणं वेलां दिवसं च युयोज ह ॥ ततः सत्यवतः पार्श्वे पाशहस्तं यममवलोक्य 'किमागमनकृत्यं किंनिमित्तं वा न दूतान्प्रेषितवानसि' इति सावित्र्या पृष्टो यमः, 'त्वमपि पतिव्रतानामग्रगण्येति ब्रवीमि धर्मसंयुक्तः सत्यवान्नन्यैर्नेतुमशक्य इति स्वयमेवागतोऽस्मि' इत्यवादीत् । ततः सत्यवतः कायात्पाशबद्धं वशंगतम् । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् । अथ सत्यवन्तमादाय दक्षिणां दिशमभिगच्छन्तं यममनुसरन्ती सावित्री निवर्तस्वेति तेनोक्ता तमाह— 'यत्र मे नीयते भर्ता स्वयं वा यत्र

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गच्छति । मया च तत्र गन्तव्यमेष धर्मः सनातनः॥ तपसा गुरुभक्त्या च भर्तुः स्नेहाद्व्रतेन च। तव चैव प्रसादेन न मे प्रतिहता गतिः॥ प्राहुः साप्तपदं मैत्रं बुधास्तत्त्वार्थदर्शिनः। मित्रतां च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु॥' साविच्युवाच—'नानात्मवन्तस्तु वने चरन्ति धर्मं च वासं च परिश्रमं च। विज्ञानतो धर्ममुदाहरन्ति तस्मात्सन्तो धर्ममाहुः प्रधानम्॥ एकस्य धर्मेण सतां मतेन सर्वे स्म तं मार्गमनुप्रपन्नाः। मा वै द्वितीयं मा तृतीयं च वाञ्छेत्तस्मात्सन्तो धर्ममाहुः प्रधानम्॥' यमः- 'निवर्त तुष्टोऽस्मि तवानया गिरा स्वराक्षरव्यञ्जनहेतुयुक्तया। वरं वृणीष्वेह विनास्य जीवितं ददानि ते सर्वमनिन्दिते वरम्॥' साविच्युवाच—'च्युतः स्वराष्ट्राद्वनवासमाश्रितो विनष्टचक्षुः श्वशुरो ममाश्रमे। स लब्धचक्षुर्बलवान्भवेन्नृपस्तव प्रसादाज्ज्वलनार्कसंनिभः॥' यम उवाच— 'ददानि तेऽहं तमनिन्दिते वरं यथा त्वयोक्तं भविता च तत्तथा। तवाध्वना ग्लानिमिवोपलक्षये निवर्त गच्छस्व न ते श्रमो भवेत्॥' साविच्युवाच-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रमः कुतो भर्तृसमीपतो हि मे यतो हि भर्ता मम सा गतिर्ध्रुवा। यतः पतिं नेष्यसि तत्र मे गतिः सुरेश भूयश्च वचो निबोध मे॥ सतां सकृत्संगतमीप्सितं परं ततःपरं मित्रमिति प्रचक्षते। न चाफलं सत्पुरुषेण संगतं ततः सतां संनिविशेत्समागमे॥' यम उवाच— 'मनोनुकूलं बुधबुद्धिवर्धनं त्वया यदुक्तं वचनं हिताश्रयम्। विना पुनः सत्यवतोऽस्य जीवितं वरं द्वितीयं वरयस्व भामिनि॥' सावित्र्युवाच— 'हृतं पुरा मे श्वशुरस्य धीमतः तमेव राज्यं लभते स पार्थिवः। जह्यात्स्वधर्मान्न च मे गुरुर्यथा द्वितीयमेतं वरयामि ते वरम्॥' यम उवाच—'स्वमेव राज्यं प्रतिपत्स्यतेऽचिरान्न च स्वधर्मात्परिहास्यते नृपः। कृतेन कामेन मया नृपात्मजे निवर्त गच्छस्व न ते श्रमो भवेत्॥' सावित्र्युवाच— 'प्रजास्त्वयैतानि यमेन संयता नियम्य चैता नयसे निकामया॥ ततो यम त्वं तव देवविश्रुतं निबोध चेमां गिरमीरितां मया। अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा। अनुग्रहश्च दानं च सतां धर्मः सनातनः॥ एवंप्रायश्च



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लोकोऽयं मनुष्या भक्तिपेशलाः । सन्तः स्वे वाप्यमित्रेषु दयां प्राप्तेषु कुर्वते ॥' यम उवाच— 'पिपासितस्येव भवेद्यथा पयस्तथा त्वया वाक्यमिदं समीरतम् । विना पुनः सत्यवतोऽस्य जीवितं वरं वृणीष्वेह शुभे यदिच्छसि ॥' सावित्र्युवाच— 'ममानपत्यः पृथिवीपतिः पिता भवेत्पितुः पुत्रशतं तथौरसम् । कुलस्य संतानकरं च यद्भवेत्तृतीयमेतद्वरयामि ते वरम् ॥' यम उवाच— 'कुलस्य संतानकरं सुवर्चसं शतं सुतानां पितुरस्तु ते शुभे । कृतेन कामेन नराधिपात्मजे निवर्त दूरं हि पथस्त्वमागता ॥' सावित्र्युवाच— 'न दूरमेतन्मम भर्तृसंनिधौ मनो हि मे दूरतरं प्रधावति । अथ व्रजन्नेव गिरं समुद्यतां मयोच्यमानां शृणु भूय एव च ॥ विवस्वतस्त्वं तनयः प्रतापवांस्ततो हि वैवस्वत उच्यसे बुधैः । शमेन धर्मेण च रञ्जिताः प्रजास्ततस्तवेहेश्वर धर्मराजता ॥ आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः । तस्मात्सत्सु विशेषेण सर्वः प्रणयमिच्छति ॥ सौहृदात्सर्वभूतानां विश्वासो नाम जायते । तस्मात्सत्सु विशेषेण विश्वासं कुरुते जनः ॥'

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यम उवाच— 'उदाहृतं ते वचनं यदङ्गने श्रुतं न तादृक्त्वद्दते श्रुतं मया । अनेन तुष्टोऽस्मि विनास्य जीवितं वरं चतुर्थं वरयस्व गच्छ च ॥' सावित्र्युवाच— 'ममात्मजं सत्यवतस्तथौरसं भवेदुभाभ्यामिह यत्कुलोद्वहम् । शतं सुतानां बलवीर्यशालिनामिदं चतुर्थं वरयामि ते वरम् ॥' यम उवाच— 'शतं सुतानां बलवीर्यशालिनां भविष्यति प्रीतिकरं तवाबले । परिश्रमस्ते न भवेन्नृपात्मजे निवर्त दूरं हि पथस्त्वमागता ॥' सावित्र्युवाच— 'सतां सदा शाश्वतधर्मवृत्तिः सन्तो न सीदन्ति न च व्यथन्ति । सतां सद्भिर्नाफलः संगमोऽस्ति सद्भ्यो भयं नानुवर्तन्ति सन्तः ॥ सन्तो हि सत्येन नयन्ति सूर्यं सन्तो भूमिं तपसा धारयन्ति । सन्तो गतिर्भूतभव्यस्य राजन्सतां मध्ये नावसीदन्ति सन्तः ॥ आर्यजुष्टमिदं वृत्तमिति विज्ञाय शाश्वतम् । सन्तः परार्थं कुर्वाणा नावेक्षन्ति परस्परम् ॥ न च प्रसादः सत्पुरुषेषु मोघो न चाप्यर्थो नश्यति नापि मानः । यस्मादेतन्नियतं सत्सु नित्यं तस्मात्सन्तो रक्षितारो भवन्ति ॥' यम उवाच—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'यथा यथा भाषसि धर्मसंहितं मनोनुकूलं सुपदं महार्थवत् । तथा तथा मे त्वयि भक्तिरुत्तमा वरं वृणीष्वाप्रतिमं पतिव्रते ॥' सावित्र्युवाच—'न तेऽपवर्गः सुकृताद्विनाकृतस्तथा यथान्येषु वरेषु मानद । वरं वृणे जीवतु सत्यवानयं यथा मृता ह्येवमहं पतिं विना ॥ न कामये भर्तृविनाकृता सुखं न कामये भर्तृविनाकृता दिवम् । न कामये भर्तृविनाकृता श्रियं न भर्तृहीना व्यवसामि जीवितुम् ॥ वरातिसर्गः शतपुत्रता मम त्वयैव दत्तो ह्रियते च मे पतिः । वरं वृणे जीवतु सत्यवानयं तवैव सत्यं वचनं भविष्यति ॥' मार्कण्डेय उवाच—'तथेत्युक्त्वा तु तं पाशं मुक्त्वा वैवस्वतो यमः । धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ॥' यम उवाच—'एष भद्रे मया मुक्तो भर्ता ते कुलनन्दिनि । अरोगस्तव नेयश्च सिद्धार्थः स भविष्यति ॥ त्वयि पुत्रशतं चैव सत्यवाञ्जनयिष्यति । ते चापि सर्वे राजानः क्षत्रियाः पुत्रपौत्रिणः । ख्यातास्त्वन्नामधेयाश्च भविष्यन्तीह शाश्वताः ॥ मालव्यां मालवा नाम शाश्वताः पुत्रपौत्रिणः । भ्रातरस्ते भविष्यन्ति क्षत्रियास्त्रिदशोपमाः ।'

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं तस्यै वरं दत्त्वा धर्मराजः प्रतापवान् । निवर्तयित्वा सावित्रीं स्वमेव भवनं ययौ ॥ सावित्र्यपि यमे याते भर्तारं प्रतिलभ्य च । जगाम तत्र भर्त्रास्य भर्तुः श्यावं कलेवरम् ॥ सा भूमौ प्रेक्ष्य भर्तारमुपसृत्योपगृह्य च । उत्सङ्गे शिर आरोप्य भूमावुपविवेश ह ॥ संज्ञां च स पुनर्लब्ध्वा सावित्रीमभ्यभाषत । प्रोष्यागत इव प्रेम्णा पुनः पुनरुदीक्ष्य वै ॥ सत्यवानुवाच—'सुचिरं वत सुप्तोऽस्मि किमर्थं नावबोधितः। क्व चासौ पुरुषः श्यामो योऽसौ मां संचकर्ष ह ॥' ततो रजन्यां व्युष्टायामखिलेन यथावृत्तमाख्यास्यामि; त्वद्वियोगजनितखेदकलुषितान्तःकरणौ पितरौ जीवितसंशयमेष्यतः; तदधुनैव गच्छाव इति सावित्र्याभिहितः सत्यवांस्तया सह स्वमाश्रमं प्रायात् । अत्रान्तरे लब्धचक्षुर्द्युमत्सेनः चिरकालगतसुतपदवीमार्गणाय नदीनदाश्रमोपवनानि इतस्ततः सभार्यः संचरंस्तदसंदर्शनेन च परिमुषितमिवात्मानं मन्वानः हा पुत्र हा साध्वि क्वासि देहि मे प्रतिवचनमिति सकरुणं विलपन्यदृच्छया समागतैराश्रमवासिमुनिजनैः समाश्वस्य सकरुणमेवम-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भाणि। सुवर्चा उवाच— 'यथास्य भार्या सावित्री तपसा च दमेन च। आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥' भरद्वाजः—'यथास्य भार्या सावित्री सर्वै-रेव सुलक्षणैः। अवैधव्यकरैर्युक्ता तथा जीवति सत्यवान्।' दाल्भ्य उवाच— 'यथा दृष्टिः प्रवृत्ता ते सावित्र्याश्च यथाव्रतम्। गताहारमकृत्वा च तथा जीवति सत्यवान् ॥' ततो मुहूर्तात्सावित्र्या सह सत्यवान्स्वमाश्रममागम्य पितरौ सर्वांश्चाश्रमवासिनो मुनीन् अभिवाद्य तैश्च किं-निमित्तं चिरादागमनं को वा प्रतिबन्धस्तवाभूदिति पृष्टः-काष्ठपाटनसंजातशिरोवेदनया चिरमहं सुप्तो न किमपि अवेदिषमित्यब्रवीत्। सावित्री तु तैश्छन्द्यमाना सर्वमपि निजवृत्तान्तमाचचक्षे। तद्वचनश्रवणसंजातविस्मयैस्तदा-श्रमवासिमुनिजनैः सादरमेवमभाणि। 'निमज्जमानं व्यस-नैरभिद्रुतं कुलं नरेन्द्रस्य तमोमये ह्रदे। त्वया सुशीलव्र-तपुण्यया कुलं समुद्धृतं साध्वि पुनः कुलीनया ॥' ततः प्रभातायां रजन्यामुदिते च दिनकरमण्डले कृताह्निकक्रि-येषु तपोधनेषु द्युमत्सेनोऽपि स पुत्रकृतनित्यक्रियः सावि-

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

त्रीकथितां कथां पुनः पुनः कथयन्नमन्दानन्दहृदयोऽभूत् । अत्रान्तरेऽमात्यनिहताऽरातिवर्गं निराबाधं जनपदं शासितुं प्रयाहि चातकालिर्जलदमिव त्वदभिगमनमभिकाङ्क्षति चतुरङ्गबलमध्यास्स्व च चिररात्राय पितृपैतामहपदमिति साल्वेभ्यः समागतानां प्रकृतीनां श्रवणसुखसंजननानि वचनानि श्रुत्वा तदैव समीपवर्तिनो मुनीनभिवाद्य रथगजतुरगपदादिचतुरङ्गबलपरिवृतो महता रथेन स्वनगरं जगाम । ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः ॥ पुत्रं चास्य महात्मानं यौवराज्येऽभ्यषेचयन् । ततः कालेन महता सावित्र्याः कीर्त्तिवर्धनम् ॥ तद्वै पुत्रशतं जज्ञे शूराणामनिवर्तिनाम् । भ्रातृणां सोदराणां च तथैवास्याभवच्छतम् ॥ मद्राधिपस्याश्वपतेः मालव्यां सुमहद्बलम् । एवमात्मा पिता माता श्वश्रूः श्वशुर एव च ॥ भर्तुः कुलं च सावित्र्या सर्वं कृच्छ्रात्समुद्धृतम् ।' इति ॥

न त्वहं मनसाप्यन्यं द्रष्टास्मि त्वदृतेऽनघ ।<br>
त्वया राघव गच्छेयं यथान्या कुलपांसनी ॥<br>
स्वयं तु भार्यां कौमारीं चिरमध्युषितां सतीम् ।<br>
शैलूष इव मां राम परेभ्यो दातुमिच्छसि ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यस्य पथ्यं च रामात्थ यस्य चार्थेऽवरुध्यसे ।
त्वं तस्य भव वश्यश्च विधेयश्च सदानघ ॥

कुशकाशशरेषीका ये च कण्टकिनो द्रुमाः ।
तूलाजिनसमस्पर्शा मार्गे मम सह त्वया ॥

पत्रं मूलं फलं यत्त्वमल्पं वा यदि वा बहु ।
दास्यसि स्वयमाहृत्य तन्मेऽमृतरसोपमम् ॥

यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना ।
इति जानन्परां प्रीतिं गच्छ राम मया सह ॥

अनेन पतिव्रताधर्मा उक्ताः । प्रपञ्चितं चैतत्प्रागेव ।

इति सा शोकसंतप्ता विलप्य करुणं बहु ।
चुक्रोश भृशमायस्ता पतिमालिङ्ग्य सस्वरम् ॥

तां परिष्वज्ज्य बाहुभ्यां विसंज्ञामिव दुःखिताम् ।
उवाच वचनं रामः परिविश्वासयंस्तदा ॥

यत्सृष्टासि मया सार्धं वनवासाय मैथिलि ।
न विहातुं मया शक्या कीर्त्तिरात्मवता यथा ॥

एष धर्मश्च सुश्रोणि पितुर्मातुश्च वश्यता ।
अतश्चाहं व्यतिक्रम्य नाहं जीवितुमुत्सहे ॥

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

स्वाधीनं समतिक्रम्य पितरं मातरं गुरुम् ।
अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते ॥

यत्र यत्र त्रयो लोकाः पवित्रं तत्समं भुवि ।
नान्यदस्ति शुभापाङ्गे तेनेदमभिराध्यते ॥

न सत्यं दानमानौ वा न यज्ञाश्चाप्तदक्षिणाः ।
तथा बलकराः सीते यथा सेवा पितुर्मम ॥

स मां पिता यथा शास्ति सत्यधर्मपथे स्थितः ।
तथा वर्तितुमिच्छामि स हि धर्मः सनातनः ॥

ममासन्ना मतिः सीते त्वां नेतुं दण्डकावनम् ।
आरभस्व शुभश्रोणि वनवासक्षमाः क्रियाः ॥

ब्राह्मणेभ्यश्च रत्नानि भिक्षुकेभ्यश्च भोजनम् ।
देहि स्वभृत्यवर्गेभ्यो ब्राह्मणानामनन्तरम् ॥

एवमुक्ता सीता तद्वचनशीता तद्वचनश्रवणसंजात-संतोषेण धनानि दातुमुपचक्रमे । ननु वनगमनकारणं किमिति सीतया पृष्टोऽपि रामः,

स्वाधीनं समतिक्रम्य पितरं मातरं गुरुम् ।
अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति किमर्थमुक्तवानिति चेन्न; कैकेयीदशरथसंनिधाने प्रत्यक्षदेवतात्ववचनमुपचारार्थमेवेति शङ्का स्यादिति तन्निवृत्त्यर्थं पित्रोरसंनिधानेऽपि पुनरपि स्वहृदयभूतां सीतां प्रत्युक्तवानिति न दोषः । नन्वेवमपि 'तासां स्नेहो नरैः कार्यस्तथैवेर्ष्या जनेश्वर । खेदमास्थाय भुञ्जीत धर्ममास्थाय चैव हि ॥' इति, 'अत्यन्तवल्लभोऽस्मीति विस्रम्भः स्त्रीषु न व्रजेत्' इत्यादिवचनेन 'कश्चिन्न श्रद्दधत्यासां कश्चिद्गुह्यं न भाषते' इति धर्मपुत्रं प्रति विश्वासगुह्यभाषणनिषेधकनारदवचनेन, स्त्रीषु विस्रम्भो न कर्तव्यः । एवं सति,

वचनं तन्नयति मां पितुः सत्योपबृंहितम् ।
एष धर्मश्च सुश्रोणि पितुर्मातुश्च वश्यता ॥

इत्यादिधर्मरहस्यवचनं रामेण विस्रम्भपूर्वकं सीतां प्रति कथमुक्तमिति चेत्; न । स्त्रीणां विस्रम्भनिषेधस्तु असत्स्त्रीविषयः, अत एव रामोऽपि 'समस्थमनुरज्ज्यन्ति विषमस्थं त्यजन्ति च' इत्यसत्स्त्रीस्वभावः सीतायामपि वर्तते वा न वेति शङ्कया विषमकाले तद्धृदयं ज्ञातुं वन-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

दोषानुदाहृत्य त्वमत्रैव तिष्ठेति अभिहितवान् । ततः

यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना ।
इति जानन्परां प्रीतिं गच्छ राम मया सह ॥

इत्येवमादिवचनैर्विषमकालेऽपि स्वेन सह वनवासदृढनिश्चयाम्

तव सर्वमभिप्रायमविज्ञाय शुभानने ।
वासं न रोचयेऽरण्ये शक्तिमानपि रक्षणे ॥

इत्यभिधानपूर्वकं स्वस्मिन्सीतानुरागं सौशील्यं च जानन्विस्रंभपूर्वकं 'वचनं तन्नयति मां पितुः सत्योपबृंहितम्' इत्यादिधर्मरहस्यवचनं स्वहृदयभूतां सतीं सीतां प्रत्युक्तवानिति न दोषः । अत्र,

किं त्वामन्यत वैदेहः पिता मे मिथिलाधिपः ।
राम जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥

इत्यादिप्रकारेण बहुविधमधिक्षिप्तोऽपि रामः,

क्रोधाविष्टां तु वैदेहीं काकुत्स्थो बह्वसान्त्वयत् ।

इति सान्त्ववचनमेवोक्तवानित्यवगम्यते । तथा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स हि धर्मो मम द्वेष्यः प्रसङ्गाद्यत्र मुह्यसि ।
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥

इत्यादिप्रकारेण पितरं स्वं चाधिक्षिप्तवन्तं लक्ष्मणमपि

विमृज्य बाष्पं परिसान्त्व्य चासकृ-
त्स लक्ष्मणं राघववंशवर्धनः ।

इत्येवमादिप्रकारेण सान्त्ववचनमेव उक्तवानित्यवगम्यते । अग्रेऽपि 'न क्रुध्यत्यभिशप्तोऽपि' इत्यादिवचनेन च सर्वविषयेऽपि सहनं प्रतीयते । तत्र 'न क्रुध्यति' इति वचनस्य मातृसमुदीरितत्वात्, तासां च मान्यत्वात् तत्कृताधिक्षेपसहनं न्याय्यम् । सीतालक्ष्मणयोस्तु शिक्षणीयत्वेन तत्कृताधिक्षेपसहनं युक्तमेव । तथा च मनुः— 'ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः । वृद्धबालातुरैर्वैद्यैर्ज्ञातिसंबन्धिबान्धवैः ॥ मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्यया । दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥ एतैर्विवादं संत्यज्य सर्वपापैः प्रमुच्यते । एतैर्जितश्च जयति सर्वाँल्लोकानिमान्गृही ॥ आचार्यो

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः। अतिथिस्त्विन्द्रलोकेशो देवलोकस्य चर्त्विजः॥ जामयोऽप्सरसां लोके वैश्वदेवस्य बान्धवाः। संबन्धिनो द्युलोकस्य पृथिव्यां मातृमातुलौ॥ आकाशेशास्तु विज्ञेया बालवृद्धातुराः कृशाः। भ्राता ज्येष्ठः समः पित्रा भार्यापुत्रौ स्वका तनुः॥ छाया स्वदासवर्गस्तु दुहिता कृपणं परम्। तस्मादेतैरधिक्षिप्तः सहेतासंज्वरः सदा॥' इति। मोक्षधर्मे युधिष्ठिरं प्रति व्यासवचनमपि— 'ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः। वृद्धबालातुरैर्वैद्यैर्ज्ञातिसंबन्धिबान्धवैः॥ मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्यया। दुहित्रा दासवर्गेण विवादं न समाचरेत्॥ एतान्विमुच्य संवादान्सर्वपापैः प्रमुच्यते। एतैर्जितस्तु जयति सर्वलोकान्न संशयः॥ आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः। अतिथिस्त्विन्द्रलोकेशो देवलोकस्य ऋत्विजः॥ जामयोऽप्सरसां लोके वैश्वदेवे तु ज्ञातयः। संबन्धिबान्धवा दिक्षु पृथिव्यां मातृमातुलौ॥ वृद्धबालातुरकृशास्त्वाकाशे प्रभविष्णवः। भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वका तनुः ॥ छाया स्वा दासवर्गश्च दुहिता कृपणं परम् । तस्मादेतैरधिक्षिप्तः सहेन्नित्यमसंज्वरः ॥ गृहधर्मपरो विद्वान्धर्मशीलो जितक्लमः ।' इति । एकत्रिंशे— ततः सीतया सह वनगमने कृतनिश्चयं रामभद्रमवलोक्य शोकाकुलहृदयो लक्ष्मणः भ्रातुश्चरणौ उपसंगृह्य,

यदि गन्तुं कृता बुद्धिर्वनं मृगगजायुतम् ।
अहं त्वानुगमिष्यामि वनमग्रे धनुर्धरः ॥

न देवलोकाक्रमणं नामरत्वमहं वृणे ।
ऐश्वर्यं वापि लोकानां कामये न त्वया विना ॥

इत्यवादीत् । अनेन इतरैरपि कनिष्ठैः प्राप्तस्वर्गादिसुखपरित्यागपूर्वकमतिक्लेशमनुभूयापि पितृसमो ज्येष्ठो भ्रातानुसर्तव्य इति धर्मः सूचितः । तथा च मनुः– 'पितेव पालयेत्पुत्राञ्ज्येष्ठो भ्राता यवीयसः । पुत्रवच्चापि वर्तेरञ्ज्येष्ठे भ्रातरि धर्मतः ॥' इति । पुराणसारेऽपि—'कनिष्ठास्तन्नमस्येरन्सर्वे च्छन्दानुवर्तिनः । तमेव चोपजीवेरन्यथैव पितरं तथा ॥' इति । भीष्मपर्वण्यपि— 'ततो युधिष्ठिरो दृष्ट्वा युद्धाय सुसमुद्यते । ते सेने सागरप्रख्ये

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

मुहुः प्रचलिते नृप ॥ विमुच्य कवचं वीरो निक्षिप्य च वरायुधम् । अवरुह्य रथात्तूर्णं पद्भ्यामेव कृताञ्जलिः ॥ पितामहमभिप्रेक्ष्य धर्मपुत्रो युधिष्ठिरः । वाग्यतः प्रययौ येन प्राङ्मुखो रिपुवाहिनीम् ॥ तं प्रयान्तमभिप्रेक्ष्य कुन्तीपुत्रो धनंजयः । अवतीर्य रथात्तूर्णं भ्रातृभिः सहितोऽभ्यगात् ॥' इति । सभापर्वण्यपि युधिष्ठिरः— 'श्यामो युवा लोहिताक्षः सिंहस्कन्धो महाभुजः । नकुलो ग्लह एवैको विध्येरन्मम तद्धनम् ॥ अयं धर्मान्सहदेवोऽनुशास्ति लोके ह्यस्मिन्पण्डिताख्यां गतश्च । अनर्हता राजपुत्रेण तेन दीव्याम्यहं चाप्रियवत्प्रियेण ॥ यो नः संख्ये नौरिव पारनेता जेता रिपूणां राजपुत्रस्तरस्वी । अनर्हता राजपुत्रेण तेन दीव्याम्यहं शकुने फाल्गुनेन ॥ यो नो नेता यो युधानं प्रणेता यथा वज्री दानवशत्रुरेकः । तिर्यक्प्रेक्षी संनतभ्रूर्महात्मा सिंहस्कन्धो यश्च सदात्यमर्षी ॥ बलेन तुल्यो यस्य पुमान्न विद्यते गदाभृतामग्र्य इहारिमर्दनः । अनर्हता राजपुत्रेण तेन दीव्याम्यहं भीमसेनेन राजन्' इति । तत्रैव दुर्योधनं प्रति भीमसेनः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'ईशानः पुण्यतपसां प्राणानामपि चेश्वरः । मन्यते जितमात्मानं यद्येष विजिता वयम् ॥' इति । एवं महाप्रस्थाने कनिष्ठकृतं ज्येष्ठानुवर्तनम्—'ततोऽनुमान्य धर्मात्मा पौरजानपदं जनम् । गमनाय मतिं चक्रे भ्रातरश्चास्य ते तदा । ततः स राजा कौरव्यो धर्मपुत्रो युधिष्ठिरः । विसृज्याभरणान्यङ्गाज्जगृहे वल्कलान्युत ॥ भीमार्जुनयमाश्चैव द्रौपदी च यशस्विनी । तथैव जगृहुः सर्वे वल्कलानि नराधिप । हर्षोऽभवद्धि सर्वेषां भ्रातृणां गमनं प्रति । युधिष्ठिरमतं ज्ञात्वा वृष्णिक्षयमवेक्ष्य च ॥ युधिष्ठिरो ययावग्रे भीमस्तु तदनन्तरम् । अर्जुनस्तस्य चान्वेव यमौ चापि यथाक्रमम् ॥ पृष्ठतस्तु वरारोहा श्यामा पद्मदलेक्षणा । द्रौपदी योषितां श्रेष्ठा ययौ भरतसत्तम ॥' इति । ततस्तद्वचनमाकर्ण्य मद्वियोगेन कैकेयीकृततिरस्कारेण च क्लिश्यमानायाः स्मरणमपि न करिष्यति । अतस्तद्रक्षणायात्रैव स्थेयं तेन चाहमपि पूजितो भवामीति रामसमुदीरितं वचनमाकर्ण्य लक्ष्मण एवमवादीत् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कौसल्या बिभृयादार्या सहस्रमपि मद्विधान् ।
यस्याः सहस्रं ग्रामाणां संप्राप्तमुपजीवनम् ॥

भरतोऽपि त्वत्तेजस्तः चकितहृदयः कौसल्यां परिचरिष्यति ।

कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते ।
भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते ।
अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥

इति । ननु, ज्येष्ठभ्राता पितृसमो मृते पितरि भूसुराः । कनिष्ठास्तं नमस्येरन्सर्वे च्छन्दानुवर्तिनः ॥ इत्यादिस्मृतिपर्यालोचनया पितुरनन्तरमेव ज्येष्ठभ्रात्रनुसरणस्य कर्तव्यत्वावगमेन तद्विरुद्धतया विद्यमान एव पितरि लक्ष्मणेन ज्येष्ठभ्रात्रनुसरणं कथं कृतम् 'तस्यां शुश्रूषा नित्या पतितायामपि' इत्यापस्तम्बवचनपर्यालोचनया मातृशुश्रूषणस्य अवश्यकर्तव्यत्वावगमेन मातृशुश्रूषणं वा कथं वा न कृतम् इति चेन्न । पित्रोः संमतत्वेन ज्येष्ठानुसरणस्य युक्तत्वात् । पितृसंमतत्वं च,

रामं शुश्रूषता भक्त्या वैदेह्या सह सीतया ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कृता मम महाप्रीतिः प्राप्तं धर्मफलं च ते ॥

इति युद्धकाण्डस्थदशरथवचनादवगम्यते । तथा मातृसंमतत्वमपि,

व्यसनी वा समृद्धो वा गतिरेष तवानघ ।
एष लोके सतां धर्मो यज्ज्येष्ठवशगो भवेत् ॥
इदं हि वृत्तमुचितं कुलस्यास्य सनातनम् ।
रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् ॥
अयोध्यामटवीं विद्धि गच्छ तात यथासुखम् ।

इत्यत्रैव सुमित्रावचनादवगम्यते । ततः प्रसन्नहृदयेन रामेण वनगमनाय कृताभ्यनुज्ञो लक्ष्मणः तदाज्ञया आचार्यसद्मनि नित्यं पूजिते सखड्गे रौद्रे धनुषी अभेद्यकवचम्, अक्षय्यसायकौ तूणी चादाय रामाय निवेदयामास—

तमुवाचात्मवान्रामः प्रीत्या लक्ष्मणमागतम् ।
अहं प्रदातुमिच्छामि यदिदं मामकं धनम् ॥
ब्राह्मणेभ्यस्तपस्विभ्यस्त्वया सह परंतप ।
वसन्तीह दृढं भक्त्या गुरुषु द्विजसत्तमाः ॥
तेषामपि च मे भूयः सर्वेषां चोपजीविनाम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

वसिष्ठपुत्रं च सुयज्ञमार्यं
त्वमानयाशु प्रवरं द्विजानाम् ।
अभिप्रयास्यामि वनं समस्ता-
नभ्यर्च्य शिष्टानपरान्द्विजातीन् ॥

इति । ननु, अहं प्रदातुमिच्छामीत्यादिवचनैः,

अयं स पुरुषव्याघ्रो द्वारि तिष्ठति ते सुतः ।
ब्राह्मणेभ्यो धनं दत्त्वा सर्वं चैवोपजीविनाम् ॥

इत्यग्रे सुमन्त्रवचनेन च रामेण जीवति पितरि द्रव्यदानं कृतमित्यवगम्यते । तदेतन्नोपपद्यते । 'ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरस्तथा । भजेरन्पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥ भार्या पुत्रश्च दासश्च त्रय एतेऽधनाः स्मृताः । यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥' इति मनुवचनेन ऊर्ध्वं पितुः पुत्रा रिक्थं भजेरन् । 'निवृत्ते रजसि मातुः' इति गौतमवचनेन 'जीवतोर्न स्वतन्त्रः स्याज्जरयापि समन्वितः' इति याज्ञवल्क्यवचनेन च पितुरूर्ध्वमेव द्रव्यस्वामित्वस्वातन्त्र्ययोरवगमेन जीवति पितरि द्रव्यस्वामित्वाभावेन स्वातन्त्र्या-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भावेन च पुत्रेण दातुमशक्यत्वादिति चेत्, न। रामस्य उत्पत्तिप्रभृति पित्र्यादिधने स्वामित्वमस्त्येव। तथा हि स्वत्वं तावन्न शास्त्रैकश्रुत्येकसमधिगम्यं किं तर्हि लौकिकप्रमाणगम्यम्। लौकिकाश्च पुत्रजन्मप्रभृत्येव पुत्रे द्रव्यस्वामित्वं व्यवहरन्ति। अतः पित्रार्जितधनेष्वपि उत्पत्तिप्रभृति स्वामित्वमस्त्येव। अयं चार्थः 'अधुना वर्ण्यते दायविभागो योगमूर्तिना' इत्येतच्छ्लोकव्याख्यानावसरे विज्ञानेश्वरेण विचारपूर्वकं निर्णीतः। तथा तत्र संदेहः–स्वस्य सतो विभागो विभागात्स्वत्वं वेति। तत्रापि किं लौकिकप्रमाणगम्यं स्वत्वम्, अथ वा शास्त्रैकसमधिगम्यमेव स्वत्वम्, अन्यथा स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु 'ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः' इति गौतमवचनवैयर्थ्यापत्तेः। अस्य चायमर्थः–रिक्थं पित्राद्यानन्तर्यप्राप्तं क्रयो मूल्येन द्रव्यान्तरस्वीकारः। संविभागो भ्रात्रादीनां साधारणस्य परस्परं विभागः। परिग्रहो ह्यन्येषु अस्वामिकेषु वृक्षेषु तृणजलकाष्ठादिषु प्रथमस्वीकारः। एतेषु निमित्तेषु द्रव्य-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

स्वामित्वं भवति। एतानि सर्ववर्णसाधारणानि स्वत्व-निमित्तानि। अथ ब्राह्मणस्याधिकं लब्धं याजनाध्यापन-प्रतिग्रहैर्यल्लब्धं तदधिकमसाधारणं स्वं ब्राह्मणस्य। क्षत्रि-यस्य विजितं विजयेन लब्धमधिकं स्वम्। निर्विष्टं वैश्य-शूद्रयोः निर्विष्टं कर्मोपात्तं वैश्यस्य कृष्यादिना शुश्रूषा-दिना शूद्रस्य च लब्धमधिकम् इति। धारणं स्वं तथा च एतादृशस्वत्वबोधकशास्त्रवैयर्थ्यापत्तेः। एतच्छास्त्र-मन्तरापि लोकत एकत एव स्वत्वावगमे उदाहृतस्वत्वबो-धकसूत्रवैयर्थ्यापत्तेः। तथा— 'यो दत्ता दायिनो हस्ता ल्लिप्सेत ब्राह्मणो धनम्। याजनाध्ययनेनापि यथा स्तेनस्तथैव सः' इति चोरयाजनादिना द्रव्यमार्जयतां तत्समानदण्ड-विधानमनुपपन्नं स्यात्। लोकतश्चोरस्यापि स्वत्वसंभवेन तद्याजनेन धनग्राहिणः चौर्यप्रसक्त्यभावात्। अपि च लौकिकं चेत्स्वत्वं मम स्वमनेनापहृतमिदं दापयेति न ब्रूयात्। अपहर्तुरेव स्वत्वात्। अपि च सुवर्णरजतादि-स्वरूप इव अस्य स्वं अस्य वा स्वमिति संदेहो न स्यात्। यस्य हस्ते यद्वर्तते तस्य स्वं तदिति निश्चितत्वात्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्माच्छास्त्रैकसमधिगम्यं स्वत्वमिति । अत्रोच्यते—स्वत्वं लौकिकमेव लौकिकार्थक्रियासाधनत्वाद्व्रीह्यादिवत् । न च पाकरूपलौकिकार्थक्रियासाधनत्वात् अदृष्टाहवनीयादीनामपि लौकिकत्वं स्यादिति वाच्यम् । विविधसंभारसंभृतदेशविशेषनिधानादिसंस्कृताग्निरूपाहवनीयस्य परिदृश्यमानवह्नित्वेन पाकसाधनत्वेऽपि अदृष्टाहवनीयरूपेण पाकसाधनत्वाभावात् । नैवं धने धनत्वेन क्रयसाधनत्वं संभवति, अपि तर्हि स्वकीयधनत्वेन अन्यथा अन्यदीयादपि धनात् आपणीयवस्तूनां क्रयविक्रयादिव्यवहारापत्तेः । अपि च अनाघ्रातशास्त्रगन्धानां म्लिच्छानां स्वत्वव्यवहारो न स्यात् । न चेष्टापत्तिः, तन्मूलक्रयविक्रयादिव्यवहारोच्छेदप्रसङ्गात् । किं च स्वत्वस्य लौकिकत्वाभावे 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' इति लिप्सासूत्रतृतीयवर्णके 'याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमार्जयेत्' इति द्रव्यार्जनोपायनियमः किं क्रत्वर्थः उत पुरुषार्थ इति संदिह्य क्रत्वर्थ इति पूर्वपक्षं प्रापय्य क्रतुप्रकरणाम्नानाभावात् पुरुषार्थतया याजनाध्यापनप्रतिग्रहार्जितैः द्रव्यैः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

क्रतुनिर्वृत्तिसिद्धेश्च पुरुषार्थो द्रव्यार्जनोपायनियम इति सिद्धान्तं चाभिधाय पूर्वपक्षे नियमातिक्रमात् क्रतोर्वैगुण्यं न पुरुषः प्रत्यवैति इति योजनम्, सिद्धान्ते तु पुरुषः नियमातिक्रमात्प्रत्यवायं प्राप्नोति न क्रतोर्वैगुण्यमिति च प्रयोजनमभिहितम्; तदिदं सर्वमनुपपन्नं स्यात्। स्वत्वस्य शास्त्रैकसमधिगम्यत्वं वदता याजनादिशास्त्रेणैव स्वत्वस्यावगम इति वक्तव्यम् । तेन च नियतोपायैरेव आर्जितद्रव्येषु स्वत्वावगमेन अन्योपायसाध्ये द्रव्ये स्वत्वाभावेन तादृशद्रव्यार्जनप्रयुक्तप्रत्यवायस्य क्रतुवैगुण्यस्य चाप्रसक्तेः न चैवं चोरापहृतद्रव्येऽपि चोरस्वत्वं स्यादिति वाच्यम् । चौर्यस्य लोकतोऽपि स्वत्वसाधनत्वे विवादात्। न हि चौर्येण समानीतं द्रव्यं चोरस्वमिति लौकिका अपि व्यवहरन्ति। प्रत्युत चौर्यनिश्चये पुनरपि राज्ञा दापनीयत्वावगमात्। तथा च गौतमः— चोरहृतमुपाविश्य यथास्थानं गमयेत् कोशाद्वा दद्यादिति । अविहितोपायसाध्ये च द्रव्ये स्वत्वमङ्गीकृत्यैव क्रयविक्रयादिना व्यवहरन्ति । नियमातिक्रमात्पुरुषः परं प्रत्यवायं प्राप्नोतीति अतः स्वत्वस्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लौकिकत्वमुपपन्नमेवेति । यदुक्तं लौकिकत्वे स्वत्वस्य स्वत्वप्रतिपादकसूत्रवैयर्थ्यमिति तदपि न, मन्दबुद्धीनां व्यामोहनिराकरणार्थं न तु अप्राप्तस्वत्वविधानार्थमिति न सूत्रवैयर्थ्यशंका। यदपि चोरं याजकस्येत्यादि तदपि न द्रव्यस्यान्यदीयतया चोरस्य स्वतानिष्पत्तौ तेन त्यक्तुमशक्यतया तद्याजने प्रायश्चित्तं तद्द्रव्यपरिग्रहे चोरत्वं च भवत्येवेति चौर्यार्जितं द्रव्यं चोरस्वं न भवतीत्यनेनैव मदीयस्वमनेनापहृतमिति व्यवहारोऽप्युपपन्न एव। यदपि मदीयमन्यदीयं वेति संदेहो न स्यादिति तदपि न, उपायसंदेहेन तत्संदेहोपपत्तेः। तस्मात्स्वत्वं लौकिकप्रमाणगम्यमेव। एतादृशमपि स्वत्वं किमुत्पत्तिप्रभृति उत विभागादिनेति संदेहः। तत्तत्पूर्वपक्षः। विभागेनैव स्वत्वम्। अन्यथा जातपुत्रस्य आधानविधानं न स्यात्। उत्पन्नपुत्रसाधारणत्वात् द्रव्यस्य। न च पुत्रानुमत्या अधिकारः संभवतीति वाच्यम्, तथा सति विभागात् प्राक् सर्वानुमतिपूर्वकं पितृप्रसादलब्धस्याशौर्यभार्याधने चोभयं यच्च विद्याधनं लभेत त्रीण्येतान्यपि भाज्यानि। प्रसादो यस्य पैतृ-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

क इति वचनावगतविभागप्रतिषेधोऽनुपपन्नः स्यात् । पित्रा दत्ते धने विभागाप्राप्तेः । अपि च भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत् । सा यथाकाममश्नीयात् दद्याद्वा स्थावरादृते इति वचनागतभर्तृकृतप्रीतिदानमप्युपपन्नं स्यात् । पुत्रादिसाधारणस्य द्रव्यस्य दानासंभवात् । तस्मान्न जन्मना स्वत्वं किं तु विभागेनैव । न चैवं विभागात् प्राक् पितुरूर्ध्वं चौरादिभिः ह्रियमाणं द्रव्यं केनचिन्निवार्यंते पितुर्द्रव्यस्वामिनोऽभावात् । पुत्राणां च विद्यमानानामपि विभागाभावेन स्वत्वानिष्पत्त्या स्वामित्वाभावात् । किं च एकस्य पुत्रस्य पितुरूर्ध्वं स्वत्वं न स्यात् तत्प्रापकविभागाभावात् । न चेष्टापत्तिः । तन्मूलकक्रयविक्रयादिसकलव्यवहारविलोपप्रसङ्गात् इति वाच्यम् । विभागवत् पित्रानन्तर्यस्यापि स्वत्वप्रापकत्वात् । तस्मान्न जन्मना स्वत्वम् । किं तु पितुरभावाद्विभागाद्वा स्वत्वम् इति । सिद्धान्तस्तु स्वत्वं लौकिकप्रमाणगम्यं न वैदिकमिति प्रतिपादितम् । तच्च उत्पत्त्यावगम्यते पुत्रजन्मसमनन्तरमेव द्रव्यस्वामी उत्पन्न

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति व्यवहारात् उत्पत्त्यैवार्थस्वामित्वं लभते इत्याचार्या इति गौतमवचनाच्च। न च उत्पत्तितः स्वत्वाङ्गीकारे विभागशास्त्रानर्थक्यप्रसङ्ग इति वाच्यम्। तस्य पुत्रादिषु समुदायद्रव्यनिरूपितस्वामित्वानाम् एकदेशे व्यवस्थापनार्थत्वेन वैयर्थ्याभावात्। यदुक्तमर्थसाध्याधानादिषु जातपुत्रस्य अधिकारो न स्यादिति, तन्न, तत्र विधानबलादेव साधारणद्रव्यसाध्याधानादिषु अधिकारसंभवात्। यथा राजसूये विधानबलादन्यदीयमेव द्रव्यं दक्षिणात्वेन न दीयते। तथा चापस्तम्बः— 'बार्हस्पत्यं चरुमिति द्वादशान्वहं रत्निनां हवींषि यस्य गृहे निर्वपति तत इष्टिपरिवेषं दक्षिणा च'। अस्य चायमर्थः— बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृह इत्यादिवाक्यैः रत्निनां हवींषि ब्राह्मणे राजन्यपि गृहेषु कर्तव्यत्वेन विहितानि तेषां च तत इष्टिपरिवेषं दक्षिणा चेति तत्तद्गृहस्वामिधनादेव दक्षिणादानं ब्राह्मणसंतर्पणं च कर्तव्यम् इति। तथा च स एवान्यत्र— वैष्णवं त्रिकपालं त्रयोदशं तक्षरथकारयोर्गृहे सर्वायसानि दक्षिणा तक्ष्णो रथकारस्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चेति। यञ्च पितृप्रसादलब्धानां विभागप्रतिषेधानुपपत्तिरिति तदपि न। समवेतैस्तु प्रत्यासं सर्वे तत्र समांशिन इति वचनेन अविभक्तानां भ्रातृसंपादितधनान्तरवत्पितृप्रसादलब्धस्यापि भ्रातृसंपादिततया विभागप्रसक्तौ तत्प्रतिषेधसंभवात्। यत्तु 'भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत्' इत्यादिवचनावगतप्रीतिदानमनुपपन्नं स्यादिति। तदपि न। उत्पत्तितः स्वत्वेऽपि पुत्रसंमत्या प्रीतिदानसंभवात् पुत्रसंमत्यपेक्षणमपि न सर्वत्र; किं तु स्थावरादिविषय एव 'मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः। पितृप्रसादाद्भुज्यन्ते वस्त्राण्याभरणानि च' इत्यादिवचनैः चरेषु स्वातन्त्र्यावगमात् तदपि स्वातन्त्र्यं स्वार्जितमणिमुक्ताप्रवालादिविषयं पितामहार्जितमणिमुक्ताप्रवालादिषु तु स्वातन्त्र्यं पितृपुत्रयोः सममेव। तथा च याज्ञवल्क्यः—'भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव च। तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि॥' अस्य चायमर्थः—भूः शालिक्षेत्रादिका निबन्धः क्रमुकपर्णादि भारः द्रव्यं रजतसुवर्णादि एतेषु अनार्जकत्वा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विशेषात् स्वामित्वं सममेव। स्थावरे तु पित्रार्जिते पितामहार्जिते च पितुः पितामहस्य वा स्वातन्त्र्यं पुत्र-संमतिसापेक्षमेव। तथा च याज्ञवल्क्यः— 'स्थावरं द्विपदं चैव यद्यपि स्वयमार्जितम्। असंभूय सुतान्सर्वान्न दानं न च विक्रयः॥' 'ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः। वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयः॥' अस्य चापवादः— 'एकोऽपि स्थावरे कुर्याद्दानाधमनविक्रयम्। आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः॥' इति। अस्यार्थः— अप्राप्तव्यवहारेषु पुत्रेषु पौत्रेषु च अनुज्ञादानादावसमर्थेषु भ्रातृषु वा तथाविधेष्वविभक्तेष्वपि सकलकुटुम्बव्यापिन्यामापदि तत्पोषणेऽवश्यकर्तव्येषु च पितृश्राद्धादिषु स्थावरस्य दानाधमनविक्रयमेकोऽपि कुर्यादिति। तस्मात्स्थावरेषु पित्रा व्यवहारक्षमपुत्रादिसंमत्यैव क्रयविक्रयादिव्यवहारः। चरेषु तु न संमत्यपेक्षा। अतो भर्तृकृतप्रीतिदानमुत्पत्तिप्रभृति स्वत्वेऽप्युपपन्नमेवेति सिद्धमौत्पत्तिकं स्वत्वम्। न चैवं जीवतोः स्वतन्त्रः स्यात्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भार्या पुत्रश्च दासश्च त्रय एतेऽधनाः स्मृताः' इत्यादिवचनविरोधः। तस्य वचनस्य उत्पत्तिप्रभृति स्वामित्वे पित्राज्ञया विना पुत्रादिना न व्यवहर्तव्यमित्येवंपरत्वात् एवं च रामस्य उत्पत्तिप्रभृतिसकलद्रव्यस्वामित्वमस्त्येव तत्र साधारणद्रव्येषु व्यवहारार्थतया पित्राज्ञा अपेक्षिता। पितृप्रसादादिलब्धधनेषु तु स्वातन्त्र्यमप्यस्त्येव अत एव पितृप्रसादादिलब्धधनस्य अविभाज्यत्वमाह याज्ञवल्क्यः—'पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत्' इति। मनुरपि— 'पितृद्रव्याविरोधेन यदन्यत्स्वयमार्जितम्। मैत्रमौद्वाहिकं चैव मधुपर्किकमेव च॥ अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जयेत्। स्वयं मे हितलब्धं तं नाकामो दातुमर्हति॥' इति। भारतेऽपि पितरि धृतराष्ट्रे जीवति दुर्योधनादीनां बहुरत्नधनवस्त्रादिकमसाधारण्येन यत्स्थितं तच्च धर्मपुत्रराज्याभिषेकानन्तरं भीमादीनामसाधारण्येन युधिष्ठिरेण दत्तमिति प्रतिपादितम्। राजधर्मे— 'ततो दुर्योधनगृहं प्रासादैरुपशोभितम्। बहुरत्नसमाकीर्णं दासीदाससमाकुलम्॥ धृतराष्ट्राभ्यनुज्ञातो भ्रातृदत्तं वृको-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दरः । प्रतिपेदे महाबाहुर्मन्दरं मघवानिव ॥ यथा दुर्यो- धनगृहं तथा दुःशासनस्य तु । प्रासादमालासंयुक्तं हेम- तोरणसंयुतम् ॥ दासीदाससुसंपूर्णं प्रभूतधनधान्यवत् । प्रतिपेदे महाबाहुरर्जुनो राजशासनात् ॥ दुर्मर्षणस्य भवनं दुःशासनगृहाद्वरम् । कुबेरभवनप्रख्यं मणिहेमवि- भूषितम् ॥ नकुलाय महार्हाय कर्शिताय महाहवे । ददौ प्रीत्या महाबाहुर्धर्मसूनुर्युधिष्ठिरः ॥ दुर्मुखस्य च वेश्माग्र्यं श्रीमत्कनकभूषितम् । पूर्णपद्मदलाक्षीणां स्त्रीणां शयनसं- कुलम् ॥ प्रददौ सहदेवाय सततं प्रियकारिणे । मुमुदे तच्च लब्ध्वा स कैलासं धनदो यथा ॥' तथा दानार्थतया धृत- राष्ट्रेण द्रव्ययाचनाय प्रेषितं विदुरं प्रति धर्मपुत्रवाक्यम् 'यन्ममास्ति धनं किंचिदर्जुनस्य च वेश्मनि । तस्य स्वामी महाराजा इति वाच्यः स पार्थिवः ' इति । अने- नापि अर्जुनस्यासाधारणं द्रव्यमवगम्यते । अतः श्रीरामकृत- दानादिकं युक्तमेव ॥ द्वात्रिंशे— ततो गुरुपुत्रं सुयज्ञमा- नीय विविधभूषणगणैः स्वयमभिपूज्य तत्पत्न्यै सीता- हस्ताद्विविधहारहेमसूत्रपर्यङ्कास्तरणादिकं दापयित्वा राजा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गजसहस्रपरिवृतं शत्रुंजयनामानं गजराजं तस्मै दत्त-वान् । सुयज्ञोऽपि तत्कृतां पूजामभि रामलक्ष्मणसीतानां प्रयुयोजाशिषः शिवाः । ततो लक्ष्मणोऽपि रामभद्राभ्य-नुज्ञया अगस्त्यकौशिकावपि समानीय गोसहस्रेण उत्तम-वस्त्रसुवर्णरजतैश्च पूजयामास ।

स चापि रामः प्रतिपूर्णपौरुषो
महद्धनं धर्मबलैरुपार्जितम् ।
नियोजयामास सुहृज्जनेऽचिरा-
द्यथार्हसंमानवचः प्रचोदितः ॥

द्विजः सुहृद्भृत्यजनोऽथ वा तदा
दरिद्रभिक्षाचरणश्च योऽभवत् ।
न तत्र कश्चिन्न बभूव तर्पितो
यथार्हसंमाननदानसंभ्रमैः ॥

अत्र यथार्हमिति विशेषणेन उत्कृष्टस्य निकृष्टपूजा निकृष्टस्य वा उत्कृष्टपूजा न कर्तव्येति सूचितम् । तथा च गौतमः— 'समासमाभ्यां विषमसमे पूजातः' इति । अस्यार्थः— कुलशीलविद्यादिभिस्तुल्यः समः आसना-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शन्नपरिचरणात्मिकायां पूजायां समेन वैषम्यप्रसक्तौ असमेन वा साम्यप्रसक्तौ तदन्नं न भोक्तव्यमिति । स एवान्यत्र 'शय्यासनावसथ अनुव्रज्योपासनानि सदृक्-श्रेयसोः समानि अल्पशोऽपि हीनः' इति । मनुरपि—'आसनावसथौ शय्यामनुव्रज्यामुपासनम् । उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम् ॥' इति । ततः समागतान्ब्राह्मणांस्तदभीष्टप्रदानेन परिपूर्णमनोरथान्विधाय तैश्च कृतस्वस्त्ययनः दशरथदर्शनाय स्वभवनान्निर्जगाम । अनेन सर्वैरपि यात्रासमये ब्राह्मणे गोहिरण्यादि दत्त्वा तदाशिषः परिग्राह्या इति सूचितम् । तथा च उद्योगपर्वणि पाण्डवैर्यात्रादानं कृतमित्यवगम्यते—'स्कन्धावारेण महता प्रययुः पाण्डुनन्दनाः । ददतो गोहिरण्यं च ब्राह्मणैरभिपूजिताः' इति । तत्रैव परशुरामं प्रति भीष्माभियाने 'ततः कृतः स्वस्त्ययनो मात्रा यं प्रतिनन्दितः । द्विजातीन्वाच्य पुण्याहं स्वस्ति चैव महाद्युते' इति ॥ त्रयस्त्रिंशे—ततः पितुर्दर्शनाय स्वभवनान्निर्गम्य राजमार्गे पादचारेण गच्छन्,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यं यातमनुयाति स्म चतुरङ्गबलं महत्।
तमेकं सीतया सार्धमनुयाति स्म लक्ष्मणः॥

या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि।
तामद्य सीतां पश्यन्ति राजमार्गगता जनाः॥

गच्छन्तमनुगच्छामो येन गच्छति राघवः।
अस्माभिश्च परित्यक्तं पुरं संपद्यतां वनम्॥

वनं नगरमेवास्तु येन गच्छति राघवः।

इति पौरजनोदीरितवचनमाकर्ण्यापि अविचलितहृदयो रामभद्रः दशरथभवनमागम्य राज्ञः स्वागमनवृत्तान्तनिवेदनाथ सुमन्त्रं प्रेषयामास। चतुस्त्रिंशे, ततो वनगमनकृतनिश्चयं स्वसंदर्शनसमुत्सुकं रामभद्रं सुमन्त्रमुखादवगत्य सकलावरोधजनपरिवृत उवाच राजा तं सुमन्त्रम् आनय मे सुतम् इति। ततः सुमन्त्रवचनाद्राजभवनं प्रविशन् लक्ष्मणेन सीतया चानुगम्यमानो रामभद्रः प्रेमातिशयेन स्वसमीपमभिद्रवन्तं मध्ये भूमौ मूर्च्छया पतितं पितरं पर्यङ्के समुपवेश्य,

अनुजानीहि सर्वान्नः शोकमुत्सृज्य मानद।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**लक्ष्मणं मां च सीतां च'**

इत्यनेन त्रयाणामपि अनुज्ञाप्रार्थनमवगम्यते, तदनुपपन्नम्। रामलक्ष्मणयोरुभयोरेव पित्रधीनत्वेन तदाज्ञापेक्षायामपि भर्त्रधीनायाः सीताया दशरथानुज्ञां विनापि वनगमनसंभवादिति चेत्, न, सीतायाः भर्त्रधीनत्वेऽपि स्वस्य पित्रधीनतया स्वकर्तव्यम् अन्यथा प्रत्यवायो भवेदित्यभिप्रायेणैव वनं प्रति सीतां नेतुं विज्ञापनपूर्वकमनुज्ञाग्रहणसंभवात्। तथा च मनुः 'तेषामनुपरोधेन पारक्यं यद्यदाचरेत्। तत्तन्निवेदयेत्तेभ्यो मनोवचनकर्मभिः।' इति। आनुशासनिके विपुलोपाख्यानेऽपि गुर्वनुज्ञया गुरुभार्यां रक्षितवतः शिष्यस्य रक्षणप्रकारानिवेदनमात्रेण दोषमाह गुरुः 'तथैव हि भवेयुस्ते लोकाः पापकृतो यथा। कृत्वानाचक्षतः कर्म मम तच्च यथाकृतम्॥ ते त्वां हर्षस्मितं दृष्ट्वा गुरोः कर्मानिवेदकम्। स्मारयन्तस्तथा प्राहुस्ते यथा श्रुतवान्भवान्॥' इति। ततो राजा रामभद्रमेवमब्रवीत्—

**अहं राघव कैकेय्या वरदानेन मोहितः।**

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अयोध्यायास्त्वमेवाद्य भव राजा निगृह्य माम् ॥

इति। अत्र यद्यपि भव राजा निगृह्य मामितिवचनावगतं तन्निग्रहपूर्वकं स्वस्य राज्येऽभिषेचनमपि पित्राज्ञप्तमिति वनगमनवत्तदपि अवश्यं कर्तव्यमिति प्रतीयते, तथापि वने गच्छतः पुत्रस्य भूयान्क्लेशो भविष्यतीति विचिन्त्य स्नेहवशात्तथोक्तवान् न तात्पर्येण; अत एव समनन्तरमेव दशरथवचनम्।

न हि सत्यात्मनस्तात धर्माभिमनसस्तव।
विनिवर्तयितुं बुद्धिः शक्यते रघुनन्दन॥

श्रेयसे वृद्धये तात पुनरागमनाय च।
गच्छस्वारिष्टमव्यग्रः पन्थानमकुतोभयम्॥

छन्नया चलितस्त्वस्मि स्त्रिया च्छन्नाग्निकल्पया।
वञ्चना या तु लब्धा मे तां त्वं निस्तर्तुमिच्छसि॥

न चैतदाश्चर्यतमं यस्त्वं ज्येष्ठसुतो मम।
अपानृतकथं पुत्र पितरं कर्तुमिच्छसि॥

अत एव च युद्धकाण्डेऽपि—

तारितोऽहं त्वया पुत्र सुपुत्रेण महात्मना।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अष्टावक्रेण धर्मात्मा तारितो ब्राह्मणो यथा ॥

इति वनगमनमेवाभ्यनुजानाति । ततः कैकेयीप्रेरितेन राज्ञानुज्ञातो रामभद्रः,

त्वामहं सत्यमिच्छामि नानृतं पुरुषर्षभ ।
प्रत्यक्षं तव सत्येन सुकृतेन च ते शपे ॥

पिता हि दैवतं तात देवतानामपि स्मृतम् ।
तस्माद्दैवतमित्येव करिष्यामि पितुर्वचः ॥

पुरं च राष्ट्रं च महीं सकाननां
मया विसृष्टा भरताय दीयताम् ।
अहं निदेशं भवतोऽनुपालयन्
वनं गमिष्यामि चिराय सेवितुम् ॥

मयातिसृष्टां भरतो महीमिमां
सशैलखण्डां सपुरां सकाननाम् ।
शिवां सुसीमामनुशास्तु केवलां
त्वया यदुक्तं नृपते तथास्तु तत् ॥

इत्यवदत् । अत्र यद्यपि स्वतन्त्रस्य पितुः पुत्राभ्यनुज्ञां विनापि राज्यप्रदानेऽधिकारोऽस्तीति मया निसृष्ट-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

ति कृतमभ्यनुज्ञानमसंगतम्। तथापि 'मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः। स्थावरस्य तु सर्वस्य न पिता न पितामहः' इति वचनेन स्थावरे राज्यादौ पुत्रसंमत्यैव स्वातन्त्र्यावगमेन पुत्रासंमतिप्रयुक्तदोषपरिहाराय कुलपरम्पराप्राप्तज्येष्ठपुत्राभिषेचननियतिक्रमदोषपरिहाराय पूर्वद्युः कृतराज्यप्रदानप्रतिज्ञाभङ्गदोषपरिहाराय च रामेण कृतं मया निसृष्टेत्यभ्यनुज्ञानं युक्तमेव। पञ्चत्रिंशे—ततः कोपसंरक्तनयनः सुमन्त्रः कैकेयीहृदयभेदनमिदमभाषत।

न ह्यकार्यतमं किंचित्तव देवीह विद्यते।
पतिघ्नीं त्वामहं मन्ये कुलघ्नीमपि चान्ततः॥

अत्र सुमन्त्रः अकृतभर्तृवधां कैकेयीं 'पतिघ्नीं मन्ये' इति कथमुक्तवानिति चेत् न। गुरुभूतपत्यधिक्षेपादिलक्षणपतिवधकर्तृत्वेन पतिघ्नीत्ववर्णनोपपत्तेः। पत्युर्गुरुत्वं च वृद्धमनुना उक्तम् 'अग्निर्गुरुर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः। पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः' इति। आश्वमेधिकेऽपि सक्तुप्रस्थोपाख्याने श्वशुरं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रति स्नुषावाक्यम्—'गुरोर्मम गुरुस्त्वं वै यतो दैवत-दैवतः। देवातिदेवस्तस्मात्त्वं सक्तूनादत्स्व मे प्रभो॥' इति। गुर्वधिक्षेपस्य गुरुवधत्वं कर्णपर्वणि अर्जुनं प्रति भगवतोक्तम्—'त्वमित्युक्तस्तु निहतो गुरुर्भवति भारत। गुरूणामवमानो हि वध इत्यभिधीयते॥ अथर्वाङ्गिरसी ह्येषा श्रुतिरेषा सनातनी।' इति। तस्मात्कैकेय्याः सुमन्त्रोक्तं पतिघ्नीत्वमुपपन्नम्।

मावमंस्था दशरथं भर्तारं वरदं पतिम्।
भर्तुरिच्छा हि नारीणां पुत्रकोट्या विशिष्यते॥
न च ते विषये कश्चिद्ब्राह्मणो वस्तुमर्हति।
तादृशं त्वममर्यादमद्य कर्म चिकीर्षसि॥

अनेन यत्र धर्मविप्लवो जायते तत्र वासो न कर्तव्य इति सूचितम्। तथा च मोक्षधर्मे—'चतुर्णां यत्र वर्णानां धर्मव्यतिकरो भवेत्। न तत्र वासं कुर्वीत श्रेयोर्थी वै कथंचन॥ यत्र संलोलिता लुब्धैः प्रायशो धर्मसेतवः। प्रदीप्तमिव चेलान्तं कस्तं देशं न संत्यजेत्॥ कर्मणा यत्र पापेन वर्तन्ते जीवितेप्सवः। व्यवधावेत्ततस्तूर्णं ससर्पाच्छरणादिव।'

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आभिजात्यं हि ते मन्ये यथा मातुस्तथैव च ।

पुरा खलु महर्षिदत्तवरमहिम्ना तिर्यक्कूजितादिभाषाभिज्ञं तव पितरं स्वशयने संचरन्त्याः जृम्भिकायाः शब्दश्रवणेन बहुधा हसन्तं तव मात्रा हासकारणे पृष्टे एतदाख्याने स्वस्य मरणं भवेदिति प्रतिषेधं कुर्वन्,

शंस मे जीव वा मा वा न मामपहसिष्यसि ।

इति निर्दयमवदत् ।

तथा त्वमपि राजानं दुर्जनाचरिते पथि ।
असद्ग्राहमिमं मोहात्कुरुषे पापदर्शिनि ॥

सत्यश्चायं प्रवादोऽयं लौकिकः प्रतिभाति मे ।
पितॄन्समनुजायन्ते नरा मातरमङ्गनाः ॥

अत्र मातुः समानगुणा कन्यकेत्ययमर्थः कैकेयीचारित्रमुदाहरता सुमन्त्रेण स्पष्टीकृतः । 'पितॄन्समनुजायन्ते' इत्ययमर्थस्तु,

न ह्यदत्तां महीं पित्रा भरतः शास्तुमर्हति ।
त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यद्यपि त्वं क्षितितलाद्गगनं चोत्पतिष्यसि ।
पितृवंशचरित्रज्ञः सोऽन्यथा न करिष्यति ॥

इति भरतगुणानुदाहरता वसिष्ठेन च स्पष्टीकृतः। तद्दलमसन्मार्गानुसारेण रामाभिषेकानुज्ञया भर्तारं सत्यप्रतिज्ञं विधाय सर्वानप्यस्मान्विगतज्वरान्विधेहीत्येवमादिसुमन्त्रकृतविविधनिर्भर्त्सनमविगणय्य अविचलितहृदया बभूव। षट्त्रिंशे—ततः सकोशेन चतुरङ्गबलेनानुगम्यमानो रामभद्रः,

यजन्पुण्येषु देशेषु विसृजंश्चाप्तदक्षिणाः ।
ऋषिभिश्च समागम्य प्रवत्स्यति सुखं वने ॥
भरतश्च महाबाहुरयोध्यां पालयिष्यति ।

इति राज्ञा दशरथेन समुदीरितं वचनमाकर्ण्य कोपवशेन,

राज्यं गतजनं साधो पीतमण्डां सुरामिव ।
निरास्वाद्यतमं शून्यं भरतो नाभिपत्स्यते ॥
तवैव वंशे सगरो ज्येष्ठं पुत्रमुपारुधत् ।
असमञ्ज इति ख्यातं तथायं गन्तुमर्हसि ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति मुक्तलज्जमभिदधानां कैकेयीं सिद्धार्थो महामात्रः समभाषत । क्रीडतो बालकानम्भसि परिक्षिपतोऽसमञ्जस्य परित्यागः सकलजनहितकर एव, सकललोकदयापरं निरस्तसमस्तदोषं रामभद्रं केन कारणेन वनं प्रेषयितुमिच्छसि ।

अदुष्टस्य हि संत्यागः सत्पथे निरतस्य च ।
निर्दहेदपि शक्रस्य द्युतिं धर्मनिरोधनात् ॥

तदलमनेनासदारम्भेण इति । सप्तत्रिंशदारभ्य चत्वारिंशत्पर्यन्तम् सिद्धार्थवचनमाकर्ण्य राज्यं परित्यज्य वने वन्येन जीवतो मम किमनेन चतुरङ्गबलेन कोशेन वा समानीयतां खनित्रपिठरचीराणि इति वदन्तं रामभद्रं निरपत्रपा कैकेयी पूर्वमेव संभृतानि चीराण्यानीय परिधत्स्वेति समभाषत । तद्दत्तानि चीराणि स्वयं परिधाय तत्परिधानप्रकारानभिज्ञायाः सीतायाः तत्प्रदर्शनाय कौशेयस्योपरि रचितबन्धं तं रामभद्रं प्रतिषिध्य सुकुमारी राजकुमारी कठिनतरचीरपरिधानानभिज्ञा, नेयं वन-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वासाय वृत्ता, अत: मृदुतरवसनभूषणगणभूषितैव वनमभिगन्तुमर्हतीति वसिष्ठः समभाषत । ततः,

राजा सत्वरमाहूय व्यापृतं वित्तसंचये ।
उवाच देशकालज्ञो निश्चितं सर्वत: शुचिम् ॥

अनेन कोशाधिकारे शुचिरेव नियोक्तव्य इति सूचितम् । तथा च राजधर्मे— 'कोशाख्यपटलं यस्य कोशवृद्धिपरैर्नरैः । आप्तैः शुद्धैश्च सततं चीयते स नृपोत्तम ॥' इति ।

वासांसि च महार्हाणि भूषणानि वराणि च ।
वर्षाण्येतानि संख्याय वैदेह्याः क्षिप्रमानय ॥

ततस्तदानीतैः,

भूषयामास गात्राणि तैर्विचित्रैर्विभूषणैः ।
व्यराजयत वैदेही वेश्म तत्तु विभूषिता ॥

ननु रामेण चीरे धृते कौशेयादिकं सीता कथं धृतवती, पत्न्याः पतिसमानव्रतचारित्वस्य धर्म्यत्वात् ।

तस्मिंस्तथा जल्पति विप्रमुख्ये
गुरौ नृपस्याप्रतिमप्रभावे ।

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

नैव स्म सीता विनिवृत्तभावा
प्रियस्य भर्तुः प्रतिकारकामा ॥

इति वचनेन,

बबन्ध वै तथा चीरं सीतया तुल्यशीलया ।

इत्यनेन च सीतायाः भर्तृकृत्यानुकरणस्य संमतत्वाव-गमाच्च समानव्रतचारित्वं च । तथा चारण्यके पर्वणि— 'प्राप्य भार्यामगस्त्यस्तु लोपामुद्रामुवाच ह । महार्हाण्यु-त्सृजैतानि वासांस्याभरणानि च । ततः सा दर्शनीयानि महार्हाणि तनूनि च । समुत्ससर्ज रम्भोरूर्वसनान्याय-तेक्षणा ॥ ततश्चीराणि जग्राह वल्कलान्यजिनानि च । समानव्रतचर्या च बभूवायतलोचना ॥' इति । महा-प्रस्थानिकेऽपि— 'ततः स राजा कौरव्यो धर्मपुत्रो युधिष्ठिरः । उत्सृज्याभरणान्यङ्गाज्जगृहे वल्कलानि च ॥ भीमार्जुनयमाश्चैव द्रौपदी च यशस्विनी । तथैव जगृहुः सर्वे वल्कलानि नराधिप ॥' इति । सावित्र्युपाख्याने— 'दत्त्वा सोऽश्वपतिः कन्यां यथार्हं सपरिच्छदम् । ययौ स्वमेव भवनं संयुक्तः परया मुदा ॥ गते पितरि संन्यस्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सर्वाण्याभरणानि सा। जगृहे वल्कलान्येव वस्त्रं काषा-यमेव च ॥' इति। अतः कौशेयादिधारणमयुक्तमिति चेत् सत्यम्, भर्त्रभिप्रायानुसारेण कृतम्। भर्त्रभिप्रायश्च,

अथोत्तमान्याभरणानि देवि
देहि स्नुषायै व्यपनीय चीरम्।
एकस्य रामस्य वने निवास-
स्त्वया वृतः केकयराजपुत्रि ॥
विभूषितेयं प्रतिकर्मनित्या
वसत्वरण्ये सह राघवेण।
वस्त्रैश्च सर्वैः सहितैर्विधानै-
र्नेयं वृता ते वरसंप्रदाने ॥

इति वसिष्ठवचनम्।

चीराण्यपास्याज्जनकस्य कन्या
नेयं प्रतिज्ञा मम दत्तपूर्वा।
वासांसि च महार्हाणि भूषणानि वराणि च।
सर्वाण्येतानि संख्याय वैदेह्याः क्षिप्रमानय ॥

इति दशरथवचनं च परिपालयता रामेण प्रतिषे-धात्। अग्रे

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तथा तु भूषितां सीतां ददर्श ददतां वरः।
राघवः प्रीतिदानेन तपस्विन्या जहर्ष च ॥

इति अनसूयादत्तवसनाभरणाङ्गरागादिना समलंकृतां सीतामवलोक्य हर्षप्रकटनात् युद्धकाण्डे रावणवधसमनन्तरम्,

दिव्याङ्गरागां वैदेहीं दिव्याभरणभूषिताम्।
इह सीतां चिरस्नातामुपस्थापय मा चिरम् ॥

इति विभीषणं प्रति श्रीरामवचनाच्चावगम्यते। अतः सीताकृतं कौशेयकादिधारणं युक्तमेव। अथ कौसल्यां विचित्राभरणभूषिताम् उद्यतोंशुमतः प्रभामिव विराजमानां वनवासाय कृतनिश्चयां सीतां सादरं परिष्वज्य मूर्ध्नि चोपाघ्रायैवमुपदिदेश।

असत्यः सर्वलोकेऽस्मिन्सततं सत्कृताः प्रियैः।
भर्तारं नानुमन्यन्ते विनिपातगतं स्त्रियः॥

एष स्वभावो नारीणामनुभूय पुरा सुखम्।
अल्पामप्यापदं प्राप्य दुष्यन्ति प्रजहन्त्यपि च॥

न कुलं न कृतं विद्यां न दत्तं नापि संग्रहम्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्त्रीणां गृह्णाति हृदयमनित्यहृदया हि ताः ॥
साध्वीनां हि स्थितानां तु सत्ये शीले श्रुते दमे ।
स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते ॥
स त्वया नावमन्तव्यः पुत्रः प्रव्राजितो मम ।
तव दैवतमस्त्वेष निर्धनः सधनोऽपि वा ॥

इति । ततः,

करिष्ये सर्वमेवाहमार्या यदनुशास्ति माम् ।
न मामसज्जनेनार्या समानयितुमर्हति ॥
धर्माद्विचलितुं नाहमलं चन्द्रादिव प्रभा ।
नातन्त्री वाद्यते वीणा नाचक्रो वर्तते रथः ॥
नापतिः सुखमेधेत या स्यादपि शतात्मजा ।
मितं ददाति हि पिता मितं माता मितं सुतः ॥
अमितस्य हि दातारं भर्तारं का न पूजयेत् ।

इति सीतावचनश्रवणसंजातहर्षां कौसल्यां सर्वाश्च मातॄरभिवाद्य,

संवासात्परुषं किंचिदज्ञानाद्वापि यत्कृतम् ।
तन्मे समनुजानीत सर्वाश्चामन्त्रयामि वः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

इति रामभद्रः प्रार्थितवान्,

अथ मातुः सुमित्राया जग्राह चरणौ पुनः ।
तं वन्दमानं रुदती माता सौमित्रिमब्रवीत् ॥

सृष्टस्त्वं वनवासाय स्वनुरक्तः सुहृज्जने ।
रामे प्रमादं मा कार्षीः पुत्र भ्रातरि गच्छति ॥

व्यसनी वा समृद्धो वा गतिरेष तवानघ ।
एष लोके सतां धर्मो यज्ज्येष्ठवशगो भवेत् ॥

इदं हि वृत्तमुचितं कुलस्यास्य सनातनम् ।
दानं दीक्षा च यज्ञेषु तनुत्यागो मृधेषु च ॥

रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् ।
अयोध्यामटवीं विद्धि गच्छ तात यथासुखम् ॥

इति सुमित्राऽभ्यनुज्ञातेन लक्ष्मणेन सीतया च सह रामभद्रो राजानं प्रदक्षिणपूर्वकमभिवाद्य खनित्रपिठरकोपेतविविधवस्त्राभरणखड्गखेटकाद्यायुधसमलंकृतं सुमन्त्रानीतं सज्जं रथवरमास्थाय शोकाकुलपौरजनसमुदीरितानि तानि तानि वचनानि शृण्वन्राजभवनान्निर्ययौ । ततो रामभद्रमनुव्रजन्तम्,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यमिच्छेत्पुनरायान्तं नैनं दूरमनुव्रजेत् ।
इत्यमात्या महाराजमूचुर्दशरथं वचः ॥

अथ रामगमनसंजातशोकवशेन सर्वा एव राजमहिष्यः सकरुणमेवं चुक्रुशुः ।

अनाथस्य जनस्यास्य दुर्बलस्य तपस्विनः ।
यो गतिः शरणं चासीत्स नाथः क्व नु गच्छति ॥

कौसल्यायां महातेजा यथा मातरि वर्तते ।
तथा यो वर्ततेऽस्मासु स महात्मा क्व गच्छति ॥

न क्रुध्यत्यभिशप्तोऽपि क्रोधनीयानि वर्जयन् ।
क्रुद्धान्प्रसादयन्सर्वान्समदुःखः क्व गच्छति ॥

द्विचत्वारिंशत्प्रभृति चतुश्चत्वारिंशत्पर्यन्तम्— ततो राजा दशरथः सकलावरोधजनपरिवृतोऽनुव्रजन्नतिक्रान्तलोचनपथं रामभद्रं विचिन्त्य शोकाकुलहृदयः प्रतिनिवृत्य वामपार्श्वमवलम्बमानां कैकेयीमेवमवदत्—

कैकेयि मा ममाङ्गानि स्प्राक्षीस्त्वं दुष्टचारिणि ।
न हि त्वां द्रष्टुमिच्छामि न भार्या न च बान्धवी ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

ये च त्वामुपजीवन्ति नाहं तेषां न ते मम ।
केवलार्थपरां हि त्वां त्यक्तधर्मां त्यजाम्यहम् ॥

अगृह्णां यच्च ते पाणिमग्निं पर्यणयं च यत् ।
अनुजानामि तत्सर्वमस्मिँल्लोके परत्र च ॥

भरतश्चेत्प्रतीतः स्याद्राज्यं प्राप्येदमव्ययम् ।
यन्मे दद्यात्स पित्रर्थं मां मा तद्दत्तमन्वगात् ॥

इति तां परित्यज्य कौसल्यां सुमित्रां चावष्टभ्य कौसल्याभवनमाजगाम । तत्र च शयनीये निपत्य विवेष्टमानं राजानं पुत्रशोकसमाकुलं कौसल्या समभाषत ।

पातयित्वा तु कैकेय्या रामं स्थानाद्यथेष्टतः ।
प्रदिष्टो रक्षसां भागः पर्वणीवाहिताग्निना ॥

अत्र पर्वणि पर्वकालकर्तव्यं दर्शपूर्णमासादिषु तुषादिकं पुरोडाशीयेभ्यो व्रीह्यादिभ्यः प्रव्याव्य रक्षोभ्यो भागो नित्यं दीयते । तथा विध्यपराधे सति नैमित्तिकोऽपि रक्षसां भागो भवति । तथा चापस्तम्बः— 'यस्य हविः क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति' इति । बोधायनोऽपि— 'अप्रायश्चित्तिको यज्ञो ह्यसुरैः संप्रभुज्यते' इति । सूता-



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तपीयेनापि—'पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः। यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः ॥' इति यागकालमुक्त्वा अस्मात्कालाच्च्यावितस्य राक्षसत्वमुक्तम्। 'न यष्टव्यं चतुर्थेंऽशे यागैः प्रतिपदः क्वचित्। रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी ॥' इति।

निःसंशयं मया मन्ये पुरा वीर कदर्यया।
पातुकामेषु वत्सेषु मातॄणां शातिताः स्तनाः ॥

अनेन दुग्धपानार्थं मात्रासंगतः किमुत स्तनच्छेदनमिति प्रतिपादनेन वत्सानां स्तन्यपाने विघ्नो न कर्तव्यः इति सूचितम्। तथा च मनुः— 'न वारयेद्गां धयन्तीं न चाचक्षीत कस्यचित्' इति। आपस्तम्बोऽपि—'संसृष्टां च वत्सेनानिमित्ते' इति।

न हि मे जीविते किंचित्सामर्थ्यमिह कल्प्यते।
अपश्यन्त्याः प्रियं पुत्रं महाबाहुं महाबलम् ॥

एवं सकरुणं विलपन्तीं कौसल्याम्,

इदं धर्मे स्थिता धर्म्यं सुमित्रा वाक्यमब्रवीत्।
रामो धर्मे स्थितः श्रेष्ठो न स शोच्यः कदाचन ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

वर्तते चोत्तमां वृत्तिं लक्ष्मणोऽस्मिन्सदानघः ।
अनुगच्छति वैदेही धर्मात्मानं तवात्मजम् ॥

कीर्तिभूतां पताकां यो लोके भ्रमयति प्रभुः ।
न हि रामात्परो लोके विद्यते सत्पथे स्थितः ॥

जहि शोकं च मोहं च देवि सत्यं ब्रवीमि ते ।
पुत्रस्ते वरदः क्षिप्रमयोध्यां पुनरागतः ॥

कराभ्यां मृदुपीनाभ्यां चरणौ पीडयिष्यति ।

अत्र जनन्या अभिवादनं चरणपीडनपूर्वकमेव कर्तव्यमित्युक्तम् । एतच्चाभिवादनप्रकरणे लिखितम् । पञ्चचत्वारिंशे— ततो रामभद्रोऽपि स्वमनुसरतः पौरजनान्विविधोपायेनापि अशक्यनिवर्तनानवलोक्य,

उवाच रामः स्नेहेन ताः प्रजाः स्वाः प्रजा इव ।
या प्रीतिर्बहुमानश्च मय्ययोध्यानिवासिनः ॥

मत्प्रियार्थं विशेषेण भरते सा निवेश्यताम् ।
स हि कल्याणचारित्रः कैकेय्यानन्दवर्धनः ।
करिष्यति यथावद्वः प्रियाणि च हितानि च ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ज्ञानवृद्धो वयोबालो मृदुर्वीर्यगुणान्वितः।
अनुरूपः स वो भर्ता भविष्यति भयापहः॥
स हि राजगुणैर्युक्तो युवराजः समीक्षितः।
न च तप्येद्यथा चासौ वनवासं गते मयि॥
महाराजस्तथा कार्यो मम प्रियचिकीर्षया।

अत्र भरताय राज्यं प्रदातुं कैकेय्या वनं प्रति प्रेषणेनापकृतोऽपि रामः तत्पुत्रस्य भरतस्य,

या प्रीतिर्बहुमानश्च मय्ययोध्यानिवासिनः।
मत्प्रियार्थं विशेषेण भरते सा निवेश्यताम्॥

इति नियोगपूर्वकं प्रकृतिसंनिधौ तद्गुणकथनात्। तथा चात्रैव चित्रकूटे भरतं प्रति,

मातरं रक्ष कैकेयीं मा रोषं कुरु तां प्रति।
मया च सीतया चैव शप्तोऽसि रघुनन्दन॥

इत्युक्तत्वात्। तथा युद्धकाण्डेऽपि कैकेय्या दोषनिरसनपूर्वकमुत्तमलोकप्राप्तिर्भवत्विति दशरथं प्रति प्रार्थनाच्च महदपकारकारिष्वपि उपकारः कर्तव्य इत्ययं धर्मः सूचितः। तथा चापद्धर्मे लुब्धकपोतीये—'छेत्तुमप्यागते छायां

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

नोपसंहरते द्रुमः' इति । 'आत्मनो हितमन्विच्छन्बाधते यः परं नरः । कर्तव्या मूढविज्ञाने दया तत्र दयालुभिः ॥ अज्ञानात्तत्र ये दण्डं पातयन्ति बुधा यदि । बुधेभ्यस्तदहं मन्ये वरमज्ञानिनो नराः ॥' ततः पलितशिरसो वाजपेयच्छत्रनिवारितातपान्पदातीन्द्विजवरान्,

अवेक्ष्य सहसा रामो रथादवततार ह ।
पद्भ्यामेव जगामाथ ससीतः सह लक्ष्मणः ॥

अनेन पदातीञ्श्रेयसोऽवलोक्य यानादवतरणीयमिति सूचितम् । तथा च श्रुतिः— 'तस्माज्ज्यायांसं कनीयान्प्रत्यवरोहति' इति । उद्योगपर्वणि भगवद्यानेऽपि—'अथ पश्यन्महाबाहुर्ऋषीनध्वनि केशवः । ब्राह्म्या श्रिया दीप्यमानान्स्थितानुभयतः पथि ॥ सोऽवतीर्य रथात्तूर्णमभिवाद्य जनार्दनः । यथावत्तानृषीन्सर्वानित्यभाषत केशवः' इति । ततः पद्भ्यामेव गच्छन्रामभद्रोऽनुगतद्विजवरसमुदीरितसरसतरवचनश्रवणसंजातसंतोषस्तैः सह तमसातीरमाजगाम । षट्चत्वारिंशत्प्रभृति अष्टचत्वारिंशत्पर्यन्तम्—ततो रामः,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अद्भिरेव तु सौमित्रे वत्स्याम्यद्य निशामिमाम् ।
एतद्धि रोचते मह्यं वन्येऽपि विविधे सति ॥

इति लक्ष्मणमवदत् । अनेन वासाय प्रस्थितेन प्रथमदिवसे जलाहारेणैव स्थेयमिति सूचितम् । तथा च भारते वनपर्वणि वनवासाय प्रस्थिताः पाण्डवाः— 'ऊषुस्तां रजनीं वीराः संस्पृश्य सलिलं शुचि । उदकेनैव तामूषुस्ते रात्रिं दुःखकर्शिताः ॥ इति । ततो रामः लक्ष्मणोपक्लृप्तायां पर्णशय्यायां सीतया सह स्वपन्किंचिदवशिष्टायामेव रजन्यां प्रबुध्य स्वपदवीमनुसरतः पुत्रकलत्रादिष्वपि निरपेक्षांस्तरुमूलेषु सुखसुप्तान्पौरजनानवलोक्य लक्ष्मणमेवमवादीत्,

यावदेव तु संसुप्तास्तावदेव वयं लघु ।
रथमारुह्य गच्छामः पन्थानमकुतोभयम् ॥
पौरा ह्यात्मकृताद्दुःखाद्विप्रमोच्या नृपात्मजैः ।
न तु खल्वात्मना योज्या दुःखेन पुरवासिनः ॥

इति । अनेन राज्ञा स्वयं क्लेशमनुभूयापि पौरजनहितमाचरणीयमिति सूचितम् । तथा च भारते शान्तौ—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'यथा हि गर्भिणी हित्वा स्वप्रियं मनसोऽनुगम् । गर्भस्य हितमादत्ते तथा राज्ञाप्यसंशयम् ॥ वर्तितव्यं कुरुश्रेष्ठ नित्यं धर्मानुवर्तिना । स्वं प्रियं समभित्यज्य यद्यल्लोकहितं भवेत् ॥' इति । कामन्दकेऽपि— 'आविष्ट इव दुःखेन तद्गतेन गरीयसा । समन्वितः करुणया परया दीनमुद्धरेत्॥ न तेभ्योऽभ्यधिकाः सन्ति सन्तः सत्पुरुषव्रताः । दुःखपङ्कार्णवे मग्नं दीनमभ्युद्धरन्ति ये ॥' इति । ततस्तद्वचनोच्चारिते सति रोचते मह्यमपीदमिति लक्ष्मणेन गदिते सुमन्त्रः स्यन्दनोत्तमे हयोत्तमान्संयोज्य,

स्वमारोहस्व भद्रं ते ससीतः सहलक्ष्मणः ।
इत्यवादीत् ।

ततः समास्थाय रथं महारथः
ससारथिर्दाशरथिर्वनं ययौ ।
उदङ्मुखं तं तु रथं चकार वै
प्रयाणमाङ्गल्यनिमित्तदर्शनात् ॥

अनेन उत्तरदिशः प्रशस्तत्वात् तदभिमुखगमनं श्रेयस्करमिति सूचितम् । तथा च तैत्तरीयश्रुतिः— 'तस्मा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दुत्तरतोऽभिप्रयायी जयति' इति । तथा च वनपर्वणि– वनवासाय प्रस्थिताः पाण्डवाः 'वर्धमानपुरद्वारेणाभिनिष्क्रम्यते तदा । उदङ्मुखाः शस्त्रभृतः प्रययुः सह कृष्णया ॥' इति । उत्तरदिशः प्राशस्त्यं च उद्योगपर्वणि गालवं प्रति नारदेनोक्तम्— 'यस्मादुत्तीर्यते पापाद्यस्मान्निःश्रेयसं चरेत् । तस्मादुत्तारणफलादुत्तरेत्युच्यते बुधैः ॥' इति । ततः स्वपदवीमनुसरतः पौरजनान्वञ्चयितुममार्गेणैव किंचिद्दूरं गच्छन्यथापूर्वं मार्गेणैव संप्रायात् । ततः प्रबुद्धाः पौरजानपदा रामलक्ष्मणौ जनकनन्दिनीं चानालोक्य शोकाकुलहृदयाः तैर्विना परिमुषितमिवात्मानं मन्वानाः मोहाच्च मुहुर्मुहुरितस्ततः परिभ्रमन्तः पुनस्तद्दर्शननैराश्येन दूयमानमानसाः कृच्छ्रेण स्वं स्वं भवनमाजग्मुः । अथ रामभद्रविनाकृतान्स्वजनानवलोक्य कलुषितहृदयानां पौरस्त्रीणाम्,

कैकेय्या यदि चेद्राज्यं स्यादधर्म्यमनाथवत् ।
न हि नो जीवितेनार्थः कुतः पुत्रैः कुतो धनैः ॥
यया पुत्रश्च भर्ता च त्यक्तावैश्वर्यकारणात् ।
कं सा परिहरेदन्यं कैकेयी कुलपांसनी ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कैकेय्या न वयं राज्ये भृतका निवसेम हि ।
जीवन्त्या जातु जीवन्त्यः पुत्रैरपि शयामहे ॥

या पुत्रं पार्थिवेन्द्रस्य प्रवासयति निर्घृणा ।
कस्तां प्राप्य सुखं जीवेदधर्म्यां दुष्टचारिणीम् ॥

उपद्रुतमिदं सर्वमनाकुलमनामयम् ।
कैकेय्या हि कृते कृत्स्नं विनाशमुपयास्यति ॥

इत्येवमादि सकरुणं विलपन्तीनाम्,
जगामास्तं दिनकरो रजनी चाभ्यवर्तत ।

इति । एकोनपञ्चाशत्पञ्चाशयोः—

रामोऽपि रात्रिशेषेण तेनैव महदन्तरम् ।
जगाम पुरुषव्याघ्रः पितुराज्ञामनुस्मरन् ॥

ततः क्रमेण गोमत्यादिनदीः सकलसंपद्भरसंभृतान् कोसलानप्यतीत्य प्रभातायां शर्वर्याम् ।

अयोध्याभिमुखो धीमान्प्राञ्जलिर्वाक्यमब्रवीत् ॥

आपृच्छे त्वां पुरि श्रेष्ठे काकुत्स्थपरिपालिते ।
दैवतानि च यानि त्वां पालयन्त्यावसन्ति च ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन देशान्तरं गच्छता निवासदेशमामन्त्र्यैव गन्तव्यमिति सूचितम् । एवं वनपर्वणि गन्धमादनात्प्रयाणसमये धर्मराजकृतप्रार्थना— 'आमन्त्र्य वेश्मानि सरांसि नद्यः सर्वाणि रक्षांसि च धर्मराजः । यथागतं मार्गमवेक्षमाणः पुनर्गिरिं तं च निरीक्ष्यमाणः ॥ समाप्तकर्मा सहितः सुहृद्भिर्जित्वा सपत्नानतिलभ्य राज्यम् । शैले च भूयस्तपसे यतात्मा द्रष्टा भवामीति मतिं चकार ॥' इति ।

ततस्त्रिपथगां गङ्गां शिवतोयामशैवलाम् ।
विष्णुपादच्युतां दिव्यामपापां पापनाशिनीम् ॥

तां शंकरजटाजूटभ्रष्टां सागरतेजसाम् ।
आससाद महाबाहुः शृङ्गिबेरपुरं प्रति ॥

ततस्तत्तीरनिवासिनां गुहेन अर्घ्यपाद्यादिभिरभिपूज्य समाहृतं विविधभक्ष्यभोज्यादिकमुपभुज्यतामिति बहुशः प्रार्थितोऽपि रामः सलिलेनैव कृताहारः इङ्गुदीपादपमूले पर्णशय्यायामेव तां रात्रिमत्यवाहयत् । एकपञ्चाशे— ततस्त्वदर्थमुपकल्पितायां सुखशय्यायां प्रत्याश्वसिहीति

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

गुहेन प्रार्थितो लक्ष्मणः ससीतं वसुधातलसंसुप्तं लोकनाथं रामभद्रमवलोकयतो मम कथं निद्रा भवेदित्यभिधाय रामगुणानेव कथयन् तेन सहैव रात्रिं निनाय । द्विपञ्चाशे— ततः प्रभाते सुमन्त्रः गुहानीतया नावा गङ्गां तरितुं पादचारेणैव,

दृष्ट्वा दूरगतं रामं दुःखार्तो रुरुदे चिरम् ।
ततस्तु विगते बाष्पे सूतं स्पृष्टोदकं शुचिम् ॥

अनेनाश्रुपाते आचमनं कर्तव्यमिति सूचितम् । तथा चापस्तम्बः— 'शृङ्गाणिकाश्रूपालम्भ' इति । कूर्मपुराणेऽपि— 'उच्छिष्टं पुरुषं दृष्ट्वा भोज्यं चापि तथा विधम् । आचामेदश्रुपाते च लोहितस्य तथैव च ॥' इति ।

यथा दशरथो राजा मां नाशोचेत तथा कुरु ।
यद्ययं ज्ञायते किंचित्स महात्मा महीपतिः ॥
कैकेय्याः प्रियकामार्थं तत्कार्यमविशङ्कया ।
एतदर्थं हि राज्यानि प्रशासति नरेश्वराः ॥
यदेषां सर्वकृत्येषु मनो न प्रतिहन्यते ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन राजाज्ञा न प्रतिहन्तव्येति सूचितम् । तथा च राजधर्मे— 'तस्योपदेशे स्थातव्यं दक्षेणाक्लिष्टकर्मणा । न हि राज्ञः प्रतीपानि कुर्वन्सुखमवाप्नुयात् ॥ पुत्रो भ्राता वयस्यो वा यद्वाप्यात्मसमो भवेत् ।' इति । कामन्दकेऽपि— 'आज्ञा यस्य प्रतीच्छन्तो भृत्याः कुर्युः कृपासनम् । भर्तृचित्तानुवृत्तित्वं सद्वृत्तमनुजीविनाम् ॥' इति । मत्कृतां प्रणतिं सूत मातृभ्यश्च निवेदय । स्वमातरमिव कौसल्यां पूजयस्वेति मद्वचनाद्भरतस्त्वया वाच्य इति सुमन्त्रमवदत् । ततो रामस्त्वद्राहितेन कथमयोध्यां प्रविशामि,

भक्तवत्सल तिष्ठन्तं भर्तृपुत्रगते पथि ।
भक्तं भृत्यं स्थितं स्थित्यां न मां त्वं हातुमर्हसि ॥

इति बहुविधं क्लिश्यमानं सुमन्त्रम्,

जानामि परमां भक्तिं मयि ते भक्तवत्सल ।
शृणु चापि यदर्थं त्वां प्रेषयामि पुरीमितः ॥
कैकेयी प्रत्ययं गच्छेदिति रामो वनं गतः ।

इत्यवदत् । भक्तं भृत्यमित्यनेन भक्तो भृत्यः स्वामिना

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न परित्याज्य इति सूचितम्। तथा चानुशासनिके छत्रोत्पत्तौ सूर्यं प्रति जमदग्निवचनम्— 'भक्तं च भजमानं च तवास्मीति च वादिनम्। त्रीनेतान्विषमप्राप्तान्विषमेऽप्यपि न त्यजेत्॥' इति। मार्कण्डेयोऽपि— 'ब्रह्महत्या गुरोर्घातो गोवधः स्त्रीवधस्तथा। तुल्यमेभिर्महापापं भक्तत्यागाद्युदाहृतम्॥ भजन्तं भक्तमत्याज्यमदुष्टं त्यजतः सुखम्। नेह नामुत्र पश्यामि तस्माच्छक्र दिवं व्रज॥' एवं सति दशरथमन्त्रित्वात् तदाज्ञां विना स्वेन नेतुमशक्यत्वात् संदेशस्य तन्मुखेन प्रेषणीयत्वाच्च त्यक्त इति न कश्चिद्विरोधः। ततः स्वाज्ञया गुहानीतेन न्यग्रोधक्षीरेण रामलक्ष्मणौ जटां विधाय सीतया लक्ष्मणेन च नावमारूढो रामः,

ब्रह्मवत्क्षत्रवच्चैव जनापहितमात्मनः।
आचम्य च यथा शास्त्रं नदीं तां सीतया सह॥

प्राणमत्प्रीतिसंहृष्टो लक्ष्मणश्चामितप्रभः।

अनेन नावारोहणे ब्रह्मक्षत्रयोर्हितो मन्त्रजपः कर्तव्यः। महानदीसंतरणे आचमननमस्कारादिकं च कर्तव्यमिति

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सूचितम् । तथा चाश्वलायनः— 'सुत्रामाणं पृथिवीं पृथिवीयामनेहसं सुशर्माणमदितुं सुप्रणीतं दैवीं नावं स्वरित्रामनागसमश्रवन्तीमारुहेमां स्वस्तये' इति । आचमने यमः— 'उत्तीर्योदकमाचामेदवतीर्य तथैव च । एवं स्यात्तेजसा युक्तो वरुणोऽपि सुपूजितः ॥' इति । हारीतोऽपि— 'नोत्तरेदनुपस्पृश्य जलं विप्रः सदा शुचिः ।' इति । ततः,

मध्यं तु समनुप्राप्य भागीरथ्यास्त्वनिन्दिता ।
वैदेही प्राञ्जलिर्भूत्वा तां नदीमिदमब्रवीत् ॥

पुत्रो दशरथस्यायं महाराजस्य धीमतः ।
निदेशं पारयत्वेनं गङ्गे त्वदभिरक्षितः ॥

चतुर्दश हि वर्षाणि समग्राण्युष्य कानने ।
भ्रात्रा सह मया चैव पुनः प्रत्यागमिष्यति ॥

ततस्त्वां देवि सुभगे क्षेमेण पुनरागता ।
यक्ष्ये प्रमुदिता गङ्गे सर्वकामप्रसाधिनि ॥

त्वं हि त्रिपथगा देवि ब्रह्मलोकं समीक्षसे ।
भार्या चोदधिराजस्य लोकेऽस्मिन्संप्रदृश्यसे ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

सा त्वां देवि नमस्यामि प्रशंसामि च शोभने।
प्राप्तराज्ये नरव्याघ्रे शिवेन पुनरागते॥

गवां शतसहस्रं च वस्त्राण्यन्नं च पेशलम्।
ब्राह्मणेभ्यः प्रदास्यामि तव प्रियचिकीर्षया॥

सुराघटसहस्रेण मांसभूतोदनेन च।
यक्ष्ये त्वां प्रयतां देवि पुरीं पुनरिहागता॥

यानि त्वत्तीरवासीनि दैवतानि भवन्ति च।
तानि सर्वाणि यक्ष्यामि तीर्थान्यायतनानि च॥

पुनरेव महाबाहुर्मया भ्रात्रा च संगतः।
अयोध्यां वनवासात्तु प्रविशतु त्वयानघे॥

इति। एवं विविधं प्रार्थयमानया सीतया सह क्षिप्रमेव दक्षिणं तीरमागमत्। ननु अत्र गङ्गे त्वदभिरक्षित इत्यनेन गङ्गायाः संबोध्यत्वं संरक्षणकर्तृत्वं चावगम्यते। एवम् 'भार्या चोदधिराजस्य लोकेऽस्मिन्संप्रदृश्यते।' इत्यनेन गङ्गोदधिराजयोर्दाम्पत्यमवगम्यते। एवम् 'यक्ष्ये प्रमुदिता गङ्गे सर्वकामप्रसाधिनि। सा त्वां देवि नमस्यामि प्रशंसामि च शोभने॥' इत्यनेन फलोद्देशेन नति-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्तुतिपूर्वजाकर्मत्वमवगम्यते । एवम् 'प्राप्तराज्ये नरव्याघ्रे शिवेन पुनरागते । गवां शतसहस्रं च वस्त्राण्यन्नं च पेशलम् ॥ ब्राह्मणेभ्यः प्रदास्यामि तव प्रियचिकीर्षया ।' इत्यनेन राज्यप्राप्त्यनन्तरं गङ्गाप्रीत्यै शतसहस्रगवादिकं ब्राह्मणेभ्यो दीयते इति प्रतिपादनेन गङ्गायाः प्रीतिरवगम्यते । 'यानि त्वत्तीरवासीनि' इत्यादिना गङ्गातीरवर्ति तीर्थायतनादीनामपि प्रीत्यै पूजा चावगम्यते । इदं च चैतन्यविग्रहादिनियतं संबोध्यत्वरक्षणकर्तृत्वदास्पत्यफलार्थिपूजनीयत्वतज्जनितप्रीतिमत्त्वादिकं न जलात्मिकाया गङ्गायाः संभवति जलस्य चैतन्यविग्रहाद्यभावात् इति चेन्न । इन्द्रादीनां देवानां मन्त्रार्थवादादिप्रसिद्धविग्रहादिवत् गङ्गाया अपि मन्त्रवर्णेतिहासपुराणप्रसिद्धविग्रहादिसंभवेन संबोध्यत्वसंरक्षणकर्तृत्वप्रीतिमत्त्वादीनां संभवात् । तथा हि— इन्द्रादीनां हविर्ग्रहणे मन्त्रः— 'इदं वसो सुतमन्धः पिबासुपूर्णमुदरम् अनाभयिन्नरिमा ते पिब सोममिन्द्रमन्द तु त्वायं ते सुषाव हर्यश्वाद्रिः सोतुर्बाहुभ्यां सुयतो नार्वा आयुर्दा अग्ने हविषो

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि रक्षतादिमम् ।' 'अग्निरिदꣳ हविरजुषत' इत्यादि । तथा अर्थवादोऽपि— 'स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् ।' इति । तथा इतिहासोऽपि— 'ततः पीत्वा बलभित्सोममग्र्यं ये चाप्यन्ये सोमपा देवसङ्घाः सर्वेऽनुज्ञाताः प्रययुः । पार्थिवेन यथाजोषं तर्पिताः प्रीतिमन्तः ।' इति । तथा प्रीतौ 'वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः' 'सुप्रीतोऽग्निः सुधितो दम आस विशेदाति वार्यमियत्यै मनोऽग्ने अध्वरं जुषस्व मरुत्स्विन्द्रे यशसं कृधी नः ।' तथार्थवादोऽपि— 'आहुतिभागा वा अन्या देवता अन्याः स्तोमभागाः छन्दोभागास्ता या अग्नावाहुतयो हूयन्ते ताभिराहुतिभागाः प्रीणाति अथ सत्स्तुवन्ति शंसन्ति च तेन स्तोमभागा छन्दोभागां उभयो हास्यैता देवताः प्रीता अभीष्टा भवन्ति य एवं वेद' इति । तथा इतिहासेऽपि— 'ततस्तु स प्राह राजानमिन्द्रः प्रीतो राजन्प्रीयमाणो मरुतः सर्वाश्चान्या देवताः प्रीयमाणाः हविस्तुभ्यं प्रतिगृह्णन्तु राजन्फलम् ।'



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दाने मन्त्रः— 'अर्यमायाति वृषभस्तुविष्मान् दाता वसूनां पुरुहूतो अर्हन्। सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं दधातु।' 'उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै। उभा दातारा विषां रयीणामुभा वाजस्य सातये हुवे वां।' 'द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्रयंसत्। द्रविणोदा वीरवतीमिषं नो द्रविणोदा रासते दीर्घमायुः।' 'हस्तौ पृणस्व बहुभिर्वसव्यैराप्रयच्छ दक्षिणादोत सव्यात्' इति। तथा अर्थवादोऽपि— 'नृप एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति। इतिहासोऽपि— 'इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः' इति। ईश्वरत्वेऽपि मन्त्रवर्णः 'अभित्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानम् अस्य जगतः सुवर्दृशमीशानमिन्द्र तस्थुषः।' 'इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत्पर्वतानाम्। इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्रः' इति। तथा अर्थवादोऽपि—'तस्माद्रुद्रः पशूनामधिपतिः' इति। तथा इतिहासोऽपि—'तपन्तं तमभिद्रुत्य परिजग्राह वासवः वराणामीश्वरो दाता सर्वभूतहिते रतः' इति। चेतनाव-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

र्थेऽपि मन्त्रः—'अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम' इति । तथा अर्थवादोऽपि—'ततो वै ते सुवर्गं लोकं प्रजानन् तद्धोभये देवा असुरा अनुबुबुधिरे' इति । तथा इतिहासोऽपि—'त्वं चैवैतद्वेत्थ पुरंदरश्च विश्वेदेवा वसवश्चाश्विनौ च ।' विग्रहे मन्त्रः—'त सुप्रतीक सुदृश स्वञ्चमविद्वा सो विदुष्टरं सपेम ।' तथा अर्थवादोऽपि—'तिस्रो मइमास्तनुवो वीर्यावतीस्ताः प्रीणीता' इति 'एतावान् द्वादशप्रजापतेस्तन्व' इति । तथा इतिहासोऽपि—'तस्यां देवेश्वरः पार्थ सभायां परमासने । आस्ते शच्या महेन्द्रेण श्रिया लक्ष्म्या च भारत ॥ बिभ्रद्वपुरनिर्देश्यं किरीटी लोहिताङ्गदः । विरजोम्बरश्चित्रमाल्यो हि कीर्तिद्युतिभिः सह । एवमादिभिर्मन्त्रार्थवादादिभिः इन्द्रादीनां विग्रहादिसिद्धिवत् गङ्गाया अपि 'तस्माद्दा नद्यो नाम स्थ ता वो नामानि सिन्धवः' इति च मन्त्रवर्णेन 'शिवेन मा चक्षुषा पश्यतापः शिवया तनुवोपस्पृशत त्वचं मे सर्वा अग्नी रप्सुषदो हुवे वो मयि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वर्चौ बलमोजो निधत्त' इति मन्त्रवर्णेन । आदिपर्वणि 'स राजा शन्तनुर्धीमान्देवराजसमद्युतिः । बभूव मृगयाशीलः सततं वनगोचरः ॥ गङ्गामनुचचारैकः सिद्धचारणसेविताम् । स कदाचिन्महाराज ददर्श परमां स्त्रियम् ॥ दिव्यरूपा हि सा देवी गङ्गा त्रिपथगा नदी । मानुषं विग्रहं श्रीमद्बिभ्रती सुमनोहरम् ॥ भाग्योपनतकामस्य भार्येवोपस्थिताभवत् । शन्तनो राजसिंहस्य देवराजसमद्युतेः ॥ संभोगस्नेहचातुर्यैर्हावहास्यैर्मनोरमैः । राजानं रमयामास यथा रेमे तथैव सः ॥ रममाणस्तया सार्धं यथाकामं नरेश्वरः । अष्टावजनयत्पुत्रांस्तस्याममरवर्णिनः' इति । 'तस्य रूपगुणोपेता गङ्गा श्रीरिव रूपिणी । उत्तीर्य सलिलात्तस्माच्छोभनीयतमाकृतिः ॥ दक्षिणं सालसंकाशमूरुं भेजे शुभानना' इति । एवमादीतिहासेन च गङ्गादिनदीनामपि विग्रहादिसिद्धौ संबोध्यत्वरक्षणकर्तृत्वप्रार्थनीयत्वादिकं संभवत्येव । नन्वेतत्सर्वं तदा शोभते यदीन्द्रादीनां मन्त्रार्थवादादिवशेन विग्रहादिकं सिद्ध्येत्, तदेव न संभवति, तथा हि— मन्त्रास्तावत् मन्त्राधिकरणन्यायेनानुष्ठेयनिर्वापाद्यर्थप्रकाशनपराः न तु देवताविशेष-

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

णीभूतविग्रहादिपराः । एवमर्थवादा अपि 'विधिनात्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इति अर्थवादाधिकरणन्यायेन विध्यपेक्षितस्तुतिपराः न तु विग्रहादिपराः । अतोऽन्यपरैर्मन्त्रार्थवादादिभिर्विग्रहादिकं न सिध्यति यत्परः शब्दः स शब्दार्थ इति न्यायात्; अन्यथा भोजनप्रकरणे लवणानयनतात्पर्येण प्रयुक्तस्य सैन्धवमानयेति वाक्यस्य तात्पर्याविषयीभूते अश्वानयनरूपार्थान्तरेऽपि प्रामाण्यप्रसङ्गात् । एवं श्वेतो धावतीति श्वित्रिकर्तृकवस्त्रनिर्णेजनपरवाक्यस्य इतः सारमेयो गच्छतीत्यर्थान्तरेऽपि प्रामाण्यप्रसङ्गात् । न चेष्टापत्तिः शब्दस्य तात्पर्यविषयव्यतिरिक्तार्थे प्रामाण्यव्यवहाराभावस्य सर्वसंप्रतिपन्नत्वात् । न च यथा समिधो यजतीत्यादिवाक्यानां परमतात्पर्यविषयीभूतक्रतूपकारव्यतिरिक्तविग्रहादितात्पर्यकत्वमप्यस्त्विति वाच्यम् । 'समिधो यजति तनूनपातं यजति' इत्यादिवाक्यानां क्रतूपकारतात्पर्यकाणां समिधादियागस्वरूपेऽपि तात्पर्यस्य वक्तव्यत्वात् । अन्यथा समिधादियागानामप्रामाणिकत्वापत्त्या तैः क्रतूपकारासिद्धिप्रसङ्गात् । न चार्थवादादीनां विग्रहादितात्पर्याभावे किं-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चिद्बाधकमस्ति। न च निरालम्बनस्तुत्यनुपपत्तिलक्षणबाधकमत्राप्यस्तीति वाच्यम्—'शिखा ते वर्धिष्यते औषधं पिब' इत्यादौ अविद्यमानशिखावृद्धिप्रकाशनमुखेन प्राशस्त्यबुद्धिवत् अर्थवादेष्वपि असदर्थमालम्ब्य स्तुत्यादिबुद्धिसंभवात्। एवं 'व्रीहीणां मेध सुमनस्यमानः' 'अग्निस्ते तनुवं मातिधाक्', 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' 'द्यां ते धूमो गच्छतु अन्तरिक्षमर्चिः पृथिवीं भस्मनापृणस्व' 'दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या संभव' इत्यादिमन्त्राणामर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यादिति नावमिकाधिकरणन्यायेन अनुष्ठेयनिर्वापादिप्रशंसार्थमविद्यमानसौमनस्यशरीरवत्त्वाश्विबाहुत्वादि प्रकाशयतां विद्यमाननिर्वापादिप्रकाशनेन क्रतूपकारकत्वं संभवति। तस्मादन्यपरैर्मन्त्रार्थवादादिभिर्विग्रहादिकं न सिध्यति। प्रमाणान्तरविरुद्धत्वादपि न मन्त्रार्थवादादिकं विग्रहादिसाधकम्। तथा हि—'असौ योऽवसर्पति नीलग्रीवो विलोहितः उतैनं गोपा अदृशन्नदृशन्नुदहार्यः उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः' इति आदित्यस्य नीलग्रीवत्वादि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

विशिष्टं विग्रहं गोपालसलिलाहारिणीप्रभृति सकलदृश्यं प्रतिपादयतो मन्त्रस्य अचेतने ज्योतिर्मण्डले आदित्यादिशब्दानां शक्तिग्राहकप्रत्यक्षाविरोधः । तथा नीलग्रीवत्वविशिष्टमादित्यविग्रहं प्रतिपादयतोऽस्य मन्त्रस्य तथाविधस्य नमः सूर्यायादित्याय नमो नीलग्रीवाय शितिकण्ठायेति कृच्छ्राङ्गादित्योपस्थानमन्त्रस्य च शिवासाधारणं नीलग्रीवत्वादिविशिष्टं विग्रहं प्रतिपादयद्भिर्मन्त्रार्थवादादिभिर्विरोधेन, तथा 'अर्यम्णे चरुं निर्वपेत्सुवर्गकामोऽसौ वा आदित्योऽर्यमा' इति श्रुतिविहितकाम्येष्टिविशेषक्रमप्रमाणविनियुक्तस्य 'अर्यमायातिवृषभस्तुविष्मान् दाता वसूनां पुरुहूतो अर्हन् सहस्राक्षो गोत्रभिद्वज्रबाहुः' इत्यादिमन्त्रस्य महेन्द्रासाधारणं वज्रहस्तत्वादिविशिष्टविग्रहं प्रतिपादयद्भिर्मन्त्रार्थवादादिभिर्विरोधः । तथा, एतेन वै सर्पा अपमृत्युमजयन् अपमृत्युं जयति य एतदुपयन्ति तस्मात्ते हित्वा जीर्णां त्वचमिति सर्पन्ति अपहिते मृत्युमजयन् सर्पा वा आदित्या आदित्यानामेवैषां प्रकाशो भवति य एतदुपयन्ति' इति आदित्यानां कद्रुसुतत्वं प्रतिपादयतोरसर्पसत्रार्थवादस्य शिरःपाण्या

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

युक्तान् अतिप्रश्नावान् पौरुषेयान्विग्रहान्प्रतिपादयद्भिर्मन्त्रार्थवादैर्भिर्विरोधः। तथा— 'सायं यावानश्च वै देवाः प्रातर्यावाणश्चाग्निहोत्रिणो गृहमागच्छन्ति'। 'अध्वर्यो द्रावया त्वं सोममिन्द्रः पिपासति। उप नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा' इत्यादीनां देवानां यागदेशागमनं प्रतिपादयतां मन्त्राणां प्रत्यक्षविरोधः। युगपत्प्रवृत्तानेकयागदेशागमनं प्रतिपादयतां मन्त्राणां प्रत्यक्षविरोधः युगपत्प्रवृत्तानेकयागदेशागमनविरोधश्च। न च कायव्यूहकल्पनेन सर्वत्रागमननिर्वाह इति वाच्यम्। मातृपितृभक्तत्वनियतानां करचरणादिमतां कायानामिच्छामात्रेण कल्पनानुपपत्तेः। 'कस्य वा ह देवा यज्ञमागच्छन्ति कस्य वा न बहूनां यजमानानाम्' इति ब्राह्मणश्रुतप्रश्नानुपपत्तेश्च कायव्यूहपरिग्रहेण सर्वेषां यज्ञदेशागमनासंभवात्। 'यो वै देवताः पूर्वः परिगृह्णाति स एना श्वो भूते यजते' इति उत्तरवाक्यमपि विरुध्येत। पश्चाद्देवतापरिग्रहं कृतवतां यज्ञं प्रति देवतागमनेन कर्मनैष्फल्यप्रसङ्गात्। तथा देवतानां यागीयहविर्भोक्तृत्वं प्रतिपादयतां मन्त्रार्थवादादीनां प्रत्यक्षविरोधः। अग्नौ हुतानां

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

द्रव्याणां भस्मीभावस्य प्रत्यक्षसिद्धत्वात्पदहोमादिद्रव्याणामपि पांसुष्वेव निलीयमानत्वस्य प्रत्यक्षसिद्धत्वाच्च । तथा पञ्चशारदीयानामुक्ष्णां हयमेधीय परस्वदादीनां च यागीयानां पशूनां पर्यग्निकरणान्ते देवतोद्देशेन त्यक्तानां यथापूर्वं दृश्यमानत्वाच्च, अपि च हविर्भुञ्जाना देवता किं स्वस्थान एव स्थित्वा भुङ्क्ते उत यागदेशमागत्य, आद्ये 'अग्निमग्न आवह' इत्यावाहनं व्यर्थं स्यात् । अध्वर्यो द्रावया त्वं सोममिन्द्रः पिपासति' इति 'आ च जगाम वृत्रहा' इत्यादि श्रुतिविरोधश्च स्यात् । द्वितीये—हविरग्निना देवानां सकाशं न नेतव्यमिति 'अतन्द्रो हव्या वहसि हविष्कृत आदिद्देवेषु राजसि अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त' इत्यादिश्रुतिविरोधः । एवं श्राद्धेषु तर्पणीयाः पितरः स्वस्थान एव स्थित्वा भुञ्जत इत्यङ्गीकारे तेषां श्राद्धदेशागमनविरोधः । उक्तं हि मनुना 'निमन्त्रितान् हि पितर उपतिष्ठन्ति तान्द्विजान् । वायुभूतास्तु गच्छन्ति तथासीनानुपासते' इति । पाद्मपुराणेऽपि रामभद्रेण योगवाप्यां श्राद्धे क्रियमाणे दशरथतत्पितृपितामहास्तं देशमागत्य निमन्त्रि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तब्राह्मणानां देहेषु स्थितान्दृष्ट्वा लज्जया श्राद्धदेशादपक्रान्तां सीतां दृष्ट्वा 'किमर्थमपक्रान्तासि' इति पृष्टवन्तं रामभद्रं प्रति सीतावचनम्, 'शृणु त्वं नाथ यद्दृष्टमाश्चर्यं हि मयेदृशम्। पिता तव मया दृष्टो ब्राह्मणाङ्गेषु राघव॥ सर्वाभरणसंयुक्तो द्वौ चान्यौ च तथाविधौ। दृष्ट्वा त्रपान्विता चाहमपक्रान्ता तदन्तिकात्॥' इति। तथा श्राद्धदेशमागत्य निमन्त्रितब्राह्मणमुखेनाविष्टा भुञ्जत इत्यङ्गीकारे अभूं नो दूतो हविषो 'जातवेदो अवाड्ढव्यानि सुरभीणि कृत्वा प्रादाः पितृभ्यः स्वधया ते अक्षन्' इति अग्निर्यजमानदत्तं सुहविः सुरभीकृत्य पितृन्प्रापयतीति प्रतिपादकश्रुतिविरोधः। स्थावरतिर्यङ्मनुष्यादिशरीरं प्राप्तानां श्राद्धदेशागमनासंभवयुक्तिविरोधश्च। पूर्वजन्मपुत्रादिकृतश्राद्धैः कदापि कस्यापि तृप्तेरदर्शनेन प्रत्यक्षविरोधश्च। किं च देवानां हविर्भोक्तृत्वाङ्गीकारे—'न वै देवा अश्नन्ति न पिबन्त्येतदेवा अमृतं दृष्ट्वा तृप्यन्ति' इति श्रुत्यन्तरविरोधश्च। प्रस्तरयागस्रुवहोमादीनां मन्त्रेषु कुशकाशदारुत्राकलादिषु मनुष्यानदनीयेषु तृप्तिकारकत्वस्य युक्तिविरोधश्च। तथा स्रुवादि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परिमितैराज्यद्रव्यैर्ध्यवदानादिपरिमितैः पुरोडाशादिद्रव्यैश्च महाविग्रहवत्त्वेन मन्त्रार्थवादादिप्रतिपादितानां देवानां तृप्तिं प्रतिपादयतां तेषां युक्तिविरोधः । 'यस्मै वा अल्पेनाहरन्ति नात्मना तृप्यति नान्यस्मै ददाति यस्मै महता तृप्यत्यात्मना ददात्यन्यस्मै महता पूर्णं होतव्यं तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति श्रुतिरपि स्रुवादिपरिमिताज्यादिद्रव्यैर्देवतातृप्त्यसंभवयुक्तिमनुमोदते तथा देवतानां फलदातृत्व प्रतिपादयन्ती श्रुतीनां कल्पान्तराणामनवस्थितदेवैः कल्पान्तरोपभोग्यफलदानत्वसंभवस्य युक्तिविरोधः । तथाहि देवतानां फलदातृत्वे फलमत उपपत्तेरिति अविरोधः । तथा हि । तत्र हि किं कर्मण एव फलं उत परमेश्वरादिति संदेहः । तत्र पूर्वपक्षः कर्मण एव फलम् 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति श्रुत्या कर्मणः स्वर्गसाधानत्वेन विधानात् । न चाशुतरविनाशिनः कथं कालान्तरभाविफलसाधनत्वमिति वाच्यम् , श्रुत्यवगतकरणत्वानिर्वाहाय कर्मैव स्वावस्थायां फलं स्वर्गादिकमुत्पाद्य विनश्यति, तच्च फलं कर्त्रा स्वसंपादितधनादिवत्तु कालान्तरे उपभुज्यते इति वा कल्प्यते । अन्यथा श्रुत्यवगत-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वर्गसाधनता यागस्य भज्येत। अतः कर्मण एव फलम्। अन्यथा ईश्वरात्फलमित्यङ्गीकारे सर्वसाधारणादीश्वरात् विचित्रफलं कथं भवेत्, विचित्रफलदाने च ईश्वरस्य वैषम्यनैर्घृण्ये स्याताम्। यदि च तत्परिहाराय कर्मानुरोधेन ईश्वरः फलं ददातीति कल्प्यते, तर्ह्यावश्यकात्कर्मण एव फलमित्यस्तु किमीश्वरेण इति। सिद्धान्तस्तु— ईश्वर एव फलप्रदाता अन्नादो वसुदान इत्यादि श्रुत्या ईश्वरस्य फलदातृत्वावगमात् सर्वज्ञस्य सर्वशक्तेः परमेश्वरस्यैव तत्तत्कर्मानुरूपफलदाने समर्थत्वाच्च। न च वैषम्यनैर्घृण्ययोः प्रसङ्गः। 'एष ह्येव साधु कर्म कारयति' इत्यादि श्रुत्या कर्मस्वरूपमपेक्ष्यैव फलप्रदातृत्वावगमेन वैषम्यनैर्घृण्ययोरप्रसक्तेः। तस्मादीश्वर एव फलदाता। ईश्वरस्य फलदातृत्वानङ्गीकारे कुलालानधिष्ठितदण्डादेरिव चेतनाधिष्ठितस्य कर्मणः कारणानुपपत्तेः। किं च कर्मणः फलदातृत्वं चिरप्रध्वस्तत्वात् अनुपपन्नम्। न च स्वावस्थानवेलायां कर्मणःफलं जन्यत इति वाच्यम्, तत्किं भोक्त्रा संबद्धम् असंबद्धं वा। न तावदाद्यः तदानीमेवानुभवप्रसङ्गात्; न द्वितीयः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भोक्तृसंबन्धाभावे फलत्वव्याघातात्, अज्ञातसुखदुःखयोः प्रमाणाभावाच्च। न चापूर्वादिकं द्वारमासाद्य कर्म फलजनकं भवितुमर्हति, प्रमाणाभावात्। न च श्रुतिप्रतिपन्नस्वर्गसाधनत्वानुपपत्तिरेव मानमिति वाच्यम्। अन्नादो वसुदान इति श्रुत्या 'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः। मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्। मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि' इत्यादिभगवद्वचनात् प्रसन्नादीश्वरात्फलमित्यवगमेन ईश्वरप्रसादद्वारा कर्मणः फलजनकत्वसंभवेनानुपपत्तेरभावात्। तस्मादीश्वर एव फलदाता। तथा च गीतायाम् 'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते। लभते च ततः कामान्मयैव विहितान् हि तान्' इति। 'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते' इति च। एवं परमेश्वरस्यैव फलदातृत्वे सिद्धे तद्विरोधात् इन्द्रादीनां न फलदातृत्वम्। तथा एकैव अग्निहोत्रदेवता दध्ना प्रीता इन्द्रियं प्रयच्छति पयसा पशून् इत्यादि व्यवस्थाकल्पनायां लोके द्रव्यदानेन प्रीणनीयराजादीनां

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रदेयद्रव्यभेदेन व्यवस्थितफलप्रदातृत्वादर्शनेन लोकदृष्टिविरोधात् उक्तन्यायेन देवतानां फलदातृत्वान्यथानुपपत्तिकल्पनीयं फलैश्वर्यमपि निरस्तम् । तस्मादुक्तन्यायेन देवताविग्रहादीनां सकलप्रमाणविरुद्धत्वात् मन्त्रार्थवादे इतिहासादिकं विग्रहादिपञ्चकसाधकं न भवत्येवेति इन्द्रादिदेवतानां विग्रहादिकं न सिध्यत्येव इति । एवमुक्तन्यायेन गङ्गाया अपि उदाहृतमन्त्रेतिहासादेः विग्रहाद्यसिद्धौ संयोध्यत्वरक्षणकर्तृत्वादिकमनुपपन्नमेव इति चेत्, सन्तीति वदन्कर्ममीमांसकः प्रष्टव्यः किं विग्रहवन्तः कर्मदेवा न सन्ति । अथ वा आजानदेवा न सन्ति इति। तत्र न तावदाद्यः, स्वर्गाद्यर्थतया ज्योतिष्टोमादिविधानवैयर्थ्यापत्तेः । ज्योतिष्टोमादयो हि 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम्' इत्याद्यर्थवादावगतसुखलक्षणस्वर्गाद्यर्थाः स च स्वर्गादिः स्वर्गलोके 'यजमानं हि देहि मां नाकस्य पृष्ठे परमे व्योमन्' इति मन्त्रावगतलोकविशेषं गतेन अन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वेत्यादिश्रुतिप्रतिपन्नं दिव्यशरीरं प्राप्तेनोपभोक्तव्यः ।

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति श्रवणात्
अशरीरस्य सुखोपभोगासंभवात् इहस्थितस्य पुण्यपापा-
भ्यामारब्धशरीरादियुक्तस्य विधिनिषेधबद्धस्य दुःखासंभि-
न्नसुखोपभोगासंभवाच्च । अतश्च ज्योतिष्टोमादिविधिवै-
यर्थ्यपरिहाराय ज्योतिष्टोमादिफलभूतस्वर्गाद्युपभोगार्थं
देवाः दिव्यविग्रहादिमन्तोऽवश्यमभ्युपगन्तव्याः । अत
एव स्वर्गोपभोगाय शरीरमुत्पादयितुमाज्यपयःप्रभृतिभि-
राहुतिद्रव्यैः सूक्ष्मरूपतामापन्नैर्वेष्टितो गच्छतीति ।
उक्तं रंहत्यधिकरणे तथा हि—तदन्तरप्रतिपत्तौ रंहति संप
रिष्वक्तः प्रश्ननिरूपणाभ्याम् । जीवो भूतसूक्ष्मैरसंपरिष्व-
क्तो देहं गच्छति, उत संपरिष्वक्तः इति विशये 'स एता-
स्तेजोमात्राः समभ्याददान इत्यादिवाक्येषु करणोपादान-
वद्भूतोपादानाश्रवणात् असंपरिष्वक्तो गच्छति इति पूर्वं
प्राप्तस्य तदन्तरप्रतिपत्तौ देहान्तरप्रतिपत्तौ देहबीजभूत-
भूतसूक्ष्मैः संपरिष्वक्तो रंहति गच्छति कुतः प्रश्ननिरूपणा-
भ्यां वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भव-
न्तीति प्रश्नः इति तु पञ्चम्यामाहुतावापः पुरुषवचसो
भवन्तीति निरूपणं प्रतिवचनं ताभ्यां भूतसूक्ष्मैः परि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वेष्टितो गच्छतीति । ननु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्ययं मात्रावेष्टितत्वं श्रुतमत आह—त्र्यात्मकत्वात्तु भूयस्त्वात् त्रिवृत्करणश्रुतेः । इतरभूतद्वयसहितानामेव अपां शरीरारम्भकत्वं न केवलानाम् । कार्यस्य शरीरस्य त्र्यात्मकत्वदर्शनात् च । बाहुल्यापेक्षया तु अपां पुरुषवचनत्वं न भूतान्तरनिरासार्थम् । दृश्यते हि सर्वदेहेषु रसलोहितादिद्रवभूयस्त्वं कर्म च निमित्तकारणं देहारम्भे कर्माणि चाग्निहोत्रादीनि सोमाज्यपयःप्रभृतिद्रवद्रव्यव्यपाश्रयाणि कर्मसमवायिन्यश्चापः श्रद्धाशब्दोदिताः सह कर्मभिः द्युलोकाख्येऽग्नौ हूयन्त' इति । वक्ष्यति तस्मादप्यपां बाहुल्यसिद्धम् । प्राणगतेश्च 'तमुत्क्रामन्तं प्राणोनोत्क्रामति' इति । प्राणगतिश्रुता सा नातिराश्रया उपपन्ना जीवदेहे तथा दर्शनात् तथा च यदाश्रयः प्राणो गच्छति तैर्भूतसूक्ष्मैर्वेष्टितो जीवो रंहतीति गम्यते । इन्द्रियाणां च तदाश्रयत्वानुपलब्धेरग्न्यादिगतश्रुतेरिति चेन्न, भाक्तत्वात् । मृतस्य 'अग्निं वागप्येति वातं प्राण' इति श्रुतेः न प्राणो जीवेन सह गच्छतीति चेन्न, वागादीनामग्न्यादिगतिश्रुतेः । ओषधीर्लोमानि वनस्पतीन्केशा इत्यादि-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न्तत् भाक्ततया तत्कर्मोपकारनिवृत्तिमात्रपरत्वात् । प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः । द्युपर्जन्यपृथिवीपुरुषयोषिल्लक्षणेषु पञ्चाग्निषु प्रथमे 'असौ वाव लोको गौतमाग्निः' इत्युक्त्वा 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इति श्रद्धाया एव होमद्रव्यत्वेन श्रवणात् । अपां चाश्रवणात् पञ्चम्यामाहुतौ अपां पुरुषभावो न युक्त इति चेन्न । यतः 'आपो ह्यस्मै श्रद्धां संनमन्ते' इति श्रुतेः श्रद्धाहेतवः आपः श्रद्धाशब्देनाभिलप्यन्ते । एवं सति प्रश्नप्रतिवचनयोरुपपत्तिः । इतरथा कथं वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति, पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति प्रश्नप्रतिवचनयोः प्रथमाहुतेरसंभवादुपपत्तिः । अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः । श्रद्धाशब्दोदितानामपां पुरुषवचस्त्वेऽपि न तत्परिवेष्टितत्वं जीवस्य उच्यते श्रद्धावज्जीवस्याश्रुतत्वादिति चेन्न । कुतः? अथ य इमे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्तीति वाक्यशेषात् अग्निहोत्राद्यनुष्ठातॄणां प्रतीतेः तेषां चाग्निहोत्रदर्शपूर्णमासादिकर्मसाधनभूतदधिपयःप्रभृतयो द्रवद्रव्यभूयस्त्वात् प्रत्यक्षमेव आपः सन्ति । ता आहव-



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नीये हुताः सूक्ष्मा आहुत्यपूर्वरूपाः सत्यः तानिष्टादिकारिण आश्रयन्ति । तेषां च नैधनेन विधिना शरीरे संस्कृते श्रद्धापूर्वकर्मसमवायिन्य आहुतिमय्य आपोऽपूर्वरूपाः सत्यस्तानिष्टादिकारिणो जीवान्परिवेष्ट्यामुं लोकं फलदानाय नयन्ति । तदिदं नयनं जुहोतिनाभिधीयते श्रद्धां जुह्वति इति । तथा चाग्निहोत्रषट्प्रश्नप्रतिवचनरूपेण वाक्यशेषेण 'ते वा एते आहुती हुते उत्क्रामतः' इति । एवमादिनाग्निहोत्राहुत्योः फलारम्भाय लोकान्तरप्राप्तिः प्रदर्शिता । तस्मादाहुतिमयीभिरद्भिः संपरिष्वक्तो जीवो रंहति स्वकर्मफलभोगाय इति सिद्धम् । नाप्याजानदेवा न सन्तीति द्वितीयः, इन्द्रत्वादिप्रापकशताश्वमेधादिविधिवैयर्थ्यापत्तेः । किं च, ब्रह्मणः सायुज्यं सलोकतां यन्ति एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतां यन्ति य एतदुपयन्तीत्यादिश्रुत्या ब्रह्मादिदेवतासायुज्यसार्ष्टिसालोक्यादिफलोद्देशेन विश्वसृजामयने विधानवैयर्थ्यप्रसङ्गात् । तत्र सालोक्यं तल्लोकप्राप्तिस्तत्सार्ष्टिस्तत्समानभोगत्वं तत्सायुज्यं च गान्धर्वादिशास्त्रं आनानस्य ब्रह्मादेर्नृत्तगीतादिभिर्यो भोगस्तादृशभोगवत्त्वमिति विवेकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

तथा च्छन्दोगानां सामविधानब्राह्मणे 'सुताम्भो मधुमत्तमा इति वर्ग' इत्यारभ्य 'मासेनेन्द्रं चतुर्भिः प्रजापतिं संवत्सरेण यत्किंच जगत्सर्वं हास्य गुणीभवति' इत्यन्तेन इन्द्रादिदेवतावशीकरणफलोद्देशेन सुताम्भो मधुमत्तमा इत्यस्यामृचि उत्पन्नसामजपविधानवैयर्थ्यप्रसङ्गात्। नहि तत्तल्लोकाधिपानां दिव्यदेहोपभोगभाजामभावे तत्सायुज्यवशीकरणाद्युद्देशेन कर्मविधानं संभवति। किं च, आजानदेवकर्मदेवानां विग्रहवत्त्वानङ्गीकारे तं ब्रह्माह अभिधावत मम यशसा समागतं पृच्छति कोऽसीति ब्रह्मालंकारेणालंकृतः इत्यादिश्रुतिविरोधश्च। एवं च आजानजानां कर्मदेवानां च विग्रहादिसिद्धौ, सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणीति श्रुत्या कर्मजानां देवानां देहप्रभामण्डलान्येव नक्षत्राणीति यथा स्वीक्रियते, तेनैव प्रकारेण आजानजानामादित्यादिदेवानामपि मण्डलानि देहप्रभामण्डलान्येव, तस्मिन्नेव मण्डले आदित्यादिशब्दाः प्रयुज्यन्ते, गोलकेष्विव चक्षुरादिशब्दाः ; एवं च तदीयदेहप्रभामण्डलदर्शनमेव आदित्यादिदर्शनमिति कृत्वा 'उतैनं गोपा अदृशन्' इत्यादिश्रुत्या आदित्यादेः सर्वजनदृश्यत्वप्रति-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पादनं न विरुध्यते । एवमस्मिन्मन्त्रे कृच्छ्राङ्कादित्योपस्था-नमन्त्रे च आदित्यस्य नीलग्रीवत्वादिशिवासाधारणाकृतिविशेषप्रतिपादनम् 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' 'नमो हिरण्यबाहवे' इत्यादिश्रुतिप्रतिपन्नान्तर्यामिन्यभिप्रायेणेति न तु मयुक्तोऽपि विरोधः शङ्कनीयः। 'अर्यमा याति' इति मन्त्रेऽपि आदित्यस्य महेन्द्रासाधारणवज्रहस्तत्वादिप्रतिपादनं द्वादशादित्यान्तर्गतेन्द्रपरत्वान्न विरुध्यते । तथा च भारते आदिपर्वणि— 'धाता मित्रोऽर्यमा शक्रो वरुणश्चांश एव च । भगो विवस्वान्पूषा च सविता दशमस्तथा ॥ एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते ' इति । हरिवंशेऽपि— 'अदित्यां काश्यपाज्जाता आदित्या द्वादशैव हि । इन्द्रो विष्णुर्भगस्त्वष्टा वरुणोंऽशोऽर्यमा रविः । पूषा मित्रश्च वरदो धाता पर्जन्य एव च' इति। 'सर्पा वा आदित्याः' इत्याद्युक्तिरपि सूर्पादित्योक्तिवत्प्रशंसापरा । एवं निरस्तसमस्तविरोधेन फलविधिसामर्थ्येन सिद्धे विग्रहवति देवतागणे युगपदारब्धेषु क्रतुषु युगपदाहूतेन्द्रादिदेवानां युगपत्संनिधानमपि नानुपपन्नम् । योगबलेनानेकशरीरपरिग्रहसंभ-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्वात्, शरीराणां मातापितृप्रभवत्वनियमस्तु अणिमाद्यै-श्वर्यादिफलकयोगविधिविरोधात् सुखानां दुःखसंभिन्न-त्वनियमवदनादरणीयः । अत एव मातापितृसंयोगं विनैव संकल्पमात्रेणैवानेकशरीरपरिग्रहं दर्शयति श्रुतिः— 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते' इत्यादि । तथा— 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा' इत्यादि । विष्णुपुराणेऽपि— 'तदान्यान्मानसा-न्पुत्रान्सदृशानात्मनोऽसृजत् । भृगुं पुलस्त्यं पुलहं क्रतु-मङ्गिरसं तथा । मरीचिं दक्षमत्रिं च वसिष्ठं चैव मान-सान् । नव ब्रह्माण इत्येते पुराणे निश्चयं गताः' इति । आदिपर्वण्यपि— 'एवमुक्त्वा तु यजने हुते हविषि संस्कृते । उत्तस्थौ पावकात्तस्मात्कुमारो देवसंनिभः । कुमारी चापि पाञ्चाली वेदीमध्यात्समुत्थिता' इति । एवं च यज्ञवाटमागतानां देवानामदृश्यत्वमपि अणिमा-द्यैश्वर्यबलादुपपन्नं न प्रत्यक्षेण विरुध्यते । 'कस्य वा ह देवा यज्ञमागच्छन्ति यो वा देवताः पूर्वः प्रतिगृह्णाति स एनान् श्वोभूते यजते' इत्याद्यर्थवादानां प्रातरन्वाधानस्ता-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बकत्वेन स्वार्थतात्पर्यकत्वाभावात्। एवं भोक्तृत्वमपि देवानामुपपन्नमेव। अग्नौ प्रक्षिप्तस्य हविषो भस्मीभावेऽपि रसांशभोजनसंभवात्। न च तत्र प्रमाणाभावः, 'अवाड्ढव्यानि सुरभीणि कृत्वा' इति हविषोऽवस्थान्तरकरणपूर्वकं नयनप्रतिपादकमन्त्रस्यैव प्रमाणत्वात्। एवं पर्यग्निकरणान्ते उत्सृष्टेषु पशुषु काशकुशस्तम्बादिष्वपि रसांशभोगः संभवत्येव। न चैवमुत्सृष्टानां पशूनां पूर्वावस्थातो वैलक्षण्यमनुभूयेतेति वाच्यम्। मधुकरोपभुक्तपुष्पाणामिव वैलक्षण्योपपत्तेः। न चैवम् अग्नौ प्रास्ताहुतिरित्यादिस्मृत्या हविषः आदित्यादिमण्डलं प्राप्य पुनर्वृष्ट्यन्नपुरुषादिभावेन प्रत्यावृत्तिप्रतिपादनं विरुध्येत इति वाच्यम्। 'यद्वै देवा हविर्जुषतेऽल्पमप्येकमाहुतमपि तद्गिरिमात्रं वर्धयन्ते' इति त्यक्तस्य हविषो वृद्धिश्रवणेन कश्चिदंशस्तृप्तिपर्याप्तो देवैर्भुज्यते। कश्चिदंशो वृष्ट्यन्नादिरूपेणावर्तत इति न विरोधः। पित्रादिश्राद्धेषु दत्तमन्नमपि पित्रादिभिर्यच्छरीरं परिगृहीतं तत्तज्जात्युचिताहाररूपेण परिणमते पित्रादिश्राद्धेषु दत्तमन्नमपि तत्तत्तृप्तिकरं भवति। तथा च विष्णुपुराणे— स्यमन्तकमण्याहरणाय जाम्बवता सह

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

युज्यमानस्य कृष्णस्य ज्ञातिकृतश्राद्धदत्तविशिष्टपात्रोपयु-
क्तामतोयादिना कृष्णस्य बलप्राणपुष्टिरभूत् इति ।
तत्रैव 'श्रद्धासमन्वितैर्दत्तं पितृभ्यो नाम गोत्रतः । यदा-
हारास्तु ते जातास्तदाहारत्वमेति तत्' इति । मात्स्येऽपि-
'देवो यदि पिता जातः शुभकर्मणि योगतः । तस्यान्न-
ममृतं भूत्वा देवत्वेऽप्यनुतिष्ठति ॥ गान्धर्वभोग्यरूपेण
पशुत्वे च तृणं भवेत् । श्राद्धान्नं वायुरूपेण नागत्वेऽप्युप-
तिष्ठति ॥ पानं भवति यक्षत्वे राक्षसत्वे तथामिषम् ।
दानवत्वे तथा मांसं प्रेतत्वे रुधिरोदकम् ॥ मनुष्यत्वेऽन्न-
पानादि नानाभोगरसो भवेत्' इति । एवं च पित्राद्युद्दे-
शेन दत्तं हविस्तत्तज्जात्युचिताहाररूपेण परिणतं तत्तृ-
प्तिकरं भवति । देवानां यागदेशानागमने आवाहनश्रुतेः,
आगमने अग्नेर्हव्यवाहत्वश्रुतेर्विरोध इत्यपि न, अग्निमग्न
आवहेत्यादिमन्त्रेण आह्वाने आगत्य हविर्गृह्णन्ति अनाह्वाने
च अग्निनानीतं हविर्भुञ्जते इति व्यवस्थया अविरोध-
संभवात् । अत एव मन्त्रेणाह्वाने देवतागमनं भारते दृष्टम् ।
जनमेजयः—यथा चेदं कर्म समाप्यते मे यथा च वै तक्षक
एति शीघ्रम् । तथा भवन्तः प्रयतन्तु सर्वे परं शक्त्या सह मे

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विद्विषाण: ॥ ऋत्विज:— यथा शास्त्राणि न: प्राहुर्यथा शंसति पावकः। इन्द्रस्य भवने राजंस्तक्षको भयपीडितः। यथा सूतो लोहिताक्षो महात्मा पौराणिकश्चोदितवान्पुरस्तात्। एतच्छ्रुत्वा दीक्षितस्तप्यमान आस्ते होतारं चोदयन् कर्मकाले ॥ होता च यत्तोऽस्य जुहाव मन्त्रैर्यथामरेन्द्रः स्वयमाजगाम। विमानमारुह्य तदैव देवैः सर्वैर्देवैः परिसंस्तूयमानः ॥ तस्योत्तरीये निहितः स नागो भयोद्विग्नः शर्म नैवाभ्यगच्छत्। जनमेजयः—इन्द्रस्य भवने विप्रा यदि नागः स तक्षकः। तमिन्द्रेणैव सहितं पातयध्वं विभावसौ॥ हूयमानस्तथा चैव तक्षकः सपुरंदरः। आकाशे ददृशे चैव क्षणेन व्यथितस्तथा ॥ पुरंदरस्य तं यज्ञं दृष्ट्वोरु भयमाविशत्। हित्वा तु तक्षकं त्रस्तः स्वमेव भवनं ययौ। इन्द्रे गते तु नागेन्द्रस्तक्षको भयमोहितः ॥ मन्त्रशक्त्या पावकार्चिः समीपमवशो गतः। सौतिः— जनमेजयेन राज्ञा तु नोदितस्तक्षकं प्रति। होता जुहाव तत्रस्थं सशङ्कं पन्नगं तथा॥ आदिपर्वणि— 'सा तथोक्ता तथेत्युक्त्वा तेन भर्त्रा वराङ्गना। अभिवाद्याभ्यनुज्ञाता प्रदक्षिणमवर्तत ॥ आहूयामास वै कुन्ती गर्भार्थं धर्मम-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

च्युतम् ॥ अजाप मन्त्रं विधिवद्दत्तं दुर्वाससा पुरा । आजगाम ततो देवी धर्मो मन्त्रबलात्तपः । विमाने सूर्यसंकाशे कुन्ती यत्र व्यवस्थिता' इति । यद्यप्यतीतानां पित्रादीनां परिगृहीतजन्मान्तराणां श्राद्धदेशागमनं युक्तिविरुद्धं तथापि तेषामधिष्ठात्राजानपितृरूपाः वसुरुद्रादित्यादयः स्मृतिषु प्रसिद्धाः स्वयं हविर्भिस्तृप्ताः सन्तः स्वाधिष्ठितान्यजमानपितॄनपि तर्पयित्वा श्राद्धकर्तुरपि उचितफलं प्रयच्छन्ति । यथा सुहृत्तदौहृदेन स्वयं तृप्ता गर्भिण्यो गर्भाण्यपि पोषयन्ति सुहृद्भ्यश्च प्रत्युपकुर्वन्ति । हरिवंशे भीष्मं प्रति शन्तनुवचनम्—'आदिदेवसुतास्तात पितरो देवदेवताः । तान्यजन्ति स्म लोका वै सदेवनरदानवाः । सयक्षोरगगन्धर्वाः सकिंनरमहोरगाः ॥ आप्यायितास्च ये श्राद्धैः पुनराप्याययन्ति वै । जगत्सदेवगन्धर्वमिति ब्रह्मानुशासनम् ॥ तान्यजस्व महाभागाञ्श्राद्धी श्राद्धैरतन्द्रितः । ते ते श्रेयो विधास्यन्ति सर्वकामफलप्रदाः । त्वयैवाराध्यमानास्ते नामगोत्रादिकीर्तनैः ॥ अस्मानाप्याययिष्यन्ति स्वर्गस्थानपि भारत' इति । तदुक्तं पुराणे— 'वसुरुद्रा दितिसुताः पितरः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्राद्धदेवताः । प्रीणयन्ति मनुष्याणां पितृञ्श्राद्धेषु तर्पिताः ॥ एवमेते महात्मानः श्राद्धे सत्कृत्य पूजिताः । सर्वान्कामान्प्रयच्छन्ति शतशोऽथ सहस्रशः ।' इति । विष्णुपुराणे—'श्राद्धैराप्यायिता दद्युः सर्वान्कामान्पितामहाः' इति । यदपि— 'न वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति' इत्यादि श्रुतिविरोध इति, तन्न संभवति । तत्र 'असौ वा आदित्यो देवमधु' इत्यादि खण्डपञ्चकप्रतिपादितरोहिजादिरूपात्मकान्यमृतानि स्वतोऽनदनीयद्रव्यत्वेन कुशादिवदनीयरूपतया परिणामासंभवाच्च अनुपभोग्यत्वशङ्कायां दर्शनमात्रेण तृप्तिप्रदानि इति परिहारार्थत्वेन तदवतारात्, यत्तादनीयं वस्तु तदुपभोगे तु न किंचिद्बाधकमस्ति । न च प्रीतिमतामपि देवानां कल्पान्तरभाविफलदातृत्वं न संभवति । तेषामिन्द्रादीनां कल्पान्तरावस्थानासंभवादिति वाच्यम्, तत्रापि देवताप्रीतिजनितेश्वरप्रीतिद्वारा फलोपपत्तेः । न चैवं सर्वत्र आवश्यकेश्वरप्रीत्यैव तत्फलसंभवे किं देवताप्रीतिकल्पनयेति वाच्यम् । मन्त्रार्थवादादिभिरवगतदेवताप्रीतिपरित्यागे प्रमाणाभावात् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न चैवमीश्वरप्रीतेः साधारणतया फलतारतम्यं न स्यात् । तारतम्ये च प्रीतस्य परमेश्वरस्य वैषम्यनैर्घृण्यप्रसङ्गः इति वाच्यम् । 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो निनीषते' इति श्रुत्या कर्मापेक्षतयैव फलदानेन वैषम्याद्यभावात् । अत एव फलमत उपपत्तेरित्यधिकरणविरोधोऽपि नास्ति, कर्मणा प्रीतस्य परमेश्वरस्यैव 'अन्नादो वसुदानः' इति श्रुत्या फलदातृत्वाभ्युपगमात् । अत एव गुणक्रियावद्वदेवताकयागेषु कृष्णाय स्वाहा श्वेताय स्वाहेत्यादिषु देवताया अभावेऽपि परमेश्वरप्रीत्यैव फलसंभवान्न विरोधः । किं च इन्द्रादयो देवा नात्यन्तं परमेश्वराद्भिन्नाः, किं तु 'एतद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ एव सर्वे देवाः' इति 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः' इति 'एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवाः' इत्यादि श्रुतेः 'एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् । योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः ॥ सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ' इति स्मृतेश्च इन्द्रादयो देवास्तस्यैव रूपभेदाः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति न तेन तेषामन्यथासिद्धिः। वस्तुतस्तु मन्त्रार्थ-वादादीनां फलविध्यपेक्षितदेवतास्वरूपप्रतिपादकतया वि-वक्षितार्थकत्वेन मीमांसकैरपि अङ्गीकर्तव्यतया देवता-विग्रहादिपञ्चकनिराकरणस्य फलप्रदाने कर्मण एव प्रा-धान्यमिति प्रतिपादनार्थत्वेन विग्रहादिनिराकरणेऽपि तेषां तात्पर्याभावात्, तैरपि मन्त्रार्थवादादीनामवान्तरता-त्पर्येण विग्रहादिकमङ्गीकर्तव्यमेव। यदुक्तं तात्पर्याविष-यत्वाद्विग्रहादिकं न सिद्ध्यति, अन्यथा 'सैन्धवमानय' इति वाक्यस्य लवणानयनतात्पर्येण प्रयुक्तस्य तात्पर्यावि-षयेऽश्वानयनरूपार्थान्तरेऽपि प्रामाण्यं स्यादिति तत्र अश्वानयनरूपार्थान्तरप्रतीतेरननुभवपराहतत्वात्। न चार्थ-वादस्थले स्तुतिव्यतिरिक्तार्थो न प्रतीयत इति वक्तुं श-क्यम्। तथा सति शक्यार्थप्रतीत्यभावेन शक्यसंबन्धरू-पलक्षणया स्तुतिप्रतिपत्तेरभावप्रसङ्गात् अनुभवविरोधा-च्च। एवं च मानान्तराविरुद्धः अप्राप्तश्चार्थः शब्दगम्य इति अर्थवादादिबलाद्विग्रहादिकं सिद्ध्यत्येव। अत एवान-धिगतार्थगन्तृ प्रमाणमिति मीमांसका अपि वर्णयन्ति। अन्यथा तात्पर्याविषयीभूताप्राप्तरेवत्याधारवारवन्तीयरू-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

योऽपूर्वोऽर्थस्तात्पर्यविषयोऽपि सिद्ध्यति। तदा आर्थ-वादिकदेवताविग्रहादिष्वपि दीयतां दृष्टिः। एवं च देवा-नामाह्वाने आगत्य भुञ्जते अनाह्वाने च स्वस्थाने स्थित्वा-ग्निना नीतं हविर्भुञ्जते। भुक्त्वा च प्रीता भवन्ति प्री-ताश्च फलं प्रयच्छन्ति फलप्रदानानुपपत्त्या ईश्वरा अपि देवता अपि च 'मध्वादिष्वसंभवादनधिकारं जैमिनिरिति सूत्रे मधुविद्यायां वस्वादिदेवानामधिकारो नास्ति, 'तस्यां विद्यायां वसूपजीव्यत्वादेः ध्यातव्यत्वस्य वसूनामेकैको भूत्वेत्यनेनावगतवसुभावलक्षणफलस्य चासंभवादनधिकार इति जैमिनिराचार्यो मन्यते' इति भगवता बादरायणेन प्रतिपादनात् असंभवस्थले अनधिकारेऽपि संभवद्विद्या-न्तरे अधिकारोऽस्तीति जैमिनेरपि देवताविग्रहादिकं संमतमेवेत्यवगम्यते। इदं सर्वमपि विग्रहं चैतन्यं चान्तरा अनुपपन्नमिति सिद्धं विग्रहादिपञ्चकमिन्द्रादिदेवता-नाम्। एवमेव इतिहासपुराणादिभिर्विग्रहादिमत्त्वेन प्रसि-द्धायाः गङ्गायाः प्रार्थनीयत्वफलदातृत्वादिकं सर्वमप्युपप-न्नमेव। न च तदुपस्थापकपदाभावात् न तद्बोधः संभव-तीति वाच्यम्। चक्षुरादिशब्दानामिन्द्रियवाचकत्ववत्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गङ्गादिशब्दानामपि तदभिमानिदेवतावाचकत्वसंभवेन तेषामेव तदुपस्थापकत्वात्। न च प्रवाहे सर्वैः प्रयुक्तानां गङ्गादिपदानां तदभिमानिदेवतावाचकत्वं न संभवतीति वाच्यम्। आदित्यादिशब्दानां ज्योतिर्मण्डल इव गङ्गादिपदानामपि प्रवाहे लक्षणयैव प्रयोगसंभवेन तद्वाचकत्वसंभवात् इति। एवमेवास्मिन्ग्रन्थे तत्र तत्र श्रूयमाणानां नदीसमुद्रपुरीपर्वतवनस्पतिविमानादीनां श्रुतिस्मृतीतिहासपुराणादिभिर्विग्रहादिमत्त्वेनावगमात्संबोध्यत्वादिकमुपपन्नम्। तथा हि— एवमेव यमुनां प्रति सीतावचनम्—

स्वस्ति देवि तरामि त्वां पारयेन्मे पतिर्व्रतम्।
यक्ष्ये त्वां गोसहस्रेण सुराघटशतेन च॥

स्वस्ति प्रत्यागते रामे पुरीमिक्ष्वाकुपालिताम्।

इति।

ततो मध्यात्समुद्रस्य सागरः स्वयमुत्थितः।
उदयन्हि महाशैलान्मेरोरिव दिवाकरः॥

पन्नगैः सह दीप्तास्यैः समुद्रः प्रत्यदृश्यत।
स्निग्धवैदूर्यसंकाशो जाम्बूनदविभूषितः॥

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

रक्तमाल्याम्बरधरः पद्मपत्रनिभेक्षणः।
सर्वपुण्यमयीं दिव्यां शिरसा धारयन्स्रजम्॥
धातुभिर्मण्डितः शैलो विविधैर्हिमवानिव।

इति। एवं पुरीं प्रति रामवचनम्।

आपृच्छे त्वां पुरिश्रेष्ठे काकुत्स्थपरिपालिते।
दैवतानि च यानि त्वां पालयन्त्यावसन्ति च॥

इति। सुन्दरकाण्डे लङ्काहनुमत्संवादे—

तथा सा हरिशार्दूलं प्रविशन्तं महाबलम्।
नगरी स्वेन रूपेण ददर्श पवनात्मजम्॥

सा तं हरिवरं दृष्ट्वा लङ्का रावणपालिता।
स्वयमेवोत्थिता तत्र विकृताननदर्शना॥

पुरस्तात्तस्य वीरस्य वायुसूनोरतिष्ठत।
ततः कृत्वा महानादं सा वै लङ्का भयानकम्॥
तलेन वानरश्रेष्ठं ताडयामास वेगिता।
ततः संवर्तयामास वामहस्तस्य सोऽङ्गुलीः।
मुष्टिनाभिजघानैनां हनुमान्क्रोधमूर्छितः॥

बालकाण्डे—

शैलेन्द्रो हिमवान्नाम धातूनामाकरो महान्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्य कन्याद्वयं राम रूपेणाप्रतिमं भुवि ॥
या मेरुदुहिता राम तयोर्माता सुमध्यमा ।
नाम्ना मेना मनोज्ञा वै पत्नी हिमवतः प्रिया ॥

तस्यां गङ्गेयमभवज्ज्येष्ठा हिमवतः सुता ।
उमा नाम द्वितीया तु कन्या तस्यैव राघव ॥

इति । सुन्दरकाण्डे—

हिरण्यनाभो मैनाको निशम्य लवणाम्भसः ।
उत्पपात जलात्तूर्णं महाद्रुमलतायुतः ॥

प्रीतो हृष्टमना वाक्यमब्रवीत्पर्वतः कपिम् ।
मानुषं धारयन्रूपमात्मनः शिखरे स्थितः ॥

दुष्करं कृतवान्कर्म त्वमिदं वानरोत्तम ।
निपत्य मयि शृङ्गेषु विश्रमस्व यथासुखम् ॥

इति ।

न्यग्रोधं तमुपागम्य वैदेही वाक्यमब्रवीत् ।
नमस्तेऽस्तु महावृक्ष पारयेन्मे पतिर्व्रतम् ॥

कौसल्यां चैव पश्येयं सुमित्रां च यशस्विनीम् ।
इति सीताञ्जलिं कृत्वा प्रत्यगच्छद्वनस्पतिम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

युद्धकाण्डे—

अब्रवीत्तु तदा रामस्तद्विमानमनुत्तमम् ।
वह वैश्रवणं देवमनुजानामि गम्यताम् ॥

ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् ।
उत्तरां दिशमागम्य जगाम धनदालयम् ॥ इति ।

उत्तरकाण्डे—

अथापराह्नसमये भ्रातृभिः सह राघवः ।
शुश्राव मधुरां वाणीमन्तरिक्षात्प्रभाषिताम् ॥

सौम्य राम निरीक्षस्व सौम्येन वदनेन माम् ।
कैलासशिखरात्प्राप्तं विद्धि मां पुष्पकं प्रभो ॥

तव शासनमाज्ञाय गतोऽस्मि धनदं प्रति ।
उपस्थातुं नरश्रेष्ठ स च मां प्रत्यभाषत ॥

निर्जितस्त्वं महेन्द्रेण राघवेण महात्मना ।
निहत्य युधि दुर्धर्षं रावणं राक्षसाधिपम् ॥

ममातिपरमा प्रीतिर्हते तस्मिन्दुरात्मनि ।
रावणे सगणे सौम्य सपुत्रे सहबान्धवे ॥


CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स त्वं रामेण लङ्कायां निर्जितः परमात्मना ।
अहं सौम्य तमेव त्वमहमाज्ञापयामि ते ॥

एष मे परमः कामो यत्त्वं राघवनन्दनम् ।
महेलोंकस्य संधानं गच्छ त्वं विगतज्वरः ॥

तच्छासनमहं ज्ञात्वा धनदस्य महात्मनः ।
त्वत्सकाशं पुनः प्राप्तः स्वयं प्रतिगृहाण माम् ॥

बाढमित्येव काकुत्स्थः पुष्पकं समपूजयत् ।
लाजाक्षतैश्च पुष्पैश्च गन्धैश्चैव सुगन्धिभिः ॥

गम्यतां च यथाकाममागच्छेस्त्वं यदा स्मरे ।
सिद्धानां च यथा सौम्य मा विषादेन योजय ॥

एवमस्त्विति रामेण विसृष्टः पुष्पकः पुनः ।
अभिप्रेतां दिशां प्रायात्पुष्पकः पुष्पमोदितः ॥

उत्तरकाण्डे—
मनसा पुष्पकं दध्यावागच्छेति महायशाः ।
इङ्गितं स तु विज्ञाय पुष्पको हेमभूषितः ।
आजगाम मुहूर्तेन समीपं राघवस्य वै ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

सोऽब्रवीत्प्रणतो भूत्वा आगतोऽस्मि नराधिप ।
वश्यस्तव महाबाहो किंकरः समुपस्थितः ॥

भाषितं रुचिरं श्रुत्वा पुष्पकस्य नराधिपः ।
अभिवाद्य महर्षींस्तान्विमानमधिरोहत ॥ इति ।

बालकाण्डे श्रीरामं प्रति विश्वामित्रः—

कृशाश्वतनयान्राम भास्करान्कामरूपिणः ।
प्रतीच्छ मम भद्रं ते पात्रभूतोऽसि राघव ॥

बाढमित्येव काकुत्स्थः प्रहृष्टेनान्तरात्मना ।
दिव्यभास्करदेहाश्च मूर्तिमन्तः सुखप्रदाः ॥

केचिदङ्गारसदृशाः केचिद्धूमोपमास्तथा ।
चन्द्रार्कसदृशाः केचित्प्रह्वाञ्जलिपुटास्तथा ॥

रामं प्राञ्जलयो भूत्वाब्रुवन्मधुरभाषिणः ।
इमे स्म नरशार्दूल शाधि किं करवाम ते ॥

मानसाः कार्यकालेषु साहाय्यं मे करिष्यथ ।
गम्यतामिति तानाह यथेष्टं रघुनन्दनः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

अथ ते राममामन्त्र्य कृत्वा चापि प्रदक्षिणम् ।
एवमस्त्विति काकुत्स्थं जग्मुरुक्त्वा यथागतम् ॥

छान्दोग्ये— 'अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहाति अथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यति । जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' इति । तथा तैत्तिरीयके— 'स वनस्पतीनुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति तेऽब्रुवन् वरं वृणामहै वृकणान् पराभविष्यन्तो मन्यामहे ततो मा पराभूमेत्याव्रश्चनाद्वो भूयांस उत्तिष्ठानित्यब्रवीत् । तस्मादाव्रश्चनाद्वृक्षाणां भूयांस उत्तिष्ठन्ति वारे वृतं ह्येषां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्' इति । तत्रैव 'स पृथिवीमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृहाण' इति । 'साब्रवीद्वरं वृणे खातात्पराभविष्यन्तीति मन्ये ततो मा पराभूवमिति पुरा ते संवत्सरादपि रोहादित्यब्रवीत्तस्मात्पुरा संवत्सरात्पृथिव्यै खातमपि रोहति वारे वृतं ह्यस्य इति प्रजापतिरग्निमचिनुत तं पृथिव्यब्रवीत् न मय्यग्निं चेष्यसेति मा धक्ष्यति सा त्वाति-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

दह्यमाना विधमिष्ये स पापीयान् भविष्यसि' इति । मनुरपि— 'ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः । अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः ॥ पुष्पिणः फलिनश्चैव वृक्षास्तूभयथा स्मृताः । गुच्छगुल्मं तु विविधं तथैव तृणजातयः ॥ बीजकाण्डरुहाण्येव प्रतानावल्ल्य एव च । तमसा बहुरूपेण वेष्टिताः कर्महेतुना ॥ अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः' इति । भारते— लाङ्गलेन स्वप्रवाहमाकर्षन्तं बलरामं प्रति 'तदा स्त्रीरूपिणी भूत्वा यमुना राममब्रवीत् । प्रसीद नाथ भीतास्मि प्रतिलोमेन कर्मणा ॥' मोक्षधर्मे नारदासितसंवादे वृक्षौषधितृणानि प्रति ब्रह्मणो वाक्यम् 'ततो वृक्षौषधितृणं समाहूय पितामहः । दैवेनाभिहितानस्मान्न पुनर्हन्तुमर्हसि ॥ वयमग्निं तथा शीतं वर्षं च पवनेरितम् । सहामः सततं देव तथा च्छेदनभेदने ॥ अस्माकमद्य भवतः शासनाद्भयम् । अहीष्यामखिललोकेश मोक्षं चिन्तयतां भवान् । ब्रह्मोवाच 'पर्वकाले तु संप्राप्ते यो वै च्छेदनभेदने । करिष्यति नरो मोहात्तमेवानुगमिष्यति ॥ भीष्म उवाच— ततो वृक्षौषधितृणमेवमुक्तं महात्मना । ब्रह्माणमभिसं-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पूज्य जगामाशु यथागतम् ॥' इति। विष्णुपुराणेऽपि—'ततो मही महीपाल भारार्ता भयपीडिता। जगाम शरणं देवं सर्वभूतपितामहम् ॥ वन्द्यमानं सुरोपेतैर्ववन्दे चैनमेत्य सा'। कालिदासः—'अथार्धरात्रे स्तिमितप्रदीपे शय्यागृहे सुप्तजने प्रबुद्धः। कुशः प्रवासस्थकलत्रवेषामदृष्टपूर्वां वनितामपश्यत् ॥ सा साधु साधारणपार्थिवर्द्धेः स्थित्वा पुरस्तात्पुरुहूतभासः। जेतुः परेषां जयशब्दपूर्वं तस्याञ्जलिं बन्धुमतो बबन्ध ॥ तां सोऽनपोढार्गलमप्यगारं छायामिवादर्शतलं प्रविष्टाम्। सविस्मयो दाशरथेस्तनूजः प्रोवाच पूर्वार्धविसृष्टतल्पः ॥ लब्धान्तरा सावरणेऽपि गेहे योगप्रभावो न च लक्ष्यते ते। बिभर्षि चाकारमनिर्वृतानां मृणालिनी हैममिवोपरागम् ॥ का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते। आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ॥ तमब्रवीत्सा गुरुणानवद्या या नीतपौरा स्वपदोन्मुखेन। तस्याः पुरः सम्प्रति वीतनाथां जानीहि राजन्नधिदेवतां माम् ॥' इति। हरिवंशे—'सोऽनुमान्य सुरान्सर्वान्कृष्णवाक्यं निवेद्य च। सभां सुधर्मामादाय पुनराया-

C-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kos

न्महीतलम् ॥ सा ह्यक्षय्या सभा रम्या कामगा कामरूपिणी' । विष्णुपुराणे—'सभा सुधर्मा कृष्णेन मर्त्यलोके समुज्झिते । स्वर्गं जगाम मैत्रेय: पारिजातश्च पादपः' । भारते अश्वपतिनामा मद्राधिपतिरपत्योत्पादनायाष्टादशवर्षपर्यन्तम् 'हुत्वा शतसहस्रं स सावित्र्या राजसत्तमः । षष्ठे षष्ठे तथा काले बभूव मितभोजनः ॥ पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात् । रूपिणी तु तदा राजन्दर्शयामास तं नृपम् ॥ अग्निहोत्रात्समुत्थाय हर्षेण महतान्विता । उवाच चैनं वरदा वचनं पार्थिवं तदा ॥' सभापर्वणि—'शक्रस्य तु सभा दिव्या भास्वरा कर्मभिर्जिता । स्वयं शक्रेण कौरव्य निर्मितार्कसमप्रभा ॥ विस्तीर्णा योजनशतं शतमध्यर्धमायता ॥ वैहायसी कामगमा पञ्चयोजनमुच्छ्रिता । जराशोकक्लमापेता निरातङ्का शिवा शुभा ॥ वेश्मासनवती रम्या दिव्यपादपशोभिता ।' हरिवंशेऽपि—'चकार वायोराह्वानं भूयश्च पुरुषोत्तमः । सप्राणः प्राणभूतानामुपतस्थे गदाधरम् ॥ तमुवाच ततः कृष्णो रहस्यं पुरुषो हरिः । मारुतं जगतः प्राणं रूपिणं समुपस्थितम् ॥' अत्स्वरूपमिदमुच्यते । बृहदारण्यके—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति । एष त आत्मान्तर्याम्यमृतः एवमप्सु अग्नौ अन्तरिक्षे वायौ दिवि आदित्ये दिक्षु चन्द्रतारके आकाशे तमसि तेजसि इत्यधिदैवतम् । यः सर्वेषु भूतेषु इत्यधिभूतं प्राणे वाचि चक्षुषि श्रोत्रे मनसि त्वचि ज्ञाने रेतसि इत्यध्यात्मम्' इत्येवं पृथिव्यादीनां 'यं पृथिवी न वेद' इत्यादिना ब्राह्मणः पृथिवीकर्तृकदर्शनविषयत्वाभावप्रतिपादनान्यथानुपपत्त्या पृथिव्यादीनां सर्वेषामपि चैतन्यावगमात् यस्य पृथिवी शरीरमित्यनेन परमेश्वरस्य सर्वत्राविर्भाववचनात् परमेश्वरेणैव चेतनेन सर्वेषामपि भूतानां चैतन्यं सिद्ध्यति । अत एव 'पुरुषमेधे ब्रह्मणे ब्राह्मणमालभत' इत्यादिश्रुतौ देवतात्वेन अवगतानां ब्राह्मणत्वादिजातीनां लोके अचेतनत्वेन प्रसिद्धानामपि परमेश्वराविर्भावप्रयुक्तचैतन्यवत्त्वाद्देवतात्वमुपपद्यते। अत एव विभूत्यध्याये शुकानुप्रश्ने च परमेश्वराविर्भावाधीनमेव चैतन्यं विग्रहवत्त्वादिकं सर्वस्येति प्रतिपादितम् । तथा हि गीतायाम्— 'हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः । प्राधान्यतः कुरु-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्च नास्त्यन्तो विस्तरस्य मे ॥ अहमात्मा गुडाकेश सर्वभूताशये स्थितः । अहमादिश्च मध्यं च भूतानामन्त एव च ॥' इत्यादिना स्वस्य सर्वात्मकताप्रतिज्ञापूर्वकम् 'आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्' इत्यारभ्य 'मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम्' इत्यन्तेन आदित्यादिव्यष्टिरूपतां प्रतिपाद्य संग्रहेण समष्टिरूपत्वमुपसंहरति 'यच्चापि सर्वभूतानां बीजं तदहमर्जुन । न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप । एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया । यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ॥ तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् । अथवा बहुनैतेन किं ज्ञातेन तवार्जुन । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥' इति । मोक्षधर्मे शुकानुपतने– 'ततो द्वैपायनसुतं बहुमानात्समन्ततः । कृताञ्जलिपुटाः सर्वा निरीक्षन्ते स्म देवताः ॥ अब्रवीत्तास्तदा वाक्यं शुकः परमधर्मवित् । पिता यद्यनुगच्छेन्मां क्रोशमानः शुकेति वै ॥ ततः प्रतिवचो देयं सर्वैरेव समाहितैः । शुकस्य वचनं श्रुत्वा दिशः सर्वाः सकाननाः ॥ समुद्राः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वरित: लोका: प्रत्यूचुस्तं समाहिता: । यथा प्रपाचसे विप्र वाढमेवं भविष्यति ।। कथेत्यहरतो वाक्यं प्रतिवक्ष्यामहे वयम् ।' इति । मोक्षधर्मे भृगुभरद्वाजसंवादे भरद्वाज:— 'पञ्चभिर्यदि भूतैस्तु युक्ता: स्थावरजङ्गमा: । स्थावराणां न दृश्यन्ते शरीरे पञ्च धातव: ।। अनुष्मणामचेष्टानां घनानां चैव तत्त्वत: । वृक्षाणां चै न लक्ष्यन्ते शरीरे पञ्च धातव: ।। न पश्यन्ति न शृण्वन्ति न गन्धरसवेदिन: ।। न च स्पर्शं विजानन्ति ते कथं पाञ्चभौतिका: । अद्रवत्वादनग्नित्वादभूमित्वादवायुत: ।। आकाशस्याप्रमेयत्वाद्वृक्षाणां नास्ति भौतिकम् ।' भृगुश्चाच— 'घनानामपि वृक्षाणामाकाशोऽस्ति न संशय: । तेषां पुष्पफलव्यक्तिर्नित्यं समुपपद्यते ।। ऊष्मतो म्लायते पर्णं त्वक्फलं पुष्पमेव च । म्लायते शीर्यते चापि स्पर्शस्तेनात्र विद्यते । वाय्वग्न्यशनिनिर्घोषै: फलपुष्पं विशीर्यते ।। श्रोत्रेण गृह्यते शब्द: तस्माच्छृण्वन्ति पादपा: । पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि । अरोगा: पुष्पिता: सन्ति तस्माज्जिघ्रन्ति पादपा: ।। पादै: सलिलपानैश्च व्याधीनां चापि दर्शनात् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

व्याधिप्रतिक्रियत्वाच्च विद्यते रसनं द्रुमे ॥ वक्त्रेणोत्पल-नालेन यथोर्ध्वं जलमाददेत् । तथा पवनसंयुक्तः पादैः पिबति पादपः ॥ सुखदुःखयोश्च ग्रहणाच्छिन्नस्य च विरोहणात् । जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते ॥ तेन तज्जलमादत्तं जरयत्यग्निमारुतौ । आहारपरिणामाच्च तेषां वृद्धिश्च जायते ॥ एवं च जगन्मात्रस्य ईश्वरानुप्रवे-शप्रयुक्तचैतन्यमाश्रित्य संबोध्यत्वसंभवेन नदीसमुद्रपुरी-पर्वतवनस्पतिविमानादीनां संबोध्यत्वादिकमुपपन्नमेव । ततो बहुदूरं गतौ रामलक्ष्मणौ,

तौ तत्र हत्वा चतुरो महामृगा-
न्वराहमृश्यं पृषतं महारुरुम् ।
आदाय मेध्यांस्त्वरितं बुभुक्षितौ
वासाय काले ययतुर्वनस्पतिम् ॥

त्रिपञ्चाशे, ततः कृतसायंसन्ध्यो रामभद्रः लक्ष्मणमे-वमवोचत् अद्य प्रभृति जागरणेनैवाप्रमत्ताभ्यां सीता संर-क्षणीया, मत्प्रवासनेनातिदुःखितं राजानं कृतकामा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कैकेयी स्वपुत्रराज्यस्थैर्येच्छया किं करिष्यति वेत्यतिदुःखितं मे मनः ।

इदं व्यसनमालोक्य राज्ञश्च मतिविभ्रमम् ।
काम एवार्थधर्माभ्यां गरीयानिति मे मतिः ॥

को ह्यविद्वानपि पुमान्प्रमदायाः कृते त्यजेत् ।
छन्दानुवर्तिनं पुत्रं ततो मामिव लक्ष्मण ॥

अर्थधर्मौ परित्यज्य यः काममनुवर्तते ।
एवमापद्यते क्षिप्रं राजा दशरथो यथा ॥

इति। अर्थधर्मौ परित्यज्य काममुपसेवमानस्य अवस्थाकथनेन केवलकामासक्तिर्न कर्तव्येति सूचितम् । तथा च वनपर्वणि युधिष्ठिरं प्रति भीष्मवचनम्— 'यश्च धर्मं च कामार्थे नेतरार्थेऽनुतिष्ठति । मित्राणि तस्य नश्यन्ति धर्मार्थाभ्यां च हीयते ॥ तस्य धर्मार्थहीनस्य कामार्थे निधनं ध्रुवम् । कामतो रममाणस्य मीनस्येवाम्भसः क्षये ॥ तस्माद्धर्मार्थयोर्नित्यं न प्रमाद्यन्ति पण्डिताः । ननु अत्र कैकेय्यासक्तहृदयो राजा धर्मार्थावनवेक्ष्य काम-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वशादेव पुत्रं परित्यक्तवानिति रामेणोक्तमित्यवगम्यते । तदनुपपन्नम्, 'धर्मपाशेन बद्धोऽस्मि' इति दशरथवचनपर्यालोचनया, 'पितरं सत्यमिच्छामि' इति रामवचनपर्यालोचनया च पूर्वप्रदत्तवरनिर्वहणरूपधर्मार्थमेव रामविवासनेन कामप्रयुक्तत्वाभावादिति चेत्, सत्यम् । युद्धार्थं गमनसमये कैकेयीविश्लेषासहिष्णुना राज्ञा युद्धभूम्यां कैकेयीनयनं कामप्रयुक्तमेवेति, तन्मूलकवरप्रदानतत्परिपालनादिकं सर्वमपि पारम्पर्येण काममूलकमेवेत्येतदभिप्रायेणैव रामेणोक्तमिति न विरोधः । 'नूनं जात्यन्तरे कस्मिन्स्त्रियः पुत्रैर्वियोजिताः । जनन्या मम सौमित्रे तामप्येतदुपस्थितम् ॥ अनेन जन्मान्तरेऽस्मिन्वा जन्मनि येन यादृशं कर्म कृतं तस्य तादृशं फलं भवतीति सूचितम् । तथा च कर्मविपाके 'वर्तमानशरीरेण संपन्नं कर्म देहिनः । इह वामुत्र वा तस्य तद्ददाति फलं शुक' इति ।

अल्पभाग्या हि मे माता कौसल्या रहिता मया ।
शेते परमदुःखार्ता पतिता शोकसागरे ॥

एको ह्यहमयोध्यां च पृथिवीं चापि लक्ष्मण ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

तपोवनमिमुभिः क्रुद्धो ननु वीर्यमकारणम् ॥

अधर्मभयभीतश्च परलोकस्य चानघ ।
तेन लक्ष्मण नाद्याहमात्मानमभिषेचये ॥

इति । अनेन शक्तेनापि बलात्कारेण धर्मविरुद्धं न कर्तव्यमिति सूचितम् । तथा च वनपर्वणि युधिष्ठिरं प्रति मार्कण्डेयवचनम्— 'नृपाश्च नाभागभगीरथाद्यो महीमिमां सागरान्तां विजित्य । सत्येन तेऽप्यजयंस्तात लोकान्नेशे बलस्येति चरेदधर्मम् ॥ अलर्कमाहुर्नरवर्य सन्तं सत्यव्रतं काशिकरूशराजम् । विहाय राज्यानि वसूनि चैव नेशे बलस्येति चरेदधर्मम् ॥' इति ।

एतच्चान्यच्च करुणं विलप्य विजने बहु ।
अश्रुपूर्णमुखो रामो निशि तूष्णीमुपाविशत् ॥

ततस्तत्र सुखासीनौ नातिदूरे निरीक्ष्य ताम् ।
न्यग्रोधे सुकृतां शय्यां भेजाते धर्मवत्सलौ ॥

इति अयोध्याकाण्डे प्रथमो भागः ॥

---

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

# DHARMAKUTAM

## VOL. III.

# AYODHYAKANDA

## PART II

TRYAMBAKARAYA MAKHI.



SRIRANGAM:
SRI VANI VILAS PRESS.
1926.

*Copyright Registered.*

॥ श्रीः ॥

# ॥ धर्माकूतम् ॥

तञ्जानगराधीशस्यैकोजिमहाराजस्य मन्त्रिणो गङ्गाधरा-
ध्वरिणः पुत्रेण शाहजिशरभोजिमहीपालयोरमात्येन

**त्र्यम्बकरायमखिना**

विरचितम् ।



## ३. अयोध्याकाण्डः

( द्वितीयो भागः )




श्रीरङ्गम्

श्रीवाणीविलासमुद्रायन्त्रालयः ।

॥ श्रीः ॥

# ॥ धर्माकूतम् ॥

## ॥ अयोध्याकाण्डः ॥

### ॥ द्वितीयो भागः ॥

—*—

चतुःपञ्चाशे— 'ततः काल्यमुत्थाय कृतपूर्वाह्णिकौ रामलक्ष्मणौ विविधवृक्षवीरुत्परिवृतान्रुरुवराहादिसमाकीर्णान्देशांश्चातिक्रम्य वारिघट्टनधूमस्तोमादिश्रवणदर्शनादिना इत एवाविदूरे भरद्वाजाश्रम इत्यवधार्य तदाश्रममागात् ।

ततस्त्वाश्रममासाद्य मुनेर्दर्शनकाङ्क्षिणौ ।
सीतयानुगतौ वीरौ दूरादेवावतस्थतुः ॥

स प्रविश्य महात्मानमृषिं शिष्यगणैर्वृतम् ।
संश्रितव्रतमेकाग्रं तपसा लब्धचक्षुषम् ॥
हुताग्निहोत्रं दृष्ट्वैव महाभागं कृताञ्जलिः ।
रामः सौमित्रिणा सार्धं सीतया चाभ्यवादयत् ॥

अत्र रामेण अग्निहोत्रसमये दूरेऽवस्थाय हुताग्निहोत्रस्य ऋषेर्नमस्कारकरणं कर्मकालेऽभिवादननिषेधेन तद्दर्शनसमनन्तरमेव स्वेनाभिवादनस्य कर्तुमशक्यतया, ऋषेश्चातिथ्यभ्यनुज्ञापूर्वकं होमः कर्तव्य इत्येतादृशोपरोधपरिहाराय चेति द्रष्टव्यम् । तथा चापस्तम्बः— 'यस्योद्धृतेष्वहुतेष्वग्निष्वतिथिरभ्यागच्छेत्, स्वयमेनमभ्युदेत्य प्रब्रूयाद्व्रात्यातिसृज होष्यामीत्यतिसृष्टेन होतव्यम् । अनतिसृष्टश्चेज्जुहुयाद्दोषं ब्राह्मणमाह' इति । कर्मकालेऽभिवादननिषेधः प्रागेवाभिहितः 'जपं होमं च कुर्वाणो नाभिवाद्यस्तथा द्विजः' इति । ततः कृताग्निहोत्रं भरद्वाजमभिवाद्य ससीतः सलक्ष्मणो रामः स्वागमनवृत्तान्तं महर्षये भरद्वाजाय कथयामास ।

तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ।
उपानयत धर्मात्मा गामर्घ्यमुदकं ततः ॥

नानाविधानन्नरसान्वन्यमूलफलाश्रयान् ।
तेभ्यो ददौ तप्ततपा वासं चैवाप्यकल्पयत् ॥

अनेन ब्राह्मणेनापि राज्ञां मधुपर्कादिना पूजा कर्तव्येति सूचितम् । तथा चाश्वलायनः—'ऋत्विजो वृत्वा मधुपर्कमाहरेत् स्नातकायोपस्थिताय राज्ञे चाचार्याय च श्वशुरपितृव्यमातुलानां च' इति । छन्दोगानां गृह्येऽपि 'आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रिय इति षडर्घ्याः प्रतिवत्सरमर्हयेत् पुनर्यज्ञविवाहयोश्च' इति । बोधायनोऽपि 'अथैते अर्घ्याः ऋत्विक् श्वशुरः पितृव्यो मातुल आचार्यो राजा प्रियो वरोऽतिथिः संवत्सरपर्यागतेभ्य एतेभ्य एव कुर्याद्विवाहे वराय ऋत्विग्भ्यः कर्मणि कर्मणि ददाति।' मनुरपि—'राजर्त्विक्स्नातकगुरून्प्रियश्वशुरमातुलान् । अर्हयेन्मधुपर्केण परिसंवत्सरान्पुनः ॥' गौतमोऽपि—'ऋत्विगाचार्यश्वशुरपितृव्यमातुलानामुपस्थाने मधुपर्कः संवत्सरे पुनः पूजिताः यज्ञविवाहयोरर्वाक् राज्ञश्च श्रोत्रियस्याश्रोत्रियस्यासनोदके' इति । अस्यायमर्थः—प्रथमं स्वगृहमागतानामृत्विगादीनां मधुपर्कः कर्तव्यः संवत्सरानन्तरं तु पुनरा-

गमनेऽपि कर्तव्य एव यज्ञविवाहयोस्तु संवत्सरात्प्रागपि पुनरागतानां मधुपर्कः श्रोत्रियस्य राज्ञस्तु प्रत्यागमनं मधुपर्कः अश्रोत्रियस्य तु राज्ञः आसनोदकादिकमेवेति। तमः प्रयागकृतावासो भरद्वाजः रामभद्रम्,

अवकाशो विविक्तोऽयं महानद्योः समागमे।
पुण्यश्च रमणीयश्च वसत्विह भवान्सुखम्॥

इत्यवादीत्। प्रयागस्य पुण्यत्वं च वनपर्वणि धौम्यः— 'गङ्गायमुनयोर्वीर संगमं लोकविश्रुतम्। यत्रायजत भूतात्मा पूर्वमेव पितामहः॥ प्रयागमिति विख्यातं तस्माद्भरतसत्तम।' पुलस्त्यतीर्थयात्रायाम्— 'ततो गच्छेत राजेन्द्र प्रयागमृषिसंस्थितम्। यत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः॥ लोकपालाश्च सिद्धाश्च नियताः पितरस्तथा। सरितः सागराश्चैव गन्धर्वाप्सरसस्तथा॥ हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः। तत्र त्रीण्यग्निकुण्डानि तेषां मध्ये च जाह्नवी॥ प्रयागादपि निष्क्रान्ता सर्वतीर्थपुरस्कृता। तपनस्य सुता तत्र त्रिषु लोकेषु विश्रुता॥ यमुना गङ्गया सार्धं संगता लोकपावनी।

गङ्गायमुनयोर्मध्यं पृथिव्या जघनं स्मृतम् । प्रयागं जघनस्थानमुपस्थमृषयो विदुः ॥ प्रयागं सप्रतिष्ठानं कम्बलाश्वतरावुभौ। तीर्थं भोगवती चैव वेदिः प्रोक्ता प्रजापतेः। तत्र वेदाश्च यज्ञाश्च मूर्तिमन्तो युधिष्ठिर॥ प्रजापतिमुपासन्त ऋषयश्च महाव्रताः। यजन्ते क्रतुभिर्देवास्तथा सूर्योदये नृप॥ ततः पुण्यतमं नास्ति त्रिषु लोकेषु भारत। प्रयागं सर्वतीर्थेभ्यः प्रवदन्त्यधिकं विभो॥ श्रवणात्तस्य तीर्थस्य नामसंकीर्तनादपि। मृत्तिकालम्भनाद्वापि सर्वपापैः प्रमुच्यते॥ तत्राभिषेकं यः कुर्यात्संगमे संशितव्रतः। पुण्यं स महदाप्नोति राजसूयाश्वमेधयोः। एषा यजनभूमिर्हि देवानामपि सत्कृता। दत्तं तत्र स्वल्पमपि महद्भवति भारत। चातुर्विद्ये च यत्पुण्यं सत्यवादिषु चैव यत्॥ स्नात एव तदाप्नोति गङ्गायमुनसंगमे। दश तीर्थसहस्राणि षष्टिकोट्यस्तथापराः। एषां सांनिध्यमत्रैव कीर्तितं कुरुनन्दन। न वेदवचनात्तात न लोकवचनादपि॥ मतिरुत्क्रमणीं याते प्रयागे मरणं प्रति। एतदुपष्टम्भिका श्रुतिरपि 'सितासिते सरितौ यत्र संगते तत्राप्लुतासो दिवमुत्पतन्ति एवैतन्वां विसृजन्ति धीरास्ते

जनासीऽमृतत्वं भजन्ते' इति । कालिदासोऽपि—
'समुद्रपत्न्योर्द्वयसंनिपाते पूतात्मनां तत्र किलाभिषेकात् ।
तत्त्वावबोधेन विनापि सद्यस्तनुत्यजां नास्ति शरीर-
बन्धः ॥' प्राचीना अपि— 'मा गर्वीरश्वमेधिन्मखकृ-
दहमिति ब्रह्महन्मा च भैषीर्ब्रह्मघ्नोऽस्मीति पुण्ये महति
च दुरिते को मदः का च भीतिः । माघे मासि प्रयागे
मकरगतरवौ मज्जतां सज्जनानां यद्विन्दुर्वा धुनीते
मदमपि भयमप्यत्र वेदाः प्रमाणम् ॥' इति । ततः
प्रेक्षकागमनशङ्कया नाविदूरेऽस्माकं वासो युक्ततरः—

एकान्ते पश्य भगवन्नाश्रमस्थानमुत्तमम् ।
रमते यत्र वैदेही सुखार्हा जनकात्मजा ॥

इति वदन्तं रामभद्रं भरद्वाजः समभाषत—

दशक्रोश इतस्तात गिरिर्यत्र निवत्स्यति ।
महर्षिसेवितः पुण्यः सर्वतः सुखदर्शनः ॥

चित्रकूट इति ख्यातो गन्धमादनसंनिभः ।
यावता चित्रकूटस्य नरः शृङ्गाण्यवेक्षते ॥

कल्याणानि समाधत्ते न पापे कुरुते मनः ।
ऋषयस्तत्र बहवो विहृत्य शरदां शतम् ॥

तपसा दिवमारूढाः कपालशिरसा सह ।
प्रविविक्तमहं मन्ये तं वासं भवतः सुखम् ॥

इति । चित्रकूटमहिमातिशयः भारते वनपर्वणि— 'ततो गिरिवरश्रेष्ठ चित्रकूटे विशांपते । मन्दाकिनीं समासाद्य नदीं पापप्रमोचनीम् ॥ तत्राभिषेकं कुर्वाणः पितृदेवार्चने रतः । अश्वमेधमवाप्नोति गतिं च परमां व्रजेत् ॥' ततो महर्षिकृतविविधोपचारैः सकलर्षिकथितविविधकथाश्रवणेन च संजातविस्मयो रामभद्रः,

भरद्वाजाश्रमे रम्ये तां रात्रिमवसत्सुखम् ।

पञ्चपञ्चाशे—ततः प्रभाते कृतपूर्वाह्णिकौ रामलक्ष्मणौ ऋषिमभिवाद्य तदुपदिष्टमार्गेणैव गच्छन्तावासाद्य कलिन्दनन्दिनीम्,

तौ काष्ठसंघाटमथो चक्रतुस्तु महाप्लवम् ।
शुष्कैर्वंशैः समास्तीर्णमुशीरैश्च समावृतम् ॥

आरोप्य सीतां प्रथमं संघाटं परिगृह्य तौ ।

ततः प्रतेरतुर्यत्तौ वीरौ दशरथात्मजौ ॥

अनेन बाहुभ्यां नदीतरणं न कर्तव्यम् इति सूचितम् । तथा चापस्तम्बः— 'वर्जयेद्बाहुभ्यां च नदीतरणं नावं च सांशयिकीम् ।' मनुरपि 'न बाहुभ्यां नदीं तरेत्' इति । अथ महता प्लवेन समुत्तीर्य यमुनाम्,

न्यग्रोधं तमुपागम्य वैदेही वाक्यमब्रवीत् ।
नमस्तेऽस्तु महावृक्ष पारयेन्मे व्रतं पतिः ॥
कौसल्यां चैव पश्यामः सुमित्रां च यशस्विनीम् ।
इति सीताञ्जलिं कृत्वा पर्यगच्छद्वनस्पतिम् ॥

अनेन मार्गस्थितो महान्वनस्पतिः नमस्कारादिपूर्वकं प्रार्थनीय इति सूचितम् । तथा चापस्तम्बः— 'अर्थप्राध्वस्य परिप्लवे परिकाशने च अप उपस्पृश्य उत्तरे यथालिङ्गं जपेत् । एवमुत्तरैर्यथालिङ्गं चित्रियं वनस्पतिं शकृद्वीतिं स्विग्वातं शकुनिमिति । अध्वानाकुला— अध्वानं प्रस्थितः प्राध्वः अर्थः प्रयोजनं यत्किंचित्प्रयोजनमुद्दिश्य योऽध्वानं प्रस्थितः तस्य अर्थप्राध्वस्य परिप्लवे परितः सर्वतः स्थितैर्जनैः प्लवे प्लुते परिकासने सर्वतो

विद्यमाने: निष्ठीवने च अप उपस्पृश्य प्रायश्चित्ततया अनु-
हवं परिहवं परीवादं परिक्षवं दुःस्वप्नं दुरुदितं तद्विषद्भ्यो
दिशाम्यहम् अनुहूतं परिहूतं शकुनेर्यदशाकुनं मृगस्य मृत-
मक्ष्णा या तद्विषद्भ्यो दिशाम्यहमिति जपेत् तत्र पृष्ठ
आह्वानमनुहवः सर्वत आह्वानं परिहवः परिवादोऽभिशं-
सनं परिक्षव उक्तः दुःस्वप्नः प्रसिद्धः दुरितमल्पायुरादि
अनुहूतं परिहूतमिति शकुनेरशोभनवागुच्यते । अशाकुनं
अनिमित्तं भूतं मृगस्य सृगालादेः अक्ष्णया सृतं तिर्यग्गम-
नमपसव्यादि । एतेषामेकस्मिन्नपि निमित्ते द्वयोरपि म-
न्त्रयोर्जपः कार्यः । एवमुत्तरैर्यथालिङ्गं चित्रियं वनस्पतिं
शकुद्रीतिं स्रिग्वातं शकुनिमिति । एवमित्यनेन अर्थप्राध्व-
स्येति च अप उपस्पृश्येति च जपेत् इति चापेक्ष्यते चित्रियः
प्रसिद्धो वनस्पतिः तमासाद्य अप उपस्पृश्य आस्ते
अग्निरस्त्वारात्परशुरस्तु ते निवाते त्वाभिवर्षतु स्वस्ति
तेऽस्तु वनस्पते' इति ऋचानुमन्त्रयते । नमः शकृत्सद
इति शकृद्रीतिशकृतो रेखां उपतिष्ठते स्रिगलीति स्रिग्वा-
तं वाससा कृतो वातः स्रिग्वातः तमन्यकृतमात्मस्पृष्टं
उपतिष्ठते शकुनिं शुभवाचं पक्षिणं उद्गातेव शकुने साम

गायत्रीति ऋचा उपतिष्ठते । अंशुभवचने प्रागुक्त अनु-द्रवमित्यादिमन्त्रद्वयजपः इति । ततो यमुनावनस्थितै-र्विचित्रफलपुष्पादिभिर्जानकीमनो विनोदयन्संहृत्य मृगच-तुष्टयमादाय च तदामिषं अस्ताचलमारूढमंशुमन्तं चाव-लोक्य,

सम नदीवप्रमुपेत्य संमतं
निवासमाजग्मुरहीनदर्शनाः ।

षट्पञ्चाशे— ततः प्रभाते कृतपूर्वाह्णिको रामभद्रः महर्षिसमादिष्टेन मार्गेण रमणीयतरं चित्रकूटमासाद्य तत्र स्थितं कुलपतिं भगवन्तं वाल्मीकिमभिवाद्य,

बहुमूलफलो रम्यः स्वाजीवः प्रतिभाति मे ।
अयं वासो भवेत्तावद्वयं यत्र रमेमहि ।
मुनयश्च महाभागा वसन्त्यस्मिञ्शिलोच्चये ॥

इति प्रार्थितवान् । अनेन एतादृश एव देशे वासः कर्तव्य इति सूचितम् । तथा च गौतमः— 'एधोदकय-वसकुशमाल्योपनिष्क्रमणमार्यजनभूयिष्ठमनलसमृद्धं धा-र्मिकाधिष्ठितं निकेतमावसितुं यतेत' इति । ततो लक्ष्म-णेन विधिवन्निर्मितां पर्णशालामवलोक्य,

ऐणेयं मांसमाहृत्य शालां यक्ष्यामहे वयम् ।
कर्तव्यं वास्तुशमनं सौमित्रे चिरवासिभिः ॥
कर्तव्यः शास्त्रदृष्टो हि विधिधर्ममनुस्मरन् ।
ऐणेयं श्रपयस्वैतच्छालां यक्ष्यामहे वयम् ॥
त्वर सौम्य मुहूर्तोऽयं ध्रुवश्च दिवसो ह्ययम् ।

इति रामभद्रः समादिदेश । ततो लक्ष्मणेन समाहृतमैणेयं मांसं सुनिष्ठप्तमवलोक्य रामः,

संग्रहेणाकरोत्सर्वान्मन्त्रान्सत्रावसानिकान् ।
इष्ट्वा देवगणान्सर्वान्विवेश सदनं शुचिः ॥
वैश्वदेवबलिं कृत्वा रौद्रवैष्णवमेव च ।
वास्तुसंशमनीयानि मङ्गलानि प्रवर्तयन् ॥
जपं च न्यायतः कृत्वा स्नात्वा नद्यां यथाविधि ।
पापसंशमनं रामश्चकार बलिमुत्तमम् ॥
वेदिस्थलविधानानि चैत्यान्यायतनानि च ।
आश्रमस्यानुरूपाणि स्थापयामास राघवः ॥
वन्यैर्माल्यैः फलैर्मूलैः पक्वैर्मांसैर्यथाविधि ।
अद्भिर्जपैश्च वेदोक्तैर्दर्भैश्च ससमित्कुशैः ॥

तौ तर्पयित्वा भूतानि राघवौ सह सीतया।
तदा विविशतुः शालां सुशुभां शुभलक्षणौ॥

स रम्यमासाद्य तु चित्रकूटं
नदीं च तां माल्यवतीं सुतीर्थाम्।
ननन्द रामो मृगपक्षिजुष्टां
जहौ च दुःखं पुरविप्रवासात्॥

अत्र विधिवद्गृहं निर्माय वास्तुशमनभूतबलिप्रदानादिपूर्वकं स्थिरे मुहूर्ते प्रवेशः कर्तव्य इति सूचितम्। तथा चाश्वलायनः—'अथो वास्तुपरीक्षा अनूषरमविवदिष्णुभूमौषधिवनस्पतिमत् यस्मिन्कुशवीरणं प्रभूतं कण्टकिक्षीरिणस्तु सामूलान्परिखायोद्वासयेदपामार्गः शाकस्तिल्वकः परिव्याध इति चैतानि यत्र सर्वत आपो मध्यं समेत्य प्रदक्षिणं शयनीयं परीत्य प्राच्य स्यन्देरन्नप्रपतस्तत्सर्वसमृद्धं समवस्रवे भक्तशयनं कारयेद्दृढ़ं ह भवति। दक्षिणाप्रवणे सभां समापयेत्सा द्यूताहि भवति युवानस्तस्यां कितवाः कलहिनः प्रमायुका भवन्ति यत्र सर्वत आपः प्रस्कन्देरन्सा स्वस्त्ययनी अद्यूता च अथैतैर्वास्तु परीक्षेत जानुमात्रं गत्वा खात्वा तैरेव पांसुभिः

परिपूरयेत् अधिके प्रशस्तं समे वा तन्न्यूने गर्हितम् । अस्तमिते अपां पूर्णं परिवासयेत्सोदके प्रशस्तम्, आर्द्रं वातशुष्के गर्हितम् । श्वेतं मधुरास्वादं सिकतोत्तरं ब्राह्मणस्य लोहितं क्षत्रियस्य पीतं वैश्यस्य तत्सहस्रसीतकृत्वा यथा दिक् समचतुरस्रं मापयेत् । आयतचतुरश्रं वा तच्छमी-शाखयोदुम्बरशाखया च शन्तती येन त्रिः प्रदक्षिणं परिव्रजन्प्रोक्षत्यविच्छिन्नया चोदकधारया आपो हिष्ठा मयो भुव इति ऋचा वंशान्तरेषु शरणानि कारयेद्गर्तेष्व-वक्रां शीफालमित्यवधापयेन्नास्पद्गाहुको भवतीति शीफालं मध्यस्थूणाया गर्ते आधाय प्रागग्रोदगग्रान्कुशानास्तीर्य ब्रीहिमतीरप आसेनयेदच्युताय भौमाय स्वाहेति । अथै-नामुच्छ्रीयमाणमनुमन्त्रयेत इहैव तिष्ठ निमिता तिला-स्वामिरावतीं मध्ये पोषस्व तिष्ठन्तीं मा त्वा प्रापं नघा पचः आ त्वा कुमारस्तरुण आ वत्स्यो जयता सह आ त्वा परिश्रितः कुम्भ आ दध्नः कलशौ रयमिति वंशमाधीय-मानम् ऋतेन स्थूणामधिरोह वंशद्राघीय आयुः प्रातरं दधाना' इति सुदूर्वासु चतसृषु शिलासु मणिकं प्रतिष्ठा-पयेत्पृथिव्या अधिसंभवेति अरङ्करो वा वहन्तीति वा

अथास्मिन्नग्न आसेचयेदेतु राजा वरुणो रेवतीभिरस्मि-
न्स्थाने तिष्ठतु मोदमानः। इरां वहतो घृतमुक्षमाणा
मित्रेण साकं सह संविशन्तु इति। अथैनच्छमयति
व्रीहियवमतीभिरद्भिर्हिरण्यमवधाय शन्तातीयेन त्रिः
प्रदक्षिणं परिव्रजन्प्रोक्षति अविच्छिन्नया चोदकधारया
आपो हिष्ठा मयोभुव इति तृचेन मध्येऽगारस्य स्थाली-
पाकं श्रपयित्वा वास्तोष्पते प्रतिजानीह्यस्मानिति चत-
सृभिः प्रत्यृचं हुत्वा ब्राह्मणान्भोजयित्वा शिवं वास्त्विति
वाचयीतोक्तं गृहप्रदनं बीजवतो गृहान् प्रपद्येत' इति।
आपस्तम्बोऽपि 'दक्षिणात्प्रत्यक् प्रवणमवगारावकाशामु-
द्धृत्य पालाशेन शमीमयेन वो दूरे चैतामेव दिशमुत्तरयो
दूहत्येवं एवं त्रिः कल्पमुत्तरयाभिमृश्य प्रदक्षिणं स्थूणाग-
र्तान् खनयित्वाभ्यन्तरं पांसूनुदुप्य उत्तराभ्यां दक्षिणां
द्वारस्थूणामवदधाति एवमुत्तरां यथाखातमितरा अन्वव-
धाय वंशमाधीयमानमुत्तरेण यजुषाभिमन्त्रयते मितमुत्त-
रैर्यथालिङ्गं पालाशं शमीमयं वेध्ममादीय उत्तरयाग्निमु-
द्धृत्य उत्तरेण यजुषागारं प्रपाद्य उत्तरपूर्वदेशेऽगारस्योत्त-
रयाग्निं प्रतिष्ठापयन्ति । तस्माद्दक्षिणमुदधानायतनं

भवति तस्मिन्विषूचीनाग्रान्दर्भान्संस्तीर्य तेषूत्तरया व्रीहि-यवान्युप्य तत्रोदधानं प्रतिष्ठापयति तस्मिन्नुत्तरेण यजुषा चतुर उदकुम्भानानयति दीर्णमुत्तरयानुमन्त्रयते अग्रेरुप-समानाद्याज्ञा भागान्त उत्तरा आहुतीर्हुत्वा जयादि प्रति-पद्यते परिषेचनान्तं कृत्वा उत्तरेण यजुषोदकुम्भेन त्रिः प्रदक्षिणमुत्तरतोऽगारं निवेशनं वा परिषिच्य ब्राह्मणा-न्भोजयेदपूपैः सक्तुभिरोदनेन इति। छन्दोगब्राह्मणे-ऽपि 'अथातो वास्तुशमनं प्रदक्षिणं प्रतिदिशं रज्ज्वा यच्छेत् अवान्तरदेशेषु च यत्राभिसमेयुस्तत्रोपलिम्पेत् रज्ज्वन्तेषु शमीपलाशश्रीपर्णीनां पत्रैर्वास्तूय किरेत् अक्ष-तैश्च सुमनोभिश्च पूर्वैः प्रोष्ठपदैर्गृहे अग्निं प्रतिष्ठाप्य धानाव-न्तं करम्भिणमित्येतद्गीत्वा पायसमग्नौ जुहुयात्परेषां च पलाशपर्णमध्यमेषु बल्युपहारः प्रजापतये स्वाहेति मध्य उपहरेत् इन्द्रायेति पुरस्तात् वायव इत्यवान्तरदेशे यमा-येति दक्षिणतः पितृभ्य इति अवान्तरदेशे वरुणायेति पश्चात् महाराजायेति अवान्तरदेशे सोमायेत्युत्तरतः महेन्द्रायेत्यवान्तरदेशे वासुकय इत्यधस्तात् ऊर्ध्वं नमो ब्रह्मण इति दिवि बहुपशुधनधान्यं हिरण्यमायुष्मत्पुरुषं

वीरसूः सुभगा विधवस्त्रीकं शिवं पुण्यं वास्तु भवति चतुर्षु मासेषु प्रयोगः संवत्सरे पुनः प्रयोगः इति । खादिरगृह्येऽपि 'गौरे भूमिभागे ब्राह्मणः लोहिते क्षत्रियः कृष्णे वैश्यः अवसानं जोषयेत्समं लोमशमनिरिणमशुष्कं यत्रोदकं प्रत्यगुदीचीं प्रवर्तते क्षीराः कण्टकिनः कटुकाश्च अत्रौषधयो न स्युः संमितं ब्रह्मवर्चस्यं बृहत्तृणैर्बल्यं मृदुतृणैः पशव्यं शक्ताभिर्मण्डलद्वीपिभिर्वा यत्र वा स्वयं कृत्वा श्वभ्राः सर्वतोऽभिमुखाः स्युः । प्राग्द्वारं धन्यं यशस्यं चोदग्द्वारं पुत्रियं पशव्यं च दक्षिणद्वारे सर्वे कामाः अनुद्वारं गेहद्वारं अरालोकी पायसो हविः कृष्णा च गौः अजो वा श्वेतः पायस एव वा मध्ये वेश्मनो वसन् पायसं चाज्येन मिश्रमष्टगृहीतं जुहुयात् वास्तोष्पत इति । याश्च पराः सप्तालक्ष्मी निर्णोदं ताभिश्च हुत्वा दिशां बलीन्नयेत् । अवान्तरदेशोर्ध्वमासां चैवं संवत्सरे संवत्सरे इति ॥ सप्तपञ्चाशाष्टपञ्चाशयोः, ततो गङ्गावतरणभरद्वाजाभिगमनपर्णशालानिर्माणादिकं सर्वं गुहमुखेन विज्ञायापृच्छ्य च गुहं रथवरमास्थाय ततः सायाह्नसमये तृतीयेऽहनि सारथिः,

अयोध्यां समनुप्राप्य निरानन्दां ददर्श सः ।

ततः पुत्रशोकाकुलं राजानमभिवाद्य रामलक्ष्मणसंदेशमेवमकथयत् ।

सूत मद्वचनात्तस्य तातस्य विदितात्मनः ।
शिरसा वन्दनीयस्य वन्दे पादौ पुनः पुनः ॥

सर्वमन्तःपुरं वाच्यं सूत मद्वचनात्त्वया ।
आरोग्यमविशेषेण यथार्हमभिवादनम् ॥

माता च मम कौसल्या कुशलं चाभिवादनम् ।
अप्रमादं च वक्तव्या ब्रूयाश्चैनामिदं वचः ॥

देवि देवस्य पादौ च देववत्परिपालय ।
कुमारे भरते वृत्तिर्वर्तितव्या च राजवत् ॥

भरतः कुशलं वाच्यो वाच्यो मद्वचनेन च ।
अतिक्रान्तवया राजा मा स्मैनं त्वमुपारुधः ॥

मातेव मम माता ते द्रष्टव्या पुत्रगर्धिनी । इति ।

लक्ष्मणोऽपि लघुतरकैकेयीशासनमात्रेण रामविवासनं सर्वथानुचितमेव निर्दुष्टं सर्वप्रजाभिरामं रामं प्रव्राज्य,

सर्वलोकं विरुध्येमं कथं राजा भविष्यसि ।

इत्यवादीत् । अनेन सकलजनोद्वेगकरो राजा राज्यं न प्राप्नोत्येव, कथंचित्प्राप्तराज्योऽपि तस्माद्भ्रश्यतीति सूचितम् । तथा चोद्योगपर्वणि— 'यस्मात्ते यान्ति भूतानि मृगव्याधान्मृगा इव । सागरान्तामपि महीं लब्ध्वा सा परिहीयते ॥ एकोनषष्टितमे—ततस्तद्वचनसमाकर्णनसमाकुलहृदयो राजा सुमन्त्रमेवमवोचत्—

कैकेय्या विनियुक्तेन पापाभिजनभावया ।
मया न मन्त्रकुशलैर्वृद्धैः सह समर्थितम् ॥

न सुहृद्भिर्न चामात्यैर्मन्त्रयित्वा न नैगमैः ।
मयायमर्थः संमोहात्स्त्रीहेतोः सहसा कृतः ॥

भवितव्यतया नूनमिदं वा व्यसनं महत् ।
कुलस्यास्य विनाशाय प्राप्तं सूत यदृच्छया ॥

अनेन मन्त्रिपुरोहितसुहृज्जनैरनालोच्य स्वेनैव विचार्य करणे महाननर्थो भवतीति सूचितम् । तथा च सभापर्वणि युधिष्ठिरं प्रति चतुर्दशराजदोषेषु एकचिन्तनमपि परिगणितं नारदेन— 'नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् । अदर्शनं ज्ञानवतामालस्यं क्षिप्तचित्तताम् ॥

एकचिन्तनमर्थानामनर्थज्ञैश्च चिन्तनम् । निश्चितानामनारम्भो मन्त्रस्यापरिरक्षणम् ॥ माङ्गल्यस्याप्रयोगश्च प्रसङ्गो विषयेषु च । कच्चित्त्वं वर्जयेरेनान्राजदोषांश्चतुर्दश ॥ प्रायशो यैर्विनश्यन्ति कृतमूलाश्च पार्थिवाः ॥' इति ।

लोहिताक्षं महाबाहुमामुक्तमणिकुण्डलम् ।
रामं यदि न पश्येयं गमिष्यामि यमक्षयम् ॥

अतो नु किं दुःखतरं योऽहमिक्ष्वाकुनन्दनम् ।
इमामवस्थामापन्नो नेह पश्यामि राघवम् ॥ इति ॥

षष्टितमे— ततो दशरथकृतविविधपरिदेवनश्रवणचकितहृदया कौसल्यापि,

नय मां यत्र काकुत्स्थः सीता यत्र च लक्ष्मणः ।
तान्विना क्षणमप्यत्र जीवितुं नोत्सहे ह्यहम् ॥
अथ तान्नानुगच्छामि गमिष्यामि यमक्षयम् ।

इति सुमन्त्रं प्रार्थयामास । सूतोऽपि कौसल्यां बहुविधं सान्त्ववचनैः सान्त्वयन्नेवमब्रवीत् ।

व्यवधूय च संतापं वने वत्स्यति राघवः ।
लक्ष्मणश्चापि रामस्य पादौ परिचरन्वने ॥

आराधयति धर्मज्ञः परलोकं जितेन्द्रियः ।
विजनेऽपि वने सीता वासं प्राप्य गृहेष्विव ॥
विस्रम्भं लभतेऽभीता रामे संन्यस्तमानसा ।
सदृशं शतपत्रस्य पूर्णचन्द्रोपमप्रभम् ॥
वदनं तद्वदान्याया वैदेह्या न विकम्पते ।
न शोच्यास्ते न चात्मा ते न च शोच्यो नराधिपः ॥
इदं हि चरितं लोके प्रतिष्ठास्यति शाश्वती ॥ इति ।

अनेन चिरकालावस्थायियशःसंपादकः क्लेशो न शोच्य इति सूचितम् ॥ एकषष्टितमे— ततः कौसल्या सुमन्त्रकृतसान्त्वनशतमप्यनादृत्य धृतमुनिवेषं ससीतं राघवं वनगतं विचिन्त्योपभुज्य च शाल्यन्नं निविश्य च हंसतूलिकातल्पं समाकर्ण्य च श्रुतिसुखवीणावेणुमृदङ्गकलरवान्विहृत्य च हर्म्यप्रासादतलेषु सुकुमारो राजकुमारः कथमिदानीं विविधवृकवराहवनमहिषसिंहादिहिंस्रमृगशताकीर्णे वने उपभुञ्जन्वन्यमाहारं संविशन् कठोरतरपाषाणदन्तुरितदेशान् उपशृण्वन्हृदयविदारणविविधकाकघूकभेकादिशब्दाञ्शोकाकुलहृदयो रामभद्रः कां वा

वृत्तिं वर्तयेत् अथ क्लेशेन समाप्तवनवासः पञ्चदशे वर्षे पुनरागतः प्राज्ञेन भरतेन प्रतिदत्तमपि राज्यं नाङ्गीकरिष्यति।

भोजयन्ति किल श्राद्धे केचित्स्वानेव बान्धवान्।
ततः पश्चात्समीक्षन्ते कृतकार्या द्विजर्षभान्॥
तत्र ये गुणवन्तश्च विद्वांसश्च द्विजातयः।
न पश्चात्तेऽभिमन्यन्ते सुधामपि सुरोपमाः॥
ब्राह्मणेष्वपि तृप्तेषु पश्चाद्भोक्तुं द्विजर्षभाः।
नाभ्युपैतुमलं प्राज्ञाः शृङ्गच्छेदमिवर्षभाः॥

अत्र गुणवत्सु परेषु सत्सुताननादृत्य श्राद्धे बन्धूनां भोजनस्य अगुणवतां भोजनस्य च 'केचित्' इति पदेन अनादरप्रतिपादनात् अयमाचारः सर्वशास्त्रविगर्हित इति गुणवन्त एव परे भोजनीयाः तथा न पश्चात्तेऽभिमन्यन्त इत्यनेन श्राद्धशिष्टान्नभोजनमपि न कर्तव्यमिति सूचितम्। तथा च गुणवन्तः परे भोजनीया इत्यत्रापस्तम्बः 'प्रयतः प्रसन्नमनाः सृष्टः भोजयेद्ब्राह्मणान्ब्रह्मविदो योनिगोत्रमन्त्रान्ते वास्य संबन्धान्' इति।

बोधायनोऽपि— 'ब्राह्मणान्निमन्त्रयेत योनिगोत्रश्रुत-वृत्तसंपन्नानसंबन्धान्' इति । गारुडपुराणेऽपि 'श्राद्धेषु विनियोज्यास्ते ब्राह्मणा वेदवित्तमाः । ये योनि-गोत्रमन्त्रान्ते वास्य संबन्धवर्जिताः ।' इति । बन्धु-मित्रादयो न भोजनीया इत्यत्र मनुस्मृतिरपि— 'यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च । तस्य प्रेत्य फलं नास्ति श्राद्धेषु च हविःषु च ॥ यः संगतानि कुरुते मोहाच्छ्राद्धे न मानवः । स स्वर्गाच्च्यवते लोकाच्छ्राद्धमित्रो नराधमः । संभोजिनी साभिहिता पिशाची दक्षिणा द्विजैः ॥ इहैवास्ते तु सा लोके गौरन्धेवैकवेश्मनि । न श्राद्धे भोजयेन्मित्रं धनैः कार्योऽस्य संग्रहः । नारीं न मित्रं यं विद्यात्तं श्राद्धे भोजयेद्द्विजम् ।' इति । गुणवन्तो भोजनीया इत्यत्राश्वलायनः 'ब्राह्म-णाञ्श्रुतवृत्तशीलसंपन्नान् एकेन वा युक्तान्' इति । मनुरपि 'श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः । अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् । दातृप्रतिग्रही-तृंश्च कुरुते फलभागिनः । विदुषे दक्षिणां दत्त्वा विधिवत्प्रेत्य चेह च ॥ एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् ।

पुष्कलं फलमाप्नोति नामन्त्रज्ञान्बहूनपि। यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम्। शाखान्तगं वाप्यध्वर्युं छन्दोगं वा समाप्तिगम्। येषामन्यतमो यस्य भुञ्जीत श्राद्धमर्चितः। पितॄणां तस्य तृप्तिः स्याच्छाश्वती सप्तपौरुषम्' इति। याज्ञवल्क्योऽपि—'अग्रथाः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा। वेदार्थविद्द्विजश्रेष्ठः षडङ्गो ज्येष्ठसामगः' इति। विष्णुः—'त्रिनाचिकेतास्त्रिमधुस्त्रिसुपर्णः षडङ्गवित्। वेदविच्छ्रोत्रियो योगी तथैव ज्येष्ठसामगः' इति। गुणवतां परेषामलाभे बान्धवा भोजनीयाः। तथा च विष्णुः—'ऋत्विक्स्वस्रीयदौहित्रजामातृश्वशुरास्तथा। मातुलोऽथ तपोनिष्ठः पञ्चाग्न्यभिरतस्तथा। शिष्याः संबन्धिनश्चैव मातापितृरताश्च ये। एतान्नियोजयेच्छ्राद्धे पूर्वोक्तानामसंभवे' इति। श्राद्धशेषं न भोक्तव्यम्; तथा चानुशासनिके—'सायंप्रातश्च भुञ्जीत नान्तराले समाहितः। अकाले न तु भुञ्जीत परश्राद्धे तथैव च'। मार्कण्डेयः—'पित्रादीनामथान्येषां श्राद्धे शेषान्नभोजनम्। व्रतीनां विधवानां च यतीनां च विगर्हितम्॥

श्राद्धावशिष्टभोक्तारस्ते वै निरयगामिनः ।' अस्यापवादः, 'सगोत्राणां सकुल्यानां ज्ञातीनां च न दोषकृत् ।' जाबालिरपि— 'विप्रस्त्वन्यगृहश्राद्धे शेषान्नाद्भोजनं चरेत् । प्राजापत्यं विशुद्धिः स्यात् ज्ञातिगोत्रे न दोषकृत् ॥ श्वशुरस्य गुरोर्वापि मातुलस्य महात्मनः । ज्येष्ठभ्रातुश्च पुत्रस्य ब्रह्मनिष्ठस्य योगिनः । एतेषां श्राद्धशेषान्नं भुक्त्वा दोषं न विन्दति ।' इति ।

एवं कनीयसा भ्रात्रा भुक्तं राज्यं विशांपते ।
भ्राता ज्येष्ठो वरिष्ठश्च किमर्थं नावमंस्यते ॥

अनेन महान्तः अवमत्या प्राप्तं राज्यादिकमपि परित्यज्य मानमेव संरक्षयन्तीति सूचितम् । तथा चोद्योगपर्वणि— 'अवृत्तिभयमन्त्यानां मध्यानां मरणाद्भयम् । उत्तमानां तु मर्त्यानां अवमानात्परं भयम् ॥' इति ।

हविराज्यं पुरोडाशाः कुशा यूपाश्च खादिराः ।
नैतानि यातयामानि कुर्वन्ति पुनरध्वरे ॥

अनेन यातयामद्रव्यैर्यागो न कर्तव्य इत्युक्तं भवति । अत एव यातयामहविर्यागो न कर्तव्य इत्युक्तं पारस्कर-

शाखायाम्— 'न दारुपात्रेण दुह्यादग्निवद्धि दारुपात्रं यत् दारुपात्रेण दुह्यात् यातयाम्ना हविषा यजेत' इति । अस्यार्थः— दारुपात्रेण दोहनं न कर्तव्यं तेन दोहने सति मथनेनाभिव्यज्यमानोऽग्निः पूर्वं दारुणि गूढो वर्तत इत्यग्निसहितं दारुपात्रम् । तत्रत्येनाग्निना क्षीरस्य स्वीकृतरसत्वात् यातयामहविषा यागः कृतः स्यात् अतो दारुपात्रेण दोहनं न कर्तव्यम् इति । तथा च यातयामहविषा यागस्य दोषत्वेन सिद्धवन्निर्देशात् । यातयामद्रव्याणां यागसाधनत्वाभावः सिद्धः ।

तथा ह्यात्तमिदं राज्यं हृतसारां सुरामिव ।
नाभिमन्तुमलं रामः नष्टसोममिवाध्वरम् ॥

हता सपुत्रासि हताश्च पौराः
सुतश्च भार्या च तव प्रहृष्टौ ।

इति सोपालम्भमवादीत् ॥ द्विषष्टितमे—ततः संभ्रान्तहृदयेन दशरथेन,

प्रसादये त्वा कौसल्ये रचितोऽयं मयाञ्जलिः ।
भर्ता तु खलु नारीणां गुणवान्निर्गुणोऽपि वा ॥

धर्मं विमृशमानानां प्रत्यक्षं देवि दैवतम् ।
सा त्वं धर्मपरा नित्यं दृष्टलोकपरावरा ॥
नार्हसे विप्रियं वक्तुं दुःखितापि सुदुःखितम् ।

इति सान्त्व्यमाना कौसल्या—

प्रसीद शिरसा याचे भूमौ निपतितास्मि ते ।
नैषा हि सा स्त्री भवति श्लाघनीयेन धीमता ॥
उभयोर्लोकयोर्वीर प्रत्यायासं प्रसाद्यते ।
जानामि धर्मं धर्मज्ञ त्वां जाने सत्यवादिनम् ॥
पुत्रशोकार्तया तत्तु मया किमपि भाषितम् ।
शोको नाशयते धैर्यं शोको नाशयते श्रुतम् ॥
शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ।
शक्यमापतितः सोढुं प्रहारो रिपुहस्ततः ।
सोढुमापतितः शोकः सुसूक्ष्मोऽपि न शक्यते ॥

इत्यवादीत् । अतः पुत्रशोकसमाक्रान्तहृदयायाः मम वचनमयुक्ततरमपि क्षन्तुमर्हति भवानित्यवदत् । अनेन शोकाविष्टस्य कृत्याकृत्यविवेकभङ्गो भवेत्; अतः सर्वनाशकरः शोकः सर्वथा परित्याज्य इति सूचितम् । तथा

च वनपर्वणि— 'शोचता न भवेत्किंचित्केवलं परितप्यते ॥ परित्यजन्ति ये दुःखं सुखं वाप्युभयं नराः । त एव सुखमेधन्ते ज्ञानतृप्ता मनीषिणः ॥ असंतोषपरा मूढाः संतोषं यान्ति पण्डिताः । असंतोषस्य नास्त्यन्तस्तुष्टिस्तु परमं सुखम् ॥ न शोचन्ति गताध्वानः पश्यन्तः परमां गतिम् । न विषादे मनः कार्यं विषादो विषमुत्तमम् । मारयत्यकृतप्रज्ञं बालं वृद्धं च वोरगः ।' इति । स्त्रीपर्वणि धृतराष्ट्रं प्रति संजयः— 'किं शोचसि महाराज नास्ति शोकेऽत्यहाय्यता । न शोचञ्छ्रियमाप्नोति न शोचन्विन्दते परम् ॥ धृतराष्ट्रं प्रति व्यासश्च— 'अनित्यतां हि मर्त्यानां विजानासि न संशयः । अध्रुवे जीवलोकेऽस्थाने चाशाश्वते सति ॥ जीविते मरणान्ते च कस्माच्छोचसि भारत' इति ।

**एवं हि कथयन्त्यास्तु कौसल्यायाः शुभं वचः ।**
**मन्दरश्मिरभूत्सूर्यो रजनी चाभ्यवर्तत ॥**

त्रिषष्टितमे, ततः क्षणेनैव प्रतिबुद्धो दशरथः स्वकृतमुनिकुमारकत्रृभक्त्यदुष्कृतस्मरणसंतप्तहृदयः कौसल्यामि-

दमवोचत् ।

यदाचरति कल्याणि शुभं वा यदि वाशुभम् ।
तदेव लभते भद्रे कर्ता कर्मजमात्मनः ॥

अनेन शुभमशुभं वा स्वेन कृतं कर्म स्वसदृशफलदानाय कर्तारमनुसरत्येवेति सूचितम् । तथा च स्त्रीपर्वणि धृतराष्ट्रं प्रति विदुरवचनम्— 'शयानं चानुशेते हि तिष्ठन्तं चानुतिष्ठति । अनुधावति धावन्तं कर्म पूर्वकृतं नरम् । यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम् ॥ तस्यां तस्यामवस्थायां तत्फलं समुपाश्नुते । शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ॥ कृतं लभति सर्वत्र नाकृतं भुज्यते क्वचित् ।' मनुरपि— 'यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । तथा पूर्वकृतं कर्म कर्तारमनुविन्दति ॥' इति ।

गुरुलाघवमर्थानामारम्भे कर्मणां फलम् ।
दोषं वा यो न जानाति स बाल इति होच्यते ॥

अविज्ञाय फलं यो हि कर्मत्वे वानुधावति । स शोचेत्फलवेलायां यथा किंशुकसेचकः ॥ अनेन भाविफलगुरु-

लाघवादिविचारपूर्वमेव कर्म कर्तव्यं न तु अविचार्येति सूचितम् । तथा च भारते— 'आदावेव मनुष्येण वर्तितव्यं यथाक्रमम् । यथा वातीतमर्थं वै पश्चात्तापेन युज्यते । मधुराः केवलं दृष्ट्वा प्रपातं नानुपश्यति ॥ स भ्रष्टो मधुलोभेन शोचत्येव यथा भवान् । तत्रैव किं नु मे स्यादिदं कृत्वा किं न मे स्यादकुर्वतः । इति कार्याणि संचिन्त्य कुर्याद्वा पुरुषो न वा' इति । अभियुक्ता अपि 'उचितमनुचितं वा कुर्वता कार्यजातं परिणतिरवधार्या यत्नतः पण्डितेन । अतिरभसकृतानां कर्मणामाविपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः' इति । पुरा खलु शब्दवेधीति लब्धशब्दोऽहं मृगयामटन् ।

व्यायामकृतसंकल्पः सरयूमन्वगां नदीम् ।
अथान्धकारे त्वश्रौषं जले कुम्भस्य पूर्यतः ।
अचक्षुर्विषये घोषं वारणस्येव नर्दतः ॥
अमुञ्चं निशितं बाणमहमाशीविषोपमम् ।
तस्मिन्निपतिते बाणे वागभूत्तत्र मानुषी ॥
ऋषेर्हि न्यस्तदण्डस्य वने वन्येन जीवतः ।
को वधेन ममार्थी स्यात्किं वास्यापकृतं मया ॥

इति । ततो मदीयशरसंताडितो मुनिकुमारकः सखं- भ्रमं समीपमागतं मामवलोक्य पिपासितयोरन्धयोर्गुर्वोर- म्भोग्रहणाय समागतं मामनपराधिनमकारणं घ्नता त्वया

द्वावन्धौ निहतौ वृद्धौ माता जनयिता च मे ।
पितुस्त्वमेव मे गत्वा शीघ्रमाचक्ष्व राघव ॥

न त्वामनुदहे क्रुद्धो वनं वह्निरिवैधितः ।
विशल्यं कुरु मां राजन्मा भूत्ते मनसो व्यथा ॥

ब्रह्महत्याकृतं पापं हृदयादपनीयताम् ।
शूद्रायामस्मि वैश्येन जातो जनपदाधिप ॥

इत्यवादीत् । तद्वचनाच्च समुद्धृतशल्यो मुनिकुमारकः दिष्टां गतिमगात् ॥ चतुष्षष्टितमे— ततो मुनिकुमारकोप- दिष्टमार्गेण तमेव जलपूर्णकुम्भमादायाश्रमं प्रविशतः मम पदशब्दश्रवणमात्रेण

किं चिरायसि मे पुत्र पानीयं क्षिप्रमानय ।

इति । तावन्धौ तत्पितरौ इत्यवगत्य,

क्षत्रियोऽहं दशरथो नाहं पुत्रो महात्मनः ।
भगवंश्चापहस्तोऽहं सरयूतीरमागतः ॥

जिघांसुः श्वापदं किंचिन्निपानेनागतं गजम् ।

तत्र च जले पूर्यतः कुम्भस्य शब्देन गजभ्रमाच्छब्दवेदिना,

अज्ञानाद्भवतः पुत्रः सहसाभिहतो मया ।
शेषमेवं गते यत्स्यात्तत्प्रसीदतु मे मुनिः ॥

इत्यवोचम् । अनेन महत्त्वपराधं कृतवता तत्प्रसादनं कर्तव्यमिति । तथा च पैठीनसिः 'त्वंकाराहंकारापगुरणपातनलोहितप्रवर्तनोत्तरजयेषु प्रणिपातैकरात्रोपवासः कृच्छ्रातिकृच्छ्रं चरित्वा प्रसादयेद्यथालिङ्गम्' इति । अथाशनिपातसंनिभं तद्वचनमाकर्ण्य ऋषिरेवमवोचत्—

यद्येतदशुभं कर्म न स्म मे कथयेः स्वयम् ।
फलेन्मूर्धा तव राजन्सद्यः शतसहस्रधा ॥

अनेन महत्त्वपराधिना अप्रसादने महाननर्थो भवतीति सूचितम् । अत एव तपस्यतः शमीकस्य कण्ठे मृतं सर्पं परिक्षिप्य तमप्रसाद्य गतस्य परिक्षितः शृङ्गिशापादनर्थः संपन्नः इति ।

क्षत्रियेण वधो राजन्वानप्रस्थे विशेषतः ।

ज्ञातपूर्वः कृतः स्थानाच्च्यावयेदपि वज्रिणम् ॥
सप्तधा तु फलेन्मूर्धा मुनौ तपसि तिष्ठति ।
ज्ञानाद्विसृजतः शस्त्रं तादृशे ब्रह्मवादिनि ॥

अनेन ज्ञानाज्ञानकृतयोः पापयोः वैलक्षण्यमस्तीति सूचितम् । तथा च मनुः—'इयं विशुद्धिरुदिता प्रमादात्कामतो द्विजम् । कामतो ब्राह्मणवधे निष्कृतिर्नैव विद्यते । ततः स मामवलम्ब्य पुत्रनिकटमागतः सभार्यो मुनिर्बहुविधं सकरुणं विलप्य,

अपापस्त्वं यथा पुत्र निहतः पापकर्मणा ।
तेन सत्येन गच्छाशु ये लोकाः शस्त्रयोधिनाम् ॥
यान्ति शूरा गतिं यां च संग्रामेष्वनिवर्तिनः ।
हतास्त्वभिमुखाः पुत्र गतिं तां परमां व्रज ॥

अनेन युद्धेष्वपरावर्तिनां शस्त्रहतानामुत्तमलोकप्राप्तिर्भवतीति सूचितम् । तथा च यजुरारण्यके— 'ये युद्ध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः ये वा सहस्रदक्षिणाः तांश्च देवापि गच्छतात् ।' मनुः— 'आहवेषु यद्न्योन्यं जिघांसन्तो महीक्षितः । युद्ध्यमानाः परं शक्त्या स्वर्गं

यान्त्यपराङ्मुखाः॥ द्वाविमौ पुरुषौ लोके सूर्यमण्डल-भेदिनौ। परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः॥ यत्र यत्र हतः शूरः शत्रुभिः परिवेष्टितः। अक्षय्याँल्लभते लोकान्यदि क्लीबं न भाषते। यस्तु भग्नेषु सैन्येषु विद्रवत्सु समन्ततः। परित्राता यदा गच्छेत्स च क्रतुफलं लभेत्। यस्य च्छेदक्षतं गात्रं शर-मुद्गरयष्टिभिः। देवकन्यास्तु तं वीरं हरन्ति रमयन्ति च। देवाङ्गनाः सहस्राणि शूरमायोधने हतम्। त्वरमाणाः प्रधावन्ति मम भर्ता ममैव च। ये यज्ञसङ्घैस्तपसा च विप्राः स्वर्गेषु शीघ्रेण यथैव यान्ति। क्षणेन यान्त्येव हि तत्र वीराः प्राणान्सुयुद्धेन परित्यजन्तः॥' आनुशास-निके—'ये रणाग्रे महीपालाः शूराः समिति शोभनाः। वध्यन्तेऽभिमुखाः शक्र ब्रह्मलोकं व्रजन्ति ते॥'

या गतिः सर्वसाधूनां स्वाध्यायात्तपसा च या।
भूमिदस्याहिताग्नेश्चाप्येकपत्नीव्रतस्य च॥

गोसहस्रप्रदातॄणां या या गुरुभृतामपि।
देहन्यासकृतां या च तां गतिं गच्छ पुत्रक॥

अनेन सर्वसाधुभूमिदानकर्त्रादीनामपि उत्तमश्लोकप्राप्तिर्भवतीति सूचितम्। तथा च विष्णुपुराणे— 'सर्वलोकहितं कुर्यान्नाहितं कस्यचिद्द्विजः। मैत्री समस्तसत्त्वेषु ब्राह्मणस्योत्तमं धनम्॥ प्राणिनि रत्ने च पारक्ये समबुद्धिर्भवेद्द्विजः। तद्वर्णबन्धमुक्तोऽसौ लोकान्प्राप्नोत्यनुत्तमान्।' इति। स्वाध्यायवतामुत्तमलोकविषये श्रुतिः 'यं यं क्रतुमधीते तेन तेनास्येष्टं भवत्यग्नेर्वायुरादित्यस्य सायुज्यं गच्छति' इति। स्मृतिरपि— 'यः स्वाध्यायमधीतेऽब्दं विधिना नियतेन्द्रियः। तस्य नित्यं क्षरत्येष पयो दधि घृतं मधु' इति। तपस्विनामुत्तमलोकप्राप्तिविषये श्रुतिः 'तपसा देवा देवतामग्र आयन् तपसर्षयः स्वरन्वविन्दन्' इति। मनुरपि— 'कीटाश्चाहिपतङ्गाश्च पशवश्च वयांसि च। स्थावराणि च भूतानि दिवं यान्ति तपोबलात्' इति। भूमिदातुरुत्तमलोकावाप्तौ संवर्तः—'भूमिं सस्यवतीं श्रेष्ठां ब्राह्मणे वेदपारगे। गां दत्त्वापि प्रसूतां च स्वर्गलोके महीयते॥ अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः। लोकात्रयस्तेन भवन्ति दत्ता यः काञ्चनं गां च महीं च दद्यात्' इति। आहिताग्नेरुत्तमलोकावाप्तौ

आनुशासनिके भीष्मः 'शतवर्षजीवी यश्च शूरो मनुष्यो वेदाध्यायी यश्च यज्वाप्रमत्तः एवं ते सर्वे शक्रलोकं व्रजन्ति परं गन्ता धृतराष्ट्रो न तत्र' इति । एकपत्नीव्रतं द्विविधम् एकः पतिर्यस्याः सा एकपत्नी तस्याः व्रतमेकपत्नीव्रतम् । एका च सा पत्नी च एकपत्नी सैव व्रतं येषां एकपत्नीव्रताः इति । तथा च स्त्रियाः परपुरुषविमुखत्वं पुरुषस्य परदारविमुखत्वं च । तदुभयत्रापि मनुः— 'आसीता मरणात्क्षान्ता नियता ब्रह्मचारिणी । यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् । अनेकानि सहस्राणि कौमारब्रह्मचारिणाम् । दिवं गतानि विप्राणामकृत्वा कुलसंततिम् ॥ मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः । संयोगं पतितैर्गत्वा परस्यैव च योषितः । अपहृत्य तु विप्रस्वं भवन्ति ब्रह्मराक्षसाः' इति । गोसहस्रप्रदातॄणामुत्तमलोकप्राप्तिं प्रति आनुशासनिके भीष्मः— 'सर्वेषामिह दानानां यत्फलं परिकीर्तितम् । तदेवाप्नोति विप्रेभ्यो गोसहस्रप्रदानतः ॥ अनेन विधिना यस्तु गोसहस्रप्रदो नरः । सर्वपापविनिर्मुक्तः सिद्धचारणसेवितः ॥ विमाने

नाकेवर्णेन किंकिणीजालमालिना। सर्वेषां लोकपालानां लोके संपूज्यते नरः। प्रतिमन्वन्तरं तिष्ठेत्पुत्रपौत्रसमान्वितः॥ सप्तलोकानतिक्रम्य ततः शिवपुरं व्रजेत्। शतमष्टोत्तरं तद्वत्पितॄणां तारयेत्कुलम्। तद्रोमसंख्यावर्षाणि स्वर्गे लोके महीयते' इति। गुरुभूतामुत्तमलोकप्राप्तिविषये देहन्यासं कृतवत उत्तमलोकप्राप्तावानुशासनिके—'आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम्। हुत्वाग्नौ देहमुत्सृज्य वह्निलोके महीयते' इति। ततश्च मुनिकुमारकः शक्रेण सह पितरावाश्वास्य,

स्थानमस्मि महत्प्राप्तो भवतोः परिचारणात्।
भवन्तावपि च क्षिप्रं मम मूलमुपैष्यतः॥

इत्यभिधाय स्वकृतकर्मभिर्दिव्यविमानारूढो दिवमारुरोह। ततः पुत्रवियोगजनितखेदमसहमानस्तपस्वी

पुत्रव्यसनजं दुःखं यदेतन्मम सांप्रतम्।
एवं त्वं पुत्रशोकेन राजन्नन्तं करिष्यसि॥

इति शप्तवान्। यद्यपि 'शूद्रायामस्मि वैश्येन जातः' इति मुनिकुमारकवचनेन मुनिकुमारकस्य करणजात्यव-

गमात् बुद्धिपूर्वकं तद्वधेऽपि न ब्रह्महत्याप्रसक्तिरस्ति। तथापि— 'विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम्। वैश्येऽर्धं पाद एकस्तु शूद्रजातिषु शस्यते' इति बृहद्विष्णुवचनपर्यालोचनया कामतः क्षत्रियकर्तृके शूद्रजातिवधे ब्रह्महत्याचतुर्थांशप्रायश्चित्तविधानात् मुनिकुमारकस्य शूद्रापेक्षया करणत्वेन अधिकत्वात् पितृमातृशुश्रूषादिस्वकर्मनिरतत्वेन गुणवत्त्वाच्च तादृशस्य कामतो वधे प्रायश्चित्ताधिक्येन ब्रह्महत्येति व्यपदेशः युक्त एव। ततः मत्कृतां चितां समाधिरुह्य स्वर्गं गते सभार्ये तस्मिंस्तपस्विनि कुमारकवधं तन्निमित्तं शापं च मुहुर्मुहुर्मनसि विचिन्तयन् स्वनगरमागतोऽस्मि।

तस्यायं कर्मणो देवि विपाकः समुपस्थितः।
अपथ्यैः सह संभुक्ते व्याधिरन्नरसं यथा।

अनेन समशनाध्यशनविषमाशने सति व्याधिर्भवति। अतस्तत्परित्यजेदिति। तथा च वाग्भटे— 'मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम्। विद्यादध्यशनं भूयो भुक्तस्योपरिभोजनम्॥ अकाले बहु पाल्यं वा भुक्तं तु

विषमाशनम् । त्रीण्यप्येतानि मृत्युं वा घोरान्व्याधीन्सृजन्ति च ॥

तदहं पुत्रशोकेन संत्यक्ष्याम्यद्य जीवितम् ।
चक्षुर्भ्यां त्वां न पश्यामि कौसल्ये साधु मा स्पृश ॥

न तन्मे सदृशं देवि यन्मया राघवे कृतम् ।
सदृशं तत्तु तस्यैव यदनेन कृतं मयि ॥

कश्च प्रव्राज्यमानो वा नासूयेत्पितरं सुतः ।
हा राघव महाबाहो हा ममायासनाशन ॥

हा पितृप्रिय मे नाथ हा ममासि गतः सुत ।

इति रामस्य मातुश्च सुमित्रायाश्च संनिधौ राजा दशरथः शोचन् जीवितान्तमुपेयिवान् ॥ पञ्चषष्टिषट्षष्ट्योः— ततः प्रभातसमये यथापूर्वं स्तुवत्सु वन्दिषु पठत्सु पाठकेषु समानीतेषु स्नानीयमङ्गलालम्भनादिषु प्रबोधनचतुराः राजमहिष्यः गतसत्त्वं निश्चेष्टं राजानं विचिन्त्य वेपमानहृदयाः

तदा प्रचुक्रुशुर्दीनाः सस्वरं ता वराङ्गनाः ।

करेणव इवारण्ये स्थानप्रच्युतयूथपाः ॥

तासामाक्रन्दशब्देन सहसोद्गतचेतने ।
कौसल्या च सुमित्रा च त्यक्तनिद्रे बभूवतुः ॥

ततः कोसलेन्द्रतनया गतचेतनं राजानमवलोक्य दुःसहशोकानलाकुलितहृदया सुमित्रादिभिर्नृपवधूभिः सह कृतबहुविधप्रलापा सकरुणमिदमुवाच—

विहाय मां गतो रामो भर्ता च स्वर्गतो मम ।
विपथे सार्थहीनेव नाहं जीवितुमुत्सहे ॥

भर्तारं तं परित्यज्य का स्त्री दैवतमात्मनः ।
इच्छेज्जीवितुमन्यत्र कैकेय्यास्त्यक्तधर्मणः ॥

साहमद्यैव दिष्टान्तं गमिष्यामि पतिव्रता ।
इदं शरीरमालिङ्ग्य प्रवेक्ष्यामि हुताशनम् ॥

इति । नन्वत्र पतिव्रतानां मृतं पतिमालिङ्ग्य अनुगमनं धर्म्यमित्यवगम्यते । तदसंगतम् । आत्महत्यारूपानुमरणस्य निषिद्धत्वात् । तथा च श्रुतिः—'तस्मादुह न पुरायुषः प्रेयात्' इति । ईशावास्येऽपि— 'असूर्या नाम

ते लोकाः अन्धेन तमसा वृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' इति। तथा आङ्गिरसस्मृतिरपि— 'या स्त्री ब्राह्मणजाती या मृतं पतिमनुव्रजेत्। सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत्' इति। व्याघ्रपादश्च— 'न म्रियेत समं भर्त्रा ब्राह्मणी शोककर्शिता। न ब्रह्मगतिमाप्नोति मरणादात्मघातिनी' इति। तस्मादात्मघातरूपानुमरणं कथं धर्मो भवेत्, प्रत्युत अवस्थानेनैव स्वर्गादिफलावगमेनावस्थानस्यैव युक्तत्वात्, तथा च पराशरः— 'मृते भर्तरि या नारी ब्रह्मचर्यव्रते स्थिता। सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः॥' इति। मनुरपि— आसीता मरणात्क्षान्ता नियता ब्रह्मचारिणी। यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम्॥ अनेकानि सहस्राणि कौमारब्रह्मचारिणाम्। दिवं गतानि विप्राणामकृत्वा कुलसंततिम्॥ मृते भर्तरि साध्वी स्त्री ब्रह्मचर्यव्रते स्थिता। स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः॥' इति। एवं च बहुफलमवस्थानं परित्यज्य प्रसिद्धमनुमरणं कथं करिष्यामीत्युक्तवती कौसल्या इति चेत् न, नियतया अवस्थाने फलावगमात्। अनुगमनेऽपि

वैधव्यावस्थाननिन्दापूर्वकं बहुफलप्रतिपादनात् । तथा च संग्रहे—'जीवहीनो यथा देहः क्षणादशुचितां व्रजेत् । भर्तृहीना तथा योषित्सुस्नाताप्यशुचिः सदा ॥ अमङ्गलेभ्यः सर्वेभ्यो विधवा ह्यत्यमङ्गलम् । विधवादर्शनात्सिद्धिः कापि तात न जायते ॥ विधाय मातरं चैकां सर्वमङ्गलवर्जिताम् । तदाशिषमपि प्राज्ञ त्यजेदाशीविषोपमम् ॥ कन्याविवाहसमये वाचयेयुरिति द्विजाः । भर्तुः सहचरी भूयाज्जीवतोऽजीवतोऽपि वा ॥ भर्त्रा सहानुयातव्यो देहावस्था यया सदा । चन्द्रमा ज्योत्स्नया तद्वद्विद्युत्वान्विद्युता यथा । अनुव्रजन्ति भर्तारं गृहात्पितृवनं मुदा ॥ पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम् । यमदूताः पलायन्ते सतीमालोक्य दूरतः ॥ अपि दुष्कृतकर्माणं समुत्सृज्य च तत्पतिम् । न तथा बिभिमो वह्ने न तथा विद्युतो यथा ॥ आपतन्तीं समालोक्य वयं दूताः पतिव्रताम् । तपनस्तपतेऽत्यन्तं दहनोऽपि च दह्यते । कम्पन्ते सर्वतेजांसि दृष्ट्वा पातिव्रतं महः ॥ यावत्स्वलोमसंख्यास्ति तावत्कोट्ययुतानि च । भर्त्रा स्वर्गसुखं भुङ्क्ते रममाणा पतिव्रता' इति । शङ्खोऽपि— 'मृते भर्तरि या नारी समारोहेद्धुताशनम् ।

साऽरुन्धतीसमा चारात्स्वर्गे लोके महीयते' इति। पराशरोऽपि— 'तिस्रः कोट्यर्धकोटीश्च यानि रोमाणि मानुषे। तावन्त्यब्दसहस्राणि स्वर्गे लोके महीयते' इति। व्यासोऽपि— 'यदि प्रविष्टो नरकं पतिः पापैः सुदारुणैः। संप्राप्तो यातनास्थानं गृहीतो यमकिंकरैः॥ तिष्ठतो ह्यवशो दीनो वेष्टमाणः स्वकर्मभिः। व्यालग्राही यथा व्यालं बलादुद्धरत्यशङ्कितः॥ तद्वद्भर्तारमादाय दिवं याति च सा बलात्। या भर्तृपरमा नित्यं स्तूयमानाप्सरोगणैः॥ क्रीडते पतिना सार्धं यावदिन्द्राश्चतुर्दश। ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः॥ पुनात्यविधवा नारी तमादाय मृता तु या' इति। एवं च उदाहृतशास्त्रबलाद्भर्त्रा सह अनुगमनं धर्म एव। तथैवाचारोऽपि पतिव्रतानाम्; यथा विष्णुपुराणे— 'रेवती चैव रामस्य देहमाश्लिष्य सत्तम। विवेश ज्वलितं वह्निं तत्संगाह्लादशीतलम्॥' इति। तत्रैव स्थलान्तरे जनकतनयमालिङ्ग्य काशीराजतनयानुमरणं कृतवतीति प्रतिपादितम्। 'ततश्चितिस्थं भूयोऽपि भर्तारं सा शुभेक्षणा। अन्वारुरोह विधिवद्यथापूर्वं मुदा पतिम्॥ ततोऽवाप तया सार्धं

राजपुत्र्या स पार्थिवः । ऐन्द्रानतीत्य वै लोकाँल्लोकान्कामदुहोऽन्वयात् ॥ स्वर्गदायत्वमतुलं दाम्पत्यमतिदुर्लभम् । प्राप्तं पुण्यफलप्राप्यं संशुद्धिं तां द्विजोत्तम' इति । मौसलपर्वण्यपि— 'श्वोभूते तु ततः शौरिर्वसुदेवः प्रतापवान् । त्यक्त्वात्मानं महातेजा जगाम गतिमुत्तमाम् । तं देवकी च भद्रा च रोहिणी मदिरास्तथा ॥ अन्वारोहन्त च तदा भर्तारं योषितां वराः' इति । यदुक्तं प्राक् श्रुतिविरोध इति तन्न, आत्महत्यानिषेधपरायाः श्रुतेर्विहितानुमरणव्यतिरिक्तात्महिंसाविषयत्वात्; अन्यथा— 'सितासिते सरितो यत्र संगते' इत्यादिश्रुतिविहिततनुत्यागोऽपि । तस्माद्ये युद्ध्यन्ते प्रधनेषु शूरासः' इति श्रुतिविहितशरीरपरित्यागोऽपि युद्धे न स्यात्, तथा दैत्तपश्वालम्भनमपि न स्यात् । तस्या हिंसारूपत्वात् । यदि च निषेधशास्त्रस्य विहितस्य व्यतिरिक्तपरत्वात् प्रयागमरणादिकमुपपन्नमिति तदा प्रकृतेऽपि तुल्यमिति । यदपि चोक्तम् या स्त्री ब्राह्मणजातीयेत्यादिस्मृतिविरोध इति तन्न, तस्याः स्मृतेः ब्राह्मणी पृथक् चितिमारुह्य न गच्छेदित्येतत्परत्वात् । तथा च ब्रह्मकैवर्ते—'पृथक् चितिं

समारुह्य न विप्रा गन्तुमर्हति ' इति । तस्मादनुगमनाव-स्थानयोरुभयोरपि शास्त्रीयत्वात् विकल्प एव; अत एव उभयविधाचारोऽपि पतिव्रतानाम्; यथा आदिपर्वणि— 'अहं ज्येष्ठा धर्मपत्नी ज्येष्ठधर्मफलं मम । अवश्यंभाविनो भावान्मा मां माद्री निवर्तय ॥ अन्वेष्यामीह भर्तारमहं प्रेतवशं गतम् । ' इति वदन्तीं कुन्तीम्– 'दारकेष्वप्रमत्ता च भवेथाश्च हिता मम । अतोन्यं न प्रपश्यामि संदेष्टव्यं हि किंचन ॥ इत्युक्त्वा तं चिताग्निस्थं धर्मपत्नी नरर्षभ । मद्रराजसुता तूर्णमन्वारोहद्यशस्विनी ' इति कुन्त्याः अव-स्थानं माद्र्याः सहगमनं च प्रतिपादितम् । तथा मौसले-ऽपि— 'इन्द्रप्रस्थे ददौ राज्यं वज्राय परवीरहा । वज्रे-णाक्रूरदारास्तु वार्यमाणाः प्रवव्रजुः ॥ रुक्मिणी त्वथ गान्धारी शैल्या हैमवतीत्यपि । देवी जाम्बवती चैव विविशुर्जातवेदसम् ॥ सत्यभामा तथैवान्या देव्यः कृष्णस्य संमताः । वनं प्रविविशू राजंस्तापस्ये धृतनिश्चयाः ' इति । एवमितिहासपुराणेषु पतिव्रताभिरनुगमनं कृतम् अव-स्थितं च इति प्रतिपादनेन उभयविधशास्त्रानुरोधेन च, उभयमपि धर्म्यं तुल्यकल्पं च तुल्यफलत्वात्, तुल्यफलत्वं

च ब्रह्मचर्येणावस्थितायाः कुन्त्या अनुगमनं कृतवत्या माद्र्याश्च पतिसालोक्यप्रतिपादकेन स्वर्गारोहणिके 'पत्नीभ्यां सहितः पाण्डुर्महेन्द्रसदनं ययौ ।' इति वचनेनावगम्यते । तस्मात्कौसल्योक्तमनुगमनं नानुपपन्नम् । अत एव अवस्थानस्यापि शास्त्रीयत्वात्कौसल्या अनुगमनमकृत्वा स्थितेत्येतदप्युपपन्नमेव । ततो गतचेतनं राजानमालिङ्ग्य परिदेवयमानां कौसल्यां विविधसान्त्वनशतैः कथंचिदपनीय,

तैलद्रोण्यामथामात्याः संवेश्य जगतीपतिम् ।
राज्ञः सर्वाण्यथादिष्टाश्चक्रुः कर्माण्यनन्तरम ॥

न तु संकलनं राज्ञे विना पुत्रेण मन्त्रिणः ।
सर्वज्ञाः कर्तुमीषुस्ते ततो रक्ष्यन्ति भूमिपम् ॥ इति ।

अनेन संस्कारविलम्बे मृतशरीरं तैलद्रोण्यादिषु निक्षिप्य रक्षणीयमिति सूचितम् । तथा चापस्तम्बः— 'आहिताग्निं जने प्रमीतं तैलद्रोण्यामवधाय शकटेन हरन्ति' इति । 'न तु संकलनं राज्ञो विना पुत्रेण मन्त्रिणः' इत्यनेन सपुत्रस्य पुत्रेण विना अन्येन संकलनं न कारयि-

तव्यमिति सूचितम् । तथा च स्मृत्यन्तरे— 'पुत्रेषु विद्य-
मानेषु नान्यो वै कारयेत्स्वधाम् । पुत्रा विहिंसितास्तेन
यस्त्वेवं कुरुते नरः' इति ॥ सप्तषष्टितमे, तत उदयशिखर-
मारूढे भगवति सवितरि समेत्य मन्त्रिपुरोहिताः कुलपु-
रोहितं वसिष्ठमेवमवोचन्—

इक्ष्वाकूणामिहाद्यैव कश्चिद्राजा विधीयताम् ।
अराजकं हि नो राष्ट्रं न विनाशमवाप्नुयात् ॥

नाराजके जनपदे विद्युन्माली महास्वनः ।
अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा ॥

अराजके जनपदे बीजमुष्टिः प्रकीर्यते ।
नाराजके पितुः पुत्रो भार्या वा वर्तते वशे ॥

अराजके धनं नास्ति नास्ति भार्याप्यराजके ।
इदमत्याहितं चान्यत्कुतः सौख्यमराजके ॥

नाराजके जनपदे कारयन्ति सभां नराः ।
उद्यानानि च रम्याणि हृष्टाः पुण्यगृहाणि च ॥

नाराजके जनपदे यज्ञशीला द्विजातयः ।
सत्राण्यन्वासते दान्ता ब्राह्मणाः संशितव्रताः ॥

नाराजके जनपदे महायज्ञेषु यज्वनः ।
ब्राह्मणा वसुसंपूर्णा विसृजन्त्याप्तदक्षिणाः ॥

नाराजके जनपदे सिद्धार्था व्यवहारिणः ।
कथाभिरनुरज्यन्ते कथाशीलाः कथाः प्रियैः ॥

नाराजके जनपदे वाहनैः शीघ्रगामिभिः ।
नरा निर्यान्त्यरण्यानि नारीभिः सह कामिनः ॥

नाराजके जनपदे धनवन्तः सुरक्षिताः ।
शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥

नाराजके जनपदे बद्धघण्टाविषाणिनः ।
अटन्ति राजमार्गेषु कुञ्जराः षष्टिहायनाः ॥

नाराजके जनपदे शरान्सततमस्यताम् ।
श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने ॥

नाराजके जनपदे वणिजो दूरगामिनः ।
गच्छन्ति क्षेममध्वानं बहुपण्यसमाचिताः ॥

नाराजके जनपदे चरत्येकचरो वशी ।
भावयन्नात्मनात्मानं यत्र सायंगृहो मुनिः ॥

नाराजके जनपदे योगक्षेमः प्रवर्तते ।

न चाप्यराजके सेना शत्रून्विषहते युधि ॥

नाराजके जनपदे हृष्टैः परमवाजिभिः ।
नराः संयान्ति सहसा रथैश्च परिमण्डिताः ॥

नाराजके जनपदे नराः शास्त्रविशारदाः ।
संवदन्तोऽवतिष्ठन्ते वनेषूपवनेषु च ॥

नाराजके जनपदे चन्दनागरुरूषिताः ।
राजपुत्रा विराजन्ते वसन्त इव शाखिनः ॥

यथा ह्यनुदका नद्यो यथा वाप्यतृणं वनम् ।
अगोपाला यथा गावस्तथा राष्ट्रमराजकम् ॥

ध्वजो रथस्य प्रज्ञानं धूमो ज्ञानं विभावसोः ।
तेषां यो नो ध्वजो राजा स देवत्वमितो गतः ॥

नाराजके जनपदे स्वकं भवति कस्यचित् ।
मत्स्या इव नरा नित्यं भक्षयन्ति परस्परम् ॥

ये हि संछिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः ।
तेऽपि भावाय कल्पन्ते राजदण्डनिपीडिताः ॥

यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते ।
तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥

राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥

यमो वैश्रवणः शक्रो वरुणश्च महाबलः ।
विशेष्यन्ते नरेन्द्रेण वृत्तेन महता ततः ॥

अहो तम इवेदं स्यान्न प्रज्ञायेत किंचन ।
राजा चेन्न भवेल्लोके विभजन्साध्वसाधु वा ॥

जीवत्यपि महाराजे तवैव वचनं वयम् ।
नातिक्रमामहे सर्वे वेलां प्राप्येव सागरः ॥

स नः समीक्ष्य द्विजवर्यवृत्तं
नृपं विना राज्यमरण्यभूतम् ।
कुमारमिक्ष्वाकुसुतं वदान्यं
त्वमेव राजानमिहाभिषिञ्च ॥

अनेन लौकिकवैदिकव्यवहारव्यवस्थासिद्ध्यर्थं प्रजाभिः राजा अवश्यकर्तव्य इत्युक्तम् । तथा च मनुः—'अराजके जनपदे सर्वतो विद्रुते भयात् । रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥' इति । अत एव राजधर्मणाराजके देशे वासप्रतिषेधपूर्वकं लौकिकवैदिकव्यवहारयोरन्वयव्यतिरेकाभ्यां राजाधीनत्वं प्रतिपाद्य व्यव-

द्वारसिद्ध्यर्थं तपश्चर्यादिना ब्रह्माणं प्रसाद्य राजानं मनुं संपाद्य तस्मै भागं परिकल्पितवन्तः इत्युक्तं युधिष्ठिरं प्रति भीष्मेण— 'राष्ट्रस्य यत्कृत्यतमं राज्ञ एवाभिषेचनम् । अनिन्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्त्युत । अराजकेषु राष्ट्रेषु धर्मो न व्यवतिष्ठते । परस्परं च खादन्ते सर्वथा धिक् राजकम् । इन्द्रमेव प्रणमते यद्राजानमिति श्रुतिः ॥ यथैवेन्द्रस्तथा राजा संपूज्यो भूतिमिच्छता । नाराजकेषु राष्ट्रेषु वस्तव्यमिति वैदिकम् ॥ नाराजकेषु राष्ट्रेषु हव्यं वहति पावकः । अथ चेदभिवर्तेत राज्यार्थी बलवत्तरः ॥ अराजकानि राष्ट्राणि हतराज्यानि वा पुनः । प्रत्युद्गम्याभिपूज्यः स्यादेतदत्र सुमन्त्रितम् ॥ न हि राज्यात्पापतरमस्ति किंचिदराजकात् । वसेत्समनुपश्येत समग्रं कुशलं भवेत् ॥ बलवान्हि प्रकुर्वीत कुर्यान्नि शेषतामिह । भूयांसं लभते क्लेशं या गौर्भवति दुर्दुघा ॥ अथवा सुदुघा भवति नैव तां विनयस्य च । यदतप्तप्रणमते नमते यो बलीयसे ॥ तस्माद्राजैव कर्तव्यः सततं भूतिमिच्छता । न धनार्थो न दानार्थस्तेषां येषामराजकम् ॥ तृप्यते हि हरन्पापः परवित्तमराजकम् । यदस्य तद्धरन्त्यन्ये तदा राजानमि-

च्छति ॥ पापान्यपि सदा क्षेमं न लभन्ते कथंचन । एतस्य तद्वै हरतो द्वयोश्च बह्वोऽपरे ॥ न दासः क्रियते दासो ह्रियन्ते च बलात्स्त्रियः । एतस्मात्कारणाद्देवाः प्रजापालं प्रचक्रिरे ॥ राजा चेन्न भवेल्लोके पृथिव्यां दण्डधारकः । शूले मत्स्यानिवाभक्ष्य दुर्बलान्बलवत्तराः ॥ अनायकाः प्रजाः पूर्वं विनेशुरिति नः श्रुतम् । परस्परं भक्षयतो मत्स्या मत्स्यानिवाबलान् ॥ ताः समेत्य मिथश्चक्रुः समयानिति नः श्रुतम् । यः क्रूरो दण्डपुरुषो यश्च स्यात्पारदारिकः ॥ यश्च नः समयं भिन्द्यात्त्याज्या नस्तादृशा यदि । विश्वासनार्थं वर्णानां सर्वेषामविशेषतः ॥ तास्तथा समयं कृत्वा समये नावतस्थिरे । सहितास्ताः समाजग्मुरसुखार्ताः पितामहम् ॥ अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश । यं पूजयेम संभूय यश्च नः परिपालयेत् ॥ ताभ्यो मनुं व्यादिदेश मनुना तेऽभिनन्दिताः ।' मनुरुवाच— 'बिभेमि कर्मणः क्रूराद्राज्यं हि भृशदुष्करम् । विशेषतो मनुष्येषु मिथ्यावृत्तेषु नित्यदा ॥' भीष्म उवाच— 'तमब्रुवन्प्रजा मा भैर्विधास्याम धनं तव । पशूनामथ पञ्चाशं हिरण्यस्य तथैव च ॥ धान्यस्य दशमं

भागं दद्मि ते कोशवर्धनम् । मुख्ये न चातपत्रेण ये मनुष्याः प्रधानतः ॥ भवन्तं तेऽनुयास्यन्ति महेन्द्रमिव देवताः । स त्वं जातबलो राजन्दुष्प्रधर्षः प्रतापवान् ॥ सुखे शास्यसि नः सर्वान्कुबेर इव नैर्ऋतान् । यं च धर्मं चरिष्यन्ति प्रजा राज्ञा सुरक्षिताः ॥ चतुर्थं तस्य धर्मस्य राज्ञ एव भविष्यति । तेन धर्मेण महता सुखलब्धेन भावितः । पाह्यस्मान्सर्वतो राजन्देवानिव शतक्रतुः ॥ विजयाययाभिनिर्याहि प्रतीपं मघवानिव । मानं विधम शत्रूणां धर्मं जनयतः सदा ॥' भीष्म उवाच— 'स निर्ययौ महातेजा बलेन महता वृतः । महाभिजनसंपन्नस्तेजसा प्रज्वलन्निव ॥ तस्य तां महिमां दृष्ट्वा महेन्द्रस्येव देवताः । अथ तत्रसिरे सर्वे स्ववेषेष्वदधुर्मनः ॥ वर्णिनं चाश्रमं चैव म्लेच्छाः सर्वे च दस्यवः । ततो महीं परिययौ पर्जन्य इव वृष्टिमान् ॥ शमयन्सर्वतः पापान्सुकर्मसु च योजयन् । ये ये भूमिमिहेच्छेयुः पृथिव्या मानवाः कचित् ॥ कुर्यूं राजानमेवादौ प्रजानुग्रहकारणात् । नमस्येयुश्च तं भक्त्या शिष्या इव गुरुं सदा ॥ देवायुजसहस्राक्षं नरराजानमन्तिकात् । स्वकृतं स्वजनेनेह परोऽपि बहु मन्यते ॥

स्वजनेन त्ववज्ञातं परे परिभवन्ति च । राज्ञः परैः परिभवः सर्वेषामसुखावहः ॥ तस्माच्छत्रं च पुत्रं च वासांस्याभरणानि च । भोजनान्यथ पानानि राज्ञो दद्युर्गृहाच्युत ॥ आसनान्यथ शय्याश्च सर्वोपकरणानि च ।'
अष्टषष्टितमे, वसिष्ठोऽपि सिद्धार्थविजयजयन्ताशोकनन्दनानूजनवरान्द्वादशानाहूय,

कोशे यानि च वासांसि भूषणानि वराणि च ।
क्षिप्रमादाय राज्ञश्च भरतस्य च गच्छत ॥
त्यक्तशोकैरिदं वाच्यं शासनाद्भरतो मम ।
पुरोहितस्त्वा कुशले प्राह सर्वे च मन्त्रिणः ॥
त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ।
मा चास्मै प्रोषितं रामं मा चास्मै पितरं मृतम् ॥

इति शंसथेत्यवोचत् । ततो दूता वसिष्ठाभ्यनुज्ञया पुराभिगम्य संतीर्य विविधनदीरतिक्रम्य च नानाविधाञ्जनपदान्क्रमेण क्लान्तवाहना गिरिव्रजं पुरवरमस्तंगते भगवति सवितर्याजग्मुः ॥ एकोनसप्ततितमे—

यामेव रात्रिं ते दूताः प्रविशन्ति स्म तां पुरीम् ।
भरतेनापि तां रात्रिं स्वप्नो दृष्टोऽयमप्रियः ॥

व्युष्टामेव तु तां रात्रिं दृष्ट्वा तं स्वप्नमप्रियम् ।
पुत्रो राजाधिराजस्य सुभृशं पर्यतप्यत ॥

तप्यमानं समाज्ञाय वयस्याः प्रियवादिनः ।
आयासं हि विनेष्यन्तः सभायां चक्रिरे कथाः

वादयन्ति तथा चान्ये लास्यन्ति तथापरे ।
नाटकान्यपरे प्राहुर्लास्यानि विविधानि च ॥

स तैर्महात्मा भरतः सखिभिः प्रियवादिभिः ।
गोष्ठी हास्यानि कुर्वद्भिर्न प्राहृष्यत राघवः ॥

तमब्रवीत्प्रियसखो भरतं सखिभिर्वृतम् ।
सुहृद्भिः पर्युपासीनः किं सखे नानुमोदसे ॥

एवं ब्रुवाणं संहृष्टं भरतः प्रत्युवाच ह ।
शृणु त्वं यन्निमित्तं मे दैन्यमेतदुपागतम् ॥

स्वप्ने पितरमद्राक्षं मलिनं मुक्तमूर्धजम् ।
पतन्तमद्रिशिखरात्कलुषे गोमये ह्रदे ॥

प्लवमानश्च मे दृष्टः स तस्मिन्गोमये ह्रदे ।
पिबन्नञ्जलिना तैलं हसन्नपि मुहुर्मुहुः ।
ततस्तिलोदनं भुक्त्वा पुनः पुनरधःशिराः ॥

तैलेनाभ्यक्तसर्वाङ्गस्तैलमेवावगाहत ।
स्वप्नेऽपि सागरं शुष्कं चन्द्रं च पतितं भुवि ॥

उपरुद्धां च जगतीं तमसेव समावृताम् ।
औपवाह्यस्य नागस्य विषाणं शकलीकृतम् ॥

सहसा चापि संशान्तं ज्वलितं जातवेदसम् ।
अवतीर्णां च पृथिवीं शुष्कांश्च विविधान्द्रुमान् ॥

अहं पश्यामि विध्वस्तान्सधूमांश्चापि पर्वतान् ।
पीठे कार्ष्णायसे चैनं विषण्णं कृष्णवाससम् ॥

प्रहसन्ति स्म राजानं प्रमदाः कृष्णपिङ्गलाः ।
त्वरमाणश्च धर्मात्मा रक्तमाल्यानुलेपनः ॥

रथेन खरयुक्तेन प्रयातो दक्षिणामुखम् ।
प्रहसन्तीव राजानं प्रमदा रक्तवासिनी ॥

प्रकर्षता मया दृष्टा राक्षसी विकृतानना ।
एवमेतन्मया दृष्टमिमां रात्रिं भयावहाम् ॥

अहं रामोऽथ वा राजा लक्ष्मणो वा मरिष्यति ।
नरो यानेन यः स्वप्ने खरयुक्तेन याति हि ॥

अचिरात्तस्य धूमाग्रं चितायां संप्रदृश्यते ।

एतन्निमित्तं दीनोऽहं तन्न वः प्रतिपूजये ॥
शुष्यतीव च मे कण्ठो न स्वस्थमिव मे पुनः ।
न पश्यामि भयस्थानं भयं चैवोपधारये ॥
भ्रष्टश्च स्वरयोगो मे छाया चोपहता मम ।
जुगुप्स इव चात्मानं न च पश्यामि कारणम् ॥
इमां हि दुःस्वप्नगतिं निशाम्य ता-
मनेकरूपामवितर्कितां पुरा ।
भयं महत्तद्धृदयान्न याति मे
विचिन्त्य राजानमचिन्त्यदर्शनम् ॥

अत्र भरतेन स्वप्नदर्शनस्य 'अहं रामोऽथ वा राजा लक्ष्मणो वा मरिष्यति' इति फलप्रतिपादनात्, येन यादृशस्वप्नो दृष्टः तस्य तादृशं फलं भवतीति सूचितम् । तथा च स्वप्नाध्याये बृहस्पतिः—'स्वप्नाध्यायं प्रवक्ष्यामि नानास्वप्नफलोदये । स्वप्नं तु प्रथमे यामे संवत्सरविपाकिनम् ॥ द्वितीये चाष्टभिर्मासैस्त्रिभिर्मासैस्त्रियामिकम् । चातुर्थे यामिके स्वप्ने मासैकेन फलं भवेत् ॥ अरुणोदयवेलायां दशाहेन फलं भवेत् । एवं चानुदिते काले त्रिरात्रं तु भविष्यति ॥ गवां दोहनवेलायां सद्यः

स्वप्नफलं भवेत्। अत ऊर्ध्वं प्रवक्ष्यामि स्वप्नपुण्यफलं ध्रुवम्। वातकं पित्तकं चैव चिन्तितं चानुवर्जयेत्॥ अतिदीर्घं दिवा दृष्ट्वा स्वप्नं तं परिवर्जयेत्। यस्तु पश्यति स्वप्नान्ते राजानं कुञ्जरं हयम्। सुवर्णं वृषभं गावः कुटुम्बं तस्य वर्धते। आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम्। विष्ठानुलेपो रुदितं मृतं च स्वप्नेषु गम्यागमनं च धन्यम्॥ क्षीरिणं फलिनं वृक्षमेकाकी योऽधिरोहति। तत्र तस्य विबुद्धस्य मृत्युरित्येव निर्दिशेत्॥ यस्तु श्वेतेन सर्पेण दंशितो दक्षिणो भुजः। सहस्रलाभस्तस्य स्यादपूर्णे दशमे दिने। उरगो वृश्चिको वापि जलूका दृश्यते यदि। अत्ययं चार्थसिद्धिं च पुत्रं तस्य विनिर्दिशेत्। प्रासादशैलमारुह्य समुद्रं तरते नरः। अपि दासकुले जातः सोऽपि राजा भविष्यति॥ यस्तु मध्ये तटाकस्य भुङ्क्ते वै घृतपायसम्। अखण्डे पुष्करे पत्रे तं विद्यात्पृथिवीपतिम्॥ बलाकां कुक्कुटीं क्रौञ्चीं लब्ध्वा यः प्रतिबुध्यते। सत्कुलाच्च लभेत्कन्यां भार्यां च प्रियवादिनीम्॥ अनिलैर्बध्यते यस्तु बाहुपाशेन वा पुनः। पुत्रो वा जायते तस्य प्रतिष्ठा तस्य वृद्धये॥

आसने शयने याने शरीरे वाहने गृहे । ज्वलमानो तु बुध्येत तस्य श्रीरावर्तौ मुखी ॥ आदित्यमण्डलं स्वप्ने चन्द्रं वा यदि पश्यति । व्याधितो मूल्यरोगी ह्यरोगी श्रियमाप्नुयात् ॥ रुधिरं पिबते स्वप्ने सुरां वा पिबते यदि । ब्राह्मणस्तु लभेद्विद्यामितरस्तु धनं लभेत् ॥ अभिधावन्ति यं स्वप्ने शृङ्गिणो दंष्ट्रिणोऽपि वा । वानरो वा वराहो वा भवेद्राजकुलाद्भयम् ॥ सलिलं दधि ताम्बूलं शङ्खं चन्दनमौक्तिकम् । जातीवकुलपुष्पं च उत्पलं वा धनागमः । केशा यत्र विशीर्यन्ते दन्ताश्च प्रपतन्ति वा । अर्थनाशो भवेत्तस्य अपत्यं वापि नश्यति ॥ वमते यस्तु स्वप्नान्ते अथ वा तु विरेचते । वमिते तु महाव्याधिर्धननाशो विरोचने । अशोकं करवीरं वा पालाशं वाथ पुष्पितम् । स्वप्नान्ते यस्तु पश्येत नरः शोकमवाप्नुयात् ॥ रक्ताम्बरधरा नारी रक्तगन्धानुलेपना । अवगूहति यं स्वप्ने ब्रह्महत्यां विनिर्दिशेत् । कृष्णाम्बरधरा नारी पीतवर्णानुलेपना । अवगूहति यं स्वप्ने कुष्ठं तस्य विनिर्दिशेत् ॥ पीताम्बरधरा नारी पीतवर्णानुलेपना । अवगूहति यं स्वप्ने कुष्ठं तस्य विनिर्दिशेत् । श्वेताम्बरधरा

नारी श्वेतगन्धानुलेपना । अवगूहति यं स्वप्ने तस्य श्रीः सर्वतोमुखी ॥ सर्वाणि कृष्णान्यपि निन्दितानि गोहस्तिदेवद्विजवाजिवर्जम् । सर्वाणि शुक्लान्यपि शोभनानि कार्पासभस्मास्थिववर्जितानि ॥ ओदनतक्रलवणपिष्टचूर्णं वर्जम् । तैलाभ्यक्तं शरीरे तु रसेन च घृतेन च ॥ स्नेहेन वा तथान्येन व्याधिं तस्य विनिर्दिशेत् ॥ गोवृषं रथसंयुक्तमेकाकी योऽधिरोहति । तत्र तस्य विबुद्धस्य धनं शीघ्रं विनिर्दिशेत् ॥ खरोष्ट्ररथसंयुक्तमेकाकी योऽधिरोहति । तत्र तस्य विबुद्धस्य मृत्युं सद्यो विनिर्दिशेत ॥ अथवा—नावमारोहयेद्यस्तु सभिन्नां यः समुत्तरेत् । अथ वा निर्मलं तीर्थमध्वानं तस्य निर्दिशेत् ॥ पादुकोपानहच्छत्रं लब्ध्वा यः प्रतिबुध्यति । अध्वानं निर्दिशेत्तस्य शीघ्रं च पुनरागमः । दधिलाभे ध्रुवं धर्मो घृतलाभे ध्रुवं यशः । घृताशने ध्रुवं क्लेशो यशस्तु दधिभक्षणे ॥ दधि दृष्ट्वा भवेद्वृद्धिर्गोधूमैश्च धनागमः । यवैर्यज्ञागमं विद्याल्लाजाः सर्वार्थसिद्धिदाः ॥ फलिते च फलं विद्यात्पुष्पिते वृत्तिरुत्तमा । धूमायते भवेन्मृत्युः प्रज्वलंश्च प्रियावहः ॥ दीपं मूलं फलं पद्मं

कन्या छत्रं ध्वजं रथः । एतानि यो लभेत्स्वप्ने यश्चिन्तयति तद्भवेत् ॥ मानुष्याणि च मांसानि स्वप्नान्ते यस्तु भक्षयेत् । हरितानि च पक्वानि शृणु तस्यापि यत्फलम् । हरितेन शतं विद्यात्पक्वेन मरणं ध्रुवम् । पादे पञ्चशतं लाभः सहस्रं बाहुभक्षणे ॥ राज्यं च शतसाहस्रं भवेच्छिरसि भक्षणे । भक्षयेन्मद्यमांसानि तस्य लाभोऽयुतं स्मृतम् । पुत्रैस्तु वेष्टितो यो वै नगरे स्वगृहेऽपि वा ॥ गेहे माण्डलिको राजा नगरे पार्थिवो भवेत् । देवता यत्र नृत्यन्ति प्रहसन्ति रुदन्ति च ॥ आस्फोटयन्ति धावन्ति यत्र देशो विनश्यति । देवताश्च द्विजा गावः पितरो ललना नृपाः । यद्वदन्ति नरं स्वप्ने तत्तथैव फलं भवेत् । नागपत्रं लभेत्स्वप्ने कर्पूरमगरुं तथा । चन्दनं श्वेतवस्त्रं च तस्य श्रीः सर्वतोमुखी ॥ यो मालां लभते स्वप्ने फलं वा लभते यदि । कन्यालाभो भवेत्तस्य क्षिप्रमेव न संशयः ॥ क्षीरं पिबति यः स्वप्ने फेनरोहिते स्थितम् । सोमपानं भवेत्तस्य लक्षाहारोऽप्यनेकशः । हसिते कलहारं प्राप्तं मूके रोदनमादिशेत् । अञ्जने नेत्ररोगं च रोमहर्षे धनक्षयः । यो लिङ्गमर्चितं

दृष्ट्वा अन्यां वा यदि देवताम् ॥ व्यवहारे जयस्तस्य जयो राजकुलेषु च। करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः ॥ हसितो नाभिकश्चैव तस्य कालो भविष्यति ॥ स्वप्नाध्यायमिमं पुण्यं प्रातरुत्थाय यः पठेत्। दुःस्वप्नं नाशयेत्तस्य सुस्वप्नं च भविष्यति' इति बृहस्पतिप्रणीतस्वप्नाध्यायः ॥ अग्नित्रयं त्रीणि च पुष्कराणि नामत्रयं त्रीणि पदानि विष्णोः रुद्रस्त्रिनेत्रस्त्रिपथा च गङ्गा एता विदुः स्वप्नविनाशनानि ॥ यत्फलं गोसहस्रस्य सुवर्णालंकृतस्य च। त्रिवारं पठतस्तस्य स ददाति बृहस्पतिः ॥ तथा चोद्योगपर्वणि श्रीकृष्णं प्रति कर्णवाक्यम्—'सहस्रपादं प्रासादं स्वप्नान्ते तु युधिष्ठिर। अधिरोहन्मया दृष्टः सह भ्रातृभिरच्युत ॥ श्वेतोष्णीषाश्च दृश्यन्ते सर्वे ते शुक्लवाससः। आसनानि च शुभ्राणि सर्वेषामुपलक्षये। त्वं चापि मया दृष्टः स्वप्नान्ते रुधिराविलः ॥ आन्त्रेण पृथिवी दृष्टा परिक्षिप्ता जनार्दन। अस्थिसंचयमारूढश्चामितौजा युधिष्ठिरः ॥ सुवर्णपात्र्यां संहृष्टो भुक्तवान्घृतपायसम्। युधिष्ठिरो मया दृष्टो ग्रसमानो वसुंधराम् ॥ त्वचपर्वतमारूढो भीमकर्मा वृकोदरः। गदापाणिर्नर-

व्याघ्रो ग्रसन्निव महीमिमाम् ॥ क्षपयिष्यति नः सर्वा-न्सुव्यक्तं स्म महारणे । विदितं मे हृषीकेश यतो धर्म-स्ततो जयः ॥ पाण्डुरं गजमारूढो गाण्डीवी स धनं-जयः । त्वया सार्धं महाबाहो श्रिया परमया ज्वलन् ॥ यूयं सर्वान्हनिष्यध्वमत्र मे नास्ति संशयः । पार्थिवा-न्समरे कृष्ण दुर्योधनपुरोगमान् ॥ नकुलः सहदेवश्च सात्यकिश्च महारथः । शुक्लकेयूरकण्ठान्ताः शुक्लमाल्या-म्बरावृताः ॥ अधिरूढा नरव्याघ्रा हयवाहनमुत्तमम् । एत एव मया दृष्टाः पाण्डुरच्छत्रवाससः ॥ श्वेतोष्णी-षाश्च दृश्यन्ते त्रय एते जनार्दन । धार्तराष्ट्रस्य सैन्येषु तान्विजानीहि माधव ॥ अश्वत्थामः कृपश्चैव कृतवर्मा च सात्वतः । रथोष्णीषाश्च दृश्यन्ते सर्वे माधव पा-र्थिवाः । उष्णप्रयुक्तमारूढौ भीष्मद्रोणौ जनार्दन । मया सार्धं महाबाहो धार्तराष्ट्रेण वै विभो ॥ अगस्त्यशास्तां च दिशं प्रयातो भो जनार्दन । अचिरेणैव कालेन प्राप्स्या-मो यमसादनम् ॥ अहं चान्ये च राजानो यच्चैतत्क्षत्र-मण्डलम् । गाण्डीवाग्निं प्रवेक्ष्याम इति मे नास्ति संशयः ॥ श्रीभगवानुवाच 'उपस्थितविनाशेयं नून-

मद्य वसुंधरा । तथा हि मे वचः कर्णं नोपैति हृदयं तव । सर्वेषां तात भूतानां विनाशे प्रत्युपस्थिते । अनर्थो नयसङ्काशो हृदयान्नापसर्पति ।' इति । अत एव सुन्दरकाण्डे सुस्वप्नदुःस्वप्नयोस्तत्तदनुरूपं फलं प्रतिपादितं त्रिजटया—

स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ।
राक्षसानामभावाय भर्तुरस्या जयाय च ॥
एवमुक्तास्त्रिजटया राक्षस्यः क्रोधमूर्छिताः ।
सर्वा एवाब्रुवन्भीतास्त्रिजटां तामिदं वचः ॥
कथयस्व त्वया दृष्टः स्वप्नोऽयं कीदृशो निशि ।
तासां श्रुत्वा तु वचनं राक्षसीनां मुखाच्च्युतम् ॥
उवाच वचनं काले त्रिजटा स्वप्नसंश्रितम् ।
गजदन्तमयीं दिव्यां शिबिकामन्तरिक्षगाम् ॥
युक्तां हंससहस्रेण स्वयमास्थाय राघवः ।
शुक्लमाल्याम्बरधरो लक्ष्मणेन सहागतः ॥
स्वप्ने चाद्य मया दृष्टा सीता शुक्लाम्बरावृता ।
सागरेण परिक्षिप्तं श्वेतं पर्वतमास्थिता ॥
रामेण संगता सीता भास्करेण प्रभा यथा ।

राघवश्च मया दृष्टश्चतुर्दन्तं महागजम् ॥
आरूढः शैलसंकाशं चचाल सह लक्ष्मणः ।
ततस्तौ नरशार्दूलौ दीप्यमानौ स्वतेजसा ॥
शुक्लमाल्याम्बरधरौ जानकीं पर्युपस्थितौ ।
ततस्तस्य नगस्याग्रे ह्याकाशस्थस्य दन्तिनः ॥
भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता ।
भर्तुरङ्कात्समुत्पत्य ततः कमललोचना ॥
चन्द्रसूर्यौ मया दृष्टौ पाणिना परिमार्जती ।
ततस्ताभ्यां कुमाराभ्यामास्थितः स गजोत्तमः ।
सीतया च विशालाक्ष्या लङ्काया उपरि स्थितः ।
पाण्डुरर्षभयुक्तेन रथेनाष्टयुजा स्वयम् ।
इहोपयातः काकुत्स्थः सीतया सह भार्यया ॥
लक्ष्मणेन सह भ्रात्रा विमाने पुष्पके स्थितः ।
साण्डं त्रिभुवनं भीमं सर्वतः सचराचरम् ॥
सर्वं ग्रस्तं मया दृष्टं रामेणाक्लिष्टकर्मणा ।
क्षीरोदधिजले मध्ये श्वेतः शैलः समुच्छ्रितः ॥
तस्य मूर्ध्नि ततः श्वेतश्चतुर्दन्तो महागजः ।
तस्य पृष्ठे स्थितः श्रीमान्रामो राजीवलोचनः ॥

आसीनः प्राङ्मुखः श्रीमानासने परमे शुभे ।
अभिषिक्तस्तु काकुत्स्थः सर्वदेवैर्नमस्कृतः ॥

सब्रह्मर्षिगणैः सिद्धैः सर्वतीर्थजलेन च ।
शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ॥

सीता तत्र पृथुश्रोणी रराज जनकात्मजा ।
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
ब्रह्माणमग्रतः कृत्वा रामं तत्र ववन्दिरे ॥

पुनरेव मया दृष्टो रामो रमयतां वरः ।
विष्णुरेव स्वयं भूत्वा तस्मिन्नास्ते वरासने ॥

परं ब्रह्म परं सत्यं परं ज्ञानं परं तपः ।
परं बीजं परं क्षेत्रं परं कारणकारणम् ॥

शङ्खचक्रधरः श्रीमान्पुण्डरीकायतेक्षणः ।
श्रीवत्सवक्षा नित्यश्रीरक्षय्यः शाश्वतो ध्रुवः ॥

एवंभूतो महातेजा रामः कमललोचनः ।
सर्वलोकेश्वरः श्रीमान्रराज रघुनन्दनः ॥

ततो महेन्द्रः पितरो मुनीन्द्रा
गन्धर्वविद्याधरपन्नगेश्वराः ।

कृताभिषेकं परिवार्य रामं
प्रतुष्टुवुः प्राञ्जलयः प्रहृष्टाः ॥

नृत्यन्ति गायन्ति समेत्य तत्र
वाद्यं प्रकुर्वन्ति सुरेन्द्रनार्यः ।
वंशाश्च वीणाप्रमुखाश्च भेर्यो
नदन्ति शङ्खाः पणवाश्च सर्वे ॥

ततोऽन्यत्र मया दृष्टो रामः सत्यपराक्रमः ।
लक्ष्मणेन सहभ्रात्रा सीतया सह भार्यया ॥

आरुह्य पुष्पकं दिव्यं विमानं सूर्यसंनिभम् ।
उत्तरां दिशमालोक्य जगाम पुरुषोत्तमः ॥

लक्ष्मणेन सह भ्रात्रा सीतया सह वीर्यवान् ।
एवं स्वप्ने मया दृष्टो रामो विष्णुपराक्रमः ॥

न हि रामो महातेजाः शक्यो जेतुं सुरासुरैः ।
राक्षसैर्वापि चान्यैर्वा स्वर्गः पापजनैरिव ॥

रावणश्च मया दृष्टः क्षितौ तैलसमुक्षितः ।
रक्तवासाः पिबन्मत्तः करवीरकृतस्रजः ॥

विमानपुष्पकादद्य रावणः पतितो भुवि ।
कृष्यमाणः स्त्रिया दृष्टो मुण्डः कृष्णाम्बरः पुनः ॥

रथेन खरयुक्तेन रक्तमाल्यानुलेपनः ।
पिबंस्तैलं हसन्नृत्यन्भ्रान्तचित्ताकुलेन्द्रियः ।
गर्दभेन ययौ शीघ्रं दक्षिणां दिशमास्थितः ॥
पुनरेव मया दृष्टो रावणो राक्षसेश्वरः ।
पतितोऽवाक्शिरा भूमौ गर्दभाद्भयमोहितः ॥
सहसोत्थाय सम्भ्रान्तो भयार्तो मदविह्वलः ।
उन्मत्त इव दिग्वासा दुर्वाक्यं प्रलपन्बहु ॥
दुर्गन्धं दुःसहं घोरं तिमिरं नरकोपमम् ।
मलपङ्कं प्रविश्याशु मग्नस्तत्र तु रावणः ॥
कण्ठे बद्ध्वा दशग्रीवं प्रमदा रक्तवासिनी ।
काली कर्दमलिप्ताङ्गी दिशं यां यां प्रकर्षति ॥
एवं तत्र मया दृष्टः कुम्भकर्णो निशाचरः ।
रावणस्य सुताः सर्वे दृष्टास्तैलसमुक्षिताः ॥
वराहेण दशग्रीवः शिशुमारेण चेन्द्रजित् ।
उष्ट्रेण कुम्भकर्णश्च प्रयातो दक्षिणां दिशम् ॥
एकस्तत्र मया दृष्टः श्वेतच्छत्रो विभीषणः ।
शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ॥
शङ्खदुन्दुभिनिर्घोषैर्नृत्तगेयैरलंकृतः ।

आरुह्य मेघसंकाशं मेघस्तनितनिःस्वनम् ॥
चतुर्दन्तगजं दिव्यमास्ते तत्र विभीषणः ।
चतुर्भिः सचिवैः सार्धं वेदाद्य समुपस्थितः ॥
समाजश्च महान्दृष्टो गीतवादित्रनिःस्वनः ।
पिबतां रक्तमाल्यानां रक्षसां रक्तवाससाम् ॥
लङ्का चैव पुरी रम्या सवाजिरथसंकुला ।
सागरे पतिता दृष्टा भग्नगोपुरतोरणा ॥
लङ्का दृष्टा मया स्वप्ने वानरेण तरस्विना ।
निर्दग्धा नगरी सर्वा रावणेनाभिपालिता ॥
पीत्वा तैलं प्रनृत्ताश्च प्रहसन्त्यो महास्वनाः ।
लङ्कायां भस्मरूपायां प्रविष्टा राक्षसस्त्रियः ॥
कुम्भकर्णादयश्चेमे सर्वे राक्षसपुङ्गवाः ।
रक्तं विवसनं गृह्य प्रविष्टा गोमयह्रदे ॥ इति ॥

सप्ततितमे, ततः स्वप्नकथनसमय एव सभां प्रविश्य कृतनमस्कारा दूताः सर्वसुहृज्जनेषु कुशलं पृच्छन्तं भरतम्—

कुशलास्ते नरव्याघ्र येषां कुशलमिच्छसि ।
श्रीश्च त्वां वृणुते पद्मा युज्यतां चापि ते रथः ॥

इत्यवदन् । ततस्तदानीतधनवस्त्राभरणादिभिः स्वमातामहमातुलादीनभिपूज्य तैश्च विविधवसनभूषणादिप्रदानपूर्वकं कृताभ्यनुज्ञः रथमारुह्य भरतः शत्रुघ्नसहितो ययौ ॥ एकसप्ततितमे— ततो भरतः क्रमेण समतीत्य जनपदानुत्तीर्य नदीनदानतिक्रम्य पर्वतानासाद्य चोपवनमवलोक्य च नगरं सारथिमेवमवादीत्—

श्रुता नो यादृशः पूर्वं नृपतीनां विनाशने ।
आकारांस्तानहं सर्वानिह पश्यामि सारथे ॥

संमार्जनविहीनानि परुषाण्युपलक्षये ।
असंयतकवाटानि श्रीविहीनानि सर्वशः ॥

बलिकर्मविहीनानि धूपसंमोदनेन च ।
अनाशितकुटुम्बानि प्रभाहीनजनानि च ॥

अलक्ष्मीकानि पश्यामि कुटुम्बिभवनान्यहम् ।
अपेतमाल्यशोभानि असंमृष्टाजिराणि च ॥

देवागाराणि शून्यानि न च भान्ति यथापुरम् ।
देवतार्चाः प्रविद्धाश्च यज्ञगोष्ठ्यस्तथाविधाः ॥

माल्यापणेषु राजन्ते नाद्य पण्यानि वा तथा ।

इत्थमन्ते वणिजोऽप्यद्य न यथापूर्वमद्य वै ॥

[illegible] प्रहृष्या नष्टव्यापारयन्त्रिताः ।

देवतायतनचैत्येषु दीनाः पक्षिगणाः स्थिताः ॥

मलिनं चाश्रुपूर्णाक्षं दीनं ध्यानपरं कृशम् ।

सस्त्रीपुंसं च पश्यामि जनमुत्कण्ठितं पुरे ॥

इत्येवं कृत्वा भरतः सूतं तं दीनमानसः ।

तान्यरिष्टान्ययोध्यायां प्रेक्ष्य राजगृहं ययौ ॥

द्विसप्ततितमे—ततः प्रविश्य नगरमासाद्य राजभवनं समतीत्य कक्षात्रयमनवलोक्य राजानम्,

जगाम भरतो द्रष्टुं मातरं मातुरालयम् ।

ततः स्वसंदर्शनसमनन्तरमेव समुत्सृज्य सौवर्णमासनं सरभसं प्रत्युद्गच्छन्तीं स्वमातरमभिवाद्य तत्रापि पितृदर्शनदूयमानमानसः समागतोऽहं पितुः पादावभिवादयितुं तमाख्याहीति मातरमवदत् ।

तं प्रत्युवाच कैकेयी प्रियवद्घोरमप्रियम् ।

या गतिः सर्वभूतानां तां गतिं ते पिता गतः ॥

तद्वाक्यश्रवणमात्रेणैव भूमौ निपत्य चिरमार्तस्वरेण

विलपन्भरतः तैस्तैः सान्त्वनवचनैः सान्त्वयन्तीं जननीं प्रत्युवाचेदं शोकैर्बहुभिरावृतः—

अभिषेक्ष्यति रामं नु राजा यज्ञं नु यक्ष्यते ।
इत्यहं कृतसंकल्पो हृष्टो यात्रामयासिषम् ॥
अम्ब केनात्यगाद्राजा व्याधिना मय्यनागते ।
धन्या रामादयः सर्वे यैः पिता संस्कृतः स्वयम् ॥
न नूनं मां महाराजः प्राप्तं जानाति कीर्तिमान् ।
उपजिघ्रेद्धि मां मूर्ध्नि ततः संनम्य सत्वरम् ॥
यो मे भ्राता पिता बन्धुर्यस्य दासोऽस्मि धीमतः ।
तस्य मां शीघ्रमाख्याहि रामस्याक्लिष्टकर्मणः ॥
पिता हि भवति ज्येष्ठो धर्ममार्यस्य जानतः ।
तस्य पादौ ग्रहीष्यामि स हीदानीं गतिर्मम ॥

पितुरनन्तरं ज्येष्ठभ्रातैव गतिरित्येतत्प्राक्प्रपञ्चितम् ॥

आर्यः किमब्रवीद्राजा पिता मे सत्यविक्रमः ।
पश्चिमं साधु संदेशमिच्छामि श्रोतुमात्मनः ॥ इति ।

अनेन चरमकाले पित्रा पुत्रोऽनुशासनीय इति उक्तं भवति । तथा च बृहदारण्यके— 'अथातः संप्रतिर्यदा

प्रैष्यन्मन्यते अथ पुत्रमाह' इत्यारभ्य 'तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति' इत्यन्तेन अयमर्थः। एवमानुशासनिकेऽपि वैशंपायनः—'एवमुक्तस्तु गाङ्गेयः पाण्डवानिदमब्रवीत्। धृतराष्ट्रमुखांश्चापि सर्वांश्च सुहृदस्तथा ॥ प्राणानुत्स्रष्टुमिच्छामि ते मानुज्ञातुमर्हथ। सत्येषु यतितव्यं वः सत्यं हि परमं बलम् ॥ आनृशंस्यपरैर्भाव्यं सदैव नियतात्मभिः। ब्राह्मण्यैर्धर्मशीलैश्च तपोनित्यैश्च भारताः ॥ इत्युक्त्वा सुहृदः सर्वान्संपरिष्वज्य चैव च। पुनरेवाब्रवीद्धीमान्युधिष्ठिरमिदं वचः ॥ ब्राह्मणाश्चैव ते नित्यं प्राज्ञाश्चैव विशेषतः। आचार्यऋत्विजश्चैव पूजनीया जनाधिप' ॥ इति। अत एवाश्रमवासाय प्रस्थितो धृतराष्ट्रः राज्यपालनप्रकारमुपदिश्य 'भीष्मेण सर्वमुक्तोऽसि कृष्णेन विदुरेण च। मयाप्यवश्यं वक्तव्यं प्रीत्या ते नरसत्तम' इति युधिष्ठिरं प्रति उक्तवान्।

इमां तु पश्चिमां वाचं व्याजहार पिता तव।
सिद्धार्थास्ते नरा रामम् आगतं सीतया सह।
लक्ष्मणं च महाबाहुं द्रक्ष्यन्ति पुनरागतम् ॥

इत्यकथयत् ॥ ततः 'कैकेयि, केदानीं सलक्ष्मणो राम:' इति वदन्तं भरतम् ,

स हि राजसुतः पुत्र चीरवासा महावनम् ।
दण्डकान्सह वैदेह्या लक्ष्मणानुचरो गतः ॥

इत्यब्रवीत् । तद्वचनसमनन्तरम् ,

कच्चिन्न ब्राह्मणधनं हृतं रामेण कस्यचित् ।
कच्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः ॥
न रामः परदारांश्च चक्षुर्भ्यामपि पश्यति ।

इति तेन पृष्टा सा—

मया तु पुत्र श्रुत्वैवं रामस्यैवाभिषेचनम् ॥
याचितस्ते पिता राज्यं रामस्य च विवासनम् ।
स स्ववृत्तिं समास्थाय पिता ते तत्तथाकरोत् ।
रामश्च सह सौमित्रिः प्रेषितः सह सीतया ॥
तमपश्यन्प्रियं पुत्रं महीपालो महायशाः ।
पुत्रशोकपरिद्यूनः पञ्चत्वमुपपेदिवान् ॥

तत्पुत्र शीघ्रं विधिवद्विधिज्ञै-
र्वसिष्ठमुख्यैः सहितो द्विजेन्द्रैः ।

संकाश्य राजानमदीनसत्त्व-
माखानमुर्व्यामभिषेचयस्व ॥

इत्यवदत् ॥ त्रिसप्ततिचतुःसप्ततितमयोः—ततो भरतः पितृमरणरामविवासननिदानभूतां राज्यकामुकां कैकेयी-मेवमवदत्—

किं नु कार्यं हतस्येह मम राज्येन शोचतः ।
विहीनस्याथ पित्रा च भ्रात्रा पितृसमेन च ॥

ननु त्वार्योऽपि धर्मात्मा त्वयि वृत्तिमनुत्तमाम् ।
वर्तते गुरुवृत्तिज्ञो यथा मातरि वर्तते ॥

तथा ज्येष्ठा हि मे माता कौसल्या दीर्घदर्शिनी ।
त्वयि धर्मं समास्थाय भगिन्यामिव वर्तते ॥

तस्याः पुत्रं कृतात्मानं चीरवल्कलवाससम् ।
प्रस्थाप्य वनवासाय कथं पापे न शोचसि ॥

अहं हि पुरुषव्याघ्रावपश्यन्रामलक्ष्मणौ ।
केन शक्तिप्रभावेण राज्यं रक्षितुमुत्सहे ॥

अथ वा मे भवेच्छक्तिर्योगैर्बुद्धिबलेन वा ।
सकामां न करिष्यामि त्वामहं पुत्रगृद्धिनीम् ॥

अस्मिन्कुले तु पूर्वेषां ज्येष्ठो राज्येऽभिषिच्यते ।
अपरे भ्रातरस्तस्मिन्प्रवर्तन्ते समाहिताः ॥

निवर्तयित्वा रामं च तस्याहं दीप्ततेजसः ।
दासभूतो भविष्यामि सुस्थितेनान्तरात्मना ॥

भ्रूणहत्यामसि प्राप्ता कुलस्यास्य विनाशनात् ।
कैकेयि नरकं गच्छ मा च भर्तुः सलोकताम् ॥

सा त्वमग्निं प्रविश वा स्वयं वा दण्डकान्व्रज ।
रज्जुं बद्ध्वाथ वा कण्ठे न हि तेऽन्यत्परायणम् ॥

ननु 'आचार्यश्च पिता चैव माता भ्राता च पूर्वजः । नार्तेनाप्यवमन्तव्याः' इत्यादिमनुवचनपर्यालोचनया मातृनिन्दायाः प्रतिषेधावगमात् भरतेन कथं माता निन्दिता इति चेन्न । अधर्ममार्गप्रवृत्ता गुर्वादयोऽपि राज्ञा शिक्षणीयाः । तथा च मनुः—' पिताचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः । नादण्ड्यो नाम राज्ञोऽस्ति यस्त्वधर्मेण तिष्ठति ॥' इति । राजधर्मेऽपि 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ इदं च कैकेयी भर्तृमरणसंपादकराम-

विवासनकरणात् महापराधवतीति तस्या दण्डो युक्तः । तस्य च— 'गुरून्पुरोहितान्विप्रान्प्राग्दण्डेनैव दण्डयेत् । विवादिनो नरांश्चान्यान्दोषिणोऽर्थेन दण्डयेत् । महापराधयुक्तांश्च वधदण्डेन दण्डयेत् ॥' इति बृहस्पतिवचनेन गुर्वादिभेदेन दण्डस्य व्यवस्थापितत्वात्, मातुः कैकेय्या गुरुत्वात् वाग्दण्डनं यत्कृतं तद्युक्तमेव ॥ पञ्चसप्ततितमे—अथ कौसल्या सकरुणं विलपतो भरतस्याक्रोशश्रवणेन समागतं भरतमवगत्य तद्दर्शनसमुत्सुका बभूव । भरतशत्रुघ्नावपि समासाद्य कौसल्यां स्वसंदर्शनसमसमयसमाधिकशोकवशेन भूमौ वेष्टमानाम्,

पर्यष्वजेतां दुःखार्तां पतितां नष्टचेतनाम् ।

ततः,

भरतं प्रत्युवाचेदं कौसल्या भृशदुःखिता ।
इदं ते राज्यकामस्य राज्यं प्राप्तमकण्टकम् ॥
प्रस्थाप्य चीरवसनं पुत्रं मे वनवासिनम् ।
कैकेयी कं गुणं तत्र पश्यन्ती क्रूरदर्शिनी ॥
क्षिप्रं ममापि कैकेयी प्रस्थापयितुमर्हति ।

अथ वा स्वयमेवाहं सुमित्रानुचरा सुखम् ॥

अग्निहोत्रं पुरस्कृत्य प्रस्थास्ये यत्र राघवः ।

ननु 'अग्निहोत्रं पुरस्कृत्य प्रस्थास्ये यत्र राघवः' इत्युक्तम् । तदनुपपन्नम् । मृते भर्तरि तत्संस्कारस्यावश्यकर्तव्यत्वेन संस्कार्यस्य राज्ञः संस्कारकर्तुर्भरतस्य च संनिधाने तावानाहृत्य वनं प्रत्यग्निहोत्रनयनस्य अयुक्तत्वात् । न च ज्येष्ठस्यैवाधिकारात्, 'भरतः प्रेतकार्याणि मा स्म कार्षीद्गतायुषः' इति पित्रा प्रतिषिद्धस्य भरतस्यानधिकाराच्च भर्तृशरीरं गृहीत्वा रामसमीपं गच्छामीत्येतदभिप्रायेणोक्तमिति वाच्यम् । तर्हि अग्रेऽपि भरतेन संस्कारो न कर्तव्यः स्यात् । किं च, कैकेयीं परित्यज्य कौसल्यासुमित्राभ्यामपि नयनमनुपपन्नम् । अश्वमेधादिक्रतुसंबन्धेन पत्नीत्वात्, अतः केवलाग्नीनां संस्कार्यसहितानां वनं प्रति नयनमनुपपन्नमेवेति चेन्न । प्रियं चेद्भरतस्यैव तद्रामप्रव्राजनं भवेत् । 'मा स्म मे भरतः कार्षीत्प्रेतकृत्यं गतायुषः' इति राजवचनात् रामगमनमङ्गीकुर्वतो भरतस्य पितृसंस्कारेऽनधिकारात् भरतकृतशप-

थात्प्राक्तदाशयस्याज्ञानात् रामसमीपमेव संस्कार्येण सहाग्नीनां नयनं युक्तम् । यच्चोक्तं कैकेय्या अपि पत्नीत्वात्तया विना कथमग्नीनां नयनम् इति तदपि न । कौसल्याया ज्येष्ठत्वात् 'ज्येष्ठा चेदग्निसंयुक्ता ह्यन्या गच्छेद्यथासुखम्' इति वचनेन ज्येष्ठाया एवाग्निसंबन्धावगमात् 'अगृह्णां यच्च ते पाणिमग्निं पर्यणयं च यत् । अनुजानामि तत्सर्वमस्मिल्लोके परत्र च ॥ केवलार्थपरां हित्वा त्यक्तधर्मां त्यजाम्यहम्' इत्यादिवचनपर्यालोचनया कैकेय्याः परित्यागावगमाच्च तां परित्यज्याप्यग्नीनां नयने बाधकाभावात् । तस्मात् 'अग्निहोत्रं पुरस्कृत्य प्रस्थास्ये यत्र राघवः' इति वचनं युक्तमेव । अत एवाग्रे भरतकृतशपथैरवगततदाशया कौसल्या भरतकृतं भर्तृसंस्कारमभ्युपेत्य वनं न गतवती इति ।

इत्यादिबहुभिर्वाक्यैः क्रूरैः संभर्त्सितोऽनघः ।
कौसल्यां प्रत्युवाचेदं शोकैर्बहुभिरावृताम् ॥

कृता शास्त्रानुगा बुद्धिर्मा भूत्तस्य कदाचन ।
सत्यसन्धः सतां श्रेष्ठो यस्यार्योऽनुमते गतः ॥

अनेन सच्छास्त्राविश्वासः पापाधायक इत्युक्तं भवति । तथा चानुशासनिके 'यः प्रवृत्तां श्रुतिं सम्यक्शास्त्रं वा मुनिभिः कृतम् । दूषयत्यनभिज्ञाय तं विद्याद्ब्रह्मघातकम्' इति ।

प्रैष्यं पापीयसां यातु सूर्यं च प्रति मेहतु ।
हन्तु पादेन गां सुप्तां यस्यार्योऽनुमते गतः ॥

अत्र पापीयसां निकृष्टानां सेवनं पापाधायकमित्यवगम्यते । तथा उद्योगपर्वणि 'उत्तमानेव सेवेत प्राप्तकाले तु मध्यमान् । अधमांस्तु न सेवेत यदीच्छेद्भूतिमात्मनः ॥' इति । द्वितीयचरणेन सूर्याभिमुखतया विण्मूत्रविसर्जनं पापाधायकम् । तथा च पराशरः— 'प्रत्यादित्यं प्रत्यनलं प्रतिगाश्च प्रतिद्विजम् । ये मूत्रयन्ति पथि च ते भवन्ति गतायुषः' इति । 'हन्तु ते भवन्ति गतायुषः' इति । 'हन्तु पादेन गाम्' इत्यनेन गवां पदा ताडनं पापाधायकम् । अथ पदा स्पर्शमपि प्रतिषेधति । एवं आपस्तम्बोऽपि 'देवतानां राज्ञश्च ब्राह्मणस्य गोरिति पदोपस्पर्शनं वर्जयेत्' इति ।

कारयित्वा महत्कर्म भर्ता भृत्यमनर्थकम् ।
अधर्मो यस्य सोऽस्यास्तु यस्यार्थोऽनुमते गतः ॥

अनेन कर्मकराणां भृत्यादाने महान्दोष इति सूचितम् । अत एव भृत्यानां भृतिदाने कालातिक्रमणेऽप्यनर्थ उक्तः । सभापर्वणि 'कालातिक्रमणाच्चैव भक्तचेतनयोर्भृताः । भर्तुः कुप्यन्ति दौर्गत्या सोऽनर्थः सुमहान्स्मृतः' इति ॥

परिपालयमानस्य राज्ञो भूतानि पुत्रवत् ।
ततस्तु द्रुह्यतां पापे यस्यार्थोऽनुमते गतः ॥

इत्यनेन सम्यक्परिपालनं कुर्वतो राज्ञो द्रोहो न कर्तव्यः इति सूचितम् । आनुशासनिके 'भर्तृपिण्डमुपाश्नन्यो राजद्विष्टानि सेवते । सोऽपि मोहसमापन्नो मृतो जायेत वानरः' इति । गारुडपुराणेऽपि 'गुरुमित्रद्रुहः पापा ये च स्वामिद्रुहो जनाः । अमेध्ये क्रिमयः सर्वे मृगव्याधा भवन्ति ते ॥'

बलिषड्भागमुद्धृत्य नृपस्यारक्षतः प्रजाः ।
अधर्मो योऽस्य सोऽस्यास्तु यस्यार्थोऽनुमते गतः ॥

इत्यनेन षड्भागं गृहीत्वा धर्मेण प्रजा अरक्षतो राज्ञो महान्दोष इति सूचितम् । तथा च मनुः— ‘अरक्षितारं राजानं बलिषड्भागहारिणम् । तमाहुः सर्वलोकस्य समग्रमलहारिणम्’ इति ॥

संश्रुत्य च तपस्विभ्यः सत्रे वै यज्ञदक्षिणाम् ।
तां विप्रलपतां पापं यस्यार्योऽनुमते गतः ॥

इत्यनेन द्विजेभ्यः प्रतिश्रुत्य अदाने दोष इत्युक्तं भवति । तथा च माधवीये— ‘प्रतिश्रुत्य द्विजेभ्यश्च अदत्त्वा मद्गुको भवेत्’ इति । यज्ञे उपदिष्टदक्षिणाया अदाने प्रत्यवायो भवतीत्युक्तम् । तथा चापस्तम्बः— ‘योऽदक्षिणेन यज्ञेन स यज्ञः प्रक्षामो नायुरुपदधात् यद्यादिष्टां दक्षिणामन्तरि या दुर्वारा प्रतिष्ठिता या देयासां प्रायश्चित्तिः’ इति ॥

उपदिष्टं सुसूक्ष्मार्थं शास्त्रं यत्नेन धीमता ।
स नाशयतु दुष्टात्मा यस्यार्योऽनुमते गतः ॥

इत्यनेन सद्गुरुणोपादिष्टवेदशास्त्रादिपरित्यागे प्रत्यवा-

यो भवतीत्युक्तम् । तथा च मनुः—'ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः । गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट्' इति ॥

पायसं कृसरं छागं वृथा सोऽश्नातु निर्घृणः ।
गुरूंश्चाप्यवजानातु यस्यार्योऽनुमते गतः ॥

इत्यनेन पायसाद्युत्तमान्नं देवब्राह्मणादिभ्योऽदत्त्वा न भक्षणीयमित्युक्तं भवति । तथा च मनुः—'वृथा कृसरसंयावं पायसापूपमेव च । अनुपाकृतमांसं च प्रयत्नेन विवर्जयेत्' इति । गुरूंश्चाप्यवजानात्वित्यनेन गुर्वाद्यवमानं न कर्तव्यमिति सूचितम् । तथा च मनुः—'आचार्यमृत्विजश्चैव गुरूंश्चैव तपस्विनम् । मुनींश्चाप्यवमन्यन्ते ते भवन्ति हि राक्षसाः ॥

गाश्च स्पृशतु पादेन गुरून्परिवदेत च ।
मित्रे द्रुह्येत सोऽत्यन्तं यस्यार्योऽनुमते गतः ॥

इति गवां पादस्पर्शने दोषः । तथा चानुशासनिके—'पादमुद्यम्य यो मर्त्यः स्पृशेद्गाश्च सुदुर्मतिः । ब्राह्मणं वा

महाभागं दीप्यमानं तथानलम् ॥ तस्य दोषान्प्रवक्ष्यामि तच्छृणुध्वं समाहिताः । दिवं स्पृशत्यशब्दोऽस्य अश्नन्ति पितरश्च वै ॥ वैमनस्यं च देवानां कृतं भवति पुष्कलम् । पावकश्च महातेजा हव्यं न प्रतिगृह्णाति । आजन्मनां शतं चैव नरके पच्यते तु सः । निष्कृतिर्न च तस्यापि अनुमुह्यन्ति कर्हिचित् । तस्माद्गावो न पादेन स्प्रष्टव्या वै कदाचन । ब्राह्मणश्च महातेजा दीप्यमानस्तथानलः ॥ श्रद्दधानेन मर्त्येन आत्मनो हितमिच्छता' इति । गुरून्परिवदेत चेत्यनेन गुर्वादीनां तिरस्कारो न कर्तव्य इति सूचितम् । तथा च पराशरः—'गुरुं त्वंकृत्य हुंकृत्य विप्रं निर्जित्य वादतः । अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः' इति । 'मित्रे द्रुह्येत' इत्यनेन मित्रद्रोहो न कर्तव्य इति सूचितम्— तथा च गारुडपुराणे—'गुरुमित्रद्रुहः पापा ये च स्वामिद्रुहो जनाः । अमेध्ये क्रिमयः सर्वे मृगव्याघ्रा भवन्ति ते ॥' इति ॥

विश्वासात्कथितं किंचित्परिवादं मिथः क्वचित् ।
विवृणोतु स दुष्टात्मा यस्यार्योऽनुमते गतः ॥

इत्यनेन विश्वासेन कथितं परिवादं न विवृणुयात् इति सूचितम् । तथा च सामविधानब्राह्मणे 'गुह्यं प्रकाशयन्नधर्मभाक् भवति' इति । आनुशासनिकेऽपि 'विश्वासहर्ता तु नरो मीनो जायेत दुर्मतिः । भूत्वा मीनोऽष्टवर्षाणि मृगो जायेत भारत' इति ॥

**पुत्रदारैश्च भृत्यैश्च स्वगृहे परिवारितः ।**
**स एको मृष्टमश्नातु यस्यार्थोऽनुमते गतः ॥**

इत्यनेन पुत्रादिभिः परिवृतः तान्परित्यज्य स्वयमेव मृष्टान्नं नाश्नीयादिति सूचितम् । तथा च वामनपुराणे— 'बुभुक्षितेषु भृत्येषु य एकोऽश्नाति मानवः । श्वयोनिं स समासाद्य चण्डालो जायते नरः ॥' इति ॥

**अप्राप्य सदृशान्दारानपत्यः प्रमीयताम् ।**
**अनवाप्तक्रियाधर्मो यस्यार्थोऽनुमते गतः ॥**

इत्यनेन सदृशदाराद्यप्राप्तिः पापस्य फलमिति सूचितम् । तथा च माधवीये— 'अपकारं तु यः कुर्यादुपकर्तरि यन्नरः । श्वासकासीज्वरीसर्वगात्ररोगी मृतप्रजः ॥ मृतपुत्रोऽथ वन्ध्यः स्याद्यो द्वेष्टि परसंततिम् ।' इति ।

तत्र सदृशदाराप्राप्तौ मार्कण्डेयपुराणे— ‘ब्राह्मणः क्षत्रियो वैश्यः स्ववर्णे पाणिसंग्रहम् । अकृत्वा त्वन्यजायायाः पतन्ति नृप संग्रहात् ॥

राजस्त्रीबालवृद्धानां वधे यत्पापमुच्यते ।
भृत्यत्यागे च यत्पापं तत्पापं प्रतिपद्यताम् ॥

इत्यनेन राजादिवधे भृत्यत्यागे च महान्दोष इत्युक्तं भवति । राजन्यवैरिहन्ता च तथैव गुरुतल्पगः । तप्तकुम्भे स्वसागामी हन्ति राजभटांश्च यः’ इति विष्णुपुराणे । तत्रैव, ‘स्त्रियं हत्वा तु दुर्बुद्धिर्यमस्य विषयं गतः । बहून्क्लेशान्समासाद्य संसारांश्चैकविंशतिम्’ ॥ इति । बालकन्यां यदा हन्यात्तदा तेनैव कारयेत् । शिशुं हत्वा यदा शूद्रो गर्भमात्रं यदा हरेत् ॥ हस्तद्वयं तदा च्छित्वा निर्वास्यो विषयाद्बहिः ।’ इति । भृत्यत्यागे आनुशासनिके भीष्मः— ‘उपाध्यायांश्च भृत्यांश्च भक्तांश्च भरतर्षभ । ये त्यजन्ति विकारां स्त्रीं ते वै निरयगामिनः ॥’

संग्रामे समुपोढे तु शत्रुपक्षभयङ्करे ।
पलायमानो वध्येत यस्यार्योऽनुमते गतः ॥

इत्यनेन शत्रुसंमुखतयैव मर्तव्यं परावृत्य मरणे महान्दोष इति सूचितः। तथा च मनुः—'यत्त्वास्य सुकृतं किंचिदमुत्रार्थमुपार्जितम्। भर्ता तत्सर्वमादत्ते परावृत्य हतस्य च' इति॥

**कपालपाणिः पृथिवीमटतां चीरसंवृतः**
**भिक्षमाणो यथोन्मत्तो यस्यार्योऽनुमते गतः॥**

इत्यनेन ब्रह्महत्याप्रायश्चित्तसूचककपालपाण्यादिकथनात् ब्रह्महत्यादोषः सूचितः। तथा च मनुः—'ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्। भैक्ष्याश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम्'॥ हेमाद्रौ मार्कण्डेयः— अज्ञानाद्ब्राह्मणं हत्वा चीरवासा जटी भवेत्। स्वेनैव हतविप्रस्य कपालमपि धारयेत्॥ तदभावे मुनिश्रेष्ठ कपालं चान्यमेव वा। वन्याहारो भवेन्नित्यमेकाहारो मिताशनः॥ तीर्थान्युपवसेच्चैव पुण्यक्षेत्राश्रमाणि च। यदि वन्यैर्न जीवेत ग्रामे भिक्षां समाचरेत्॥ ततः शुद्धिमवाप्नोति ब्रह्महा रघुनन्दन' इति॥

**पाने प्रसक्तो भवतु स्त्रीपक्षेषु च नित्यशः।**

कामक्रोधाभिभूतश्च यस्यार्योऽनुमते गतः ॥

इत्यनेन मद्यस्त्र्याद्यासक्त्या पापमित्युक्तं भवति । तथा च मनुः— 'स्त्रियोऽक्षा मृगपापानं वाक्पारुष्यं च पञ्चमम् । महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ एतान्दोषान्नरः प्राज्ञो बुद्धया बुद्धया विवर्जयेत्' इति। कामक्रोधयोस्तु गीतायाम्—'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभः तस्मादेतत्त्रयं त्यजेत्' इति ॥

मा स्म धर्मे मनो भूयादधर्मं स निषेवते ।
अपात्रवर्षी भवतु यस्यार्योऽनुमते गतः ॥

इत्यनेन धर्मे द्वेषः, अधर्मे स्नेहः, अपात्रे प्रदानं च पापफलमित्युक्तं भवति । तथा चानुशासनिके— 'ये नास्तिका निष्क्रियाश्च गुरुशास्त्रातिलङ्घिनः । अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः' इति । अपात्रदानं प्रतिषेधति गौतमः— 'प्रतिश्रुत्याप्यधर्मसंयुक्ते न दद्यात्' इति। मनुरपि— 'न चाण्वपि प्रयच्छेत्तु वैडालव्रतिके द्विजे । न बकव्रतिके पापे नावेदविदि धर्मवित् ॥ त्रिष्व-

ष्येतेषु दत्तं हि विधिनाप्यार्जितं धनम् । दातुर्भवेदनर्थाय परत्रादातुरेव च ॥' इति ॥

उभे संध्ये शयानस्य यत्पापं परिकल्प्यते ।
तच्च पापं भवेत्तस्य यस्यार्थोऽनुमते गतः ॥

इत्यनेन संध्ययोर्निद्रा न कर्तव्या इति सूचिता। तथा च मनुः— 'नाश्नीयात्संधिवेळायां न गच्छेन्नापि संविशेत् ।' इति ॥

यदग्निदायके पापं यत्पापं गुरुतल्पगे ।
मित्रद्रोहे च यत्पापं तत्पापं प्रतिपद्यताम् ॥

इत्यनेन गृहादिदाहे महत्पातकं भवतीत्युक्तम् । तथा चानुशासनिके— 'आश्रमे वा वने वापि ग्रामे वा नगरे पुरे । अग्निं समुत्सृजेन्मोहात्तं विद्याद्ब्रह्मघातकम् ॥' इति । गुरुतल्पगे माधवीये— 'मनसापि गुरोर्भार्यां यः शिष्यो याति पापकृत् । श्वयोनौ च स संभूतस्त्रीणि वर्षाणि जीवति ॥ तत्रापि निरयं प्राप्तः क्रिमियोनौ प्रजायते ॥' इति । मित्रद्रोहे पूर्वमेवोदाहृतम् ॥

देवतानां पितॄणां च मातापित्रोस्तथैव च ।
मा स्म कार्षीत्स शुश्रूषां यस्यार्योऽनुमते गतः ॥

इत्यनेन देवतादीनां शुश्रूषाविद्वेषे पापं भवतीति सूचितम् । तथा च मनुः—'तेषां त्रयाणां शुश्रूषा परमं तप उच्यते । अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥' इति ॥

सतां लोकात्सतां कीर्त्याः सज्जुष्टात्कर्मणस्तथा ।
भ्रश्यतु क्षिप्रमद्यैव यस्यार्योऽनुमते गतः ॥

इत्यनेन सत्कर्मपरित्यागः पापाधायक इत्युक्तो भवति । तथा च माधवीये—'देवकार्यमकृत्वा तु पितृकार्यमथापि वा । अनिर्वाप्य नरो ह्यश्नन्मृतो जायति वायसः ॥

ऋतुस्नातां सतीं भार्यामृतुकालानुरोधिनीम् ।
अतिवर्तेत दुष्टात्मा यस्यार्योऽनुमते गतः ॥

इत्यनेन ऋतुकालानभिगमने दोष इत्युक्तम् । तथा च याज्ञवल्क्यः—'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥' इति ॥

तृषार्ते सति पानीये विप्रलम्भेन योजयेत् ।
यत्पापं लभते तत्स्याद्यस्यार्योऽनुमते गतः ॥

इत्यनेन तृषार्तस्य पानीयविप्रलम्भो न कर्तव्य इत्युक्तम् । तथा चानुशासनिके-- 'गोकुलस्य तृषार्तस्य जलार्थे वसुधाधिप । उत्पादयति यो विघ्नं तं विद्याद्ब्रह्मघातकम् ॥' इति ॥

विहीनां पतिपुत्राभ्यां कौसल्यां पार्थिवात्मजः ।
एवमाश्वासयन्नेव दुःखार्तो निपपात ह ॥

तथा तु शपथैः क्लिष्टैः शपमानमचेतनम् ।
भरतं शोकसंतप्तं कौसल्या वाक्यमब्रवीत् ॥

मम दुःखमिदं पुत्र भूयः समुपजायते ।
शपथैः शपमानो हि प्राणानुपरुणत्सि मे ॥

दिष्ट्या न चलितो धर्मादात्मा ते सह लक्ष्मणः ।
वत्स सत्यप्रतिज्ञो मे सतां लोकानवाप्स्यसि ॥

अनेन सर्गेण प्राप्तं संशयं शपथेनापि परिहरेदिति सूचितम् । तथा च बिसस्तैन्यसंशयः सप्तर्षिभिः शपथेन निवर्तित इति प्रतिपादितमानुशासनिके— 'श्रमेण महता

कृत्वा ते बिसानि कलापराः । तीरे निक्षिप्य पद्मिन्या-
स्तर्पणं चक्रुरम्भसा ॥ अथोत्थाय जलात्तस्मात्सर्वे ते
समुपागमन् । नापश्यंश्चापि ते तानि बिसानि पुरुषर्ष-
भाः । ऋषय ऊचुः — 'केन क्षुधा परीतानामस्माकं
पापकर्मणा । नृशंसेनापनीते बिसान्यां हारकाङ्क्षि-
णाम् । ते शङ्कमानास्त्वन्योन्यं पप्रच्छुर्द्विजसत्तमाः ॥
ते ऊचुः समयं सर्वे कुर्म इत्यरिकर्शन । तदुक्त्वा बाढमि-
त्येवं सर्व एव तदा समम् ॥ क्षुधार्ताः सुपरिश्रान्ताः
शपथायोपचक्रमुः । अत्रिरुवाच— 'स गां स्पृशतु
पादेन सूर्यं च प्रतिमेहतु । अनध्यायेष्वधीयेत बिस-
स्तैन्यं करोति यः । शरणागतं हन्तु सखं स्वसुतां
चोपजीवतु ॥ अर्थान्काङ्क्षतु कीनाशाद्बिसस्तैन्यं क-
रोति यः ।' कश्यपः— सर्वत्र सर्वं लपतु न्यासलोपं
करोतु च । कूटसाक्षित्वमध्येतु बिसस्तैन्यं करोति यः ।
वृथा मांसाशनश्चास्तु वृथा दानं करोतु च ।
यातु स्त्रियं दिवा चैव बिसस्तैन्यं करोति यः ।
भरद्वाज उवाच— 'नृशंसस्त्यक्तधर्मास्तु स्त्रीषु ज्ञातिषु
गोषु च । ब्राह्मण्यं चापि जयतां बिसस्तैन्यं क-

रोति यः । उपाध्यायमधःकृत्वा ऋचोऽध्येतु यजूंषि च। जुहोतु च स कक्षाग्नौ बिसस्तैन्यं करोति यः ॥' जमदग्निरुवाच— 'पुरीषमुत्सृजत्वप्सु हन्तु गां चैव दुह्यतु । अनृतौ मैथुनं यातु बिसस्तैन्यं करोति यः ॥ द्वेष्यो भार्योपजीवी स्याद्दूरबन्धुश्च वैरवान्। अन्योन्यस्याऽतिथिश्चास्तु बिसस्तैन्यं करोति यः ॥ गौतमः—'अधीत्य वेदांस्त्यजतु त्रीनग्नीनपविध्यतु। विक्रीणातु तथा सोमं बिसस्तैन्यं करोति यः । विश्वामित्र उवाच— 'जीवतो वै गुरून्भृत्यान्भरन्त्वस्य परे जनाः । अगतिर्बहुपुत्रः स्याद्बिसस्तैन्यं करोति यः । अशुचिर्ब्रह्मकूटोऽस्तु ऋद्धया चैवाप्यहंकृतः । कर्षको मत्सरी चास्तु बिसस्तैन्यं करोति यः ॥ वर्षाचरोऽस्तु भृतको राज्ञश्चास्तु पुरोहितः । अयाज्यस्य भवेदृत्विग्बिसस्तैन्यं करोति यः ॥' अरुन्धत्युवाच— 'नित्यं परिभवेच्छ्वश्रूं भर्तुर्भवतु दुर्मनाः । एका स्वादु समश्नातु बिसस्तैन्यं करोति या ॥ ज्ञातीनां गृहमध्यस्था सक्तूनत्तु दिनक्षये । अभाग्यावीरशूरास्तु बिसस्तैन्यं करोति या ॥' गण्डोवाच— 'अनृतं भाषतु सदा बन्धुभिश्च विरुध्यतु ।

ददातु कन्यां शुल्केन बिसस्तैन्यं करोति या ॥ स्थाप-
यित्वा स्वयं प्राश्याद्यस्य जीर्यतु चैव ह । विकर्मणा
प्रमीयेत बिसस्तैन्यं करोति या ॥' पशुसख उवाच—
'दास एव प्रजायेतामप्रसूतिरकिंचनः । दैवतेष्वनमस्कारो
बिसस्तैन्यं करोति या ॥' शुनसख उवाच— 'अथर्ववे
दुहितरं दातु छन्दोगे वा चरितब्रह्मचर्ये । अथर्वणं वेद-
मधीत्य विप्रः स्नायीत वा यो हरते बिसानि ॥' ऋषय
ऊचुः 'इष्टमेतद्द्विजातीनां योऽयं ते शपथः कृतः ।
त्वया कृतं बिसस्तैन्यं सर्वेषां नः शुनः सख ॥' 'न्यस्त-
मद्य नपश्यद्भिर्यदुक्तं कृतकर्मभिः । सत्यमेतन्न मिथ्यैत-
द्बिसस्तैन्यं मया कृतम् । मया ह्यन्तर्हितानीह बिसानि वा
विपश्यत ॥ परीक्षार्थं भगवतां कृतमेतन्मयानघाः'
इति । तथा पुष्करस्तैन्ये भृग्वादिभिः शपथेन संशयो
निवारित इति प्रतिपादितम् । तत्रैव ते निश्चितास्तत्र
महर्षयस्तु संपश्यन्तो धर्ममेतन्नरेन्द्राः । ततोऽशपन्त शप-
थान्पर्यायेण सहैव ते पार्थिवपुत्रपौत्रैः ॥ भृगुरुवाच—
'प्रत्याक्रोशेदिहाक्रुष्टस्ताडितः प्रतिताडयेत् । खादेच्च पृष्ठ-
मांसानि यस्ते हरति पुष्करम् ॥' वसिष्ठ उवाच— 'आ-

स्वाध्याय परे लोके श्वानं च परिकर्षतु । पुरे च भिक्षुर्भवतु यस्ते हरति पुष्करम् ॥' कश्यप उवाच— सर्वत्र सर्वं लपतु न्यासे लोभं करोतु च । कूटसाक्षित्वं च यातु यस्ते हरति पुष्करम् ॥' गौतमः– 'जीवत्वहंकृतो बुद्ध्या विषमेण समेन सः । कर्षको मत्सरी चास्तु यस्ते हरति पुष्करम् ॥' अङ्गिरा उवाच– 'अशुचिर्ब्रह्मकूटस्तु श्वानं च परिकर्षतु । ब्रह्महा निकृतिश्चास्तु यस्ते हरति पुष्करम् ॥' धुन्धुमार उवाच— 'अकृतज्ञस्तु मित्राणां शूद्राणां च प्रजायतु । एकः संपन्नमश्नातु यस्ते हरति पुष्करम् ॥' पुरुरुवाच— 'चिकित्सायां प्रचरतु भार्यया चैव पुष्यतु । श्वशुरात्तस्य वृत्तिः स्याद्यस्ते हरति पुष्करम् । दिलीप उवाच— 'उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः । तस्य लोकान्स व्रजतु यस्ते हरति पुष्करम्' शुक उवाच— 'वृथा मांसं समश्नातु दिवा गच्छतु मैथुनम् । प्रेष्यो भवतु राज्ञश्च यस्ते हरति पुष्करम् ॥' जमदग्निरुवाच— 'अनध्यायेष्वधीयीत मित्रं श्राद्धे च भोजयेत् । श्राद्धे शूद्रस्य चाश्नीयाद्यस्ते हरति पुष्करम् ॥ शिबिरुवाच— 'अनाहिताग्निर्म्रियतां यज्ञे विघ्नं करोतु

च। तपस्विभिर्विरुध्येच्च यस्ते हरति पुष्करम् ॥' ययातिरुवाच— 'अनृतौ व्रती जटी चैव भार्यायां स प्रजायतु। निराकरोतु वेदांश्च यस्ते हरति पुष्करम् ॥' नहुष उवाच— 'अतिथिर्गृहसंस्थोऽस्तु कामवृत्तस्तु दीक्षितः। विद्यां प्रयच्छतु भृतेर्यस्ते हरति पुष्करम् ॥ नारद उवाच— 'गृहज्ञानी बहिः शास्त्रं पठतां विस्वरं पदम्। गरीयसोऽवजानातु यस्ते हरति पुष्करम् ॥' नाभाग उवाच— 'अनृतं भाषतु सदा सद्भिश्चैव विरुध्यतु। शुल्केन कन्यां ददातु यस्ते हरति पुष्करम् ॥' कविरुवाच— 'पद्भ्यां स मां ताडयतु सूर्यं च प्रतिमेहतु। शरणागतं संत्यजतु यस्ते हरति पुष्करम् ॥' विश्वामित्र उवाच— 'करोतु भृतको वर्षां राज्ञश्चास्तु पुरोहितः। ऋत्विगस्तु ह्ययाज्यस्य यस्ते हरति पुष्करम्' ॥ पर्वत उवाच— 'ग्रामे चाधिकृतः सोऽस्तु खरयानेन गच्छतु। शुनः कर्षतु वृत्त्यर्थं यस्ते हरति पुष्करम् ॥' भरद्वाज उवाच—'सर्वपापसमादानं नृशंसे चानृतेयतु। तत्तस्यास्तु सदा पापं यस्ते हरति पुष्करम् ॥' अष्टक उवाच— 'स राजास्त्वकृतप्रज्ञः कामवृत्तस्तु पापकृत्। अधर्मेणाभिशास्तूर्वीं यस्ते ह-

रति पुष्करम् ॥' गालव उवाच— 'पापिष्ठेभ्यस्तु सोऽर्घार्हः स नरोऽस्तु स्वपाककृत् । दत्त्वा दानं कीर्तयतु यस्ते हरति पुष्करम् ॥' अरुन्धत्युवाच— 'श्वश्रूापवादं वदतु भर्तुर्भवतु दुर्मना: । एका स्वादु समाश्नातु या ते हरति पुष्करम् ।' वालखिल्या ऊचु:– 'एकपादेन वृत्त्यर्थं ग्रामद्वारे स तिष्ठतु । धर्मज्ञस्त्यक्तधर्मोऽस्तु यस्ते हरति पुष्करम् ॥' शुनःसख उवाच— 'अग्निहोत्रमनादृत्य स सुखं स्वपतु द्विजः । परिव्राट् कामवृत्तोऽस्तु यस्ते हरति पुष्करम् ।' सुरभ्युवाच— 'वालजेन निदानेन कांस्यं भवतु दोहनम् । दुह्येत परवत्सेन यस्ते हरति पुष्करम्' इति ॥

षट्सप्ततितमे— ततः शोकसंतप्तहृदयो भरतः नायं क्लेशकाल: प्राप्तं कालमौर्ध्वदैहिकम् झटिति प्रवर्त्यतामिति वसिष्ठानुज्ञया राजानं तैलसंरोधादुद्धृत्य रत्नपरिष्कृते शयनीये संवेश्य,

ऋत्विक्पुरोहिताचार्यांस्त्वरयामास सर्वशः ॥

ये त्वग्नयो नरेन्द्रस्य अग्न्यागाराद्बहिष्कृताः।
ऋत्विग्भिर्याजकैश्चैव ते ह्रियन्त यथाविधि॥

हरणाविधिमाहापस्तम्बः— 'अथोल्मुकः प्रथमाः प्रतिपद्यन्ते न हीनमन्वाहरेयुः' इति। गौतमोऽपि— 'पूर्वमग्निं संस्कर्ता मुक्ताशिखः वध्यतः शवमनुपृष्ठं संभागनितरे'। ततः शिबिकायामारोप्य नीयमाने राजनि,

हिरण्यं च सुवर्णं च वासांस्याभरणानि च।
प्रकिरन्तो राजमार्गं नृपतेरग्रतो ययुः॥

ततश्चन्दनागरुकाष्ठैः सुनिचितां चितामधिरोप्य

तथा हुताशनं कृत्वा जेपुस्तस्य तदर्त्विजः।
जगुश्च ते यथाशास्त्रं तत्र सामानि सामगाः॥

सामगानकरणे गौतमः— 'अथो प्रस्थानं नाके सुपर्णमिति प्रामे गायेत्, धूम उदिते त्वेषस्ते धूम ऋण्वतीति, प्रज्वलिते अग्ने मृडमहां असीति द्वाभ्यां जगन्मज्योतिरिति च अनुगीतो ब्रह्मलोकमवाप्नोति वामदेव्यं

त्रिचे गायेदिति । ततः समागतनारीणां सकरुणं विल-पन्तीनां क्रौञ्चीनामिव निनदश्रवणेन द्विगुणीकृतशोका-वेगो भरतः सरयूतीरमाजगाम ।

कृत्वोदकं ते भरतेन सार्धं
नृपाङ्गना मन्त्रिपुरोहिताश्च ।
पुरं प्रविश्याश्रुपरीतनेत्रा
भूमौ दशाहं व्यनयन्त दुःखम् ॥

अनेनाशौचिभिर्यावदाशौचं निवापाञ्जलिं प्रदाय अक्षारलवणाशनभूशयनादिनियमवद्भिः स्थेयमिति सू-चितम् । तथा च मनुः—'अक्षारलवणाः स्युर्निमज्जेयुश्च ते त्र्यहम् । मांसाशनं तु नाश्नीयुः शयीरंश्च पृथक् क्षितौ' इति । बोधायनोऽपि— 'ज्योतिष्कृत्वागारं प्रविशन्त्येकरात्रमुपोष्य तेषामक्षारलवणभोजनमधःशयनं ब्रह्मचर्यमा दशरात्रात्' इति । प्रेतपत्न्या विशेषमाहा-पस्तम्बः 'यावज्जीवं प्रेतपत्नी ब्रह्मचर्यं क्षारलवणवर्जनं च' इति । मनुरपि— 'आसीता मरणात्क्षान्ता नियता ब्रह्मचारिणी' इति । संग्रहेऽपि विधवाधर्माः— 'अनु

याति न भर्तारं यदि दैवात्कथंचन तथापि शीलं संरक्ष्यं शीलभङ्गात्पतत्यधः ॥ तद्वैगुण्यादपि स्वर्गात्पतिः पतति नान्यथा । तस्याः पिता च माता च भर्तृवर्गस्तथैव च ॥ पत्यौ मृते च या योषिद्वैधव्यं पालयेत्क्वचित् । सा पुनः प्राप्य भर्तारं स्वर्गभोगान्समश्नुते ॥ विधवाकवरीबन्धो भर्तृबन्धाय जायते । शिरसो वपनं तस्मात्कार्यं विधवया सदा ॥ एकाहारः सदा कार्यो न द्वितीयः कदाचन । त्रिरात्रं पञ्चरात्रं वा पक्षव्रतमथापि वा ॥ कृच्छ्रं पराकं वा कुर्याच्चान्द्रायणमथापि वा । यवान्नैर्वा फलाहारैः शाकाहारैः पयोव्रतैः ॥ प्राणयात्रां प्रकुर्वीत यावत्प्राणः स्वयं व्रजेत् ॥ पर्यङ्कशायिनी नारी विधवा पातयेत्पतिम् । तस्माद्भूशयनं कार्यं पतिसौख्यसमीहया ॥ नैवाङ्गोद्वर्तनं कार्यं स्त्रिया विधवया क्वचित् । गन्धद्रव्यस्य संयोगो नैव कार्यस्तथा पुनः ॥ विष्णोस्तु पूजनं कार्यं पतिबुद्ध्या च नान्यथा । पतिमेव सदा ध्यायेद्विष्णुरूपधरं शिवम् ॥ यद्यदिष्टतमं लोके यच्च पत्युः समाहितम् । तत्तद्गुणवते देयं पतिप्रीणनकाम्यया ॥ नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि । कञ्चुकं न परीदध्याद्वासो न विकृतं वसेत् । अपृष्ट्वा

च सुतान्किञ्चिन्न कुर्याद्व्रततत्परा। एवं चर्यापरा नित्यं विधवापि शुभा मता। एवं धर्मसमायुक्ता विधवापि पतिव्रता। पतिलोकमवाप्नोति न भवेत्कापि दुःखिता॥ न गङ्गया तथा भेदो या नारी पतिदेवता। उमा शिवसमा साक्षात्तस्मात्तां पूजयेद्बुधः॥' हरिवंशे— 'पतिं संकल्पयित्वाथ चित्रस्थं वापि मृण्मयम्। तस्य पूजां सदा कुर्यात्सतां धर्ममनुस्मरन्' इति। मार्कण्डेयपुराणे तु तिलोदकपिण्डदानशयनादीनां फलविशेषोऽपि प्रतिपादितः। तत्र 'यद्बान्धवास्तोयं प्रयच्छन्ति तिलैः सह। यच्च पिण्डं प्रयच्छन्ति नीयमानस्तदश्नुते॥ भूमौ स्वपद्भिर्नात्यर्थं क्लेशमाप्नोति बान्धवैः। दानं ददद्भिश्च तथा जन्तुराप्यायते तथा॥ तैलाभ्यङ्गं बान्धवानां गात्रसंवाहनं स पश्यति। उपभुङ्क्ते तथा दत्तं तोयपिण्डोदकं भुवि' इति॥ सप्तसप्ततितमे—

ततो दशाहे विगते कृतशौचो नृपात्मजः।
द्वादशेऽहनि संप्राप्ते श्राद्धकर्माण्यकारयत्।

अत्र 'द्वादशेऽहनि श्राद्धकर्माण्यकारयत्' इत्येतत्

संस्कारात्प्राक् तैलद्रोण्यामनेकदिनसंस्थापितस्यापि तस्यापि आहिताग्नित्वात् संस्कारदिवसमारभ्येति ज्ञेयम् । तथा च उशना 'दाहाद्याशौचं कर्तव्यं द्विजातीनामग्निहोत्रिणां सपिण्डानां तु मरणे मरणादीतरेषु च' इति । पैठीनसीरपि— 'अनग्निमत उत्क्रान्तेराशौचादि द्विजातिषु । दाहादग्निमतो विद्याद्विदेशस्थे मृते सति' इति । ब्राह्मेऽपि —दाहादेव तु कर्तव्यस्तस्य वैतानिको विधिः' इति । ननु— 'शुद्धो विप्रो दशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ।' शावमाशौचदशरात्रमनृत्विक् दीक्षितब्रह्मचारी सपिण्डानामेकादशरात्रं क्षत्रियस्य द्वादशरात्रं वैश्यस्यार्धमासमेकमासं शूद्रस्य ' इति मनुगौतमवचनपर्यालोचनया क्षत्रियाणामेकादशाहद्वादशाहपर्यन्तसूतकस्य विद्यमानत्वेन तदनन्तरमेव सूतकनिवृत्तिदर्शनात्, 'ततो दशाहेऽतिगते कृतशौचो नृपात्मजः' इति कथमुक्तमिति चेन्न सर्वेषामेव वर्णानां सूतके मृतके तथा । दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत्' इति शातातपवचनपर्यालोचनया सर्ववर्णसाधारण्येन दशाहानन्तरमेव सूतकनिवृत्त्यवगमेन

तदभिप्रायकत्वेन विरोधाभावात् । द्वादशेऽहनि कर्तव्यश्राद्धानि च सपिण्डीकरणादीनि इति ज्ञेयमिति।

ब्राह्मणेभ्यो ददौ रत्नं धनमन्नं च पुष्कलम् ।
वासांसि च महार्हाणि रत्नानि विविधानि च ।
हास्तिकं बहु शुल्कं च गाश्चापि शतशस्तथा ।
दासीदासं च यानं च वेश्मानि सुमहान्ति च ।
ब्राह्मणेभ्यो ददौ पुत्रो राज्ञस्तस्यौर्ध्वदैहिकम् ।

अनेन परलोकं गतस्योत्तमलोकप्राप्त्यर्थं दानानि कर्तव्यानि इति सूचितम् । अत एव धृतराष्ट्रेण परलोकगतान्भीष्मादीनुद्दिश्य दानानि कृतानि इति प्रतिपादितमाश्रमवासिके पर्वणि— 'ततोऽभिरूपान्भीष्माय ब्राह्मणानृषिसत्तमान् । पुत्रार्थे सुहृदश्चैव स समीक्ष्य सहस्रशः । कारयित्वान्नपानानि यानान्याच्छादनानि च । सुवर्णमणिरत्नानि दासीदासमजाविकम् । कम्बलानि च रत्नानि ग्रामान्क्षेत्रानजाविकान् ॥ सालंकारान्गजानश्वान्कन्याश्चैव वरस्त्रियः । उद्दिश्योद्दिश्य सर्वेभ्यो ददौ स नृपसत्तमः । द्रोणं संकीर्त्य भीष्मं च सोमदत्तं च बाह्लिकम् । दुर्योधनं च राजानं पुत्रांश्चैव पृथक् पृथक् ॥

जयद्रथपुरोगांश्च सुहृदश्चापि सर्वशः । स आद्ययज्ञो ववृधे बहुशो धनदक्षिणः ॥ अनेकधनरत्नौघो युधिष्ठिरमते तदा ।' इति । ततस्त्रयोदशे दिवसे चितासंशोधनार्थमुपगतोऽतिदुःखितो भरतः

दृष्ट्वा भस्मारुणं तच्च दग्धास्थिस्थानमण्डलम् ।
स तु दृष्ट्वा रुदन्दीनः पपात धरणीतले ॥

तमवलोक्य भगवान्वसिष्ठ एवमवोचत्—

त्रयोदशोऽयं दिवसः पितुर्वृत्तस्य ते प्रभो ।
सावशेषास्थिनिचये किमिह त्वं विलम्बसे ॥

नन्वत्र त्रयोदशे दिवसे अस्थिसंचयनं कर्तव्यत्वेन प्रतीयते तदनुपपन्नम् 'अपरेद्युस्तृतीयस्यां पञ्चम्यां सप्तम्यां वा अस्थीनि संचिन्वन्ति' इत्यापस्तम्बसूत्रेण द्वितीयपञ्चमसप्तमदिनेष्वेव कर्तव्यत्वेन प्रतिपादितस्य अस्थिसंचयनस्य त्रयोदशेऽहनि कर्तुमशक्यत्वादिति चेन्न । द्वितीयादिदिवसेषु अस्थिसंचयनस्य कर्तव्यत्वेऽपि तच्छेषभूतलोष्टचयनस्य त्रयोदशे दिवसे करणसंभवात् लोष्टचयनस्यसं चयनशेषत्वं त्रयोदशदिनकर्तव्यत्वं चाहापस्त

स्वः— 'दिष्टगमनादयुक्ष्वहःसु अर्धमासमासकर्तृषु संवत्सरे वा निदधाति' इति । अत्र कपर्दिभाष्यम्—दिष्टगमनं दशममहः तस्मादयुक्षु विषमेष्वहःसु अहोरात्रेषु तस्मादेकादशाहप्रभृति तदहे पश्चाहे अयुक्षु अर्धमासप्रभृतिषु वा निदधाति लोष्ठचितं करोतीत्यर्थः । केचिद्दिष्टगमनं तस्मादयुक्षु इति तदनुपपन्नम् । दशाहे अन्यकर्मश्रवणात् अन्यच्च विरुद्धम् । दानप्रतिग्रहणे प्रतिषिध्येत इति धर्मशास्त्रे तथा भोजनं च । तस्माद्दशरात्रेऽतीत एव इति । अतः संचयनशेषभूतलोष्टचयनस्य त्रयोदशो दिवसः काल एवेति न किंचिदनुपपन्नम् ।

त्रीणि द्वन्द्वानि भूतेषु प्रवृत्तान्यविशेषतः ।
तेषु चापरिहार्येषु नैवं भवितुमर्हसि ॥

इति भरतं परिसान्त्व्य सावशेषं क्रियाकलापं कारयामास । अनेन क्लेशसमये महद्भिः शोकपरिहारोपयोगिनीभिः कथाभिः समाधानं कर्तव्यमिति सूचितम् । तथा च याज्ञवल्क्यः— 'कृतोदकान्समुत्तीर्णान्मृदुशाड्वलसंस्थितान् । स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥

मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् । करोति यः स संमूढो जलबुद्बुदसंनिभे ॥ पञ्चधा संभृतः कायो योऽयं पञ्चत्वमागतः । कर्मभिः स्वशरीरस्थैस्तत्र का परिदेवना । गन्त्री वसुमतीनाशमुदधिर्दैवतानि च ॥ फेनप्रख्यः कथं नाम मर्त्यलोके प्रयास्यति । कात्यायनोऽपि— एवं कृतोदकान्सम्यक् सर्वाञ्शाड्वलसंस्थितान् । आप्लुतान्पुनराचान्तान्वदेयुस्त्वनुयायिनः ॥ मा शोकं कुरुतानित्ये सर्वस्मिन्प्राणधर्मिणि । धर्मं कुरुत यत्नेन यो वः सह करिष्यति ॥ शोके दोषोऽपि याज्ञवल्क्येन दर्शितः— 'श्लेष्माश्रुबान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः । अतो न रोदितव्यं हि क्रियाः कार्याः प्रयत्नतः' इति ॥ अष्टसप्ततितमे— ततः सकलमरणरामविवासननिदानभूतां

विचकर्ष तदा कुब्जां क्रोशन्तीं धरणीतले ।
स बली बलवत्क्रोधाद्गृहीत्वा पुरुषर्षभः ।
कैकेयीमभिनिर्भर्त्स्य बभाषे परुषं वचः ।

अथ भरतः शत्रुघ्नवचनश्रवणसमनन्तरमेव भयचकितहृदयां शरणमभिकाङ्क्षन्तीं कैकेयीमवलोक्य तामिदमवोचत् ।

अवध्याः सर्वभूतानां प्रमदाः क्षम्यतामिति ।
हन्यामहमिमां पापां कैकेयीं दुष्टचारिणीम् ॥
यदि मां धार्मिको रामो नासूयेन्मातृघातकम् ।
इमामपि हतां कुब्जां यदि जानाति राघवः ।
त्वां च मां च हि धर्मात्मा नाभिभाषिष्यते ध्रुवम् ।

इति । तद्वचनाच्च शत्रुघ्नेन परित्यक्तां मन्थरां कैकेयी समाश्वासयति स्म ॥ एकोनाशीतितमे, ततः प्रव्राजिते रामभद्रे दिवमारूढे दशरथे शरणमभिकाङ्क्षमाणानस्मान्परिपालयितुमात्मानमभिषेचयेति वदतो राज्यकर्तॄञ्जनान्बहुप्रकारमुपालभ्य प्रदक्षिणीकृत्य चाभिषेचनिकं भाण्डं वनगमनकृतनिश्चयो भरतः

ज्येष्ठस्य राजता नित्यमुचिता हि कुलस्य नः ।
नैवं भवन्तो मां वक्तुमर्हन्ति कुशला जनाः ॥
रामः पूर्वो हि नो भ्राता भविष्यति महीपतिः ।
अहं त्वरण्ये वत्स्यामि नव वर्षाणि पञ्च च ॥
आनयिष्याम्यहं ज्येष्ठं भ्रातरं राघवं वनात् ।

इत्यभिधाय मार्गसमीपकरणाय चतुरं शिल्पवर्गम-

चिरादेव प्रेषयामास । राज्यकर्तारोऽपि भरतवचनमाकर्ण्य

एवं ते भाषमाणस्य पद्मा श्रीरुपतिष्ठताम् ।
यस्त्वं ज्येष्ठे नृपसुते पृथिवीं दातुमिच्छसि ॥

इत्यवदन् ॥ अशीतितमे— तदनु भरतनिदेशेन भूप्रदेशाभिज्ञैः खनकयन्त्रकर्मान्तिकवर्धकिवृक्षतक्षककूपकारसुधाकारादिभिर्विविधशिल्पिभिर्निम्नोन्नतधरणीसरणिसमीकरणाय टङ्कखित्रखनित्रपरशुकुद्दालादिविविधायुधैः पुरः प्रस्थापितैः कचिदतिगहनगुल्मलतापाषाणानुच्छिन्दद्भिः कचिद्वृक्षक्षितिभागे त्वणेन वृक्षानुपक्षिपद्भिः कचन पांसुपटलैरदभ्रकूपश्वभ्राणि पूरयद्भिः कचन समुज्जृम्भमाणाम्भोनिधिसंभ्रमकारिणो जलाशयान् खनद्भिः समीकृतः तत्र तत्र च नवविधविमलतरमणिगणविरचितकुट्टिमप्रदेशभूषितः, दरविकसितकुसुमसमुदयसमुद्यदनुपमबहलपरिमलपरिमिलदलिकुलदलितनवकिसलयनिवहरुचिरतरुपटलजटिलः, कचिदमन्दचन्दनजलसंसेकसुरभिलः, तत्र तत्र च विरचितविशालसंनिवेशमण्डपः, कचिदम्बरचुम्बिसौधशिखरसमासक्तपताकापव-

नकम्पितवारकाणः, शुभशिल्पिनिर्मितो नरेन्द्रमार्गः समधिकं विरराज ॥ एकाशीतितमे—ततः प्रभाते यथापूर्व स्तुवतां सूतमागधवन्दीनां सुवर्णकोणाभिहतानां दुन्दुभीनां वीणावेणुमृदङ्गादिमङ्गलवाद्यानां च शब्दश्रवणेन द्विगुणशोकसंतप्तान्तःकरणो भरतः 'नाहं राजोपचारयोग्यः' इति ससंभ्रममुत्थाय मन्त्रिजनसमाकीर्णां शातकुम्भस्तम्भखचितरत्नकिरणसमुद्द्योतितामपरामिव सुधर्मां धर्मात्मा सभां समाजगाम । द्व्यशीतितमे— तस्यां च सभायां काञ्चनमयं सुखास्तरणसंवृतमासनमध्यासीनो भरतः सकलजगतीसंरक्षणविचक्षणस्त्वमात्मानमभिषिच्य सातङ्कं महीमण्डलं निरातङ्कं कर्तुमर्हसीति कुलपुरोहितेन वसिष्ठेन समुदीरितं वचनमाकर्ण्य सबाष्पकण्ठमिदमभाषत—

चरितब्रह्मचर्यस्य विद्यास्नातस्य धीमतः ।
धर्मे प्रयतमानस्य को राज्यं मद्विधो हरेत् ॥

कथं दशरथाज्जातो भवेद्राज्यापहारकः ।
राज्यं चाहं च रामस्य धर्मं वक्तुमिहार्हसि ॥

अनार्यजुष्टमस्वर्ग्यं कुर्यां पापमहं यदि ।
इक्ष्वाकूणामहं लोके भवेयं कुलपांसनः ॥

तदलमनेन निरर्थकसमारम्भेण मार्गसमीकरणाय प्रागेव प्रस्थापिता विष्टिकर्मान्तिकाः तदधुनैव चतुरङ्गबलपरिवारेण रामानयनाय वनगमनमेव समीहन्ताम् इत्यभिधाय सकलबलोद्योजनाय सुमन्त्रं प्रेषयामास ॥ त्र्यशीतितमे— ततः प्रभातायां शर्वर्यामुदिते च दिनकरमण्डले सज्जं रथवरमास्थायाभिप्रयान्तं भरतं मन्त्रिपुरोधसः उत्तमाश्वोपेतान्रथानास्थायाग्रतः प्रययुः पृष्ठतश्च रामानयनसंजातहर्षाः कौसल्याकैकेयीसुमित्रादिमातरः समाजग्मुः । अन्वगेव पौरजानपदाः सकलकलाकुशलाः कर्मान्तिकाश्च निर्ययुः । एवं महान्तमध्वानं परिक्रम्य क्रमेण च गङ्गामासाद्य रमणीये शृङ्गिवेरपुरे सचिवानुमत्या सेनानिवेशं कारयामास ॥ चतुरशीतितमे— अथ शृङ्गिवेरपुरेश्वरः निषादाधिपतिर्गुहः गङ्गातीरे परिसरवर्तिन्यां कोविदारध्वजं भरतरथमवलोक्य 'किमयं निःसपत्नां राज्यश्रियमभिलषन्, वनवासिनावपि रामलक्ष्मणौ हन्तुमायाति आहोस्विदस्मदहितमाचरिष्यति उत

दाशान्वा बाधितुमयमुद्योगः तद्यावदेव नायमभिपतति तावदेव संनद्धेन मया भवितव्यमिति निश्चित्य प्रत्येकं कैवर्तशतसंकुलां नौकापञ्चशतीमत्रैव संनिधापयत ।

यदा दुष्टस्तु भरतो रामस्येह भविष्यति ।
नेयं स्वस्तिमती सेना गङ्गामद्य तरिष्यति ॥

इति स्वीयजनानाज्ञाप्य मधुमांसाद्युपायनानि चादाय

अभिचक्राम भरतं निषादाधिपतिर्गुहः ।

अनेन पूज्यानां दर्शनं रिक्तहस्तेन न कर्तव्यमिति सूचितम् । तथा च भारते— 'धर्ममर्थं च कामं च वितथं योऽभिकाङ्क्षति । रिक्तपाणिर्न पश्येत राजानं दैवतं गुरुम्' इति । सुमन्त्रस्तु दूरादेव समायान्तं गुहं भरताय निवेदयामास । अथ कृताञ्जलिर्गुहः सविनय-मुपसृत्य राजन् तवायं देशः, वयमपि भवदीया एव समुपाहृतं कन्दमूलफलमुच्चावचमाशुष्कमांसं चाङ्गीकृत्य अत्रैव विभावरीं नीत्वा श्वः काल्यमाग्रतो गन्तासीति सादरमभाषत ॥ पञ्चाशीतितमे—अथ निषादाधिपत्यु-दीरितवचनमाकर्ण्य समुपाहृतमुपायनमभिनन्द्य गहनोऽयं

देशः गङ्गानूपो दुरत्ययः कतरेण पथा भरद्वाजाश्रमगमनं तदाख्यातु भवानित्यवदत् । तद्वचनश्रवणसमनन्तरं प्रलयानिलसमाहतोर्मिमालासमाकुलेव ते सेना महतीं शङ्कां जनयति । यदि रामभद्रे न दोषमभिलषसि तदा अहमेव धन्विनः सुसमाहितान्दाशान्पुरस्कृत्य त्वामनुगमिष्यामि तद्विस्पष्टमाख्यातु भवानित्यभिभाषमाणं गुहम् अतिनिर्मलान्तःकरणो भरतः एवमब्रवीत् ।

राघवः स हि मे भ्राता ज्येष्ठः पितृसमो मतः ।
तं निवर्तयितुं यामि काकुत्स्थं वनवासिनम् ॥

बुद्धिरन्या न ते कार्या गुह सत्यं ब्रवीमि ते ।

इति तद्वचनसमाकर्णनसंजातसंतोषो गुहः

धन्यस्त्वं न त्वया तुल्यं पश्यामि जगतीतले ।
अयत्नादागतं राज्यं यस्त्वं त्यक्तुमिहेच्छसि ॥

शाश्वती खलु ते कीर्तिर्लोकाननुचरिष्यति ।
यस्त्वं कृच्छ्रगतं रामं प्रत्यानयितुमिच्छसि ॥

इत्येवमभिभाषमाणयोस्तयोः

बभौ नष्टप्रभः सूर्यो रजनी चाभ्यवर्तत ।

षडशीतिप्रभृतिनवतिपर्यन्तम्— ततो गुहमुखेनावगतरामवृत्तान्तो भरतः तत्रैव तां रजनीमतिवाह्याप्रभातायां शर्वर्यां गुहानीतपञ्चशतनौकासमुत्तारितसकलसेनागणः स्वयमपि गङ्गां समुत्तीर्य समभिगम्य प्रयागवनं भरद्वाजाश्रमं दृष्ट्वा क्रोशादेव नरर्षभः बलं सर्वमवस्थाप्य जगाम सह मन्त्रिभिः ।

पद्भ्यामेव हि धर्मज्ञो न्यस्तशस्त्रपरिच्छदः ।
वसानो वाससी क्षौमे पुरोधाय पुरोहितम् ॥

ततः संदर्शने तस्य भरद्वाजस्य राघवः ।
मन्त्रिणस्तानवस्थाप्य जगामानुपुरोहितम् ॥

अनेन राज्ञा तपोवनानि विनीतवेषेणैव पुरोहितं पुरस्कृत्य प्रवेष्टव्यानीति सूचितम् । तथा चादिपर्वणि शकुन्तलोपाख्याने दुष्यन्तः— 'ध्वजिनीमश्वसंबाधां पदातिजनसंकुलाम् । अवस्थाप्य वनद्वारि सेनामिदमुवाच सः ॥ मुनिं विरजसं द्रष्टुं गमिष्यामि तपोवनम् । काश्यपे स्थीयतामत्र यावदागमनं मम ॥ सामात्यो राजलिङ्गानि सो-

ऽपनीय नराधिपः। पुरोहितसहा यश्च जगामाश्रममुत्तमम्'
इति। अथ भगवान् भरद्वाजः समागतौ वसिष्ठभरतावभि-
गम्य संपूज्यासनपाद्यादिभिः आपृच्छ्य च कुशलम्, स-
मासीनं भरतं चावलोक्य, शत्रुशेषमुन्मूल्य निःसपत्नां
राज्यश्रियमभिलषत इव चतुरङ्गबलपरिवृतस्य भवतः स-
मागमनमतितरां संशयमुत्पादयति तद्विस्पष्टमाचक्ष्वेत्यव-
दत। तदाकर्ण्य कलुषितान्तःकरणो भरतो महर्षिमेव-
मब्रवीत्।

अहं तु तं नरव्याघ्रमुपयातः प्रसादकः।
प्रतिनेतुमयोध्यां च पादौ तस्याभिवन्दितुम्॥

त्वं मामेवंगतं मत्वा प्रसादं कर्तुमर्हसि। इति।

ततो धार्मिकभरतवचनाकर्णनसंजातहर्षो महर्षिः, ककु-
त्स्थकुलसंभवस्य तव धर्मानपेतबुद्धिविभवं जानन्नेव तद्दृढी-
करणाय मयेदमुक्तं तदत्रैव निशीथिनीमपनीय श्वः
समीहितं कुर्वित्यवदत्॥ एकनवतितमे— इति बहुतरादर-
मेदुरवचसस्तस्यानतिलङ्घनीयशासनस्य भगवतो महामुने-
र्भरद्वाजस्य वचनैः समुदितप्रमोदतरङ्गितान्तरङ्गः तत्र-

सादलाभरतो भरतो महानयमस्माकमनुग्रह इति तदाश्रम एव तन्निशानिवासाय मतिं चकार ।

कृतबुद्धिं निवासाय तत्रैव स मुनिस्तदा ।
भरतं कैकेयीपुत्रमातिथ्येन न्यमन्त्रयत् ॥

तदनु तदनुगतजनभोजनसंविधानसमुज्जृम्भितं संरम्भमवलोक्य विनयावनतेन भरतेन भगवन्नलमलममुना महता भवदपूर्वोपचाररचनेन । ननु वयं भवत्कृतार्घ्यपाद्याद्युपचारेण पुण्यारण्यवाससुलभैः कन्दमूलफलैरपि मधुरमधुरसस्राविण्या भगवतो वाण्या च संप्राप्तातिथ्यसत्कार एव । तदलमनयोपचारयन्त्रणयेति बहुधा प्रत्याख्यातोऽपि प्रख्याततपा भरद्वाजः प्रहसन्निदमवादीत् ।

जाने त्वां प्रीतिसंयुक्तं तुष्येस्त्वं येन केनचित् ।
सेनायास्तु तवैतस्याः कर्तुमिच्छामि भोजनम् ॥

अनेन समागतस्य राज्ञः सानुचरस्यैव आतिथ्यं कर्तव्यमिति सूचितम् । तथा च तैत्तिरीयश्रुतिः— 'यावद्भिर्वै राजानुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं

क्रियते' इति। ऐतरेयब्राह्मणेऽपि— 'यावन्तः खलु वै राजानमनुयान्ति तेभ्यः सर्वेभ्य आतिथ्यं क्रियते' इति। तदधुना विपुलरथगजतुरगपदातिसमूहसंवृतां चमूमपहाय किमिति परिमितपरिजनेन सह समागतोऽसीति वदन्तं भगवन्तं भरद्वाजम्।

भरतः प्रत्युवाचेदं प्राञ्जलिस्तं तपोधनम्।
ससैन्येनोपयातोऽस्मि भगवन्भगवद्भयात्॥

राज्ञा च भगवन्नित्यं राजपुत्रेण वा सदा।
यत्नतः परिहर्तव्या विषयेषु तपस्विनः॥

तदमी दृढतररथचरणरयभरविराचितधरणीस्यन्दनाः स्यन्दनाः, संचरद्वनिधरसमुन्नतिशिखरिशिखरसौभाग्यगलहस्तिनो मदहस्तिनः, पटुतरसादिजनकलितविविधगतिशिक्षानुरूपचतुरगाश्च तुरगाः, निजभुजयुगलसमार्जितयशःसंपत्तयः पत्तयश्च, निखिलमपि महीवलयमाच्छाद्य स्वच्छन्दमुच्चलन्तः भैरवपरित्रासितविविधवन्यसत्त्वाः, चिरपरिवर्धिततरुनिकरपरिभवेण निखिलतपोधनसज्जनमज्जनादिसाधनविमलसरोवरपरिसरोपरोधेन कु-

शतृणविटपिविटपघटितोटजपाटनेन च भगवदाश्रमोपद्रवं विधास्यन्तीति दूरत एव तान्निधाय कतिपयपरिवारेण भगवदभ्याशमभ्यगामिति वदन्, सहसा समानयेति तेन मुनिना समाज्ञप्तः क्षणेन तद्बलं समाचकर्ष। अथ किल भगवानाङ्गिरसकुलावतंसो महर्षिरङ्गीकृतातिथ्यनिमन्त्रणे भरते तदनुगतविपुलबलविविधान्नपानादिसंतर्पणाय दर्पणविमलाशयः, सम्यगाचम्य सौम्याननः समुज्ज्वलदुज्ज्वलज्वलनत्रयज्वालाविनिःसरदच्छतरच्छविच्छुरितदशदिशावकाशाम्, अनवरतहुतहव्यां हव्यभागग्रहणागतशतमखमुखमखाशनधाविताम्, उपरितनभागविलसत्दृस्थलस्थापितविविधसमित्कुशपलाशशाखाभरदृढलग्नपृषदाज्यधूमरेखाम्, दर्शनमात्रेणैव सकलपापापनोदिनीं विशालामग्निशालां प्रविश्य विचित्रकर्मनिर्माणालंकर्मीणं विश्वकर्माणम् अनल्पशिल्पकल्पनपारावारपारद्रष्टारं त्वष्टारम्, अन्यानपि शतमन्युपुरोगमानुपह्वरे समाह्वयन्, समाधिगतो मुनिरित्थं विदध्यौ। याः किल क्षित्यन्तरिक्षयोः प्राक्प्रत्यक्प्रवाहिन्यो वाहिन्य इहैकमत्समित्यागत्य काश्चन सृजन्तु मैरेयं काश्चन परिस्रवन्तु मधुरां सुरां काश्चन वहन्तु

खण्डितपुण्ड्रकाण्डविनिस्रुतरसलहरिमाधुरीचोदकं चोदकम्, अपि च मया समाहूता विश्वावसुहाहाहूहूप्रभृतयः सर्वेऽपि देवगन्धर्वाः घृताचीप्रमुखाश्चाप्सरोगणाः, नागदन्तादिमाश्च गन्धर्वसुन्दर्यः पुरन्दरपुरालयाः सरसिरुहासनसदनगताश्च दिव्यवारवनिताः सर्वा अपि तुम्बुरुणा सह मदाश्रम एव सहसा समायान्तु यच्चोत्तरासु कुरुभूमिषु दिव्यवसनभूषणपत्रहृद्यमुद्यानं यदपि च राजराजपुरोपकण्ठे दिव्यनारीफलम् अतिमृदुलफलकिसलयपरिचर्वणसमुदितमदभरविकस्वरस्वरमधुरशुकपिकनिकरावपावनं वनं तदपि सत्वरं मदाश्रमचत्वरेषु संनिधत्ताम्, अपि च भगवान्सोमः भक्ष्यभोज्यचोष्यलेह्यादिविविधान्नराशीन्, उत्तमरसोत्तमानिह विदधानः अमूल्यानि पादपगलितानि माल्यानि यथोचितरुचिरपाकानि मांसशाकानि च संविधत्ताम् ।

एवं समाधिना युक्तस्तेजसाप्रतिमेन च ।
शीक्षास्वरसमायुक्तं तपसा चाब्रवीन्मुनिः ॥

मनसा ध्यायतस्तस्य प्राङ्मुखस्य कृताञ्जलेः ।
आजग्मुस्तानि सर्वाणि दैवतानि पृथक्पृथक् ॥

तदनु शनैः शनैर्गन्धसिन्धुरकठोरगण्डपिण्डकण्डूयननिर्घृष्टमलयमहीधरकन्दरमन्दिरचन्दनतरुसंघसंघर्षणसमुन्मिषितगन्धबन्धुरोदरविदलदरविन्दकुन्दमाकन्दमल्लिकाकुब्जमालतीकुटजपाटलीवकुलमुकुलबहलविनिर्गलदमन्दमकरन्दबिन्दुसंदोहवहनपरिश्रमेणेव मन्दमन्दपरिस्पन्दे, अशेषजनखेदापनोदिनि, तदाश्रमसमीपेषु संचरति गन्धवहनस्तनन्धयेन घनाघनोऽपि गगनतलात् अदभ्रमधुसंभ्रमपरिभ्रमत् परपराजितपवनविधुतविसृत्वरपरागपटलान्धकारितदिगन्तरेषु विकीर्यमाणेषु, सुरभिलसुरतरुवरकुसुमवर्षेषु अतिस्निग्धमधुरोदारगम्भीरघोषेषु वाद्यमानेषु देवदुन्दुभिषु देवदूतैः करतलविनिहितमणिमयवीणेषु गायत्सु सिद्धविद्याधरगन्धर्वेषु निरुपमनित्यनिजयौवनमयभूषणपुनरुक्तमणिभूषणाः प्रतिपुरुषसविधमपि रम्भादिमा बहवो ननृतुरप्सरोगणाः। तदनन्तरमनन्तचमत्कारकर्मणो विश्वकर्मणः कौशलादासप्रयोजनमभिनववैडूर्यसंनिभशाद्वलच्छन्नाम्, अपरिमितबहुपचेलिमफलभरविनमितकपित्थपनसबीजपूरकामलकसहकारविपुलशाखाशतकृतप्रच्छायशीतलवलाम्, उत्तरकुरुसमागतलोको-

त्तरवनकल्पितदिव्योपभोगाम्, उभयतटगततरुगणपरिणामनिपतितबहुलकुसुमकिञ्जल्कपुञ्जपिञ्जरितमन्दाकिनीतरङ्गशीकरानुषङ्गिसमीरणपरिहृतपरिश्रमाम्, मणिखचितशातकुम्भस्तम्भसहस्रनिर्मितविशालचतुःशालसुन्दरमन्दुरागजशालिकाम्, अभ्रंकषशुभ्रशिखररम्यहर्म्यप्रासादवलभिनिबद्धमणितोरणाम्, पदे पदे दिव्यचन्दनरससमुक्षितभित्तिभिर्महार्हैर्घ्यवर्हमृदुलतल्पिमोपशोभितस्फटिकमयशयनासनैः सदनैरुपशोभिताम्, अवाङ्मनसगोचरविचित्रचमत्काराम्, मनोहराम्, तत्तादृशीं विश्वकर्मनिर्माणचातुरीमवलोकयन्, क्रमेण भगवता भरद्वाजेन समाज्ञप्तः नूतननवरत्नखचितसोपानसीमगोपानसीमनोहरसौधशिखरम्, उपकल्पितराजाधिराजोचितसिंहासनम्, अतिनिबिडजनसंचारनीरन्ध्रनिरुद्धमार्गसंरक्षणविचक्षणकञ्चुकिकलिताभटरवप्रदर्शितपदवीविकासम्, महेन्द्रमन्दिरोपमम्, विराजमानराजमन्दिरं निजपरिवारेण सह प्रविवेश भरतः। ततस्तदद्भुतसदनसंविधाननिध्यानजनितकौतुकैः मन्त्रिभिः शारदसमयमुदितसुधाकरमण्डलपाण्डरमातपत्रम्, तन्मरीचिनिचयरुचिरे चामरे च स-

अयामं श्रीरामचन्द्रं भद्रासनाय विनिवेश्य स्वयमपि स-चिवासने निविशमानो भरतः क्षणादेव मुनिशासनादु-पागता नवसुधारसमधुरपायसकर्दमाः सरितः सुवर्णमणि-मौक्तिकप्रवालादिदिव्यभूषणभूषिताः सरसिजासनधना-धिनाथप्रेषिताः विंशतिर्विंशतिसहस्रसंख्याकाः दिव्यवा-रसुन्दरीः क्षिप्रमद्राक्षीत्। अथ तेषु दर्शनमात्रेणैव पुरु-षोन्मादकारिरूपधेयेषु नन्दनवनागतेषु अलम्बुसाद्यप्सरो-गणेषु नृत्यत्सु महाराजभरतोपकण्ठे गायत्सु नारदतुम्बुरु-गोपप्रमुखेषु गन्धर्वराजेषु नन्दनचैत्ररथगताखिलमाल्येषु प्रयागभूमिमागतेषु भरद्वाजतपोमहिम्ना चित्रमिदमेकमु-दजृम्भत। यत्खल्वमी बिल्वशाखिनः स्थावरा अपि मृद-ङ्गवादकताम्, अश्वत्थशाखिनो नर्तकताम्, सरलताल-तिलकनक्तमालकाश्च कुब्जवामनतामङ्गीचक्रुः। अपि च किंशुकामलकजम्बूमल्लिकामालतीप्रभृतिका लतिकाः सक-लयुवजनहृदयहरिणवागुरायमाणनवयौवनालंकृताम्, प्र-मदाकृतिमवलम्ब्य विलासमन्थरमितस्ततः संचरन्त्यः सा-दरं भो भो बुभुक्षिताः यावदपेक्षं भक्षयत पायसम्, भो भोः सुराभिलाषिणः पिबत सुराघटान्, मांसार्थिनः खा-

दृत मांसानि इति परितोषितारतरमुद्घुष्यन्त्यः, कांश्चिद्-भ्यञ्जनसंजनितादरानञ्जसा समभ्यज्य मञ्जुलेषु सरित्तीरनिकुञ्जेषु स्नापयन्त्यः, प्रतिपुरुषमपि सप्ताष्टा वाराङ्गनाः कलाचिकावहनवीटिकावितरणचरणसंवाहनादि शुश्रूषया परिचरन्त्यः महीतल एव तस्य बलस्य निरर्गलं सौवर्गसुखं प्रदर्शयामासुः । तदनु निरवद्यहृद्यमद्यनिषेवणमुषितधिषणाः कैश्चन पुरुषैरिक्षुखण्डमधुलाजखण्डशर्कराचणकादिभिः संभोजितगजहयखरोष्ट्रकाः सैनिकाः घनघनसारमृगमदकुङ्कुमपङ्कसंकलितचन्दनसंरूषितावयवाः, समुन्नतपृथुलकुचकुम्भसंघर्षणमुखकमलचुम्बनसरसभाषणादिसमुदञ्चितकिलकिञ्चिताभिरप्सरोभिः काञ्चनमयमञ्चेषु पञ्चेषुवशंगताः दैवादतर्कितोपनतमप्राकृतं सुखमनुभवन्तः न गमिष्यामोऽयोध्यां नाक्रमिष्यामोऽयोध्यां नाक्रमिष्यामो दण्डकावनम् अस्तु कुशलं महाराजभरतस्य भरतस्य भवतु च तथा सुखम् महाराजरामभद्रस्येति प्रमदवशादुच्चावचानि वचनानि मुञ्चन्तः किमयं स्वर्ग एवास्माभिरुपभुज्यते किमानन्दभूम्ना अयमेवापवर्ग इति मनसा वितर्कयन्तः कतिचनमदिरा-

स्वादसमुदितमदवशादत्यन्तं नृत्यन्तः हसन्तश्चाट्टहासं गायन्तो विविधगानवाद्यानि परिधावन्तो निष्कारणमुच्छिन्दन्तः प्रसूनमाल्यानि चिरमासांबभूवुः । अथ कथंचन किंचिदिव विगलितमदपारवश्याः चेटादयश्चपलाशयतया समन्तादुद्वीक्ष्य भक्ष्यराशीन् अक्षुधिता अपि भक्षयित्वा परां तृप्तिमभ्यागमन् । इत्थमानिरतमुनिसाधारणाश्चर्यतपश्चर्याधुर्यस्य मुनेस्तपोबलेन संपादितैः सकलकामैरुपतर्पिताः भरतानुयायिनः परितोऽपि प्रमुदितकुञ्जराश्वखरोष्ट्रगोमृगपशुपक्षिगणं क्वचिदपि अदृश्यमानकचराम्बरास्तमितक्षुत्क्षामगन्धम् असंभावितरजोधूसरकेशनखम् आजवाराद्दानिष्ठानवरसंचयाधिष्ठितं फलनिर्यूहनिर्यद्धूपगन्धादिवासितम् अतिमधुरपायसकर्दमितकूपं सकलजनविविधमनोरथपरिपूरणनिकामनिपुणकामधेनुकं सततनिष्यन्दमानमधुरमधुरासवासारवर्षदुर्दिननिखिलशाखिकदम्बकं क्वचन रुचिरमैरेयपूरपूरितवापिकासमीपनिविष्टसुमृष्टमांसनिचयम् क्वचिदपि प्रतप्तपिठरजठरपापच्यमानरुच्यहरिणबर्हिणचरणायुधादिमांसम् दधिमधुघृतदुग्धादिपरिपूरितशातकुम्भकुम्भकरम्भिकास्थालीसहस्रपरिस्थगित-

स्थलम् क्वचिदपि च पचेलिमकपित्थरसालफलसुमहा-
नदीपरिसरपरिदृश्यमानमृदुलशर्करापूरसैकतम् तत्र तत्र
च नखंपचलघुविमलसलिलवाहिन्नाहिनीतीरघटितविशा-
लस्फटिकसोपानवीथिकासु क्वचिदुल्लसितमल्लिगन्धफली-
कुसुमगन्धितवैलपूरितभृङ्गावशोभितम्, क्वचिदपि निर्णे-
जनचूर्णसंपूर्णकनकचषकालंकृतम् क्वचिदपि निक्षिप्तरद-
नशोधनसाधनधवलखदिरसमिल्लतासंचयम् क्वचिदनेकव-
र्णविभक्तिचित्रितचित्रकम्बलस्थापितपत्रोर्णराजिराजितम्
क्वचिदपि हाटकघटितसंपुटकोदरनिक्षिप्तचन्दनक्षोदम् क-
चिदपि शरदम्बराडम्बरविडम्बिपरिशोधितादर्शदर्शनीयम्
क्वचिदपि संनिहितमसृणपादुकायुगलपरंपरम् क्वचिदपि
वधूजनप्रसादनकनककङ्कतकूर्चमञ्जुलाञ्जनकरण्डमण्डित-
म् क्वचिदपि समरकामुकमहावीरकमनीयकार्मुकशरभरि-
तशराधिविचित्रतनुत्रशोभितम् क्वचित्क्वचिदुत्फुल्लकह्लारस-
रसीरुहवीथिकासंचरत्समदसारसारसितमेदुरैर्निजसह-
चरीचञ्चुपुटाञ्चलकण्डूयनसुखितकारण्डवचक्रवाककुलैः
स्फटिकमणिमुकुरोदरसलिलविसृत्वरदरदलितारविन्दमक-
रन्दबिन्दुचन्द्रकप्रकरैः क्रीडासरोभिरुपशोभितं स्वप्नेऽप्य-

दृष्टचरम् अश्रुतपूर्वमपूर्वरूपं परितोषितस्य मुनेराश्रमोद्देश-मवलोकयन्तः किं महानयं विलोक्यते स्वप्नः किमुतायमस्माभिरनुभूयते चित्तविभ्रमः किमुत केनापि प्रयुक्तेऽयं शाम्बरी माया किमिदं गन्धर्वपुरावजृम्भितम् भवतु यथा-कथंचित् अस्तु तदिदं सत्यमाचन्द्रतारकम् । अहो महदिदं संविधानमातिथ्यविधेः अहो तपःप्रभावो भरद्वाजमुनेः अहो कौशलं विश्वकर्मणः अहो जनुरद्य सफलमस्माकमिति मिथः कथयन्तः सर्वेऽप्यानन्दविस्मयस्तब्धहृदयाः संजज्ञिरे ॥ द्विनवतितमे— ततः प्रभातायां रजन्यां हुताग्निहोत्रं भरद्वाजमासाद्य रामसंदर्शनसमुत्सुकश्च मम कतरेण मार्गेण गमनमतिसुकरं कियद्दूरं तदाश्रमः क वा वर्तते तदाख्यातुमर्हति भवानित्यवदत् । इतः त्रिषु योजनेषु चित्रकूटोगिरिरतिरम्यकाननः तत्परिसरे समारचितां पर्णशालामधिवसति रामभद्रः तदनेनैव सव्यदक्षिणमार्गेण सेनां संचालयेति वदन् कौसल्याप्रमुखराजदारैः पीड्यमानचरणकमलः तद्विशेषज्ञानाय भरतमपृच्छत् । ततः इयं कौसल्या रामजननी इयमपरा लक्ष्मणशत्रुघ्नजननी सुमित्रा इयमपि,

क्रोधनामकृतप्रज्ञां दृप्तां सुभगमानिनीम् ।
ऐश्वर्यकामां कैकेयीमनार्यामार्यरूपिणीम् ॥

यतोमूलं हि पश्यामि व्यसनं महदात्मनः ।
मम तां मातरं विद्धि नृशंसां पापनिश्चयाम् ॥

इति वदन्तं भरतम् ,

प्रत्युवाच महाबुद्धिरिदं वचनमर्थवत् ।
न दोषेणावगन्तव्या कैकेयी भरत त्वया ॥

रामप्रव्राजनं ह्येतत्सुखोदर्कं भविष्यति ।

ततस्तदाज्ञामप्यादाय आमन्त्र्य बलाध्यक्षानारोप्य चोत्तमयानेषु मातृः समारुह्य शिबिकां सकलबलपरिवृतः चित्रकूटमार्गाभिमुखः प्रतस्थे ॥ त्रिनवतितमे— ततो महर्षिसमादिष्टेन मार्गेण संतीर्य नदीनदान् अतिक्रम्य चाश्रमोपवनानि व्यक्तं प्राप्ताः स्म तं देशं भरद्वाजो य मब्रवीत् इति कुलपुरोहितं वसिष्ठमभिधाय तदनुमत्या रामलक्ष्मणगवेषणाय चतुरांश्चारान् संचारयामास ॥ चतुर्नवतितमे— रामोऽपि तत्र चित्रकूटगिरौ जनकजामनोविनोदनरमणीयधरणीधरशिखरगतान् विविधवनभूमिभा-

गान् प्रदर्शयन् इदमवोचत् ।

न राज्यभ्रंशनं भद्रे न सुहृद्भिर्विना भवः ।
मनो मे बाधते दृष्ट्वा रमणीयमिमं गिरिम् ॥

अनेन वनवासेन मया प्राप्तं फलद्वयम् ।
पितुश्चानृण्यता धर्मे भरतस्य प्रियं तथा ॥

इदमेवाहृतं प्राहू राज्ञि राजर्षयः परे ।
वनवासं भवार्थाय प्रेत्य मे प्रपितामहाः ॥

इति ॥ पञ्चनवतितमे— ततोऽवतीर्य चित्रकूटशिखरात् शुभसलिलां मन्दाकिनीं प्रदर्शयन्

मन्यस्व वनिते नित्यं सरयूवदिमां नदीम् ।
लक्ष्मणश्चैव धर्मात्मा तन्निदेशे व्यवस्थितः ॥

त्वं चानुकूला वैदेहि प्रीतिं जनयतो मम ।
नायोध्यायै न राज्याय स्पृहयेऽद्य त्वया सह ॥

इत्यभिधाय रम्यं गिरिवरमारुरोह ॥ षण्णवतितमे—
अथ कदाचित् चित्रकूटशिखरमारूढो रामभद्रः सुनिष्टप्तेन स्वादुना पिशितेन जानकीं विनोदयन् भरतानुयायि-

सेनागजतुरगपदातिकलितकोलाहलाकर्णनभयचकितपलायमानवनमहिषवराहमृगयूथदर्शनानुमितराजमृगयाविहारो लक्ष्मणमाहूय किंनिमित्तोऽयमकाण्ड एव मृगयूथपलायनमित्यवधारयतु भवानित्यवोचत् । ततः समुन्नतं सालवृक्षमारुह्य लक्ष्मणो दिक्षु विदिक्षु च चक्षुर्विक्षिपन् उत्तरस्यां दिशि रथगजतुरगपदातिसमाकुलां महतीं चमूमवलोक्य रामाय निवेदयामास । अथ कस्येयं चमूरिति वदन्तं रामभद्रं कोविदारध्वजानुमितभरतागमः सरोषमिदमुवाच—

संपन्नं राज्यमिच्छंस्तु व्यक्तं प्राप्याभिषेचनम् ।
आवां हन्तुं समभ्येति कैकेय्या भरतः सुतः ॥

असौ हि सुमहान्स्कन्धो विटपी च महाद्रुमः ।
विराजति महासैन्ये कोविदारध्वजो रथे ॥

गृहीतधनुषौ चावां गिरिं वीर श्रयावहे ।
अथ वेहैव तिष्ठाव संनद्धावुद्यतायुधौ ॥

अपि द्रक्ष्यामि भरतं यत्कृते व्यसनं महत् ।
त्वया राघव संप्राप्तं सीतया च मया तथा ॥

भरतस्य वधे दोषं नाहं पश्यामि राघव ।
पूर्वापकारिणां त्यागे न ह्यधर्मो विधीयते ॥

इत्यवादीत् । अनेन त्यक्तधर्मस्य पूर्वापकारिणो वधे दोषो नास्तीति सूचितम् । तथा चापस्तम्बः— 'यो हि स्वार्थे असिक्रान्तं हन्ति मन्युरेव मन्यु स्पृशति न तस्मिन्दोष इति पुराणे' इति ॥ सप्तनवतितमे— ततो भरतसमागमनसंजातकोपकलुषितान्तःकरणं लक्ष्मणमाश्वासयन् रामभद्रः स्वयमिदमाचष्टे—

किमत्र धनुषा कार्यमसिना वा सचर्मणा ।
महेष्वासे महाप्राज्ञे भरते स्वयमागते ॥

पितुः सत्यं प्रतिश्रुत्य हत्वा भरतमागतम् ।
किं करिष्यामि राज्येन सापवादेन लक्ष्मण ॥

अनेन लोकापवादकरं कर्म नरकादायमिति सूचितम् । तथा च वनपर्वणि— 'अकीर्त्तिः कीर्त्यते लोके यस्य भूतस्य कस्यचित् । स पतत्यधमाँल्लोकान्यावच्छब्दः प्रकीर्त्यते' इति । यद्द्रव्यं बान्धवानां वा मित्राणां वा क्षये भवेत् । नाहं तत्प्रतिगृह्णीयां भक्षान्विषकृतानिव ।' अनेन मित्र-

न्बान्धवादीन्हत्वा तदीयं द्रव्यं न ग्राह्यमित्युक्तम् । तथा च गीतायां कृष्णं प्रति अर्जुनवाक्यम्— 'न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे । न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ॥ किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा । येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ॥ त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च । एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ॥ अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते । तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्सबान्धवान् ॥ स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ।' इति ।

धर्ममर्थं च कामं च पृथिवीं चापि लक्ष्मण ।
इच्छामि भवतामर्थे एतत्प्रतिशृणोमि ते ॥

भ्रातॄणां संग्रहार्थं च सुखार्थं चापि लक्ष्मण ।
राज्यमप्यहमिच्छामि सत्येनायुधमालभे ॥

यद्विना भरतं त्वां च शत्रुघ्नं चापि मानद ।
भवेन्मम सुखं किंचिद्भस्म तत्कुरुतां शिखी ॥

इत्यभिधाय भरतोऽपि पितृभ्यां प्रव्राजितं मामाकर्ण्य

शोकाकुलान्तःकरणः परुषतरं कैकेयीं निर्भर्त्स्य संप्रसाद्य पितरं मामपि प्रसादयितुमागतः स्यात् ।

अस्मासु मनसाप्येष नाहितं किंचिदाचरेत् ।
विप्रियं कृतपूर्वं ते भरतेन कदा नु किम् ॥

कथं नु पुत्राः पितरं हन्युः कस्यांचिदापदि ।
भ्राता वा भ्रातरं हन्यात्सौमित्रे प्राणमात्मनः ॥

यदि राज्यस्य हेतोस्त्वमिमां वाचं प्रभाषसे ।
वक्ष्यामि भरतं दृष्ट्वा राज्यमस्मै प्रदीयताम् ॥

उच्यमानो हि भरतो बाढमित्येव वक्ष्यति ।
न हि ते निष्ठुरं वाच्यो भरतो नाप्रियं वचः ॥

अहं ह्यप्रियमुक्तः स्यां भरतस्याप्रिये कृते ।

इत्यवदत् ।

तथोक्तो धर्मशीलेन भ्रात्रा तस्य हिते रतः ।
लक्ष्मणः प्रविवेशेव स्वानि गात्राणि लज्जया ॥

अथ रामो व्रीडासमाक्रान्तहृदयं लक्ष्मणमवगत्य सीतया सह वने वसन्तौ सुखोचितौ मन्यमानो दशरथो गृहान्प्र-

विनेतुमायाति । एतौ वायुवेगसमौ जवनौ तुरङ्गमौ एष तातस्य शत्रुञ्जयोऽतिवृद्धो नागराजः अत्र हि पाण्डुरमातपत्रमनवलोक्य शङ्काकलङ्कितं मे मनः । तदवतीर्य सालाग्रात् सन्निकटमायातु भवानित्यवदत् । भरतोऽपि आश्रमसंमर्दो मा भूदिति दूरत एव सेनानिवेशं कारयामास ॥ अष्टनवतिनवनवतितमयोः—पदातिरेव भ्रातरमन्विष्यन् भरतश्चित्रकूटसमीपमागम्य तदाश्रमसमुद्गतधूमलेखादर्शनेन संनिहितं तमवगत्यससंभ्रमं कुलपुरोहितमाहूय सत्वरमानीयतां मातृवर्गः संनिहितोऽयमत्र भवानरविन्दलोचनो रामभद्रः इत्यादिश्याग्रतो गच्छन् इदमेव हि आश्रममुपेयुषो रामभद्रस्य वृक्षे कुशचीरकृतमभिज्ञानमवलोक्य एते मृगमहिषकरीषसंचयाः, इमानि च लक्ष्मणेनाग्रबद्धानि चीराणि, इयमसौ रामचन्द्रावगाहनानुकूला मन्दाकिनी, परिसरो जलार्द्रो लक्ष्मणगमनमार्गः, इयमग्रे महात्मनः तस्य पुण्या पर्णशाला, इमौ चार्करश्मिप्रतीकाशौ शरभरितोदरावक्षय्यौ तूणीरौ, इयं च प्रागुदक्प्रवणा प्रदीप्तपावका विशाला वेदिः इति दर्शयन्नेव

निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुम् ।
उटजे राममासीनं जटामण्डलधारिणम् ॥

सिंहस्कन्धं महाबाहुं पुण्डरीकनिभेक्षणम् ।

तमवलोक्य स बाष्पगद्गदं सकरुणं विलपन्

पादावप्राप्य रामस्य पपात भरतो रुदन् ।
शत्रुघ्नश्चापि रामस्य ववन्दे चरणौ रुदन् ॥

तावुभौ स समालिङ्ग्य रामश्चाश्रूण्यवर्तयत् ।

ततः सुमन्त्रेण गुहेन चैव
समीयतू राजसुतावरण्ये ।
दिवाकरश्चैव निशाकरश्च
यथाम्बरे शुक्रबृहस्पतिभ्याम् ॥

शततमे—

जटिलं चीरवसनं प्राञ्जलिं पतितं भुवि ।
भ्रातरं भरतं रामः परिजग्राह बाहुना ॥

आघ्राय रामस्तं मूर्ध्नि परिष्वज्य च राघवः ।
अङ्के भरतमारोप्य पर्यपृच्छत्समाहितः ॥

**क नु तेऽभूत्पिता तात यदारण्यं त्वमागतः।
न हि त्वं जीवतस्तस्य वनमागन्तुमर्हसि॥**

**कीञ्चत्सौम्य न ते राज्यं भ्रष्टं बालस्य शाश्वतम्।**

इति। अनेन बालेनाधिष्ठितं राज्यं नश्यतीति सूचितम्॥ तथा च विदुरनीतौ— 'यत्र स्त्री यत्र कितवो बालो यत्रानुशासिता। मज्जन्ति तेऽवशा राजन्नद्यामश्मप्लवा इव॥' इति।

**कच्चिच्छुश्रूषसे तात पितरं सत्यविक्रमम्।**

अनेन पितृशुश्रूषा कर्तव्येति सूचिता॥ तच्छुश्रूषणफलं राजधर्मे— 'शुश्रूषते यः पितरं न चासूयेत्कदाचन। मातरं भ्रातरं वापि गुरुमाचार्यमेव च॥ तस्य राजन्फलं विद्धि स्वर्लोके स्थानमर्चितम्। न च पश्येत नरकं गुरुशुश्रूषयात्मवान्॥' तथा च पितरमाचार्यं चोपक्रम्य मनुः— 'तेषां त्रयाणां शुश्रूषा परमं तप उच्यते' इति तच्छुश्रूषाफलम्॥

**स कच्चिद्ब्राह्मणो विद्वान्धर्मनित्यो महाद्युतिः।
इक्ष्वाकूणामुपाध्यायो यत्तथा तात पूज्यते॥**

अनेनोपाध्यायः पूजनीय-इति सूचितम्। तथा च राजधर्मे— 'गुरवोऽर्चयितव्याश्च पुराणं धर्ममिच्छता। येन प्रीणात्युपाध्यायस्तेन स्याद्ब्रह्म पूजितम् ॥'

कच्चिद्विनयसंपन्नः कुलपुत्रो बहुश्रुतः।
अनसूयुरनुद्रष्टा सत्कृतस्ते पुरोहितः॥

अनेन पुरोहितः पूजनीय इति सूचितम्। तथा च राजधर्मे— 'ऋत्विक्पुरोहिताचार्यान्सत्कृत्यानवमत्य च। यदा सम्यक्प्रगृह्णाति स राज्ञो धर्म उच्यते ॥'

कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः।
हुतं च होष्यमाणं च काले वेदयते सदा॥

अनेन बहुज्ञेन ऋत्विजा भवितव्यमिति सूचितम्। तथा च मनुः—'नैव कन्या न युवतिर्नाल्पविद्यो न बालिशः। होता स्यादग्निहोत्रस्य नार्तो नासंस्कृतस्तथा। नरके हि पतन्त्येते जुह्वतः स च यस्य तत् ॥ तस्माद्वैतानकुशलो होता स्याद्वेदपारगः' इति।

कच्चिद्देवान्पितॄन्मातॄर्गुरून्पितृसमानपि।
वृद्धांश्च तात वैद्यांश्च ब्राह्मणांश्चाभिमन्यसे।

अनेन सर्वैः पितृभृत्यगुरुवृद्धवैद्यब्राह्मणानां बहुमानः कर्तव्य इति सूचितम् । तथा च राजधर्मे— 'आद्यावेव कुरुश्रेष्ठ राज्ञा रञ्जनमिच्छता । देवतानां द्विजानां च वर्तितव्यं यथाविधि ॥ दैवतान्यर्चयित्वापि ब्राह्मणांश्च कुरूद्वह । आनृण्यं याति धर्मस्य श्लोकेन च समश्नुते ॥ धर्मनिष्ठाञ्श्रुतवतो वेदव्रतसमाहितान् । अर्चयित्वा यजेतापि तांस्तान्गुणवतो द्विजान् ॥ प्रत्युत्थायोपसंगृह्य चरणावभिवाद्य च । अथ सर्वाणि कुर्वीथाः कार्याणि सपुरोहितः ॥' इति ।

इष्वस्त्रवरसंपन्नमर्थशास्त्रविशारदम् ।
सुधन्वानमुपाध्यायं कच्चित्त्वं तात मन्यसे ।

अनेनोपाध्यायः पूजनीय इति अनुपदमेव सूचितम् ।

कच्चिदात्मसमाः शूराः श्रुतवन्तो जितेन्द्रियाः ।
कुलीनाश्चेङ्गितज्ञाश्च कृतास्ते तात मन्त्रिणः ॥

मन्त्रो विजयमूलं हि राज्ञां भवति राघव ।
सुसंवृतो मन्त्रधनैरमात्यैः शास्त्रकोविदैः ॥

अनेन स्वस्य श्रेयसे बहुज्ञो मन्त्रगोप्ता मन्त्री कार्य इति सूचितम्— अयमर्थः प्रागपि प्रपञ्चितः ।

कच्चिन्निद्रावशं नैषीः कच्चित्काले प्रबुध्यसे ।
कच्चिच्चापररात्रेषु चिन्तयस्यर्थनैपुणम् ॥

अनेन यथाकालं स्वापप्रबोधौ कर्तव्यौ अपररात्रे उत्थायार्थागमप्रकारश्च चिन्तनीय इति सूचितम् । तथा च मनुः— 'संविशेच्च यथाकालमुत्तिष्ठेद्विगतक्लमः । एतद्वृत्तिं समातिष्ठेदरोगः पृथिवीपतिः ।' इति । व्यासः— 'ब्राह्मे मुहूर्ते चोत्थाय धर्ममर्थं च चिन्तयेत् ।' इति ।

कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह ।
कच्चित्ते मन्त्रितो मन्त्रो राष्ट्रं न परिधावति ॥

अनेनैक एवार्थं न चिन्तयेत् न बहुभिः मन्त्रश्च गोपनीय इति सूचितम् । तथा चोद्योगे—'एकः स्वादु न भुञ्जीत एकः स्वार्थं न चिन्तयेत्' इति । षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णो न भिद्यते । द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्तं न गच्छति । राजधर्मे—'बुद्ध्या संवृतमन्त्रश्च राज्ञा भवितुमर्हति । यस्य मन्त्रं न जानन्ति समागम्य पृथग्जनाः ॥ स कृत्स्नां पृथिवीं भुङ्क्ते कोशहीनोऽपि पार्थिवः ॥' इति ।

काञ्चिदर्थं विनिश्चित्य लघुमूलं महोदयम् ।
क्षिप्रमारभसे कर्तुं न दीर्घयसि राघव ॥

अनेन राज्ञा अल्पायासकं बहुफलं कार्यं निश्चित्याविलम्बेनैतत्कर्तव्यमिति सूचितम् । तथा चोद्योगे—'कांश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान् । क्षिप्रमारभते कर्तुं न विघ्नयति तादृशान्' इति ।

कच्चित्तु सुकृतान्येव कृतरूपाणि वा पुनः ।
विदुस्ते सर्वकार्याणि न कर्तव्यानि पार्थिवाः ॥

अनेन राज्ञा कृतानि कृतप्रायाणि वा कर्माणि अन्ये राजानो जानीयुर्न तु कर्तव्यानीति सूचितम् । तथा चोद्योग एव 'यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे । कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥' इति । कालिदासोऽपि— 'तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च । फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव' इति ।

कच्चिन्न तर्कैर्युक्त्या वा ये चाप्यपरिकीर्तिताः ।
त्वया वा तव वामात्यैर्बुध्यते तात मन्त्रितम् ॥

अनेन राजमन्त्रितो मन्त्रः परैस्तर्कादिना यथा न ज्ञायते तथा गूढं मन्त्रितव्यमित्ययमर्थः स चानुपदमेव प्रपञ्चितः ।

कच्चित्सहस्रान्मूर्खाणामेकमिच्छसि पण्डितम् ।
पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं महत् ॥

सहस्राण्यपि मूर्खाणां य उपास्ते महीपतिः ।
अथ वाप्ययुतान्येव नास्ति तेषु सहायता ॥

एकोऽप्यमात्यो मेधावी स्थूललक्षो विचक्षणः ।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥

अनेन पण्डित एकोऽपि मन्त्री श्रेयोमूलम् । न मूर्खसहस्रमपीति सूचितम् । तथा च राजधर्मे— 'यस्त्वेको बहुभिः श्रेयान्कामं तेन गणं त्यजेत् । श्रेयसो लक्षणं त्वेतद्विक्रमो यस्य दृश्यते । कीर्तिप्रधानो यश्च स्यात्समये यस्य तिष्ठति । समर्थान्पूजयेद्यश्च स्पर्धे स्पर्धयते च यः ॥ न च कामाद्भयात्क्रोधाल्लोभाद्वा धर्ममुत्सृजेत् । अमानी सत्यवाग्दान्तो जितात्मा मानसंयुतः । स ते मन्त्रसहायः स्यात्सर्वावस्थं परीक्षितः ।' इति ।

कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः ।
जघन्यास्तु जघन्येषु भृत्याः कर्मसु योजिताः ॥

अनेन उत्तममध्यमाधमेषु कर्मसु तादृशा एव भृत्या नियोजनीया इति । तथा चोद्योगे—'त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः । नियोजयेद्यथायोगं त्रिविधेष्वेव कर्मसु' इति । राजधर्मेऽपि—'भृत्या ये यत्र योग्याः स्युस्तत्र स्थाप्याः सुरक्षिताः । आनुरूपाणि कर्माणि भृत्येभ्यो यः प्रयच्छति ॥ स भृत्यगणसंपन्नो राजा फलमुपाश्नुते ॥ शरभः शरभस्थाने सिंहः सिंह इवोर्जितः । व्याघ्रो व्याघ्र इव स्थाप्यो द्वीपी द्वीपी यथा तथा ॥ कर्मस्विहानुरूपेषु न्यसेद्भृत्यान्यथाविधि ॥ प्रतिलोमं न भृत्यास्ते स्थाप्याः कर्मफलैषिणा । यः प्रमाणमतिक्रम्य प्रतिलोमं नराधिपः । भृत्यान्स्थापयतेऽबुद्धिर्न स रञ्जयते प्रजाः' इति ।

अमात्यानुपधातीतान्पितृपैतामहाञ्शुचीन् ।
श्रेष्ठाञ्श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु ॥

अनेन कुलपरंपरागताञ्शुचीन्मन्त्रिण उत्तमेषु कार्येषु

नियोजयेदिति सूचितम्। तथा च राजधर्मे— 'भक्तं भजेत नृपतिः सदैव सुसमाहितः। अप्रकीर्णेन्द्रियं प्राज्ञमत्यन्तानुगतं शुचिम्। शक्तं चैवानुरक्तं च युञ्ज्यान्महति कर्मणि।' इति।

कच्चिन्नोग्रेण दण्डेन भृशमुद्वेजितप्रजम्।
राज्यं तवानुजानन्ति मन्त्रिणः कैकयीसुत॥

अनेनोग्रदण्डेनाधिकारिणा उद्वेजितं राष्ट्रं मन्त्रिभिः न सोढव्यमिति सूचितम्। तथा च राजधर्मे—'धर्मज्ञः सचिवः कश्चित्तत्प्रपश्येदतन्द्रितः। जिघांसवः पापकामाः परस्वादायिनः शठाः। रक्षोभ्याधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः॥' इति।

कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा।
उग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः॥

अनेन पतितं यजमानं याजका इव तर्जनादिनोपभोक्तारं पुरुषं स्त्रिय इव प्रजाः प्रमादिनं राजानं परिभवन्तीति सूचितम्। तथा च राजधर्मे— 'प्रमादिनं हि राजानं लोकाः परिभवन्त्युत।' इति।

उपायकुशलं वैद्यं भृत्यसंदूषणे रतम् ।
शूरमैश्वर्यकामं च यो न हन्ति स वध्यते ॥

अत्रोक्तविशेषणविशिष्टं भृत्यं यो न हन्यात्स एव वध्यत इति सूचितम् । तथा च कामन्दकः—'तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् । अर्धराज्यहरं भृत्यं यो हन्यात्स हतः स्वयम् ।' इति ।

कच्चिद्धृष्टश्च शूरश्च मतिमान्धृतिमाञ्शुचिः ।
कुलीनश्चानुरक्तश्च दक्षः सेनापतिः कृतः ॥

अनेनोक्तगुणविशिष्टः सेनापतिः कार्य इति सूचितम् । तथा च राजधर्मे— 'धर्मशास्त्रार्थतत्त्वज्ञः सन्धिविग्रहको भवेत् । मतिमान्स्मृतिमान्ह्रीमान्रहस्यविनिगूहिता । कुलीनः शीलसंपन्नः शुक्लामात्यः प्रशस्यते । एतैरेव गुणैर्युक्तस्तथा सेनापतिर्भवेत् । व्यूहयन्त्रायुधानां च तत्त्वज्ञो विक्रमान्वितः । वर्षशीतोष्णवातानां सहिष्णुः पररन्ध्रवित् ।' इति ।

बलवन्तश्च कच्चित्ते मुख्या युद्धविशारदाः ।
दृष्टापदाना विक्रान्तास्त्वया सत्कृत्य मानिताः ॥

अनेन बलाध्यक्षाः कृतपरीक्षा एव दानमानादिना सत्कृत्य स्थापनीया इति सूचितम् । तथा च राजधर्मे— 'अनीकं ये न भिन्दन्ति भिन्नं संस्थापयन्ति च । समानासनयानास्ते कार्या द्विगुणवेतनाः । देशाधिपतयः कार्याः शताधिपतयस्तथा । ततः सहस्राधिपतिं कुर्याच्छूरमतन्द्रितः ।' इति ।

कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम् ।
संप्राप्तकालं दातव्यं ददासि न विलम्बसे ॥

कालातिक्रमणाच्चैव भक्तवेतनयोर्भृताः ।
भर्तुः कुप्यन्ति दुष्यन्ति सोऽनर्थः सुमहान्स्मृतः ॥

अनेन भृत्यानां यथोचितभक्तवेतनदानं यथाकालं कर्तव्यमिति सूचितम् । तथा च मनुः— 'राजा कर्मसु युक्तानां स्त्रीणां प्रेष्यजनस्य च । प्रत्यहं कल्पयेद्वृत्तिं स्थानकर्मानुरूपतः ।' इति ।

कच्चित्सर्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः ।
कच्चित्प्राणांस्तवार्थेषु संत्यजन्ति समाहिताः ॥

अनेन स्वाम्यर्थं त्यक्तव्यप्राणभया एव संपादनीया

इति सूचितम् । तथा चोद्योगे—'संग्रामादपयातानां भग्नानां शरणैषिणाम् । पौरुषं दर्शयञ्शूरो यस्तिष्ठेद्-ग्रतः पुमान् ॥ क्रीणीयात्तं सहस्रेण एतन्नीतिमतां मत-म्' इति । कामन्दकेऽपि—'प्रियेण दानेन च संगृहीता-स्त्यजन्ति रक्ष्याण्यपि जीवितानि ।' राजधर्मेऽपि–'त्यज-न्ति दारान्प्राणांश्च मनुष्याः प्रतिपूजिताः ॥'

कच्चिज्जानपदो विद्वान्दक्षिणः प्रतिभानवान् ।
यथोक्तवादी दूतस्ते कृतो भरत पण्डितः ॥

अनेन प्रत्युत्पन्नमतिश्चतुरो यथोक्तवादी च दूतः संपादनीय इति सूचितम् । तथा च मनुः— 'दूतं चैव प्रकुर्वन्ति सर्वशास्त्रविशारदम् । इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥' इति ।

कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥

अनेन शत्रुपक्षेऽष्टादश तीर्थानि स्वपक्षे तु पञ्चदश बहुभिश्चारैः परस्परमविज्ञातै राज्ञा विज्ञातव्यानीति सूचितम् । तीर्थशब्दार्थमाह हलायुधः—'योनौ जला-

ब्राह्मणैः क्षत्रियैर्वैश्यैः स्वकर्मनिरतैः सदा ।
जितेन्द्रियैर्महोत्साहैर्वृतामार्यैः सहस्रशः ॥

प्रासादैर्विविधाकारैर्वृतां वैद्यजनाकुलाम् ।
कच्चित्समुदितां स्फीतामयोध्यां परिरक्षसे ॥

कच्चिच्चैत्यशतैर्जुष्टः सुनिविष्टजनाकुलः ।
देवस्थानैः प्रपाभिश्च तडाकैश्चोपशोभितः ॥

प्रहृष्टवरनारीकः समाजोत्सवशोभितः ।
सुकृष्टसीमा पशुमान्हिंसाभिः परिवर्जितः ॥

अदेवमातृको रम्यः श्वापदैः परिवर्जितः ।
परित्यक्तो भयैः सर्वैः खनिभिश्चोपशोभितः ॥

विवर्जितो नरैः पापैर्मम पूर्वैः सुरक्षितः ।
कच्चिज्जनपदः स्फीतः सुखं वसति राघव ॥

अनेन पुरराष्ट्ररक्षणं कर्तव्यमिति सूचितम् । तथा च राजधर्मे— 'राज्ञा सप्तैव रक्ष्याणि तानि चैतानि बोध मे । आत्मामात्यश्च कोशश्च दण्डो मित्राणि चैव हि ॥ तथा जनपदाश्चैव पुरं च कुरुनन्दन । एतत्सप्तात्मकं

राज्यं परिपाल्यं प्रयत्नतः ॥ यदा रक्षति राष्ट्राणि यदा दस्यूनपोहति । यदा जयति संग्रामे स राज्ञो धर्म उच्यते ॥' इति ।

**कच्चित्ते दयिताः सर्वे कृषिगोरक्षजीविनः ।**
**वार्त्तायां संश्रितास्तात लोको हि सुखमेधते ॥**

**तेषां गुप्तिपरीहारैः कच्चित्ते भरणं कृतम् ।**
**रक्ष्या हि राज्ञा धर्मेण सर्वे विषयवासिनः ॥**

अनेन पौरजानपदाः सर्वे जना राज्ञा नियमेन रक्षणीया इति सूचितम् । तथा च मनुः— 'युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः ।' इति । राजधर्मेऽपि— 'पौरजानपदाश्चैव गोप्तव्याश्च यथा प्रजाः ।' इति ।

**कच्चित्स्त्रियः सान्त्वयसि कच्चित्तास्तेऽनुरक्षिताः ।**
**कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे ॥**

अनेन स्त्रियः दानमानसत्कारैः पोष्याः, तासु विश्वासोऽपि न कर्तव्यः, गुह्यं च न भाषणीयमिति । तथा चोद्योगे— 'आनीर्षुर्गुप्तदारश्चेत् संविभागी प्रियंवदः ।

श्लक्ष्णो मधुरवाक् स्त्रीणां न चासां वशगो भवेत् ॥' इति। रक्षणे उद्योगे— 'पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः। स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः॥' विश्वासो न कर्तव्य इत्यत्रापस्तम्बः— 'दारे प्रजायां चोपस्पर्शनभाषा विस्रम्भपूर्वाः परिवर्जयेत्।' इति। भोजनीतौ— 'अर्हन्ति नैव विश्वासमर्थकामपराः स्त्रियः। तासु तत्त्वेन न ब्रूयान्नातिस्निह्येत्सदा सुधीः॥' इति। उद्योगेऽपि— 'स्त्रीषु राजसु सर्वेषु स्वाध्याये शत्रुसेविषु। भोगेष्वायुषि विश्वासं कः प्राज्ञः कर्तुमर्हति॥' इति।

**कच्चिन्नागवनं गुप्तं कच्चित्ते सन्ति धेनुकाः।**
**कच्चिन्न गणिकाश्वानां कुञ्जराणां च तृप्यसि॥**

अनेन गजोत्पत्तिस्थानानि रक्षणीयानि। गजाश्वादिप्राप्तौ तृप्तया न भवितव्यमिति सूचितम्। तथा च राजधर्मे— 'आकरे लवने शुल्के तले नाम वने तथा। न्यसेदमात्यान्नृपतिः स्वाप्तान्वा पुरुषान्हितान्॥' इति। असंतुष्टौ राजधर्मे— 'न पूर्णोऽस्मीति मन्येत धर्मतः

कामतोऽर्थतः। बुद्धिजो मन्त्रितश्चापि सततं वसुधाधिप ॥'
इति।

कच्चिद्दर्शयसे नित्यं मनुष्याणां विभूषितः।
उत्थायोत्थाय पूर्वाह्णे राजपुत्र महारथ ॥

अनेन सर्वाभरणभूषितो राजा प्रत्यहं पूर्वाह्ण एव प्रयोजनापेक्षिणां जनानां चक्षुर्विषयो भूयादिति सूचितम्। तथा चाश्रमवासिके पर्वणि— तथैवालंकृतः काले तिष्ठेथा भूरिदक्षिण ॥' इति।

कच्चिन्न सर्वे कर्मान्ताः प्रत्यक्षास्तेऽविशङ्कया।
सर्वे वा पुनरुत्सृष्टा मध्यमे वात्र कारणम् ॥

अनेन सेवकैः शिल्पिभिर्वा अतिपरिचितिः अत्यन्तापरिचितिर्वा न कर्तव्या, किं तु मध्यमेनैव वर्तितव्यमिति सूचितम्।

कच्चित्सर्वाणि दुर्गाणि धनधान्यायुधोदकैः।
यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनुर्धरैः ॥

अनेन दुर्गवर्गो निरर्गलं धनधान्यादिसकलवस्तुसमृद्धः

कर्तव्य इति सूचितम् । तथा च मनुः— दुर्गमुपक्रम्य, 'तत्स्यादायुधसंपन्नं धनधान्येन वाहनैः । ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च ॥' इति ॥

आयस्ते विपुलः कच्चित्कच्चिदल्पतरो व्ययः ।
अपात्रेषु न ते कच्चित्कोशो गच्छति राघव ॥

अनेनाल्पव्ययः कर्तव्यः, अल्पव्ययोऽपि अपात्रे न कर्तव्य इति सूचितम् । राजधर्मे— 'सदैव याचमानेषु तथा दम्भान्वितेषु च । यत्तेषु दक्षिणा दत्ता दावाग्नाविव दुहुतम् ।' कामन्दके— 'अपात्रवर्षणं जातु न कुर्यात्सद्भिर्गर्हितम् । अपात्रवर्षणं किं स्यादन्यत्कोशक्षयादृते' इति ।

देवतार्थे च पित्रर्थे ब्राह्मणाभ्यागतेषु च ।
योधेषु मित्रवर्गेषु कच्चिद्गच्छति ते व्ययः ॥

अनेन देवताद्यर्थेषु नियमेन व्ययः कर्तव्य इति सूचितम् । तथा च कामन्दके— 'धर्मार्थे क्षीणकोशस्य कृशत्वमपि शोभते । सुरैः पीतावशेषस्य शरद्धिमरुचेरिव' इति ।

कच्चिदार्यो विशुद्धात्मा क्षारितश्चोरकर्मणा ।
अपृष्टः शास्त्रकुशलैर्न लोभाद्वध्यते शुचिः ॥

अनेन अनपराधिनं मन्त्रिभिरनालोच्य न दण्डनीयमिति सूचितम् ।

गृहीतश्चैव पृष्टश्च काले दृष्टः सकारणः ।
कच्चिन्न मुच्यते चोरो धनलोभान्नरर्षभ ॥

अनेन चोरो धनलोभान्न विसर्जनीय इति सूचितम् । तथा च राजधर्मे— 'निहन्यात्सर्वतो दस्यून् कामात्कस्यचित्क्षमेत्' इति ।

व्यसने कच्चिदाढ्यस्य दुर्गतस्य च राघव ॥

दरिद्रस्य व्यवहारे प्राप्ते लोभादिना व्यवहारो न कर्तव्य इति सूचितम् । अत एव विपक्षे दण्ड उक्तो मनुना—'लोभाद्दण्डसहस्रं तु मोहात्पूर्वं तु साहसम्' इति । उमामहेश्वरसंवादेऽपि— 'अधर्मं धर्ममित्याहुर्ये च मोहवशागताः । ते स्वकालहतोद्योगाः संभवन्ति हि मानुषे ॥ निर्होमा निर्वषट्कारास्ते भवन्ति गतायुषः ॥' इति ।

यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि राघव ।
तानि पुत्रपशून्घ्नन्ति प्रीत्यर्थमनुशासतः ॥

अनेन परकृतमिथ्यापवादं पुरस्कृत्य तत्प्रीत्यै अनुशासनं न कर्तव्यमिति सूचितम् । तथा च राजधर्मे— 'कामकारेण दण्डं तु यः कुर्यादविचक्षणः । स इहाकीर्तिसंयुक्तो मृतो नरकमाप्नुयात् ॥ न परस्य प्रवादेन परेषां दण्डमर्पयेत् ॥' इति ।

कच्चिद्वृद्धांश्च बालांश्च वैद्यमुख्यांश्च राघव ।
दानेन मनसा वाचा त्रिभिरेतैर्बुभूषसे ॥

अनेन वृद्धादीन्वैद्यान्दानमानसत्कारैर्विभूषयेदिति सूचितम् । तथा च मनुः— 'श्रोत्रियं व्याधितार्तौ च बालवृद्धावकिंचन । महाकुलीनमार्यं च राजा संपूजयेत्सदा ॥' इति ।

कच्चिदर्थेन वा धर्ममर्थं धर्मेण वा पुनः ।
उभौ वा प्रतिलोभेन कामेन च न बाधसे ॥

अनेन धर्माधर्मयोः परस्परोपमर्दः कामेन तयोरुप-

मर्दश्च न कर्तव्य इति सूचितम् । तथा च वनपर्वणि— 'सर्वथा धर्मनित्यं तु पुरुषं धर्मदुर्बलम् । त्यजतस्तात धर्मार्थौ प्रेतं दुःखसुखे यथा ॥ अतिवेलं हि योऽर्थार्थी नेतरावनुतिष्ठति । स वध्यः सर्वभूतानां ब्रह्महेव जुगुप्सितः ॥ तस्य धर्मार्थहीनस्य कामतो निधनं ध्रुवम् । कामतो रममाणस्य मीनस्येवाम्भसः क्षये ॥ सर्वार्थी धर्ममूलोऽर्थो धर्मश्चार्थपरिग्रहः । इतरेतरयोर्नीतौ विद्धि मेघोदधी यथा । न धर्मपर एव स्यात् न चार्थपरमो नरः । न कामपरमो वा स्यात् सर्वान्सेवेत पण्डितः ॥' इति । राजधर्मेऽपि— 'कामक्रोधौ पुरस्कृत्य योऽर्थं राजानुतिष्ठति । न स धर्मं न चाप्यर्थं प्रतिगृह्णाति बालिशः ॥' इति ।

**कच्चिदर्थं च धर्मं च कामं च जयतां वर ।**
**विभज्य काले कालज्ञ सर्वान्भरत सेवसे ॥**

अनेन धर्मार्थकामा यथोचितकाले सेवनीया इत्युक्तम् । तथा च वनपर्वणि— 'धर्मं चार्थं च कामं च यथावद्वदतां वर । विभज्य काले कालज्ञ सर्वान्सेवेत पण्डितः ॥'

धर्मं पूर्वं धनं मध्ये जघन्ये काममाचरेत् । अहन्यनु-
चरेदेवमेष शास्त्रकृतो विधिः ॥' इति ।

कच्चित्ते ब्राह्मणाः शर्म सर्वशास्त्रार्थकोविदाः ।
आशंसन्ते महाप्राज्ञाः पौरजानपदैः सह ॥

अनेन विषयावस्थिनो ब्राह्मणादयो यथाशर्माशंसेरन्
तथा पालनीया इति सूचितम् । तथा च राजधर्मे—
'तस्माद्विजातीन्रक्षेत ते हि रक्षन्ति रक्षिताः । आशी-
रेषा भवेद्राजन्राज्ञां सम्यक्प्रवर्तताम् ॥' इति ।

नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् ।
अदर्शनज्ञानवतामालस्यं पञ्चवृत्तिताम् ॥

एकचिन्तनमर्थानामनर्थज्ञैश्च मन्त्रणम् ।
निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् ॥

मङ्गलान्यप्रयोगं च प्रत्युत्थानं च सर्वशः ।
कच्चित्त्वं वर्जयस्येतान्राजदोषांश्चतुर्दश ॥

पञ्चवृत्तितां पञ्चेन्द्रियवशतां प्रत्युत्थानं च सर्वशः
अनेन एते दोषा राज्ञा वर्जनीया इति सूचितम् ।

दशपञ्चचतुर्वर्गान्सप्तवर्गांश्च तत्त्वतः।
अष्टवर्गं त्रिवर्गं च विद्यास्तिस्रश्च राघव॥

इन्द्रियाणां जयं बुद्ध्वा षाड्गुण्यं दैवमानुषम्।
कृत्यं विंशन्ति वर्गं च तथा प्रकृतिमण्डलम्॥

यात्रादण्डविधानं च द्वियोनी संधिविग्रहौ।
कच्चिदेतान्महाप्राज्ञ यथावदनुमन्यसे॥

अनेन नीतिशास्त्रप्रसिद्धा दशवर्गादयो राज्ञा उपादेयत्वेन ज्ञातव्यत्वेन च सूचिताः। तथा च मनुः— 'दश कामसमुत्थानि तथाष्टौ क्रोधजान्यपि। व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत्। व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते। व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी नृप॥' इति। तत्र दशवर्गादयो मनुना दर्शिताः— 'मृगयाक्षा दिवास्वापः परिवादः स्त्रियो मदः। तौर्यत्रिकं वृथाध्वा च कामजो दशको गणः॥' इति। कामन्दकेनापि 'लुब्धः क्रूरोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः। मूढोऽनेयोऽवमन्ता च सुखच्छेद्यो रिपुर्मतः' इति दशवर्गः। अथ पञ्चवर्गः, अत्र काम-

न्दकः— 'सापत्नं वास्तुजं स्त्रीजं वाग्जातमपराधजम् । वैरप्रभेदनिपुणैर्वैरं पञ्चविधं स्मृतम् ॥' इति । संग्राह्योऽपि पश्चवर्गः; तत्र मनुः— 'औदकं पार्वतं वार्क्षं मैरिणं धान्वनं तथा । शस्तं प्रशस्तमतिथिर्दुर्गं दुर्गोपचिन्तकैः ॥' इति । अथ चतुर्वर्गः, अत्र कामन्दकः— 'साम दानं च भेदश्च दण्डश्चेति चतुर्विधम् ॥' इति । अथ सप्तवर्गः, तत्र कामन्दकः— 'स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् । परस्परोपकारीदं राज्यं सप्ताङ्गमुच्यते ।' इति । अथाष्टवर्गः, तत्र मनुः— 'पैशुन्यं साहसं द्रोहमीर्ष्यासूयार्थदूषणम् । वाग्दण्डयोश्च पारुष्यं क्रोधजोऽपि गणोऽष्टकम् ॥' इति । कामन्दकेऽपि कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरं करादानं शून्यानां च निवेशनम् । अष्टवर्गमिदं प्राहुः स्वस्थचित्तो विवर्धयेत् ॥' इति । अथ त्रिवर्गः, तत्र कामन्दकः— 'वस्तुष्वशक्येषु समुद्यमं च शक्येषु मोहादसमुद्यमं च । शक्येष्वकार्येषु समुद्यमं च त्रीण्येव कार्ये व्यसनं वदन्ति ॥' यद्वा, धर्मार्थकामाः । अथ तिस्रो विद्याः प्रभुमन्त्रोत्साहशक्तयः, त्रयी

वार्ता दण्डनीतिर्वा । अथ षाड्गुण्यम्, षाड्गुण्यं षड्-
गुणाः, तत्र मनुः— 'सन्धिं च विग्रहं चैव यानमासन-
मेव च । द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत्सदा ॥'
इति । दैवमानुषम्, दैवं च मानुषं चैव दैवमानुषं व्यसन-
नम् । हुताशनो जलं व्याधिर्दुर्भिक्षं मरकस्तथा । मरको
दस्युप्रभृतिजनितोपद्रवः ॥' इति पञ्चविधं दैवं व्यसनम्;
मानुषं परम्, 'आयुक्तकेभ्यश्चोरेभ्यः शत्रुभ्यो राज-
वल्लभात् । पृथिवीपतिलोभाच्च प्रजानां पञ्चधा भयम् ॥'
आयुक्ताः, अधिकारिणः । कृत्यं कृत्यवर्गं भेद्यवर्गम्; अत्र
कामन्दकः— 'अलब्धवेतनो लुब्धो मानी चाप्यव-
मानितः । क्रुद्धश्च कोपितोऽकस्मात्तथा भीतश्च भीषितः ॥
यथाभिलषितैः कामैर्भिन्द्यादेतांश्चतुर्विधान् ।' इति । अथ
विंशतिवर्गः असंधेयविंशतिवर्गः कामन्दकः— 'बालो
वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः । भीरुको भीरुज-
नको लुब्धो लुब्धजनस्तथा ॥ विरक्तप्रकृतिश्चैव विषये-
ष्वतिशक्तिमान् । अनेकचित्तमन्त्रश्च देवब्राह्मणनि-
न्दकः ॥ दैवोपहतकश्चैव दैवचिन्तक एव च । दुर्भिक्षव्य-
सनोपेतो बालव्यसनसंकुलः ॥ अदेशस्थो बहुरिपुयुक्तः

काले नयश्च सः। सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ एतैः संधिं न कुर्वीत विगृह्णीयात्तु केवलम् ॥' इति। यद्वा, 'राज्यस्त्रीस्थानदेशानां ज्ञातीनां च धनस्य च। अपहारो मदो मानं पीडा वैषयिकी तथा ॥ ज्ञानार्थशक्तिधर्माणां विघातो दैवमेव च। मित्रार्थश्चावमानश्च तथा बन्धुविनाशनम् ॥ भूतानुग्रहविच्छेदस्तथा मण्डलदूषणम्। एकार्थाभिनिवेशत्वमिति विग्रहयोनयः ॥' इति। प्रकृतिमण्डलम्, प्रकृतयो मण्डलं च। प्रकृतयस्तावत्, अमात्यराष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः। एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः ॥' इति। मण्डलं तु, अरिर्मित्रमरेर्मित्रं मित्रं मित्रमतः परम्। तथारिमित्रं मित्रं च विजिगीषोः पुरः स्मृतम् ॥ पार्ष्णिग्राहस्ततः पश्चादाक्रान्तस्तदनन्तरम्। असारोपचयश्चैव विजिगीषोस्तु मण्डलम् ॥ अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः। अनुग्रहे संहतयोर्व्यस्तयोर्निग्रहे प्रभुः ॥ मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः। अनुग्रहे संहतानां व्यस्तानां निग्रहे प्रभुः ॥' इति। यात्रा, यानम्। तच्च पञ्चविधम्। तथा च कामन्दकः—

'विगृह्य संधाय तथा संभूयाथ प्रसंगतः । उपेक्ष्य चेति निपुणैर्यानं पञ्चविधं मतम् ॥' इति । दण्डविधानं सैन्यविधानम् । द्वियोनी संधिविग्रहौ । द्वयोर्योनी द्वियोनी कारणभूतौ संधिविग्रहौ । तत्र संधिः, द्वैधीभाव-समाश्रययोर्योनिः । विग्रहस्तु—यानासनयोः । कामन्दकः— 'संधेश्च विग्रहस्यैव द्वैगुण्यमिति चक्षते । यानासने विग्रहस्य रूपं संधेः परं द्वयम्' इति ।

मन्त्रिभिस्त्वं यथोद्दिष्टैश्चतुर्भिस्त्रिभिरेव वा ।
कच्चित्समस्तैर्व्यस्तैश्च मन्त्रं मन्त्रयसे मिथः ॥

अनेन कृत्यजातं सर्वं राज्ञा मन्त्रिभिरालोच्यैव कर्तव्यमिति सूचितम् । तथा च मनुः— 'तैः सार्धं चिन्तयेन्नित्यं सामान्यं संधिविग्रहम् । स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥ तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक्पृथक् । समस्तानां च कार्येषु विदध्याद्धितमात्मनः ॥' इति ।

कच्चित्ते सफला वेदाः कच्चित्ते सफलाः क्रियाः ।
कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् ॥

अनेन वेदादयः फलपर्यवसायिनः कर्तव्या इति सूचितम्। तथा च सभापर्वणि युधिष्ठिरं प्रति नारदः— 'अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् । रतिपुत्रफला दाराः शीलपुत्रफलं श्रुतम् ॥' इति ।

कच्चिदेषैव ते बुद्धिर्यथोक्ता मम राघव ।
आयुष्या च यशस्या च धर्मकामार्थसंहिता ॥

कच्चित्स्वादु कृतं भोज्यमेको नाश्नासि राघव ।
कच्चिदाशंसमानेभ्यो मित्रेभ्यः संप्रयच्छसि ॥

अनेन मृष्टमन्नं नैकेन भोक्तव्यमिति सूचितम् । तथा चोद्योगपर्वणि— 'एको न मृष्टमश्नीयादेकः स्वार्थान्न चिन्तयेत् ॥' इति । तत्रैव— 'एकः संपन्नमश्नाति वस्ते वासश्च शोभनम् । योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥' अत्र श्रीरामचन्द्रेण स्वसंदर्शनार्थं समागतस्य भरतस्य कुशलप्रश्नव्याजेन सर्वेषां धर्माणां प्रतिपादनात्, महद्भिः स्वेष्टजनस्य समागमे कुशलप्रश्नपूर्वकं धर्मोपदेशः कर्तव्य इति सूचितम् । तथा च सभापर्वणि धर्मपुत्रं प्रति नारदवचनम् । वैशंपायनः—

'अथ तत्रोपविष्टेषु पाण्डवेषु महात्मसु । लोकान्परिभ्र- मन्सर्वांस्तत्रागमत्सभामृषिः ॥ नारदः स महातेजा ऋ- षिभिः सहितस्तदा । सभास्थान्पाण्डवान्द्रष्टुं प्रीयमाणो मनोजवः ॥ सहसा पाण्डवो ज्येष्ठः प्रत्युत्थायानुजैः सह । अभ्यवादयत प्रीत्या विनयावनतस्तदा ॥ सोऽर्चितः पाण्डवैः सर्वैर्महर्षिर्वेदपारगः । धर्मकामार्थसंयुक्तं पप्र- च्छेदं युधिष्ठिरम् । नारदः—'कच्चिदर्थाश्च कल्प्यन्ते धर्मे च रमते मनः । सुखानि तव जायन्ते मनश्च न विहन्यते ॥ कच्चिदाचरितां पूर्वैर्नरदेव पितामहैः । वर्तसे वृत्तिमक्षीणां धर्मार्थसहितां त्रिषु ॥ कच्चिदर्थेन वा धर्मं धर्मेणार्थमथापि वा । उभौ चाप्रीतिसारेण न कामेन प्रबाधसे ॥ कच्चिदर्थं च कामं च धर्मं च जयतां वर । विभज्य काले कालज्ञ सदा वरद सेवसे ॥ कच्चिद्राज- न्गुणैः सद्भिः सप्तोपायांस्तथानघ । बलाबलं तथा सम्य- क्चतुर्दश परीक्षसे ॥ कच्चिदात्मानमन्वीक्ष्य परांश्च जयतां वर । तथा संधाय कर्माणि अष्टौ भारत सेवसे ॥ कच्चित्प्रकृतयः सप्त न लुप्ता भरतर्षभ । आढ्यास्तथाव्यस- निनः स्वनुरक्ताश्च सर्वशः। कच्चिन्न तर्कैर्धूर्तैर्वा ये चाप्यपरि-

शङ्किताः ॥ त्वत्तो वा तव वामात्यैर्भिद्यते तात मन्त्रितम् । कच्चित्संधिः यथा कालं विग्रहं चोपसेवसे ॥ कच्चिद्वृत्तिमुदासीने मध्यमे चानुवर्तसे । कच्चिदात्मसमा वृद्धाः शुचयो जीवितक्षमाः ॥ कुलीनाश्चानुरक्ताश्च कृतास्ते वीर मन्त्रिणः । विजयो मन्त्रमूलो हि राज्ञां भवति भारत । सुसंवृतो मन्त्रिवरैरमात्यैः शास्त्रकोविदैः । राष्ट्रं सुरक्षितं तात शत्रुभिर्न च लुप्यते ॥ कच्चिन्निद्रावशं नैषीः कच्चित्काले विबुध्यसे । कच्चिच्चापररात्रेषु चिन्तयस्यर्थमर्थवित् ॥ कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह ॥ कच्चित्ते मन्त्रितो मन्त्रो राष्ट्रं न परिधावति । कच्चिदर्थान्विनिश्चित्य लघुमूलान्महोदयान् ॥ क्षिप्रमारभसे कर्तुं न विघ्नयसि तादृशान् । कच्चित्सर्वे न कर्मान्ताः परोक्षास्ते विशङ्किताः ॥ सर्वे वा पुनरुत्सृष्टाः संसृष्टं चात्र कारणम् । आप्तैरलुब्धैः क्रमिकैस्ते च कच्चिदनुष्ठिताः ॥ कच्चिद्राजन्कृतान्येव कृतप्रायाणि वा पुनः । विदुस्ते वीर कर्माणि नानवाप्तानि कानिचित् । कच्चित्कारणिकाः सर्वे सर्वशास्त्रेषु कोविदाः । कारयन्ति कुमारांश्च योधमुख्यांश्च सर्वशः ॥ कच्चित्सहस्रैर्मूर्खाणा-

मेकं क्रीणासि पण्डितम् । पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं परम् ॥ कच्चिद्दुर्गाणि सर्वाणि धनधान्यायुधोदकैः । यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनुर्धरैः ॥ एकोऽप्यमात्यो मेधावी शूरो दान्तो विचक्षणः । राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥ कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च । त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥ कच्चिद्द्विषामविदितः प्रतिपन्नश्च सर्वदा । नित्ययुक्तो रिपून्सर्वानीक्षसे रिपुसूदनम ॥ कच्चिद्विनयसंपन्न कुलपुत्रो बहुश्रुतः । अनसूयुरनुप्रष्टा संस्कृतस्ते पुरोहितः ॥ कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः । हुतं च होष्यमाणं च काले वेदयते सदा ॥ कच्चिदङ्गेषु निष्णातो ज्योतिर्विद्याविशारदः । उत्पातेषु च सर्वेषु दैवज्ञकुशलस्तव ॥ कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः । जघन्याश्च जघन्येषु भृत्यास्ते तात योजिताः ॥ अमात्यानुपधातीतान्पितृपैतामहाञ्शुचीन् । श्रेष्ठाञ्श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु ॥ कच्चिन्नोग्रेण दण्डेन भृशमुद्वेजितप्रजाः । राष्ट्रं तवानुजानन्ति मन्त्रिणो भरतर्षभ ॥ कच्चित्त्वां नावजान-

न्ति याजकाः पतितं यथा । उग्रप्रतिगृहीतारं कामयानमिव स्त्रियः ॥ कच्चिद्धृष्टश्च शूरश्च मतिमान्धृतिमान्कविः । कुलीनश्चानुरक्तश्च दक्षः सेनापतिस्तव । कच्चिद्बलस्य ते मुख्याः सर्वे युद्धविशारदाः ॥ धृष्टा वदान्या विक्रान्तास्त्वया सत्कृत्य मानिताः । कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम् ॥ संप्राप्तकालं दातव्यं ददासि न विकर्षसि । कालातिक्रमणाच्चैते भक्ता वेतनयोर्भृताः ॥ भर्तुः कुप्यन्ति दौर्गत्या सोऽनर्थः सुमहान्स्मृतः । कच्चित्सर्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः ॥ कच्चित्प्राणांस्तवार्थेषु संत्यजन्ति सदा युधि । कच्चिन्नैको बहूनर्थान्सर्वशः सांपरायिकान् ॥ अनुशास्ति यथाकामं कामात्मा शासनातिगः । कच्चित्पुरुषकारेण पुरुषः कर्म भावयन् ॥ लभते मानमात्मीयं भूयो वा भक्तवेतनम् । कच्चिद्विद्याविनीतांश्च नराञ्ज्ञानविशारदान् ॥ यथार्हं गुणतश्चापि दानेनाभ्युपपद्यसे । कच्चिद्दारान्मनुष्याणां तवार्थे मृत्युमीयुषाम् । व्यसनं चाभ्युपेतानां बिभर्षि भरतर्षभ ॥ कच्चिद्भयादुपरतं क्लीबं रिपुमुपागतम् । युद्धे वा विजितं पार्थ पुत्रवत्परिरक्षसि ॥ कच्चित्त्वमस्याः सर्वस्याः

पृथिव्याः पृथिवीपते। समश्च नाभिशङ्क्यश्च यथा माता यथा पिता ॥ कच्चिद्व्यसनिनं शत्रुं निशम्य भरतर्षभ। अभियासि जवेनैव समीक्ष्य त्रिविधं बलम्। पार्ष्णिमूलं च विज्ञाय व्यवसायं पराजयम्॥ बलस्य तु महाराज दत्त्वा वेतनमग्रतः। कच्चिच्च बलमुख्येभ्यः परराष्ट्रे परंतप॥ उपच्छन्नानि रत्नानि प्रयच्छसि यथार्हतः। कच्चिदात्मानमेवाग्रे विजित्य विजितेन्द्रियः॥ पराञ्जिगीषसे पार्थ प्रमत्तानजितेन्द्रियान्। कच्चित्ते यास्यतः शत्रून्पूर्वं यान्ति स्वनुष्ठिताः॥ साम दानं च भेदश्च दण्डश्च विधिवद्गुणाः। कच्चिन्मूलं दृढं कृत्वा यात्रां यासि विशांपते॥ तांश्च विक्रमसे जेतुं जित्वा च परिरक्षसि। कच्चिदष्टाङ्गसंयुक्ता चतुर्विधबला चमूः॥ बलमुख्यैः सुनीता च द्विषतां प्रतिबर्हिणी। कच्चिल्लवं च मुष्टिं च परराष्ट्रे परंतप॥ अविहाय महाराज निहंसि समरे रिपून्। कच्चित्स्वपरराष्ट्रेषु बहवोऽधिकृतास्तव। अर्थान्समनुतिष्ठन्ति रक्षन्ति च परस्परम्। कच्चिदभ्यवहार्याणि गात्रसंस्पर्शनानि च। पेयानि च महाराज रक्ष्यन्तेऽनुमतास्तव। कच्चित्कोष्ठं च कोशं

च वाहनं द्वारमायुधम् ॥ आयश्च कृतकल्याणैः तव भक्तिरनुष्ठितः । कच्चिदाभ्यन्तरेभ्यश्च बाह्येभ्यश्च विशांपते ॥ रक्षस्यात्मानमेवाग्रे तांश्च स्वेभ्यो मिथश्च तान् । कच्चिन्न पाने द्यूते वा क्रीडासु प्रमदासु च ॥ प्रतिजानन्ति पूर्वाह्णे व्ययं व्यसनजं तव । कच्चिदायस्य चार्धेन चतुर्भागेन वा पुनः ॥ पादभागैस्त्रिभिर्वापि व्ययः संशुध्यते तव । कच्चिज्ज्ञातीन्गुरून् वृद्धान्वणिजः शिल्पिनः श्रितान् ॥ अभीक्ष्णमनुगृह्णासि धनधान्येन दुर्गतान् ॥ कच्चिदायव्यये युक्ताः सर्वे गणकलेखकाः ॥ अनुतिष्ठन्ति पूर्वाह्णे नित्यमायव्ययं तव । कच्चिदर्थेषु संप्रौढान्हितकामाननुप्रियान् ॥ नापकर्षसि कर्मभ्यः पूर्वमप्राप्य किल्बिषम् । कच्चिद्विदित्वा पुरुषानुत्तमाधममध्यमान् ॥ त्वं कर्मस्वनुरूपेषु नियोजयसि भारत । कच्चिन्न लुब्धाश्चौरा वा वैरिणो वा विशांपते ॥ अप्राप्तव्यवहारा वा तव कर्मस्वनुष्ठिताः । कच्चिन्न लुब्धैश्चोरैर्वा कुमारैः स्त्रीबलेन वा ॥ त्वया वा पीड्यते राष्ट्रं कच्चित्तुष्टाः कृषीवलाः ॥ कच्चिद्राष्ट्रे तडागानि पूर्णानि च महान्ति च । भागशो वै निविष्टानि न

कृषिर्देवमातृका ॥ कच्चिद्बीजं च भक्तं च कर्षकायावसीदते । प्रत्येकं च शतं वृद्ध्या ददास्यृणमनुग्रहम् ॥ कच्चित्स्वनुष्ठिता तात वार्त्ता ते साधुभिर्जनैः । वार्त्तायां संश्रितस्तावल्लोकोऽयं सुखमेधते ॥ कच्चिच्छूराः कृतप्रज्ञाः पञ्चपञ्चस्वनुष्ठिताः । क्षेमं कुर्वन्ति संहत्य राजन् जनपदे तव ॥ कच्चिन्नगरगुप्त्यर्थं ग्रामा नगरवत्कृताः ॥ ग्रामवच्च कृता रक्षा ते च सर्वे तदर्पणाः । कच्चिद्बलेनानुगताः समानि विषमाणि च ॥ पुराणि चौरा निघ्नन्ति चरन्ति विषये तव । कच्चित्स्त्रियः सान्त्वयसि कच्चित्ताश्च सुरक्षिताः ॥ कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे । कच्चिदागान्निशि श्रुत्वा तत्कार्यमनुचिन्त्य च । प्रियाण्यनुभवञ्शेषे विदित्वाभ्यन्तरं जनम् ॥ कच्चिद्द्वौ प्रथमौ यामौ रात्र्यां सुप्त्वा विशांपते । संचिन्तयसि धर्मार्थौ याम उत्थाय पश्चिमे ॥ कच्चिद्दर्शयसे नित्यं मनुष्यान्समलंकृतान् । उत्थाय काले कालज्ञ सह पाण्डव मन्त्रिभिः ॥ कच्चिद्रक्ताम्बरधराः खड्गहस्ताः स्वलंकृताः । अभितस्त्वामुपासन्ते रक्षणार्थमरिंदम ॥ कच्चिद्दण्ड्येषु यमवत्पू-

क्येषु च विशांपते । परीक्ष्य वर्तसे सम्यगप्रियेषु प्रियेषु च ॥ कच्चिच्छारीरमाबाधमौषधैर्नियमेन वा । मानसं वृद्धसेवाभिः सदा पार्थापकर्षसि ॥ कच्चिद्वैद्याश्चिकित्सायामष्टाङ्गायां विशारदाः । सुहृदश्चानुरक्ताश्च शरीरे ते हिताः सदा ॥ कच्चिन्न मानान्मोहाद्वा कामाद्वापि विशांपते । अर्थिप्रत्यर्थिनः प्राप्तान्नापास्यसि कथंचन ॥ कच्चिन्न मोहाल्लोभाद्वा विस्रंभात्प्रणयेन वा । आश्रितानां मनुष्याणां वृत्तिं त्वं निरुणत्सि च ॥ कच्चित्पौराणसहिता ये च ते राष्ट्रवासिनः । त्वया सह विरुध्यन्ते परैः क्रीताः कथंचन ॥ कच्चिन्न दुर्बल शत्रुर्बलेन परिपीडितः । मन्त्रेण बलवान्कश्चिदुभाभ्यां वा युधिष्ठिर ॥ कच्चित्सर्वेऽनुरक्तास्त्वां भूमिपालाः प्रधानतः । कच्चित्प्राणांस्तवार्थेषु संत्यजन्ति त्वयाहृताः ॥ कच्चित्ते सर्वविद्यासु गुणतोऽर्चा प्रवर्तते । ब्राह्मणानां च साधूनां तव निःश्रेयसे शुभा ॥ कच्चिद्धर्मे त्रयीमूले पूर्वैराचरिते जनैः ॥ वर्तमानस्तथा कर्तुं तस्मिन्कर्मणि वर्तसे । कच्चित्तव गृहेऽन्नानि स्वादून्यश्नन्ति वै द्विजाः ॥ गुणवन्ति गुणोपेतास्तवाध्यक्षं सुदक्षिणम् । कच्चित्त्वं

कुरुषे राजन्वाजपेयांश्च सर्वशः ॥ पौण्डरीकांश्च कात्स्न्र्येन यतसे कर्तुमात्मवान्। कच्चिज्ज्ञातीन्गुरून्वृद्धान्देवतांस्तापसानपि ॥ चैत्यांश्च वृत्तान्कल्याणान्ब्राह्मणांश्च नमस्यसि ॥ कच्चिच्छोको न मन्युर्वा त्वया चोत्पाद्यतेऽनघ। आयुष्या च यशस्या च धर्मकामार्थदर्शिनी ॥ एतया वर्तमानस्य बुध्या राष्ट्रं न सीदति। विजित्य च महीं राजा सोऽत्यन्तं सुखमेधते ॥ कच्चिदार्यो विशुद्धात्मा च्छादितश्चोरकर्मणि। अदुष्टः शास्त्रकुशलैर्न लोभाद्बध्यते शुचिः ॥ दुष्टो गृहीतस्तत्कारी प्राज्ञैर्दुष्टः सकारणः। कच्चिन्न मुच्यते स्तेनो द्रव्यलोभान्नरर्षभ ॥ उत्पन्नान्कच्चिदाढ्यस्य दरिद्रस्य च भारत। अर्थान्न मिथ्या पश्यन्ति तवामात्या हृता धनैः ॥ नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम्। अदर्शनं ज्ञानवतामालस्यं क्षिप्तचित्तताम् ॥ एकचिन्तनमर्थानामनर्थज्ञैश्च चिन्तनम्। निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् ॥ मङ्गल्यस्याप्रयोगं च प्रसङ्गं विषयेषु च। कच्चित्त्वं वर्जयस्येतान्राजदोषांश्चतुर्दश ॥ प्रायशो यैर्विनश्यन्ति कृतमूलोऽपि पार्थिवः। कच्चित्ते सफला वेदाः कच्चि-

ते सफलं धनम् ॥ कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् ॥ युधिष्ठिरः । कथं वै सफला वेदाः कथं वै सफलं धनम् । कथं वै सफला दाराः कथं वै सफलं श्रुतम् ॥ नारदः— अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् । रतिपुत्रफला नारी शीलवृत्तफलं श्रुतम् ॥ वैशम्पायनः— एतदाख्याय स मुनिर्नारदः सुमहातपाः । पप्रच्छानन्तरमिदं धर्मपुत्रं युधिष्ठिरम् । नारदः— कच्चिदभ्यागता दूता वणिजो लोभकारणात् । यथोक्तमपहार्यन्ते शुल्कं शुल्कोपजीविभिः ॥ कच्चित्ते पुरुषा राजन्पुरे राष्ट्रे च मानवाः । उपानयन्ति पुण्यानि उपधाभिर्न वञ्चिताः । कच्चिच्छृणोषि मर्त्यानां धर्मार्थसहिता गिरः ॥ नित्यमर्थविदां तात तथा कर्मानुदर्शिनाम् । कच्चित्ते कृषितन्त्रेषु गोषु पुण्यफलेषु च ॥ धर्मार्थं द्विजमुख्येभ्यो दीयते मधुसर्पिषी । द्रव्योपकरणं किंचित्सर्वदा सर्वशिल्पिषु ॥ चातुर्मास्यवरं सम्यङ्नियतं संप्रयच्छसि । कच्चित्कृतं विजानीषे कर्तारं च प्रशंससि ॥ सतां मध्ये महाराज सत्करोषि च पूजयन् । कच्चित्सूत्राणि सर्वाणि गृह्णासि भरतर्षभ ॥ हस्तिसू-

आश्वसूत्राणि ब्रह्मदण्डश्च भारत । विषयोगाश्च सर्वे ते विदिताः शत्रुनन्दनाः ॥ कच्चिदग्निभयाच्चैव सर्पव्यालभयात्तथा । रोगरक्षोभयाच्चैव राष्ट्रं स्वं परिरक्षसि ॥ कच्चिदन्धांश्च पंगूंश्च मूकान्व्यक्तानबान्धवान् । पितेव पासि धर्मज्ञ तथा प्रव्राजितानपि ॥ षडनर्था महाराज कच्चित्ते पृष्ठतः कृताः । निद्रालस्यं भयं क्रोधो मार्दवं दीर्घसूत्रताम् ॥ एवं यो वर्तते राजा चातुर्वर्ण्यस्य रक्षणे । स विहृत्येह सुसुखी शक्रस्यैति सलोकताम्' इति ॥ एकशततमे—तदनु तदनुजो भरतः कुशलप्रश्नमिषेण नानाविधान्राजधर्मानुपदिशन्तं रामभद्रं प्रत्युवाच—

किं मे धर्माद्विहीनस्य राजधर्मः करिष्यति ।

अवश्यकर्तव्यज्येष्ठानतिक्रमणरूपधर्माद्विहीनस्य राजधर्मः अकिंचित्कर इत्यर्थः । तदेवाह—

शाश्वतोऽयं सदा धर्मः स्थितोऽस्मासु नरर्षभ ।
ज्येष्ठे पुत्रे स्थिते राजन्न कनीयान्नृपो भवेत् ।
सुसमृद्धां मया सार्धमयोध्यां गच्छ राघव ॥

तदस्मत्कुलश्रेयोऽभिवृद्धये त्वमात्मानमभिषेचय ।

राजानं मानुषं प्राहुर्देवत्वे संमतं मम ।
यस्य धर्मार्थसहितं वृत्तमाहुरमानुषम् ॥

अनेन अमानुषचरित्वाद्राजा देव एव। अदर्शितामानुषचरित्रत्वं च मनुना दर्शितम्—' चन्द्रस्यार्कस्य वातस्य यमस्य वरुणस्य च । इन्द्रस्याग्नेः पृथिव्याश्च तेजो वृत्तं नृपश्चरेत् ॥ वार्षिकांश्चतुरो मासान्यथेन्द्रोऽद्भिः प्रवर्षति । तथाभिवर्षेत्स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन् ॥ अष्टौ मासान्यथादित्यस्तोयं हरति रश्मिभिः । तथा हरेत्करं राष्ट्रान्नित्यकर्मव्रतं चरन् ॥ प्रविश्य सर्वभूतानि यथा चरति मारुतः । तथा चारैः प्रवेष्टव्यं वनमेतद्धि मारुतम् ॥ यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति । तथा राज्ञा नियन्तव्याः सर्वे तद्धि यमव्रतम् ॥ वारुणेन यथा पाशैर्बध्यते पापकृन्नरः । तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम् ॥ परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः । तथा प्रकृतयो यस्मिन्सचन्द्रव्रतिको नृपः ॥ प्रतापयुक्तस्तेजस्वी नित्यं स्यात्पापकर्मसु । दुष्टसामन्तहिंस्रश्च तदा-

प्रेयव्रतं स्मृतम् ॥ यथा सर्वाणि भूतानि धरा धारयते समम् । तथा सर्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम् ॥' इति । दशरथोऽपि मयि केकयदेशनिवासिनि, त्वयि चारण्यमाश्रिते, त्वद्विवासनजनितगुरुतरशोकभारविदीर्णहृदयः स्वर्गमार्गं परिष्कृतवान् । तस्मात्त्वमधुना पितुरौर्ध्वदेहिकमुदकं कुरु । प्रागेव शत्रुघ्नेन सहाहमुदकमकरवम् ।

प्रियेण खलु दत्तं हि पितृलोकेषु राघव ।
अक्षय्यं भवतीत्याहुर्भवांश्चैव पितुः प्रियः ॥

अत्र, 'पुत्राणां मध्यमो वापि कनिष्ठो ज्येष्ठ एव वा । पितुर्यस्तु प्रियतमः सर्वं तेनैव कारयेत् ॥' इति ऋष्यशृङ्गवचनपर्यालोचनया सत्यपि ज्येष्ठे प्रियपुत्रस्यैव पितुरौर्ध्वदेहिकाधिकारप्रतिपादनेन प्रियज्येष्ठपुत्रदत्तं पितुरक्षय्यं भवतीति अनुक्तसिद्धम् ॥ द्विशततमे— पितृमरणसमाकर्णनसमधिकशोकसंतप्तहृदयो रामभद्रः वाग्नागारिकानिसृष्टकुलिशसदृशं भरतवदनविनिर्गतं वचनमाकर्ण्य परशुसनिकृत्तसालपोत इव भूमौ निपपात ।

स्वनु तदनुजाः कशाघातपरिश्रमेण प्रसुप्तं गजराजमिव नयनजेन जलेन सिषिचुः । अथ मुहूर्तात्संज्ञामुपलभ्य उत्फुल्लारविन्दसमाकाराभ्यां नयनाभ्यां मुहुर्मुहुरुष्णमास्रमुत्सृजन्,

उवाच भरतं वाक्यं धर्मात्मा धर्मसंहितम् ।
किं करिष्याम्ययोध्यायां ताते दिष्टां गतिं गते ॥

कस्तां राजवराद्धीनामयोध्यां पालयिष्यति ।
किं नु तस्य मया कार्यं दुर्जातेन महात्मनः ॥

यो मृतो मम शोकेन मया चापि न संस्कृतः ।
अहो भरत सिद्धार्थो येन राजा त्वयानघ ॥

शत्रुघ्नेषु च सर्वेषु प्रेतकृत्येषु संस्कृतः ।

अनेन पितुः चरमसंस्कारकर्तैव धन्य इति सूचितम् । सोऽहमिदानीं लोकान्तरगते पितरि,

निवृत्तवनवासोऽपि अयोध्यां गन्तुं नोत्सहे ।

हा जनकनन्दिनि श्वशुरेण विना कृतासि । लक्ष्मण

त्वमपि पितृविहीनः कथमिदानीं वर्तिष्यस इति सकरुणं परिदेवयमानं रामभद्रमवलोक्य तदनुजाः,

अब्रुवन् जगतीभर्तुः क्रियतामुदकं पितुः ।

अथ श्वशुरवियोगेन खिद्यमानमानसां सीतां सान्त्वयित्वा,

आनयेङ्गुदिपिण्याकं चीरमाहर चोत्तरम् ।
जलक्रियार्थं तातस्य गमिष्यामि महात्मनः ॥

सीता पुरस्ताद्व्रजतु त्वमेनामभितो व्रज ।
अहं पश्चाद्गमिष्यामि गतिर्ह्येषा सुदारुणा ॥

इति रामो लक्ष्मणमभिधाय अनुजैः सह मन्दाकिनीतीरपरिसरमभिससार। अत्र अपः स्नानार्थं गच्छतामयं विधिः सूचितः । तथा चापस्तम्बः— ‘उदकोपस्पर्शने आरोहणे इति सर्वत्र कनिष्ठकप्रथमा अनुपूर्वा इतरे स्त्रीयोगे’ इति ।

ते तु तीर्थं ततः कृच्छ्रादुपगम्य यशस्विनः ।
सिषिचुस्तूदकं राज्ञे तत एतद्भवत्विति ॥

प्रगृह्य च महीपालो जलपूरितमञ्जलिम् ।
दिशं याम्यामभिमुखो रुदन्वचनमब्रवीत् ॥

एतत्ते राजशार्दूल विमलं तोयमक्षयम् ।
पितृलोकं गतस्यार्थे मद्दत्तमुपतिष्ठ॰ ॥

इति यथाविधि जलाञ्जलिमदात् । तं विधिमाहापस्तम्बः— 'एकवाससो दक्षिणामुखाः सकृदुपमज्ज्योत्तीर्य वासः पीडयित्वोपविशन्ति । एवं त्रिस्तत्प्रत्ययं तिलमिश्रमुदकमुत्सिञ्चेत्' इति । अत्र कृतौर्ध्वदेहिकस्यापि पितुः रामेण निवापोदकदानात् अन्यैरपि देशान्तरस्थैः पुत्रैः कृतौर्ध्वदेहिकस्यापि पितुः निवापोदकदानादि कर्तव्यमिति सूचितम् । तथा श्लोकगौतमः— 'दहनादिसपिण्डान्तं कनिष्ठाद्यैः कृतं यदि । पित्रोर्देशान्तरज्येष्ठस्तच्छ्रुत्वा श्रवणाहतः ॥ कुर्यात्क्षौरादि शोके वा रात्रौ श्रुत्वा पराहतः । उत्पकेशो दशाहं तं दद्यात्त्रिंशद्दशैव वा ॥ तिलोदान्युत्पकेशादि ततः कुर्यात्' इति ।

ततो मन्दाकिनीतीरात्प्रत्युत्तीर्य स राघवः ।
पितुश्चकार तेजस्वी निवापं भ्रातृभिः सह ॥

ऐङ्गुदं बदरीमिश्रं पिण्याकं दर्भसंस्तरे ।
न्यस्य रामः सुदुःखार्तो रुदन्वचनमब्रवीत् ॥
इदं भुङ्क्ष्व महाराज प्रीतो यदशना वयम् ।

ननु अनेन वचनेन स्नानसमनन्तरमेव रामेण पिण्डदानं कृतमिति प्रतिपादितम् । तत्किं दशाहमध्ये कर्तव्य-पिण्डदानात्मकम्, उत सपिण्डीकरणात्मकम्? नाद्यः, दशाहमध्यकर्तव्यपिण्डदानस्य कृतौर्ध्वदेहिकविषये पुनरावृत्तिप्रतिषेधात् । तथा च स्मृत्यन्तरे— 'मुख्यकर्ता विदेशस्थः कालेऽकाले श्रुतौ यदि । तिलवारि प्रकुर्वीत पिण्डदानं विवर्जयेत् ॥' काले एकोद्दिष्टसमये अकाले तदनन्तरम् इति । न द्वितीयः— 'पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः । श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥' इति पैठीनसिवचनपर्यालोचनया श्रवणदिनप्रभृतिदशाहपर्यन्तमाशौचसत्त्वेन 'सर्वेषामेव वर्णानामाशौचान्ते सपिण्डनम्' इति कात्यायनवचनपर्यालोचनया आशौचान्ते कर्तव्यस्य सपिण्डीकरणस्य श्रवणदिन एव अशुद्धेन कर्तुमशक्यत्वात् इति चेन्न । सपिण्डी-

करणप्रतिपादक एवायं पिण्डशब्दः । न च शुद्ध्यनन्तर-कर्तव्यस्य सपिण्डीकरणस्य श्रवणदिन एव कथमनुष्ठान-मिति वाच्यम् । व्रतिनः क्रियावतो राज्ञो रामभद्रस्य सद्यः शुद्धत्वेन श्रवणदिने स्नानसमनन्तरमेव कर्तुमश-क्यत्वात् । तथा च दक्षः— 'गदार्थं यो विजानाति वेदमङ्गैः समन्वितम् । संकल्पं सरहस्यं च क्रियावांश्चेन्न सूतकम् । राजर्त्विग्दीक्षितानां च बाले देशान्तरं तथा ॥ व्रतिनां सत्रिणां चैव सद्यः शौचं विधीयते ।' इति । दशाहसूतकं तु 'अस्नात्वा च जपो हुत्वा भुङ्क्ते दत्त्वा च यो द्विजः । एवंविधस्य विप्रस्य दशाहं सूतकं भवेत् ॥' इति वचनात् स्नानाद्यभाववत्पुरुषविषयम् । 'वृत्तस्वाध्याय-सापेक्षमघसंकोचनं तथा' इत्युपक्रम्य 'कलौ युगे त्विमान्ध-र्मान् वर्ज्यानाहुर्मनीषिणः । दशाह एव विप्रस्य सपिण्ड-मरणे सति ॥ कल्पान्तराणि कुर्वाणः कलौ व्यामोह-किल्बिषी ।' इति हारीतः । 'न कर्तव्यं न कर्तव्यं सद्यः संकोचनं कलौ ।' इत्यादिवचनावगतोऽयं संकोचनिषेधस्तु कलियुगविषयः । परमपुरुषस्य कल्याणचरित्रस्य रामभद्रस्य तु त्रेतायुगवर्तित्वात्सद्यः शुद्धिर्भवत्येव । नन्वेवमपि भर-

तेन प्रागेव सपिण्डीकरणस्य कृतत्वेन कथं रामेण पुनःकरणमिति चेन्न । 'यवीयसा कृतं कर्म प्रेतशब्दं विहाय तु । तज्ज्यायसापि कर्तव्यं सपिण्डीकरणं पुनः' इत्यादिशास्त्रपर्यालोचनया देशान्तरस्थेन ज्येष्ठपुत्रेण कृतौर्ध्वदेहिकस्यापि पितुः प्रेतशब्दं विहाय पुनः सपिण्डीकर्तव्यत्वात् । न च सपिण्डीकरणस्य ब्राह्मणभोजनसापेक्षत्वात् इह च पिण्डदानमात्रश्रवणात् कथमिदं सपिण्डीकरणरूपमिति वाच्यम्, उदाहृतवचनपर्यालोचनया सपिण्डीकरणस्यावश्यकर्तव्यत्वेन तदनुरोधात् । अत्रत्यपिण्डदानशब्दस्य ब्राह्मणभोजनोपलक्षकत्वसंभवात्,

ऐङ्गुदं बदरीमिश्रं पिण्याकं दर्भसंस्तरे ।
न्यस्य रामः सुदुःखार्तो रुदन्वचनमब्रवीत् ॥
यदन्नः पुरुषो लोके तदन्ना तस्य देवता ॥

इति । अनेन पुरुषस्य वर्णाश्रमोचितं यादृशमन्नं लब्धं स्वादु वा अस्वादु वा तदेव देवतातिथिपितृभ्यो देयमिति सूचितम् । देवताशब्दश्च देवपितृमनुष्यसाधारणसंप्रदानमात्रपरः अत्रैव पिण्डदानोद्देश्ये पितरि देवताशब्दप्रयो-

गात् । तथा तैत्तरीये वैश्वदेवग्रहब्राह्मणे 'एतस्मिन्वा अपि ग्रहे मनुष्येभ्यो देवेभ्यः पितृभ्यः क्रियते' इत्यनुक्रान्तेषु मनुष्यादिषु वाक्यशेषे 'एतावतीर्वै देवताः ताभ्य एवैनं सर्वाभ्यो गृह्णाति' इति देवताशब्दप्रयोगात् मनुष्यादिसाधारणो देवताशब्दः । तथा च मनुः— 'अन्नदानयेत्ततो दद्यात् बलिभिक्षां च शक्तितः । अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतान् ॥' इति । यज्ञः पुरुषस्तु तच्छेष इत्यर्थः । तथा च गीतासु— 'इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः । तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः । ते त्वघं भुञ्जते पापा ये पचन्त्यात्मकारणात् ॥' इति । देवलोऽपि —'देवार्थे ब्राह्मणार्थे वा पचमानो न लिप्यते । अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् ॥ नात्मार्थं पचयेदन्नं नात्मार्थं घातयेत्पशून् ।' इति । मनुरपि— 'भैक्षमन्नं गृहस्थस्य वर्णिनो भैक्षमेव च । आत्मार्थे पक्वमन्नं च स्वमांससदृशं भवेत् ॥' इति । आपस्तम्बोऽपि— 'अतिथीनेवाग्रे भोजयेद्बालान्वृद्धान्रोगसंबन्धान् स्त्रींश्चान्तर्वत्नीः' इति 'शेषभोज्यतिथीनां स्यान्न रसान्गृहे भुञ्जीत

नावशेषमतिथिभ्यो नात्मार्थमभिरूपमन्नं पाचयेत्' इति च। बोधायनोऽपि—'भोजयेदतिथीनन्तर्वत्नीरनन्तरं बालवृद्धांस्तथा दीनान्व्याधितांश्च विशेषतः। अदत्त्वा तु य एतेभ्यः पूर्वं भुङ्क्ते यथाविधि॥ भुञ्जानोऽपि न जानाति न स भुङ्क्ते न भुज्यते। पितृदैवतभृत्यानां मातापित्रोर्गुरोस्तथा॥ वाग्यतोऽथ समश्नीयादेष धर्मो विधीयते।' स एव—'न त्वेव कदाचिददत्त्वा भुञ्जीत' अथाप्यन्नगीतौ श्लोकावुदाहरन्ति—'यो मामदत्त्वा पितृदेवताभ्यो भृत्यातिथीनां च सुहृज्जनस्य। संपन्नमश्नन्विषमत्ति मोहात्तमद्म्यहं तस्य च मृत्युरस्मि॥ हुताग्निहोत्रः कृतवैश्वदेवः पूज्यातिथीन्भृत्यजनावशिष्टम्। तुष्टः शुचिः श्रद्दधदत्ति यो मां तस्यामृतं स्यां स च मां भुनक्ति॥' याज्ञवल्क्योऽपि—'अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम्। स्वाध्यायं चान्वहं कुर्यान्न पचेदन्नमात्मनः॥' इति। बृहदारण्यके—'एकमस्य साधारणमितीदमेवास्य तत्साधारणमिन्नीदमेवास्य तत्साधारणमन्नं यदिदमद्यते स एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रं ह्येतत्' इति। तथा आग्रयणे श्रुतिः—'आनीतो वा एष देवानां य आहिताग्निरदन्नस्य

देवा अन्नं यदकृत्वाग्रायणं नवस्याश्नीयात्। देवेभ्यो भागं प्रतिकल्प्यमद्यादृर्तिमाच्छेंत्' इति। बोधायनोऽपि—'अनाहिताग्नेराग्रयणं कृत्वा वैश्वदेवं कृत्वा ब्राह्मणेभ्यो दत्त्वा प्राशनमेवमेतेन सर्वासामौषधीनामाग्रयणं व्याख्यातम्, अथ फलानां मूलानां भक्ष्याणां ब्राह्मणेभ्यो दत्त्वा प्राशनमेव पुष्पाणाम् अन्येषां च नवानां ब्राह्मणेभ्यो दत्त्वोपयोगः' इति। अथ वा यादृशमन्नं मृष्टमश्नाति पुरुषः देवता अप्यविशेषेण तदन्नाः न तत्र भेदः कार्य इति सूचितम्। तथा च देवलः— 'मृष्टमन्नं स्वयं भुक्त्वा कदन्नन्तु ततो नरः। ब्राह्मणं भोजयेन्मूर्खो नरके चिरमावसेत्॥' इति। वसिष्ठोऽपि— 'मांसमन्नं तथा शाकं गृहे यच्चोपपादितम्। न वै स्वयं तदश्नीयादतिथिं यत्र भोजयेत्॥' इति। देवलः— 'अघृतं भोजयन्विप्रं यो गृहे सर्पिषि सर्पिषी। परत्र निरयं घोरं गृहस्थः प्रतिपद्यते॥' इति। मनुः— 'नैव स्वयं तदश्नीयादतिथिं यन्न भोजयेत्। धन्यं यशस्यमायुष्यं स्वर्ग्यं चातिथिपूजनम्॥' इति। संवर्तः—'यस्त्वेकपङ्क्त्या विषमं ददाति स्नेहाद्भयाद्वा यदि वार्थहेतोः। क्रूरं दुराचारमनात्मवन्तं ब्रह्मघ्नमेनं मुनयो

वदन्ति ॥ पङ्क्तिभेदी पृथक्पाकी नित्यं वै यतिनिन्दकः । ब्राह्मणे निन्दकश्चैव आदेशी वेदविक्रयी ॥ षडेते ब्रह्महन्तारो गतिस्तेषां न विद्यते ।' इति । मार्कण्डेयपुराणे—'एकपङ्क्त्या च ये विप्रमथवेतरवर्णजाम् । विषमं भोजयन्तीह विड्भुजस्त इमे नृप ॥' इति । अथ वा पुरुषस्य यदप्रतिषिद्धमन्नं तदेव देवताभ्यो देयमिति सूचितम् । तथा च भरद्वाजः— 'यदार्याणामभोजनीयं न तेऽन्नं देवान्यजेत' इति । कात्यायनः—'शिष्टभक्षप्रतिषिद्धं दुष्टम्' इति । आपस्तम्बोऽपि— 'यदार्याणामभोजनीयं स्यात् न तेन यजेत' इति तत्र अत्र भक्षणप्रतिषिद्धं जातिदुष्टं, क्रियादुष्टं, संसर्गदुष्टं, निमित्तदुष्टं, कालदुष्टं, परिग्रहदुष्टं, पर्युषितम् इति सप्तविधम् । तत्र जातिदुष्टस्योदाहरणमाह विष्णुपुराणे— 'राजमाषानणूंश्चात्र मसूरांश्च विवर्जयेत् ।' मनुः— 'आविकं संधिनीक्षीरं विवत्सायाश्च गोःपयः । आरण्यानां च सर्वासां मृगीणां महिषीर्विना ॥' इति । शङ्खः— सर्वासां द्विस्तनीनां क्षीरमभोज्यमाजवर्ज्यम् ।' इति । आपस्तम्बोऽपि— 'सर्वं मद्यमपेयं तथैलकं पय उष्ट्रीक्षीरमृगीक्षीरसंधिनीक्षीर-

बमसूक्षीराणीति धेनोश्चानिर्दशायास्तथा कीललौष-
धीनां च करञ्जपलण्डुपरालीका यच्चान्यत्परिचक्षते कया-
कभोज्यमिति हि ब्राह्मणमेकखुरोष्ट्रगवयग्रामसूकरशरभ-
गवां कुक्कुटो विकिराणां प्लवः प्रतुदां क्रव्यादो हं-
सभासचक्रवाकसुपर्णाश्च कुञ्चक्रौञ्चवाघ्रीणसलक्ष्मण-
वर्जं पञ्चनखानां गोधाकच्छपश्वाविद्‌चर्यकखड्गशशपू-
तिखषवर्जमभक्ष्यश्चेटो मत्स्यानां सर्पशीर्षी मृदुरः क्र-
व्यादो ये चान्ये विकृता यथा मनुष्यशिरसः' इति।
संधिनी गर्भिणी कीललौषध्यः सुरासंधानद्रव्यं करंज-
पलंडुपलालीकाः रक्तश्वेतकृष्णलशुनं कयाकुश्छत्राकम्।
तथा च मनुः– 'लशुनं गृञ्जनं चैव पलण्डुं कवकानि च।
अभक्ष्याणि द्विजातीनाममेध्यप्रभवानि च। लोहितान्वृ-
क्षनिर्यासान्व्रश्चनप्रभवांस्तथा॥ शेलुं गव्यं च पीयूषं
प्रयत्नेन च वर्जयेत्।' इति। धर्मसुधानिधौ— 'अलाबुं
गृञ्जनं चैव पलण्डुं पिण्डमूलकम्। गान्धारककरम्भाणि
लवणान्यौषराणि च॥ आरक्तानपि निर्यासान्प्रत्यक्षलव-
णानि च। व्रश्चनप्रभवं सर्वं हिङ्गुद्रव्यं विनैव तु॥
भूतृणां शिग्लुकां चैव ब्राह्मणो नैव भक्षयेत्।' इति।

आपस्तम्बः— 'विलपनं मथितं पिण्याकं मधु मांसं च वर्जयेत्कृष्णधान्यं शूद्रान्नं ये चान्ये नाश्यसंमता हविष्य-मनृतं क्रोधं येन च क्रोधयेत् । स्मृतिमिच्छन्यशो मेधां स्वर्गं पुष्टिं द्वादशैतानि वर्जयेत्' इति । गौतमः—'उद्धृतस्नेहविलयनमथितपिण्याकप्रभृतीनि चात्तवीर्याणि नाश्नीयात् ।' इति । मनुः— 'छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् । पलाण्डुं गृञ्जनं चैव मत्स्यान् जग्ध्वा पतेद्द्विजः ॥ अमत्यैतानि षड्जग्ध्वा कृच्छ्रं चान्द्रायणं चरेत् । यतिचान्द्रायणं चापि शेषेषूपवसेदहः ॥' इति । देवलः— 'कण्डूरं श्वेतवृन्ताकं कूष्माण्डं च विवर्जयेत् । ये भक्षयन्ति पिण्याकं ते वै निरयगामिनः ॥' इति । संग्रहे— 'तण्डुलाम्भःकणं तद्वदन्नविस्रावमेव च । दग्धशाकोदनादीनि सर्वथा परिवर्जयेत् ॥' इति । क्रियादुष्टत्वे, आपस्तम्बः— 'पदा वोपहतं सिचा वा शुना वा पोत्रेण वा स्पृष्टं मनुष्यैरवघ्रातम्, अन्यैर्वा मेध्यैः' इति । मनुः— 'भ्रूणघ्नावेक्षितं चैव संघुष्टं चाप्युदक्यया । पतत्रिणावलीढं च शुना संस्पृष्टमेव च ॥ गवा चान्नमवघ्रातं घुष्टान्नं च विशेषतः ।' इति । आपस्तम्बः— 'ना-

पणीयमन्नमश्नीयात्तथा रसानाम्, आममांसमधुलवणा-
नीति परिहाप्य' इति। बोधायनः— 'ओदनं तु पुनः
पक्कं नारिकेलरसं तथा। तथा तोयमभूमिष्ठं ब्राह्मणो
नैव भक्षयेत्॥' इति। आपणीयनिषेधस्यापवादमाह
शङ्खः—'अपूपाः सक्तवो धानास्तक्रं दधि घृतं मधु।
एतत्पण्येषु भोक्तव्यं भाण्डलेपो न चेद्यदि।' संसर्गदुष्टे
आपस्तम्बः— 'अप्रयतेनोपहृतमप्रयतं न त्वभोज्यं अप्र-
यतेन तु शूद्रेणोपहृतमभोज्यं यस्मिंश्चान्ने केशः स्यादन्यद्वा-
मेध्य अमेध्यैरवमृष्टं कीटो वाऽमेध्यसेवी मूषकलाङ्गवेति।
मूषकला मूषिकापूरीषं अङ्गंवा पुच्छादि। मनुः—'मत्त-
क्रुद्धातुराणां च न भुञ्जीत कदाचन। केशकीटावपन्नं च
पदास्पृष्टं च कामतः॥' इति। स्मृतिसारे— 'क्षीरे तु
लवणं दत्तमुच्छिष्टेऽपि च यद्धृतम्। स्नानरजकतीर्थेषु
ताम्ये गव्यं सुरासमम्॥' इति। वृद्धहारीतः— 'सं-
स्कांस्यं नालिकेलाम्बु कांस्ये च रसमैक्षवम्। ताम्रपात्रे
घृतं गव्यं क्षीरं च लवणान्वितम्॥ घृतं लवणसंयुक्तं
सुराकल्पं विवर्जयेत्। प्रत्यक्षलवणं नाद्यात् अन्नं परगृ-
हागतम्॥' इति। स्मृत्यन्तरे— 'नालिकेरोदकं कांस्ये

ताम्रे पात्रे च संस्थितम् । मधु ताम्रस्थितं गव्यं मलतुल्यं घृतं विना ॥' इति । संसर्गस्यापवादमाह मनुः— 'पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् । केशकीटावपन्नं च मृत्प्रक्षेपेण शुध्यति ॥' इति । बोधायनः— 'एवं सिद्धहविषां महतांश्ववायसप्रभृत्युपहतानां तं देशं पुरुषान्नमुत्सृज्य पवमानः सुवर्जन इत्येतेनानुवाकेनाभ्युक्षणम् ।' इति । निमित्तदुष्टे आपस्तम्बः— 'यस्य कुले म्रियेत न तत्रानिर्दशभोक्तव्यं तथानुत्थितायां सूतिकायामन्तःशवे च' इति । अन्तःशवे ग्रामे शवे सति । स एव 'हिंसार्थेनासिना मांसं छिन्नमभोज्यम् ।' इति । उशना— 'यस्तेषामन्नमश्नाति सकृदेवापि कामतः । तदाशौचनिवृत्तौ तु स्नानं कृत्वा विशुध्यति ॥ यावत्तदन्नमश्नाति दुर्भिक्षाभिहतो नरः । तावन्त्यहान्यशुद्धः स्यात्प्रायश्चित्तं ततश्चरेत् ॥' इति । कालदुष्टे मनुः— 'वीर्यहानिर्यशोहानिः प्रज्ञाहानिस्तथैव च । भवेद्यस्मात्ततो रात्रौ धात्री यत्नेन वर्जयेत् ॥ धानाः खादेन्न च तथा दधिसक्तूंस्तथा निशि । सर्वं च तिलसंबन्धं नाद्यादस्तार्यां प्रतितिक्तार्द्रकं दधि च श्राणां तिलशाकानि निश्यदन् ॥

त्यज्यते रूपवाक्श्रीभिः पुष्पितक्षीरतायथा ।' इति । स्मृत्यन्तरे— 'भानुवारे दिवारात्रं सप्तम्यां च तथैव च । धात्रीफलं नरः खादन्नलक्ष्मीको भवेत्सदा ॥' इति । स्मृतिसारे— 'आमलक्याः फलं चैव जम्बीरं तिन्त्रिणीफलम् । प्रज्ञाप्रतापलक्ष्मीवान्सदैतद्वर्जयेन्निशि ॥' इति । अस्यापवादमाह, आग्नेयपुराणे— 'कल्याणे चोत्सवे विष्णोर्ब्राह्मणानां समागमे । तिथिवारनिषिद्धं यत्र दोषस्तस्य भक्षणे ॥' इति । परिग्रहदुष्टे आपस्तम्बः— 'चिकित्सकस्य मृगयोः शल्यकृन्तस्य पाशिनः । कुलटायाः षण्डकस्य च तेषामन्नमनाद्यम् ॥' इति । स एव— 'प्रकृत्या ब्राह्मणस्य भोक्तव्यमिति प्रायश्चित्तवति प्रायश्चित्तं कर्म न सेवते । सङ्घान्नमभोज्यं परिक्रुष्टं च सर्वेषां च शिल्पजीविनाम् ॥ ये शस्त्रमाजीवन्ति ये चाधि भिषग्वार्धुषिको दीक्षितोऽक्रीतराजकोऽग्नीषोमीयसंस्थायामेव हुतायां वा वपायां दीक्षितस्य भोक्तव्यं यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन्निति हि ब्राह्मणम् । क्लीबो राज्ञां प्रेषकरोऽहविर्याजी चार्यविधिना च प्रव्रजितो यश्चाग्नीनपास्यति यश्च सर्वान्विवर्जयते सर्वान्नी

च श्रोत्रियो निराकृतिर्वृषलीपतिर्मत्त उन्मत्तो बद्धोऽणिकः प्रत्युपविष्टो यश्च प्रत्युपवेशयते तावन्तं कालम्' इति । सङ्घान्नं गणान्नं, परिक्रुष्टं उच्चैराक्रुष्टं, आधिः स्वगृहे परान्वासयित्वा तेभ्यो भृतिग्रहणं, अहविर्याजी रक्तादिना याजी, चारी चरः, अविधिना प्रव्रजितः अविधिना संन्यासं कृतवतः, निराकृतिः निःस्वाध्यायः, अणिकः पुत्राच्छ्रुतग्राही । अस्यापवादमाह गौतमः— 'एधोदकयवसमूलफलमधु अभयमभ्युद्यतशय्यासनावसथयानपयोदधिशपरिप्रियङ्गुस्रक्मार्गशाकान्यप्रणोद्यानि सर्वेषां पितृदेवगुरुभृत्यभरणे चान्यत् ।' इति । बोधायनः— 'खलक्षेत्रेषु यद्धान्यं कूपवापीषु यज्जलम् । अभोज्यादपि तद्भोज्यं यच्च गोष्ठगतं पयः ॥' इति । पर्युषिते आपस्तम्बः— 'कृतान्नं पर्युषितमखाद्यापेयानाद्यं शुक्तं च ।' मनुः— 'शुक्तं पर्युषितं चैव शूद्रस्योच्छिष्टमेव च । स्त्रीक्षीरं चैव वर्ज्यानि सर्वशुक्तानि चैव हि ॥' गौतमः— 'भावदुष्टं शुक्तं केवलमदधि न भोज्यमित्यर्थः । पर्युषितापवादमाह मनुः— 'यत्किंचित्स्नेहसंयुक्तमभक्ष्यभोज्यमगर्हितम् । तत्पर्युषितमप्याद्यं हविःशेषं च यद्भवेत् ॥

च्चिरस्थितमपि त्वाद्यं स्नेहयुक्तं द्विजातिभिः । यवगोधूमकं सर्वं पयसश्चैव विक्रियः' इति। याज्ञवल्क्यः– 'अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् । अस्नेहा अपि गोधूमयवगोरसविक्रिया ॥' इति । आपस्तम्बः— 'फाणितपृथुकतण्डुलकरम्भभरुजसक्तुशाकमांसपिष्टक्षीरविकारौषधिवनस्पतिमूलफलवर्जं शूक्तं चापरयोगम् ।' इति । फाणितः इक्षुरसः करम्भः दधिसक्तुसमूहः भरुजः भृष्टयवः क्षीरविकारो दध्यादि । गौतमः—'पर्युषितमशाकभक्षस्नेहमांसमधूनि' इति। शङ्खः—अजीषपक्वं भक्ष्यं स्यात्सर्पियुक्तमिति स्थितिरिति । एवमादिप्रतिषिद्धभक्षणे दोषमाह मनुः— 'अनभ्यासेन वेदानामाचारस्य च वर्जनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति ' इति । व्यासोऽपि— 'अभक्ष्यभक्षणाच्चित्तमशुद्धं भवति स्वतः । तस्माद्भक्ष्यं यत्नेन दूरतः परिवर्जयेत् ॥' इति । अभक्षनिवृत्तौ फलमाह स एव— 'अभक्ष्यस्य निवृत्त्या तु विशुद्धं हृदयं भवेत् । आहारशुद्धौ चित्तस्य विशुद्धिर्भवति स्वतः ॥' इति । तदनु पर्णशालाभ्यर्णमागम्य सकरुणं विलपतां तेषां भ्रातॄणां गिरिवरगुहासु प्रतिध्वनिसमा-

कर्णनेन विदितभरतसमागमवृत्तान्तेषु सैनिकेषु कतिचन गजवाजिरथैरन्ये नरयानैरपरे पादचारेणैव त्वरिततरं समागम्य पर्णशालाभ्यर्णमध्यासीनं रामचन्द्रमभिगम्य सबाष्पकण्ठा बभूवुः। तानपि स्वागतासनपरिष्वङ्गदानादिना यथाधिकारं परिगृह्य रामः समाश्वासयामास॥ त्र्यधिकशततमे— अथ भरताज्ञया कुलपुरोहितं वसिष्ठं पुरस्कृत्य रामचन्द्रदर्शनतर्षया द्रुततरमभिचङ्क्रमतीषु राजपत्नीषु संजातशोकशल्या कौसल्या सुमित्रामिदमवोचत्– 'अयि सुमित्रे रामभद्राय अनुदिनमुदकमाहरतो लक्ष्मणस्येयं पदपङ्क्तिः, अयमसौ इङ्गुदीपिण्याकमयो दक्षिणाग्रेषु कुशेषु रामभद्रेण प्रत्तः पिण्डः, इयमग्रे लक्ष्मणनिर्मिता विशाला पर्णशाला, अयमग्रे परिपूर्णचन्द्रवदनो नयनानन्दकरो रामचन्द्रः, तदेहि गच्छाव त्वरिततरम्' इति परिक्रम्य सकलसपत्नीभिः सह रामसमीपमाजगाम। अथ मातृदर्शनसमनन्तरमेव ससंभ्रममुत्थाय यथाक्रममभिवादयन्तं रामभद्रम्,

ताः पाणिभिः शुभस्पर्शैर्मृद्वङ्गुलितलैः शुभैः।
प्रममार्जू रजः पृष्ठाद्रामस्यायतलोचनाः॥

तदनु कृताभिवादने लक्ष्मणे समनन्तरमाभिवन्दमानां जनकनन्दिनीमवलोक्य कौसल्या सकरुणमिदमब्रवीत्—

विदेहराजस्य सुता स्नुषा दशरथस्य च ।
रामपत्नी कथं दुःखं संप्राप्ता निर्जने वने ॥
मुखं ते प्रेक्ष्य मां शोको दहत्यग्निरिवाश्रयम् ।
भृशं मनसि वैदेहि व्यसनारणिसंभवः ॥

अथ कुलपुरोहितं वसिष्ठमप्यभिवाद्य तेन सहैव समुपविष्टे रामभद्रे मन्त्रिभिः पुरप्रधानैः सैनिकेतरैरपि धर्मप्रधानपुरुषैः सह भरतोऽपि समुपाविशत् ॥ चतुरधिकशततमे— तदनु गुरुवत्सलं वक्तुकामं भरतमवगम्य विनिमित्तोऽयमखिलबलेन सहागमनसंभ्रमः, कुतो वा प्राज्यं राज्यं परित्यज्य कृष्णाजिनजटाधारणमिति वदन्तं रामचन्द्रं प्रति विनयेन प्राञ्जलिर्भरतः समुदाजहार । आर्य पापसमाचारया कैकेय्या वञ्चितो दशरथः स्वयशोहरं कर्म कृतवान् । अतः सेयमनार्या राज्यफलमप्राप्य स्वकर्मफलमनुभविष्यति । भवानपि पितृपैतामहीं महीं परिपालयितुं प्रसादमभिकाङ्क्षन्तीनां प्रकृतीनामना-

थानां मातॄणां च मनोरथान्पूरयितुं दासभूतं मां च दयया रक्षितुं स्वात्माभिषेचनेन प्रसादं कर्तुमर्हतीत्यभिधाय पदयोर्निपपात ।

तं मत्तमिव मातङ्गं निश्वसन्तं पुनः पुनः ।
भ्रातरं भरतं रामः परिष्वज्येदमब्रवीत् ॥

कुलीनः सत्त्वसंपन्नस्तेजस्वी चरितव्रतः ।
राज्यहेतोः कथं पापमाचरेत्त्वद्विधो जनः ॥

न दोषं त्वयि पश्यामि सूक्ष्ममप्यरिसूदन ।
न चापि जननीं बाल्यात्त्वं गर्हितुमर्हसि ॥

कामकारो महाप्राज्ञ गुरूणां सर्वदानघ ।
उपपन्नेषु दारेषु पुत्रेषु च विधीयते ॥

वने वा चीरवसनं सौम्य कृष्णाजिनाम्बरम् ।
राज्ये वापि महाराजो मां वासयितुमीश्वरः ॥

यावत्पितरि धर्मज्ञ गौरवं लोकसत्कृतम् ।
तावद्धर्मभृतां श्रेष्ठ जनन्यामपि गौरवम् ॥

त्वया राज्यमयोध्यायां प्राप्तव्यं लोकसत्कृतम् ।
वस्तव्यं दण्डकारण्ये मया वल्कलवाससा ॥

एवं कृत्वा महाराजो विभागं लोकसंनिधौ ।
आदिश्य स महातेजा दिवं दशरथो गतः ॥

स च प्रमाणं धर्मात्मा राजा लोकगुरुस्तव ।
पित्रा दत्तं यथाभागमुपभोक्तुं त्वमर्हसि ॥ इति ॥

पञ्चाधिकशततमे— इति सशोकमभिभाषमाणानां तेषामतिखेदेन सा रात्रिरत्यवर्तत । प्रभातायां रजन्यामुदिते च दिनकरमण्डले निर्वर्तितजपहोमादिनैयत्यिकविधिर्भरतः सविनयमुपसृत्य रामभद्रमेवमुवाच—

सान्त्विता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि पुनस्तुभ्यं भुङ्क्ष्व राज्यमकण्टकम् ॥

खर इव जात्यश्वस्य पतत्रीव पतगराजस्य प्रबलरयाभिजलसेतुसंनिभराज्यखण्डसंरक्षणविचक्षणस्य भवतो गतिमहमनुगन्तुमशक्तोऽस्मि ।

सुजीवं नित्यशस्तस्य यः परैरुपजीव्यते ।
राम तेन तु दुर्जीवं यः परानुपजीवति ॥

अनेन परानुपजीविनः बहूपजीव्यस्य पुरुषस्य जीवनं

श्लाघ्यमित्युक्तम् । तथा च दक्षः— 'सुजीवति स एवैको बन्धुभिश्चोपभुज्यते । जीवन्तोऽपि मृतास्त्वन्ये पुरुषाः स्वोदरंभराः ' इति । तदतिप्रयत्नसंवर्धितः सुपुष्पितस्तरुरिव न भवान्फलमविदर्शयन् इष्टजनान् संतापयितुमर्हति । तदधुनैव च तुरगबलपरिवृतः स्वनगरमभिगम्यात्मानमभिषेचयेति नानाविधनयवचनशतानुनीतोऽपि पित्राज्ञापरिपालनैकतानमानसो रामचन्द्रः तमेवम् ,

नात्मनः कामकारोऽस्ति पुरुषोऽयमनीश्वरः ।
इतश्च परतश्चैनं कृतान्तः परिकर्षति ॥

अनेन पुरुषः स्वेच्छया न कर्म करोति किं तु दैवाधीन एवेत्युक्तम् । तथा चोद्योगपर्वणि— 'जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः । केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥' इति ।

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥

अत्र निचयो वृद्धिः, समुच्छ्रयः औन्नत्यम्, संयोगः

इष्टवस्तुभिः, जीवितं जीवनम्, एतेषां चतुर्णामन्ते ऋ-याद्यवश्यंभाव उक्तः ।

यथा फलानां पक्कानां नान्यत्र पतनाद्भयम् ।
अनेन पतनान्ताः समुच्छ्रया इत्ययमंशो व्याख्यातः ।
एवं नरस्य जातस्य नान्यत्र मरणाद्भयम् ॥

आत्मानमनुशोच त्वं किमन्यमनुशोचसि ।
आयुस्ते हीयते यस्य स्थितस्य च गतस्य च ॥

नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमिते रवौ ।
आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम् ॥
अनेन मरणान्तं च जीवितमित्ययमंशो व्याख्यातः ।

यथा काष्ठं च काष्ठं च समेयातां महार्णवे ।
समेत्य च व्यपेयातां कालमासाद्य कंचन ॥

एवं भार्याश्च पुत्राश्च ज्ञातयश्च धनानि च ।
समेत्य व्यवधावन्ति ध्रुवो ह्येषां विनाभवः ॥
अनेन संयोगा विप्रयोगान्ता इत्ययमंशो व्याख्यातः ।

एवं पूर्वैर्गतो मार्गः पितृपैतामहो ध्रुवः ।
तमापन्नः कथं शोचेद्यस्य नास्ति व्यतिक्रमः ॥

एवं संक्षेपविस्तराभ्यां प्रपञ्चितेषु पूर्वैरप्यनतिक्रमणीयेषु निचयादिषु प्राप्तेषु हर्षविषादादिकं न कर्तव्यमित्युक्तम् । तथा च गीतायाम्—'अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः । जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥ तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि । अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥ अव्यक्तनिधनान्येव तत्र का परिदेवना' इति । एवं पूर्वैर्गतो मार्गः पितृपैतामहो ध्रुवः । तमापन्नः कथं शोचेत्यस्य स राजापि विहितदक्षिणान् अनेकमखानाहृत्य अर्थिसार्थसमीहितप्रपूरणेन च निरतिशयं धर्मं संपाद्य बान्धवमित्रभृत्यादिस्वेष्टजनानपि समुचितभाग्यप्रदानोपचारवचनशतैः समाहितान्तरङ्गान्विधाय परिपाल्य च पुत्रनिर्विशेषं प्रकृतीः ब्रह्मलोकनिवासिनीं दैवीं संपदमवाप ।

तं तु नैवंविधः कश्चित्प्राज्ञः शोचितुमर्हति ।
त्वद्विधो मद्विधश्चापि श्रुतिमान्बुद्धिमत्तर ॥

एते बहुविधाः शोका विलापरुदिते तथा।
वर्जनीया विशेषेण सर्वावस्थासु धीमता॥

न मया शासनं तस्य त्यक्तुं न्याय्यमरिंदम।
तत्त्वयापि सदा मान्यं स वै बन्धुः स नः पिता॥

तदधुना पितृवचनपरिपालनमेव गरीयान्धर्म इति निश्चित्य भवता मया च राज्यपरिपालनं दण्डकारण्यवासश्च कर्तव्यः।

धार्मिकेणानृशंसेन नरेण गुरुवर्तिना।
भवितव्यं नरव्याघ्र परलोकं जिगीषता॥

तदधुनैव सहसा विनिवर्तस्वेति बभाषे॥ षडधिकशततमे—तदनु तदनुजो भरतस्तमेवमवादीत्, सकलवृद्धजनोपदेशनिरस्तसमस्तसंशयस्य निखिलनिगमागमविचाराचारां धर्मसमृद्धां गिरमुदाहरतो भवतो दूरत एव दुःखलेशवार्तापि—

यथा मृतस्तथा जीवन्यथासति तथा सति।
यस्यैष बुद्धिलाभः स्यात्परितप्येत केन सः॥

अनेन सर्वसमदर्शिनः क्वापि परितापो न भवतीति सूचितम् ।

धर्मबन्धेन बद्धोऽस्मि तेनेमां नेह मातरम् ।
हन्मि तीव्रेण दण्डेन दण्डार्हां पापकारिणीम् ॥

कथं दशरथाज्जातः शुद्धाभिजनकर्मणः ।
जानन्धर्ममधर्मिष्ठं कुर्यां कर्म जुगुप्सितम् ॥

तथा प्रियजनसंतोषणाय धर्मविहीनमसदृशमतिनिघृणं कर्म कृतवन्तं तातमपि दैवतमिति न परिगर्हामि ।

अन्तकाले हि भूतानि मुह्यन्तीति पुरा श्रुतिः ।
राज्ञैवं कुर्वता लोके प्रत्यक्षा सा श्रुतिः कृता ॥

साध्वर्थमभिसंधाय क्रोधान्मोहाच्च साहसात् ।
तातस्य यदतिक्रान्तं प्रत्याहरतु तद्भवान् ॥

पितुर्हि समतिक्रान्तं पुत्रो यः साधु मन्यते ।
तदपत्यं मतं लोके विपरीतमतोऽन्यथा ॥

अनेन पित्रा अन्यथा कृतमपि कुकर्म समीकर्तुरेव पुत्रस्य पुत्रत्वमिति सूचितम् । तथा च बृहदारण्यके—'सपद्यनेन किंचिदक्ष्णयाकृतं भवति स एतस्मात्पुत्रो

पितृञ्श्राद्धेऽतिथीनन्नैर्भूतानि बलिकर्मणा ॥' इति ।
भारतेऽपि— 'यथा मातरमाश्रित्य वर्तन्ते सर्वजन्तवः ।
तथैव गृहिणं सर्वे वर्तन्त इतराश्रमाः ॥ स्वाध्याये नित्य-
युक्तः स्याद्दैवे चैव ह कर्मणि । दैवे कर्मणि युक्तो हि
बिभर्तीदं चराचरम् ॥ अग्नौ प्रस्ताहुतिः सम्यगादित्यमु-
पतिष्ठते आदित्याज्जायते ।वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥'
इति। आदिपर्वण्यपि—'अस्य काव्यस्य कवयो न समर्था
विशेषणे । साधोरिव गृहस्थस्य शेषास्त्रय इवाश्रमाः ॥'
शान्तिपर्वण्यपि युधिष्ठिरं प्रत्यर्जुनवाक्यम्— 'आश्र-
मांस्तुलया सर्वान्धृतानाहुर्मनीषिणः । एकतश्च त्रयो
राजन्गृहस्थाश्रम एकतः' इति । मोक्षधर्मे— 'तद्धि स-
र्वाश्रमाणां मूलमुदाहरन्ति गुरुकुलवासिनः परिव्राजका
ये चान्ये संकल्पितव्रतनियमधर्मानुष्ठायिनस्तेषामप्यत एव
भिक्षाबलिसंविभागा वर्तन्ते । वानप्रस्थानां च द्रव्योप-
स्कार इति प्रायशः खल्वेते साधवः साधुपथ्योदनाः
स्वाध्यायप्रसङ्गिनस्तीर्थाभिगमनदेशदर्शनार्थं पृथिवीं पर्य-
टन्ति । तेषां प्रत्युत्थानाभिगमनाभिवादनानसूयावाक्प्र-
दानसुखशय्यासनसुखशयनाभ्यवहारसत्क्रिया चेति । भ-

वति चात्र श्लोकः— 'अतिथिर्यस्य भग्नाशो गृहात्प्रति निवर्तते । स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥' अपि चात्र यज्ञक्रियाभिर्देवताः प्रीयन्ते, निवापादिना पितरो विद्याभ्यासश्रवणधारणेन ऋषयः, अपत्योत्पादनेन प्रजापतिरिति। श्लोकौ चात्र भवतः—वत्सलयाः सर्वभूतेभ्यः श्राव्याः श्रोत्रसुखा गिरः। परितापोपघातश्च पारुष्यं चात्र गर्हितम् । अवज्ञानमहंकारो दम्भश्चैव विगर्हितः । अहिंसा सत्यमक्रोधः सर्वाश्रमगतं तपः ॥ अपि चात्र माल्याभरणवस्त्राभ्यङ्गनित्योपभोगनृत्तगीतवादित्रश्रुति-सुखनयनाभिरामदर्शनानां प्राप्तिर्भक्ष्यभोज्यलेह्यपेयचोष्याणामभ्यवहार्याणां विविधानामुपभोगः स्वविहार-संतोषः कामसुखावाप्तिरिति । 'त्रिवर्गगुणनिर्वृत्तिर्यस्य नित्यं गृहाश्रमे । स सुखान्यनुभूयेह शिष्टानां गति-माप्नुयात् ॥ उञ्छवृत्तिर्गृहस्थो यः स्वधर्मचरणे रतः । त्यक्तकर्मसुखारम्भः स्वर्गस्तस्यातिदुर्लभः । इति । विष्णुपुराणेऽपि— 'निवापेन पितॄनर्चेद्यज्ञैर्देवांस्तथातिथीन् । अन्नैर्मुनींश्च स्वाध्यायैरपत्येन प्रजापतिम् ॥ बलिकर्मणा च भूतानि वात्सल्येनाखिलं जगत् । प्राप्नोति

लोकान्पुरुषः निजकर्मसमार्जितान् ॥ भिक्षाभुजश्च ये केचित्परिव्राड्ब्रह्मचारिणः । ते चाप्यत्रैव तिष्ठन्ति गार्हस्थ्यं तेन वै परम् । वेदाहरणकार्येण तीर्थस्नानाय वै प्रभो । अटन्ति पृथिवीं विप्राः पृथिवीदर्शनाय च । अनिकेता ह्यनाहारा यत्र सायंग्रहास्तु ये । तेषां गृहस्थः सर्वेषां प्रतिष्ठा योनिरेव च ॥' इति ।

श्रुतेन बालस्थानेन जन्मना भवतोऽप्यहम् ।
स कथं पालयिष्यामि भूमिं भवति तिष्ठति ॥
अथैतत्पृष्ठतः कृत्वा वनमेव भवानितः ।
गमिष्यति गमिष्यामि भवता सार्धमप्यहम् ॥

इति वदन्पदयोर्निपपात । तदनु तदनुयायिजनोऽपि निखिलजनशुभरतेन भरतेन नानाविधानुनयसप्रणामप्रसादयाचनादिभिः प्रसाद्यमानमपि रामभद्रं पितृवचनपरिपालनैकतानमानसमवलोक्य न यास्यतीत्यामिति दुःखितोऽभवत् स्थिरप्रतिज्ञत्वमवेक्ष्यहर्षितः सप्ताधिकशततमे—केकयवंशसंभूतायां कैकेय्यां राजसत्तमाद्दशरथात् उत्पन्नस्य तव नेदमतिचमत्कारकारि वचनम् । किंतु,

पुरा भ्रातः पिता नः स मातरं ते समुद्वहन् ।
मातामहे समाश्रौषीद्राज्यशुल्कमनुत्तमम् ॥
दैवासुरे च संग्रामे जनन्यै तव पार्थिवः ।
संप्रहृष्टो ददौ राजा वरमाराधितः प्रभुः ॥

तदधुना तव जनन्या संप्रार्थितो नरेन्द्रः, निखिल-महीमण्डलसंरक्षणाय त्वां नियुक्तवान् मामपि चतुर्दश-वर्षाणि वने वासाय ।

सोऽहं वनमिदं प्राप्तो निर्जनं लक्ष्मणान्वितः ।
भवानपि तथेत्येव पितरं सत्यवादिनम् ॥
ऋणान्मोचय राजानं मत्कृते भरत प्रभुम् ।
श्रूयते हि पुरा तात श्रुतिर्गीता यशस्विना ॥
गयेन यजमानेन गयेष्वेव पितॄन्प्रति ।
पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ॥
तस्मात्पुत्र इति प्रोक्तः पितॄन्यत्पाति वै सुतः ।
एष्टव्या बहवः पुत्रा गुणवन्तो बहुश्रुताः ॥
तेषां वै समवेतानामपि कश्चिद्गयां व्रजेत् ।

अनेन गयायां श्राद्धकरणमतिप्रशस्तमिति सूचितम् ।

तथा च विष्णुपुराणे— 'गयामुपेत्य यः श्राद्धं करोति पृथिवीपते। सफलं तस्य तज्जन्म जायते पितृतुष्टिदम्॥' इति। तन्माहात्म्यमपि तत्रैव, श्रूयते चापि पितृभिर्गाथा गीता महीपते। इक्ष्वाकोर्मनुपुत्रस्य कलापोपवने पुरा। अपि नस्ते भविष्यन्ति कुले सन्मार्गशीलिनः॥ गयामुपेत्य ये पिण्डान्दास्यन्त्यस्माकमादरात्।' इति। ब्रह्मकैवर्तेऽपि— 'गयाशीर्षे यदा पिण्डं नाम्ना येषां प्रकुर्वते। नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः। तत्राक्षय्यवटो नाम त्रिषु लोकेषु विश्रुतः॥ पितॄणां तत्र वै दत्तमक्षय्यं भवति प्रभो। वटवृक्षं समासाद्य शाकेनाप्युदकेन वा॥ एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता।' इति। उशना अपि— 'गयायामक्षयं श्राद्धं प्रयागेऽमरकण्टके। गायन्ति पितरो गाथां कीर्तयन्ति मनीषिणः। एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः॥ तेषां च समवेतानां यद्येकोऽपि गयां व्रजेत्। गयां प्राप्यानुषङ्गेण यदि श्राद्धं समाचरेत्। तारिताः पितरस्तेन स याति परमां गतिम्॥ वनपर्वण्यपि—शुक्लकृष्णावुभौ पक्षौ गयां यो योऽवसेन्नरः।

पुनात्यासप्तमं राजन्कुलं नास्त्यत्र संशयः। एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥ इति। तत्रैव—
तपस्विजनजुष्टां च ततो वेदिं प्रजापतेः। जग्मुः पाण्डुसुता राजन्ब्राह्मणैः सह भारत ॥ ततो महीधरं जग्मुर्धर्मज्ञेनाभिसंस्थितम्। राजर्षिणा पुण्यकृता गयेनानुप्रपद्यते ॥ नगो गयशिरो यत्र पुण्या चैव महानदी। वानीरमालिनी रम्या नदी पुलिनशोभिता। दिव्यं पवित्रकूटं च पवित्रधरणीधरम् ॥ ऋषिजुष्टं सुपुण्यं च तीर्थं ब्रह्मसरोत्तमम्। अगस्त्यो भगवान्यत्र गतो वैवस्वतं प्रति। सर्वासां सरितां चैव समुद्भेदो विशां पते। यत्र संनिहितो नित्यं महादेवः पिनाकधृक् ॥ तत्र ते पाण्डवा वीराश्चातुर्मास्यैस्तथेजिरे। ऋषियज्ञेन महता यत्राक्षय्यवटो महान्। अक्षय्यो देवयजने अक्षय्यं यत्र वै फलम् ॥ ते तु तत्रोपवासांस्तु चक्रुर्निश्चितमानसाः ॥' इति। गयामाहात्म्येऽपि—'यन्नाम्ना पावयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम् ॥ शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे। उद्धरेत्सप्त गोत्राणि कुलमेकोत्तरं शतम् ॥' इति।

एवं राजर्षयः सर्वे प्रतीता राजनन्दन ।
तस्मात्त्राहि नरश्रेष्ठ पितरं नरकात्प्रभो ॥

त्वं राजा भव भरत स्वयं नराणां
वन्यानामहमपि राजराण्मृगाणाम् ।
गच्छ त्वं पुरवरमद्य संप्रहृष्टः
संहृष्टस्त्वहमपि दण्डकान्प्रवेक्ष्ये ॥

शत्रुघ्नः कुशलमतिस्तु ते सहायः
सौमित्रिर्मम विदितः प्रधानमित्रम् ।
चत्वारस्तनयवरा वयं नरेन्द्रं
सत्यस्थं भरत चराम मा विषादम् ॥

अष्टोत्तरशततमे— वैदिकसार्वभौमोऽपि जाबालिः पित्राज्ञया वनं प्रस्थितस्य रामस्य वैदिकमार्गेण निवर्तनोपायमपश्यन् अवैदिकमार्गमेव तदुपायं मन्वानः प्रत्यक्षमेव प्रमाणं देह एव आत्मेति वदतश्चार्वाकस्य मतमवलम्ब्य

उवाच रामं धर्मज्ञं धर्मापेतमिदं वचः ।
साधु राघव मा भूत्ते बुद्धिरेवं निरर्थिका ॥

प्राकृतस्य नरस्येव ह्यार्यबुद्धेर्मनस्विनः ।
कः कस्य पुरुषो बन्धुः किमाप्यं कस्य केनचित् ॥

यदेको जायते जन्तुरेक एव विनश्यति ।
तस्मान्माता पिता चेति राम सज्जेत यो नरः ॥

उन्मत्त इति स ज्ञेयो नास्ति कश्चिद्धि कस्यचित् ।
यथा ग्रामान्तरं गच्छन्नरः कश्चित्कचिद्वसेत् ॥

उत्सृज्य च तमावासं प्रतिष्ठेतापरेऽहनि ।
एवमेव मनुष्याणां पिता माता गृहं वसु ॥

आवासमात्रं काकुत्स्थ सज्जन्ते नात्र सज्जनाः ।
पित्र्यं राज्यं परित्यज्य स नार्हसि नरोत्तम ॥

आस्थातुं कापथं दुःखं विषमं बहुकण्टकम् ।
समृद्धायामयोध्यायामात्मानमभिषेचय ॥

एकवेणीधरा हि त्वा नगरी संप्रतीक्षते ।
राजभोगाननुभवन्महार्हान्पार्थिवात्मज ॥

विहर त्वमयोध्यायां यथा शक्रस्त्रिविष्टपे ।
न ते कश्चिद्दशरथस्त्वं च तस्य न कश्चन ॥

अन्यो राजा त्वमन्यश्च तस्मात्कुरु यथोच्यते ।
बीजमात्रं पिता जन्तोः शुक्लं रुधिरमेव च ॥

संयुक्तमृतुमन्मात्रा पुरुषस्येह जन्म तत् ।
गतस्य नृपतिस्तत्र गन्तव्यं यत्र तेन वै ॥

प्रवृत्तिरेषा मर्त्यानां त्वं तु मिथ्या विहन्यसे ।
अथ धर्मपरा ये ये तांस्ताञ्शोचामि नेतरान् ॥

ते हि दुःखमिह प्राप्य विनाशं प्रेत्य भेजिरे ।
अष्टका पितृदैवत्यमित्ययं प्रसृतो जनः ॥
अन्नस्योपद्रवं पश्य मृतो हि किमशिष्यति ।
यदि भुक्तमिहान्येन देहमन्यस्य गच्छति ।
दद्यात्प्रवसतां श्राद्धं न तत्पथ्यशनं भवेत् ॥
दानसंवनना ह्येते ग्रन्था मेधाविभिः कृताः ।
यजस्व देहि दीक्षस्व तपस्तप्यस्व संत्यज ॥
स नास्ति परमित्येव कुरु बुद्धिं महामते ।
प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु ॥

अत्रास्मिन्सर्गे 'अष्टकापितृदैवत्य इत्ययं प्रसृतो जनः । अन्नस्योपद्रवं पश्य मृतो हि किमशिष्यति' इति अत्र

सर्वश्राद्धप्रकृतिभूताष्टकाग्रहणेन सर्वाण्यपि श्राद्धान्युप-लक्षितानि। अष्टकायाः प्रकृतित्वं च बोधायनसूत्रेणा-वगम्यते। तथा हि अष्टका विधाय 'एवमेव मासि-श्राद्धमपरपक्षस्यान्यतमेऽहनि क्रियेत। एतावदेव नाना नात्राष्टका होमो भवति' इति। श्राद्धप्रकारमाहाश्वला-यनः— 'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्व-ष्टका एकस्यां वा पूर्वेद्युः पितृभ्यो दद्यादोदनं कृसरं पायसं। चतुःशरावस्यवापूपान् उदीरतामवर उत्परास इत्यष्टकाभिर्हुत्वा यावतीभिर्वा कामयीताथ श्वोभूते-ऽष्टकाः पशुना स्थालीपाकेन वा अप्यनडुहो यवस-माहरेदग्निना वा कक्षमुपोषेदेषा मेऽष्टकेति। न त्वे-वानष्टकः स्यात्तां हैके वैश्वदेवीं ब्रुवत आग्नेयीमेके सौर्यामेके नक्षत्रदेवतामेके रात्रिदेवतामेके ऋतुदेवतामेके प्राजापत्यामेके इत्यादि। तथा एतेन माध्यावर्षं प्रोष्ठपद्या अपरपक्षे मासि मासि चैवं पितृभ्योऽयुक्षु प्रतिष्ठापयेन्न-वावरान्भोजयेदयुजो वा युग्मान् वृद्धिपूर्तेषु अयुग्मानितरेषु' इति। बोधायनोऽपि—'अष्टकाहोमस्तैषे मास्यपरपक्षस्या-ष्टम्यां क्रियेतैवं माघ एवं फाल्गुने यदि विहृतो यद्युवै

समस्त उपरिष्टान्माघ्याः पौर्णमास्या अपरपक्षस्य सप्तम्यामष्टम्यां नवम्यामिति क्रियेत । अपि वा अष्टम्यामेव श्वः करिष्यामीति ब्राह्मणानिमन्त्रयते योनिगोत्रश्रुतवृत्तसंपन्नानसंबन्धानित्येके कामं सबन्धानपि श्रुतवृत्तसंपन्नान् श्रुतवृत्तयोर्हि स्वशा निवीयत इत्युपदिशन्ति । तान् श्वोभूते श्मश्रुकर्माभ्यञ्जनस्नानैर्यथोपपादं संपूज्य स्वयमाप्लुत्य शुचौ समे देशे देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा बर्हिरादाय गामुपाकरोति पितृभ्यस्त्वा पितामहेभ्यस्त्वा प्रपितामहेभ्यस्त्वा जुष्टामुपाकरोमि । तूष्णीमित्येके । अथैनामद्भिः प्रोक्षति पितृभ्यस्त्वा पितामहेभ्यस्त्वा प्रपितामहेभ्यस्त्वा जुष्टां प्रोक्षामीति । तूष्णीमित्येके । तामत्रैव प्रतीचीनशिरसं दक्षिणापदीं संज्ञपन्ति । तस्यै संज्ञप्ताय आद्भिरभिषेकं प्राणानप्यायति तूष्णीम् वपामुत्खिद्य हृदयमुद्धरति । प्रज्ञातानि चावदानानि तान्येतेष्वेव शूलेषूपनिक्ष्यैतस्मिन्नेवाग्नौ श्रापयन्ति पृथङ्मांसं चोदनं च अपूपांश्च श्रपयन्ति । अन्यांश्च विशेषान् सर्वं सिद्धं समानीय अयुग्मान्ब्राह्मणान्सुप्रक्षालितपाणिपादानप आचमय्य सदर्भोपक्लृप्तेष्वासनेषु प्राङ्मुखानुपवेशयति । उदङ्-

मुखान्वा। यदि प्राङ्मुखान्दक्षिणापवर्गः। यद्युदङ्मुखान्प्रागपवर्गः। प्राप्नोतु भवान् प्राप्नोतु भवान् इति। प्राप्नुवानि प्राप्नुवानीति ते प्रत्याहुः। अथैनांस्तिलमिश्रा अपः प्रतिग्राहयति अमुष्मै स्वधा नमोऽमुष्मै स्वधा नम इति त्रिस्तिलोदकान्दद्यात्। भुक्तवत्सु च तृतीयम् अथैनान्स्रग्गन्धपुष्पधूपदीपमाल्यैर्यथोपपादं संपूज्य पृच्छत्युद्ध्रियतामग्नौ च क्रियतां काममुद्ध्रियतां काममग्नौ च क्रियतामिति इतरे प्रत्याहुरपि चाग्नौ करिष्यामीति कुरुष्वेतीतरे प्रत्याहुः। अथ अभ्यनुज्ञातः परिधानप्रभृत्याग्निमुखात्कृत्वा श्रुतायां वपायां पञ्चस्रुवाहुतीर्जुहोति। तत्पुरस्ताद्व्याख्यातम्। त्रेधा वपां विच्छिद्य औदुम्बर्या दर्व्या जुहोति। तत्पुरस्ताद्व्याख्यातम्। अथाष्टका होमं जुहोति 'इयमेव सा या प्रथमा व्यौच्छत्' इति पञ्चदश 'इयुष्टे ये पूर्वतरामपश्यन्' इत्येकाम्। संवत्सरस्य प्रथमानमित्येकाम् ताः सप्तदश। अथापूपमष्टधा विच्छिद्य त्रीण्यवदानानि वपायाःकल्पेन हुत्वा अथेतराणि ब्राह्मणेभ्यो दत्वा अत्रैतान्यवदानानि इडासूने प्रतिच्छाद्यौदनं मांसं यूषमित्याज्येन समुदायुत्यौदुम्बर्या दर्व्या उपघातं

दक्षिणार्धे जुहोति पितृभ्यः स्वधा नमः स्वाहा पितामहे-भ्यः स्वधा नमः स्वाहा प्रपितामहेभ्यः स्वधा नमः स्वाहा मातृभ्यः स्वधा नमः स्वाहा पितामहीभ्यः स्वधा नमः स्वाहा प्रपितामहीभ्यः स्वधा नमः स्वाहा। मातामहेभ्यः स्वधा नमः स्वाहा मातुः पितामहेभ्यः स्वधा नमः स्वाहा मातुः प्रपितामहेभ्यः स्वधा नमः स्वाहा। माता-महीभ्यः स्वधा नमः स्वाहा मातुः पितामहीभ्यः स्वधा नमः स्वाहा मातुः प्रपितामहीभ्यः स्वधा नमः स्वाहा। आचार्येभ्यः स्वधा नमः स्वाहा आचार्यपत्नीभ्यः स्वधा नमः स्वाहा गुरुभ्यः स्वधा नमः स्वाहा गुरुपत्नीभ्यः स्वधा नमः स्वाहा सखिभ्यः स्वधा नमः स्वाहा सखिपत्नीभ्यः स्वधा नमः स्वाहा ज्ञातिभ्यः स्वधा नमः स्वाहा ज्ञाति-पत्नीभ्यः स्वधा नमः स्वाहा अमात्येभ्यः स्वधा नमः स्वाहा अमात्यपत्नीभ्यः स्वधा नमः स्वाहा सर्वेभ्यः स्वधा नमः स्वाहा सर्वाभ्यः स्वधा नमः स्वाहा इति। अग्नये कव्य-वाहनाय स्विष्टकृते स्वधा नमः स्वाहेति दक्षिणार्धपूर्वार्धे। मांसौदनं पात्रेषूद्धृत्य विशेषानुपनिक्षिप्य हुतशेषेण संसृ-ज्य दक्षिणाग्रेषु दर्भेषु सादयित्वा दक्षिणाग्रैर्दर्भैः प्रच्छाद्या-

भिमृशति। पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्त्वा मुखे अमृतं जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयो-र्जुहोमि अक्षितमसि मा पितॄणां पितामहानां प्रपितामहानां क्षेष्टाः अमुत्रामुष्मिँल्लोके' इति। अथतानि ब्राह्मणेभ्य उपनिक्षिप्य ब्राह्मणस्याङ्गुष्ठेना नखेनानुदिशति अमुष्मै स्वधा नम इति भुञ्जानान्समीक्षते प्राणे निविष्टोऽमृतं जुहोमीति पञ्चभिः अन्नानि मात्मामृतत्वायेत्यात्मानं न च तत्र ऊर्ध्वं निरीक्षते हीका हि पितर इति विज्ञायते सर्वैः कामैस्तर्पयन् स्वधायुक्तानि अन्नानि अभिश्राव-येत्। राक्षोघ्नानि नैर्ऋतानि च। तृप्तानप आचम्य आश-येष्वन्नशेषान् संप्रकिरति ये अग्निदग्धा जाता जीवाः येऽप्यदग्धाः कुले मम भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिमिति। संक्षालनेनावकीर्य दक्षिणाभिराराध-यति। सुवर्णहिरण्यपाणिवस्त्रलोहभूमिभाण्डैर्गोऽश्वाजा-विकहस्तिदासपुरुषव्रीहियवमाषतिलदण्डोपानच्छत्रकम-ण्डलुयानासनशयनोपधानैः सर्वोपकरणैर्यथोपपादं संपूज्य अक्षय्यं वाचयित्वोपसंगृह्य स्वधां वाचयित्वोत्थाप्य प्रसाद्य संसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्य एतेनैव यथेतमेत्यात्म-

शेषाभिवेदयते ते यथा ब्रूयुस्तथा कुर्यात् । तैस्त्वभ्यनुज्ञा-
तो दक्षिणाग्निं दक्षिणाग्रान्दर्भान्संस्तीर्य तेष्वन्नशेषैः
पिण्डान्ददाति । पितृभ्यः स्वधा नमः स्वाहा इति चतुर्वि-
शतिः । संक्षालनेन त्रिरपसव्यैः परिषिञ्चति । ऊर्ध्वं वह-
न्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे
पितृन् तृप्यत इति । जयप्रभृति सिद्धमाधेनुवरप्रदानात् ।
आचमने चाग्निमुखे चाभिश्रावणे चोपसंग्रहणेषु च पश्चा-
द्धोमेषु च यज्ञोपवीतं अथेतरत्र प्राचीनावीतमेव श्वो-
भूते मांसशेषेण एवमेव श्वोभूते यदि त्र्यहं अथ यदि
गां न लभते मेषमजं वालभते । आरण्येन वा मांसेन
यथोपपन्नेन । खड्गमृगमहिषमेषवराहपृषतशशरोहिशार्ङ्गति-
त्तिरीकपोतकपिञ्जलवार्ध्राणमांसानामक्षय्यं तिलमधुसं-
सृष्टं तथा मत्स्यस्य शतवलैः क्षीरोदनेन वा सूपोदनेन वा
यद्वा भवत्यामैर्वा मूलफलैर्वा प्रदानमात्रं हिरण्येन वा-
प्रदानमात्रं अपि वा गोग्रासमाहरेत् अपि वानूचानेभ्य
उदकुम्भानाहरेत् । अपि वा श्राद्धमन्त्रानाधीयीत अपि
वारण्येऽग्निना कक्षमुपोषेत् । एषामेऽष्टकेति न त्वेवानष्टकः
स्यात् सिकता श्राद्धे पवित्रं यद्यभ्यवसानाय यद्यन्ववि-

किरणाय कुशाः कुतपो दूर्वा इति श्राद्धे पवित्रं यद्या-स्तरणाय यदि परिस्तरणाय यद्युत्पवनाय तिलाः श्राद्धे पवित्रं यदि दानाय यदि भोजनाय यद्यपां संमर्जनाय खड्गः श्राद्धे पवित्रं यदि मांसं यद्यस्थिमयं पात्रं दौहित्रः श्राद्धे पवित्रं यदि भोक्ता यदि परिवेष्टा यद्यभिश्रावयिता इत्यष्टकाहोमो व्याख्यातः । एवं मासिश्राद्धमपरपक्ष-स्येनीति । खादिरगृह्येऽपि— ‘ऊर्ध्वमाग्रहायण्यास्तिस्र-स्तमिस्राष्टम्योऽष्टका इत्याचक्षत इत्यादि । आपस्तम्बोऽपि — या माघ्याः पौर्णमास्या उपरिष्टाद्व्यष्टका तस्यामष्टमी ज्येष्ठया संपद्यते तामेकाष्टके त्याचक्षते इति । एवमन्यान्य-पि श्राद्धानि दर्शितानि । विष्णुपुराणे—‘ब्रह्मेन्द्ररुद्रनास-त्यसूर्याग्निवसुमारुतान् । विश्वेदेवान्पितृगणान्वयांसि म-नुजान्पशून् ॥ सरीसृपानृषिगणानन्यद्वा भूतसंज्ञितम् । श्राद्धं श्रद्धान्वितः कुर्वन्प्रीणयत्यखिलं हि तत् ॥ माघि मास्यसिते पक्षे पञ्चदश्यां नरेश्वर । तथाष्टकासु कुर्वीत काम्यं कालं शृणुष्व मे ॥ श्राद्धार्हमागतं द्रव्यं विशिष्ट-मथ वा द्विजम् । श्राद्धं कुर्वीत विज्ञाय व्यतीपातेऽयने तथा । विषुवे चापि संप्राप्ते ग्रहणे शशिसूर्ययोः । सम-

स्तेष्वपि भूपाल राशिष्वर्के तु गच्छति । नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने । इच्छा श्राद्धानि कुर्वीत नव सस्यागमे तथा ॥ अमावास्या यदा मैत्र विशाखास्वातियोगिनी । श्राद्धे पितृगणस्तृप्तिमथाप्नोत्यष्टवार्षिकीम् । अमावास्या यदा पुष्ये रौद्रे चर्क्षे पुनर्वसौ । द्वादशाब्दं तदा तृप्तिं प्रयान्ति पितरोऽर्चिताः । वासवाजैकपादर्क्षे पितॄणां तृप्तिमिच्छता । वारुणी चाप्यमावास्या देवानामपि दुर्लभा । नवस्वर्क्षेष्वमावास्या यदैतेष्ववनीपते । ददाति तृप्तिदं श्राद्धं पितॄणां शृणु चापरम् ॥ वैशाखमासस्य सिता तृतीया नवम्यथो कार्तिकशुक्लपक्षे । नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे । उपप्लुवे चन्द्रमसो रवेश्च तिस्रोऽष्टकास्वप्ययनद्वये च ॥ पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ॥ श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतत्पितरो वदन्ति । माघासिते पञ्चदशी च कंचिदुपैति योगं सह वारुणेन । ऋक्षेण कालः स वरः पितॄणां स ह्यल्पपुण्यैर्नृप लभ्यतेऽसौ । काले धनिष्ठा यदि नाम तस्मिन् भवन्ति भूपाल

तदा पितृभ्यः । दत्तं जलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः । तत्रैव चेद्भाद्रपदास्तु पूर्वाः काले यदा तत्क्रियते पितृभ्यः । श्राद्धं परां तृप्तिमुपैति तेन युगं समग्रं पितरः स्वपन्ति ॥ गङ्गां शतद्रूं यमुनां विपाशां सरस्वतीं नैमिषगोमतीं वा । ततोऽवगाहार्चनमादरेण कृत्वा पितॄणां दुरितानि हन्ति । गायन्ति चैतत्पितरः सदा नवर्षामघातृप्तिमवाप्य भूयः । माघासितान्ते शिवतीर्थतोयैर्यास्याम तृप्तिं तनयादिदत्तैः ॥ चित्तं च वित्तं च नृणां विशुद्धं शस्तश्च कालः कथितो विधिश्च । पात्रं यथोक्तं परमां च भक्तिं नृणां प्रयच्छन्त्यभिवाञ्छितानि ' इति । अपि धन्यकुले जायादस्माकं मतिमान्नरः । अकुर्वन्वित्तशाठ्यं यः पिण्डान्नो निर्वपिष्यते । रत्नवस्त्रमहायानं सर्वभोगादिकं वसु । विभवे सति विप्रेभ्यो योऽस्मानुद्दिश्य दास्यति । अन्नेन वा यथाशक्ति कालेऽस्मिन्भक्तिनम्रधीः । भोजयिष्यति विप्राग्र्यांस्तन्मात्रविभवो नरः । असमर्थोऽन्नदानस्य धान्यमामं स्वशक्तितः ॥ प्रदास्यति द्विजाग्रेभ्यः स्वल्पाल्पां वापि दक्षिणाम् । तत्राप्यसामर्थ्ययुतः

करामाग्रस्थितांस्तिलान् ॥ प्रणम्य द्विजमुख्याय कस्मैचिद्भूप दास्यति । तिलैः सप्ताष्टभिर्वापि समवेतां जलाञ्जलिम् ॥ भक्तिनम्रः समुद्दिश्य भुव्यस्माकं प्रदास्यति । यतः कुतश्चित्संप्राप्य गोभ्यो वापि गवाह्निकम् ॥ अभावे प्रीणयन्नस्माञ्छ्रद्धायुक्तः प्रदास्यति । सर्वाभावे वनं गत्वा कक्षमूलप्रदर्शकः ॥ सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति । न मेऽस्ति वित्तं न धनं न चान्यच्छ्राद्धोपयोग्यं स्वपितॄन्नतोऽस्मि । तृप्यन्तु भक्त्या पितरो मयैतौ कृतौ भुजौ वर्त्मनि मारुतस्य ॥ एवं श्राद्धं बुधः कुर्यात्पैत्रं मातामहं तथा । श्राद्धैराप्यायिता दद्युः सर्वान्कामान्पितामहाः । त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः । रजतस्य तथा दानं तथा संदर्शनादिकम् । वर्ज्यानि कुर्वता श्राद्धं कोपाध्वगमनं त्वरा । भोक्तुरप्यत्र राजेन्द्र त्रयमेतन्न शस्यते । विश्वेदेवा सपितरस्तथा मातामहा नृप । कुलं चाप्याययेत्सर्वं पुंसां श्राद्धं प्रकुर्वता । सोमाधारः पितृगणः योगाधारस्तु चन्द्रमाः । श्राद्धे योगिनियुक्तस्तु तस्माद्भूपाल शस्यते । सहस्रादपि विप्राणां योगी चेत्पुरतः स्थितः ॥

सर्वान्भोक्तृंस्तारयति यजमानं तथा नृप । अपि नस्ते भविष्यन्ति कुले सन्मार्गशालिनः । गयामुपेत्य ये पिण्डान्दास्यन्त्यस्माकमादरात् ॥ अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम् । पायसं मधुसर्पिभ्यां वर्षासु च मघासु च' इति । गौतमीये–अथ श्राद्धममावास्यायां पितृभ्यो दद्यात् पञ्चमीप्रभृति वापरपक्षस्य यथा श्राद्धं सर्वस्मिन् वा द्रव्यदेशब्राह्मणसंनिधाने वा कालनियमः शक्तितः । प्रकर्षेद्गुणसंस्कारविधौ नभस्य नवावरान् भोजयेदयुजो यथोत्साहं वा' इति । श्राद्धे देयानि ब्रह्मपुराणे–धेनुं श्राद्धेषु यो दद्याद्दृष्टिं कुम्भोपदोहनाम् । गावस्तमनुतिष्ठन्ति गवां पुष्टिं तथैव च । गन्धवन्ति विचित्राणि कुसुमानि शुभानि च । पूजयित्वा तु पात्राणि श्राद्धे सत्कृत्य दापयेत् ॥ गन्धवाहा महानद्यः सुखानि विविधानि च । दातारमुपतिष्ठन्ते सुनार्यश्च पतिव्रताः शयनासनं च दानानि भूमयो वाहनानि च । श्राद्धेष्वेतानि यो दद्यात्सोऽश्वमेधफलं लभेत् । सर्पिः पूर्णानि पात्राणि श्राद्धे सत्कृत्य दापयेत् ॥ कुम्भक्षीरदुहां शश्वत् सहस्रं लभते गवाम् । रम्यानावसथान्दत्त्वा राजसूयफला-

र्थमाक् । तथाभरणसंपूर्णां सोपधानां स्वलंकृताम् ।
शय्यां च विविधां दत्त्वा द्विजोऽग्निष्टोमभाग्भवेत् ।
दासीदासं च विविधं तथैवोष्ट्रमजाविकम् ॥ हस्त्यश्वर-
थदानं च श्राद्धकर्मणि नित्यशः । तिलांश्च विविधां दत्त्वा
लभते फलमक्षयम् ॥ पितृकर्मणि युक्तस्तु शालि-
शोभनकृद्भवेत् । कूपारामतडाकानि क्षेत्रयोषिद्गृहाणि
च ॥ दत्त्वा तु मोदते स्वर्गे नित्यमाचन्द्रतारकम् । स्वा-
स्तीर्णं शयनं दत्त्वा श्राद्धे रत्नविभूषितम् । पितरस्तस्य
तुष्यन्ति स्वर्गे चानन्त्यमश्नुते। पट्टकौशेयपत्रोर्णं तथा प्र-
च्छदकम्बलान् । अजिनं रौरवं पट्टं प्रवेणुं मृगरोमजम् ॥
दत्त्वा चैतानि विप्रेभ्यो भोजयित्वा यथाविधि । प्राप्नोति
श्रद्दधानस्तु वाजपेयस्य तत्फलम् । कौशेयं क्षौममश्र्यं च
दुकूलमहतं तथा । श्राद्धेष्वेतानि यो दद्याल्लोकानाप्नोत्य-
नुत्तमान्' इति । श्राद्धस्वरूपं चोक्तं ब्रह्माण्डपुराणे—
'देशकाले च पात्रे च श्रद्धया विधिना च यत् । पितॄनु-
द्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम्' इति । तच्च द्विविधं
पार्वणैकोद्दिष्टभेदात् । उभयोः स्वरूपमपि पुराणे दर्शितम्

त्रीनुद्दिश्य तु यच्छ्राद्धं पार्वणं तत्प्रकीर्तितम् । एक-मुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रचक्षते ॥' इति । द्विविध-मपि पुनस्त्रिविधम् । नित्यं नैमित्तिकं काम्यं चेति । विश्वामित्रेण तु द्वादशविधत्वमुक्तम्—नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् । पार्वणं चेति विज्ञेयो गोष्ठं शुध्यर्थमष्टमम् । कर्माङ्गं नवमं प्रोक्तं दैविकं दशमः स्मृतम् ॥ यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ॥ इति । नित्यमित्यहरहः श्राद्धमुच्यते । नैमित्तिकमित्ये-कोद्दिष्टम् । तदाह पारस्करः—अहन्यहनि यच्छ्राद्धं त-न्नित्यमिति कीर्तितम् । वैश्वदेवविहितं तदशक्त उदकेन तु । एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्यकमुच्यते । तदप्य-युग्मं कर्तव्यं भोजयेद्द्विजान् ॥ इति काम्यश्राद्धं नाम अभिमतार्थसिध्यर्थम् । वृद्धिश्राद्धं तु पुराणे उक्तम् । पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् । द्वादशेऽहनि क्रियमाणं सपिण्डीकरणं प्रसिद्धम् । पर्वणि क्रियमाणं पार्वणम् विशिष्टब्राह्मणसमागमे क्रियमाणं गोष्ठं श्राद्धम् । श्राद्धदेशश्चोक्तः स्मृतिसंग्रहे—'दक्षिणाप्रवणादेशे ती-र्थादौ वा गृहेऽपि वा । भूसंस्कारादिसंयुक्ते श्राद्धं कुर्या-

त्प्रयत्नतः। स्वभूमौ च नदीतीरे देशे कालाद्यदूषिते। स्थ-
ळीषु गिरिपृष्ठे च सरःस्वायतनेषु च॥ गोष्ठेषु च विविक्तेषु
तुष्यन्ति पितरः सदा।' इति। आषाढ्यादि पञ्चमापरप-
क्षस्य कन्यास्थार्कान्वितत्वेन प्रशस्ततोक्ता जाबालिना।
'आगतेऽपि रवौ कन्यां श्राद्धं कुर्वीत सर्वदा। आषाढ्य-
पञ्चमः पक्षः प्रशस्तः पितृकर्मसु। पुत्रानायुस्तथारोग्य-
मैश्वर्यमतुलं तथा॥ प्राप्नोति पञ्चमो दत्त्वा श्राद्धं
कामान्यथापरान्॥' इति। अत्र आषाढीप्रभृति पञ्चम-
पक्षत्वेनैव प्रशस्तत्वं कन्यास्थार्कान्वितत्वेन च प्रशस्त-
तरत्वम्। तथा च बृहन्मनुः— आषाढीमवधिं कृत्वा यः
पक्षः पञ्चमो भवेत्। तत्र श्राद्धं प्रकुर्वीत कन्यास्थार्को
भवेन्न वा। कन्यास्थार्कान्वितस्य प्रशस्ततरत्वं च पुराणे
दर्शितम्। पक्षान्तरेऽपि—'कन्यास्थे रवौ श्राद्धं प्रशस्यते
कन्यागते पञ्चमे तु विशेषेणैव कारयेत्' इति। पञ्चमाप-
रपक्षस्य विशिष्टफलमाह मार्कण्डेयः— कन्यागते सवि-
तरि दिनानि दश पञ्च च। पार्वणेनैव विधिना तत्र
श्राद्धं विधीयते॥ प्रतिपद्धनलाभाय द्वितीया हि प्रजा-
प्रदा। परवीरान् तृतीया च चतुर्थी शत्रुनाशिनी॥ श्रियं

प्राप्नोति पञ्चम्यां षष्ठ्यां पूज्यो भवेन्नरः । गाणाधिपत्यं सप्तम्यामष्टम्यां बुद्धिमुत्तमाम् ॥ स्त्रियो नवम्यां प्राप्नोति दशम्यां पूर्णकामता । वेदांस्तथाप्नुयात्सर्वानेकादश्यां क्रियापरः ॥ द्वादश्यां हेमलाभं च प्राप्नोति पितृपूजकः । प्रजां मेधां पशून्पुष्टिं स्वातन्त्र्यं बुद्धिमुत्तमाम् ॥ दीर्घमायुस्तथैश्वर्यं कुर्वाणस्तु त्रयोदशीम् । अवाप्नोति न संदेहः श्राद्धं श्रद्धापरो नरः ॥ युवानः पितरो यस्य मृता शस्त्रेण वै तथा । तेन कार्यं चतुर्दश्यां तेषामृद्धिमभीप्सताम् ॥ श्राद्धं कुर्वन्नमावास्यायां चैकः पुरुषः शुचिः । सर्वान्कामानवाप्नोति स्वर्ग्यं चात्यन्तमश्नुते ॥ इति । एवं बहुविधसूत्रपुराणादिषु महाफलत्वेन आवश्यिकत्वेन च प्रपञ्चितमखिलमप्यष्टकादिश्राद्धम् । 'जातं सर्वं अत्रोपद्रवभूतमेव अन्यभुक्तेनान्नेनान्यस्य तृप्त्यसंभवात् । अन्यथा प्रवसन्तमुद्दिश्य ब्राह्मणभोजनात् प्रवसतस्तृप्त्या पथ्यशनग्रहणं सर्वलोकसिद्धं विलुप्यते । अतोऽनर्थकमेव श्राद्धमिति । अयमर्थः यदि भुक्तमिहान्येन देहमन्यस्य गच्छति । दद्यात्प्रवसतः श्राद्धं न तत्पथ्यशनं भवेत् ॥ इत्यनेनोक्तदानं संवनना ह्येते ग्रन्था मेधाविभिः कृताः ॥'

इति । यजस्व देहि दीक्षस्व तपस्तप्यस्व संत्यज ॥ अत्र यजस्वेत्यनेन देवगुर्वादिपूजाविधायकशास्त्रजातं देहीत्यनेन दानशास्त्रं कृत्स्नं दीक्षस्वेत्यनेन च क्रतुबोधकशास्त्रजातं तपस्तप्यस्वेत्यनेन तपोविधायकशास्त्रजातं संत्यजेत्यनेन सर्वसङ्गपरित्यागविधायकशास्त्रजातं च परवित्तापहरणाय परिकल्पितत्वादप्रमाणमेवेति उक्तम् । तत्र देवपूजाविधायकशास्त्राणि च स्मृतिषु बहुलमुपलभ्यन्ते । तत्र पराशरः— 'संध्यास्नानं जपो होमो देवतानां च पूजनम् । आतिथ्यं वैश्वदेवं च षट्कर्माणि दिने दिने ॥' इति । मरीचिरपि—'विधाय देवतापूजां प्रातर्होमादनन्तरम् ।' इति । हारीतोऽपि—'कुर्वीत देवतापूजां जपयज्ञादनन्तरम् ॥' इति । कूर्मपुराणेऽपि— 'निष्पीड्य स्नानवस्त्रं वै सम्यगाचम्य वाग्यतः । स्वैर्मन्त्रैरर्चयेद्देवान् गन्धपुष्पैस्तथाम्बुभिः ॥' इति । नृसिंहपुराणेऽपि—'पौरुषेण च सूक्तेन ततो विष्णुं समर्चयेत्' इति । शिवविष्ण्वोः पूजाप्रकारमाह बोधायनः— 'अथातो महापुरुषस्य अहरहः परिचर्याविधिं व्याख्यास्यामः अथातो महादेवस्य परिचर्याविधिं व्याख्यास्यामः'

इत्यादिना। तदकरणे प्रत्यवायः कूर्मपुराणेऽभिहितः— 'यो मोहादथ वालस्यादकृत्वा देवतार्चनम्। भुङ्क्ते स याति नरकं सूकरेष्वभिजायते॥' इति। शिवपूजायाः फलमाह नन्दी—'यः प्रयच्छेद्गवां लक्षं दोग्ध्रीणां वेदपारगे। एकाहमर्चयेल्लिङ्गं तस्य पुण्यं ततोऽधिकम्' इति। आग्नेयेऽपि—'अर्चनं संप्रवक्ष्यामि विष्णोरमिततेजसः। यत्कृत्वा मुनयः सर्वे परं निर्वाणमाप्नुवन्॥ अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च। षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम्। अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम्। प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः'। एवं दानविषयेऽपि तत्र शाकलसंहितायाम्—'उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्रतिरन्त आयुः'। यजुर्वेदेऽपि—'दानं यज्ञानां वरूथं दक्षिणा लोके दातारं सर्वभूतान्युपजीवन्ति। दानेनारातीरपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठितम्। तस्माद्दानं परमं वदन्ति' इति। सामवेदेऽपि—'दानेन सर्वा-

न्कामानवाप्नोति चिरंजीवित्वं ब्रह्मचारी रूपवान् अहिंस्र उपपद्यते ' इति । गौतमोऽपि— 'समद्विगुणसाहस्रानन्तफलानि आब्राह्मणब्राह्मणश्रोत्रियवेदपारगेभ्यः गुर्वर्थनिवेशोषधार्तवृत्तिक्षीणयक्ष्यमाणाध्ययनाध्वसंयोगवैश्वाजितेषु द्रव्यसंविभागोबहिर्वेदि भिक्षमाणेषु कृतान्नमितरेषु ।' इति । मनुरपि— 'दानधर्मं निषेवेत नित्यं नैमित्तिकपौष्टिकम् । परितुष्टेन भावेन पात्रमासाद्य शक्तितः ॥ यत्किंचिदपि दातव्यं याचिते नानसूयया । अदाता पुरुषस्त्यागी धनं संत्यज्य गच्छति ॥ दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ॥' इति । स्कान्देऽपि— 'ग्रासादर्धमपि ग्रासमर्थिभ्यः किं न दीयते । इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥' तदिदं दानं चतुर्विधमित्याह व्यासः— ' नित्यं नैमित्तिकं काम्यं विमलं चेति कथ्यते । अहन्यहनि यत्किंचिद्दीयतेऽनुपकारिणे ॥ अनुद्दिश्य फलं तस्माद्ब्राह्मणाय तु नित्यकम् । यत्तु पापोपशान्त्यर्थं दीयते विदुषां करे ॥ नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् । अपत्यविजयैश्वर्यस्वर्गार्थं यत्प्रदीयते । दानं तत्काम्यमाख्यातमृषिभिर्धर्मचिन्तकैः ॥

ईश्वरप्रीणनार्थं यद्ब्रह्मवित्स्यः प्रदीयते ॥ चेतसा भक्तियुक्तेन दानं तद्विमलं शुभम् ॥' गीतायां तु सात्त्विकराजसतामसभेदेन दानत्रैविध्यमुक्तम्—'दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः । दीयते चपरिक्लिष्टं तद्राजसमुदाहृतम् ॥' इति । प्रदेयाविशेषेण फलविशेषानाह मनुः— 'वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः । गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूप्यमुत्तमम् ॥ वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः । अनडुहः श्रियं जुष्टां गोदो ब्रध्नस्य विष्टपम् ॥ यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः । धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसार्ष्टिताम् ॥ सर्वेषां तु प्रदानानां ब्रह्मदानं विशिष्यते । वार्यन्नगोमहीवासस्तिलकाञ्चनसर्पिषाम् । येन येन तु भावेन यद्यद्दानं प्रयच्छति । तत्तत्तेनैव भावेन प्राप्नोति प्रतिपूजितः ॥' इति । संवर्तोऽपि— 'औषधं स्नेहमाहारं स्नेहाढ्यं सपरिच्छदम् । यः प्रयच्छति रोगिभ्यः स भवेद्व्याधिवर्जितः ॥ देवागारे द्विजातीनां दीपं दत्त्वा चतुष्पथे । सविज्ञानेन संपन्नश्चक्षुष्मांश्च

सदा भवेत्॥' इति । मत्स्यपुराणे सूतः—'अथातः संप्रवक्ष्यामि दानधर्मानुकीर्तनम्। दानधर्मेऽपि यत्प्रोक्तं विष्णुना प्रभविष्णुना ॥ यत्तु षोडशधा प्रोक्तं वासुदेवेन भूतये । पुण्यं पवित्रमायुष्यं सर्वपापहरं शुभम् । पूजितं दैवताभिश्च ब्रह्मविष्णुहरादिभिः ॥ आद्यं तु सर्वदानानां तुलापुरुषसंज्ञितम् । हिरण्यगर्भदानं च ब्रह्माण्डं तदनन्तरम् ॥ कल्पपादपदानं च गोसहस्रं च पञ्चमम् । हिरण्यकामधेनुश्च हिरण्याश्वं तथैव च ॥ हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा । पञ्चलाङ्गलकं तद्वद्धारादानं तथैव च । द्वादशं विश्वचक्रं च ततः कल्पलतात्मकम् ॥ सप्तसागरदानं च रत्नधेनुस्तथैव च । महाभूतघटस्तद्वत्षोडशः परिकीर्तितः' इति । नृसिंहपुराणेऽपि—'हिरण्यगोप्रदानेन निरहंकारमाप्नुयात् । भूदानेन तु शुद्धेन लभते शान्तिसंपदम् ॥ गोदानेन तु यत्स्वर्गं लभते निर्मलं नरः । अश्वदानेन पुण्याहं कन्यादानेन मङ्गलम् ॥ द्विजेभ्यस्तर्पणं कृत्वा दत्त्वा वस्त्राणि भक्तितः । अचिराल्लभते स्वर्गं यत्र गत्वा न शोचति ॥ कपिलागोप्रदानेन परमार्थे महीयते ।' पद्मपुराणेऽपि पुलस्त्यः—'मेरोः प्रदानं

वक्ष्यामि दशधा मुनिसत्तम ॥ यत्प्रदानान्नरो लोकाना-प्नोति सुरपूजितान् ॥ पुराणेषु च वेदेषु यज्ञेष्वायतनेषु च । न तत्फलं तथैतेषु दत्त्वा शैलान्यदश्नुते ॥ प्रथमो धान्यशैलश्च द्वितीयो लवणाचलः । गुडाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः ॥ पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्वतः । सप्तमो घृतशैलश्च रत्नशैलस्तथाष्टमः ॥ रजतो नवमस्तद्वद्दशमः शर्कराचलः ॥' इति। विष्णुधर्मोत्तरे—'तिलपर्वतदानं च तथा लवणपर्वतः । कार्पासश्च गुडश्चैव तथा सर्षपपर्वतः ॥ आषाढे कार्तिके चैव माघे वैशाखयोरपि । पौर्णमास्यां तु दातव्यं दानमेतद्युधिष्ठिर ॥ य एवं कुरुते भक्त्या शैलदानमनुत्तमम् । क्रीडाशैले महारम्ये क्रीडित्वा काममीप्सितम् ॥ धर्मेण पूज्यमानोऽथ शक्रलोकं स गच्छति । शक्रलोकान्नयेदन्ते कुलकोटिशतत्रयम् ॥ पश्चान्महोदये रम्ये शैलराजपुरोत्तमे । रमित्वा वर्षकोटिं तु द्विगुणं परिसंख्यया ॥ भूयो जन्म भवेद्राज्यं भुङ्क्ते निहतकण्टकम्' इति । तत्र अतिदानानि त्रिविधानि । तथा च भारते—'त्रीण्याहुरतिदानानि कन्या पृथ्वी सरस्वती' इति । तत्रैव प्रथमम -

विदानमाह— 'यो ब्रह्मदेयां तु ददाति कन्यां भूमिप्रदानं च करोति विप्रे। ददाति चार्षं विधिवच्च यश्च स लोकमाप्नोति पुरंदरस्य॥ मद्रराजश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमाम्। सुवर्णहस्ताय गतो लोकान्देवैरभिष्टुतान्॥ रोमपादश्च राजर्षिः शान्तां दत्त्वा सुतां प्रभुः। ऋष्यशृङ्गाय विपुलै सर्वकामैरयुज्यत॥' मरीचिरपि— 'गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत्। कन्या ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम्' इति। च्छन्दोगब्राह्मणे तु— 'त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती। नरकादुद्धरन्त्येते जपवापनदोहदानैः' इति। तत्र गोदानं शिवरहस्ये— 'सामान्यं सर्ववर्णानां गवां दानमनुत्तमम्। चतुर्वर्गफलायालं यथावत्सुरसत्तमे' इति। दशधेनुदानं च मात्स्ये— 'प्रथमा गुडधेनुः स्याद्घृतधेनुस्तथापरा। तिलधेनुस्तृतीया स्याच्चतुर्थी जलसंज्ञिता॥ क्षीरधेनुश्च विख्याता मधुधेनुस्तथापरा। सप्तमी शर्कराधेनुरष्टमी दधिधेनुका॥ रसधेनुश्च नवमी दशमी स्यात्स्वरूपतः॥ समुपोष्य नरो दद्यात्सप्तम्यां तु दिने रवेः। दिनत्रयं यताहारो याति विष्णोः परं पदम्॥ इह

लोकेऽपि सौभाग्यमायुरारोग्यवर्धनम् । वैष्णवं लोकमाप्नोति मरणं स्मरणं हरेः ॥ अर्बुदं च सहस्राणि दश चाष्टौ च धर्मवित् । न शोकदुःखमाप्नोति दौर्गत्यं जायते न च ॥' इति । ब्रह्माण्डपुराणे तु—'कृष्णा स्वर्गप्रदा ज्ञेया गौरी च कुलवर्धनी । रक्ता रूपप्रदा ज्ञेया पीता दारिद्र्यनाशिनी । कृष्णसारा पुत्रदात्री नीलधर्मविवर्धनी ॥ कपिला सर्वपापघ्नी नानावर्णा च मोक्षदा ॥' इति । मत्स्यपुराणेऽपि—'यश्चोभयमुखीं दद्यात्प्रभूतप्रभवां नरः । तद्दिनं पायसाहारं पयसा वापि वा हरेत् । सुवर्णस्य सहस्रेण तदर्धेनापि भामिनी ॥ तस्याप्यर्धं शतं वाथ पञ्चाशच्च ततोऽर्धकम् । यथा शक्त्या प्रकर्तव्यं वित्तशाठ्यविवर्जितम् ॥' इति । याज्ञवल्क्यः उभयतोमुखीस्वरूपं तद्दाने फलं चाह—'यावद्वत्सस्य पादौ तु मुखं योन्यां च दृश्यते । तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ सवत्सा रोमतुल्यानि युगान्युभयतोमुखी । दीप्ता स्यात्स्वर्गमाप्नोति पूर्वेण विधिना ददत् ॥' इति । स्कान्दे—'मुखतोऽर्धं वृषो धर्मो जघनं वृष उच्यते । चक्षुषी चन्द्रसूर्यौ च ब्रह्मा मूर्धानमाश्रितः ॥ जिह्वां च

तस्या वरुणो वायुरन्तश्चरः स्वयम् । पादे विष्णुर्भगश्चैव पूषा शक्रश्च संस्थितः ॥ जङ्घेऽशेषस्तथादित्या ऊरू चैव समाश्रिताः ॥ रुद्राः कर्णौ च नासाग्रं ग्रीवोष्ठौ वसवस्तथा । आयुधानि खुरास्तस्य चक्रवक्त्रौ च शृङ्गयोः ॥ अपाने च स्वयं मित्रः पुच्छं शासि स सर्वशः । अस्थीनि पर्वताः सर्वे पुरीषे श्रीरभूच्छिवा ॥ मूत्रं चास्य भवेद्दिव्यामममृतं चापि पावनम् । रोमाणि रश्मयः सर्वे नक्षत्राणि च सर्वशः ॥ ऋषयो देवयज्ञाश्च सत्त्वाश्च सफलानि च । अभवं स्वस्य मांसानि रुधिरं सर्वतोऽर्णवाः ॥ सप्तलोका मुखं ह्यासन् तस्याप्रतिमतेजसः । हस्ता मरीचयश्चैव मज्जा ह्योषध्य एव च ॥ मन्त्रपूताश्च पशवे यकृत्स्नायूनि वीरुधः । वल्ल्यश्च वृक्षगुल्माश्च तथैवास्ये नगाः शुभाः ॥ नागास्तस्याभवन्नास्ये वसवश्चैव मेढ्योः । आमपक्वाशयौ तस्य तौ देवावश्विनौ स्मृतौ ॥ मेघास्तस्याभवन्वक्षस्तटिन्माला विभूषिताः । पिशाचा राक्षसा यक्षा गन्धर्वाप्सरसस्तथा ॥ सिराधमन्योश्च मदो दर्पश्चैवाभिजज्ञिरे । मानुषा मातरश्चैव भूतानि विविधानि च ॥ रोमकूपा हि तस्यासन्वृषभस्य महा-

त्मनः॥ एवं स भगवान्देवः परमैश्वर्यसंयुतः। सौर-
भेयो महादेवः सर्वदेवमयोऽभवत्। उत्पाद्य सस्यानि
तृणं चरन्ति तदेव भूयः सकलं वहन्ति। न भारखिन्नाः
प्रवदन्ति किंचिदहो वृषैर्जीवति जीवलोकः॥' इति।
तादृशस्यानडुहो दानमुक्तं महाभारते— 'घृतिकण्ठ-
मनड्वाहं सर्वरत्नैरलंकृतम्। दत्त्वा प्रजापतेर्लोकं विशोकः
प्रतिपद्यते॥' इति। द्वितीयमतिदानं भूदानम् तत्र महा-
भारते भीष्मः— 'अतिदानेषु सर्वेषु पृथिवीदानमुत्तमम्।
अचला ह्यक्षया भूमिर्दोग्ध्री कामानुत्तमान्॥ दोग्ध्री
वासांसि रत्नानि पशून्व्रीहियवांस्तथा। भूमिदः सर्वभू-
तेषु शाश्वतीर्मोदते समाः॥ यावद्भूम्यामावपति ताव-
द्भूमिद एधते। न भूमिदानादस्तीह परं किंचिद्युधिष्ठिर॥
भूमिमेव ददुः पूर्वं ये भूमिं भुञ्जतेऽधुना। स्वकर्म चोप-
जीवन्ति नरा इह परत्र च॥ य एनां दक्षिणां दद्यात्पृ-
थिवीं पृथिवीपतिः। संग्रामे वा तनुं जह्याद्दद्याद्वा पृथि-
वीमिमाम्॥ इत्येतां क्षत्रबन्धूनां वदन्ति परमाशिषम्।
पुनाति दत्ता पृथिवी दातारमिह शुश्रुमः। अपि पाप-
समाचारं ब्रह्मघ्नमथ वानृतम्॥ सर्वपापात्पावयति सैव

पापात्प्रमुच्यति । अपि पापकृता राज्ञः प्रतिगृह्णन्ति साधवः ॥ पृथिवीं नान्यदिच्छन्ति पावनं ह्येतदुत्तमम् । घोराश्च वारुणाः पाशा नानुसर्पन्ति भूमिदम् ॥ पितृंश्च पितृलोकस्थान्देवलोकांश्च देवताः । संतर्पयति शान्तात्मा यो ददाति वसुंधराम् ॥ क्लिश्यमानाय चात्यर्थं वृत्तिहीनाय सीदते । भूमिं वृत्तिकरीं दत्त्वा सत्री भवति मानवः ॥ यथा धावति गौर्वत्सं क्षरन्ती सततं पयः । एवमेतन्महाभाग भूमिर्धावति भूमिदम् ॥ गन्धर्वाप्सरसो यत्र तत्र गच्छन्ति भूमिदाः । मधुसर्पिः प्रवाहिण्यः पयोदधिवहास्तथा ॥ सरितस्तर्पयन्तीह सुरेन्द्रवसुधाप्रदम् । सर्वदा पार्थिवेनेह सततं भूमिमिच्छता ॥ भूर्देया विधिवच्छुक्रपात्रे शंसमभीप्सता । अपि कृत्वा नरं पापं भूमिं दत्त्वा द्विजातये ॥ समुत्सृजति तत्पापं जीर्णां त्वचमिमिवोरगः । अग्निष्टोमप्रभृतिभिरिष्ट्वा यज्ञैः सदक्षिणैः ॥ न तत्फलमवाप्नोति भूमिदानाद्यदश्नुते ॥ दाता दशानुगृह्णाति दश हन्ति तथा क्षिपन् । ब्राह्मणाय गृहं दत्त्वा वसूनां लोकमश्नुते ॥ ग्रामदः स्यान्नरपतिः सम्राट् नगरदो भवेत् । समग्रवसुधेशस्तु चक्रवर्ती च राज्यदः ॥

भूमिं क्रीत्वापि यः कुर्याद्देवब्राह्मणसान्नरः । स्वर्गलोकमवाप्नोति पुरुषोऽपि सुदारुणः ॥ षष्टिं वर्षसहस्राणि स्वर्गे वसति भूमिदः ।' इति ॥ बृहस्पतिरपि—'आस्फोटयन्ति पितरः प्रवल्गन्ति पितामहाः । भूमिदो ऽस्मत्कुले जातः सोऽस्मान्संतारयिष्यति । पृथिव्यपहारे दोष उक्तो भारते—'पूर्वदत्तां हरन्भूमिं नरकायोपगच्छति । नो ददाति प्रतिश्रुत्य दत्त्वा वा हरते तु यः ॥ तौ बद्धा वारुणैः पाशैस्तप्येते मृत्युशासनात् । विन्ध्याटवीष्वतोयासु शुष्ककोटरवासकः । कृष्णसर्पास्तु जायन्ते ये हरेयुर्वसुंधराम् । पतन्त्यश्रूणि रुदतां दीनानामपि सीदताम् । ब्राह्मणानां हृते क्षेत्रे हन्युस्त्रिपुरुषं कुलम् । अथ विद्यादानं गारुडे— 'दानानामुत्तमं दानं विद्यादानं विदुर्बुधाः । आहुः समस्तविद्यानां श्रियमेवाविदैवतम् ॥ यथा वरिष्ठो देवानां विष्णुः कारणपूरुषः । यथा स्वयोषित्प्रवरा कमला कमलालया ॥ वायुर्बलवतां श्रेष्ठो यथा ज्योतिष्मतां रविः । जलाशयानां प्रवरो यथा च सरितां पतिः ॥ तथा विद्याप्रदः श्रेष्ठो गरीयांश्च गरीयसाम् । इहामुत्र सुखं क्षेममाहुर्विद्याधनं महत् ।

विद्ययामलया युक्तो मुक्तिं याति स संयमी। विद्यया च सुखं गच्छेद्विद्यया च परां गतिम्। विद्याप्रतिष्ठा भूतानां विद्यायोनिश्च दैवतम्। तस्माद्विद्याप्रदो लोके सर्वदः प्रोच्यते बुधैः॥' इति। बृहस्पतिः—'सहस्रमेव धेनूनां शतं वानडुहां समम्। दशानडुत्समं यानं दशयानसमो हयः। दशवाजिसमा कन्या विद्यादानं च तत्समम्। विद्यादानं परा विद्या ब्रह्मविद्या समीरिता। अतस्तद्दानतो राजन् सर्वदानफलं लभेत्।' इति। पात्रविशेषेण फलविशेषमाह मनुः— 'सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। सहस्रं श्रोत्रिये दानमनन्तं वेदपारगे।' गौतमोऽपि—'समद्विगुणसाहस्रानन्तफलानि अब्राह्मणब्राह्मणश्रोत्रियवेदपारगेभ्यः' इति। बृहस्पतिरपि— 'श्रोत्रिये चैव साहस्रमाचार्ये द्विगुणं ततः। आत्मनि शतसाहस्रमनन्तं त्वग्निहोत्रिणि॥ आहिताग्निं समाधाय कृशं भृत्यप्रियातिथिम्। वसुधा ये प्रयच्छन्ति नोपसर्पन्ति ते यमम्॥' इति। गुरवे दत्त्वा पश्चात्पात्रानुसारेण अन्येभ्यो देयमित्याह व्यासः—'प्रथमं तु गुरोर्दानं दद्याच्छ्रेष्ठमनुक्रमात्। ततोऽन्येषां च विप्राणां दद्यात्पात्रानुसारतः॥ गुरोरभावे

तत्पुत्रं तद्भार्यां तत्सुतां तथा। पौत्रं प्रपौत्रं दौहित्रमन्यं वा तत्कुलोद्भवम्। तद्दानातिक्रमे दानं प्रत्युताधोगतिप्रदम्' इति। पात्रतारतम्यमाह मनुः— 'अज्ञेभ्यो ग्रन्थिनः श्रेष्ठाः ग्रन्थिभ्यो धारिणो वराः। धारिभ्यो ज्ञानिनः श्रेष्ठाः ज्ञानिभ्योऽध्यवसायिनः॥' यमोऽपि-'विद्यायुक्तो धर्मशीलः प्रशान्तः शान्तो दान्तः सत्यवादी कृतज्ञः। स्वाध्यायवान् धृतिमान् गोशरण्यो दाता यज्वा ब्राह्मणः पात्रमाहुः। स्वाध्यायाढ्यं योनिमन्तं प्रशान्तं वैतानस्थं पापभीरुं बहुज्ञम्। स्त्रीषु क्षान्तं धार्मिकाणां शरण्यं व्रतैः क्लान्तं तादृशं पात्रमाहुः'। याज्ञवल्क्यः— 'न विद्यया केवलया तपसा वापि पात्रता। यत्र वृत्तिमिमे चोभे तद्धि पात्रं प्रचक्षते'। विष्णुपुराणे— 'यद्यदिष्टतमं लोके यच्चान्यदपि वा गृहे। तत्तद्गुणवते देयं तदेवाक्षय्यमिच्छता' इति। अपात्रदाननिषेधं तत्र दोषं चाह मनुः— 'न वार्यपि प्रयच्छेत्तु बैडालव्रतिके द्विजे। न बकव्रतिके नावेदविदि धर्मवित्। त्रिष्वप्येतेषु दत्तं हि विधिनाप्यार्जितं धनम्। दातुर्भवत्यनर्थाय परत्रादातुरेव च। यथा प्लवेनौपलेन निमज्जत्युदके

तस्य। तथा निमज्जतोऽधस्तादज्ञौ दातृप्रतीच्छकौ।' पात्रभूतोऽपि अधर्मविनियोक्त्रे न देयमित्याह स एव— 'पात्रभूतोऽपि यो विप्रः प्रतिगृह्य प्रतिग्रहम्। असत्सु विनियुञ्जीत तस्मै देयं न किंचन॥ संचयं कुरुते यश्च प्रतिगृह्य समन्ततः। धर्मार्थं नोपयुञ्जीत न तं तस्करमर्चयेत्। उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्वतः॥' अथ यज्ञाः— ते च त्रिविधाः, पाकयज्ञाः हविर्यज्ञाः, सोमसंस्थाश्चेति। तत्र अष्टकादयः पाकयज्ञाः, हविर्यज्ञाः ज्योतिष्टोमादयः, सोमाः; तत्र सर्वसोमयागप्रकृतिर्ज्योतिष्टोमः तस्य सप्तसंस्था नित्याः तद्विकृतिभूता अपि पुनः क्रतवस्त्रिविधाः एकाहाहीनसत्रभेदात्, ते च छन्दोगब्राह्मणे चतुर्भिरध्यायैरेकाहास्त्रिभिरहीनाः त्रिभिश्च सत्राणि इति क्रमेणोक्ताः; आर्षेयककल्पेऽपि तेनैव क्रमेण प्रतिपादिताः। क्षुद्रकल्पे तु एकाहाहीनसत्राणां काम्यनैमित्तिकगुणविकारेण भेदा उक्ताः। अभिजित्, विश्वजित्, महाव्रतम्, चत्वारः साहस्राः, षट् साद्यस्काः, चत्वारो व्रात्यस्तोमाः, षडग्निष्टुतः, सौमिकचातुर्मास्यानि, उपहव्यः, ऋतपेयः, शुनाशीर्यः, वैश्यस्तोमः, तीव्रसुत्, वाजपेयः, राजसूयः,

राट्, विराट्, औपसदः, सर्वतोमुखः, पुनस्तोमः, चतुष्टोमौ द्वौ उद्भिद्बलभिदौ, अपचितिपक्षिस्तोमौ, ऋषभः, गोसवः, मरुत्स्तोमः, इन्द्राग्न्योःकुलायः, इन्द्रस्तोमः, इन्द्राग्न्योःस्तोमः, निधनौ, संदंशः, वज्रः इति एकाहाः। अथ अहीनाः ज्योतिष्टोमातिरात्रः, सर्वस्तोमातिरात्रः, अप्तोर्यामः, नवसप्तदशातिरात्रः, विषुवदतिरात्रः, गोष्टोमातिरात्रः, आयुष्टोमातिरात्रः, अभिजिदतिरात्रः, विश्वजिदतिरात्रः, त्रिवृदतिरात्रः, पञ्चदशातिरात्रः, सप्तदशातिरात्रः, एकविंशातिरात्रः, इति त्रयोदशातिरात्राः। अङ्गिरसांद्विरात्रः, कापिवनद्विरात्रः, चैत्ररथद्विरात्रः। गर्गत्रिरात्रः, अश्वत्रिरात्रः, वैदत्रिरात्रः, छन्दोगपवमानत्रिरात्रः, तुर्वसुत्रिरात्रः, पराकत्रिरात्रः, इति षट् त्रिरात्राः। चतुर्वीर चतूरात्रः, जामदग्न्य चतूरात्रः, वसिष्ठस्य चतूरात्रः, विश्वामित्र संजय चतूरात्रः इति चत्वारश्चतूरात्राः। देवानां पञ्चरात्रः, पञ्चशारदीयपञ्चरात्रः, व्रतमध्यकपञ्चरात्रः, इति त्रयः पञ्चरात्राः। अथ षड्रात्रास्त्रयः— ऋतूनां षड्रात्रः, त्रिकद्रुक षड्रात्रः, अभ्यासङ्ग्य षड्रात्र इति। सप्त सप्तरात्राः— सप्तर्षिसप्तरात्रः,

प्राजापत्यसप्तरात्रः, छन्दोगपवमानसप्तरात्रः, जामदग्न्य-सप्तरात्रः, ऐन्द्रसप्तरात्रः, जनकसप्तरात्रः, पृष्ठस्तोम सप्त-रात्रः । नवरात्रौ द्वौ—आयुष्कामनवरात्रः पशुकाम-नवरात्रः इति । चत्वारो दशरात्राः— त्रिककुद्दशरात्रः, कुसुरुबिन्ददशरात्रः, छन्दोमदशरात्रः, पूर्ईशरात्रः इति। पौण्डरीकएकादशरात्रः इत्यहीनाः। द्वादशाहस्तावत् द्विविधः अहीनसत्रभेदात् । तावुभौ द्विविधौ व्यूढसमूढभेदात्। द्वे त्रयोदशरात्रे षड्विंशोक्तं तृतीयम्; त्रीणि चतुर्दशरात्राणि; चत्वारि पञ्चदशरात्राणि; षोडश सप्तदश अष्टादश एकोनविंशति विंशति रात्राणि पञ्च; द्वे एकविंशतिरात्रे; द्वाविंशतिरात्रः; त्रयोविंशतिरात्रः; चतुर्विंशतिरात्रे द्वे; पञ्चविंशतिषड्विंशति सप्तविंशति अष्टाविंशति एकान्नत्रिंशत् त्रिंशदेकत्रिंशद्द्वात्रिंशद्रात्राणि; त्रीणि त्रयस्त्रिंशद्रात्राणि; चतुस्त्रिंशत् पञ्चत्रिंशत् षट्त्रिंशत् सप्तत्रिंशत् अष्टात्रिंशत् एकान्नचत्वारिंशच्चत्वारिंशद्रात्राणि; सप्त एकान्नपञ्चाशद्रात्राणि एकषष्टिरात्रः शतरात्रः; गवामयनम्, आदित्यानामयनम्, अङ्गिरसामयनम्, दृतिवातवतोरयनम्, कुण्डपायिनामयनम्, तापश्चितामयनम्, प्रजा-

पतेद्वादशसंवत्सरम्, इति सत्राणि । एवमेते एकाहा-हीनसत्रा ब्राह्मणोक्ताः । आर्षेयकल्पे एकादशभिर-ध्यायैः क्लृप्ताः क्रतवः । अथ क्षुद्रकल्पोक्ताः— 'ग्रा-मकामयज्ञः प्रजाकामयज्ञः पश्वादिभेषजकामयज्ञः श्रैष्ठ्यकामयज्ञः मिथः शत्रुभूतबहुयजमानयज्ञः सुहृ-द्भूतबहुयजमानकयज्ञः दीक्षितमृतयज्ञः ज्योगामयावि-यज्ञः अभिशस्यमानयज्ञः राजयज्ञः राष्ट्रे ऋद्धिकामयज्ञः द्वियजमानकयज्ञः वृष्टिकामयज्ञः गोकामयज्ञः इति प्राप्तपदा अग्निष्टोमभेदाश्चतुर्दश । आभिचारयज्ञः पशु-कामयज्ञः ज्योगामयावियज्ञः प्रतिष्ठाकामयज्ञः प्रजाका-मयज्ञः लोककामयज्ञौ द्वौ भ्रातृव्ययज्ञः विभ्रष्टयज्ञः इति ब्राह्मसामिका नव योनैर्यज्ञः यज्ञायज्ञीय बहिष्पव-मानक एकः ऋद्धिकामोक्थ्यः पशुकामउक्थ्यः अन्नाद्य-काम उक्थ्यः ज्येष्ठकाम उक्थ्यः इत्युक्थ्यभेदाः सप्त । प्रतिष्ठाकामयज्ञः स्वर्गकामयज्ञः श्रुत्यसंध्यकसामकपशुका-मयज्ञः इति पञ्चयज्ञः । अवकीर्णवप्रायश्चित्तयज्ञः, अति-प्लुवे प्रायश्चित्तयज्ञः, संसवप्रायश्चित्तयज्ञः, सोमापहरणप्राय-श्चित्तयज्ञः, कलशाहरणप्रायश्चित्तेऽनु सोमाति सोमाति-

रेकप्रायश्चित्तानि त्रीणि, अतिरात्रावृत्तिरेके एकः सत्रिणां मध्ये दीक्षितप्रमीतियज्ञः' इति प्रायश्चित्तक्रतवः त्रयोवर्णकल्पा ब्राह्मणराजन्यवैश्यभेदात् ।उभयसामाभिजित्प्रतिरूपः उभयसामविश्वजित्प्रतिरूपौ द्वौ ऋषभप्रतिरूपाख्यः पुरोहितयज्ञौ द्वौ यज्ञायज्ञीयानुरूप एकः षोडशसामाग्निष्टोमौ द्वौ। अथाष्टौ गर्भियज्ञः तलवकारिशाखोक्तज्योतिष्टोमभेदा एकत्रिंशत् एकादशाग्निष्टोमाः पञ्चाशदत्यग्निष्टोमाः पञ्चोकथ्याः पञ्च षोडशिनः पञ्चातिरात्राः। अथ प्रबर्हयज्ञाः आवापवानग्निष्टोमः श्रीस्तोमाश्चत्वारः वाचस्तोम एकः ब्रह्मसामपृष्ठकाहौ द्वौ इति ज्योतिर्विकारः। अथ पृष्ठ्यषडहविकाराः—पृष्ठ्यस्तोमः, नानापृष्ठ्यः, परोक्षपृष्ठ्यः, सर्वपरोक्षपृष्ठ्यः, उभयपरोक्षपृष्ठ्यः, अन्वाहार्यपृष्ठ्यः, अनन्तरावेव ईषद्विकृतावष्टमनवमौ, पुरस्ताज्ज्योतिःषडहः, उपरिष्टाज्ज्योतिःषडहः, बृहद्रथन्तरपुरस्ताज्ज्योतिःषडहः, बृहद्रथन्तरउपरिष्टाज्ज्योतिःषडहः, परोक्षापकर्ष्यपृष्ठ्यःषडहः, प्रत्यक्षापकर्षपृष्ठ्यः षडहः, परोक्षप्राक् पृष्ठ्यःषडहः, प्रत्यक्षप्राक्पृष्ठ्यःषडहः, बृहद्रथन्तरपृष्ठ्यःषडहः, अनुगृहीतपृष्ठ्यःषडहः, बृहद्र-

थंतरपृष्ठ्यो अनुगृहीतपृष्ठ्यःषडहः, बृहद्रथंतरपृष्ठ्यो अनु हीतपरोक्षपृष्ठ्यःषडहः, नानापृष्ठ्यो अनुगृहीतबृहद्रथंतर-पृष्ठ्यःषडहः नानापृष्ठ्योऽनुगृहीतबृहद्रथंतरपरोक्षपृष्ठ्यःष-डहः इति द्वाविंशत् प्रभेदाः। एवं पृष्ठ्यस्तोमविश्वजिदतिरा-त्रः नानापृष्ठ्यविश्वजिदतिरात्रः इत्येवंप्रकारेण विश्वजिद-तिरात्रा द्वाविंशतिभेदाः। अथ भरतद्वादशाहाः चत्वारः तत्र प्रथममाहापस्तम्बः— द्वादशाग्निष्टोमा रथंतरसामनः सभरतद्वादशाह इति उभयतोऽतिरात्रा दशाग्निष्टोमा रथंतरसामानः सभरतद्वादशाह इति उभयतोऽतिरात्रा दशाग्निष्टोमा द्वितीयः व्यत्यासेन रथंतरबृहत्पृष्ठका उभ-यतोऽतिरात्राः मध्यतो दशाग्निष्टोमाः तृतीयः अभितः षोडशमन्तौ अतिरात्रौ अभितोग्निष्टोमौ अष्टौ मध्य उक्था इति चतुर्थः द्वादशाग्निष्टोमा बृहत्पृष्ठानाकसदामय-नम् द्वादशोक्थ्यास्तद्विश्वेषां देवानामयनम् । द्वादशषोड-शिमतः तदिन्द्रस्यायनं द्वादशातिरात्रद्यावापृथिव्योः संव-त्सरप्रवर्हद्वादशाहः। अथ त्र्यत्रिकद्वादशाहः तत्र प्रथमः अतिरात्रावभितो मध्यतो गो आयुषोरावृत्तिः अतिरा-त्रावभितोऽष्टौ गायुषी ज्योतिष्टोमे प्रथमदशमेऽहनीति

द्वितीयः अतिरात्रावभितः त्रिकद्रुकमूर्ध्वानुपयान्ति ज्योतिष्टोमदशममहः इति तृतीयः एवमभितः त्रिरात्रं ज्योतिर्दशकमित्येकः अभितोऽतिरात्रा आयुषां दशकमिति तृतीयः एवंप्रकारेण यावन्तोऽहीनैकाहाः तावन्तो द्वादशाहाः अन्नाद्यकामद्वादशाहः प्रजाकामद्वादशाह इत्येवमादिप्रकारेण अनन्ता द्वादशाहाः शाखान्तरे विहिताः। क्षुद्रकल्पे क्लृप्ताः तदुक्तं चतुर्दशप्रातिपादनिवैक ब्रह्मसामतः यज्ञायज्ञीयबहिष्पवमानोऽपरः क्रतुः सप्तोक्थ्य विकृताः पञ्चसंधिभेदाद्विचरिताः॥ साम्युत्थितावभिव्युष्टाववर्वाक् स्तुत्यागतिष्टवौ। संस्रवेऽपहृते सोमे एकैकः क्रतु रिच्यते॥ विशीर्णे कलशे द्वौ तु त्रयः सवनभेदतः। सोमातिरेकतः प्रोक्ता एको रात्र्यतिरेकतः॥ प्रमीते दीक्षिते ग्रामभेदने वर्णभेदतः त्रयः कल्पास्तु वर्णानां द्वावग्निष्टोमसामतः। अनुष्टुभिर्बृहद्वन्तो माध्यंदिनरथंतरः॥ षट्कल्पिताः पुरोधेच्छोर्द्वे यज्ञीयानुरूपकः। एकोऽष्टौ गर्भिणः सप्तप्रणर्हाः सवनादितः॥ दशाहा द्वादशाहाभ्यामेक आवापवानथ। वाचस्तोमास्तु चत्वारो द्वौ पृष्ठब्रह्मसामतः॥ एकं कल्पोदि-

वैकाहाः पञ्चाशीतिप्रभेदतः । द्वाविंशतिस्तु षडहाः पृष्ठतः कल्पितास्तथा ॥ अनन्ता द्वादशाहाश्च भरतप्रमुखास्तथा' इति । तपोविषये मनुः— 'तपोमूलमिदं सर्वं दैवं मानुषकं सुखम् । तपो मेध्यं बुधैः प्रोक्तं तपोऽन्तं वेददर्शिभिः॥ ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् । वैश्यस्य तपो वार्ता तपः शूद्रस्य सेवनम् ॥ ऋषयः संशितात्मानः फलमूलानिलाशनाः । तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम् ॥ औषधान्यगदो विद्या दैवी च विविधा स्थितिः । तपसैव प्रसिद्ध्यन्ति तपस्तेषां हि साधनम् ॥ यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम् । तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥ महापातकिनश्चैव शेषाश्चाकार्यकारिणः । तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः ॥ कीटाश्चाहिपतङ्गाश्च पशवश्च वयांसि च । स्थावराणि च भूतानि दिवं यान्ति तपोबलात् ॥ यत्किंचिदेनः कुर्वन्ति मनोवाक्कायकर्मभिः । तत्सर्वं निर्दहन्त्याशु तपसैव तपोधनाः । तपसैव विशुद्धस्य ब्राह्मणस्य दिवौकसः ॥ इज्याश्च प्रतिगृह्णन्ति कामान्संवर्धयन्ति च । प्रजापतिरिदं शास्त्रं तपसैवासृज-

त्यसुः ॥ तथा च वेदानृषयस्तपसैव प्रपेदिरे । इत्येवं तपसो देवा माहाभाग्यं प्रचक्षते ॥ सर्वस्यास्य प्रपश्यन्तस्तपसः पुण्य उद्भवा' इति । आनुशासनिकेऽपि तपसां विशेषः तत्फलविशेषश्च दर्शितः— 'स्थण्डिलेषु शयनानां गृहाणि शयनानि च । चीरवल्कलसंवीते वासांस्याभरणानि च ॥ वाहनानि च यानानि योगात्मनि तपोधने । अग्निपूपशयानस्य राज्ञः पौरुषमेव च ॥ रसानां प्रतिसंहारे सौभाग्यमनुगच्छति । आमिषप्रतिसंहारे पशून्पुत्रांश्च विन्दति ॥ अवाक्शिरास्तु यो लम्बेदुदवासं च यो वसेत् । सततं चैकशायी यः स लभेतेप्सितां गतिम् ॥ वीरासनं वीरशय्यां वीरस्थानमुपागतः । अथ यावस्य वै लोकाः सर्वकामगमास्तथा । धनं लभेत दानेन मौनेनाज्ञां विशांपते । उपभोगांश्च तपसा ब्रह्मचर्येण जीवितम् । रूपमैश्वर्यमारोग्यमहिंसाफलमश्नुते ॥ फलमूलाशिनो राज्यं स्वर्गः पर्णाशिनां भवेत् । प्रायोपवेशिनो राजन्सर्वत्र सुखमुच्यते । गवाढ्यः शाकदीक्षायां स्वर्गगामी तृणाशनः । स्त्रियस्त्रिषवणं स्नात्वा वायुं पीत्वा क्रतुं लभेत् । स्वर्गं सत्येन लभते दीक्षया कुलमुत्तमम् ॥

सलिलाशी भवेद्यस्तु सदाग्निः संस्कृतो द्विजः । मनुं साधयतो राज्यं नाकपृष्ठमनाशके ॥ उपवासं च दीक्षायामभिषेकं च पार्थिव । कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते ॥ अधीत्य सर्ववेदान्वै सद्यो दुःखाद्विमुच्यते । मानसं हि चरन्धर्मं स्वर्गं लोकमुपाश्नुते । तत्रैव स्थलान्तरे उमामहेश्वरसंवादे देवदेव उवाच— 'उपवासव्रतैर्दान्ता ह्यहिंस्राः सत्यवादिनः । संसिद्धाः प्रेत्य गन्धर्वैः सह मोदन्त्यनामयाः । मण्डूकयोगशयनो यथान्यायं यथाविधि । दीक्षां चरति धर्मात्मा स नागैः सह मोदते । शष्पं मृगमुखोच्छिष्टं यो मृगैः सह सेवते ॥ दीक्षितो वै मुदा युक्तः संगच्छत्यमरावतीम् । शैवालं शीर्णपर्णं वा तद्व्रती यो निषेवते ॥ शीतयोगवहो नित्यं स गच्छेत्परमां गतिम् । वायुभक्षोऽम्बुभक्षो वा फलमूलाशनोऽपि वा ॥ यक्षेष्वैश्वर्यमादाय मोदतेऽप्सरसां गणैः । अग्नियोगवहो ग्रीष्मे विधिदृष्टेन कर्मणा । तीर्त्वा द्वादशवर्षाणि राजा भवति पार्थिवः ॥ आहारनियमं कृत्वा मुनिर्द्वादशवार्षिकम् । मनुं संसाध्य यत्नेन राजा भवति पार्थिवः । देहं चानशने त्यक्त्वा स स्वर्गे सुखमेधते ॥

स्थण्डिले शुद्धमाकाशं परिगृह्य समन्वतः। प्रविश्य च मुदा युक्तो दीक्षां द्वादशवार्षिकीम् ॥ स्थण्डिलस्य फला-न्याहुर्यानानि शयनानि च। गृहाणि च महार्हाणि चन्द्रशुभ्राणि भामिनी ॥ आत्मानमुपजीवन्यो नियतो नियताशनः। देहं वा शयने त्यक्त्वा स स्वर्गं समुपा-श्नुते ॥ आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम्। त्यक्त्वा महार्णवे देहं वारुणं लोकमश्नुते। आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम् ॥ अश्मना चरणौ भित्वा गुह्यकेषु स मोदते। साधयित्वात्मनात्मानं निर्द्वन्द्वो निष्परिग्रहः ॥ तीर्त्वा द्वादशवर्षाणि दीक्षामेतां मनोहराम्। स्वर्गलोकमवाप्नोति देवैश्च सह मोदते ॥ आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम्। हुत्वाग्नौ देहमुत्सृज्य वह्निलोके महीयते ॥ यस्तु देवि यथान्यायं दीक्षितो नियतो द्विजः। आत्मन्यात्मानमाधाय निर्ममो धर्मलालसः ॥ तीर्त्वा द्वादशवर्षाणि दीक्षामेतां मनो-ऽनुगाम्। अरणीसहितं स्कन्दे बध्वा गच्छत्यनावृतः। वीराध्वा निरतो नित्यं वीरासनगतस्तथा। वीरस्थायी च सततं स वीरगतिमाप्नुयात्। स शक्रलोकगो नित्यं

सर्वकामपुरस्कृतः । दिव्यपुष्पसमाकीर्णो दिव्यचन्दनभूषितः । सुखं वसति धर्मात्मा दिवि देवगणैः सह ॥ वीरलोकगतो वीरो वीरयोगवहः सदा । सत्त्वस्थः सर्वमुत्सृज्य दीक्षितो नियतः शुचिः ॥ वीराध्वानं प्रपद्येद्यस्तस्य लोकाः सनातनाः । कामगेन विमानेन स वै चरति छन्दतः ॥ शक्रलोकगतः श्रीमान्मोदते च निरामयः ।' इति । संन्यासविषये मनुः— 'चतुर्थमायुषो भागं संगं त्यक्त्वा परिव्रजेत् । आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः ॥ भिक्षाबलिपरिश्रान्तः प्रव्रजन्प्रेत्य वर्धते । ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ॥ अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः । अधीत्य विधिवद्वेदान्पुत्रानुत्पाद्य धर्मतः ॥ इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् । अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान् ॥ अनिष्ट्वा चैव यज्ञैस्तु मोक्षमिच्छन्व्रजत्यधः । प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम् ॥ आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् । यो दत्त्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात् । तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः । यस्मादण्वपि भूतानां द्विजान्नोत्पद्यते भयम् । तस्य देहाद्विमुक्तस्य

भयं नास्ति कुतश्चन ॥ अगारादभिनिष्क्रान्तः पवित्रोप-
चितो मुनिः । समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ।
एक एव चरेन्नित्यं सिद्ध्यर्थमसहायकः । सिद्धिमेकस्य
पश्यन्हि न जहाति न हीयते । अनग्निरनिकेतः स्याद्ग्रा-
ममन्नार्थमाश्रयेत् ॥ उपेक्षको संचयिको मुनिर्भावसम-
न्वितः । कपालं वृक्षमूलानि कुचेलमसहायता ॥ समता
चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥ नाभिनन्देत मरणं
नाभिनन्देत जीवितम् । कालमेव प्रतीक्षेत निर्देशं
भृतको यथा ॥ दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ।
सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ अतिवादांस्ति-
तिक्षेत नावमन्येत कंचन । न चैनं देहमाश्रित्य वैरं कुर्वीत
केनचित् ॥ क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।
सप्तद्वारावतीर्णां च न वाचमनृतां वदेत् ॥ अध्यात्मर-
तिरासीनो निरपेक्षो निरामिषः । आत्मनैव सहायेन
सुखार्थी विचरेदिह ॥ न चोत्पातनिमित्ताभ्यां न नक्षत्रा-
ङ्गविद्यया । नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥
न तापसैर्ब्राह्मणैर्वा वयोभिरपि पार्श्वभिः । आकीर्णं भिक्षु-
कैर्वान्यैरगारमुपसंविशेत् । क्लृप्तकेशनखश्मश्रुर्दण्डी कुसुप-

वाक्शुचिः॥ विचरेन्नियतो नित्यं सर्वभूतान्यपीडयन्' इति। भारते चातुराश्रम्येऽपि परिव्राजकानां पुनराचारा विमुच्याग्निधनकलत्रपरिबर्हणं सर्वेष्वात्मानं स्नेहपाशानवधूय परिव्रजन्ति समलोष्टाश्मकांचनास्त्रिवर्गवृतेष्वसक्तबुद्धयः। अरिमित्रोदासीनानां तुल्यदर्शनाःस्थावरजरायुजाण्डजस्वेदजोद्भिज्जानां भूतानां वाङ्मनःकर्मभिरनभिद्रोहिणः अनिकेताः पर्वतपुलिनवृक्षमूलदेवतायतनान्यनुचरन्तो वासार्थमुपेयुर्नगरं ग्रामं वा नगरे पञ्च च रात्रिकाः ग्रामे चैकरात्रिकाः प्रविश्य च प्राणरक्षणार्थं द्विजातीनां भवनान्यसंकीर्णकर्मणामुपतिष्ठेयुः। पात्रपतितायाचितभैक्षाः कामक्रोधदर्पलोभमोहकार्पण्यदम्भपरिवादाभिमानहिंसानिवृत्ता इति। भवन्ति चात्र श्लोकाः—अभयं सर्वभूतेभ्यो दत्वा यश्चरते मुनिः। न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित्। कृत्वाग्निहोत्रं स्वशरीरसंस्थं शारीरमग्निं स्वमुखे जुहोति। विप्रस्तु भैक्षोपगतैर्हविर्भिश्चिताग्निनां संव्रजते हि लोकान्॥ विष्णुपुराणेऽपि—पुत्रद्रव्यकलत्रेषु त्यक्तस्नेहो नराधिप। चतुर्थमाश्रमस्थानं गच्छेन्निर्धूतकल्मषः॥ मित्रादिषु समो मैत्रः समस्तेष्वेव जन्तु-

षु। जरायुजाण्डजादीनां वाङ्मनःकर्मभिः क्वचित्॥ युक्तः कुर्वीत न द्रोहं सर्वसंगं च वर्जयेत्। प्राणयात्रानिमित्तं च व्यङ्गारे भुक्तवज्जने॥ काले प्रशस्तवर्णानां भिक्षार्थं पर्यटेद्गृहान्। एकरात्रस्थितिर्ग्रामे पञ्चरात्रस्थितिः पुरे। त्रैवर्गिकांस्त्यजेत्सर्वानारम्भानवनीपते॥ कृत्वाग्निहोत्रं स्वशरीरसंस्थं शरीरमग्निं स्वमुखे जुहोति। विप्रस्तु भैक्षोपगतैर्हविर्भिश्चिताग्निनां स व्रजति स्म लोकान्। मोक्षाश्रमं यश्चरते यथोक्तं शुचिः सुसंकल्पितबुद्धियुक्तः। अनिन्धनज्योतिरिव प्रशान्तः स ब्रह्मलोकं श्रयते द्विजातिः'। इति। यतिधर्मान्हेयानुपादेयांश्च संगृह्याह मेधातिथिः—श्रद्धया परयोपेतः परमात्मपरायणः। स्थूलसूक्ष्मशरीराभ्यां वियुक्तो दशषट्कवित्॥ त्रिदण्डी कुण्डिकां कन्थां भैक्ष्यभाजनमासनम्। कौपीनाच्छादनं वासः षडेतानि परिग्रहेत्॥ स्थावरं जङ्गमं बीजं तैजसं विषमायुधम्। षडेतानि न गृह्णीयाद्यतिर्मूत्रपुरीषवत्। रसायनं क्रियां वादं ज्योतिषं क्रयविक्रयम्॥ विविधानि च शिल्पानि वर्जयेत्परदारवत्। भिक्षाशनं जपः स्नानं ध्यानं शौचं सुरार्च-

नम् ॥ कर्तव्यानि षडेतानि कर्तव्यं नृपदण्डवत् ॥ नटादिप्रेक्षणं द्यूतं प्रमदां सुहृदं तथा ॥ भक्ष्यां भोज्यमुदीत्यां च षण्ण पश्येत्कदाचन । स्कन्धावारे खले सार्धे पुरे ग्रामेऽप्यसद्गृहे ॥ न वसेत्तु यतिः सायं षट्सु स्थानेषु कर्हिचित् । रागं द्वेषं मदं मायां दम्भं मोहं मनागपि । षडेतानि यतिर्नित्यं मनसापि न चिन्तयेत् । मञ्चकं शुक्लवस्त्रं च स्त्रीकथा लौल्यमेव च । दिवा स्वापं च यानं च यतीनां पतनानि षट् ॥ संयोगं च वियोगं च वियोगस्य च साधनम् । जीवेश्वरप्रधानानां स्वरूपाणि विचिन्तयेत् ॥ आसनं पात्रलोपश्च संचयः शिष्यसंग्रहः । दिवा स्वापो वृथा जल्पो यतेर्बन्धकराणि षट् ॥ एकाहात्परतो ग्रामे पञ्चाहात्परतः पुरे । वर्षाभ्योऽन्यत्र च स्थानमासनं तदुदाहृतम् ॥ उक्तानां यतिपात्राणामेकस्यापि न संग्रहः । भिक्षोर्भक्ष्यभुजश्चापि पात्रलोपः स उच्यते ॥ गृहीतस्य त्रिदण्डादेर्द्वितीयस्य परिग्रहः । कालान्तरोपभोगार्थं संचयः परिकीर्तितः ॥ शुश्रूषालाभपूजार्थं यशोर्थं वा परिग्रहः । शिष्याणां न तु कारुण्यात्स ज्ञेयः शिष्यसंग्रहः ॥ विद्यादीनां प्रकाशत्वाद्‌विद्या रात्रिरुच्यते ।

विद्याभ्यासे प्रमादो यः स दिवा स्वाप उच्यते ॥ आध्यात्मिकीं कथां हित्वा भैक्षचर्यासु यो रतिम् । अनुग्रहं पथि प्रश्नं वृथा जल्पोऽन्य उच्यते ॥ अजिह्वः पण्डकः पङ्गुरन्धो बधिर एव च । मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः ॥ इदं मृष्टमिदं नेति योऽश्नन्नपि न सज्जते । हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते ॥ अद्यजातं यथा नारीं तथा षोडशवार्षिकीम् । शतवर्षां च यो दृष्ट्वा निर्विकारः स पण्डकः ॥ भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च । योजनान्न परं याति सर्वदा पङ्गुरेव सः ॥ तिष्ठतो गच्छतो वापि यस्य चक्षुर्न दूरतः । चतुर्युगाद्भुवं त्यक्त्वा परिव्राट् सोऽन्ध उच्यते ॥ हिताहितं मनोरामं वचः शोकावहं तु यत् । श्रुत्वा यो न शृणोतीव बधिरः स प्रकीर्तितः ॥ सांनिध्यविषयाणां यः समर्थो विकलेन्द्रियः । सुप्तवद्वर्तते नित्यं स भिक्षुर्मुग्ध उच्यते ॥ विशेषमाह मनुः— 'एककालं चरेद्भैक्षं न प्रसज्येत विस्तरे । भैक्षप्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥ विधूमे सन्नमुसले व्यंगारे भुक्तवज्जने । वृत्तेरारावसंबाधे भिक्षां नित्यं यतिश्चरेत् ॥ भिक्षा च पञ्चविधा; तथा चोशनाः—

'माधुकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम्। तात्कालिकोपपन्नं च भैक्षं पञ्चविधं स्मृतम्' इति । संन्यासिनः चतुर्विधाः; तदाह संवर्तः— 'चतुर्विधा भिक्षवस्तु कुटीचकबहूदकौ । हंसः परमहंसश्च यो यः पश्चात्स उत्तमः ॥ वैराग्यभेदेन व्यवस्था दर्शिता पुराणे— विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च । सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचके ॥ अशक्ते बहूदको तीव्रतरा या हंससंज्ञिते । मुमुक्षुः परमहंसे च साक्षाद्विज्ञानसाधनः ॥ तत्र कुटीचकवृत्तिः स्कान्दे दर्शिता— 'कुटीचकस्तु संन्यस्य यः स्वसद्मनि नित्यशः । भिक्षामादाय भुञ्जीत स्वबन्धूनां गृहेऽथ वा ॥ शिखायज्ञोपवीती स्यात्त्रिदण्डी सकमण्डलुः' इति । बोधायनोऽपि— 'कुटीचकः परित्यज्य ज्येष्ठे वेश्मनि नित्यशः ॥ भिक्षां बन्धुभ्य आदाय भुञ्जीता शक्तिसंक्षयात्' इति । बहूदकवृत्तिः पितामहेनोक्ता— 'बहूदकस्तु विज्ञेयः सर्वसंगविवर्जितः । बन्धुवर्गेण रक्षितः स्वभूमौ नैव संविशेत् ॥ निश्चलः स्थाणुभूतश्च सदा मोक्षपरायणः । न कुल्याम्भोदके वासं कुर्याद्दूरे च चेतसा ॥ नागरे नासनेताम्भे

नान्तरे न त्रिदण्डके । स्वमात्रायां न कुर्याद्वै रागं दण्डादिके यतिः ॥' इति । हंसवृत्तिः स्कान्दे— 'हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैव च । कन्थां कौपीनमाच्छाद्यमङ्गवस्त्रबहिःपटम् ॥ एकं तु वैणवं दण्डं धारयेन्नित्यमादरात् । देवतामभेदेन कुर्याद्ध्यानं समर्चयेत्' इति । परमहंसवृत्तिश्च स्कान्दे— 'कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिणीम् । अक्षमालां च गृह्णीयाद्वैणवं दण्डमव्रणम् ॥ माधूकरमथैकान्नं परमहंसः समाचरेत्' इति । एवं देवगुर्वादिपूजादानदीक्षातपस्त्यागबोधकशास्त्रजातमखिलमपि दानसेवननरूपतया अप्रमाणमेव । तथा यजस्वेत्यादिना चातुराश्रम्यमप्युपलक्षितम् । तथा हि अत्र यजस्वेत्यनेन प्राथम्याद्ब्रह्मचर्यमुच्यते । ब्रह्मचारिणश्च गुरूपासनं विना देवतान्तरोपासना नास्त्येव । तथा चापस्तम्बः— 'न ब्रह्मचारिणो विद्यार्थस्य परोपवासोऽस्ति' इति । स एवान्यत्र 'देवमिवाचार्यमुपासीत' इति । श्रुतिरपि— 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इति । शैवपुराणेऽपि— 'यो गुरुः स शिवः प्रोक्तः स शिवः स च शंकरः ।

शिवविद्यागुरूणां च भेदो नास्ति कथंचन । शिवे मन्त्रे गुरौ यस्य भावना सदृशी भवेत् । भोगो मोक्षश्च सिद्धिश्च शीघ्रं तस्य भवेद्ध्रुवम् । वस्त्राभरणमाल्यानि शयनान्यासनानि च ॥ प्रियाणि चात्मनो यानि तानि देयानि वै गुरोः । तोषयेत्तं प्रयत्नेन मनसा कर्मणा गिरा' इति । एवं च देवपूजार्थक 'यज' धातुना ब्रह्मचारिणोऽवश्यकर्तव्यदेवताभूतगुरुपूजाप्रतिपादनात् । अतः यजस्वेत्यनेन ब्रह्मचर्याश्रमोपलक्षणमुक्तम् । देहि दीक्षस्वेत्याभ्यां गृहस्थाश्रम उपलक्षितः, दानदीक्षयोः गृहस्थे प्रधानतया अनुष्ठेयत्वात् । तपस्तप्यस्वेत्यनेन च वानप्रस्थाश्रमः, वानप्रस्थैः प्राधान्येन तपसोऽनुष्ठेयत्वात् । संत्यजेत्यनेन तुरीयाश्रमः, तुरीयाश्रमस्थैः त्यागस्यैव प्राधान्येन कर्तव्यत्वात् । एवं ब्रह्मचर्याश्रमासाधारणगुरुशुश्रूषणादिशास्त्रस्य, गृहस्थाश्रमासाधारणदानादिशास्त्रस्य, वानप्रस्थाश्रमासाधारणतपश्चरणशास्त्रस्य, मोक्षाश्रमासाधारणसर्वसङ्गपरित्यागशास्त्रस्य अप्रामाण्यप्रतिपादनेन चतुर्णामाश्रमाणां तद्धर्माणां च विधायकशास्त्रजातमप्रमाणमित्युक्तं भवति । आश्रमाणां

तद्धर्माणां च विधायकशास्त्रजातं मोक्षधर्मे व्यासशुकसं-
वादे व्यासः— 'ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भि-
क्षुकः। यथोक्तचारिणः सर्वे गच्छन्ति परमां गतिम्॥
एको वाप्याश्रमानेतान्यो न तिष्ठेद्यथाविधि। अकामद्वेष-
संयुक्तः स परत्र विधीयते॥ चतुष्पदी हि निःश्रेणी ब्र-
ह्मण्येषा प्रतिष्ठिता। एतामारुह्य निःश्रेणीं ब्रह्मलोके म-
हीयते॥ आयुषस्तु चतुर्भागं ब्रह्मचार्यनसूयकः। गुरौ
वा गुरुपुत्रे वा वसेद्धर्मार्थकोविदः॥ जघन्यशायी पूर्वं
स्यादुत्थाय गुरुवेश्मनि। यच्च शिष्येण कर्तव्यं कार्यं
दासेन वा पुनः। कृतमित्येव तत्सर्वं कृत्वा तिष्ठेत
पार्श्वतः। किंकरः सर्वकारी स्यात् सर्वकर्मसु को-
विदः॥ कर्मातिशेषेण गुरावध्येतव्यं बुभूषता। दक्षिणो
नयवादी स्यादाहूतो गुरुमाश्रयेत्॥ शुचिर्दक्षो गुणोपेतो
ब्रूयादिष्टमिवान्तरा। चक्षुषा गुरुमव्यग्रो निरीक्षेत
जितेन्द्रियः। नाभुक्तवति चाश्नीयादपीतवति न
पिबेत्॥ नातिष्ठति तथासीत नासुप्ते प्रस्वपेत च।
उत्तानाभ्यां च पाणिभ्यां पादावस्य मृदु स्पृशेत्॥
दक्षिणं दक्षिणेनैव सव्यं सव्येन पीडयेत्। अभिवाद्य

गुरुं ब्रूयादधीष्व भगवन्निति । इदं करिष्ये भगवन्निदं चापि कृतं मया ॥ अहंस्तदपि कर्तास्मि यद्भवान्वक्ष्यते पुनः । इति सर्वमनुज्ञाप्य निवेद्य च यथाविधि । कुर्यात्कृत्वा च तत्सर्वमाख्येयं गुरवे नमः ॥ यांस्तु गन्धान्रसान्वापि ब्रह्मचारी न सेवते । सेवेत तान्समावृत्त इति धर्मेषु निश्चयः । ये केचिद्विस्तरेणोक्ता नियमा ब्रह्मचारिणः ॥ तान्सर्वांन्नाचरेन्नित्यं भवेच्चानयगो गुरोः । स एवं गुरवे प्रीतिमुपाहृत्य यथाबलम् ॥ आश्रमादाश्रमेष्वेव शिष्यो वर्तेत कर्मणा । वेदव्रतोपवासेन चतुर्थे चायुषे गते ॥ गुरवे दक्षिणां दत्त्वा समावर्तेद्यथाविधि । धर्मलुब्धैर्युतो दारैरग्नीनुत्पाद्य यत्नतः । द्वितीयमायुषो भागं गृहमेधी भवेद्व्रती ॥ द्वितीयमायुषो भागं गृहमेधी गृहे वसेत् । धर्मलुब्धैर्युतो दारैरग्नीनाहृत्य सुव्रतः ॥ गृहस्थवृत्तयश्चैव चतस्रः कविभिः स्मृताः । कुसूलधान्यः प्रथमः कुम्भधान्यस्त्वतः परम् ॥ अश्वस्तनोऽथ कापोतीमाश्रितो वृत्तिमाहरेत् । येषां परः परो ज्यायान्धर्मतो धर्मवित्तमः । षट्कर्मावर्तयत्येकः त्रिभिरन्यः प्रवर्तते ॥ द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रे व्यवस्थितः ।

गृहमेधिव्रतान्यत्र महान्तीह प्रचक्षते । नात्मार्थं पाचयेदन्नं न वृथा घातयेत्पशून् ॥ प्राणी वा यदि वाप्राणी संस्कारं यजुषार्हति । न दिवा प्रस्वपेज्जातु न पूर्वापररात्रिषु । न भुञ्जीतान्तरा काले नानृतावाह्वयेत्स्त्रियम् । नास्यानश्नन्गृहे विप्रो वसेत्कश्चिदपूजितः ॥ तथास्यातिथयः पूज्या हव्यकव्यवहाः सदा । वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः । स्वधर्मजीविनो दान्ताः क्रियावन्तस्तपस्विनः । तेषां हव्यं च कव्यं चाप्यर्हणार्थं विधीयते । नखरैः संप्रयातस्य स्वधर्मज्ञापकस्य च ॥ अपविद्धाग्निहोत्रस्य गुरोर्वालीककारिणः । संविभागोऽत्र भूतानां सर्वेषामेव शिष्यते । तथैवापचमानेभ्यः प्रदेयं गृहमेधिना । विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः । अमृतं यज्ञशेषः स्याद्भोजनं हविषा समम् । भृत्यशेषं तु योऽश्नाति तमाहुर्विघसाशिनम् । विघसं भृत्यशेषं तु यज्ञशेषमथामृतम् ॥ स्वदारनिरतो दान्तो ह्यनसूयुर्जितेन्द्रियः । ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः । वृद्धबालातुरैर्वैद्यैर्ज्ञातिसंबन्धिबान्धवैः । मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्यया ॥ दुहित्रा दास-

वर्गेण विवादं न समाचरेत्। एतान्विमुच्य संवादान्सर्व-
पापैर्विमुच्यते॥ एतैर्जितश्च जयति सर्वाँल्लोकान्न संशयः।
आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः॥
अतिथिस्त्विन्द्रलोकस्य देवलोकस्य चर्त्विजः। जाम-
योऽप्सरसां लोके वैश्वदेवे तु ज्ञातयः। संबन्धिबान्धवा
दिक्षु पृथिव्यां मातृमातुलौ॥ वृद्धबालातुरकृशास्त्वाकाशे
प्रभविष्णवः। भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः
स्वका तनुः॥ छाया स्वा दासवर्गश्च दुहिता कृपणं परम्।
तस्मादेतैरधिक्षिप्तः सहेन्नित्यमसंज्वरः। गृहधर्मपरो वि-
द्वान्धर्मशीलो जितक्लमः। न चार्थबद्धः कर्माणि धर्मं वा
कंचिदाचरेत्।गृहस्थवृत्तयस्तिस्रस्तासां निःश्रेयसं परम्।
परस्परं तथैवाहुश्चातुराश्रम्यमेव तत्। ये चोक्ता नियमा-
स्तेषां सर्वं कार्यं बुभूषता। कुम्भधान्यैरुञ्छशिलैः का-
पोतीं चास्थितास्तथा॥ यस्मिंश्चैते वसन्त्यर्हास्तद्राष्ट्रम-
भिवर्धते। पूर्वापरान्दशापरान्पुनाति च पितामहान्॥
गृहस्थवृत्तीश्चाप्येता वर्तयेद्यो गतव्यथः॥ स चक्रधरलो-
कानां सदृशीमाप्नुयाद्गतिम्। जितेन्द्रियाणामथ वा ग-
तिरेषा विधीयते॥ स्वर्गलोको गृहस्थानामुदारमनसां

हितः । स्वर्गो विमानसंयुक्तो वेददृष्टः सुपुष्पितः ॥ स्वर्गलोको गृहस्थानां प्रतिष्ठा नियतात्मनाम् । ब्रह्मणा विहिता योनिरेषा यस्माद्विधीयते । द्वितीयं क्रमशः प्राप्य स्वर्गलोके महीयते ॥ अतः परं परमुदारमाश्रमं तृतीयमाहुस्त्यजतां कलेबरम् । वनौकसां गृहपतिनामनुत्तमं शृणुष्व संश्लिष्टशरीरकारिणाम् ॥' इति । 'गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव चापत्यं वनमेव तदाश्रयेत् ॥ तृतीयमायुषोभागं वानप्रस्थाश्रमे वसेत् । तानेवाग्नीन्परिचरेद्यजमानो दिवौकसः ॥ नियतो नियताहारः षष्ठभक्तोऽप्रमत्तवान् । तदग्निहोत्रं ता गावो यज्ञाङ्गानि च सर्वशः ॥ अफालकृष्टं व्रीहियवं नीवारं विघसानि च । हवींषि संप्रयच्छेत मखेष्वत्रापि पञ्चसु ॥ वानप्रस्थाश्रमेऽप्येताश्चतस्रो वृत्तयः स्मृताः ॥ सद्यः प्रक्षालकाः केचित्केचिन्मासिकसंचयाः । वार्षिकं संचयं केचित्केचिद्द्वादशवार्षिकम् ॥ कुर्वन्त्यतिथिपूजार्थं यज्ञतन्त्रार्थमेव च । अभ्रावकाशा वर्षासु हेमन्ते जलसंश्रयाः ॥ ग्रीष्मे च पञ्चतपसः शश्वच्च मितभोजनाः । भूमौ विपरिवर्तन्ते तिष्ठन्ति प्रमदैरपि ॥ स्थानासनैर्वर्तयन्ति सवनेष्वभिषि-

ञ्चते । दन्तोलूखलिकाः केचिदश्मकुट्टास्तथापरे ॥ शुक्लपक्षे पिबन्त्येके यवागूं क्वथितां सकृत् । कृष्णपक्षे पिबन्त्यन्ये भुञ्जते वा यथागमम् । मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः ॥ वर्तयन्ति यथान्यायं वैखानसगतिं श्रिताः । एताश्चान्याश्च विविधा दीक्षास्तेषां मनीषिणाम् ॥ चतुर्थश्चौपनिषदो धर्मः साधारणः स्मृतः । वानप्रस्थाद्गृहस्थाश्च ततोऽन्यः संप्रवर्तते ॥ अस्मिन्नेव युगे तात विप्रैः सर्वार्थदर्शिभिः । अगस्त्यः सप्तऋषयो मधुच्छन्दोऽघमर्षणः ॥ सांकृतिः सुदिवा दण्डिः यथावासोऽकृतश्रमः । अहोवीर्यस्तथा काव्यः ताण्ड्यो मेधातिथिर्बुधः ॥ बलवान्कर्णनिर्वाकः शून्यपालः कृतश्रमः । एवं धर्मं कृतवन्तः ततः स्वर्गमुपागमन् ॥ तात प्रत्यक्षधर्माणस्तथा यायावरा गणाः । ऋषीणामुग्रतपसां धर्मनैपुण्यदर्शिनाम् ॥ अन्ये चापरिमेयाश्च ब्राह्मणा वनमाश्रिताः । वैखानसा वालखिल्याः सैकताश्च तथापरे ॥ कर्मभिस्ते निरानन्दा धर्मनित्या जितेन्द्रियाः । गताः प्रत्यक्षधर्माणः ते सर्वे वनमाश्रिताः ॥ अनक्षत्रास्त्वनाधृष्या दृश्यन्ते ज्योतिषां गणाः । जरया च परिद्यूना व्याधिना परिपीडिताः ॥

चतुर्थे चायुषः शेषे वानप्रस्थाश्रमं त्यजेत्। सद्यस्कारां नि-
रूप्येष्टिं सर्ववेदसदक्षिणाम् ॥ आत्मयाजी आत्मरतिरा-
त्मक्रीडात्मसंश्रयः। आत्मन्यग्नीन्समारोप्य त्यक्त्वा स-
र्वपरिग्रहान् ॥ साद्यस्कांश्च यजेद्यज्ञानिष्टीश्चैवेह सर्वदा।
यदैव याजिनां यज्ञादात्मनीज्या प्रवर्तते ॥ त्रींश्चैवाग्नी-
न्यजेत्सम्यगात्मन्येवात्ममोक्षणात्। प्राणेभ्यो यजुषः पञ्च
षट्प्राश्नीयादकुत्सयन् ॥ केशलोमनखान्वाप्य वानप्रस्थो
मुनिस्ततः। आश्रमादाश्रमं पुण्यं पूतो गच्छति कर्मभिः॥
अभयं सर्वभूतेभ्यो दत्त्वा यः प्रव्रजेद्विजः। लोकास्तेजो-
मयास्तस्य प्रेत्य चानन्त्यमश्नुते ॥ सुशीलवृत्तो व्यपनीत-
कल्मषो न चेह नामुत्र च कर्तुमीहते। अरोषमोहो गत-
संधिविग्रहो भवेदुदासीनवदात्मविन्नरः ॥ यमेषु चैवानु-
गतेषु न व्यथेत्स्वशास्त्रसूत्राहुतिमन्त्रविक्रमः। भवेद्यथेष्टा-
गतिरात्मवेदिनि न संशयो धर्मपरे जितेन्द्रिये ॥ ततः
परं श्रेष्ठमतीव सद्गुणैरधिष्ठितं त्रीनथ वृत्तिमुत्तमाम्।
चतुर्थयुक्तं परमाश्रमं शृणु प्रकीर्त्यमानं परमं परायणम् ॥'
शुक उवाच— वर्तमानस्तथैवात्र वानप्रस्थाश्रमे यथा।
योक्तव्योऽत्मा कथं शक्त्या वेद्यं वै काङ्क्षता परम्।

व्यास उवाच— प्राप्य संस्कारमेताभ्यामाश्रमाभ्यां ततः परम् । यत्कार्यं परमार्थं तु तदिहैकमनाः शृणु ॥ कषायं पाचयित्वा तु श्रेणिस्थानेषु च त्रिषु । प्रव्रजेच्च परं स्थानं परिव्राज्यमनुत्तमम् ॥ तद्भवानेवमभ्यस्य वर्ततां श्रूयतां तथा । अनग्निरनिकेतश्च ग्राममन्नार्थमाश्रयेत् ॥ अश्वस्तनविधाता स्यान्मुनिर्भावसमन्वितः । लघ्वाशी नियताहारः सकृदन्ननिषेविता ॥ कपालं वृक्षमूलानि कुचेलमसहायता । उपेक्षा सर्वभूतानामेतावद्भिक्षुलक्षणम् ॥ यस्मिन्वाचः प्रविशन्ति कूपे त्रस्ता द्विजा इव । न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥ नैव पश्येन्न शृणुयादवाच्यं जातु कस्यचित् । ब्राह्मणानां विशेषेण नैव ब्रूयात्कथंचन ॥ यद्ब्राह्मणस्य कुशलं तदेव सततं वदेत् । तूष्णीमासीत निन्दायां कुर्वन्भैषज्यमात्मनः ॥ येन पूर्णमिवाकाशं भवत्येकेन सर्वदा । शून्यं येन विना कीर्णं तं देवा ब्राह्मणं विदुः ॥ येन केनचिदच्छिन्नो येन केनचिदाशितः । यत्रक्वचनशायी च तं देवा ब्राह्मणं विदुः । अहेरिव गणाद्भीता सौहित्यान्नरकादिव । कुणपादिव च स्त्रीभ्यः तं देवा ब्राह्मणं विदुः ॥ न क्रुध्येन्न प्रहृष्येच्च

मानितोऽमानितोऽपि वा। सर्वभूतेष्वभयदं तं देवा ब्राह्मणं विदुः॥ नाभिनन्देत मरणं नाभिनन्देत जीवितम्। कालमेव प्रतीक्षेत निदेशं भृतको यथा॥ अनभ्याहतचित्तः स्यादनभ्याहतवाग्भवेत्। निर्मुक्तः सर्वपापेभ्यो निरमित्रस्य किं भयम्॥ अभयं सर्वभूतेभ्यो भूतानामभयं यतः॥ तस्य मोहाद्विमुक्तस्य भयं नास्ति कुतश्चन। यथा नागपदेऽन्यानि पदानि पदगामिनाम्॥ सर्वाण्येवापि ध्रियन्ते पदजातानि कौञ्जरे। एवं सर्वमहिंसायां धर्मार्थमपि धीयते। अमृतः स नित्यं वसति यो हिंसां न प्रपद्यते। अहिंसकः समः सत्यो धृतिमान्नियतेन्द्रियः॥ शरण्यः सर्वभूतानां गतिमाप्नोत्यनुत्तमाम्। एवं प्रज्ञानतृप्तस्य निर्भयस्य निराशिषः। न मृत्युरतिगो भावः स मृत्युमभिगच्छति॥ विमुक्तं सर्वसंगेभ्यो मुनिमाकाशवत्स्थितम्। अस्वमेकचरं शान्तं तं देवा ब्राह्मणं विदुः॥ जीवितं यस्य धर्मार्थं धर्मो हर्यर्थमेव च। अहोरात्राश्च पुण्यार्थं तं देवा ब्राह्मणं विदुः॥ निराशिषमनारम्भं निर्नमस्कारमस्तुतिम्। निर्मुक्तं बन्धनैः सर्वैस्तं देवा ब्राह्मणं विदुः॥ सर्वाणि भूतानि सुखे रमन्ते

सर्वाणि दुःखस्य भृशं त्रसन्ते । तेषां भयोत्पादनजात-खेदः कुर्यान्न कर्माणि हि श्रद्दधानः ॥ दानं हि भूताभय-दक्षिणायाः सर्वाणि दानान्यधितिष्ठतीह । तीक्ष्णां तनुं यः प्रथमं जहाति सोऽनन्त्यमाप्नोत्यभयं प्रजाभ्यः । उत्तान आस्ये न हविर्जुहोति लोकस्य नाभिर्जगतः प्रतिष्ठा । तस्याङ्गमङ्गानि कृताकृतं च वैश्वानरः सर्व-मिदं प्रपेदे ॥ प्रादेशमात्रे हृदि निःसृतं यत्तस्मिन्प्राणा-नात्मयाजी जुहोति । तस्याग्निहोत्रं हुतमात्मसंस्थं सर्वेषु लोकेषु सदेवकेषु ॥ दैवं विधातुं त्रिवृतं सुपर्णं ये विद्युरग्र्यां परमात्मतां च । ते सर्वलोकेषु महीयमाना देवाः समर्त्याः सुकृतं व्रजन्ति ॥ वेदांश्च वेद्यं च विधिं च कृत्स्नमथो निरुक्तं परमार्थतां च । सर्वं शरीरात्मनि यः प्रवेद तस्यैव देवाः स्पृहयन्ति नित्यम् ॥ भूमावसक्तं दिवि चाप्रमेयं हिरण्मयं योऽण्डजमण्डमध्ये । पतत्रिणं पक्षिणम-न्तरिक्षे यो वेद भोग्यात्मनि रश्मिदीप्तः ॥ आवर्तमानम-जरं विवर्तनं षण्णाभिकं द्वादशारं सुपर्व । यस्येदमास्यो-परि याति विश्वं तत्कालचक्रं निहितं गुहायाम् ॥ यः संप्रसादं जगतः शरीरं सर्वान्सलोकानधिगच्छतीह ।

तस्मिन्हि संतर्पयतीह देवान् ते वै तृप्तास्तर्पयन्त्यास्यमस्य ॥ तेजोमयो नित्यमजः पुराणो लोकाननन्तानुभयानुपैति । भूतानि यस्मान्न त्रसन्ते कदाचित्स भूतानां न त्रसते कदाचित् ॥ अगर्हणीयो न च गर्हतेऽन्यान्स वै विप्रः परमात्मानमीक्षेत् । विनीतमोहो व्यपनीतकल्मषो न चेह नामुत्र च सोऽन्तमृच्छति ॥ अरोषमोहः समलोष्टकाञ्चनः प्रहीणकोशो गतसंधिविग्रहः । अपेतनिन्दास्तुतिप्रियश्चरन्नुदासीनवदेष भिक्षुकः ॥' इति । एवं सर्वाश्रमधर्मबोधकशास्त्रप्रामाण्यं सिद्धम् । स नास्ति परमित्यनेन परलोकाभाव उक्तः । 'प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु' इत्यनेन प्रत्यक्षमात्रप्रामाण्यमुक्तम् । गतः स नृपतिस्तत्र गन्तव्यं यत्र तेन वै इत्यनेन भूतचतुष्टयसंघातदेहात्मकः पिता देहारम्भकतत्तद्भूतेषु गत इत्यर्थकेन श्लोकेन 'अथ धर्मपरा ये ये तांस्ताञ्शोचामि नेतरान् । ते हि दुःखमिह प्राप्य विनाशं प्राप्य भेजिरे' इत्यनेन च देहातिरिक्त आत्माभावश्चेत्येवमादयश्चार्वाकमतसिद्धाः पदार्था उक्ताः । ते च इत्थमाचक्षते प्रत्यक्षसिद्धपृथिव्यादिभूतचतुष्टयमेव तत्त्वम् । प्रत्यक्षादृष्टं तु वस्तु ना-

स्त्येव । तदुक्तम्—'लोकायतिकपक्षे तु तत्त्वं भूतचतुष्टयम् । पृथिव्यापस्तथा तेजो वायुरित्येव नापरः ॥ प्रत्यक्षगम्यते-वास्ति नास्त्यदृष्टमदृष्टतः । अदृष्टवादिभिश्चापि नादृष्टं दृष्टमुच्यते । क्वापि दृष्टमदृष्टं चेददृष्टं ब्रुवते कथम् । नित्यादृष्टं कथं तत्स्याच्छशशृङ्गादिसंनिभम्' इति । ननु विचित्रसुखदुःखान्यथानुपपत्त्या धर्माधर्मावदृष्टरूपौ स्वीकर्तव्याविति चेन्न । कोकिलकलरवमयूरपिञ्छवैचित्र्यादिवत्स्वभावादेव उपपन्नस्य सुखदुःखवैचित्र्यधर्माधर्मफलकत्वाभावात् । तदुक्तम्–'न कल्प्यौ सुखदुःखाभ्यां धर्माधर्मौ परैरिह । स्वभावेन सुखी दुःखी जनोऽन्यन्नैव कारणम् ॥ शिखिनश्चित्रयेत्को वा कोकिलान्कः प्रकूजयेत् । स्वभावव्यतिरेकेण विद्यते नास्य कारणम्' इति । आत्मा तु पृथिव्यादिभूतचतुष्टयसंघातो देह एव न तद्विलक्षणः, स्थूलोऽहं कृशोऽहमिति स्थूलत्वादिसामानाधिकरण्येन देह एवात्मत्वानुभावात् । न च जडत्वात् कथं चैतन्यं संपत्स्यत इति वाच्यम्, प्रत्येकं रागासमर्थानां चूर्णपर्णक्रमुकादीनां योगे रागविशेषवत् मार्तण्डमण्डलमयूखसंतप्तभस्त्रास्थितमद्यस्य स्वयमेवोत्पतननिपतनवत् किण्वादिभ्यो

मदशक्तिवत्त प्रत्येकं भूतानां जडत्वेऽपि तत्सङ्घातरूपस्य देहस्य चैतन्यसंभवात् । किं च देहातिरिक्तात्मसद्भावे किं प्रत्यक्षं प्रमाणम् आहोस्विदनुमानं शब्दो वा? नाद्यः, चक्षुरादिना घटादिवद्देहातिरिक्तात्मनोऽनुपलम्भात्; नापि द्वितीयः, सर्वत्रव्यभिचारशङ्कया व्याप्तिग्रहानुपपत्तेः अनुमानस्यैवासंभवात्; न तृतीयः, अनुमानसापेक्षशक्तिग्रहमूलकत्वेन शब्दमात्रस्याप्रमाणत्वात् । न च पारलौकिकस्वर्गनरकान्यथानुपपत्त्या शरीरातिरिक्तात्मसिद्धिरिति वाच्यम्, परिदृश्यमानस्रक्चन्दनवनितादिजनितसुखकण्टकवेधादिजनितदुःखव्यतिरेकेण परलोकोपभोग्यस्वर्गनरकयोरेवाभावात् मोक्षस्यापि शरीरप्राणवियोगव्यतिरिक्तस्याप्रामाणिकत्वाच्च । स्वर्गनरकसंपादनमपि कृषिगोरक्षादिदृष्टोपायैरेव भविष्यति । तपश्चरणं च मूढकल्पितम्, पातिव्रत्यनियमो रतिदुर्बलकल्पितः, सुवर्णदानान्नदानादिकं च दरिद्रक्षुत्क्षामकुक्षिभिक्षुककल्पितम्, प्रपासत्रदेवालयकूपारामादिनिर्माणं पान्थपरिकल्पितम् । अग्निहोत्रादिकं तु पौरुषहीनैर्जीवनार्थतया परिकल्पितम् । अतः परलोकभ्रान्त्या कायक्लेशादिकं तिर-

स्कृत्य ऋणादिनापि घृतं संपाद्य शरीरमेव सर्वदा पोषणीयम्। तदुक्तम्—स्थूलोऽहं तरुणो वृद्धो युवेत्यादिविशेषणैः। विशिष्टो देह एवात्मा न ततोऽन्यो विलक्षणः। जडभूतविकारेषु चैतन्यं यत्तु दृश्यते। ताम्बूलचूर्णपूगानां योगाद्राग इवोत्थितम्। इहलोकात्परो नान्यः स्वर्गोऽस्ति नरको न च। शिवलोकादयो मूढैः कल्प्यन्तेऽन्यैः प्रतारकैः। स्वर्गानुभूतिरिष्टातिद्व्यष्टवर्षवधूरतिः। सूक्ष्मवस्त्रसुगन्धस्रक्चन्दनादिविभूषणम्। नरकानुभवो वैरिशस्त्रव्याध्याद्युपद्रवः। मोक्षस्तु मरणं प्राणवायुसंज्ञानिवर्तनम्। नातस्तदर्थं संन्यासं कर्तुमर्हति पण्डितः। ततो व्रतोपवासाद्यैर्मूढ एव प्रशुष्यति। पातिव्रत्यादिसंकेतो बुद्धिमद्दुर्बलैः कृतः। सुवर्णभूमिदानादिमृष्टामन्त्रणभोजनम्॥ क्षुत्क्षामकुक्षिभिर्लोके दरिद्रैरुपवर्णितम्। देवालयप्रपासत्रकूपारामादिकर्मणाम्। प्रशंसां कुर्वते नित्यं पान्था एव न चापरे। अग्निहोत्रं त्रयो वेदास्त्रिपुण्ड्रं भस्मकुण्ठनम्। बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः। कृषिगोरक्षवाणिज्यं दण्डनीत्यादिभिर्बुधैः। दृष्टैरेव सदोपायैर्भोगाननुभवेद्भुवि' इति। न च दृष्टो-

पाचजन्यभोगस्य दुःखसंभिन्नत्वात् न तस्य पुरुषार्थत्वमिति वाच्यम्, दुःखमनादृत्य सुखमात्रोपभोगसंभवात्। अत एवोक्तम्— त्याज्यं सुखं विषयसङ्गमजन्म पुंसां दुःखोपसृष्टमिति मूर्खविचारणैषा। व्रीहीञ्जिहासति सितोत्तमतण्डुलाढ्यान् को नाम भोस्तुषकणोपहितान्हितैषी॥ तस्माद्दृष्टमेव पुरस्कार्यं नादृष्टमस्तीति। अयमर्थो विष्णुपुराणेऽपि—नैतद्युक्तिसहं वाक्यं हिंसा धर्माय नेष्यते। हवींष्यनलदग्धानि फलायेत्यर्भकोदितम्॥ निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते। स्वपिता यजमानेन किं नु तस्मान्न हन्यते॥ तृप्तये जायते पुंसः भुक्तमन्येन चेत्ततः। दद्याच्छ्राद्धं श्रद्धयान्नं न वहेयुः प्रवासिनः॥' राजधर्मेऽपि—'यदि संन्यासतः सिद्धिं राजन्कश्चिदवाप्नुयात्। पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः॥ एते हि नित्यसंन्यासादृश्यन्ते निरुपद्रवाः। अपरिग्रहवन्तश्च सततं चात्र भाषिणः॥' इति। बोधायनचन्द्रोदयेऽपि—'मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारकम्। निर्वाणस्य प्रदीपस्य स्नेहः संवर्धयेच्छिखाम्॥ स्वर्गः कर्तृक्रियाद्रव्यविनाशे यदि यज्वनाम्। ततो दावाग्निदग्धा-

नां फलं स्याद्भूरि भूरुहाम्' इति । 'आत्मास्ति देहाद्यतिरिक्तमूर्तिर्भोक्ता स लोकान्तरितः फलानाम् । आशेयमाकाशतरोः प्रसूनात्प्रथीयसी स्वादुफलप्रवृत्तौ ॥ यत्रास्त्येव तदस्ति वस्त्विति मृषा जल्पद्भिरेवास्तिकैर्वाचालैर्बहुभिस्तु सत्यवचसो निन्द्याः कृता नास्तिकाः । हंहो पश्यत तत्त्वतो यदि पुनश्छिन्नादितो वर्ष्मणो दृष्टः किं परिणामरूपितचितिर्जीवः पृथक्कैरपि ॥ तुल्यत्वे वपुषां मुखाद्यवयवैर्वर्णक्रमः कीदृशो योषेयं वसु चापरस्य यदमुं भेदं न विद्मो वयम् । हिंसायामथ वा यथेष्टगमने स्त्रीणां परस्वगृहे कार्याकार्यकथास्तथापि यदिमे निष्पौरुषाः कुर्वते ॥ कालिङ्गनं भुजनिपीडितबाहुमूलभुग्नोन्नतस्तनमनोहरमायताक्ष्याः । भिक्षोपवासनियमार्कमरीचिदाहैर्देहोपशोषणविधिः कुधियां क चैषः ' इति । नैषधेऽपि— ' गुरुतल्पगतौ पापकल्पनां त्यजत द्विजाः । येषां वः पत्युरत्युच्चैर्गुरुदारग्रहे ग्रहः ॥ यश्चिवेदीविदां वन्द्यः स व्यासोऽपि जजल्प वः । रामाया जातकामायाः प्रशस्ता हस्तधारणा ॥ कः शमः क्रियतां प्राज्ञाः प्रियाप्रीतौ परिश्रमः । भस्मीभूतस्य भूतस्य पुनरागमनं

कुतः ॥ कुरुध्वं कामदेवाज्ञां ब्रह्माद्यैरप्यलङ्घिताम् । वेदो-
ऽपि देवकीयाज्ञा तत्राज्ञाः काधिकार्हणा ॥ ग्रावोन्मज्ज-
नवद्यज्ञफलेऽपि श्रुतिसत्यता । का श्रद्धा तत्र धीवृद्धाः
कामान्धा यत्खिलीकृतः ॥ को हि वेदास्त्यमुष्मिन्वा लो-
क इत्याह या श्रुतिः । तत्प्रामाण्यादमुं लोकं लोकः प्रत्येतु
वा कथम् ॥ प्रलापमपि वेदस्य भागं मन्यध्व एव चेत् ।
केनाभोग्येन दुःखान्न विधीनपि तथेच्छथ ॥ जनेन जा-
नतास्मीति कायं नायं त्वमित्यसौ । त्याज्यते ग्राह्यते चा-
न्यदहो श्रुत्यातिधूर्तया ॥ संदेहेऽप्यन्यदेहाप्तेर्विवर्ज्यं वृजि-
नं यदि । त्यजत श्रोत्रियाः सत्रं हिंसादूषणसंशयात् ॥
किं ते वृन्तहृतात्पुष्पात्तन्मात्रे हि फलत्वदः । स्वस्यैव
मूर्धनि न्यस्य न्यास्यमेवाश्मनो यदि ॥ स्वं च ब्रह्म च
संसारे मुक्तौ तु ब्रह्म केवलम् । इति स्वोच्छित्तिमत्युक्ति-
वैदग्धी वेदवेदिनाम् ॥ दारा हरिहरादीनां तन्मग्नमनसो
भृशम् । किं न मुक्ताः कुतः सन्ति कारागारे मनोभुवः ।
देवश्चेदस्ति सर्वज्ञः करुणाभागवन्ध्यभाक् । तत्किं वा-
ग्व्ययमात्रान्नः कृतार्थयति नार्थिनः' इति । इयं चार्वा-
केणोक्तम्— तदिदं चार्वाकमतं जाबालिरुपन्यस्य 'सतां

बुद्धिं पुरस्कृत्य सर्वलोकनिदर्शिनीम् । राज्यं त्वं प्रतिगृह्णीष्व भरतेन प्रसादितः' इत्यभिहितवान् ॥

नवोत्तरशततमे—अथ यथाकथंचिदयोध्यां प्रत्यानेतुमधर्मोपबृंहितान्यपि वचनानि व्याहरतो जाबालेराकर्ण्य वाक्यानि धर्मव्यवस्थापको रामभद्रस्तन्मतं निर्मर्यादस्तु पुरुष इत्यादिना दूषयामास ।

निर्मर्यादस्तु पुरुषः पापाचारसमन्वितः ।
मानं न लभते सत्सु भिन्नचारित्रदर्शनः ॥

अनेन पापसमाचारः पुरुषः सद्भिर्न बहुमन्तव्य इति सूचितम् । तथा राजधर्मे 'श्लाघनीयेन चान्येन कर्मणा निरपत्रपः । उपेक्षितव्यो यत्नेन तादृशः पुरुषाधमः ॥

कुलीनमकुलीनं वा वीरं पुरुषमानिनम् ।
चारित्र्यमेव चाख्याति शुचिं वा यदि वाशुचिम् ॥

अनेन चारित्रमेव पुरुषस्य स्वभावज्ञापकमिति सूचितम् । तथा चानुशासनिके— 'अनार्यत्वमनाचारः क्रूरत्वं निष्क्रियात्मता । पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥ आर्यरूपसमाचारं चरन्तं कृतके पथि ।

सुवर्णमन्यवर्णं वा स्वशीलं शास्ति निश्चयः' इति ।

कश्चैतयानः पुरुषः कार्याकार्यविचक्षणः।
बहु मंस्यति मां लोके दुर्वृत्तं लोकदूषणम् ॥

अनेन लोकदूषिताचारं जनो न बहुमन्यत इति सूचितम्। तथा च मनुः— 'दुराचारो हि पुरुषो लोके भवति निन्दितः। दुःखभागी च सततं व्याधितोऽल्पायुरेव च' इति ।

कामवृत्तस्त्वयं लोकः कृत्स्नः समुपवर्तते ।
यद्वृत्ताः सन्ति राजानस्तद्वृत्ताः सन्ति हि प्रजाः ॥

अनेन प्रजा राजवृत्तमनुसरन्तीति सूचितम्। राजधर्मेऽपि 'राज्ञा हि पूजितो धर्मस्ततः सर्वत्र पूज्यते। यद्यदाचरते राजा तत्प्रजाभ्यश्च रोचते ॥

सत्यमेवानृशंस्यं च राजवृत्तं सनातनम्।
तस्मात्सत्यात्मकं राज्यं सत्ये लोकः प्रतिष्ठितः ॥

ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे ।
सत्यवादी हि लोकेऽस्मिन्परमं गच्छति क्षयम् ॥

सत्यमेवेश्वरो लोके सत्यं पद्मा समाश्रिता ।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥

अनेन सर्वधर्मापेक्षया सत्यमेव परमो धर्म इति सूचितम् । अयमर्थः प्राक् प्रपञ्चितः ।

असत्यसंधस्य सतश्चलस्यास्थिरचेतसः ॥
नैव देवा न पितरः प्रतीच्छन्तीति नः श्रुतम् ।

अनेन अनृतप्रतिज्ञेन चलचित्तेन च दत्तं हविर्देवाः पितरश्च न प्रतिगृह्णन्तीति सूचितम् ।

क्षात्रं धर्ममिमं त्यक्ष्ये ह्यधर्मं धर्मसंहितम् ।
क्षुद्रैर्नृशंसैर्लुब्धैश्च सेवितं पापकर्मभिः ॥

नन्वत्र पितृवचनपालनातिक्रमरूपम् अधर्मसहितं राज्यपरिपालनं रामेण परित्यक्तमिति प्रतीयते; तदसङ्गतम् । अधर्मसहितत्वेऽपि स्वधर्मत्वेन राज्यपरिपालनस्यैव कर्तव्यत्वात् । क्षत्रियाणां राज्यपरिपालनस्य स्वधर्मत्वे मनुः— ‘क्षत्रियस्य परो धर्मः प्रजानामेव पालनम्’ इति । किं च, वैगुण्यप्रसक्तावपि स्वधर्मस्यैव कर्तव्यत्वात् । तथा च गीतायाम्—‘श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्’

इति । तत्र राज्यपरिपालने प्रसक्तानां पापानां यज्ञदाना-
दिभिर्निर्वृतिसंभवाच्च । तथा चारण्यके भीमः—' न हि
केवलधर्मात्मा पृथिवीं जातु कश्चन । पार्थिवो व्यजयद्राज-
न्न भूतिं न पुनः श्रियम् ॥ जिह्वां दत्त्वा बहूनां हि लु-
ब्धानां लुब्धचेतसाम् । निकृत्या लभते राज्यमाहारमिव
शल्यकः ॥ भ्रातरः पूर्वजाताश्च सुसंवृद्धाश्च सर्वशः ।
निकृत्या निर्जिता देवैरसुराः पार्थिवर्षभ ॥ यदेनः कुरुते
किंचिद्राजा भूमिमवाप्नुवन् । सर्वं तन्नुदते पश्चाद्यज्ञैर्विपु-
लदक्षिणैः । ब्राह्मणेभ्यो ददद्ग्रामान्गाश्च राजन्सहस्रशः '
इति । एवं च त्रिगुणत्वेऽपि अवश्यकर्तव्यं राज्यपरिपा-
लनं परित्यज्य किमिति वनवासाय प्रस्थितो राम इति
चेत्, सत्यम् राज्ञां प्रजापालनमेव परमो धर्मः । तथापि
राज्यपरिपालनापेक्षया क्षत्रियस्य प्रतिज्ञातार्थनिर्वहणं
श्रेष्ठो धर्मः । तथा च आरण्यके भीमं प्रति धर्मपुत्रवाक्यम्—
' तं संधिमास्थाय सतां सकाशे को नाम जह्यादिह
राज्यहेतोः । आर्यस्य मन्ये मरणाद्गरीयो यद्धर्ममुत्सृज्य
महीं प्रशासेत् ॥ मम प्रतिज्ञां च निबोध सत्यां वृणे यथा
धर्ममृताज्जीविताच्च ॥ राज्यं च पुत्राश्च यशो धनं च सर्वं

न प्रत्यस्य तुलामुपैति' इति। किं च, यदेनः कुरुते किंचिद्राजा भूमिमवाप्नुवन्। सर्वं तन्नुदते पश्चाद्यज्ञैर्विपुलदक्षिणैः' इति वचनेन प्रजापरिपालनार्थतया संभावितदोषाणां यज्ञादिप्रायश्चित्तेन निवृत्तिः प्रतिपादिता; प्रतिज्ञातार्थपालने तु संभावितधर्मव्यतिक्रमस्य दोषत्वमेव नास्तीति। अतोऽपि प्रजापालनापेक्षया प्रतिज्ञातार्थपालनमेवोत्कृष्टो धर्मः। तथा च गदापर्वणि गदायुद्धे नाभेरधः प्रहारनिषेधे सत्यपि भीमकृतदुर्योधनोरुभेददर्शनजनितक्रोधाविष्टं बलरामं प्रति कृष्णवचनम्—सुयोधनस्य गदया भङ्क्ष्याम्यूरू महाहवे। इति पूर्वं प्रतिज्ञातं भीमेन हि सभातले। आनृण्यं यातु वैरस्य प्रतिज्ञायाश्च पाण्डवः। अतो दोषं न पश्यामि मा क्रुद्धस्त्वं बलं वहन्' इति। एवं च राज्यपरिपालनापेक्षया प्रतिज्ञातार्थपरिपालनस्य प्रबलधर्मत्वात्, तदर्थं राज्यं परित्यज्य रामस्य वनगमनं युक्तमेव। अमुमेवार्थं हृदि निधाय 'क्षात्रं धर्ममहं त्यक्ष्ये' इत्युक्तवान् इति।

अकुहः श्रद्दधानः सन्कार्याकार्यविचक्षणः।
कर्मभूमिमिमां प्राप्य कर्तव्यं कर्म यच्छुभम्॥

अनेन कर्मभूमिं गतः पुरुषः सत्कर्माण्यवश्यं कुर्यादेवेति सूचितम् । विष्णुपुराणे—अत्राजन्मसहस्राणां सहस्रैरपि सत्तम । कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसंचयात् ॥ गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारत भूमिभागे । स्वर्गस्यापवर्गस्यास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात् ॥ कर्माण्यपि संकल्पिततत्फलानि संन्यस्य विष्णौ परमात्मरूपे । आवाप्य तां कर्म महीमनन्ते तस्मिन्महीं ये त्वमलाः प्रयान्ति ॥ जानीम नैतत्क वयं विलीने स्वर्गप्रदे कर्मणि देहबन्धम् ॥ प्राप्स्याम धन्याः खलु ते मनुष्या ये भारतेनेन्द्रियशक्तिहीनाः ' इति । आरण्यके—' इह यत्क्रियते कर्म तत्परत्रोपयुज्यते । कर्मभूमिरियं ब्रह्मन्फलभूमिरसौ मता ॥'

सत्यं च धर्मं च पराक्रमं च
भूतानुकम्पां प्रियवादितां च ।
द्विजातिदेवातिथिपूजनं च
पन्थानमाहुस्त्रिदिवस्य सन्तः ॥

अनेन सत्यधर्मादीनां परलोकसंपादकत्वमुक्तम् । तथा

च सत्यस्य स्वर्गार्थत्वे मनुः—"नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् । स्थितिश्च लोकधर्मश्च तस्मात्सत्यं विशिष्यते ॥ सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव' इति । धर्मस्य परलोकसाधनत्वे मनुः—'धर्मं शनैः संचिनुयाद्वल्मीकमिव धार्मिक । परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥ धर्मप्रधानं पुरुषं तपसा हतकल्मषम् । परलोकं नयत्याशु भास्वन्तं खे शरीरिणम् ॥ पराक्रमस्य उत्तमलोकसंपादकत्वे राजधर्मे भीष्मः—'नित्योद्युक्तो दस्युवधे रणे कुर्यात्पराक्रमम् । ये च क्रतुभिरीजानः श्रुतवन्तश्च पार्थिवाः । त एवाहवजेतारस्त एते लोकजित्तमाः ॥' पराशरोऽपि—'ये यज्ञसंघैस्तपसा च विप्राः स्वर्गेषु शीघ्रेण यथैव यान्ति । क्षणेन यान्त्येव हि तत्र वीराः प्राणान्सुयुद्धे च परित्यजन्तः ॥' भूतानुकम्पायाः उत्तमलोकसंपादकत्वं राजधर्मे—'सर्वभूतेष्वनुक्रोशं कुर्वतस्तव भारत । आनृशंस्ये प्रवृत्तस्य नियतः पुण्यसंचयः' इति । प्रियवचनस्य परलोकसाधनत्वे मनुः—'वाक्चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममीप्सता । स वै सर्वमवाप्नोति वेदान्तोपगतं फलम् ॥ द्वि-

जातिदेवातिथिपूजायाः परलोकसाधनत्वे विष्णुपुराणे—
'निवापेन पितॄनर्चेद्यज्ञैर्देवांस्तथातिथीन् । अन्नैर्मुनींश्च स्वाध्यायैरपत्येन प्रजापतिम् ॥ बलिकर्मणा च भूतानि वात्सल्येनाखिलं जगत् । प्राप्नोति लोकान्पुरुषो निजकर्मसमाश्रितान् ।

निन्दाम्यहं कर्म पितुः कृतं त-
यस्त्वामगृह्णाद्विषमस्थबुद्धिम् ।
बुद्ध्यानयैवंविधमाचरन्तं
सुनास्तिकं धर्मपथादपेतम् ॥

ननु श्रीरामभद्रेण नास्तिकबुद्धिजाबालिम्, ऋत्विक्त्वेन परिगृहीतवतः पितुर्वृत्तनिन्दाकृतेत्यवगम्यते, तदनुपपन्नम्, पितृनिन्दापरं लक्ष्मणं मातृनिन्दापरं भरतं च निषेधतो रामस्य पितृवृत्तनिन्दायां प्रवृत्त्यसंभवात्, पितृवृत्तनिन्दने दोषश्रवणाच्च । तथा हि— 'श्वपाकपुल्कसादीनां कुत्सितानामचेतसाम् । कुलेषु तेऽभिजायन्ते गुरुवृत्तावमानिनः' इति । न च वैदिकविरुद्धाचारं जाबालिं संगृह्णतः पितुः कर्म निन्दामीत्येवंरूपस्य वच-

नस्य विषमाचारजाबालिनिन्दापरत्वमेव न पितृनिन्दापरत्वमिति वाच्यम् । 'परामप्यापदं प्राप्तो ब्राह्मणान्न प्रकोपयेत् । दैवान्कुर्युरदैवांश्च कः क्षिपंस्तान्समृध्नुयात्' इति सकलशास्त्रनिषिद्धायां ब्राह्मणनिन्दायां ब्रह्मण्यस्य रामभद्रस्य प्रवृत्त्यसंभवादिति चेन्न, ब्राह्मणत्वेन ऋत्विक्त्वेन अनिन्द्यस्यापि जाबालेः लोकायतिकमार्गप्रवृत्तत्वाकारेण निन्द्यत्वसंभवात् । यथा भीष्मस्य गुरुत्वेन ब्राह्मणत्वेन च युद्धायोग्योऽपि परशुरामः क्षत्रधर्मपुरस्कारेण युद्धायोग्यः क्षत्रियत्वेन युद्धयोग्यत्वं च उद्योगपर्वणि— 'एते वेदाः शरीरस्था ब्राह्मण्यं यच्च ते महत् । तपश्च सुमहत्तप्तं न तेभ्यः स्पृहयाम्यहम् ॥ प्रहरे क्षत्रधर्मस्य यत्त्वं राम समाश्रितः । ब्राह्मणः क्षत्रियत्वं हि याति शस्त्रसमुद्यमात्' इति । तस्माद्रामेण कृता निन्दा न पितुर्नापि जाबालेः, किं तु जाबालिकथितलोकायतिकवृत्तस्यैव । अत एव जाबालेरपरित्यागः पट्टाभिषेकादावुपयोगश्च । दृश्यते ननु अवैदिकस्य चार्वाकस्य वैदिकमतेन दूषणमनुपपन्नम, तेन वेदप्रामाण्यानङ्गीकारात् तदङ्गीकृतप्रमाणेनैव च दूषणीयत्वात्

इति चेन्न, तदङ्गीकृतप्रमाणसहकारिभूतबुद्धिवैभवपरिकल्पितयुक्तीनामप्रतिष्ठितत्वेन तावन्मात्रेण स्वपक्षस्थापनपरपक्षदूषणस्य निर्वाहात्। तदुक्तम् ‘यत्नात्परीक्षितोऽप्यर्थः कुशलैरनुमातृभिः। अभियुक्ततरैरन्यैरन्यथैवोपपद्यते। अतस्तर्काप्रतिष्ठानात्पक्षसिद्धिनिराकृती। शुष्कतर्केण न स्यातामिति चेदनुशासनम्। अत एव चार्वाकमतं क्षपणकेन दूषितम्, क्षपणकमतं च माध्यमिकप्रभृतिभिर्बौद्धैः। तथा हि क्षपणकास्तावत् न प्रत्यक्षमात्रं प्रमाणमिति संभवति। तथात्वे, धूमदर्शनसमनन्तरं वह्निमनुमाय तदर्थतया प्रवृत्तिर्न स्यात्। तथा च स्वक्रियाव्याघातः। एवं नद्यास्तीरे पञ्चफलानि सन्तीति वाक्यश्रवणसमनन्तरमेव शब्दार्थज्ञानपूर्विका प्रवृत्तिर्न स्यात्। अतः प्रत्यक्षातिरिक्तमनुमानादिकं प्रमाणमङ्गीकर्तव्यमेव। एवं च अनुमानागमाभ्यां प्रत्यक्षदृष्टमपि वस्तुजातं सिध्यत्येव। यदुक्तं स्वभावादेव अग्न्यौष्ण्यादिवद्वैचित्र्योपपत्तौ नादृष्टं प्रमाणमिति तन्मन्दं स्वभावस्य यावद्वस्तु स्थापितत्वेन कादाचित्कः सुखदुःखादिवैचित्र्यस्य स्वाभाविकत्वानुपपत्त्या च तदुपपादकत्वेन धर्मा-

धर्माधर्मयोरावश्यिकत्वात्। यदुक्तमपरिदृश्यमानपदार्थसद्भावे प्रमाणमेव नास्तीति तदपि परास्तं सर्वज्ञार्हत्प्रणीतागमबलादेव तत्सिद्धेः। अत एव न शशशृङ्गप्रतिबन्दिः तदाहुः, अग्नेरौष्ण्यमपां शैत्यं कोकिले मधुरस्वरः। इत्याद्येकप्रकारं स्यात् स्वभावो नापरः क्वचित्। कादाचित्कसुखं दुःखं स्वभावो नात्मनो मतः। धर्माधर्मौ ततस्ताभ्यामदृष्टावपि निश्चितौ। अदृष्टमग्निमादातुं धूमं दृष्ट्वा प्रधावता। धूमेनाग्न्यनुमानं तु त्वयाप्यङ्गीकृतं ननु। प्रत्यक्षेणानुमानेन पश्यन्त्यत्रागमेन च। दृष्टादृष्टं जनाः स्पष्टमार्हतागमसंस्थिताः' इति। एवं धर्माधर्मसिद्धौ कृतहानाकृताभ्यागमदोषपरिहाराय शरीरातिरिक्त आत्मा अवश्यमङ्गीकर्तव्यः; स च त्रिविधः—सिद्धो बद्धो नारकीयश्चेति। सिद्धो मुक्तः, स द्विविधः परमसिद्धो मन्त्रौषधसिद्धश्चेति। बद्धः संसारी; नारकीयो नरकानुभोक्ता, तस्य च धर्माधर्मसहकारिवशेन पुद्गलाख्यैः परमाणुभिरारब्धः सेन्द्रियो देहः। तत्परिमाणश्च आत्मा न अणुः न विभुः स च मोहात् देहतादात्म्यमापन्नः हस्त्यादिपुत्तिकान्तेषु देहेष्ववतिष्ठते।

तस्य च देहरूपावृत्तिर्बन्धः, अनावृत्तिर्मोक्षः, एतादृश-मोक्षप्राप्तिश्च दिगम्बरस्य मनोवाक्कायकर्मभिः प्राणिहिंसा वर्जयतः मयूरपिञ्छधारणवीरासनादिनियमवतः लूनकेशस्य पाणिपात्रस्य क्षपणकाचार्योपदिष्टं मन्त्रं साधयतः शुद्धचित्तस्य कस्यचिदेव भवति। तथा चोक्तम्—
सिद्धा बद्धा नारकीया इति स्युः पुरुषास्त्रिधा। केचित्परमसिद्धाः स्युः केचिन्मन्त्रौषधैरिह। गुरूपदिष्टमार्गेण ज्ञानकर्मसमुच्चयात्॥ मोक्षो बन्धनरिक्तस्य जायते भुवि कस्यचित्। अर्हतामखिलं ज्ञातुं कर्मार्जितकलेवरैः॥ आवृत्तिर्बन्धनं मुक्तिर्निरावरणतात्मनाम्। पुद्गलापरसंज्ञस्तु धर्माधर्मानुगामिभिः। परमाणुभिरारब्धाः देहाः सर्वे सहेन्द्रियैः॥ स्वदेहमाना ह्यात्मानो मोहाद्देहाभिमानिनः। क्रिमिकीटादिदेहस्थ्यन्तदेहपञ्जरवर्तिनः। आत्मावरणदेहस्य वस्त्राद्यावरणान्तरम्॥ न ग्राह्यं यदि गृह्णन्ति तस्यापीत्यनवस्थितिः। प्राणिजातमहिंसन्तो मनोवाक्कायकर्मभिः। दिगम्बराश्चरन्त्येव योगिनो ब्रह्मचारिणः॥ मयूरपिञ्छहस्तास्ते कृतवीरासनादिकाः। पाणिपात्रेण भुञ्जानाः लूनकेशाश्च मौनिनः। यथा

क्षपणकाचार्यकृतमन्त्रा दुरासदाः। मुनयो विमलाः शुद्धाः प्रणताघौघभेदिनः। स वै विश्वसनीयः स्यात्स सर्वज्ञो जगद्गुरुः' इति। एवं चार्वाकमतं क्षपणकैर्दूषितम्; तदपि बौद्धाः दूषयन्ति। ते च बौद्धाश्चतुर्विधाः—माध्यमिकः, योगाचारः, सौत्रान्तिको, वैभाषिकश्चेति। तच्छास्त्रमपि तत्तद्बुद्धिभेदाच्चतुर्विधम्। तत्र माध्यमिकः सर्वशून्यतामाचष्टे। योगाचारस्तु विज्ञानमात्रास्तितामवोचत्। विज्ञानव्यतिरिक्तो बाह्यार्थोऽस्ति, स च बुद्ध्याकारेणानुमेय इति सौत्रान्तिकाः। वैभाषिकास्तु बाह्यार्थाः प्रत्यक्षग्राह्याः इति वर्णयन्ति। तदुक्तम्—बौद्धाः क्षपणकाचार्यप्रणीतमपि सांप्रतम्। पक्षं प्रतिक्षिपन्त्येव लोकायतमतं यथा॥ चतुर्णां मतिभेदेन बुद्धशास्त्रं चतुर्विधम्। अधिकारानुरूपेण तत्र तत्र प्रवर्तते॥ ज्ञानमेव हि सा बुद्धिर्न चान्तःकरणं मतम्। जानाति बुध्यते चेति पर्यायत्वप्रयोगतः। त्रयाणामत्र बौद्धानां बुद्धिरस्त्यविवादतः। बाह्यार्थोऽस्ति द्वयोरेव विवादोऽन्यत्र तद्यथा॥ प्रत्यक्षसिद्धं बाह्यार्थं बुद्धिं वैभाषिकोऽब्रवीत्। बुद्ध्याकारानुमेयोऽर्थो ग्राह्यः सौत्रान्तिकोदितः। बुद्धिमात्रं वदत्यत्र

योऽनुभवो न चापरः॥ नास्ति बुद्धिरपीत्याह वादी माध्यमिकः किल॥ तत्र माध्यमिकाः शून्यमेव तत्त्वमिति वदन्ति। तथा हि पृथिव्यादिवस्तुजातं किं सत् उतासत् उतोभयात्मकम् अथ वा अनुभयात्मकमिति। न तावदाद्यः, सतः उत्पत्त्यनुपपत्तेः, अन्यथा उत्पन्नोऽपि घटः पुनरुत्पद्येत। न द्वितीयः, शशशृङ्गस्यापि उत्पत्तिप्रसङ्गात्। न तृतीयः, एकस्य वस्तुनः विरुद्धोभयरूपत्वानुपपत्तेः। न तुरीयः, सदसद्भिन्नस्यापि वस्तुनः अलीकत्वात्। किं च व्यक्तिः किं परमाण्वारब्धा, अथ वा परमाणुरूपा वा; नाद्यः, द्व्यणुकैस्त्रिभिः त्र्यणुकोत्पत्त्यङ्गीकारेण द्व्यणुकत्रयोत्पादकानां च षण्णां परमाणूनां किं कार्त्स्न्येन संयोगः उतैकदेशेन। नाद्यः, षण्णां समानदेशत्वेन अणुत्वापत्त्या तदुपादानकप्रपञ्चमात्रस्य अणुत्वापत्तेः। न द्वितीयः, निरवयवानां प्रदेशभेदाभावात्। अन्यथा नित्यत्वप्रसङ्गात्। एवं व्यक्तिगतं सामान्यमपि किं व्यक्तितो भिन्नमभिन्नं वा। नाद्यः, भिन्नत्वे करचरणादिवत् पृथक् गृह्येत। न द्वितीयः, अनित्यव्यक्त्यभिन्नत्वे अनित्यत्वप्रसङ्गात्। तस्माज्जातिव्यक्तिनिरूपणासंभवेन

ज्ञेयाभावे तद्विषयकज्ञानमपि न संभवति । अतः शून्यमेव तत्त्वम् । तदुक्तम्—'न सन्नासन्न सदसन्न चोभाभ्यां विलक्षणम् । चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः । यदसत्कारणैस्तन्न जायते शशश्रृङ्गवत् । सतश्चोत्पत्तिरिष्टा चेज्जनितं जनयेद्धटम् ॥ एकस्य सदसद्भावो न तरामुपपद्यते । एकस्य सदसद्भ्योऽपि वैलक्षण्यं न युक्तिमत् । चतुष्कोटिविनिर्मुक्तं शून्यं तत्त्वमिव स्थितम् । जातिर्जातिमतो भिन्ना न वेत्यत्र विचारिते । भिन्ना चेत्सा च गृह्येत व्यक्तिभ्योऽङ्गुष्ठवत् पृथक् । अविचारितसंसिद्धा व्यक्तिः किं पारमाणुकी । स्वरूपं परमाणूनां वाच्यं वैशेषिकादिभिः । षट्केण युगपद्योगे परमाणोः षडंशता ॥ षण्णां समानदेशत्वे पिण्डः स्यादणुमात्रकः । जातिव्यक्त्यात्मकोऽर्थोऽत्र नास्त्येवातो विचारिते । विज्ञानमपि नास्त्येव ज्ञेयाभावे विचारिते । अतो माध्यमिको वक्ति सर्वं शून्यं विचारिते' इति । इति माध्यमिकपक्षस्तृतीयः । विज्ञानवादी त्वाह—शून्यत्वसाधकं प्रमाणं शून्यमेव, अथ वा अशून्यम्; नाद्यः—शून्येन प्रमाणेन अर्थसाधनानुपपत्तेः, न द्वितीयः

शून्यत्वसाधकप्रमाणस्य अशून्यत्वे सर्वशून्यत्वव्याहतिः। किं च स्वपक्षसाधनपरपक्षदूषणादिसापेक्षवादकथायामधिकारो वा तव कथं भवेत्। विपरीतसाधनं वा किमिति न भवेत्। अतः अशून्येन शून्यत्वसाधकेन प्रमाणेन भवितव्यम्। तच्च क्षणिकविज्ञानरूपमेकं वस्तु। न चैवं घटबुद्धिः पटबुद्धिरिति भेदव्यवहारो न स्यादिति वाच्यम्, अनादिवासनाबलात् भेदव्यवहारोपपत्तेः। तस्मात्क्षणिकविज्ञानमेकमेव वस्तु। तच्चालयविज्ञानं प्रवृत्तिविज्ञानं चेति द्विविधम्। आलयविज्ञानमहमालम्बनम्, प्रवृत्तिविज्ञानं तु घटाद्याकारम्; तादृशस्य ज्ञानस्य अनादिवासनोच्छेद एव मोक्षः। तदुपायश्च शून्यं कृत्स्नं वस्तु दुःखात्मकमित्यादिभावेनैव वर्णयन्ति। तदाहुः— अत्र माध्यमिकेनोक्तं शून्यत्वं शून्यवादिना। निरालम्बनवादी तु योगाचारो निरस्यति। त्वयोक्ते सर्वशून्यत्वे प्रमाणं शून्यमेव ते। अतो वादेऽधिकारस्ते न परेणोपपद्यते। स्वपक्षस्थापनं तद्वत्परपक्षस्य दूषणम्। कथं करोत्वत्र भवान्विपरीतं वदेन्न किम्। अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः। ग्राह्यग्राहकसं-

विात्तिभेदवानिव लक्ष्यते । बुद्धिस्वरूपमेकं हि वस्त्वस्ति परमार्थतः ॥ प्रतिभासस्य नानात्वात् न चैकत्वं विहन्यते । परिव्राट्कामुकपशूनामेकस्यां प्रमदातनौ । कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ॥ तथाप्येकैव सा बाला बुद्धितत्त्वं तथैव च । यत्तदन्यत्तु जात्यादि तन्निराक्रियतां त्वया । क्षणिका बुद्धिरेवात्र त्रिधा भूतैर्विकल्पिता । स्वयं प्रकाशतत्त्वज्ञैर्मुमुक्षुभिरुपास्यते ' इति योगाचारपक्षः । चतुर्थः सौत्रान्तिकास्तु— यदुक्तं बाह्यं वस्तु नास्तीति तदयुक्तम् , आन्तरस्य ज्ञानस्य बाह्यस्य चार्थस्य विरुद्धधर्माध्यस्तत्वेन अभेदानुपपत्त्या ज्ञानव्यतिरिक्तपदार्थस्यावश्यमभ्युपगन्तव्यत्वात् । किं च नीलाद्यर्थस्य ज्ञानाकारत्वे अहं नील इति प्रतीतिः स्यात् । न त्विदं नीलमिति प्रतिपत्तिर्विज्ञानस्य नीलाकारव्यतिरेकात् । न च ज्ञानस्वरूपोऽपि भ्रान्त्या बहिरवभासते । तदुक्तम्— ' परिच्छेदान्तराद्योगभावो बहिरवस्थितः । ज्ञानस्याभेदिनोऽभेदप्रतिभासो ह्युपप्लवः । यदन्तर्ज्ञेयं तत्त्वं तद्बहिर्वेन्न भासते ' इति वाच्यम् , बहिर्वेदित्युपमानस्य बाह्यार्थनिरूपितस्य बहिः पदार्थं निराकुर्वता उपपा-

दयितुमशक्यत्वात् । न हि वसुमित्रो वन्ध्यापुत्रव-
दवभासते इति प्रेक्षावानाचष्टे । अतो ज्ञानादर्थो
भिन्न एव । नन्वेवं क्षणिकज्ञाने असमानकालस्य अ-
र्थस्य कथं ग्रहणम्, समानकालीनयोरेव ग्राह्यग्राहक-
भावदर्शनादिति चेन्न, इन्द्रियसंनिकृष्टस्य विषयस्य
उत्पाद्ये ज्ञाने स्वाकारसमर्पकतया तत्समर्पितेन चाकारे
बाह्यार्थस्य अनुमानग्राह्यत्वसंभवात् । तदुक्तम्—भिन्नकाले
कथं ग्राह्यमिति चेद्ग्राह्यतां विदुः । हेतुत्वमेव युक्तिज्ञाः ज्ञाना-
कारार्पणक्षमम्' इति । यथा च पुष्ट्या भोजनमनुमीयते
यथा च भाषया देशः यथा च संभ्रमेण स्नेहः
तथा ज्ञानाकारेण ज्ञेयमनुमेयम् । तथा च बाह्यार्था-
स्तित्वे अयं प्रयोगः— ये पदार्थाः यस्मिन्सति का-
दाचित्काः ते सर्वे तदतिरिक्तसापेक्षाः अविवक्षति
अजिगमिषति च मयि वचनगमनप्रतिभासाः विवक्षु-
जिगमिषुपुरुषान्तरसंतानसापेक्षाः । तथा च विवादा-
ध्यासिताः प्रवृत्तिप्रत्ययाः सत्यप्यालयविज्ञाने कदाचिदेव
नीलाद्युल्लेखिन इति । तत्र आलयविज्ञानं नाम अह-
मास्पदं ज्ञानम् । नीलाद्युल्लेखि च प्रवृत्तिविज्ञानम् ।

तदुक्तम् ‘ तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम् । तत्स्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत् ’ इति । तस्मादालयविज्ञानसंतानातिरिक्तः कादाचित्कः प्रवृत्तिविज्ञानहेतुः बाह्यार्थो ग्राह्य एव । न च वासनापरिपाकात् प्रत्ययकादाचित्कत्वे कदाचिदुत्पादयन्तीति वाच्यम् । विज्ञानवादिना वासनानामनेकसंतानवर्तिनामालयविज्ञानानां तत्तत्प्रवृत्तिविज्ञानजननशक्तिः, तस्याश्च स्वकार्ये प्रत्याभिमुख्यं परिपाकः तस्य च प्रत्ययः कारणं स्वसंतानवर्तिपूर्वक्षणः कक्षीक्रियते । सन्तानान्तरनिबन्धनत्वानङ्गीकारात् । ततश्च प्रवृत्तिविज्ञानजनकालयविज्ञानावर्तिवासनापरिपाकं प्रति सर्वेऽप्यालयविज्ञानसंतानवर्तिनः क्षणाः समर्था एवेत्यङ्गीकर्तव्यम् । न चेदेकोऽपि न समर्थः स्यात् आलयविज्ञानसंतानवर्तित्वाविशेषात् सर्वे समर्था इति स्वीकारे कार्यक्षेपानुपपत्तेः । ततश्च कादाचित्कत्वनिर्वाहाय शब्दस्पर्शरूपरसगन्धसुखादिविषयाः षडपि प्रत्ययाश्चतुरः प्रत्ययान्प्रतीत्योत्पद्यन्ते इत्यनिच्छताप्यहंमतिना स्वानुभूतिमनाच्छाद्य परिच्छेतव्यम् । ते च चत्वारः प्रत्यया प्रसिद्धाः आल-

म्बनसमनन्तरसहकार्याधिपतिरूपाः । आलम्बनं विषयः समनन्तरं पूर्वज्ञानं सहकारी आलोकः अधिपतिश्चक्षुरादिः' इति । तत्र ज्ञानपदवेदनीयस्य नीलाद्यवभासरूपस्य च तस्य नीलाद्यालम्बनप्रत्ययात् नीलाकारता भवति । समनन्तरप्रत्ययात् प्राचीनज्ञानोद्बोधरूपता । सहकारिप्रत्ययादालोकात्स्पष्टता चक्षुषो अधिपतिप्रत्ययात् विषयग्रहणनियमः उदितस्य ज्ञानस्य रसादिसाधारण्यप्राप्तौ तन्नियामकं चक्षुरधिपतिर्भवति, लोके नियामकस्याधिपतित्वोपलम्भात् । एवं चित्तचैत्तात्मकानां सुखादीनां च कारणानि द्रष्टव्यानि । सोऽयं चित्तचैत्तात्मकः स्कन्धः पञ्चविधः । रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकः । तत्र एभिर्विषया रूप्यन्ते इति करणव्युत्पत्त्या रूप्यन्ते इति कर्मव्युत्पत्त्या च सविषयाणीन्द्रियाणि रूपस्कन्धः । आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहो विज्ञानस्कन्धः । प्रागुक्तस्कन्धद्वयसंबन्धजन्यसुखदुःखादिप्रत्ययप्रवाहो वेदनास्कन्धः । गौरित्यादिशब्दोल्लेखिसविषयकज्ञानप्रवाहः संज्ञास्कन्धः । वेदनास्कन्धो रागादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ च

संस्कारस्कन्धः। तदुक्तं पञ्चस्कन्धा भवन्त्यत्र द्वादशायतनानि च। सर्वेषामपि बौद्धानां तथाष्टादश धातवः। ज्ञानसंस्कारसंज्ञानां वेदनारूपयोरपि। समूहः स्कन्धशब्दार्थस्तत्संततिवाचकः। ज्ञानसंततिरेवात्र विज्ञानस्कन्ध उच्यते। संस्कारस्कन्ध इत्युक्तो वासनानां च संततिः। सुखदुःखात्मिका बुद्धिस्तथापेक्षात्मिकी सदा॥ वेदनास्कन्ध इत्युक्तः संज्ञास्कन्धस्तु नाम यत्। रूपस्कन्धो भवत्यत्र मूर्तभूतस्य संहतिः॥ परिदृश्यमानस्तम्भकुम्भादिकं तु रूपस्य मूर्तभूतस्योपचयः। तत्र तदात्मके स्तम्भकुम्भादौ पृथिव्यंशमादाय स्थैर्यरूपादिकं अबंशेन द्रवत्वस्नेहादितेजोंशेनोष्णत्वादि वायुधातुना— अनुष्णाशीतवेगादि। तदुक्तम्—रूपस्योपनयस्तम्भकुम्भादिरणुकल्पितः। पृथिव्याः स्थैर्यरूपादि द्रवत्वादि भवेदपाम्। उष्णत्वं तेजसो धातोर्वायुधातोस्त्वशीतता। एषां चतुर्णां धातूनां वर्णगन्धरसौजसाम्। पिण्डजाताः पृथिव्याद्याः परमाणुरूपा अमी। तदिदं सर्वं दुःखायतनं दुःखसाधनं चेति भावयित्वा तन्निरोधोपायं तत्त्वज्ञानं संपादयेत्। अत एवोक्तं दुःखसमुदायनिरोधमार्गाश्चत्वारः। आर्यस्य बुद्धस्याभि-

गतत्वान्निरूपितवानिति। तत्र दुःखं प्रसिद्धम्। समुदायो दुःखस्य कारणम् तद्द्विविधम्; प्रत्ययोपनिबन्धो हेतूपनिबन्धश्चेति। तत्र प्रत्ययोपनिबन्धः कारणसमवायः। यथा बीजहेतुरङ्कुरो धातूनां चतुर्णां समवायाज्जायते। तत्र पृथिवीधातुरङ्कुरस्य काठिन्यं गन्धं च जनयति। अप्तु स्नेहं रसं च, तेजोधातुःरूपमौष्ण्यं च, वायुधातुः स्पर्शं चलनं च, आकाशधातुरवकाशं शब्दं च, ऋतुधातुर्यथायोगं बुद्ध्यादिकमिति। हेतूपनिबन्धश्च कारणपरम्परया कार्योत्पत्तिः। यथा बीजादङ्कुरम्, अङ्कुरात्काण्डम्, काण्डान्नालम् नालाद्गर्भः, ततः शूकः, ततः पुष्पम् ततः फलमिति। एतादृशप्रत्यययोः निबन्धहेतूपनिबन्धयोर्निरोधः। अभावः तस्मिन्सति विमलज्ञानोदयो वा मुक्तिः। तन्निरोधोपायो मार्गः। स च तत्त्वज्ञानम्, तच्च प्राचीनभावनाबलाद्भवतीति सौत्रान्तिकः पक्षः पञ्चमः। वैभाषिकास्तु बाह्यार्थाः प्रत्यक्षा इत्यवश्यमभ्युपगन्तव्यम् अन्यथा व्याप्तिसंवेदनस्थानालाभेन प्रत्यक्षतः हेतुसाध्यव्याप्तिग्रहणपूर्वकं ज्ञेयानुमानप्रवृत्त्यनुपपत्तेः अनुभवविरुद्धा चानुमेयता अतः प्रत्यक्षभूतो बाह्यार्थः। स च

बाह्यार्थः परमाणुपुञ्ज एव न तु तदारब्धमवयव्यन्तरम् वनादिवत् । तदुक्तं प्रत्यक्षत्वं तु बाह्यस्य कश्चिदेवानुमेयता । पूर्वापरानुभावेन पुञ्जीभूताः सहस्रशः ॥ परमाणव एवात्र बाह्यार्था वनवत्स्थिताः । दूरादेव वनं पश्यन् गत्वा तस्यान्तिकं पुनः । न वनं पश्यति क्वापि वल्लीवृक्षातिरेकतः ॥ मही घटत्वमायाति कपालत्वं तु ते घटाः । कपालानि च चूर्णत्वं तत्पुनः परमाणुताम्' इति । स द्विविधः ग्राह्योऽध्यवसेयश्चेति । तत्र ग्रहणमपि द्विविधम् निर्विकल्पकम्, सविकल्पकं चेति । तत्राद्यं प्रमाणं तदुक्तम्—कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम् । विकल्पो वस्तुनिर्भासादसद्वादादुपप्लवः ॥ ग्राह्यवस्तुप्रमाणं हि ग्रहणं यदितोऽन्यथा । न तद्वस्तुनि तन्मानं शब्दलिङ्गेन्द्रियादिजम्' इति । ननु अप्रमाणभूतात्सविकल्पकात्कथं संवादप्रवृत्तिरिति चेत् इत्थं— मणिप्रभायां मणिबुद्ध्या प्रवृत्तस्य मणिप्राप्तिवत्पारम्पर्यात् अर्थप्रतिबन्धोपपत्तेः । चतुर्णामपि बौद्धानामैक्यमध्यात्मनिर्णये ॥ व्यावहारिकभेदेन विवदन्ते परस्परम् । बुद्धितत्त्वाश्रिता बोधा बुद्धिवृत्तिर्द्विधा मता ॥

ज्ञानाज्ञानात्मिका चेति तत्र ज्ञानात्मिका निजा।
मूलाज्ञाने निमित्तं तु स्कन्धायतनधातुवा:। शुद्ध-
बुद्ध्यवशेषो हि मोक्षो बुद्धमुनीक्षितः॥ तामन्तर्द्वयवर्जि-
तां निरुपमामाकाशवन्निर्मलाम् । प्राज्ञैरप्यमितां जनस्य
जननीं शृण्वन्तु बुद्ध्यार्थिनः इति। हेयोपादेयतत्त्वं
च मोक्षोपायं च वेत्ति यः। स एव नः प्रमा-
णं स्यान्न सर्वज्ञस्त्वयेरितः॥ दूरं पश्यतु वा मा वा तत्त्व-
मिष्टं प्रपश्यतु। प्रमाणं दूरदर्शश्चेत् वयं गृध्रानुपास्महे।
देशे पिपीलिकादीनां संख्याज्ञः कश्चिदस्ति किम्। सर्व-
कर्तृत्वमीशस्य कथितं नोपपद्यते॥ यदि स्यात्सर्वक-
र्तासौ अधर्मेऽपि प्रवर्तयेत्। अयुक्ते कारयल्लोँकान्कथं
युक्ते प्रवर्तयेत्॥ उपेक्ष्यैव हि साधूनां युक्ता साधौ
क्रियागमे। न क्षतक्षारविक्षेपः साधूनां साधु चेष्टितम्॥
ईश्वरेणैव शास्त्राणि सर्वाण्यपि कृतानि चेत्। कथं प्रमा-
णं तद्वाक्यं पूर्वापरपराहतम्॥ कारयेद्धर्ममात्रं चेदेष
शास्त्रप्रवर्तकः। कथं प्रादेशिकस्यास्य सर्वकर्तृत्वमुच्यते।
ईशः प्रयोजनाकाङ्क्षी जनान्सृजति वा न वा॥ काङ्क्षते
चेदसंपूर्णः नो चेन्नैव प्रवर्तते। प्रवर्तते किमीहस्ते आ-

न्वयन्निष्प्रयोजने ॥ छागादीनां पुरीषादेः वर्तुलीकरणेन किम्। क्रीडार्थोऽयं प्रवृत्तिश्चेत् क्रीडते किं नु बालवत् ॥ अजस्रं क्रीडतस्तस्य दुःखमेव भवत्यलम्। तप्तलोहादितापाद्यैरीशेनाल्पसुखेच्छुना। प्राणिनो नरके कष्टे बलप्राणैर्वियोजिताः। वरप्रदानशक्तश्चेत् ब्रह्महत्यादिकारिणे ॥ स्वर्गं दद्यात्स्वतन्त्रः सन्नरकं सोमयाजिने। कर्मानुगुणदाता चेदीशः स्यादखिलो जनः। दाने स्वातन्त्र्यहीनः सन्सर्वेशः कथमुच्यते ॥ एवं नैयायिकाद्युक्तसर्वज्ञेशनिराक्रिया। हेयोपादेयमात्रज्ञः प्राह्यो बुद्धमुनिस्ततः। चैत्यं वन्देत चैत्याद्या धर्मा बुद्धागमोदिताः। अनुष्ठेया न यागाद्या वेदाद्यागमचोदिताः। क्रियायां वेदतायां च योगे शून्यपदे क्रमात् ॥ वैभाषिकादयो बौद्धाः स्थिताश्चत्वार एव ते इति। एवं बुद्धिवैभवपरिकल्पितस्य यौक्तिकमार्गं उत्तरोत्तरदोषग्रस्तस्य मूलप्रमाणशून्यस्य अव्यवस्थिततया यौक्तिकमार्गमुपेक्ष्य वेदप्रामाण्यमीश्वरं चाभ्युपगम्यैव जाबालिप्रतिपादितचार्वाकमतदूषणव्याजेन सकलावैदिकमतं रामो दूषितवान्। तत्र च 'एकः

पालयते लोकमेकः पालयते कुलम् । मज्जत्येको हि निरये एकः स्वर्गे महीयते ' इत्यनेन फलवैचित्र्यव्यवस्थापकौ धर्माधर्मौ अवश्यं स्वीकर्तव्याविति प्रतिपादनात् प्रत्यक्षमात्रप्रामाण्यवादिनः चार्वाकस्य दूषणम् । अग्निर्वायुश्च सोमश्च कर्मणां फलभागिनः । शतं क्रतूनामाहृत्य देवराट् त्रिदिवं गतः इत्यादिना क्रत्वादीनां देहान्तरोपभोग्यफलत्वप्रतिपादनात् देहात्मवादस्य विहितयागादिक्रियाफलाभावस्य च निराकरणात् चार्वाकस्य क्षपणकस्य च मतदूषणम् ॥

यथा हि चोरस्तथाहि बुद्ध-
स्तथागतं नास्तिकमत्र विद्धि ।

इत्यनेन योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मापहारिणा इति स्मृतिसिद्धात्मापहारप्रयुक्ततया चतुर्णामपि बौद्धानां मतदूषणम् ।

सत्यं च धर्मं च पराक्रमं च
भूतानुकम्पां प्रियवादितां च ।

द्विजातिदेवातिथिपूजनं च
पन्थानमाहुस्त्रिदिवस्य सन्तः ॥
त्वत्तो जनाः पूर्वतरेऽवराश्च
शुभानि कर्माणि बहूनि चक्रुः।
जित्वा सदेमं च परं च लोकं
तस्माद्द्विजाः स्वस्ति हुतं कृतं च ॥

एतैः श्लोकैः अस्ति परलोकः तत्साधनीभूतं वेदविहितं कर्मजातं तद्बोधकं शास्त्रं च प्रमाणमिति प्रतिपादनात् सर्वेषामवैदिकमतानां दूषणं चोक्तं भवति। तत्प्रकारश्च— प्रमाणमेव वेदाः स्युः सर्वज्ञेशकृतत्वतः। स एव कर्मफलदो जीवानां पारिशेष्यतः। जीवा वा जीवकर्माणि प्रकृतिः परमाणवः। नेशते ह्यत्र जीवानां तत्र कार्यफलार्पणे ॥ जीवाः कर्मफलावाप्तौ शक्ताश्चेत्स्वसुखे रताः। अप्रार्थितानि दुःखानि वारयन्तु प्रयत्नतः ॥ अशक्तान्यत्र कर्माणि जीवानां स्वफलार्पणे अचेतनत्वावगतेः स्वर्गादिफलभूमिषु ॥ नाचेतनत्वात्प्रकृतेः फलदातृत्वसंभवः। अचेतनाः फलं दातुमशक्ताः परमाणवः ॥ कालोऽप्यचेतनस्तेषां न हि कर्मफलप्रदः। अतोऽन्यः फलदो लोके

भवत्येभ्यो विलक्षणः ॥ स तु प्राणिविशेषांश्च देशानपि तदाश्रयान् । जानन्सर्वज्ञ एवेष्टो नान्यो बौद्धादिसंमतः । अजानन्प्राणिनो लोकान्हेयोपादेयमात्रवित् । प्रादेशिको न सर्वज्ञो नास्मदादिविलक्षणः । वेदैकदेशं दृष्ट्वा तु दृष्टार्थं त्रैष्टभादिकम् । अदृष्टयोश्च विश्वासः कार्यः स्वर्गापवर्गयोः । कारीरीष्ट्यर्थपुष्टिश्च द्रष्टव्या द्रव्यनिर्णये । ज्योतिःशास्त्रोक्तकालस्य ग्रहणं तन्निदर्शनम् । इष्टैकदेशप्रामाण्यं यत्तूक्तं सौगतादिना ॥ तच्च वेदादपहृतं सर्वलोकप्रतारकैः । मन्त्रव्याकरणं दृष्ट्वा मन्त्रा विरचिताः पुनः । लिपिसंमिश्रजप्तास्ते सिद्धमन्त्रास्त्वया कृताः । बौद्धागमेभ्यो दृष्टार्था नाहृता वैदिकैः क्वचित् ॥ वेदस्यैव षडङ्गानि यतः शीक्षादिकानि वै । नान्यागमाङ्गता तेषां न काप्युक्ता परैरपि । अतो वेदबलीयस्त्वं नास्तिकागमसंचयात् । तन्मतेन बाह्यार्थोऽपि न संभवति । परमाणुपुञ्जः परमाणुस्वरूपो वा तदतिरिक्तो वा । आद्ये प्रत्यक्षत्वानुपपत्तिरेव । द्वितीये अधिष्ठातारं कंचन अपेक्ष्य पुञ्जीभवन्ति अनपेक्ष्य वा । आद्येऽपि अधिष्ठाता स्थायी क्षणिको वा । आद्ये अपसिद्धान्तः । द्वितीये

अस्थिरस्य अन्याधिष्ठातृत्वानुपपत्तेः, अचेतनानां परमाणूनामधिष्ठातारमन्तरा पुञ्जीभावानुपपत्तेश्च । किं च परमाणुपुञ्जत्वे घटादेरेकदेशस्याकर्षणेन सर्वस्य अनाकर्षणप्रसङ्गः । तस्मान्न परमाणुपुञ्जो बाह्यार्थ इति सिद्धान्तः । जलानलपरीक्षादौ संवादो वेदवेदि । गलहस्तितनास्तिकस्य क विषयं कुरुते नते । सत्येव पतियोगादौ गर्भादेरधुनोदयात् । आक्षिप्तपङ्क्तिरनास्तिकाः । कर्म न किं मम भिनत्ति याचतः स्वगयाश्राद्धं भूतस्याविश्य कंचन । नानादेशजनोपज्ञाः प्रत्येषि न कथाः कथम् । नीतानां यमदूतेन नामभ्रान्तेरुपागतौ । श्रद्धत्से संवदन्ती न परलोककथा कथम् । तस्मात् एवं वैदिकमतावलम्बनेन वैदिकमार्गो न दूषणीयः ।'

इति ब्रुवन्तं वचनं सरोषं
रामं महात्मानमदीनसत्त्वम् ।
उवाच तथ्यं पुनरास्तिकं च
सत्यं वचः सानुनयं च विप्रः ॥
न नास्तिकानां वचनं ब्रवीम्यहं
न नास्तिकोऽहं न च नास्तिकं च ।

समीक्ष्य कालं पुनरास्तिकोऽभवं
भवेय काले पुनरेव नास्तिकः ॥
स चापि कालोऽयमुपागतः शनै-
र्यथा मया नास्तिकवागुदीरिता ।
निवर्तनार्थं तव राम कारणा-
त्प्रसादनार्थं च मयैतदीरितम् ॥

इति । दशोत्तरशततमे—तदनु विविधोपायैरपि अनिवृत्तहृदयं कुपितं श्रीरामभद्रमवलोक्य कुलपुरोहितो वसिष्ठः आकाशप्रभवो ब्रह्मेत्यारभ्य इक्ष्वाकुकुलपरम्परामुक्त्वा

इक्ष्वाकूणां हि सर्वेषां राजा भवति पूर्वजः ।
स राघवाणां कुलधर्ममात्मनः
सनातनं नाद्य विहातुमर्हसि ।
प्रभूतरत्नामनुशाधि मेदिनीं
प्रभूतराष्ट्रां पितृवन्महायशाः ॥

इति प्रसादयामास ॥

एकादशोत्तरशततमे—

वसिष्ठस्तु तदा राममुक्त्वा राजपुरोहितः ।
अब्रवीद्धर्मसंयुक्तं पुनरेवापरं वचः ॥

पुरुषस्य हि जातस्य भवन्ति गुरवस्त्रयः।
आचार्यश्चैव काकुत्स्थ पिता माता च राघव॥

पिता ह्येनं जनयति पुरुषं पुरुषर्षभ।
प्रज्ञां ददाति चाचार्यः तस्मात्स गुरुरुच्यते॥

सोऽहं ते पितुराचार्यस्तव चैव परंतप।
मम त्वं वचनं कुर्वन्नातिवर्तेः सतां गतिम्॥

इमा हि ते परिषदः श्रेणयश्च द्विजास्तथा।
एषां तात चरन्धर्मं नातिवर्तेः सतां गतिम्॥

वृद्धाया धर्मशीलाया मातुर्नार्हस्यवर्तितुम्।
अस्यास्तु वचनं कुर्वन् नातिवर्तेः सतां गतिम्॥

एतेन गुरुमात्रादीनामभिमतं कुर्वन्पुरुषः सद्गतिं नातिक्रामति। अतस्तेषां वचनमवश्यं कर्तव्यम्। तथा चानुशासनिके—'पितुर्मातुर्गुरूणां च आचार्यस्य च सर्वदा। हितं वाप्यहितं वापि तत्कार्यमविशङ्कया' इति। इत्थमाचार्यप्रजामात्रादिवचनमनतिलङ्घनीयम् अतः समुल्लङ्घ्यापि पितृवचनं मत्प्राथनां सफलीकुर्विति गुरुणा वसिष्ठेनोक्तो रामभद्रस्तमित्थमुवाच—

यन्मातापितरौ वृत्तं तनये कुरुतः सदा ।
न सुप्रतिकरं तत्तु मात्रा पित्रा च यत्कृतम् ॥

यथाशक्ति प्रदानेन स्नापनाच्छादनेन च ।
नित्यं च प्रियवादेन तथा संवर्धनेन च ॥

इति । अयमर्थो मनुना दर्शितः— 'यन्मातापितरौ क्लेशं सहेते संभवे नृणाम् । न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥' इति ।

भरतस्य वचः कुर्वन्याचमानस्य राघव ।
आत्मानं नातिवर्तेस्त्वं सत्यधर्मपरायण ॥

अनुरक्तस्य भ्रातुर्वचनकरणे स्वात्महितमेव कृतं भवतीत्युक्त्वा भ्रातुरात्माभिन्नत्वं सूचितम् । तथा च मनुः— 'आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः । माता पितृव्या मूर्तिस्तु भ्रातरो मूर्तिरात्मनः ॥

स हि राजा जनयिता पिता दशरथो मम ।
आज्ञातं यन्मया तस्य न तन्मिथ्या भविष्यति ॥

लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान्वा हिमं त्यजेत् ।
अतीयात्सागरो वेलां न प्रतिज्ञामहं पितुः ॥

नन्वस्मिन्वचने पित्राज्ञया प्रतिज्ञातमेव परिपालनीय-मिति प्रतीयते । तदनुपपन्नम्, अभिवादनप्रकरणस्थाने 'आचार्यप्राचार्यसंनिपाते प्राचार्यायोपसंगृह्योपसंजिघृक्षेदाचार्यं प्रतिषेधेदितरः' इति आपस्तम्बसूत्रेण प्राचार्यस्य प्राबल्यावगमेन तद्वचनस्यैव कर्तव्यत्वात् । एवं वनगमने पित्राज्ञामात्रं राज्याभिषेके तु आचार्यमातृप्रजादीनामनुज्ञेति । विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वमिति न्यायेन वसिष्ठादिवाक्यस्यैव कर्तव्यत्वाच्च । अतः उभयथापि वसिष्ठवाक्यस्यैव कर्तव्यत्वेन कथं पितृवचनपरिपालनप्रतिज्ञेति चेन्न । आचार्याधीनः स्याद्न्यत्र पतनीयेभ्य इत्यापस्तम्बसूत्रेण पातित्यापादककर्मव्यतिरिक्तकर्मण्येव आचार्याधीनत्वप्रतिपादनेन, तस्मात्पितुर्वचः कार्यं न विचार्यं कदाचन । पातकान्यपि पूयन्ते पितुर्वचनकारिणः इति चिरकारिवचनात् पितृवाक्यकरणे पातकनिवृत्त्यवगमेन परशुरामादिभिः पित्राज्ञया महापातकरूपमात्रादिवधकरणेन च आज्ञाविषये पितुरतिप्रबलत्वात् तद्वचनमेव परिपालनीयम् । आचार्यप्राचार्येत्यादिवचनं तु अभिवादनमात्रविषयम् । अत

एव रामेण ताटकावधे आचार्यस्य विश्वामित्रस्य वचनं पितृवचनगौरवादेव कृतमित्यवगम्यते। तथा हि—

पितुर्वचननिर्देशात्पितुर्वचनगौरवात्।
वचनं कौशिकस्येति कर्तव्यमविशङ्कया॥

अनुशिष्टोऽस्म्ययोध्यायां गुरुमध्ये महात्मना।
पित्रा दशरथेनाहं नावज्ञेयं च तद्वचः॥

सोऽहं पितुर्वचः श्रुत्वा शासनाद्ब्रह्मवादिनः।
करिष्यामि न संदेहस्ताटकावधमुत्तमम्॥'

इति। यदुक्तं भूयसोऽनुग्रहन्यायेन इति तन्न, तत्र मातुराज्ञाकरणे स्वातन्त्र्यं नास्तीति प्राक्प्रतिपादितम्। प्रजाभिरपि—

काकुत्स्थमभिजानीमः सम्यग्वदति राघवः।
एषोऽपि हि महाभागः पितुर्वचसि तिष्ठति॥
अत एव न शक्ताः स्म व्यावर्तयितुमञ्जसा।

इत्यादिना वनगमनस्यैव अनुज्ञानाच्च भूयोऽनुग्रहन्यायानवतारात्। तस्मात् पितृवचनमेव परिपालनीयमिति यदुक्तं तद्युक्तमेव। एवमनेकविधोपायैरप्यशक्यनिवर्तनं

रामभद्रमवलोक्य तत्प्रसादनोपायं कर्तुकामो भरतः सुमन्त्रमिदमादिदेश—

इह मे स्थण्डिले शीघ्रं कुशमास्तर सारथे ।
आर्यं प्रत्युपवेक्ष्यामि यावन्मे न प्रसीदति ॥

अनेन सर्वोपायेनापि गुरुजनः प्रसादनीय इति सूचितम् । तथा चोशना— 'यो वाचयति या सूते येन विद्योपदिश्यते । ज्येष्ठभ्राता च भर्ता च पञ्चैते गुरवस्तथा । आत्मनः सर्वयत्नेन प्राणत्यागेन वा पुनः । पूजनीया विशेषेण पञ्चैते भूतिमिच्छता' इति । अथाश्रमकुटीपुरतः सुमन्त्रविरचितकुशास्तरणे प्रत्युपविष्टं भरतमवलोक्य रामस्तमित्थमुदाजहार—

किं मां भरत कुर्वाणं तात प्रत्युपवेक्ष्यसि ।
ब्राह्मणो ह्येकपार्श्वेन प्राणान्रोद्धुमिहार्हति ॥
न तु मूर्धावसिक्तानां विधिः प्रत्युपवेशने ।

अनेन प्रत्युपवेशनं दरिद्रैर्ब्राह्मणैरेव कार्यं न मूर्धावसिक्तैरिति सूचितम् । अत एव भरतवचनम्—

अनाहारो निरालोको धनहीनो यथा द्विजः ।

इति। तत्समुत्तिष्ठ महाभाग भरत विसृज तदिदं दारुणं व्रतं प्रयाहि सत्वरं कुलपरंपरापरिपालितामस्मद्राजधानीमयोध्यामित्यभिहितो भरतो निजगाद— भो भोः पौरजानपदा जनाः किमिति वाचंयमतामवलम्ब्य तिष्ठथ यत्समुचितं तदार्यमनुशासथ इति। तदनु पितृवचनगौरवेण वनवासे कृतनिश्चयं रामं विनिवर्तयितुं न वयं पारयाम इति पौरजनसमुदीरितवचनमाकर्ण्य रामभद्रो भरतमेवमवादीत्—

एवं निबोध वचनं सुहृदां धर्मचक्षुषाम्।
एतच्चैवोभयं श्रुत्वा सम्यक्संपश्य राघव॥

उत्तिष्ठ त्वं महाभाग मां च स्पृश तथोदकम्।

अत्र प्रत्युपवेशनप्रायश्चित्तत्वेन मां च स्पृश तथोदकमित्युक्त्या अशुद्धित्वे निमित्ते गुरुजनसंस्पर्शनमुदकोपस्पर्शनं च प्रायश्चित्तमुक्तं भवति। तदनु कृतोदकस्पर्शो भरतः मन्त्रिपुरोहितादीनेवमवोचत्—

न याचे पितरं राज्यं नानुशासामि मातरम्।
आर्यं परमधर्मज्ञमभिजानामि राघवम्॥

यदि त्ववश्यं वस्तव्यं कर्तव्यं च पितुर्वचः ।
अहमेव निवत्स्यामि चतुर्दश समा वने ॥

अत्र राज्यं मया न याचितं राज्यं प्रार्थनीयमिति मातरमपि नानुशासितवान् राज्यार्हो राम एव इति तु परं जानामि यदि पित्राज्ञया रामेण वने वस्तव्यमिति निर्बन्धः तदा तच्छिष्यः अहमेव वने निवत्स्यामि रामस्तु राज्यं परिपालयत्विति कथनेन गुरुणा कर्तव्यं कर्म शिष्यहस्तात्कारितं चेत् गुरुणा कृतं भवतीति सूचितम् । विष्णुपुराणे— 'पूर्वमेवं मुनिगणैः समयो यः कृतो द्विज । वैशम्पायन एवं तु तं व्यतिक्रान्तवांस्तदा ॥ स्वस्तीयं बालकं सोऽथ यथाभ्रष्टमघातयत् । शिष्यानाह च हे शिष्याः ब्रह्महत्यापहं व्रतम् । चरध्वं मत्कृते सर्वे न विचार्यमिदं ततः । ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तु यैः । चरकाध्वर्यवस्ते तु चरणान्मुनिसत्तम' इति । ततो भरतवचनेन संजातविस्मयो रामस्तं जनमिदमाह—

विक्रीतमाहितं क्रीतं यत्पित्रा जीवितं मम ।
न तल्लोपयितुं शक्यं मया वा भरतेन वा ॥

अनेन पुत्रक्रयविक्रयार्हता पितुरस्तीति सूचितम्। तथा च बोधायनः 'शोणितशुक्रसंभवो मातापितृनिमित्तकः तस्य प्रदानपरित्यागविक्रयेषु मातापितरौ भवतः' इति।

उपाधिर्न मया कार्यो वनवासे जुगुप्सितः।

अत्र क्रयविक्रयादियोग्यैः पुत्रैः पितृकृतव्यवस्थायामेव स्थेयम्, न तु अतिजुगुप्सितप्रतिनिधिकरणेन तल्लोपः कर्तव्यः, तथा सति पितुरसत्यप्रतिज्ञत्वं लक्षणबाधकमस्तीति तात्पर्यम्। अत एव भरतं प्रति सिद्धर्षिवचनम्।

कुले जात महाप्राज्ञ महाव्रत महायशः।
ग्राह्यं रामस्य वाक्यं ते पितरं यद्यवेक्षसे॥

सदानृणमिमं रामं वयमिच्छामहे पितुः।
अनृणत्वाच्च कैकेय्याः स्वर्गं दशरथो गतः॥

इति।

जानामि भरतं क्षान्तं गुरुसत्कारकारिणम्।
सर्वमेवात्र कल्याणं सत्यसंधे महात्मनि॥

तदाहमपि निर्वर्तितवनवासः समागत्य निजराजधानी-

मवश्यमनेन भ्रात्रा सह पृथिवीं पालयिष्यामि ॥ द्वादशो- त्तरशततमे—इति सरसतरमभिभाषमाणयोः श्रीरामभ- द्रभरतयोरन्यादृशं समागममवलोक्य विस्मितहृदयाः मह- र्षिसिद्धविद्याधरगन्धर्वाः सानन्दमेवं प्रशशंसुः।

स धन्यो यस्य पुत्रौ द्वौ धर्मज्ञौ धर्मविक्रमौ।
श्रुत्वा वयं हि संभाषामुभयोः स्पृहयामहे ॥

अथ पित्राज्ञापरिपालनेनानृणं रामभद्रं वयमिच्छामः तद्भवतापि पितृऋणमवेक्षमाणेन परिग्राह्यं रामवचन- मिति। दशकन्धरवधाभिलाषेण भरतमुपदिश्य यथागतं गतेषु महर्षिसिद्धगन्धर्वेषु तद्वचनश्रवणजनितहर्षनिर्भर- हृदयं श्रीरामं परित्रस्तगात्रो भरतः कृताञ्जलिरिदमु- वाच—

राजधर्माननुप्रेक्ष्य कुलधर्मानुसंततिम्।
कर्तुमर्हसि काकुत्स्थ मम मातुश्च याचनाम् ॥
ज्ञातयश्च हि योधाश्च मित्राणि सुहृदस्तथा।
त्वामेव प्रतिकाङ्क्षन्ते पर्जन्यमिव कर्षकाः ॥

अनेन धार्मिकमेव राजानं प्रजाः काङ्क्षन्तीति सूचि-

वम्। तथा च कामन्दके— 'धार्मिकं पालनपरं सम्य-क्परपुरंजयम्। राजानमभिमन्यन्ते प्रजापतिमिव प्रजाः' इति। तदधुना त्वमेव राज्यं परिपालय त्वदनुरक्ताः प्रजाः समनुरञ्जयेति सादरमुदीर्य निजचरणारविन्दयोर्निपतितं दरदलितकुवलयोदरसोदरद्युतिम् अरविन्ददलसुन्दरलोचनं भरतं समुत्थाप्य समुज्जृम्भितबाष्पपरिस्थगितकण्ठतया मत्तहंसस्वरो रामभद्रस्तमिदमाह—

आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या।
भृशमुत्सहसे तात रक्षितुं पृथिवीमपि॥

अनेन विनीतात्मा नृपतिः श्रेयोभाजनं भवतीत्युक्तम्। तथा च कामन्दके— 'सदानुरक्तप्रकृतिः प्रजापालनतत्परः। विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते' इति।

अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः।
सर्वकार्याणि संमन्त्र्य सुमहान्त्यपि कारय॥

तदिदानीं कामलोभपरया कैकेय्या समाचरितं वृत्तं सर्वथा मनसि मा कुर्विति वदन्तं सकलभुवनाभिरामं

रामं भरतः सविनयमिदमवादीत्—

अधिरोहार्थं पादाभ्यां पादुके हेमभूषिते ।
एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥

सोऽधिरुह्य नरव्याघ्रः पादुके ह्यवरुह्य च ।
प्रायच्छत्सुमहातेजा भरताय महात्मने ॥

स पादुके संप्रणम्य रामं वचनमब्रवीत् ।
चतुर्दश हि वर्षाणि जटाचीरधरो ह्यहम् ॥

फलमूलाशनो वीर भवेयं रघुनन्दन ।
तवागमनमाकाङ्क्षन्वसन्वै नगराद्बहिः ॥

तव पादुकयोर्न्यस्तराज्यतन्त्रः परंतप ।
चतुर्दशे हि संपूर्णे वर्षे हि रघुनन्दन ।
न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम् ॥

अथ तथेति प्रतिज्ञाय सर्वथा मातरं प्रति कोपं मा कृथा मया च सीतया च शप्तासीति बाष्पपरीतलोचनेन रामचन्द्रेण समाज्ञप्तो भरतः महाराजोचितैराभरणैरलंकृत्य पादुके नियोज्य च सविनयमञ्जसा शत्रुंजयकुञ्जरकुम्भपीठे, कृतप्रदक्षिणप्रणामः, तमामन्त्रयांचकार । तदनु रामभद्रोऽपि लक्ष्मणेन सह वसिष्ठादीनभिपूज्य

गुरुजनान्परिष्वज्य सुहृज्जनं प्रणम्य कैश्चन परिजनैः शोकवेगविसृत्वराश्रुपरंपरापिहितलोचनकौसल्याद्या जननीः कथं कथंचित् सप्रणाममामन्त्र्य निजाश्रमकुटीरमेव प्रविवेश ॥ त्रयोदशचतुर्दशोत्तरशततमयोः— तदनु शिरसा गृहीतरामपादुकः वसिष्ठवामदेवजाबालिमुखान् ऋत्विक्पुरोहितान्मन्त्रिवृद्धानपि पुरत एव प्रहिण्वानः शत्रुघ्नेन सह रथमधिरूढः

प्रदक्षिणं च कुर्वाणश्चित्रकूटं महागिरिम् ।
पश्यन्धातुसहस्राणि रम्याणि विविधानि च ॥
प्रययौ तस्य पार्श्वेन ससैन्यो भरतस्तदा ।

अनेन पुण्यवनस्पतिपर्वतादयः प्रदक्षिणनमस्कारादिभिः पूजनीया इति सूचितम् । तच्च प्रागेव प्रपञ्चितम् । तस्य च गिरेरदूरत एव भगवतो भरद्वाजस्य मुनेराश्रममवलोक्य रथादवरुह्य विनीतवेषः सह वसिष्ठादिभिराश्रममासाद्य शिरोवतंसीकृतमुनिचरणारविन्दः तेन च प्रहृष्टचेतसा मुनिना परिपृष्टरघुपतिसमागमवृत्तान्तो भरतः सविनयमखिलमाचचक्षे । अथ भरतवचनजनितप्रमोदमेदुरहृदयः

भरद्वाजः शुभतरं मुनिर्वाक्यमुवाच तम्।
नैतच्चित्रं नरव्याघ्र शीलवृत्तवतां वर॥

यद्दार्यं त्वयि तिष्ठेत्तु निम्ने वृष्टमिवोदकम्।
अमृतः स महाबाहुः पिता दशरथस्तव॥

यस्य त्वमीदृशः पुत्रो धर्मज्ञो धर्मवत्सलः।

अनेन धार्मिकपुत्रेण सता पिता मृतोऽप्यमृत एवेति सूचितम्। तथा च श्रुतिः—'प्रजामनुप्रजायसे तदु ते मर्त्यामृतम्' इति। इति प्रशंसन्तं स तं मुनिवतंसं समभिवाद्य निरवद्यास्तदाशिषः कृताञ्जलिर्भरतसत्तमः आमन्त्र्य मन्त्र्यधिपतिपुरोहितसहितः परितः संचलदनेकचतुरङ्गबलचरणविदलितमहीतलसत्वरमुदित्वरविसृत्वरपरागपरम्परापराकृतदिनकरकरप्रकरः पटुतरपटहपटपटारवप्रबोधितपरिसरगिरिचरपर्यन्तदर्यन्तरशायितकेसरिकृतोर्जितचकितप्रधावितसैन्यकरेणुकलितकोलाहलैः बृंहितरवोपबृंहितहेषितभटाट्टहासबधिरीकृतभुवनोदरैः सह चमूसमूहैः सकलसुरासुरसिद्धगन्धर्ववन्दितां कलिन्दनन्दि-

नीमुत्तीर्य क्रमेण भगीरथमनोरथपरिपूरणव्याजेन सक-
लजनपावनीकरणाय सकरुणमत्रनिमवतीर्णां दुरधिगमत्रि-
दिवसदनसौधाधिरोहणसोपानवीथिकायमानतरङ्गपरंपरा-
म्, शंकरविशङ्कटजटापटलघटितसुधाकरचिरसहवासव-
शादिव नितान्तशीतलमधुरतोयाम्, शिशिरपवनवलन-
दोधूयमानकमलवनडोलाविहारसुखितकलहंसमालिका-
म्, भगवतीं भागीरथीमपि समुत्तीर्य, शृङ्गवेरपुरं गतः,
संनिकृष्टतया स्फुटतरपरिदृश्यमानसमुत्तुङ्गगोपुरसौधशृ-
ङ्गाम्, सुरासुरैरप्ययोध्यामयोध्याम्, निध्यायन्नेव तां
प्रविश्य, दुर्निरोधशोकवेगसंतप्यमानमानसः सारथिमि-
दमुदीरयामास । सारथे पश्य पश्य या किल
पुरा नगरी नवनवमनुदिनमपि विरचितमहोत्सवो-
त्साहनिर्भरपौरजनगरीयसी सैवेयमधुना निरानन्दजना
न मनागपि मम नयनानन्दमादधाति । तथा हि, यत्र
विचित्रमाल्यवसनभूषणाः तरुणाः घणघणरवमुखरमणि-
मयकिंकिणीगणालंकृतस्कन्धाधिरूढनिपुणाधोरणाः मद-
वारणाश्च विलासमन्थरमचरन् अधुना तत्र दिवसेऽपि
निशास्विव निबिडबिडालपङ्क्तयः निर्भयमुलूकलोकाश्च

संचरन्ति । हन्त किमितोऽधिककष्टतरं यदियं रघुपति-
विरहजनितघनतरखेदपरिदूयमानजना दुर्निग्रहाग्रहोदग्रम-
हाग्रहगृहीता रोहिणीव शोचनीयरूपाणि दग्धसमयसमुद्-
यदर्कमयूखसंपर्कपरिक्वथितमितजलान्तरान्तर्निलीयमान-
मीनझषा क्वाशिता गिरिनदीव खेददायिनी हविःप्रक्षेपण-
क्षणपरिक्षीणच्छविः अध्वरसमिद्धहुताशनशिखेव परिग-
लितप्रभा समरदुर्मदरिपुनृपतिवीरविदलितपलायितपत्ति-
तरथगजहयभटविकीर्णकवचा भग्नचमूरिव विपत्तिमापन्ना
याजकजननिर्वर्तितसुत्यावसानसमयप्रशान्तमन्त्रघोषा य-
ज्ञभूमिरिव विलीनकोलाहला पुरी पुरेव न
परिदृश्यते । अपि च समदवृषभविरहविधुरां धेनुमिव
दुरन्तचिन्तासमाक्रान्तां दिनकरकरनिकरमतिकररुचि-
निचयरुचिरमणिगणरहितां हारलतामिव प्रभाविकलां
स्वकृतसुकृतक्षरणक्षणक्षणपतनविशीर्णसौभाग्यान्तरा-
मिव संप्राप्तदीनदशाम्, अकाण्डचण्डानिलदोधूयमान-
दावानलशिखाकलापलेलिह्यमानकुसुमसमुद्गतमधुकराम्,
वासन्तिकलतामिव परिम्लानरूपां रघुवरविवासनसमुज्जृ-
म्भितशोकाम्भोनिधिकृनमज्जनवणिग्जनसंक्षिप्तविपणा-

पश्यतश्च निविडसमावृतधाराधरावलीविलीनतारागणां निशीथिनीनभस्थलीमिव निष्प्रकाशां निरादरपौरजनाधमीकृतनिश्रोभभूमिभागतया निदाघविगमसमयशिथिलितां पानीयशालिकामिव परिष्कारहीनामिमामिक्ष्वाकुकुलराजधानीमवेक्ष्य तूर्णमेव यन्न मे विदीर्णं मनः तन्नूनमायसमेव । अपि च इयं हि सा राजधानी दशरथरामलक्ष्मणवियोगनितान्तसंतप्तलोका स्वप्रियविप्रवासजनितखेदपर्याकुला कुलपालिकेव विलोक्यते । अपि च विचित्रा विधातुरधरोत्तरीकरणचातुरीधुरीणता यदत्र तत्तादृशीष्वेव राजवीथीषु विलीनमिव वादित्रनिःस्वनैर्वित्रस्तमिव वेदशास्त्रघोषैः अस्तमितमिव मांसमद्यगन्धैः प्रशान्तमिव चन्दनागरुगन्धवाहैः प्रणष्टमिव प्रकृष्टचतुरङ्गबलगर्जितैः प्रतारितमिव मङ्गलसंगीतनिनदैः पलायितमिव महोत्सवैः प्रसुप्तमिव पिहितकवाटनिकेतनैः प्रस्थितमिव तरुणजनविलासयात्राभिः सर्वथा संमूढेव बधिरेव मूकेव न विराजते इति बहुविधं प्रलपन् सगद्गदपदमिदमवादीत् ।

कदा नु खलु मे भ्राता महोत्सव इवागतः ।
जनयिष्यत्ययोध्यायां हर्षं ग्रीष्म इवाम्बुदः ॥

तरुणैश्चारुवेषैश्च नरैरुन्नतगामिभिः ।
संपतद्भिरयोध्यायां न विभान्ति महापथाः ॥

इति समुद्गतबाष्पनिःस्पन्दितलोचनो भरतः महाराज-निवेशनमेवाविवेश ॥

पञ्चदशोत्तरशततमे—

ततो निक्षिप्य मातॄः स अयोध्यायां दृढव्रतः ।
भरतः शोकसंतप्तो गुरूनिदमथाब्रवीत् ॥

नन्दिग्रामं गमिष्यामि सर्वानामन्त्रयेऽद्य वः ।
तत्र दुःखमिदं सर्वं सहिष्ये राघवं विना ॥

गतश्च हि दिवं राजा वनस्थश्च गुरुर्मम ।
रामं प्रतीक्ष्ये राज्याय स हि राजा महायशाः ॥

इत्यादिवचनमत्यादरभरितमाकर्ण्य सहामात्यैः वसिष्ठ-मुखैः पुरोहितैरपि साधु साध्विति सश्लाघमभ्यनुज्ञातः शिरसि विनिहितरामपादुको भरतः सारथिसमानीतं

रथमारुह्य पुरस्कृतगुरुजनः तत्क्षणमनाहूतसमागतैः सक-लसैनिकैरखिलैरपि पौरजनैः सममभिगम्य नन्दिग्राम-मवतीर्य रथोत्तमात् अशेषजनहितवानिदमभिहितवान् ॥

'एतद्राज्यं मम भ्रात्रा दत्तं संन्यासवत्स्वयम् ।
योगक्षेमवहे चेमे पादुके हेमभूषिते ॥

भ्रात्रा हि मयि संन्यासो निक्षिप्तः सौहृदादयम् ।
तमिमं पालयिष्यामि राघवागमनं प्रति ॥

क्षिप्रं संयोजयित्वा तु राघवस्य पुनः स्वयम् ।
चरणौ तौ तु रामस्य द्रक्ष्यामि सहपादुकौ ॥

ततो निक्षिप्तभारोऽहं राघवेण समागतः ।
निवेद्य गुरवे राज्यं भजिष्ये गुरुवृत्तिताम् ॥

राघवाय च संन्यासं दत्त्वेमे वरपादुके ।
राज्यं चेदमयोध्यां च धूतपापो भवामि च ॥

अभिषिक्ते तु काकुत्स्थे प्रहृष्टमुदिते जने ।
प्रीतिर्मम यशश्चैव भवेद्राज्याच्चतुर्गुणम् ॥'

इति ॥

अथ विधृतजटावल्कलतया मुनिजनसमानवेषो भरतः भ्रातृसौहृदातिशयेन समुच्छुष्यमाणबिरुदावलीपीठे भद्रपीठे—

पादुके त्वभिषिच्याथ नन्दिग्रामेऽवसत्तदा ।
सवालव्यजनं छत्रं धारयामास स स्वयम् ।
भरतः शासनं सर्वं पादुकाभ्यां न्यवेदयत् ॥

यदा हि यत्कार्यमुपैति किंचि-
दुपायनं चोपहृतं महार्हम् ।
स पादुकाभ्यां प्रथमं निवेद्य
चकार पश्चाद्भरतो यथावत् ॥

ननु पूर्वोक्तवचनैः रामभद्रदत्तपादुकापुरस्कारेण भरतो राज्यं कृतवानित्यवगम्यते । तत्र किं पादुकाप्रदाता रामो राजा अथ वा तद्दत्ते पादुके अथ वा भरतः उत न कोऽपीति; नाद्य',

भरतो भजतामद्य यौवराज्यमकण्टकम् ।

इति कैकेयीप्रार्थितस्वतन्त्रराज्यनिर्वहणाभावेन पितुरसत्य-

प्रविज्ञत्वं स्यात्। न च परिवेत्तृतादोषः अभ्यनुज्ञापूर्वकत्वाद्भिन्नमातृप्रसूतत्वाच्च। अभ्यनुज्ञातभिन्नमातृप्रसूततः दोषाभावः पराशरेणोक्तः 'ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव चाश्रयेत्। अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा॥ पितृव्यपुत्रान्सापत्नान्या नारी तु सुतांस्तथा। दाराग्निहोत्रसंयोगे न दोषः परिवेदनः' इति। न च पादुकाभिषेकवैयर्थ्यम्, शास्त्रतः परिवेत्तृत्वदोषाभावेऽपि पामराणां ज्येष्ठे सति कनिष्ठेन भरतेन राज्यं कृतमिति स्वस्मिन्परिवेत्तृत्वशङ्का स्यात् तद्द्वारा रामोऽपि कृतश्रीपरिग्रह इति पामराणामपि स्वपरिवेत्तृशङ्का न भवेत्। न द्वितीयः, अचेतनायाः पादुकायाः दुष्टनिग्रहशिष्टपरिपालनात्मकचेतनकार्याधिकारासंभवात्। न तृतीयः, 'दाराग्निहोत्रराज्यानि यः कुर्यादग्रजे स्थिते। परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः॥ स हि प्रथमजस्तस्मिन्नकृतश्रीपरिग्रहे। परिवेत्तारमात्मानं मेने स्वीकरणाद्भुवः' इति स्मृतिवचनकालिदासवचनाभ्यां परिवेत्तृदोषापत्तेः। तथा भरतस्य स्वातन्त्र्येण राज्यकर्तृत्वे

पादुके त्वभिषिच्याथ नन्दिग्रामेऽवसत्तदा ॥

इत्यादिवचनावगतपादुकापट्टाभिषेकबालव्यजनधारण-राज्यतन्त्रनिवेदनादिकमप्यनुपपन्नं स्यात् । न तुरीयः, तथा सति राज्यस्य अराजकत्वापत्त्या 'नाराजके जनपदे विद्युन्माली महास्वनः । अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा ॥' इत्यादीनामराजकराज्यधर्माणां प्रवृत्तिप्रसङ्गादिति चेत् उच्यते— भरत एव स्वतन्त्रो राजा,

नन्दिग्रामेऽकरोद्राज्यं भरतो मन्त्रिभिः सह ।

इत्यादिवचनेन राज्यकरणप्रतीतेः । किं च,

पूजिता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ॥

इति वचनेन भरतकर्तृकरामसंप्रदानकराज्यप्रदानावगमाच्च । अन्यथा

भरतो भजतामद्य यौवराज्यमकण्टकम्

इति कैकेयीप्रार्थितवरनिर्वाहाभावेन पितुरसत्यप्रतिज्ञत्वं स्यात् । रामश्चतुर्दशसंवत्सरानन्तरं निःशङ्कमागत्य राज्यं यथाङ्गीकुर्यात् ।

एवं कनीयसा भ्रात्रा भुक्तं राज्यं विशांपते ।
भ्राता ज्येष्ठो वरिष्ठश्च किमर्थं नावमंस्यते ।

इति कौसल्यावचनावगतकनिष्ठोपभुक्तराज्यप्रतिषेधो यथा न भवेत् यथा च कुलक्रमागतज्येष्ठपुत्रराज्याभिषेकरूपधर्मातिक्रमो न भवेत् लोकापवादश्च यथा न स्यात् इत्येतदभिप्रायकत्वात्। तस्माद्भरत एव राजा । अत एव,

स काममनवाप्यैव रामपादावुपस्पृशन् ।
नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया ॥

इति वचनमपि संगच्छते ॥

षोडशोत्तरशततमे— तदनन्तरमनधिगतमनोरथे भरते निजराजधानीमधिगते निरतिशयतपःप्रबन्धनिर्धूतकलुषैः महर्षिभिः सह तपोवने निवसन् श्रीरामभद्रः तत्र चित्रकूटाश्रमेषु साशङ्कं स्वमालोकय भ्रुकुटिरचन-

नयनवलनकराङ्गुलीप्रदर्शनपुरःसरं किमपि किमपि शनैः शनैः कर्णपुटेषु मिथः कथयतां तपोधनानां तेषामौत्सुक्यमालक्ष्य रामः स्वात्मनि शङ्कितः

कृताञ्जलिरुवाचेदमृषिं कुलपतिं तदा ।

भगवन्निदमृषिमण्डलमकाण्ड एव किंचिदपि अनाविष्कृतवचनमप्रकाशितानिदानं केवलमन्योन्यमेव रहःकथनैः सावहित्थमुखवर्णैश्च नितान्तमाकुलमिव विलोक्यते, तद्ब्रवीतु भवान् प्रमादवशेन किं मया किंचिदतिक्रान्तं किमुत लक्ष्मणेन महर्षिजनेषु निजाभिजनाननुरूपं किंचिदाचरितं किं नु वा मुनिजनशुश्रूषमाणेषु विदेहनन्दिन्या किंचिदयुक्तमेव कर्म निर्वर्तितम् तद्भगवानौत्सुक्यमूलकथनेन परिहरतु महतीं ममाशङ्कामिति प्रसादयामास ।

अथर्षिर्जरया वृद्धस्तपसा च जरागतः ।
वेपमान इवोवाच रामं भूतदयापरम् ॥

वत्स रामचन्द्र त्रिलोकीविदितनयाया: जनकतनयाया: ब्राह्मणेषु, विशिष्य तपोधनेषु परमस्मासु कुतो भवेदपकारलेशसंभावना, परं तु वयं त्वन्निमित्तमेव समुत्सुका: स्म: यदत्र वित्रासितत्रिभुवनः जनस्थानकृतावस्थानः तापसरुधिरपारणपरायणो दशवदनानुजः खरो नाम नीचरजनीचरपतिस्त्वदागमनमारभ्य त्वद्दर्शनजनितसंभ्रमः स्वानुचरान्निशाचरानादिश्य तापसाश्रमेषु क्वचिदाकस्मिकभीषणभाषणै: क्वचन विकटभ्रुकुटीरचनै: क्वचिदपि देवयजनभूमिषु रुधिरवर्षै: दुःसहतरैरितरैरुपद्रवशतैरस्मानतीव परिबाधते । तदधुना तापसै: सह बहुमूलफलोदकमध्युषितचरमन्यमाश्रममाश्रयिष्ये यदि तत्रापि सममस्माभिरागमने मनः तदा सजानकीलक्ष्मणः सत्वरं प्रतिष्ठस्व सर्वथा समर्थस्यापि तव सकलत्रस्य न समुचितोऽत्र वने निवासः इत्यभिधाय कुलपतौ प्रस्थिते रघुपतिरपि मुनिजनविरहजनितखेद: स्वमाश्रमं समाश्रयत ॥

सप्तदशोत्तरशततमाष्टादशोत्तरशततमयो:— अदनु राघवोऽपि प्रस्थितेषु तपोधनेषु दुरन्तचिन्तासमा-

अनन्तः भरतसैनिकस्कन्धावारनिवेशनैः तत्र तत्र पतितविपुलगजवाजिकरीषराशिभिः कृतोपमर्दोऽयमाश्रमः भ्रात्रादिनिजेष्टजनसमागमस्थलदर्शनेन मुहुरपि शोचतो मम सैव स्मृतिरन्वेति । तदधुना नायमाश्रमो वासयोग्य इति विचिन्तयन् जानकीलक्ष्मणसहितो महामुनेराश्रममाससाद ॥

सोऽत्रेराश्रममासाद्य तं ववन्दे महायशाः ।
तं चापि भगवानत्रिः पुत्रवत्प्रत्यपद्यत ॥

अथ भगवानत्रिमुनिः चिराय समागतस्य रामभद्रस्य ससंभ्रममर्घ्यपाद्यकन्दमूलफलोपहारेण सादरमातिथ्यविधिमभिनिवर्त्य कठोरतपश्चरणपरिशोषितदेहां अनितरसतीजनसाधारणसौशील्यभूषितां अनसूयां प्रणमेति सीताभिचोदयन् रामाय तच्चरिताद्भुतानि स्वयं शशंस । अनया किल दशवर्षाण्यवर्षवशाद्दह्यमानेषु लोकेषु दयाविधेयहृदयया दुश्चरतपश्चरणमहिम्ना विनिर्मितैः स्वादुतरमूलफलैरह्नाय प्रवर्तितया जह्नुसुतया च चिरं सुखितः कृतोऽखिलो लोकः । किं च दशसहस्रवर्षपर्यन्तमनुपमनियम-

नियमितप्रत्यूहमत्युग्रं तपश्चरन्त्या त्रिदशकार्यनिमित्तं दशरात्रं प्रवर्तिता रात्रिरेव ।

तामिमां सर्वभूतानां नमस्कार्यां तपस्विनीम् ।
अभिगच्छतु वैदेही वृद्धामक्रोधनां सदा ॥

इति । तस्य मुनेर्वचनमाकर्ण्य निखिललोकपावनचरितामनुपमतपोराशिमयीमन्वर्थनामधेयामनसूयामभिगच्छेति भर्तृवदनारविन्दविनिर्गलितं वचनमकरन्दमादरेण कर्णाञ्जलिपुटेन पिबन्ती मिथिलाधिराजतनया विगलितभूतरिवर्षतया शिथिलितसकलावयवां जराधवलिमूर्धजां महाभागामनसूयां निजनामधेयकथनपूर्वकमभिप्रणम्य बद्धाञ्जलिपुटा विनयेन सर्वत्र कुशलमप्राक्षीत् ।

ततः सीतां महाभागां दृष्ट्वा तां धर्मचारिणीम् ।
सान्त्वयन्त्यब्रवीद्धृष्टा दिष्ट्या धर्ममवेक्ष्यसे ॥
त्यक्त्वा ज्ञातिजनं सीते मानवृद्धिं च भामिनि ।
अवरुद्धं वने रामं दिष्ट्या त्वमनुवर्तसे ॥
नगरस्थो वनस्थो वा पापो वा यदि वा शुभः ।
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः ॥

दुःशीलः कामवृत्तो वा धनैर्वापि विवर्जितः।
स्त्रीणामार्यस्वभावानां परमं दैवतं पतिः॥

नातो विशिष्टं पश्यामि बान्धवं विमृशन्त्यहम्।
सर्वत्र योग्यं वैदेही तपः कृतमिवाव्ययम्॥

न त्वेवमवगच्छन्ति गुणदोषमसत्स्त्रियः।
कामवक्तव्यहृदया भर्तृनाथाश्चरन्ति याः॥

प्राप्नुवन्त्ययशश्चैव धर्मभ्रंशं च मैथिलि।
अकार्यवशमापन्नाः स्त्रियो याः खलु तद्विधाः॥

त्वद्विधास्तु गुणैर्युक्ता दृष्टलोकपरावराः।
स्त्रियः स्वर्गे चरिष्यन्ति यथा धर्मकृतस्तथा॥

तदेवमेनं त्वमनुव्रता सती
पतिव्रतानां समयानुवर्तिनी।
भवस्व भर्तुः सहधर्मचारिणी
यशश्च धर्मं च ततः समाप्स्यसि॥

इदं तु पतिव्रतामाहात्म्यं प्रागेव प्रपञ्चितम्। इत्थमखिलसतीजनललामभूतया तयानसूयया सानुरागमभि-

हित्वा विदेहराजतनया प्रमुदितहृदया सती स्वयमपि ता-
मिदं वक्तुमुपाक्रमत—

नैतदाश्चर्यमार्याया यन्मां त्वमभिभाषसे ।
विदितं तु मयाप्येतद्यथा नार्याः पतिर्गुरुः ॥

यद्यप्येष भवेद्भर्ता ममार्ये व्रतवर्जितः ।
अद्वैधमुपवर्तव्यस्तथाप्येष यथा भवेत् ॥

किं पुनर्यो गुणश्लाघ्यः सानुक्रोशो जितेन्द्रियः ।
स्थिरानुरागो धर्मात्मा मातृवर्ती पितृप्रियः ॥

यां वृत्तिं वर्तते रामः कौसल्यायां महाबलः ।
तामेव नृपनारीणामन्यासामपि वर्तते ॥

सकृद्दृष्टास्वपि स्त्रीषु नृपेण नृपवत्सलः ।
मातृवद्वर्तते वीरो मानमुत्सृज्य धर्मवित् ॥

तस्मादृशकल्याणगुणगणाभरणस्य पत्युर्नित्यमपि च-

रणशुश्रूषणादृते किमुत्तमतमं तपः । पुरा हि जनकसदने पाणिग्रहणसमये सतीजनन्यायवेदिन्या जनन्या सम्य-गनुशिष्टास्मि कुलपरंपरागतमपि राज्यमुत्सृज्य पितृव-चनेन दण्डकारण्यगमनोन्मुखपतिमेवानुव्रजन्ती कौस-ल्ययापि सादरमुपदिष्टास्मि तदखिलमधुना निजदुहि-तृजनहितोपदेशनिर्विशेषैः भगवतीवचनैर्मम नवीकृत-मिति वदन्त्यै जनकनन्दिन्यै निरुपमनिजतपोबलार्जि-तम् अङ्गरागवसनभूषणादिकमनसूया प्रतिपादयामास ॥

प्रतिगृह्य च तत्सीता प्रीतिदानमनुत्तमम् ।
श्लिष्टाञ्जलिपुटा धीरा समुपास्त तपोधनाम् ॥

तदनु तया सकलभुवनविनुतया 'जानकी तव स्वयं-वरकथानिशमने जनितादरमिव मे मनः; । तत्कथय यथानुभूतमुदन्तमानुपूर्व्येण' इति प्रचोदिता सीता वक्तुमारभत । अस्ति समस्तसामन्तराजचक्रमकुटमणि-मरीचिमण्डलाक्रान्तपादपीठः, संततनिगमान्तसिद्धा-न्तविचारचातुरीधुरीणः, ब्रह्मर्षिसमचरितो राजर्षिर्ज-नको नाम ।

तस्य लाङ्गलहस्तस्य कृषतः क्षेत्रमण्डलम् ।
अहं किलोत्थिता भित्वा जगतीं नृपतेः सुता ॥

स मां दृष्ट्वा नरपतिर्मुष्टिविक्षेपतत्परः ।
पांसुकुण्ठितसर्वाङ्गीं जनको विस्मितोऽभवत् ॥

अत्र यद्यपि कृषिगोरक्ष्यवाणिज्यं वैश्यं कर्म स्वभावज-मिति गीतास्थवचनपर्यालोचनया कर्षणं वैश्यधर्मः क्षत्रियस्य न धर्मः तथापि महाग्निचयनप्रकरणे षड्गवेन कृषति द्वादशगवेन कृषतीति विधिसिद्धमग्निक्षेत्रकर्षणम् । अग्निक्षेत्रकर्षणं कर्माङ्गभूतं ब्राह्मणक्षत्रिययोरपि संभवतीति तैत्तिरीयश्रुतिः । अत एव मुष्टिविक्षेपतत्पर इति प्रतिपादितम् । मुष्टिविकरणमपि या जाता ओषधय इति चतुर्दशभिर्वपतीति विधिसिद्धग्राम्यारण्यौषधिमुष्टिविक्षेपपरमिति न दोषः । तदनु दृढ्तबहलरजःपुञ्जपिञ्जरितावयवां मामवलोक्य विस्मयपरवशहृदयः निरपत्यतया नित्यमपि संतप्यमानो नरपतिः निजपर्यङ्कमाधिरोप्य मां राजश्रियं तवैव धर्मतस्तनयेति नितान्तमन्तरिक्षागिरापि सन्दर्शितानन्दः, निजावरोधभवनमासाद्य पुत्री

तवेयमागतेति ज्यायस्यै प्रेयस्यै समर्पयामास । अथ तया मम जनन्या दुहितृस्नेहनिबद्धहृदयतया तैस्तैर्नैवोपलालनविशेषैः परिगलितशैशवायां मयि किंचिदिव समुदञ्चितयौवनायां जनको मदीयरूपानुरूपवरमपश्यन् नक्तंदिवमपि दूयेत खिद्यमानः कंचिदुपायं चिन्तयामास । अस्ति यदिदं मदीयभवने समस्तसुरासुरस्तुतसारम्, अशेषभूमिपालैरसंभावितचोलनम्, शांभवधनुस्तदेतदुद्धृत्य सम्यगवानिपालेषु यः सज्यीकरिष्यति तदलंक्रियेयं मदीयपुत्रेति प्रतिज्ञाय समावर्जितेषु मध्यमलोकपालेषु विलोक्य विन्ध्यमन्दरसमानसारं धनुर्वरमाभिवाद्य यथागतेषु न कोऽपि मौर्वीसमारोपणपारीणो बभूव । तदनु बहोः कालाज्जनकयज्ञदिदृक्षया समागतेन कौशिकमुनिना सह समागतः सलक्ष्मणो रामो मुनिवचनमुदितजनकदर्शितं कार्मुकं सविलासमेव सज्यीचकार । अथ नितान्तसंतुष्टेन जनकेन

दीयमानां न तु तदा प्रतिजग्राह राघवः ।
अविज्ञाय पितुश्छन्दमयोध्याधिपतेः प्रभोः ॥

अत्र जीवति पितरि तदाज्ञां विना न किमपि कर्तव्यमित्युक्तोऽर्थः प्राक्प्रपञ्चितः। ततः किल तत्क्षणप्रहितदूतवचनाकर्णनसमुदीर्णपूर्णहर्षेण वसिष्ठादिभिः सह सत्वरमानीतेन दशरथेन समुज्जृम्भिते विवाहसंरम्भे प्रहृष्टचेतसा।

मम पित्रा त्वहं दत्ता रामाय विदितात्मने।
मम चैवानुजा साध्वी ऊर्मिला प्रियदर्शना॥

भार्यार्थे लक्ष्मणस्यापि पित्रा दत्ता मम स्वयम्।
एवं दत्तास्मि रामाय तदा तस्मिन्स्वयंवरे॥

इति यथातथमखिलमपि स्वयंवरवृत्तमनसूयायै निवेदयामास॥

एकोनविंशत्यधिकशततमे— तदनु जनकनन्दिनीवचनाभिनन्दिता भगवत्यनसूया परिष्वज्य बाहुभ्यामाघ्राय च मूर्धनि। सादरं भुवि भगवानरविन्दबान्धवः चरमाचलशिखरं परिष्कुरुते।

संप्रवृत्ता निशा सीते नक्षत्रसमलंकृता ।
ज्योत्स्ना प्रावरणश्चन्द्रो दृश्यतेऽभ्युदितेऽम्बरे ॥

गम्यतामनुजानामि रामस्यानुचरी भव ।

अनेन पत्न्या रात्रौ भर्तृसमीप एव शयनं कर्तव्यमिति सूचितम् । तथा च तच्छेषो बोधायनः— 'तस्याः सह पत्न्या पूर्वरात्रा उपसंवेशनम् अर्धरात्रादधः शयनम् आ ब्रह्ममुहूर्तात् । अथोपोत्थाय नित्यान्यारभते' इति । भर्तुः समीपशयनाकरणेन दोषमाह मनुः— 'पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् । स्वप्नोऽन्यगेहवासश्च नारीणां दूषणानि षट् ॥' इति । अस्यार्थः पानं मद्यादेः दुर्जनसंसर्गः परदारिकसंभाषणादि पत्या च विरहः पतिशयनदेशादन्यत्र शयनम् अटनम् परगृहादौ स्वप्नः अकाले अन्यगेहवासः स्फुटः इति । तदनुजानामि गम्यतां रघुवरपरिसरमङ्गरागादिभिरलंकुरु तवाङ्गयष्टिमिति सीतामुवाच । सीताप्यनसूयावचनेन दिव्याङ्गरागवसनभूषणादिभिरलंकृतनिजतनुलता पुनरपि तामभिप्रणम्य रामान्तिकमागत्य सर्वमपि वृत्तं निवेदयामास । रामोऽपि

तपस्विनीदत्तमुत्तमं प्रीतिदानमवलोक्य लक्ष्मणेन सह सहृष्टमनास्तदाश्रम एव तां निशां विगमय्य प्रभातायां निशीथिन्यां कृतपूर्वाह्निकः हुताग्निहोत्रान्मुनीन् गमनायामन्त्रयामास । ततः प्रस्थितौ रामलक्ष्मणौ संवीक्ष्य

तावूचुस्ते वनचरास्तापसा धर्मचारिणः ।
रक्षांसि पुरुषादीनि नानारूपाणि राघव ॥

वसन्त्यस्मिन्महारण्ये व्यालाश्च रुधिराशनाः ।
उच्छिष्टं वा प्रमत्तं वा तापसं धर्मचारिणम् ॥

अदन्त्यस्मिन्महारण्ये तान्निवारय राघव ।

अत्रोच्छिष्टादिनिमित्ते सति पुरुषं रक्षांसि प्रधर्षयन्तीति उक्तम् । तथा चानुशासनिके— प्रमथान्प्रति देववचनम्— भवन्तो वै महाभागा अपरोक्षनिशाचराः । उच्छिष्टानशुचीन्क्षुद्रान् कथं हिंसथ मानवान् । श्रोतुमिच्छामि युष्माकं सर्वमेतन्निशाचराः । प्रमथा ऊचुः— मैथुने सदोच्छिष्टाः कृते चैवाधरोत्तरे । मोहान्मांसानि

स्थादेव वृक्षमूले च यः स्वपेत् ॥ आमिषं शीर्षतो यश्च पादतो यश्च संविशेत् । एते उच्छिष्टकाः सर्वे बहु च्छिद्राश्च मानवाः ॥ उदके चाप्यमेध्यानि श्लेष्माणं च प्रमुञ्चति । एते भक्ष्याश्च वध्याश्च मानुषा नात्र संशयः । एवंशीलसमाचारान् धर्षयामो हि मानवान्' इति । अतः पुरुषेणाशुचिना न भवितव्यमिति सिद्धम । तथा चापस्तम्बः—'शक्तिविषयेन मुहूर्तमप्यप्रयतः स्यात्' ।

इतीव तैः प्राञ्जलिभिस्तपस्विभिः
  द्विजैः कृतस्वस्त्ययनः परंतपः ।
वनं सभार्यः प्रविवेश राघवः
  सलक्ष्मणः सूर्य इवाभ्रमण्डलम् ॥



ये धर्मैकनिसर्गसिद्धरुचयो ये वेदवेद्ये परे
  पुंसि ब्रह्मणि मैथिलीसहचरे भक्ता रघूणां वरे ।
ये वा कौतुकिनो रघूद्वहकथाशैलीसमाकर्णने
  ये वा मर्मविदस्त एतदुररीकुर्वन्तु तैस्तैर्गुणैः ॥

प्रतिदिनमपि श्रीयज्ञेशप्रसादमुपेयुषा
गुरुवरकृपाधाम्ना श्रीमत्त्रियम्बकयज्वना ।
महति रचितेऽयोध्याकाण्डे द्वितीय इहर्षिणा
प्रकटितमिदं धर्माकूतं यथामति गृह्यताम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये
चतुर्विंशतिसहस्रिकायां संहितायाम्
**अयोध्याकाण्डः समाप्तः ॥**



TANJORE SARASWATI MAHAL LIBRARY SERIES No 70.

# ॥ धर्माकूतम् ॥

## ( आरण्यकाण्डः )

# DHARMĀKŪTAM

AN ENCYCLOPAEDIC COMMENTARY ON
SRIMAD RAMAYANA

## (ĀRAṆYA KĀṆḌA)




MADRAS GOVERNMENT ORIENTAL SERIES

1955

Rs. 4/-

4/5

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

TANJORE SARASWATI MAHAL LIBRARY SERIES No 70.

# DHARMĀKŪTAM

AN ENCYCLOPAEDIC COMMENTARY ON
SRIMAD RAMAYANA

BY

TRYAMBAKARAYAMAKHIN

## ĀRANYA KĀNDA

*Edited with an introduction and notes*

BY

GĀNAPATA
SRI. K. S. SUBRAHMANYA SASTRY,
PANDIT,
Saraswati Mahal Library, TANJORE.

PUBLISHED BY
SRI. S. GOPALAN, B. A., B. L.,
Honorary Secretary for the Administrative Committee,
T. M. S. S. M. Library. TANJORE.

*1955.*

*Price Rs 4-0-0*

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीः ॥

इदं किल

श्रीमद्रामायणगतनिखिलधर्मतत्वावबोधकम्

# ॥ धर्माकूतम् ॥

नाम व्याख्यानम्

## आरण्यकाण्डीयम्

श्रीमत्तञ्जपुराधीश्वर शाहजिमहाराजामात्येन

**श्रीमत्त्यम्बकरायाध्वरीन्द्रेण**

विरचितम् ।

श्रीमत्तञ्जपुरी श्रीसरस्वतीमहालय पण्डितेन

गाणेशाद्वैतिवरेण

**श्री· क्षे· शं· सुब्रह्मण्यशास्त्रिणा**

परिष्कृतम् ।

श्रीमत्तञ्जपुरी विराजमान श्रीमत्सरस्वतीमहालय कार्यदर्शिना

**श्री· एस्. गोपालन्, बि· ए·, बि. एल्.,**

महाशयेन

प्रकाशितं च सत् विजयते ॥

१९५५

मूल्यं रु. ४.

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# PREFACE.

The present publication, namely, DHARMĀ KŪTAM–ĀRANYAKĀNḌAM is the part relating to Āranya kānḍam of the commentary on Srīmad Rāmāyana of Vālmiki by Sri Tryambakarāyamakhi, the versatile scholar and minister of King Shāhji (1684-1710) and King Serfoji II (1711-1728) of Tanjore. There are many commentaries on Srīmad Rāmāyana, but this commentary is unique among them. It has been written with a special purpose, namely to show that Rama's life is intended to serve as an example of how every individual has to conduct himself in this world of perennial conflict of duties and desires. The author therefore takes up every situation in which a question relating to Dharma S'āstra or the 'Science of Life' presents itself for solution, and attempts to show that the conduct of the hero satisfies the considered views of the texts of Dharma found in the Vēdas, the Smṛitis, Purānas and Sūtras. As subjects allied to Dharma, questions relating to the several arts and sciences that form part of a cultured man's make-up are also taken up for consideration. One notable feature of the discussions in this commentary is that they are always exhaustive of the subject dealt with, and entitle it to be called 'an Encyclopaedia of Indian Culture'.

The Bāla and Ayōdhya Kānḍas of this commentary were published by S'ri Vāni Vilās Press, Srīrangam some 30 years ago. The Manuscript of this commen-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

tary is to be found only in this library, and we have a special obligation and privilege to bring out all the other Kāṇḍas. We have already published in 1952 the Sundara Kāṇḍa. Āranya Kānda is now presented in this volume. The other Kāṇḍas will soon be taken up for publication.

The Editor, Mantramūrti Sri K. S. Subramanya Sastri, Sanskrit Pandit of our Library, has spared no pains in editing this work. He has a very intimate acquaintance with the text of Mahābhārata. When about the year 1925, the B. O. R. Institute, Poona, began their magnum opus, the critical edition of Mahābhārata, it was found that our Library had the full text of 6 rescensions of the great epic represented by a number of manuscripts ranging from 7 to 20 for the various portions. The huge task of collating all the manuscripts was undertaken by Sri K. S. Subramanya Sastri and he completed the collation by working continuously over the task for 14 years. He has thus acquired a rare familiarity with the several parts of Sri Mahābhārata, the store-house of our Dharma literature, which specially fits him for editing Dharmakūtam dealing exhaustively with the pros and cons of DHARMA. He has brought to bear his deep knowledge of the several subjects dealt with in the encyclopaedic Epic on the editing of the text of this commentary, and has with great labour picked out all the references from the seventy and odd works cited in the work, and given them as foot notes. A list of the authorities cited, and analysis of the subjects discussed in the commentary are given in the introductory part of the

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

work. Our thanks are due to the learned editor for his highly valuable services.

It is hoped that this publication will be found useful by all students of our culture and by research-scholars in the field of Dharma-S'āstra.

Our thanks are due to the Government of Madras for their timely and liberal grants which have enabled us to publish this and other valuable manuscripts of the Library.

Sarasvati Mahal,
Tanjore.
21—11—1955.

S. GOPALAN,
*Honorary Secretary.*

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीः ॥

## ॥ प्रस्तावना ॥

यो नरो मृगतृष्णातो वञ्चितस्तस्य तु स्वयम् ।
वञ्चितो मृगतृष्णातो यस्तं नरमुपास्महे ॥

अयि भो भारतभूमिजनुषो विदुषामग्रेसराः! पश्यत यूयं भारतधरणिमहिमगरिमाणं; यदनितरधरणिसाधारणमियं निरीक्षते निखिलमपि भुवनं धर्मैकतानेतिहासद्वयचक्षुःप्रकाशेनोपहसन्ती सुधर्मामपि। रामायणभारताख्यस्य तदीयचक्षुर्द्वयस्य च धर्मैकतानत्वं विदितचरमेव विपश्चिद्विपश्चिमानाम् । इयांस्तु भेदो, यद्भारतेन बहुकथाप्रस्तावेन बहवो धर्माः प्रकाशिताः, रामायणेनैकचरितालम्बनेन सर्वेऽपि धर्मा इति। किञ्च भारते परमपुरुषसाहाय्येन धर्माः प्रकाशिताः, रामायणे तु परमपुरुषेणैव स्वयं धर्माः प्रकाशिता इति च 'दक्षिणेऽक्षन्पुरुषः' इति श्रुतिप्रामाण्यात्सिद्धं रामायणस्य दक्षिणाक्षित्वं । तादृशस्य महाकाव्यस्य रामायणस्य परमपुरुषाचरितनिखिलधर्मप्रकाशकस्य नाकारि कैश्चिदपि धर्मैकतानत्वमवष्टभ्य व्याख्यानमिति मन्वानाः किल भगवन्तो व्याख्यानमिदमकुर्वन्धर्माकूतमिति श्रीत्र्यंबकमखिनः; यत्र तु प्रकाशन्ते राजस्त्रीपुरुषवर्णाश्रमादिनिखिलधर्मा अपि ॥

तस्य च व्याख्यानस्य बालायोध्यासुन्दरकाण्डानां मुद्रापितत्वादिदमारण्यकाण्डीयं मया यथामति संशोध्य मुद्रापितं भवति। काण्डे चास्मिन् व्याख्यात्रा प्रमाणीकृता ग्रन्थाः षट्सप्ततिः। तेषां नामानि तु पुरस्तात्पट्टिकायां सूचितानि भवन्ति। रसिकतल्लजकृते च कृततत्तत्स्थलनिर्देशं तत्तद्ग्रन्थगतवाक्यानुपूर्वी विमृश्य सपरिश्रमं निर्दिष्टा भवति तत्तत्पुटाधोभागे। एतद्व्याख्याकोशभूतश्च पत्रनिचयः 1048 संख्यांकितो

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भवति। यदत्र भवति शोधितमुद्रापितेपि पौरुषेयमतिसंभवो मन्तुस्तच्च क्षन्तुमर्हन्ति सन्तः सुहृत्तमा इति सप्रश्रयमहमभ्यर्थये ॥

श्रीगणेशार्पणमस्तु

क्षे. शं. सुब्रह्मण्यशास्त्री.
गाणेशाद्वैती।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ॥ धर्माकूते प्रमाणतया आदृतग्रन्थानां सूचिका ॥




१. अर्णवः
२. अष्टाङ्गहृदयम्
३. आपस्तम्बगृह्यसूत्रम्
४. आपस्तम्बधर्मसूत्रम्
५. आपस्तम्बश्रौतसूत्रम्
६. आश्वलायनगृह्यसूत्रम्
७. आश्वलायनश्रौतसूत्रम्
८. ईशावास्योपनिषत्
९. उत्तररामचरितम्
१०. उत्पलपरिमळः
११. ऐतरेयब्राह्मणम्
१२. ऐतरेयोपनिषत्
१३. काठकोपनिषत्
१४. कात्यायनस्मृतिः
१५. कामन्दकनीतिसारः
१६. कूर्मपुराणम्
१७. कौषीतकिब्राह्मणोपनिषत्
१८. खादिरगृह्यसूत्रम्
१९. गृह्यपरिभाषा
२०. गौतमधर्मसूत्रम्
२१. चतुर्विंशतिमतम्
२२. छागलेयस्मृतिः
२३. छान्दोग्योपनिषत्
२४. जामदग्न्यस्मृतिः
२५. ज्योतिर्निबन्धः
२६. तैत्तिरीयब्राह्मणम्
२७. तैत्तिरीयसंहिता
२८. तैत्तिरीयारण्यकम्
२९. दक्षस्मृतिः
३०. नारदस्मृतिः
३१. नीतिसारः
३२. नैषधम्
३३. पराशरस्मृतिः
३४. पातञ्जलयोगसूत्रम्
३५. पुराणसारः
३६. प्रपद्ब्राह्मणम्
३७. प्राजापत्यस्मृतिः
३८. बोधायनगृह्यसूत्रम्
३९. बोधायनश्रौतसूत्रम्
४०. बोधायनस्मृतिः
४१. बृहदारण्यकोपनिषत्, भाष्यं च
४२. बृहस्पतिस्मृतिः
४३. ब्रह्मसूत्रं, भाष्यं च
४४. भारद्वाजसंहिता


CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

४५. भृगुस्मृतिः
४६. मनुस्मृतिः
४७. महाभारतम
४८. मार्कण्डेयपुराणम्
४९. मुण्डकोपनिषत्
५०. मुहूर्तमार्तण्डः
५१. यमस्मृतिः
५२. याज्ञवल्क्यस्मृतिः
५३. रघुवंशः
५४. रत्नमाला
५५. रामायणतात्पर्यनिर्णयः
५६. वराहसंहिता
५७. वसिष्ठस्मृतिः
५८. वाजसनेयिब्राह्मणम्
५९. वामनकारिका
६०. विष्णुपुराणम्
६१. वृद्धपराशरस्मृतिः
६२. वृद्धवसिष्ठस्मृतिः
६३. व्यासस्मृतिः
६४. शङ्खस्मृतिः
६५. शाकटायनस्मृतिः
६६. शाकुन्तलम्
६७. शातातपस्मृतिः
६८. शास्त्रदीपिका
६९. षड्विंशब्राह्मणम्
७०. संग्रहः
७१. संवर्तस्मृतिः
७२. सर्वसिद्धान्तसारसमुच्चयः
७३. सांख्यायनपरिशिष्टम्
७४. स्कान्दम्
७५. स्मृत्यर्थसारः
७६. हारीतस्मृतिः



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीः ॥

श्रीगणेशाय नमः ।

## श्रीधर्माकूते आरण्यकाण्डे प्रतिपाद्यमानविषयाः ॥

---



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-0. Prof. Satya Vrat Shastri Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# धर्माकूते आरण्यकाण्डे शुद्धाशुद्धपाठः ॥



| पुटसंख्या | पंक्तिसंख्या | शुद्धपाठः | अशुद्धपाठः |
|---|---|---|---|
| १० | २६ | 5. ११२ सर्गे | ५. |
| ४६ | १२ | निग्रहणे | ग्रहणे |
| ६२ | २७ | ८३. | ४३ |
| ६३ | २ | सोमश्च | सामश्च |
| ९१ | २ | सस्यं | सस्य |
| ९२ | ८ | त्स्विष्ट | स्स्विष्ट |
| ९४ | १४ | श्वासान्ध | श्वसान्ध |
| ९७ | ११ | पर्व | पर्य |
| १०९ | १९ | त्रयोविंशचतुर्विंशसर्गौ | त्रयोविंशसर्गः |
| ११४ | १० | भङ्गः | भङ्ग |
| ११५ | १५ | भुतानि | भूतानि |
| ११९ | ६ | शशः | शश |
| १२४ | २१ | लिप्स | लित्स |
| १२५ | ६ | विद्युतः | विद्यतः |
| १३३ | ४ | त्रयोविंशचतुर्विंशसर्गौ | चतुर्विंशः सर्गः |
| १६९ | ६ | आमादयो | ओमादया |
| १६९ | १७ | मयं | मय |
| १९८ | १६ | न्यत्रस्थातुं | न्यवस्थातुं |
| २०७ | १६ | सोढ्वैव | सौढ्वैव |
| २३० | ६ | चतुस्सप्ततितमाः सर्गाः | तमौ सर्गौ |
| २३१ | १७ | उपग्रहः | उपग्रह |
| १४६ | २३ | द्वित्रिचतुस्सप्ततितमाः सर्गाः | चतुस्सप्ततितमः सर्गः |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीः ॥

॥ श्रीगणेशाय नमः ॥

॥ श्रीरामचन्द्राय नमः ॥

# ॥ धर्माकूतम् ॥

## ॥ आरण्यकाण्डः ॥

---

अथ भगवान् वाल्मीकिः अयोध्याकाण्डे पित्राज्ञापरिपालनादिरामचरितवर्णनमुखेन सर्ववर्णसाधारणधर्मान् प्रतिपाद्य विराधादिराक्षसनिग्रहशरभङ्गादिमुनिजनपरिपालनादिरामचरितवर्णनमुखेन दुष्टनिग्रहशिष्टपरिपालनात्मकक्षत्रियासाधारणधर्मप्रतिपादनार्थं आरण्यकाण्डमारभते—

प्रविश्य तु महारण्यं दण्डकारण्यमात्मवान् ।
ददर्श रामो दुर्धर्षस्तापसाश्रममण्डलम् ॥ १ ॥

शरण्यं सर्वभूतानां सुसंमृष्टाजिरं सदा ।
मृगैर्बहुभिराकीर्णं पक्षिसंघैस्समाकुलम् ॥ ३ ॥

पूजितं चोपनृत्तं च नित्यमप्सरसां गणैः ।
विशालैरग्निशरणैः स्रुग्भाण्डैरजिनैः कुशैः ॥ ४ ॥

समिद्भिस्तोयकलशैः फलमूलैश्च शोभितम् ॥ ४= ॥

फलमूलाशनैर्दान्तैश्चीरकृष्णाजिनाम्बरैः ॥
सूर्यवैश्वानराभैश्च पुराणैर्मुनिभिर्वृतम् ॥ ७ ॥

पुण्यैश्च नियताहारैः शोभितं परमर्षिभिः ।
तद्ब्रह्मभुवनप्रख्यं ब्रह्मघोषनिनादितम् ।
ब्रह्मविद्भिर्महाभागैः ब्राह्मणैरुपशोभितम् ॥ ८ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तथाऽग्रे षष्ठे सर्गेऽपि —

वैखानसा वालखिल्याः संप्रक्षाला मरीचिपाः ।
अश्मकुट्टाश्च बहवः पत्राहाराश्च तापसाः ॥ २ ॥

दन्तोलूखलिनश्चैव तथैवोन्मज्जकाः परे ।
गात्रशय्या अशय्याश्च तथैवाभ्रावकाशकाः ॥ ३ ॥

मुनयस्सलिलाहारा वायुभक्षास्तथाऽपरे ।
आकाशनिलयाश्चैव तथा स्थण्डिलशायिनः ॥ ४ ॥

तथो[व्रतो]पगामिनो दान्तास्तथार्द्रपटवाससः ।
सजपाश्च तपोनित्याः तथा पंचतपोन्विताः ॥ ५ ॥

सर्वे ब्राह्मया श्रिया जुष्टा दृढयोगास्समाहिताः ॥ ५= ॥
सोऽयं ब्राह्मणभूयिष्ठो वानप्रस्थगणो महान् ॥ १४= ॥

इत्यनेन वानप्रस्थैर्वनवासिभिः मुनिभिः फलमूलाशनभूशयनादिनियमवद्भिः स्थेयमिति सूचितम् ॥

तथा च *मनुः — 'ग्रामादरण्यं निष्क्रम्य निवसेन्नियतेन्द्रियः । मुन्यन्नैर्विविधैर्मेध्यैः शाकमूलफलेन वा ॥ एतानेव महायज्ञान् निर्वपेद्विधिपूर्वकम् । वसीत चर्म चीरं वा सायं स्नायात् प्रगे तथा ॥ जटाश्च बिभृयान्नित्यं श्मश्रुलोमनखानि च । यद्भक्षयेत्ततो दद्यात् बलिं भिक्षां च शक्तितः ॥ अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतान् । स्वाध्याये नित्ययुक्तः स्यात् दान्तो मैत्रः समाहितः ॥ दाता नित्यमनादाता सर्वभूतानुकम्पनः । वैतानिकं च जुहुयादग्निहोत्रं यथाविधि ॥ दर्शमस्कन्दयन्पूर्वं [पर्व] पौर्णमासं च योगतः । ऋक्षेष्ट्याग्रयणं चैव चातुर्मास्यानि चाहरेत् ॥ तुरायणं च क्रमशः

* षष्ठेऽध्याये ४—२२ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दाक्षस्यायनमेव च । वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः ॥ पुरोडाशां-श्चरूंश्चैव निर्वपेद्विधिपूर्वकम् । देवताभ्यश्च तद्धुत्वा वन्यं मेध्यतरं हविः ॥ शेषमात्मनि युञ्जीत लवणं च स्वयं कृतम् । स्थलजौदकशाकानि पुष्पमूल-फलानि च ॥ मेध्यवृक्षोद्भवान्यद्यात् स्नेहांश्च फलसंभवान् । वर्जयेन्मधु-मांसानि भौमानि कवकानि च ॥ भूस्तृणं शिग्रुकं चैव श्लेष्मातकफलानि च। त्यजे-दाश्वयुजे मासे मुन्यन्नं पूर्वसंचितम् ॥ जीर्णानि चैव वासांसि शाकमूलफलानि च। न फालकृष्टमश्नीयात् उत्सृष्टमपि केनचित् ॥ न ग्रामजातान्यार्तोऽपि पुष्पाणि च फलानि च । अग्निपक्वाशनो वा स्यात् कालपक्वभुगेव वा ॥ अश्मकुट्टो भवेद्वाथ दन्तोलूखलिकोऽपि वा । सद्यः प्रक्षालको वा स्यात्स्याद्वा षष्ठाष्ट-कालिकः ॥ चान्द्रायणविधानैर्वा शुक्लकृष्णे च वर्तयेत् । पक्षान्तयोर्वा-ऽप्यश्नीयाद्यवागूं क्वथितां सकृत् ॥ पुष्पमूलफलैर्वापि केवलैर्वर्तयेत्सदा । काल-पक्वैः स्वयं शीर्णैः वैखानसमते स्थितः ॥ भूमौ विपरिवर्तेत तिष्ठेद्वा प्रपदैर्दिनम् । स्थानासनाभ्यां विहरेत्सवनेषूपयन्नपः ॥ ग्रीष्मे पंचतपास्तु स्यात् वर्षास्वभ्रावकाशकः । आर्द्रवासास्तु हेमन्ते क्रमशो वर्धयंस्तपः ॥ उपस्पृशंस्त्रिषवणं पितॄन् देवांश्च तर्पयेत् । तपश्चरंश्चोग्रतरं शोषयेद्देहमात्मन ॥ अग्नीन्स्वात्मनि वैतानान्समारोप्य यथाविधि । अनग्निरनिकेतः स्यान्मुनिर्मूल-फलाशनः ॥ अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः । शरणेष्वममश्चैव वृक्षमूलनिकेतनः ॥ तापसेष्वपि विप्रेषु यात्रिकं भैक्षमाचरेत् । गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ॥ ग्रामादाहृत्य वाऽश्नीयात् अष्टौ ग्रासान्वने वसन् । प्रतिगृह्य पुटेनैव पाणिना शकलेन वा ॥ एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन् । विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः ॥ ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः । विद्यातपोविवृद्ध्यर्थं शरीरस्य च [शु]सिद्धये ॥ अपराजितां वाऽऽस्थाय व्रजेद्दिशमजिह्मगः। आ निपाताच्छरीरस्य युक्तो वार्यनिलाशनः ॥ आसां महर्षिचर्याणां त्यक्त्वाऽन्यतमया तनुम् । वीतशोकभयो विप्रो ब्रह्मलोके महीयते ॥' इति ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

1 विष्णुपुराणे — 'पर्णमूलफलाहारः केशश्मश्रुजटाधरः । भूमिशायी भवेत्तत्र मुनिः सर्वातिथिर्नृप ।। चर्मकाशकुशैः कुर्यात् परिधानोत्तरीयके । तद्वत्त्रिषवणं स्नानं शस्तमस्य नरेश्वर ।। देवताभ्यर्चनं होमः सर्वाभ्यागतपूजनम् । भिक्षाबलिप्रदानं च शस्तमस्य नरेश्वर ।। वन्यस्नेहेन गात्राणामभ्यङ्गस्तस्य शस्यते । तपस्यतश्च राजेन्द्र शीतोष्णादिसहिष्णुता ।। यस्त्वेतां नियतश्चर्यां वानप्रस्थश्चरेन्मुनिः । स दहत्यग्निवद्दोषान् जयेल्लोकांश्च शाश्वतान् ।।' इति ।।

2 बोधायनोऽपि — 'अथ वानप्रस्थस्य द्वैविध्यम् — पचमानका अपचमानकाश्चेति । तत्र पचमानकाः पंचविधाः— सर्वारण्यकाः, वैतुषिकाः, कन्दमूलभक्षाः, फलभक्षाः, शाकभक्षाश्चेति । तत्र सर्वारण्यका [नाम] द्विविधाः द्विविधमरण्यमाश्रयन्तः इन्द्रावसिक्ताः रेतोवसिक्ताश्चेति । तत्रेन्द्रावसिक्ता नाम वल्लीगुल्मलतावृक्षाणामानयित्वा श्रपयित्वा सायंप्रातरग्निहोत्रं हुत्वा यत्यतिथिव्रतिभ्यश्च दत्वाथेतरच्छेषभक्षाः । रेतोवसिक्ता नाम मांसं व्याघ्रवृकश्येनानां अन्यतमेन हतमानयित्वा श्रपयित्वा सायंप्रातरग्निहोत्रं हुत्वा यत्यतिथिव्रतिभ्यश्च दत्वाथेतरच्छेषभक्षाः ।।

वैतुषिकास्तुषधान्यवर्जं तण्डुलानानयित्वा श्रपयित्वा सायंप्रातरग्निहोत्रं हुत्वा यत्यतिथिव्रतिभ्यश्च दत्वा अथेतरच्छेषभक्षाः । कन्दमूलफलशाकभक्षाणामप्येवमेव ।।

पंचैवापचमानकाः— उन्मज्जकाः, प्रवृत्ताशिनः, मुखेनादायिनः, तोयाहाराः, वायुभक्षाश्चेति । तत्रोन्मज्जका नाम लोहाश्मकरणवर्जम् । हस्तेनादाय प्रवृत्ताशिनः । मुखेनादायिनः मुखेनाददते । तोयाहाराः [ केवलं तोयाहाराः ] । वायुभक्षाः निराहाराश्चेति ।।

1 तृतीये अंशे नवमाध्याये १९—२३ श्लोकाः ।
2 तृतीयप्रश्ने तृतीयखण्डे १-२३ सूत्राणि ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शास्त्रपरिग्रहः सर्वेषां ब्रह्मवैखानसानाम् । न द्रुह्येत[1] दंशमशकादीना-महिंसकः तापसो भवेत् । वनप्रतिष्ठस्सन्तुष्टश्चीरचर्मजलप्रियः । अति-थीन् पूजयेत्पूर्वं काले त्वाश्रममागतान् । देवविप्राग्निहोत्रे च युक्तस्तपसि तापसः ।। कृच्छ्रां वृत्तिमसंहार्यां सामान्यां मृगपक्षिभिः । तदर्हजनसंहा[भा]रां काषायकटुकाश्रयाम् ।। परिगृह्य शुभां वृत्तिमेतां दुर्जनवर्जिताम् । वनवास-मुपाश्रित्य ब्राह्मणो नावसीदति ।। मृगैस्सह परिस्पन्दस्संवासस्तेभिरेव च । तैरेव सदृशी वृत्तिः प्रत्यक्षं स्वर्गलक्षणम् ।। ' इति ।।

[2] याज्ञवल्क्यः—'सुतविन्यस्तपत्नीकस्तया वानुगतो वनम् । वान-प्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत् ।।'

छागलेयः — ' सपत्नीकस्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् । '

[3] कूर्मपुराणेऽपि — ' एकपादेन तिष्ठेत मरीचीन्वा पिबेत्तदा । पंचाग्निर्धूमपो वा स्यादूष्मपः सोमपोऽपि वा ।। पयः पिबेच्छुक्लपक्षे कृष्णपक्षे च गोमयम् । शीर्णपर्णाशनो वा स्यात् कृच्छ्रैर्वा वर्तयेत्सदा ।। अथर्व-शिरसोऽध्येता वेदान्ताभ्यासतत्परः । यमान् सेवेत सततं नियमांश्चाप्यतंद्रितः ।। जितेन्द्रियो जितक्रोधः तत्वज्ञानविचिन्तकः । ब्रह्मचारी भवेन्नित्यं न पत्नीं प्रतिसंश्रयेत् ।। यस्तु पत्न्या वनं गत्वा मैथुनं कामतश्चरेत् । तद्व्रतं तस्य लुप्येत प्रायश्चित्तीयते द्विजः । नक्तं चान्नं समश्नीयात् दिवा वाश्नीत शक्तितः ' ।। इति ।।

[4] श्रीमदानुशासनिके उमामहेश्वरसंवादे उमां प्रति महेश्वर-वचनम् — 'वानप्रस्थेषु यो धर्मस्तं मे शृणु समाहिता । श्रुत्वा चैकमना

---

1. 'दंशमशकान् हिमवान् तापसः' इति मुद्रितपाठः ।
2. प्रायश्चित्ताध्याये 45 श्लोकः ।
3. उत्तरार्धे 28 अध्याये 30—33 श्लोकाः 15—17 श्लोकाश्च ।
4. 142 अध्याये 4--19 श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

देवि धर्मबुद्धिधरा भव ॥ संसिद्धैर्नियतैः सद्भिः वनवासमुपागतैः । वानप्रस्थैरिदं कर्म कर्तव्यं शृणु यादृशम् ॥ त्रिकालमभिषेकं च पितृदेवार्चनं तथा । अग्निहोत्रपरिस्यन्दद्दृष्टिहोमाविधिस्तथा ॥ नीवारग्रहणं चैव फलमूलनिषेवणम् । इङ्गुदैरण्डतैलानां स्नेहार्थे च निषेवणम् ॥ योगचर्याकृतैस्सिद्धैः कामक्रोधविवर्जितैः । वीरशय्यामुपासद्भिः वीरस्थानोपसेविभिः ॥ युक्तैर्योगवहैस्सद्भिः ग्रीष्मे पंचतपैस्तथा । मण्डूकयोगनियतैर्यथान्यायं निषेविभिः ॥ वीरासनरतैर्नित्यं स्थण्डिले शयनं तथा । शीततोयाग्नियोगश्च कर्तव्यो धर्मबुद्धिभिः ॥ अब्भक्षैर्वायुभक्षैश्च शैवलोत्तरभोजनैः । अश्मकुट्टैस्तथा दान्तैः संप्रक्षालैस्तथा परैः॥ चीरवल्कलसंवीतैर्मृगचर्मनिवासिभिः । कार्या यात्रा यथाकालं यथाधर्मं यथाविधि ॥ वने नित्यैर्वनचरैर्वनजैर्वनगोचरैः । वनं गुरुमिवासाद्य वस्तव्यं वनजीविभिः ॥ तेषां होमक्रिया धर्मः पंचयज्ञनिषेवणम् । भागं च पंचयज्ञस्य वेदोक्तस्यानुपालनम् ॥ अष्टमीयज्ञपरता चातुर्मास्यनिषेवणम् । पौर्णमासादयो यज्ञा नित्ययज्ञस्तथैव च ॥ विमुक्ता दारसंयोगैर्विमुक्तास्सर्वसंकरैः । विमुक्तास्सर्वपापैश्च चरन्ति मुनयो वने ॥ स्रुग्भाण्डपरमा नित्यं त्रेताग्निशरणास्सदा । सन्तस्सत्पथनित्या ये ते यान्ति परमां गतिम् ॥ ब्रह्मलोकं महापुण्यं सोमलोकं च शाश्वतम् । गच्छन्ति मुनयस्सिद्धाः सत्यधर्मव्यपाश्रयाः ॥ एष धर्मो मया देवि वानप्रस्थाश्रितः शुभः । विस्तरेणाथ संपन्नो यथास्थूलमुदाहृतः ॥' इति ॥

तथा *तत्रैव स्थलान्तरे —— 'निवृत्तिरुपभोगेषु गोरसानां शमे रतिः । स्थण्डिले शयने योगः शाकपर्णनिषेवणम् ॥ फलमूलाशनं वायुरापः शैवलभक्षणम् । ऋषीणां नियमा ह्येते यैर्जयन्त्याजितां गतिम् ॥' इति ।

एवमन्येऽपि वानप्रस्थधर्माः केचन अयोध्याकाण्डेऽपि प्रसङ्गाल्लिखिताः ॥

* आनुशासनिके पर्वणि 141 अध्याये 111, 112 श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तद्दृष्ट्वा राघवः श्रीमान् तापसाश्रममण्डलम् ।
अभ्यगच्छन्महातेजा विज्यं कृत्वा महद्धनुः ॥ ९ ॥

अनेन राज्ञा विनीतवेषेणैवाश्रमे प्रवेष्टव्यमिति सूचितम् । तच्च प्राक् भरतस्य भरद्वाजाश्रमप्रवेशे प्रपंचितम् ॥

अथ सकलकलासहितं सुधाकरमिव सकलजनानन्दकरं रामचन्द्रमवलोक्य दिव्येन चक्षुषा परिकलिततदीयवृत्तान्ताः महर्षयः,

पुष्पं मूलं फलं वन्यं आश्रमं च महात्मनः ।
निवेदयित्वा धर्मज्ञास्ततः प्रांजलयोऽब्रुवन् ॥ १६ ॥

धर्मपालो जनस्यास्य शरण्यस्त्वं महायशाः ।
पूजनीयश्च मान्यश्च राजा दण्डधरो गुरुः ॥ १७ ॥

इन्द्रस्यैव चतुर्भागः प्रजा रक्षति राघव ।
राजा तस्माद्वरान् भोगान् भुङ्क्ते लोकनमस्कृतः ॥ १८ ॥

ते वयं भवता रक्ष्या भवद्विषयवासिनः ।
नगरस्थो वनस्थो वा त्वं नो राजा नरेश्वरः ॥ १९ ॥

नन्वत्र 'भवद्विषयवासिनः', 'त्वं नो राजा' इति मुनिगणवचनाद्रामस्य राष्ट्रस्वामित्वमवगम्यते । तदसंगतम् । दशरथं प्रति '[1]पुरं च राष्ट्रं च मही सकानना मया निसृष्टा भरताय दीयताम् । अहं निदेशं भवतोऽनुपालयन्नन्वगमिष्यामि चिराय सेवितुम् ॥' इति रामवाक्येन सशैलवनकाननस्य राज्यस्य भरताय दत्तत्वावगमेन "इक्ष्वाकूणामियं भूमिः सशैलवनकानना । मृगपक्षिमनुष्याणां निग्रहप्रग्रहावपि ॥ तां पालयति धर्मात्मा भरतः सत्यवागृजुः । तस्य धर्मकृतादेशा वयमन्ये च पार्थिवाः । चरामो वसुधां कृत्स्नां धर्मसन्तानमिच्छवः ॥ तस्मिन्नृपतिशार्दूले भरते धर्मवत्सले ॥

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

1. अयोध्या कां. स. ३४. श्लो. ४४

पालयत्यखिलां भूमिं कश्चरेद्धर्मनिग्रहम् ॥ ते वयं धर्मविभ्रष्टं स्वधर्मे परमे स्थिताः । भरताज्ञां पुरस्कृत्य निगृह्णीमो यथाविधि ॥ भरतस्तु महीपालो वयं चादेशवर्तिनः । त्वं तु धर्मादतिक्रान्तः कथं शक्य उपेक्षितुम् ॥' इति [1]किष्किन्धाकाण्डस्थरामवचनपर्यालोचनया भरतप्रेष्यत्वावगमेन च रामस्य राज्यस्वामित्वाभावात् । न च 'त्वं नो राजा' इति ऋषिवचनमुपचरितार्थमिति वाच्यम् । सत्यवचनानामृषीणां वचनस्योपचरितार्थत्वकल्पनायोगात् ॥

तथा '[2]तपस्विनां रणे शत्रून् हन्तुमिच्छामि राक्षसान् । पश्यन्तु वीर्यमृषयः सभ्रातुर्मे तपोधनाः ॥ नैवमर्हथ मां वक्तुमाज्ञाप्योऽहं तपस्विनाम् ।' इत्यादिवचनावगतं राज्यस्वामित्वांगीकारपूर्वकं मुनिजनसंरक्षणप्रतिज्ञाकरणमप्यसंगतं स्यात्, रामस्य राज्याभावादेव रक्षणस्याकर्तव्यत्वात् इति चेन्न । उपभोगार्हग्रामनगरवन्यादिराज्यांशस्य कैकेय्या प्रार्थितस्य भरताय दत्तत्वेऽपि उपभोगानुपयुक्तवनाद्यंशे रामस्य स्वामित्वेन राज्यत्वोक्तौ विरोधाभावात् ॥

तथा चायोध्याकाण्डे भरतं प्रति रामवाक्यम्—[3]'स च प्रमाणं धर्मात्मा राजा लोकगुरुस्तव । पित्रा दत्तं यथाभागमुपभोक्तुं त्वमर्हसि ॥ चतुर्दश समाः सौम्य दण्डकारण्यमाश्रितः । उपभोक्ष्ये तु यद्दत्तं भागं पित्रा महात्मना ॥ [4]त्वं राजा भव भरत स्वयं नराणां वन्यानामहमपि राजराण्मृगाणाम् । गच्छ त्वं पुरवरमद्य संप्रहृष्टः संहृष्टस्त्वहमपि दण्डकान् प्रवेक्ष्ये ॥ छायां ते दिनकरभाप्रबाधमानं वर्षत्रं भरत करोतु मूर्ध्नि शीताम् । एतेषामहमपि काननद्रुमाणां छायां तामतिशयनीं सुखं श्रयिष्ये ॥ शत्रुघ्नः कुशलमतिश्च ते सहायः सौमित्रिर्मम विदितः प्रधानमित्रम् । चत्वारस्तनयवरा वयं नरेन्द्रं सत्यस्थं भरत चराम मा विषादम् ॥' इति ॥

1. १८ सर्गे ६, ६½, ९-११½, २४ श्लोकाः । 2. आरण्यकाण्डे षष्ठे सर्गे २५ श्लोकः २१ श्लोकस्य प्रथमार्धं च । 3. १०४ सर्गे २५, २६ श्लोकौ । 4. १०७ सर्गे १७-१९ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कैकेयीवरस्य उपभोगोपयोगिराज्यविषयत्वमपि, '[1] सूत रत्नसुसंपूर्णा चतुर्विधवला चमूः । राघवस्यानुयात्रार्थं क्षिप्रं प्रतिविधीयताम् ॥ धनकोशश्च यः कश्चित् धान्यकोशश्च मामकः । तौ राममनुगच्छेतां वसन्तं निर्जने वने ॥ यजन्पुण्येषु देशेषु विसृजंश्चाप्तदक्षिणाः । ऋषिभिश्च समागम्य प्रवत्स्यति सुखं वने ॥ भरतश्च महाबाहुरयोध्यां पालयिष्यति । सर्वकामैः पुनः श्रीमान् रामः संसाध्यतामिति ॥' इति दशरथवचनात् भीतायाः कैकेय्याः '[2] राज्यं गतजनं साधो पीतमण्डां सुरामिव । निरास्वाद्यतमं शून्यं भरतो नाभिपत्स्यते ॥' इत्यादिवचनैरवगम्यते । तस्माद्वनांशराजत्वमविरुद्धम् ॥

किं च रामभद्रस्योपद्रवकरणं कैकेय्या अभिप्रेतम् । तथा च विराधेन नीयमानां सीतां पश्यतो रामस्य वाक्यम्— '[3] यदभिप्रेतमस्मासु प्रियं वरवृतं च यत् । कैकेय्यास्तत्सुसंवृत्तं क्षिप्रमद्यैव लक्ष्मण ॥ या न तुष्यति राज्येन पुत्रार्थे दीर्घदर्शिनी । ययाऽहं सर्वभूतानां हितः प्रस्थापितो वनम् ॥ अद्येदानीं सकामा सा या माता मम मध्यमा ।' इति । एवं च तादृशोपद्रवो वनांशपरिपालनेनापि भवतीति तदंशे राजत्वमविरुद्धमेव ॥

किंच रामस्य राजत्वाभावे लवणासुरोपद्रुता ऋषिजना यथा राज्यस्थं रामं शरणं गतास्तथा राज्यस्थं भरतं राजानमेव शरणं गच्छेयुः । रामं चात्र शरणं गताः । अतोऽपि राम एव वनांशे राजा भवति ॥

न च 'पुरं च राष्ट्रं च मही सकानना' इत्यादिवचनैः सकाननाया भूम्याः भरताय दत्तत्वप्रतिपादनविरोध इति वाच्यम् । तस्य दण्डकारण्यव्यतिरिक्तभोगोपयोगिकाननविषयत्वात् । अत एव [4]' सप्त सप्त च वर्षाणि दण्डकारण्यमाश्रितः । अभिषेकमिमं त्यक्त्वा जटाजिनधरो वशी' ॥

1. अयोध्याकाण्डे ३६ सर्गे २, ७, ८, ९ श्लोकाः । 2. सर्गे १२ श्लोकः ।
3. आरण्यकाण्डे २ सर्गे १७, १८ श्लोकौ ।
4. अयोध्याकाण्डे १८ सर्गे ३ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति, '[1] त्वयाऽरण्यं प्रवेष्टव्यं नव वर्षाणि पंच च' इति च कैकेयीवचनं संगच्छते । तस्मादुपभोगानुपयुक्तवनांशाधिपत्यमादाय सकललोकवृत्तान्ताभिज्ञैः ऋषिभिरुक्तं राज्यस्वामित्वं, तदङ्गीकृत्य मुनिजनरक्षणप्रतिज्ञाकरणं च रामस्य उपपन्नमेव ॥

न चैवं '[2] तां पालयति धर्मात्मा भरतः सत्यवागृजुः'। 'तस्य धर्मकृतादेशा वयमन्ये च पार्थिवाः ।' इत्यादिकिष्किन्धाकाण्डस्थरामवचनविरोध इति वाच्यम् । 'त्वं नो राजा' इति ऋषिवचनविरोधेन तेषामन्यार्थपरत्वात् । न च तद्विरोधेन ऋषिवचनान्यथाभाव एव किं न स्यादिति वाच्यम् । '[3] लौकिकानां हि साधूनामर्थं वागनुवर्तते । ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥' इति न्यायेन ऋषिवाक्यान्यथाकरणस्य निषेधात् ॥

किं च उभयोर्विरोधेन अन्यथा [तरस्य] उपचरितार्थत्वकल्पनाप्रसक्तौ यस्यान्यथाकरणे पूर्वोत्तरविरोधो न भवति तस्यैवान्यथाकरणं [यु]उक्तम् । तत्र 'ते वयं भवता रक्ष्याः' इति ऋषिवचनं उपचरितार्थमिति स्वीकृत्य किष्किन्धाकाण्डवचनस्य यथाश्रुतार्थकत्वस्वीकारे भरतः प्रेरकः इति स्यात् । तच्च पूर्वोत्तरविरुद्धम् ॥

तथाहि—**अयोध्याकाण्डे** तावत् भरतः पितृमातृभ्रात्रादिभिः दत्तं, मन्त्रिपुरोहितादिभिश्चानुज्ञातं धर्मतः प्राप्तमपि राज्यं भ्रातृभक्त्या उपेक्ष्य रामानयनाय वने प्रवृत्तः तदनागमननिर्णये सति '[4] अधिरोहार्य पादाभ्यां पादुके हेमभूषिते । एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥' इति प्रार्थनापूर्वकं श्रीरामचन्द्रचरणारविन्दसंस्पृष्टां, रामेण च दत्तां पादुकां संप्राप्य, '[5] चतुर्दश हि वर्षाणि जटाचीरधरो ह्यहम् । फलमूलाशनो वीर भवेयं रघुनन्दन ॥ तवागमनमाकांक्षन् वसंश्च नगराद्बहिः । तव पादुकयो-

1. अयो. स. १८ श्लो. ३५ उ.। 2. ७, ९ श्लोकयोः पूर्वार्धे ।
3. उत्तररामचरिते प्रथमे अङ्के दशमः श्लोकः । 4. ११२ सर्गे २१ श्लोकः ।
5. २३-२५ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

र्न्यस्तराज्यतन्त्रः परन्तप् ॥ चतुर्दशे हि संपूर्णे वर्षेऽहि नृपनन्दन । न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम् ॥' इति प्रतिज्ञां कृतवानिति प्रतिपादितम् । न चैतत्प्रेषकस्य कृत्यमिति वक्तुं शक्यम् ॥

तथा अरण्यकाण्डेऽपि प्रतिज्ञाकरणे भरतस्तिष्ठतीत्यपि प्रतिपादितम् । '[1] अस्मिंस्तु पुरुषव्याघ्रः काले दुःखसमन्वितः । तपश्चरति धर्मात्मा त्वद्भक्त्या भरतः पुरे ॥ त्यक्त्वा राज्यं च मानं च भोगांश्च विविधान् बहून् । तपस्वी नियताहारः शेते शीते महीतले ॥ संत्यज्य विविधान् भोगान् आर्यं सर्वात्मना श्रितः ॥ जितः स्वर्गस्तव भ्रात्रा भरतेन महात्मना । वनस्थमपि तापस्ये यस्त्वामनुविधीयते ॥' इति ॥

तथा युद्धकाण्डेऽपि — '[2] पादुके ते तु रामस्य गृहीत्वा भरतः स्वयम् । चरणाभ्यां नरेन्द्रस्य योजयामास धर्मवित् ॥ अब्रवीच्च तदा रामं भरतः स कृतांजलिः । एतत्ते रक्षितं राजन्राज्यं निर्यातितं मया ॥ अद्य जन्म कृतार्थं मे संवृत्तश्च मनोरथः । यस्त्वां पश्यामि राजानमयोध्यां पुनरागतम् ॥ अवेक्षतां भवान् कोशं कोष्ठागारं पुरं बलम् । भवतस्तेजसा सर्वं कृतं दशगुणं मया ॥' इति स्वस्यैव प्रेष्यभावः प्रतिपादितः । प्रत्युत भरतोपि स्वस्य रामदासत्वं स्वयमेव वदत्ययोध्याकाण्डे—'[3] यो मे भ्राता पिता बन्धुः यस्य दासोस्मि धीमतः ।' इति । अत उक्तरीत्या भरतस्य रामप्रेरकत्वं पूर्वोत्तरविरुद्धम् ॥

धर्मशास्त्रविरुद्धं चेदम् । तथा [4] चापस्तम्बः — 'व्युपतोदव्युपजापव्यभिहासोदामन्त्रणनामधेयग्रहणप्रेषणानीति गुरोर्वर्जयेत्' इति । अत्रोज्वला—व्युपतोदः अङ्गुल्यादिना घट्टनं यदाभिमुख्यार्थं क्रियते । व्युपजापः कर्णयोर्मुहुर्मुहुर्जल्पनं । व्यभिहासः आभिमुख्येन हसनम् । सर्वत्र वकारश्छान्दसः अपपाठो वा । उदामन्त्रणं उच्चैस्संबोधनं, यथा बधिरं प्रति । नामधेय-

1. १६ सर्गे श्लो. २७, २८, ३२ ऊ ३३ । 2. १३० सर्गे ५१-५३ श्लोकाः । 3. ७१ सर्गे ३१½ श्लोकः । 4. धर्मसूत्रे प्र. १ पट. ८ सू १४ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ग्रहणं दशम्यां पितृविहितस्य नाम्नो ग्रहणम्, न पूज्यनाम्नो भगवदादेः । प्रेषण-माज्ञापनं इदमित्थं कुर्विति । एतानि गुरुविषये न कर्तव्यानि' इति ॥

अतः पूर्वोत्तरविरोधात् धर्मशास्त्रविरोधाच्च भरतस्य रामप्रेरकत्वमनुप-पन्नमेव । एवं रामोपि भरतप्रेषणमंगीकृतवानित्यप्यसङ्गतम् । अधर्मिष्ठ-जाबालिवचनश्रवणसंजातकोपवशे[न]ब्राह्मणोत्तमं जाबालिमधिक्षिप्तवतः रामस्य अधर्मिष्ठप्रेषणरूपभरतवचनांगीकारेण प्रवृत्त्यसंभवात् । अतो ऋषिवचनबाधेन किष्किन्धाकाण्डवचनानां स्वार्थपरत्वे बहुविरोधापत्त्या तत्परिहाराय मुनि-वचनमेव मुख्यार्थमिति स्वीकृत्य किष्किन्धाकाण्डवचनान्येव अनुजेषु वात्स-ल्यातिशयेन स्वापेक्षया अनुजानां अतिशयप्रदापनपराणीति योजनीयम् ॥

एतदभिप्रायेणैव स्वकृतजनस्थाननिधनं लक्ष्मणकृतमिति व्यवहरति रामः—

युद्धकाण्डे – [1] 'यश्चैव शक्त्याभिहतस्त्वयाद्य इच्छन्विषादं सहसा-भ्युपेतः । स एव रक्षोगणराजमृत्युः सपुत्रदारस्य तवाद्य युद्धे ॥ एतेन चात्यद्भुतदर्शनानि शरैर्जनस्थानकृतालयानि । चतुर्दशान्यात्तवरायुधानि रक्षस्सहस्राणि निषूदितानि ॥' इति ।

आरण्यकाण्डेपि — [2] 'भावज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण । त्वया पुत्रेण धर्मात्मा न संवृत्तः पिता मम ॥' इति ।

एवमुत्तरकाण्डे — [3] 'भवन्तो मम सर्वस्वं भवन्तो मम जीवितम् । भवद्भिश्च कृतं राज्यं पालयामि नरेश्वराः ॥' इति ।

कांचित्कभरतप्रेष्यत्वानुरोधेन रामस्वातन्त्र्यपराणां बहूनामन्यथाकरणं चायुक्तमेव । 'तस्य धर्मकृतादेशाः' इत्यादिकिष्किन्धाकाण्डवचनानि भरत-

1. ५९ सर्गे १३१, १३२ श्लोकौ । 2, स, १५, श्लो २८.
3, ४४ सर्गे २० श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रेष्यत्वं यथा न भवति तथा योजयितुं शक्यानि । तस्य भरतस्य राज्यं दातुं धर्मेण परिपालनरूपधर्मेण पित्रा कृतादेशा इति योजनीयम् ॥

एवं 'तस्मिन्नृपतिशार्दूले' इत्यादिकमपि मयि च पालयति सतीत्यध्याहृत्य योजनीयम् । 'भरताज्ञां पुरस्कृत्य' इत्यादिकमपि भरताय राज्यं दातुं पित्रा कृतामाज्ञां पुरस्कृत्येति योजनीयम् । [1]'भरतश्च महीपालो वयं चादेशवर्तिनः' इत्यपि भरतो वयं च पित्रादेशे वर्तनीया इति योजनीयम् ॥

स्वयमपि रामः राजत्वं स्वस्य वदति खरयुद्धप्रकरणे—[2]'पापमाचरतां घोरं लोकस्याप्रियमिच्छताम् । अहमासादितो राजा प्राणान् हन्तुं निशाचर ॥' इति । तस्मादृषिवचनं रामस्य राज्यप्रतिपादकं न केनापि विरुद्ध्यत इति श्लिष्टतरम् ॥

**न्यस्तदण्डा वयं राजन् जितक्रोधा जितेन्द्रियाः ।**
**रक्षितव्यास्त्वया शश्वद्गर्भभूतास्तपोधनाः ॥ २० ॥**

अनेन मुनिभिर्जितेन्द्रियैरपराधिष्वपि दण्डो न कर्तव्य इति सूचितम् । तथा च राजधर्मे—'[3]आत्मौपम्यस्तु भूतेषु यो वै भवति मानवः । न्यस्तदण्डो जितक्रोधः प्रेत्य चेह लभेत्सुखम् ॥' इति ।

**एवमुक्त्वा फलैर्मूलैः पुष्पैर्वन्यैश्च राघवम् । २० 1/2**
**न्यायवृत्ता यथान्यायं तर्पयामासुरीश्वरम् ॥ २२ ॥**

अनेन सकलजनेश्वरो राजा मुनिभिरपि पूजनीय इति सूचितम् । अयमर्थः प्राक् प्रपञ्चितः ॥

इति प्रथमः सर्गः ॥

---

1. किष्किन्धाकाण्डे १८ सर्गे २३½ श्लो० ।
2. आरण्यकाण्डे स. २९. श्लो. १० ।
3. राजधर्मे ६६ अध्याये ३६ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ द्वितीयः सर्गः ॥

द्वितीये – तदनु मुनिजनकृतसपर्यामुदितान्तरङ्गो रामभद्रस्समुदिते भगवति सवितरि, समामन्त्र्य सर्वानपि मुनिजनान्, अतिगहनं वनमेवान्वगाहत। अथ मृगवनवराहशार्दूलसमाकुले कानने वसता सकलजनविरोधिना विराधनाम्ना रक्षसा सत्वरमभिगम्य समाहृतां जनकनन्दिनीं अवलोक्य, किञ्चिदिव संभ्रान्तहृदयो रामभद्रो लक्ष्मणमिदमवादीत् ॥

यदभिप्रेतमस्मासु प्रियं वरवृतं च यत् ।
कैकेय्यास्तत्सुसंवृत्तं क्षिप्रमद्यैव लक्ष्मण ॥ १७ ॥

परस्पर्शात्तु वैदेह्या न दुःखतरमास्ति मे ।
पितुर्वियोगात्सौमित्रे स्वराज्यहरणात्तथा ॥ १९ ॥

ननु अत्र पितृवियोगाद्राज्यभ्रंशाच्च भार्यापहरणमतिक्लेशकरामित्युक्तम्। तदनुपपन्नम्। अन्नपानादिसंप्रदानेन विशिष्य स्वरक्षकस्य पितुर्वियोगस्य स्वमुख्यधर्मराज्यपरिपालनभ्रंशस्य च महाक्लेशकरत्वौचित्यात्, परित्यक्तुं परिग्रहीतुं च शक्याया भार्याया अपहरणं कथं तदपेक्षया अतिक्लेशकरमित्युक्तमिति चेन्न। पितुर्वियोगस्याधर्माधायकत्वाभावात्। पित्राज्ञया भरताय राज्यप्रदानस्यापि धर्मत्वेन भरतसात्कृतभोगोपयुक्तग्रामनगरादिराज्यांशभिन्नदण्डकारण्यादिरूपवनांशपरिपालनेनापि परिपालनप्रयुक्तधर्मसंपादनसंभवात् न ताभ्यामतिक्लेशः। अनन्यशरणायाः परित्यक्तुमयोग्याया भार्यायाः संरक्षणस्य मुख्यधर्मतया तस्याः परिभवे स्वधर्मलोप एव भवितेति पितृवियोगराज्यापहरणाभ्यामपि भार्यापहरणस्यातिदुःखकरत्वोक्तिर्युक्तैव ॥

भार्यापहरणं सर्वस्मादतिक्लेशकरमित्यर्थः, उद्योगपर्वणि कृष्णं प्रति कुन्तीवाक्येन प्रतिपादितः — [1] 'न राज्यहरणं दुःखं द्यूते चात्मपराजयः।

1. ९० अध्याये ८५, ८६ श्लोकौ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रव्राजनं सुतानां वा न मे तद्दुःखकारणम् ॥ यत्र सा तरुणी श्यामा सभायां रुदती रुदा । अश्रौषीत्परुषा वाचस्तन्मे दुःखतरं महत् ॥' इति ।

[1]वनपर्वणि मार्कण्डेयं प्रति युधिष्ठिरवाक्येनापि— 'नात्मानमनुशोचामि नेमान् भ्रातॄन् महामुने । हरणं चापि राज्यस्य यथेमां द्रुपदात्मजाम् ॥' इति ॥

भार्या रक्षणीयेत्यत्र [2]**मनुः**— 'सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः । द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥ इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम् । यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि ॥ स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च । स्वं च धर्मं प्रजाश्चैव जायां रक्षन्हि रक्षति ॥' इति ।

सगद्गदपदमतिकृपणवचनमुदाहरन्तं राममवलोक्य क्रुद्धो लक्ष्मणो रुद्धो नाग इव निश्वसन् तमिदमाह—

**अनाथ इव लोकानां नाथस्त्वं वासवोपमः ।**
**मया प्रेष्येण काकुत्स्थ किमर्थं परितप्यसे ॥ २१ ॥**

तदहं राज्यलाभरते भरते समुज्जृम्भितं कार्यं [कोपं] अधुना समरचितसकलमुनिजनतपश्चर्याविरोधे विराधे समुत्स्रक्ष्यामि ॥

इति द्वितीयः सर्गः ॥

---

1 नोपलभ्यते मुद्रितपुस्तके. T R. K पुस्तके १३० अध्याये द्रष्टव्यः ।

2 नवमेऽध्याये 5-7 श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ तृतीयः सर्गः ॥

**तृतीये** — इति बलावलेपसमुदीरितसौमित्रिवचनश्रवणसंजातकोपेन 'कौ युवां क्व गमिष्यथः, किंनिमित्तं च वनागमनम्' इति पृच्छते विराधाय, 'दाशरथी, पित्राज्ञया वनगोचरौ क्षत्रियौ नौ विद्धि, त्वं तु कः ? किंनिमित्तश्च तावद्दण्डकारण्यसंचारः' इति पृच्छन्तौ रामलक्ष्मणौ विराधः समभाषत । 'जयेन शतह्रदायामुत्पन्नं तपश्चर्याप्रसादितपितामहवरलब्धाशस्त्रवध्यभावं विराधनामानं मां निगृह्य जनकनन्दिनीप्रत्याहरणं युवयोरशक्यतरम् । तदुत्सृज्य प्रमदां सत्वरं पलायेथां' इति तद्वचनसमाकर्णनसमनन्तरमेव सज्जेन धनुषा सुपर्णानिलतुल्यवेगान् रुक्मपुंखान् विशिखान् प्रमुंचन्तं रामभद्रं अवलोक्य अतिकोपेन समाकुलितहृदयो विराधोऽपहाय च जनकनन्दिनीं आदाय च वज्रसमानसारं निशितं शूलं कालान्तक इव व्यात्ताननस्तमभिप्रदुद्राव ॥

अथ विराधः करधृतविमलतरखड्गपाणौ रामलक्ष्मणौ तूर्णमभिगृह्य समारोप्य च स्कन्धयोः स्वाभिमतां दिशं प्रतस्थे ॥

इति तृतीयः सर्गः ॥

## अथ चतुर्थपञ्चमौ ॥

**चतुर्थपञ्चमयोः** — तदनु सीता क्रूरकर्मणा बलिना रक्षसा नीयमानौ रामलक्ष्मणावभिवीक्ष्य;

**मां हरोत्सृज्य काकुत्स्थौ नमस्ते राक्षसोत्तम ॥ ३ ॥**

इति विराधं प्रार्थयामास । अनेन स्त्रिया स्वप्राणव्ययेनापि स्वभर्तृहितं कर्तव्यमिति सूचितम् । तथा चादिपर्वणि बकवधे ब्राह्मणीवाक्यं—[1] 'एतद्धि परमं नार्याः कार्यं लोके सनातनम् । प्राणानपि परित्यज्य यद्भर्तुर्हितमाचरेत् ॥' इति ।

---

1. आदिपर्वणि बकवधपर्वणि १५८ अध्याये ... श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ततः सानुजं भर्तारं मुञ्चेति निशाचरं कृपणतरमभियाचमानां जनकनन्दिनीं तत्प्रार्थनामनादृत्यैव प्रस्थितं निशाचरं चावलोक्य विराधे वधकृतत्वरौ रामलक्ष्मणौ स्वभुजबलेन रक्षोभुजयुगलमाभज्य, तच्च भूमौ निपात्य नितरां निष्पिपिषतुः। तत्कर्मविस्मयस्तिमितमानसो राक्षसो राममित्थमाचचक्षे—

कौसल्यासुप्रजास्तात रामस्त्वं विदितो मया ।
वैदेही च महाभागा लक्ष्मणश्च महायशाः ॥ १५ ॥
अभिशापादहं घोरां प्रविष्टो राक्षसीं तनुम् ।
तुम्बुरुर्नाम गन्धर्वः शप्तो वैश्रवणेन ह ॥ १६ ॥

तदनु शापमोचनाय प्रसाद्यमानो वैश्रवणो 'दाशरथिना रामचन्द्रेण संयुगे हतस्य तव शापमोचनं भवेत्। ततश्च तत्प्रभावेनाचिरादेव स्वर्गं गमिष्यसि' इति व्याजहार। सोऽहमधुना तव प्रसादमाहिम्ना महत्तरशापात् प्रमुक्तः स्वभवनं गच्छेयम्।

अवटे चापि मां राम प्रक्षिप्य कुशली व्रज ॥
रक्षसां गतसत्वानामेष धर्मः सनातनः ॥ २१ ॥

इत्येवमभिधाय स्वर्गमार्गमलंचकार। तदनु लक्ष्मणेन खनित्रखातेऽवटे निष्पिष्टकंधरं निशाचरं निखाय, परिष्वज्य जनकनन्दिनीं मुदितान्तरङ्गो रामभद्रः—

कष्टं वनमिदं दुर्गं न च स्म वनगोचराः ।
अभिगच्छामहे शीघ्रं शरभंगं तपोधनम् ॥ २ ॥

इति लक्ष्मणमभिधाय तदाश्रमपरिसरमभिसरन्—

समीपे शरभंगस्य ददर्श महदद्भुतम् ।
विभ्राजमानं वपुषा सूर्यवैश्वानरोपमम् ॥ ४ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अवरुह्य रथोत्संगादाकाशे विबुधानुगम् ।
असंस्पृशन्तं वसुधां ददर्श विबुधेश्वरम् ॥ ५ ॥
सुप्रभाभरणं देवं विरजोम्बरधारिणम् ॥ ५½ ॥

अनेन अम्लानस्रक्त्वादिकं देवानां लक्षणमुक्तम् । तथा च **वनपर्वणि नलोपाख्याने** —

[1] 'साऽपश्यद्विबुधान् सर्वानस्वेदान् स्तब्धलोचनान् । हृषितस्रग्रजोहीनान् हृष्टानस्पृशतः क्षितिम् ॥ छायाद्वितीयो म्लानस्रग्रजस्स्वेदसमन्वितः । भूमिष्ठो नैषधश्चैव निमेषेण च सूचितः ॥ सा समीक्ष्य च तान् सर्वान् पुण्यश्लोकं च भारत । नैषधं वरयामास भैमी धर्मेण पाण्डव ॥' इति ।

हरिभिर्वाजिभिर्युक्तमन्तरिक्षगतं रथम् ।

अनेनेन्द्रस्य हर्यश्वत्वमुक्तम् । तथा च श्रुतिः — [2] 'इन्द्र जुषाणो हर्यश्व याहि' इति ॥

ददर्शादूरतस्तस्य तरुणादित्यसन्निभम् ॥ ७ ॥
पाण्डराभ्रघनप्रख्यं चन्द्रमण्डलसन्निभम् ।
अपश्यद्विमलं छत्रं चित्रमाल्योपशोभितम् ॥ ८ ॥
गन्धर्वामरसिद्धाश्च बहवः परमर्षयः ।
अन्तरिक्षगतं देवं वाग्भिरग्र्याभिरीडिरे ॥ ९ ॥

अथ गगनतलगतमेव दुर्निवारशासनं पाकशासनं तेन च सह किमपि वदन्तं शरभंगं चावलोक्य रामभद्रो लक्ष्मणमवादीत् —

1. ५७ अध्याये २४—२६ श्लोकाः ।
2. द्वितीयाष्टके ४ प्रश्ने ३ अनुवाके ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ये हयाः पुरुहूतस्य पुरा शक्रस्य नः श्रुताः ।
अन्तरिक्षगता दिव्यास्त इमे हरयो ध्रुवम् ॥ १३ ॥
इमे च पुरुषव्याघ्रा ये तिष्ठन्त्यभितो रथम् ।
शतं शतं कुण्डलिनो युवानः खड्गपाणयः ॥ १४ ॥
रूपं बिभ्रति सौमित्रे पंचविंशतिवार्षिकम् ।
एतद्धि किल देवानां वयो भवति नित्यदा ॥ १७ ॥ इति

अनेन देवानां नित्ययौवनत्वमुक्तम् । तथा च (निघंटुः) 'अमरा निर्जराः' इति ॥

तदनु दूरत एव जनकनन्दिनीं लक्ष्मणं चावस्थाप्य महर्षिसन्दर्शनाय समागच्छन्तं रामभद्रमवलोक्य पाकशासनस्तं मुनिमिदमभाषत । अयमसौ दाशरथिः रामभद्रः त्वद्दर्शनकुतूहली समायाति ।

कर्म ह्यनेन कर्तव्यं महदन्यैस्सुदुष्करम् ।
निष्पादयित्वा तत्कर्म ततो मां द्रष्टुमर्हति ॥ २३ ॥

तदहमधुनैव भगवन्तमनुज्ञायागच्छामीत्यभिधाय गगनतलसंचार-चतुरतुरगयुक्तेन रथेन गगनमार्गमलंचकार । शक्रापक्रमणसमनन्तरं राम-लक्ष्मणौ जनकनन्दिनी च कृताग्निहोत्रं शरभंगं मुनिमभिवाद्य तदाज्ञया समुपाविशन् । तदनु किंनिमित्तं बलभिदागमनमिति पृच्छते रामाय तत्रभवान् मुनिरखिलमपि तदागमनवृत्तान्तमाचख्यौ ॥

मामेष वरदो राम ब्रह्मलोकं निनीषति ।
जितमुग्रेण तपसा दुष्प्रापमजितात्मभिः ॥ २८ ॥

नन्वत्र शरभंगं मुनिं ब्रह्मलोकं नेतुमिन्द्रः समागत इति प्रतीयते । तदसंगतम् । मनुष्याणां लोकान्तरनयनस्य यमदूताधीनत्वावगमात् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तथा च सावित्र्युपाख्याने यमं प्रति सावित्रीवाक्यं—

[1]'श्रूयते भगवन् दूतास्तवागच्छन्ति मानुषान् । नेतुं किन्तु भवान् कस्मादागतोऽसि स्वयं प्रभो ॥'

यम उवाच— [2]अयं च धर्मसंयुक्तो रूपवान् गुणसागरः । नार्हो मत्पुरुषैर्नेतुं अतोऽस्मि स्वयमागतः ॥' इति ।

एवं च सति मनुष्याणामिन्द्रेण नयनं कथमिति चेन्न । सावित्रीवचनावगतयमकिंकरकर्तृकनयनस्य पापिष्ठजनविषयत्वात्, यमकर्तृकनयनस्य साधारणपुण्यवद्विषयत्वात् । यथोक्तवर्णाश्रमधर्मशालिनां तु न यमवश्यता, न वा तत्किंकरवश्यता ।

तथा च विष्णुपुराणे— [3]'स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले । परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ अहममरवरार्चितेन धात्रा यम इति लोकहिताहिते नियुक्तः । हरिगुरुवशगोऽस्मि न स्वतन्त्रः प्रभवति संयमने ममापि विष्णुः ॥ कटकमकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम् । सुरपशुमनुजादिकल्पनाभिः हरिरखिलाभिरुदीर्यते तथैकः ॥ क्षितितलपरमाणवोऽनिलान्ते पुनरपि यान्ति यथैकतां धरित्र्याम् । सुरपशुमनुजादयस्तथान्ते गुणकलुषेण सनातनेन तेन ॥ हरिममरवरार्चिताङ्घ्रिपद्मं प्रणमति यः परमार्थतो हि मर्त्यः । तमपगतसमस्तपापबन्धं व्रज परिहृत्य यथाग्निमाज्यसिक्तम् ॥ इति यमवचनं निशम्य पाशी यमपुरुषस्तमुवाच धर्मराजम् । कथय मम विभो समस्तधातुर्भवति हरेः खलु यादृशोऽस्य भक्तः ॥

---

1. वनपर्वणि पतिव्रतामाहात्म्यपर्वणि २९७ अध्याये १४ श्लोकः ।
2. वनपर्वणि पतिव्रतामाहात्म्यपर्वणि २९७ अध्याये १६ श्लोकः ।
3. तृतीयेंऽशे ७ अध्याये १४-३५ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यमः — न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे । न हरति न च हन्ति किञ्चिदुच्चैः सितमनसं तमवेहि विष्णुभक्तम् ॥ कलिकलुषमलेन यस्य नात्मा विमलमतेर्मलिनीकृतस्तमेनम् । मनसि कृतजनार्दनं मनुष्यं सततमवेहि हरेरतीव भक्तम् ॥ कनकमपि रहस्यवेक्ष्य बुद्ध्या तृणमिव यः समवैति वै परस्वम् । भवति च भगवत्यनन्यचेताः पुरुषवरं तमवेहि विष्णुभक्तम् ॥ स्फटिकगिरिशिलामलः क्व विष्णुः मनसि नृणां क्व च मत्सरादिदोषः । नहि तुहिनमरीचिरश्मिपुञ्जे भवति हुताशनदीप्तिजः प्रतापः ॥ विमलमतिरमत्सरः प्रशान्तः शुचिचरितोऽखिलसत्वमित्रभूतः । प्रियहितवचनोऽस्तमानमायो वसति सदा हृदि तस्य वासुदेवः ॥ वसति हृदि सनातने च तस्मिन् भवति पुमान् जगतोऽस्य सौम्यरूपः । क्षितिरसमतिरम्यमात्मनोन्तः कथयति चारुतयैव सालपोतः ॥ यमनियमविधूतकल्मषाणामनुदिनमच्युतसक्तमानसानाम् । अपगतमदमानमत्सराणां व्रज भट दूरतरेण मानवानाम् ॥ हृदि यदि भगवाननादिरास्ते हरिरसिशङ्खगदाधरोऽव्ययात्मा । तदघमघविघातकर्तृभिन्नं भवति कथं सति चान्धकारमर्के ॥ हरति परधनं निहन्ति जन्तून् वदति तथाऽनृतनिष्ठुराणि यश्च । अशुभजनितदुर्मदस्य पुंसः कलुषमतेर्हृदि तस्य नास्त्यनन्तः ॥ न सहति परसंपदं विनिन्दां कलुषमतिः कुरुते सतामसाधुः । न यजति न ददाति यश्च सन्तं मनसि न तस्य जनार्दनोऽधमस्य ॥ परमसुहृदि बान्धवे कलत्रे सुततनयापितृमातृभृत्यवर्गे । शठमतिरुपयाति योऽर्थतृष्णां तमधमचेष्टमवेहि नास्य भक्तम् ॥ अशुभमतिरसत्प्रवृत्तिसक्तः सततमनार्यकुशीलसंगमत्तः । अनुदिनकृतपापबन्धयुक्तः पुरुषपशुर्न हि वासुदेवभक्तः ॥ सकलमिदमहं च वासुदेवः परमपुमान्परमेश्वरः स एकः । इति मतिरचला भवत्यनन्ते हृदयंगते व्रज तान्विहाय दूरात् ॥ कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे । भव शरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान् ॥ वसति मनसि यस्य सोऽव्ययात्मा पुरुषवरस्य न तस्य दृष्टिपाते । तव गतिरथवा ममास्ति

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चक्रप्रतिहतवीर्यबलस्य सोन्यलोक्यः ॥ इति निजभटशासनाय देवो रवितनयस्स किलाह धर्मराजः । मम कथितमिदं च तेन गुह्यं कुरुवर सम्यगिदं मयापि चोक्तम् ॥' इति ॥

तस्माद्वर्णाश्रमधर्मयुक्तस्य परमेश्वरभक्तस्य महर्षेः शरभंगस्य यमतत्किंकरादिवश्यत्वाभावात् इन्द्रेण स्वयमागत्य नयनं युक्तमेव । अत एव तादृशगुणयुक्तस्य धर्मपुत्रस्य इन्द्रेण नयनं प्रतिपादितं महाप्रस्थानिके — [1] 'ततः सन्नादयन् शक्रो दिवं भूमिं च सर्वशः । रथेनोपययौ पार्थं आरोहेत्यब्रवीच्च तम् ॥ अनेन त्वं शरीरेण स्वर्गं गन्ता न संशयः ॥' इति ॥

**अहं ज्ञात्वा नरव्याघ्र वर्तमानमदूरतः ।**
**ब्रह्मलोकं गमिष्यामि त्रिदिवं देवसेवितम् ॥ २९ ॥**

अनेन महतां सन्दर्शनं तत्समागमश्च महाफलत्वेन नातिक्रमणीय इति सूचितम् । तथा च वनपर्वणि — [2] सतां सन्दर्शनात्स्पर्शात्संजल्पाच्च सहासनात् । धर्माचाराः प्रवर्धन्ते सिद्ध्यन्त्यपि च मानवाः । अहन्यहनि धर्मस्य योनिस्साधुसमागमः । तस्मात् प्राज्ञैश्च वृद्धैश्च सुस्वभावैस्तपस्विभिः ॥ सद्भिश्च सह संसर्गः कार्यः शमपरायणैः ॥ येषां त्रीण्यवदातानि विद्या योनिश्च कर्म च । तान्सेवेत्तैः सहास्था हि शास्त्रेभ्योपि गरीयसी ॥ इति ॥

'मदीयचिरन्तनसुकृतपरिपाकसमार्जितान् शुभतरात् लोकान् पात्रभूताय प्रियातिथये भवते प्रयच्छामि' इति सहृदयानन्दजननीमतिमधुरां गिरमुदाहरन्तं तमृषिं, अत्युदारचरितो रघुवीरः सविनयमिदमवादीत् —

1. तृतीयेऽध्याये १, ६ श्लोकौ.

2. प्रथमेऽध्याये २५-२७ श्लोकाः । 'सतां सन्दर्शनात्' इत्यादिकः प्रथमः श्लोकस्तु मुद्रितपुस्तके न दृश्यते । अथापि तद्विपरीतार्थबोधक 'असतां दर्शनात्' इत्यादिकः २९ तमः श्लोको दृश्यत एव । अतः "सतां सन्दर्शनात्" इत्यादिकेन श्लोकेनापि भाव्यमेवेत्यवधेयम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अहमेवाहरिष्यामि सर्वलोकान् महामुने ।
आवासं त्वहमिच्छामि प्रदिष्टमिह कानने ॥ ३३ ॥

अनेन क्षत्रियैः प्रतिग्रहो न कर्तव्य इति सूचितम् । तथा च **मनुः**— [1]त्रयो धर्मा निवर्तन्ते ब्राह्मणात् क्षत्रियं प्रति । अध्यापनं याजनं च तृतीयश्च प्रतिग्रहः ॥ इति । **मोक्षधर्मे जापकोपाख्यानेऽपि**— [2]योद्धव्यं रक्षितव्यं च क्षत्रधर्मः किल द्विज । दातारः क्षत्रियाः प्रोक्ताः गृह्णीयां भवतः कथम् । द्विजाः प्रतिग्रहे युक्ता दातारो राजवंशजाः । इति ।

तदनु निखिलयातुधाननिधनाय धरणीतलमवतीर्णस्य दाशरथेः सुतीक्ष्णदर्शनमेव शुभोदर्कं मन्वानो महर्षिस्तदाश्रमगमनमार्गमादिश्य,

एष पन्था नरव्याघ्र मुहूर्तं पश्य तात माम् ।
यावज्जहामि गात्राणि जीर्णां त्वचमिवोरगः ॥ ३८ ॥

इत्यभिहितवान् ॥

ततोऽग्निं सुसमाधाय हुत्वा चाज्येन मन्त्रवित् ।
शरभंगो महातेजाः प्रविवेश हुताशनम् ॥ ३९ ॥
तस्य रोमाणि केशांश्च ददाहाग्निर्महात्मनः ।
जीर्णां त्वचं तथास्थीनि यच्च मांसं सशोणितम् ॥ ४० ॥
स च पावकसंकाशः कुमारः समपद्यत ॥ ४१ ॥
स लोकानाहिताग्नीनां ऋषीणां च महात्मनाम् ।
देवानां च व्यतिक्रम्य ब्रह्मलोकं व्यरोहत ॥ ४२ ॥
स पुण्यकर्मा भवने द्विजर्षभः
पितामहं सानुचरं ददर्श ह ।

1. दशमाध्याये ७७ श्लोकः

2. 'योद्धव्यं' इत्यादिश्लोकः जापकोपाख्याने मुद्रिते पुस्तके न दृश्यते । 'द्विजाः प्रतिग्रहे' इत्यादिकमर्धं तु १७१ अध्याये [illegible] श्लोके दृश्यते॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पितामहश्चापि समीक्ष्य तं द्विजं
ननन्द सुस्वागतमित्युवाच ॥ ४४ ॥

नन्वत्राग्निं प्रविष्टस्य शरभंगस्य ब्रह्मलोकगमनादिप्रतिपादनमसंगतम् । प्राया[ण]नाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्च मरणमिच्छतां पिण्डनिवृत्तिरिति अग्नौ मृतानामात्महन्तॄणां उत्तरक्रियाधिकारनिषेधावगमात् । [1]'अनन्दा नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥' इत्यात्महन्तॄणां तमोलोकप्राप्त्यवगमाच्च बुद्धिपूर्वकमग्निं प्रविष्टस्य शरभंगस्य कथं ब्रह्मलोकावाप्तिरिति चेन्न । उदाहृतवचनानां क्रोधादिना अविधानेन देहत्यागिविषयत्वात्, 'अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्यतः । भृग्वग्निजलपातेन देहत्यागो विधीयते' ॥ इत्यादिस्मृत्युक्तप्रकारेण देहत्यागं कृतवतां नायं दोषः । प्रत्युत उत्कृष्टमेव फलं भवति ॥

तथा च **कूर्मपुराणे तटाकमाहात्म्ये** — [2]'अग्निप्रवेशं यः कुर्यात्सोमतीर्थे नराधिप । जलेनानशनेनापि नासौ मर्त्योऽभिजायते ॥' इति । तत्रैव **प्रयागमाहात्म्ये** — [3]गङ्गायमुनयोर्मध्ये कारीषाग्निं विशेत्तु यः । अहीनांगो ह्यरोगश्च पञ्चेन्द्रियसमन्वितः ॥ यावन्ति रोमकूपाणि तस्य गात्रेषु मानवाः । तावद्वर्षसहस्राणि स्वर्गे लोके महीयते'॥ इति ।

**आनुशासनिकेऽपि** — [4]आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम् । हुत्वाग्नौ देहमुत्सृज्य वह्निलोके महीयते ॥ इति ॥

**इति पञ्चमः सर्गः ॥**

---

1. ईशावास्योपनिषदि ३ ऋक् । अनन्दा इत्यत्र असुर्या इति भेदः ।
2. उत्तरभागे ४१ अध्याये ५० श्लोकः ।
3. पूर्वार्धे ३७ अध्याये ३, ४, श्लोकौ
4. १४२ अध्याये ५२ श्लोकः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ षष्ठः सर्गः ॥

षष्ठे — तदनु नानाविधनियमनियमितान्तःकरणा मुनिजनाः समेत्य रामभद्रमहमहमिकया सप्रश्रयमेवमवोचन् —

त्वमिक्ष्वाकुकुलस्यास्य पृथिव्याश्च महीधरः ।
प्रधानश्चासि नाथश्च देवानां मघवानिव ॥ ८ ॥

विश्रुतस्त्रिषु लोकेषु यशसा विक्रमेण च ।
पितृभक्तिश्च सत्यं च त्वयि धर्माश्च पुष्कलाः ॥ ९ ॥

अधर्मस्तु महांस्तात भवेत्तस्य महीपतेः ।
यो हरेद्बलिषड्भागं न च रक्षति पुत्रवत् ॥ ११ ॥

युञ्जानः स्वानिव प्राणान् प्राणैरिष्टान्सुतानिव ।
नित्ययुक्तः सदा रक्षन् सर्वान्विषयवासिनः ॥ १२ ॥

प्राप्नोति शाश्वतीं राम कीर्तिं स बहुवार्षिकीम् ।
ब्रह्मणः स्थानमासाद्य तत्र चापि महीयते ॥ १३ ॥

अत्र अप्रमादेन प्रजास्संरक्षणीयाः, रक्षणादुत्तमलोकावाप्तिः, अरक्षणे दोषश्च भवतीति सूचितम् । तथा च रक्षणं कर्तव्यमित्यत्र मनुः —[1] 'युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः' । इति ।

राजधर्मेऽपि —[2] 'वेदाध्ययनशीलानां विप्राणां साधुकर्मणाम् । पालने यत्नमातिष्ठ सर्वलोकस्य चानघ ॥' इति ।

रक्षणात्फलमित्यत्र मनुः — '[3] रक्षणादार्यवृत्तानां कण्टकानां च शोधनात् । नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः ॥' इति । राजधर्मेऽपि-

1. सप्तमे अध्याये १४२ श्लोकः
2. ६६ अध्याये ४० श्लोकः
3. नवमाध्याये २५३ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'[1]यो भूतानि धनात्क्रान्त्या वधात्क्लेशाच्च रक्षति । दस्युभ्यः प्राणदानात्स धनदः सुखदो विराट् ॥ स सर्वयज्ञैरीजानो राजाथाभयदक्षिणैः । अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ॥ ब्राह्मणार्थे समुत्पन्ने योऽभिनिस्सृत्य युद्ध्यति । आत्मानं यूपमुत्सृज्य स यज्ञोऽनन्तदक्षिणः ॥ यं वने विचरेद्धर्मं तपसा वापि पाण्डव । रक्षया तच्छतगुणं धर्मं प्राप्नोति पार्थिवः ॥' इति ।

अरक्षणे दोषमाह **मनुः**—[2] 'अरक्षितारं राजानं बलिषड्भागहारिणम् । तमाहुः सर्वलोकस्य समग्रमलहारिणम् ॥' इति ॥

**राजधर्मेऽपि** —[3] 'धर्मारामान्धर्मपरान् ये न रक्षन्ति मानवान् । पार्थिवाः पुरुषव्याघ्र तेषां पापं हरन्ति ते ॥' इति ।

[4] 'यः करोति परं धर्मं मुनिर्मूलफलाशनः । तत्र राज्ञश्चतुर्भागः प्रजा धर्मेण रक्षितुः' ॥

अनेन धर्मेण प्रजाः परिपालयतो राज्ञस्तत्कृतसुकृतचतुर्थांशप्राप्तिरिति सूचितम् । तथा च **मनुः**— [5] 'यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः । चतुर्थं तस्य धर्मस्य राजा भागमुपाश्नुते ॥' इति ।

सोऽयमधुना निखिलमुनिगणस्त्वया सनाथोऽप्यनाथ इव क्रूरतरैर्निशाचरैः वध्यमानो न कचिदपि क्रियाकलापे निश्चलमन्तःकरणमाबध्नाति ।

**अतस्त्वां शरणार्थं च शरण्यं समुपागताः ।**
**परिपालय नो राम वध्यमानान्निशाचरैः ॥ १९ ॥**

---

1. शान्तिपर्वणि ९७ अध्याये ८ — १० श्लोकाः । यं वने + पार्थिवः इत्यन्तिमश्लोकस्तु मुद्रिते भारते न दृश्यते ।
2. अष्टमाध्याये ३०८ श्लोकः
3. शान्तौ ६६ अध्याये ३३ श्लोकः
4. ६७ अध्याये २७ श्लोकः, ७५ अध्याये ६ श्लोकश्च एवमर्थबोधकौ स्तः ॥
5. अयं श्लोकः मनुस्मृतौ न दृश्यते । भारते शान्तिपर्वणि ७५ अध्याये ६ श्लोकः तु इत्थमेव दृश्यते । ४ पादे पुनः राजा भारत विन्दति इति भेदो दृश्यते ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति सकरुणमभियाचमानेषु तपस्विजनेषु परमकारुणिको रघुकुलतिलकस्तानेवमवोचत् ॥

नैवमर्हथ मां वक्तुं आज्ञाप्योऽहं तपस्विनाम् ॥ २४ ॥

अनेन तपस्विनामपेक्षितं अप्रार्थितेनैव प्रह्वेन राज्ञा साधनीयमिति सूचितम् । तथा च राजधर्मे—'[1] आश्रमेषु यथाकालं चेलं भोजनभाजनम् । स्वयमेव हरेद्राजा सत्कृत्य विधिपूर्वकम् ॥ आत्मानं सर्वकार्याणि तापसे राज्यमेव च । निवेदयेत्प्रयत्नेन तिष्ठेत्प्रह्वश्च नित्यशः ॥ आहवे च महीं लब्ध्वा श्रोत्रियायोपपादयेत् ॥' इति ।

तपस्विनां रणे शत्रून् हन्तुमिच्छामि राक्षसान् ।
पश्यन्तु वीर्यमृषयः सभ्रातुर्मे तपोधनाः ॥ २५ ॥

अत्र क्षत्रियेण तपस्विनां ब्राह्मणानां शत्रुर्हन्तव्य इति सूचितम् । तथा च मनुः—

'[2] ब्राह्मणान्बाधमानं तु कामादवरवर्णजम् । हन्याच्छस्त्रैर्वधोपायैरुद्वेजनकरैर्नृपः ॥' इति ।

दत्वा वरं चापि तपोधनानां
धर्मे धृतात्मा सह लक्ष्मणेन ।
तपोधनैश्चापि सभाज्यवृत्तः
सुतीक्ष्णमेवाभिजगाम वीरः ॥ २६ ॥

अनेन राज्ञा भीत्या शरणमागतानां अभयवरदानपूर्वकं संरक्षणं कर्तव्यमिति सूचितम् ।

तथा चाभयप्रदानविषये मनुः—

---

1. ८६ अध्याये २५–२७ श्लोकाः । अन्तिमार्धंतु न दृश्यते ।

2. ९ अध्याये २४८ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'[1] अभयस्य हि यो दाता स पूज्यस्सततं नृपः । सत्रं हि वर्तते तस्य सदैवाभयदक्षिणम् ॥' इति ।

राजधर्मेऽपि

'[2] स सर्वयज्ञैरीजानो राजाथाभयदक्षिणैः । अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ॥' इति । शरणागतसंरक्षणे शान्तिपर्वण्यपि —

'[3] बालातुरेषु भूतेषु परित्राणं कुरूद्वह । शरणागतेषु कारुण्यं कुर्यास्तत्र समाहितम् ॥' इति । वनपर्वण्यपि श्येनं प्रति शिविः —

'[4] संत्रस्तरूपस्त्राणार्थः त्वत्तो भीतो महाद्विजः । मत्सकाशमनुप्राप्तः प्राणगृध्नुरयं द्विजः ॥ एवमभ्यागतस्येह कपोतस्याभयार्थिनः । अप्रदाने परं धर्मं कथं श्येन न पश्यसि ॥ प्रस्पन्दमानः संभ्रान्तः कपोतः श्येन लक्ष्यते। मत्सकाशे जीवितार्थी तस्य त्यागोऽतिगर्हितः ॥ एकतः क्रतवस्सर्वे एकतः परिवासराः । एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥' इति ॥

॥ इति षष्ठः सर्गः ॥

## अथ सप्तमः सर्गः ॥

**सप्तमे**—इति तपस्विजनसमक्षमभिधाय तैस्सह अतितीक्ष्णतपसं सुतीक्ष्णमभिगम्य संश्रावयन् स्वकीयं नाम तमभिवादयामास । ततस्तद्दर्शनजनितानन्दस्स मुनिः स्वागतादिसपर्यया पर्यायेणापूर्वातिथिं तमभिनन्द्य सहर्षमेव-

1. अष्टमाध्याये ३०३ श्लोकः
2. ५७ अध्याये ९ श्लोकः
3. ६६ अध्याये २१ श्लोकः
4. १३१ अध्याये ३—६ श्लोकाः । [illegible] श्लोकेषु अन्यथा भवति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मभाषत । त्वद्दर्शनमभिलषन् सुरेश्वरसमादिष्टानिष्टानपि लोकान्नारूढवानस्मि । सांप्रतमखिलतपस्विजनसंरक्षणाय निखिलमुनिजनसमक्षं बद्धदीक्षं भवन्तमवलोक्य परिपूरिताभिलाषस्तपोनिर्जितेष्वशेषेषु लोकेषु विहर्तुमिच्छामि ॥

तेषु देवर्षिजुष्टेषु जितेषु तपसा मया ।
मत्प्रसादात्सभार्यस्त्वं विहरस्व सलक्ष्मणः ॥ १२ ॥

इति वदन्तं मुनिं,

प्रत्युवाचात्मवान्रामो ब्रह्माणमिव कश्यपः ॥ १३ ॥
अहमेवाहरिष्यामि स्वयं लोकान्महामुने ।
आवासं त्वहमिच्छामि प्रदिष्टमिह कानने ॥ १४ ॥ इति ।

पुनश्च ततोऽतिरमणीयोऽयमाश्रमः समुचितो भवति वासाय । किन्तु अकुतोभया मृगगणा मुनिगणकदनाय नित्यमटवीं पर्यटन्ति । नातोऽन्यः कश्चिद्विशेषोऽस्ति । तद्भवान्सभार्यश्चिरमत्रैव विहरत्विति मुनेर्वचनमाकर्ण्य हिंस्रमृगगणनियमनसमर्थोऽपि रामभद्रश्चिरकालावासयोग्यो नायं प्रदेश इति तमभिधाय, पश्चिमाचलाधिरूढं भगवन्तमादित्यं चावलोक्य, समुपास्य च सन्ध्यां, उपभुज्य च तापसभोज्यं मुनिदत्तमन्नं, रम्ये सुतीक्ष्णाश्रमे तां रात्रिमत्यवाहयत् ॥

इति सप्तमः सर्गः ॥

## अथ अष्टमः सर्गः ॥

**अष्टमे**— अथ समुत्थाय यथाकालं, उपस्पृश्य च महोत्पलसुगन्धि जलं, अभ्यर्च्य चाग्न्यादीष्टदेवताः, समुपस्थाय च समुदितं भगवन्तं दिनमणिं सुतीक्ष्णमहर्षिमुपगम्य मुनिजनाश्रममण्डलावलोकने कृतत्वरं मां दण्डकारण्यवासिनो मुनिजना अपि स्वाश्रमावलोकनाय त्वरयन्ति ।

अविप्रह्वातपो यावत्सूर्यो नातिविराजते ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अमार्गेणागतां लक्ष्मीं प्राप्येवान्वयवर्जितः ॥ ८ ॥
तावदिच्छामहे गन्तुमित्युक्त्वा चरणौ मुनेः ।
ववन्दे सहसौमित्रिः सीतया सह राघवः ॥ ९ ॥

अत्र अमार्गेणागतामित्यनेन दुष्कुलोत्पन्नस्य असत ऐश्वर्यं सकलजनोपद्रवकरमिति सूचितम् ॥

तथा च राजधर्मे ऋषिसंवादे — '[1] अकुलीनस्तु पुरुषः प्राकृतः साधुसंश्रयाम् । दुर्लभैश्वर्यतां प्राप्तो निन्दितः शत्रुतां व्रजेत् ॥' इति ।

अथ मुनिः कृतनमस्कारौ रामलक्ष्मणावुत्थाप्य सस्नेहमालिङ्गय—

गम्यतां वत्स सौमित्रे भवानपि च गच्छतु ।
आगन्तव्यं त्वया तात पुनरेवाश्रमं मम ॥ १६ ॥

इति समुदाजहार । तदनु तदाज्ञामादाय समावध्य कक्षां, आदाय च विमलतरौ कृपाणौ प्रतिगृह्य च रौद्रे धनुषी, अवसज्य च शुभतरौ तूणीरौ,

निष्क्रान्तावाश्रमाद्गन्तुमुभौ तौ रामलक्ष्मणौ ॥ १९ ॥
श्रीमन्तौ रूपसंपन्नौ दीप्यमानौ स्वतेजसा ॥ १९½ ॥

इति अष्टमः सर्गः ॥

## अथ नवमः सर्गः ॥

नवमे — तदनु जनकराजतनया दण्डकारण्ये रक्षोवधाय समावद्धकक्ष्यं भर्तारमवलोक्य, प्रणयातिशयेन हृदयानन्दकरीं अतिमधुरां गिरमेवं उदाजहार—

अयं धर्मः सुसूक्ष्मेण विधिना प्राप्यते महान् ।
निवृत्तेन तु शक्योऽयं व्यसनात्कामजादिह ॥ २ ॥

1. ११८ अध्याये ६ श्लोकः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्रीण्येव व्यसनान्यत्र कामजानि भवन्त्युत।
मिथ्यावाक्यं गुरुतरं तस्माद्गुरुतरे उभे॥
परदाराभिगमनं विना वैरं च रौद्रता॥ ३॥

अत्र वाचिकस्य मिथ्यावाक्यस्य गुरुतरत्वं मानसिकपरद्रव्याभिध्यानाद्यपेक्षं। वाचिकादपि मिथ्यावचनात् कायिकयोः परदाराभिगमनपरहिंसनयोर्गुरुतरत्वं बोध्यम्॥

परद्रव्याभिध्यानादेर्मानसिकादिदोषत्वं मनुराह —[1]‘परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्। वितथाभिनिवेशं च त्रिविधं कर्म मानसम्॥ पारुष्यमनृतं चैव पैशुन्यं चैव सर्वशः। अनिबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्॥ अदत्तानामुपादानं हिंसा चैव विधानतः। परदारोपसेवा च शारीरं त्रिविधं स्मृतम्॥’ इति। गुरुतरत्वं च फलतारतम्येन बोध्यम्।

फलतारतम्यञ्च याज्ञवल्क्य आह —[2]‘अन्त्यपक्षिस्थावरतां मनोवाक्कायकर्मभिः। दोषैः प्रयाति जीवोऽयं भवं योनिशतेषु च॥’ इति।

मनुरपि —[3]‘मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम्। वाचैव वाक्कृतं कर्म कायेनैव तु कायिकम्॥ शरीरजैः कर्मदोषैः याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्॥’ इति। अत्राधिकप्रज्ञायुक्तत्वात् मनुजजन्म श्रेष्ठम्। तदपेक्षया हीनप्रज्ञत्वात् पक्षिजन्म निकृष्टम्। तदपेक्षया निकृष्टं स्थावरत्वम्, अप्रज्ञत्वादिति विवेक इति॥

ततस्त्वां प्रस्थितं दृष्ट्वा मम चिन्ताकुलं मनः।
त्वद्वृत्तं चिन्तयन्त्या वै भवेन्निःश्रेयसं महत्॥ १२॥

अनेन भर्तृहितकारिण्या भार्यायाः श्रेयो भवतीति सूचितम्। तथा

---

1. द्वादशाध्याये ५—७ श्लोकाः
2. १२१ श्लोकः
3. द्वादशाध्याये ८, ९ श्लोकौ

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

च याज्ञवल्क्यः — [1] 'पतिप्रियहिते युक्ता स्वाचारा विजितेन्द्रिया । इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ॥ प्रहृष्टमानसा नित्यं स्थानमानविचक्षणा । भर्तुः प्रियहिता या तु सा भार्या इति राजरा ? ॥' इति ।

विष्णुपुराणेऽपि — [2] 'या स्त्री शुश्रूषणाद्भर्तुः कर्मणा मनसा गिरा । तद्धिता सा समाप्नोति तत्सालोक्यं यतो द्विज ॥' इति ।

बोधायनोऽपि— [3] 'भर्तृहिते यतमानाः स्वर्गं लोकं जयेरन्' इति ।

न हि मे रोचते वीर गमनं दण्डकान्प्रति ॥ १२½ ॥
क्षत्रियाणां च हि धनुर्हुताशस्येन्धनानि च ।
समीपतः स्थितं तेजो बलमुच्छ्रयते भृशम् ॥ १५ ॥

अनेन शस्त्रसंबन्धो बलाभिवृद्धिकर इति सूचितम् ॥

तथा च यजुरारण्यके एकस्यापि धनुष्मतो बहुभिरधनुष्मद्भिरप्रधृष्यत्वमुक्तम् — [4] 'तस्मादेकमिषुधन्विनं बहवोऽनिषुधन्वानोऽभिधृष्णुवंति सोऽस्मयत एकं मासं तं बहवो नाभ्यधर्षिषुः' इति ॥

आख्यायिकापि — पुरा खलु तपस्विनो ब्राह्मणस्य तपोविघ्नमाचरितुं शक्रो गृहीतभटवेषो न्यासविधिना ब्राह्मणे खड्गं स्थापितवान् ।

स तच्छस्त्रमनुप्राप्य न्यासरक्षणतत्परः ।
वने तु विचरत्येव रक्षन्प्रत्ययमात्मनः ॥ १९ ॥
यत्र गच्छत्युपादातुं मूलानि च फलानि च ।
न विना याति तं खड्गं न्यासरक्षणतत्परः ॥ २० ॥

---

1. आचाराध्याये ८८ श्लोकः । प्रहृष्टमानसा इत्यादिकः द्वितीयः श्लोकः न विद्यते ।
2. या स्त्री इत्यादिश्लोकोपि विष्णुपुराणे मुद्रिते न दृश्यते ।
3. द्वितीयाध्याये तृतीयखण्डे ४८ सूत्रं ।
4. तैत्तिरीयारण्यके ५ प्रश्ने प्रथमानुवाके तृतीयपञ्चाशति प्रवर्ग्यब्राह्मणे ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र न्यासो निक्षेपविशेषः । निक्षेपलक्षणं **नारद** आह—'[1] स्वद्रव्यं यत्र विस्रंभान्निक्षिपत्यविशंकितः । निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥' इति ॥

निक्षेपस्थापनयोग्यस्थलमाह **मनुः**—[2] 'कुलजे वृत्तसंपन्ने धर्मज्ञे सत्यवादिनि । महापक्षे धनिन्यार्ये निक्षेपं निक्षिपेद्बुधः ॥' इति । महापक्षे= पुत्रपौत्रादिसमृद्धे; धनिनि= निक्षेपादधिकधनवति ॥

**बृहस्पतिस्तु**—[3] 'स्थानं गृहं स्थलं चैव तथर्णं विविधान् गुणान् । सत्यं शौचं बन्धुजनं समीक्ष्य स्थापयेन्निधिम् ॥' इति ।

स च निक्षेपो द्विविधः— ससाक्षिकः असाक्षिकश्चेति । तदाह **बृहस्पतिः**—[4] 'ससाक्षिकं रहोदत्तं द्विविधं समुदाहृतम् ।'

निक्षिप्तद्रव्यस्य पुनर्ग्रहणप्रकारमाह **मनुः**—[5] 'यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः । स तथैव ग्रहीतव्यो यथा दायस्तथा ग्रहः ॥' इति । यथा स्थापितो निक्षेपस्तथा ग्राह्यः इत्यर्थः ।

निक्षेपाप्रदाने दोषमाह **मनुः**—[6] 'भर्तृद्रोहे यथा नार्याः पुंसः पुत्रसुहृद्वधे । दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते नृणाम् ॥' इति ।

अयं च निक्षेपोऽप्रदाने राज्ञा निगृह्य दापनीयः । तथा च **मनुः**—[7] 'न दद्यात्तस्य यदि तु तद्धिरण्यं यथाविधि । अयं निगृह्य दाप्यः स्यादिति धर्मस्य धारणा ॥' इति ।

---

1. औपनिधिके द्वितीये विवादपदे प्रथमः श्लोकः ।
2. अष्टमाध्याये १७९ श्लोकः ।
3. स्थानं गृहं इत्यादिश्लोकः मुद्रितपुस्तके न दृश्यते ।
4. ससाक्षिकं इत्यादिश्लोकार्धाशयबोधकं 'स पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा' इति श्लोकार्धमेव मुद्रितपुस्तके दृश्यते । न तु यथादर्शितं ।
5. अष्टमाध्याये १८० श्लोकः ।
6. भर्तृद्रोहे इत्यादिश्लोकः मुद्रितपुस्तके न दृश्यते ।
7. अष्टमाध्याये १८३ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चोराद्यपहृते न दापनीयमित्याह **याज्ञवल्क्यः** —[1]'न दाप्योऽपहृतं द्रव्यं राजदैविकतस्करैः। ग्रहीतुरिह दण्डो न दातुर्नष्टं तदुच्यते ॥' इति।

दैवाद्युपघाते त्वप्रदाने विशेषमाह **बृहस्पतिः** —'[2]दैवराजोपघातेन यदि तन्नाशमाप्नुयात्। ग्रहीतुर्द्रव्यसहितं तत्र दोषो न विद्यते ॥' इति।

**मनुरपि**— [3]'चोरैर्हृतं जलेनोढमग्निना दग्धमेव च। न दद्याद्यदि तस्माच्च न संहरति किंचन ॥' इति ॥

इदं चाप्रदानमवञ्चनायां बोध्यम्। तदाह **नारदः** —[4]'ग्रहीतुः सह योऽर्थेन नष्टो नष्टस्स दायिनः। दैवराजकृते तद्वत् न चेत्तज्जिह्मकारितम् ॥' इति।

उपेक्षया नाशे दण्डपूर्वकं सवृद्धिदापनमाह **बृहस्पतिः**— '[5]भेदेनोपेक्षया न्यासं ग्रहीत्वा यदि नाशयेत्। न दद्याद्याच्यमानो वा दाप्यः तत् सोदयं भवेत् ॥' इति। सोदयं सवृद्धिकमित्यर्थः।

अत्र विशेषमाह **व्यासः** —'[6]भक्षिते सोदयं दाप्यः समं दाप्य उपेक्षिते। किञ्चिदूनं प्रदाप्यः स्याद्द्रव्यमज्ञाननाशितम् ॥' किञ्चिदिति चतुर्थांशहीनमिति **विज्ञानेश्वरः**। **याज्ञवल्क्यस्तु**— [7]'आजीवन्स्वेच्छया दण्ड्यो दाप्यस्तच्चापि सोदयम्।' इति ॥

---

1. व्यवहाराध्याये ६८ श्लोकः। पूर्वार्धगतं विषयं मात्र संवदति।
2. ऋणादानप्रकरणे ४१ श्लोकः।
3. अष्टमाध्याये १८९ श्लोकः।
4. औपनिधिकप्रकरणे ६ श्लोकः।
5. निक्षेपविषयकप्रकरणे १२ श्लोकः।
6. व्यासस्मृतौ भक्षिते इत्यादिकः श्लोकः न दृश्यते।
7. व्यवहाराध्याये ६९ श्लोके पूर्वार्धं।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**नारदोऽपि** — [1] 'यत्रार्थसाधनं यत्तत् निक्षेप्तुरननुज्ञया । तत्रापि दण्ड्यस्स भवेत्तं च सोदयमावहेत् ॥' इति ।

द्रव्यस्वामिना याचितस्याप्रदाने तदुत्तरकालं चोरादिना च नाशे तन्मूल्यकल्पनया धनिने समं दाप्यः, तत्समदण्डश्च ग्राह्य इत्याह **याज्ञवल्क्यः** — [2] 'भ्रष्टश्चेन्मार्गिते दत्ते दाप्यो दण्डं च तत्समम् ॥' इति ।

**नारदस्तु** — [3] 'याच्यमानस्तु यो दात्रा निक्षेपं न प्रयच्छति । दण्ड्यस्स राज्ञा दाप्यश्च नष्टे दाप्यश्च तत्समम् ॥' इति । साहसं=दण्डः ॥

**मनुरपि** — [4] 'निक्षेपो यः कृतो येन यावांश्च कुलसन्निधौ । तावानेव स विज्ञेयो विब्रुवन्दण्डमर्हति ॥' इति ।

असाक्षिके तु विशेषमाह **बृहस्पतिः** — [5] 'रहोदत्ते निधौ यत्र विसंवादः प्रवर्तते । विभावकं तत्र दिव्यं उभयोरपि च स्मृतम् ॥' इति ।

ग्रहीतृस्थापकयोरनृतवादित्वे दण्डमाह **मनुः** — [6] 'यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते । तावुभौ चोरवच्छास्यौ प्रदाप्यौ तत्समं दमम् ॥' इति ॥

निक्षिप्तद्रव्यमकाले ददतो द्विगुणो दण्डः । तदाह **कात्यायनः** — [7] 'ग्राह्यस्तूपनिधिः काले कालहीनं तु वर्जयेत् । कालहीनं ददन् दण्डं द्विगुणं च प्रदाप्यते ॥' इति । यादृशे भये निमित्ते द्रव्यं निक्षिप्तं तद्भयाप-

---

1. यत्रार्थसाधनं इत्यादिश्लोकः मुद्रितपुस्तके यथोदाहृतं न दृश्यते । अपि तु एवमाशयबोधकः निक्षेपप्रकरणे १३ श्लोकः भवति ॥
2. व्यवहाराध्याये ६८ श्लोके उत्तरार्धं ।
3. औपनिधिके प्रकरणे ४ श्लोकः ।
4. अष्टमाध्याये १९४ श्लोकः ।
5. निक्षेपविषयकप्रकरणे १४ श्लोकः ।
6. अष्टमाध्याये १९१ श्लोकः ।
7. स्मृतिसन्दर्भान्तर्गतकात्यायनस्मृतौ व्यवहारकाण्डो न दृश्यते ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गमात् प्राक् दत्तं कालहीनं। तत्र दानदौष्ट्यात् द्विगुणदंडो ग्राह्य इत्यर्थः॥

भयापगमेऽपि सकृद्याचनानन्तरमेव देयम्। 'सकृद्याचनयार्पयेत्' इति बृहस्पतिस्मरणात्॥

निक्षिप्तद्रव्यस्यापह्नवे प्रकाशनप्रकारमाह मनुः —

[1]'यो निक्षेपं याच्यमानः निक्षेप्तुर्न प्रयच्छति। स याच्यः प्राड्विवाकेन तन्निक्षेप्तुरसान्निधौ॥ साक्ष्यभावे प्रणिधिभिर्वयोरूपसमन्वितैः। अपदेशैस्समं न्यस्य हिरण्यं तत्र तत्वतः॥ स यदि प्रतिदद्यात्तु यथान्यस्तं यथाकृतम्। न तत्र विद्यते किञ्चिद्यत्परेणाभियुज्यते॥' इति॥

साक्ष्यभावे गूढचारैस्तत्सन्निधौ राजोपद्रवं वदद्भिस्समानैर्द्रव्यस्थापनं कारयित्वा कालान्तरे तेषां यथार्थतया प्रदाने निर्दुष्टं जानीयादित्यर्थः।

निक्षेप्तरि सति तत्पुत्रपौत्रादौ न देयमित्याह मनुः —

[2]'निक्षेपोपनिधी नित्यं न देयौ प्रत्यनन्तरे। नश्यतो विनिपाते तावनिपाते त्वनाशिनौ॥' जीवति निक्षेप्तरि पुत्रपौत्रादौ न देयम्। गते तस्मिन् पुत्रपौत्रादिषु देयावेवेत्यर्थः॥

निक्षेप्तर्यतीते पुत्रादिभ्यः स्वयमाहृत्य निक्षेपप्रदाने सति इतोधिकमस्तीति राज्ञा प्रत्यनन्तरैर्वा न नियोक्तव्यमित्याह मनुः —[3]'स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे। स राज्ञा न नियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः॥'

अप्रदानेऽपि प्रत्यनन्तरैर्निक्षेपग्राहिभिः निर्बन्धो न कर्तव्यः; किन्तु सान्त्वेनैव ग्राह्यमित्याह स एव — [4]'अच्छलेनैव चान्विष्येत्तमर्थं प्रीतिपूर्वकम्। विचार्य तस्य वा वृत्तं साम्नैव परिसाधयेत्॥' इति॥

1. अष्टमाध्याये १८०–१८२ श्लोकाः।
2. अष्टमाध्याये १८५ श्लोकः।
3. अष्टमाध्याये १८६ श्लोकः।
4. अष्टमाध्याये १८७ श्लोकः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं ससाक्षिकासाक्षिकभेदेन निक्षेपो द्विविध इत्युक्तम् । तत्र साक्षिस्वरूपमाह **मनुः** — [1] 'समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिध्यति ॥' इति ।

स च साक्षी द्विविधः — कृतोऽकृतश्चेति । साक्षित्वेन स्थापितः कृतः। अनिरूपितोऽकृतः । तत्र कृतः पंचविधः, अकृतः षड्विधः इत्येकादशविधः साक्षी । अथा[त्रा]ह **नारदः** — [2] 'एकादशविधः साक्षी शास्त्रदृष्टो मनीषिभिः । कृतः पंचविधो ज्ञेयः षड्विधोऽकृत उच्यते ॥' इति ।

तेषां च भेदस्तेनैव दर्शितः — [3] 'लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च । गूढश्चोत्तरसाक्षी च साक्षी पंचविधः कृतः ॥' इति ।

लिखितादीनां स्वरूपमुक्तं **कात्यायने** — [4] 'अर्थिना स्वयमानीतो लेख्ये यः सन्निवेश्यते । स साक्षी लिखितो नाम्ना स्मारितः पत्रकादृतः ॥' इति । पत्रकादृत इत्यस्य विवरणं तेनैव कृतं — 'यस्तु कार्यप्रसिद्ध्यर्थं दृष्ट्वा कार्यं पुनः पुनः । स्मार्यते ह्यर्थिना साक्षी स स्मारित इहोच्यते ॥'इति ।

यदृच्छयागतस्साक्षी क्रियते स यदृच्छाभिज्ञः । स्मारितयदृच्छाभिज्ञयोः पत्रिकानारूढत्वेपि भेदस्तेनैव दर्शितः—

'प्रयोजनार्थमानीतः प्रसंगादागतश्च यः । द्वौ साक्षिणौ त्वलिखितौ पूर्वपक्षस्य साधकौ ॥' इति । 'अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम् । यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते ॥' इति । तथा, 'साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषते । श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः ॥' इति । इत्येवं कृतसाक्षिणः पञ्चविधाः ॥

---

1. अष्टमाध्याये ७४ श्लोके पूर्वार्धं ।
2. ऋणादानप्रकरणे १२६ श्लोकः ।
3. ऋणादानप्रकरणे १२७ श्लोकः ।
4. स्मृतिसन्दर्भान्तर्गतायां कात्यायनस्मृतौ व्यवहाराध्यायो न दृश्यते ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अकृताश्च नारदेन दर्शिताः — [1]' ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणः। कार्येष्वधिकृतो यस्स्यादर्थिना प्रहितश्च यः। कुल्याकुलविवादेषु विज्ञेयास्तेपि साक्षिणः ॥' इति। अत्र प्राड्विवाकग्रहणं लेखकसभ्योपलक्षणार्थम्। [2] 'लेखकः प्राड्विवाकश्च सभ्यश्चैवानुपूर्वशः। नृपे पश्यति तत्कार्यं साक्षिणस्समुदाहृताः ॥' इति।

साक्षिणां शीलवर्णजातिसंख्यानियमानाह याज्ञवल्क्यः — [3] 'तपस्विनो दानशीलाः कुलीनास्सत्यवादिनः। धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः॥ प्रवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः। यथाजाति यथावर्णं सर्वे सर्वासु वा स्मृताः ॥' इति। वर्णाः= ब्राह्मणादयः। जातिः = मूर्धावसिक्ताद्यनुलोमाः प्रतिलोमाश्च। तत्र ब्राह्मणस्य ब्राह्मणः, क्षत्रियस्य क्षत्रिय इति वर्णानाम्। मूर्धावसिक्तस्य मूर्धावसिक्तः, धीवरस्य धीवर इति जातिष्वपि नियमः। असंभवे सर्वे सर्वत्र साक्षिण इत्यर्थः।

**मनुरपि** -- [4] 'यादृशा धनिभिः कार्या व्यवहारेषु साक्षिणः। तादृशान्संप्रवक्ष्यामि यथा वाच्यमृतं च तैः॥ गृहिणः पुत्रिणो मौलाः क्षत्रविट्शूद्रयोनयः। प्रयुक्ताः साक्ष्यमर्हन्ति न ये केचिदनापदि॥ आप्तास्सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः। सर्वधर्मविदोऽलुब्धान्विपरीतांश्च वर्जयेत् ॥' इति।

विपरीतांश्च स एवाह -- [5] 'नार्थसंबन्धिनो नाप्ता न सहाया न वैरिणः। न दृष्टदोषाः कर्तव्या न व्याध्यार्ता न दूषिताः॥ न साक्षी

1. ऋणादानप्रकरणे १२८ श्लोकस्य उत्तरार्धं १२९ श्लोकश्च।
2. नारदीयस्मृतौ न विद्यते।
3. पञ्चमे व्यवहाराध्याये ६८, ६९ श्लोकौ।
4. अष्टमाध्याये ६१—६३ श्लोकाः।
5. अष्टमाध्याये ६४—६७ श्लोकाः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नृपतिः कार्यो न च कारुकुशीलवौ । न श्रोत्रियो न लिङ्गस्थो न संगेभ्यो विनिर्गताः ॥ नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत् । न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः ॥ नार्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णावपीडितः । न श्रमार्तो न कामार्तो न क्रुद्धो नापि तस्करः ॥' इति ।

स्त्रीणां स्त्रिय एव साक्षिण्यः ब्राह्मणानां ब्राह्मण एवेति यथावर्णं साक्षिण इत्याह मनुः — [1]'स्त्रीणां साक्ष्यं स्त्रियः कुर्युः द्विजानां सदृशा द्विजाः । शूद्रास्सन्तश्च शूद्राणामन्त्यानामन्त्ययोनयः ॥' इति । नारदोऽपि — [2]'यथाजाति यथावर्णं सर्वे सर्वत्र वा स्मृताः ।' इति ।

पूर्वोक्तानामलाभे मनुष्यमात्रस्य साक्ष्यमाह मनुः — [3]'अनुभावी तु यः कश्चित्कुर्यात्साक्ष्यं विवादिनाम् । अन्तर्वेश्मन्यरण्ये वा शरीरस्यैव चात्यये ॥' इति ।

किञ्च वक्ष्यमाणा अपि सत्यसाक्षिण इत्याह स एव — '[4]स्त्रियाप्यसंभवे कार्यं बालेन स्थविरेण वा । शिष्येण बन्धुना वापि दासेन भृतकेन वा ॥' इति ।

बालादिसाक्षिषु प्रमाणान्तरं विधत्ते स एव — [5]'बालवृद्धातुराणां च साक्ष्ये च वदतां मृषा । जानीयादस्थिरां वाचं उत्सिक्तमनसां तथा ॥' इति ।

बलकृतादिषु साक्षी न परीक्षणीय इत्याह स एव — [6]'साहसेषु च सर्वेषु स्तेयसंग्रहणेषु च । वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥'

---

1. अष्टमाध्याये ६८ श्लोकः ।
2. ऋणादानप्रकरणे १३१ श्लोकस्य उत्तरार्धं ।
3. अष्टमाध्याये ७९ श्लोकः ।
4. अष्टमाध्याये ८० श्लोकः ।
5. अष्टमाध्याये ७१ श्लोकः ।
6. " ७२ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति। सहः=बलं; तेनायं भवतीति साहसः=गृहदाहादिः। स्तेयं=सुवर्णादि-हरणम्। संग्रहणं=स्त्रीभोगादि। वाक्पारुष्यं दण्डपारुष्यं च। एतेषु निमित्तेषु साक्ष्यन्तराभावात् 'गृहिणः पुत्रिणो मौलाः' इत्यादिसाक्षिधर्मेण साक्षि-परीक्षा न कर्तव्येत्यर्थः॥

साक्षिणां परस्परद्वैविध्ये बहूक्तं ग्राह्यमित्याह **स एव** — [1]'बहूक्तं परिगृह्णीयात् साक्षिद्वैधे नराधिपः। समेषु तु गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान्॥' इति। उभयानुमतश्चेदेकोऽपि साक्षी भवतीत्याह **याज्ञवल्क्यः** — [2]'उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित्॥' इति।

प्राड्विवाकेन पृष्टः साक्षी सत्यमेव ब्रूयादित्याह **मनुः** — [3]'सत्यं साक्ष्ये ब्रुवन्साक्षी लोकानाप्नोति पुष्कलान्। इह चानुत्तमां कीर्तिं वागेषा ब्रह्मपूजिता॥ साक्ष्येऽनृतं वदन्पाशैः बध्यते वारुणैर्नरः। विवशः शत-माजातीस्तस्मात्साक्ष्ये वदेदृतम्॥' इति। शतमाजातीः=शतजन्मा-न्यभिव्याप्येत्यर्थः॥

साक्षिस्वरूपं सत्यासत्यवचनयोश्च फलमाह स्थलान्तरे **मनुः** — [4]'समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिद्ध्यति। तत्र सत्यं ब्रुवन् साक्षी धर्मार्थाभ्यां न हीयते॥ साक्षी दृष्टश्रुतादन्यद्विब्रुवन्नार्यसंसदि। अवाङ्-नरकमभ्येति प्रेत्य स्वर्गाच्च हीयते॥' इति॥ स्ववंचनया साक्षिणो वंचना कर्तुं न शक्यमित्याह **मनुः** — [5]'आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथात्मनः। मावमंस्था स्वमात्मानं नृणां साक्षिणमुत्तमम्॥ मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः। तांस्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः॥'

1. अष्टमाध्याये ७३ श्लोकः।
2. व्यवहाराध्याये साक्षिप्रकरणे ७४ श्लोके पूर्वार्धं।
3. अष्टमाध्याये ८१, ८२ श्लोकौ।
4. ,, ७४, ७५ श्लोकौ।
5. अष्टमाध्याये ८४—८६ श्लोकौ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः । रात्रिस्सन्ध्ये च धर्मश्च वृत्तज्ञास्सर्वदेहिनाम् ॥' इति ॥

ज्ञात्वाप्यवचने दोषमाह याज्ञवल्क्यः — [1]'न ददाति हि यस्साक्ष्यं जानन्नपि नराधमः । स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ॥' इति ।

साक्षिणं प्रति प्रश्नप्रकारमाह मनुः — [2]'देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् । उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे प्रयतः शुचीन् ॥ ब्रूहीति ब्राह्मणं ब्रूयात् सत्यं ब्रूहीति पार्थिवम् । गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ ब्रह्मघ्नो ये स्मृता लोका ये च स्त्रीबालघातिनः । मित्रद्रुहः कृतघ्नस्य ते ते स्युर्ब्रुवतो मृषा ॥ जन्मप्रभृति यत्किञ्चित् पुण्यं भद्रं त्वया कृतम् । तत्सर्वं नाशमागच्छेद्यदि ब्रूयास्त्वमन्यथा ॥ एकोऽहमस्मीत्यात्मानं यत्त्वं कल्याण मन्यसे । नित्यं स्थितस्ते हृद्येषः पुण्यपापेक्षिता मुनिः ॥ यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ॥' इति ॥

अनृतवचनस्य फलं नग्नत्वादिकमित्याह — [3]'नग्नो मुण्डः कपाली च भिक्षार्थी क्षुत्पिपासितः । अन्धः शत्रुगृहं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥ अवाक्शिरास्तमस्यन्धे किल्बिषी नरकं पतेत् । यः प्रश्नं वितथं ब्रूयात् पृष्टः सन्धर्मनिश्चये ॥' इति ।

एतादृशसाक्षियुक्तेषु निक्षेपेषु साक्षिवचनानुरोधेन तत्वं जानीयात् । असाक्षिकेषु तु निक्षेपेषु शपथेनैव तत्वं जानीयादित्याह मनुः —

[4]'असाक्षिकेषु चार्थेषु मिथो विवदमानयोः । अविन्दंस्तत्वतः सत्यं

---

1. व्यवहाराध्याये ७७ श्लोकः ।
2. अष्टमाध्याये ८७—९२ श्लोकाः ।
3. अष्टमाध्याये ९३, ९४ श्लोकौ ।
4. अष्टमाध्याये १०९, ११० श्लोकौ ।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शपथेनापि लंभयेत् ॥ महर्षिभिश्च देवैश्च कार्यार्थं शपथाः कृताः। वसिष्ठश्चापि शपथं शेपे पैजवने नृपे ॥' इति।

सीताऽदुष्टेत्यस्मिन्नर्थे वाल्मीकिरपि शपथं कृतवान् उत्तरकाण्डे —[1] 'बहुवर्षसहस्राणि तपश्चर्या मया कृता। तस्याः फलमुपाश्नीयां अपापा मैथिली यदि ॥ मनसा कर्मणा वाचा कृतपूर्वं न किल्बिषम्। फलं तस्याहमश्नीयां अपापा मैथिली यदि ॥' इति ॥

शपथप्रकारमाह मनुः — [2] 'सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः। गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ अग्निं वा हारयेच्छूद्रं अप्सु वैनं निमज्जयेत्। पुत्रदारस्य वाप्येनं शिरांसि स्पर्शयेत्पृथक् ॥ समिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति यम्। न वार्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः ॥' इति।

छान्दोग्येपि—[3] 'अथ यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते। सोऽनृताभिसंधोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यते, अथ हन्यते। अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते। स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यते, अथ मुच्यते।' इति ॥

अतो निक्षेपरक्षणस्याकरणे प्रत्यवायात् करणेऽभ्युदयप्राप्तेश्च अवश्य-कर्तव्यन्यासरक्षणाय गृहीत्वैव सञ्चारं कृतवान्।

**नित्यं शस्त्रं परिहरन् क्रमेण स तपोधनः।**
**चकार रौद्रीं स्वां बुद्धिं त्यक्त्वा तपसि निश्चयम् ॥ २१ ॥**

1. षण्णवतितमे सर्गे २०, २१ श्लोकौ।
2. अष्टमाध्याये ११३—११५ श्लोकाः।
3. षष्ठाध्याये षोडशखण्डः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**ततः स रौद्राभिरतः प्रमत्तोऽधर्मकर्शितः ।**
**तस्य शस्त्रस्य संवासाज्जगाम नरकं मुनिः ॥ २२ ॥**

अनेन तपस्विनां शस्त्रसंवन्धो निषिद्ध इति सूचितम् । तथा च उत्तरकाण्डे रावणेन युद्धार्थं प्रवृत्तं मरुत्तं प्रति संवर्तः —[1] 'दीक्षितस्य कुतो युद्धं क्रूरत्वं दीक्षिते कुतः ॥'

**एवमेतत्पुरावृत्तं शस्त्रसंयोगकारणम् ॥ २३ ॥**
**स्नेहाच्च बहुमानाच्च स्मारये त्वां न शिक्षये ॥ २४ ॥**

अनेन महतां निकृष्टेन शिक्षणं न कर्तव्यमिति सूचितम् । अत एव ऋषिगणं प्रति **रामः** —'नैवमर्हथ मां वक्तुमाज्ञाप्योऽहं तपास्विनाम् ।' इति ।

**न कथंचन सा कार्या गृहीतधनुषा त्वया ।**
**बुद्धिर्वैरं विना हन्तुं राक्षसान्दण्डकाश्रितान् ॥**
**अपराधं विना हन्तुं लोकान्वीर न कामये ॥ २५ ॥**

'अपराधं विना' इत्यनेन अपकारिणां वधे दोषो नास्तीति सूचितम् । तथा **चापस्तम्बः**—[2] 'यो हिंसार्थं अभिक्रान्तं हान्ति मन्युरेव मन्युं स्पृशति; न तस्मिन् दोषः' इति । पुराणे इति ? ॥

**मनुरपि** —[3] 'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् ॥ नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥' इति ॥

**वसिष्ठोपि** —[4] 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदार-

1. उत्तरकाण्डे १८ सर्गे १८ श्लोके पूर्वार्धं ।
2. आपस्तम्बधर्मसूत्रे प्रथमप्रश्ने १० पटले ७ सूत्रं ।
3. अष्टमाध्याये ३५० श्लोकः ३५१ श्लोकस्य पूर्वार्धं च ।
4. तृतीयेऽध्याये १९, २० श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हरश्चैव षडेते आततायिनः ॥ आततायिनमायान्तमपि वेदान्तपारगम् । जिघांसन्तं जिघांसीत न तेन भ्रूणहा भवेत् ॥' इति ।

**क्षत्रियाणां तु वीराणां वनेषु निरतात्मनाम् ।**
**धनुषा कार्यमेतावत् आर्तानामभिरक्षणम् ॥ २६ ॥**

इत्यनेन क्षत्रियाणां आयुधधारणं आर्तजनरक्षणायैवेति सूचितम् । तथा च कालिदासः —[1] 'आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि' इति ।

**क्व च शस्त्रं क्व च वनं क्व च क्षात्रं तपः क्व च ।**
**आविद्धमिदमस्माभिर्देशधर्मस्तु पूज्यताम् ॥ २७ ॥**

अनेन देशोचिताचार एव कर्तव्य इति सूचितम् ॥

**धर्मादर्थः प्रभवति धर्मात्प्रभवते सुखम् ।**
**धर्मेण लभते सर्वं धर्मसारमिदं जगत् ॥ ३० ॥**

अनेन कृत्स्नं जगत् धर्ममूलमिति सूचितम् । तथा च तैत्तिरीयश्रुतिः [2] 'धर्मो विश्वस्य जगतः प्रतिष्ठा ; लोके धर्मिष्ठं प्रजा उपसर्पन्ति, धर्मेण पापमपनुदति, धर्मे सर्वं प्रतिष्ठितं ; तस्माद्धर्मं परमं वदन्ति' । इति ॥

मनुरपि —[3] 'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' इति ॥

**आत्मानं नियतैस्तैस्तैः कर्शयित्वा प्रयत्नतः ।**
**प्राप्यते निपुणैर्धर्मो न सुखाल्लभ्यते सुखम् ॥ ३१ ॥**

अयमर्थः वनपर्वणि सत्यभामाद्रौपदीसंवादे —[4] 'सुखं सुखेनेह न जातु लभ्यं दुःखेन साध्वी लभते सुखानि ॥' इति ।

---

1. शाकुन्तळनाटके षष्ठेके मातलिवाक्यं।
2. तैत्तिरीयोपनिषदि ४ प्रश्ने उपान्तिमेऽनुवाके ।
3. तृतीयाध्याये ७६ श्लोकः ।
4, २३४ अध्याये ४ श्लोकस्य पूर्वार्धं ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्त्रीचापलादेतदुदाहृतं मे
धर्मं च वक्तुं तव कस्समर्थः ।
विचार्य बुद्ध्या तु सहानुजेन
यद्रोचते तत्कुरु मा चिरेण ॥ ३३ ॥

नन्वत्रार्तमुनिजनरक्षणाय गृहीतायुधं रामं प्रति 'क्षत्रियाणां तु वीराणां' इत्यादिश्लोकैः आर्तजनरक्षणाय आयुधग्रहणं ब्रुवती सीता, 'न कथञ्चन सा कार्या गृहीतधनुषा त्वया। बुद्धिर्वैरं विना हन्तुं राक्षसान्दण्डकाश्रितान् ॥ क्व च शस्त्रं क्व च वनं क्व च क्षात्रं तपः क्व च।' इत्यादिश्लोकैः कथमायुधग्रहणं प्रतिषेधतीति चेत् — न; 'कामं तपःप्रभावेन शक्ता हन्तुं निशाचरान्' इत्यादिवचनैः ऋषीणां स्वतपःप्रभावेनैव निशाचरादिनिग्रहसामर्थ्यावगमेन शरण्या इत्यनेन सर्वशरण्यत्वावगमेन च स्वत एवार्तिपरिहारसंभवात् । अतस्तद्रक्षणाय आयुधं न ग्राह्यं इत्येतदभिप्रायकत्वात् ॥

इति नवमः सर्गः ॥

## अथ दशमः सर्गः ॥

दशमे— वाक्यमेतत्तु वैदेह्या व्याहृतं भर्तृभक्तया ।
श्रुत्वा धर्मे स्थितो रामः प्रत्युवाचाथ मैथिलीम् ॥ १ ॥

हितमुक्तं त्वया देवि स्निग्धया सदृशं वचः ।
कुलं व्यपदिशन्त्या च धर्मज्ञे जनकात्मजे ॥ २ ॥

किन्तु वक्ष्याम्यहं देवि त्वयैवोक्तमिदं वचः ।
धार्यते क्षत्रियैश्चापो नार्तशब्दो भवेदिति ॥ ३ ॥

ते चार्ता दण्डकारण्ये मुनयः शंसितव्रताः ।
मां सीते स्वयमागम्य शरण्यं शरणं गताः ॥ ४ ॥

अतो गृहीतायुधेन मया आर्तमुनिजनरक्षणं अवश्यं कर्तव्यमित्यब्रवीत् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नन्वत्र स्वेन आर्तमुनिजनसंरक्षणं कर्तव्यमिति रामोक्तिरनुपपन्ना। पूर्वत्र 'कामं तपःप्रभावेन' इत्यादिना तेषामेव तपोमहिम्ना स्वार्तिपरिहारसामर्थ्यावगमात् इति चेत्—न।

काले काले च नियता नियमैर्विविधैर्वने।
भक्ष्यन्ते राक्षसैर्भीमैर्नरमांसोपजीविभिः ॥ ६ ॥

ते भक्ष्यमाणा मुनयो दण्डकारण्यवासिनः।
अस्मानभ्यवपद्येति मामूचुर्द्विजसत्तमाः ॥ ७ ॥

चिरार्जितं च नेच्छामस्तपः खण्डयितुं वयम् ॥ १४ ॥

बहुविघ्नं तपो नित्यं दुश्चरं चैव राघव।
तेन शापं न मुंचामो भक्ष्यमाणास्तु राक्षसैः ॥ १५ ॥

इत्यादिवचनैः निशाचरग्रहणे स्वतस्समर्थानामपि तेषां बहुविधनियमैः चिरकालार्जितस्य तपसो व्ययो भवेदित्यतो राक्षसनिग्रहमकुर्वतां तत्कृतोपद्रवात्त्राणमिच्छतां ऋषीणां आर्तत्वात् तद्रक्षणायायुधग्रहणं युक्तमेव। दण्डकारण्यवासिमुनिजनै राक्षसोपद्रुतैः त्रायस्वेति असकृदभियाचितोऽहं अखिलमुनिजनसमक्षं राक्षसवधदीक्षितो दण्डकारण्यवासिनो मुनीन् परिपालयामीति प्रतिज्ञामकरवम् ॥

संश्रुत्य च न शक्ष्यामि जीवमानः प्रतिश्रवम्।
मुनीनामन्यथा कर्तुं सत्यमिष्टं हि मे सदा ॥ १८ ॥
अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्।
न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥ १९ ॥

अत्र स्वप्राणभार्याभ्रात्रादिपरित्यागेनापि प्रतिज्ञातार्थपरिपालनं कर्तव्यम्। तदकरणे प्रत्यवाय इति सूचितम्। तथा च **महाप्रस्थानिके** भीमं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रति युधिष्ठिरवचनं [1]'एकाह्ना निर्दहेयं वै शत्रूनित्यर्जुनोऽब्रवीत् । न च तत्कृतवानेष शूरो मानी ततोऽपतत् ॥' इति ।

कर्णपर्वण्यपि कृष्णं प्रत्यर्जुनवाक्यं — [2]'अन्यस्मै देहि गाण्डीवं इति मां यः प्रचोदयेत् । छिन्द्यामहं शिरस्तस्य इत्युपांशुव्रतं मम ॥ इत्युक्तोहमदीनार्थं राज्ञा तेन यशस्विना । समक्षमिह गोविन्द तन्न क्षन्तुमिहोत्सहे ॥ तस्मादेनं हनिष्यामि राजानं धर्मचारिणम् । प्रतिज्ञां पालयिष्यामि हत्वैनं नरसत्तम ॥' इति ।

स्त्रीपर्वण्यपि भीमं प्रति गान्धार्या भ्रातुर्दुश्शासनस्य रक्तपानं अयुक्तं त्वया कृतं इत्यभिहिते सभायां द्रौपदीकेशपक्षपरामर्शजनितक्रोधवशेन द्रोहिणो दुश्शासनस्य पास्यामि रुधिरमिति प्रतिज्ञामकरवम् । तन्निर्वहणाय अकृत्यमपि रक्तपानं कृतमित्याह भीमः —

[3]'केशपक्षपरामर्शे द्रौपद्या द्यूतकारिते । क्रोधाद्यदब्रुवं चाहं तच्च मे हृदि वर्तते ॥ क्षत्रधर्मच्युतो राज्ञि भवेयं शाश्वतीः समाः । प्रतिज्ञां तां कृतां सत्यां अस्मास्वनपराधिषु । अधुना किन्तु दोषेण परिशंकितुमर्हसि ॥' इति ।

तदधुना प्रतिज्ञापरिपालनैकतानमानसेन मया ऋषिगणोपद्रवकरनिशाचरप्रकरहननादिपूर्वकं मुनिजनपरिपालनं अवश्यकर्तव्यमेव ।

**मम स्नेहाच्च सौहार्दादिदमुक्तं त्वयानघ ।**
**परितुष्टोऽस्म्यहं सीते न ह्यनिष्टोऽनुशिष्यते ॥ २१ ॥**

इत्यभिधाय,

**रामो धनुष्मान् सह लक्ष्मणेन जगाम रम्याणि तपोवनानि ॥ २२ ॥**

---

1. द्वितीयेऽध्याये २१ श्लोकः ।
2. ६९ अध्याये ९-११ श्लोकाः ।
3. १५ अध्याये १८— २० श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेनापृष्टयापि सीतया कृतं हितोपदेशं आकर्ण्य उपश्लाघनपूर्वकं, 'न ह्यनिष्टोऽनुशास्यते' इति प्रतिपादनात् । अनेन अन्योपि यो यस्य श्रेयो भवेदिति इच्छति तेन तं प्रति अपृष्टेनापि हितोपदेशः कर्तव्य इति सूचितम् । तथा च उद्योगपर्वणि विदुरनीतौ —[1] 'शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् । अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥' इति ॥

इति दशमः सर्गः ॥

## अथ एकादशः सर्गः ॥

एकादशे—तदनु निशाचरनिधनाय कृतनिश्चयो रामो जनकतनया-लक्ष्मणाभ्यां सह विविधगिरिनदीसरांसि गजयूथांश्च पश्यन्नेव समतिक्रम्य दूरमध्वानं, लम्बमाने भगवति दिवाकरे, सरसीरुहसमलङ्कृतसरोवरान्तर्गत-गीतवादित्रश्रवणजनितविस्मयः, धर्मव्रतं नाम मुनिमिदमब्रवीत् --

इदमत्यद्भुतं दृष्ट्वा [श्रुत्वा] सर्वेषां नो महामुने ।
कौतूहलं महज्जातं किमिदं साधु कथ्यताम् ॥ ९ ॥ इति ।

ततो मुनिरपि सरःप्रवरस्य प्रभावमेवमवादीत् -- पुरा खलु मांडु-कर्णिमहर्षिः वाताशननीरावगाहनादिनानाविधनियमपूर्वकं दशवर्षसहस्रं तपस्तप्तवान् । ततो देवास्तमवलोक्य कस्य वा स्थानमयमाक्रमिष्यतीति चकितमानसाः तदीयतपोविघाताचरणाय मदकरमधुमदनमधुररवमधुकर-पिकशुकादिसहायोपेताः सकलजनमनोहारिणीः पञ्चाप्सरसः संप्रेषयामासुः ॥

1. ३५ अध्याये ४ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ततो माण्डुकर्णिर्महर्षिरास्थाय यौवनावस्थां, परिगृह्य पंचाप्सरसः, सरोवरान्तरे निर्माय नर्मसदनं, प्रविश्य च तद्भवनं स्वमनोविनोदनचतुरकामिनीसंभोगसंभूतहर्षाविष्टहृदयो बभूव ॥

आसां संक्रीडमानानां एष वादित्रनिस्वनः ।
श्रूयते भूषणोन्मिश्रो गीतशब्दो मनोहरः ॥ २० ॥ इति ।

ततो मुनिकथितकमलिनीकथाकर्णनाकलितविस्मयो रामः

अग्रतो रमणीयं च ददर्शाश्रममण्डलम् ।
कुशचीरपरिक्षिप्तं नानावृक्षसमाकुलम् ॥ २२ ॥

प्रविश्य सह वैदेह्या लक्ष्मणेन च राघवः ।
उवास मुनिभिस्सर्वैः पूज्यमानो महात्मभिः ॥ २३ ॥

ततः पर्यायेण निखिलमुनिजननिलयेषु नीत्वा दशसंवत्सरान् पुनरागत्य तीक्ष्णतपसः सुतीक्ष्णस्य महर्षेः समक्षमिदमवोचत्—

अगस्त्यमभिगच्छेयमभिवादयितुं मुनिम् ॥ ३४ ॥

मनोरथो महानेष हृदि मे परिवर्तते ।
यद्यहं तं मुनिवरं शुश्रूषेयमपि स्वयम् ॥ ३५ ॥ इति ।

अनेन महापुरुषसन्दर्शनं सुदूरमपि गत्वा प्राह्यमिति सूचितम् । अत एव अभिगमनमर्हतीत्यस्मिन्नर्थे क्रोशशतिको भिक्षुः योजनशतिक आचार्यः इति महाभाष्यप्रयोगः ॥

मनुरपि —[1] 'दैवतान्यभिगच्छेत्तु धार्मिकांश्च द्विजोत्तमान् । ईश्वरं चैव रक्षार्थं गुरूनेव च पर्वसु ॥'

ततो रामवचनश्रवणकृतत्वरः सुतीक्ष्ण इत एव योजनचतुष्टयमार्गे

1. चतुर्थाध्याये १५३ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हंसचक्रवाकादिविविधसारसालङ्कृतसरोवरविराजिते स्थलप्रचुरे देशे भगवतो महामुनेरगस्त्यभ्रातुराश्रमः ।

तत्रैकां रजनीमुष्य प्रभाते राम गम्यताम् ।

ततो योजनमात्रे रमणीये वनोद्देशे वैदेहीसहायस्य भवतो विहारयोग्यो भगवतो महामुनेराश्रमः । तदद्यैव गमनमभिरोचयेत्यवोचत् ॥

ततो दाशरथिरभिवाद्य महामुनिं लक्ष्मणमिदमाह --

एतदेवाश्रमपदं नूनं तस्य महात्मनः ।
अगस्त्यस्य मुनेर्भ्रातुः दृश्यते पुण्यकर्मणः ॥ ४९ ॥

विविक्तेषु च तीर्थेषु कृतस्नाना द्विजातयः ।
पुष्पोपहारं कुर्वन्ति कुसुमैः स्वयमार्जितैः ॥ ५४ ॥

अनेन देवपूजाद्युपयुक्तसमित्पुष्पकुशादिकं ब्राह्मणैः स्वयमाहर्तव्यमिति सूचितम् । तथा च स्मृतिः -- 'समित्पुष्पकुशांबूनि ब्राह्मणः स्वयमाहरेत् ।' इति ।

अगस्त्यस्याश्रमो भ्रातुर्नूनमेष भविष्यति ॥ ५५ ॥
निगृह्य तरसा मृत्युं लोकानां हितकाम्यया ।
यस्य भ्रात्रा कृतेयं दिक् शरण्या पुण्यकर्मणा ॥ ५६ ॥
इहैकदा किल क्रूरो वातापिरपि चेल्वलः ॥ ५६½ ॥
चक्षुषानलकल्पेन निर्दग्धो निधनं गतः ॥ ६८ ॥
तस्यायमाश्रमो भ्रातुस्तटाकवनशोभितः ।
विप्रानुकम्पया येन कर्मेदं दुष्करं कृतम् ॥ ६९ ॥

अनेन स्वप्राणहानिमप्यविगणय्य जगदुपकाराय दुष्करमपि कर्म कर्तव्यमिति सूचितम् । तथा च वनपर्वणि लोमशतीर्थयात्रायां वृत्रहननाय

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वास्थीनि याचमानान् देवान् प्रति दधीचिः – [1]'ततो दधीचिः परमप्रतीतः सुरोत्तमांस्तानिदमित्युवाच । करोमि यद्वो हितमद्य देवाः स्वं चापि देहं स्वयमुत्सृजामि ॥ स एवमुक्त्वा द्विपदां वरिष्ठः प्राणान् वशी स्वान्सहसोत्ससर्ज ॥' इति ॥ अत्रैव स्थलान्तरे — [2]'एष लोकहितार्थं वै पिबामि वरुणालयम् ॥' इति ॥

ततोऽस्ताचलाधिरूढे भगवति सवितरि कृतसायंसन्ध्योपासनः, प्रविश्याश्रमपदं, अभिवाद्य महर्षिं —

**न्यवसत्तां निशामेकां प्राश्य मूलफलानि च ।**

ततः प्रभाते कृतपौर्वाह्णिकोऽनुज्ञाप्य महर्षिं तदुपदिष्टेन मार्गेण महर्षेराश्रमं प्रति गच्छन् दाशरथिर्लक्ष्मणमिदमवादीत् —

**आश्रमो दृश्यते तस्य परिश्रान्तश्रमापहः ॥ ८१ ॥**
**प्रशान्तमृगयूथश्च नानाशकुनिसंकुलः ॥ ८२ ॥**
**तस्यैतदाश्रमपदं प्रभावाद्यस्य राक्षसैः ।**
**दिगियं दक्षिणा त्रासाद् दृश्यते नोपभुज्यते ॥ ८४ ॥**

अनेन महतां सन्निधौ राक्षसाद्युपद्रवो न भवतीति सूचितम् । तथा चादिपर्वणि — [3]'मा भैः पुत्रि न भेतव्यं राक्षसात्तु कथंचन । नैतद्रक्षोभयं यन्मां पश्यसि त्वमुपस्थितम् ॥' इति ।

**यदाप्रभृति चाक्रान्ता दिगियं पुण्यकर्मणा ।**
**तदाप्रभृति निर्वैराः प्रशान्ता रजनीचराः ॥ ८५ ॥**

अनेन महतां सन्निधौ अतिक्रूराणामपि प्रशान्तत्वं भवतीति सूचितम् ।

---

1. १०० अध्याये २१ श्लोकः २२ श्लोके पूर्वार्धं च ।
2. १०५ अध्याये २ श्लोकस्य पूर्वार्धं ।
3. १७७ अध्याये २३ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तथा च योगसूत्रे** — [1] ' अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः । ' इति । अस्यार्थः—सति अहिंसास्थैर्ये तस्याहिंसकस्य योगिधौरेयस्य सन्निधौ स्वभावविरुद्धानां गोव्याघ्रादीनामपि वैरत्यागो भवतीति । **वसिष्ठोऽपि** — [2] ' मातरीव परं यान्ति विषमाणि मृदूनि च । विश्वासमिह भूतानि सर्वाणि शमशालिनि ॥' इति ॥

**मार्गं निरोद्धुं सततं भास्करस्याचलोत्तमः ।**
**निदेशं पालयन्नस्य विन्ध्यशैलो न वर्धते ॥ ८७ ॥**

अनेन महतामाज्ञा अनतिक्रमणीया । किन्तु तदाज्ञायामेव स्थातव्यमिति सूचितम् । तथा च **राजधर्मे** इन्द्रऋषिसंवादे — [3] ' शृणुमस्ते वचस्तात पन्थानो विदितास्तव । नियोगे चैव धर्मात्मन् स्थातुमिच्छामि शाधि नः ॥' इति ।

**एष लोकार्चितस्साधुर्हिते चाभिरतस्सताम् ।**
**अस्मानभिगतानेष श्रेयसा योजयिष्यति ॥ ८९ ॥**

अनेन महान्तः स्वसमीपमागतानां श्रेयः प्रयच्छन्तीति सूचितम् । तथा च **वनपर्वणि** — [4] ' अमोघदर्शी भीष्माहं ब्रूहि किं करवाणि ते । यद्वक्ष्यसि कुरुश्रेष्ठ तस्य दातास्मि तेऽनघ ॥' इति ।

**आराधयिष्याम्यत्राहमगस्त्यं तं महामुनिम् ।**
**शेषं च वनवासस्य सौम्य वत्स्याम्यहं सुखम् ॥ ९० ॥**
**अत्र देवाश्च गन्धर्वाः सिद्धाश्च परमर्षयः ॥ ९०½ ॥**
**चारणाश्च महात्मानो नागाश्च पतगैस्सह ।**

1. द्वितीयपादे ३५ सूत्रं ।
2. स्मृतिसन्दर्भीयवसिष्ठस्मृतौ न विद्यते ।
3. राजधर्मे १२ अध्याये १० श्लोकः ।
4. तीर्थयात्रापर्वणि ८२ अध्याये ३ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वसन्ति नियताहाराः धर्ममाराधयिष्णवः ॥ ९३ ॥

नन्वत्र देवादीनां धर्मानुष्ठातृत्वं प्रतीयते; तदनुपपन्नम् । **जैमिनिना** देवानां कर्मानधिकारस्य षष्ठाध्याये प्रतिपादितत्वात् । तथाहि— 'फलार्थित्वात्तु कर्मणः शास्त्रं सर्वाधिकारं स्यात्' । किमनुष्ठानासमर्थानां अन्धबधिरपङ्गुमूकदेवादीनामप्यधिकारः, उत्तमसर्वाङ्गोपसंहारसमर्थानां मनुष्याणामेवेति । तदर्थमपि यथाधिकारमंगविनियोगः उक्तः 'यथाविनियोगं अधिकारः' इति । तत्र 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यधिकारवाक्यपर्यालोचनया कामनावतां सर्वेषामेवाधिकारोऽवगम्यते । तदनुसारीणि चाङ्गवाक्यानि, न तत्संकोचायालम् । अन्धबधिरपङ्गुमूकव्यतिरिक्तानामेव सर्वेषां आज्यावेक्षणवाचनविष्वङ्निष्क्रमणमन्त्रोच्चारणादयोऽङ्गत्वेन विहिताः । अन्धादीनां तु आज्यावेक्षणादिविध्यभावात्तदतिरिक्ताङ्गोपकृतमेव कर्म फलसाधनं इति फलार्थिनां अशक्याङ्गरहितकर्मानुष्ठानात्सिद्धोऽधिकारः । न च कांस्यभोजिन्यायेन गुणभूताङ्गवाक्यानुसारेण प्रधानस्याप्यधिकारवाक्यस्य चक्षुष्मदादिविषयत्वं स्यादिति वाच्यम् । कांस्यभोजिन्यायस्य निरवकाशविषयत्वात् । अङ्गवाक्यानां च चक्षुष्मदादिशक्तविषयत्वेन निरवकाशत्वाभावात् । सावकाशेनाङ्गेन प्रधानसङ्कोचे 'इन्द्राय त्वा' इति मानमन्त्रानुसारेण ऐन्द्रप्रदानमात्र एव सोमसङ्कोचापत्तेः । देवानां तु सर्वाङ्गोपसंहारसमर्थानामधिकारे न विवादः । अतस्सर्वेषामधिकार इति **पूर्वपक्षः** ॥

**सिद्धान्तस्तु**— भवेदेवं यद्याज्यावेक्षणादिकं पुरुषं प्रति विधीयेत; न त्वेतदस्ति; प्रधानशेषत्वात् तेषाम् । अतोऽङ्गवाक्ययुक्तेन प्रधानवाक्येन सर्वांगयुक्तः क्रतुः पुरुषं प्रति विधीयमानः असमर्थानपहाय समर्थान्प्रत्येव विज्ञायते । अतः समर्थानामेवाधिकारः । देवानां तु आत्मोद्देशेन द्रव्यत्यागायोगात् विग्रहाभावाच्च नाधिकार इति ॥

एवं च कथं कर्मानुष्ठातृत्वं देवानामिति चेदुच्यते । देवाना-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मनधिकारं वदन् प्रष्टव्यः किं विग्रहाभावादनधिकारोऽथवा अर्थित्वा-भावात्; उत्तासामर्थ्यादाहोस्विद्विद्याभावात्; अग्न्यभावाद्वा; अथवा प्रति-षेधात्; अविधानाद्वेति ॥

नाद्यः; देवानां विग्रहादिमत्त्वस्य प्राक् प्रपंचितत्वात्। नापि द्वितीयः; सिद्धस्वर्गादिषु इच्छाभावेपि अप्राप्तफलान्तरेच्छासंभवेन अर्थित्वाविरोधात्। तथा तैत्तिरीयश्रुतिः —[1] 'इन्द्रो वाऽकामयत, दृढोऽशिथिलः स्यामिति, स एवं वरुणाय शतभिषजेभ्यः पुरोडाशं दशकपालं निरवपत् कृष्णानां व्रीहीणां, ततो वै स दृढोऽशिथिलोऽभवत्' इति। नापि सामर्थ्याभावादिति तृतीयः पक्षः संभवति। तत्र वक्तव्यं किं द्रव्याभावा-दसामर्थ्यं; अथवा करचरणाद्यंगवैकल्यादिति। नाद्यः। 'इन्द्रो यातो वसि तस्य राजा'। 'ईशानमस्य जगतः स्वर्दृशम्' 'अच्छा गिरो मतयो देवयन्तीः अग्निं यन्ति द्रविणं भिक्षमाणाः।' इत्यादिश्रुत्या इन्द्रादीनां देवानां निरवधिकैश्वर्यावगमेन अद्रव्यत्वासिद्धेः। न द्वितीयः। 'तं सुप्रतीकं सुदृशं स्वंचं' 'सहस्राक्षो गोत्रभिद्वज्रबाहुः' 'इमं मे वरुण श्रुधीहवं' 'ते देवा अग्निमब्रुवन्' 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं' इत्यादि-श्रुतिभिः हस्तपादाक्षिवागादीनां अवैकल्यावगमात् ॥

नापि तुरीयः। किं विद्यैव नास्ति इति, विद्यांगभूतोपनयनादि नास्तीति वा? नाद्यः। उत्कृष्टजनिमतां इन्द्रादीनां स्वयंप्रभातविद्यानां अविद्यानुपपत्तेः। उत्कृष्टजनिमतां स्वयंप्रतिभातविद्यत्वं च बृहदारण्यक-भाष्ये 'द्वितीयाद्वै भयं भवति' इत्येतद्व्याख्यानावसरे एकत्वज्ञानेन भीत्यपगममभिधाय तदेवैकत्वज्ञानं प्रजापतेः कथमित्याक्षेपपूर्वकं प्रति-पादितम् —[2] 'कुतः प्रजापतेः एकत्वदर्शनं जातं, को वा अस्मा उपदिदेश?

1. तैत्तिरीयब्राह्मणे ३ अष्टके प्रथमप्रश्ने ५ अनुवाके ५० तमदशिनी।
2. १ अध्याये ४ ब्राह्मणे २ कण्डिका।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथानुपदिष्टमेव प्रादुरभूत्, अस्मदादेरपि तथात्वप्रसङ्गः । अथ जन्मान्तरकृतसंस्कारहेतुकम् एकत्वदर्शनानर्थक्यप्रसङ्गः । यथा प्रजापतेरतिक्रान्तजन्मावस्थस्य एकत्वदर्शनं विद्यमानमपि अविद्याबन्धकारणं नापनिन्ये; यतोऽविद्यासंयुक्त एवायं जातोविभेत् एवं सर्वेषामेकत्वदर्शनानर्थक्यं प्राप्नोति । अन्यमेव निवर्तकमिति चेत् पूर्ववत् पुनः प्रसङ्गेनानैकान्त्यात् । तस्मादनर्थकमेवैकत्वदर्शनं इति । नैष दोषः । उत्कृष्टहेतूद्भवत्वाल्लोकवत् । यथा पुण्यकर्मोद्भवैर्विविक्तैः कार्यकरणैस्संयुक्ते जन्मनि सति प्रज्ञामेधास्मृतिवैशारद्यं दृष्टं, तथा प्रजापतेः धर्मज्ञानवैराग्यैश्वर्यविपरीतहेतुसर्वपाप्मदाहात् विशुद्धैः कार्यकारणैः संयुक्तं उत्कृष्टजन्म; तदुद्भवं चानुपदिष्टमेव युक्तमेकत्वदर्शनं प्रजापतेः । तथा च स्मृतिः --'ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥' इति । एवमेव विशिष्टजनिमतां मनुष्याणां अपि वामदेवपराशरप्रभृतीनां उपनयनाध्ययनादिकं विना स्वत एव विद्यास्फूर्तिरस्ति । तथा च ऐतरेयके —[1] 'गर्भेषु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा । शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति । गर्भ एवैतच्छयानो वामदेव एवमुवाच ॥' इति ।

आदिपर्वणि तापत्योपाख्याने पुत्रशोकार्दितो वसिष्ठोऽदृश्यन्त्या स्नुषया सह वनं गच्छन्[2] 'अथ शुश्राव संगत्या वेदाध्ययननिस्वनम् । पृष्ठतः परिपूर्णार्थं षड्भिरङ्गैरलङ्कृतम् ॥ ततो वसिष्ठः —[3] 'पुत्रि कस्यैष साङ्गस्य वेदाध्ययननिस्वनः । पुरा साङ्गस्य वेदस्य शक्तेरिव मया श्रुतः ॥ इत्यपृच्छत् । ततोऽदृश्यन्त्युवाच -- अयं कुक्षौ समुत्पन्नश्शक्तेर्गर्भः सुतस्य ते । समा द्वादश तस्येह वेदानभ्यसतो मुनेः ॥' इति ।

---

1. ऐतरेयोपनिषदि द्वितीयेऽध्याये ।
2. १७७ अध्याये १२ श्लोकः ।
3. १७७ अध्याये १४, १५ श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तथा **अष्टावक्रोपाख्यानेपि** उद्दालकेन कहोळाय शिष्याय विद्या कन्यका च दत्ता। [1]'तस्यां गर्भः समभवदग्निकल्पः सोऽधीयानं पितरं चाप्युवाच। सर्वां रात्रिमध्ययनं करोषि नेदं पितः सम्यगिवोपवर्तते॥ वेदान् साङ्गान् सर्वशास्त्रैरुपेतानधीतवानास्मि तव प्रसादात्। इहैव गर्भे तेन पितः ब्रवीमि नेदं त्वत्तः सम्यगिवोपवर्तते॥ उपालब्धः शिष्यमध्ये महर्षिः स तं कोपादुदरस्थं शशाप। यस्मात् कुक्षौ वर्तमानो ब्रवीषि तस्मात्कुक्षौ भवितास्यष्टवक्रः॥ स वै तथा वक्र एवाभ्यजायत अष्टावक्रः प्रथितो वै महर्षिः॥' इति उपनयनाभावेपि विद्यावगम्यते। अतो विशिष्टजनिमतां देवादीनां स्वयंप्रतिभातविद्यत्वेन विद्याभावादनधिकार इति पक्षोऽनुपपन्न एव॥

न द्वितीयः। उपनयनस्याध्ययनाङ्गत्वेन विद्याङ्गत्वाभावात्। तथा च देवताधिकरणे –[2]'तदुपर्यपि बादरायणः संभवात्' इत्येतत्सूत्रव्याख्यानावसरे **भाष्यकृता** 'न चोपनयनशास्त्रेण एषामधिकारो निवर्त्यते। उपनयनस्य वेदाध्ययनार्थत्वात्। तेषां च स्वयंप्रतिभातवेदत्वादिति' इत्युक्तम्॥

नाप्यग्न्यभावादनधिकार इति **पंचमः** पक्षः संभवति। तेषामप्याधानेन अग्निसंपादनसंभवात्। न च 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिश्रुत्या ब्राह्मणाद्यधिकारकमाधानं कथं देवा अनुतिष्ठेयुः? कथं वा तेन देवा अग्निमन्तो भवेयुः इति वाच्यम्। तेषामपि ब्राह्मणत्वादिवर्णविभागावगमेन आधानसंभवात्। तथा च छन्दोगानां प्रपदब्राह्मणे अग्निं संबोध्य यजमानवचनं [3]'त्वं देवेषु ब्राह्मणोऽसि, अहं मनुष्येषु; ब्राह्मणो वै ब्राह्मणमुपधावत्युप त्वा धावामीति'। **तैत्तिरीयश्रुतिरपि** [4]'ब्रह्म वा अग्निः। क्षत्रमिन्द्रः। मरुतो वै देवानां विशः।' इति च॥

1. वनपर्वणि १३२ अध्याये १०—१२ श्लोकाः।
2. ब्रह्मसूत्रे प्रथमाध्याये तृतीयपादे २६ सूत्रम्।
3. सामवेदे प्रपदब्राह्मणे २ प्रपाठके।
4. अश्वमेधे १३ अनुवाके, २ काण्डे ३ प्रश्ने प्रथमानुवाके च।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बृहदारण्यकमपि—[1] 'ब्रह्म वा इदमग्र आसीदेकमेव तदेकं सन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति। तस्मात्क्षत्रात् परं नास्ति। तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति। सैषा क्षत्रस्य योनिः यद्ब्रह्म। तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं। य उ एनं हिनस्ति स्वां स योनिमृच्छति स पापीयान् भवति यथा श्रेयांसं हिंसित्वा। स नैव व्यभवत्। स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति। स नैव व्यभवत्। स शौद्रं वर्णमसृजत पूषणं इयं वै पूषा' इति। तथा 'तदेतद्ब्रह्म क्षत्रं विट्शूद्रः तदग्निनैव देवेषु ब्रह्मा अभवत्। ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो, वैश्येन वैश्यः, शूद्रेण शूद्रः। तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येषु एताभ्यां हि रूपाभ्यां ब्रह्माभवत्' इति ॥

विवृतं चेदं भगवत्पादैः—[2] 'ब्रह्म वा इदमग्र आसीत्। यदग्निं सृष्ट्वा अग्निरूपापन्नं ब्रह्म ब्राह्मणजात्यभिमानात् ब्रह्मेत्यभिधीयते। वै इदं क्षत्रादिजातं ब्रह्मैवाभिन्नमासीत्। एकमेव, नासीत्क्षत्रियादिभेदः। तद्ब्रह्म एकं क्षत्रादिपालयित्रादिशून्यं सन्न व्यभवत् तन्न विभूतवत्। कर्मणे नालमासीदित्यर्थः। ततः तद्ब्राह्मणोस्मि ममेत्थं कर्तव्यमिति ब्राह्मणजातिनिमित्तकर्मचिकीर्षया आत्मनः कर्मकर्तृत्वविभूत्यै श्रेयोरूपं प्रशस्तरूपं अत्यसृजत अतिशयेनासृजत सृष्टवत्। किं पुनस्तत् यत् सृष्टं? क्षत्रं क्षत्रियजातिः। तद्व्यक्तिभेदेन प्रदर्शयति— यान्येतानि प्रसिद्धानि लोके, देवत्रा देवेषु क्षत्राणीति जात्याख्यायां पक्षे बहुवचनस्मरणात्, व्यक्तिभेदाद्वा- भेदोपचारेण बहुवचनम्। कानि पुनस्तानीत्याह— तत्राभिषिक्ता एव

1. प्रथमाध्याये चतुर्थब्राह्मणे।
2. बृहदारण्यके १ अध्याये ४ ब्राह्मणे।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विशेषतो निर्दिश्यन्ते— इन्द्रो देवानां राजा, वरुणो यादसां, सोमो ब्राह्मणानां, रुद्रः पशूनां पर्जन्यो विद्युदादीनां, यमः पितृणां, मृत्यू रोगाणां, ईशानो भासां इत्येवमादीनि देवेषु क्षत्राणि। तदनु इन्द्रादिक्षत्रदेवताधिष्ठितानि मनुष्यक्षत्राणि सोमसूर्यवंश्यानि पुरूरवःप्रभृतीनि सृष्टानि। एवं द्रष्टव्यानि। तदर्थ एव हि देवक्षत्रसर्गः प्रस्तुतः ॥

यस्मात् ब्रह्मणातिशयेन सृष्टं क्षत्रं, तस्मात् क्षत्रात् परं नास्ति ब्राह्मणजातेरपि नियंतृ। तस्मात् ब्राह्मणः कारणभूतोपि क्षत्रियस्य, क्षत्रियमधस्तात् व्यवस्थितः सन् उपरि स्थितं उपास्ते। क्व? राजसूये। क्षत्र एव तदात्मीयं यशः ख्यातिरूपं ब्रह्मेति दधाति स्थापयति। राजसूयाभिषिक्तेन आसंद्यां स्थितेन राज्ञा आमन्त्रितो ब्रह्मन्निति ऋत्विक्पुनः तं प्रत्याह — त्वं राजन्ब्रह्मासि इति। तदेतदभिधीयते क्षत्र एव तद्यशो दधातीति। सैषा प्रकृता क्षत्रस्य योनिः एव, यद्ब्रह्म। तस्माद्यद्यपि राजा परमतां राजसूयाभिषेकगुणं गच्छति आप्नोति ब्रह्मैव ब्राह्मणजातिमेव अन्ततः अन्ते कर्मपरिसमाप्तौ उपनिश्रयति आश्रयति स्वां योनिं पुरोहितं पुरो निधत्त इत्यर्थः। यस्तु पुनर्बलाभिमानात् स्वां योनिं ब्राह्मणजातिं ब्राह्मणं उ एतं हिनस्ति हिंसति न्यग्भावेन पश्यति, स्वामात्मीयामेव स योनिमृच्छति स्वं प्रसवं विच्छिनत्ति विनाशयति। स एतत्कृत्वा पापीयान्पापतरो भवति। पूर्वमपि क्षत्रियः पाप एव क्रूरत्वात्, आत्मप्रसवहिंसया सुतरां। यथा लोके श्रेयांसं प्रशस्ततरं हिंसित्वा परिभूय पापीयान् पापतरो भवति तद्वत् ॥

क्षत्रे सृष्टेपि स नैव व्यभवत् कर्मणे ब्रह्म तथा न व्यभवत् वित्तोपार्जयितुरभावात्। स विशमसृजत कर्मसाधनवित्तोपार्जनाय। कः पुनरसौ विट्? यान्येतानि देवजातानि, स्वार्थे निष्ठा, य एते देवजातिभेदा इत्यर्थः। गणं गणं आख्यायन्ते कथ्यन्ते गणप्राया हि विशः। प्रायेण संहता हि वित्तोपार्जने समर्थाः, नैकैकशः। वसवोऽष्टसंख्यो गणः। तथा एकादश

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रुद्राः । द्वादशादित्याः विश्वेदेवा दश विश्वाया अपत्यानि । सर्वे वा देवाः । मरुतः सप्त सप्त गणाः ॥

स परिचारकभावात् पुनरपि नैव व्यभवत् । स शौद्रं वर्णमसृजत । शूद्र एव शौद्रः स्वार्थेऽणि वृद्धिः । कः पुनरसौ शौद्रो वर्णः यः सृष्टः ? पूषणं पुष्यतीति पूषा । कः पुनरसौ पूषेति विशेषतस्तन्निर्दिशति — इयं पृथिवी पूषा । स्वयमेव निर्वचनमाह —— इयं हीदं सर्वं पुष्यति यदिदं किं च ॥

स चतुरः सृष्ट्वापि वर्णान् नैव व्यभवत् उग्रत्वात् क्षत्रियस्यानियतशंकया ; तच्छ्रेयोरूपं अत्यसृजत । तत्किं ? तद्धर्मं तदेतच्छ्रेयोरूपं (सृष्टं) । क्षत्रस्य क्षत्रं क्षत्रस्यापि नियन्तृ, उग्रादप्युग्रं यद्धर्मो यो धर्मस्तस्मात्क्षत्रस्यापि नियन्तृत्वात् धर्मात् परं नास्ति, तेन हि नियम्यन्ते सर्वे । तत्कथमित्युच्यते—— अथो अप्यबलीयान् दुर्बलतरो बलीयांसं आत्मनो बलवत्तरमपि आशंसते कामयते जेतुं धर्मेण बलेन । यथा लोके राज्ञा सर्वबलवत्तमेनापि कुटुम्बिकः एवम् । तस्मात् सिद्धं धर्मस्य सर्वबलवत्तरत्वात् सर्वनियन्तृत्वम् ॥

यो वै स धर्मो व्यवहारलक्षणो लौकिकैर्व्यवह्रियमाणः सत्यं वै तत् । सत्यमिति यथाशास्त्रार्थता; स एवानुष्ठीयमानो धर्मनामा भवति । शास्त्रार्थत्वेन ज्ञायमानस्तु सत्यं भवति । यस्मादेवं तस्मात् सत्यं यथाशास्त्रं वदन्तं व्यवहारकाले आहुः समीपस्था उभयविवेकज्ञाः धर्मं वदतीति प्रसिद्धं लौकिकं न्याय्यं वदतीति । तथा विपर्ययेण धर्मं वा लौकिकं व्यवहारं वदन्तमाहुः सत्यं वदति शास्त्रादनपेतं वदतीति । एतदुक्तं उभयं ज्ञायमानं, अनुष्ठीयमानं च एतद्धर्म एव भवति । तस्मात्स धर्मो ज्ञानानुष्ठानलक्षणः शास्त्रज्ञान् इतरांश्च सर्वानेव नियमयति । तस्मात् स क्षत्रस्यापि क्षत्रं । अतस्तदभिमानः अविद्वान् तद्विशेषानुष्ठानाय ब्रह्मक्षत्रविट्शूद्रनिमित्तविशेषमभिमन्यते । तानि च निसर्गत एव कर्माधिकारनिमित्तानि ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदेतच्चातुर्वर्ण्यं सृष्टं ब्रह्म क्षत्रं विट् शूद्र इत्युत्तरार्थ उपसंहारः। यत्तत्स्रष्टृ ब्रह्म तदग्निनैव नान्येन रूपेण। देवेषु ब्रह्म ब्राह्मणजातिरभवत्। ब्राह्मणः ब्राह्मणस्वरूपेण मनुष्येषु ब्रह्माभवत्। इतरेषु वर्णेषु विकारान्तरं प्राप्य क्षत्रियेण क्षत्रियोऽभवत्। इन्द्रादिदेवताधिष्ठितः, वैश्येन वैश्यः, शूद्रेण शूद्रः। यस्मात् क्षत्रादिषु विकारापन्नं अग्नौ ब्राह्मण एव चाविकृतं स्रष्टृ ब्रह्म, तस्मादग्नावेव देवेषु देवानां मध्ये लोकं कर्मफलमिच्छन्ति अग्निसंबद्धं कर्म कृत्वेत्यर्थः। तदर्थमेव हि तद्ब्रह्म कर्माधिकरणत्वेनाग्निरूपेण व्यवस्थितं। तस्मात् तस्मिन्नग्नौ कर्म कृत्वा तत्फलं प्रार्थयन्त इत्येतदुपपन्नम्। ब्राह्मणे मनुष्येषु मनुष्याणां पुनर्मध्ये कर्मफलेच्छायां नाग्न्यादिनिमित्तक्रियापेक्षा, किं तर्हि जातिमात्रस्वरूपप्रतिलम्भेनैव पुरुषार्थसिद्धिः। यत्र तु देवाधीना पुरुषार्थसिद्धिः, तत्रैवाग्न्यादिसंबद्धक्रियापेक्षा। स्मृतेश्च — [1]'जप्येनैव तु संसिद्ध्येत् ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यात् मैत्रो ब्राह्मण उच्यते'॥ इति। पारिव्राज्यदर्शनाच्च। तस्माद्ब्राह्मणत्व एव मनुष्येषु कर्मफलमिच्छन्ति; यस्मादेताभ्यां ब्राह्मणत्वाग्निरूपाभ्यां कर्मकर्त्रधिकरणरूपाभ्यां यत्स्रष्टृ ब्रह्म साक्षादभवत्' इति॥

**मोक्षधर्मेपि** — [2]'आदित्याः क्षत्रियास्तेषां विशस्तु मरुतस्तथा। अश्विनौ तु स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ॥ स्मृतास्त्वंगिरसो देवाः ब्राह्मणा इति निश्चयः। इत्येतत्सर्वदेवानां चातुर्वर्ण्यं प्रकीर्तितम्॥' इति। तथा — [3]'तं पूषाधत्त तेन पूषार्ध्नोत् तं त्वष्टाधत्त तं धाताधत्त' इत्यादिवचनैरपि आधानमवगम्यते। तथा च वर्णाश्रमविभागवतां ब्राह्मणानामिव देवानामपि आधानं संभवत्येव॥

नापि प्रतिषेधादिति षष्ठः पक्षः संभवति। शूद्राधिकारप्रतिषेध-

1. मनुस्मृतौ द्वितीयेध्याये ८७ श्लोकः।
2. २०८ अध्याये २४, २५ श्लोकौ।
3. प्रथमकाण्डे पञ्चमप्रश्ने पञ्चमानुवाके।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वचनवत् देवानामधिकारप्रतिषेधकवचनाभावात् । शूद्राधिकारं च निषेधति श्रुतिः — 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति । भगवान् बादरायणोऽपि [1]'श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च' इति सूत्रेणाधिकारं प्रतिषेधति । विवृतं चेदं सूत्रं भगवत्पादैः 'इतश्च न शूद्रस्याधिकारः ; यदस्य स्मृतेः श्रवणाध्ययनार्थप्रतिषेधो भवति । वेदश्रवणप्रतिषेधो वेदाध्ययनप्रतिषेधः, तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते । श्रवणप्रतिषेधस्तावत् — 'अथ हास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम् । (उदाहरणे जिह्वाच्छेदः । धारणे शरीरभेदः) इति । 'पद्यु[ह] वा एतत् श्मशानं यच्छूद्रः तस्माच्छूद्रसमीपे नाध्येतव्यम्' इति च । अत एवाध्ययनप्रतिषेधोऽपि । यस्य च समीपेऽपि नाध्येतव्यं भवति स कथ(मश्रुत)मधीयीत । भवति चोदाहरणे जिह्वाच्छेदः धारणे शरीरभेद इति । साक्षाच्चाध्ययनं प्रतिषेधति श्रुतिः— 'न स्त्रीशूद्रौ वेदमधीयाताम्' इति । अत एव चार्थादर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति । 'न शूद्राय मतिं दद्यात् । द्विजातीनामध्ययनमिज्या दानम्' इति च । अशूद्राणामदुष्टकर्मणां उपनयनं वेदाध्ययनं अग्न्याधेयं फलद[ा नि] च कर्माणि इति च ॥

न चात्र तथा इन्द्रादीनां देवानां अध्ययनप्रतिषेधः, कर्मप्रतिषेधो वाऽवगम्यते । प्रत्युत विद्याग्रहणं विद्याप्रदानं च देवानां अवगतम् । यथा छान्दोग्ये — [2]'एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाच' इति । तथा— [3]'भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व ।' इति । [4]'प्रतर्दनो ह वै दैवोदासिः इन्द्रस्य प्रियं धामोपजगाम' इत्युपक्रम्य

1. प्रथमाध्याये तृतीये पादे अपशूद्राधिकरणे ३८ सूत्रम् ।
2. छान्दोग्ये ४ अध्याये ११ खण्डे ३ ऋक् ।
3. भृगुवल्लीषु प्रथमा ऋक् ।
4. कौषीतकिब्राह्मणोपनिषदि तृतीयाध्याये ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'मामेव विजानीहि एतदेवाहं मनुष्याय हिततमं मन्ये' इति ॥

तथा **कठवल्यां** [1] 'मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् । ब्रह्म प्राप्तो विरजोऽभूद्विमुक्तः [मृत्युः] अन्योऽप्येवं यो विदध्यात्मनै[मे]व ॥' इति श्रुत्या अग्न्यधिगमो ब्रह्मविद्याधिगमश्च यमात् नचिकेतसोऽवगम्यते । अतोऽध्ययनाध्यापनादेः देवानां संभवात् साक्षात्परंपरया वा वेदाध्ययनकर्मप्रतिषेधयोरभावाच्च देवानामधिकार उपपद्यत एव ॥

तथा कर्मानुष्ठानबोधकान्यपि वाक्यानि श्रुत्यादिषु बहुलमुपलक्ष्यन्ते। तथा च **कठवल्यां** नचिकेतसं प्रति मृत्युवाक्यं— [2] 'ततो मया नाचिकेतश्चितोऽग्निः अनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ।' इति । तथा **ऐतरेयकब्राह्मणेपि**— [3] 'ते देवा यज्ञमतन्वंत तमाहरंत । तेनायजंत' इति । 'देवा ह वै सर्वचरौ सत्रं निषेदुः' इति च । **तैत्तिरीयकश्रुतावपि** [4] 'देवा वै वरुणमयाजयन्' 'देवा वै सत्रमासत' [5] 'प्रजापतेस्त्रयस्त्रिंशद्दुहितर आसन्' इत्युपक्रम्य 'तस्मा एतमादित्यं चरुं निरवपन् तेनैवैनं पापात्स्रामादमुंचन्' इति च । तथा — [6] 'प्रजापतिरकामयत बहु स्यां प्रजायेयेति स एतमग्निष्टोममपश्यत् तमाहरत्' इत्यादि ॥

तथा **उत्तरकाण्डेपि** रामवाक्यं — [7] 'इष्ट्वा तु राजसूयेन मित्र-

1. द्वितीयेध्याये ६ वल्या अन्ते । 2. द्वितीयवल्यां ।
3. ३ अध्याये ५ खण्डे 'यज्ञेन वै तद्देवा यज्ञमयजन्त' इति ९ अध्याये १ खण्डे आदौ 'ते देवा यज्ञमतन्वन्त' इति च ऋग्भागात्मकं वाक्यमुपलभ्यते । न तु यथात्र दर्शितम् । देवा ह वै इति वाक्यं तु २६ अध्याये प्रथमायां ऋचि वर्तते ।
4. द्वितीयाष्टके २ प्रश्ने ५ अनुवाके ।
5. द्वितीयकाण्डे ३ प्रश्ने ३, ५ अनुवाकयोः ।
6. तैत्तिरीये २अष्टके ७, ११, अनुवाकगतवाक्यानां विषयसंग्रहात्मकं वाक्यम् ।
7. ४३ सर्गे ६, ७ श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्शत्रुनिबर्हणः । सुकृतेन समृद्धेन वरुणत्वमुपागमत् ॥ सामश्च राजसूयेन इष्ट्वा धर्मेण धर्मवित् । प्राप्तश्च सर्वलोकानां कीर्तिस्थानं च शाश्वतम् ॥' इति । **तत्रैव** स्थलान्तरे रामं प्रति लक्ष्मणवाक्यं —[1] 'श्रूयते हि पुरावृत्तं वासवे सुमहात्मनि । ब्रह्महत्यावृतः शक्रो हयमेधेन पावितः ॥'

तथा देवान् प्रति **विष्णुवाक्यमपि** —[2] 'मामेव यजतां शक्रः पावयिष्यामि वज्रिणम् । पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः ॥ पुनरेष्यति देवानामिन्द्रत्वमकुतोभयः ।'[3] 'ततस्सर्वे सुरगणाः सोपाध्यायाः सहर्षिभिः । तं देशं समुपाजग्मुः यत्रेन्द्रो भयमोहितः ॥ ते तु दृष्ट्वा सहस्राक्षं मोहितं ब्रह्महत्यया । तं पुरस्कृत्य देवेशं अश्वमेधमुपाक्रमन् ॥ ततोऽश्वमेधस्सुमहान् महेन्द्रस्य महात्मनः ॥ अभिगम्याब्रवीद्वाक्यं क्व मे स्थानं विधास्यथ । ते तमूचुस्ततो देवाः तुष्टाः प्रीतिसमन्विताः ॥ चतुर्धा विभजात्मानमात्मनैव दुरासदे । देवानां भाषितं श्रुत्वा ब्रह्महत्या महात्मनाम् ॥ सन्निधौ स्थानमन्यत्र वरयामास दुर्वसा । एकेनांशेन वत्स्यामि पूर्णोदासु नदीषु वै ॥ चतुरो वार्षिकान्मासान् वसेयं कामचारिणी । भूम्यां सर्वमहं कालं अंशेनैकेन दुर्वसा ॥ वसिष्यामि न सन्देहः सत्येनैतद्ब्रवीमि वः । योऽयमंशस्तृतीयो मे स्त्रीषु यौवनशालिषु ॥ त्रिरात्रं दर्पपूर्णासु वसिष्ये दर्पघातिनी । हन्तारो ब्राह्मणान् ये तु मृषापूर्वमदूषकान् ॥ तांश्चतुर्थेन भागेन संश्रयिष्ये सुरर्षभाः । प्रत्यूचुस्तां ततो देवाः यथा वदसि दुर्वसे ॥ तथा भवतु तत्सर्वं साधयस्व यथेप्सितम् । ततः प्रीत्यान्विता देवाः सहस्राक्षं ववन्दिरे ॥ विज्वरः पावितात्मा च वासवः समपद्यत । प्रशान्तं च जगत्सर्वं सहस्राक्षे प्रतिष्ठिते ॥ यज्ञं

---

1. ८४ सर्गे ३ श्लोकः ।
2. ८५ सर्गे २० श्लोकस्य उत्तरार्धं २१ श्लोकश्च ।
3. उत्तरकाण्डे ८६ सर्गे ७-१९½ श्लोकाः [illegible] विना ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चाद्भुतसङ्काशं तदा शक्रोऽभ्यपूजयत् । ईदृशो ह्यश्वमेधस्य प्रभावो रघुनन्दन ॥' इति ॥

**उद्योगपर्वण्यपि**—[1] 'तत्र सर्वे सुरगणास्सोपाध्यायास्सहर्षिभिः । यत्र शक्रो भयोद्विग्नस्तं देशमुपचक्रमुः ॥ तत्राश्वमेधस्सुमहान् महेन्द्रस्य महात्मनः । ववृते पावनार्थं वै ब्रह्महत्यापहो नृप ॥' इति ॥

**मोक्षधर्मेऽपि** — [2] 'विचचार यथाकामं त्रिषु लोकेषु नारदः । कदाचित्प्रातरुत्थाय पिस्पृक्षुः सलिलं शुचि ॥ ध्रुवद्वारभवां गङ्गां जगामावततार च । सहस्रनयनश्चापि वज्री शम्बरपाकहा ॥ तस्या देवर्षिजुष्टायास्तीरमभ्याजगाम ह । तावाप्लुत्य यतात्मानौ कृतकृत्यौ समासतः ॥ नद्याः पुलिनमासाद्य सूक्ष्मकाञ्चनवालुकम् । अथ भास्करमुद्यन्तं रश्मिजालपुरस्कृतम् ॥ पूर्णमण्डलमालोक्य तावुत्थायोपतस्थतुः ।' इति सन्ध्यावन्दनमपि प्रतिपादितम् । तस्मादस्त्यधिकारः ॥

ननु देवानां स्वर्गे स्थितानां कथं कर्माधिकारः; कर्मभूमौ भारतवर्ष एव कर्मणः कर्तव्यत्वात् । तथा च **विष्णुपुराणे** द्वितीयेंऽशे — [3] 'उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥ नवयोजनसाहस्रं विस्तरोऽत्र महामुने । कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम् ॥ अतस्संप्राप्यते स्वर्गो मुक्तिमस्मात्प्रयन्ति च । तिर्यक्त्वं नरकं चापि यान्त्यतः पुरुषा मुने ॥ इतस्स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते । न खल्वन्यत्र मर्त्यानां कर्मभूमौ विधीयते ॥ तपस्तप्यन्ति यतयो जुह्वते चात्र यज्विनः । दानानि चात्र दीयन्ते परलोकार्थमादरात् ॥ पुरुषैर्यज्ञपुरुषो जम्बूद्वीपे सदेज्यते । यज्ञैर्यज्ञमयो विष्णुरन्यद्वीपेषु चान्यथा ॥ अत्रापि

1. १३ अध्याये १७, १८ श्लोकौ ।
2. २२८ अध्याये ८-५ श्लोकाः १०, ११ श्लोकयोः उत्तरार्धपूर्वार्धे च ।
3. द्वितीयांशे १, २, ४, ५, २०-२५ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भारतं श्रेष्ठं जम्बूद्वीपे महामुने । यदा हि कर्मभूरेषा अतोन्या भोगभूमयः ॥ अत्र जन्मसहस्राणां सहस्रैरपि सत्तम । कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसंचयात् ॥ गायन्ति गेयाः (देवाः) किल गीतकानि धन्यास्तु ये भारतभूमिभागे । स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात् ॥ कर्माण्यसङ्कल्पिततत्फलानि सन्यस्य विष्णौ परमात्मरूपे । अवाप्य तां कर्ममहीमनन्ते तस्मिन् लयं ये त्वमलाः प्रयान्ति ॥' इति ॥

एवं च कर्मभूमावेव भारतवर्षेऽनुष्ठेयं कर्म, स्वर्गस्था देवाः कथं कुर्वन्ति इति चेन्न । भोगभूमित्वेन स्वर्गे कर्माकरणेपि भूमावागत्य कर्मानुष्ठाने बाधकाभावात् ॥

तथा च वनपर्वणि धर्मपुत्रं प्रति लोमशवचनम् । लोमशः— [1]'इह देवैस्सहेन्द्रैश्च प्रजापतिभिरेव च । इष्टं बहुविधैर्यज्ञैर्महद्भिर्भूरिदक्षिणैः ॥ [2]अस्मिन् किल स्वयं राजा इष्टवान् वै प्रजापतिः । सत्रमिष्टिकृतं नाम पुरा वर्षसहस्रकम् ॥ देशश्च नाहुषस्यायं यज्वनः पुण्यकर्मणः ।' इति ॥

तत्रैव पुलस्त्यतीर्थयात्रायामपि — [3]'तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानां च मचक्रुशस्य च । एतत्कुरुक्षेत्रसमन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते ॥' इति । तत्रैव स्थलान्तरे — [4]'गङ्गायमुनयोर्वीर सङ्गतं लोकविश्रुतम् । यत्रायजत भूतात्मा पूर्वमेव पितामहः ॥ प्रयागमिति विख्यातं तस्माद्भरतसत्तम ।' इति ।

---

1. १२१ अध्याये २ श्लोकः ।
2. १२९ अध्याये प्रथमश्लोकः तृतीयश्लोके उत्तरार्धं च ।
3. ८३ अध्याये २०८ श्लोकः ।
4. ८५ अध्याये यमुनागंगासंगमे प्रयागा इति 'गंगायमुनयोर्मध्यं पृथिव्या जघनं स्मृतं' इति च ७५, ७६ श्लोकयोर्वर्ण्यते । 'गंगायमुनयोर्वीर' इत्यादिकः सार्धः श्लोकः तु यथादर्शितं न दृश्यते ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गदापर्वण्यपि— [1] ‘ प्रजापतेरुत्तरवेदिरुच्यते सनातनी (नं) राम समन्तपञ्चकम् । समीजिरे यत्र पुरा दिवौकसो वरेण सत्रेण महावरप्रदाः ॥ ’ इति । [2] ‘ यत्र विष्णुः पुरा देवः तप्तवान् तप उत्तमम् । अत्रास्य विधिवद्यज्ञाः सर्वे वृत्ताः सनातनाः ॥ ’ इति च । तथा — [3] ‘ अत्रेजिवानुडुपतिः राजसूयेन भारत । तस्मिंस्तीर्थे महानासीत् संग्रामस्तारकामयः ॥ ’ इति ।

न चैतेषामर्थवादानां ‘ गावो वा एतत्सत्रमासत ’ इत्यादिवत् अविवक्षितार्थकत्वमिति वाच्यम् । अर्थित्वसामर्थ्यादिविधुराणां अधिकारविरोधेनाविवक्षितार्थकल्पनेपि अविरुद्धार्थवादानां स्वार्थतात्पर्ये बाधकाभावात् । अत एव वज्रहस्तत्वसहस्राक्षत्वादिकं इन्द्रादीनामार्थवादिकमविरोधादस्तीति प्रपञ्चितं देवताधिकरणे । न चैवमपि इन्द्रस्य ऐन्द्रयागे कथमधिकारः; कर्मकर्तृविरोधादिति वाच्यम् । भृगोः कल्पान्तरीयभृगुवरणेन कर्माधिकारवत् कल्पान्तरीयेन्द्रोद्देशेन द्रव्यत्यागात् अधिकारोपपत्तेः ॥

किञ्चेन्द्रस्य इन्द्रदेवताके कर्मण्यधिकाराभावेपि अन्यदेवतोद्देश कर्मणि अधिकारसंभवात् । न ह्येकत्रानधिकारोऽन्यत्राधिकारविरोधी भवति । अत एव मध्वादिविद्यासु आदित्यादीनामधिकाराभावेपि तदितरविद्यासु (आदित्यादीनां) अधिकारः प्रतिपादितो भगवता बादरायणेन [4] ‘ मध्वादिष्वसंभवादनधिकारं जैमिनिः ’ इत्यादिसूत्रैः ।

व्याख्यातं चाचार्यैः— ‘ देवानां ब्रह्मविद्यायामधिकारो नोपपद्यते, मध्वादिष्वसंभवात् । ब्रह्मविद्यायामधिकाराभ्युपगमे हि विद्यात्वाविशेषात् मध्वादिविद्यास्वपि अधिकारोऽभ्युपगम्येत । न चैवं संभवति । कथम्? ‘असौ

1. ५३ अध्याये प्रथमः श्लोकः ।
2. ५४ अध्याये ५ श्लोकः ।
3. ५१ अध्याये प्रथमः श्लोकः ।
4 प्रथमाध्याये तृतीयपादे ३१ सूत्रम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वा आदित्यो देवमधु' इत्यत्र हि मनुष्या आदित्यं मध्वध्यासेन उपासीरन्। देवादिषूपासकेष्वभ्युपगम्यमानेषु आदित्यः कमन्यमादित्यमुपासीत ? पुनश्च आदित्यव्यपाश्रयाणि पञ्च रोहितादीनि अमृतानि अनुक्रम्य वसवो रुद्रा आदित्या मरुतः साध्याश्च पञ्च देवगणाः क्रमेण तत्तदमृतं उपजीवन्तीति उपदिश्य 'स य एतदेवं अमृतं वेद वसूनामेवैको भूत्वा अग्निनैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यति' इत्यादिना वस्वाद्युपजीव्यानि अमृतानि विजानतां वस्वादिमहिमप्राप्तिं दर्शयति । वस्वादयस्तु कानन्यान्वस्वादीन् अमृतोपजीविनो विजानीयुः ? कञ्चान्यं वस्वादिमहिमानं प्राप्नुयुः ? तथा [1]'अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः' 'वायुर्वाव संवर्गः' 'आदित्यो ब्रह्मेत्यादेशः' इत्यादिषु देवतात्मकोपासनेषु न तेषामेव देवतात्मनामधिकारः संभवति ।

[2]'भावं तु बादरायणोऽस्ति हि' । तुशब्दः पक्षं व्यावर्तयति । बादरायणस्त्वाचार्यः भावमधिकारस्य देवादीनामपि मन्यते । यद्यपि मध्वादिविद्यासु देवादिव्यामिश्रासु असंभवोऽधिकारस्य, तथापि अस्ति हि शुद्धायां ब्रह्मविद्यायां संभवः। अर्थित्वसामर्थ्याप्रतिषेधाद्यपेक्षत्वादधिकारस्य। न हि क्वचिदसंभव इत्येतावता यत्र संभवस्तत्राधिकारोऽपोद्यते । यथा ब्राह्मणानां राजसूयादिषु अधिकाराभावेपि तदितरवाजपेयादिष्वधिकारः । ब्रह्मविद्यां प्रकृत्य भवति लिङ्गदर्शनं श्रौतं देवाद्यधिकारस्य सूचकम् । [3]'तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत् । तथा ऋषीणां (मनुष्याणां)' इति । [4]'ते होचुः हन्त तमात्मानं अन्विच्छामहे यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति । इन्द्रो ह वै देवानां अभिप्रवव्राज विरोचनोऽसुराणां'

---

1. छान्दोग्ये ३ अध्याये १८, १९, खण्डयोः ४ अध्याये ३ खण्डे च ।
2. प्रथमाध्याये तृतीयपादे ३३ सूत्रं ।
3. बृहदारण्यके ४ ब्राह्मणे १० ऋचि ।
4. छान्दोग्ये अन्ते प्रजापतिविद्यायां ८ अध्याये ७ खण्डे द्वितीया ऋक् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यादि च । स्मार्तमपि च गन्धर्वयाज्ञवल्क्यसंवादादि । ततश्च अर्थित्वादि-संभवादुपपन्नो देवादीनामपि ब्रह्मविद्यायामधिकारः' इति ॥

तथा च नोद्देश्यके कर्मणि अनधिकारेऽपि, तदितरकर्मसु अधिकारे न किञ्चिद्बाधकम् । नाप्यविधानादनधिकार इति पक्षः संभवति । स्वर्ग-कामादिवाक्यस्यैवाविशेषेण सर्वान् प्रति विधायकत्वात् मनुष्यो यजेत, देवो यजेत, इति विशेषे विधानापेक्षायां ज्योतिष्टोमादिषु मनुष्याणां अप्यधिकारो न स्यात् । एवं च उदाहृतश्रुतिस्मृतीतिहासादिभिः न्यायोपबृंहितै-रवगम्यमानमधिकारमुपेक्ष्य देवानां कर्मानुष्ठानबोधकागमविरुद्धेन [1] 'नैषा तर्केण मतिरापनेया' 'तर्काप्रतिष्ठानात्' इति निन्दितेन केवलतर्केण देवाना-मनधिकारः कथमिति विद्वद्भिर्विवेचनीयम् ॥

केचित्तु, आराधयिष्याम्यत्राहमगस्त्यं तं महामुनिम् ॥ ८९½ ॥

अत्र देवाश्च गन्धर्वाः सिद्धाश्च परमर्षयः ।
अगस्त्यं नियताहारं सततं पर्युपासते ॥ ९१ ॥

इत्यादावगस्त्योपासनस्यावगमेन धर्ममाराधयिष्णव इत्यत्रापि धर्मस्वरूप-मगस्त्यमहामुनिमाराधयितुं देवाः समागता इत्येतदर्थपरं वर्णयन्ति । अत एव समागतानां देवानां सन्ततोपासनार्थं स्थानान्यपि उत्तरसर्गे प्रतिपादितानि—

स तत्र ब्रह्मणः स्थानमग्नेः स्थानं तथैव च ।
विष्णोः स्थानं तथेन्द्रस्य स्थानं चैव विवस्वतः ॥ १७ ॥
सोमस्थानं भगस्थानं स्थानं कौबेरमेव च ।
धातुर्विधातुः स्थाने च वायोः स्थानं तथैव च ॥ १८ ॥
स्थानञ्च पाशहस्तस्य वरुणस्य महात्मनः ।
स्थानं तथैव गायत्र्याः वसूनां स्थानमेव च ॥ १९ ॥

1. कठोपनिषदि प्रथमाध्याये द्वितीयवल्ल्यां ९ ऋचि ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**स्थानञ्च नागराजस्य गरुडस्य महात्मनः ।**
**कार्तिकेयस्य च स्थानं धर्मस्थानं च पश्यति ॥ २० ॥** इति ।

अत एव च **उत्तररामायणे** शंबुकवधानन्तरं श्रीरामचन्द्रं द्रष्टुं स्वर्गाद्विमानैरागतानां [1] 'अगस्त्यस्याश्रमपदं द्रष्टुमिच्छाम राघव ।' इत्यादि 'काकुत्स्थ तं गमिष्यामो मुनीन्द्रमभिवादितुम् ।' इत्यन्तं देवानां वचनजातमुपन्यस्य तथैव तदभिवादनार्थं तेषां देवानामगस्त्याश्रमागमनं प्रतिपादितम् । तत्रैव श्वेतनामानं राजानं स्वस्य क्षुत्पिपासारूपमहाव्याधेरवधिं पृष्टवन्तं प्रति अगस्त्यदर्शनेन तच्छान्तिरित्युक्त्वा तदुपपादनार्थं, [2] 'स हि तारयितुं सौम्य शक्तः सुरगणानपि । किं पुनस्त्वां महाबाहो क्षुत्पिपासासमन्वितम् ॥' इति ब्रह्मणो वचनमपि अगस्त्यस्य देवोपास्यत्वं प्रतिपादयति ॥

अयमर्थः अप्पय्यदीक्षितैः **रामायणतात्पर्यसंग्रहेऽपि** अर्थात् प्रतिपादितः — [3] 'रामायणे हि कलशप्रभवाश्रमस्था देवादयोऽपि तमुपासत इत्युदीर्य । स्थानानि धातृमधुजिन्मघवन्मुखानां तस्याश्रमे निगदितानि न ते कपर्दिन् ॥' किञ्च तिर्यगधिकरणोक्तरीत्या फलेच्छावतां समर्थानां च कर्मण्यधिकारः सिद्धः । तावन्मात्रं शूद्रादिसाधारणमिति तेषामप्यधिकारप्रसक्तौ तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इति निषेधोऽप्यर्थवान् भवति । अन्यथाऽप्रसक्तप्रतिषेधापत्तेः । एवं चार्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तः अधिकारीति सिद्धम् । एवञ्च [4] 'देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्' इत्यादिना निराकृतं देवतादिविग्रहवत्वं; [5] 'तदुपर्यपि बादरायणः

---

1. ७६ सर्गे १६. उ० १७, १८ पू० = श्लोकौ ।
2. ७८ सर्गे २० श्लोकः ।
3. द्वितीयः श्लोकः ।
4. जैमिनिसूत्रे ९ अध्याये प्रथमपादे देवताधिकरणे प्रथमं सूत्रम् ।
5. प्रथमाध्याये तृतीयपादे २६ सूत्रं ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संभवात्' इत्यादिना बादरायणाचार्यैः साधितं विग्रहसत्वेऽर्थित्वादेरवर्जनीयतया देवानामधिकारे न किञ्चिद्बाधकमिति ॥

इदञ्च धर्मात्मनोऽगस्त्यस्य उपासनं शरीरक्रियारूपशुश्रूषात्मकं वा परमेश्वरध्यानवदगस्त्यध्यानात्मकं वा वक्तव्यम्। तत्राद्यं क्रियारूपमिति सुप्रसिद्धम्। द्वितीयमप्युपासनं मानसिकक्रियात्मकमेव। देवतोद्देशेन द्रव्यत्यागात्मकज्योतिष्टोमादियागवत् पुरुषव्यापारपरतन्त्रत्वात्। न च तर्हि ज्ञानमपि क्रिया स्यादिति वाच्यम्। प्रमाणपरतन्त्रस्य ज्ञानस्य पुरुषव्यापारानधीनस्य क्रियात्वासंभवात्। क्रिया हि नाम सा यत्र स्वरूपनिरपेक्षैव चोद्यते पुरुषचित्तव्यापाराधीना च। यथा 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्' इति। सन्ध्यां मनसा ध्यायेदिति च। एवमादिषु ध्यानं चिन्तनं यद्यपि मानसं, तथापि पुरुषैः कर्तुमकर्तुमन्यथाकर्तुं शक्यं; पुरुषपरतन्त्रत्वात् ॥

ज्ञानं तु प्रमाणजन्यं; प्रमाणं च यथाभूतवस्तुविषयम्। अतो ज्ञानं कर्तुमकर्तुमशक्यं केवलं वस्तुतन्त्रमेव। तन्न चोदनातन्त्रं; नापि पुरुषतन्त्रम्। तस्मात् मानसत्वेऽपि ज्ञानस्य क्रियावैलक्षण्यम्। यथा —[1] 'पुरुषो वाव गौतमाग्निः' इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति। केवलं चोदनाजन्यत्वाच्च क्रियैव सा; पुरुषतन्त्रा च। या तु प्रसिद्धाग्नावेवाग्निबुद्धिः न सा चोदनातन्त्रा; नापि पुरुषतन्त्रा। किं तर्हि? प्रत्यक्षविषया वस्तुतन्त्रैवेति ज्ञानमेव; न क्रिया। उपासना तु क्रियैवेति। तथा च शारीरोपासनायाः मानसिकोपासनाया वा ज्योतिष्टोमादिवत् क्रियात्वाविशेषात् कर्मत्वं सिद्धम्। तथा च कर्मानुष्ठानाय वा महर्षेरुपासनाय वा देवागमनप्रतिपादकं धर्ममाराधयिष्णव इति वचनं श्लिष्टतरम् ॥

---

1. छान्दोग्ये ५ अध्याये ७ खण्डे प्रथमा ऋक्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र सिद्धा महात्मानो विमानैस्सूर्यसन्निभैः ।
त्यक्त्वा देहं नवैर्देहैः स्वर्याताः परमर्षयः ॥ ९४ ॥

यक्षत्वममरत्वं च राज्यानि विविधानि च ।
अत्र देवाः प्रयच्छन्ति वृत्तैराराधिताः शुभैः ॥ ९५ ॥

अनेन महतां निकटेऽनुष्ठितो धर्मः झडिति ऐहिकमामुष्मिकं च फलतीति सूचितम् ॥

आगताः स्माश्रमपदं सौमित्रे प्रविशाग्रतः ।
निवेदयेह संप्राप्तमृषये सीतया सह ॥ ९६ ॥

इति एकादशः सर्गः ॥

## अथ द्वादशत्रयोदशौ सर्गौ ॥

द्वादशत्रयोदशयोः — तदनुजेन सौमित्रिणा निवेदितरामागमनवृत्तान्तो महर्षिशिष्यो निखिललोकशरण्यमग्निशरणस्थमृषिमिदमाह —

पुत्रो दशरथस्यासौ रामो नाम महायशाः ।
सह भ्रात्राश्रमपदं सीतया सह भार्यया ॥ ७ ॥

द्रष्टुं भवन्तमायातः शुश्रूषार्थमरिन्दमः ।
यदत्रानन्तरं तत्त्वमाज्ञापयितुमर्हसि ॥ ८ ॥

ततः शिष्यसमुदीरितरामागमनवृत्तान्तश्रवणजनितहर्षप्रकर्षेण महर्षिणा, 'सत्कृत्य रामो झडिति प्रवेश्यतां' इति समाज्ञप्तः शिष्यः, ससीतं सलक्ष्मणं रामं सत्कृत्य प्रावेशयत् । ततो निखिलजनाभिरामो रामः प्रशान्तहरिणगणसंपूर्णमाश्रमं प्रविशन्नेव तत्रस्थितानि ब्रह्मादिसकलदेवतास्थानान्यपश्यत् ॥

ततः शिष्यैः परिवृतो मुनिरप्यभिनिष्पतत् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन राज्ञोपि ब्राह्मणैरभ्युत्थानं कर्तव्यमिति सूचितम् । तथा च **बोधायनः** — [1] 'अभ्युत्थायाचार्य ऋत्विक्पिता मातुलः श्वशुरो वेदविद्ब्राह्मणः क्षत्रियोऽभिषिक्तः सहस्रदो वैश्यो राजपुरोहितश्चेत्यर्घ्या भवन्तीति ॥

तत्र समागच्छन्तमगस्त्यमवलोक्य लक्ष्मणमाह —

**एष लक्ष्मण निष्क्रामत्यगस्त्यो भगवानृषिः ।**
**औदार्येणावगच्छामस्तपसो राशिमव्ययम् ॥ २२ ॥** इति ।

ततो महर्षिः कृतप्रणामं प्रश्रयावनतं राममभिनन्द्य, समापृच्छ्य कुशलं, समभ्यर्च्य चासनोदकैः आस्यतामित्यवोचत् । ततः,

**अग्निं हुत्वा प्रदायार्घ्यं अतिथीन्प्रतिपूज्य च ।**
**वानप्रस्थेन धर्मेण स तेषां भोजनं ददौ ॥ २६ ॥**

अत्राग्निं हुत्वेत्यनेन वैश्वदेवहोमोऽभिप्रेतः । न त्वग्निहोत्रहोमः । तस्य 'सायं जुहोति, प्रातर्जुहोति, उदिते जुहोति, अनुदिते जुहोतीत्यादिशास्त्रैः सायंप्रातःकालयोरेव कर्तव्यत्वात् । रामश्च न प्रातः समागत इति संभवति। प्रातःकालेऽगस्त्यभ्रातुराश्रमेऽवस्थानावगमात् । तथा च **पूर्वसर्गे**—

**तस्यां रात्र्यां व्यतीतायां विमले सूर्यमण्डले ।**
**भ्रातरं तमगस्त्यस्य आमन्त्रयत राघवः ॥ ७३ ॥**
**अभिवादये त्वां भगवन् सुखमध्युषितो निशां ।**
**आमन्त्रये त्वा भगवन् गुरुं ते द्रष्टुमग्रजम् ॥ ७४ ॥** इति ।

नापि सायं समागत इति संभवति । समागतस्य रामस्य कृतातिथ्यस्य सायंकाले सन्ध्योपासनाय प्रेषणावगमात् । तथा **चानन्तरसर्गे** रामं प्रत्यगस्त्यवचनं —

---

1. द्वितीयप्रश्ने तृतीयाध्याये २६ सूत्रं 'ऋषिविद्वन्नृपवरमातुलश्वशुरर्त्विजः । एतेऽर्घ्याश्शास्त्रविहिताः स्मृताः कालविभागशः ॥' इति दृश्यते, न तु यथात्र दृश्यते ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रविरस्तं गतस्सौम्य सन्ध्याकालोऽभ्युपागतः ॥ इति ।

अतः परिशेषान्मध्याह्न एवागमनं रामस्य वक्तव्यम् । युक्तं चागस्त्यभ्रातुराश्रमात् योजनमात्रेऽवस्थितस्यागस्त्याश्रमस्य मध्याह्नगमनम् । तथा च सुतीक्ष्णवचनं । अगस्त्यभ्रातुराश्रममभिधाय [1]'अगस्त्यस्याश्रमपदं गत्वा योजनमन्तरम्' इति । एवं च मध्याह्ने समागतस्य रामस्य भोजनप्रदानात् प्राक् क्रियमाणो होमो वैश्वदेवहोम एवेति ॥

एवञ्च सति [2]'अग्निं हुत्वा प्रदायार्घ्यमतिथीन् प्रतिपूज्य च' इति होमानन्तर्यमतिथिपूजाया युक्ततरं भवतीति । 'अतिथीन् प्रतिपूज्य वानप्रस्थेन धर्मेण स तेषां भोजनं ददौ' इत्यनेन ब्राह्मणाः प्रथमतो भोजनीयाः । ततः क्षत्रियादय इति क्रमस्सूचितः । तथा च मनुः— [3]'यदि त्वतिथिधर्मेण क्षत्रियो गृहमाव्रजेत् । भुक्तवत्सु च विप्रेषु कामं तमपि भोजयेत् ॥ वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्मिणौ । भोजयेत्सह भृत्यैस्तान् आनृशंस्यं प्रयोजयन् ॥' इति ॥

न चानृशंस्यायान्नमात्रं रामाय दत्तमिति न रामोऽतिथिः । अत एवातिथीन् प्रतिपूज्य भोजनं ददाविति भोजनमात्रं प्रतिपादितमिति वाच्यम् । धर्मशास्त्रपर्यालोचनया क्षत्रियस्यापि रामस्य राजत्वेनातिथित्वात् ॥

तथा च बोधायनः— [4]'अथास्यातिथिर्भवति गुरोः समानवृत्तिः वैखानसो वा गृहस्थो वानप्रस्थः परिव्राजको गतश्रीः स्नातको राजा वा धर्मयुक्तस्तेषामभ्युत्थायासनं पाद्यमर्हणं अर्घ्यं वा प्रयुंजनेति' । अतिथीन प्रतिपूज्य भोजनं ददावित्येतत्तु नातिथित्वनिवर्तकम् । अपि तर्हि अतिथेः कर्तव्यस्य प्रत्युत्थानकुशलप्रश्नार्घ्यादिपूजायाः प्राक् कृतत्वात् अवशिष्टं

1. ११ सर्गे ४३ श्लोकस्य पूर्वार्धं ।
2. १२ सर्गे २६ श्लोकः ।
3. तृतीयाध्याये १११, ११२ श्लोकौ ।
4. धर्मसूत्रे २ प्रश्ने १० अध्याये १७, १८ सूत्रे ।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भोजनमुत्कृष्टेभ्यो ब्राह्मणेभ्यः प्रदाय पश्चाद्दत्तवानित्येतदभिप्रायकं। तथा च पूर्ववचनानि—

ततः शिष्यैः परिवृतो मुनिरप्यभिनिष्पतत् ॥ २८½ ॥
कुशलप्रश्नमुक्त्वा तु समभ्यर्च्यासनोदकैः ॥ २९ ॥

इत्यादीनि। तस्मादतिथिधर्मेण रामायान्नं प्रादादित्येव युक्तम् ॥

न चैवमनतिथित्वप्रतिपादकं [1]'ब्राह्मणस्य त्वनतिथिर्गृहे राजन्य उच्यते' इति **मनुवचनम्**, [2]'ब्राह्मणस्यानतिथिरब्राह्मणः' इति **गौतमवचनम्**, [3]'अथ यदि ब्राह्मणक्षत्रियौ समेयातां ब्राह्मणोऽतिथिः क्षत्रिये सांत्वं' इत्यादि**बोधायन**वचनं च विरुद्धयत इति वाच्यम्। 'राजा वा धर्मयुक्तः' इति **बोधायनवचनेन** राज्ञोपि धार्मिष्ठस्यातिथित्वावगमेन 'ब्राह्मणस्य त्वनतिथिर्गृहे राजन्य उच्यते' इति अतिथित्वनिषेधक**मनु**वचने गृह इति विशेषणमहिम्ना गृहेऽनतिथेरपि क्षत्रियस्य वानप्रस्थान् प्रति वनेऽतिथित्वमभ्यनुज्ञातमिति माधवाचार्यैर्व्याख्यातत्वेन च ब्राह्मणस्य त्वनतिथिरित्यादिनिषेधकवचनानां गृहस्थं प्रति आगतक्षत्रियजातिमात्रविषयत्वात्। अतश्च क्षत्रियोऽपि वनं प्राप्तः धार्मिष्ठश्च ब्राह्मणस्यातिथिर्भवत्येव ॥

गृहे समागतस्यार्थैश्वर्योपेतस्यातिथ्यमभ्युदयकामेन कर्तव्यम्। तथा च **पराशरः**—'यस्य छत्रं हयश्चैव कुञ्जरारोहमृद्धिमत्। ऐन्द्रस्थानमुपासीत तस्मात्तं न विचारयेत् ॥' इति।

व्याख्यातं च **माधवाचार्यैः**—'यस्य छत्रं हयो वा विद्यते तस्यातिथ्यं कुर्वन् ऐन्द्रपदमाप्नुयात्। एतस्मिन् वचने पूर्वोत्तरयोर्वचनयोरातिथ्यविषयत्वात् तत्प्रकरणान्तःपातित्वेनानुक्तमप्यातिथ्यं कुर्वन्निति पदद्वयं

1. तृतीयेऽध्याये ११० श्लोके पूर्वार्धं।
2. पञ्चमाध्याये ४३ सूत्रम्।
3. गृह्यपरिभाषायां २ प्रश्ने ५ अध्याये प्रथमं सूत्रम्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सन्दंशन्यायेन लभ्यते। कुञ्जरस्यारोहो यस्मिन् ऐन्द्रपदे तत्कुञ्जरारोहम्। ऋद्धिः अमृतपानाप्सरःसेवादिः अस्मिन् अस्तीति ऋद्धिमत्। छत्रादिमान् क्षत्रियादिजातिरतिथिः जातिकुलाचारैर्यद्यपि हीनः तथापि तत्पूजायाः स्वर्गप्राप्तिहेतुत्वात् तमतिथिं हीनबुद्ध्या पूज्योऽयं न वेति न विचारयेत्। न सन्दिह्यात्; किन्त्वीश्वरबुद्ध्या पूजयेत्॥

यद्यपि भिक्षुकवन्नायमस्मिन् जन्मनि तपस्वी, तथाप्यतीते जन्मनि अनेन तपोऽनुष्ठितम्। । अन्यथा ईदृशैश्वर्यस्य प्राप्त्यसंभवात्। अत एव विभूतिमतो भगवदंशत्वं च भगवता दर्शितम्—[1] 'यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम्॥' इति। तस्मात् क्षत्रियादेरपि ऐश्वर्योपेतस्यातिथ्यं सिद्धम्॥

'अग्निं हुत्वा प्रदायार्घ्यं' इत्यादिना एवमुक्त्वा फलैर्मूलैः इत्यन्तेन कन्दमूलफलादिभिः वैश्वदेवहोमपूर्वकं आतिथ्यं कृतमित्यवगम्यते। तदसङ्गतम्। वैश्वदेवहोमे ओदनस्यैव द्रव्यत्वावगमात्। तथा चाश्वलायनः [2] 'सायंप्रातः सिद्धस्य हविष्यस्य जुहुयात्' इति। **खादिरगृह्येपि**—[3] 'हविष्यस्यान्नस्य जुहुयात्' इति। **वामनकारिकायामपि**—'मोक्षा नमस्त इत्युक्त्वा पात्रे कस्मिंश्चिदोदनं। निधाय उदकसेच्यादि नित्यहोमवदाचरेत्॥' इति। तथा च कथं कन्दमूलफलादिभिः कृतमिति चेन्न। यदशनीयं यस्य तस्य तेनैव वैश्वदेवादिविधानात्। तथा च **गृह्यपरिशिष्टे**—'शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम्। संकल्पयेद्यदाहारः तेनैव जुहुयादपि॥' इति।

वानप्रस्थानां च कन्दमूलफलादिकमशनीयम्। तथा च **गौतमः**—[4] 'वैखानसो वने मूलफलाशी' इति। एवं च वानप्रस्थस्य महर्षे-

---

1. भगवद्गीतायां दशमाध्याये ४१ श्लोकः।
2. प्रथमाध्याये २ खण्डे प्रथमं सूत्रं।
3. प्रथमपटले ५ खण्डे २१ सूत्रस्यैकदेश.।
4. गौतमधर्मसूत्रे तृतीयाध्यायान्ते वर्तते।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रशनीयेन कन्दमूलफलादिना वैश्वदेवादिकरणस्य युक्तत्वात्। एतदभिप्रायेणैव वानप्रस्थेन विधिना कन्दैर्मूलैः फलैः इत्यादिकमुक्तम्। अतो नातुपपन्नं किञ्चित्। ओदननियमस्तु गृहस्थानामेवेति न सूत्रविरोधः॥

तेषां गृहस्थानामपि तदलाभे कन्दमूलफलादिभिः करणम्। तथा च **चतुर्विंशतिमते**— 'अलाभे येन केनापि फलशाकोदकादिभिः। पयोदधिघृतैः कुर्यात् वैश्वदेवं स्रुवेण तु॥ हस्तेनान्नाहुतिं कुर्यात् अद्भिरञ्जलिना जले।' इति। **व्यासोऽपि**— 'पक्काभावे प्रवासी च तण्डुलानोषधींश्च वा। पयोदधिघृतं वापि कन्दमूलफलानि च॥' जुहुयादिति शेषः। होमद्रव्यसंस्कारमाह **व्यासः**— 'जुहुयात्सर्पिषाभ्यक्तं तैलक्षारविवर्जितम्। दध्यक्तं पयसाक्तं वा तदभावेऽम्बुनापि वा॥' इति। **गृह्यपरिशिष्टेऽपि**— अग्नेः प्रत्यग्दर्भेषु निधाय सर्पिषाभ्यज्य सकृदवदानेन पाणिना जुहुयादिति॥

**निषिद्धद्रव्याणि** — 'कोद्रवं वरकं माषं मसूरं च कुलित्थकम्। क्षारं च लवणं सर्वं वैश्वदेवे विवर्जयेत्॥' अनिषिद्धालाभे निषिद्धेनापि भोज्येन होमप्रकारमाह **बोधायनः**— [1] 'क्षारलवणावरान्नसंसृष्टस्य तु होमं परिचक्षते कामाभिलरेष्वायतनेषु। अथ यद्येतदेव स्यात् उत्तरतो भस्मभिश्रानङ्गारान्निरूह्य तेषु जुहुयात्' इति॥

**आपस्तम्बोऽपि** —[2]'न क्षारलवणहोमो विद्यते तथावरान्नसंसृष्टस्य च। हविष्यस्य होम उदीचीनमुष्णं भस्मापोह्य तस्मिन् जुहुयात्। तद्धुतमहुतं चाग्नौ भवतीति'। **बोधायनोऽपि**—[3]'अङ्गारान् भस्ममिश्रांस्तु निरूह्योत्तरतोऽथ तु। जुहुयाद्वैश्वदेवं तु यदि क्षारादिमिश्रितम्॥' इति।

1. बोधायनगृह्यसूत्रे ३ प्रश्ने ४-६ सूत्राणि।
2. द्वितीयप्रश्ने १५ पटले १४-१६ सूत्राणि।
3. गृह्यसूत्रे २ प्रश्ने ८ अध्याये ४, ६ सूत्रयोः श्लोकोक्तविषयः प्रतिपाद्यते।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वैश्वदेवकालः ॥ तत्राश्वलायनः— [1]'अथ सायंप्रातः । सिद्धस्य हविष्यस्य जुहुयात् ।' इति । स्वादिरगृह्येऽपि — [2]'सिद्धेऽन्ने सायंप्रातरिति अहर्मात्रोपलक्षणम् । तत्रापि अष्टधा विभक्तस्याह्नः पञ्चमो भागः । तथा चाष्टविभागमभिधायाह्नः पञ्चमे भागे वैश्वदेवमाह दक्षः — [3]'पञ्चमे च तथा भागे संविभागो यथार्हतः । पितृदेवमनुष्याणां कीटानां चोपदिश्यते ॥' इति ।

श्राद्धदिने कालविशेषः — आहिताग्नेः पृथक् पाकेन महैकोद्दिष्टव्यतिरिक्तसर्वश्राद्धेभ्यः पूर्वमेव वैश्वदेवहोमः कर्तव्यः । तथा च शाकटायनः — 'श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः । एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते ॥' इति । अनाहिताग्नेः कालविशेषानाह सांख्यायनः परिशिष्टे — 'आदौ वृद्धौ क्षये चान्ते दर्शे मध्ये महालये । एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयते ॥' इति ॥

तस्याग्निमाह वसिष्ठः — [4]'सायंप्रातर्गृह्येऽग्नौ जुहुयात' इति । मनुरपि — [5]'वैवाहिकेऽग्नौ कुर्वीत गार्ह्यं कर्म यथाविधि । पञ्चयज्ञविधानं च पंक्तिं चान्वाहिकीं गृही ॥' आपस्तम्बोऽपि — [6]'औपासने पचने वा' इति । अग्न्यभावेऽनुकल्पः कूर्मपुराणे दर्शितः — [7]'शालाग्नौ लौकिके वाथ जले भूम्यामथापि वा । वैश्वदेवस्तु कर्तव्यो देवयज्ञः स वै स्मृतः ॥ यदि स्याल्लौकिके पाकस्ततोऽन्नं तत्र हूयते ।'

---

1. गृह्ये प्रथमाध्याये प्रथमखण्डे २ सूत्रं ।
2. प्रथमपटले ५ खण्डे १९ सूत्रं ।
3. द्वितीयाध्याये ४०, ४१ श्लोकयोः उत्तरपूर्वार्धे ।
4. एकादशाध्याये २ सूत्रैकदेशः ।
5. तृतीयेध्याये ६७ श्लोकः ।
6. द्वितियप्रश्ने २ पटले १६ सूत्रम् ।
7. उत्तरभागे १८ अध्याये ३ श्लोकः ४ श्लोकस्य पूर्वार्धं च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधुरादेरनग्निकस्य विशेषमाह **वृद्धवासिष्ठः** — 'अनग्निकस्तु यो विप्रस्सोऽन्नं व्याहृतिभिः स्वयम् । हुत्वा शाकलतन्त्रैश्च शिष्टं काकबलिं हरेत्॥ पूर्वयज्ञादृते नास्ति निरग्नेस्तु महामखः ।' इति व्याहृतिहोमात् काकबलिं आतिथ्यं च विनाऽन्यदनग्नेर्नास्तीत्यर्थः ।

अयं च वैश्वदेवो देवभूतपितृयज्ञात्मक इत्याह **व्यासः** — 'वैश्वदेवस्तु कर्तव्यो देवयज्ञस्स वै स्मृतः । देवेभ्यस्तु हुतादन्नाच्छेषाद्भूतबलिं हरेत् ॥ भूतयज्ञस्स वै ज्ञेयो भूतिदस्सर्वदेहिनाम् । श्राद्धं वा पितृयज्ञः स्यात्पैत्रो बलिरथापि वा ॥' **स्मृत्यर्थसारेपि** — 'देवयज्ञो वैश्वदेवाख्यं कर्म । हुतशेषेण शुद्धं देशमभ्युक्ष्य बलिं हरेत् । एष भूतयज्ञः । बलिशेषं सोदकं स्वधा पितृभ्यः इति प्राचीनावीती पितृभ्यो दद्यात् । एष पितृयज्ञः । एते देवयज्ञभूतयज्ञपितृयज्ञाः वैश्वदेवशब्दार्थः ' इति । **मनुरपि**— [1]'विधाय पितृयज्ञान्तं वैश्वदेवं ततो बहिः । श्वपाकपतिताद्यर्थमन्नमल्पं क्षिपेद्बहिः ॥' एवञ्च वैश्वदेवबलिहरणाभ्यां पृथक् देवपितृभूतयज्ञा नानुष्ठेयाः इति ॥

अन्ये तु पञ्चयज्ञानां पृथक्त्वेन विधानात् तेषां वैश्वदेवबलिहरणयोरनन्तर्भावमाहुः । तथा च **जमदग्निः** —'वैश्वदेवं दिवा रात्रौ कुर्याद्बलिहृतिस्तथा । महतः पंचयज्ञांस्तु दिवैवेत्याह गौतमः ॥' इति ।

**बोधायनोपि** -- [2]'अग्नये स्वाहेत्यादि षडाहुतीर्जुहोति । एष

1. तृतीयाध्याये ९२ श्लोकः इममाशयमाविष्करोति । अयं श्लोकस्तु न दृश्यते ।
2. बोधायनश्रौतसूत्रे ५ प्रश्ने ३ खण्डे वैश्वदेवहोमः, गृह्ये प्रथमप्रश्ने ८ अध्याये ३ सूत्रे वैश्वदेवाङ्गदेवताः फलं च कथ्यंते । सूत्राणि तु अन्यथैव भवन्ति । बोधायनधर्मसूत्रे २ प्रश्ने ११ खण्डे १-६ सूत्रेषु गृह्यसूत्रे २ प्रश्ने ४ अध्याये ८-१३ सूत्रेषु, २ प्रश्ने ८ अध्याये १४-२० सूत्रेषु, २ प्रश्ने ९ अध्याये ६-१६ सूत्रेषु च पञ्चमहायज्ञाः प्रतिपाद्यन्ते । सर्वत्र सूत्राण्यन्यथैव भवन्ति । अतो विषयसंग्रहात्मकान्येतानि वाक्यानीत्यवधेयम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वैश्वदेवः संतिष्ठते । धर्माय स्वाहेत्यादि नमो रुद्रायेत्यन्तं बलीन् हरति । एतद्बलिहरणं संतिष्ठते । देवेभ्यः स्वाहेत्यग्नौ जुहोति एष देवयज्ञः संतिष्ठते । पितॄनुद्दिश्यैकं ब्राह्मणं भोजयेत् । अपि वा दक्षिणेनाग्निं दक्षिणाग्रान् संस्तीर्य तेषु पिण्डं ददाति पितृभ्यः स्वधास्त्विति । अपि वापः तत्पितृयज्ञः संतिष्ठते । मनुष्ययज्ञार्थमतिथिं भोजयेत् । अपि वा हंतकारं विदुर्बुधाः ' इति ।

अयं च वैश्वदेवोऽन्नसंस्कारार्थ इति केचित् । तथा **चाश्वलायनः**- [1]'सायंप्रातस्सिद्धस्य हविष्यस्य जुहुयात्' इति । **आपस्तम्बश्च** [2]'यस्य चाग्नौ न क्रियते यस्य चाग्रं न दीयते न तद्भोक्तव्यमिति ।' **यमोपि**— 'होमाग्रदानरहितं न भोक्तव्यं कथञ्चन ॥' इति ॥

अन्ये तु वैश्वदेवस्यात्मसंस्कारार्थत्वमिच्छन्ति । तथा **चाश्वलायनः** — [3] 'तान्येतान्यहरहः कुर्वीत' इति । **आपस्तम्बोपि** — [4]'देवेभ्यः स्वाहाकार आ काष्ठात् ।' इति । **बोधायनोपि** — [5]'प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते । पञ्चानां महतामेष सह यज्ञैस्स गच्छति ॥' इति । **मनुरपि** — [6]'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ।' इति । **कात्यायनोपि** — [7]'सायंप्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च । अनश्नतापि सततमन्यथा किल्बिषी भवेत् ॥' इति ।

उभयार्थ वैश्वदेव इत्यपरे । तथा च स्मृत्यर्थसारे — 'वैश्वदेवाख्यं कर्म अन्नस्यात्मनश्च संस्कारार्थमिति' । **व्यासोपि** — 'गृहस्थो वैश्व-

---

1. प्रथमाध्याये २ खण्डे प्रथमसूत्रम् ।
2. द्वितीयप्रश्ने १५ पटले १३ सूत्रम् ।
3. तृतीयाध्याये द्वितीयखण्डे ४ सूत्रम् ।
4. प्रथमप्रश्ने १३ पटले प्रथमं सूत्रम् ।
5. गृह्यसूत्रे द्वितीयप्रश्ने ९ अध्याये १२ सूत्रं (श्लोकात्मकं) ।
6. द्वितीयाध्याये २८ श्लोकस्य उत्तरार्धं ।
7. त्रयोदशखण्डे १० श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

देवाख्यं कर्म प्रारभेत दिवा । अन्नस्य चात्मनश्चैव संस्कारार्थं तदिष्यते ॥' इति ॥

तत्र नोभयसंस्कारार्थत्वपक्षः संभवति, विरोधात् । अन्नसंस्कारत्वपक्षे संस्कारभूतवैश्वदेवहोमं प्रति अवहननत्वादिकं प्रति व्रीहिरिव अन्नस्य प्राधान्यं वक्तव्यम् । पुरुषार्थत्वपक्षे च अग्निहोत्रादिवत् होमस्य प्राधान्यात् तत्साधनभूतस्यान्नस्य दध्यादिवदुपसर्जनत्वं; न हि तत्संभवति । गुणत्वप्रधानत्वोद्देश्यत्वोपादेयत्वविधेयत्वानुवाद्यत्वानां एकत्र समावेशप्रसङ्गात् । अत एव नामधेयपादे वाजपेयपदं गुणविधिर्नामधेयं वेति सन्दिह्य प्रवृत्तिविशेषकरत्वात् पयोन्नयवागूरूपगुणविधायकत्वमेव स्वीकर्तव्यमिति पूर्वपक्षं कृत्वा फलं स्वाराज्यं प्रति गुणत्वोपादेयत्वविधेयत्वानां यवागूं प्रति च प्रधानत्वानुवाद्यत्वोद्देश्यत्वानां परस्परविरुद्धानां कर्मणि समावेशप्रसङ्गात् वाजपेयपदं न यवागूद्रव्यलक्षणसाधनविधायकं; किन्तु कर्मनाम ।

न च विरोधान्नोभयसंस्कारता तर्हि अन्नसंस्कारपक्षोऽस्त्विति वाच्यम् । तथात्वे व्रीहियवादिनानाद्रव्याणां पृथक् पाके एकस्यापि द्रव्यस्य भाण्डभेदेन नानापाके संसृष्टानां भ्रातृणां वा पृथक्पाके तत्तदन्नसंस्कारसिद्ध्यर्थं वैश्वदेवावृत्तिप्रसङ्गात् । न चेष्टापत्तिः, असकृच्चेदेकस्मिन् काले सिद्धे सकृदेव कुर्यात् । बहुधा चेद्यत् गृहपतेरित्यादिवचनविरोधप्रसङ्गात् । तस्मात् आत्मसंस्कारार्थत्वमेव ॥

तथा च **गृह्यपरिशिष्टे**— 'प्रोषितोऽप्यात्मसंस्कारं कुर्यादेवाविचारयन्' इति । **गोभिलोऽपि**— 'यद्येकस्मिन् काले व्रीहियवौ पच्येयातां अन्यतरस्य हुत्वा कृतं मन्येत । यद्येकस्मिन् काले पुनः पुनरन्नं पच्येत सकृदेव बलिं कुर्वीत । यद्येकस्मिन् काले बहुधान्नं पच्येत गृहपतिमहानसादेवैनं बलिं कुर्वीत' । इति नानाद्रव्यकान्नपाके पुनः पुनः पाके [illegible]

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भ्रात्रादीनां वा पृथक्पाके एकस्माद् गृहपतिपाकादेव होतव्यमित्यर्थः। तस्मादात्मसंस्कारार्थत्वमेव युक्तम् ॥

नन्वेवमन्नसंस्कारार्थत्वज्ञापकवचनानां का गतिः इति चेन्न। तेषामन्यथोपपत्तेः। तत्र प्रथमोदाहृतं 'सायं प्रातस्सिद्धस्य' इत्यादि **आश्वलायनवचनं** जुहुयादित्यनेन कर्मस्वरूपं इतरांशेन प्रयोगं च विदधाति। 'तान्येतान्यहरहः कुर्वीत' इति च तस्यैवाधिकारविधिः इत्युपपन्नम् ॥

यदपि च 'यस्याग्नौ न क्रियते' इत्याद्यापस्तम्बवचनं तद्बहुवचनविरोधात् भोज्यान्नेन होमं दानं च कुर्यात् इत्येतत्परतया **चन्द्रचूडेन** व्याख्यातम्। एवमेव होमान्नदानरहितमिति यमवचनमपि व्याख्येयम्। तथोभयसंस्कारत्वबोधकवचनमपि उभयसंस्कारसिद्धयर्थं न वैश्वदेवमनुष्ठापयति। तथा सति वैश्वदेवस्य प्रतिपाकमावृत्तिप्रतिषेधकवचनविरोधात्। किन्तु आत्मसंस्कारार्थतया अनुष्ठितादेव वैश्वदेवहोमादन्नसंस्कारोपि अन्ननियमबलेन सिद्धयति इत्येतत्परम्। यथा 'प्रयाजशेषेण हवींष्यभिघारयति' इति प्रयाजशेषसंस्कारभूतं अभिघारणं हवीरूपाधारनियमात् हविस्संस्कारकमपीति। एवं च न कोपि विरोधः ॥

नन्वेवमपि वैश्वदेवहोमबलिहरणादीनां आपस्तम्बाश्वलायनादिसूत्रेषु उक्तानां सर्वशाखाप्रत्ययन्यायेन समुच्चित्यानुष्ठानं स्यादिति चेन्न। वचनबलेन व्यवस्थोपपत्तेः। तथा च **व्यासः** — 'वैश्वदेवं प्रकुर्वीत स्वशाखाविहितं तथा। यस्य यावत्स्वगृह्योक्तं स्वल्पं वा यदि वा बहु ॥ तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत्।' इति ॥

वैश्वदेवाकरणे प्रत्यवायमाह **वसिष्ठः** — 'अकृत्वा वैश्वदेवं तु भुञ्जते ये द्विजाधमाः। स्वप्रधानान्नपाकेन काकयोनिं व्रजन्ति ते ॥ वैश्वदेवेन ये हीना आतिथ्येन बहिष्कृताः। सर्वे ते वृषला ज्ञेयाः प्राप्तवेदा अपि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्विजाः ॥' इति । **भृगुः**—'पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमी । तस्य नास्ति परो लोको लोके भवति निन्दितः ॥ अकृत्वा वैश्वदेवं तु भुञ्जते ये द्विजोत्तमाः । सर्वे ते निष्फला ज्ञेयाः पतिता नरकेऽशुचौ ॥' द्विजोत्तमा ब्राह्मणा इत्यर्थः ॥

**कात्यायनः**—[1]'सायंप्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च । अनश्नतापि सततं अन्यथा किल्बिषी भवेत् ॥' इति । **प्रजापतिरपि** सूनादोषनिवर्तकतामाह—'वैश्वदेवबलिर्हार्तिं प्रत्यहं गृहमेधिनः । सायंप्रातश्च कुर्वीरन् सूनादोषापनुत्तये ॥' **शातातपोपि**—'वैश्वदेवस्तु कर्तव्यः पंचसूनापनुत्तये ।' इति ॥

सूनाः पञ्च दर्शयति **यमः**—'पञ्चसूना गृहस्थस्य वर्तन्तेऽहरहस्सदा । खंडणी पेषणी चुल्ली जलकुंभ उपस्करः । एतासिर्वाहयन्विप्रः बध्यते वै मुहुर्मुहुः ॥ एतासां पावनार्थाय पञ्चयज्ञाः प्रकल्पिताः ॥' इति । **आपस्तम्बस्तु** फलान्तरमाह—'[2]यदशनीयं तस्य होमा बलयश्च स्वर्गपुष्टिसंयुक्ताः' इति । **हारीतोपि**—'यद्देवेभ्यो जुहोति देवलोकं तेनाभिजयति । यत्पितृभ्यः पितृलोकं तेन । यत्स्वाध्यायमधीते ऋषिलोकं तेन । यद्भूतेभ्यो बलिं हरति भूतं लोकं तेन । यद्ब्राह्मणं तर्पयति मनुष्यलोकं तेन जयतीति ॥'

**भृगुरपि**—'यत्फलं सोमयागेन प्राप्नोति धनवान्द्विजः । सम्यक् पञ्चमहायज्ञैर्दरिद्रस्तदवाप्नुयात् ॥' इति ॥ **बोधायनोपि**—[3]'देवानां देवयज्ञेन द्विजा गच्छन्ति साम्यताम् । पितृणां पितृयज्ञेन भूतयज्ञेन

---

1. त्रयोदशखण्डे १० श्लोकः ।
2. द्वितीयप्रश्ने २ पटले १२ सूत्रम् ।
3. बोधायनगृह्यसूत्रे २ प्रश्ने ९ अध्याये १४—१६ सूत्राणि श्लोकात्मकानि ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भूतिनः । मनोर्मनुष्ययज्ञेन ब्रह्मयज्ञेन ब्राह्मणः ॥ एतासां साम्यतां गत्वा देवतानां शतं समाः । आनन्दं ब्रह्म गच्छन्ति शिवं शाश्वतमव्ययम् ॥'

एतादृशवैश्वदेवाद्यकरणे प्रत्यवायमभिप्रेत्यैव भगवानगस्त्यः 'अन्यथा खलु काकुत्स्थ तपस्वी समुदाचरन् । दुस्साक्षीव परे लोके स्वानि मांसानि भक्षयेत् ॥' इति रामं प्रत्युक्तवान् । एवञ्च वने संप्राप्तं रामं वनस्थोऽगस्त्यः अतिथिधर्मेण पूजितवानिति युक्तम् । अत एव 'राजा सर्वस्य लोकस्य धर्मिष्ठश्च महारथः । पूजनीयश्च मान्यश्च भवान्प्राप्तः प्रिया. तिथिः' ॥ इत्यग्रिमं महर्षिवचनमपि सङ्गच्छते ॥

प्रथमं चोपविश्याथ धर्मज्ञो मुनिपुङ्गवः ।
उवाच राममासीनं प्राञ्जलिं धर्मकोविदम् ॥ २७ ॥

अन्यथा खलु काकुत्स्थ तपस्वी समुदाचरन् ।
दुस्साक्षीव परे लोके स्वानि मांसानि भक्षयेत् ॥ २८ ॥

राजा सर्वस्य लोकस्य धर्मचारी महारथः ।
पूजनीयश्च मान्यश्च भवान्प्राप्तः प्रियातिथिः ॥ २९ ॥

अत्र अन्नपानादिकमप्रदाय स्वयमेव भक्षणे कालान्तरे स्वमांसभक्षणमेव प्राप्नोतीत्युक्तम् । तथा च यमः — 'अहुताग्निमसन्तर्प्य तपस्विनमुपागतम् । अशित्वा तु परे लोके स्वानि मांसानि खादते' ॥ इति ।

उत्तरकाण्डे श्वेतं प्रति ब्रह्मवचनं — [1] 'स्वादूनि स्वानि मांसानि तानि भक्षय नित्यशः । स्वशरीरं त्वया जुष्टं कुर्वता तप उत्तमम् ॥ अनुप्तं रोहते श्वेत न कदाचिन्महामते । दत्तं न तेऽस्ति सूक्ष्मोपि तप एव निषेवसे ॥ तेन स्वर्गगतो वत्स बाध्यसे क्षुत्पिपासया । स त्वं सुपुष्ट-

1. उत्तरकाण्डे ७८ सर्गे १४ उत्तरार्धं १५ श्लोकः १६ श्लोकस्य पूर्वार्धम् १५ श्लोकस्य उत्तरार्धं १८ श्लोकश्च ।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

माहारैः स्वशरीरमनुत्तमम् ॥ भक्षयस्वामृतरसं तेन तृप्तिर्भविष्यति ।' इति ॥

एवमुक्त्वा फलैर्मूलैः पुष्पैरन्यैश्च राघवम् ।
पूजयित्वा यथाकामं पुनरेव ततोऽब्रवीत् ॥ ३० ॥

तदनु च स मुनिर्निखिलदानवनिषूदनाय कृतोद्योगस्य विष्णोरुपकरणभूतं विश्वकर्मनिर्मितं कार्मुकं ब्रह्मदत्तं शरोत्तमं हेमपरिष्कृतं खड्गं अक्षय्ये चेषुधी भवते दातव्यमिति शक्रेण मयि निहितं,

जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा ॥ ३५ ॥

इत्यभिधानपूर्वकं रामभद्राय प्रदाय पुनरपि राममेवमवादीत् । मामभिवादयितुमागतो भवानित्येतावतैव परितुष्टोऽस्मि । त्वत्स्नेहपारवश्येन सुकुमारी जनकतनया प्राज्यदोषं वनं संप्राप्तेति तदप्यतिदुष्करमिति मे प्रतिभाति ।

एषा हि प्रकृतिः स्त्रीणामासृष्टे रघुनन्दन ।
समस्थमनुरज्जन्ति विषमस्थं त्यजन्ति च ॥५ ॥
शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा ।
गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः ॥ ६ ॥

अनेन स्त्रीणामुत्पत्तिप्रभृति स्वाभाविकमेव सकलदोषाकरत्वमित्युक्तम् । एतच्च प्राक् प्रपञ्चितम् ।

इयं तु भवतो भार्या दोषैरेतैर्विवर्जिता ।
श्लाघ्या च व्यपदेश्या च यथा देवी त्वरुन्धती ॥ ७ ॥

तदनया लक्ष्मणेन च सुखं स्वपिहि । अत्रारुन्धत्याः पतिव्रतानां मध्ये श्रैष्ठ्यं सूचितम् । सप्तऋषिभिः क्रियमाणे यज्ञे सप्तर्षिपत्नीनामवलोकनेन मदनज्वरार्दितं अलभ्यास्ता इति खेदेन वनं प्रविष्टमग्निं समाधातुं स्वयमेव तत्तदृषिपत्नीवेषं गृह्णन्त्यानया अपि स्वाहादेव्याः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनुकरणीयं अरुन्धतीरूपं पातिव्रत्यात् भर्तृशुश्रूषणाच्चाभूदिति प्रतिपादितं वनपर्वण्याङ्गिरसे — [1] 'सप्तानामपि सा देवी सप्तर्षीणां महात्मनाम् । पत्नीसरूपतां कृत्वा कामयामास पावकम् । दिव्यं रूपमरुन्धत्याः कर्तुं न शकितं तया । तस्यास्तपःप्रभावेन भर्तृशुश्रूषणेन च ॥' इति ॥

प्रभाते समागतेन रामभद्रेण,

धन्योस्म्यनुगृहीतोसि यस्य मे मुनिपुंगव ।
गुणैः सभ्रातृभार्यस्य वरदः परितुष्यसि ॥

इत्यभिधाय सोदकं रम्यतरमाश्रमप्रदेशं पृष्टो महर्षिः मुहूर्तमभिध्याय गोदावर्याः समीपे बहुमूलफलः पंचवटीति विख्यातो रम्यो वनोद्देशः । तत्र पर्णकुटीं निर्माय सौमित्रिणा सह पितुर्दशरथस्य वचनं पालयन् रमस्व । भवदागमनवृत्तान्तश्च सर्वोपि तपःप्रभावेन दशरथस्नेहाच्चावगतः । तदधुनैव मधूकवनस्योत्तरतः न्यग्रोधमधिगम्य पर्वतस्याविदूरे स्थितां पंचवटीं गच्छ । तत्र वसता भवतैव निखिलमुनिजनरक्षणं भवेदित्यवदत् ॥

इति द्वादशत्रयोदशौ सर्गौ ॥

## अथ चतुर्दशः सर्गः ।

**चतुर्दशे** — ततो गृहीतचापो दाशरथिरभिवाद्य महर्षिं तदुपदिष्टेन मार्गेण पञ्चवटीं सीतया सह गच्छन् मध्ये महान्तं न्यग्रोधतरुमध्यासीनं गृध्रराजं महाकायमवलोक्य राक्षसं मन्वानः 'को भवान्, किं वा तव नाम, कुलं वा किं?' इत्यपृच्छत् । द्विजराजोपि 'वत्स, राम, पितुर्वयस्यं मां विद्धीत्यभिधाय सर्वभूतसमुद्भवप्रातिपादनपूर्वकम्,

1. २२५ अध्याये १३ श्लोकस्य उत्तरार्धं १४ श्लोकः १५ श्लोकस्य पूर्वार्धं च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्वौ पुत्रौ विनतायास्तु गरुडोऽरुण एव च ।
तस्माज्जातोऽहमरुणात् संपातिश्च ममाग्रजः ॥
जटायुरिति मां विद्धि श्येनीपुत्रमरिन्दम ॥ ३३ ॥

सोऽहं वत्स सहायस्ते भविष्यामि यदीच्छसि ।
सीतां च तात रक्षिष्ये त्वयि याते सलक्ष्मणे ॥ ३४ ॥

इत्याचचक्षे । रामोपि जटायुषं पितृसखमभिनन्द्य तेन च पतगराजेन सहैव सीतामादाय पञ्चवटीं जगाम ॥

इति चतुर्दशः सर्गः ॥

## अथ पञ्चदशः सर्गः ॥

पञ्चदशे — अथ यथाकथितं पञ्चवटीनिकटमागत्य सर्वतो दिक्षु चक्षुर्विक्षिपन् रामः सौमित्रिमिदमवोचत् —

वनरामण्यकं यत्र जलरामण्यकं तथा ।
सन्निकृष्टं च यस्मिन्नः समित्पुष्पकुशोदकम् ॥ ५ ॥

तादृशोऽस्माकं वासाय देशो दृश्यतामिति । लक्ष्मणोपि तद्वचनमाकर्ण्य,

परवानस्मि काकुत्स्थ त्वयि वर्षशतं स्थिते ।
स्वयं तु रुचिरे देशे क्रियतामिति मां वद ॥ ७ ॥

इत्यब्रवीत् । अनेन पितुरनन्तरं यावज्ज्येष्ठो जीवति तावत् कनिष्ठस्य न स्वातन्त्र्यमिति सूचितम् । तथा च मनुः—[1] 'पितेव पालयेत्पुत्रान् ज्येष्ठभ्राता यवीयसः । पुत्रवच्चापि वर्तेरन् ज्येष्ठे भ्रातरि धर्मतः ॥' इति ।

---

1. नवमाध्याये १०८ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विमृशन् रोचयामास देशं सर्वगुणान्वितम् ॥ ८ ॥

इदं पुण्यमिदं मेध्यं इदं बहुमृगद्विजम् ।
इह वत्स्यामि सौमित्रे सार्धमेतेन पक्षिणा ॥ १८ ॥

एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा ।
अचिरेणाश्रमं भ्रातुश्चकार सुमहाबलः ॥ १९ ॥

ततः पुष्पबलिं कृत्वा शान्तिञ्च स यथाविधि ॥ २३½ ॥

लक्ष्मणेन प्रदर्शितां पर्णशालामवलोक्य जनितानन्दो रामचन्द्रः तमतिगाढमालिङ्ग्य एवमवादीत् —

प्रीतोऽस्मि ते महत्कर्म त्वया कृतमिदं प्रभो ।
प्रदेयो यन्निमित्तं ते परिष्वङ्गो मया कृतः ॥ २७ ॥

अनेन सन्तोषाधायकं कर्म कुर्वते पारितोषिकं देयम् । तच्च प्राक् प्रपञ्चितम् ॥

भावज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण ।
त्वया पुत्रेण धर्मात्मा न संवृत्तः पिता मम ॥ २८ ॥

अनेन मृतोपि पिता धार्मिकेण पुत्रेणामृत इति सूचितम् । तथा च वाजसनेयिब्राह्मणं —[1] 'स पुत्रेणैवास्मिन् लोके प्रतितिष्ठति' इति । स च पिता स्वयं मृतोपि धार्मिकस्य पुत्रस्य शरीरेणैव अस्मिन् लोके यथाशास्त्रं कर्म कुर्वन् तिष्ठतीत्यर्थः । इदं च प्राक् प्रपञ्चितम् । इत्यभिधाय रमणीये तदाश्रमे लक्ष्मणेन सीतया च अन्वास्यमानः कञ्चित्कालं सुखमुवास ॥

इति पञ्चदशः सर्गः ॥

---

1. बृहदारण्यके प्रथमाध्याये ५ ब्राह्मणे १७ ऋक् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ षोडशः सर्गः ॥

**षोडशे—** एवमनेकदिवसमतिसुखमधिवसतो रघुकुलतिलकस्य क्रमेण शरदपगमे संप्राप्ते हेमन्तसमये कदाचित् प्रभातायां शर्वर्यां नियमाभिषेकार्थं सीतया सह गोदावरीं प्रस्थितं रामभद्रमनुव्रजन् विनयावनतः कलशहस्तः सौमित्रिरेवमभाषत—

**अयं स कालः संप्राप्तः प्रियो यस्ते प्रियंवद ।**
**अलङ्कृत इवाभाति येन संवत्सरः शुभः ॥ ४ ॥**

अनेन हेमन्तस्य संवत्सरालङ्कारत्वमुक्तम् । तच्च संवत्सरकर्तव्यदेवपितृमनुष्यपूजोपयोगिव्रीह्यादिधान्यसमृद्धिकालत्वेन देवतानामहर्भूतोत्तरायणमुखत्वेन मनुष्याणां सौहित्यातिशयकरत्वेन राज्ञां विजययात्राकालत्वेन च द्रष्टव्यम् । एतदेव महर्षिणा 'प्राज्यकामा जनपदाः' इत्यादिभिः प्रपञ्चितम् ॥

हेमन्ते धान्यादिसमृद्धिः भारते उद्योगपर्वणि— [1] 'सर्वसस्या हि पृथिवी भवत्यन्नवती सदा । सौम्योऽयं वर्तते मासः सुप्रापयवसेन्धनः । सर्वौषधिवनस्फीतः फलवानल्पमक्षिकः ॥' इति । देवानामुदगयनमहर्भूतं इत्यत्र **मनुः**— [2] 'दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः । अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥' इति । एवंरूपोत्तरायणमुखत्वं च मार्गशीर्षमासेऽयनप्रवृत्त्या द्रष्टव्यम् ॥

हेमन्तस्य मनुष्यसुखकरत्वे च **वाग्भटः** — [3] 'बलिनः शीतसंरोधात्

---

1. १४२ अध्याये १६, १७ श्लोकयोः उत्तरपूर्वार्धात्मकः 'सौम्योयं' इत्यादिकः एक एव श्लोको वर्तते । 'सर्वसस्या' इत्यादिश्लोकार्धं तु न दृश्यते मुद्रिते पुस्तके । 2. प्रथमाध्याये ६७ श्लोकः ।
3. अष्टाङ्गहृदये तृतीयाध्याये ७ श्लोकस्य उत्तरार्धं ८ श्लोकः, ९ श्लोकस्य उत्तरार्धमारभ्य १४ श्लोकस्य पूर्वार्धान्तं, १५ श्लोकः, सप्तमेऽध्याये ७२, ७३ श्लोकौ च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हेमन्ते प्रबलोऽनलः ॥ भवत्यल्पेन्धनो धातून् स पचेद्वायुनेरितः । अतो हिमेऽस्मिन् सेवेत स्वाद्वम्ललवणान्रसान् ॥ दैर्घ्यान्निशानामेतर्हि प्रातरेव बुभुक्षितः ॥ कुङ्कुमेन सदर्पेण प्रदिग्धोऽगरुधूपितः । रसान् स्निग्धान् फलं पुष्पं गन्धमच्छरसां सुराम् ॥ गोधूमपिष्टमांसेक्षुक्षीरोत्थविकृतीः शुभाः । प्रावाराजिनकौशेयप्रवेणिकोथुपास्तृतम् ॥ उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् । पीवरोरुस्तनश्रोण्यः समदाः प्रमदाः प्रियाः ॥ हरन्ते शीत-मुष्णाङ्ग्यः धूपकुङ्कुमयौवनैः । त्र्यहाद्वसन्तशरदोः पक्षाद्वृष्टिनिदाघयोः ॥ सेवेत कामतः कामोः दृप्तो वाजीकृतो हिमे । श्रमः क्रमोरुदौर्बल्यबल-पुष्टीन्द्रियक्रियाः । अपर्वमरणं च स्यादन्यथा गच्छतः स्त्रियम् ॥' इति ॥

हेमन्तस्य युद्धयात्रायां प्राशस्त्यं च **मानवे**— [1] 'मार्गशीर्षे शुभे मासि यायाद्यात्रां महीपतिः । फाल्गुनं वापि चैत्रं वा मासौ प्रति यथाबलम् ॥' इति ॥

**शान्तिपर्वणि राजधर्मेऽपि**— [2] 'चैत्रे वा मार्गशीर्षे वा सेनायोगः प्रशस्यते । सर्वसस्या हि पृथिवी भवत्यन्नवती (म्बुमती) सदा ॥ नैवाति-शीतो नात्युष्णः कालो भवति भारत । तस्मात्तदा योधयेतं परेषां व्यसनेषु च ॥' इति ॥

**उद्योगपर्वणि** कर्णं प्रति कृष्णवचनेऽपि — [3] 'ब्रूयाः कर्ण इतो गत्वा द्रोणं शान्तनवं कृपम् । सौम्योऽयं वर्तते मासः सुप्रापयवसेन्धनः ॥ सर्वौषधिवनस्फीतः फलवानल्पमाक्षिकः । निष्पङ्को रसवत्तोयो नात्युष्ण-शिशिरः सुखः ॥ सप्तमाच्चापि दिवसात् अमावास्या भविष्यति । संग्रामो युज्यतां तस्यां तां ह्याहुः शक्रदेवताम् ॥ तदा राज्ञो वदेत्सर्वान्ये युद्धा-याभ्युपागताः । यद्वो मनीषितं तद्वै तदा संपादयामि वः ॥' इति ।

1. सप्तमाध्याये १८२ श्लोकस्य पूर्वार्धम् ।
2. १०० अध्याये १०, ११ श्लोकौ ।
3. १४२ अध्याये १६—१९ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'मासानां मार्गशीर्षोस्मि' इति गीतावचनाच्च मार्गशीर्षमासस्य श्रेष्ठत्वमिति ॥

**नवाग्रयणपूजाभिरभ्यर्च्य पितृदेवताः ।**
**कृताग्रयणकाः काले सन्तो विगतकल्मषाः ॥ ६ ॥**

अत्र हेमन्तकालवर्णनसमये, 'अभ्यर्च्य पितृदेवताः', 'कृताग्रयणकाः' 'इत्यादि आग्रयणस्यातीतत्वप्रतिपादनं शरदि कर्तव्याग्रयणस्यानुवादः । एकजातीयस्य पुनः पुनर्धान्यस्यागमेपि आग्रयणस्यावृत्तिर्न कर्तव्या । किन्तु व्रीहियवादीनां सजातीयस्य प्रथमागमकाले कर्तव्यमित्येतदभिप्रायकम् । तथा **चापस्तम्बः**— 'नानिष्ट्वाग्रायणेनाहिताग्निर्नवस्याश्नीयाद्व्रीहीणां यवानां श्यामाकानां इत्यग्रपाकस्य यजेत' इति ॥

अग्रे प्रथमं अयनं देवानां पितॄणां हविःप्रापणमस्मिन्निति व्युत्पत्त्या आग्रयणं कर्म । तत्र 'नवाग्रयणपूजाभिरभ्यर्च्य पितृदेवताः' इत्यनेन पित्र्यमाग्रयणं श्राद्धरूपमुक्तम् । तथा च **विष्णुपुराणे** — [1] 'नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने । इच्छाश्राद्धानि कुर्वीत नवसस्यागमे तथा ॥' इति । **स्मृत्यन्तरेपि** — 'मन्वादिषु मृताहे च अष्टकादिषु सत्तम । नवधान्ये समायाते गृही श्राद्धं समाचरेत् ॥' इति । **वृद्धपराशरोपि** — [2] 'श्राद्धं वृद्धावचन्द्रेभछायाग्रहणसंक्रमे । नवोदके नवान्ये(न्ने) च नवछन्ने तथा गृहे ॥' इति ॥

'कृताग्रयणकाः' इत्यनेन देवानामाग्रयणमुक्तम् । तत्कर्तव्यतामाहापस्तम्बः — 'नानिष्ट्वाग्रायणेनाहिताग्निर्नवस्याश्नीयात् व्रीहीणां यवानां श्यामाकानां इत्यग्रपाकस्य यजेत' इति । तस्य कालमाह **स एव**— 'वर्षासु श्यामाकैर्यजेत । शरदि व्रीहिभिः वसन्ते यवैः यथर्तु वेणुयवैः'

1. तृतीयांशे १४ अध्याये ६ श्लोकः ।
2. सप्तमाध्याये १, ४ श्लोकयोः पूर्वार्धे ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति । आश्वलायनस्त्वाह — [1] 'आग्रयणं व्रीहिश्यामाकयवानां सस्य नाश्नीयात् । अग्निहोत्रमहुत्वा यदा वर्षस्य तृप्तः स्यादथाग्रयणेन यजेत । अपि देवा आहुस्तृप्तो नूनं वर्षस्याग्रयणेन हि यजते' इति । मनुरपि — [2] 'सस्यान्ते नवसस्येष्ट्या तथर्त्वन्ते द्विजोऽध्वरैः । पशुना ह्ययनान्ते तु समान्ते सौमिकैर्मखैः ॥' इति ।

आग्रयणाकरणे प्रत्यवायमाह आपस्तंबः — 'आनीतो वा एष देवानां य आहिताग्निः । अदन्त्यस्य देवानां अन्नं यदकृत्वाग्रयणं नवस्याश्नीयात् । देवेभ्यो भागं प्रतिकॢप्तं अद्यादार्तिमार्छेत्' इति । मनुरपि — [3] 'नानिष्ट्वा नवसस्येष्ट्या पशुना वाग्निमान् द्विजः । नवान्नमद्यान्मांसं वा दीर्घमायुर्जिजीविषुः ॥ नवेनानर्चिता ह्यस्य पशुहव्येन वाग्नयः । प्राणानेवात्तुमिच्छन्ति नवान्नामिषगर्द्धिनः ॥' इति

आग्रयणाकरणे प्रायश्चित्तं च वैश्वानरेष्टिं प्रकृत्याहापस्तम्बः — 'एतामेव निर्वपेद्यदकृत्वाग्रयणं नवस्याश्नीयात्' इति । आग्रयणानुकल्पमाहापस्तम्बः — 'अपि वामावास्यायां पौर्णमास्यां वा आग्रयणेष्टिमन्वायातयेत् । अपि वा अमावास्यां पौर्णमासीं वा नवैर्यजेत । अपि वा अग्निहोत्रं व्रीहिस्तंबं, यवस्तंबं वा ग्रासयित्वा तस्याः पयसा सायंप्रातर्जुहुयात् । अपि वा नवानां गार्हपत्ये स्थालीपाकं श्रपयित्वा आहवनीये जुहुयात् आग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः । अपि वा नवानां चतुश्शरावमोदनं पक्त्वा चतुरो ब्राह्मणान् भोजयेत् इति ॥'

आश्वलायनोपि— [4] 'अग्निहोत्रीं वै नानादायित्वा तस्याः पयसा जुहुयात्' इति । इदं चाग्रयणमनाहिताग्निनापि कर्तव्यम् । तथा चाप-

1. आश्वलायनश्रौतसूत्रे २ अध्याये ९ खण्डे १–४ सूत्राणि ।
2. चतुर्थाध्याये २६ श्लोकः ।
3. चतुर्थाध्याये २७, २८ श्लोकौ ।
4. आश्वलायनश्रौतसूत्रे २ अध्याये ९ खण्डे ४ सूत्रस्य भागः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**स्तम्बः**—'[1] अनाहिताग्नेराग्रयणं नवानां स्थालीपाकं श्रपयित्वा आग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थाभ्यो हुत्वा तण्डुलानां मुखं पूरयित्वांगीर्त्वा?चम्य व्रोदनपिण्डं संवृत्योत्तरेण यजुषागारस्तूप उद्विद्धेत्' इति ॥

**बोधायनश्च**—[2] 'कथमु खल्वनाहिताग्नेराग्रयणं भवति इति। अनिरुप्तं स्थालीपाके श्रपयित्वाऽग्निमुपसमाधाय संपरिस्तीर्याघारावाघार्याज्यभागौ हुत्वा आग्रयणदेवताभ्यस्स्विष्टकृच्चतुर्थाभ्यो जुहुयात्। कामं पुरस्तास्स्विष्टकृतः अज्यानिरुपजुहुयात्। तस्यैतेनैव मन्त्रेण प्राश्नीयात्—[3] 'भद्रान्नः श्रेयः समनैष्ट देवाः' इति। अपि वा श्रुतवतो ब्राह्मणस्य हुतोच्छेषेणालिप्सेतेति समानः प्राशनमन्त्रः' इति। स एवान्यत्र—'अथ व्रीहिभ्यो यवेभ्यश्च नवानामनिरुप्तं स्थालीपाकं श्रपयित्वा अग्निमुपसमाधाय संपरिस्तीर्य आघारावाघार्य, आज्यभागाविष्ट्वा आग्रयणदेवेभ्यः स्विष्टकृच्चतुर्थेभ्यो जुहुयात्। पुरस्तात्स्विष्टकृतोऽज्यानीरुपजुहुयात्। प्रसिद्धौ प्राशनमन्त्रौ। वैश्वदेवं कृत्वा ब्राह्मणेभ्यो दत्वा प्राशनमेव तेन सर्वासामोषधीनां आग्रयणं व्याख्यातम्। अन्यत्र श्यामाकवेणुयवानां वैश्वदेवो वा। समानौ प्राशनमन्त्रौ। अथ फलानां, मूलानां, भक्ष्याणां ब्राह्मणेभ्यो दत्वा प्राशनमेव। एवमेव पुष्पाणां अन्येषां च नवानां ब्राह्मणेभ्यो दत्वोपयोगः' इति। इति देवानामाग्रयणम् ॥

तदनुष्ठानेनाकरणप्रयुक्तप्रत्यवायपरिहारः, [4] 'तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः। यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः ॥' इति गीतावचनादवगतम्। नित्यकर्मणां पापक्षयहेतुत्वं चाभिप्रेत्य 'कृताग्रयणकाः

1. आपस्तम्बगृह्यसूत्रे नवमखण्डे।
2. गृह्यशेषे ४ प्रश्ने ९ अध्याये १, ८ सूत्रात्मकं वाक्यद्वयमुपलभ्यते।
3. तैत्तिरीयसंहितायां ५ काण्डे ७ प्रश्ने २ अनुवाकान्ते।
4. भगवद्गीतायां तृतीयेध्याये १२, १३ श्लोकयोः उत्तरपूर्वार्धे।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काले सन्तो विगतकल्मषाः' इत्युक्तम् । एवं हेमन्तकाले कर्तव्यानि प्रत्यवरोहणाष्टकाश्राद्धादीनि गृह्येषु प्रसिद्धानि ॥

**प्राज्यकामा जनपदाः संपन्नतरगोरसाः ।**
**विचरन्ति महीपाला यात्रास्था विजिगीषवः ॥ ७ ॥**

अनेन हेमन्तकालो राज्ञां विजयाय यात्राकाल इति सूचितम् । तथा च **राजधर्मे** — [1] 'चैत्र्यां वा मार्गशीर्ष्यां वा सेनायोगः प्रशस्यते । सर्वसस्या हि पृथिवी भवत्यन्नवती तदा ॥ नैवातिशीतो नात्युष्णः कालो भवति भारत । तस्मात्तदा योधयीत परेषां व्यसनेषु च ॥' इति ॥

**सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् ।**
**विहीनतिलकेव स्त्री नोत्तरा दिक्प्रकाशते ॥ ८ ॥**

अत्र दिङ्नायकस्य दिनमणेरन्तकदेशगमनं प्रत्युक्ततया उत्तरदिग्रूपायाः नायिकायाः विहीनतिलकत्वप्रतिपादनेन तिलकाद्यभावो विधवाया लक्षणं, तिलकादिमत्वं सुवासिनीनां लक्षणमिति सूचितम् । तथा च **वसिष्ठसंहितायां** — 'करमूले कण्ठमूले काचाभरणवर्जिता । सा नारी विधवा ज्ञेया जन्मजन्मान्तरेष्वपि ॥' इति । अत्र काचाद्यभावत्वप्रतिपादनं वक्ष्यमाणसुमङ्गलीचिह्नभूततिलकाद्यभावस्यापि उपलक्षणम् ॥

**व्यासोपि** — 'हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा । कूर्पासकं च ताम्बूलं मङ्गल्याभरणं शुभम् ॥ केशसंस्कारकबरीकरकर्णविभूषणम् । भर्तुरायुष्यमिच्छन्ती दूषयेन्न पतिव्रता ॥' इति । **वसिष्ठसंहितायामपि** — 'कञ्चुकं कण्ठसूत्रञ्च कर्णपत्रे तथाञ्जनम् । काचकाभरणं चैव पादनासाविभूषणम् ॥ ताम्बूलादीनि लक्ष्माणि प्रोच्यन्ते पुण्ययोषिताम् । मणिबन्धे च कण्ठे च काचकाभरणैर्युता ॥ सा नारी पुण्य-

1. १०० अध्याये १०, ११ श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चरिता तस्याः पाकः शुचिः स्मृतः ।' इति । कञ्चुकाधारणस्यापवादमाह– 'कञ्चुकेन समं नारी भर्तुः सङ्गं समाचरेत् । त्रिभिर्वर्षैश्च मध्ये वा विधवा भवति ध्रुवम् ॥' इति । कुङ्कुमादिधारणं रतिसमयेऽत्याव-श्यकमाह संग्रहकारः -- 'कुङ्कुमं चाञ्जनं चैव तथा हारिद्रचन्दने । धौतवस्त्रञ्च तांबूलं संयोगेषु शुभावहम् ॥' इति ॥

प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च सांप्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ॥ ९ ॥

अत्यन्तसुखसञ्चारा मध्याह्ने स्पर्शन(त)स्सुखः(खाः) ।
दिवसाः सुभगादित्याः छायासलिलदुर्भगाः ॥ १० ॥

मृदुसूर्यास्सनीहाराः पटुशीताः समारुताः ।
शून्यारण्या हिमध्वस्ता दिवसा भान्ति सांप्रतम् ॥ ११ ॥

रविसंक्रान्तसौभाग्यः तुषारारुणमण्डलः ।
निःश्वसांध इवादर्शश्चन्द्रमा न प्रकाशते ॥ १३ ॥

बाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च ।
शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥ १६ ॥

खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किञ्चिदानम्राः शालयः कनकप्रभाः ॥ १७ ॥

अग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतस्सुखः ।
संरक्तः किञ्चिदापाण्डुरातपः शोभते क्षितौ ॥ १९ ॥

स्पृशंस्तु विमलं शीतमुदकं द्विरदस्सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥ २१ ॥

एते हि समुपासीना विहगा जलचारिणः ।
नावगाहन्ति सलिलमप्रगल्भा इवाहवम् ॥ २२ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अवश्यायतमोनद्धा नीहारतमसा वृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ २३ ॥
बाष्पसंछन्नसलिला रुतविज्ञेयसारसाः ।
हिमार्द्रवालुकास्तीरैः सरितो भान्ति सांप्रतम् ॥ २४ ॥
तुषारपतनाच्चैव मृदुत्वाद्भास्करस्य च ।
शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम्॥ २५ ॥
जराजर्झरितैः पर्णैः(र्णैः) शीर्णकेसरकर्णिकैः ।
नालशेषैर्हिमध्वस्तैः न भान्ति कमलाकराः ॥ २६ ॥ इति ।

नन्वेभिः श्लोकैः हेमन्तर्तुस्वभाववर्णनं कृतम् । तदसङ्गतम् । धर्मनिरूपणाय प्रवृत्तेऽस्मिन् ग्रन्थे ऋतुवर्णनस्याप्रसक्तत्वात् । न च काव्यत्वात् ऋतुवर्णनमावश्यकमेवेति वाच्यम् । काव्यत्वाद्वाचनिकवृत्त्या ऋतुवर्णनस्योचितत्वेऽपि 'वेदोपबृंहणार्थाय' 'पुण्यं वेदैश्च संमितं' इत्यादिवचनपर्यालोचनयाऽवगतव्यङ्ग्यमर्यादया धर्मप्रतिपादनपरत्वमपि वक्तव्यम् । तत्तु न संभवति । हेमन्तर्तुवर्णनस्य धर्मोपयोगाभावात् । अतः कथमत्र ऋतुवर्णनमिति चेन्न । वेदोपबृंहणार्थं प्रवृत्तेऽस्मिन् ग्रन्थे वेदविहितकर्मापेक्षितकालविशेषनिर्णायकतत्तत्कालासाधारणलक्षणप्रतिपादनमेव तत्तदृतुवर्णनव्याजेन कृतमिति धर्मोपयोगसंभवात् । यथा वेदाङ्गभूतज्योतिश्शास्त्रस्य वेदप्रतिपाद्यधर्मोपलक्षितकालसमर्पकत्वेन धर्मपर्यवसायित्वं तद्वत् ॥

शास्त्रस्य धर्मपर्यवसायित्वं च ज्योतिषिके —[1] 'वेदस्तावद्यज्ञकर्मप्रवृत्तः यज्ञाः प्रोक्तास्ते तु कालाश्रयेण । शास्त्रादस्मात् कालबोधो यतस्स्यात् वेदाङ्गत्वं ज्योतिषस्योक्तमस्मात् ॥' इति । अत एव 'कृताग्रयणकाः काले सन्तो विगतकल्मषाः ॥'[2] 'अयमध्यायसमयः

1. सर्वसिद्धान्तसारसमुच्चये ४ श्लोकः ।
2. २८ सर्गे ५४ श्लोके उत्तरार्धं ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सामगानामुपस्थितः ॥' इत्यादितत्तदृतुविशेषकर्तव्यकर्मविशेषकथनं सङ्गच्छते। अन्यथा काव्यवर्णने प्रधाने आग्रयणादिकर्मविशेषकथनमुपपन्नं न स्यात् ।' तस्मात् कर्मापेक्षितकालज्ञापनायैव हेमन्तर्तुवर्णनत् ॥

एवमेव —[1] 'पाण्डरं गगनं दृष्ट्वा विमलं चन्द्रमण्डलम् । शारदीं रजनीं चैव दृष्ट्वा ज्योत्स्नानुलेपनाम् ॥ कामवृत्तं च सुग्रीवं नष्टान्तु जनकात्मजाम् । बुद्ध्वा कालमतीतं च मुमोह परमातुरः ।' इति शरत्कालस्य वर्णनं । सीतागवेषणाय प्रस्थिता हनुमत्प्रमुखा वानराः स्वयंप्रभया गुहातो बहिर्निस्सारिताः [2] 'ततः पुष्पातिभाराग्रान् लताशतसमावृतान् । द्रुमान् वासन्तिकान् दृष्ट्वा बभूवुर्भयशंकिताः ॥ ते वसन्तमनुप्राप्तं प्रतिबुद्ध्वा परस्परम् । नष्टसन्देशकालार्था निपेतुर्धरणीतले ॥' इति वसन्तकालवर्णनं [3] 'अयं स कालस्संप्राप्तः समयोऽथ जलागमः । संपश्यध्वं नभो मेघैः संवृतं गिरिसन्निभैः ॥ वर्षोदकाप्यायितशाड्वलानि प्रवृत्तनृत्तोत्सवबर्हिणानि । वनानि निर्वृष्टवलाहकानि पश्यापराह्णेष्वधिकं विभान्ति ॥' इत्यादिवचनैः किष्किन्धाकाण्डे वर्षाकालवर्णनं [4] 'निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः । विलसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥' इति सायङ्कालादि-चिह्नप्रतिपादनमित्येतत्सर्वमपि कर्मानुष्ठानोपयुक्तकालज्ञापनार्थमेव कृतमिति धर्मपर्यवसानं संभवत्येव ॥

सायंप्रातःकालयोः कर्तव्यान्यग्निहोत्रादीनि । तथा च श्रुतिः — 'सायं जुहोति प्रातर्जुहोति' इत्यादि । आश्वलायनोऽपि — [5] 'अस्तमिते

1. किष्किन्धाकाण्डे ३० सर्गे २, ३, श्लोकौ ।
2. किष्किन्धाकाण्डे ५३ सर्गे २०, २१ श्लोकौ ।
3. किष्किन्धाकाण्डे २८ सर्गे २१, ५२ श्लोकाः ।
4. किष्किन्धाकाण्डे २८ सर्गे ५२ श्लोकः ।
5. आश्वलायनश्रौतसूत्रे २ अध्याये २ खण्डे ९ सूत्रं २ अध्याये ५ खण्डे २३, २४ सूत्रे च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

होमः । एवं प्रातरुपोदयं व्युषित उदिते वा' इति । एवञ्च पक्षे पक्षे कर्तव्यान्यपि दर्शपौर्णमासादीनि । तत्रापि श्रुतिः—[1] 'अमावास्याया-ममावास्यया यजेत । पौर्णमास्यां पौर्णमास्या यजेत' इति । एवं मासि कर्तव्यान्यपि पिण्डपितृयज्ञादीनि । तत्र श्रुतिः—[2] 'मासि पितृभ्यः क्रियते' इति । ऋतुषु कर्तव्यानि च ऋतुमुखहोमादीनि । तथा च श्रुतिः—[3] 'प्रायश्चित्तिर्वाग्घोतेत्यृतुमुखऋतुमुखे जुहोति' इति । **बोधायनोऽपि**— 'ऋतुमुख षड्ढोता' इति । चतुर्षु मासेषु चातुर्मास्यानि । तथा **चापस्तम्बः**—'फाल्गुन्यां चैत्र्यां वा वैश्वदेवेन यजते । ततश्चतुर्षु मासेषु आषाढ्यां श्रावण्यां वोदवसाय वरुणप्रघासैर्यजते । ततश्चतुर्षु मासेषु पूर्वस्मिन् पर्वण्युपक्रम्य द्व्यहे साकमेधैर्यजते । ततो द्व्यहे, त्र्यहे, चतुरहेऽर्धमासे, मासि, चतुर्षु वा मासेषु शुनासीरीयेण यजते ।' इति ॥

एवमयनयोः कर्तव्यः पशुबन्धः । तथा च **बोधायनः**—[4] 'षट्सु षट्सु मासेषु आहिताग्निना पशुना यष्टव्यं भवति' इति । **आश्वलायनोऽपि** [5] 'निर्मित ऐन्द्राग्नः षाण्मास्यः सांवत्सरो वा' इति । संवत्सरे कर्तव्यः सोमयागः । तथा च **बोधायनः**—[6] 'संवत्सरे संवत्सरे सोमः' इति ॥

ऋतुविशेषकर्तव्यान्याहापस्तम्बः—[7] 'वसन्ते ब्राह्मणमुपनयीत ।

---

1. आपस्तम्बश्रौतसूत्रे २४ प्रश्ने २ कण्डिकायां १९, २० सूत्रे ।
2. कृष्णयजुस्संहितायां २ काण्डे ५ प्रश्ने ७ अनुवाके ।
3. तैत्तिरीयशाखायां २ अष्टके ३ प्रश्ने २ अनुवाके ।
4. श्रौते कर्मान्तसूत्रे २६ प्रश्ने २९ अध्याये २९ खण्डे ।
5. आश्वलायनश्रौतसूत्रे ३ अध्याये ८ खण्डे ४, ५ सूत्रे ।
6. धर्मे गृह्ये श्रौते वा न दृश्यते । अतः विषयसंग्रहात्मकं वाक्यमिति भाति । श्रौते २० प्रश्ने २४ अध्याये ८ खण्डे स एवमेव संवत्सरे संवत्सरे इति सूत्रं शाकले: । इति मातं भवति ।
7. प्रथमप्रश्ने प्रथमपटले १९ सूत्रम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ग्रीष्मे राजन्यं। शरदि वैश्यम्।' तथा 'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः शरदि वैश्यो, वर्षासु रथकारः' इति। तथा 'वसन्ते वसन्ते ज्योतिष्टोमेन यजेत। शरदि वाजपेयेन यजेत' इत्यादि। तथा **आश्वलायनगृह्ये**— [1]'श्रावण्यां श्रावणकर्म आश्वयुज्यामाश्वयुजं कर्म। मार्गशीर्ष्यां प्रत्यवरोहणम्। हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः। एतेन माघ्या वर्षं प्रोष्ठपद्या अपरपक्षे' इति॥

**बोधायनोऽपि**— [2]'अथ प्रत्यवरोहणं वसन्तादौ मधुश्च माधवश्चेति हुत्वा वासन्तिकैरलङ्कारैरलङ्कृत्य वासन्तिकान्यन्नानि ब्राह्मणेभ्यो दत्वा अन्नशेषान् सगणः प्राश्नाति। अथ ग्रीष्मादौ शुक्रश्च शुचिश्चेति हुत्वा ग्रैष्मकैरलङ्कारैरलङ्कृत्य ग्रैष्मकान्यन्नानि ब्राह्मणेभ्यो दत्वान्नशेषान् सगणः प्राश्नाति॥

अथ वर्षादौ नभश्च नभस्यश्चेति हुत्वा वार्षिकैरलङ्कारैरलङ्कृत्य वार्षिकान्यन्नानि ब्राह्मणेभ्यो दत्वा अन्नशेषान् सगणः प्राश्नाति। अथ शरदादौ इषश्चोर्जश्चेति हुत्वा शारदैरलङ्कारैरलंकृत्य शारदीकान्यन्नानि ब्राह्मणेभ्यो दत्वान्नशेषान् सगणः प्राश्नाति॥

अथ हेमन्तादौ सहश्च सहस्यश्चेति हुत्वा हैमन्तिकैरलङ्कारैरलङ्कृत्य हैमन्तिकान्यन्नानि ब्राह्मणेभ्यो दत्वा अन्नशेषान् सगणः प्राश्नाति। अथ शिशिरादौ तपश्च तपस्यश्चेति हुत्वा शैशिरिकैरलङ्कारैरलङ्कृत्य शैशिरिकान्यन्नानि ब्राह्मणेभ्यो दत्वा अन्नशेषान् सगणः प्राश्नाति। स एष आधानवान् स्यात् अग्निहोत्रिको वाप्यपूर्वो वेति प्रत्यवरोहणं व्याख्यातं' इति॥

---

1. द्वितीयाध्याये प्रथमखण्डे प्रथमं सूत्रम्।
2. द्वितीयप्रश्ने तृतीयपटले १—१० सूत्राणि।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मनुरपि—[1]'अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोस्सदा । दर्शेन चार्धमासान्ते पूर्णमासेन चैव हि ॥ सस्यान्ते नवसस्येष्ट्या तथर्त्वन्ते द्विजोऽध्वरैः । पशुना ह्ययनान्ते तु समान्ते सौमिकैर्मखैः ॥' इति ॥

जितः स्वर्गस्तव भ्रात्रा भरतेन महात्मना ।
वनस्थमपि तापस्यं यस्त्वामनुविधीयते ॥ ३३ ॥

अनेन देशान्तरेऽपि विद्यमानज्येष्ठेन समानशीलतया अवस्थानरूपं शुश्रूषणं कनिष्ठस्य स्वर्गादिफलप्रदमिति सूचितम् । तथा च आनुशासनिके—[2]'शुश्रूषते यः पितरं न चासूयेत्कथञ्चन । मातरं भ्रातरं वापि गुरुमाचार्यमेव च ॥ तस्य राजन् फलं विद्धि स्वर्लोके स्थानमूर्जितम् । न च पश्येत नरकं गुरुशुश्रूषयात्मवान् ॥' इति ॥

न पित्र्यमनुवर्तन्ते मातृकं द्विपदा इति ।
ख्यातो लोकप्रवादोऽयं भरतेनान्यथाकृतः ॥ ३४ ॥

अनेन सर्वेषां जनानां मातृवृत्तानुसरणं स्वभावः । स च भरतेनान्यथा कृत इति कथनात् साधूनां प्रभवप्रयुक्तो दोषो न भवति । अतस्तेषामुत्पत्तिर्न विचारणीयेति सूचितम् । तथा च भारते—'नदीनाञ्च ऋषीणाञ्च साधूनां च महात्मनाम् । प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ॥' साधुत्वञ्च अग्रिमश्लोके प्रतिपादितम्—

भर्ता दशरथो यस्याः साधुश्च भरतस्सुतः ।
कथं नु साऽम्बा कैकेयी तादृशी क्रूरशालिनी ॥ ३५ ॥

---

1. चतुर्थाध्याये २५, २६ श्लोकौ ।
2. आनुशासनिके ७५ अध्याये ४०, ४१ श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवमादिलक्ष्मणकृतकैकेयीपरिभवमसहमानो रामः

तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु ।

इति वदन्नेव गोदावरीतीरपरिसरमाभिसृत्याप्लुत्य सत्वरं सन्तर्प्य पितृदेवताः, समुदितं भगवन्तमादित्यमुपस्थाय जनकजानुजाभ्यां अन्वास्यमानः समधिकं विरराज ॥

इति षोडशः सर्गः ॥

## अथ सप्तदशः सर्गः ॥

**सप्तदशे** — तदनु गोदावरीतीरात् पर्णशालामागत्य विविधकथा-संसक्तचेतसं यदृच्छया समागता शूर्पणखा

रामामिन्दीवरश्यामं कन्दर्पसदृशप्रभम् ।
बभूवेन्द्रोपमं दृष्ट्वा राक्षसी काममोहिता ॥ ९ ॥

तरुणं दारुणा वृद्धा दक्षिणं वामभाषिणी ।
शरीरजसमाविष्टा राक्षसी राममब्रवीत् ॥ १२ ॥

अनेन स्त्रीणां वार्धकेपि सुन्दरतरुणपुरुषदर्शनं कामोद्रेककरमिति सूचितम् । तथा चानुशासनिके — [1] 'उत्तरां मां दिशं विद्धि दृष्टं स्त्रीचापलं हि ते । स्थविराणामपि स्त्रीणां बाधते मैथुनज्वरः ॥' इति । तत्रैव पञ्चचूडोपाख्यानेपि — [2] 'इदमन्यच्च देवर्षे रहस्यं सर्वयोषिताम् । दृष्ट्वैव पुरुषं हृद्यं योनिः प्रक्लिद्यते स्त्रियाः ॥' इति ॥

1. एकविंशतितमेऽध्याये ५ श्लोकः ।
2. अष्टत्रिंशत्तमेऽध्याये २६ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदनु किमागमनकृत्यं किंनिमित्तं निशाचरावासेऽस्मिन् देशे वास इति निशाचर्या पृष्टो रामभद्रः

ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे ॥ १४ ॥
अनृतं नहि रामस्य कदाचिदपि सम्मतम् ।
विशेषेणाश्रमस्थस्य समीपे स्त्रीजनस्य च ॥ १५ ॥

अत्र 'अनृतं न हि रामस्य' इत्यनेन रामवत्सर्वेषां अनृतं वर्जनीयमिति सूचितम् । तथा च हारीतः — 'नानृतं ब्रूयात्' इति। मार्कण्डेयपुराणेपि — 'असत्प्रलापमनृतं वाक्पारुष्यं च वर्जयेत् ॥' इति ॥

विशेषेण आश्रमस्थस्येत्यनेन नियमवता अनृतं वर्जनीयमित्युक्तम् । तथा च श्रुतिः [1]'तस्यैतद्व्रतं नानृतं वदेत्' इति । बोधायनेपि— [2]जपहोमेष्टिमन्त्राणि करिष्यन्नादितो द्विजः । स्नायात्त्रिषवणं पायादात्मानं क्रोधतोऽनृतात् ॥' इति । मोक्षधर्मेषु — [3]'सोपधिं निकृतं स्तेयं परिवादमसूयिताम् । परोपघातहिंसां च पैशुन्यमनृतं तथा ॥ एतानासेवते यस्तु तपस्तस्य प्रहीयते । यस्त्वेतान् नाचरेद्विद्वान् तपस्तस्य प्रवर्धते॥' इति ॥

ननु 'अनृतं न हि रामस्य' इत्यनेनैव सर्वेषामनृतवचनप्रतिषेधसिद्धेः विशेषेणाश्रमस्थस्येत्यनेन नियमवतां पुनरनृतवचनप्रतिषेधो व्यर्थ इति चेन्न । सामान्यनिषेधपरप्राथमिकवचनस्य स्मार्तपुरुषार्थनिषेधपरत्वेन अनन्तरवचनस्य क्रत्वर्थप्रतिषेधपरत्वेन वैयर्थ्याभावात् । अन्यतरेणान्यतरान्यथासिद्धिशङ्काभावात् ॥

तथा च निर्णीतं तृतीयाध्याये — 'अकर्मक्रतुसंयुक्तं संयोगात्

1. कृष्णयजुस्संहितायां द्वितीयकाण्डे ५ प्रश्ने ७ अनुवाके ।
2. चतुर्थप्रश्ने पञ्चमेऽध्याये ३, ४ श्लोकयोः पूर्वार्धे ।
3. १९२ अध्याये १७ & १८ श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नित्यानुवादः स्यादिति । तत्र दर्शपूर्णमासयोः श्रुतं नानृतं वदेदिति वाक्यमुदाहृत्य किमत्रोक्तः अनृतवदनप्रतिषेधः पुरुषार्थः क्रत्वर्थो वेति सन्दिह्य प्रतीतेः स्मरणात् कर्तृविशेषैरपृथक्श्रुतेः कर्तृवाचित्वमाख्यातप्रत्ययस्यावसीयते। वदेदित्याख्यातात् कर्ता तावदवगम्यते । यश्च यतोऽवगम्यते स तस्यार्थः । तथा 'कर्तरि कृत्' इति अधिकृत्य 'लः कर्मणि च' इति चकारेण कर्तृवाचित्वं स्मृतम् । पचति देवदत्त इति च कर्तृविशेषवचनैः देवदत्तादिपदैः सामानाधिकरण्याच्च कर्तृवाचिता । स च प्रत्ययार्थत्वात् प्रकृत्यर्थवदनं प्रति प्रधानभूत इति वचनादानं तावत् पुरुषार्थः ॥

यदर्थं च वदनं तदर्थः प्रतिषेधोपि न्याय्यः । कुतः ? एतत्प्रतिषेधस्यानिष्टबोधनत्वात् । इष्टविपरीतं चानिष्टम् । यत् यदा यस्येष्टं तद्विपरीतं तदा तस्यानिष्टं भवति । तद्यदि प्रतिषेध्यभूतां वदनक्रियामनुवदन् वदेदिति शब्दः पुरुषार्थतया पुरुषेष्टसाधनतया तामुपस्थापयेत् । ततः प्रतिषेधोपि इष्टविपरीतसाधनतां बोधयन् अनुवादावस्थापन्नस्यैवेष्टस्य विपरीतं फलत्वेनावलम्बते । नेष्टान्तरस्याप्रतिपन्नत्वात् ॥

तदयमर्थः — तत्पुरुषार्थोपकारितया प्रसक्तं वदनं तन्न तथा, किन्तु अपकारमेव साधयति । तेन श्रुत्या प्रकरणं बाधित्वा पुरुषार्थः प्रतिषेधः; यस्तु स्मार्तः प्रतिषेधः तस्याप्येतदेव मूलं भविष्यतीति पूर्वपक्षं प्रापय्य, 'आख्यातप्रत्ययाः सर्वे क्रियाया अभिधायकाः । तत एव प्रतीतस्य न कर्तुरभिधेयता ॥ न स्मृतिः कर्तृवाचित्वे संख्यावाचित्वगोचरा । सामानाधिकरण्यं च लक्षणातो गवादिवत् ॥"

अनन्यलभ्यो हि शब्दार्थो भवति । कर्ता चाख्याताभिहितभावनाविनाभावादेव लभ्यमानो नाभिधेयो भवितुमर्हति । स्मृतिरपि नास्याभिधेयतामाह, किन्तु संख्यावाचिताम् । 'लः कर्मणि' इति विभक्तिशास्त्रस्य द्व्येकयोरिति संख्याशास्त्रस्य च एकवाक्यत्वात् । अत्र द्व्येकयोरिति

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्विवचननिर्देशात् असत्यपि भावप्रत्यये भावप्रधानो निर्देशः द्वित्वैकत्वयोरिति। द्रव्यपरत्वे हि द्वयोरेकस्य च सन्निपाते बहुत्वोपजननात् बहुवचनं स्यात् द्व्येकेष्विति ॥

तदयमर्थः—कर्तुरेकत्वे लकारैकवचनमिति । अनभिधेयोपि कर्ता धात्वर्थभावनाभ्यामेव प्रतिपन्न इति नानुपपन्नं तद्विशिष्टसंख्याभिधानं। सामानाधिकरण्यं च गौः शुक्ल इतिवत् लाक्षणिककर्त्रभिप्रायमुपपन्नं इति नाभिधेयः कर्ता। तेन श्रुतिविरोधाभावात् ऋत्वर्थ एवायं प्रतिषेध इति सिद्धान्तितम् ॥

ततो रामसमुदीरितं वचनमाकर्ण्य राक्षसी तमेवमवादीत् — 'अस्ति खलु सुरासुरसिद्धगन्धर्वमौलिमालालालितशासनः सकललोकविरावणो रावणो नाम। तदनुजा विख्यातबलपौरुषाः कुम्भकर्णविभीषणखरदूषणाभिधेयाश्चत्वारः। तेषां भगिनी कामरूपिणी शूर्पणखा नामाहम्। साऽहमिदानीं रूपनिर्जितमारं सुकुमारं भवन्तमवलोक्य रतिरमणवागपथमवतीर्णा। तदधुना विकृताननामिमां सहचरीं परित्यज्य मामेवानुरूपां भार्यां परिगृह्णातु भवान्। अधुना च लक्ष्मणेन सह सीतायां भक्षितायां एकाकी त्वं रम्याणि गिरिशृङ्गाणि नानाविधानि वनानि मया सह विहरिष्यसि' इति ॥

इति सप्तदशः सर्गः ॥

## अथ अष्टादशः सर्गः ॥

अष्टादशे — तदनु मदनपरवशनिशाचरीवचनाकर्णनकुतुको रघुकुलतिलकः सस्मितं तामिदमुवाच —

**कृतदारोऽस्मि भवति भार्येयं दयिता मम।**
**त्वद्विधानां तु नारीणां सुदुःखा ससपत्नता ॥ २ ॥**

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन सापत्न्यं स्त्रीणामतिक्लेशकरमित्युक्तम् । तच्च अयोध्याकाण्डे प्रपञ्चितम् ॥

**श्रीमानकृतदारश्च लक्ष्मणो नाम वीर्यवान् ॥ ३ ॥**
**अपूर्वभार्यया चार्थी तरुणः प्रियदर्शनः ॥ ३½ ॥**

तदनेन ममानुजेन सङ्गम्य सफलीकुरु स्वरूपसौभाग्यं इति ॥

ननु 'अपूर्वभार्यया चार्थी', 'अकृतदारश्च लक्ष्मणः' इति रामेण कथमनृतमुक्तम् । लक्ष्मणस्य कृतदारत्वात् भार्याप्रार्थनानवगमाच्चेति चेन्न । परिहासरूपत्वेनानृतवचनेऽपि दोषाभावात् । तथा च **गौतमः**— [1] 'विवाहमैथुननर्मार्तसंयोगेषु अदोषमेकेऽनृतमिति' । आपद्धर्मेऽपि — [2] 'न नर्मयुक्तमनृतं हिनस्ति न स्त्रीषु राजन्न विवाहकाले । न गुर्वर्थे नात्मनो जीवितार्थे पञ्चानृतान्याहुरपातकानि ॥' इति ॥

नन्वेवमपि रामवचनं परिहासरूपमिति कथं निश्चितमिति चेन्न । 'क्रूरैरनार्यैः सौमित्रे परिहासः कथञ्चन । न कार्यः पश्य वैदेहीं कथञ्चित् सौम्य जीवतीम् । मन्यते तद्वचस्तथ्यं परिहासाविचक्षणा ॥' इति वचन-पर्यालोचनया तदवगमसंभवात् ॥

ततो रामवचनमाकर्ण्य तदाशयानभिज्ञा निशाचरी सत्वरमुपसृत्य लक्ष्मणं कथितनिजवृत्तान्ता तेनापि सपरिहासं दासभूतस्य मम भार्यायास्तवापि दासीभावः कथमिव नातिक्लेशकर इत्यभिहिता

**मन्यते तद्वचस्तथ्यं परिहासाविचक्षणा ॥ १३ ॥**

ततो लक्ष्मणेन परित्यक्ता पुनरपि रामनिकटमागम्य 'भक्षितायां सीतायां निस्सपत्नाया दण्डकारण्यविहारः समधिकसुखकर एव' इत्यभिवीक्ष्य

---

1. २३ अध्याये ३० सूत्रं ।
2. १६५ अध्याये ३० श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जनकनन्दिनीमेव भक्षयितुमभ्यधावत । तदनु मृत्युपाशसमामापतन्तीं निशाचरीं निगृह्य कुपितो रामभद्रो लक्ष्मणमेवमवादीत् ॥

क्रूरैरनार्यैस्सौमित्रे परिहासः कथञ्चन ।
न कार्यः पश्य वैदेहीं कथञ्चित्सौम्य जीवतीम् ॥ १९ ॥

अनेन समीचीनेन अनर्थाधायकं दुष्टजनैः संभाषणं परिहासार्थमपि न कर्तव्यमिति सूचितम् । तथा च राजधर्मे—[1] 'यस्यावाच्यं नैव[न] लोके-(स्मिन्ना)नाकार्यं चापि किञ्चन । वाचं तेन न सन्दध्यात् शुचिस्संक्लिष्ट-कर्मणा ॥ उच्चस्य नीचेन हि संप्रयोगं विगर्हयन्ति स्थिरबुद्धयो ये ।' इति ॥

तदधुना विरूपामिमां कर्णनासापहारेण पुनरुक्तवैरूप्यां कर्तु-मर्हति भवानिति ॥

इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्य पार्श्वतः ।
उद्धृत्य खड्गं चिच्छेद कर्णनासं महाबलः ॥ २१ ॥

अत्राज्ञामात्रेण विरूपकरणप्रतिपादनात् गुर्वाज्ञा अविचार्यैव झटिति कर्तव्या । तथा च राजधर्मे — [2] 'गुरवो हि परं धर्मं यं ब्रूयुस्तं तथा कुरु । गुरूणां हि प्रसादाद्धि श्रेयः परमवाप्स्यसि ॥' कालिदासोपि— [3] 'स शुश्रुवान्मातरि भार्गवेण पितुर्निदेशात्प्रहृतं द्विषद्वत् । प्रत्यग्रहीदग्रज-शासनं तत् आज्ञा गुरूणां ह्यविचारणीया ॥' इति ॥

तत्क्षणमेव लक्ष्मणेन विलक्षणीकृतावयवा निशाचरी खरतरेण रवेण निखिलमपि दण्डकावनं विनादयन्ती खरतरशासनमत्युग्रदर्शनं खरनामानं भ्रातरमुपेत्य निपत्य च भूमितले निखिलमपि निजवृत्तान्तमाख्यातुमुपचक्रमे ॥

इति अष्टादशः सर्गः ॥

---

1. ११४ अध्याये ११ श्लोकः १९ श्लोकस्य उत्तरार्धं च ।
2. १२३ अध्याये अन्तिमः श्लोकः ।
3. रघुवंशे १४ सर्गे ४६ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ एकोनविंशः सर्गः ॥

एकोनविंशे — तदनु विरूपितां तामवलोक्य रोषारुणीकृतलोचनः खरतरशासनः खराभिधानो राक्षसः साटोपमेवमवादीत्। केन वाविनीतेन विमानितासि? । को वा कालसर्पमासीनमङ्गुल्यग्रेण तुदति। न हि तं पश्यामि यः पुरन्दरमन्तरेण समाहितं कुर्यात्। तदाख्याहि

देवगन्धर्वभूतानां ऋषीणाञ्च महात्मनाम् ।
कोऽयमेवं विरूपां त्वां महावीर्यश्चकार ह ॥ ६ ॥

इति तेनाभिहिता निशाचरी सबाष्पगद्गदपदमिदमभाषत ॥

तरुणौ रूपसंपन्नौ सुकुमारौ महाबलौ ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ १४ ॥

फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ ।
पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ ॥ १५ ॥

गन्धर्वराजप्रतिमौ पार्थिवव्यंजनान्वितौ ।
देवौ वा दानवौ वा तौ न तर्कयितुमुत्सहे ॥ १६ ॥

तरुणी रूपसंपन्ना सर्वाभरणभूषिता ।
दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा ॥ १७ ॥

ताभ्यामुभाभ्यां संभूय प्रमदामधिकृत्य ताम् ।
इमामवस्थां नीताहं यथाऽनाथा सती तथा ॥ १८ ॥

एष मे प्रथमः कामः कृतस्तात त्वया भवेत् ।
तस्यास्तयोश्च रुधिरं पिबेयमहमाहवे ॥ १९ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति वदन्त्यां तस्यां महाबलान् चतुर्दशराक्षसान् अचिरादेव तया सह रामं प्रति प्रेषयामास ॥

इति एकोनविंशः सर्गः ॥

## अथ विंशः सर्गः ॥

**विंशे** — अथ निशितशूलधारिभिः निशाचरैः सह पर्णशालाभ्यर्णमागतां निशाचरीमवलोक्य, संस्थाप्य जनकनन्दिनीरक्षणाय लक्ष्मणं, आदाय चामीकरभूषितं चापं धर्मैकमना रामभद्रस्तानेवमवोचत् — पितृवचनगौरवेण दण्डकावनविहाराय समाबद्धकक्षेण मया निखिलमुनिजनसंरक्षणाय पापसमाचारान् निशाचरान् हन्तुमायुधमवलम्बितम् ।

तिष्ठतैवात्र सन्तुष्टा नोपसर्पितुमर्हथ ।
यदि प्राणैरिहार्थो वो निवर्तध्वं निशाचराः ॥ १० ॥

अनेन युद्धार्थं प्रवृत्तः शत्रुः सान्त्वेनैव निवर्तनीयः । अनिवृत्ते च तस्मिन्, प्रहर्तव्यमिति सूचितम् । तथा च **वनपर्वणि** —[1] 'यदा वाचा न तिष्ठन्ति धार्तराष्ट्राः सराजकाः । अनुज्ञाताश्च गन्धर्वाश्चित्रसेनेन भारत ॥ प्रगृहीतायुधास्सर्वे धार्तराष्ट्रानभिद्रवन् ।' इति । तत्रैव **स्थलान्तरे** — [2] 'साम्नैव तु यथा भीम मोक्षयेथास्सुयोधनम् । तथा सर्वैरुपायैस्त्वं यतेथाः कुरुनन्दन ॥ न साम्ना प्रतिपद्येत यदि गन्धर्वराक्षसौ । पराक्रमेण मृदुना मोक्षयेथास्सुयोधनम् ॥ अथासौ मृदुयुद्धेन न मुञ्चेद्भीम कौरवान् । सर्वोपायैर्विमोच्यास्ते निगृह्य परिपन्थिनः ॥' इति ।

इति वदन्तं रामभद्रमवलोक्य कोपारुणीकृतनयना निशाचराः,

1. १४१ अध्याये ७ श्लोकस्य उत्तरार्धं ९, १० श्लोकयोः उत्तरपूर्वार्धे च ।
2. १४३ अध्याये १६—१८ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

का हि ते शक्तिरेकस्य बहूनां रणमूर्धनि ।
अस्माकमग्रतः स्थातुं किं पुनर्योद्धुमाहवे ॥ १४ ॥

इत्यभिधाय निशितानि शूलानि चिक्षिपुः । तानि च शूलानि तावद्भिरेव काञ्चनभूषितैः शरैः प्रच्छिद्य समादाय चापरान्,

रुक्मपुंखांश्च विशिखान् लक्ष्यानुद्दिश्य राक्षसान् ।
मुमोच राघवो बाणान् वज्रानिव शतक्रतुः ॥ १९ ॥

ते भिन्नहृदया भूमौ छिन्नमूला इव द्रुमाः ।
निपेतुः शोणिताद्राङ्गा विकृता विगतासवः ॥ २० ॥

तानवलोक्य संत्रस्ता निशाचरी खरनामानं भ्रातरमुपेत्य निपत्य च भूमितले रक्षोगणवधमाचख्यौ ॥

इति विंशः सर्गः ॥

## अथ एकविंशः सर्गः ॥

**एकविंशे** — तदनु तदनुजेन निशाचरवरेण विषण्णवदनामनर्थाय समागतां निशाचरीमवलोक्य रिपुनिषूदनाय प्रहितेषु सदानुरक्तेषु; 'मया सनाथापि अनाथेव विलपन्ती किमिति धरातले चेष्टसे । उत्तिष्ठ तावत्, परित्यज्यतां वैक्लव्यं, अवलम्ब्यतां च धैर्यम्' इति परिसान्त्विता निशाचरी तमेवमाह — 'तवाज्ञया मया सह समागतानतिबलानपि निशाचरानचिरादेव रामशरनिकृत्तकन्धरानवलोक्य तत्कर्मसंत्रस्तमानसा समागतास्मि । तदधुना निखिलराक्षसकण्टकं दण्डकारण्यनिलयं रामभद्रं यदि नोद्धरिष्यसि, तवाग्रतः प्रियतरान् प्राणान् परित्यक्ष्यामि । न ह्यत्युदारप्रकृतेर्महात्मनो रामभद्रस्य संमुखे स्वल्पवीर्यस्य तवावस्थातुं शक्ति-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रस्ति । अतो मन्ये रामतेजसाभिभूतस्त्वं अचिरादेव विनशिष्यसि, इत्येवमादि बहुप्रकारं विललाप ॥

इति एकविंशः सर्गः ॥

## अथ द्वाविंशः सर्गः ॥

द्वाविंशे —तदाकर्ण्य रामकृतपरिभवमसहमानः खरो 'मानुषमल्पसारं रामभद्रं अधुनैव यमभवनं प्रेषयामि' इत्यभिधाय निखिलमुनिजनदूषणं दूषणनामानं सेनापतिमाहूय 'चतुर्दशसहस्रसंख्याकानखिललोकहिंसारतान् अतिबलान् निशाचरान् अधुनैवायोधनाय प्रस्थापय, उपस्थापय च दिव्यं रथवरं; समानय शरासिशक्तिखड्गचापान् । अहमिदानीमेव अरातिहननाय सेनायाः पुरत एव यातुमिच्छामि' इत्याज्ञापयामास ॥

तदाज्ञया च सर्वानपि योधमुख्यान् युद्धसन्नद्धान् विधाय निष्टप्तकनकमयकिङ्किणीशतविराजितं वैडूर्यमयकूबरं नानायुधसमलंकृतं रथवरं तत्क्षणमेवोपस्थापयामास । तदनु रोषारुणितलोचनः खरः पवनजवनतुरङ्गमयुक्तं तं रथवरमारुह्य युद्धसन्नद्धान् अनुचरानपि यात्रायै चोदयामास ! तदनु तदाज्ञया जनस्थाननिलयानखिलान् निशाचरान् निर्गच्छतोऽवलोक्य सारथिरपि खराज्ञया सत्वरमेव रथमचोदयत् ॥

इति द्वाविंशः सर्गः ॥

## अथ त्रयोविंशः सर्गः ॥

त्रयोविंशे – तं प्रयान्तं जनस्थानादशिवं शोणितोदकम् ।
अभ्यवर्षन्महामेघस्तुमुलो गर्दभारुणः ॥ १ ॥
निपेतुस्तुरगास्तस्य रथयुक्ता महाजवाः ।
समे पुष्पचिते देशे राजमार्गे यदृच्छया ॥ २ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्यामं रुधिरपर्यन्तं बभूव परिवेषणम् ।
अलातचक्रप्रतिमं परिगृह्य दिवाकरम् ॥ ३ ॥

ततो ध्वजमुपागम्य हेमदण्डसमुच्छ्रितम् ।
समाक्रम्य महाकायस्तस्थौ गृध्रः सुदारुणः ॥ ४ ॥

जनस्थानसमीपे तु समागत्य खरस्वराः ।
विस्वरान् विविधांश्चक्रुः मांसादा मृगपक्षिणः ॥ ५ ॥

व्याजह्रुश्च प्रदीप्तायां दिशि वै भैरवस्वनम् ।
अशिवं यातुधानानां शिवा घोरा महास्वनाः ॥ ६ ॥

प्रभिन्नगिरिसंकाशास्तोयशोणितधारिणः ।
आकाशं तदनाकाशं चक्रुर्भीमा बलाहकाः ॥ ७ ॥

बभूव तिमिरं घोरमुद्धतं रोमहर्षणम् ।
दिशो वा विदिशो वापि न च व्यक्तं चकाशिरे ॥ ८ ॥

क्षतजार्द्रसवर्णाभा सन्ध्या कालं विना बभौ ।
खरस्याभिमुखा नेदुः तथा घोरा मृगाः खगाः ॥ ९ ॥

कङ्कगोमायुगृध्राश्च चुक्रुशुर्भयशंसिनः ॥ १० ॥

नित्याऽशिवकरा युद्धे शिवा घोरनिदर्शनाः ।
नेदुर्बलस्याभिमुखं ज्वालोद्गारिभिराननैः ॥ ११ ॥

कबन्धः परिघाभासो दृश्यते भास्करान्तिके ।
जग्राह सूर्यं स्वर्भानुरपर्वणि महाग्रहः ॥ १२ ॥

प्रवाति मारुतश्शीघ्रं निष्प्रभोऽभूद्दिवाकरः ।
उत्पेतुश्च विना रात्रिं ताराः खद्योतसप्रभाः ॥ १३ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संलीनमीनविहगाः नलिन्यः शुष्कपङ्कजाः ।
तस्मिन् क्षणे बभूवुश्च विना पुष्पफलैर्द्रुमाः ॥ १४ ॥

उद्भूतश्च विना वातं रेणुर्जलधरारुणः ।
वीचीकूचीति वाश्यन्त्यः बभूवुस्तत्र शारिकाः ॥ १५ ॥

उल्काश्चापि सनिर्घाता निपेतुर्घोरदर्शनाः ।
प्रचचाल मही सर्वा सशैलवनकानना ॥ १६ ॥

खरस्य च रथस्थस्य नर्दमानस्य धीमतः ।
प्राकम्पत भुजस्सव्यः स्वरश्चास्यावसज्जत ॥ १७ ॥

सास्रा संपद्यते दृष्टिः पश्यमानस्य सर्वतः ।
ललाटे च रुजा जाता न च मोहान्न्यवर्तत ॥ १८ ॥

एवमग्रेपि मारीचवधानन्तरं स्वाश्रमप्रत्यागमनसमये रामस्यापि मध्येमार्गं कानिचित् दुर्निमित्तानि जातानि । [1] 'क्रूरस्वनोऽथ गोमायुर्विननादास्य पृष्ठतः ॥ स तस्य स्वरमाज्ञाय दारुणं रोमहर्षणम् । चिन्तयामास गोमायोः स्वरेण परिशङ्कितः ॥ अशुभं बत मन्येऽहं गोमायुर्वाश्यते यथा । स्वस्ति स्यादपि वैदेह्या राक्षसैर्भक्षणं विना ॥ निमित्तानि च घोराणि दृश्यन्तेऽद्य बहूनि च । तानि दृष्ट्वा निमित्तानि महाघोराणि राघवः । यथा वा मृगसंघाश्च गोमायुश्चैव भैरवम् । वाश्यन्ते शकुनाश्चैव प्रदीप्तामभितो दिशम् ॥ मनश्च मे दीनमिहाप्रहृष्टं चक्षुश्च सव्यं कुरुते विकारम् ।' इति ॥

अग्रे कबन्धदर्शनावसरेपि— [2] 'स्पन्दते मे दृढं बाहुरुद्विग्नमिव मे मनः । प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ॥ ममैव हि निमित्तानि सद्यः शंसति संभ्रमम् ।' इति ॥

---

1. आरण्यकाण्डे ५७ सर्गे २ उ, ३, ४, १० पू० १२ पू २२, २४ पू=५ श्लोकाः ।
2. आरण्यकाण्डे ६९ सर्गे २२ श्लोकः २३ श्लोकस्य उत्तरार्धं च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवमेव युद्धकाण्डेऽपि —[1] 'लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् । निबर्हणं प्रवीराणां ऋक्षवानररक्षसाम् ॥ वाताश्च परुषा वान्ति कम्पते च वसुन्धरा । पर्वताग्राणि वेपन्ते पतन्ति धरणीरुहाः ॥ मेघाः क्रव्यादसंकाशाः परुषाः परुषस्वनाः । क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥ रक्तचन्दनसङ्काशा सन्ध्या परमदारुणा । ज्वलच्च निपतत्येतदादित्यादग्निमण्डलम् ॥ आदित्यमभिवाश्यन्ति जनयन्तो महद्भयम् । दीना दीनस्वराः घोरा न प्रशस्ता मृगद्विजाः ॥ रजन्यामप्रकाशश्च सन्तापयति चन्द्रमाः । कृष्णरक्तांशुपर्यन्तो यथा लोकस्य संक्षये ॥ ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषः सुलोहितः ॥ आदित्यमण्डले नीलं लक्ष्म लक्ष्मण दृश्यते । दृश्यन्ते न यथावच्च नक्षत्राण्यभिवर्द्धते । युगान्तमिव लोकस्य पश्य लक्ष्मण शंसति ॥ काकाः श्येनास्तथा गृध्राः नीचैः परिपतन्ति च । शिवाश्चाप्यशिवा वाचः प्रवदन्ति महास्वनाः ॥' इति ।

तत्रैव स्थलान्तरे --[2] 'रावणस्य विनाशाय राघवस्य जयाय च ॥ ववर्ष रुधिरं देवो रावणस्य रथं प्रति । वाता मण्डलिनस्तीक्ष्णा ह्यपसव्यं प्रचक्रमुः ॥ महद्गृध्रकुलं चास्य भ्रममाणं नभःस्थले । येन येन रथो याति तेन तेन प्रधावति ॥ सन्ध्यया चावृता लङ्का जपापुष्पनिकाशया । दृश्यते संप्रदीप्तेव दिवसेऽपि वसुन्धरा ॥ सनिर्घाता महोल्काश्च संप्रचेरुर्महास्वनाः । विषादयंस्ते रक्षांसि रावणस्य सदाहिताः ॥ रावणश्च यतस्तत्र प्रचचाल वसुन्धरा । रक्षसाञ्च प्रहरतां गृहीता इव बाहवः ॥ ताम्राः पीतास्सिताः श्वेताः पतिताः सूर्यरश्मयः । दृश्यन्ते रावणस्याङ्के पर्वतस्येव धातवः ॥ गृध्रैरनुगताश्चास्य वमन्तो ज्वलनं मुखैः । प्रणेदुर्मुखमीक्ष्यन्त्यः संरब्धमशिवं शिवाः ॥ प्रतिकूलं ववौ वायुः रणे पांसून्

1. युद्धकाण्डे २३ सर्गे ३ — १२ श्लोकाः ।

2. युद्धकाण्डे १०८ सर्गे ११ — ३२ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

समुत्किरन् । तस्य राक्षसराजस्य कुर्वन् दृष्टिविलोपनम् ॥ निपेतुरिन्द्राशनयः सैन्ये चास्य समन्ततः । दुर्विषह्यस्वना घोराः विना जलधराः स्वनम् ॥ दिशश्च प्रदिशस्सर्वा बभूवुस्तिमिरावृताः । पांसुवर्षेण महता दुर्दर्शं च नभोऽभवत् ॥ कुर्वन्त्यः कलहं घोरं शारिकास्तं रथं प्रति । निपेतुश्शतशस्तत्र दारुणा दारुणारुताः ॥ जघनेभ्यः स्फुलिंगांश्च नेत्रेभ्योऽश्रूणि सन्ततम् । मुमुचुस्तस्य तुरगाः तुल्यमग्निञ्च वारि च ॥ एवंप्रकारा बहवस्समुत्पाता भयावहाः । रावणस्य विनाशाय दारुणाः संप्रजज्ञिरे ॥' इति ॥

एवं खरवधे सन्निमित्तान्यपश्यद्रामवाक्ये—[1]'सधूमाश्च शरास्सर्वे मम युद्धाभिनन्दिनः । रुक्मपृष्ठानि चापानि विवेष्टन्ते च लक्ष्मण ॥ यादृशा इह कूजन्ति पक्षिणो वनचारिणः । अग्रतो नोभयं प्राप्तं संशयो जीवितस्य च ॥ संप्रहारस्तु सुमहान् भविष्यति न संशयः । अयमाख्याति मे बाहुः स्फुरमाणो मुहुर्मुहुः ॥ सन्निकर्षे तु नश्शूर जयं शत्रोः पराजयम् । सुप्रभं च प्रसन्नं च तव वक्त्रं च लक्ष्यते ॥' इति ।

एवं युद्धकाण्डेऽपि जयचिह्नानि प्रतिपादितानि—[2]'बभूव द्विगुणं वीर्यं बलं हर्षश्च संयुगे । रामस्यास्त्रबलं चैव शत्रोर्निधनकाङ्क्षिणः ॥ प्रादुर्बभूवुरस्त्राणि सर्वाणि विदितात्मनः । प्रहर्षाच्च महातेजाः शीघ्रहस्ततरोऽभवत् ॥' इति ॥

एवमन्यान्यपि दुर्निमित्तानि सन्निमित्तानि च तत्र तत्र बहूनि प्रतिपादितानि । तत्र निमित्तं नाम सुकृतदुष्कृतानुरूपतया प्राप्यमाणफलस्य ज्ञापकम् । तथा च ज्योतिर्निबन्धे— 'पूर्वजन्मकृतकर्मणः फलं पाकमेति नियमेन देहिनाम् । तत्प्रकाशयति दैवचोदितं प्रस्थितस्य शकुनं स्थितस्य च ॥ इति ।

1. आरण्यकाण्डे २४ सर्गे ५–८ श्लोकाः ।
2. युद्धकाण्डे १०५ सर्गे २५, २६ श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तच्च निमित्तमिन्द्रयमवरुणकुबेराग्निवाय्वादिदेवताभेदेन दर्शनशब्द-श्रवणसंकीर्तनगमनाङ्गस्फुरणस्खलनादिभेदेन च बहुविधम् । तत्रेन्द्रादिदेवता-कानि दुर्निमित्तानि छन्दोगानां षड्विंशब्राह्मणे प्रतिपादितानि । तत्र प्रथमत इन्द्रदेवताकानि निमित्तानि— [1] 'अथ यदास्य मणिमाणिक्यकुम्भ-स्थालीदरणमायासो राजकुले विवादो वा यानच्छत्रशय्यासनावसथध्वज-गृहैकदेशप्रभञ्जनेषु गजवाजिमुख्या वा प्रमीयन्ते' इत्येवमादीनि ॥

तत्र मणिः स्थूलहारादिः । माणिक्यमस्यूतो मणिः । तदादीनां भेदनं दरणम् । आयासश्चित्तपीडा । राजकुलेन सह विवादो वा । यानमान्दोलिका, तदादीनां भञ्जनं भङ्गः, गजवाजिमुख्यानां नाशश्चेत्यैन्द्राणि ॥

तथा याम्यानि दुर्निमित्तानि —

अथ यदास्य प्रजायां पशुषु शरीरे वाऽरिष्टानि प्रादुर्भवन्ति व्याधयो वाऽनेकविधा अतिस्वप्नमभोजनमालस्यं व्रणमजीर्ण(मति)-निद्रेत्येवमादीनि । प्रजापशुभिरुपेतस्य शरीरे पीडा ज्वराद्युत्पत्तिः । अतिस्वप्नं दुःस्वप्नं । अस्वप्नमनिद्रा । अतिभोजनं भस्मकव्याधिना । अभोजन-मरुच्यादिना । अहेतुकमालस्यम् । व्रणं शस्त्रादिना ग्रन्थ्यादिना वा । अजीर्णं भुक्तस्याजरणम् । अतिनिद्रा च । इति यमदेवताकानि दुर्निमि-त्तानि ॥

अथ वरुणदेवताकानि —

अथ यदास्य क्षेत्रगृहसंस्थेषु धान्येष्वीतयः प्रादुर्भवन्ति । ईतयो-ऽनेकविधाः । आखुपतङ्गपिपीलिकामक्षकभौमकशुकशलभकसौक्ष्मका इति एवमादीनि तान्येतानि सर्वाणि वरुणदैवत्यान्यद्भुतानि ।

अस्य गृहस्थस्य क्षेत्रस्थेषु गृहस्थितेषु वा धान्येषु ईतयः । आखुः=

1. षड्विंशब्राह्मणे पञ्चमषष्ठप्रपाठकयोः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मूषिकः । पतङ्गः=पक्षिविशेषः । पिपीलिकाः प्रसिद्धाः । मध्वका मधुमक्षिकाः । भौमकाः=भूमौ भवाः क्षुद्रजन्तवः । शुकाः=कीराः । शलभा =सस्यभक्षकजन्तुविशेषाः । सौक्ष्मकाः=सूक्ष्मा जन्तुविशेषाः लता-पुष्पफलादिष्वनुषक्ताः । इत्येतानि वारुणानि दुर्निमित्तानि ॥

अथ वैश्रवणदेवताकानि दुर्निमित्तानि—

अथ यदास्य कनकरजतवरवस्त्रवैडूर्यमुक्तामणिवियोगो भवति, आरम्भा वा विपद्यन्ते, अथवा अन्यानि क्रूराणि मित्राणि वा विरज्यन्ते, अरिष्टानि वा वयांसि गृहमध्यासन्ते, वाल्मीकभौमानि वा जायन्ते, छत्राकं वोपदृश्यते, मधूनि वा निलिप्यन्त इत्येवमादीनि वैश्रवणदैवत्यान्यद्भुतानीति ॥

कनकादिभ्यो वियोगः । कार्यारंभाणां निष्फलत्वं । क्रूरपिशाचादि-दर्शनं । मित्रादिद्वेषः । अनिष्टसूचकपक्षीणां गृहारोहणम् । वाल्मीकं गृहे वल्मीकोत्पत्तिः । भौमानि भूम्युद्भवप्राणिजातानि । छत्राकं=कवकम् । गृहे मधूद्भवः । एवमादीनि सर्वाणि वैश्रवणदैवत्यान्यद्भुतानि ॥

अथाग्निदेवताकानि दुर्निमित्तानि—

अथ यदास्य पृथिवी तटति, स्फुटति, कूजति, कंपति, ज्वलति, रुदति, धूमायत्यकस्मात्सलिलमुद्गिरति, प्लवन्निमज्जति, निमग्नमुत्प्लवत्यकाले पुष्पफलमभिनिवर्ततीत्यश्वतरीगर्भो जायते, यदा मज्जति हस्तिनी, भूकम्पो जायते, प्रासादं भिनत्ति यत्र तत्र राजा विनश्यति । गौर्गृहमारोहेत् ग्राममहिषीत्येवमादीनि तान्येतानि सर्वाणि अग्निदैवत्यान्यद्भुतानि इति ॥

तटति शब्दं करोति । स्फोटनं, कूजनम् । कम्पनं अकाण्डे भूम्यादेः कंपनं । ज्वलनं अग्निसंबन्धं विना ज्वलनम् । रोदनं, अग्निं विना धूमः । निर्हेतुकसलिलोद्गमः । जले क्षिप्तपाषाणादेरमज्जनम् । नग्नस्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मृतशरीरस्य जलमज्जनम् । अकाले वृक्षाणां पुष्पफलोद्गमः । अश्वतर्यप्रजेति श्रुत्या अप्रजात्वेन प्रसिद्धानामश्वतरीणां गर्भोत्पत्तिः । निर्निमित्तकं हस्तिनिमज्जनम् । गोग्राममहिषीणां गृहारोहणमित्येतानि दुष्टनिमित्तानि । एतेषु निमित्तेषु तत्रत्यो राजा नश्यति ॥

अथ वायव्यानि—

अथ यदास्य विवाता वाता वायन्तेऽभ्रेषु चापरूपाणि दृश्यन्ते (विरुद्धरूपा दृश्यन्ते) खरकरभमंथकंककपोतोलूककाकगृध्रश्येनभासवायसगोमायुसंस्थानि उपरि पांसुमांसपेश्यस्थिरुधिरवर्षाणि प्रवर्तन्ते काकमिथुनानि दृश्यन्ते रात्रौ मणिधनुं पश्येच्छशका ग्रामं प्रविशन्ति वृक्षाः स्रवन्ति रुधिराण्याकाशे राजकुलं वसतीत्येवमादीन्येतानि सर्वाणि वायुदैवत्यानि ॥

स हि विवातो वातमात्रभवः प्रचण्डवायुः । पर्वतादिषु निर्निमित्ततया विरुद्धरूपदर्शनम् । मन्थो मृगविशेषः एवमादीनां गृहे प्रवेशः । स्वस्य वा गृहस्य वोपरि पांसुः । मांसपेशी मांसखण्डः । अस्थ्यादिवर्षं । रात्रौ मणिधनुदर्शनम् । ग्रामे शशप्रवेशनम् । वृक्षेभ्यो रुधिरस्रावः । आकाशे गन्धर्वनगरदर्शनमित्येवमादीनि वायव्यान्यद्भुतानि निमित्तानि ॥

अथ सोमदैवत्यानि —

अथ यदास्य तारावर्षाणि, चोल्काः पतन्ति? निपतन्ति, धूमायन्ति दिशो, दह्यन्ति, केतवश्चोत्तिष्ठन्ति, गवां शृङ्गेषु धूमो जायते, गवां स्तनेषु रुधिरं स्रवति, अत्यर्थं हिमं निपततीत्येवमादीनि तान्येतानि सर्वाणि निमित्तान्यद्भुतानि सोमदैवत्यानि इति ।

तारावर्षाणि=नक्षत्रवृष्टिः । उल्कानिपतनं, दिक्षु धूमदर्शनं, विना अग्निं दिक्षु ज्वालादर्शनम् । धूमकेतुरित्येवमादीनि ॥

अथ वैष्णवानि —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ यदास्य अयुक्तानि यानानि प्रवर्तन्ते, देवतायतनानि प्रकम्पन्ते, देवताप्रतिमा हसन्ति, रुदन्ति, गायन्ति, नृत्यन्ति, स्फुरन्ति, स्विद्यन्ति, भिद्यन्ति, उन्मीलयन्ति, निमीलयन्ति, प्रतिप्रयान्ति नद्यः, कवन्धमादित्ये दृश्यते, विजले च परिविष्यते, केतुपताकछत्रवज्रविषाणानि प्रज्वलन्ति, अश्वानां च वालधीष्वंगाराः क्षरन्ति, आहतानि चर्माणि कनिक्रन्त इत्येवमादीनि तान्येतानि सर्वाणि विष्णुदैवत्यान्यद्भुतानीति ॥

युद्धे अश्वादिना विना स्वत एव रथादीनां प्रवृत्तिदर्शनं, निर्निमित्तं देवायतनकम्पः । आदित्ये तपति स्वच्छायायां कवन्धदर्शनम् । अवृष्टिकाले परिवेषः । वज्रगजविषाणादि निर्मितध्वजपताकादिज्वलनं, आहतचर्माणां भेर्यादीनां स्वतः शब्दोत्पत्तिः । इमानि वैष्णवनिमित्तानि ॥

अथ रुद्रदैवत्यानि —

अथ यदास्य गवां मानुषमहिष्यजाश्वोष्ट्राः प्रसूयन्ते, हीनाङ्गान्यतिरिक्ताङ्गानि विकृतरूपाणि जायन्ते, असंभवानि संभवन्ति, ( अचलानि चलन्ति ) असूयानि सूयन्ति, अवलानि बलन्ति, एवमादीनि तान्येतानि सर्वाणि रुद्रदैवत्यानीति ॥

मानुषीषु गवादिजननं, गोषु मनुष्यादिजननं, हीनातिरिक्ताङ्गजननं, असंभवानां शशविषाणसन्निभानामुत्पत्तिः, असंभावितगर्भाणां कन्याजरठावन्ध्यादीनां गर्भः, असमर्थानां सामर्थ्यमिति रुद्रदैवत्यानि ॥

अथ सूर्यदैवत्यानि—

अथ यदास्य मानुषाणामतिधृतिमतिदुःखं वा, पर्वताः स्फुटन्ति, निपतन्ति आकाशात्, भूमिः कम्पते, महाद्रुमा उन्मूलयन्ति, अश्मानः प्लवन्ति, तटाकानि प्रज्वलन्ति, चतुष्पादं पञ्चपादं वा भवतीत्येवमादीनि तान्येतानि सर्वाणि सूर्यदैवत्यान्यद्भुतानीति ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मानुषाणामतिधृतिमतिगर्वत', पर्वतैकदेशविशरणं, आकाशात् पर्वतपतनं, कृत्स्नदेशकंपनं, द्रुमाणां समूलपातः, स्थूलाश्मनां प्लवनं, तटाके ज्वलनं, चतुष्पदां गवादीनां पञ्चषडादिपादत्वं, एतानि सौर्याण्यद्भुतानीति ॥

उक्तं निमित्तजातं यस्य राज्ञो देशे दृष्टं तस्याशुभकरम् । तेषाञ्च तत्तद्देवताकस्थालीपाकैः शान्तिरपि तत्रैवोक्तेति । इति देवताभेदेन निमित्तान्युक्तानि ॥

दर्शनरूपं निमित्तमुच्यते । दर्शनमपि स्वप्नप्रत्यक्षभेदेन भिन्नम् । स्वप्नदर्शनं च प्राग्भरतस्वप्नस्थले बहुधा प्रपञ्चितम् । प्रत्यक्षदर्शनमपि द्विविधं अशुभं शुभं चेति ॥

तत्राशुभदर्शनानि अर्णवे — 'एकं महीदेवमुभौ नरेन्द्रौ वैश्यत्रयं शूद्रचतुष्टयञ्च । दृष्ट्वा प्रयाणे विफलत्वमेति हरद्विजं छिन्नपदञ्च नग्नम् ॥' हरद्विजः=शिवब्राह्मणः । 'गोधा सर्पः शशको जाहकश्च याने दृष्टः कृकलासोपि नेष्टः ।' जाहकः=वनमहिषः । याने=प्रयाणे । तत्रैव — 'तृणतैलारिकार्पासभस्मतैलतुषेन्धनम् । सामुद्रो गुडपंकाहिमत्तवान्तबुभुक्षिताः ॥ क्लीबास्थिव्याधिताभ्यक्ततक्रमण्डेन्धनान्त्यजाः । काषायी मुक्तकेशश्च याने दृष्टा न शोभनाः ॥ कुटुम्बकलहो गेहज्वलनं स्त्रीरजःस्वला । सन्न्यासी गुर्विणी वन्ध्या धूमांगारा न शोभनाः ॥ कृष्णधान्यानि विष्ठा च जटिलः पतितः खलः । व्यंगः खञ्जश्च नग्नश्च याने दृष्टा न शोभनाः ॥ युद्धं मार्जारयोर्नेष्टं याने महिषयोस्तथा । भिन्नं रिक्तं स्रवद्भाण्डं केशपाशार्गव्ययसम् ॥ अश्मावस्करपिण्याकं दुर्वाक्यं पथि हानिदम् । खरोष्ट्रमहिषारूढो याने दृष्टो न शोभनः ॥' इति ॥

मुहूर्तमार्ताण्डेपि —[1] 'भस्मास्थीन्धनविट्तुषाश्मलवणोपानत्तृणाय-

1. यात्राप्रकरणे (१७ श्लोके प्रथमपादं विना) १७—१९ श्लोकाः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्कराः । पिण्याकौषधकृष्णधान्यरुधिरं तक्रं सधूमानलः कार्पासारुणपुष्पचर्मलगुडास्तैलायसीकर्दमः ॥ मत्तो वान्तबुभुक्षिताशुचिखलाः मुण्डी जटी व्याधितः खञ्जव्यङ्गदिगम्बरा यतिररिः काषायमुक्तालकौ । चोराभ्यक्तमलाविलाश्च पतिताः पाश्यर्गली गुर्विणी वन्ध्याकृष्णवृषाहिभेकवरटा गोधा वराहः शश ॥ जांहोतुर्महिषः खरोष्ट्रमहिषारूढश्च रिक्तो घटः छिक्का प्राणिशिरोङ्ककम्पपदवीबन्धाः कुवागाहिवौ । पातो यानपलायनं श्वकलहः षण्डः क्षुतं गोर्ज्वलद्धेश्मेति प्रतिबन्धकाः कुशकुनाश्छिक्कादिका मृत्युदाः ॥' पाशी=पाशहस्तः । अर्गली=अर्गलाहस्तः । गुर्विणी=गर्भिणी । जांहोतुः=वनवृषभः ॥

शुभदर्शनानि अर्णवे— 'लक्ष्मीलक्ष्मगलक्षितक्षितिपतिक्षीरेक्षुदण्डेक्षुणं क्षिप्रं क्षेमकरं प्रयाणसमये यातुः शुभार्थावहम् ॥' इति । मुहूर्तमार्ताण्डेपि— [1]'वस्त्रालङ्करणानि पूर्णकलशस्तौर्यत्रिकं पुत्रवान् शङ्खादर्शनृपाश्च दन्तिसुरभिस्त्रीपुष्पधान्यानि च । दोलादीपविधूमवह्निसुरभिद्रव्याणि शुभ्रो वृषो वेश्याछत्रवितानचामरकुमार्यो मीनगोरोचने ॥ यद्यत्स्वान्तनितान्ततोषकरणं गोरोचनं (कोरुद्भूतं) गोमयं मृच्चांभोर्थघटान्वितस्सहचरो धौतांबरो मौत्रकः ॥ दूर्वादर्भरथाः पलास्रमदिरा वर्णी गुरुर्दैववित् विप्रौ मित्रमृगावरोदनशवं सिद्धार्थदुग्धादि च ॥ कुर्वन्दक्षिणतः सदैतदितरद्वामं प्रकुर्वन् व्रजेत्' इति ॥

भारद्वाजोपि - 'राजा विप्रौ सुहृद्वेश्या सपुत्रा स्त्री कुमारिका । अभिरूपो नरः स्त्री वा गजो वाजी वृषः सितः ॥ रज्जवा धृतान्यवर्णा गौः सवत्सा च विशेषतः । उद्धृतं गोमयं मीनं मृत्तिका चोद्धृता तथा ॥ रजको धौतवस्त्रश्च वेश्या तौर्यत्रिकध्वनिः । जयमङ्गलशब्दश्च शान्तिपाठः प्रदीपिकाः ॥ दीपो वा प्रज्वलद्वह्निः पूर्णकुंभो नृपासनम् । मद्यं मांसञ्च रुचिरं भक्ष्याणि च फलानि च ॥ इक्षवो मधु तांबूलं वस्त्रालङ्करणानि च ।

1. यात्राप्रकरणे १६ श्लोकः १७ श्लोकैकदेशश्च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रौप्यं ताम्रं मणिं द्रव्यं स्वर्णं दर्पणमक्षताः ।। वितानं चामरं छत्रं दूर्वा वर्धापनं ध्वजः । दोला चारुरथो वृद्धः पुत्रपौत्रार्थसुकुङ्शुचिः ।। चन्दनानि सुगन्धीनि तथा पुण्यानि रोचना । घृतं दधि फलं पेयं सिद्धमन्नं वचः शुभम् ।। दैवज्ञः स्वगुरुर्देवः चित्तोत्साहकराणि च । दृष्ट्वैतानि नरो यायात् सर्वार्थान् लभते सुखम् ।।' इति ।

दीपिकाः करदीपिकाः । वर्धापनं वृद्धिकर्म शान्तिकपौष्टिकादि । द्रव्यं व्यावहारिकपणा दीनारादयः । पेयं मद्यं । देवः शिवविष्णुमूर्तिः ।।

'भारद्वाजशिखण्डिचापनकुला हंसोज एते दृशं याता इष्टफलास्तु रासभरवो वामेपि पृष्ठेऽर्थदः । नद्युत्तारभयप्रवेशसमरद्यूतेषु नष्टेक्षणे व्याधौ स्युः शुभदा विलोमशकुना नाड्या इडाया भरे ।। आद्ये दुश्शकुने निवृत्य च शुचिर्भूत्वाष्टधा वायवं कृत्वेयादपरेष्टवारमपरे दत्वा सुवर्णं व्रजेत् ।' भारद्वाजो नकुलः । चापसंज्ञः छागः । बहिर्दृष्टमात्रः शुभः । नष्टेक्षणं नष्टद्रव्यगवेषणम् । विलोमशकुनाः प्रतिकूलाः पक्षिणः । इडाभरश्चन्द्रस्वरः । 'शृंगाल्युष्ट्रषडंघ्रिकाश्च नखिनः स्त्रीसंज्ञका वामतः काळीकुक्कुटपुंमृगाश्च सुरभिर्दक्षे मनोभीष्टदः ।' दक्षे=दक्षिणभागे । काळी खंजरिटी भारद्वाज-समाकृतिः किञ्चिन्न्यूनपुच्छी ।।

शुभशब्दश्रवणं द्विविधं मानुषतिर्यग्भेदात् । तत्र मानुषशुभशब्द-श्रवणे ज्योतिर्निबन्धे—'प्रापय गच्छ विसर्जय निर्गच्छ विमुञ्च याहीति । सिद्धिकराः खल्वेते प्रमोदजयजीवशब्दाश्च ।। यात्रोत्थितस्य शस्तं स्याज्जय-मङ्गलपूर्वकम् । वाक्यं नान्यत्तथा सर्वं चित्तोत्साहकरं तथा ।।' इति । तिर्यक्छुभशब्दाश्च हयहेषितगीतरवाः । तथाहि—'वृषभेभगर्जिता निनदाः । मुनिनृपदैवतकीर्तनमङ्गलपुण्याहघोषाश्च ।।' इति । 'खरशब्दः शुभो वामे पृष्ठे चापि यियासताम् ।' इति च ।।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अशुभशब्दश्रवणं ज्योतिर्निबन्धे—'मार्जारस्य रवं युद्धः दर्शनं च न शोभनम्। क्षुतं सर्वत्र विज्ञाय मरणायैव गोक्षुतम् ॥' इति। 'रोदनं न शुभं याने वाहनस्य पलायनम् ॥' इति च ॥

एवं दग्धादिदिगभिमुखतया गोमाय्वादिवाशितमशुभकरम्। इतरासु पञ्चसु शान्ताख्यासु शुभदम्। दग्धादिदिक्स्वरूपं ज्योतिर्निबन्धे—'दग्धा दिगुक्ता दिननाथमुक्ता विवस्वदाप्ता भवति प्रदीप्ता। सा धूमिता यां सविता प्रयायात् शेषा दिगन्ताः किल पञ्च शान्ताः ॥' इति। अस्यार्थः—सूर्येण विमुक्ता दग्धा; सूर्याधिष्ठिता ज्वलिता। सूर्येण गम्या धूमिता इति। इतराः पञ्च शान्ता इति च ॥

यामभेदेन दग्धादिव्यवस्थामाह—'दग्धा दिगैशी ज्वलिता दिगैन्द्री धूमान्विता चानलवत्प्रभाते। प्रत्येकमेवं प्रहराष्टकेण भुङ्क्ते दिशोऽष्टौ सविता क्रमेण ॥' तत्र दिनस्याष्टौ प्रहराः। तत्र प्रथमे प्रहरे ऐन्द्र्यां सूर्यः; सा ज्वलिता। ईशान्या दिक् सूर्येण विमुक्ता, सा दग्धा। यत्र गमिष्यत्याग्नेय्यां सा धूमिता। इतराः पञ्च शान्ता इति प्रथमे यामे ॥

द्वितीये तु आग्नेय्यां सूर्यः, सा ज्वलिता। तस्य पृष्ठतः ऐन्द्री दग्धा; पुरस्ताद्याम्या धूमिता। एवंप्रकारेण तृतीयादियामेषु क्रमेण सूर्यो याम्यादिदिशमधितिष्ठति तत्तद्यामे सा सा ज्वलिता। सूर्यमुक्ता दग्धा। सूर्यगम्या धूमिता ॥

दग्धादिदिक्षु फलतारतम्यमप्याह—'दग्धेषु दग्धं ज्वलितं ज्वलत्सु फलं ज्वलिष्यत्यथ धूमितेषु। शेषासु शान्तासु सदा नराणां सिद्ध्यन्ति कार्याणि सुखेन सम्यक् ॥' तत्रापि दग्धदिगभिमुखतया गोमायुवाशनकार्यमतीतं भवति। ज्वलिते कार्यहानिर्वर्तमाना भवति। धूमिते विनाशमेष्यतीति विवेकः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शुभकीर्तनं ज्योतिर्निबन्धे — 'जाहकाहिशशसूकरगोधाकीर्तनं शुभमुदाहृतमाद्यैः। नो रुतं न च विलोकनमेषामन्यथा गदितमृक्षकपीनाम्॥' जाहको=वनमहिषः। तदादीनां कीर्तनं शुभकरम्। तस्य विलोकनं तद्रुतश्रवणं चाशुभकरम्। ऋक्षकपीनां तु कीर्तनमशुभं; शब्दविलोकने शुभकरे। हंसस्य दर्शनकीर्तनशब्दश्रवणानि सर्वाण्यपि शुभकराणि। 'हंसस्य दर्शनं शब्दः तन्नामश्रवणं शुभम्।' शब्दस्तत्कर्तृकध्वनिः॥

शुभगमनविषये ज्योतिर्निबन्धे — 'घूकिका भवनगोधिका द्वया पिङ्गला पिकवधूः करोटिका। सूकरी पुरुषसंज्ञिका शिवा वामतः खलु यियासतां शुभाः॥' पुरुषसिञ्जिकाश्च। घूकिका घूकवधूः। भवनगोधिका पल्ली। पिङ्गला महाराष्ट्राणां तेनैव नाम्ना प्रसिद्धा। 'वामे राजशुको याने प्रपठन् सर्वसिद्धिदः। अजराश्वश्वशकुने गोवच्च महिषी स्मृता॥ चुच्छुन्दरी मूषिकोऽष्टनखिनो वामतः शुभाः। पृष्ठे वामे शुभा पल्ली याने नेष्टाग्रयाम्यगा॥' इति॥ राजशुकः=शुकश्रेष्ठः। वामपार्श्वे दृष्टः, स्थितो, गतो वा सर्वसिद्धिदः। चुच्छुन्दरी=गन्धमूषी। 'प्रदक्षिणगतैः काकैर्मृगराजैर्गमः शुभः।' इति च। गमो=यात्रा। 'प्रस्थानं गमनं गम' इति निघण्टुः। 'मृगा विहङ्गाश्च गताः प्रदक्षिणं मही श्रिताः काङ्क्षितकार्यसिद्धये। मृगा व्रजन्तः परमोजसंख्यया नृपावलोके शकुनः प्रयाणवत्॥' ओजसंख्या=विषमसंख्या। 'मार्गं बध्नाति सूत्रेण ऊर्णनाभो न शोभनः। श्वा वामोऽभिमुखश्शस्तो शृङ्गो वामगतः शुभः॥'

अङ्गस्पन्दनं —

'मूर्ध्नि स्फुरत्याशु पृथिव्यवाप्तिः स्थानप्रवृद्धिश्च ललाटदेशे। भ्रूघ्राणमध्ये प्रियसङ्गमः स्यात् नासाक्षिमध्ये च सहायलाभः॥ दृगन्तमध्ये स्फुरितेऽर्थसंपत् सोत्कण्ठता स्यात्स्फुरिते दृगादौ। जयो दृशोऽथ स्फुरणे रणे स्यात् प्रियश्रुतिः प्रस्फुरिते च कर्णे॥ ...प्रवृत्तिः स्फुरिते च गण्डे

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

घ्राणे तु सौमुख्यमुदौ भवेताम् । भोज्येष्टसङ्गावधरोष्ठयोश्च स्कन्धे गळे भोगविवृद्धिलाभौ ॥ स्पन्दो भुजस्येष्टसमागमाय स्पन्दः करस्य द्रविणाप्तिहेतुः । स्पन्दश्च पृष्ठस्य पराजयाय स्पन्दो जयायोरसि मानवानाम् ॥ पार्श्वप्रकम्पे भवति प्रमोदः स्तनप्रकम्पे विषयस्य लाभ । कटिप्रकम्पेऽपि वलप्रमोदौ नाभिप्रकम्पेऽपि च देशनाशः ॥ स्फिक्पायुकम्पो धनवाहनाप्तिः वराङ्गकम्पे वरयोषिदाप्तिः । मुष्कप्रकम्पे तनयस्य जन्म वस्तिप्रकम्पे युवतीप्रवृद्धिः ॥ दोष्णः प्रकम्पे पुनरूरुपृष्ठे उर पुरस्यार्थसहायलाभः । स्याज्जानुकम्पेऽरिवरेण सन्धिः जङ्घाप्रकम्पेऽपि च लाभनाशः । स्थानाप्तिरूर्ध्वं चरणस्य कम्पे यात्रा सलाभांघ्रितलप्रकम्पे ॥ पुंसां यदा दक्षिणदेहभागे स्त्रीणां तु वामावयवेषु जातः ॥ स्पन्दः फलानि प्रदिशत्यवश्यं निहन्ति चोक्ताङ्गविपर्ययेण ॥ '

स्खलनस्य ज्योतिर्निबन्धे — 'द्वारघातो दशासङ्गः वलनं पाणिपादयोः ।' इति । उत्पलपरिमलेऽपि — 'दैवतयात्राशकटाक्षचक्रयुगकेतुभङ्गपतनानि । समपर्यासनसादनसङ्गाश्च देशनृपाशुभदाः ॥' दैवतं= शिवविष्ण्वादि । यात्रासंबन्धिनः शकटस्य तदीयाक्षस्य चक्रस्य युगस्य च केतोर्वा भङ्गपतनानि । शकटस्य वाहनस्य वा समपर्यासनं समभूमौ विपरिवर्तनं, सादनं भुवि मग्नता, अवयवविशरणं वा, सङ्गो लग्नता अचलत्वमिति यावत् । एतत्सर्वं देशस्य राज्ञो वा अशुभदं इति ॥

बहुषु प्रस्थितेषु जायमानं निमित्तं शुभमशुभं वा तत्तद्बुद्ध्यनुरूपं फलं प्रयच्छति । तथा च ज्योतिर्निबन्धे — 'एकत्र सार्थे व्रजतां बहूनां यो यादृशं पश्यति दैवयोगात् । यानादिकानां शकुनस्स तादृक् फलं नरो विन्दति निर्विकल्पम् ॥' बहुषु गच्छत्सु निमित्ते जाते तद्दर्शनसमनन्तरमेव यस्य बुद्धौ यादृशं फलं दैवयोगात् स्फुरति तादृशमेव तस्य फलं भवति निर्विकल्पं निस्संशयमिति यावत् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दुर्निमित्तानि सर्वाणि नातिलङ्घनीयानि। तथा च ज्योतिर्निबन्धे — 'वरं श्रयेद्दुर्जनकृष्णसर्पं वरं क्षिपेत्सिंहमुखे स्वमङ्गम्। वरं तरेद्वारिनिधिं भुजाभ्यां नोल्लङ्घयेद्दुश्शकुनं कदापि ॥'

एतादृशनिमित्तस्यापि प्रथमप्रयाणे पंचभिः षड्भिर्वा प्राणायामैः दोषपरिहारः। द्वितीयेऽष्टभिः, तृतीयेऽगमनमेवेत्युक्तं ज्योतिर्निबन्धे। मनःप्रसादे न किञ्चिदित्याह — 'निमित्तराशिरेकतो नृणां मनस्तथैकतः। अतो यियासतां बुधैर्मनोविशुद्धिरिष्यते ॥' इति। 'आद्ये विरुद्धे शकुने नियच्छेत् प्राणान्नृपः पञ्च च षट् च यायात्। अष्टौ द्वितीये शकुने तृतीये व्यावृत्य नूनं गृहमभ्युपेयात् ॥' सर्वस्य दुर्निमित्तजातस्यापवादमाह ज्योतिर्निबन्धे — 'अपि प्रहीणस्य समस्तलक्षणैः क्रियाविहीनस्य निकृष्टजन्मनः। प्रदक्षिणीकृत्य शशाङ्कशेखरं प्रयास्यतः कस्य न सिद्धिरिष्यते ॥' इति ॥

इमानि दुर्निमित्तानि भीष्मपर्वणि प्रतिपादितानि — [1] 'ज्योतींषि प्रतिकूलानि दारुणा मृगपक्षिणः। उत्पाता विविधा वीराः दृश्यन्ते क्षत्रनाशनाः ॥ उल्काभिर्हि प्रदीप्ताभिर्वध्यते पृतना तव। वाहनान्यप्रहृष्टानि रुदन्ति विविशां पते ॥ गृध्राश्च पर्युपासन्ते सैन्यानि च समन्ततः। नगरं न यथापूर्वं तथा राजनिदेशनम् ॥ शिवाश्चाशिवनिर्घोषैर्दीप्तास्सेवन्ति वै दिशः। द्विधाभूत इवादित्य उदये प्रत्यदृश्यत ॥ ज्वलन्त्या शिखया भूयो भानुमानुदितो रविः ॥ ववाशिरे च दीप्तायां दिशि गोमायुवायसाः। लिप्समानाः शरीराणि मांसशोणितभोजनाः ॥'

[2] 'श्येना गृध्राश्च काकाश्च कङ्काश्च सहिता बलैः। संपतन्ति नगाग्रेषु

1. 'ज्योतींषि प्रतिकूलानि' इत्यादिकाः 'मांसशोणितभोजनाः' इत्यन्ताः सार्धपञ्चश्लोकाः मुद्रितपुस्तके न दृश्यन्ते।

2. भीष्मपर्वणि द्वितीयेध्याये 17 श्लोकमारभ्य तृतीयेध्याये 45 श्लोकान्तम्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

समवायांश्च कुर्वते ॥ अत्युग्रं च प्रपश्यन्ति युद्धमानन्दिनो द्विजाः । क्रव्यादा भक्षयिष्यन्ति मांसानि गजवाजिनाम् ॥ निर्दयं चाभिवाशन्तो भैरवा भयवेदिनः । कङ्काः प्रयान्ति मध्येन दाक्षिणामभितो दिशम् ॥ उभे पूर्वापरे सन्ध्ये नित्यं पश्यामि भारत ॥ उदयास्तमने सूर्यं कबन्धैः परिवारितम् ॥ श्वेतलोहितपर्यन्ताः कृष्णग्रीवास्सविद्युतः । त्रिवर्णपरिघास्सन्धौ भानुमन्तमवारयन् ॥ ज्वलितार्केन्दुनक्षत्रं निर्विशेषदिनक्षयम् । अहोरात्रं मया दृष्टं तद्भयाय भविष्यति ॥ अलक्ष्मः प्रभया हीनः पौर्णमासीञ्च कार्तिकीम् । चन्द्रेऽभूदग्निवर्णश्च पद्मवर्णे नभस्तले ॥ स्वप्स्यन्ति निहता वीरा भूमिमावृत्य पार्थिवाः । राजानो राजपुत्राश्च शूराः परिघबाहवः । अन्तरिक्षे वराहस्य वृषदंशस्य चोभयोः । प्रणादं युध्यतो रात्रौ रौद्रं नित्यं प्रलक्षये ॥ देवताप्रतिमाश्चैव प्रकम्पंति हसन्ति च । वमन्ति रुधिरं चास्यैः स्विद्यन्ति प्रपतन्ति च ॥ अनाहता दुन्दुभयः प्रणदन्ति विशांपते । अयुक्ताश्च प्रवर्तन्ते क्षत्रियाणां महारथाः ॥ कोकिलाः शतपत्राश्च चाषाभासाः शुकास्तथा । सारसाश्च मयूराश्च वाचो मुञ्चन्ति दारुणाः ॥ गृहीतशस्त्राः क्रोशन्ति वर्मिणो वाजिपृष्ठगाः । अरुणोदये प्रदृश्यन्ते शतशश्शलभव्रजाः ॥ उभे सन्ध्ये प्रकाशेते दिशो दाहमचिन्तिते । पर्जन्यः पांसुवर्षी च मांसवर्षी च भारत ॥ या चैषा विश्रुता राजंस्त्रैलोक्ये साधुसम्मता । अरुन्धती तथाप्येष वसिष्ठः पृष्ठतः कृतः ॥ रोहिणीं पीडयन्नेष स्थितो राजन् शनैश्चरः ॥ व्यावृत्तं लक्ष्म सोमस्य भविष्यति महद्भयम् ॥ अनभ्रे च महाघोरः स्तनितः श्रूयते स्वनः । वाहनानां च रुदतां निपतन्त्यश्रुबिन्दवः ॥ ' इति ॥

**भीष्मपर्वणि** व्यास उवाच— 'खरा गोषु प्रजायन्ते रमन्ते मातृभिस्सुताः । अनार्तवं पुष्पफलं दर्शयन्ति वनद्रुमाः ॥ गर्भिण्यो जातपुत्राश्च जनयन्ति विभीषणान् । क्रव्यादाः पक्षिगश्चापि सहाश्नन्ति परस्परम् ॥ त्रिविषाणाश्चतुर्नेत्राः पञ्चपादा द्विमेहनाः । द्विशीर्षाश्च

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्विपुच्छाश्च दंष्ट्रिणः पशवोऽशिवाः ॥ जायन्ते विवृतास्याश्च व्याहरन्तोऽशिवा गिरः । त्रिपदाः शिखिनस्तार्क्ष्याश्चतुर्दंष्ट्रा विषाणिनः ॥ तथैवान्याश्च दृश्यन्ते स्त्रियो वै ब्रह्मवादिनाम् । वैनतेयान्मयूरांश्च जनयन्ति पुरे तव ॥ गोवत्सं वडवा सूते श्वा सृगालं महीपते । कुक्कुरान् करभांश्चैव शुकांश्चाशुभवादिनः ॥ स्त्रियः काश्चित्प्रजायन्ते चतस्रः पञ्च कन्यकाः । जातमात्राश्च नृत्यन्ति गायन्ति च हसन्ति च ॥ पृथग्जनस्य सर्वस्य क्षुद्रकाः प्रहसन्ति च । नृत्यन्ति परिगायन्ति वेदयन्तो महद्भयम् ॥ प्रतिमाश्चालिखन्त्येते सशस्त्राः कालचोदिताः । अन्योन्यमभिधावन्ति शिशवो दण्डपाणयः ॥ अन्योन्यमवमृद्नन्ति नगराणि युयुत्सवः । पद्मोत्पलानि वृक्षेषु जायन्ते कुमुदानि च ॥ विषवा[ विष्वग्वा ]ताश्च वान्त्युग्रा रजो नाप्युपशाम्यति ॥ अभीक्ष्णं कम्पते भूमिरर्कं राहुरुपैति च ॥ श्वेतो ग्रहस्तथा चित्रां समतिक्रम्य तिष्ठति ॥ अभावं हि विशेषेण कुरूणां तत्र पश्यति ॥ धूमकेतुर्महाघोरः पुष्यं चाक्रम्य तिष्ठति ॥ सेनयोराशिवं घोरं करिष्यति महाग्रहः ॥ मघास्वङ्गारको वक्रं श्रवणे च बृहस्पतिः । भगं नक्षत्रमाक्रम्य सूर्यपुत्रेण पीड्यते ॥ शुक्रः प्रोष्ठपदे पूर्वं समारुह्य विरोचते । उत्तरे तु परिक्रम्य सहितः समुदीक्षते श्वेतो ग्रहः प्रज्वलितः सधूम इव पावकः । ऐन्द्रं तेजस्विनक्षत्रं ज्येष्ठामाक्रम्य तिष्ठति ॥ ध्रुवं प्रज्वलितं घोरं अपसव्यं प्रवर्तते ॥ रोहिणीं पीडयत्येवमुभौ च शशिभास्करौ ॥ चित्रास्वात्यन्तरे चैत्राधिष्ठितः पुरुषो ग्रहः । वक्रानुवक्रं कृत्वा च श्रवणं पावकप्रभः ॥ ब्रह्मराशिं समावृत्य लोहिताङ्गो व्यवस्थितः । सर्वसस्यपरिच्छन्ना पृथिवी सस्यमालिनी ॥ पञ्चशीर्षा यवाश्चापि शतशीर्षाश्च शालयः । प्रधानास्सर्वलोकस्य यास्वायत्तमिदं जगत् ॥ ता गावः प्रस्नुता वत्सैः शोणितं प्रक्षरन्त्युत । निश्चेरुरर्चिषश्चापात् खड्गाश्च ज्वलिता भृशम् ॥ व्यक्तं पश्यन्ति शस्त्राणि संग्रामं समुपस्थितम् । अग्निवर्णा यथा भासः शस्त्राणामुदकस्य च ॥ कवचानां ध्वजानां च भविष्यति महान् क्षयः । पृथिवी

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शोणितावर्ता ध्वजोडुपसमाकुला ॥ कुरूणां वैशसे राजन् पाण्डवैस्सह भारत । दिक्षु प्रज्वलितास्याश्च व्याहरन्ति मृगद्विजाः ॥ अत्याहितं दर्शयन्तो वेदयन्ति महद्भयम् । । एकपक्षाक्षिचरणः शकुनिः खचरो निशि ॥ रौद्रं वदति संरब्धः शोणितं छर्दयन्निव । शस्त्राणि चैव राजेन्द्र प्रज्वलन्तीव संप्रति ॥ सप्तर्षीणामुदाराणां समवच्छाद्य वै प्रभाम् । संवत्सरस्थायिनौ च ग्रहौ प्रज्वलितावुभौ ॥ विशाखायाः समीपस्थौ बृहस्पतिशनैश्चरौ । चन्द्रादित्यावुभौ ग्रस्तावेकाह्ना हि त्रयोदशीं । अपर्वणि ग्रहं यातौ प्रजासंक्षयमिच्छतः । अशोभिता दिशस्सर्वाः पांसुवर्षैस्समन्ततः ॥ उत्पातमेघा रौद्राश्च रात्रौ वर्षन्ति शोणितम् । कृत्तिकां पीडयंस्तीक्ष्णो नक्षत्रं पृथिवीपतेः ॥ अभीक्ष्णं वाता वायन्ते धूमकेतुमवस्थिताः । विषमं जनयन्त्येते आक्रन्दजननं महत् ॥ त्रिषु सर्वेषु सर्वत्र नक्षत्रेषु विशांपते । गृध्रः संपतते शीर्षं जनयन्भयमुत्तमम् ॥ चतुर्दशीं पञ्चदशीं भूतपूर्वां च षोडशीम् । [इमां तु नाभिजानेऽहममावास्यां त्रयोदशीम् ।] चन्द्रसूर्यावुभौ ग्रस्तावेकमासीं त्रयोदशीम् ॥ अपर्वणि ग्रहेणैतौ प्रजाः संक्षपयिष्यतः । [ मांसवर्षं पुनस्तीव्रमासीत् कृष्णचतुर्दशीम् । ] शोणितैर्वक्त्रसंपूर्णा अतृप्तास्तत्र राक्षसाः ॥ प्रतिस्रोतो महानद्यः सरितः शोणितोदकाः । फेनायमानाः कूपाश्च कूर्दन्ति वृषभा इव ॥ पतन्त्युल्काः सनिर्घाताः शक्राशनिसमप्रभाः । अद्य चैव निशां व्युष्टामनयं समवाप्स्यथ ॥ विनिस्सृत्य महोल्काभिस्तिमिरं सर्वतो दिशम् । अन्योन्यमुपतिष्ठद्भिस्तत्र चोक्तं महर्षिभिः ॥ भूमिपालसहस्राणां भूमिः पास्यति शोणितम् । कैलासमन्दराभ्यां तु तथा हिमवता विभो ॥ सहस्रशो महाशब्दः शिखराणि पतन्ति च । महाभूता भूमिकम्पे चत्वारः सागराः पृथक् ॥ वेलामुद्वर्तयन्तीव क्षोभयंतो वसुन्धरां । वृक्षानुन्मथ्य वान्त्युग्राः [वाताः शर्करकर्षिणः । आभग्नाः सुमहावातैः अशनीभिः समाहताः । वृक्षाः पतन्ति चैत्याश्च] ग्रामेषु नगरेषु च ॥ नीललोहितपीतश्च भवत्यग्निर्हुतो द्विजैः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वामार्चिर्दुष्टगन्धश्च मुञ्चन् वै दारुणं स्वनम् ॥ स्पर्शा गन्धा रसाश्चैव विपरीता महीपते । धूमं ध्वजाः प्रमुञ्चन्ति कम्पमाना मुहुर्मुहुः ॥ मुञ्चन्त्यङ्गारवर्षश्च भेर्यश्च पटहास्तथा । शिखराणां समृद्धानामुपरिष्टात्समन्ततः ॥ वायसाश्च रुवन्त्युग्रं वामं मण्डलमाश्रिताः । पकापकेति सुभृशं वावाश्यन्ते वयांसि च ॥ निलीयन्ते ध्वजाग्रेषु क्षयाय पृथिवीक्षिताम् । ध्यायन्तः प्रकिरन्तश्च व्याला वेपथुसंयुताः ॥ दीनास्तुरङ्गमास्सर्वे वारणास्सलिलाश्रयाः ।' इति ।

एवंभूतान् सोपद्रवसूचकानकालसमुत्थितान् महोत्पातानप्यविगणय्य निजभुजबलसमार्जितजयप्रशस्तिमेव प्रथयन्तमखिलजनतर्जनं निशाचरमवलोक्य तदनुयायिनी वाहिनी,

प्रहर्षमतुलं लेभे मृत्युपाशावपाशिता ॥ २६ ॥

तदवलोकनाय देवगन्धर्वचारणादयः समेत्य समवलोक्य च वाहिनीं सञ्जातकौतुकाः,

स्वस्ति गोब्राह्मणेभ्यस्तु लोकानां येऽभिसंमताः ।
जयतां राघवस्संख्ये पौलस्त्यान्रजनीचरान् ॥ २८ ॥

इति ब्रुवाणाः समरसन्दर्शनसमुत्सुका बभूवुः । अनेन दुष्टनिग्रहाय प्रवृत्तस्य धार्मिकस्य सर्वेऽपि जयं प्रार्थयन्त इति सूचितम् ॥

तथा च कर्णपर्वणि — [1] 'अर्जुनो जयतां कर्ण इति शक्रोऽभ्यभाषत।' इति । तत्रैव ब्रह्ममहेश्वरावपि — [2] 'महात्मा फल्गुनश्चापि सत्यधर्मरतस्सदा । विजयस्तस्य नियतं जायते नात्र संशयः ॥' इति ॥

राजधर्मेऽपि प्रतिपादितानि — [3] 'जैत्राया यानि रूपाणि

---

1. ८७ अध्याये ५८ श्लोकस्य पूर्वार्धं ।
2. ८७ अध्याये ७२ श्लोकः ।
3. १०२ अध्याये ३५-३६ श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भवन्ति भरतर्षभ । पृतनायाः प्रशस्तानि तानि वक्ष्यामि सर्वशः ॥ उदीर्णमनसो योधा वाहनानि च भारत । यस्यां भवन्ति सेनायां ध्रुवस्तस्याः परो जयः ॥अन्वे तान्वायवो वान्ति तथैवेन्द्रधनूंषि च । अनुप्लवन्ति मेघाश्च तथादित्यस्य रश्मयः ॥ गोमायवश्चानुकूला बलगृध्राश्च सर्वशः । अन्वयेयुर्यदा सेनां तदा सिद्धिरनुत्तमा ॥ प्रसन्नभाः पावक ऊर्ध्वरश्मिः प्रदक्षिणावर्तशिखो विधूमः । पुण्या गन्धाश्चाहुतीनां प्रवान्ति जयस्यैतद्भाविनो रूपमाहुः ॥ गंभीरशब्दाश्च महास्वनाश्च शङ्खाश्च भेर्यश्च नदन्ति यत्र । युयुत्सवश्चाप्रतीपा भवन्ति जयस्यैतद्भाविनो रूपमाहुः ॥ इष्टा मृगाः पृष्ठतो वामतश्च संप्रस्थितानां च गमिष्यतां च । जिघांसतां दक्षिणाः सिद्धिमाहुर्ये त्वग्रतस्ते विनिषेधयन्ति ॥ माङ्गल्यशब्दान् शकुना वदन्ति हंसाः क्रौञ्चाः शतपत्राश्च भासाः । हृष्टा योधाः प्रस्थिताः खङ्गवन्तो जयस्यैतद्भाविनो रूपमाहुः ॥ शस्त्रैर्यन्त्रैः कवचैः केतुभिश्च स्व[सु]भानुभिर्मुखवर्णैश्च यूनाम् । भ्राजिष्मती दुष्प्रतिवीक्षणीया येषां चमूस्तेऽभिभवन्ति शत्रून् ॥ शुश्रूषवश्चानभिमानिनश्च परस्परं सौहृदमास्थिताश्च । येषां योधाः सौहृदमन्वतिष्ठन् जयस्यैतद्भाविनो रूपमाहुः ॥ शब्दाः स्पर्शास्तथा गन्धा विचरन्ति मनःप्रियाः । धैर्यं च विशते योधान् विजयस्य मुखं हि तत् ॥' इति । तत्रैव स्थलान्तरे—[1]' अथ शत्र[त्रु]प्रतीघातं आपदर्थं परायणम् । सप्तर्षीन् पृष्ठतः कृत्वा युद्ध्येरन्नचला इव ॥ [अनेन विधिना शत्रून् जिगीषेतापि दुर्जयान् ॥] यतो वायुर्यतस्सूर्यः यतश्शुक्रस्ततो जयः । पूर्वं पूर्वं ज्याय एषां सन्निपाते युधिष्ठिर ॥' इति ।

**अनागतविधानं तु कर्तव्यं जयमिच्छता ।**
**आपदं शङ्कमानेन पुरुषेण विपश्चिता ॥ ११ ॥**

अनेन आपच्छङ्कायां अनागतविधाने श्रेयो भवत्येव । अनागत-

1. १०१ अध्याये १८ श्लोकस्य उत्तरार्धं १९, २० श्लोकौ च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधानाभावे श्रेयःप्राप्तौ सन्देहो व्यतिरेको वा भवतीति सूचितम् ॥ तथा चापद्धर्मे युधिष्ठिरं प्रति भीष्मः—[1] 'अनागतविधाता च प्रत्युत्पन्नमतिस्तथा। द्वाविमौ सुखमेधेते दीर्घसूत्रो विनश्यति ॥ अत्रैव चेदमव्यग्रः शृणुष्वाख्यानमुत्तमम्। दीर्घसूत्रमुपाश्रित्य कार्याकार्यविनिश्चये ॥' इति।

प्रभूतमत्स्ये नातिगाधे जलह्रदे दीर्घकालज्ञः प्रत्युत्पन्नप्रतिभो दीर्घसूत्रश्चेति त्रयो मत्स्याः परस्परसुहृदो बभूवुः। अथ कदाचिद्धीवरैः मत्स्यग्रहणबुद्ध्या नानामुखैर्निस्सारिते जले प्रक्षीयमाणजलाशयमालोक्य दीर्घदर्शी सुहृदावितरौ प्रत्याह — तदधुना सलिलौकसामस्माकमियमापत्समुपस्थिता। यावदेव न निःशेषं जलं निर्गच्छति ततः प्रागेवानेनैव स्रोतसा वयमन्यत्र गच्छामः। [2] 'अनागतमनर्थं हि सुनयैर्यः प्रबाधते। न संशयमवाप्नोति रोचतां भो व्रजामहे ॥' इति ॥

ततस्त्वरा न कार्येति प्रतिषेधन्तं दीर्घसूत्रिणं, तत्कालोचितं किञ्चित् बुद्धिवैभवेन करिष्याम इति वदन्तं प्रत्युत्पन्नप्रतिभं च परित्यज्य, नातः परमस्माकमवस्थानमुचितमिति तेनैव स्रोतसा निर्गच्छन् दीर्घदर्शी झटिति गंभीरं सलिलाशयं जगाम। प्रत्युत्पन्नमतिस्तु मत्स्योपजीविभिर्जलाशये आलोडिते निखिलझषगणैः सहावाप्य बन्धनं रज्जुमालारूपेण ग्रथनसमसमयमेव स्वयमपि ग्रथितमत्स्यमध्यं प्रविश्य ग्रथनरज्जुं स्वयमेव मुखेन गृह्णन् प्रक्षालनाय जलाशयान्तरमानीते मत्स्यदामनि मन्दं मन्दं मुखगृहीतां रज्जुं विसृज्य अगाधं जलाशयं प्रविवेश ॥

[3] 'दीर्घसूत्रस्तु मन्दात्मा हीनबुद्धिरचेतनः। मरणं प्राप्तवान् मूर्खो

1. १३७ अध्याये आद्यौ श्लोकौ।
2. १३७ अध्याये ८ श्लोकः।
3. १३७ अध्याये १७—२० श्लोकाः। 'अनागतविधानं च + यथा ह्यसौ' इति श्लोकस्तु मुद्रितपुस्तके न दृश्यते ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथैवोपहतेन्द्रियः ॥ एवं प्राप्ततमं कालं यो मोहान्नावबुद्ध्यते । स विनश्यति वै क्षिप्रं दीर्घसूत्रो यथा झषः ॥ आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान् । स संशयमवाप्नोति यथा संप्रतिपत्तिमान् ॥ अनागतविधानं च यो नरः कुरुते क्षणात् ॥ श्रेयः प्राप्नोति स व्यक्तं दीर्घदर्शी यथा ह्यसौ ॥ अनागतविधाता च प्रत्युत्पन्नमतिस्तथा । द्वाविमौ सुखमेधेते दीर्घसूत्रो विनश्यति ॥' इति ॥

तस्माद्गृहीत्वा वैदेहीं शरपाणिर्धनुर्धरः ।
गुहामाश्रय सौमित्रे शीघ्रेण [घ्रं त्वं] वचनान्मम ॥ १२ ॥
[गुहामाश्रय शैलस्य दुर्गां पादपसंकुलाम् ॥]

प्रतिकूलितुमिच्छामि न हि वाक्यमिदं त्वया ।
शापितो मम पादाभ्यां गम्यतां वत्स मा चिरम् ॥ १३ ॥

इत्यभिहितो लक्ष्मणः

सशरं धनुरादाय यथाज्ञप्तमथाकरोत् ॥ १५ ॥

ततो रामभद्रः प्रत्यासन्नमरातिसैन्यमवलोक्य, समाबध्य विविधायुधाभेद्यं कवचं, आदाय चामीकरविभूषितं चापं, सर्वदिक्षु चक्षुर्विक्षिपन्, सकलनिशाचरश्रवणबाधिर्यसंपादननिपुणैः ज्यास्वनैः दश दिशः पूरयामास ॥

तदालोकनोत्सुकाः पुण्यकर्माणः सिद्धचारणाः समेत्य गगनप्रदेशे परस्परमेवमवोचन् ॥

स्वस्ति गोब्राह्मणानां च लोकानां ये हि सङ्गताः ।
जयतां राघवो युद्धे पौलस्त्यान् रजनीचरान् ॥ २१ ॥

चक्रहस्तो यथा युद्धे सर्वानसुरपुङ्गवान् ।
एवमुक्त्वा पुनः प्रोचुरालोक्य च परस्परम् ॥ २२ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चतुर्दशसहस्राणि रक्षसां क्रूरकर्मणाम् ।
एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ॥ २३ ॥

इति राजर्षयस्सिद्धास्सगणाश्च द्विजर्षभाः ।
जातकौतूहलास्तस्थुः विमानस्थाश्च देवताः ॥ २४ ॥

तदनु यातुधानानीकगतानामन्योन्यसभिगर्जतां अनुक्षणं जृंभमाणानाञ्च वीराणां सिंहनादेन अविरतसुरवर्गकोणाभिहतदुन्दुभिशब्देन च वित्रासिता वनमृगाः सत्वरमभिदुद्रुवुः ॥

अथ युद्धसमुद्यतयातुधाननिधनाय सत्वरमुदग्रकोपसमाविष्टस्य प्रचण्डानिलदोधूयमानज्वालाकलापयुगान्तानलकल्पस्य सकलजनदुष्प्रेक्ष्यस्य,

तस्य क्रुद्धस्य रूपं तु रामस्य ददृशे तदा ।
दक्षस्येव क्रतुं हन्तुं उद्यतस्य पिनाकिनः ॥ २५ ॥

प्रविष्टं तेजसा रामं संग्रामशिरसि स्थितम् ।
दृष्ट्वा सर्वाणि भूतानि भयार्तानि प्रदुद्रुवुः ॥ २६ ॥

अनेन महाबलानां पुरुषाणां युद्धाभिमुखानां उत्साहातिशयेन दुर्निरीक्ष्यं रूपं भवतीति सूचितम् । तथा च कर्णपर्वणि अर्जुन एवंरूपो निरूपितः — [1]'संच्छाद्यमानः समरे परैः परबलान्तकृत् । दर्शयन्रौद्र-मात्मानं पाशहस्त इवान्तकः ॥' इति ॥

सौप्तिकेऽपि— [1]'तस्य लोहितरक्ताङ्गस्य दीप्तरक्तस्य युद्ध्यतः । अमानुष इवाकारो बभौ परमभीषणः ॥ ये त्वजाग्रत कौरव्याः तेऽपि शब्देन मोहिताः ।

1. ५६ अध्याये १०० श्लोकस्य उत्तरार्धं १०१ श्लोकस्य पूर्वार्धंच ।

2. ८ अध्याये ४४—४६ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निरीक्ष्यमाणा ह्यन्योन्यं द्रौणिं दृष्ट्वा प्रविव्यथुः ॥ तद्रूपं तस्य ते दृष्ट्वा क्षत्रियाः शत्रुकर्शिताः । राक्षसं मन्यमानास्तं नयनानि न्यमीलयन् ॥' इति ॥

इति चतुर्विंशः सर्गः ॥

## अथ पञ्चविंशः सर्गः ॥

पञ्चविंशे — अथ सानुचरेण खरतरशासनेन खरेण प्रासपट्टसपरिघादिनानाविधायुधैर्विभिन्नगात्रं रामभद्रमवलोक्य,

विषेदुर्देवगन्धर्वाः सिद्धाश्च परमर्षयः ।
एकं सहस्रैर्बहुभिस्तदा दृष्ट्वा समावृतम् ॥ १५ ॥

ततो मण्डलीकृतकार्मुकेण रामेण समुत्सृष्टाः सायकाः, साङ्गदान्बाहून्, सहाभरणान् हस्तान्, सशिरस्त्राणानि शिरांसि, कनकमयानि वर्माणि, अग्र्याणि च चापानि, सकाञ्चनसन्नाहान् वाजिनः, सगजारोहान् गजवरान्, अन्यानपि पदातिमुख्यान्,

चिच्छिदुर्बिभिदुश्चापि रामचाप[ बाणा ]गुणच्युताः ।

एवमभिहन्यमानान् निशाचरान् अशरणानवलोक्य दूषणाभिधानो निशाचरः क्रुद्धान्तक इव तमभ्यधावत् । ततस्तदाश्रयनिर्भयैः परिवृत्य सालतालशिलाशूलादिविविधायुधैः अनवकाशमाकाशं कुर्वाणैः सैनिकैः समावृता दश दिशोऽवलोक्य रामः

स कृत्वा भैरवं नादमस्त्रं परमभास्वरम् ।
संयोजयत गान्धर्वं राक्षसेषु महाबलः ॥ ३६ ॥

तदनु तदस्त्राग्निष्क्रान्तैर्विशिखैः युगपदभिहतानां निशाचराणां छिन्नभिन्नविदारितैस्सोष्णीषैः उत्तमाङ्गैः साङ्गदैः बाहुभिः सविभूषणैः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अन्यैरप्यवयवैः संप्रकीर्णं प्रकीर्णशक्तिशूलतोमरं संचूर्णितरथचक्रचामरमति-भयंकरं अवनितलं बभूव ॥

इति पञ्चविंशः सर्गः ॥

## अथ षड्विंशः सर्गः ॥

षड्विंशे— तदवलोक्य रोषाकुलमानसेन दूषणेन प्रेषितैः पञ्चसाहस्रैः निशाचरैः समन्तादवकीर्यमाणमनेकशरशस्त्रवृक्षशिलानिकरं वज्रसमानसारैः शरैः परिहृत्य रामभद्रः संमुखमभिपततो दूषणस्य संछिद्य चापं अभिहत्य हयान् निपात्य सारथिं तदपि रक्षो वक्षःस्थले जघान ॥

अथ प्रतप्तकाञ्चनपट्टवेष्टितं परवसोक्षितं परिघं परिगृह्य संमुखमेवाभि-द्रवतो दूषणस्य

द्वाभ्यां शराभ्यां चिच्छेद सहस्ताभरणौ भुजौ ॥ १२ ॥
स कराभ्यां विकीर्णाभ्यां पपाताशु विदूषणः ।
विषाणाभ्यां विकीर्णाभ्यां मनस्वी च (व) महागजः ॥

अत्रान्तरे संहत्याभिमुखमभिपततां सेनाग्रयायिनां प्रबलतरमायुध-संपातमवलोक्य दाशरथिः,

महाकपालस्य शिरः चिच्छेद परमेषुभिः ।
असंख्येयैस्तु बाणौघैः प्रममाथ प्रमाथिनम् ॥ १९ ॥
स्थूलाक्षस्याक्षिणी तीक्ष्णैः पूरयामास सायकैः ॥ २० ॥

तदनु नासीरसमागताननतिबलपराक्रमान् निशाचरान् तदनुगत-पदातिपंचसहस्रीमपि पञ्चसाहस्रैर्विशिखैः विगलितप्राणान् कुर्वाणं दाश-रथिमवलोक्य तत्कर्मविस्मयस्तिमितमानसः खरः सुमहता रथेन तमाससाद ॥

इति षड्विंशः सर्गः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ सप्तविंशः सर्गः ॥

सप्तविंशे—खरन्तु रामाभिमुखं प्रयान्तं वाहिनीपतिः।
राक्षसस्त्रिशिरा नाम सन्निवर्त्येदमब्रवीत् ॥ १ ॥

मां नियोजय विक्रान्तं सन्निवर्तस्व साहसात् ॥ २ ॥

अनेन भृत्यवर्गैः युद्धाय प्रवृत्तं प्रभुं निवर्त्य स्वेन युद्धं कर्तव्यमिति सूचितम्। तथा च द्रोणपर्वणि रात्रियुद्धेऽश्वत्थामानं प्रति कृपः—[1]'अयुक्तमिव पश्यामि तिष्ठत्स्वस्मासु मानद। स्वयं युद्धाय यद्राजा रणे यात्यसहायवान् ॥' इति। तथा दुर्योधनं प्रत्यश्वत्थामा—[2]'मयि जीवति गान्धारे न युद्धं कर्तुमर्हसि। मामनादृत्य कौरव्य तव नित्यं हितैषिणम् ॥ न हि ते संभ्रमः कार्यः पार्थस्य विजयं प्रति। अहमावारयिष्यामि पार्थं तिष्ठ सुयोधन ॥' इति।

एवं सन्निवर्त्य युद्धाभिमुखेन त्रिशिरसा तीक्ष्णाग्रैः शरैः ताडितोपि रामभद्रः तज्जनितखेदमप्यविगणय्य त्रिभिः शरैः तं विशिरसमकरोत् ॥

इति सप्तविंशः सर्गः ॥

## अथ अष्टाविंशः सर्गः ॥

अष्टाविंशे—स दृष्ट्वा राक्षसं सैन्यमविषह्यं महाबलः।
हतमेकेन रामेण त्रिशिरोदूषणावपि ॥ २ ॥

तद्बलं हतभूयिष्ठं विमनाः प्रेक्ष्य राक्षसः।
आससाद रणे रामं नमुचिर्वासवं यथा ॥ ३ ॥

1. १५९ अध्याये ८१ श्लोकः।
2. १५९ अध्याये ८४, ८५ श्लोकौ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ विविधशस्त्रास्त्रशिक्षालाघवं प्रकटीकुर्वता निशाचरेण विमुक्तै-र्विशिखैर्निरवकाशमाकाशमवलोक्य रामचन्द्रोऽपि कल्पानलकल्पैः विशिखैः निविडतरं गगनतलं चकार। एवमन्योन्यवधसंरम्भात् सरभसं युध्यमानयो-रुभयोः खरपराक्रमः खरः, शरशतैः दाशरथिमभिहत्य निपात्य च मुष्टिदेशात् ससायकं चापं चामीकरभूषितं कवचमपि धरातले निपातयन्, सहस्र-संख्यान् विशिखान् रामोरसि पातयामास। तत्कर्मविस्मयस्तिमितमानसो राघवो निशाचरवधे कृतत्वरो महर्षिदत्तं वैष्णवं धनुरादाय प्रमुक्तैर्विशिखैः

बिभेद रामः संक्रुद्धः खरस्य समरे ध्वजम्।
स दर्शनीयो बहुधा विकीर्णः काञ्चनो ध्वजः।
जगाम धरणीं सूर्यः देवतानामिवाज्ञया ॥ २३ ॥

भूमेर्गमनमस्तमयपर्यन्तं बोध्यम् ॥

शिरस्येकेन बाणेन द्वाभ्यां बाह्वोरथार्पयत्।
त्रिभिश्चन्द्रार्धवक्त्रैश्च वक्षस्यपि जघान च ॥ २७ ॥

ततोऽस्य युगमेकेन चतुर्भिश्चतुरो हयान्।
षष्ठेन तु शिरः संख्ये खरस्य रथसारथेः ॥ २९ ॥

प्रभग्नधन्वा विरथो हताश्वो हतसारथिः।
गदापाणिरवप्लुत्य तस्थौ भूमौ खरस्तदा ॥ ३२ ॥

तत्कर्म रामस्य महारथस्य
समेत्य देवाश्च महर्षयश्च।
अपूजयन् प्राञ्जलयः प्रहृष्टाः
तदा विमानाग्रगताः समेताः ॥ ३३ ॥

इति अष्टाविंशः सर्गः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ एकोनत्रिंशः सर्गः ॥

एकोनत्रिंशे— खरं तु विरथं रामः गदापाणिमवस्थितम् ।
मृदुपूर्वं महातेजाः परुषं वाक्यमब्रवीत् ॥ १ ॥

गजाश्वरथसंबाधे बले महति तिष्ठता ।
कृतं सुदारुणं कर्म सर्वलोके जुगुप्सितम् ॥ २ ॥

उद्वेजनीयो भूतानां नृशंसः पापकर्मकृत् ।
त्रयाणामपि लोकानामीश्वरोऽपि न तिष्ठति ॥ ३ ॥

अनेन लोकोद्वेगकरस्य क्रूरस्य पापकारिणः क्षिप्रं नाशो भवतीति सूचितम् । तथा च राजधर्मे—[1]'अधर्मशीलो यो राजा बलादेव प्रवर्तते । सहैव परिवारेण क्षिप्रमेवावसीदति ॥' इति । उद्योगपर्वण्यपि-[2]'यस्मात् त्रस्यन्ति भूतानि मृगव्याधान्मृगा इव । सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥' इति ॥

कर्म लोकविरुद्धं तु कुर्वाणं क्षणदाचर ।
तीक्ष्णं सर्वजनो हन्ति सर्पं दुष्टमिवागतम् ॥ ४ ॥

अनेन लोकविरुद्धं कर्म न कर्तव्यमिति सूचितम् । तथा च विष्णुपुराणे—[3]'परित्यजेदर्थकामौ धर्मपीडाकरौ नृप । धर्ममप्यसुखोदर्कं लोकविक्रुष्टमेव च ॥' इति । मनुरपि—[4]'अस्वर्ग्यं लोकविद्विष्टं धर्म-

---

1. ९२ अध्याये ८, ९ श्लोकयोः पूर्वोत्तरार्धे ।
2. ३४ अध्याये २६ श्लोकः ।
3. तृतीयेंशे एकादशाध्याये ७ श्लोकः ।
4. अष्टमेऽध्याये १२७ श्लोके उत्तरार्धं तु 'अस्वर्ग्यं च परत्रापि तस्मात्तत्परिवर्जयेत्' इत्येव दृश्यते । न तु यथात्र दर्शितं ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मप्याचरेन्न तु ।' इति । उद्योगपर्वण्यपि — [1]'वध्यः सर्प इवानार्यः सर्वलोकस्य दुर्मतिः ।' इति ॥

लोभात् पापानि कुर्वाणः कामाद्वा यो न बुद्ध्यते ।
भ्रष्टः पश्यति तस्यान्तं ब्राह्मणी करकादिव ॥ ५ ॥

अनेन कामलोभौ पापाधायकौ वर्जनीयाविति सूचितम् । तथा च उद्योगे विदुरनीतौ — [2]'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥' इति ॥

न चिरं पापकर्माणः क्रूरा लोकजुगुप्सिताः ।
ऐश्वर्यं प्राप्य तिष्ठन्ति छिन्नमूला इव द्रुमाः ॥ ७ ॥

अनेन लोकजुगुप्सितानां पापिष्ठानां प्राप्तैश्वर्याणामपि अचिरेण ऐश्वर्यनाशो भवतीति सूचितम् । तथा च भारते राजधर्मे — [3]'पापेन कर्मणा वित्तं लब्ध्वा पापः प्रहृष्यति । स वर्धमानः स्तैन्येन पापः पापेषु सज्जते ॥ न धर्मोऽस्तीति मन्वानः शुचीनवहसन्निव । अश्रद्दधानश्च भवेत् विनाशमुपगच्छति ॥ महादृतिरिव ध्मातः सुकृतेनैव वर्धते । ततः समूलो ह्रियते नदीकूलादिव द्रुमः ॥' इति । मनुरपि — [4]'अधर्मेणैधते तावत् ततो भद्राणि पश्यति । ततः सपत्नान् जयति सहमूलं विनश्यति ॥' इति ।

अवश्यं लभते कर्ता फलं पापस्य कर्मणः ।
घोरं पर्यागते काले द्रुमः पुष्पमिवार्तवम् ॥ ८ ॥

---

1 ७२ अध्याये २७ श्लोकस्य पूर्वार्धं ।
2. ३३ अध्याये ६६ श्लोकः ।
3. ९५ अध्याये १८–२१ श्लोकाः ।
4. चतुर्थाध्याये १७४ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन पापं कर्म स्वल्पमपि वृथा न गच्छति। किन्तु परिपाके दुःखं प्रयच्छत्येवेति सूचितम्। तथा च **मनुः**—[1] 'नाधर्मश्चरितो लोके सद्यः फलति गौरिव। शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति॥ यदि नात्मनि पुत्रेषु न चेत्पौत्रेषु नप्तृषु। न त्वेव तु कृतोऽधर्मः कर्तुर्भवति निष्फलः॥' इति।

**न चिरात् प्राप्यते लोके पापानां कर्मणां फलम्।**
**सविषाणामिवान्नानां भुक्तानां क्षणदाचर॥ ९॥**

अनेन उत्कृष्टपापस्य अचिरादेव फलं भवतीति सूचितम्। तदुक्तमभियुक्तैः— 'त्रिभिर्वर्षैस्त्रिभिर्मासैः त्रिभिः पक्षैस्त्रिभिर्दिनैः। अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते॥' इति॥

**पापमाचरतां घोरं लोकस्याप्रियमिच्छताम्।**
**अहमासादितो राजा प्राणान् हन्तुं निशाचर॥ १०॥**

अनेन लोकोपद्रवकरः राज्ञा अवश्यं शिक्षणीय इति सूचितम्। तथा च **मनुः**—[2] 'अधार्मिकांस्त्रिभिर्न्यायैर्निगृह्णीयात् प्रयत्नतः। निरोधनेन दण्डेन (बन्धेन) विविधेन वधेन च॥' इति॥

विदुरनीतावपि—[3] 'गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम्। अन्तः प्रच्छन्नपापानां शास्ता वैवस्वतो यमः॥' इति। **प्राचीना अपि**— 'अज्ञो वा यदि वा विपर्ययगतज्ञानोऽथ सन्देहभृत् दृष्टादृष्टविरोधि कर्म कुरुते यस्तस्य गोप्ता गुरुः। निस्सन्देहविपर्यये सति पुनर्ज्ञाने विरुद्धक्रियं राजा चेत्पुरुषं न शास्ति तदयं प्राप्तः प्रजाविप्लवः॥' इति॥

---

1. चतुर्थाध्याये १७२, १७३ श्लोकौ।
2. अष्टमाध्याये ३१० श्लोकः।
3. ३४ अध्याये ७१ श्लोकः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवमुक्तस्तु रामेण क्रुद्धस्संरक्तलोचनः ।
प्रत्युवाच ततो रामं प्रहसन्क्रोधमूर्छितः ॥ १५ ॥

विक्रान्ता बलवन्तो वा ये भवन्ति नरर्षभाः ।
कथयन्ति न ते किञ्चित् तेजसा स्वेन गर्विताः ॥ १७ ॥

अनेन गर्वेण आत्मस्तुतिर्न कर्तव्या । तथा चापस्तंबः—[1] 'आत्मप्रशंसां परगर्हामिति च वर्जयेत् ' इति । द्रोणपर्वाणि रात्रियुद्धे कर्णं प्रति कृपः — [2] 'अब्रुवन् कर्ण युद्धयस्व कत्थसे बहु सूतज । अनुक्त्वा विक्रमेत् यस्तु तद्वै सत्पुरुषव्रतम् ॥' इति ॥

तर्हि निषिद्धात्मस्तुतिः कथं रामेण कृतेति चेन्न । आत्मस्तुतेर्निषिद्धत्वेऽपि युद्धकाले वीरवादस्य स्वपराक्रमानुसारेणोत्साहाभिवृद्धयर्थं परतिरस्कारार्थञ्च करणे दोषाभावात् । महतां प्रशंसादर्शनाच्च । तथा च तत्रैव कर्णः — [3] 'शूरा गर्जन्ति सततं प्रावृषीव बलाहकाः । फलं चाशु प्रयच्छन्ति बीजमुप्तं क्षिताविव ॥ दोषमत्र न पश्यामि शूराणां रणमूर्धनि ॥' इति ।

महतामाचारे उद्योगपर्वाणि परशुरामं प्रति भीष्मवचनं — [4] 'पश्य मे बाहुवीर्यं च विक्रमं चातिमानुषम् । तत्करिष्ये कुरुक्षेत्रे योत्स्ये विप्र त्वया सह ॥' [5] 'तत्र त्वं निहतो राम मया शरशताञ्चितः । लप्स्यसे निर्जितान् लोकान् शस्त्रपूतो महारणे ॥ व्यपनेष्यामि ते दर्पं

1. प्रथम श्ने ७ पटले २४ सूत्रं ।
2. १५९ अध्याये १९ श्लोकः ।
3. १५९ अध्याये २५ श्लोकस्य उत्तरार्धं २६ श्लोकश्च ।
4. १७९ अध्याये ५६ श्लोकस्य पूर्वार्धं ५७ श्लोकस्य पूर्वार्धं च ।
5 १७८ अध्याये ५८ श्लोकः, ६१ उत्तरार्धं ६२ श्लोकः ६३ पूर्वार्धं ६४-श्लोकश्च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पौराणं ब्राह्मणब्रुव । यच्चापि कत्थसे राम बहुशः परिषत्सु वै [वत्सरे] ॥ निर्जिताः क्षत्रियाः सर्वे मयैकेनेति नः शृणु । न तदा जायते [जातवान्] भीष्मः क्षत्रियो वाथ मद्विधः ॥ यस्ते युद्धमयं दर्पं कामञ्च व्यपनाशयेत् । सोऽहं जातो महाबाहो भीष्मः परपुरंजयः ॥ व्यपनेष्यामि ते दर्पं युद्धे राम न संशयः ॥' इति ।

तथा तत्रैव भीष्मं प्रति परशुरामवचनमपि—[1]'भाषितं ते करिष्यामि तदागच्छ परन्तप । तत्र त्वां निहतं तात (माता) मया शरशतार्दितम् ॥ जाह्नवी पश्यतां भीष्म गृध्रकङ्कबलाशनम् ॥' इति ।

'अनुक्त्वा विक्रमेद्यस्तु' इति पूर्वोदाहृतवचनं तु असमर्थेन कत्थनं न कर्तव्यमित्येतत्परम् । तथा च तत्रैव— 'वृथा शूरा न गर्जन्ति शारदा इव तोयदाः । सामर्थ्यमात्मनो ज्ञात्वा ततो गर्जन्ति पण्डिताः ॥' तथात्रैव अनन्तरश्लोके खरः—

**प्राकृतास्त्वकृतात्मानो लोके क्षत्रियपांसनाः ।**
**निरर्थकं विकत्थन्ते यथा राम विकत्थसे ॥ १८ ॥** इति ।

तस्माद्रामकृतवीरवादो न दोषाय । खरस्तु कोपात, असमर्थो राम इति भ्रान्त्या उक्तवानिति न कोपि दोषः ॥

तदधुना निखिलनिशाचरनिषूदनं भगवन्तमभिहत्य हतबान्धवानां निशाचराणां आस्रप्रमार्जनं करोमीत्यभिधाय खरेण विनिपातितां गदां,

**अन्तरिक्षगतां रामः चिच्छेद बहुधा शरैः ॥ ३० ॥**
**सा विकीर्णा शरैर्भिन्ना पपात धरणीतले ।**

---

1. १७८ अध्याये ६८ श्लोकस्य पूर्वार्धं ६७ श्लोकश्च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गदा मन्त्रौषधवलैः व्यालीव विनिपातिता ॥ ३१ ॥

अनेन मन्त्रौषधिवलैः विषादिनाश उक्तो भवति ॥

इति एकोनत्रिंशः सर्गः ॥

## अथ त्रिंशः सर्गः ॥

त्रिंशे — तदनु रघुकुलतिलकः खरकरविनिस्सृतां अशनिसमां तां गदामभिहत्य सस्मितमेवमवादीत् —

एतत्ते बलसर्वस्वं दर्शितं राक्षसाधम ।
शक्तिहीनतरो मत्तो वृथा त्वमभिगर्जसि ॥ २ ॥

नीचस्य क्षुद्रशीलस्य मिथ्यावृत्तस्य रक्षसः ।
प्राणानपहरिष्यामि गरुत्मानमृतं यथा ॥ ८ ॥

इत्येवमतिनिर्भर्त्सनपरं रामभद्रमवलोक्य खरतरशासनः खरः सरोषमेवमवादीत् —

दृढं खल्ववलिप्तोऽसि भयेष्वपि च निर्भयः ।
वाच्यावाच्ये ततो हि त्वं मृत्युवश्यो न बुद्ध्यसे ॥ १४ ॥

कालपाशपरिक्षिप्ता भवन्ति पुरुषा हि ये ।
कार्याकार्यं न जानन्ति ते निरस्तषडिन्द्रियाः ॥ १५ ॥

अनेन मरणसमये जनानां बुद्धिभ्रंशो भवतीति सूचितम् । तथा च **सभापर्वणि** अर्हणे युधिष्ठिरं प्रति भीष्मः —[1] 'विप्लुता चास्य भद्रं ते बुद्धिर्बुद्धिमतां वर । चेदिराजस्य कौन्तेय सर्वेषां च महीक्षिताम् ॥ आदातुं च नरव्याघ्र यं यमिच्छत्ययं तदा । तस्य विप्लवते बुद्धिरेवं चेदिपतेर्यथा ॥' इति ॥

---

1. ४० अध्याये १२, १३ श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवमभिधाय सभ्रूभङ्गभितस्ततो दत्तदृष्टिः अविदूरे प्ररूढं महान्तं सालं बाहुभ्यामुत्क्षिप्य रामाय चिक्षेप । तमापतन्तं सालं अशनितुल्यवेगैः खगैः शतशो विनिर्भिद्य रोषारुणितलोचनेन रामेण बाणसहस्रेण निर्भिन्न-हृदयो निशाचरः पुनरेव राममभिदुद्राव ॥

तमापतन्तं सुक्रुद्धं कृतास्त्रो रुधिराप्लुतम् ।
अपासर्पत्प्रतिपदं किञ्चित्त्वरितविक्रमः ॥ २३ ॥

ननु शूराणामपसर्पणं युद्धे निषिद्धम् । तथा च गौतमः—[1]'संग्रामे संस्थानमनिवृत्तिश्च' इति । मनुरपि—[2]'न निवर्तेत संग्रामात् क्षत्रधर्ममनुस्मरन् ।' इति । एवञ्च निषिद्धमपसर्पणं महावीरेण रामेण कथं कृतमिति चेन्न । शरण्यं पुरुषान्तरं प्रार्थयमानस्य भीत्या पलायनस्य दोषत्वेपि शत्रु-वधावकाशलाभाय क्रियमाणस्य शत्रुकृतप्रहारवैफल्यकरणाय वा क्रियमाणस्य ईषदपसर्पणस्यादोषत्वात् ॥

तथा च गदापर्वणि - [3]'तमभ्याशगतं राज्ञो रणे प्रेक्ष्य वृकोदरः । अवाक्षिपद्गदां तस्मै वेगेन महता बली ॥ अवक्षेपं तु तं दृष्ट्वा पुत्रस्तव विशां पते । अवासर्पत्ततः स्थानात्सा मोघा न्यपतद्भुवि ॥ मोक्षयित्वा प्रहारं तं सुतस्तव ससंभ्रमात् । भीमसेनं तु गदया प्राहरत्कुरुसत्तमः ॥' इति । एवं रथिनोः पदातिनोर्वा युध्यतोः सर्वत्रापसर्पणं अवगम्यते । अतोऽत्र शत्रुवधायापसर्पणं न दोषाधायकम् । भीत्या पलायनस्य तु दोषत्वं च राजधर्मे— [4]'पृष्ठतो भीरवस्संख्ये वर्तन्तेऽधमपूरुषाः । शूरात् शरण-

---

1. दशमाध्याये १५ सूत्रं ।
2. सप्तमाध्याये ८७ श्लोकस्य उत्तरार्धं ।
3. ५८ अध्याये ३६–३८ श्लोकाः ।
4. ९७ अध्याये १५ श्लोकः, १८ श्लोकश्च । न भयादित्यंतिममर्धं तु न दृश्यते ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मिच्छन्तः पर्जन्यादिव जीवनम् ।। संग्रामेनीकवेलायां उत्कृष्टोभिपतत्युत । पतत्यभिमुखः शूरः पराङ् भीरुः पलायते ।। न भयाद्विनिवर्तेत तस्य लोकां यथा मम ।' इति ॥

एवञ्च शत्रुवधं कामयमानस्य रामस्य धनुषि बाणसन्धानादि- सौकर्यायापसर्पणं रामेण कृतं भूषणमेव न तु दूषणम् । अत एव मूले अपसर्पणे कृतास्त्रत्वमेव हेतुत्वेन महर्षिणा उपन्यस्तम् । अत एव अपसर्पण- समनन्तरमेव शत्रुवधाय बाणसन्धानं, तेन च खरवधोऽपि [ इति ] अनन्तरश्लोकेन खरवधाय शरसन्धानमोक्षणादिप्रतिपादनमुपपन्नं भवति । भीत्या अपसर्पणे पुनः शरमोक्षानुपपत्तेरिति ॥

अथ रक्षोवधकृतत्वरेण ऐक्ष्वाकेन रामचन्द्रेण दिव्ये धनुषि सन्धाय विमुक्तः शरवरो रक्षोवक्षो विक्षोभयामास । तेन च महेन्द्रदत्तेन बाणेन भृशमभिहतो राक्षसः

निपपात खरो भूमौ दह्यमानः शराग्निना ।
रुद्रेण तु विनिर्दग्धः श्वेतारण्ये यथान्तकः ॥

तत्कर्मसन्तुष्टमानसाः परमर्षयो राजर्षयश्च रामभद्रमभिगम्य सहर्षमेवमब्रुवन् —

एतदर्थं महातेजा महेन्द्रः पाकशासनः ।
शरभङ्गाश्रमं पुण्यमाजगाम पुरन्दरः ॥ ३० ॥

आनीतस्त्वमिमं देशमुपायेन महर्षिभिः ।
एषां वधार्थं क्रूराणां रक्षसां पापकर्मणाम् ॥

तदिदं नः कृतं कार्यं त्वया दशरथात्मज ।
सुखं धर्मं चरिष्यन्ति दण्डकेषु महर्षयः ॥ ३२ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदनु गीर्वाणगणा अभिहत्य देवदुन्दुभीन् हर्षोत्कर्षेण पुष्पवर्षं विमुञ्चन्तः परस्परमेवमवोचन् --

अर्धाधिकमुहूर्तेन रामेण निशितैः शरैः ।
चतुर्दशसहस्राणि रक्षसां कामरूपिणाम् ॥ ३४ ॥

खरदूषणमुख्यानां निहतानि महाहवे ।
अहो वीर्यमहो दाक्ष्यं विष्णोरिव हि दृश्यते ॥ ३५ ॥

इत्यभिधाय यथापथं गतेषु सर्वेषु लक्ष्मणोपि सीतया सह गिरिकन्दराद्विनिष्क्रम्य स्वाश्रमं प्रविशन् अशेषमुनिजनपूज्यमानं विजयिनं रामचन्द्रमवलोक्य सन्तुष्टहृदयो बभूव ॥

तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् ।
बभूव हृष्टा वैदेही भर्तारं परिषस्वजे ॥ ३९ ॥

अत्र तमित्यनेन क्षत्रियाणां मुख्यधर्मभूतदुष्टनिग्रहशिष्टपरिपालनाय निखिलमुनिजनकदनकररक्षोवधपूर्वकं शरणागतमुनिजनरक्षणं प्रतिज्ञाय, अनपराधिराक्षसजनवधो नोचित इति वैदेहीकृतप्रतिषेधमपि, 'अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्' इति प्रकारेण अनादृत्य, 'चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् । एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ॥' इति ऋषिजनानामपि संशयिते युद्धे क्रूरतरान् राक्षसान् हत्वा, अन्यथो यो रामः तादृशः परामृश्यते । तथा च 'शत्रुहन्तारं महर्षीणां सुखावहम्' इति, अन्यथमिति च विशेषणान्युपपन्नानि भवन्ति । अत एव एतेऽर्था उत्तरश्लोकाभ्यामुपसंहृताः —

मुदा परमया युक्ता दृष्ट्वा रक्षोगणान् हतान् ।
रामं चैवाव्यथं दृष्ट्वा तुतोष जनकात्मजा ॥ ४० ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ततस्तु तं राक्षससङ्घमर्दनं
सभाज्यमानं मुदितैर्महर्षिभिः ।
पुनः परिष्वज्य शशिप्रभानना
बभूव हृष्टा जनकात्मजा तदा ॥ ४१ ॥

इति त्रिंशः सर्गः ॥

## अथ एकत्रिंशः सर्गः ॥

एकत्रिंशे — तदनु जनस्थाननिलयानखिलानपि निशाचरान् रामभद्रेण नामावशेषितानकंपनमुखादवगम्य कोपसंरक्तलोचनो दशाननो नागराज इव मुहुर्मुहुर्निःश्वसन् अधुनैव सानुचरं रामभद्रं अभिहन्तुमिच्छामीत्यवदत् । तदन्वकम्पनोऽपि अविज्ञातपराक्रमं दशाननमेवमवादीत्—

शृणु राजन्यथावृत्तं रामस्य बलपौरुषम् ॥ २२ ॥
असाध्यः कुपितो रामो विक्रमेण महायशाः ।
आपगायाः सुपूर्णाया वेगं परिहरेच्छरैः ॥ २३ ॥

सतारग्रहनक्षत्रं नभश्चाप्यवसादयेत ।
असौ रामस्तु मज्जन्तीं श्रीमानभ्युद्धरेन्महीम् ॥ २४ ॥
भित्वा वेलां समुद्रस्य लोकानाप्लावयेद्विभुः ।
वेगं सोपि समुद्रस्य वायुं वा विधमेच्छरैः ॥ २५ ॥

संहृत्य वा पुनर्लोकान्विक्रमेण महायशाः ।
शक्तस्स पुरुषव्याघ्रः स्रष्टुं पुनरपि प्रजाः ॥ २६ ॥
न हि रामो दशग्रीव शक्यो जेतुं त्वया युधि ।
रक्षसां वापि लोकेन स्वर्गः पापजनैरिव ॥ २७ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन पापिष्ठैः स्वर्गः प्राप्तुं न शक्यत इत्युक्तम् । तथा च बोधायनः—[1] 'न दिवास्वापशीलेन न च सर्वान्नभोजिना । नभो गन्तुं नैव शक्यं आरूढपतितेन वा ॥' [2] 'न वै देवान् पीवरोऽसंयतात्मा रोरूयमाणः ककुदी समश्नुते । चलतुंदी रभसः कामवादी कृशास इत्यणवस्तत्र यान्ति ॥' इति । अनेन सुकृतिनां स्वर्गः पापिष्ठानां नरक इति सूचितम् । तथा च राजधर्मे — [3] 'राजा चरति चेद्धर्मं देवत्वायैव कल्पते । स चेदधर्मं चरति नरकायैव गच्छति ॥' इति ॥

तदधुना तद्वधोपायं जिज्ञासमानेन भवता रामभार्या अपहरणीया । अपहृतायां च तस्यां,

स तया रहितः कामी रामो हास्यति जीवितम् ॥ इति ।

तदाकर्ण्य मुदितमना दशाननो गगनतलसञ्चारचतुरेण रथवरेण उत्पत्य गगनतलं, निपत्य च मारीचाश्रमं, तत्कृतसपर्यासन्तुष्टहृदयो रावणः तमेव रामभार्यापहरणे सहायं प्रार्थयामास । तदाकर्ण्य चकितमना मारीचस्तमित्थमाचचक्षे —

आख्याता केन सा सीता मित्ररूपेण शत्रुणा ।
त्वया राक्षसशार्दूल को न नन्दति निन्दितः ।
सीतामिहानयस्वेति को ब्रवीति ब्रवीहि मे ॥ ४२ ॥

रक्षोलोकस्य सर्वस्य कः शृङ्गं छेत्तुमिच्छति ।
प्रोत्साहयति कश्च त्वां स हि शत्रुर्न संशयः ॥ ४३ ॥

आशीविषमुखाद्दंष्ट्रामुद्धर्तुं चेच्छति त्वया ।
कर्मणाऽनेन केनासि कापथं प्रतिपादितः ॥ ४४ ॥

---

1. बोधायनधर्मसूत्रे द्वितीयप्रश्ने द्वितीयेऽध्याये २४ सूत्रम् ।
2. बोधायनधर्मसूत्रे प्रथमप्रश्ने ५ अध्याये ३२ सूत्रम् ।
3. ९० अध्याये ४ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुखसुप्तस्य ते राजन् प्रहृतं केन मूर्धनि ॥ ४५ ॥

विशुद्धवंशाभिजनाग्रहस्तः
तेजोमदः संस्थितदोर्विषाणः ।
उदीक्षितुं रावण नैव युक्तः
स संयुगे राघवगन्धहस्ती ॥ ४६ ॥

असौ रणान्तस्थितिसान्धिवालो
विदग्धरक्षोमृगहा नृसिंहः ।
सुप्तस्त्वया बोधयितुं न युक्तः
शराङ्गपूर्णो निशितासिदंष्ट्रः ॥ ४७ ॥

चापावहारे भुजवेगपङ्के
शरोर्मिमाले सुमहाहवौघे ।
न रामपातालमुखेऽतिघोरे
प्रस्कन्दितुं राक्षसराज युक्तम् ॥ ४८ ॥

प्रसीद लङ्केश्वर राक्षसेन्द्र
लङ्कां प्रसन्नो भव साधु गच्छ ।
त्वं स्वेषु दारेषु रमस्व नित्यं
रामस्सभार्यो रमतां वनेषु ॥ ४९ ॥

एवमुक्तो दशग्रीवो मारीचेन च रावणः ।
न्यवर्तत पुरीं लङ्कां विवेश च पुरो[ गृहो ]त्तमम् ॥ ५० ॥

इति एकत्रिंशः सर्गः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ द्वात्रिंशः सर्गः ॥

द्वात्रिंशे — अथ शूर्पणखा लङ्कापुरमपि जनस्थानमिव विजनस्थानं काकुत्स्थेन कारयितुमिव दशवदनभवनमाजगाम । तत्र च विचित्रतरविमानमध्यगे काञ्चनमयासने सुखासीनं, देवासुरसंप्रहारसमाक्रान्तचतुर्दन्तकुन्तसन्तताभिहतैः समन्युशतमन्युदंभोलिसंप्रहारैः चक्रधरचक्रविक्षेपणैः विसंस्फुटितवक्षःस्थलं, कुबेरवनप्रमुखानां संक्रन्दननन्दनवनोद्यानानां विक्रमेण विनाशयितारं, विंशतिभुजप्रतापग्रीष्मोष्मणा सहस्रभानुमपि सङ्कुचितभानुं, चन्द्रमसमपि मलीमसं कुर्वाणं, अत्युग्रतपःप्रसादितपितामहवरमहिम्ना अमानुषेभ्यो देवगन्धर्वादिभ्यः संप्राप्तावध्यभावं, संक्षोभकं अक्षोभ्यबुद्धीनां, उच्छेत्तारं धर्माणां, अभिमर्शकं परदाराणां, भेत्तारं पर्वतेन्द्राणां, प्रयोक्तारं सर्वास्त्राणां, कायकान्तिविजितेन्द्रनीलमणिं, आमुक्तकनकमयकुण्डलं, सकललोकविरावणं रावणमवलोक्य तत्पुरतः क्रुद्धेव निपत्य तमेवं अवादीत् ॥

इति द्वात्रिंशः सर्गः ॥

## अथ त्रयस्त्रिंशः सर्गः ॥

त्रयस्त्रिंशे – प्रमत्तः कामभोगेषु स्वैरवृत्तो निरङ्कुशः ।
समुत्पन्नं भयं घोरं बोद्धव्यं नावबुद्ध्यसे ॥ २ ॥

अनेन कामभोगेषु स्वैरवृत्तो भयं न जानातीति सूचितम् । तथा च नीतिः—[1] 'अर्थातुराणां न गुरुर्न बन्धुः कामातुराणां न भयं न लज्जा । क्षुधातुराणां न रुचिर्न पक्वं विद्यातुराणां न सुखं न निद्रा ॥' इति ॥

1. [illegible]

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सक्तं ग्राम्येषु भोगेषु कामवृत्तं महीपतिम् ।**
**लुब्धं न बहु मन्यन्ते श्मशानाग्निमिव प्रजाः ॥ ३ ॥**

अनेन ग्राम्यसुखासक्तं लुब्धं प्रजा न बहु मन्यन्त इति सूचितम् । तथा **चानुशासनिके** — 'यतितः कार्यकरणे षड्भागकृतलक्षणः । ग्राम्यधर्मं न सेवेत स्वच्छन्देनार्थकोविदः ॥' इति । लोभपरित्यागे **आपद्धर्मे**— [1]'लुब्धः क्रूरस्त्यक्तधर्मा निकृतिः शठ एव च । कृतघ्नश्चाधमो लोके परित्याज्यश्शुभार्थिना ॥' इति ।

**स्वयं कार्याणि यः काले नानुतिष्ठति पार्थिवः ।**
**स तु वै सह राज्येन तैश्च कार्यैर्विनश्यति ॥ ४ ॥**

अनेन अविचारस्य सकलराज्यनाशकत्वादुचितकाले स्वयमेवाखिलमपि कार्यं विचारयेदिति सूचितम् । तथा च **राजधर्मे** —[2]'चारान्मन्त्रञ्च कोशं च दण्डं चैव विशेषतः । अनुतिष्ठेत्स्वयं राजा सर्वं ह्यत्र प्रतिष्ठितम् ॥' इति ।

**अयुक्तचारं दुर्दर्शं अस्वाधीनं नराधिपम् ।**
**वर्जयन्ति नरा दूरात् नदीपङ्कमिव द्विपाः ॥ ५ ॥**

अनेन प्रयुक्तचारः सुदर्शनश्च भवेदिति सूचितम् । तथा च **राजधर्मे** — [3]'उदासीनारिमित्राणां सर्वमेव चिकीर्षितम् । पुरे जनपदे चैव ज्ञातव्यं चारचक्षुषा ॥' इति । [4]'नित्यं राष्ट्रमवेक्षेत गोभिस्सूर्य

---

1. १६८ अध्याये ६ श्लोकस्य पूर्वार्धं १६ श्लोकस्य पूर्वार्धं च । 'परित्याज्यः शुभार्थिना' इत्यत्र 'न सन्धेयः कदाचन' इति पाठ भेदो दृश्यते ।
2. ८६ अध्याये २० श्लोकः ।
3. ८६ अध्याये २१ श्लोकः ।
4. १२० अध्याये ३३ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इवोदितः । चारान्स्वानुचरान् विन्द्यात्तथा बुद्धयानुसंज्व(च)रेत् ॥' इति । सर्वद्रष्टत्वं च भारते कच्चिदध्याये —[1] 'कच्चिद्दर्शयसे नित्यं मनुष्यान् समलङ्कृतान् । उत्थाय काले कालज्ञस्सह पाण्डव मन्त्रिभिः ॥' इति ।

आश्रमवासिकेऽपि —[2] 'प्रातरेव हि पश्येथाः ये कुर्युर्व्ययकर्म ते । अलङ्कारमथो भोज्यमत ऊर्ध्वं समाचरेः ॥ पश्येथाश्च ततो योधान् सदा त्वं प्रतिहर्षयन् । दूतानां च चराणां च प्रदोषस्ते सदा भवेत् ॥ सदा चापररात्रांते भवेत्कार्यार्थनिर्णयः । मध्यरात्रे विहारस्ते मध्याह्ने च सदा भवेत् ॥ सर्वे त्वौपयिकाः कालाः कार्याणां भरतर्षभ । तथैवालंकृतः काले तिष्ठेथा भूरिदक्षिण ॥' इति ॥

**ये न रक्षंति विषयमस्वाधीना नराधिपाः ।**
**ते न वृद्ध्या प्रकाशन्ते गिरयस्सागरे यथा ॥ ६ ॥**

अनेन विषयारक्षणे अनर्थो भवतीति सूचितम् । तथा च **मनुः** —
[3]'मोहाद्राजा स्वराष्ट्रं यः कर्शयत्यनवेक्षया । सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः ॥ शरीरे कर्शनात्प्राणाः क्षीयन्ते प्राणिनां यथा । तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्शनात् ॥ राष्ट्रस्य संग्रहे नित्यं विधानमिदमाचरेत् । सुसंगृहीतराष्ट्रो हि पार्थिवः सुखमेधते ॥' इति ॥

**आत्मवद्भिर्विगृह्य त्वं देवगन्धर्वदानवैः ।**
**अयुक्तचारश्चपलः कथं राजा भविष्यसि ॥ ७ ॥**

अनेन बलवद्विरोधो न कर्तव्य इति सूचितम् । तथा **चोद्योगे**

1. सभापर्वणि ५ अध्याये ८६ श्लोकः ।
2. पञ्चमाध्याये ३२—३५ श्लोकाः ।
3. सप्तमाध्याये १११—११३ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विदुरः—[1] 'अकामान्कामयति यः कामयानान् परित्यजेत् । बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥' इति ।

त्वं तु बालस्वभावश्च बुद्धिहीनश्च राक्षस !
ज्ञातव्यं तु न जानीषे कथं राजा भविष्यसि ॥ ८ ॥

अनेन बुद्धिहीनो राजा न तिष्ठतीत्युक्तम् । तथा च उद्योगे—[2] 'यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये । कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥' इति ।

यस्मात्पश्यन्ति दूरस्थान् सर्वानर्थान्नराधिपाः ।
चारेण तस्मादुच्यन्ते राजानो दीर्घचक्षुषः ॥ १० ॥

अनेन चारेण व्यवहिता अपि अर्था अवश्यं विचारणीया इति सूचितम् । तथा च राजधर्मे— [3] 'बाह्यमाभ्यन्तरं चैव पौरजानपदं तथा । चारैः सुविदितं कृत्वा ततः कर्म प्रयोजयेत् ॥' इति ।

तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम् ।
व्यसने सर्वभूतानि नाभिधावन्ति पार्थिवम् ॥ १५ ॥

अनेन एतादृशस्य आपत्सु न कोपि साहाय्यं करोतीति सूचितम् । तथा च कामन्दके — 'लुब्धस्यासंविभागित्वान्न युध्यन्तेऽनुजीविनः । लुब्धानुजीवितैः खेदान्नि [त्स] हैर्निर्विनिहन्यते ॥' इति ।

अतिमानिनमग्राह्यं आत्मसंभावितं नरम् ।
क्रोधनं व्यसने हन्ति स्वजनोऽपि महीपतिम् ॥ १६ ॥

---

1. ३३ अध्याये ३२ श्लोकः ।
2. ३४ अध्याये १० श्लोकः ।
3. ६६ अध्याये ११ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन स्वजनः ऐश्वर्यदशायां क्रोधनं समये प्रहरतीति सूचितम् । तथा च राजधर्मे — [1] 'यद्वृत्तमुपजीवन्ति प्रकृतिस्थस्य मानवाः । तदेव विषमस्थस्य स्वजनोऽपि न मृष्यते ॥' इति ॥

नानुतिष्ठति कार्याणि भयेषु न बिभेति च ।
क्षिप्रं राज्याच्च्युतो दीनस्तृणैस्तुल्यो भविष्यति ॥ १७ ॥
शुष्ककाष्ठैर्भवेत्कार्यं लोष्टैरपि च पांसुभिः ।
न तु स्थानात् परिभ्रष्टैः कार्यं स्याद्वसुधाधिपैः ॥ १८ ॥
उपभुक्तं यथा वासः स्रजो वा मृदिता यथा ।
एवं राज्यात्परिभ्रष्टः समर्थोऽपि निरर्थकः ॥ १९ ॥
अप्रमत्तस्ततो राजा सर्वज्ञो विजितेन्द्रियः ।
कृतज्ञो धर्मशीलश्च स राजा तिष्ठते चिरम् ॥ २० ॥

अनेन धार्मिकस्य राज्यं चिरं तिष्ठतीति सूचितम् । तथा च कामन्दके— [2] 'प्रजानुरागधर्माच्च दुःखोच्छेद्यो हि धार्मिकः ॥' इति ॥

नयनाभ्यां प्रसुप्तोऽपि जागर्ति नयचक्षुषा ।
व्यक्तक्रोधप्रसादश्च स राजा पूज्यते जनैः ॥ २१ ॥

एतादृशो जनैः पूज्यो भवतीति सूचितम् । तथा च राजधर्मे — [3] 'देवतेव हि सर्वार्थं कुर्याद्राजा प्रसादितः । वैश्वानर इव क्रुद्धः समूलमपि निर्दहेत् ॥' इति ।

परावमन्ता विषयेषु सङ्गवान्
न देशकालप्रविभागतत्त्ववित् ।

1. ९३ अध्याये ३ श्लोकः ।
2. षष्ठे सर्गे ६ श्लोकः ।
3. ८२ अध्याये ३० श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अयुक्तबुद्धिर्गुणदोषनिश्चये
विपन्नराज्यो नचिराद्विपत्स्यसे ॥ २३ ॥

अनेन सुसमृद्धराज्यस्थोऽपि राजा एतैर्दोषैरचिरात् राज्यभ्रष्टो भवतीति, राज्ञा बलिष्ठेनापि शत्रुर्दुर्बल इति अवमतिः न कर्तव्येति च सूचितम्। तथा च उद्योगे विदुरः — [1]' सुदुर्बलं नावजानाति कञ्चित् युक्तो रिपुं सेवते बुद्धिपूर्वम्। न विग्रहं रोचयते बलस्थैः काले च यो विक्रमते स धीरः ॥' इति ॥

इति त्रयस्त्रिंशः सर्गः ॥

## अथ चतुस्त्रिंशः सर्गः ॥

**चतुस्त्रिंशे** — तदनु शूर्पणखया प्रकटतरं परिकीर्तितानशेषानपि दोषान् निजभुजबलावलेपेन अविचिन्तयता सकललोकविरावणेन रावणेन किमाकारो रामभद्रः? कीदृशोऽस्य पराक्रमः? कानि कानि चायुधानि खरमुखनिशाचरप्राणहानिकराणि? केन च कारणेन कुलपरम्परागतं प्राज्यं राज्यं परित्यज्य निखिलनिशाचरावासेऽस्मिन् देशे समागतः? इति पृष्टा शूर्पणखा तमेवमभिहितवती —

दीर्घबाहुर्विशालाक्षश्चीरकृष्णाजिनाम्बरः।
कन्दर्पसमरूपश्च रामो दशरथात्मजः ॥ ५ ॥

भ्राता तस्य महातेजा गुणतस्तुल्यविक्रमः।
अनुरक्तश्च भक्तश्च लक्ष्मणो नाम वीर्यवान् ॥ १२ ॥

सोऽयमधुना मुनिजनसमुचितवेषोऽपि धिक्कृतशक्रपराक्रमो विक्रमेण शक्रकार्मुकसदृक्षं चापमाकृष्य महाविषानाशीविषानिव रुक्मपुंखान् अनुक्षणं

---

1. उद्योग ३९ अध्याय ७२ श्लो.।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रक्षिपन् रक्षोविक्षोभकरमतिभयंकरं रूपमावहति । यः खल्वर्धाधिकमुहूर्तेन प्रख्यातपराक्रमान् चतुर्दशसहस्रसंख्याकान् निशाचरान् असंख्यैः रुक्मपुङ्खैः विशिखैर्विमथ्य शतमखमुखमखभुजोऽखिलतपस्विनश्च निर्भयान् विधाय दण्डकारण्यमपि सकलमुनिजनशरण्यमतनुत ॥

रामस्य तु विशालाक्षी पूर्णेन्दुसदृशानना ।
धर्मपत्नी प्रिया भर्तुर्नित्यं प्रियहिते रता ॥ १४ ॥

यदि तस्यामभिप्रायो भार्यार्थे तत्र जायते ।
शीघ्रमुद्ध्रियतां पादो जयार्थमिह दक्षिणः ॥ २२ ॥

अनेन जयार्थं गन्तृभिर्दक्षिणचरणविन्यासपूर्वकमेव गन्तव्यमिति सूचितम् । तथा च ज्योतिर्निबन्धे गर्गः— 'पूर्वं दक्षिणमुद्धृत्य पादं यायान्नराधिपः । द्वात्रिंशतं पदं गत्वा यानमारुह्य संव्रजेत ॥' इति । वराहसंहितायामपि— 'दधिदूर्वाक्षतान् गन्धहेमरुक्मसर्णांस्तथा । दृष्ट्वा स्पृष्ट्वा व्रजेद्राजा दक्षिणेनांघ्रिणा तथा ॥' इति । इत्यभिधाय सपरिवारस्य खरस्य निधनहेतुभूतां आत्मावज्ञां च विज्ञापयामास ॥

इति चतुस्त्रिंशः सर्गः ॥

## अथ पञ्चत्रिंशः सर्गः ॥

**पञ्चत्रिंशे**— तद्वचनश्रवणसमनन्तरं विसृष्टसकलसामाजिकमन्त्रिमण्डलः स्वबुद्ध्यैव गुणदोषविचारपूर्वकं इतिकर्तव्यतां निश्चित्य विशालां यानशालां प्रच्छन्न एव निर्गच्छन् दशमुखः सूतं संचोदयामास— 'रथः संयुज्यताम्' इति ॥

अथ तत्क्षणमेव सारथिना समानीतं गगनगमनचतुरतुरगपरिकलितं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रथवरमास्थाय समुत्तीर्य पारावारं उल्लंघ्य नानानगोपशोभितान्पर्वतान्समतीत्य च स्त्रीरत्नशोभितानि नगराणि नानानियमनियमितान्तःकरणैः मुनिजनैः परिवृतं सुभद्रनामानं न्यग्रोधं पश्यन्नेव मारीचाश्रममाजगाम। ततो मुनिवृत्तिः मारीचोऽपि भोजनादिना तं सन्तर्प्य केन हेतुना पुनस्तूर्णमेवागतोऽसीत्यपृच्छत् ॥

इति पञ्चत्रिंशः सर्गः ॥

## अथ षट्त्रिंशः सर्गः ॥

**षट्त्रिंशे**— तदनु चतुर्दशसहस्रराक्षसानीकेन सह खरदूषणत्रिशिरसो विना वैरं विनिपात्य, कर्णनासापहरणेन भगिनीमपि विरूपितवन्तं रामं, निखिलमायाविशारदेन भवता रजतबिन्दुविचित्रितेन कनकहाटकमृगरूपेण विलोभितां सीतामपहृत्य, तद्विरहानलदूयमानमानसं निर्भयमभिहन्तास्मीति दशाननसमुदीरितवचनमाकर्ण्य, रामशब्दश्रवणमात्रेण संत्रस्तहृदयो मारीचः कृताञ्जलिरेवमुवाच ॥

इति षट्त्रिंशः सर्गः ॥

## अथ सप्तत्रिंशः सर्गः ॥

**सप्तत्रिंशे**— सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ २ ॥

अनेन स्वप्रयोजनविरोधशङ्कया राजबुद्ध्यनुसारेण वक्तारो मन्त्रिणस्सुलभाः ; किन्तु अनर्थपर्यवसायिनीं राजबुद्धिं तिरस्कृत्य शुभोदर्कवक्तारो मन्त्रिणो दुर्लभा इति सूचितम् । तथा च उद्योगे विदुरनीतौ— [1] 'यो हि

1. ३७ अध्याये १६, १५ श्लोकौ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धर्मं समाश्रित्य हत्वा भर्तुः प्रियाप्रिये । अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ सुलभाः पुरुषा राजन् सततं प्रियवादिनः । अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥' इति ॥

त्वद्विधः कामवृत्तो हि दुश्शीलः पापमन्त्रितः ।
आत्मानं स्वजनं राष्ट्रं स राजा हन्ति दुर्मतिः ॥ ७ ॥

अनेन दुर्मन्त्रितः कामवृत्तो नयद्वेषी राजा सकलमन्त्रिवर्गेण ऐश्वर्येण सह नश्यतीत्युक्तम् । तथा च कामन्दके — [1]'अनात्मवान्नयद्वेषी वर्धयन्नरिसंपदः । प्राप्यापि महदैश्वर्यं सह तेन विनश्यति ॥' इति ॥

रामो विग्रहवान् धर्मस्साधुस्सत्यपराक्रमः ।
राजा सर्वस्य लोकस्य देवानां मघवानिव ॥ १३ ॥

कथं नु तस्य वैदेहीं रक्षितां स्वेन तेजसा ।
इच्छसि प्रसभं हर्तुं प्रभामिव विवस्वतः ॥ १४ ॥

तदलमनेनानर्थपरम्परानिदानभूतेन निरर्थकसमारंभेण ॥

दृष्टश्चेत्त्वं रणे तेन तदन्तं तव जीवितम् ॥ २१ ॥

जीवितं च सुखं चैव राज्यं चैव सुदुर्लभम् ।
यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम् ॥ २२ ॥

अनेन सर्वानर्थकारणभूतो बलवद्विरोधो न कार्य इति सूचितम् । तथा च प्राचीनाः — 'अनुचितकर्मारंभः स्वजनविरोधो बलीयसा स्पर्धा । प्रमदाजनविश्वासो मृत्युद्वाराणि चत्वारि ॥' इति ॥

स सर्वैस्सचिवैस्सार्धं विभीषणपुरोगमैः ।
मन्त्रयित्वा तु धर्मिष्ठैः कृत्वा निश्चयमात्मनः ॥ २३ ॥

1. स्वाम्यनुजीविवृत्तम्, षष्ठे सर्गे ४ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन धर्मिष्ठैरेव सचिवैः आलोचनापूर्वकं कार्यजातमारभेतेति सूचितम् । तथा च --

दोषाणां च गुणानाञ्च संप्रधार्य बलाबलम् ।
आत्मनश्च बलं ज्ञात्वा राघवस्य च तत्वतः ॥
हिताहितं विनिश्चित्य क्षमं त्वं कर्तुमर्हसि ॥ २४ ॥

अनेन स्वपरबलविचारपूर्वकं, गुणदोषविचारपूर्वकं च समीहितमारभेतेति सूचितम् । तथा च मनुः -- [1]'यदा मन्येत भावेन हृष्टं पुष्टं स्वकं बलम् । परस्य विपरीतं च तदा यायाद्रिपुं प्रति ॥ यदा तु स्यात्परिक्षीणो वाहनेन बलेन च । तदासीत प्रयत्नेन शनकैस्सान्त्वयन्रिपुम् ॥' इति । [2]'स्वशक्तिं परशक्तिञ्च नित्यं विद्यात्परात्मनोः । पीड्यानि चैव सर्वाणि व्यसनानि तथैव च ॥ आरभेत ततः कार्यं सञ्चिन्त्य गुरुलाघवम् ।' इति ॥

इति सप्तत्रिंशः सर्गः ॥

## अथ अष्टत्रिंश-एकोनचत्वारिंशौ सर्गौ ॥

अष्टत्रिंशैकोनचत्वारिंशयोः -- कदाचिदखिलमुनिजनकदनमाचरतो मम शिक्षणाय विश्वामित्रसमानीतेन दाशरथिना विमुक्तः शरवरो मामादाय गंभीरे सागरांभसि प्राक्षिपत् । तदनु चिरात् चेतनां प्राप्य लङ्कामुपागमम् । तन्मया वार्यमाणोपि रामेण विरोधमाचरन् सनिशाचरां लङ्कापुरीं क्षिप्रमेव आत्मना सह विनष्टां द्रष्टासि ॥

अकुर्वन्तोपि पापानि शुचयः पापसंश्रयात् ।
परपापैर्विनश्यन्ति मत्स्या नागहृदे यथा ॥ २६ ॥

1. सप्तमेध्याये १७१, १७२, श्लोकौ ।
2. नवमाध्याये २९८ श्लोकस्य उत्तरार्धं २९९ श्लोकश्च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन स्वतोऽदुष्टा अपि दुष्टसहवासेन नश्यन्ति । अतो दुष्टसहवासो न कार्य इति सूचितम् । तथा च विदुरनीतौ—[1] 'असन्त्यागात् पापकृतामपापांस्तुल्यो दण्डः स्पृशते मिश्रभावात् । शुष्केणार्द्रं दह्यते मिश्रभावात् तस्मात् पापैः सह सन्धिं न कुर्यात् ॥' इति ।

**भव स्वदारनिरतः स्वकुलं रक्ष राक्षस ॥ ३१ ॥**
**परदाराभिमर्शात्तु नान्यत्पापतरं महत् ॥ २९ ॥**

अनेन सर्वपापापेक्षया अधिकतरं परदारगमनं वर्जनीयमिति सूचितम् । तथा च मनुः—[2] 'वैरिणं नोपसेवेत सहायं चैव वैरिणः । अधार्मिकं तस्करं च परस्यैव च योषितम् ॥ न हीदृशमनायुष्यं लोके किञ्चन विद्यते । यादृशं पुरुषस्येह परदारोपसेवनम् ॥' इति । [3] 'तत्समुत्थो हि लोकस्य जायते वर्णसङ्करः । येन मूलहरो धर्मः सर्वनाशाय कल्पते ॥' इति । [4] 'आयुष्कामेन वप्तव्यं न जातु परयोषिति ।' इति च ॥

**एवमस्मि तदा मुक्तः कथञ्चित्तेन संयुगे ।**

ततः कदाचित्तापसोऽयमित्यवज्ञया मृगरूपमुपगृह्य निशाचराभ्यामनुचराभ्यां सह जिघांसुस्तमभ्यधावम् । तेन च विमुक्तेषु विशिखेषु पलायिते च मयि मदनुचरौ निशाचरौ शमितौ । तदनु कथञ्चित् प्राप्तजीवितः समुद्भ्रान्तचेतनोऽहम् —

**वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम् ।**
**गृहीतधनुषं रामं पाशहस्तमिवान्तकम् ॥ १५ ॥**

---

1. ३४ अध्याये ७१ श्लोकः ।
2. चतुर्थाध्याये १३३, १३४ श्लोकौ ।
3. अष्टमाध्याये ३५३ श्लोकः ।
4. नवमाध्याये ४१ श्लोकस्य उत्तरार्धं ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रकारादीनि नामानि रामत्रस्तस्य रावण ।
रत्नानि च रथाश्चैव त्रासं सञ्जनयन्ति मे ॥ १८ ॥

न ते रामकथा कार्या यदि मां द्रष्टुमिच्छसि ॥ २० ॥

इदं वचो बन्धुहितार्थिना मया
यथोच्यमानं यदि नाभिपत्स्यसे ।
सबान्धवस्त्यक्ष्यसि जीवितं रणे
हतोऽद्य रामेण शरैरजिह्मगैः ॥ २६ ॥

इति अष्टत्रिंश-एकोनचत्वारिंशौ सर्गौ ॥

## अथ चत्वारिंशः सर्गः ॥

चत्वारिंशे — तं पथ्यहितवक्तारं मारीचं राक्षसाधिपम् ।
अब्रवीत् परुषं वाक्यमयुक्तं कालचोदितः ॥ २ ॥
संपृष्टेन तु वक्तव्यं सचिवेन विपश्चिता ।
उद्यताञ्जलिना राज्ञे य इच्छेद्भूतिमात्मनः ॥ ९ ॥

अनेन राज्ञा पृष्टैरेव राजोपजीविभिः मर्यादापूर्वकं वक्तव्यमिति सूचितम् । पृष्टेनैव वक्तव्यमित्यत्र विराटपर्वणि —[1] 'न जातु शिक्षेद्राजानमपृच्छन्तं कदाचन । गच्छन्नपि परां भूमिमपृष्टो ह्यनियोजितः ॥ जात्यन्ध इव मन्येत मर्यादामनुचिन्तयन् ॥' इति ।

सोपचारेण वक्तव्यमित्यत्र कामन्दकः —[2] 'प्रविष्टस्सम्यगुचिते स्थाने तिष्ठन् सुवेषवान् । यथाकालमुपासीत राजानं विनयान्वितः ॥

---

1. चतुर्थोऽध्याये १६ श्लोकस्य पूर्वार्धं २० श्लोकश्च ।
2. षष्ठसर्गे १७—२८ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परस्थानासनं क्रौर्यं औद्धत्यं मत्सरं त्यजेत् । विगृह्य कथनं चैव न कुर्यात् ज्यायसा सह ॥ विप्रलम्भञ्च मायां च दम्भं स्तेयञ्च वर्जयेत् । पुत्रेभ्यश्च नमस्कुर्याद्वल्लभेभ्यश्च भूपतेः ॥ न नर्मसचिवैस्सार्धं किञ्चिदप्यप्रियं वदेत् । ते हि मर्माण्यभिघ्नन्ति प्रहासेनैव संसदि ॥ भर्तुरेवासने दृष्टिं मुहुर्नान्यत्र निक्षिपेत् । ब्रूयात् किमयमित्यस्य तिष्ठेदास्यं विलोकयन् ॥ कोऽत्रेत्यहमिति ब्रूयात्सम्यगाज्ञापयेति च । आज्ञां चावितथां कुर्यात् यथाशक्त्यवलम्बितः ॥ उच्चैः प्रहसनं कासं ष्ठीवनं कुत्सनं तथा । जृम्भणं गात्रभङ्गं च पर्वस्फोटं च वर्जयेत् ॥ प्रविश्य सानुरागस्य चित्तं चित्तज्ञसम्मतः । समर्थयंश्च तत्पक्षं साधु भाषेत भाषितम् ॥ तन्नियोगेन च ब्रूयात् अर्थं सुपरिनिश्चितम् । सुखप्रबन्धगोष्ठीषु वादे वा वादिना मृतम् ॥ विजानन्नपि न ब्रूयात् भर्तुः क्षिप्तोत्तरं वचः ॥ प्रवीणोपि हि मेधावी वर्जयेदभिमानिताम् ॥ यद्य-प्युच्चैर्विजानीयान्नीचैस्तदपि कीर्तयेत् ॥ कर्मणां तस्य वैशिष्ट्यं कथये-द्विनयान्वितः ॥ जयाज्ञापय जीवेति नाथ देवेति चादरात् । आज्ञां तस्य प्रतीच्छन्तो भृत्याः कुर्युरुपासनम् ॥' इति ।

नन्वेवं सति नीतिज्ञो मारीचो रावणेनापृष्टः कथमुक्तवानिति चेत्, तन्न । उन्मत्तेन राज्ञा प्रश्नाकरणेपि कार्यात्ययप्रसक्तौ निगृह्यापि वक्तव्यत्वात् । तथा चोद्योगे— [1]'शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् । अपृष्टस्तस्य तद्ब्रूयात् यस्य नेच्छेत्पराभवम् ॥' इति । कामन्दकेपि— [2]'आपद्युन्मार्गगमने कार्यकालात्ययेषु च । अपृष्टोपि हितान्वेषी ब्रूयात् कल्याणभाषितम् ॥' इति ॥

तथा च पृष्टेनैव वक्तव्यमिति कथं वक्तुं शक्यत इति चेन्न । पृष्टेनैव वक्तव्यमित्येतस्य स्वस्थावस्थराजविषयत्वात् । आपदि उत्पथं प्रतिपन्ने

1. ३४ अध्याये ४ श्लोकः ।

2. षष्ठसर्गे २९ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

च राजनि केशग्रहणपूर्वकमपृष्टेनापि वक्तव्यमेव । तथा चोद्योगे विदुरं प्रति भगवद्वाक्यम् —[1] 'व्यसने क्लिश्यमानञ्च यो मित्रं नाभिपद्यते । अनर्थज्ञो यथाशक्ति तं नृशंसं विदुर्बुधाः ॥ आ केशग्रहणान्मित्रमकार्यात्सं निवर्तयन् । अवाच्यः कस्यचिद्भवति कृतयत्नो महाबलः ॥' इति ।

प्रत्युत निगृह्य कार्यं वक्तुः श्लाघ्यतामाह कामन्दकः —[2] 'सज्जमानमकार्येषु सुहृदो वारयन्ति ये । न केवलं ते सुहृदो गुरवो गुरवो हि ते ॥' इति । एवं निगृह्य वचनमापन्नराजविषयम् । पृष्टेन वक्तव्यमित्येतत् स्वस्थावस्थराजविषयमित्युभयोर्विषयभेदादविरोध इति ॥

पञ्च रूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च ॥ १२ ॥
औष्ण्यं तथा विक्रमं च सौम्यं दण्डं प्रसन्नताम् ।
धारयन्ति महात्मानो राजानः क्षणदाचर ॥
तस्मात्सर्वास्ववस्थासु मान्याः पूज्याश्च पार्थिवाः ॥ १३ ॥

अनेनाग्न्यादिदिक्पालरूपत्वात् राजा पूज्यो मान्यश्चेति सूचितम् । तथा च राजधर्मे —[3] 'कुरुते पञ्च रूपाणि कालयुक्तानि यस्सदा । राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्मतः । य एभिः स्तूयते शब्दैः कस्तं नार्चितुमिच्छति ॥' इति ॥

तदधुना निखिलमायाविशारदेन भवता रजतबिन्दुविचित्रितेन कपटहाटकमृगरूपेण सुदूरमपवाहिताभ्यां रामलक्ष्मणाभ्यां विरहितां सीतामाहर्तुमिच्छामि ॥

1 ९३ अध्याये १०, ११ श्लोकौ ।
2. पञ्चमसर्गे ४२ श्लोकः ।
3. ६८ अध्याये ४१ श्लोकस्य पूर्वार्धं ५४ श्लोकश्च । नृपतेः इत्यत्र कुरुते इति पाठः मुद्रितपुस्तके दृश्यते ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं कृत्वा त्विदं कार्यं यथेष्टं गच्छ राक्षस।
राज्यस्यार्धं प्रयच्छामि मारीच तव सुव्रत ॥ २३ ॥
न चेत्करोषि मारीच हन्मि त्वामहमद्य वै।
राज्ञो हि प्रतिकूलस्थो न जातु सुखमेधते ॥ २६ ॥

अनेन राजद्वेषी न सुखं प्राप्नोति । तत्प्रसादे चैश्वर्यप्राप्तिरिति सूचितम्। तथा च मनुः—[1] 'त(य)स्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे। मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः॥ यस्तु तं द्वेष्टि संमोहात् स विनश्यत्यसंशयम्। तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः॥' इति। राजधर्मेपि —[2] 'न हि राज्ञः प्रतीपानि कुर्वन्सुखमवाप्नुयात्। पुत्रो भ्राता वयस्यो वा यद्वाप्यात्मसमो भवत्॥ राजाभिपन्नस्य कुतस्सुखानि राजाभ्युपेतं सुखिनं करोति।' इति॥

आसाद्य तं जीवितसंशयस्ते
मृत्युर्ध्रुवो ह्यद्य मया विगृह्य।
एतद्यथावत्परिगृह्य बुद्ध्या
यदत्र कृत्यं कुरु तद्यथा त्वम्॥

अनेन यत्र अयुद्धे आपत्प्राप्तिविनिर्णयः, युद्धे च संशयो जीवितस्य, तत्र युद्धं प्रवर्तितव्यमिति सूचितम् । तथा च उद्योग— 'यत्रायुद्धे ध्रुवो मृत्युः युद्धे जीवितसंशयः। तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः॥' इति॥

इति चत्वारिंशः सर्गः॥

---

1. सप्तमाध्याये ११, १२ श्लोकौ।
2. ६८ अध्याये ४९ श्लोकः ५८ श्लोकस्य उत्तरार्धं च।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ एकचत्वारिंशः सर्गः ॥

एकचत्वारिंशे— आज्ञप्तो रावणेनेत्थं प्रतिकूलं निशाचरः।
अब्रवीत् परुषं वाक्यं मारीचो राक्षसाधिपम् ॥१॥

शत्रवस्तव सुव्यक्तं हीनवीर्या निशाचर।
इच्छन्ति त्वां विनश्यन्तं उपरुद्धं बलीयसा ॥ ४॥

अमात्यैः कामवृत्तो हि राजा कुपथमाश्रितः।
निग्राह्यः सर्वदा सद्भिर्न निगृह्यो निगृह्यसे ॥ ७॥

अनेन उत्पथं प्रतिपन्नो राजा निग्राह्य इति सूचितम्। तदुक्तं कामन्दके— [1] 'राजानं ये ह्युपेक्षन्ते सज्जमानं विकर्मसु। ते गच्छन्त्यकृतात्मानस्सह तेन पराभवम् ॥' इति ॥

धर्ममर्थं च कामञ्च यशश्च जयतां वर।
स्वामिप्रसादात्सचिवाः प्राप्नुवन्ति निशाचर ॥ ८ ॥

विपरीते तु तत्सर्वं व्यर्थं भवति रावण।
व्यसनं स्वामिवैगुण्यात् प्राप्नुवन्तीतरे जनाः ॥ ९ ॥

अनेन सचिवानां स्वामिप्रसादात् श्रेयःप्राप्तिरिति सूचितम्। तथा च राजधर्मे — [2] 'राजा प्रगल्भं पुरुषं करोति राजा कृशं वै कुरुते मनुष्यम्। राजाभिपन्नस्य कुतस्सुखानि राजाभ्युपेतं सुखिनं करोति ॥' इति ॥

राजमूलो हि धर्मश्च जयश्च जयतां वर।
तस्मात्सर्वास्ववस्थासु रक्षितव्या नराधिपाः ॥ १० ॥

---

1. कामन्दके ६ सर्गे ५० श्लोकः।
2. ६८ अध्याये ५८ श्लोकः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

राज्यं पालयितुं शक्यं न तीक्ष्णेन निशाचर ।
न चापि प्रतिकूलेन नाविनीतेन राक्षस ॥ ११ ॥

अनेन तीक्ष्णेन राज्यपरिपालनं कुर्वन् क्षिप्रमेव विनश्यतीति सूचितम् । तथा च राजधर्मे —[1] 'आदाता ह्यनभिज्ञो दण्डेनावर्तयन्प्रजाः । साहसप्रकृती राजा क्षिप्रमेव विनश्यति ॥' इति ।

ये तीक्ष्णमन्त्राः सचिवा भज्यन्ते सह तेन ते ।
विषमे तु रथाः शीघ्रा मन्दसारथयो यथा ॥ १२ ॥

अनेन तीक्ष्णमन्त्रिभी राज्ञो नाशो भवतीति । अतः समीचीनमन्त्री संपादनीय इति सूचितम् । तथा च राजधर्मे —[2] 'असत्पापिष्ठसचिवो वध्यो लोकस्य धर्महा । सहैव परिवारेण क्षिप्रमेव विनश्यति ॥' इति । 'व्यथयेद्धि स राजानं मन्त्रिभिस्सहितोऽनृजुः । मारुतोपहितश्छिद्रे प्रविश्याग्निरिव द्रुमम् ॥[3] 'मुख्यानमात्यान्यो हित्वा निहीनान्कुरुते प्रियान् । स वै व्यसनमासाद्य गाधमार्तो न विन्दति ॥' इति । तथा च कामन्दके —[4] 'निरुन्धानास्सतां मार्गं भक्षयन्ति महीपतिम् । क्रूरात्मानस्तु सचिवाः तस्मात् सुसचिवो भवेत् ॥' इति । 'प्रख्यातवंशमक्रूरं लोकसंग्राहिणं शुचिम् । कुर्वीतात्महिताकाङ्क्षी परिवारं महीपतिः ॥' इति । तथा च पुराणसारे — 'क्रूरं व्यसनिनं लुब्धमप्रगल्भममानुषम् । मूर्खमन्यायचिन्तञ्च नाधिपत्ये नियोजयेत् ॥ पण्डितेषु गुणास्सर्वे मूर्खे दोषा भवन्ति हि । तस्मान्मूर्खसहस्रेषु प्राज्ञमेकं नियोजयेत् ॥ तस्माद्भूमीश्वरोऽमात्यं धर्मकामार्थसिद्धये । गुणवन्तमुपादाय गुणहीनं विसर्जयेत् ॥ प्राज्ञे नियोजितेऽमात्ये सन्ति राज्ञ-

1. ९२ अध्याये १५ श्लोकः ।
2. ९२ अध्याये ९ श्लोकः ।
3. ९३ अध्याये ३२ श्लोकः ।
4. पञ्चमसर्गे ११ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्रयो गुणाः । यशः स्वर्गनिवेशश्च पुष्कलश्च धनागमः ॥ प्रभुत्वं समदृष्टित्वं राज्ञः स्याद्राजविद्यया । तामेव यो न जानाति नासौ मन्त्री न वा नृपः ॥ दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः सन्तापयन्ति कमपथ्यभुजं न रोगाः । कं स्त्री न दर्पयति कं न निहन्ति मृत्युः कं स्त्रीगतं न विषयाः परितापयन्ति ॥' इति ।

बहवस्साधवो लोके युक्तधर्ममनुष्ठिताः ।
परेषामपराधेन विनष्टास्सपरिच्छदाः ॥ १३ ॥

अनेन समीचीनोपि राजा दुष्टसहवासेन नष्टो भवतीति सूचितम् । तथा च कामन्दके —[1] 'श्रुतशीलोपसंपन्नानकस्मादेव दुर्जनः । अन्तः प्रविश्य दहति शुष्कवृक्षमिवानलः ॥' इति ॥

स्वामिना प्रतिकूलेन प्रजास्तीक्ष्णेन रावण ।
रक्ष्यमाणा न वर्धन्ते मेषा गोमायुना यथा ॥

अवश्यं विनशिष्यन्ति सर्वे रावण राक्षसाः ।
येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥

अनेन दुष्टेन राज्ञा रक्षिताः प्रजा नश्यन्तीति सूचितम् । तथा च कामन्दके —[2] 'असत्यता निष्ठुरताऽकृतज्ञता भयं प्रमादोऽलसता विषादिता । तथाभिमानो ह्यतिदीर्घसूत्रता तथाङ्गनाक्षादि विनाशनं श्रियः ॥' इति ॥

निवार्यमाणस्तु मया हितैषिणा
न मृष्यसे वाक्यमिदं निशाचर ।

1. चतुर्थसर्गे १६ श्लोकः ।
2. एकादशसर्गे ४० श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परेतकल्पा हि गतायुषो नराः
हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ २० ॥

अयमर्थ उद्योगे —[1] 'यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् । बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति ॥ बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते । अनयो नयसङ्काशो हृदयान्नापसर्पति ॥' इति ॥

इति एकचत्वारिंशः सर्गः ॥

## अथ द्विचत्वारिंश-त्रिचत्वारिंश-चतुश्चत्वारिंशाः सर्गाः ॥

तेषु — तदनु मारीचः प्रयत्नशतैरप्यनिवार्यमाणे रावणे, तस्मिन् तदीयामेवाभ्यर्थनामभ्युपेत्य, तेन सहाधिरुह्य रथं, समेत्य रामाश्रमाभ्यर्णं, अवतीर्य च रथात्, परिगृह्य कपटहाटकमृगवेषं, सीतां वञ्चयितुं, पञ्चवटीमगाहत । तत्र च विचित्रितरूपधारिणं, मणिप्रवरशृङ्गं, इन्द्रनीलमणिश्रवणं, असितोत्पलवदनं, इन्दुधवलोदरं, अतिमनोहरं तं मृगवरमवलोक्य, जातकुतुका सीता, राममेवमवादीत् ॥

कामवृत्तमिदं रौद्रं स्त्रीणामसदृशं मतम् ।
वपुषा त्वस्य सत्वस्य विस्मयो जनितो मम ॥ २१ ॥

तदधुना समानेयोऽयं मृग इति । अनेन स्त्रीभिः कौतुके दृष्टिः न कर्तव्येति सूचितम् । तथा च उद्योगपर्वणि विदुरनीतौ—[2] 'अनाम्नायमला वेदाः ब्राह्मणस्याव्रतं मलम् । कौतूहलमला साध्वी विप्रवासमलाः स्त्रियः ॥' इति । स्कान्दे स्त्रीधर्मे 'दूरतो वर्जयेद्दोषान् समाजोत्सवदर्शनम् । न गच्छेत्तीर्थयात्रादिविवाहप्रेक्षणादिषु ॥' इति । ततः,

1. ३५ अध्याये ८१, ८२ श्लोकौ ।
2. ३९ अध्याये ७९, ८० श्लोकयोरुत्तरार्धे ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शङ्कमानस्तु तं दृष्ट्वा लक्ष्मणो राममब्रवीत् ।
तमेवैनमहं मन्ये मारीचं राक्षसं मृगम् ॥ ५ ॥
चरन्तो मृगयां हृष्टाः पापेनोपधिना वने ।
अनेन निहता राजन् राजानः कामरूपिणा ॥ ६ ॥
मन्ये मायाविदो मायामृगरूपमिदं कृतम् ॥ ६½ ॥
मृगो ह्येवंविधो रत्नविचित्रो नास्ति राघव ।
जगत्यां जगतीनाथ माया ह्येषा न संशयः ॥ ८ ॥

इति लक्ष्मणवाक्यश्रवणजनितकोपा सीता राममेवमाह—

आर्यपुत्राभिरामोऽयं मृगो हरति मे मनः ।
आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ॥ १० ॥
एवं सीतावचः श्रुत्वा तं दृष्ट्वा मृगमद्भुतम् ।
लोभितस्तेन रूपेण सीतया च प्रचोदितः ॥
उवाच राघवो हृष्टो भ्रातरं लक्ष्मणं वचः ॥ २३ ॥
पश्य लक्ष्मण वैदेह्याः स्पृहां मृगगतामिमाम् ॥ २३½ ॥

अत्र मृगयाव्यसनदोषान् जानन्नपि रामो, 'लोभितस्तेन रूपेण' इत्यनयोक्त्या महापुरुषाणामपि भवितव्यानुरूपतया बुद्धिव्यामोहो भवतीति सूचितम् ॥

मृगयाव्यसनदोषाश्च कामन्दके— [1]'यानक्षोभो यानपातो यानाभिहरणात्तथा । क्षुत्पिपासाश्रमायासाः शीतवातोष्णपीडनम् ॥ अभियातस्य संगत्या यानव्यसनजं महत् । दुःखप्रतप्तसिकताः कुशकण्टकभूमयः ॥ वृक्षसङ्कटता(लितात्) देशाह्लताकण्टकपातनम् । शैलपातलताजालस्थलवल्मीकपीडनम् । स्वसैन्यश्च स्वसैन्यैश्च परिभिन्नैर्निवारणम् ॥ ऋक्षवानरमातङ्ग-

1. सप्तव्यसनवर्गनामके १५ सर्गे ११—२१ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सिह्यव्याघ्रभयानि च। वनानां ध्वंसनं रोहो दिङ्मोहभ्रमणानि च। इत्यादि पृथिवीन्द्राणां मृगयाव्यसनं स्मृतम् ॥ जितश्रमत्वमायाम आममेदः-कफक्षयः । चरस्थिरेषु लक्ष्येषु स्थावर्णे सिद्धिरुत्तमा ॥ मृगयायां गुणानेतानाहुरन्ये न तत्क्षमम् । दोषाः प्राणहराः प्रायः तस्मात्तद्व्यसनं महत् ॥ ओमादया हि जीर्यन्ते योगेनैव दिवानिशम् । वरेषु [नवेषु] यन्न लक्ष्येषु वाणसिद्धिश्च जायेत ॥' इति ॥

महापुरुषाणां बुद्धिव्यामोहो भवतीत्यत्र सभापर्वणि धर्मः— [1]'असंभवे हेममयस्य जन्तोः तथापि रामो लुलुभे मृगाय । प्रायस्समासन्नपराभवाणां धियो विपर्यस्ततरा भवन्ति ॥' इति ॥ प्राचीना अपि— 'रामो हेममृगं न वेत्ति नहुषो याने युनक्ति द्विजान् विप्रादेव सवत्सधेनुहरणे जाता मतिश्चार्जुने । द्यूते भ्रातृचतुष्टयं च महिषीं धर्मात्मजो दत्तवान् प्रायस्सत्पुरुषो ह्यनर्थसमये बुद्ध्या परित्यज्यते ॥' इति । सभापर्वणि — [2]'धातुर्नियोगाद्भूतानि प्राप्नुवन्ति शुभाशुभम् । न निवृत्तिस्तयोरस्ति देवितव्यं पुनर्यदि ॥ अक्षद्यूते समाह्वानं नियोगात्स्थविरस्य च । जानन्नपि क्षयकरं नातिक्रमितुमुत्सहे ॥' इति ॥

कस्य रूपमिदं दृष्ट्वा जाम्बूनदमयप्रभो ।
नानारत्नमयं दिव्यं न मनो विस्मयं व्रजेत् ॥ २९ ॥

मांसहेतोरपि मृगान् विहारार्थं च धन्विनः ।
घ्नन्ति लक्ष्मण राजानो मृगयायां महावने ॥ ३० ॥

अनेन राज्ञां मृगया न दोषायेति सूचितम् । तथा चादिपर्वणि मृगं प्रति पाण्डुः—[3]'अच्छद्मना मायया च मृगाणां वध इष्यते । स

1. ७६ अध्याये ५ श्लोकः ।
2. ७६ अध्याये ३, ४ श्लोकौ ।
3. ११७ अध्याये १३ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एव धर्मो राज्ञां तु तद्धि त्वं किन्तु गर्हसे ॥' इति । नैषधे श्रीहर्षोऽपि-
[1] 'अबलस्वकुलाशिनो झषान् निजनीडद्रुमपीडिनः खगान् । अनवद्य-
तृणार्दिनो मृगान् मृगयाऽघाय न भूभृतां घ्नताम् ॥' इति ॥

धनानि व्यवसायेन विचीयन्ते महावने ।
धातवो विविधाश्चापि मणिरत्नसुवर्णिनः ॥ ३ ॥

तत्सारमखिलं नृणां धनं निचयवर्धनम् ।
मनसा चिन्तितं सर्वं यथा शुक्रस्य लक्ष्मण ॥ ३१ ॥

मनसा चिन्तितं शुक्रस्य निचयवर्धनं इत्ययमर्थ उद्योगे सुपर्ण-
नारदसंवादे--[2] 'अथाह गालवं दीनं सुपर्णः पततां वरः । निर्मितं वह्निना
भूमौ वायुना शोधितं तथा ॥ यस्माद्धिरण्मयं सर्वं हिरण्यं तेन चोच्यते ।
धत्ते धारयते चेदमेतस्मात् कारणाद्धनम् ॥ तदेतत्त्रिषु लोकेषु धनं तिष्ठति
शाश्वतम् ! नित्यं प्रोष्ठपदाभ्यां च शुक्रे धनपतौ तथा ॥ मनुष्येभ्यस्समादत्ते
शुक्रः चित्तार्जितं धनम् । अजैकपादहिर्बुध्न्यै रक्ष्यते धनदेन च ॥ एवं
न शक्यते लब्धुं अलब्धव्यं द्विजर्षभ ॥' इति ॥

अर्थी येनार्थकृत्येन संव्रजत्यविचारयन् ।
तमर्थमर्थशास्त्रज्ञाः प्राहुरर्थ्याश्च लक्ष्मण ॥ ३२ ॥

तदधुना कुम्भसंभवमुनिरिव वातापिं अखिलमायाविशारदमप्यमुं
वधिष्यामि ॥

इह त्वं भव सन्नद्धो यन्त्रितो रक्ष मैथिलीम् ।
अस्यामायत्तमस्माकं यत्कृत्यं रघुनन्दन ॥ ४५ ॥

इत्यभिधाय जनकजामनोहारिणं हरिणमाहर्तुमनुजगाम । तदनु मायाभि-

---

1 द्वितीयसर्गे १० श्लोकः ।

2. ११४ अध्याये १-४ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ज्ञेन मारीचेन सुदूरमपवाहितो रामभद्रः कोपाकुलहृदयः तद्वधाय दिनकर-करप्रकरप्रकाशं अरिमर्दनं शरवरं दृढधनुषि सन्धाय ब्रह्मविनिर्मितमस्त्रं प्रायुङ्क्त । तेन शरेण भृशमभिहतो मारीचो रामवचोनिभेन आर्तस्वरेण सह कार्तस्वरमयीं तनुं विजहौ । तदनु धरातलनिपतितं अपरमिव धराधरं निशाचरमवलोक्य पूर्वोदीरितं लक्ष्मणवचनं मनसि विचिन्तयन् आर्तस्वर-श्रवणेन लक्ष्मणस्सीता च कामवस्थां गमिष्यत इति चिन्ताकुलितान्तःकरणः सत्वरमाश्रमं प्रति प्रतस्थे ॥

इति द्विचत्वारिंश-त्रिचत्वारिंश-चतुश्चत्वारिंशाः सर्गाः ॥

## अथ पञ्चचत्वारिंशः सर्गः ॥

पञ्चचत्वारिंशे — अत्रान्तरे भर्तुरार्तस्वरसदृशमाक्रन्दनमाकर्ण्य विदीर्णहृदया हृदयदयितप्रेम्णा कर्तव्यमजानाना जानकी, 'जानीहि रक्षोवशमापन्नं भ्रातरं' इति सौमित्रिमादिदेश । ततश्च गुरोर्भ्रातुराज्ञा-परिपालनाय गमनाय, मतिमकुर्वति लक्ष्मणे, तत्क्षणमेव समुत्पन्नकोपया सीतया,

सौमित्रे मित्ररूपेण भ्रातुस्त्वमसि शत्रुवत् ।
यस्त्वमस्यामवस्थायां भ्रातरं नाभिपद्यसे ॥ ५ ॥
इच्छसि त्वं विनश्यन्तं रामं लक्ष्मण मत्कृते । ५½ ।
व्यसनं ते प्रियं मन्ये स्नेहो भ्रातरि नास्ति ते ॥ ६½ ॥

इत्यादिपरुषतरवचनैः निर्भर्त्सितोपि लक्ष्मणः सविनयमेवमवादीत् — 'आर्ये, अकार्यमिदं ममाख्यासि । विख्यातपराक्रमस्य लोकत्रयैकधनुर्धरस्य शौर्यराशेरार्यस्य कथमल्पसारात् मृगरूपधरात् निशाचरात् भयमाशङ्कसे । तत्प्रसीद; संत्यज्यतां सन्तापः; कुशलिना रामचन्द्रेण समागमनमेष्यासि । अहं तु,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न्यासभूता हि वैदेहि न्यस्ता मयि महात्मना ।
रामेण त्वं वरारोहे न त्वां त्यक्तुमिहोत्सहे ॥ १७ ॥

न्यासरक्षणं कर्तव्यमित्ययमर्थः प्राक् प्रपञ्चितः ॥

ततश्च कोपसंरक्तलोचनया सीतया—

अनार्याकरुणारंभ नृशंस कुलपांसन ।
अहं तव प्रियं मन्ये रामस्य व्यसनं महत् ॥ २२ ॥

नैतच्चित्रं सपत्नेषु पापं लक्ष्मण यद्भवेत् ।
त्वद्विधेषु नृशंसेषु नित्यं प्रच्छन्नचारिषु ॥ २३ ॥

सुदुष्टस्त्वं वने राममेकमेकोऽनुगच्छसि ।
मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा ॥ २४ ॥

इत्यादि सपरुषमभिधाय दलदरविन्दलोचनं इन्दुवदनं रामचन्द्रमन्तरेण क्षणमात्रमपि जीवितुं अशक्नुवती तव समक्षमेव गोदावरीनिपतनरज्जुबन्धनाग्निप्रवेशनविषभक्षणादिना प्राणांस्त्यक्ष्यामि ॥

न त्वहं राघवादन्यं पदापि पुरुषं स्पृशे ॥ २७ ॥

इति निर्दयमभिधाय सोदराभिघातं प्ररुरोद । तदनु निश्शङ्कमेव क्रूरतरं वदन्तीं सीतां विजितेन्द्रियः सौमित्रिरेवमुवाच—

उत्तरं नोत्सहे वक्तुं दैवतं भवती मम ।
वाक्यमप्रतिरूपं तु न चित्रं स्त्रीषु मैथिलि ॥ २८ ॥
स्वभावस्त्वेष नारीणामेवं लोकेषु दृश्यते ।
विमुक्तधर्माश्चपलास्तीक्ष्णा भेदकराः स्त्रियः ॥ २९ ॥

इत्यभिधाय राममन्वेषितुं जगाम । सीतां [illegible] कामन्दके—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

[1]'महान्तोपि हि भिद्यन्ते स्त्रीभिरद्रिरिवाचलाः ॥' इति । **प्राचीना अपि**—'लवणजलान्ता नद्यः स्त्रीभेदान्तानि बन्धुहृदयानि ॥' इति ॥

ननु, 'शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा । गरुडानिलयोश्शैघ्र्यं अनुगच्छन्ति योषितः ॥' इति स्त्रीदोषानभिधाय, 'दोषैरेतैर्विवर्जिता' इत्यगस्त्यवचनेन [2]'त्वद्विधास्तु गुणैर्युक्ता दृष्टलोकपरावराः' इत्यनसूयावचनेन (च) स्त्रीदोषभूततीक्ष्णत्वाद्यभावावगमात् 'मम हेतोः प्रतिच्छन्नः' इति सीतायास्तीक्ष्णवचनं, 'तीक्ष्णा भेदकराः स्त्रियः' इति लक्ष्मणवचनं च विरुद्धमिति चेन्न । सीतावचनस्य भर्तुरार्तशब्दश्रवणसंजातखेदवशेन आपदि रामोऽवश्यं संरक्षणीय इत्येतदभिप्रायकत्वात् । लक्ष्मणवचनमपि अयुक्ततरसीतावचनश्रवणजनितकोपवशेन प्रवृत्तम् । अगस्त्यादिवचनं तु स्वतः सरला सीतेत्यभिप्रायकमिति न विरोधः ॥

तथा च **युद्धकाण्डे** स्वतस्सारल्यबोधकं उपद्रवकारिणीनां राक्षसीनां वधायोद्युक्तं हनूमन्तं प्रति सीतावचनम् — [3]'भाग्यवैषम्ययोगेन पुरा दुश्चरितेन च । मयैतत्प्राप्यते सर्वं स्वकृतं ह्युपभुज्यते ॥ पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति ॥ लोकहिंसाविहाराणां रक्षसां कामरूपिणाम् । कुर्वतामपि पापानि नैव कार्यमशोभनम् ॥' इति । एवञ्च भिन्नविषयत्वान्न कस्यापि विरोध इति ॥

**इति पञ्चचत्वारिंशः सर्गः ॥**

1. द्वितीयसर्गे ४५ श्लोकस्य पूर्वार्धं ।
2. अयोध्याकाण्डे ११७ सर्गे २७ श्लोकस्य पूर्वार्धं ।
3. युद्धकाण्डे ११६ सर्गे ४०, ४५-४६ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ षट्चत्वारिंशः सर्गः ॥

षट्चत्वारिंशे — अत्रान्तरे धृतकाषायपटः कपटसंन्यासवेषो दशाननो रामलक्ष्मणविरहितां जनकनन्दिनीं अपहर्तुं पर्णशालाभ्यर्णमाससाद ।

तमुग्रं पापकर्माणं जनस्थानरुहा द्रुमाः ।
समीक्ष्य न प्रकम्पन्ते न प्रवाति च मारुतः ॥ ६ ॥
शीघ्रस्रोताश्च तं दृष्ट्वा वीक्षन्तं रक्तलोचनम् ।
स्तिमितं गन्तुमारेभे भयाद्गोदावरी नदी ॥ ७ ॥

ततः पर्णशालायामासीनामदुष्टहृदयां वैदेहीं दुष्टचेता निशाचरः सादरमिदं निजगाद —

का त्वं काञ्चनवर्णाभे पीतकौशेयवासिनि ।
कमलानां शुभां मालां पद्मिनीव हि बिभ्रती ॥ १५ ॥
ह्रीः कीर्तिः श्रीश्शुभा लक्ष्मीरप्सरा वा शुभानने ।
भूतिर्वा त्वं वरारोहे रतिर्वा स्वैरचारिणी ॥ १६ ॥
वरं माल्यं वरं भोज्यं वरं वस्त्रं च शोभने ।
भर्तारं च वरं मन्ये त्वद्युक्तमसितेक्षणे ॥ २६ ॥
कासि कस्य कुतश्च त्वं किंनिमित्तञ्च दण्डकान् ।
एका चरसि कल्याणि घोरान्राक्षससेवितान् ॥ ३१ ॥
इति प्रशस्ता वैदेही रावणेन दुरात्मना ।
द्विजातिवेषपिहितं दृष्ट्वा रावणमागतम् ।
सर्वैरातिथिसत्कारैः पूजयामास मैथिली ॥ ३२ ॥

इति षट्चत्वारिंशः सर्गः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ सप्तचत्वारिंशः सर्गः ॥

सप्तचत्वारिंशे — रावणेन तु वैदेही तथा पृष्टा जिहीर्षता ।
परिव्राजकलिङ्गेन शशंसात्मानमात्मना ॥ १ ॥
ब्राह्मणश्चातिथिश्चैष ह्यनुक्तो हि शपेत माम् ।
इति ध्यात्वा मुहूर्तं तु सीता वचनमब्रवीत् ॥

अत्र यद्यपि 'वीक्षिता वीक्षते नान्यं हसिता न हसत्यपि । भाषिता नाभिभाषेत सा साध्वी साधुलक्षणा ॥' इति व्यासवचनपर्यालोचनया परपुरुषाभिभाषणं निषिद्धम् । तथापि पत्यादिना भाषणे न दोषः । तथा च शंखः — 'न परपुरुषमभिभाषेत अन्यत्र वणिक्प्रव्रजितवैद्यवृद्धेभ्यः' इति । अत एवाग्रे रावणोऽयमिति निश्चयानन्तरं साक्षात्संभाषणमयुक्तमित्यभिप्रायेण 'तृणमन्तरतः कृत्वा रावणं प्रत्यभाषत' इति तृणान्तरकरणप्रतिपादनमुपपन्नम् ॥

यद्वा अन्यस्य वक्तुरभावात् स्वयमेव भाषितवतीत्यविरोधः । तथा च **वनपर्वणि** कोटिकाश्यं प्रति द्रौपदीवचनं — [1] 'अहं ह्यरण्ये कथमेकमेका त्वामालपेयं निरता स्वधर्मे । न त्वेव वक्तास्ति तवेह वाक्यमन्यो नरो वाप्यथवापि नारी ॥ एका ह्यहं संप्रति तेन वाचं ददानि वै भद्र निबोध चेदम् ।' इति । अत एवाग्रे रावणं प्रति सीतावचनम् — रोषरोदनताम्राक्षी भीमाक्षं राक्षसाधिपम् । रुदन्ती करुणं सीता ह्रियमाणेदमब्रवीत् ॥' इति ।

पितृवचनपरिपालनाय वनं प्रविष्टो दाशरथिः । तस्याहं प्रिया सीता नाम । स च वन्यमाहर्तुं वनं प्रविष्टो यावदागच्छति तावदिहास्यतामिति एवं सीतासमुदीरितामतिमधुरां गिरमाकर्ण्य तीव्रतरं रावणः प्रत्युवाच—

1. २६६ अध्याये ३ श्लोकस्य उत्तरार्धं, २ श्लोकस्य उत्तरार्धं, ततः ३ श्लोकस्य पूर्वार्धं च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

येन वित्रासिता लोकाः सदेवासुरपन्नगाः ।
अहं तु रावणो नाम सीते रक्षोगणेश्वरः ॥ २९ ॥

बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः ।
सर्वासामेव भद्रं ते ममाग्रमहिषी भव ॥ २७ ॥

पञ्च दास्यस्सहस्राणि सर्वाभरणभूषिताः ।
सीते परिचरिष्यन्ति भार्या भवसि मे यदि ॥ ३० ॥

रावणेनैवमुक्ता सा कुपिता जनकात्मजा ।
प्रत्युवाचानवद्यांगी तमनादृत्य राक्षसम् ॥ ३१ ॥

महागिरिमिवाकम्प्यं महेन्द्रसदृशद्युतिम [शंपतिम्] ।
महोदधिमिवाक्षोभ्यं अहं राममनुव्रता ॥ ३२ ॥

महाबाहुं महोरस्कं सिंहविक्रान्तगामिनम् ।
नृसिंहं सिंहसङ्काशं अहं राममनुव्रता ॥ ३४ ॥

त्वं पुनर्जम्बुकः सिंहीं मामिच्छसि सुदुर्लभाम् ।
नाहं शक्या त्वया स्प्रष्टुं आदित्यस्य प्रभा यथा ॥ ३६ ॥

पादपान् काञ्चनान्नूनं बहून् पश्यसि मन्दभाक् ।
राघवस्य प्रियां भार्यां यस्त्वमिच्छसि रावण ॥ ३७ ॥

मन्दरं पर्वतश्रेष्ठं पाणिना हर्तुमिच्छसि ।
कालकूटविषं पीत्वा स्वस्तिमान् गन्तुमिच्छसि ॥ ३९ ॥

अक्षि सूच्या प्रमृजसि जिह्वया लेढि च क्षुरम् ॥ ३९½ ॥
अवसज्य शिलां कण्ठे समुद्रं तर्तुमिच्छसि ॥ ४०½ ॥
अयोमुखानां शूलानामग्रे चरितुमिच्छसि ।
कल्याणवृत्तां यो भार्यां रामस्याहर्तुमिच्छसि ॥ ४२ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यदन्तरं सिंहसृगालयोर्वने
यदन्तरं स्यन्दनिकासमुद्रयोः ।
सुराग्र्यसौवीरकयोर्यदन्तरं
तदन्तरं वै तव राघवस्य च ॥ ४४ ॥

यदन्तरं काञ्चनसीसलोहयोः
यदन्तरं चन्दनवारिपङ्कयोः ।
यदन्तरं हस्तिबिडालयोर्वने
तदन्तरं दाशरथेस्तवैव च ॥ ४५ ॥

यदन्तरं वायसवैनतेययोः
यदन्तरं मद्गुमयूरयोरपि ।
यदन्तरं सारसगृध्रयोर्वने
तदन्तरं दाशरथेस्तवैव च ॥ ४६ ॥

तस्मिन् सहस्राक्षसमप्रभावे
रामे स्थिते कार्मुकबाणपाणौ ।
हृतापि तेऽहं न जरां गमिष्ये
वज्रं यथा मक्षिकयावगीर्णम् ॥ ४७ ॥

अत्र रावणेन प्रियोक्त्या विलोभितापि सीता तं निराकृतवतीत्युक्त्या पतिव्रतानामेष धर्म इति सूचितम् । तथा च व्यासः—'लोभितापि परेणार्थैः सा सती लोकभूषणा । दैत्येन प्रार्थिता वापि बलेन विधृतापि वा ॥ वस्त्राद्यैर्वासिता वापि नैवान्यं भजते सती ॥' इति ॥

इति सप्तचत्वारिंशः सर्गः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ अष्टचत्वारिंशः सर्गः ॥

अष्टचत्वारिंशे — एवं वदन्त्यां सीतायां निशाचराधिपः तस्याः पुनः प्रलोभनाय विक्रमार्जितामूर्जितां निजसम्पदं प्रपञ्चयामास—

भ्राता वैश्रवणस्याहं सापत्न्यो वरवर्णिनि ।
रावणो नाम भद्रं ते दशग्रीवः प्रतापवान् ॥ २ ॥

मद्भयात्तु परित्यज्य स्वमधिष्ठानमृद्धिमत् ।
कैलासं पर्वतश्रेष्ठमध्यास्ते नरवाहनः ॥ ५ ॥

यस्य तत्पुष्पकं नाम विमानं कामगं शुभम् ।
वीर्यादेवार्जितं भद्रे येन यामि विहायसम् ॥ ६ ॥ इति ।

तदधुना मध्येसमुद्रं सर्वतः सुभद्रं विद्रावितासेषसुरपरिषत्परम्परं लङ्कापुरमधिवसती भवती ललनाललामभूता मामपि लल बहुकालं; किमनेन तापसरूपधारिणा लघुतरस्त्रीवचसा प्राज्यं राज्यं परित्यक्तवता रामचन्द्रेणेति वादिनं रावणं कोपसंरक्तलोचना पङ्कजनयना परुषतरमेवमवादीत्—

कथं वैश्रवणं देवं सर्वभूतनमस्कृतम् ।
भ्रातरं व्यपदिश्य त्वमशुभं कर्तुमिच्छसि ॥ २१ ॥

अवश्यं विनशिष्यन्ति सर्वे रावण राक्षसाः ।
येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ २२ ॥ इति ॥

इति अष्टचत्वारिंशः सर्गः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ एकोनपञ्चाशः सर्गः ॥

एकोनपञ्चाशे—रावणोऽपि कोपपरीतया सीतया निन्दितमात्मानमवगत्य मन्दरोपमदेहः पुनर्जनकजामनःप्रलोभनाय तत्क्षणमेव परित्यक्तभिक्षुवेषः परिगृहीतनिजरूपो दशाननः तामेवमवादीत्—

त्रिषु लोकेषु विख्यातं यदि भर्तारमिच्छसि ।
मामाश्रय वरारोहे तवाहं सदृशः पतिः ॥ ११ ॥
त्यज्यतां मानुषो भावो मयि भावः प्रणीयताम् ॥ १२½ ॥

इति वचनानि परिश्राव्य,

जग्राह रावणस्सीतां बुधः खे रोहिणीमिव ॥ १६ ॥
वामेन सीतां पद्माक्षीं मूर्धजेषु करेण सः ।
ऊर्वोस्तु दक्षिणेनैव परिजग्राह पाणिना ॥ १७ ॥

अत्र दशग्रीवोऽत्यन्तावमतिकरं कुलक्षयकरं केशग्रहणं स्वस्य भवितव्यानुरूपतया कृतवान्। केशग्रहणस्य, सभानयनपरुषभाषणवस्त्रापहरणाद्यपेक्षया वधापेक्षया च अत्यन्तावमतिकरत्वं कुलक्षयकरत्वं च भारते प्रतिपादितम् ॥

तत्र सभानयनाद्यपेक्षया अवमतिकरत्वं उद्योगे—[1] 'यदि तेऽहमनुग्राह्या यदि तेऽस्ति कृपा मयि । धार्तराष्ट्रेषु वै कोपः सर्वः कृष्ण विधीयताम् ॥ इत्युक्त्वा मृदुसंहारं वृजिनाग्रं सुदर्शनम् । सुनीलमसितापाङ्गी सर्वगन्धाधिवासितम् ॥ सर्वलक्षणसंपन्नं महाभुजगवर्चसम् । केशपक्षं वरारोहा गृह्य सव्येन पाणिना ॥ पद्माक्षी पुण्डरीकाक्षमुपेत्य गजगामिनी । अश्रुपूर्णेक्षणा कृष्णा कृष्णं वचनमब्रवीत् ॥ अयं ते

1 ८२ अध्याये ३२—३६, ३९ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुण्डरीकाक्ष दुश्शासनकरोद्धृतः । स्मर्तव्यः सर्वकालेषु परेषां सन्धिमिच्छता ॥ दुश्शासनभुजं श्यामं संछिन्नं पांसुकुण्ठितम् । यद्यहं न प्रपश्यामि का शान्तिर्हृदयस्य मे ॥' इति ॥

**वनपर्वण्यपि** —[1] 'कुले महति जातास्मि दिव्येन विधिना किल । पाण्डवानां प्रिया भार्या स्नुषा पाण्डोर्महात्मनः ॥ कचग्रहमनुप्राप्ता सास्मि कृष्ण वरा सती । कृष्णः —[2] 'रोदिष्यन्ति स्त्रियो ह्येवं येषां क्रुद्धासि भामिनि । सत्यं ते प्रतिजानामि राज्ञां राज्ञी भविष्यसि ॥' इति ॥

**द्रोणपर्वणि** वधापेक्षया केशग्रहणस्यात्यन्तावमतिकरत्वं च द्रोणवधानन्तरं दुर्योधनादीन् प्रत्यश्वत्थामवचनात् अवगम्यते —[3] 'गतस्तु वीरलोकाय पिता मम न संशयः । न शोच्यः पुरुषव्याघ्रः तथा मम न संशयः ॥ यत्तु धर्मप्रवृत्तस्सन् केशग्रहणमाप्तवान् । पश्यतां सर्वसैन्यानां तन्मे मर्माणि कृन्तति ॥'[4] 'पित्रा तु मम सावस्था प्राप्ता निर्बन्धुना यथा । मयि शैलप्रतीकाशे पुत्रे शिष्ये च जीवति ॥ यन्मां द्रोणस्सुतं प्राप्य केशग्रहणमाप्तवान् । स तथाहं करिष्यामि यथा भारतसत्तम ॥ परलोकं गतस्यापि भविष्याम्यनृणः पितुः । '[5] 'शपे सत्येन कौरव्य इष्टापूर्तेन चैव हि ॥ अहत्वा सर्वपाञ्चालान् जीवेयं न कथञ्चन । धृष्टद्युम्नं च समरे हन्ताहं पापकारिणम् ॥ पाञ्चालानां वधं कृत्वा शान्तिं लप्स्यामि कौरव ।' इति ॥

---

1. १२ अध्याये २० श्लोकः २१ श्लोकस्य पूर्वार्धं च ।
2. १२ अध्याये २८, ३० श्लोकयोः पूर्वार्धे ।
3. १९५ अध्याये ७ श्लोकस्य उत्तरार्धं ८ श्लोकः ९ श्लोकस्य उत्तरार्धं च ।
4. १९५ अध्याये १९, २० श्लोकौ २१ श्लोकस्य पूर्वार्धं च ।
5. १९६ अध्याये १४ श्लोकस्य उत्तरार्धं १५ श्लोकस्य पूर्वार्धं १६ श्लोकस्य पूर्वार्धं १७ श्लोकस्य पूर्वार्धं च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत एवाग्रे जटायुवधानन्तरं रावणविनाशस्य केशपक्षपरामर्शो मुख्यं निमित्तमिति प्रतिपादितं —

[1]जीवितान्ताय केशेषु जग्राहान्तकसन्निभः ॥ १४ ॥

प्रधर्षितायां सीतायां बभूव सचराचरम् ।
जगत्सर्वममर्यादं तमसान्धेन संवृतम् ॥ १५ ॥

न वाति मारुतस्तत्र निष्प्रभोऽभूद्दिवाकरः ॥ १६ ॥

दृष्ट्वा सीतां परामृष्टां दीनां दिव्येन चक्षुषा ।
कृतं कार्यमिति श्रीमान् व्याजहार पितामहः ॥ १७ ॥

प्रहृष्टा व्यथिताश्चासन् सर्वे ते परमर्षयः ।
दृष्ट्वा सीतां परामृष्टां दण्डकारण्यवासिनः ॥
रावणस्य विनाशं च प्राप्तं बुद्ध्वा यदृच्छया ॥ १८ ॥ इति ।

अत एव दशग्रीवः कुलक्षयरूपं फलं प्राप्तवान् । तत्समसमयपलायितासु वनदेवतासु, कुररीमिव राम रामेति भृशतरं क्रोशन्तीं रामसीमन्तिनीं अङ्केनादाय खरपरिकलितेन रथेन सहसा विहायसमनुससार ॥

तदनु निशाचराधमेन रावणेन नीयमाना जनकनन्दिनी समुद्भ्रान्तचित्तेव भृशमेवं चुक्रोश—

हा लक्ष्मण महाबाहो गुरुचित्तप्रसादक ।
ह्रियमाणां न जानीषे रक्षसा माममर्षिणा ॥ २४ ॥

जीवितं सुखमर्थांश्च धर्महेतोः परित्यजन् ।
ह्रियमाणामधर्मेण मां राघव न पश्यसि ॥ २५ ॥

ननु नामाविनीतानां विनेतासि परन्तप ।

---

1. आरण्यकाण्डे ५१ सर्गे ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कथमेवंविधं पापं न त्वं शाधि[ स्सि ]हि रावणम् ॥ २६ ॥

न तु सद्योऽविनीतस्य दृश्यते कर्मणः फलम् ।
कालोऽप्यङ्गी भवत्यत्र सस्यानामिव पक्तये ॥ २७ ॥

अनेन कृतं कर्म कालमपेक्ष्यैव फलतीति सूचितम् । तथा च **राजधर्मे** व्यासः — [1] 'न कर्मणा लभ्यते चिन्तया वा नाप्यस्ति दाता पुरुषस्य कश्चित् । पर्याययोगाद्विहितं विधात्रा कालेन सर्वं लभते मनुष्यः ॥ न बुद्धिशास्त्राध्ययनेन शक्यं प्राप्तुं विशेषं मनुजैरकाले । मूर्खोऽपि चाप्नोति कदाचिदर्थान् कालो हि कार्यं प्रति निर्विशेषः ॥ नाभूतिकालेषु फलं ददन्ति शिल्पाश्च मन्त्राश्च तथौषधानि । तान्येव कालेन समाहितानि सिद्ध्यन्ति वर्धन्ति च भूतिकाले ॥ कालेन शीघ्राः प्रवहन्ति वाताः कालेन वृष्टिर्जलदानुपैति । कालेन पद्मोत्पलवत् जलं च कालेन पुष्यन्ति वनेषु वृक्षाः ॥ कालेन कृष्णाश्च सिताश्च रात्र्यः कालेन चन्द्रः प्रतिपूर्णबिम्बः । नाकालतः पुष्पफलं द्रुमाणां नाकालवेगास्सरितो वहन्ति ॥ नाकालमत्ताः खगपन्नगाश्च मृगद्विपाश्शैलमहामृगाश्च । नाकालतः स्त्रीषु भवन्ति गर्भाः नायान्त्यकाले शिशिरोष्णवर्षाः ॥ नाकालतो म्रियते जायते वा नाकालतो व्याहरते च बालः । नाकालतो यौवनमभ्युपैति नाकालतो रोहति बीजमुप्तम् ॥ नाकालतो भानुरुपैति योगं नाकालतोऽस्तं गिरिमभ्युपैति । नाकालतो हीयते वर्धते च चन्द्रस्समुद्रश्च महोर्मिमाली ॥' इति ॥

हा कैकेयि, सकामा भवेदानीं । वनदेवताः, युष्मानामन्त्रये । रक्षसाऽपहृतां मां निवेदयत सानुजाय रामायेति । एवं सरित्सरोवरवनवनस्पतिमृगपतत्रिपाषाणतृणगुल्मलतादिकमपि संप्रार्थ्य न्यग्रोधस्थितं अपरमिव नगराजं पतगराजमेवमवादीत् —

1. २५ अध्याये ५—१३ श्लोकाः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जटायो पश्य मामार्य ह्रियमाणामनाथवत् ।
अनेन राक्षसेन्द्रेण करुणं पापकर्मणा ॥ ३९ ॥ इति ॥

इति एकोनपञ्चाशः सर्गः ॥

## अथ पञ्चाशः सर्गः ॥

पञ्चाशे— ततः पर्वतकूटाभस्तीक्ष्णतुण्डः खगोत्तमः ।
वनस्पतिगतः श्रीमान् व्याजहार शुभां गिरम् ॥ २ ॥

कथं राजा स्थितो धर्मे परदारान् परामृशेत् ।
रक्षणीया विशेषेण राजदारा महाबल ॥ ६ ॥ इति ।

अनेन परदारा न ग्राह्याः । विशेषेण राजदारा इति सूचितम् । अत एव तद्ग्रहणे प्रायश्चित्तमाह पराशरः—[1]'चतुर्वर्गेषु सर्वेषु हितं वक्ष्यामि निष्कृतिम् । अगम्यागमने चैव शुद्धिं चान्द्रायणं चरेत् ॥' इति । 'ऋतावुपेयात्' इति शास्त्रात् गम्या स्वभार्या । अन्या अगम्या इति माधवाचार्याः । राजदारविषये व्याघ्रः —'आश्रितस्यापि विदुष आहिताग्नेश्च योगिनः । आचार्यस्य च राज्ञश्च भार्यां प्रव्रजितां तथा ॥ धात्रीं पुत्रीं च पौत्रीं च सखीं मातुस्तथैव च । पितुस्सखीं तथा गत्वा गुरुतल्पव्रतं चरेत् ॥' इति ॥

निवर्तय मतिं नीचां परदाराभिमर्शनात् ।
न तत्समाचरेद्धीरो यत्परोऽस्य विगर्हयेत् ॥ ७ ॥

अनेन लोकनिन्दितं कर्म न कर्तव्यमिति । तथा च विष्णुपुराणे—[2]'परित्यजेदर्थकामौ धर्मपीडाकरौ नृप । धर्ममप्यशुभोदर्कं लोकविक्रुष्टमेव

1. दशमाध्याये प्रथमः श्लोकः ।
2. तृतीयांशे ११ अध्याये ६ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

च ॥' इति । **कामन्दकेऽपि** — [1] 'आयत्याञ्च तदात्वे च यत्स्यादास्वादपेशलम् । तत्किञ्चिन्नपि कुर्वीत न लोकद्विष्टमाचरेत् ॥' इति ॥

**यथात्मनस्तथान्येषां दारा रक्ष्या विमर्शता ॥ ७ ॥**

**धर्ममर्थं च कामं च शिष्टाः शास्त्रेष्वनागतम् ।**
**व्यवस्यन्ति न राजानः पौलस्त्यकुलनन्दन ॥ ८ ॥**

**राजा धर्मश्च कामश्च द्रव्याणां चोत्तमो निधिः ।**
**धर्मश्शुभं वा पापं वा राजमूलात्प्रवर्तते ॥ ९ ॥**

अनेन प्रजा राजानमनुसरन्तीति सूचितम् । इदं प्रागुक्तम् ॥

**पापस्वभावश्चपलः कथं त्वं रक्षसां वर ।**
**ऐश्वर्यमिह संप्राप्तो विमानमिव दुष्कृती ॥ १० ॥**

**कामस्वभावो यो यस्य न स शक्यः प्रमार्जितुम् ।**
**न हि दुष्टात्मनामार्य आवसत्यालये चिरम् ॥ ११ ॥**

अनेन पापिष्ठस्य ऐश्वर्यं न भवति । प्राप्तं चेदपि चिरं न तिष्ठति । तथा च **कामन्दकः** — [2] 'धर्मात्पैजवनो राजा चिराय बुभुजे भुवम् । अधर्माच्चैव नहुषः प्रतिपेदे रसातलम् ॥' इति ॥

**विषये वा पुरे वा ते यदा रामो महाबलः ।**
**नापराध्यति धर्मात्मा कथं तस्यापराध्यसि ॥ १२ ॥**

अनेन अनपराधिषु समीचीनेषु अपराधो न कर्तव्य इति सूचितम् । तथा **चोद्योगे** दुर्योधनं प्रति भगवद्वचनम् — [3] 'आत्मानं कृन्तति ह्येष वनं

1. स्वाम्यनुजीविवृत्तनामके षष्ठसर्गे ६ श्लोकः ।
2. इन्द्रियविद्यावृद्धसंयोगनामके द्वितीयसर्गे ७ श्लोकः ।
3. १३४ अध्याये ४० श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परशुना यथा । यस्सम्यग्वर्तमानेषु मिथ्या राजन् प्रवर्तते ॥' इति ।

**स भारस्सौम्य भर्तव्यो यो नरं नावसादयेत् ।**
**तदन्नमपि भोक्तव्यं जीर्यते यदनामयम् ॥ १७ ॥**

अनेन अशक्यं कर्म न कर्तव्यमिति सूचितम् । तथा च **कामन्दके**— [1]'शक्याशक्यपरिच्छेदं कुर्याद्बुद्ध्या प्रसन्नया । केवलं दन्तभङ्गाय दन्तिनः शैलताडनम् ॥' इति ॥

**यत्कृत्वा न भवेद्धर्मो न कीर्तिर्वा यशो भुवि ।**
**शरीरस्य भवेत्खेदः कस्तत्कर्म समाचरेत् ॥ १८ ॥**

अनेन निष्फलमायासकरं कर्म नारम्भणीयमिति सूचितम् । तथा च **मनुः**— [2]'न कर्म निष्फलं कुर्यादायत्यामसुखोदयम् ॥' इति ।

**न शक्तस्त्वं बलाद्धर्तुं वैदेहीमनुपश्यतः ।**
**हेतुभिर्न्यायसंयुक्तां ध्रुवां वेदश्रुतीमिव ॥ २१ ॥**

अनेन श्रुतिप्रतिपन्नोऽर्थो नाभासैस्तर्कैः बाधितुं शक्यत इति सूचितम् । तथा च **मनुः**— [3]'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः । ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ । योऽवमन्येत ते तूभे हेतुशास्त्राश्रयान्नरः ॥ स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ।' इति । [4]'नैषा तर्केण मतिरापनेया' इति च । तदधुना रामविरहितां वैदेहीं परिगृह्य चोरवन्निर्गच्छन्तं,

**वृन्तादिव फलं त्वां तु पातयेयं रथोत्तमात् ॥ २८ ॥**

इत्यब्रवीत् ॥

इति पञ्चाशः सर्गः ॥

---

1. द्वादशसर्गे २९ श्लोकः । 2. चतुर्थाध्याये ७० श्लोकस्य उत्तरार्धं ।
3. द्वितीयाध्याये १०, ११ श्लोकौ ।
4. कठोपनिषदि प्रथमाध्याये द्वितीयवल्ल्यां ९ ऋचि ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ एकपञ्चाशः सर्गः ॥

**एकपञ्चाशे** — ततः परुषतरपक्षिराजवचनश्रवणजनितकोपो राक्षसाधिपः पतगेन्द्रमभिदुद्राव । तदनु गगनगतयोः प्रचण्डानिलविचलितनीरदयोरिव कोपाद्विचलितयोः पक्षिराक्षसयोः संप्रवृत्ते संप्रहारे पतगवरो निशाचरविमुक्तान् रुक्मपुंखान् विशिखान् परिगृह्य तीक्ष्णनखाभ्यां चरणाभ्यां चञ्चुपुटकोटिकुट्टनेन च तच्छरीरं सञ्जातव्रणमकरोत् । तदनु संजातकोपेन दशाननेन मृत्युदण्डनिभैः दशभिः मार्गणैः भिन्नगात्रोपि पतत्री सत्वरमभिपत्य सशरं चापं चरणाभ्यां बभञ्ज ॥

तदनु सज्जेनापरेण धनुषा शरान्वर्षतो राक्षसस्य चरणाभ्यामाभज्य धनुः, अवधूय च तीक्ष्णपक्षाभ्यां बाणगणं अभिहत्य च रथधुरावहान् चतुरान् चतुरः पिशाचवदनान् खरानाभज्य च मणिप्रवरविचित्रं रथं निपात्य च छत्रचामरे सारथेश्शिरस्तीक्ष्णतुण्डेन अखण्डयत् ॥

स भग्नधन्वा विरथो हताश्वो हतसारथिः ।
अङ्केनादाय वैदेहीं पपात भुवि रावणः ॥ २० ॥

ततः परिश्रान्तं पक्षिराजमवलोक्य सत्वरमुत्थाय, मैथिलीमादाय समुत्पतन्तं रावणं जटायुरेवमब्रवीत् —

अनुबन्धमजानन्तः कर्मणामविचक्षणाः ।
शीघ्रमेव विनश्यन्ति यथा त्वं विनशिष्यसि ॥ २६ ॥

यथा त्वया कृतं कर्म भीरुणा लोकगर्हितम् ।
तस्कराचरितो मार्गो नैष वीरनिषेवितः ॥ २९ ॥

परेतकाले यत्कर्म पुरुषः प्रतिपद्यते ।
विनाशायात्मनोऽधर्म्यं प्रतिपन्नोऽसि कर्म तत् ॥ ३१ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पापानुबन्धो वै यस्य कर्मणः कर्म को नु तत् ।
कुर्वीत लोकाधिपतिः स्वयंभूर्भगवानपि ॥ ३२ ॥

इत्यभिधाय दुष्टवारणमाधोरण इव दशकन्धरकन्धरायां निपत्य तीक्ष्णाङ्कुशनिभैः नखैः कुन्तनिभचञ्चुपुटकोटिकुट्टनैश्च पार्श्वं विदार्य,

केशांश्चोत्पाटयामास नखपक्षमुखायुधः ॥ ३५ ॥
वामबाहून् दश तदा व्यपाहरदरिन्दमः ॥ ३८ ॥

तदनु पतगराजदष्टान्पन्नगानिव विषज्वालावलीयुक्तान् स्वभुजानवलोक्य कोपकलुषलोचनो दशाननः

सीतामुत्सृज्य मुष्टिभ्यां गृध्रराजं विपोथ्य च ॥ ३९½ ॥
पक्षौ पार्श्वं च पादौ च खड्गमुद्धृत्य सोऽच्छिनत् ॥ ४२ ॥

इति एकपञ्चाशः सर्गः ॥

## अथ द्विपञ्चाशः सर्गः ॥

द्विपञ्चाशे— तदनु,

आलिङ्ग्य गृध्रं निहतं रावणेन बलीयसा ।
विललाप सुदुःखार्ता सीता शशिनिभानना ॥ ३ ॥

ननु, [1] 'भर्तुर्भक्तिं पुरस्कृत्य रामादन्यस्य वानर । नाहं स्प्रष्टुं तदा गात्रं इच्छेयं वानरोत्तम ॥ यदहं गात्रसंस्पर्शं रावणस्य गता बलात् । अनीशा किं करिष्यामि ह्यनाथा विवशा सती ॥' इति सुन्दरकाण्डे हनूमन्तं प्रति परपुरुषसंस्पर्शनमात्रमपि अनुचितमिति वक्ष्यति । एवं

1. सुन्दरकाण्डे ३७ सर्गे ६२ ६३ श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तादृशीयं सीता परपुरुषं जटायुषं कथमालिङ्गितवतीति चेन्न। दुष्टभावेन परपुरुषालिङ्गनस्य दोषत्वेऽपि दुःखपरिहाराय आतुरवृद्धस्पर्शने दोषाभावात्। तत्र **गौतमः** —[1] ‘स्त्रीप्रेक्षणालंभने मैथुनशङ्कायाम्’ इति। वर्जयेदिति शेषः। अत्र **मिताक्षरा**—प्रकर्षेण ईक्षणं अवयवशो निरूपणं, न यादृच्छिकदर्शनम्। आलंभनं स्पर्शनं। मैथुनशङ्कायामिति वचनात् बालायां वृद्धायां, आतुरायां स्वस्य च बालादेर्न दोष इति। एवं समानन्यायतया बालवृद्धातुराणां परपुरुषाणां स्त्रीभिः स्पर्शने कृतेऽपि न दोषः॥

तथाच ‘गृध्रराजः पुराणोऽसौ श्वशुरस्य सखा मम’ इति सीतावचनात् वृद्धः श्वशुरसखश्च जटायुः स्वभयपरित्राणाय प्रवृत्तत्वात्, ‘अन्नदाता भयत्राता पञ्चैते पितरस्तथा’ इति वचनावगतपितृरूपश्च भवति। अत एतादृशस्य कृच्छ्रगतस्य स्पर्शने न दोष इति॥

**निमित्तं लक्षणज्ञानं शकुनिस्वरदर्शनम्।**
**अवश्यं सुखदुःखेषु नराणामिह दृश्यते॥ ४॥**
**नूनं राम न जानासि महद्व्यसनमात्मनः।**
**धावन्ति नूनं काकुत्स्थ मदर्थं मृगपक्षिणः॥ ५॥**

इदञ्च शुभाशुभशकुनजातं कृत्स्नमपि प्राक् प्रपञ्चितम्। इति विलपन्तीं सीतामन्तकसन्निभो दशाननः केशेषु जग्राह। ततो रावणेन नीयमानायाः सीतायाः

**चरणान्नूपुरं भ्रष्टं वैदेह्या रत्नभूषितम्॥ ३५½॥**
**तस्याः स्तनान्तराद्भ्रष्टो हारस्ताराधिपद्युतिः॥ ३८½॥**

**इति द्विपञ्चाशः सर्गः॥**

1. द्वितीयाध्याये ३२ सूत्रं।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ त्रिपञ्चाशः सर्गः ॥

**त्रिपञ्चाशे** — एवमतिवेगात् खमुत्पतन्तं रक्षोधिपमवलोक्य रोषारुणितलोचना सीता बहुविधं निर्भर्त्स्य तमेवमवादीत् —

ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे ।
स्त्रियाश्च हरणं नीच रहिते च परस्य च ॥ ७ ॥

कथयिष्यन्ति लोकेषु पुरुषाः कर्म कुत्सितम् ।
सुनृशंसमधर्मिष्ठं तव शौण्डीर्यमानिनः ॥ ८ ॥

कुलाक्रोशकरं लोके धिक्ते चारित्रमीदृशम् ॥ ९ ॥

अनेन परदारापहरणं शूराणामधर्माधायकं अयशस्करं च भवतीति सूचितम् । तथा च विराटपर्वणि कीचकवधे —[1] 'अप्रार्थनीयामिह मां सूतपुत्राभिमन्यसे । विवर्जनं ह्यकार्याणां एतत्सत्पुरुषव्रतम् ॥ परदारास्मि भद्रं ते न युक्तं त्वयि सांप्रतम् । दयिताः प्राणिनां दारा धर्मं समनुचिन्तय ॥ परदारे न ते बुद्धिर्जातु कार्या कथञ्चन । मिथ्याभिगृध्रो हि नरः पापात्मा मोहसंस्थितः ॥ अयशः प्राप्नुयाद्घोरं महद्वा प्राप्नुयाद्भयम् ॥' इति ॥

परमं खलु ते वीर्यं दृश्यते राक्षसाधम ।
विश्राव्य नामधेयं हि युद्धे नापहृता त्वया ॥ ६ ॥

किं कर्तुं शक्यमेवं हि यज्जवेनैव धावसि ।
मुहूर्तमुप[मपि]तिष्ठस्व न जीवन् प्रतियास्यसि ॥ १० ॥

न हि चक्षुष्पथं प्राप्य तयोः पार्थिवपुत्रयोः ।
ससैन्योऽपि समर्थस्त्वं मुहूर्तमपि जीवितुम् ॥ ११ ॥

---

1. १४ अध्याये ३४ श्लोकस्य पूर्वार्धं ३६ श्लोकस्य उत्तरार्धं ३५ श्लोकः ३६ श्लोकस्य पूर्वार्धं ततः १७ श्लोकश्च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बद्धस्त्वं कालपाशेन दुर्निवारेण रावण ।
क्व गतो लप्स्यसे शर्म मम भर्तुर्महात्मनः ॥ २३ ॥
स कथं राघवो वीरस्सर्वास्त्रकुशलो बली ।
न त्वां हन्याच्छरैस्तीक्ष्णैरिष्टभार्यापहारिणम् ॥ २८ ॥

अनेन अविजित्य शूरं तद्भार्यापहर्तुः न क्वापि सुखं भवति। किन्तु तेनैव वीरेण सपुत्रज्ञातिबान्धवस्य नाशो भवतीति सूचितम् । तथा च **वनपर्वणि** धौम्यः — [1] 'नेयं शक्या त्वया नेतुमविजित्य महारथान् । धर्मं क्षत्रस्य पौराणमवेक्षस्व जयद्रथ ॥ क्षुद्रं कृत्वा फलं पापं त्वं प्राप्स्यसि न संशयः । आसाद्य पाण्डवान् वीरान् धर्मराजपुरोगमान् ॥' इति । **तत्रैव** भीमोऽपि जयद्रथं प्रति — [2] 'न हि मे मोक्ष्यते जीवन् मूढस्सैन्धवको नृपः । पातालतलसंस्थोऽपि यदि शक्रोऽस्य सारथिः ॥' इति ।

**विराटेऽपि** द्रौपदी — [3] 'अन्तर्महीं वा यदि वोर्ध्वमुत्पतेः समुद्रपारं यदि वा प्रधावसि । तथापि तेषां न विमोक्षमर्हसि प्रमाथिनो देवसुता हि खेचराः ॥ तेषां प्रियां प्रार्थयतो न ते भुवं गत्वा दिवं वा शरणं भविष्यति । न वर्तते कीचक ते दृशा शुभं यातो न संजीवनमर्थयेत ॥' इति ॥

एवं वीरभार्यापहर्तुर्वधावमानादिकमवगम्यते । तत्र वधविषये **विराटे** भीमः — [4] 'अद्याहमनृणो भूत्वा भ्रातुर्भार्यापहारिणम् । शान्तिं लप्स्यामि परमां हत्वा सैरन्ध्रिकण्टकम् ॥ इत्येवमुक्त्वा पुरुषप्रवीरः तं कीचकं क्रोधसरागनेत्रः । आस्रस्तवस्त्राभरणं स्फुरन्तं उद्भ्रान्तनेत्रं व्यसुमुत्ससर्ज ॥

1. २६८ अध्याये २६, २७ श्लोकौ ।
2. २७१ अध्याये ४२ श्लोकः ।
3. १४ अध्याये ५०, ५२ श्लोकौ ।
4. २२ अध्याये ७९, ८०, ८३, ८६, ८७ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्य पादौ च पाणी च शिरो ग्रीवां च सर्वशः । काये प्रवेशयामास पशोरिव पिनाकधृक् ॥ ततोऽग्निं तत्र प्रज्वाल्य दर्शयित्वा तु कीचकम् । पाञ्चालीं स तदा वीर इदं वचनमब्रवीत् ॥ प्रार्थयन्ति सुकेशान्ते ये त्वां शीलगुणान्विताम् । एवं ते भीरु वध्यन्ते कीचकः शोभते यथा ॥' इति ॥

एवमुपकीचकानामपि तद्बन्धूनां वधः प्रतिपादितः **तत्रैव**—[1] 'विमुच्य द्रौपदीं तत्र प्राद्रवन्नगरं प्रति । द्रवतस्तांस्तु संप्रेक्ष्य स वज्री दानवानिव ॥ शतं पञ्चाधिकं भीमः प्राहिणोद्यमसादनम् । तत आश्वासयत्कृष्णां संप्रमुच्य विशांपते ॥ एवं ते भीरु वध्यन्ते ये त्वां क्लिश्यन्त्यनागसम् ॥' इति ।

अवमतिविषये आरण्यपर्वणि द्रौपदीप्रमाथे [2] 'जयद्रथस्तु संप्रेक्ष्य भ्रातरावुद्यतावुभौ । प्राधावत्कर्णमव्यग्रो जीवितेप्सुस्सुदुःखितः ॥ तं भीमसेनो धावन्तमवतीर्य रथाद्बली । अभिद्रुत्य निजग्राह केशपक्षेष्वमर्षणः ॥ समुद्यम्य च तं भीमो निष्पिपेष महीतले । शिरो गृहीत्वा राजानं ताडयामास चैव हि ॥ पुनस्संजीवमानस्य तस्योत्पतितुमिच्छतः । पदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः । तस्य जानुं ददौ भीमो जघ्ने चैनमरत्निना ॥ संमोहमगमद्राजा प्रहारवरपीडितः । सरोषं भीमसेनं तु वारयामास फाल्गुनः ॥ दुश्शलायाः कृते राजा यत्तदाहेति कौरव ।

भीमः — नायं पापसमाचारो मत्तो जीवितुमर्हति । कृष्णायास्तदनर्हायाः परिक्लेष्टा नराधमः ॥ किन्नु शक्यं मया कर्तुं यद्राजा सततं घृणी । त्वञ्च बालिशया बुद्ध्या सदैवास्मान् प्रबाधसे ॥ एवमुक्त्वा सटास्तस्य पञ्च चक्रे वृकोदरः । अर्धचन्द्रेण बाणेन किञ्चिदब्रुवतस्तदा ॥ विकत्थयित्वा

1. २३ अध्याये २६ श्लोकस्य उत्तरार्धं २७ श्लोकः २८ श्लोकस्य उत्तरार्धं ३० श्लोकस्य पूर्वार्धं च ।

2. २७२ अध्याये [illegible] श्लोकस्य उत्तरार्धं च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

राजानं ततः प्राह वृकोदरः । जीवितुं चेच्छसे मूढ हेतुं मे गदतः शृणु ॥ दासोऽस्मीति तथा वाच्यं संसत्सु च सभासु च । एवं ते जीवितं दद्या-मेष युद्धजितो विधिः ॥ एवमस्त्विति तं राजा क्लिश्यमानो जयद्रथः । प्रोवाच पुरुषव्याघ्रं भीममाहवशोभिनम् ॥ तत एवं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः । रथमारोपयामास विसंज्ञं पांसुगुण्ठितम् ॥ ततस्तं रथमास्थाय भीमः पार्थानुगस्तदा । अभ्येत्याश्रममध्यस्थमभ्यगच्छद्युधिष्ठिरम् ॥ दासोऽयं मुच्यतां राज्ञस्त्वया पञ्चसटः कृतः ।' इति ॥

पश्याम्यद्य हि कण्ठे त्वां कालपाशावपाशितम् ॥ १८ ॥
तथा चास्मिन्भयस्थाने न बिभेषि दशानन ।
व्यक्तं हिरण्मयान्हि त्वं संपश्यसि महीरुहान् ॥ १९ ॥
नदीं वैतरणीं घोरां रुधिरौघविवाहिनीम् ।
खड्गपत्रवनं चैव भीमं पश्यसि रावण ॥ २० ॥
तप्तकाञ्चनपुष्पां च वैडूर्यप्रवरच्छदाम् ।
द्रक्ष्यसे शाल्मलीं तीक्ष्णामायसैः कण्टकैश्चिताम् ॥ २१ ॥

अनेन परदारापहर्तुरचिरात् मृत्युर्भवति । तदनन्तरं वैतरण्यादि-नरकानुभवश्च भवतीति सूचितम् । तथा च विष्णुपुराणे —[1] 'परदारं (रान्) न गच्छेत मनसापि कदाचन । किमुवाचाक्षिबन्धोपि न तेष्वस्ति व्यवायिनाम् ॥ मृतो नरकमभ्येति हीयतेऽत्रापि चायुषः । परदाररतिः पुंसामुभयत्रापि भीतिदा ॥' इति ।

वैतरण्यादीनां नरकत्वं तत्रैव प्रतिपादितम् —[2] 'ततश्च नरका विप्र भुवोऽधः सलिलस्य च । पापिनो येषु पात्यन्ते तान् शृणुष्व महामते ॥

1. तृतीयेंशे ११ अध्याये १२३, १२४ श्लोकौ ।
2. द्वितीयेंशे ६ अध्याये १ … श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रौरवस्सूकरो रोधस्तालो विशसनस्तथा । महाज्वालस्तप्तकुम्भो लवणोऽथ विलोहितः ॥ रुधिरांभो वैतरणिः कृमीशः कृमिभोजनः । असिपत्रवनः कृष्णो लालाभक्षश्च दारुणः ॥ तथा पूयवहः पापो वह्निज्वालोप्यधश्शिरः । सन्दंशः कृष्णसूत्रश्च तमश्चावीचिरेव च ॥ श्वभोजनोऽथाप्रतिष्ठः आवीचिश्च तथापरः । इत्येवमादयश्चान्ये नरका भृशदारुणाः ॥ यमस्य विषये घोराश्शस्त्रास्त्रविष[ग्निभय]दायिनः । पतन्ति येषु पुरुषाः पापकर्मरताश्च ये ॥' इति ॥

एवमेव परदारासक्तानामिन्द्रनहुषादीनां विविधानर्थप्राप्तिर्भारते प्रतिपादिता । तत्तु विस्तरभयान्न लिख्यते ॥

इति त्रिपञ्चाशः सर्गः ॥

## अथ चतुःपञ्चाशः सर्गः ॥

**चतुःपञ्चाशे—** इति सकरुणं विलपन्ती रक्षसा नीयमाना सीता रामाय कदाचित् ज्ञापयिष्यतीति बुद्ध्या भूषणजातं कनककपिशे कौशेये निबध्य गिरिश्रृङ्गसङ्गतप्लवङ्गमपञ्चकसविधे पातयामास । रावणोऽपि गमनसंभ्रमवशेन अविज्ञाततद्वृत्तान्तः समागत्य लङ्कां, अन्तःपुरे राक्षसीभिः संरक्षितां सीतामकरोत् । ततो महाबलानष्टौ राक्षसान् समानीय जनस्थाने सायुधैर्भवद्भिर्भवितव्यम् ॥

**वैरश्च सुमहज्जातं रामं प्रति सुदारुणम् ॥ २३ ॥**

**निर्यातयितुमिच्छामि तच्च वैरमहं रिपोः ।**
**न हि लप्स्याम्यहं निद्रामहत्वा संयुगे रिपुम् ॥ २४ ॥**

**तं त्विदानीमहं हत्वा खरदूषणघातिनम् ।**
**रामं शर्मोपलप्स्यामि धनं लब्ध्वेव निर्धनः ॥ २५ ॥**

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यभिधाय तान् प्रेषयामास। अनेन बलवद्विरोधिनो निद्रा न भविष्यतीति सूचितम्। तथा च उद्योगे विदुरः—[1] 'अभियुक्तं बलवता दुर्बलं हीनसाधनम्। हृतस्वं कामिनं चोरं आविशन्ति प्रजागराः॥' इति॥

इति चतुःपञ्चाशः सर्गः॥

## अथ पञ्चपञ्चाशः सर्गः॥

पञ्चपञ्चाशे — अथ कदाचिदनङ्गशरपरम्परासमाकुलान्तःकरणो रावणो वैदेहीमेव सततमनुचिन्तयन्नन्तःपुरं प्रविश्य निशाचरीशतपरिवृतां सीतां प्रलोभयितुकामो रम्यहर्म्यवरमपरमिव महेन्द्रसदनं निजभवनं निजभुजबलसमार्जितामूर्जितां संपदमपि च ज्ञापयन्नेवमवोचत्—

बहूनां स्त्रीसहस्राणां मम योऽसौ परिग्रहः।
तासां त्वमीश्वरी सीते मम भार्या भव प्रिये॥ १७॥

एतौ पादौ मया स्निग्धौ शिरोभिः परिपीडितौ।
प्रसादं कुरु मे क्षिप्रं वश्यो दासोऽहमस्मि ते॥ ३६॥

इति पञ्चपञ्चाशः सर्गः॥

## अथ षट्पञ्चाशः सर्गः॥

षट्पञ्चाशे—ततो रावणवचनश्रवणसंजातकोपा सीता तमेवमशपत्—

गतायुस्त्वं गतश्रीको गतसत्त्वो गतेन्द्रियः।
लङ्का वैधव्यसंयुक्ता त्वत्कृतेन भविष्यति॥ १२॥
न ते पापमिदं कर्म शुभोदर्कं भविष्यति।

1. ३३ अध्याये १३ श्लोकः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

साहं नीता विनाभावं पतिपार्श्वात्त्वया वने ॥ १३ ॥

स हि दैवतसंयुक्तो मम भर्ता महाद्युतिः ॥ १३½ ॥

स ते दर्पं बलं वीर्यं उत्सेकञ्च तथाविधम् ॥

अपनेष्यति गात्रेभ्यः शरवर्षेण संयुगे ॥ १९ ॥

अनेन पतिव्रताकोपः शापप्रदानमुखेन अत्यन्तानर्थाधायक इति सूचितम् । तथा चारण्यके नलोपाख्याने—[1]'दमयन्त्यपि तं दुष्टमुपलभ्य पतिव्रता । तीव्ररोषसमाविष्टा प्रजज्वालेव मन्युना ॥ स तु पापमतिः क्षुद्रः प्रधर्षयितुमातुरः । दुर्धर्षां तर्कयामास दीप्तामग्निशिखामिव ॥ दमयन्त्यपि दुःखार्ता पतिराज्यविनाकृता । अतीतवाक्पथे काले शशापैनं रुषा किल ॥ यथाहं नैषधादन्यं मनसापि न चिन्तये । तथायं पततां क्षुद्रः परासुर्मृगजीवनः ॥ उक्तमात्रे तु वचने तथा स मृगजीवनः । व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुमः ॥' इति ।

स्त्रीपर्वण्यपि —[2]'ततः कोपपरीताङ्गी पुत्रशोकपरिप्लुता । जगाम शौरिं दोषेण गान्धारी व्यथितेन्द्रिया ॥ इच्छतोपेक्षितो नाशः कुरूणां मधुसूदन । यस्मात्त्वया महाबाहो फलं तस्मादवाप्नुहि ॥ पतिशुश्रूषया यन्मे तपः किञ्चिदुपार्जितम् । तेन त्वां दुरवापेन शप्स्ये चक्रगदाधर ॥ यस्मात् परस्परं घ्नन्तो ज्ञातयः कुरुपाण्डवाः । उपेक्षितास्ते गोविन्द तस्मात् ज्ञातीन् वधिष्यसि ॥ त्वमप्युपस्थिते वर्षे षट्त्रिंशे मधुसूदन । हतज्ञातिर्हतामात्यो हतपुत्रो वनेचरः ॥ अनाथवदभिज्ञातो लोकेष्वनभिलक्षितः । कुत्सितेनाभ्युपायेन निधनं समवाप्स्यसि ॥ तवाप्येवं हतसुताः निहतज्ञातिबान्धवाः । स्त्रियः परितपिष्यन्ति यथैव भरतस्त्रियः ॥' इति । एतदनुरूपं फलमपि प्राप्तमिति मौसले प्रतिपादितम् । विस्तरभयान्न लिख्यते ॥

1. ६३ अध्याये ३५-- ३९ श्लोकाः ।
2. २५ अध्याये ३८, ४०-- ४६ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नेदं शरीरं रक्षिष्ये जीवितं वापि राक्षस ॥ २१ ॥

न हि शक्ष्याम्युपक्रोशं पृथिव्यां दातुमात्मनः ॥ २२ ॥

अनेन प्राणपरित्यागेनापि लोकापवादपरिहरणपूर्वकं यशः संरक्षणीयमिति सूचितम् । तथा च रघुवंशे कालिदासः —[1] 'निश्चित्य चानन्यनिवृत्ति वाच्यं त्यागेन पत्न्याः परिमार्ष्टुमैच्छत् । अपि स्वदेहात् किमुतेन्द्रियार्थात् यशोधनानां हि यशो गरीयः ॥ स्देव[ष] सर्गः करुणार्द्रचित्तैर्न मे भवद्भिः प्रतिषेधनीयः । यद्यर्थिता निर्गतवाच्यशल्यान् प्राणान्मया धारयितुं चिरं वः ॥' इति ॥

इत्यभिधाय तूष्णीमासीनां सीतां यदि मत्सविधं नाभ्येषि वत्सरान्ते सूदास्त्वां छेत्स्यन्तीत्यभिधाय तत्संरक्षणाय राक्षसीः समाज्ञाप्य प्रतिप्रयाते दशानने, तत्क्षणमेव तच्छासनान्निशाचरीभिः निखिलशोकापनोदिकां अशोकवनिकां प्रापिता सीता

पतिं स्मरन्ती दयितं च दैवतं ।
विचेतनाभूद्भयशोकपीडिता ॥

इति षट्पञ्चाशः सर्गः ॥

## अथ सप्तपञ्चाशत्प्रभृतित्रिषष्टितमपर्यन्ताः सर्गाः ॥

तेषु — ततः कपटहाटकमृगरूपधारिणं ताटकेयमस्त्रप्रहारेण निर्गलितप्राणं विधाय तूर्णमेवाश्रमाभिमुखं प्रस्थितस्य रामभद्रस्य

क्रूरस्वनोऽथ गोमायुर्विननादास्य पृष्ठतः ।
स तस्य स्वरमाज्ञाय दारुणं रोमहर्षणम् ।
चिन्तयामास गोमायोः स्वरेण परिशङ्कितः ॥ ३ ॥

1, रघुवंशे १४ सर्गे ३५ श्लोकः ४२ श्लोकश्च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अशुभं बत मन्येऽहं गोमायुर्वाश्यते यथा ॥ ३½ ॥**

अनेन गोमायुस्वरोऽशुभकर इत्युक्तम्। तथा च **सभापर्वणि**—[1]'ततो राज्ञो धृतराष्ट्रस्य गेहे गोमायुरुच्चैर्व्याजहाराग्निहोत्रे। तं रासभाः प्रत्यभाषन्त राजन् समन्ततः पक्षिणश्चैव रौद्राः ॥ तं वै शब्दं विदुरस्तत्त्ववेदी शुश्राव घोरं सुबलात्मजा च। भीष्मद्रोणौ गौतमश्चापि विद्वान् स्वस्ति स्वस्तीत्यपि चैवाहुरुच्चैः ॥ ततो राज्ञी विदुरश्चापि विद्वान् तमुत्पातं घोरमालक्ष्य राज्ञे। निवेदयामासतुरार्तवत्तदा ततो राजा वाक्यमिदं बभाषे ॥' इति।

एवं परिचिन्तयमानं—

**तं दीनमानसं दीनमासेदुर्मृगपक्षिणः।**
**सव्यं कृत्वा महात्मानं घोरांश्च ससृजुः स्वरान् ॥ १२ ॥**

अनेन मृगपक्षिणां अप्रदक्षिणगमनमशुभकरमित्युक्त्या प्रदक्षिणगमनं शुभकरमिति सूचितम्। तथा च **रत्नमालायां**—'मृगा विहङ्गाश्च गताः प्रदक्षिणं महीभृतां काङ्क्षितकार्यसिद्धये। मृगा व्रजन्तः परमोजसंख्यया नृपावलोके शकुनः प्रयाणवत् ॥ ज्याहिकाहिशशसूकरगोधाकीर्तनं शुभमुदाहृतमाद्यैः। नो रुतं न च विलोकनमेषां अन्यथा कथितमृक्षकपीनाम् ॥' इत्यादि। सर्वशकुनजातं प्रागेव प्रपञ्चितम् ॥

तदनु जनकनन्दिनीमपहाय समागच्छन्तं लक्ष्मणमवलोक्य भृशतरमुद्विग्नहृदयो रामभद्र एवमवादीत् ॥

**यथा वै मृगसङ्घाश्च गोमायुश्चैव भैरवम्।**
**वाश्यन्ते शकुनाश्चापि प्रदीप्तामभितो दिशम् ॥ २२ ॥**

अत्र प्रदीप्तदिगभिमुखतया मृगादिवाशनमशुभकरमित्युक्तम्। तच्च प्रागेव प्रपञ्चितम् ॥

1, ७१ अध्याये २२—२४ श्लोकाः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मनश्च मे दीनमिहाप्रहृष्टं
चक्षुश्च सव्यं कुरुते विकारम् ।
असंशयं लक्ष्मण नास्ति सीता
हृता मृता वा पथि वर्तते वा ।। २८ ।।

अनेन पुरुषस्य मनसोऽसन्तोषो वामनेत्रस्फुरणमशुभसूचकमित्युक्त्या दक्षिणनेत्रस्फुरणं मनस्सन्तोषः च शुभकर इति सूचितम् । तथा च **कालिदासः**—
[1]'तस्यां रघोस्सूनुरुपस्थितायां वृणीत वा नेति समाकुलोऽभूत् । वामेतरस्संशयमस्य बाहुः केयूरबन्धोच्छ्वसितो नुनोद ।।' इति ।

तत्किमिति निर्जनवने जानकीं परित्यज्य समागतोऽसीति लक्ष्मणं विगर्हमाणो,

**विनिःश्वसन् शुष्कमुखो विवर्णः, प्रहृष्टरोमा व्यथितो बभूव ।**

अनेन वैवर्ण्यादिकमशुभकरमिति सूचितम् । तथा च **गीतायां**
[2]'सीदन्ति मम गात्राणि मुखं च परिशुष्यति । वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।। गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते । न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ।।' इति ।

ततस्तद्वचनश्रवणसन्तप्तहृदयो लक्ष्मणो राममेवमुवाच — परित्राहीत्यार्तस्वरं आर्यस्वरसदृशमाकर्ण्य विदीर्णहृदयया जानक्या रक्षोवशमागतं भ्रातरं जानीहीत्यभिहितः तामेवमब्रवं —

**विगर्हितश्च नीचश्च कथमार्योऽभिधास्यति ।**
**त्राहीति वचनं सीते यस्त्रायेत् त्रिदशानपि ।। ११ ।।** इति ।।

1. रघुवंशे ६ सर्गे ६८ श्लोकः ।
2. प्रथमाध्याये २९, ३० श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन शूराणां वैक्लब्यमनुचितमिति सूचितम् । तथा च गीतायां [1]'कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् । अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते । क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥' इति ॥

तदधुना मायाविना मारीचेन रामस्वरमवलम्ब्य समुदीरितमार्तस्वरमाकर्णयन्ती भवती न वैक्लब्यं अवलम्बितुमर्हतीति वादिनमपि मामतिदारुणमिदं वचः प्रत्युवाच—

भावो मयि तवात्यर्थं पाप एव निवेशितः ।
विनाशं भ्रातरि प्राप्ते न च त्वं मामवाप्स्यसि ॥ १७ ॥

इति तद्वचनमाकर्ण्य विदीर्णहृदयः तूर्णमेव भवदभ्यर्णमवतीर्णोस्मि इति वदन्तं लक्ष्मणं

सर्वथा त्वविनीतं ते सीतया यत्प्रचोदितः ।
क्रोधस्य वशमापन्नो नाकरोः शासनं मम ॥ २४ ॥

इत्यभिधाय,

भृशमाव्रजमानस्य तस्याधो वामलोचनम् ।
प्रास्फुरच्चास्खलद्रामो वेपथुश्चाप्यजायत ॥ १ ॥

अनेन स्खलनकम्पने अशुभकरे इति सूचितम् । अस्मिन्नर्थे 'वेपथुश्च शरीरे मे' इत्यादिगीतावचनं प्रागुदाहृतम् ॥

एवमशुभसंसूचकनिमित्तावलोकनसमाकुलान्तःकरणो रामभद्रः प्रियाविरहितां पर्णशालामवलोक्य किमियं पुष्पापचयाय वनं गता स्यात्; अथवा जलाहरणाय नदीं पद्मिनीं, आहोस्वित् समागतं मां परिहसितुं वृक्षैराच्छाद्यात्मानं निलीना भवेत्;

1. द्वितीयाध्याये २, ३ श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नात्यर्थं हास्यशीलासि किमर्थं मामुपेक्षसे ।। २१ ।।
विशेषेणाश्रमस्थाने हासोऽयं न प्रशस्यते ।। ७ ।।

अनेन पतिव्रताः कौतुकार्थमपि नातिपरिहसन्तीति सूचितम् । तथा **चोद्योगे** विदुरः—[1] 'अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम् । कौतूहलमला साध्वी विप्रवासमलाः स्त्रियः ।।' इति ।।

विवशं शोकसन्तप्तं दीनं भग्नमनोरथम् ।
मामिहोत्सृज्य करुणं कीर्तिर्नरमिवानृजुम् ।। १० ।।

अनेनानृजोः कीर्तिनाश इत्यनेन ऋजोः कीर्तिर्भवतीति सूचितम् । तथा **चोद्योगे** धृतराष्ट्रं प्रति विदुरः—[2] 'सर्वतीर्थेषु च स्नानं सर्वभूतेषु चार्जवम् । उभे ह्येते समे स्यातामार्जवं वा विशिष्यते ।। आर्जवं प्रतिपद्यस्व पुत्रेषु सततं प्रभो । इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ।।' इति ।।

इति सुचिरं विलप्य लक्ष्मणमेवमवादीत्—

पूर्वं मया नूनमभीप्सितानि
पापानि कर्माण्यसकृत्कृतानि ।
तत्रायमद्यापतितो विपाको
दुःखेन दुःखं यदहं विशामि ।। ४ ।।

अनेन जन्मान्तरकृतपापानुरूपं फलं भवतीत्ययमर्थः **स्त्रीपर्वणि**— [3] 'नूनं ह्यपकृतं किञ्चिन्मया पूर्वेषु जन्मसु । येन मां दुःखभागेषु धाता कर्मसु युक्तवान् ।।' इति ।।

---

1. ३९ अध्याये ५९, ६० श्लोकयोः उत्तरार्धे ।
2. ३५ अध्याये २, ३ श्लोकौ ।
3. प्रथमाध्याये १८, १९ श्लोकयोः उत्तरार्धपूर्वार्धे ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लक्ष्मणः— शोकं विमुञ्चार्य धृतिं भजस्व
सोत्साहता चास्तु विमार्गणेऽस्याः ।
उत्साहवन्तो हि नरा न लोके
सीदन्ति कर्मस्वतिदुष्करेषु ॥ १९ ॥

इति राममवदत् । अनेन धैर्योत्साहौ शोकमपनुद्य कार्यसाधकाविति सूचितम् । तथा च उद्योगे विदुरः—[1] 'सन्तापाद्भ्रश्यते रूपं सन्तापाद्भ्रश्यते बलम् । सन्तापाद्भ्रश्यते ज्ञानं सन्तापाद्व्याधिमृच्छति ॥ अनवाप्यं च शोकेन शरीरमुपतप्यते । अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः ॥ प्रशाधि पृथिवीं कृत्स्नां हतामित्रो नृपोत्तम ।' इति ॥

द्रोणपर्वण्यपि अभिमन्युवधे धर्मपुत्रं प्रति व्यासः—[2] 'शोचतो हि महाराज ह्यघमेवाभिवर्धते । तस्माच्छोकं परित्यज्य श्रेयसे प्रयतेद्बुधः ॥ प्रहर्षमभिमानं च सुखप्राप्तिं च चिन्तयेत् । एवं ज्ञात्वा स्थिरो भूत्वा जह्यरीन्धैर्यमाप्नुहि ॥' इति ॥

ततो लक्ष्मणेन बहु सान्त्वितोऽपि,

हा प्रिये क्व गता भद्रे हा सीतेति पुनः पुनः ॥ ३५ ॥
इत्येवं विलपन्रामः परिधावन् वनाद्वनम् ॥
क्वचिदुद्भ्रमते वेगात् क्वचिद्विभ्रमते बलात् ।
क्वचिन्मत्त इवाभाति कान्तान्वेषणतत्परः ॥ ३६ ॥
स वनानि नदीः शैलान् गिरिप्रस्रवणानि च ।

---

1. ३६ अध्याये ४४, ४५ श्लोकौ । अन्ते विद्यमानं 'प्रशाधि पृथिवीं' इत्यादिकं श्लोकार्धं तु मुद्रितपुस्तके नात्र दृश्यते ।
2. ७१ अध्याये १९ श्लोकः २० श्लोकस्य पूर्वार्धं च । २१ श्लोकस्य पूर्वार्धं तु कथंचित् भावमात्रेण 'एवं ज्ञात्वा' इत्यन्तिममर्धमनुकरोति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काननानि च वेगेन भ्रमत्यपरिसंस्थितः ॥ ३७ ॥
सीतया रहितोऽहं वै न हि जीवामि लक्ष्मण ॥ ६ ॥

इतीव सौमित्रिमुदग्रपौरुषं
ब्रुवन्तमार्तो रघुवंशवर्धनः ।
न चिन्तयामास धृतिं विमुक्तवा
पुनश्च दुःखं महदभ्युपागमत् ॥ २० ॥

नन्वत्र रामस्य दुःखप्रलापादिकं प्रतिपादितम् । तदसङ्गतम् । दुःखप्रलापादेः 'नष्टायामपि वैदेह्यां हृतायामपि चानघ । शोचितुं नार्हसे वीर यथान्यः प्राकृतस्तथा ॥ त्वद्विधा हि न शोचन्ति सततं समदर्शिनः ॥' इति अग्रेतनलक्ष्मणवचनपर्यालोचनया अज्ञानिकार्यत्वावगमेन सर्वज्ञस्य रामभद्रस्य दुःखादेरयुक्तत्वादिति चेन्न । [1]'ज्ञानिनामपि चेतांसि देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छति ॥' इति मार्कण्डेयपुराणवचनेन, [2]'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति गीतावचनेन च मायायाः दुरतिक्रमत्वावगमेन मायाप्रयुक्तविषयासक्त्या विद्यमानस्यापि ज्ञानस्य अभिभवेन दुःखानुभवप्रलापादेः संभवात् । अत एव लक्ष्मणकृतं, 'शोकेनाभिप्रसुप्तं ते ज्ञानं संबोधयाम्यहम्' इति प्रबोधनमुपपन्नम् ॥

किञ्च अतिप्रीतिविषया अपि विषयाः परेणापहृताः सन्तो मनस्सन्तापकराः बुद्धिपूर्वकतया स्वयं संत्यक्ताश्चेत् न सन्तापं जनयन्तीति सार्वजनीनमेतत् । एवञ्च परेण सीतापहरणदशायां स्वेनापरित्यक्ततया दुःखप्रलापादिकमुचितमेव । अत एव प्राणसमामप्येतादृशीं सीतां स्वयं परित्यज्य दुःखेन विनैवावस्थानं प्रतिपादितमुत्तररामायणे ॥

1. सप्तमाध्याये २४ श्लोकस्य पूर्वार्धं ।
2. ७ अध्याये १३½ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अन्यापहरणस्वयंपरित्यागाभ्यां दुःखादुःखे इत्ययमर्थो **मोक्षधर्मे पिङ्गलगीतायाम्** -- [1] 'यन्निमित्तो भवेच्छोकस्तापो वा दुःखमेव वा । आयासो वा यतोमूलं एकाङ्गमपि तत्त्यजेत् ॥ यद्यत्त्यजति कामानां तत्सुखस्याभिपूर्तये । कामानुसारी पुरुषः कामाननु विनश्यति ॥ यथा काष्ठं च काष्ठं च समेयातां महोदधौ । समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ एवं पुत्राश्च पौत्राश्च ज्ञातयो बान्धवास्तथा । तेषां स्नेहो न कर्तव्यो विप्रयोगो ध्रुवो हि तैः ॥ सुखं निराशः स्वपिति नैराश्यं परमं सुखम् । आशामनाशां कृत्वापि सुखं स्वपिति पिङ्गला ॥' इति ॥

**प्राचीना अपि**-- 'अवश्यं यातारश्चिरतरमुषित्वापि विषयाः वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् । व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥' इति । एवञ्च महापुरुषाणामपि दुःखजनिका विषयासक्तिरित्यतो दुःखभीरुभिः सर्वैरपि विषयासक्तिः प्रयत्नेन परित्याज्येति सिद्धम् ॥

**इति सप्तपञ्चाशत्प्रभृतित्रिषष्टितमपर्यन्ताः सर्गाः ॥**

## अथ चतुष्षष्टितमः सर्गः ॥

**चतुष्षष्टितमे**— ततस्तद्वचनमाकर्ण्यापि शोकवेगमसहमानेन रामेण सकरुणं क्वेदानीं वैदेहीति पृष्टैर्मृगैर्दक्षिणदिगाभिमुखैः दर्शितं नभःस्थलमवलोक्य तदिङ्गितज्ञो लक्ष्मणो रामेण सह तामेव दिशमभिजगाम । तत्रैव वसुन्धरानिपतितां पुष्पधारामवलोक्य सीतायै मया दत्तानीमानि पुष्पाणीति समाकुलान्तःकरणो रामः सत्वरमग्रतोऽवलोक्य लक्ष्मणमेवमवादीत्— 'राक्षसेन हृतायास्सीतायाया इयमग्रे पदपङ्क्तिरालक्ष्यते । इदमग्रे भग्नं धनुः,

---

1. १७४ अध्याये ४३, ४५, १७, १६, ६२ श्लोकाः क्रमेण भवन्ति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतद्विशीर्णं कवचं, अयं चापविद्धो रथः, इमे च विशीर्णा रथाक्षप्रमाणा बाणाः, सोष्णीषकुण्डलौ इमौ चामरग्राहिणौ निपतितौ लक्ष्येते। तन्नूनं मैथिलीनिमित्तं विवदमानयोः वनचरयोः द्वन्द्वयुद्धं वृत्तमालक्ष्यते। तदधुना करुणवेदिनं मां त्रिलोकीनिग्रहणे समर्थमजानन्तो जनाः परिभवन्ति ॥

कर्तारमपि लोकानां शूरं करुणवेदिनम् ।
अज्ञानादवमन्येरन् सर्वभूतानि लक्ष्मण ॥ ५६ ॥

मृदुं लोकहिते युक्तं दान्तं करुणवेदिनम् ।
निर्वीर्य इति मन्यन्ते नूनं मां त्रिदशेश्वराः ॥ ५७ ॥

मां प्राप्य हि गुणो दोषः संवृत्तः पश्य लक्ष्मण ॥ ५७½ ॥

अनेन क्षमावन्तं पुरुषं जनः अज्ञानात् निर्वीर्यं मन्यते। वस्तुतस्तु क्षमागुण एव सूक्तम्। तथा च उद्योगे विदुरः — [1] 'एकः क्षमावतां दोषो द्वितीयो नोपपद्यते। यदेनं क्षमया युक्तं अशक्तं मन्यते जनः ॥ सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम्। क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ॥ क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते।' इति ॥

तदद्यैव रुक्मपुंखैः विशिखैः निरवकाशमाकाशं कुर्वन् विप्रणष्ट-भास्करं शुष्यमाणसागरं मर्दितमृगद्विजं अखिलं जगत् करिष्यामि ॥

आकर्णपूर्णैरिपुभिः जीवलोकं परावरैः ।
करिष्ये मैथिलीहेतोरपिशाचमराक्षसम् ॥ ६७ ॥

इत्यभिधाय रोषारुणितलोचनो रामभद्रः सशरं धनुरादाय युगान्ताग्निरिव क्रुद्ध इदं वचनमब्रवीत् ॥

---

1. ३३ अध्याये ४८, ४९ श्लोकौ ५० श्लोकस्य पूर्वार्धं च।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा जरा यथा मृत्युर्यथा कालो यथा विधिः ।
नित्यं न प्रतिहन्यन्ते सर्वभूतेषु लक्ष्मण ॥
तथाहं क्रोधसंयुक्तो न निवार्योऽस्मि सर्वदा ॥ ७५ ॥

अनेन मृत्युजरादयोऽशक्यप्रतीकारा इति सूचितम् । तथा च द्रोणपर्वणि —[1] 'न ह्येव ब्रह्मचर्येण न वेदाध्ययनेन च । न क्रियाभिर्न चास्त्रेण मृत्योः कश्चिन्निवार्यते ॥ क्रूरस्सर्वविनाशाय कालोऽसौ नातिवर्तते ॥' इति ॥

स्त्रीपर्वणि—[2] 'अयुध्यमानो म्रियते युध्यमानश्च जीवति । कालं प्राप्य महाराज न कश्चिदतिवर्तते ॥ अन्यथा चिन्तिता ह्यर्था नरैस्तात मनस्विभिः । अन्यथैव प्रपद्यन्ते दैवादिति मतिर्मम ॥' इति । 'नौषधानि न शस्त्राणि न होमा न पुनर्जपाः । त्रायन्ते मृत्युनोपेतं जरया वापि भारत ॥' इति च ॥

पुरेव मे चारुदतीमनिन्दितां
दिशन्ति सीतां यदि नाद्य मैथिलीम् ।
सदेवगन्धर्वमनुष्यपन्नगं
जगत्सशैलं परिवर्तयाम्यहम् ॥ ७६ ॥

अनेन शोकसमये दुर्बल इव प्रबलः शोकेन न सीदति । किन्तु तत्प्रतीकारायाग्रहेण महारयः प्रवर्तत इत्युक्तम् । अत एव महापुरुषस्यार्जुनस्य अभिमन्युवधानन्तरं एवं प्रवृत्तिः द्रोणपर्वणि दृश्यते—[3] 'हा पुत्र इति निःश्वस्य व्यथितो न्यपतद्भुवि । प्रतिलभ्य ततस्संज्ञां वासविः क्रोधमूर्च्छितः ॥ कम्पमानो ज्वरेणेव निःश्वसंस्तु मुहुर्मुहुः । पाणौ पाणिं विनिष्पिष्य

1. ११ अध्याये ४४, ४५ श्लोकयोः उत्तरपूर्वार्धे ५० श्लोकस्य पूर्वार्धे च ।
2. द्वितीयाध्याये ५ श्लोकः ।
3. ७२ अध्याये १७, १८, २०, ३२—३७, ४५—४९ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्वसमानोऽश्रुनेत्रवान् ॥ उन्मत्त इव विप्रेक्षन्निदं वचनमब्रवीत् । सत्यं वः प्रतिजानामि श्वोऽस्मि हन्ता जयद्रथम् ॥ धार्तराष्ट्रप्रियकरं मयि विस्मृत-सौहृदम् । पापं बालवधे हेतुं श्वोऽस्मि हन्ता जयद्रथम् ॥ रक्षमाणाश्च तं संख्ये ये मां योत्स्यन्ति केचन । अपि द्रोणकृपौ राजन् छादयिष्यामि तान् शरैः ॥ यद्येतदेवं संग्रामे न कुर्यां पुरुषर्षभाः । मा स्म पुण्यकृतां लोकान् प्राप्नुयां शूरसंमतान् ॥ ये लोका मातृहन्तॄणां ये चापि पितृ-घातिनाम् । गुरुदाररतानां ये पिशुनानां च ये सदा ॥ साधूनसूयतां ये च ये चापि परिवादिनाम् । ये च निक्षेपहर्तॄणां ये च विश्वासघातिनाम् ॥ भुक्तपूर्वां स्त्रियं ये च विन्दतामयशस्विनीम् । ब्रह्मघ्नानां च ये लोका ये च गोघातिनामपि ॥ पायसं वा यवान्नं वा शाकं कृसरमेव वा । संयावा-पूपमांसानि ये च लोका वृथाश्नताम् ।। तानह्नैवाधिगच्छेयं न चेद्धन्यां जयद्रथम् । वेदाध्यायिनमत्यर्थं शंसितं वा द्विजोत्तमम् । अवमन्यमानो यान् याति वृद्धान्साधून् गुरूनपि । स्पृशतो ब्राह्मणं गां च पादेनाग्निं च या भवेत् ॥ याऽप्सु श्लेष्मपुरीषं च मूत्रं वा मुञ्चतां गतिः । तां गच्छेयं गतिं कष्टां न चेद्धन्यां जयद्रथम् ॥ नग्नस्य स्नायमानस्य या च वन्ध्यातिथेर्गतिः । उत्कोचिनां मृषोक्तीनां वञ्चकानाञ्च या गतिः ॥ आत्मापहारिणां या च या च मिथ्याभिशंसिनाम् । भृत्यैस्संदिश्यमानानां पुत्रदाराश्रितैस्तथा ॥ असं-विभज्य क्षुद्राणां या गतिर्मृष्टमश्नताम् । तां गच्छेयं गतिं घोरां न चेद्धन्यां जयद्रथम् ॥ संश्रितं चापि यस्त्यक्त्वा साधुं तद्वचने रतम् । न बिभर्ति नृशंसात्मा निन्दते चोपकारिणम् । अर्हते प्रातिवेश्याय श्राद्धं यो न ददाति च । अनर्हेभ्यश्च यो दद्याद्वृषलीपतये तथा ॥ मद्यपो भिन्नमर्यादः कृतघ्नो भर्तृनिन्दकः । तेषां गतिमियां क्षिप्रं न चेद्धन्यां जयद्रथम् ॥ धर्मादपेता ये चान्ये मया नात्रानुकीर्तिताः । ये चानुकीर्तितास्तेषां गतिं क्षिप्रमवाप्नु-याम् ॥ यदि व्युष्टामिमां रात्रिं श्वो न हन्यां जयद्रथम् । इमां चाप्यपरां भूयः प्रतिज्ञां मे निबोधत ॥ यद्यस्मिन्नहते पापे सूर्योऽस्तमुपयास्यति । इहैव

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संप्रवेष्टाहं ज्वलितं जातवेदसम् ॥ असुरसुरमनुष्याः पक्षिणो वोरगा वा पितृरजनिचरा वा ब्रह्मदेवर्षयो वा । चरमचरमपीदं यत्परं चापि तस्मात् तदपि मम रिपुं तं रक्षितुं नाद्य शक्ताः ॥ यदि विशति रसातलं तदग्र्यं वियदपि देवपुरं दितेः पुरं वा । तदपि शरशतैरहं प्रभाते भृशमभिपत्य रिपोः शिरोभिहन्ता ॥' इति ॥

इति चतुष्षष्टितमः सर्गः ॥

## अथ पञ्चषष्टितमः सर्गः ॥

**पञ्चषष्टितमे**— अथ लक्ष्मणस्सकललोकविनाशाय समुद्यतायुधं अपरमिव पिनाकपाणिं धनुष्पाणिं रामभद्रमवलोक्य परिशुष्यता मुखेन सविनयमिदमुदाजहार—

**पुरा भूत्वा मृदुर्दान्तः सर्वभूतहिते रतः ।**
**न क्रोधवशमापन्नः प्रकृतिं हातुमर्हसि ॥ ४ ॥**

**चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा ।**
**एतच्च नियतं सर्वं त्वयि चानुत्तमं यशः ॥ ५ ॥**

अनेन आपत्सु प्राप्तं दुःखं सोढव्यमेव स्थैर्यमिति महापुरुषलक्षणमिति सूचितम् । तथा चारण्यके—[1] 'क्षन्तव्यं पुरुषेणेह सर्वापत्सु सुशोभने । क्षमावतो हि भूतानां जन्म चैव प्रकीर्तितम् ॥' इति ॥

**नैकस्य तु कृते लोकान् विनाशयितुमर्हसि ।**
**युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः ॥ ९ ॥**

**सदा त्वं सर्वभूतानां शरण्यः परमा गतिः ॥ ९½ ॥**

---

1. २९ अध्याये ३२ श्लोकः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन अपराधिष्वेव दण्डो नानपराधिषु इति सूचितम् । तथा च मनुः—[1] 'अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चाधिगच्छति ॥' इति ॥

सरितस्सागराश्शैला देवगन्धर्वदानवाः ।
नालं ते विप्रियं कर्तुं दीक्षितस्येव साधवः ॥ ११ ॥

अनेन प्रक्रान्तयज्ञस्य अहिताचरणं न कर्तव्यमित्युक्तम् । तथा च श्रुतिः 'नैनं शत्यं नाभिचरितमागच्छति' इति । तदधुना दुर्गमानपि सकललोकमार्गान् निरर्गलं मार्गमाणः,

शिवेन साम्ना विनयेन सीतां
नयेन न प्राप्स्यसि चेन्नरेन्द्र ।
ततस्समुत्पादय हेमपुङ्खैः
महेन्द्रवज्रप्रतिमैः शरौघैः ॥ १६ ॥

अनेन सामाद्युपाय एव प्रयोक्तव्यः । तदसाध्ये दण्ड इत्युक्तम् । तथा च मनुः—[2] 'त्रयाणामप्युपायानां पूर्वोक्तानामसंभवे । युद्ध्यते दण्डसंपत्तौ विजयेत रिपूंस्तदा ॥' इति । राजधर्मेपि—[3] 'संनिपातो न मन्तव्यः शक्ये सति कथञ्चन । सान्त्वभेदप्रदानानां युद्धमुत्तरमुच्यते ॥' इति ।

इति पञ्चषष्टितमः सर्गः ॥

1. अष्टमाध्याये १२८ श्लोकः ।
2. सप्तमाध्याये २०० श्लोकः ।
3. १०२ अध्याये २२ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ षट्षष्टितमः सर्गः ॥

**षट्षष्टितमे** — तदनु निजानुजेन सविनयमनुनीतोपि रामभद्रः सीतामेव मनसि विचिन्तयन् शोकसन्तप्तमानसो महान्तं मोहमवाप । तथा मुह्यन्तं पादप्रणामपूर्वकं शनैः प्रतिबोध्य सौमित्रिरेवमुवाच — 'देव, विदितवेदितव्यस्य अधीतसकलशास्त्रस्यापि तव दुरन्तं चिन्तार्णवावगाहनं अत्याश्चर्यमातनोति । को हि नाम प्राज्ञः प्राकृत इव अल्पसारां संसार-वागुरामाविश्य शोकमनुभवेत् ।

**यदि दुःखमिदं प्राप्तं काकुत्स्थ न सहिष्यसे ।**
**प्राकृतश्चाल्पसारश्च इतरः कस्सहिष्यति ॥ ५ ॥**

अनेन आपदि महद्भिः प्राप्तः क्लेशः सोढव्य इति सूचितम् । तथा चोद्योगे — [1] 'प्राप्यापदं न व्यथते कदाचित् उद्योगमन्विच्छति चाप्रमत्तः । दुःखं च काले सहते महात्मा धुरन्धरस्तस्य जितास्सपत्नाः ॥' इति । कामन्दकेपि— [2] 'उत्साहं च प्रभावञ्च तथा क्लेशसहिष्णुताम् । धृतिं चैवानुरागं च स्थैर्यं चापदि लक्षयेत् ॥' इति । लोके स्वभाव एवायं यदयं ययातिः शक्रसमपराक्रमोपि स्थानप्रच्युतिमवाप । सकलमहर्षि-वरिष्ठोपि वसिष्ठः पुत्रशतमकस्मादेव दिष्टां गतिं गतमपश्यत् ॥

**तत्वतो हि नरश्रेष्ठ बुद्ध्या समनुचिन्तय ।**
**बुद्धियुक्ता महाप्राज्ञा विजानन्ति शुभाशुभे ॥ १६ ॥**

अनेन विचार्यैव कर्म आरम्भणीयमिति सूचितम् । तथा चारण्यके द्रौपदी — [3] 'तिले तैलं गवि क्षीरं काष्ठे पावकमन्ततः । धिया धीरो

---

1. २३ अध्याये १०७ श्लोकः ।
2. प्रकृतिसंपन्नामके ७ सर्गे ३४ श्लोकः ।
3. ३३ अध्याये २७, २८ श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विजानीयादुपायं चास्य सिद्धये ॥ ततः प्रवर्तते पश्चात् कारणैस्तस्य सिद्धये। तां सिद्धिमुपजीवन्ति कर्मजामिह जन्तवः ॥' इति ॥ **कामन्दकेपि** — 'बुद्ध्यैवोपक्रमः श्रेयान् फलनिर्वृत्तये सदा ॥' इति ॥

**अदृष्टगुणदोषाणां अधृतानां तु कर्मणाम् ।**
**नान्तरेण क्रियां तेषां फलमिष्टं प्रवर्तते ॥ १७ ॥**

अनेन प्राप्तं सुखं दुःखं वा पूर्वकर्माधीनमित्युक्तम् । तथा **चारण्यके** — [1] 'यानि प्राप्नोति पुरुषः तत्फलं पूर्वकर्मणाम् । धातापि हि स्वकर्मैव तैस्तैर्हेतुभिरीश्वरः ॥ विदधाति विभज्येह फलं पूर्वकृतं नृणाम् ।' इति ॥

मामेवमसकृदनुशासितवतो विदितवेदितव्यस्य भवतोऽनुशासने कः समर्थो भवेत् । तदधुना परिज्ञाय च अमानुषपराक्रममात्मानं सकललोक-नाशकादुपक्रमादुपारम्य ते भार्यापहारिणं विज्ञाय समुद्धर्तुमर्हसि इति ॥

इति षट्षष्टितमः सर्गः ॥

## अथ सप्तषष्टितमः सर्गः ॥

**सप्तषष्टितमे — पूर्वजेनाप्युक्तमात्रस्तु लक्ष्मणेन सुभाषितम् ।**
**सारग्राही महासारं प्रतिजग्राह राघवः ॥ १ ॥**

अनेन बालोदीरितमपि युक्तं वचो ग्राह्यमित्युक्तम् । तथा **चोद्योगे विदुरः** — [2] 'अप्युन्मत्तात्प्रलपतो बालाच्च परिसर्पतः । सर्वतस्सार-मादद्यादश्मभ्य इव काञ्चनम् ॥' इति ॥

---

1 ३२ अध्याये २० श्लोकस्य उत्तरार्धं २१ श्लोकश्च ।
2 ३ अध्याये ३ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ततस्सन्निगृह्य समुज्जृम्भितं कोपं, अवष्टभ्य चामीकरविभूषितं चापं, अनुजेन सह तदेव जनस्थानं विचिन्वन् वसुन्धरानिपतितं धराधरकूटनिभं जटायुषमवलोक्य निश्शङ्कमयमेव मत्प्रियामपहृतवानिति निश्चित्य, तमभिहन्तुं सन्धाय धनुषि शरवरं गृध्रराजमभ्यधावत् । तदनु यथावृत्तमाख्यातवन्तं प्रख्यातपराक्रमं गतायुषं जटायुषं परिष्वज्य, परित्यज्य च कार्मुकं शोकवशो भूमौ निपत्य रामस्सौमित्रिमेवमुवाच—

राज्याद्भ्रंशो वने वासः सीता नष्टा हतो द्विजः ।
ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम् ॥ २५ ॥

इत्यभिधाय कोमलदलाङ्गुलिना करपल्लवेन जटायुषं पस्पर्श ॥

इति सप्तषष्टितमः सर्गः ॥

## अथ अष्टषष्टितमः सर्गः ॥

अष्टषष्टितमे — नूनमयमतिक्रूरकर्मणा रावणेन निर्दयमभिहतो दुस्त्यजान्प्राणान् हातुमिच्छति ॥

अयमस्य शरीरेऽस्मिन् प्राणो लक्ष्मण दृश्यते ।
तथाहि स्वरहीनोऽयं विक्लबस्समुदीक्षते ॥ ३ ॥

इत्यभिधाय केदानीं मत्प्रियेति सकरुणं वदन्तं रामं अवसन्नया वाचा जटायुरेवमुवाच । पौलस्त्यो रावणः सीतामादाय विहायसा दक्षिणां दिशमुत्पतन् मध्येमार्गं निरुन्धानं मां सपक्षच्छेदं पातयामास ॥

उपरुन्धन्ति मे प्राणाः दृष्टिर्भ्रमति राघव ।
पश्यामि वृक्षान्सौवर्णान् उशीरकृतमूर्धजान् ॥ ११ ॥
येन यातो मुहूर्तेन सीतामादाय रावणः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विप्रणष्टं धनं क्षिप्रं तत्स्वामी प्रतिपद्यते ॥ १२ ॥
विन्दो नाम मुहूर्तोऽयं स च काकुत्स्थ नाबुधत ।

विन्दो नाम विन्दुः गुलिकः । तस्मिन् समये आरब्धं कार्यं कर्तुर्विपरीतं भवतीति सूचितम् । तथा चोत्पलपरिमले गौळीप्रकरणे — 'मन्वर्कदिग्दन्तिरसाब्धिनेत्रा सूर्यस्य वारादिविषा मुहूर्ताः । गर्गामरेन्द्रादिमुनीन्द्रबृन्दैः ते निन्दिताः कर्मसु विन्दसंज्ञाः ॥' इति ॥

प्रियापहारिणं रावणं अन्वेषमाणो मृधे तन्निधनेन मनोरथं साधयिष्यसि भवानित्यभिधाय निक्षिप्तकन्धरो वसुंधरायां प्रसार्य चरणौ दुस्त्यजान् प्राणान् अत्यजत् । तं पितृमित्रभूतं पत्रिणं मान्यतममवगत्य और्ध्वदेहिकेन कर्मणा कृतार्थयितुकामो रामः

या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः ।
अपरावर्तिनां या च या च भूमिप्रदायिनाम् ॥ २९ ॥
मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् ॥ २९½ ॥

अनेन महदनुज्ञया उत्तमा गतिर्भवतीति सूचितम् । तथा चाथर्वणी श्रुतिः । [1]'यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्च कामान् । तं तं लोकं जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेत् भूतिकामः ॥' इति । अत्र भाष्यम् — 'उक्तलक्षणं सर्वात्मानमात्मत्वेन प्रतिपन्नः । तस्य सर्वात्मत्वादेव सर्वावाप्तिलक्षणं फलमाह — यं यं लोकं पित्रादिलक्षणं मनसा संविभाति संकल्पयति मह्यमन्यस्मै वा भवेदिति विशुद्धसत्वः क्षीणक्लेशः आत्मविन्निर्मलान्तःकरणः कामयते यांश्च कामान्, प्रार्थयते भोगान्, तं तं लोकं जयते प्राप्नोति तांश्च कामान् सङ्कल्पितांश्च भोगान् । तस्माद्विदुषस्सत्यसङ्कल्पत्वात्, आत्मज्ञं आत्मज्ञानेन विशुद्धान्तःकरणं

1. मुण्डकोपनिषदि तृतीयमुण्डके प्रथमखण्डे १० सूक्तम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ह्यर्चयेत् पूजयेत् । पादप्रक्षालनशुश्रूषणनमस्कारादिभिः भूतिकामो भूतिमिच्छन् । अतः पूजार्ह एवासौ ।' इति ॥

अत एव भूरिश्रवसे उत्तमलोकप्राप्तये कृष्णाभ्यनुज्ञा द्रोणपर्वणि—[1]'ये लोका मम विमला विभान्त्युदग्रा ब्रह्माद्यैस्सुरवृषभैरपीष्यमाणाः । तान् क्षिप्रं व्रजसि सताग्निहोत्रयाजिन् मत्तुल्यो भव गरुडोत्तमाङ्गयानः ॥' इति ॥

तत्रैवाभिमन्युवधानन्तरं सुभद्रानुज्ञापि—[2]'यज्वनां दानशीलानां ब्राह्मणानां कृतात्मनाम् । चरितब्रह्मचर्याणां पुण्यतीर्थावगाहिनाम् ॥ कृतज्ञानां वदान्यानां गुरुशुश्रूषिणामपि । सहस्रदक्षिणानाञ्च या गतिस्तामवाप्नुहि ॥ या गतिर्युध्यमानानां शूराणामनिवर्तिनाम् । हत्वारीन्निहतानाञ्च सङ्ग्रामे तां गतिं व्रज ॥ गोसहस्रप्रदातॄणां क्रतुदानाञ्च या गतिः । नैवेशिकं चाभिमतं ददतां या गतिश्शुभा ॥ ब्राह्मणेभ्यश्शरण्येभ्यो निधिं निदधतां च या । या चापि न्यस्तदण्डानां तां गतिं गच्छ पुत्रक ॥ ब्रह्मचर्येण यां यान्ति मुनयश्शंसितव्रताः । एकपत्न्यश्च यां यान्ति तां गतिं व्रज पुत्रक ॥ राज्ञां सुचरितैर्या च गतिर्भवति शाश्वती । चातुराश्रमिणां पुण्यैः पावितानां सुरक्षिणाम् ॥ दीनानुकम्पिनां या च सततं संविभागिनाम् । पैशुन्याच्च निवृत्तानां तां गतिं व्रज पुत्रक ॥ व्रतिनां धर्मशीलानां गुरुशुश्रूषिणामपि । अमोघातिथिनां या च तां गतिं व्रज पुत्रक ॥ कृच्छ्रेषु या धारयतामात्मानं व्यसनेषु च । गतिः शोकाग्न्यदग्धानां तां गतिं व्रज पुत्रक ॥ मातापित्रोश्च शुश्रूषां कल्पयन्तीह ये सदा । स्वदारनिरतानां च या गतिस्तामवाप्नुहि ॥ ऋतुकाले स्वकां भार्यां गच्छतां या मनीषिणाम् । परस्त्रीभ्यो निवृत्तानां तां गतिं व्रज पुत्रक ॥ साम्ना ये सर्वभूतानि पश्यन्ति गतमत्सराः । नारुन्तुदानां क्षमिणां या गतिस्तामवाप्नुहि ॥ मधुमांस-

1. १४३ अध्याये ४८ श्लोकः ।
2. ७८ अध्याये २१—३४ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निवृत्तानां मदादंभात्तथाऽनृतात् । परोपतापं त्यजतां तां गतिं व्रज पुत्रक ॥' इति ॥

नन्वेवं महदनुज्ञया लोकप्राप्तिरित्यङ्गीकारे

गृध्रराज महासत्व संस्कृतश्च मया द्विज [व्रज] ॥ ३० ॥
महर्षिकल्पेन च संस्कृतस्तदा
जगाम पुण्यां गतिमात्मनः शुभाम् ॥ ३७ ॥

इति संस्कारहेतुत्वप्रतिपादकवचनविरोध इति चेन्न । प्रतिवन्धकनिवृत्त्यर्थ-तया संस्कारोपि लोकप्रापक इत्येतत्परत्वात् तस्य वचनस्य । संस्कारस्य प्रतिवन्धकनिवर्तकत्वं च, [1]'अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदि च न अर्चिषमेवाभिसंभवन्ति' इत्येतद्व्याख्यानावसरे छान्दोग्यभाष्ये प्रति-पादितम् ॥

भाष्यम्—'यत् यदि उ च एव अस्मिन्नेवंविदि शव्यं शवकर्म मृते कुर्वन्ति । यदि च न कुर्वन्ति ऋत्विजः, सर्वथाप्येवंवित्तेन शवकर्मणा अकृतेनापि प्रतिवद्धो न ब्रह्म प्राप्नोतीति न । न च कृतेन शवकर्मणा कश्चिदभ्यधिको लाभः, 'न कर्मणा वर्धते नो कनीयान्' इति श्रुत्यन्त-रात् । शवकर्मण्यनादरं दर्शयन् विद्यां स्तौति । न पुनः शवकर्म एवंविदो न कर्तव्यमिति । अक्रियमाणे तु शवकर्मणि कर्मणां फलारंभे प्रतिवन्धः कश्चिदनुमीयतेऽन्यत्र । यत इह विद्याफलारम्भकाले शवकर्म स्याद्वा न वेति विद्यावतोऽप्रतिवन्धेन फलारंभं दर्शयति' इति । एवञ्चास्मिन् भाष्ये शव्य-कर्माकरणे उपकोसलविद्योपासकस्य अप्रतिवन्ध इतरेषां प्रतिवन्धोस्तीति प्रतिपादनात् रामभद्रानुज्ञायामपि प्रतिवन्धनिवृत्त्यै संस्कार उचित एव ॥

इत्यभिधाय सौमित्रिरचितां चितामारोप्य,

---

1. छान्दोग्योपनिषदि चतुर्थाध्याये पञ्चदशखण्डे ५ वाक्य ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ददाह रामो धर्मात्मा स्वबन्धुमिव दुःखितः ॥ ३१ ॥

स्थूलान् हत्वा महारोहीननुतस्तार तं द्विजम् ॥ ३२ ॥

रोहीमांसानि चोत्कृत्य पेशीकृत्य महायशाः ।
शकुनाय ददौ रामो रम्ये हरितशाद्वले ॥ ३३ ॥

यत्तत्प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः ।
तत्स्वर्गगमनं तस्य क्षिप्रं रामो जजाप ह ॥ ३४ ॥

अनेन स्वर्गगमनसाधनमन्त्रजप उक्तः । तथा चापस्तम्बः—'अपरेणाग्निं प्राङ्मुख उपविश्य अथैनं याम्येन सूक्तेन नवर्चेन पराचानुशंसति । प्रकेतुनेति नारायणाभ्यामुपस्थानम् । ब्राह्मण एकहोतेति च' इति । स्वर्ग्यत्वं मन्त्रलिङ्गादेव स्पष्टं इति ॥

शास्त्रदृष्टेन विधिना जले गृध्राय राघवौ ।
स्नात्वा तु गृध्रराजाय उदकं चक्रतुस्तदा ॥ ३६ ॥

स गृध्रराजः कृतवान् यशस्करं
सुदुष्करं कर्म रणे निपातितः ।
महर्षिकल्पेन च संस्कृतस्तदा
जगाम पुण्यां गतिमात्मनः शुभाम् ॥ ३७ ॥

नन्वत्र रामेण जटायुषः संस्कारः कृत इति प्रतिपादितम् । तथा 'समुद्रं नेतुमिच्छामि भवद्भिर्वरुणालयम् । प्रदास्याम्युदकं भ्रातुस्स्वर्गतस्य महात्मनः ॥' इत्यग्रे संपातिनापि उदकदानं कृतमिति वक्ष्यते । तथा, 'संस्कृत्य वालिनं ते तु विधिपूर्वं प्लवङ्गमाः । आजग्मुरुदकं कर्तुं नदीं शिवजलां शुभाम् ॥' इत्यनेन वालिनोपि संस्कारो वक्ष्यते । इदं सर्वं नोपपद्यते । शास्त्रस्य मनुष्याधिकारत्वेन तिरश्चां कर्मण्यधिकाराभावात् इति चेत्, तत्र वक्तव्यम् —किं तिरश्चां ज्ञानाभावान्नाधिकारः उत सामर्थ्या-

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भावात्, अथवा ब्राह्मणत्वाद्यभावात्, आहोस्वित् शूद्रादीनामिव पर्युदासात् उत विधानाभावात् इति ॥

**नाद्यः ।** धर्मानुष्ठानोपयोगिज्ञानरहितानां आहारनिद्राभयमैथुनादिज्ञानमात्रवतां साधारणतिरश्चां अनधिकारेपि ऐहिकामुष्मिकोपयोगिधर्माधर्मज्ञानवतां जटायुवालिप्रभृतीनां अधिकारे बाधकाभावात् ॥

तादृशज्ञानवत्वं च, 'विन्दो नाम मुहूर्तोऽयं' इत्यनेन, 'उवाच वत्स मां विद्धि वयस्यं पितुरात्मनः' इत्यनेन, 'पूर्वकाले महाबाहो ये प्रजापतयोऽभवन् । कर्दमः प्रथमस्तेषां चिक्रीतस्तदनन्तरः ॥' इत्यारभ्य 'तस्माज्जातोऽहमरुणात्संपातिस्तु ममाग्रजः' इत्यन्तेन ग्रन्थेन, 'दशग्रीव स्थितो धर्मे पुराणे सत्यसंश्रवः । कथं राजा स्थितो धर्मे परदारान् परामृशेत् । रक्षणीया विशेषेण राजदारा महाबल ॥ निवर्तय मतिं नीचां परदाराभिमर्शनात् । न तत्समाचरेद्धीरो यत्परोऽस्य विगर्हयेत् ॥ यथात्मनस्तथाऽन्येषां दारा रक्ष्या विमर्शता । धर्ममर्थं च कामं च शिष्टाश्शास्त्रेष्वनागतम् । व्यवस्यन्त्यनु राजानं पौलस्त्यकुलनन्दन ॥ राजा धर्मश्च कामश्च धर्माणां चोत्तमो निधिः । धर्मश्शुभं वा पापं वा राजमूलात् प्रवर्तते ॥ पापस्वभावश्चपलः कथं त्वं रक्षसां वर । ऐश्वर्यमिह संप्राप्तो विमानमिव दुष्कृती ॥ कामं स्वभावो यो यस्य न शक्यः परिवर्जितुम् । न हि दुष्टात्मनामार्यमावसत्यालये चिरम् ॥ विषये वा पुरे वा ते यदा रामो महाबलः । नापराध्यति धर्मात्मा कथं तस्यापराध्यसि ॥ यदि शूर्पणखाहेतोर्जनस्थानगतः खरः । अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा ॥ अत्र ब्रूहि यथातत्वं को रामस्य व्यतिक्रमः । यस्य त्वं लोकनाथस्य भार्यां हृत्वा गमिष्यसि ॥ स भारस्सौम्य भर्तव्यो यो नरं नावसादयेत् ॥ तदन्नमपि भोक्तव्यं जीर्यते यदनामयम् ॥ यत्कृत्वा न भवेद्धर्मो न कीर्तिर्वा यशो भुवि । शरीरस्य भवेत्खेदः कस्तत्कर्म समाचरेत् ,'

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति मुहूर्तपितृसखत्वस्ववंशरावणधर्मोपदेशप्रतिपादनेन जटायुषो ज्ञानवत्वावगमात् । एवं वाल्यादीनामपि द्रष्टव्यम् ॥

**न द्वितीयः** । अन्धत्ववधिरत्वाद्यभावेन राज्यकरणेन युद्धादिकरणेन च कर्मसामर्थ्यस्याङ्गीकृतत्वात् । राज्यपरिपालनादिकं च, 'षष्टिर्वर्षसहस्राणि मम जातस्य रावण । पितृपैतामहं राज्यं यथावदनुतिष्ठतः ॥ वृद्धोऽहं त्वं युवा धन्वी सरथः कवची गदी । तथाप्यादाय वैदेहीं कुशली न गमिष्यासि ॥ न शक्तस्त्वं बलाद्धर्तुं वैदेहीं मम पश्यतः । हेतुभिर्न्यायसंयुक्तैः ध्रुवां वेदश्रुतीमिव ॥' इत्युक्त्वा 'तस्य तीक्ष्णनखाभ्यां तु चरणाभ्यां महाबलः । चकार बहुधा गात्रे व्रणान् पतगसत्तमः ॥ स राक्षसरथे पश्यन् जानकीं बाष्पलोचनाम् । अचिन्तयित्वा तान् बाणान्राक्षसं समभिद्रवत् ॥ ततोऽस्य सशरं चापं मुक्तामणिविभूषितम् । चरणाभ्यां महातेजा बभञ्ज पतगोत्तमः ॥ तच्चाग्निसदृशं दीप्तं रावणस्य शरावरम् । पक्षाभ्यां च महावीर्यो व्याधुनोत्पतगेश्वरः ॥ काञ्चनोरश्छदान् दिव्यान् पिशाचवदनान्खरान् । तांश्चास्य जवसंपन्नान् जघान समरे बली ॥ वरं त्रिवेणुसंपन्नं कामगं पावकार्चिषम् । मणिहेमविचित्राङ्गं बभञ्ज च महारथम् ॥ पूर्णचन्द्रप्रतीकाशं छत्रं च व्यजनैस्सह । पातयामास वेगेन ग्राहिभी राक्षसैस्सह ॥ सारथेश्चास्य वेगेन तुण्डेनैव महच्छिरः । निपपात भृशं पृष्ठे दशग्रीवस्य वीर्यवान् ॥ केशांश्चोत्पाटयामास नखपक्षमुखायुधः ।' इत्यादिवचनैः स्पष्टतरम् ॥

**नापि** विशिष्टमातृपितृजन्यत्वाभावेन ब्राह्मणत्वाद्यभावादनधिकार इति **तृतीयः** पक्षः संभवति । ब्रह्मणो मानसपुत्राणां दक्षादीनां कुंभसंभूतागस्त्यवसिष्ठादीनामिव वाल्यादीनामपि विशिष्टमातृपितृजन्यत्वाभावेपि महाप्रभावत्वात् ब्राह्मणत्वादेः कर्माधिकारस्य च उपपत्तेः । अत एव वालिनः सन्ध्यावन्दनं सूर्यसकाशाद्धनुमतो विद्याग्रहणादिकं चोपपन्नम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र वालिनस्सन्ध्यावन्दनं उत्तररामायणे —[1] 'अपक्षिगण-संपातान्वानरेन्द्रो महाजवः। क्रमशस्सागरान् सर्वान् सन्ध्याकालमवन्दत ॥ सभाज्यमानो भूतैस्तु खेचरैः खेचरो हरिः। पश्चिमं सागरं वाली आजगाम सरावणः ॥ तत्र सन्ध्यामुपासित्वा स्नात्वा जप्त्वा च वानरः। उत्तरं सागरं प्रायाद्वहमानो दशाननम् ॥ बहुयोजनसाहस्रं तदध्वानं महाहरिः। वायुवच्च मनोवच्च जगाम सह शत्रुणा ॥ उत्तरे सागरे सन्ध्यामुपासित्वा दशाननम्। वहमानोऽगमद्वाली पूर्वमम्बुमहोदधिम्। तत्रापि सन्ध्या-मन्वास्य वासविः स हरीश्वरः ॥' इति ॥

हनूमतस्सूर्यसकाशात् विद्याप्राप्तिः उत्तररामायणे —[2] 'मार्तण्ड-स्त्वब्रवीत्तत्र भगवांस्तिमिरापहा। तेजसोऽस्य मदीयस्य ददामि शतिकां कलाम् ॥ यदा च शास्त्राण्यध्येतुं शक्तिरस्य भविष्यति। तदास्य शास्त्रं दास्यामि येन वाग्मी भविष्यति ॥ न चास्य सदृशः कश्चिद्भविता शास्त्र-दर्शने। ससूत्रवृत्तार्थपदं महार्थं ससंग्रहं साध्यति वै कपीन्द्रः। न ह्यस्य कश्चित् सदृशोस्ति शास्त्रे वैशारदे छन्दगतौ तथैव ॥' इति। तथा 'असौ पुरा व्याकरणं ग्रहीष्यन् सूर्योन्मुखः पृष्ठगतः कपीन्द्रः। उद्यद्गिरेरस्तगिरिं जगाम ग्रन्थं महद्धारयदप्रमेयः ॥ सर्वासु विद्यासु तपोविधाने प्रस्पर्धतेऽयं हि गुरुं सुराणाम् ॥' इति ॥

किष्किन्धाकाण्डेऽपि सर्वविद्यावत्वं हनुमत उक्तम् —[3] 'अभि-भाषस्व सौमित्रे सुग्रीवसचिवं कपिम्। वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्त-मरिन्दम ॥ नानृग्वेदविनीतस्य नायजुर्वेदधारिणः। नासामवेदविदुषः शक्यमेवं प्रभाषितुम् ॥ नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्! बहु

---

1 उत्तरकाण्डे ३४ सर्गे २७ — ३१½ श्लोकाः।

2. उत्तररामायणे ३६ सर्गे १५ १६, ४९, ४८, ४९½ श्लोकाः क्रमेण।

3. किष्किन्धाकाण्डे ३ सर्गे २८, २९, २९ श्लोकाः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

व्याहरतानेन न किञ्चिदपशब्दितम् ॥ अविस्तरमसन्दिग्धं अविलम्बितमद्रुतम् । उरस्थं कण्ठगं वाक्यं वर्तते मध्यमे स्वरे ॥ संस्कारक्रमसंपन्नामद्रुतामविलम्बिताम् । उच्चारयति कल्याणीं वाचं हृदयहर्षिणीम् ॥ अनया चित्रया वाचा त्रिस्थानव्यंजनस्थया । कस्य नाराध्यते चित्तमुद्यतासेररेरपि ॥' इति ॥

नापि पर्युदासादनधिकार इति **चतुर्थः** पक्षः । 'न स्त्रीशूद्रौ वेदमधीयाताम्', 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इत्यादिवचनैः शूद्रादिवत् तिरश्चां पर्युदासादर्शनात् ॥

नापि विधानाभावात् इति **पञ्चमः** । तिरश्चां विशिष्य विधानाभावेपि स्वर्गकामादिसामान्यविधिबलादेव अर्थित्वादिमतामधिकारसंभवात् । अत एव स्वर्गकामित्वाविशेषात् प्रसक्तं शूद्राणां वैदिककर्माधिकारं 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति प्रतिषेधती श्रुतिः अर्थवती भवति । अन्यथा अप्रसक्तप्रतिषेधप्रसङ्गात् ॥

अत एव चार्थित्वाद्यविशेषेण प्रसक्तमधिकारं शूद्राणां प्रतिषेधति भगवान् **बादरायणः**[1] 'श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च' इति । व्याख्यातं च **भगवत्पादैः** । अस्य **भाष्यम्** — 'इतश्च न शूद्रस्याधिकारो यदस्य स्मृतेः श्रवणाध्ययनार्थप्रतिषेधो भवति । वेदश्रवणप्रतिषेधो वेदाध्ययनप्रतिषेधः तदर्थज्ञानानुष्ठानयोः प्रतिषेधः शूद्रस्य स्मर्यते । श्रवणप्रतिषेधस्तावत् 'अथास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्' इति 'पद्यु हवा एतत् श्मशानं यच्छूद्रः तस्मात् शूद्रसमीपे नाध्येतव्यम्' इति च । अत एवाध्ययनप्रतिषेधः । यस्य हि समीपेपि नाध्येतव्यं भवति स कथं अश्रुतमधीयीत । भवति चोदाहरणे जिह्वाच्छेदः धारणे शरीरभेद इति । अत एव चार्थादर्थज्ञानानुष्ठानयोश्च प्रतिषेधो भवति 'न शूद्राय मतिं दद्यात्' इति । 'द्विजातीनामध्ययनं

1. प्रथमाध्याये तृतीयपादे ३८ सूत्रं ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इज्या दानम्' इति च। येषां पुनः पूर्वकृतसंस्कारवशात् हि विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिः तेषां न शक्यते फलप्राप्तिः प्रतिषेद्धुम्, ज्ञानस्यैकान्तिकफलत्वात्। 'श्रावयेच्चतुरो वर्णान्' इति च इतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात्। वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम्' इति॥

एवं प्रतिषेधाभावात् अर्थित्वादिसद्भावाच्च वालिजटायुप्रभृतीनां सिद्धोऽधिकारः। अत एव स्वस्वशक्त्यनुरोधेन विद्योपदेशकर्मानुष्ठानतपश्चरणादिकं प्रतिपादितं श्रुतिपुराणादिषु॥

छान्दोग्ये तावत् हंसैर्निशायां प्रासादे स्वपतो राज्ञो जानश्रुतेस्समीपमेत्य कर्मनिन्दापूर्वकं विद्याप्राशस्त्यप्रतिपादनेन विद्याग्रहणे प्रवृत्तिः कारितेति श्रूयते—[1] 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस। स ह सर्वत आवसथान् मापयांचक्रे सर्वत एव मेऽत्स्यन्तीति। अथ ह हंसा निशायामतिपेतुस्तद्धैवं हंसो हंसमभ्युवाद हो हो हि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीः इति। तं ह परः प्रत्युवाच कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्कमात्थेति यो नु कथं सयुग्वा रैक्क इति यथा कृतायविजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति'॥

तथोपकोसलविद्यायां सत्यकामो जाबालो विद्यार्थं हारिद्रुमतं गौतममेत्य तेन चोपनीतः कृशानां गवां शतचतुष्टयं गृहीत्वा अरण्ये संरक्षणं कुर्विति गुरुणाऽऽज्ञप्तः तथैवाचरन् सहस्रसंपत्तौ ऋषभेणोपदिष्टां ब्रह्मविद्यां जग्राहेति श्रूयते। तथाहि—[2] 'सत्यकामो हि जाबालो जबालां मातरं

1. छान्दोग्ये ४ अध्याये प्रथमखण्डे १–४ वाक्यानि।

2. छान्दोग्ये ४ अध्याये ४ खण्डे १, ३, ४, ५ वाक्यानि, ५ खण्डे १, २, वाक्ये च।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आमन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति विवत्स्यामि' इत्यारभ्य 'स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्यामि उपेयां भगवन्तमिति स होवाच किंगोत्रो नु सोम्यासि इति । स होवाच नाहमेतद्वेद भोः यद्गोत्रोऽहमस्मि अपृच्छं मातरं सा मा प्रत्यब्रवीत् बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे सा अहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोऽहं सत्यकामो जाबालोऽस्मि भो इति । तं होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर उप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां चतुश्शतं गा निराकृत्योवाच इमास्सोम्यानुसंव्रज इति ता अभिप्रस्थापयन्नुवाच नासहस्रेणावर्तेय इति । स ह वर्षगणं प्रोवास ता यदा सहस्रं संपेदुः अथ हैनमृषभोऽभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव प्राप्तास्सोम्य सहस्रं स्मः प्रापय न आचार्यकुलं ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच' इत्यादिना ऋषभाग्निहंसमद्गूनां विद्योपदेष्टृत्वमुक्तम् ॥

तथा **विष्णुपुराणे** जडभरतो मृगजन्म प्राप्य तस्मिंस्तिर्यग्जन्मनि नियमाद्यनुष्ठानं प्रत्यवायपरिहाराय कृतवानित्युक्तं— 'जम्बूमार्गे महारण्ये जज्ञे जातिस्मरो मृगः । विहाय मातरं भूयः सालग्रामं समाययौ ॥ शीर्णैस्तृणैस्तथा पर्णैः स कुर्वन्नात्मपोषणम् । मृगत्वहेतुभूतस्य कर्मणो निष्कृतिं ययौ ॥' इति ॥

तथा **आदिपर्वणि** खाण्डवदाहे तिरश्चां तपश्चर्यादिधर्म उक्तः— [1]'शार्ङ्गिकां शार्ङ्गिको भूत्वा जरितां समुपेयिवान् । तस्यां पुत्रानजनयच्चतुरो ब्रह्मवादिनः ॥ जरितारौ कुलं ह्येतज्ज्येष्ठत्वेन प्रतिष्ठितम् । सारिसृक्कः प्रजायेत पितॄणां कुलवर्धनः ॥ स्तम्बमित्रस्तपः कुर्याद्द्रोणो ब्रह्मविदां वरः ।'

1. २२९ अध्याये १६, १७ श्लोकयोः उत्तरपूर्वार्धे, २३० अध्याये ९ श्लोकः १० श्लोकस्य पूर्वार्धं च ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तत्रैवाग्निवचनम्** – [1] 'ऋषिर्द्रोणस्त्वमसि वै ब्रह्मैतद्व्याहृतं त्वया ॥' पुत्रान् प्रति मन्दपालवचनम् — [2] 'ऋषीन्वेद हुताशोपि ब्रह्म तद्विदितं च वः ।' इति ॥

तथा पक्षिणाप्यातिथ्यं कृतं; तेन च स्वर्गोपि प्राप्त इति प्रतिपादितं **भारते** लुब्धककपोतीये । लुब्धकेन गृहीता पञ्जरस्था कपोती भर्त्रे धर्ममुपदिशति — [3] 'हन्त वक्ष्यामि ते श्रेयः श्रुत्वा तु कुरु तत्तथा । शरणागतसन्त्राता भव कान्त विशेषतः ॥ एष शाकुनिकः शेते तव वासं समाश्रितः । शीतार्तश्च क्षुधार्तश्च तस्मै पूजां समाचर ॥ यो हि कश्चिद्द्विजं हन्याद्गां च लोकस्य मातरम् । शरणागतं च यो हन्यात्तुल्यं तेषां च पातकम् ॥ अस्माकं विहिता वृत्तिः कापोती जातिधर्मतः । सा न्याय्याऽऽत्मवता नित्यं त्वद्विधेनानुवर्तितुम् ॥ यस्तु धर्मं यथाशक्ति गृहस्थो ह्यनुवर्तते । स प्रेत्य लभते लोकानक्षयानिति शुश्रुमः ॥ स त्वं सन्तानवानद्य पुत्रवानसि च द्विज । तत्स्वदेहे दयां त्यक्त्वा धर्मार्थौ परिगृह्य च ॥ पूजामस्मै प्रयुंक्ष्व त्वं प्रीयेतास्य मनो यथा । शरीरे मा च सन्तापं कुर्वीथास्त्वं विहङ्गम ॥ शरीरयात्रावृत्त्यर्थं अन्यान् दारानुपास्यसि । इति सा शकुनी वाक्यं पञ्जरस्था तपस्विनी ॥ अतिदुःखान्विता प्रोक्त्वा भर्तारं पुनरैक्षत । स पत्न्या वचनं श्रुत्वा धर्मयुक्तिसमन्वितम् ॥ हर्षेण महता युक्तो बाष्पव्याकुललोचनः । तं वै शाकुनिकं दृष्ट्वा विधिदृष्टेन कर्मणा ॥ स पक्षी पूजयामास यत्नात्तं पक्षिजीविनम् । उवाच स्वागतं तेऽद्य ब्रूहि किं करवाणि ते ॥ सन्तापश्च न

1. २३२ अध्याये २१ श्लोकस्य पूर्वार्धं ।
2. २३४ अध्याये ३ श्लोकस्य उत्तरार्धम् ।
3. शान्तिपर्वणि १४५ अध्याये ६ श्लोकमारभ्य १४६ अध्याये २४ श्लोकान्तो भागः, १४७ अध्याये ९ श्लोकमारभ्य १४८ अध्याये प्रथमश्लोकान्तो भागः, १४८ अध्याये १० श्लोकमारभ्य अध्यायान्तो भागश्च । (आहत्य ७+२४+२½+१+३½ = ३८ श्लोकाः)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कर्तव्यः स्वगृहे वर्तते भवान् । तद्ब्रवीतु भवान् क्षिप्रं किं करोमि किमिच्छसि ॥ प्रणयेन ब्रवीमि त्वा त्वं हि नरशरणागतः । अरावप्युचितं कार्यं आतिथ्यं गृहमागते ॥ छेत्तुमप्यागते छायां नोपसंहरते द्रुमः । शरणागतस्य कर्तव्यमातिथ्यमिह यत्नतः ॥ पञ्चयज्ञप्रवृत्तेन गृहस्थेन विशेषतः । पञ्च यज्ञांस्तु यो मोहान्न करोति गृहाश्रमे ॥ तस्य नायं न च परो लोको भवति धर्मतः । तद्ब्रूहि मां सुविश्रब्धो यत्त्वं वाचा वदिष्यसि ॥ तत्करिष्याम्यहं सर्वं मा त्वं शोके मनः कृथाः । तस्य तद्वचनं श्रुत्वा लुब्धको वाक्यमब्रवीत् ॥ बाधते खलु मे शीतं संत्राणं हि विधीयताम् । एवमुक्तस्ततः पक्षी पर्णान्यास्तीर्य भूतले ॥ यथाशक्त्या हि पर्णेन ज्वलनार्थं द्रुतं ययौ । स गत्वाङ्गारकर्मागं(न्तं) गृहीत्वाग्निमथागमत् ॥ ततः शुष्केषु पर्णेषु पावकं सोऽप्यदीपयत् । स संदीप्तं महत्कृत्वा तमाह शरणागतम् ॥ प्रतापय सुविश्रब्धः स्वगात्राण्यकुतोभयः । स तथोक्तस्तथेत्युक्त्वा लुब्धो गात्राण्यतापयत् ॥ अग्निप्रत्यागतप्राणस्ततः प्राह विहङ्गमम् । हर्षेण महता-ऽऽविष्टो वाक्यं व्याकुललोचनः ॥ दत्तमाहारमिच्छामि त्वया क्षुद्बाधते हि माम् ।

स तद्वचः प्रतिश्रुत्य वाक्यमाह विहङ्गमः ॥ न मेऽस्ति विभवो येन नाशयेयं क्षुधं तव । उत्पन्नेनैव जीवामो वयं नित्यं वनौकसः ॥ संचयो नास्ति चास्माकं मुनीनामिव भोजने । इत्युक्त्वा स तदा तत्र विवर्ण-वदनोऽभवत् ॥ कथं नु खलु कर्तव्यमिति चिन्तापरस्तदा । बभूव भरतश्रेष्ठ गर्हयन्वृत्तिमात्मनः ॥ मुहूर्ताल्लब्धसंज्ञस्तु स पक्षी पक्षिघातिनम् । उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय ॥ इत्युक्त्वा शुष्कपर्णैस्तु समुज्वाल्य हुताशनम् । हर्षेण महता युक्तस्स पक्षी वाक्यमब्रवीत् ॥ ऋषीणां दैवतानाञ्च पितॄणां च महात्मनाम् । श्रुतः पूर्वो मया धर्मो महानतिथि-पूजने ॥ कुरुष्वानुग्रहं सौम्य सत्यमेतद्ब्रवीमि ते । निश्चिता खलु मे बुद्धि-रतिथिप्रतिपूजने ॥ ततः कृतप्रतिज्ञो वै स पक्षी प्रहसन्निव । तमग्निं त्रिः

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परिक्रम्य प्रविवेश महामतिः ॥ अग्निमध्यं प्रविष्टं तु लुब्धो दृष्ट्वा स पक्षिणम् । चिन्तयामास मनसा किमिदं वै मया कृतम् ॥ दृष्टो धर्मो हि धर्मिष्ठे यादृशो विहगोत्तमे । एवमुक्त्वा विनिश्चित्य रौद्रकर्मा स लुब्धकः ॥ महाप्रस्थानमाश्रित्य प्रययौ शंसितव्रतः । ततो यष्टिं शलाकां च क्षारकं पञ्जरं तथा ॥ तां च बद्धां कपोतीं स प्रमुच्य विससर्ज ह । ततो गते शाकुनिके कपोती प्राह दुःखिता ॥ संस्मृत्य सा च भर्तारं रुदती शोककर्शिता । पतिव्रता संप्रदीप्तं प्रविवेश हुताशनम् ॥ ततश्चित्राङ्गदधरं भर्तारं साप्यपश्यत । विमानस्थं सुकृतिभिः पूज्यमानं महात्मभिः ॥ चित्रमाल्याम्बरधरं सर्वाभरणभूषितम् । विमानशतकोटीभिरावृतं पुण्यकर्मभिः ॥ ततः स्वर्गगतः पक्षी विमानवरमास्थितः । कर्मणा पूजितस्तत्र रेमे स सह भार्यया ।' इति ॥

एवं चार्थित्वादिगुणसत्वात् जटायुवाल्यादीनामधिकारस्सिद्धः । न चैवं तिर्यगधिकरणविरोधः । तथाहि —[1] 'फलार्थित्वात्तु कर्मणः शास्त्रं सर्वाधिकारं स्यात् । सिद्धेऽधिकारे स किमनुष्ठानसमर्थानां मनुष्याणामेवेति संशयः । तत्र यदि यथाधिकारं अङ्गविनियोगः ततः सर्वेषां, अथ यथाविनियोगमधिकारः ततः समग्रानुष्ठानमेव । तत्र प्रधानवाक्येन सर्वेषामधिकारधीः जायते, तद्वशेनाङ्गवाक्यानामुपवर्णनम् । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति हि प्रधानवाक्येन सर्वस्वर्गकामाधिकारं कर्मावगतं; तदनुसारीणि चाङ्गवाक्यानि न तत्सङ्कोचायालम् । अतश्चक्षुष्मन्तं प्रत्याज्यावेक्षणविधिः । अचक्षुष्मतस्तु तद्विध्यभावात् तद्रहितमेव फलसाधनम् । एवं बधिरस्य वाचनरहितं, मूकस्य मन्त्रोच्चारणरहितं पङ्गोश्च विप्लुतिक्रमणरहितमिति सर्वेषामर्थिनां अशक्याङ्गरहितकर्मानुष्ठानात् सिद्धोऽधिकारः ॥

---

1. शास्त्रदीपिकायां षष्ठेऽध्याये प्रथमपादे द्वितीयमधिकरणं समग्रम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्यादेवमर्थिनां । तिरश्चां तु साम्परायिकफलकामनाभावात् कथमधिकारशङ्का । तेषामपि चतुर्दश्युपवासादिदर्शनादस्त्येव दृष्टार्थितेति मन्यते । अत्रोच्यते — 'नैवाज्यावेक्षणादीनां पुरुषं प्रति चोदना । यतोऽसमर्थस्तच्छून्यं कर्म कृत्वाधिकारभाक् ॥' पुरुषं प्रति हि विधीयमानमसमर्थं प्रत्यविहितत्वात् अनङ्गमेवेति तद्रहितं कर्म अविगुणं समग्रं कर्मफलं साधयेत् ॥

'क्रतुं प्रति विधिस्तेषां तादृशं तं च शक्नुवन् । कृत्वा फलमवाप्नोति ततोऽन्यस्यानधिक्रिया ॥' न हि स्वातन्त्र्येणाङ्गवाक्यानि पुरुषैस्संबध्यन्ते; प्रधानवाक्यशेषत्वात् तेषाम् । तद्युक्तेन तु प्रधानवाक्येन तदङ्गयुक्तः क्रतुः पुरुषैः संबध्यमानोऽसमर्थानपहाय समर्थान् प्रति विज्ञायते । अतोऽन्धस्य क्रतुरेवाविहितः; न त्वाज्यावेक्षणमेवाविहितमितरच्च विहितमिति मन्तव्यम् । न च प्रधानवाक्यविरोधात् सर्वाधिकारनिश्चयः । विशेषाभावाद्धि सर्वाधिकारः स्यात् । अस्ति चात्र विशेषोऽङ्गोपसंहारसामर्थ्यम् । अतः समर्थानामेवाधिकारः ॥

यत्र तु प्रधानवाक्यविरोधो यावज्जीवादौ, तत्र भवत्येव यथाशक्ति प्रयोगादपि फलमिति वक्ष्यते । तदविरोधे तु सर्वाङ्गयुक्तकर्मानुष्ठानादेव फलम् । तिरश्चां तु प्रधानमात्रेऽप्यसामर्थ्यात् न क्वचिदधिकारः । ऋषीणाञ्च अनादौ संसारे पूर्वपूर्वभृग्वादिवरणसंभवादस्त्येवाधिकार इति ऋष्युदाहरणमेवादर्तव्यम् । देवतानां च आत्मोद्देशेन त्यागासंभवात् विग्रहाभावाच्चाशक्तेरनधिकार इति ॥

एवञ्च तिरश्चामनधिकारप्रतिपादनात् कथं तिर्यग्भूतानां जटायुवादीनामधिकार इति चेन्न । तिर्यगधिकरणस्य हि असमर्था अनधिकारिणः समर्थाश्चाधिकारिण इत्यत्रैव तात्पर्यम् । न तु तिर्यक्त्वाद्देवत्वाद्वा अनधिकार इति । अत एव सिद्धान्ते प्रधानयागे तिरश्चां सामर्थ्याभावादन्धादीनां

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

च आज्यावेक्षणाद्यङ्गोपसंहारे सामर्थ्याभावात्, देवानाञ्च देवतान्तरोद्देशेन द्रव्यत्यागासामर्थ्यादिति अनधिकारे सामर्थ्याभाव एव हेतुत्वेनोपन्यस्तः। अत एव ऋष्यन्तरवरणसंभवात् सामर्थ्यसत्त्वादधिकार इत्यप्युक्तम्। एवञ्च असमर्थानां मनुष्याणामनधिकारेऽपि समर्थानां मनुष्याणां यथाधिकारस्तथा असमर्थानांतिरश्चां अनधिकारेऽपि समर्थानां तिरश्चामधिकारे विरोधाभावात्। एवञ्च श्येनकपोतीयाद्याख्यायिकानां प्रामाण्यं साधितं भवति ॥

इतिहासपुराणादीनां च स्वार्थे प्रामाण्यमुक्तं देवताधिकरणे भगवत्पादैः — 'इतिहासपुराणमपि व्याख्यातमार्गेण संभवन्मन्त्रार्थवादमूलत्वात् भवति देवताविग्रहादि प्रपञ्चयितुम्' इति। बृहदारण्यकभाष्येऽपि — 'आचारविध्युपदेशनार्थश्च। एवमाचारवतोः वक्तृश्रोत्रोराख्यायिकानुगतोऽर्थोऽवगम्यते। केवलतर्कनिषेधार्था च आख्यायिका 'नैषा तर्केण मतिरापनेया' 'न शास्त्रदग्धाय मतिं दद्यात्' इति श्रुतिस्मृतिभ्याम्। श्रद्धैव ब्रह्मविज्ञाने परमं साधनमित्याख्यायिकार्थं इति। तस्माज्जटायुवाल्यादीनां संस्कार उपपन्न एवेति ॥

इति अष्टषष्टितमः सर्गः ॥

## अथ एकोनसप्ततितमः सर्गः ॥

एकोनसप्ततितमे— अथ सीतां विचेतुं दक्षिणां दिशं काकुत्स्थे प्रस्थिते राक्षसी काचिदयोमुखी नाम रामाग्रतो गच्छन्तं लक्ष्मणमवलम्ब्य 'एहि रंस्यावहे' इति भाषमाणा तदीयखड्गधारया शूर्पणखेव दुर्दशामवाप। ततः क्रौञ्चारण्यसरण्या प्रस्थितं काकुत्स्थं निमित्ताभिज्ञो लक्ष्मणः प्राञ्जलिरेवमवादीत् —

स्पन्दते मे दृढं बाहुरुद्विग्नमिव मे मनः।
प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ॥ ६ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्मात् सज्जीभवार्य त्वं कुरुष्व वचनं हितम् ।
ममैव हि निमित्तानि सद्यस्संसन्ति संभ्रमम् ॥ २२ ॥

एष वञ्जुलको नाम पक्षी परमदारुणः ।
आवयोर्विजयं युद्धे शंसन्निव विनर्दति ॥ २३ ॥

ततः स्थूलशिरसो महर्षेः शापात् कौणपतामापन्नेन शिरःकण्ठविहीने-नोदरवदनेन कवन्धनाम्ना दनुजेन पन्नगपतिभोगभीषणाभ्यां योजनायताभ्यां भुजाभ्यां दृढमाबध्य आकृष्यमाणयोः काकुत्स्थयोः धैर्येण प्राप्तकालमपि दुःखं अविगणयति राघवे बालभावतया तद्दुःखमसहमानेन विषण्णवदनेन लक्ष्मणेन 'रक्षोवशमापन्नं अशक्यमोक्षं मां भूतबलिमुत्सृज्य सत्वरमपसृत्य वैदेहीमितस्ततो विचिन्वन् अधिगम्य च तां, कुलपरम्पराप्राप्तं प्राज्यं राज्यं प्रतिलभ्य मामेवंगतं स्मर्तुमर्हसि' इति सकरुणमुदाहृतं वचनजातमाकर्ण्य द्विगुणीकृतशोकवेगो राघवस्सौमित्रिमेवमवादीत्—

त्वां च मां च नरव्याघ्र व्यसनैः पश्य मोहितौ ॥ ४७ ॥

नातिभारोऽस्ति दैवस्य सर्वभूतेषु लक्ष्मण ।
शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे ।
कालाभिपन्नास्सीदन्ति यथा वालुकसेतवः ॥ ४८ ॥ इति ॥

इति एकोनसप्ततितमः सर्गः ॥

## अथ सप्ततितमः सर्गः ॥

**सप्ततितमे**—अथ निजभुजयुगपरिक्षिप्तौ तावालोक्य 'क्षुधा कर्शितस्य मम भक्षणाय दैवेनोपनीतौ युवां' इति वदति कबन्धे लक्ष्मणो राममवलोक्य बाहुग्रहनिश्चेष्टावावां भीषणोऽयमभिहन्तुमिच्छति ॥

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्मादसिभ्यामस्याशु बाहू छिन्दावहै गुरू ॥ ५ ॥
निश्चेष्टानां वधो राजन् कुत्सितो जगतीपते ।
क्रतुमध्योपनीतानां पशूनामिव राघव ॥ ६ ॥

इत्यवादीत् । अनेन युद्धेन विना क्षत्रियवृत्तिस्थानां वधः कुत्सित इत्युक्तम् । तथा च **राजधर्मे**—[1]'अधर्मः क्षत्रियस्यैव यच्छय्यामरणं भवेत् । विसृजन् श्लेष्मपित्तानि कृपणं परिदेवयन् ॥ अविक्षतेन देहेन प्रलयं योऽधिगच्छति । क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः ॥ न गृहे मरणं तात क्षत्रियाणां प्रशस्यते । शौण्डीराणामशौण्डीर्यं अधर्मं कृपणं च तत् ॥ इदं दुःखं महाकष्टं पापीय इति निष्टनन् । प्रतिध्वस्तमुखः पूतिरमात्यानन्वशोचतः (यन्) ॥ अरोगाणां स्पृहयत स्वर्गं मृत्युमपीच्छति । वीरो दृप्तोऽभिमानी च नेदृशं मृत्युमर्हति ॥ रणेषु कदनं कृत्वा शत्रुभिः परिवारितः । तीक्ष्णैः शस्त्रैः सुविक्षिप्तैः क्षत्रियो मृत्युमर्हति ॥ शूरो हि काममन्युभ्यां आविष्टो युध्यते भृशम् । हन्यमानानि गात्राणि परैर्नैवावबुध्यते ॥ स संख्ये निधनं प्राप्य शक्रस्यैति सलोकताम् ।' इति । **स्थलान्तरेऽपि**—[2]'विक्रमेण महीं लब्ध्वा प्रजा धर्मेण पालयेत् । आहवे निधनं कुर्याद्राजधर्मपरायणः ॥' इति ।

ततो विदार्य वदनं भक्षितुमागच्छन् राक्षसः रामलक्ष्मणाभ्यां खण्डितेन भुजयुगलेन सह भूमौ निपतन् आर्तस्वरेण निखिलमपि तदरण्यं विनादितवान् । तदनु कबन्धेन आदरादभ्यर्थितः सौमित्रिः दण्डकावनागमनं अखिलेनाभिधाय 'किन्निमित्तमिदमतिघोरतरं रूपमवलम्ब्य गहने कानने सञ्चरसि' इत्यपृच्छत् । ततो राक्षसः स्मृतिमभिनीय सविस्तरमुवाच ॥

इति सप्ततितमः सर्गः ॥

1. ९७ अध्याये २३-३० श्लोकाः ।
2. ९२ अध्याये २३ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ एकसप्ततितमः सर्गः ॥

एकसप्ततितमे — पुरा खलु दिवाकरनिशाकरतिरस्कारकारि-रूपवता मया सकललोकवित्रासनं आसुरं वपुरवलम्ब्य वित्रासितेषु तापसेषु महर्षिणा स्थूलशिरसा एतदेव ते नृशंसं रूपमस्त्विति अभिधाय मत्प्रार्थनया रामशरनिकृत्तभुजः त्वं निजरूपमवाप्स्यसीति कथितं शापविमोक्षकालं मनसि विचिन्त्य, तीव्रतरतपःप्रत्याहितपितामहवरलब्धाशस्त्रवध्यभावदर्पितेन मया रणे विक्रम्य, प्रधर्षितः शक्रः कुलिशेन सक्थिनी शिरश्च शरीरे संप्रवेश्य विरिञ्चिवचनपरिपालनपरो दीर्घकालजीवनाय सकलवनचराकर्षण-पटु योजनायतं भुजद्वयं उदरदरीविनिहितं वदनं च परिकल्प्य मुनि-समुदीरितं शापान्तमभिहितवान् ॥

सोऽहमेतावन्तमनेहसं घोरतरशापविमोचको रामोपि कदाचिद्ग्रहण-मेष्यतीति बुद्ध्या भुजगभोगभीषणाभ्यां भुजाभ्यां निखिलसत्वाकर्षणं कुर्वन् सफलपरिश्रमोऽस्मि । तदधुना भवद्दत्ताग्निना संस्कृतो भवतोर्बुद्धिसाचिव्यं कुर्वन् कलत्रान्वेषणविचक्षणं मित्रमप्युपदेक्ष्यामि ।

अदग्धस्य हि विज्ञातुं शक्तिरस्ति न मे प्रभो ।
राक्षसं तं महावीर्यं सीता येन हृता तव ॥ २८ ॥

विज्ञानं हि मम भ्रष्टं शापदोषेण राघव ।
स्वकृतेन मया प्राप्तं रूपं लोकविगर्हितम् ॥ २९ ॥

किन्तु यावन्न यात्यस्तं सविता श्रान्तवाहनः ।
तावन्मामवटे क्षिप्त्वा दह राम यथाविधि ॥ ३० ॥

दग्धस्त्वयाहमवटे न्यायेन रघुनन्दन ।
वक्ष्यामि तमहं वीर यस्तं ज्ञास्यसि राक्षसम् ॥ ३१ ॥

तेन सख्यं च कर्तव्यं न्याय्यवृत्तेन राघव ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कल्पयिष्यसि ते वीर साहाय्यं लघुविक्रमः । ३२ ॥
न हि तस्यास्त्य विज्ञातं त्रिषु लोकेषु राघव ।
सर्वान् परिसृतो लोकान् पुरासौ कारणान्तरे ॥ ३३ ॥

इति एकसप्ततितमः सर्गः ॥

## अथ द्विसप्ततितमत्रिसप्ततितमौ सर्गौ ॥

द्विसप्ततितमत्रिसप्ततितमयोः— तदनु सौमित्रिरचितायां चितायां सर्वतः प्रदीप्तपावकायां दह्यमाने कलेवरे तां चितां विधूय विधूमोऽग्निरिव विरजोम्बरधरो दिव्यपुरुषस्समुत्पत्य भास्वरेण शरीरेण दश दिशो विशदयन् आकाशगे विमाने तिष्ठन् हृष्टचेताः कबन्धः सविनयमेवमवादीत्—

श्रृणु राघव तत्वेन (य) तथा सीतामवाप्स्यसि ॥ ७ ॥
राम षड्युक्तयो लोके याभिस्सर्वं विमृश्यते । ८ ॥

अत्र षड्युक्तयः सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्याः षड्गुणा उच्यन्ते । एतेषां राज्ञो नित्यचिन्तनीयत्वं विनियोगप्रकारश्च मानवे—[1]'सान्धिं च विग्रहं चैव यानमासनमेव च । द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत्सदा ॥ आसनं चैव यानं च सन्धाय च विगृह्य च । कार्यं वीक्ष्य प्रयुंजीत द्वैधं संश्रयमेव च ॥' इति ॥

तत्र सन्धिष्षोडशविधः — कपालोपहारसन्तानसंह(ग)तोपन्यास-प्रतीकारसंयोगपुरुषान्तरादृष्टनरादिष्टात्मादिष्टोपग्रहपरिक्रियोच्छिन्नपर(भू)दूषणस्कन्धोपनेयभेदात् । तत्र समबलयोः परस्परं सन्धिः कपालसन्धिः । द्रव्यप्रदानेन क्रियमाण उपहारः । कन्याप्रदानेन कृतः सन्तानः । सद्भि-

1. ७ अध्याये १६०, १६१ श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मैत्रीपूर्वकं कारितस्संह(ग)तः । अयमेव संह(ग)तः यावदायुःक्रियमाण उत्कृष्टत्वात् काञ्चन इति उच्यते । अन्ये तु संपत्तिविपत्त्योर्हेतुभिः यो न भिद्यते स काञ्चन इत्याचक्षते । तेषां मते सप्तदश सन्धयो द्रष्टव्याः ॥

भाविनीमेकार्थसिद्धिमुद्दिश्य क्रियमाण उपन्यासः । मया कृतस्य करिष्यमाणस्य वा उपकारस्य अयं प्रत्युपकरिष्यतीति क्रियमाणः प्रतीकारः । एकार्थसाधनाय यात्रायां क्रियमाणः संयोगः । योधैरेकमर्थं साधयितुं क्रियमाणः पुरुषान्तरः । मदीयोऽयमर्थस्त्वया साधनीय इत्येतदर्थतया क्रियमाणोऽदृष्टनरः । भूम्येकदेशेन क्रियमाण आदिष्टः । सैन्यप्रदानेन क्रियमाण आत्माभिषः (दिष्टः) । सर्वस्वमपि प्रदायात्मसंरक्षणाय क्रियमाण उपग्रहः । कृत्स्नं कोशमेकदेशं वा प्रदाय क्रियमाणः परिक्रयः । सारवद्-भूमिदानेन क्रियमाण उच्छिन्नः । उत्कृष्टभूमिफलं प्रदाय क्रियमाणः परदूषणः । प्राप्तफलं विभज्य सेनापतिभिर्ग्राह्य इति क्रियमाणो यः स स्कन्धोपनेयः ॥

तथा कामन्दके—[1] 'कपाल उपहारश्च सन्तानस्संहतस्तथा । उप-न्यासः प्रतीकारः संयामः (संयोगः) पुरुषान्तरः ॥ अदृष्टनर आदिष्ट आत्मा-मिष उपग्रह । परिक्रयस्तथोच्छिन्नस्तथा च परदूषणः ॥ स्कन्धोपनेयस्सन्धिश्च षोडशः परिकीर्तितः । इति षोडशकं प्राहुः सन्धिं सन्धिविचक्षणाः ॥ कपालसन्धिर्विज्ञेयः केवलं समसन्धितः । संप्रदानाद्भवति य उपहारः स उच्यते ॥ सन्तानसन्धिर्विज्ञेयो दारिकादानपूर्वकः । सद्भिस्संहतसन्धिस्तु मैत्रीपूर्व उदाहृतः ॥ यावदायुःप्रमाणं तु समानार्थप्रयोजकः । संहतस्सन्धि-रेवेह प्रहृष्टत्वात् सुवर्णवत् ॥ संपत्तौ च विपत्तौ च कारणैर्यो न भिद्यते । सोऽपरैः सन्धिकुशलैः काञ्चनः परिकीर्तितः ॥ भव्यामेकार्थसिद्धिन्तु समुद्दिश्य क्रियेत यः । स उपन्यासकुशलैरुपन्यास उदाहृतः ॥ मयास्योप-

---

1. सन्धिविकल्पनामके दशमसर्गे २—११ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कृतं पूर्वं ममाप्येष करिष्यति । इति यः क्रियते सन्धिः प्रतीकारस्स उच्यते ।। उपकारं करोम्यस्य ममाप्येष करिष्यति । अयं चापि प्रतीकारो रामसुग्रीवयोरिव ।। एकार्थं सम्यगुद्दिश्य यात्रां यत्र हि गच्छति[तः]। स संहितप्रमाणस्तु सन्धिस्संयोग उच्यते ।। आवयोर्योधमुख्याभ्यां अर्थोऽयं साध्यतामिति । यस्मिन्पणः प्रक्रियते स सन्धिः पुरुषान्तरः ।। त्वयैकेन मदीयार्थः संप्रसाध्यस्त्वसाविति । यत्र शत्रुः पणं कुर्यात् सोऽदृष्टपुरुषः स्मृतः ।। यत्र भूम्येकदेशेन पणेन रिपुरूर्जितः । सन्धीयते सन्धिविद्भिरादिष्टस्स उदाहृतः । स्वसैन्येन तु सन्धानं आत्मामिष इति स्मृतः । क्रियते प्राणरक्षार्थं सर्वदानमुपग्रहः ।। कोशांशेनाथ कुप्येन सर्वकोशेन वा पुनः । शेषप्रकृतिरक्षार्थं परिक्रय उदाहृतः ।। भुवां सारवतीनां तु दानादुच्छिन्न उच्यते । सर्वभूम्युच्छ्रितफलदानेन परदूषणः ।। परिच्छिन्नं फलं यत्र स्कन्धस्कन्धेन दीयते । स्कन्धोपनेयं तं प्राहुः सन्धिं सन्धिविदो जनाः ।।' इति ।।

अन्ये तु परस्परोपकारमैत्रसंबन्धजोपहारभेदेन चातुर्विध्यमाहुः । एतदप्युक्तरकामन्दके — [1] 'परस्परोपहारश्च मैत्रस्संबन्धजस्तथा । उपहारश्च विज्ञेयाश्चत्वारोऽमी सुसन्धयः ।।' इति । इतरे तु मैत्रातिरिक्तं उपसंहारत्वेनैकीकृत्य उपहारमैत्रभेदेन द्वैविध्यमामनन्ति । तत्रापि कामन्दके— [2] 'एक एवोपहारस्तु सन्धिरेतन्मतं हि नः । उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिताः ।।' इति । अपरस्तु मैत्रमपि उपहारेऽन्तर्भाव्य एकमेवोपहारसन्धिमाह । इदमप्युक्तं कामन्दके — [3] 'अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्तते । उपहारादृते तस्मात् सन्धिरन्यो न विद्यते ।।' इति ।।

अयञ्च सन्धिः बालवृद्धदीर्घरोगज्ञातिबहिष्कृतभीरुकभीरुकजनलुब्धलुब्धजन विरक्त विषयातिसक्तानेकचित्तमन्त्रेदेवब्राह्मणनिन्दक दैवोपहतक दैव-

---

1. दशमसर्गे २० श्लोकः । 2. १० सर्गे २१ श्लोकः ।
3. १० सर्गे २२ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चिन्तकदुर्भिक्षव्यसनोपेतबलव्यसनसङ्कुलअदेशस्थबहुरिपुअकालयुद्धप्रवृत्तसत्य धर्मव्यपेतैः न कर्तव्यः, तेषां सुखोच्छेद्यत्वात् ॥

बालोऽप्रभुत्वात् सुखोच्छेद्यः । वृद्धदीर्घरोगिणावुत्साहशक्त्यभावात् । ज्ञातिबहिष्कृतः स्वैरेव पराभूतत्वात् । भीरुर्युद्धपरित्यागात् । भीरुपरिजनोऽसहायात् । लुब्धोऽदानात् । लुब्धानुजीवी अनुजीविनां लोभात् । विरक्तप्रकृतिः प्रकृतिभिः परित्यागात् । विषयातिसक्तो विचाराभावात् । अनेकचित्तमन्त्रो मन्त्रिभिरुपेक्षणात् । देवब्राह्मणनिन्दकोऽधर्मप्राबल्यात् । दैवोपहतको दैवानुकूल्याभावात् । दैवचिन्तकोऽनारम्भात् । दुर्भिक्षव्यसन अन्नाभावात् । बलव्यसनयुक्तो बलैर्विरोधात् । अदेशस्थः प्राकारादियुद्धयोग्यदेशाभावात् । बद्धमित्रो [बह्वमित्रो] भयाधिक्यात् । अकालयुक्तसैन्यः अकाले युद्धारंभात् । सत्यधर्मव्यपेतोऽसाधुत्वादिति ॥

तथा च कामन्दके—[1] 'बालो वृद्धो दीर्घरोगस्तथा ज्ञातिबहिष्कृतः । भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥ विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् । अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥ दैवोपहतकश्चैव दैवचिन्तक एव च । दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः ॥ अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च सः । सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ एतैस्सन्धिं न कुर्वीत विगृह्णीयात्तु केवलम् । एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशम् ॥ बालस्य ह्यप्रभावत्वात् न लोको योद्‍धुमिच्छति । योद्‍धुं स्वयमशक्तस्स[श्च] परार्थे को हि युध्यते ॥ उत्साहशक्तिहीनत्वात् वृद्धो दीर्घामयस्तथा । स्वैरेव परिभूयेते द्वावप्येतावसंशयम् ॥ सुखोच्छेद्यो हि भवति सर्वज्ञातिबहिष्कृतः । त एवैनं विनिघ्नन्ति ज्ञातयः स्वात्मसात्कृताः ॥ भीरुर्युद्धपरित्यागात् क्षिप्रमेव विनश्यति । वीरोपि भीरुपुरुषः संग्रामे तैर्विमुच्यते ॥ लुब्धस्यासंविभागित्वान्न युध्यन्तेऽनुजीविनः । लुब्धानुजीवी

1 [illegible] श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तैरेव दानहीनैर्विहन्यते ॥ संत्यज्यते प्रकृतिभिः विरक्तप्रकृतिर्युधि । सुखाभियोगो[ज्यो] भवति विषयेष्वतिसाक्तिमान् ॥ अनेकचित्तमन्त्रस्तु द्वेष्यो भवति मन्त्रिणाम् । अनवस्थितचित्तत्वात् कार्ये तैस्स उपेक्ष्यते ॥ सदा धर्मबलीयस्त्वात् देवब्राह्मणनिन्दकः । विशीर्यते स्वयं चैव दैवोपहतकस्तथा ॥ संपत्तौ च[त्तेश्च] विपत्तौ च[त्तेश्च] दैवमेव हि कारणम् । इति दैवपरो ध्यायन् आत्मना न विचेष्टते ॥ दुर्भिक्षव्यसनी चैव स्वयमेवावसीदति । बलव्यसनयुक्तस्य योद्धुं शक्तिर्न विद्यते ॥ अदेशस्थो हि रिपुणा स्वल्पकेनापि हन्यते । ग्राहोऽल्पीयानपि जले गजेन्द्रमपि कर्षति ॥ बहुमित्रस्तु सन्त्रस्तः शत्रुमध्ये कपोतवत् । येनैव गच्छति पथा तेनैवाशु विनश्यति ॥ अकालयुक्तसैन्यस्तु हन्यते कालयोधिना । कौशिकेन हतज्योतिर्निशीथ इव वायसः ॥ सत्यधर्मव्यपेतेन न सन्दध्यात् कथञ्चन । स संधितोऽप्यसाधुत्वात् अचिराद्याति विक्रियाम् ॥' इति ॥

सन्धेयाश्च सत्यवानार्यो धार्मिकोऽनार्यो भ्रातृसंघातवान् बलवाननेकविजयी चेति । तत्र सत्यवान् उक्तार्थनिर्वाहकत्वात् सन्धेयः । आर्यः प्राणात्ययेपि कौटिल्याद्यनाचरणात् । धार्मिकोऽनुरक्तप्रजत्वात् । अनार्यो मूलोच्छेदकरत्वात् । संघातवान् बहुसहायत्वात् । बलवान् अनेकविजयी सर्वाभिभाविप्रतापवत्वात इति ॥

तथा च कामन्दकः—[1] 'सत्यार्यौ धार्मिकानार्यौ भ्रातृसंघातवान् बली । अनेकविजयी चेति सन्धेयास्सप्त कीर्तिताः ॥ सत्योऽनुपालयन् सत्यं सन्धितो नैति विक्रियाम् । प्राणात्ययेष्वपि व्यक्तमार्यो नायात्यनार्यताम् ॥ धार्मिकस्यापि युक्तस्य सर्व एव हि युध्यते । प्रजानुरागाद्धर्माच्च दुःखोच्छेद्यो हि धार्मिकः ॥ सन्धिकार्यो ह्यनार्येण संप्राप्योत्सादयेद्धि सः । रेणुकायास्सुत इव मूलेष्वपि न तिष्ठति ॥ संघातवान् यथा वेणुः निबद्धः [विडः]

1. दशमसर्गे ४२-५२ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कण्टकैर्वृतः । न शक्यते समुच्छेत्तुं भ्रातृसंघातवांस्तथा ॥ समाक्रान्तस्य बलिना सर्वयत्नवतोपि हि । हरिणस्येव सिंहेन शरणं नैव दृश्यते । ईषदायच्छमानोपि सिंहो मत्तानिव द्विपान् । हिनस्ति बलवांस्तस्मात् सन्धेयाशिशवमिच्छता । बलिना सह योद्धव्यं इति नास्ति निदर्शनम् । प्रतिवातं न हि घनः कदाचिदुपसर्पति ।। बलीयसि प्रणमतां काले विक्रमतामपि । संपदो नापगच्छन्ति प्रतीपमिव निम्नगाः ।। जमदग्नेस्सुतस्येव सर्वः सर्वत्र सर्वदा । अनेकयुद्धजयिनः प्रतापादेव भज्यते ।। अनेकयुद्धविजयी सन्धानं योऽधिगच्छति । तत्प्रतापेन तस्याशु वशं गच्छन्ति शत्रवः ॥' इति ॥

इत्थं प्रबलैः सन्धिरुक्तः । तथा समबलयोः विजयसंशयात् समबलेनापि सन्धिः कर्तव्यः । तदुक्तं **कामन्दके**—[1] 'सन्धिमिच्छेत् समेनापि सान्दिग्धो विजयो युधि । नातिसांशयिकं कुर्यात् इत्युवाच बृहस्पतिः ॥ आसंप्रवृद्धेरभिवृद्धिकामः समेन सन्धानमिहोपगच्छेत् । अपक्वयोर्मृद्घटयोरवश्यं अन्योन्यभेदी समसन्निपातः ॥ युद्धेन नाशो भवति कदाचिदुभयोरपि । सुन्दोपसुन्दावन्योन्यं समवीर्यौ हतौ न किम् ॥' इति । स्वस्य व्यसनदशायां हीनेनापि सन्धिः कर्तव्यः । तथा च **कामन्दकः**—[2] 'विहीनोपि हि सन्धेयो व्यसने रिपुरागतः । काले दुनोति हिमवत्तोयबिन्दुरिव क्षते ॥' इति ॥

**इति संक्षेपतस्सन्धिनिरूपणम् ।**

अथ विग्रहो निरूप्यते । विग्रहश्च कलहः । स च परस्परापकारजनितक्रोधामर्षादिमतां अभ्युदयं अनर्थनिवृत्तिं वा आकाङ्क्षतां भवति । तथा च **कामन्दकः**—[3] 'अमर्षोपगृहीतानां मन्युसन्तप्तचेतसाम् । परस्पराप-

---

1. दशमसर्गे ५९—६१ श्लोकाः ।
2. दशमसर्गे ६२ श्लोकः ।
3. विग्रहकल्पनामके एकादशसर्गे १, २ श्लोकौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कारेण पुंसां भवति विग्रहः ॥ आत्मनोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा । देशकालबलोपेतः प्रारभेत हि विग्रहम् ॥' इति ॥

विग्रहे च कारणानि राज्यदाराद्यपहारादीनि । तदुक्तं कामन्दके—[1]'राज्यस्त्रीस्थानदेशानां ज्ञानस्य च धनस्य च ॥ अपहारो मदो मानः पीडा वैषयिकी तथा ॥ ज्ञानार्थधर्मशक्तीनां विघातो दैवमेव च । मित्रार्थं चापमानं च तथा बन्धुविनाशनम् ॥ भूतानुग्रहविच्छेदस्तथा मण्डलदूषणम् । एकार्थाभिनिवेशित्वमिति विग्रहयोनयः ॥' इति ॥

विग्रहोपशमनानि च दानप्रणामसामविषयप्रतिपीडनोपेक्षणदमदैवप्रवणपर्यन्तसाधनबहुमानावधिकथनार्थपरित्यागाः तत्तदुचितोपायान्तराणि चेति। तत्र राज्यापहरणप्रयुक्तविग्रहस्य दानेनोपशमः कर्तव्यः । एवं स्त्रीस्थानदेशापहरणप्रयुक्तविग्रहेषु तत्तद्दानेनोपशमः । आचार्याननुज्ञया अध्ययनरूपज्ञानापहरणप्रयुक्तकलहस्य आचार्यनत्या उपशमः । धनापहारप्रयुक्तकलहस्य तत्प्रदानेनोपशमः । अभिमानप्रयुक्तकलहस्य साम्ना प्रणामेन चोपशमः । स्वविषयपीडनप्रयुक्तकलहस्य परविषयपीडनेनोपशमः । परकीयज्ञानशक्तिविघाताचरणप्रयुक्तकलहस्य तदुपेक्षया उपशमः । अर्थागमोपायविघाताचरणप्रयुक्तकलहस्य तद्द्रव्यप्रदानेनोपशमः । धर्मशक्तिविघाताचरणप्रयुक्तकलहस्य दमेनोपशमः । दैवकृतकलहस्य दैवेनोपशमः ।

मित्रप्रयुक्तकलहश्च द्विविधः— अधर्मद्रोहसंयुक्तमित्रप्रयुक्तः अद्रोहमित्रप्रयुक्तश्चेति । तत्राद्ये उपेक्षणमेव । द्वितीये तु प्राणपर्यन्तं साधनीयमिति । परावमानप्रयुक्तकलहस्य परबहुमानेनोपशमः । बन्धुनाशसमुद्भवकलहस्य येन केनचिदुपायेनोपशमः । भूतानुग्रहविच्छेदप्रयुक्तकलहस्य अवधिकथनेनोपशमः । मण्डलदूषणप्रयुक्तकलहस्य सर्वविधोपायैरुपशमः । एकार्थाभिनिवेशप्रयुक्तकलहस्य तदर्थपरित्यागेनोपशम इति ॥

---

1. एकादशसर्गे ३-५ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदुक्तं कामन्दके — [1] 'राज्यस्त्रीस्थानदेशानां दानेन दमनेन च। विग्रहस्य तु युक्तिज्ञैरिति प्रशमनं स्मृतम् ॥ धनापहारजाते तु धनदानं समाचरेत् । कदाचिद्विग्रहे पुंसां सर्वनाशस्तु जायते ॥ सामपूर्वमुपायो वा प्रणामो वाभिमानजे । विषयध्वंसजे शत्रोर्विषयप्रतिपीडनम् ॥ ज्ञानापहार-संभूते ज्ञानशक्तिविघातजे । समर्था[स्त]दर्थत्यागेन क्षांत्या वोपेक्षणेन च ॥ एतदेव तु विज्ञेयं स्वार्थधर्मविघातजे । दैवमेव हि दैवोत्थे शमनं साधु-संमतम् ॥ अधर्मद्रोहसंयुक्ते मित्रजात उपेक्षणम् । आत्मवन्मित्रवर्गे तु प्राणानपि परित्यजेत् ॥ अपमानं तु संभूतं मानेन प्रशमं नयेत् । विग्रहं शमयेद्धीरो बन्धुनाशसमुद्भवम् ॥ येन पीडा न जायेत तथा कुर्याद्विचक्षणः । [धनापराधजाते तु निरोधं दत्तमाचरेत् ॥ महाजनसमुत्पन्ने भेदेन प्रशमं नयेत् ॥] भूतानुग्रहविच्छेदजातस्यान्तं वदेद्वशी ॥ मण्डलक्षोभसंभूत-मुपायैः प्रशमं नयेत् । कुर्यादर्थपरित्यागमेकार्थाभिनिवेशजे ॥' इति ॥

एतादृशं विग्रहमूलभूतं वैरं पञ्चविधं— सपत्नजं, वास्तुजं, स्त्रीजं, अज्ञानजं, अपराधजं चेति । तदुक्तं कामन्दके— [2] 'सापत्न्यं वास्तुजं स्त्रीजं चाज्ञात[वाग्जात]मपराधजम् । वैरप्रभेदनिपुणैः वैरं पञ्चविधं स्मृतम् ॥' इति । भूम्युपरोधजातं, शक्तिविघातजातं, भूम्यनन्तरजातं, मण्डलक्षोभजातं चेति चतुर्विधं वैरमिति केचित् । कुलजापराधजभेदेन द्विविधमेव वैरमित्यपरे । एतदुभयमपि कामन्दके— [3] 'जातं भूम्युपरोधेन तथा शक्तिविघातजम् । भूम्यनन्तरजातं च मण्डलक्षोभजं तथा ॥ चतुर्विधं वैरजातं बाहुदन्तिसुतोऽब्रवीत् । कुलापराधजं[जे] प्राहुर्द्वे एवास्थाय मानवाः ॥' इति ॥

---

1. एकादशसर्गे ६—१५ श्लोकाः [ श्लोकानां क्रमविपर्यासोपि दृश्यते ]
2. एकादशसर्गे १६ श्लोकः ।
3. एकादशसर्गे १७, १८ श्लोकौ ।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वर्ज्यान् षोडश विग्रहानाह **स एव**—‘[1] किञ्चित्फलं निष्फलं च सन्दिग्धफलमेव वा । तदात्वे दोषजननमायत्यां चैव निष्फलम् । ॥ आयत्यां च तदात्वे च दोषसंजननं तथा । अपरिज्ञातवीर्येण परेण क्षोभितेन वा ॥ परार्थं स्त्रीनिमित्तं च दीर्घकालं द्विजोत्तमैः । अकालं दैवयुक्तेन बलोद्धतसखेन च ॥ तदात्वे फलसंयुक्तमायत्यां फलवर्जितम् । आयत्यां फलसंयुक्तं तदात्वे निष्फलं तथा ॥ इतीमं षोडशविधं न कुर्यादेव विग्रहम् ॥’ इति ॥

विग्रहस्य आरंभकाले परिपाकसमये च शुद्धं विग्रहमाचरेदिति । तदपि **तत्रैव**—‘[2] तदात्वायतिसंशुद्धं आरभेत विचक्षणः । तदात्वायतिशुद्धानि सर्वकर्माणि चिन्तयेत् ॥ तदात्वायतिसंशुद्धमातिष्ठन्नैति वाच्यताम् । साधुलोकद्वयग्राह्यं विद्वान्कर्म समाचरेत् ॥ परित्यजेदमुं लोकं नार्थलेशोपलोभितः । परलोकविरुद्धानि कुर्वाणमितरस्त्यजेत् ॥ इत्यागमप्रमाणत्वात्साधु कल्याणमाचरेत् ।’ इति ॥

विग्रहकालमाह स एव — [3] ‘यदा मन्येत मतिमान् हृष्टपुष्टं स्वकं बलम् । परस्य विपरीतं च तदा विग्रहमाचरेत् ॥ मित्रमाक्रन्द आसारो यदा स्युर्दृढभक्तयः । परस्य विपरीतं च तदा विग्रहमाचरेत् ॥’ इति ॥

भूमिमित्रहिरण्यानि विग्रहफलानि । तदपि **तत्रैव** — [4] ‘भूमिर्मित्रं हिरण्यञ्च विग्रहस्य फलत्रयम् । यदैतन्नियतं भावि तदा विग्रहमाचरेत् ॥’ इति । फलानां च तारतम्यं **स एवाह** — [5] ‘गुरु मित्रं ततो वित्तं तस्मात् भूमिर्गरीयसी । भूमेर्विभूतयस्सर्वास्ताभ्यो बन्धु-

1. एकादशसर्गे १९-२०½ श्लोकाः ।
2. एकादशसर्गे २३—२६ श्लोकाः ।
3. एकादशसर्गे २७, २८ श्लोकौ ।
4. एकादशसर्गे २९ श्लोकः ।
5. एकादशसर्गे ३० श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुहृद्गुणः ॥' इति । समृद्धे शत्रौ तेन विग्रहो न कार्यः । अपि तु उपायैनैव तद्विजयः कर्तव्यः । तदुक्तं तत्रैव --[1] 'सर्वसंपत्समेतश्चेदुपाया-न्निक्षिपेद्बुधः । उपायैरप्यतिव्यूढे समे दण्डोपि शस्यते ॥ आगमं विग्रहं विद्वानुपायैः प्रशमं नयेत् ।' इति ॥

उपाया अपि तत्रैव--[2] 'विजयस्य ह्यनित्यत्वात् रभसेन न संपतेत् । समाक्रान्तो बलवता काङ्क्षन्नभ्रंशिनीं श्रियम् ॥ आश्रयेद्वैतसीं वृत्तिं न भौजंगीं कथञ्चन । क्रमाद्वैतसवृत्तिस्सन् प्राप्नोति विपुलां श्रियम् ॥ भुजङ्ग-वृत्तिराप्नोति वधमेव तु केवलम् ॥ प्रमत्तमप्रमत्तश्च ग्रसेदुत्पत्य पण्डितः । अपरिभ्रंशमानं हि क्रमप्राप्तमृगेन्द्रवत् ॥ कौर्मं सङ्कोचमास्थाय प्रहारमपि मर्षयेत् । काले प्राप्ते तु मतिमान् उत्तिष्ठेत्क्रूरसर्पवत् ॥ काले सहिष्णु-र्गिरिवदसहिष्णुश्च दन्तिवत् । स्कन्धेनापि वहेच्छत्रून् प्रियाणि समुदाहरन् ॥ प्रसादवृत्त्याहितलोकवृत्तया प्रविश्य शत्रोर्हृदयं निरन्तरम् । तथाऽग्रहस्तेन हि काल उत्थितः प्रसह्य कुर्वीत कचग्रहं श्रियः ॥' इति ॥

दुष्प्रसाध्येन विग्रहो न कर्तव्यः । किन्तु सुसाध्यैः स्त्रियादि-व्यसनवद्भिरेव कर्तव्यः । अयमर्थः दुष्प्रसाध्यसुप्रसाध्ययोः स्वरूपकथनपूर्वकं प्रतिपादितः— [3] 'असत्यवाग्निष्ठुरताकृतज्ञता भयं प्रमादोऽलसता विषादिता । तथाभिमानो ह्यतिदीर्घसूत्रता तथाङ्गनाक्षादि विनाशनं स्त्रियः ॥ इति स दोषान्वितमाशु विद्विषं त्रिशक्तियुक्तो विजिगीषया व्रजेत् । अतो-ऽन्यथा साधुजनस्य संमतः करोति विद्वानुपघातमात्मनः ॥ समन्वितो राज्यपदोन्निनीषया चारेक्षणैर्वीक्षितमण्डलक्रियः । इमं नृपो विग्रहमार्ग-मास्थितः स्थिरोद्यमस्संप्रयतेत सिद्धये ॥' इति ॥

---

1. एकादशसर्गे ३१, ३१½ श्लोकौ ।
2. एकादशसर्गे ३२—३८ श्लोकाः ।
3. एकादशसर्गे ३९—४२ श्लोकाः ।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यानञ्च सकलजनसंमतस्य विजिगीषोरुत्कृष्टबलवीर्यस्य यात्रा । तच्च पञ्चविधं— विगृह्य यानं, संधाय यानं, संभूय यानं, प्रसङ्गयानं, उपेक्षायानं चेति ॥

तत्र परकीयसेनागणविग्रहपूर्वकयानं विगृह्य यानम् । शत्रुमित्राणां स्वमित्राणां च विग्रहपूर्वकयानमपि विगृह्य यानम् । पृष्ठतः समागच्छतः शत्रोः सन्धानपूर्वकं अन्यस्य शत्रोरुपरि यानं सन्धाय यानम् । सकलसामन्तराज्ञां समाधानपूर्वकं तैस्सह एकस्योपरि यानं संभूय यानम् । अन्यत्र प्रवृत्तस्यान्यत्र यानं प्रसङ्गयानम् । शत्रुं प्रति प्रस्थितस्य प्राप्तकालोपेक्षणेन तन्मित्रं प्रति यानं उपेक्षायानम् । इति ॥

तदुक्तं **कामन्दके**—[1] 'उत्कृष्टबलवीर्यस्य विजिगीषोर्जयैषिणः । गुणानुरागात् प्रकृतेः यात्रा यानमिति स्मृतम् ॥ विगृह्य सन्धाय तथा संभूयाथ प्रसङ्गतः । उपेक्षा चेति निपुणैः यानं पञ्चविधं स्मृतम् ॥ विगृह्य याति हि यदा सर्वान् शत्रोर्गणान् बलात् । विगृह्य यानं यानज्ञास्तदाचार्याः प्रचक्षते ॥ अरेर्मित्राणि सर्वाणि स्वमित्रैस्सर्वतो बलात् । विगृह्य चाभिगमनं विगृह्य गमनं स्मृतम् ॥ सन्धायान्यत्र या यात्रा पार्ष्णिग्राहेण शत्रुणा । सन्धाय गमनं प्रोक्तं तज्जिगीषोः फलार्थिनः ॥ एकीभूय यदैकत्र सामन्तैः सांपरायिकैः । शक्तिशौचयुतैर्यानं संभूय गमनं हि तत् ॥ अन्यत्र प्रथितासङ्गादन्यत्रैवावगच्छति । प्रसङ्गयानं तत्प्रोक्तं अत्र शल्यो निदर्शनम् ॥ रिपुं वा तस्य बलिनः संप्राप्याविकृतं फलम् । उपेक्ष्य तन्मित्रयानं उपेक्षायानमुच्यते ॥ निवातकवचान् हित्वा हिरण्यपुरवासिनः । उपेक्षायानमास्थाय निजघान धनञ्जयः ॥' इति । इदं च यानं व्यसनिनं प्रत्येव कर्तव्यम् । तदुक्तं **कामन्दके**—[1] 'स्त्रियोऽथ यानं मृगया तथाक्षाः दैवेन घातश्च

---

1. मन्त्रविकल्पकनामके द्वादशसर्गे १-८ श्लोकाः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बहुप्रकारः । (एतत्) प्रदिष्टं व्यसनं ह्यनेन समन्वितो यश्च रिपुः स गम्यः ॥' इति ॥

अरिविजिगीष्वोः परस्परं सामर्थ्यविघातेन तूष्णीमवस्थानमासनमुच्यते । तच्च पञ्चविधं—विगृह्यासनं, सन्धायासनं, संभूयासनं, प्रसङ्गासनं, उपेक्षासनं चेति । परस्परकलहेनान्यतरकलहेन वा दुर्गावस्थिततस्य ग्रहीतुमशक्त्या वा शत्रुव्यथाजननपूर्वकं आसनं विगृह्यासनम् । मनुष्यमुखेन समाधानपूर्वकमासनं सन्धायासनम् । उदासीनमध्यस्थयोः समानत्वभ्रान्त्या तैस्सहासनं संभूयासनम् । कचिद्गन्तुमिच्छोः प्रसङ्गादन्तरेणावस्थानं प्रसङ्गासनम् । सङ्ग्रामसमये अधिकशत्रुमवेक्ष्य आसनं उपेक्षासनम् ॥

तदुक्तं कामन्दके—[1] 'परस्परस्य सामर्थ्यविघातादासनं स्मृतम् । अरेश्च विजिगीषोश्च तत्पञ्चविधमुच्यते ॥ अरिं विगृह्य चास्थानं विगृह्यासनमुच्यते । अन्योन्याक्रान्तिकरजं विगृह्यासनमुच्यते ॥ यदा दुर्गस्थितः शत्रुर्ग्रहीतुं नैव शक्यते । विगृह्यैनं तदासीत स्थित्वास्य रचयेद्व्यथाम् ॥ विच्छिन्नविविधासारं प्रक्षीणयवसेन्धनम् । विगृह्यमानप्रकृतिं कालेनैव समु[शमं]न्नयेत् ॥ निवातकवचैस्सार्धं रावणः शत्रुरावणः । ब्रह्माणमन्तरा कृत्वा सन्धायासनमास्थितः ॥ उदासीने मध्यमे च समानप्रतिशङ्कया । एकीभूय समुत्थानं संभूयासनमुच्यते ॥ यियासोरन्यमन्यत्र प्रसङ्गेनेह केनचित् । आसनं यत्तदर्थज्ञैः प्रसंगासनमुच्यते ॥ आजौ प्रेक्ष्यारिमाधिकमुपेक्ष्यासनमुच्यते । उपेक्षां कृतवानिन्द्रः पारिजातग्रहं प्रति ॥ उपेक्षितस्य चान्यैस्तु कारणेनेह केनचित् । आसनं रुक्मिण इव तदुपेक्षासनं स्मृतम् ॥' इति ।

परस्परशत्रुभूतयोः अन्यतरपक्षावलम्बनं विना काकाक्षिन्यायेनावस्थानं द्वैधीभावः । स द्विविधः— स्वतन्त्रः परतन्त्रश्चेति । अन्यतर(वेतन)ग्रहणेन

---

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

1. द्वादशसर्गे ११–१९ श्लोकाः ।

विना मध्यस्थतया अवस्थानं स्वतन्त्रद्वैधीभावः। उभाभ्यां वेतनं गृहीत्वा मध्यस्थतयावस्थानं परतन्त्रद्वैधीभावः ॥

तदुक्तं **कामन्दके**—[1]'पालयेद्यत्नमास्थाय सन्निकृष्टतरं तयोः। उभयोरपि संपाते सेवेत बलवत्तरम्। यद्वा द्वावपि नेच्छेतां संश्लेषं जातसंविदौ ॥ तदोपगच्छेत्तुच्छं वा अधिकं वापि संश्रयेत्। द्वैधीभावो द्विधा प्रोक्तः स्वतन्त्रपरतन्त्रयोः ॥ स्वतन्त्र उक्तो ह्यन्यस्तु यः स्यादुभयवेतनः ॥' इति ॥

प्रबलेन उच्छिद्यमानस्य ततः प्रबलतरपुरुषाश्रयणं समाश्रयणमित्युच्यते। तदुक्तं **कामन्दके**— [2]'उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः। कुलोद्गतं सत्यमार्गं आश्रयेत बलोत्कटम् ॥' इति ॥

एवं सन्ध्यादिषड्गुणयुक्तया बुद्ध्या विचार्यारब्धमेव कर्म शुभोदर्कं भवति। अविचार्यारम्भः पश्चात्तापाय भवेत्। एतदपि **कामन्दके**—[3]'आ[अ]लक्षितनयः सिंह्मो हन्तीभं केवलं बलात्। तं च धीरो नरस्तेषां शतानि मतिमान् जयेत् ॥ उपायपूर्वं लिप्सेत कालं वीक्ष्य समीहितं। पश्चात्तापाय निर्दिष्टा विक्रमैकरसज्ञता ॥ शक्याशक्यपरिच्छेदं कुर्याद्बुद्ध्या विचक्षणः। केवलं दन्तभङ्गाय दन्तिनः शैलताडनम् ॥ अशक्यारम्भवृत्तीनां कुतः क्लेशादृते फलम्। भवन्ति परितापिन्यो व्यक्तं कर्मविपत्तयः ॥ बुद्ध्या बोध्यानुगतया परीयात्संपदः पदम्। सुविशुद्धपदन्यासः पर्वताग्रमिवोदितम् ॥ दुरारोहं पदं राज्ञां सर्वलोकनमस्कृतम्। अल्पेनाप्यपचारेण ब्राह्मण्यमिव दुष्यति ॥ प्रारब्धानि यथाशास्त्रं कार्याण्यासनबुद्धिभिः। वनानीव मनोहारि प्रयच्छन्त्यचिरात्फलम् ॥' इति ॥

1. द्वादशसर्गे २१–२३ श्लोकाः।
2. द्वादशसर्गे २४ श्लोकः।
3. द्वादशसर्गे २६, २८– ३१ श्लोकाः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परिमृष्टो दशान्तेन दशाभागेन सेव्यते ।
दशाभागगतो हीनस्त्वं हि राम सलक्ष्मणः ॥
यत्कृते व्यसनं प्राप्तं त्वया दारप्रधर्षणम् । ९ ॥
तदवश्यं त्वया कार्यं स सुहृत्सुहृदां वर ।
अकृत्वा हि न ते सिद्धिं अहं पश्यामि चिन्तयन् ॥

अनेन असहायेन कार्यं न किञ्चिदपि साधयितुं शक्यं इति सूचितम् । तथा च राजधर्मे — [1]'यदप्यल्पतरं कर्म तदप्येकेन दुष्करम् । पुरुषेणासहायेन किमु राज्ञा पितामह ॥' इति ॥

श्रूयतां राम वक्ष्यामि सुग्रीवो नाम वानरः ।
भ्रात्रा निरस्तः क्रुद्धेन वालिना शक्रसूनुना ॥ ११ ॥
ऋष्यमूके गिरिवरे पम्पापर्यन्तशोभिते ।
निवसत्यात्मवान् वीरश्चतुर्भिस्सह वानरैः ॥ १२ ॥
गच्छ शीघ्रमितो राम सुग्रीवं तं महाबलम् ।
वयस्यं तं कुरु क्षिप्रं इतो गत्वाद्य राघव ।
अद्रोहाय समागम्य दीप्यमाने विभावसौ ॥ १७ ॥

अत्र रामसुग्रीवयोस्सन्धिः प्रतीकाराख्यः, [2]'उपकारं करोम्यस्य ममाप्येष करिष्यति । अयं चापि प्रतीकारो रामसुग्रीवयोरिव ॥' इति कामन्दकोक्तलक्षणात् । इत्यभिधाय ऋष्यमूकनगगमनमार्गमादिश्य स्वर्गमगात् ॥

नन्वत्र सन्धिविग्रहादयः षड्युक्तयः सन्ति । ताश्च कार्यसिद्ध्यर्थाः । ताभिर्विमृश्य कार्यसिद्ध्यर्थं संप्रति भ्रातृमात्रसाहाय्यस्य दुर्दशारंभं प्राप्तस्य

1. ८० अध्यायस्य प्रथमः श्लोकः ।
2. दशमसर्ग ११ श्लोकः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रामभद्रस्य दृष्टबलेन दैवबलेन चोपेतेन दुर्दशायाः समाप्तिप्राप्तेन सुग्रीवेण सन्धिकरणमेव समुचितमिति कबन्धेनोक्तम् । तदनुपपन्नम् । यतो वाली सुग्रीवादधिकबलः, सकलवानरसेनापरिवृतः, स्वराज्ये सुप्रतिष्ठितो, रामकृत-प्रत्युपकारनिरपेक्षो, रावणनिग्रहचतुरभुजवीर्योपेतश्च । 'मामेव यदि पूर्वं त्वमेतदर्थमचोदयः । मैथिलीमहमेकाह्ना तव चानीतवान् भवेत् ॥ राक्षसं च दुरात्मानं तव भार्यापहारिणम् । कण्ठे बद्ध्वा प्रदद्यान्ते निहतं रावणं रणे ॥' इति तद्वचनेन जीवग्राहं रावणं गृहीत्वा रणे वा तन्निहत्य अहमेवासहायः एकाह्ना मैथिलीमानीय दास्यामीत्येतादृशसामर्थ्यावगमेन स्वकार्यसाधकश्च । अत एव तादृशं वालिनमपहाय अतादृशः सुग्रीवः कथमुपदिष्ट इति चेन्न । सत्यपि सामर्थ्ये दृप्तत्वात् रावणमित्रत्वात् राज्यस्थितत्वात्, रामकृतोपकारनिरपेक्षत्वाच्च रामप्रार्थितो वाली सख्यं नाङ्गीकुर्यादेव । आसन्नमृत्युना वालिना सख्यकरणं निष्फलं च ॥

यत्तु 'मैथिलीमहमेकाह्ना तव चानीतवान्भवेत् ।' इत्यादितद्वचनात् सामर्थ्यावगमेन कार्यसाधक इति; तदपि न, सत्यपि सामर्थ्ये सीतामानीय दास्यामीत्येतादृशबुद्धेः शिक्षणानन्तरभावित्वेन स्वस्थावस्थायां असंभवात् ॥ 'तत्क्षमो न विरोधस्ते सह तेन महात्मना । दुर्जयेनाप्रमेयेन रामेण रण-कर्मसु ॥' इत्यादि युक्ततरमपि तारावाक्यं दृप्ततया पूर्वमनङ्गीकुर्वतः 'तारया हितमुक्तोऽहं सत्यं सर्वज्ञया तया । तदतिक्रम्य मोहेन कालस्य वशमागतः ॥' इति शिक्षणानन्तरकालीनबुद्धिवत् दैवात् शिक्षणात् पूर्वमुत्पन्नया रामस्य कार्यं साधनीयं इति बुद्ध्या तेन कार्यं साधितं चेदपि तद्भुजबलमात्रोपार्जित-कार्याङ्गीकरणं रामस्यायुक्तम् । स्वपराक्रमेण विना अन्येन साधितार्थाङ्गी-करणस्य क्षत्रियाणां अधर्म्यत्वात् ॥

तथा च भारते वनपर्वणि—[1] 'अस्मत्प्रयुक्तैर्विशिखैर्जितारिः ततो

1. १२० अध्याये २२ श्लोकस्य पूर्वार्धं ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महीं भोक्ष्यति धर्मराजः ।' इति वने चरतो धर्मराजस्य वयमेव स्वबलेन राज्यं विजित्य दास्याम इति सात्यकिनोक्तस्य भगवतो वचनं — [1]'स्वाभ्यां भुजाभ्यामर्जितां तु भूमिं नेच्छेत्कुरूणामृषभः कथञ्चित् । न ह्येष कामान्न भयान्न लोभात् युधिष्ठिरो जातु जह्यात् स्वधर्मम् ॥' इति ॥

सुन्दरकाण्डेऽपि—'यदि रामो दशग्रीवमिह हत्वा सबान्धवम् । मामितो गृह्य गच्छेत तत्तस्य सदृशं भवेत् ॥' इति । अतः, 'ययोरेव समं मित्रं ययोरेव समं श्रुतम् । तयोर्विवाहो मैत्री च' 'समानशीलव्यसनेषु सख्यम्' इति न्यायेन सख्यं समानसुखदुःखेन सुग्रीवेण सुकरम् । दशांतपरिमृष्टत्वात् तेन मैत्रीकरणं सफलं चेत्यभिप्रायेण भाव्यर्थाभिज्ञेन कबन्धेन सुग्रीव एव उपदिष्टः ॥

कबन्धस्य भाव्यर्थाभिज्ञानं च, 'अदग्धस्य हि विज्ञातुं शक्तिरस्ति न मे प्रभो । किन्तु यावन्न यात्यस्तं सविता श्रान्तवाहनः ॥ तावन्मामवटे क्षिप्त्वा दह राम यथाविधि । दग्धस्त्वयाहमवटे न्यायेन रघुनन्दन ॥ वक्ष्यामि तमहं वीर यस्तं ज्ञास्यति राक्षसम् ॥' इत्यादिवचनैः शाप-प्रतिबद्धं ज्ञानं विध्युक्तदाहेन प्रतिबन्धे निवृत्ते आविर्भवतीति प्रतिपादनात् अवगम्यते । तस्मात् वालिनं परित्यज्य सुग्रीवेण सन्धिः कार्य इति कबन्धेन यदुक्तं तदुपपन्नमेव इति ॥

तदनु तदुपदिष्टमार्गेण प्रतीचीं दिशं प्रतिपद्य पश्चिमे पम्पातीरे रम्य-माश्रममवगाहमानौ रामलक्ष्मणौ तदाश्रमवासिन्या तपस्विन्या शबर्या सादरमुत्थाय सप्रणामं कृतां सपर्यां परिगृह्य सन्तुष्टमानसौ बभूवतुः । तदनु दाशरथिना रामभद्रेण निष्प्रत्यूहं तपोवृद्ध्यादिकुशलं पृष्टा तपस्विनी रामभद्रमेवमवादीत —

---

1. [illegible] अध्याये ९२, ५० श्लोकयोः [illegible] ।

CC-0. Prof Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अद्य प्राप्ता तपस्सिद्धिस्तव सन्दर्शनान्मया ।
अद्य मे सफलं तप्तं कुलं च सफलं मम ॥ ११ ॥
मत्कृतसपर्यासन्तुष्टमानसैः मुनिजनैः,
आगमिष्यति ते रामः सुपुण्यमिममाश्रमम् ॥ १५ ॥
स ते प्रतिग्रहीतव्यः सौमित्रिसहितोऽतिथिः ।
तं च दृष्ट्वा वरान् लोकान् अक्षयांस्त्वं गमिष्यसि ॥ १६ ॥

इत्यभिहितास्मि । अनेन असन्निधानेऽपि अन्यमुखेनाप्यतिथयः पूजनीया इति सूचितम् । तथा चानुशासनिके पत्नीं प्रति विपुलः—'निष्क्रान्ते मयि कल्याणि तथाऽसन्निहितेऽनघे । नातिथिस्तेऽवसन्तव्यः प्रमाणं यद्यहं तव ॥' इति ॥

तदनु 'कबन्धेन आवेदितं ते प्रभावं प्रत्यक्षतो द्रष्टुमिच्छामि' इति रामेणाभिहिता तापसी इदमेव वनमृगसमाकुलं मतङ्गवनम् । इयमेव च गुहा; अस्यामेव गुहायां गुरुजनैर्मन्त्रप्रभावेन कृतं सप्तसागरं नाम तीर्थं, इयमसौ गुरुजनकृतपुष्पोपहारा प्रत्यक्स्थली वेदिः; एतांश्च,

अशक्नुवद्भिस्तैर्गन्तुं उपवासश्रमालसैः ।
चिन्तितेनागतान् पश्य सहितान् सप्तसागरान् ॥ २५ ॥

तदखिलमवलोकयतु भवान्; अहमपि तवाज्ञया जीर्णं कलेबरं विहाय गुरुजनसमीपं गन्तुमिच्छामि' इत्यवादीत् ॥

तदुदीरितं अतिधर्मिष्ठं वचनमाकर्ण्य हर्षनिर्भरमानसेन रामेण समनुज्ञाता शबरी भुजगीव जीर्णां त्वचं तनुं हुताशने निक्षिप्य दिव्यमाल्याम्बरधरा शिरसा रामं प्रणम्य गुरुजनसमलङ्कृतं पुण्यस्थलं जगाम ॥

इति चतुःसप्ततितमः सर्गः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ पञ्चसप्ततितमः सर्गः ॥

पञ्चसप्ततितमे—तत्कर्मविस्मयस्तिमितमानसो रामो मतङ्गाश्रममवलोक्य सन्तर्प्य च सप्तसागरेपि पितॄन् कृतकृत्यमिति मन्वानो लक्ष्मणमेवमवोचत् —

सप्तानां च समुद्राणामेषु तीर्थेषु लक्ष्मण ।
उपस्पृष्टं च विधिवत्पितरश्चापि तर्पिताः ॥ ४ ॥

अनेन समुद्रस्नानं सकलपापक्षयकरमित्युक्तम् । तथा च वनपर्वणि—'आजन्मशतसाहस्रं यत्पापं कुरुते क्वचित् । मुच्यते सर्वपापेभ्यः स्नात्वैव लवणाम्भसि ॥' इति । तत्रैव स्थलान्तरे—[1]'समुद्रास्तत्र चत्वारः कूपे सन्निहिताः सदा । तत्रोपस्पृश्य राजेन्द्र न दुर्गतिमवाप्नुयात् ॥' इति ॥

ततो विचित्रतरनगमृगगणाकीर्णं प्राणिमात्रमनोनयनाभिरामं मतङ्गाश्रमं श्रीजानकीवियोगेन परिम्लायमाननिजाननः शोकापनयनविचक्षणेन लक्ष्मणेन अनुलक्षणं तद्वनं समीक्षमाणः—

विवेश पंपां नलिनीं मनोरमां,
रघूत्तमः शोकविषादयन्त्रितः ॥ २९ ॥
ततो महद्वर्त्म च दूरसंक्रमं
क्रमेण गत्वा स विलोकयन् वनम् ।
ददर्श पम्पां शुभदर्शकाननां,
अनेकनानाविधपक्षिसङ्कुलाम् ॥ ३० ॥

इति पञ्चसप्ततितमः सर्गः ॥

इत्यार्षे श्रीमद्रामायणे आरण्यकाण्डः संपूर्णः ।

---

1. ८४ अध्याये २६, २७ श्लोकयोः उत्तरपूर्वार्धे ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ये धर्मैकनिसर्गशुद्धरुचयो ये वेदवेद्ये परे
पुंसि ब्रह्मणि मैथिलीसहचरे भक्ता रघूणां वरे ।
ये वा कौतुकिनो रघूद्वहकथाशैलीसमाकर्णने
ये वा मर्मविदस्त एवमुररीकुर्वन्तु तैस्तैर्गुणैः ॥

प्रतिदिनमपि श्रीयज्ञेशप्रसादमुपेयुषा
गुरुवरकृपाधाम्ना श्रीमत्त्रियम्बकयज्वना ।
परमऋषिणारण्ये काण्डे तृतीय इहोदिते
प्रकटितमिदं धर्माकूतं यथामति गृह्यताम् ॥

इति श्रीमत्त्र्यम्बकरायमखिविरचिते
श्रीमद्रामायणधर्मतात्पर्ये धर्माकूते
आरण्यकाण्डः संपूर्णः ॥

श्रीरामार्पणमस्तु ॥



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

Tānjore Saraswathi Mahal Series No. 102

# DHARMĀKŪTAM

## KIṢKINDHĀKĀNDA

*BY*

TRYAMBAKARĀYAMAKHĪ

Edited by

P. V. VARADARAJA SARMA, M. A., B. O. L., R. B. Bisharad,

*Librarian,*

*T. M. S. S. M. Library, Thanjavur.*




Published by:

O. A. NARAYANASWAMI, B. A., B. L.,

*Honorary Secretary,*

*T. M. S. S. M. Library, Thanjavur.*

Śaka 1885 A. D. 1963 Price: Rs. 16/-

This book is published under the scheme of 'Editing and Publication of Rare Manuscripts' No. 18-11/60 C. 2 of the Government of India, Ministry of Scientific Research and Cultural Affairs, New Delhi-2.

समष्टि व्यष्टि राष्ट्रसञ्चालक मन्त्रिमण्डल-विश्राणितानल्पवित्तोपकारेण मुद्राप्य प्रकाशितो-ऽयं ग्रन्थः विजयते ।

सरस्वतीमहाल् ग्रन्थमालायाः पुष्पं-१०२

# धर्माकूतम्

## (किष्किन्धाकाण्डः)

श्री त्र्यम्बकरायमखिविरचितम्

तञ्जपुरी सरस्वतीमहाल् प्राच्यग्रन्थशालाध्यक्षेण
भारद्वाज वेङ्कटेशवरदराजशर्मणा एम्. ए., बि. ओ. एल्., आर. बि. विशारद
बिरुद्भाजा संकलितम्

तञ्जपुरी सरस्वतीमहाल् निर्वाहकसमित्यक्रीत कार्यदर्शिना
ओ. ए. नारायणस्वामिना बि. ए., बि. एल्., बिरुदालंकृतेन
प्रकाशितम्

शकाब्दाः १८८५ क्रिस्त्वब्दाः १९६३

मूल्यम् रूप्यकाणि १६

# PREFACE

We have great pleasure in placing Dharmākūta Kiṣkindhākānda in the hands of scholars and announcing that Yuddhakānda also will reach their hands in a few months time. The publication of this remarkable encyclopedia of our national culture was taken up by Sri Vani Vilas Syndicate about 40 years ago. They published Balakanda and Ayodhyakānda; later our Library published Āraṅyakānda and Sundarakānda.

Dharmākūtam is a rare work in Sanskrit literature. It is a commentary on Srimad Rāmāyana of Vālmiki in the form of a series of discourses on different topics directly or indirectly related to the righteous conduct of Rāmachandra and it is a noteworthy feature of this work that every subject taken up for discussion is dealt with exhaustively. A good number of works are profusely quoted.

Tryambakarāyamakhi, the author of this work, was a comtemporary of Shahaji, Serfoji and Tulajāji. Another work called Shtridharma Paddhati is also attributed to him. It is said that he wrote it at the behest of his mother. He was a Mahārāstra brahmin who perhaps came with Ekoji to Tanjore and settled at Swāmimalai. The introduction to Sundarakānda gives a detailed account of this talented author Tryambakarāyamakhi.

There is only one copy of the manuscript of Kishkindhākānda of Dharmākuta B. L. No. 1014. The present edition is based on this single manuscript. Profuse quotations from a large number of literary works, sometimes with the names of the works and sometimes with the names of the authors highlight the work. Bhartrhari, Magha, Bharavi, Hitopadesa are cited as prāchcenas.

Alphabetical index of the Rāmāyana verses, and the verses quoted in Dharmākūta, topic index of Dharmākūta and list of authors and works quoted therein are useful additions to this publication.

The editor of this work Sri P V Varadaraja Sarma, Librarian, Sarasvathi Mahāl, is a great and unostentatious Sanskrit scholar and he has done an excellent job of his work. We congratulate him on his achievement

We are deeply indebted, to the Union and State Government who by their liberal grants, have enabled us to publish this and other valuable works lying hidden in palm leaves in the Sarasvathi Mahal

O. A. NARAYANASWAMI,
*Honorary Secretary.*

# वक्तव्यं किञ्चित्

वागर्थवत्, प्रकृतिपुरुषवत्, स्त्रीपुंसवत्, अयनद्वयवन्नयनद्वयवच्च चिरादिदं प्रत्नं पुरावृत्तरत्नद्वयं भारतरामायणाभिधेयं लोकमिमं स्वधर्मविधृतं, असंभिन्नं च स्थापयतीति सर्वसम्प्रतिपन्नमिदम्। चक्राभ्यामिव शकटस्य, युग्याभ्यामिव रथस्य, पक्षाभ्यामिव पत्ररथस्य, दिवाकरनिशाकराभ्यामिव चेतनाचेतनवर्गस्य, तस्यास्य रथिनश्शरीरिणो गतिरनुत्खाता, आभ्यामेव पुरापि नवाभ्यां निरुह्यते।

'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्न'मित्युपक्रम्य 'स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव' इत्यन्तस्य ग्रन्थसन्दर्भस्यायमर्थो भवति यत्तदुक्तं धर्मः, तदुक्तकारित्वं श्रेयसे कल्पत इति। अत एव प्रत्यजानात् फाल्गुनः 'करिष्ये वचनं तवेति'। दृष्टो धर्मव्यतिक्रमस्साहस च महतां, इति महदाचरितस्य धर्मत्वे तदाचरिताचरणस्य श्रेयःप्रेयोमूलत्वे च जायमानो वितर्कः अलब्धनिर्णयः चिरात्समाधिमाकाङ्क्षन्नपोह्यते रामचरितेन।

## धर्माकूतम्

'रामो विग्रहवान् धर्मः, 'धर्मात्मा, इत्यादिवचनैः भगवता वाल्मीकिना रामस्य मूर्तधर्मत्वं प्रत्यपाद्यत शतकृत्वस्सहस्रकृत्वश्च। एवं च मूर्तस्य धर्मस्याचरितमपि निखिलं धर्म एव, तदाचरिताचरणेन च श्रेयःप्रेयसोर्लाभ इति निश्शेषस्य रामचरितस्य धर्मत्वप्रतिपादनैकतानोऽयं ग्रन्थः धर्माकूतमित्याख्यायत यौगिकीं वृत्तिमाश्रित्य। व्याख्यानरूपेऽस्मिन् ग्रन्थे समादृता सरणिरन्यादृशी, अचुम्बिता प्रायः सकलैरेवातिक्रान्तैर्व्याख्यातृभिरित्यसावुद्बङ्कनीयोंशः। नात्र दृश्यते पदार्थप्रतिपादनं, नवा वाक्यार्थस्याविष्करणं वरीवर्ति, किन्तु सन्दर्भविशेषस्य क्वचित् क्वचित् प्रबन्धस्यैवाकूतमविकलमाविष्कृतम्।

तर्कस्याप्रतिष्ठितत्वेऽपि 'यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः, इत्यादिभिर्वचनैर्धर्मनिर्णये तर्कस्योपादेयता मुक्तकण्ठमूरीकृता प्रामाणिकैः, तर्काप्रतिष्ठानादित्यस्यापि तर्कत्वात्। ग्रन्थकृता चानेनास्मिन् ग्रन्थे शास्त्रानुगृहीतस्तर्क आकूतनिर्णयेऽतिमात्रं

क्रोडीकृतः। सङ्गीतवैद्यखगोलभूगोलधर्मशास्त्राणा, नहि नहि चतुर्दशानामपि विद्यास्थानाना, आमूलमालोडनं लीलयैव तत्र तत्र कृतं कृतधियामपि चेतश्चित्रयत्येव। यथा शाकुन्तले 'यस्सदार स विश्राम्य', इत्यादीनि कतिपयवाक्यानि मुद्रितपुस्तकेष्वनुपलभ्यमानानि, ग्रन्थकर्तुर्मातृकासु सत्तामलप्सतेति समाधेयम्।

## ग्रन्थकर्ता

आजानपावने यायजूकान्ववाये जनिमलब्धासौ ग्रन्थकर्ता श्रीत्र्यंबकरायमखी; बाबाजियज्वात्मजगङ्गाधराध्वरिणः कृष्णांबिकायाश्च पुत्रः नृसिंहयज्वनः कनीयान् भ्राता भारद्वाजगोत्रः, सदधूरीतिसम्पन्नोसावधूरीन्द्रः तञ्जमण्डलविराजमानं स्वामिशैलमध्यवात्सीत्; तदात्वे धृतराज्यधुराणा महाराष्ट्रवंश्याना राज्ञामन्यतमेन एकोजिमहाराजेन (1676—1705 A. D) आहृतः सत्कृतश्चायं ग्रन्थकृत् अमात्यपदवीमप्यलञ्चकार; मात्रानुशिष्ट मातुर्मुदे स्त्रीधर्मसंग्रहाख्यं ग्रन्थान्तरमप्यररचदित्यादयो विषयाः सरस्वतीमहाल्द्वारा प्रकाशिते धर्माकूतसुन्दरकाण्डोपोद्धाते वर्णितास्तत एवावगन्तव्या इति न पिष्टस्य पेषणे यत्न आधीयते।

## मातृकापरिचयः

अस्य ग्रन्थस्य 1450 क्रैस्तवाब्दादारभ्य 1832 पर्यन्तं पूर्वं नायकवंश्यैस्तदनन्तरं महाराष्ट्रवंश्यैश्च राजभिः यथाक्रमं संगृहीते, परिवर्धिते प्राच्यकोशागारे, सरस्वतीमहाल् इति विश्रुते ग्रन्थागारे सुरक्षिता B. L. 1041 क्रमाङ्कयुता 111 पत्रैः परिमिता च मातृका एकैवोपलभ्यते। तामेवास्पदं विधायायं तत्प्रकाशनयत्नः। पुस्तिकान्तरस्यालाभान्नान्वभूयत तोलनपरिश्रमः। "तमभ्यभाष सौमित्रे, इत्यादिषु स्थलेषु मुद्रितमूलग्रन्थानुसारेण पाठस्यान्यथाकरणे ग्रन्थकर्तुः पाठ उपेक्षितो भवेदिति भीत्या यथाश्रुत एव पाठः मुद्रापितः। एवमेवोदाहरणपद्येष्वपि बहुषु मुद्रितग्रन्थेषु इहत्यात्पाठाद्भूयान् भेदो दृश्यते, अथापि मुद्रितपाठप्रत्ययमालंब्य अस्यां मातृकायां विद्यमानस्य पाठस्यान्यथाभावो नैवाकारि येन ग्रन्थकृतः पाठः न सुरक्षितो भवेत्।

अन्ते च रामायणपद्यानुक्रमणिका, धर्माकूतोदाहृतपद्यानुक्रमणिका च सुखबोधार्थं

मूलग्रन्थपरिचयार्थं चायोजिते । अस्मिन् ग्रन्थे उदाहृतानां ग्रन्थानां, निर्दिष्टानां प्रमाणग्रन्थकर्तॄणां सूचीं चोपक्रम एवायोजयाम ।

## धन्यवादसमर्पणम्

अन्ते चास्य ग्रन्थस्य, अचिरात्प्रकाशं नेष्यमाणस्य धर्माकूतयुद्धकाण्डस्य च प्रकाशनमुद्रापणयोः पर्याप्तधनवितरणेनात्यन्तं विहितोपकारेभ्यः समष्टिराज्यकर्तृभ्यः व्यष्टिराज्यसञ्चालकेभ्यः, एवमेवानुरूपे कर्मण्यस्मिन्नस्मान्प्रेरितवद्भ्यः सरस्वतीमहाल् निर्वाहसमित्यङ्गभूतेभ्यो महाशयेभ्यः, विशिष्याक्रीतकार्यदर्शिमहामहिमशालिभ्यः हार्दान् बहुकृत्वो धन्यवादान् विश्राणयन्तो लेखिनीं नियच्छामः ।

इत्थं

विदुषां विधेयः,

पि. वि. वरदराजशर्मा.

# धर्माकूतविषयानुक्रमणिका

—— o ——

| विषयाः | पृष्ठ-संख्या |
|---|---|

| विषयाः | पृष्ठ-संख्या |
|---|---|

| विषयाः | पृष्ठसंख्या |
| --- | --- |
| नारदमतकथनम् | ११२ |
| ऋषभशब्दार्थनिर्वचनम् | ,, |
| धैवतशब्दार्थनिर्वचनम् | ,, |
| तत्र नारदमतप्रदर्शनम् | ,, |
| स्वराणां शुद्धविकृतभेदेन द्विविधत्वकथनम् | ,, |
| च्युताच्युतभेदेन मध्यमस्य द्विविधत्वनिरूपणम् | ,, |
| पञ्चमगान्धारनिषादानामपि प्रत्येकं द्विविधत्वकथनम् | ११३ |
| चतुश्श्रुतित्वत्रिश्रुतित्वैकश्रुतित्वादीनां निरूपणम् | ,, |
| संगीतरत्नाकरमतवर्णनम् | ,, |
| भरताचार्यमतवर्णनम् | ११४ |
| ग्रामत्रयनिरूपणम् | ,, |
| ग्रामशब्दार्थनिर्वचनम् | ,, |
| शार्ङ्गदेवमतकथनम् | ,, |
| आकरमतकथनम् | ,, |
| ग्रामाणा देवतानिरूपणम् | ११५ |
| ग्रामाणां कालविशेषनिरूपगम् | ,, |
| मूर्च्छनाशब्दार्थनिरूपणम् | ,, |
| संगीतरत्नाकरमतकथनम् | ,, |
| चतुर्दण्डिप्रकाशिकानुसारेण मूर्च्छनानिरूपणम् | ११६ |
| गमकस्वरूपविचारः | ,, |
| स्वरकम्पस्य गमकस्य पञ्चदशविधत्ववर्णनम् | ,, |
| गीतेः शुद्धादिभेदेन पञ्चविधत्वनिरूपणम् | ,, |
| पञ्चविधगीतीना अवान्तरभेदकथनम् | ११७ |
| रागगानकर्तुश्चतुर्विधत्वकथनम् | ,, |

श्रीः

ओम्

श्री गणेशाय नमः

# धर्माकूतम्

## किष्किन्धाकाण्डः

आरण्यकाण्डे दण्डकारण्यवासिनिखिलमुनिजनसन्निधिप्रतिज्ञातदुष्टनिग्रहशिष्टपरिपालनलक्षणक्षत्रियासाधारणधर्मः खरदूषणादिराक्षसवधमुनिजनरक्षणरूपरामचरितवर्णनमुखेन प्रतिपादितः। अधुना "वन्यानामहमपि राजराण्मृगाणा"मिति भरतसन्निधिप्रतिज्ञातवन्यराजत्वनिर्वहणरूपं धर्मं वालिहननसुग्रीवराज्यप्रदानाङ्गदयौवराज्याभिषेचनरूपस्य वानरैरेव निखिलस्वकार्यसाधनरूपराजधर्मस्य रामचरितस्य वर्णनमुखेन प्रतिपादयितुं किष्किन्धाकाण्डमारभते भगवान्वाल्मीकिः—

**स तां पुष्करिणीं गत्वा पद्मोत्पलझषाकुलाम्।**
**रामः सौमित्रिसहितो विललापाकुलेन्द्रियः॥**
**तस्य दृष्ट्वैव तां हर्षादिन्द्रियाणि चकम्पिरे।**
**स कामवशमापन्नः सौमित्रिमिदमब्रवीत्॥**

अये लक्ष्मण! पश्यपश्य! इयं किल निदाघविगमसमयसमुज्जृम्भितपर्जन्यघनगर्जितसमुद्गच्छदच्छतरनिबिडविदूरमणिकन्दलसन्दोहनिर्मलसलिलान्तरस्फुटदृश्यमानतला जवनेतरपवनेरितपरिफुल्लकल्हारकमलावलीविनिर्गलदनर्गलमत्सरीमाधुरीसाधुरीतिपरिचयादिव नितान्तमधुरोदका तटनिकटप्ररूढविविधविशङ्कटविटपिविटपपटलविशीर्णकुसुमसमूहाभिरामतया स्फुटतरतारकां शारदाम्बरस्थलीमिव विडम्बयन्ती उद्यानवनाधिकहृद्यवनसमुल्लसितमल्लिकातल्लजमालतीचम्पकमाधवीकुटजपाटलकेतकीकरवीरकुरण्टकझंटीकुरवककुरुविन्दकुन्दादितरुलताकुसुमपरागधूसरपरिसरा तरलतरतरङ्गदोलाहारसुखितमदकलकलहंससुन्दरीकलकणितसम्पादितविरहिजनमनःकम्पा विभाति पम्पा। तथाहि अस्याममी रणदलितिमुखरासु समीरणदलितदलासु सन्ततोदण्डपुण्डरीकमण्डलीषु हिण्डमानाः कारण्डवचक्रवाकमुखाः शकुन्त-

सन्ततयः निजसहचरीचञ्चुपुटाञ्चलकण्डूयनसुखातिशयदरसङ्कुचितलोचनाः निरन्तरायमेव निरन्तरं सुखमनुभवन्ति । किञ्चैतानि क्रौञ्चसारसकादम्बकुटुम्बकानि विशालपुलिनवेदिका-मध्यकृतासितकानि पार्श्वगतनिजनिजविलासिनीवदनार्धचर्वितबिसकिसलयशकलग्रासकृतार्थ-जन्मानि मदमेदुरकलकूजितपरवशीकृतपथिकजनहृदयानि भूयोऽपि मदन्तःकरणमादीपयन्ति ।

एते च जलतरङ्गसङ्घसङ्घट्टनविशीर्णशीकरासारशीतलाः विलोलकिसलयाङ्गुलिप्रद-र्शिताभिनयाना श्रमवशादिव निष्यन्दमानमकरन्दस्वेदबिन्दूनां अङ्गीकृतभृङ्गीगण-सङ्गीतकानां वनलतालासिकानां विलासलास्योपदेशमिवाचरन्तः कामिनीजनमनोवशी-करणचूर्णमुष्टिभिरिव विकसितकेतकीकुसुमपांसुवर्षैरन्धकारितदिशामुखाः मञ्जुलवञ्जुल-निकुञ्जसञ्जवनविहारिशबरसुन्दरीस्वेदबिन्दुमौक्तिकनिचयमलिम्लुचा इव मन्दं मन्दं सञ्च-रन्त. वनदेवतानिश्वसितपरम्परा इव अतिसुरभयः वनकरिकरामृदितसल्लकीतरु-पल्लवक्षीरमसृणमांसलाः प्रकम्पयन्तीव मनो मम पम्पापावनमारुताः इति कथयन् परिक्षुभि-तान्तःकरणो रामः लक्ष्मणेन सह वन्यमदद‌न्तिदन्तकुन्तान्तसन्ताडनसाध्वसादिव प्रति-बिम्बदम्भादन्तर्निलीनतीरतरुगणं अहिमकरतापानभिज्ञसञ्चरदहिमकरमच्छकच्छपसम्बाधं क्वचिदतिविषमवनमहिषविषाणशिखरविक्षोभाकुलीकृतकमलिनीकुलं क्वचन मध्यन्दिनदिन-मणिकिरणप्रतापजनितोदन्यवन्यगजयूथपाथोविहारसम्भ्रमसमुत्क्षिप्तबिसकाण्डषण्डपाण्डरं, क्वचन मुनिजननिर्वर्तितशिवपूजावमानसमुत्सारितविविधपुष्पपरागभक्तिचित्रीकृतं, आदर्श-मिव वनदेवतानां, आवासमिव भगवतो वरुणस्य, अवतारमिव शरदम्बरस्य, द्रवीभावमिव स्फटिकाचलस्य, निधानमिव सुधारसस्य, प्रतिनिधिमिव कलशार्णवस्य, वेलाभवैलालवङ्गपाट-लोशीरचम्पकफलकुसुममूलजालकजालकलितवासनं अरण्यकरिण्यवमृदिततीरकदलीगर्भदल-गलितघनघनसारसारविसरातिशिशिरीकृतं तत्तादृशं सरोवरं विलोकयन् तत्तीर एव तालहिन्तालतमालकृतमालसालरसालाङ्कोलतक्कोलबहुलहिंजुलनिचुलजंभकेसरनागकेसर-नागपुन्नागतिलकामलककरकचमरकमरुवककुरुवककपित्थाश्वत्थचिरिबिल्वखर्जूरार्जुनचन्दन-स्यन्दनमन्दारमाकन्दप्रमुखनानाविधानोकहशाखाशतप्रच्छायतलविच्छन्दस्पन्दकलितचङ्क-मणहरिणबृन्दां विपुलविटपघटाघटितविकटकोटराटीकमानचटुलव्याघ्राटदार्वाघाटनिशाटखञ्ज-रीटकुक्कुटकरटंककलविंककाकशुकलावकोलूककालकण्ठकलकण्ठनीलकण्ठकलितोत्तालकोला-हलाकुलां सर्वतो गर्वतः प्रसृमरचमरभल्लूकमल्लशल्यककिटिकिरटिप्लवङ्गकुरङ्गयूथां मत्तवन-महिषविषाणाग्रकोटिपाटितहरिणीगर्भिणीरुधिरधाराशोणीकृतमार्गां अमन्दमारुतान्दोलितो-द्दण्डभण्डीरविशालविटपदोलाधिरोहणमहोत्सवानन्दितगोलाङ्गूलजालां पम्पाजलपिपासासमा-गतकण्ठीरवकण्ठारवश्रवणजनितभयपलायमानवनमदकुञ्जरां, उल्ललदधिकझिल्लिकागण झीकारमेदुरलतागुल्मां सर्वसत्त्वशरण्या अरण्यानीमाविवेश ।

तदनन्तरमनन्तरमणीयगन्धफलिकाकलिकां निकायनिकामाभिरामं त्रिभुवनविजयोद्यतकुसुमशरशरासनटङ्कारशङ्कावहमदकलकलकण्ठकण्ठनिक्वाणं अदभ्रमधुसम्भ्रमद्भ्रमरझङ्कारालङ्कृतमञ्जुलमञ्जरीपुञ्जपिञ्जरितदिङ्मण्डलं विकसितकुसुमसमुदयविलासहासमनोहराभिर्ललनाभिरिव लताभिः स्वयमेव विहिताभङ्गुरालिङ्गनतया समुल्लसितपल्लवतल्लजव्याजेन निजान्तर्गतरागमिवोद्गिरद्भिस्तरुगणैरचिरसंसूचिताविर्भावं पुङ्खानुपुङ्खं रिङ्खदसङ्ख्यमधुपकुलशृङ्खलाकृष्यमाणमदनमहारथिकाधिरूढमलयपवनरथं तरुशिखरनिपतदनेककुसुमसौरभाधिवासितदिशामुखं मानिनीमानमथनसहकारिसहकारतरुशिखरसम्भृतमदनशरनिकरं नीराजितमिव तरुणारुणमञ्जरीपुञ्जनिराकृतलोकशोकैरशोकैः, अभ्यर्च्यमानमिव विकीर्यमाणकुसुमवृन्दैः कुन्दैः, सानन्दमीक्षमाणमिव विकसितप्रसूनविगलितमरन्दबिन्दुवारैः सिन्दुवारैः, वनदेवतानिर्वर्तितारात्रिकविधिमिव व्याकोशपलाशैः, कलितकुशलप्रश्नमिव गुञ्जदलिकुलैर्बकुलैः, प्रसाधितमिव वनश्रीतिलकैस्तिलकैः, विधृतातपत्रमिव नवसमुद्गतहरितदलनिरन्तरशाखाशतकृतदिग्रोधैर्न्यग्रोधैः, कृतोपहारमिव प्रसारितशाखाग्रविन्यस्तमालैस्तमालैः, सुरभीकृतमिव जगदानन्दनैश्चन्दनैः, पीतांशुकावृतमिव काननस्थलीमुखहारिद्रवर्णकारैः कर्णिकारैः, विहितवितानमिव निर्भरविकचकुसुमपाटलैः पाटलैः, स्तूयमानमिव विकस्वरैः पिकस्वरैः, उपगीयमानमिव विगीतैर्मधुकरगीतैः, सपरिवारमिव शुककुलैः, सवयस्यमिव मलयमारुतैः, सविलासहासमिव मल्लिकादिवल्लरीकुसुमैः, सांगरागमिव बन्धूककान्तिभिः, सकलत्रमिव वनलक्ष्म्या, सनाथमिव मन्मथेन, पम्पातीरवनराजिषु कृतनवावतारं प्रियविरहविधुरकामिनीजनकृतान्तं वसन्तमवलोक्य दुस्सहजानकीविरहशोकायासपरवशीकृतमानसतया सञ्जातधैर्यविरामो रामस्तत्र तत्र वनभूमिषु विचित्रवस्तुविलोकनात् मुहुरपि जनकतनयां स्मारंस्मारं स्मरशरासननिरन्तरनिस्सरच्छरपरम्पराजर्जरितसकलावयवः सकरुणं सुमित्रानन्दनं इदमुदीरयामास ।

हन्त लक्ष्मण ! किमाचक्षे ? पुरा किल पृथुलगण्डोपलतलोपरिपतनझलञ्झलितवननिर्झरनित्यमुदितनात्यूहमिथुननिनादमेदुरासु मधुसमयसमुदितमधुमदमुदितविचित्रपत्रिगणविमुक्तवाशितोल्लसितवृक्षगुल्मलतासु पथिकजनजीवनोदन्तपरिकुपितवसन्तकोपानलशंकाकलङ्किकुसुमोद्दीपितासु शिशिरावसानसमयसमुन्मिषदनल्पपुष्पभराकल्पकल्पनानल्पशोभमानपादपासु वनभूमिषु तासु तासु तया विदेहराजसुतया प्रपञ्चितानुरागया सञ्चरमाणस्य मे ये ये विहगमृगनगलतादयः निरुपमानमानन्दभूमानमजनयन्, तेत एवैते स्वभावरमणीया अपि तया समुपनतविप्रयोगस्य मे क्षततनोरिव क्षारता सम्प्रति सम्प्रथयन्ति ।

तथा हि— एष किल नवसमुन्मिषितरसलकिसलयसगर्वचर्वणकषायकण्ठः निजोपकण्ठचरीं सहचरीं सानुरागमालोकमान लोकमानसोद्दीपनैः मुहुरचितकुहूरवैः तर्जयतीव मां

वनकोकिलः । अय च दरदलविरलबहुलबकुलमुकुलविगलितधूलिपालिधूमराकारः मधुमासवासरावतारविकसितरसालकुसुमासवास्वादवशादिव पदे पदे परिस्खलितगतिर्विविधप्रलापमुखरमधुपकुलानुगतः मत्त इव मलयमारुतो हन्त स्वरूपानुरूपमेव सञ्चेष्टते । अयं च पञ्चशरसामन्तो वसन्त भयतरङ्गितकुरङ्गाङ्गनापाङ्गचलाचलविलोचनाञ्चला सुकुमारीं जनकराजकुमारीं अपश्यतो मम शिलीमुखानिव शिलीमुखानङ्गारानिव प्रवालभृङ्गारान् कशाप्रहारानिव प्रसूनहारान्, दृढतरहृदयशङ्कूनिव बालान्तरान् विषलताकन्दमिव माकन्दं धैर्यलवनमिव कमलवनं अनलानिलानिव मलयानिलान् पितृपतिमिव रतिपतिमपि कुर्वाणाः निष्कारणमेव वैरनिर्यातनाय समुद्युङ्क्ते ।

हन्त किं करोमि मन्दभाग्यः । एते किल समुदञ्चितकलिकासञ्चयरोमाञ्चकञ्चुकितवासन्तिकादृढालिङ्गिता· कोटरोत्सङ्गनिषण्णविहङ्गमकुलकलितकोलाहला· धवलतरकुसुमकदम्बदंभेन जानकीयोगविधुरं मा हसन्तीव मन्दारशाखिनः, इत्यादि विलपन् अत्यायतजानकीविरहशोकायाससान्द्रः श्रीरामचन्द्रः कतिपयपदान्तरं सञ्चरन् उद्दण्डताण्डवारम्भविलोलशिखिमण्डल विततपिञ्छभारचन्द्रकप्रकरविरचितेन्द्रायुधसहस्रशोभं अनरालगलनालगर्भितनिर्भरकेकारवमधुरया निकामसुखिन्या शिखिन्या सह निर्वर्त्यमानविलासनृत्योत्सवं कञ्चन पञ्चशरशरवशंवद नीलकण्ठयुवानम् आलक्ष्य तदीयबर्हलक्ष्मीनिरीक्षणोत्क्षिप्तक्षितितनयाकेशपक्षरामणीयकस्मरणो लक्ष्मणमिदमाचचक्षे—

**पश्य लक्ष्मण नृत्यन्तं मयूरमुपनृत्यति ।**
**शिखिनी मन्मथार्तैषा भर्तारं गिरिसानुषु ॥**
**तामेव मनसा रामां मयूरोऽप्यनुधावति ।**
**वितत्य रुचिरौ पक्षौ रुतैरपहसन्निव ॥**
**मयूरस्य वने नूनं रक्षसा न हृता प्रिया ।**
**तस्मान्नृत्यति रम्येषु वनेषु सह कान्तया ॥**

हन्त! विचित्रा खलु शांबरी शम्बरवैरिणः यदियं तिर्यग्योनिजातापि मयूरसुन्दरीयं पञ्चशरप्रपञ्चवञ्चिता स्वयमेवाभ्येति नीलकण्ठोपकण्ठम्—

**मामप्येवं विशालाक्षी जानकी जातसम्भ्रमा ।**
**मदनेनाभिवर्तेत यदि नापहृता भवेत् ॥**

हन्त दैवहतकविप्रलब्धोऽयं वसन्तोदय । तथा हि सीतावियोगेन—

**रुचिराण्यपि पुष्पाणि पादपानामतिश्रिया ।**
**निष्फलानि महीं यान्ति समं मधुकरोत्करैः ॥**

हा हतोस्मि सर्वथामुना दुर्विदग्धेन। सा खलु निखिलललनाजनललामभूता भूतानामप्यदृश्या सन्ततमसूर्यंपश्या वरसौधमणिकुट्टिमाङ्गणसञ्चारादपि संजनितखेदा स्वप्नेऽप्यसंभावितमद्वियोगा सीता संप्रति रूक्षवीक्षणराक्षसाधिक्षेपलक्ष्यतया संजातचित्तविक्षेपा निजहृदयवेदनानिवेदनोचित कञ्चिदपि स्वजनमनालोकमाना कामिजनालिङ्गितकामिनीमदविवर्धनान् प्रोषितपतियोषिदभिषेणनोद्युक्तविषमेषुविजयडिंडिमायितकलकण्ठकण्ठान् दुरन्तसन्तापावतारपिशुनानिम न् दिवसान् मया विना कथमतिवाहयिष्यति, किमाचरिष्यति, किं मंस्यते, किं प्रतिपत्स्यते, कं देशमधिवत्स्यति, कस्य वा निकटे वदिष्यति निजावस्थां, केवलं यूथपरिभ्रष्टा पक्कणवाटीं प्रविष्टा बालकुरङ्गीव भयतरलतारक दिशो दश विप्रेक्षमाणा कष्टां दशामनुभविष्यति। हा हन्त! किमितोऽपि कष्टतरं यदेता रतिकान्तसमरान्तनितान्तखिन्नकिन्नरीमिथुनमनोहरविचित्रवनराजिविराजितान्तःप्रतिबिम्बिताम्बरमणिबिंबविडंबिसुगन्धिसौगन्धिकबन्धुरां वल्गुवचनमद्गुनिचयनमद्गुरुपङ्कजा पम्पा निरीक्ष्य कथं कथमपि मनो विनोदयतो विदेहराजनन्दिनीमनुशोचतो मम तदीयं सुन्दरं मुखं सुषुमारविन्दानि तच्चिकुरनिकरं मधुकरास्तदीक्षणलीला नीलोत्पलानि तद्भ्रूभङ्गं भृङ्गाः, तत्कुचक्रमं चक्रवाकाः, तदीयतनुलतावर्णं आवृन्तविकसितकमलकर्णिकाः तन्मन्दकेलीं मरालीकुलानि स्मारयन्ति। तथापि किञ्चिदिव समुच्छ्वसितं हृदयेन। यतः—

पद्मकेसरसंसृष्टो वृक्षान्तरविनिस्सृतः।
निःश्वास इव सीताया वाति वायुर्मनोहरः॥

इत्थमनवहित्थमुखवर्णः पम्पातटाभ्यर्णगतकर्णिकारकदम्बमधूकशिरीषशिशुपादितरुशिखरनिष्कुटनिलीनविष्किरनिनदाविष्कृतनिष्करुणमदनदुष्क्रियानिष्कासितधृतिः अपारचिन्तासनाथो रघुनाथ पुनरपि लक्ष्मणमिदमवोचत्। अहो अतित्रैलोक्यं जानक्याः शीलम्। तथाहि, या किल—

प्राप्य दुःखं वने श्यामा सा मां मन्मथकर्शितम्।
नष्टदुःखेव हृष्टेव साध्वी साध्वभ्यभाषत॥

इत्युच्चावचवचनैरत्युच्चैः प्रलपन्तं रामं सुमित्रासूनुरित्थमाश्वासयामास—

संस्तम्भ राम भद्रं ते मा शुचः पुरुषोत्तम।
नेदृशानां मतिर्मन्दा भवत्यकलुषात्मनाम्॥
स्मृत्वा वियोगजं दुःखं त्यज स्नेहं प्रिये जने।
अतिस्नेहपरिष्वङ्गाद्वर्तिरार्द्राऽपि दह्यते॥
स्वास्थ्यं भद्रं भजस्वार्य त्यज्यतां कृपणा मतिः।
अर्थो विनष्टकार्यर्थैर्नायत्नेनाधिगम्यते॥
उत्साहो बलवानार्य नास्त्युत्साहात्परं बलम्।

सोत्साहस्य हि लोकेषु न किञ्चिदपि दुर्लभम् ॥
उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु ।
उत्साहमात्रमाश्रित्य प्रतिलप्स्याम जानकीम् ॥
त्यज्यतां कामवृत्तत्वं शोकं सन्यस्य पृष्ठतः ।
महात्मानं कृतात्मानमात्मानं किन्न बुध्यसे ॥

इत्यादिभिरत्यादरेण सोदरेणानुनीयमानः संस्तम्भितशोकमोहो रामः पम्पासरोवरपरिसरोपगतम्—

निरीक्षमाणस्सहसा महात्मा सर्वं वनं निर्झरकन्दरं च ।
उद्विग्नचेताः सह लक्ष्मणेन विचार्य दुःखोपहतः प्रतस्थे ॥
तं मत्तमातङ्गविलासगामिनं गच्छन्तमव्यग्रमना महात्मा ।
स लक्ष्मणो राघवमप्रमत्तो ररक्ष धर्मेण बलेन बुद्ध्या ॥

ततस्तौ समस्तलोकरक्षणक्षमक्षितिपतिलक्षणलक्षितौ करकमलगृहीतकनकमयशरासनौ परिकुपितविषधरनिकरसदृशनिशितशरभरभरितशरधिविलसितविपुलभुजशिखरौ उद्वृत्तपृथुलमांसलमसृणायतभुजदण्डमण्डितौ स्वपरिग्रहेण जटावल्कयोरपि स्पृहणीयतासम्पादकौ गन्धसिन्धुरमन्थरगामिनौ अप्राकृतलावण्यावलङ्कृतारण्यौ अपाङ्गशोभितारण्यौ समुपस्थिततारुण्यौ सर्वसत्वशरण्यौ महावीराग्रगण्यौ सुकुमारौ राजकुमारौ निरीक्ष्य किञ्चिदिव सञ्चलितहृदयः सञ्चितैकमत्यैः सह चतुर्भिरमात्यैः विपुलबलावलिप्तबलीमुखचमूकमृश्यमूकमधिवसन् समग्रगुणनिधानं सुग्रीवो नाम वानरलोकाधिपो विलोकयामास ।

द्वितीये ॥

तौ तु दृष्ट्वा महात्मानौ भ्रातरौ रामलक्ष्मणौ ।
वरायुधधरौ वीरौ सुग्रीवः शङ्कितोऽभवत् ॥

अनेन राजभिस्सर्वतश्शङ्कितव्यमिति सूचितम् । तथा च राजधर्मे—

'अशङ्क्यमपि शङ्केत नित्यं शङ्केत शङ्कितान् ।
भयं ह्यशङ्किताज्जातं समूलमपि कृन्तति' ॥ इति । तथान्यत्र—

'राजन्राज्यं सपत्नेषु नित्योद्विग्नः समाचरेति'। तदनु किमेतौ नु विपुलतरभुजबलावलिप्तवालिप्रहिताविति भयात्परिम्लानवदनः सुग्रीवः—

चिन्तयित्वा स धर्मात्मा विमृश्य गुरुलाघवम् ।
ततस्स सचिवेभ्यस्तु सुग्रीवः प्लवगाधिपः ॥
शशंस परमोद्विग्नः पश्यंस्तौ रामलक्ष्मणौ ॥

अनेन स्वस्य प्रसक्त उपद्रवः सुहृद्भ्यो निवेदनीय इति सूचितम् । तथा—
उद्योगे विदुरः—

'प्रज्ञावृद्धं धर्मवृद्धं स्वबन्धुं विद्यावृद्धं वयसा चापि वृद्धम् ।

कार्याकार्ये पूजयित्वा प्रसाद्य यस्सम्पृच्छेत् न स मुह्येत्कदाचित् ॥' इति ।

अत्रापि निवासमसहमानेन हेममालिना वालिना महाप्रभावौ कौचिन्नरवरौ मत्परिपीडनाय प्रेषितौ भवेतां ध्रुवं तावेतावित्यवदत् । तदनु तद्दर्शनसञ्जातपरिभ्रमेण सुग्रीवेण सहितास्सचिवाः अपहाय तं देशं तटात्तटान्तरमधिरुह्य स्थलान्तरमागताः—

**ते क्षिप्रमधिगम्याथ यूथपा यूथपर्षभम् ।**
**हरयो वानरश्रेष्ठं परिवार्योपतस्थिरे ॥**

अनेन आपत्समये सुहृद्भिः राजा न परित्याज्य इति सूचितम् । तथा च राजधर्मे—

'अभिन्नवृत्ता विद्वांसः सद्वृत्ताश्च परीवृताः ।

न त्वा जितार्थिनो जह्युरक्षुद्रास्सत्यवादिनः' ॥ इति । कामन्दके—

'निर्गुणं ह्यपि भर्तारं आपत्सु न परित्यजेत् ।

ततः परो नास्ति यज्ञो य आपत्सूपतिष्ठते ॥' इति ।

ततश्शक्रसूनुविक्रमस्मरणमात्रेण परिकम्पितसर्वावयवं तपनतनयमवलोक्य वदतां प्रवरः प्रभञ्जनसुतः महामुनिना मतङ्गेन दूरीकृतवालितद्बलप्रवेशकथो मलयोऽयं गिरिवरः तदत्र सर्वथा तत्कृतभयं न पश्यामः । त्वं च पवनतपनसमानवेगप्रतापः अतिचपलया ह्यनया कापेय्या चेष्टया लघुतां नावलम्बस्व—

**बुद्धिविज्ञानसम्पन्न इङ्गितैस्सर्वमाचर ।**
**न ह्यबुद्धि गतो राजा सर्वभूतानि शास्ति हि ॥**

इत्यवदत् । अनेन आपत्स्वपि परित्यक्तव्यामोहो बुद्ध्यादियुक्तः राजा श्रियः पात्रभूत इति सूचितम् । तथाच कामन्दके—

'धीमानुत्साहसम्पन्नः प्रभुशक्त्या समन्वितः ।

श्रियस्स्यात्परम पात्रं माया इव महोदधिः ॥

नलिनीवाम्बुसम्पत्या बुद्ध्या श्रीः परिपाल्यते ।' इति ।

उद्योगे विदुरोऽपि—

'सन्नियच्छति यो वेगमुत्थितं क्रोधहर्षयोः ।

स श्रियो भाजनं राजन् यश्चापत्सु न मुह्यति' ॥ इति ।

तदनु तपनतनयः समाकर्ण्य हनुमद्वचनं इत्थमकथयत् । चामीकरविभूषितदीर्घचापासिधारिणौ तावालोक्य कस्य वा मनो न विकम्पेत ।

**राजानो बहुमित्राश्च विश्वासो नास्ति हि क्षमः ।**

अनेन बहुमित्रेषु राजसु विश्वासो न कर्तव्य इति सूचितम् ॥ तथाच **राजधर्मे**—

'बहुमित्राश्च राजानो बहुमित्रास्तथैव च । तेभ्यस्सर्वेभ्य एवाहुर्भयं राजोपसेविनाम् ॥
विश्वासयेत्परांश्चैव विश्वसेन्नतु कस्यचित् । पुत्रेष्वपि हि राजेन्द्र विश्वासो न प्रशस्यते ॥
एतच्छास्त्रार्थतत्वं तु मया ख्यातं तवानघ । अविश्वासो नरेन्द्राणां गुह्यं परममुच्यते ॥' इति ।

'अकारणादेव हि कारणाद्वा य एव कश्चित्पुरुषोऽरिसेवी ।
निजश्च विश्लिष्ट उपेतशस्त्र आयाति यस्तस्य गतिं प्रपश्येत् ॥' इति ॥

**अरयश्च मनुष्येषु विज्ञेयाश्छन्नचारिणः ।**
**विश्वस्तानामविश्वस्ताश्छिद्रेषु प्रहरन्ति हि ॥**

**कृत्येषु वाली मेधावी राजानो बहुदर्शिनः ।**
**भवन्ति परहन्तारस्ते ज्ञेयाः प्राकृतैर्नरैः ॥**
**तौ त्वया प्राकृतेनैव गत्वा ज्ञेयौ प्लवङ्गम ।**

अनेन परेषां स्वभावो वेषान्तरपरिग्रहादिभिः प्रच्छन्नेनैव विचारणीय इति सूचितम् । तथाच **राजधर्मे**—

'आदिमध्यावसानज्ञः प्रच्छन्नश्च विचारयेत्' । इति । **कामन्दके**—

'तपस्विलिङ्गिनो धूर्ताः यस्य शिल्पोपजीवकाः ।
चराश्चरेयुः परितः पिबन्तो जगतीमनः ॥' इति ।

अत एव, 'भिक्षुरूपं तदा भेजे शठबुद्धितया कपिः' इति गृहीतसन्यासवेषेण विचारितवानिति प्रतिपादितम् ।

**इङ्गितानां प्रकारैश्च रूपव्याभाषणेन च ।**
**लक्षयस्व तयोर्भावं प्रहृष्टमनसौ यदि ॥**
**विश्वासयन् प्रशंसाभिरिङ्गितैश्च पुनः पुनः ।**
**मामेवाभिमुखः स्थित्वा पृच्छ त्वं हरिपुङ्गव ॥**
**प्रयोजनं प्रवेशस्य वनस्यास्य धनुर्धरौ ।**
**शुद्धात्मानौ यदि त्वेनौ जानीहि त्वं प्लवङ्गम ॥**
**व्याभाषितैर्वा विज्ञेया स्याद्दुष्टादुष्टता तयोः ।**

अत्र दुष्टादुष्टाभिप्रायः इङ्गिताकारचेष्टाव्याभाषणादिभिर्ज्ञातव्य इत्युक्तम् । तथाच मनुः—

संविद्यादस्य कृत्येषु निगूढेंगितचेष्टितैः । आकारमिङ्गितं चेष्टां कृत्येषु च चिकीर्षितम् ॥
यथा प्रयत्नमातिष्ठेद्यथा स्वार्थं न पीडयेत । बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम् ॥
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च । आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ॥
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गत मन· ॥ इति ।

विशेषो राजधर्मे इन्द्रं प्रति बृहस्पतिः ।

परोक्षमगुणानाह सद्गुणानभ्यसूयते । परैर्वा कीर्त्यमानेषु तूष्णीमास्ते पराङ्मुखः ॥
तूष्णींभावेऽपि विज्ञेयं न चेद्भवति कारणम् । निश्वासमोष्ठसन्दंशं शिरसश्च प्रकम्पनम् ॥
करोत्यभीक्ष्णं ससृष्टमसंसृष्ट च भाषते । अदृष्टितो विकुरुते दृष्टो नैवाभिभाषते ॥
पृथगेत्य समश्नाति नेदमद्य यथाविधि । आसने शयने याने भावा लक्ष्या विशेषतः ॥
आर्तिरार्ते प्रिये प्रीतिरेतावत्प्रियलक्षणम । विपरीतं तु बोद्धव्यमरिलक्षणमेव तत् ॥
इति दुष्टस्य विज्ञानमुक्तं ते सुरसत्तम ॥ इति ।

अनुरागमात्सर्यलिङ्गानि कामन्दकेऽपि—

रागापरागौ जानीयाद्भर्तुं कुशलकर्मकृत् । इङ्गिताकारलिङ्गाभ्यामिङ्गिताकारतत्ववित् ॥
दृष्ट्वा प्रसन्नो भवति वाक्यं गृह्णाति चादरात् । दिशत्यासनमभ्याशे कुशलं परिपृच्छति ॥
विविक्तदर्शनस्थाने रहस्ये न च शङ्कते । तदर्था तत्कृतां चोच्चैराकर्णयति सत्कथाम् ॥
श्लाघते श्लाघनीयेषु श्लाघमानं च नन्दति । कथान्तरेषु स्मरति प्रहृष्टः कीर्तयेद्गुणान् ॥
सहते पथ्यमुक्तस्सन् न निन्दामनुमन्यते । करोति वाक्यं तद्भक्तं तद्वच्च बहुमन्यते ॥
वृद्धौ प्रसन्नो भवति व्यसने परितप्यते । रक्तस्य हि गुणाः प्रोक्ताः भृत्येषु पृथिवीपतेः ॥
उपकारेषु माध्यस्थ्यं दर्शयत्यद्भुतेष्वपि । तत्कृतं कर्म चान्येन कृतमित्यभिभाषते ॥
विपक्षमुत्थापयति विनाशं चाप्युपेक्षते । कार्ये संवर्धयेताशा फले च कुरुतेन्यथा ॥
यद्वाक्यं मधुरं किञ्चित्तदप्यर्थेन निष्ठुरम् । आचरत्यात्मसंसत्सु परिवादं च केवलम् ॥
अकोपोऽपि सकोपाभः प्रसन्नश्चापि निष्फलः । हसत्यकस्मात्त्यजति रूक्षं च समुदीक्षते ॥
विज्ञाप्यमानो वृत्त्यर्थं सहसोत्थाय गच्छति । आघट्टयति मर्माणि गुणैर्न बहुमन्यते ॥
संभावयति दोषेण वृत्तिच्छेदं करोति च । साधूक्तमपि तद्वाक्यं समर्थयति· चान्यथा ॥
अपर्वणि कथाभङ्गं करोति विरसीभवन् । उपास्यमानश्शयने सुप्तलक्ष्येण तिष्ठति ॥
यत्नेनाराध्यमानोऽपि सुप्तवच्च विचेष्टते । इत्यादि चानुरक्तस्य विरक्तस्य च लक्षणम् ॥
रक्ताद्वृत्तिं समीहेत विरक्तात्तां परित्यजेत् । इति ।

तृतीये ॥

ततः सुग्रीवप्रचोदितः,

**कपिरूपं परित्यज्य हनूमान्मारुतात्मजः ।**
**भिक्षुरूपं तदा भेजे शठबुद्धितया कपिः ॥**
**ततः स हनुमान्वाचा श्लक्ष्णया सुमनोज्ञया ।**
**विनीतवदुपागम्य राघवौ प्रणिपत्य च ।**
**आबभाषे च तौ वीरौ यथावत्प्रशशंस च ॥**

अनेन दूतेन स्तुतिपूर्वकमेव सन्देशो निवेदनीय इति सूचितम् । अत एव दूतो यस्य सन्देशं हरति यस्मै च निवेदयति तदुभयपक्षप्रशंसापूर्वकं मृदुतरं भाषेतेत्युक्तं **कामन्दके—**

'ब्रूयात्प्रसृतया वाचा सर्वं वेद भवानिति ।
कुलेन नाम्ना द्रव्येण कर्मणा च महीयसा । कुर्याच्चतुर्विधं स्तोत्रं पक्षयोरुभयोरपी'ति ॥

सर्वाभरणसमलङ्करणार्हावपि तद्रहितौ अश्विनाविव निरतिशयसौन्दर्यशालिनौ त्रिलोकनायकोपमानौ युवानौ युवामवलोक्य महाबलेन बालिना सञ्जातवैरः सुग्रीवः बहुशः शङ्कितहृदयः स्वसचिवं हनुमन्नामानं मां भवदीयवृत्तान्तविमर्शनाय प्रेषयामासेति ।

ततः पवनतनयवचनाकर्णनजनितहर्षप्रकर्षेण प्रसन्नाननो रामः पार्श्वस्थितं लक्ष्मणमित्यवदत् ।

**सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः ।**
**त्वमभ्यभाष सौमित्रे सुग्रीवसचिवं कपिम् ॥**
**वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्तमरिन्दम ।**
**नानृग्वेदविनीतस्य नायजुर्वेदधारिणः ॥**
**नासामवेदविदुषः शक्यमेवं प्रभाषितुम् ।**
**नूनं व्याकरणं कृत्स्नं अनेन बहुधा श्रुतम् ॥**
**बहु व्याहरताऽनेन न किंचिदपशब्दितम् ।**
**न मुखे नेत्रयोर्वापि ललाटे च भ्रुवोस्तथा ॥**
**अन्येष्वपि च सर्वेषु दोषः संविदितः क्वचित् ।**
**अविस्तरमसन्दिग्धमविलम्बितमव्ययम् ॥**
**उरःस्थं कण्ठगं वाक्यं वर्तते मध्यमे स्वरे ।**

**संस्कारक्रमसम्पन्नामद्रुतामविलम्बिताम् ।**
**उच्चारयति कल्याणीं वाचं हृदयहर्षिणीम् ॥**
**अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया ।**
**कस्य नाराध्यते चित्तं उद्यतासेररेरपि ॥**
**एवंविधो यस्य दूतो न भवेत्पार्थिवस्य तु ।**
**सिध्यन्ति हि कथं तस्य कार्याणां गतयोऽनघ ॥**
**एवं गुणगणैर्युक्तो यस्य स्यात्कार्यसाधकः ।**
**तस्य सिध्यन्ति सर्वार्थाः दूतवाक्यप्रचोदिताः ॥**

नन्वत्र "नानृग्वेदविनीतस्य नायजुर्वेदधारिणः । नासामवेदविदुषः शक्यमेवं प्रभाषितुम्" इत्यादिना ऋग्वेदादौ सम्यक् परिचयमन्तरेण एवमपशब्दादिदोषरहित मुख-नेत्रादिविकारदोषरहितं उचितस्थानोच्चारणेन विस्पष्टत्वादिगुणयुक्तं भाषितुं न शक्यमिति प्रतिपादितम् । नैतद्युक्तं, न हि वेदाध्ययनमात्रेण वक्तुरेते दोषाः परिहर्तुं शक्यन्त इति चेत्सत्यम् । न केवलवेदाध्ययनेन परिहर्तुं शक्याः तथापि शिक्षादीनामङ्गानां वेदोपयोगि-त्वात्तैः सह वेदाध्ययने सति तत्प्रतिपादितदोषपरिहारः सम्भवत्येव । शिक्षादिभिरङ्गैः सहैव वेदोऽध्येतव्य इत्यत्रागमः प्रमाणम् । ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेय-श्चेति । निष्कारणः दृष्टकारणनिरपेक्षः नित्य इति यावत् । कार्यतेऽनुष्ठाप्यतेऽनेनेति कारणं फलम् । ब्राह्मणेन षडङ्गो वेदोऽध्येयो ज्ञेयश्चेत्यन्वयः । तथा च साङ्गवेदाध्ययन-तदर्थज्ञानरूपो धर्मः नित्यस्सन्ध्योपासनादिवदित्यर्थः । श्रुतिरेषेति हरदत्तः स्मृतिरिति तु भट्टाचार्य । अङ्गत्वं च शीक्षादीनामङ्गत्वेन सस्तवात् । उक्तं हि शीक्षायां---

'मुखं व्याकरणं तस्य ज्योतिषं नेत्रमुच्यते । निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे ॥
शीक्षा घ्राणं तु वेदस्य हस्तौ कल्पान्प्रचक्षते ॥' इति ।

उपकारकतयाप्यङ्गत्वं शीक्षादीनाम् । व्याकरणं हि अर्थविशेषमाश्रित्य स्वर-विशेषान्विदधत् पदार्थविशेषनिर्णय उपयुज्यते । ज्योतिषमपि वेदाध्ययनोपयोगिनं वेदो-दितकर्मानुष्ठानोपयोगिनं च कालविशेषं प्रतिपादयति । निरुक्तं तु व्याकरणस्यैव परिशिष्ट-प्रायम् । बाहुलकादिसाध्याना लोपागमविकारादीना प्रायशस्तत्र सङ्ग्रहात् । छन्दोविचिति-रपि गायत्र्यादि लक्षणकथनद्वारा "गायत्र्या जपति" 'गायत्री पुरोनुवाक्या भवति, 'त्रिष्टुग्याज्येत्यादिविध्यर्थनिर्णये उपयुज्यते । शीक्षापि वर्णोच्चारणप्रकार दर्शयति । कल्प-सूत्राण्यपि प्रकरणान्तरपठितस्य न्यायलभ्यस्य शाखान्तराधीतस्य चाङ्गजातस्य उपसंहारेण प्रयोगं दर्शयति । अत्र यद्यपि वेदाध्ययने नोपयुज्यन्ते कल्पसूत्राणि, तथापि वेदकार्ये कर्मा-

नुष्ठाने उपकारकत्वेनाङ्गत्वं, आग्नेयादिसाध्यापूर्वोपयोगिप्रयाजादीनामिवेत्यदोषः। तस्मादेषा-मङ्गत्वेन संस्तवादुपकारकत्वाच्चाङ्गत्वम्। तेष्वपि प्रधानं व्याकरणं, पदार्थावगमस्य व्याकरणा-धीनत्वात्, वाक्यार्थज्ञानस्य तन्मूलकत्वात्। अत एव तस्य शीक्षायां मुखत्वेन निरूपणं कृतम्। अङ्गानां चाध्ययनं वेदाध्ययनसमकालमेव। तथा च मनुः—

'श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि। युक्तः छन्दांस्यधीयीत मासान्विप्रोर्धपञ्चमान्॥
ततः परं तु छन्दांसि शुक्लेषु नियतः पठेत्। वेदाङ्गानि रहस्यं च कृष्णपक्षेषु संपठेत्॥' इति।

तथा च स्मृत्यन्तरेऽपि— इत ऊर्ध्वमनध्यायेष्वङ्गान्यधीयीतेति। एवं च वेदेन सहैवाधीतैरङ्गैर्वर्जनीयान्दोषानवगत्य तत्परिहारपूर्वकं वर्णानां सम्यगुच्चारणसामर्थ्यातिशयेन हनूमतो वेदाध्ययनानुमानात् लोकवेदयोः शब्दानन्यत्वं सूचितम्। अयं चार्थः पूर्वमीमा-सायां व्यवस्थापितः।

तथाहि प्रथमेऽध्याये चिन्तितम्। "प्रयोगचोदनाभावादर्थैकत्वमविभागात्"। गौरित्ये-वमादयः शब्दाः किमाकृतेः प्रमाणमुत व्यक्तेरिति संशयः। उच्यते। इदं तावत्परीक्ष्यतां किं य एव लौकिकाः शब्दाः त एव वैदिकाः उतान्य इति। यदा त एव, तदा किं त एवैषामर्थाः उतान्य इति संशयः। तत्र लौकिकाश्शब्दा अन्ये वैदिका अन्ये, अन्ये चैषामर्था इति ब्रूमः। कुतः व्यपदेशभेदाद्रूपभेदाच्च। इमे लौकिकाश्शब्दा इमे वैदिका इति व्यपदेशभेदः। अग्नि-र्वृत्राणिजङ्घनदित्यन्यदिदं रूपं लौकिकादग्निशब्दाच्छब्दान्यत्वाच्च न त एवार्थाः। अपि चा-मनन्ति "उत्ताना वै देवगवा वहन्ती"ति। ये देवाना गावः ते उत्ताना वहन्तीत्युक्ते गम्यत एव य उत्ताना वहन्ति ते गोशब्देनोच्यन्त इति। तस्मादन्यो वैदिकस्य गोशब्दस्यार्थ इति। तथा "देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थ"मिति हिरण्यपर्णो देववनस्पति-शब्देनोच्यते। तथा "एतद्वै दैव्यं मधु यद्घृतमि"ति वेदे घृते मधुशब्दः। तस्मादमीषा-मन्येऽर्था इत्येवं प्राप्ते ब्रूम.। य एव लौकिकाश्शब्दास्त एव वैदिकाः त एव चैषामर्था इति। कुतः प्रयोगचोदनाभावात्। एव च प्रयोगचोदना संभवति यदि त एव शब्दास्त एव चार्थाः। इतरथा शब्दान्यत्वे अर्थो न प्रतीयेत, तस्मादेकशब्दत्वमिति। ननु प्रयोजनमिदं, हेतुर्व्यपदिश्यतां इति, ततो हेतुरुच्यते अविभागादिति। न तेषामेतेषां च विभागमुपलभा-महे। अत एकत्वम्। तांश्चार्थानवगच्छाम. अतोऽनन्यत्वं वदामः। यच्चोक्तं य उत्ताना वहन्ति ते देवगवाः, यद्घृतं तन्मधु, हिरण्यपर्णश्च वनस्पतिरिति तन्नास्ति वचनं, यत् उत्तानानां वहतां गोत्वं ब्रूयात्, ये गावस्त उत्ताना वहन्तीत्येवं तद्यदि चानेन वचनेन गोत्वं विधीयते तत उत्ताना वहन्तीत्यनुवादः स्यात्। न चोत्ताना वहन्तः केचन प्रसिद्धास्ते नियोगतो विधातव्याः। तेषु विधीयमानेषु न शक्यं गोत्वं विधातुम्। भिद्येत हि तदा वाक्यम्।

यदि चान्ये वैदिकास्तत उत्तानादीनामर्थो न गम्येत तत्र न तरां शक्येताविज्ञातलक्षण गोत्वं विधातुम् । नचोत्तानवहनवचनमप्यनर्थकम्। स्तुत्येनार्थवद्भविष्यतीति। एवं घृतस्य मधुत्वं हिरण्यपर्णता च वनस्पतेः । तस्मात् त एव शब्दा अर्थाश्च इति ।

'नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् । बहु व्याहरताऽनेन न किञ्चिदपशब्दितम् ॥' इत्यनेन हनूमतो व्यवहारे अपशब्दाभावेन हेतुना व्याकरणाध्ययनानुमानात् व्याकरणस्य साधुशब्दानुशासकत्वं सूचितम् । व्याकरणस्य साधुशब्दानुशासकत्वं च भगवता पतञ्जलिना महाभाष्ये पस्पशाया साक्षात्प्रयोजनप्रतिपादकेन 'अथशब्दानुशासनमि'त्यनेन वाक्येन प्रतिपादितम्। विवृतं चैतद्वाक्यं तत्रैव। अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते, शब्दानुशासनं शास्त्रमधिकृतं वेदितव्यमिति अत्र शब्दशब्दः साधुशब्दपरः । केषां शब्दानां लौकिकानां वैदिकानाञ्च। लौकिकास्तावत् गौरश्वः, पुरुषो, हस्ती, ब्राह्मण, शकुनिरिति। वैदिकाश्च 'शन्नोदेवीरभिष्टये', 'इषेत्वोर्जे त्वा' 'अग्निमीले पुरोहित' 'अग्न आयाहि वीतय' इति। उत्तरग्रन्थे साधु शब्दानामेवोदाहरणात्। अनुशास्यतेऽनेनेति व्युत्पत्त्यानुशासनं शास्त्रम्। करणाधिकरणयोश्चेति ल्युटि अनादेश । शब्दानामनुशासनं शब्दानुशासनम्। शेषे षष्ठीति षष्ठीसमासः। साधुशब्दानुशासकं व्याकरणमधिकृतं प्रस्तुतं वेदितव्यमिति भाष्यार्थः । तदनेन भाष्येण साधुशब्दानुशासनपरत्वं व्याकरणस्योक्तम् । ननु किमिदं साधुशब्दानुशासकत्वम् । किं साधून् गवादिशब्दानेव प्रयुञ्जीत नासाधून् गाव्यादिशब्दानिति प्रयोगनियमविधायकत्वं उत गवादिशब्दा एव साधव न गाव्यादय इति साधुस्वरूपव्युत्पादकत्वम् । आद्येपि अर्थावबोधाय प्रयोगनियमः उत धर्माय। नाद्य. असाधुभ्योऽप्यर्थस्यावगम्यमानत्वेन नियमविधानानर्थक्यात् । न द्वितीय साधुशब्दप्रयोगनियमस्य धर्मार्थत्वबोधकप्रमाणाभावेन तस्य विधातुमशक्यत्वात् ।

तथाहि न तावत्प्रत्यक्षादिप्रमाण भवितुमर्हति, प्रत्यक्षादेर्धर्मागोचरत्वात्। नाप्यागमः अनुपलम्भात् । एकश्शब्दस्सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवति इत्यस्य च स्वर्गसाधनताबोधकत्वेन साधुशब्दप्रयोगनियामकत्वाभावात् । न च वेदवाक्यानि प्रतिपदं कल्पयितुं शक्यन्ते । अनन्तवाक्यपाठासम्भवात्। अपठितानां च मूलत्वानुपपत्तिः । नित्यानुमेयत्वे अन्धपरम्परापातात् । न च साधूनेव प्रयुञ्जीतेत्येकेनोपलक्षणेन सर्वेषामुपसङ्ग्रहः। गवाद्यनुगतगाव्यादिव्यावृत्तसाधुत्वानिरुक्ते । अत एव गवादय एव साधवः न गाव्यादय इति साधुशब्दस्वरूपव्युत्पादकत्वलक्षणं साधुशब्दानुशासकत्वमिति द्वितीयः पक्षोऽपि निरस्तः। तस्माद्व्याकरणस्य साधुशब्दानुशासकत्वमुक्तमनुपपन्नम् ।

तथा अप्रमाणमपि व्याकरणम् । आगमविरोधात् परस्परविरोधात् पूर्वोत्तरविरोधान्निष्प्रयोजनत्वाच्च। तथाहि दृष्टं सामेत्यधिकृत्य 'वामदेवाड्डयड्ड्याविति' सूत्रेण वामदेवर्षिणा

दृष्टं सामेत्यस्मिन्नर्थे वामदेव्यशब्दो व्याकरणेन व्युत्पाद्यते। आगमेन च " आपो वा ऋत्वियमार्छँस्तासां वायुः पृष्ठे व्यवर्तत ततो वामं वसु समभवत् तन्मित्रावरुणावपश्यतां तावब्रूताम्। वामं वा इदं देवेष्वजनीति तस्माद्वामदेव्यमि"ति रजोधर्मं प्राप्ताभिरद्भिः वायोः सङ्गमे सति उत्तमं वसु धनं जातं तच्च देवता संबंधि जातं तेनेदं वामदेव्याख्यं सामेति वामदेव्यशब्दः अन्यथा व्युत्पाद्यते इति आगमविरोधः। एवं कलिना दृष्टं सामेत्यस्मिन्नर्थे कालेयशब्दः कलेर्ढगिति व्याकरणेन व्युत्पाद्यते। आगमेन च यद्कालयतत्कालेयस्य कालेयत्वमित्यन्यथा व्युत्पाद्यत इत्यागमविरोधः। तथा वृद्धिरादैच् इत्यादि पाणिनीयसूत्रसन्दर्भमात्रस्य व्याकरणशब्दार्थत्वे प्रजापतिर्वै यत्किञ्चन मनसादीधेत् होत्राय वृतः कृपयन्नदीधेत् अदीधयुर्दाशराज्ञे वृताह्य इत्याद्यागमविरोधः। तत्र च अदीधेत् अदीधयुरिति गुणो दृश्यते। व्याकरणे च दीधीवेवीटां इति गुणः प्रतिषिध्यत इत्यस्ति विरोधः। ननु युक्तमदीधेरित्यागमविरोध इति। अदीधयुरित्येतद्विरोधस्तु नोपपद्यते। क्ङिति चेति प्रतिषेधविषयेप्यारभ्यमाणेन जसिचेति गुणेन अजुहवुरित्यादौ क्ङिति चेति निषेधमिव दीधीवेवीटामिति निषेधमपि बाधित्वा प्रवर्तमानेन अदीधयुरित्युपपत्तेरिति चेन्न। तस्य गुणस्य येन नाप्राप्तौ यो विधिरारभ्यते स तस्यापवाद इति न्यायेन क्ङिति चेति निषेधः प्राप्त एव आरभ्यमाणस्य तद्बाधकत्वेऽपि अजुहवुरित्याद्युक्तोदाहरणे दीधीवेवीटामिति एतस्मिन्निषेधे अप्राप्तेऽपि आरभ्यमाणस्यैतन्निषेधबाधकत्वानुपपत्तेः। तस्मादुक्तादीधयुरित्यागमेनापि विरोध एव।

तथा अङ्गिरस्वदङ्गिरः, गायत्रेण छन्दसाददेङ्गिरस्वत्। अग्ने मनुष्वदङ्गिरः, मनुष्वदग्निं मनुना समिद्धमित्याद्यागमविरोधः। तत्र हि अङ्गिरो मनुः शब्दयोर्वतौ परतः स्वादिष्वसर्वनामस्थान इति पदसंज्ञायां ससजुषोरुरिति सकारस्य रुत्वे अङ्गिरः शब्दे च हशि चेति रोरुत्वे आद्गुण इति गुणे च अङ्गिरोवन्मनुष्वदिति व्याकरणरीत्या भवितव्यम्। अन्यथा चागमे वर्तत इत्यागमविरोधः। तथा अयमग्नेजारिति। एतेनाग्ने ब्रह्मणा वावृधस्वेत्यागमविरोधः। तथा हि अत्रायमिति शब्दः अन्तोदात्तः एतेनेति शब्दः मध्योदात्तः अग्ने इति शब्दश्च पदकाले सर्वानुदात्तः। सहिताया तु स्वरितादिः एकश्रुत्यन्त इत्यागमे स्वरस्थितिः। व्याकरणरीत्या च अयमेतेन शब्दयोः सुबामन्त्रिते पराङ्गवत्स्वरे इत्यनेन पराङ्गवद्भावान्न हि स्वाङ्गं स्वव्यवधायकमिति न्यायेन अयमेतेन शब्दयोः अव्यवधायकत्वेन अग्नेशब्दस्य पदादिस्थत्वेन पदस्य, पदात्, अनुदात्तंसर्वमपदादौ, इत्यधिकृत्य आमन्त्रितस्य चेति विहितस्य आष्टमिकसर्वानुदात्तत्वस्य अप्रसक्त्या आमन्त्रितस्य चेति आद्युदात्तत्वं स्यादित्यागमविरोधः। अथ सूत्रभाष्यवार्तिकात्मकग्रन्थसन्दर्भ एव व्याकरणं हि मुनित्रयवचसां परस्परविरोधेनाप्रामाण्यम्। तथाहि सूत्रकारो हि अवश्यवक्तव्यं

प्रयोजनमनभिदधानः निष्प्रयोजनं व्याकरणं मन्यते। तदेतत्परस्परविरुद्धम्। एवं सूत्रकारः तुल्यताल्वादिस्थानाभ्यन्तरप्रयत्नानामेव वर्णानां तुल्यास्यप्रयत्नं सवर्णमिति सवर्णसंज्ञां विदधाति। वार्तिककारस्तु अतादृशयोरपि ऋलृवर्णयोः। तथा अन्तरं बहिर्योगोपसंव्यानयोः इति पुर्यपुरीसाधारणबाह्यपदार्थमात्रप्रतिपादकान्तरशब्दस्य सर्वनामसंज्ञां कामयते। अपुरीति च वक्तव्यमिति वदन् वार्तिककारस्तु नैतदभ्युपगच्छतीति विरोधः। तथा साधुशब्दप्रयोगे धर्म इति वार्तिककारोऽभ्युपगच्छति। अथवा पुनरस्तु ज्ञाने धर्म इति वदन् भाष्यकारस्तु साधुशब्दज्ञाने धर्म इत्यभ्युपगच्छतीति विरोधः। तथा लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेष्विति वार्तिकेन लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते। किमिदं धर्मनियम इति। धर्माय नियमो धर्मनियमः धर्मप्रयोजनो वा नियमो धर्मनियमः प्रियतद्धिता हि दाक्षिणात्याः। यथा लोकवेदयोरिति प्रयोक्तव्ये यथा लौकिकवैदिकेष्विति प्रयुञ्जते। अथवा युक्त एवात्र तद्धितार्थः यथा लौकिकेषु वैदिकेषु च कृतान्तेषु, लोके तावदभक्ष्यो ग्रामकुक्कुटः अभक्ष्यो ग्रामसूकर इत्युच्यते। भक्ष्यं च नाम क्षुदुपघातार्थमुपादीयते। शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्। तत्र च नियमः क्रियते इदं भक्ष्यमिदमभक्ष्यमिति। तथा खेदात्स्त्रीषु प्रवृत्तिर्भवति। समानश्च खेदविगमः गम्यायामगम्यायां च तत्र नियमः क्रियते इयं गम्येयमगम्येति। वेदे खल्वपि पयोव्रतो ब्राह्मणः, यवागूव्रतो राजन्य, आमिक्षाव्रतो वैश्य इत्युच्यते। व्रतं च नाम अभ्यवहारार्थमुपादीयते। शक्यं चानेन शालिमादीन्यपि व्रतयितुम्। तत्र नियमः क्रियते। तथा बैल्वो वा खादिरो वा यूप इत्युच्यते। यूपो नाम पशुबन्धार्थमुपादीयते। शक्यं चानेन यत्किञ्चित्काष्ठमुच्छित्य अनुच्छित्य वा पशुरनुबन्धुम्। तत्र नियमः क्रियते। तथाग्नौ कपालान्यधिश्रित्य अनुमन्त्रयते भृगूणामङ्गिरसां तपसा तप्यध्वमिति। अन्तरेणापि मन्त्रं अग्निर्दहनकर्मा कपालानि सन्तापयेत्। तत्र नियमः क्रियते। एवं क्रियमाण अभ्युदयाय भवतीति। एवमिहापि समानायामर्थगतौ शब्देन चापशब्देन च धर्मनियमः क्रियते। शब्देनैवार्थोऽभिधेयो नापशब्देनेति। एवं क्रियमाणं अभ्युदयकारि भवतीति। भाष्येण चार्थप्रतिपादनसमर्थाश्शब्दा एव अत्र व्याकरणे व्युत्पाद्यन्त इत्यवगम्यते। तादृशाश्च वाक्यरूपा एव न पदरूपाः। तदुक्तं हरिणा—

'ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकंबले। देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः॥' इति।

तथा च वाक्यान्येवास्मिन् शास्त्रे व्युत्पाद्यन्ते न पदानीत्येतद्भाष्यवार्तिकबलादवगम्यते। शास्त्रे च सर्वत्र पदान्येव व्युत्पाद्यन्ते न वाक्यानि। उक्तं च भगवता भाष्यकारेण। वृद्धिसूत्रे संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते। तेषां यथेष्टमभिसंबन्धो भवतीति

तद्यथा आहर पात्रं पात्रमाहरेति। तस्मात्प्रतिज्ञातवाक्यव्याकरणाकरणात् पदव्याकरणाच्च परस्परविरोधः। तथा वृद्धिरादैजिति सूत्रे आदैजिति समाहारद्वन्द्वाभ्युपगमे द्वन्द्वाच्चुदषहान्तात्समाहार इति सूत्रविरोधः। तथा हि अनेन सूत्रेण चवर्गदकारषकारहकारान्तात्समाहारद्वन्द्वात् अच्प्रत्ययो वाक्त्वचमित्याद्युदाहरणसिध्यर्थं तथा विधीयते। आदैजिति चवर्गान्तः समाहारो निर्दिश्यत इति विरोधः। एतद्दोषपरिजिहीर्षया इतरेतरद्वन्द्वाभ्युपगमे च द्व्येकयोर्द्विवचनैकवचने इति सूत्रविरोधः। तथा हि द्व्येकयोर्द्विवचनैकवचने इति सूत्रेण प्रकृत्यर्थगतद्वित्वबहुत्वप्रतिपादकेन धवखदिरौ धवखदिरपलाशा इत्याद्यर्थे द्विवचनबहुवचने विधीयेते। आदैजित्यत्रापि प्रकृत्यर्थयोर्द्वित्वाद्द्विवचनेन भवितव्यं, तथा च न कृतमिति विरोधः। तथा पक्षद्वयेपि चोः कुः इति सूत्रविरोधः। तथाहि चोः कुरिति सूत्रेण झलि परे पदान्ते चवर्गस्य कवर्गो विधीयते वाक् त्वगित्यादिसिध्यर्थम्। आदैजिति च पदान्ते चवर्गो निर्दिश्यत इति विरोधः। तथा इको गुणवृद्धी इति सूत्रे गुणवृद्धी इत्यंशस्य द्वंद्वे घीतिसूत्रविरोधः। तथा हि अनेन सूत्रेण द्वन्द्वसमासे घिसंज्ञकस्य पूर्वनिपातो विधीयते। हरिहरावित्यादिसिध्यर्थम्। गुणवृद्धी इत्यत्र च वृद्धिशब्दो घिसंज्ञकः पश्चात्प्रयुज्यत इति विरोधः। तथा निष्प्रयोजनमपि व्याकरणम्। न च साधुशब्दानुशासनं वेदरक्षोहलघ्वसन्देहाश्च प्रयोजनानि संभवन्तीति वाच्यम्। शब्दानुशासनस्य सुखदुःखाभावान्यतररूपत्वाभावेन अप्रयोजनत्वात्, रक्षादीनां च स्वर्गाद्युपयोगिवेदस्वरूपतदर्थानुष्ठानाद्युपयोगित्वेन परम्परया पुरुषार्थत्वेन प्रयोजनत्वसंभवेऽपि अन्यथासिद्धत्वात्।

तथाहि वेदतदर्थाभिज्ञगुरुशिष्यपरम्परयैव पाठक्रमस्येव वेदस्यापि रक्षा सिध्यतीति वेदरक्षाया अन्यथासिद्धिः। तथा मीमांसाया सौर्यादियागे अग्नये जुष्टं निर्वपामीत्यादिमन्त्रेषु अग्नय इत्यस्य स्थाने सूर्यादिवाचकश्चतुर्थ्यन्तः शब्दः सूर्यादिप्रतिपादनाय प्रयोक्तव्य इति द्वारान्तरसम्बन्धनिमित्तकान्यथाभावलक्षण ऊहः प्रतिपादित इति मीमांसया ऊहोऽप्यन्यथासिद्धः। किंच कल्पसूत्रतद्व्याख्यानतदनुक्रमणिकादौ ऊहो विस्पष्टमवगम्यते। कल्पसूत्रे तावदापस्तम्बाचार्यैः प्रोक्षणीरासादयेति मन्त्रः आज्येन दध्नो देहीति संप्रैषान्तं नमतीति सूत्रे आज्येन दध्नो देहीत्यूहेन पठितः। तथा बोधायनाचार्यैः स्रुवं स्रुचश्च संमृड्ढि पत्नीं संनह्याज्येन च दध्ना चोदेहीति ऊहेन पठितः। एवं तत्तद्भाष्येषु तत्तदनुक्रमणिकासु च ऊहेन मन्त्रपाठो विस्पष्टमवगम्यते इति ततोऽन्यथासिद्धिः। तथा लाघवमपि न प्रयोजनम्। अष्टाध्यायीपरिमितपाणिनिसूत्रतद्वार्तिकतद्भाष्यादिरूपव्याकरणस्यातिविस्तृतत्वेन लाघवासिद्धेः। असन्देहोपि न प्रयोजनम्। स्थूलपृषतीमनड्वाहीमित्यादौ सत्यपि व्याकरणे पूर्वपदान्तोदात्तता वा समासान्तोदात्ततावेति

सन्देहानिवृत्तेः । अथोपाध्यायोच्चारणादेव पूर्वपदान्तोदात्तत्वादिनिश्चयसंभवान्नायं सन्देह इति चेत्तर्हि बहुव्रीहिरयं न कर्मधारय इत्युपाध्यायवचनादेवार्थविशेषनिश्चयसंभवेनासन्देहोऽप्यन्यथासिद्ध एवेति न प्रयोजनम् । तस्मात्साधुशब्दानुशासकत्वानिर्वचनादागमविरोधादिना अप्रमाणत्वाच्च साधुशब्दानुशासकं व्याकरणमित्युक्तमनुपपन्नमिति चेदुच्यते :—

सूत्रभाष्यवार्तिकग्रन्थसन्दर्भ एव व्याकरणम् । त्रिमुनि व्याकरणमिति वैयाकरणानां प्रसिद्धेः। तच्च प्रमाणं, महाजनपरिगृहीतस्मृतित्वात् मन्वादिस्मृतिवत् । तस्य च गवादय एव साधवो न गाव्यादयः, साधव एव प्रयोक्तव्या नासाधव इति नियमद्वयपरत्वं साधुशब्दानुशासकत्वम् । तत्राद्यो नियमो वाचनिक. । मृजे.प्रसङ्गे मार्ष्टिः साधुर्भवतीति भाष्यवचनात् । द्वितीयस्त्वार्थिक इति विवेकः । न चार्थावबोधायेत्यादिपूर्वोक्तविकल्पावकाशः । धर्माय नियम इति पक्षस्यागीकारात् । नच मूलाभावः । मन्वादिवत्सकलवैदिकप्रत्ययिततरमुनित्रयप्रणीतत्वानुमितवेदमूलकत्वसंभवात् । नहि पाणिनिकात्यायनपतञ्जलिभ्योऽन्यः कश्चित्प्रत्ययितनरोऽस्ति । साधूनेव प्रयुञ्जीतेति विध्यनुमानान्नानन्तवाक्यप्रसक्तिः । सत्यानृतवदनवर्जनयोश्चाविगीतमेव शास्त्रीयत्वं। सत्यं वदेन्नानृतं वदेदिति श्रुतेः। सत्यं ब्रूयात्प्रियंब्रूयान्न ब्रूयात्सत्यमप्रियं । प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः इति स्मृतेश्च । तच्च शब्दार्थभेदेन द्विविधं । तत्र यथैवार्थसत्यवचनं यथास्थितार्थकथनं धर्माय तथैव शब्दसत्यमपि यथावस्थितशब्दाविप्लुतशब्दोच्चारणमित्यर्थ. । यथाचार्थानृतमन्यथावस्थितस्यान्यथावचनं प्रत्यवायाय तथा शब्दानृत मन्यरूपे वाचके सत्यन्यरूपोच्चारणमिति यावत् । नच सत्यानृतद्वैविध्येऽपि सत्यं वदेन्नानृतंवदेदितिविधिनिषेधगत सत्यानृतशब्दयोरेकैकार्थकत्वमेव नार्थद्वयपरत्व, सकृच्छ्रुतस्योभयार्थत्वानुपपत्तेरिति वाच्यं । सत्यत्वं नामाबाधितार्थप्रतिपादकत्वं तदभावोनृतत्वं । प्रतिपादकत्वं चेह वृत्तिमुपजीव्य बोधकत्वं, तेन गाव्यादावर्थाबाधेऽपि तत्र वृत्तेरभावान्न सत्यत्वप्रसङ्ग. । अर्थानृतस्थले वृत्या प्रतिपादकत्वसद्भावेऽपि अर्थस्याबाधितत्वाभावान्नातिप्रसङ्गः । एवंचानेन रूपेण शब्दार्थसत्यद्वयस्य क्रोडीकृतत्वेन उक्तदोषानवकाशात् । तदनेन वृत्या अबाधितार्थप्रतिपादकाः गवादिशब्दा एव प्रयोक्तव्याः नातादृशा गाव्यादिशब्दा इति प्रयोगनियमोऽवगम्यते ।

नच गाव्यादि व्यावृत्त गवाद्यनुगतसाधुत्वानिरुक्तिः, वाचकत्वं साधुत्वमिति तन्निर्वचनात् । ननु गाव्यादीनामपि अर्थप्रत्यय प्रयोगान्यथानुपपत्त्या वाचकत्वं वाच्यं । न च गौण्या लक्षणया वा तदुपपत्तिः तयो॰ शक्तिमूलकत्वादितिचेन्न। अन्वयश्चानेकशब्दत्वमिति न्यायेनैकस्यार्थस्यानेकशब्दवाच्यत्वानुपपत्तौ पाणिन्याद्यभियुक्ततरानादिप्रयोगानु-

सारेण गवादिशब्दानामेव वाचकत्वकल्पनेन गाव्यादीनां वाचकत्वभ्रमेण प्रयोगप्रत्यययोरुपपत्तेः। तथाहि केनचिद्गामानयेति प्रयोक्तव्ये करणापाटवादिना गावीमानयेति प्रयुक्ते श्रोतृपुरुषेण गोशब्दं प्रयोक्तुमुद्यतस्याशक्तिजोऽयं शब्द इति निश्चित्य सास्नादिमदर्थे आनीते व्युत्पित्सवस्तदुभयं व्यवहारं पश्यन्तो गावीशब्दस्यैव सास्नादिमदर्थे शक्तिं व्युत्पद्यन्त इति शक्तिभ्रमः। ननु अशक्तिजत्वं वा अन्यद्वा कोन्वत्र विशेषः? अशक्तिजत्वकल्पनस्यैवेष्टत्वेन लघीयस्त्वात्। उभयोरपि वाचकत्वे प्रयोगे विकल्पापत्तिः। सचाष्टदोषः। किंच गोशब्देन सास्नादिमानभिधीयत इति आप्तवाक्या द्वाचकत्वग्रहदशायामभिधानक्रियाद्वारा तत्कर्मकरणयोरैककर्म्यान्नियमः स्यादितिन्यायेन नियमरूपसंबन्धावगतिः। ततश्चगाव्यादेरपि सास्नादिमदर्थवाचकत्वस्वीकारे सास्नादिमत्कर्मकाभिधानक्रियायां गोशब्द एव करणमिति नियमस्य व्युत्पत्तिकालावगतस्य बाधः। करहस्तादिषु तु विशेषानवधारणादन्याय्याप्यनेकशब्दताङ्गीक्रियते। गाव्यादिषु तु अभियुक्ततरस्मरणतदभावाभ्यां विशेषावधारणमस्तीति न सर्वेषां वाचकत्वमिति। नचैवमपि टिधुभादि संज्ञास्वतिव्याप्तिः। तासां च साध्वसाधुबहिर्भूतत्वात्। तदुक्तं,

यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिधुभादयः।
अनपभ्रंशरूपत्वान्नास्त्यासामपशब्दता॥
हस्तचेष्टा यथा लोके तथा संकेतिता मताः।
नासां प्रयोगेभ्युदयः प्रत्यवायोपि वा भवेत्। इति।

इति वाच्यम्। टिधुभादिसंज्ञानां हस्तचेष्टादिवत्संकेतितत्वेन तद्धप्रत्यायकत्वमात्र सद्भावेपि वाचकत्वे प्रमाणाभावात्।

नचैवं देवदत्तादिसंज्ञानामपि वाचकत्वं न स्यादिति वाच्यम्। तासां स्वरूपेण सादित्वेपि "द्वादशेहनि पिता नाम कुर्या"दिति शास्त्रविषयत्वेनानादित्वेन वाचकत्वस्य युक्तत्वात्। अत एव यास्त्वेता स्वेच्छया संज्ञा इति नामकरणादिशास्त्रमूलकानां स्वेछाकल्पितसंज्ञानामेवसाधुबहिर्भाव उक्तः न सर्वासां। वाचकत्वनियमेच स्मृतेः स्मृत्यन्तरं मूलं तस्याप्यन्यदित्यनादिरेषा स्मृतिपरम्परा। नचान्धपरस्परान्यायः। शब्दस्य शब्दान्तराद्विविक्तस्य तत्तत्कालीन सर्वपुरुषप्रत्यक्षत्वात्। तथाहि सर्वेऽपि स्वे स्वे काले गवादिशब्दान् प्रत्यक्षमेवोपलभन्ते। अतीतकाले च सतः पूर्वेभ्यो वृद्धेभ्यः श्रुत्वावधारयन्ति। सर्वकालमपि केचन वृद्धा. सम्भवन्तीति। नचैतावता सर्वस्मिन् काले शब्दस्वरूपप्रत्यक्षमात्रसिद्धावपि साधुत्वस्य प्रत्यक्षत्वासिद्धेः नान्धपरम्परापरिहार इति वाच्यम्। अभियुक्तस्मरणपरम्परया तत्तत्कालीनवृद्धप्रत्यक्षसध्रीचीनसास्नादिमदर्थेषु गवादिशब्दानां वाचकत्वरूपसाधुत्वस्य स्वध्यवसानत्वात्। गाव्यादिषु तु केवलप्रत्यक्षपरम्परासम्भवेऽपि अभियुक्त-

स्मरणाभावात् न साधुत्वनिश्चयः । अशक्तिजत्वस्यापि संभवादिति । तस्मान्नियमद्वय-परत्वलक्षणं साधुशब्दानुशासकत्वं व्याकरणस्य सिद्धं । यदुक्तं ततो वसु वामं समभवदित्याद्यागमविरोधादप्रमाणमिति, तत्रोत्तरं तावता तावन्मात्रस्याप्रमाणत्वेऽपि तदितरांशप्रामाण्ये बाधकाभावात् । अन्यथा सर्ववेष्टनादिस्मृतीनां कासांचित् औदुम्बरीं स्पृष्ट्वोद्गायेदित्यागमविरुद्धत्वेनाप्रमाणतया तदितरस्मृत्यंशाप्रामाण्यापत्तेः । यच्चोक्तं अङ्गिरस्वदंगिर इत्याद्यागमविरोध इति, तन्न । तत्रागिरोमनु.शब्दयोर्वतौ परतः स्वादिष्वसर्वनामस्थान इति पदसंज्ञाया नभोंगिरो मनुषां व त्युपसंख्यानमिति वार्तिकेन विशिष्य विहितया भसंज्ञया बाधात् तन्निमित्तक रुत्वोत्वयोरप्रसक्तेः । अयमग्नेजरिता एतेनाग्ने ब्रह्मणा इत्यत्रागमेनापि न विरोधः । तथाहि सुबामन्त्रिते परांगवत्स्वर इति सूत्रं हि षष्ठ्यामन्त्रितकारकवचनमिति वार्तिकेन एकवाक्यतामापन्नं सत् षष्ठ्यन्तमामन्त्रितार्थं प्रति यत्कारकं तद्वाचकं च यत्सुबन्तं तस्यैव पराङ्गवद्भावं विदधाति । उदाहृतमन्त्रयोश्चायं शब्दस्य एतच्छब्दस्य च षष्ठ्यन्तत्वाभावात् आमन्त्रितार्थकारकवाचकत्वाभावाच्च पराङ्गवद्भावाभावेन ताभ्यां व्यवहितस्याग्ने शब्दस्यापादादिस्थत्वेनाष्टमिकनिघाते सति नागमविरोध इति ।

नापि प्रजापतिर्वै यत्किंचन मनसादीधेदित्याद्यागमविरोधः । दीधीवेव्योः छन्दोविषयत्वाद्दृष्टानुविधित्वाच्छन्दसोदीधेददीधयुरिति गुणदर्शनादप्रतिषेध इति वार्तिकबलेन गुणनिषेधाभावोपपत्तेः । नचैवं सूत्रवार्तिकयोरेव परस्परविरोधः शङ्क्यः । सूत्रस्यादीध्यनमादीध्यकदित्यादि क्वचित्काभिप्रायकत्वात् । तत्र च दीधीवेवीटामिति सूत्रे किमर्थमिदमित्याशंक्य आदीध्यनमादीध्यक आवेव्यनमावेव्यक इत्यादिभाष्ये प्रयोजनप्रतिपादनमेव प्रमाणं । एवं वार्तिकस्यापि तात्पर्यापर्यालोचनकृतसार्वत्रिकबुद्धिनिवृत्तिपरत्वात् । नापि परस्परविरोधो दोषः । न हि सूत्रकारेण प्रयोजनं नोक्तमित्येतावता निष्प्रयोजनत्वं व्याकरणस्य तदभिमतमिति वक्तुं शक्यते । तथा सति तदीयग्रन्थस्य उन्मत्तवचनवत्प्रेक्षावदनुपादेयतापत्तेः । किंतु स्पष्टत्वान्नोक्तं । भाष्यकारेण तु तदाविष्कृतमित्यविरोधः । साधुशब्दप्रयोगे धर्मः साधुशब्दज्ञाने धर्मः इति वदतोर्भाष्यकार वार्तिककारयोः परस्परविरोधादप्रामाण्यमित्यपि न । परस्परविरुद्धार्थकत्वेऽपि ग्रहणाग्रहणश्रुतिवदुदितानुदितश्रुतिवच्च विकल्पेन प्रामाण्योपपत्तेः । अथवा ज्ञाने धर्म इति वदतो भाष्यकारस्याप्येक. शब्दः सम्यग्ज्ञातः सुष्टु प्रयुक्तः स्वर्गे लोके कामधुग्भवतीति तदुदाहृतश्रुतिपर्यालोचनया ज्ञानपूर्वकप्रयोग एव धर्म इत्यभिप्रायोन्नयनान्न विरोधः । एवं अपुरीति वक्तव्यमिति वार्तिकस्य अन्तरं बहिर्योगोपसंव्यानयोरिति सूत्रस्थितान्तरशब्दतात्पर्यग्राहकत्वान्नविरोधः । तथा वृद्धिरादैजिति सूत्रे आदैजित्यस्य समाहारद्वन्द्वपक्षे द्वन्द्वाच्चुदषहान्तात्समाहार इति सूत्रेणापि न विरोधः । द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहावित्यत्र बहुव्रीहिग्रहणेन समासान्तविधेरनित्यत्वज्ञापनेन समासान्ताभावे आदैजिति निर्देशोपपत्तेः ।

इतरेतरयोगद्वन्द्वपक्षेऽपि द्व्येकयोरिति विहितस्य द्विवचनस्य सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजाल इति सूत्रेण लुकि आदैजितिनिर्देशोपपत्तेर्न द्व्येकयोरिति सूत्रविरोधः। एवं चोः कुरिति सूत्रविरोधोपि न। तद्विधौ पदस्येत्यनुवृत्तेः। आदैजित्येतस्य च अयस्मयादित्वेन अयस्मयादीनि छन्दसीति भत्वेन पदत्वाभावात्। नच भपदसंज्ञयोः समुच्चयः शङ्क्यः आकडारादेकासंज्ञेत्येकसंज्ञानियमात्। न च विनिगमनाविरहात्पदत्वं वा किं न स्यादिति वाच्यम्। परत्वेनानवकशत्वेन च विनिगमनेन भसंज्ञया पदसंज्ञाया बाधनात्। नचायस्मयादीनि छन्दसीति भसंज्ञा छन्दोमांत्रविषयिणी। नचेदं छन्द अतः कथं भसंज्ञा स्यादिति वाच्यं। साङ्गवेदस्य छन्दस्त्वेन वेदाङ्गभूतव्याकरणस्यापि छन्दस्त्वात्। किंच छन्दोवत्सूत्राणि भवन्तीति भाष्यकारवचनेनातिदेशतो भसंज्ञासंभवात्। नच भसंज्ञया पदसंज्ञायाबाधे वृद्धिरादैजदेङ्गुण इत्यत्र झलांजशोन्त इति जश्त्वमपि न स्यात्, तद्विधावपि पदस्येत्यनुवृत्तेरिति वाच्यं। उभयसंज्ञान्यपि छन्दसि दृश्यन्त इति भाष्यकारवचनेन भपदसंज्ञयोस्सत्योः कुत्वाभावस्य जस्त्वस्यचोपपत्तेः। नचैव पदत्वात्कुत्वं भत्वाज्जस्त्वाभाव इति वैपरीत्यं किं नस्यादिति वाच्य। छन्दसि दृष्टानुविधानाभ्युपगमेन जश्त्वकुत्वाभावयोरेव दर्शनेन वैपरीत्यस्य वक्तुमशक्यत्वात्। छन्दसि दृष्टानुविधानं च दीधीवेव्यो छन्दोविषयत्वात् दृष्टानुविधित्वाच्छन्दस अदीधेददीधयुरिति गुणदर्शनादप्रतिषेध इति वार्तिकबलादवगम्यते इति वृद्धिरादैजित्यस्य न चो. कुरिति सूत्रविरोधः। नापि द्वन्द्वे धीति सूत्रविरोधः। षष्ठीयुक्तः छन्दसिवेत्यत्र वेनि योगविभागेन सर्वेषा विधीनां छन्दसि वैकल्पिकत्वेन पूर्वनिपातनियमाभावपक्षे गुणवृद्धी इति निर्देशोपपत्तेः। पदद्वारा सर्वत्र वाक्यस्यैवानुशासनान्ना प्रतिज्ञात व्याकरणादिदोषः। एवं निष्प्रयोजनत्वमप्यसिद्धं। साधुशब्दज्ञानस्य तत्पूर्वकप्रयोगस्य वा प्रयोजनत्वात्। नच तयोरपुरुषार्थत्वान्न प्रयोजनत्वमिति वाक्यं। पुरुषार्थस्वर्गसाधनत्वेन तयोः पुरुषार्थत्वसम्भवात्। तयोश्च स्वर्गसाधनत्वे श्रुतिः एकश्शब्दः सम्यग्ज्ञातः सुष्टु प्रयुक्तः स्वर्गे लोके कामधुग्भवतीति। एतन्मूलकमेव कात्यायनप्रणीतेषु भ्राजाख्येषु श्लोकेषु स्मर्यते —

यस्तु प्रयुङ्क्ते कुशलो विशेष शब्दान्यथावद्व्यवहारकाले।<br>
सोनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः॥ इति।

अत्र अवैयाकरणः कर्ता सामर्थ्याद्बोध्यः। रक्षादीन्यपि प्रयोजनानि। तथा च महाभाष्यं :— कानिपुनरस्य प्रयोजनानि? रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति। अस्यार्थः प्रयुज्यते प्रवर्त्यतेऽनेनेति करणल्युडन्तः प्रयोजयतीति कर्तृव्यत्ययाद्बाहुलकात् कर्तरिल्युडन्तो वा। उभयथापि प्रवर्तकविधिपरः। पुल्लिङ्गः प्रयोजनशब्द एकः। फलपरः क्लीबोऽपरः। उभयोर्नपुंसकमनपुसकेनेति नपुसकैकशेषे एकवद्भावस्य वैकल्पिकतया प्रश्ने बहुवचनमुत्तरे एकवचन च बोध्य। तत्रागमः प्रवर्तकःऊहलाघवासन्देहास्तु फलानीति विवेकः। तत्र प्रवर्तक

आगमो ब्राह्मणेन निष्कारणो धर्म इत्यादिर्व्याख्यातः । फलानि व्याख्यायन्ते । तत्र रक्षा वेदसंरक्षणम् । तथाहि भाषायामदृष्टा लोपागमविकाराः छन्दसि दृश्यन्ते, तेचानधीं-तव्याकरणैः केवलप्रयोगशरणैः प्रामादिकाः संभाव्येरन् । वैयाकरणस्तु लक्षणदर्शी लक्षणतो लोपागमविकारादीन् विज्ञाय छन्दसि यथादृष्टमेव रूपं स्थापयति । तत्र लोपो-दाहरणं त्मना देवेषु विविदे मितद्रुः । त्मना आत्मनेत्यर्थः । मन्त्रेष्वाङ्या देरात्मनइत्याकार-लोपः । आगमो यथा, देवासः ब्राह्मणासः आज्यसेरसुगिति असुगागमः । लोपागमौ यथा । देवा अदुहे, अदुहतेत्यर्थः । दुहेर्लङो झस्यादादेशे कृते लोपस्तआत्मनेपदेष्विति तलोपः । बहुलं छन्दसीति रुडागमः । एतेन नाशिरं दुह्रे, विश्वा इत्ते धेनवो दुह्रे इत्यादि लङन्तमपि व्याख्यातं । वर्णविकारो यथा । गृभ्णामि ते सौभगत्वाय । हृग्रहोर्भः छन्दसि हस्येति वक्तव्यमिति भकारः । प्रत्ययोऽपि छान्दसोस्ति । यथा उद्ग्राभं च निग्राभं चेति । उदिग्रह इति सूत्रे उद्ग्राभ निग्राभौ छन्दसि स्रुगुद्यमन निपतनयोरिति वचनात् उन्निपूर्वाद्ग्रहेर्घञ् । तत्र उत्पूर्वात्सूत्रेण लोकेऽपि सिद्धो घञ् । निपूर्वात्तु वार्तिकोक्तः । छन्दस्येव सन्निवेशविशेष-युक्ता पात्रविशेषाः स्रुचः । इह तु जुहूपभृतोरेव ग्रहणम् । उद्ग्राभं चेति जुहूमुद्यच्छति । निग्राभं चेति उपभृतं नियछतीति वचनाद्भकारादेशः । प्राग्वदूहोपि प्रयोजनं । तथाहि यत्राङ्गजातं पूर्णमुपदिष्टं सा प्रकृतिः यथा दर्शपूर्णमासौ । यत्र नोपदिष्टं सा विकृतिः यथा सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति विहितो यागः । तत्रवैकृतस्य विधेः विषयीभूतायां भावनायां करणीभूते यागे उपकारकाकांक्षायां तन्मुखेन प्राकृतमङ्गजातं प्राप्यते वैदिके करणे तादृशानामेवाङ्गानामपेक्षितत्वात् तेषामेव प्रकृतौ क्लृप्तसामर्थ्यत्वात्तद्विशेषस्यचैकदेवता-त्वादिना शक्यज्ञानत्वात् । तस्मात्प्रकृतिवद्विकृतिः कर्तव्येति पूर्वमीमांसायां स्थितं । तत्र यस्याङ्गस्य प्रकृतौ उपकारः क्लृप्तः तस्य विकृतावसंभवे निवृत्तिः । यथा प्रकृतावघातस्य वैतुष्यमुपकारतया क्लृप्तम् । तस्य कृष्णलेष्वसम्भवात् अवघातस्य निवृत्तिः । मन्त्रा अप्यङ्गं । तेषां चानुष्ठेयप्रकाशनं कार्यम् । तत्र प्रकृतौ यस्य मन्त्रस्य यदभिधेयं तच्चे-द्विकृतौ साकल्येन नास्ति तदा कृत्स्नस्य मन्त्रस्य निवृत्तिः । यथा अवरक्षोदिवस्सपत्नं वध्यासमित्यवघातमन्त्रस्य कृष्णलेषु । यस्यत्वेकदेशस्याभिधेयं नास्ति तस्य तावन्मात्रं निवर्तते । यथा—अग्नये जुष्टं निर्वपामीति मन्त्रस्यावयवभूतं देवताभिधायि पदं ; औषध-द्रव्यकत्वेन एकदेवताकत्वेन च आग्नेयविकारभूते सौर्ये निवर्तते । अग्निशब्दे लुप्तद्वारक-तया निवर्तमाने एकारोपि निवर्तते । अकारान्ते इतरप्रकृतिसन्निधानेनैव एकारस्य सं-प्रदानं वाच्यं । अकारान्तात्तु यशब्दस्य । ततश्चतुर्थ्यन्तं सूर्यायेत्याद्युदात्तं अग्नय इत्यस्य मध्योदात्तस्य स्थान ऊह्यं । सोऽयं प्रकृत्यूहः । लिङ्गस्य क्वचिदूहः । यथा देवीरापश्शुद्धास्थे-त्यप्सु विनियुक्तो मन्त्र स्तस्याज्ये ऊहः देवाज्यशुद्धमसीति । प्रत्ययमात्रस्य क्वचिदूहः । यथा

माभेर्मासंविक्था इतिपुरोडाशमन्त्रावदानमन्त्रः तस्य धानासूहः। माभैष्ट मासंविजिध्वं इत्यादिरिति हरदत्तादयः। याज्ञिकास्तु संविग्ध्वमित्यूहमाहुः। युक्तं चैतत् प्रकृतावनिट्कतया विजिरपृथग्भाव इत्यस्य प्रयोग, नतु ओ विजी भयचलनयोरित्यस्येत्यवधारणात्।

लाघवमपि प्रयोजनं। तथाहि — अध्यापनं ब्राह्मणस्य वृत्ति। तन्निर्वाहश्च वैदुष्याधीनः। वैदुष्यं च साध्वसाधुशब्दविवेक। सच न प्रतिपदपाठादिना सम्भवति। शब्दानामानन्त्यात्। तदुक्तं महाभाष्य एव। कि शब्दाना प्रतिपत्तौ प्रतिपदपाठ. कर्तव्यः गौरश्व. पुरुषो हस्ती शकुनिर्मृगोब्राह्मण इत्येवमादय शब्दा पठितव्याः? नेत्याह। अनभ्युपाय शब्दाना प्रतिपत्तौ प्रतिपदपाठ.। एवं हि श्रूयते :—बृहस्पतिरिन्द्राय दिव्य वर्षसहस्र प्रतिपदविहिताना शब्दाना शब्दपारायणं प्रोवाच नचान्तं जगामेति। बृहस्पतिश्च वक्ता, इन्द्रश्चाध्येता, दिव्य च वर्षसहस्रमध्ययनकाल. नचान्तं जगाम। किं पुनरद्यत्वेऽल्पायुषि प्रजायां यश्चिरं जीवति स वर्षशतं जीवति। चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति। आगमकालेन स्वाध्यायकालेन प्रवचनकालेन सव्यवहारकालेनेति। तत्रागमकालेनैव कृत्स्नमायुः पर्युपयुक्तं स्यात्। तस्मादनभ्युपाय एव शब्दाना प्रतिपत्तौ प्रतिपदपाठ इति। तस्मादुत्सर्गापवादरूपलक्षणद्वारा तद्बोधने लाघवम्। अन्यथा तु गौरवम्। असन्देहोऽपि प्रयोजन तथाहि स्थूलपृषतीमनड्वाहीमालभेत इति श्रूयते। तत्र सन्देह कर्मधारयो बहुव्रीहिर्वेति। तत्र कर्मधारयपक्षे पृषतीशब्देन मत्वर्थलक्षणया पृषत्वती बिन्दुमती गौरेवाभिधीयते। स्थूलापि सैव, बिन्दूनां तु स्थौल्य तानवं वा यथा तथास्तु। बहुव्रीहौ तु स्थौल्यं पृषत्वं च। गौस्तु स्थूला कृशावेत्यनादरः। तत्र लकारे उदात्तत्वं दृष्ट्वा पूर्वपदप्रकृतिस्वरेण बहुव्रीहिं वैयाकरणो निश्चिनोति। ततश्च निश्चयेन प्रतिबन्धात्सशयानुत्पाद। स एवासन्देह.। अर्थाभावेऽव्ययीभावादसन्देहमितिस्यादिति चेन्न। पर्यायेणाव्ययीभावतत्पुरुषसंज्ञाद्वयमपि भवतीत्यव्ययं विभक्तीत्यादिसूत्रे भाष्यादावुक्तत्वात्। अत एवोभयथापि मुनिप्रयोग। अद्रुतायामसंहितमिति, अथासहिता इति च। एवमिन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीत्यादावपि स्वरेणैव बहुव्रीहिनिर्णये इन्द्रपीताधिकरणमवैयाकरणान्प्रति सार्थकं। क्त्वाचिन्तान्यायेनवा नेयमिति। तदेवं रक्षोहलाघवासन्देहाख्यानि चत्वारि फलानि व्याख्यातानि।

आगमस्तु प्रवर्तक इत्युक्त, प्रयोजनान्तराण्यपि सन्ति व्याकरणस्य। तथाहि तत्रतावद्व्याकरणाध्येतु सुशब्दापशब्दविवेचनद्वारापशब्दप्रयोगवर्जनेनापशब्दप्रयोगप्रयुक्तपराभवाभावः प्रयोजनम्। अपशब्दप्रयोगात्पराभवे श्रुतिः "तेऽसुरा हेलयो हेलय इति कुर्वन्त पराबभूवुस्तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै। म्लेच्छो ह वा एष यदपशब्द इति

ब्राह्मणम् । तत्र न म्लेच्छित वा इत्यस्य विवरणं नापभाषित वा इति । उभयत्रापि कृतार्थे तवै-केत्केन्यत्वन इति तवै प्रत्ययः । धातूनामनेकार्थतया निन्दावचनान्म्लेछधातोः कर्मणि घञ् । तेन म्लेछो ह वा एष यदपशब्द इत्यपशब्दसामानाधिकरण्यं न विरुध्यते । अत्र न म्ले-छितव्यमिति निषेधस्य ते सुरा इत्यादिरर्थवादः । अत्र हे हे प्रयोगे हेहयोरिति प्लुते प्लुत-त्वप्रयुक्तप्रकृतिभावे च कर्तव्ये तदकरणं म्लेच्छनमित्येके । वाक्ये द्विर्वचनं म्लेच्छनमित्यपरे । सर्वस्य द्वे इत्यत्र पदग्रहणस्य चोदितत्वादिति तेषां भावः ।

ननु नेदं शास्त्रीयं द्विर्वचनं किंतु तात्पर्यद्योतनार्थं ऐच्छिकः पुनः प्रयोगः । अत एव शास्त्रसमाप्तिद्योतनाभिप्रायेण वाक्यस्यापि द्विरुक्तिः कृता शारीरकमीमांसायामाचार्यैः अना-वृत्तिः शब्दादनावृत्तिः शब्दादितीति चेत्तर्ह्याम्रेडितस्वरानुपपत्तिः । यदि तु तत्र आम्रे-डितस्वरनिर्मुक्त एव पाठस्तर्हि अरिशब्दे रेफस्य लत्वादपशब्द इति ध्येयम् । इदं च भाष्या-दौ प्रसिद्धश्रुतिपाठमनुसृत्य व्याख्यातं । अयं च पाठः कस्यांचिच्छाखायामन्वेषणीयः माध्य-न्दिनानां । शतपथब्राह्मणे तु हेलवो हेलव इति पठित्वा तस्माद्ब्राह्मणो न म्लेछेदिति पठ्यते । तत्र यकारस्य स्थाने वकारोपशब्द इति स्पष्टमेव । तथा स्वाभिमतार्थप्रतिपादनोपयुक्त स्वर-विशेषादि विशिष्टशब्दस्वरूपज्ञापनेन तद्विरुद्धार्थ प्रतिपादनोपयुक्तस्वरान्तरादिविशेषविशिष्ट-शब्दप्रयोग वर्जनद्वारा अनिष्टनिवृत्तिरपि प्रयोजनम् । स्वरान्तरादिविशिष्टशब्दप्रयोगादर्था-न्तरप्रतीत्या अनिष्टं भवतीत्यत्र शीक्षावचनम् । मन्त्रो हीनः स्वरतोवर्णतो वा मिथ्या-प्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधात् इति ।

स्वरेण, स्वरतः, आद्यादित्वात्तसिः । मिथ्याप्रयुक्तः यदर्थप्रतिपादनाय प्रयुक्तः ततोर्था-न्तरं स्वरवर्णदोषात्प्रतिपादयन् । अत एव तमर्थं नाहेत्यर्थः । वागेव वज्रः हिंसकत्वाद्यजमानं हिनस्तीति । यथाध्वर्युकृताद्धोमाद्यजमाने धर्मोत्पत्तिरेवमध्वर्युकृतापशब्दप्रयोगाद्यजमाने प्रत्य-वाय इत्यर्थः । यथेत्युदाहरणे । इन्द्रशत्रुः, इन्द्रशत्रुशब्दः । इह किल विश्वरूपाख्ये त्वष्टुः पुत्रे इन्द्रेण हते सति कुपितस्त्वष्टा इन्द्रस्य हन्तारं वृत्राख्यं पुत्रमुत्पिपादयिषुराभिचारिकं यागं कृतवान् । तत्र च इन्द्रस्य शातयिता शत्रुर्हिंसक इति यावत् । तथाभूतस्सन्वर्धस्वेति प्रति-पादयितुं इन्द्रशत्रुर्वर्धस्वेति प्रयुक्तं । ण्यन्ताच्छतेरौणादिकः त्रुण् प्रत्ययः । प्रज्ञादिगणे निपातनाद्ध्रस्वत्वं । इन्द्रस्य शत्रुत्वस्य विधेयत्वान्न संबोधनविभक्तिः । तस्या अनुवाद्य-विषयत्वात् । अत एव राजन् युध्यस्वेति राजा भव युध्यस्वेत्यनयोर्व्यवस्थयैव प्रयोगः । राजत्वस्य सिद्धत्वे संबोधनविभक्तिर्न तु विधेयत्वेऽपीति । एवं स्थिते इन्द्रशत्रुशब्दे तत्पुरुषसमासप्रयुक्ते अन्तोदात्ते वक्तव्ये प्रमादादाद्युदात्तः किलोक्तः । तथा च पूर्वपदप्रकृति-स्वरेण बहुव्रीह्यर्थो लब्धः । इन्देर्धातोरौणादिकेन "ऋज्रेन्द्राग्रवज्रविप्रकुब्रक्षुरखुरभद्रोग्रभेर-

भेलशुक्रशुक्लगौरवप्रेरामालाः" इत्यनेन सूत्रेण रन्प्रत्यये कृते इन्द्रशब्द आद्युदात्तो व्युत्पादितः। तेनेन्द्र एवास्य हिंसकः सम्पन्न इति स्मृतीतिहासपुराणादिषु प्रसिद्धम्। तदिहोदाहरणतयोक्तम्।

स्यादेतत्। यज्ञकर्मण्यजपन्यूंखसामस्वित्येकश्रुत्येह भवितव्यम्। सा च तत्पुरुषबहुव्रीह्योरविशिष्टेति। अत्राहुः नञिवयुक्तमन्यसदृशे तथाह्यर्थगतिरिति, वार्तिकबलेन अब्राह्मणो-ब्राह्मण इवेत्यादौ ब्राह्मणसदृशस्यैव क्षत्रियादेः प्रतीतिर्नतु लोष्टकुड्यादेरितिवदिहापि अजपन्यूंखसामस्विति जपादिपर्युदासेन तत्सदृशेषु मन्त्रेष्वेवैकश्रुतिर्विधीयते। पुत्रवधजनितकोपाविष्टेन त्वष्ट्रा इन्द्रवधोद्देशेन स्वेच्छया प्रयुज्यमानश्च स्वाहेन्द्रशत्रुरित्यादिर्मन्त्रो न भवति। तदुक्तं भेदलक्षणे जैमिनिना अनाम्नातेष्वमन्त्रत्वमिति। आपस्तम्बश्चाह अनाम्नातास्त्वमन्त्राः यथा प्रवरोहनामधेयग्रहणानीति। अत एव मन्त्रो हीन इति पाठस्य शीक्षायां प्रसिद्धत्वेऽपि ऊह्यमानस्यामन्त्रतया यथेन्द्रशत्रुरिति वाक्यशेषोसङ्गतः स्यात्। अतो मन्त्रशब्द इह शब्दमात्रपर इत्याशयेन भाष्येदुष्टश्शब्द इति पठितम्। ननु स्वाहेन्द्रशत्रुर्वर्धस्वेति वेदे पठ्यत इति चेत्सत्यम्। शब्दप्रयुक्तशब्दानुकरणस्य पाठेऽपि अनुकार्यस्य लौकिकत्वानपायात्। नन्विन्द्रशत्रुशब्दस्य त्वष्टृप्रयुक्तस्य लौकिकत्वे कथं स्वरप्रयुक्तयोर्गुणदोषयो प्रसक्तिः स्वरस्य वेदमात्रविषयत्वादिति चेन्न। स्वरविधौ छन्दोधिकाराभावात्। एतावानेव हि भेदः यच्छन्दसि त्रैस्वर्यमेकश्रुतिश्च व्यवस्थयाश्रीयते। लोकेत्वैच्छिको विकल्पः। अत एवैकश्रुत्या सूत्रपाठः त्रैस्वर्येण वेति शाब्दिकाना प्रवादः।

तथाचाधीतस्य वेदस्यार्थानवबोधप्रयुक्त नैष्फल्याभावोऽपि प्रयोजनम्। वेदस्यार्थानवबोधे नैष्फल्यमित्यत्र श्रुतिः"

यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥

निगदेन पाठमात्रेण। शुष्कैध इति सान्तेन क्लीबेनैधः शब्देन अकारान्तेन वा पुल्लिङ्गेन निर्वाह्यं। न ज्वलति न प्रकाशते, निष्फलं भवतीत्यर्थः।

निरुक्ते तु अथापि ज्ञानप्रशंसा भवति अज्ञाननिन्दाचेत्युपक्रम्य "स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्। योऽर्थज्ञ इत्सकलं भद्रमश्नुते स नाकमेति ज्ञानविधूतपाप्मे"ति मन्त्रमुदाहृत्य यद्गृहीतमविज्ञातमित्यादि पठितं। तत्रापि गृहीतं शब्दतः अविज्ञातन्त्वर्थत. प्रकृति प्रत्यय.दिविभागेनेत्यादि। शेषं प्राग्वत्। तथा प्रत्यभिवादनप्रकाराज्ञानप्रयुक्तस्त्रीतुल्यत्वाभावोऽपि प्रयोजनम्। प्रत्यभिवादनप्रकारानभिज्ञस्य स्त्रीतुल्यत्वे स्मृतिः।

अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥

अयमहमित्यस्यानुकरणं चानितिपरमिति गतिसंज्ञा। ततो गतिसमासेपि अस्य-वामोयमित्यादाविव अनुकरणत्वादेव लुङ् न।

तथा पौनराधेयिकेषु प्रयाजेषु सविभक्तिकत्वकरणोपयोगिविभक्तिज्ञानमपि प्रयोजनम्। प्रयाजेषु सविभक्तिकत्वकरणे च याज्ञिकाः—'प्रयाजाः सविभक्तिकाः कार्याः' इति। यद्यपि प्रकृतौ प्रयाजमन्त्राः सविभक्तिका एव पठ्यन्ते, तथापि यद्याधानानन्तरं यजमान उदरव्यथावान् स्याद्यदिवा संवत्सरमध्ये तस्य महती विपत्स्यात्तदा नैमित्तिकी पुनराधेयेष्टिं विधाय तत्रेदमाम्नातं 'सविभक्तिकाः' इति। तत्र केवलविभक्तेः प्रयोगानर्हत्वात्प्रकृतिराक्षिप्यते। सा चाग्निशब्दरूपा नतु याकाचित्। निरुक्ते दैवताकाण्डे 'अथ किंदेवताः प्रयाजानूयाजाः' इति प्रश्नमवतार्य नव प्रयाजा अनूयाजाश्च केवला इत्यादिमन्त्रवर्णमुदाहृत्य आग्नेया इति तु स्थितिरित्युपसंहारात्। तस्मादादितः चतुर्षु प्रयाजेषु चतस्रो विभक्तयोऽग्निशब्दप्रकृतिकाः पठ्यन्त इत्यादि श्रौतग्रन्थेषु द्रष्टव्यम्। यद्यपि बोधायनसूत्रे 'अग्न आयाहि वीतये' इत्याद्याहुतौ वैनमित्यादिब्राह्मणोक्तान् विभक्तिसंज्ञकान् पञ्च मन्त्राननुद्धृत्य प्रयाजमन्त्रैर्वषट्कारविधानान्न व्याकरणप्रसिद्धस्वादिविभक्तिज्ञानापेक्षा तथापि सूत्रान्तरेषु स्वादिविभक्तीनामेव विधानादस्ति तज्ज्ञानापेक्षा। उक्तं चापस्तम्बाचार्यैः—'अग्नाग्नेग्नावग्नेग्निनाग्नेग्निमग्न' इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्दधाति नोत्तम इति। तथाऽऽश्वलायनाचार्यैरपि 'तस्य प्रयाजानूयाजान्विभक्तिभिर्यजेत्समिधो अग्नेग्न आज्यस्य व्यन्तु तनूनपादग्न आज्यस्य वेत्विलो अग्न आज्यस्य व्यतु बर्हिरग्न आज्यस्य वेत्वि'त्यादि। तथान्यत्रापि—'यो वा इमां पदशः स्वरशोक्षरशो वाचं विदधाति स आर्त्विजीन' इति। पदं पदमिति संख्यैकवचनाच्च वीप्सायामिति शस्। स्वर उदात्तादि-रक्षरो व्यञ्जनसहितोच्। ऋत्विजमर्हतीत्यार्त्विजीनो याजकः। "यज्ञर्त्विग्भ्यां घखञा"-विति सूत्रेण 'यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसंख्यानं' इति वार्तिकेन च खञ्। यजने याजने च विदुष एवाधिकारः। तच्च वैदुष्यं व्याकरणाधीनमिति भावः। उक्तानि प्रयोजनान्यन्यानि च महाभाष्ये दर्शितानि।

तथाहि— इमानि च भूय शब्दानुशासनस्य प्रयोजनानि। तेऽसुराः,

दुष्टश्शब्दः, यदधीतं, यस्तु प्रयुङ्क्ते, अविद्वांसः, विभक्तीः कुर्वन्ति, यो वा इमां, चत्वारि, उत त्वः, सक्तुमिव, सारस्वती, दशम्यां पुत्रस्य, सुदेवो असि वरुण इति। तेऽसुराः हेलयो हेलय इति कुर्वन्तः पराबभूवुः। तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः म्लेच्छा माभूमेत्यध्येयं व्याकरणम्। तेऽसुराः।

'दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुस्स्वरतोपराधात् ॥' इति।

दुष्टाञ्छब्दान्मा प्रयुङ्क्ष्महीत्यध्येयं व्याकरणम्। दुष्टश्शब्दः। यदधीतम्।

यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥

तस्मादविज्ञातमर्थं माविगीष्महीत्यध्येयं व्याकरणम्।

यस्तु प्रयुङ्क्ते कुशलो विशेषशब्दान्यथावद्व्यवहारकाले।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः ॥

कः? वाग्योगविदेव। कुत एतत्? यो हि शब्दान् जानाति अपशब्दानप्यसौ जानाति। यथैवहि शब्दज्ञाने धर्म एवमपशब्दज्ञाने अधर्मः। अथवा भूयानधर्म प्राप्नोति। भूयांसो ह्यपशब्दाः अल्पीयांसः शब्दाः। एकैकस्य बहवोऽपभ्रंशाः। तद्यथा— गौरित्येतस्य शब्दस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः। अथ योऽवाग्योगविदज्ञानं तस्य शरणम्। विषम उपन्यासः। नात्यन्ताज्ञानं शरणं भवितुमर्हति। यो ह्यजानन्नेव ब्राह्मणं हन्यात्सुरां वा पिबेत् सोऽपि मन्ये पतितः स्यात्। एवं तर्हि सोनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः। कः? अवाग्योगवित्। अथ यो वाग्योगवित् ज्ञानं तस्य शरणम्। क पुनरिदं पठितं? भ्राजा नाम श्लोकाः। किंच भोः श्लोका अपि प्रमाणं? किंचातः? यदि प्रमाणम् अयमपि प्रमाणं भवितुमर्हति।

'यदुदुम्बरवर्णाना घटीना मण्डलं महत्।
पीतं न गमयेत्स्वर्गं किं तत् क्रतुगतं नयेत् ॥' इति।

प्रमत्तगीत एष तत्रभवतः। यस्त्वप्रमत्तगीतस्तत्प्रमाणं। यस्तु प्रयुङ्क्ते। अविद्वांसः।

अविद्वांस. प्रत्यभिवादे नाम्नो ये न प्लुति विदुः।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत्॥

स्त्रीवन्माभूमेत्यध्येयं व्याकरणम्। अविद्वास.। विभक्तीः कुर्वन्ति। याज्ञिकाः पठन्ति प्रयाजाः सविभक्तिकाः कार्या इति। नचान्तरेण व्याकरण प्रयाजाः सविभक्तिकाः शक्याः कर्तुम्। अतोऽध्येयं व्याकरणम्। विभक्ती. कुर्वन्ति। यो वा इमां पदशः स्वरशोक्षरशो वाचं विदधाति स आर्त्विजीनः। आर्त्विजीनास्स्यामेत्यध्येयं व्याकरणम्। यो वा इमाम्। चत्वारि।

'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँऽआविवेश॥' इति।

चत्वारि शृङ्गाणि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाता। त्रयो अस्य पादाः, त्रयो अस्य कालाः भूतभविष्यद्वर्तमानाः। द्वे शीर्षे, द्वौ शब्दात्मानौ नित्यः कार्यश्च। सप्त हस्तासो अस्य, सप्त विभक्तयः। त्रिधा बद्धो वृषभो रोरवीति। त्रिषु स्थानेषु बद्धः उरसि कण्ठे शिरसि च। वृषभो वर्षणात्। रोरवीति शब्द करोति। कुत एतत्? रौतिः शब्दकर्मा। महो देवो मर्त्याँऽआविवेश.। महो देवः शब्दः। मर्त्या मरणधर्माणो मनुष्याः तानाविवेश। महता देवेन नः साम्यं स्यादित्यध्येयं व्याकरणम्। अपर आह—चत्वारि वाक्परिमिता पदानि। चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताः तानि विदुर्ब्रह्मणा ये मनीषिणः। मनस ईषिणो मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति। न निमिषन्ति न चेष्टन्ते। चत्वारि। उत त्वः।

'उत त्वः पश्यन्न ददर्श वाचं उत त्वः पश्यन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासा.॥'

उतत्वः अपि खल्वेकः पश्यन्नपि, न पश्यति। शृण्वन्नपि न शृणोत्येनाम्। अविद्वांसमाहार्धम्। उतो त्वस्मै तन्वं विसस्रे, तनुं विवृणुते। जायेव पत्य उशती सुवासाः। तद्यथा जाया पत्ये कामयमाना सुवासाः स्वात्मानं विवृणुते एवं वाक् वाग्विदे स्वात्मानं विवृणुते। वाङ्नो विवृणुयादित्यध्येयं व्याकरणम्।

सक्तुमिव ।

'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रासखाय सख्यानि जानते भद्रैषा लक्ष्मीर्निहिताधिवाचि' ॥

सक्तुस्सचतेर्दुर्धावो भवति । कसतेर्वा विपरीतात् । विकसितो भवति । तितउ परिपवनं भवति । ततवद्वा तुन्नवद्वा । यत्र धीरा ध्यानवन्त मनसा ज्ञानेन वाचमक्रत वाचमकृषत अत्रासखाय. सख्यानि जानते । अत्रासखायः सन्तः सख्यानि जानते, क? य एष दुर्गमो मार्ग. एकगम्यो वाग्विषय । के पुनस्ते ' वैयाकरणा' । कुत एतत्? भद्रैषा लक्ष्मीर्निहिताधिवाचि । भद्रा ह्येषा लक्ष्मीर्निहिताधिवाचि । वाच्यधि लक्ष्मी. लक्षणाद्भासमानात्परिवृढा भवति । सक्तुमिव । सारस्वती । याज्ञिका' पठन्ति । आहिताग्नि-रपशब्दं प्रयुज्य प्रायश्चित्तीया सारस्वतीमिष्टि निर्वपेदिति । प्रायश्चित्तीया माभूमेत्यध्येयं व्याकरणम् । सारस्वती । दशम्या पुत्रस्य । याज्ञिकाः पठन्ति—दशम्युत्तरकालं जातस्य पुत्रस्य नाम दध्यात् घोषवदाद्यन्तरन्तस्थमवृद्धं त्रिपुरुषानूक अनरिप्रतिष्ठित तद्धि प्रतिष्ठितं भवति द्व्यक्षरं चतुरक्षरं वा कृतं कुर्यान्न तद्धितमिति । नचान्तेरण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुं । दशम्या पुत्रस्य । सुदेवो असि वरुण यस्य ते सप्त सिन्धवः । अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव । सुदेवो असि वरुण सत्यदेवो असि यस्य ते सप्त सिन्धवः सप्त विभक्तयः अनुक्षरन्ति । काकुदं तालु । काकुर्जिह्वा सास्मिन्नुद्यत इति काकुदम् । सूर्म्यं सुषिरामिव । तद्यथा शोभनामूर्मि सुषिरा अग्निरन्तः प्रविश्य दहति । एवं तव सप्त सिन्धवः सप्त विभक्तयः ताल्वनुक्षरन्ति तेनासि सत्यदेवः । सत्यदेवाः स्यामेत्यध्येयं व्याकरणं इति ।

एवं च प्रमाणभूतस्य साधुशब्दशासकत्वं युक्तमेव । तथा हनुमतो बहुव्यवहारेऽपि अपशब्दलेशाभावे कार्त्स्न्येन व्याकरणश्रवणस्य बहुधा श्रवणस्य च हेतुत्वमुक्तम्, तद्युक्तमेव । कथमन्यथा एकशेषात्मनेपदादिव्यवस्था समासकारक, सन्, कृदुणादि, स्त्रीप्रत्यय, तद्धितसन्धिस्वरालुक्, पुंवद्भाव, लोपागमविकारादिषूत्सर्गापवादजटिलस्य व्याकरणशास्त्रस्य सकृच्छ्रवणेन एकदेशश्रवणेन वा बहुव्यवहारे सुशब्दापशब्दपरिज्ञानं स्यात् । 'परिपठतः किंचिदपि प्रकृतिर्भवति प्रमाद' इति न्यायात् । अत एव 'कष्टोऽग्नि. कष्टं व्याकरणं' इति वदन् भाष्यकारः व्याकरणशास्त्रस्य सकृच्छ्रवणेन दुरवगाहत्वमाह ।

**न मुखे नेत्रयोर्वापि ललाटे च भ्रुवोस्तथा।**
**अन्येष्वपि च सर्वेषु दोषः संविदितः क्वचित्॥**

अनेन वर्णोच्चारणसमये मुखनेत्रादिविकारो वर्ज्य इति सूचितम्। तथा च नारदशीक्षाया—

'नच प्रकम्पयेद्विद्वान् गात्रस्यावयवान् क्वचित्।
कूर्मोऽङ्गानीव संहृत्य चेष्टामिष्टि दिशन्मनः॥

स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद्बुधः।
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते॥

गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः'॥ इति।

'शिरःकम्पं विहायैव स्वरन्यासो विधीयता'मिति च।

**अविस्तरमसन्दिग्धमविलम्बितमव्ययम्॥**

अविस्तरं शब्दप्रपञ्चेन अल्पार्थप्रतिपादनं विस्तरः, तद्रहितम्। सन्दिग्धत्वादयो वर्ज्या दोषाः। ते च पाणिनीयशीक्षायामभिहिताः।

'उपांशु दुष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रकीर्णम्।
निष्पीडितं ग्रस्तपदाक्षरं च वदेन्न दीनं न तु सानुनास्यम्॥

शङ्कितं भीतमुद्घृष्टं अव्यक्तमनुनासिकम्।
काकस्वरं शीर्षगतं तथा स्थानविवर्जित'मिति॥

महाभाष्येऽपि 'संवृतः कलो ध्मात एणीकृतोऽम्बूकृतोऽर्धकृतो ग्रस्तो निरस्तः प्रगीत उपगीतः क्ष्विण्णो रोमश' इति। अपर आह—

'ग्रस्तं निरस्तं निहितावलम्बितांबूकृतं ध्मातमथो विकम्पितम्।
संदष्टमेणीकृतमर्धकं द्रुतं सकीर्णमेताः स्वरदोषभावना'॥ इति।

व्याकृतं च कैयटेन-ऊकारादीनां सन्ध्यक्षराणां हि संवृतत्वं दोषः। कालः— स्थानान्तरनिष्पन्नः, काकलीत्वेन प्रसिद्धः। ध्मातः, श्वासभूयिष्ठतया ह्रस्वो दीर्घ इव

लक्ष्यते । एणीकृतो विद्विष्टः अविशिष्ट' किमयमोकार. अथौकार इति यत्र सन्देह. । अम्बूकृतो व्यक्तोप्यन्तर्मुखमिव श्रूयते । अर्धकृतो दीर्घोऽपि ह्रस्व इव । ग्रस्त', जिह्वामूलेन गृहीतः अव्यक्त इत्यपरे । निरस्त , निष्ठुर । प्रगीत , सामवदुच्चरितः । उपगीत', समीपवर्णान्तरगीत्या अनुरक्त । क्ष्विन्न., कम्पमान. इव । रोमशो गम्भीरः । निहितो रूक्ष. । अवलंबितो वर्णान्तरसमिन्नः । सन्दिष्टो वर्धित इव । विकीर्णो, वर्णान्तरे प्रसृतः । एकोऽप्यनेकनिर्भासीत्यपरे । स्वरदोषभावना इति स्वरदोषगात्राणि अनन्ता हि दोषा अशक्तिप्रमादकृता इति । ग्रस्तं अविभक्तिकोच्चारणम् । निरस्तं विश्लेषितसंयोगम् । अंबूकृतं सनिष्ठीवमिति तन्त्रवार्तिकटीकायामिति । अविलम्बितमित्यनेन मध्यमा वृत्तिरुक्ता । तथा शीक्षान्तरे —

'अभ्यासार्थे द्रुता वृत्ति प्रयोगार्थे तु मध्यमाम् ।
शिष्याणामुपदेशार्थ कुर्याद्वृत्ति विलंबिताम् ॥' इति ।

**उरःस्थं कण्ठगं वाक्यम्** इत्यनेन उरःकण्ठादिस्थानानि प्रतिपादितानि । तथाच नारदशीक्षाया 'उरःकण्ठ. शिरश्चेति त्रीणि स्थानानि वाङ्मये ।' इति । शब्दोत्पत्तिप्रकारः स्थानं चोक्तं तैत्तिरीयप्रातिशाख्ये — अथ शब्दोत्पत्ति वायुशरीरसमीकरणात्कण्ठोरसोः सन्धाने तस्य प्रातिश्रुत्कानि भवन्ति । उरः कण्ठ' शिरो मुखं नासिके इति । तच्च त्रिभाष्ये व्याख्यातम् । उक्तो वर्णसमाम्नाय तेषा वर्णाना कीदृशं करणं कथं वा तदुपलब्धिरित्याकाङ्क्षानन्तरं तन्निरूप्यत इत्यानन्तर्यार्थोऽथशब्द. । अथवा इतः उत्तरं यदुच्यते तच्छब्दोत्पत्तिरित्येतदधिकृतं वेदितव्यमित्यधिकारार्थ. । शब्दो नाम ध्वनिः वर्णानामकारादीना उपादानकारणम् । तदुत्पत्तिर्जन्म उपलब्धिर्वा । यथा खननादुदकस्य । सेयमारभ्यत इति सूत्रार्थः । मध्यदेशे च शब्दोत्पत्तिर्भवति । तथाच वाग्गेयकारः —

आत्मा विवक्षमाणो हि मनः प्रेरयते मनः ।
देहस्थवह्निमाहन्ति स प्रेरयति मारुतम् ॥

ब्रह्मग्रन्थिस्थितः सोऽथ क्रमादूर्ध्वपदे चरन् ।
नाभिहृत्कण्ठमूर्धास्येष्वाविशन्नञ्चति ध्वनिम् ॥

नादोतिसूक्ष्मः सूक्ष्मश्च पुष्टोपुष्टश्च कृत्रिमः ।

इति पञ्चाभिधां धत्ते पञ्चस्थानस्थितः क्रमात् ॥

व्यवहारेऽप्यसौ त्रेधा हृदि मन्द्रोऽभिधीयते ।
कण्ठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तरः ॥ इति ।

शीक्षायामपि —

'आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥

मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् ।
प्रातःसवनयोगं तच्छन्दो गायत्रमाश्रितम् ॥

कण्ठे मध्यन्दिनयुतं मध्यमं त्रैष्टुभानुगम् ।
तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥

सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णान् जनयते तेषां विभागः पञ्चधा स्मृतः ॥' इति ।

वायुशरीरसमीरणात्कण्ठोरसोस्सन्धाने । वायुश्च शरीरं च वायुशरीरे, तयोः समीरणं तस्मात् । अन्ये त्वाहुः—वायोश्शरीरे सतस्समीरणं तस्माच्छब्दोत्पत्तिरिति । तत्रेत्थं समासः—राजदन्तादित्वाच्छरीरशब्दस्य परनिपातः । शरीरे यो वायुस्तस्य तस्मात् । अस्मिन्मते वायोस्समीरणकर्तृत्वमेव नतु कर्मत्वम् । तस्य प्रातिश्रुत्कानि भवन्ति उरः कण्ठः शिरो मुखं नासिका इति । तस्य प्रकृतस्य शब्दस्य उरःप्रभृतीनि स्थानानि प्रातिश्रुत्कानि भवन्ति । प्रतिश्रुत् प्रतिध्वनिः तत्संबन्धीनि प्रातिश्रुत्कानि । न चात्रोक्तः शब्दोत्पत्तिक्रमः वर्णस्थानकरणनियमश्च वैदिकशब्दविषय एव शीक्षादीनां वेदाङ्गत्वादिति वाच्यं, लौकिकवर्णोच्चारणेऽपि तेषामपेक्षितत्वात् । अत एवोक्तक्रमेण शब्दोत्पत्तौ पुरुषस्यानवधानेनापराधे सति उच्चार्यमाणाश्शब्दाः अपशब्दा एव जायन्ते इत्युक्तं व्याकरणाधिकरणे शाबरभाष्ये ।

तथाहि — 'शब्दप्रयत्ननिष्पत्तेरपराधस्य भागित्वम् । महता प्रयत्नेन शब्द उच्चारिते वायुर्नाभेरुत्थित उरसि विस्तीर्णः कण्ठे विपरिवृत्तः मूर्धानमाहत्य वक्त्रे विचरन् विविधान् शब्दानभिव्यनक्ति । तत्रापराध्येवोच्चारयिता । यथा शुष्के पतिष्यामीति

कर्दमे पतति, सकृदुपस्पृशामीति द्विरुपस्पृशति। ततोपराधात्प्रवृत्ता गाय्यादयो भवेयुर्न नियोगतो विच्छिन्नपारंपर्या एवेति।

**मध्यमे वर्तते स्वर** इत्यनेन षष्ठं वाचः स्थानमुक्तम्। स्थानभेदाश्चोक्ताः प्रातिशाख्ये — उपांशुध्वाननिमदोपशब्दिमन्मन्द्रमध्यताराणि। करणवदशब्दममनःप्रयोगमुपांशु। अक्षरव्यञ्जनानामनुपलब्धिर्ध्वानः। उपलब्धिर्निमदः। सशब्दमुपशब्दिमदुरसि मन्द्रं कण्ठे मध्यं शिरसि तारमिति। विवृतं चैतत्त्रिभाष्यरत्ने — उपांशुध्वाननिमदोपशब्दिमन्मन्द्रमध्यताराणि। उपांश्विति प्रथमं वाचः स्थानम्। ध्वानमिति द्वितीयम्। निमदमिति तृतीयम्। एवमितराण्यपि। नामतः सप्तैतानि स्थानानि जानीयात्। उपरितनसूत्रमारभ्य प्रत्येकमेतेषां लक्षणं वक्ष्यते। करणवदशब्दममनःप्रयोगमुपांशु। नास्ति शब्दो ध्वनिरित्यशब्दम्। मनसा प्रयोगो मनःप्रयोगः। नास्ति मनःप्रयोगोऽस्मिन्नित्यमनःप्रयोगम्। वाचः स्थानमीदृशमुपांश्वित्युपदिश्यते। तत्र करणवदिति तूष्णींभावनिवृत्त्यर्थम्। अशब्दमिति शब्दस्याल्पतार्थम्। अमनःप्रयोगमिति उदात्तादीनां सांकल्पिकप्रयोगप्रतिषेधार्थम्। अक्षरव्यञ्जनानामनुपलब्धिर्ध्वानः। अक्षराणि स्वराणि अक्षराणा व्यञ्जनाना च अनुपलब्धिर्ध्वानो नाम द्वितीयं वाचः स्थानम्। उपांशुलक्षणेत्यनुपलब्धौ सत्या पुनर्वर्णनं अशब्दोपलब्धिविधानार्थम्। अक्षरव्यञ्जनानां भेदेन ग्रहणं आभीक्ष्ण्यार्थम्। अत्यन्तानुपलब्धिरित्यर्थः। उपलब्धिर्निमदः। अक्षरव्यञ्जनाना विसर्जनीयादीना उपलब्धिर्निमदो नाम तृतीयं वाचः स्थानं भवति। सशब्दमुपशब्दिमत्करणवता शब्देन अक्षराणां व्यञ्जनानां यत्रोपलब्धिर्भवति तत्स्थानमुपशब्दिमदिति वेदितव्यम्।

उरसि मन्द्रम्। कण्ठे मध्यम्। शिरसि तारम्। यत्रोरसि स्थाने प्रयोग उपलभ्यते। तन्मन्द्रं पञ्चमं वाचः स्थानम्। यत्र कण्ठस्थाने प्रयोग उपलभ्यते तन्मध्यमं नाम षष्ठं वाचः स्थानम्। यत्र शिरस्स्थाने प्रयोग उपलभ्यते तत्तारं नाम सप्तमं वाचः स्थानम्। एतेष्वादितश्चतुर्णां 'ध्वानेनोपांशु वा पत्नीः संयाजयन्ती'त्यादिना यज्ञादिषु प्रयोगो द्रष्टव्यः। मन्द्रं प्रातस्सवन उरसि प्रयुज्यते। मध्यमं माध्यन्दिने सवने। तारं तृतीयसवने। शीक्षा चैवं भवति —

'प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन।

मध्यन्दिने कण्ठगतेन चैव क्रौञ्चाह्वसंक्रोशनसन्निभेन ॥

तारं तु विद्यात्सवने तृतीये शिरोगतं तच्च तदा प्रयोज्यम्।
मयूरहंसान्यभृतस्वनानां तुल्येन नादेन शिरोगतेन' ॥ इति।

**आपस्तम्बोऽप्याह**—मन्द्रेण प्रागाज्यभागाभ्यां प्रातःसवने च मध्यमेन प्राक् स्विष्टकृतो माध्यन्दिने च क्रुष्टेन शेषे तृतीयसवने च वाक्सन्द्रवश्च तद्वदिति। **आश्वलायनोऽपि**—'अतो मन्द्रेणोर्ध्वं च शंयुवाकात् मध्यमेन हवींष्यास्विष्टकृत उत्तमेन शेष' इति।

**संस्कारक्रमसम्पन्नामद्रुतामविलम्बिताम्।**
**उच्चारयति कल्याणीं वाचं हृदयहर्षिणीम्॥**

अत्र सस्कारशब्देन संस्क्रियन्ते प्रयोगार्हतया निरूप्यन्ते वर्णानि पदानि वा एभिरिति व्युत्पत्त्या सूत्राण्युच्यन्ते। तत्क्रमसम्पन्नत्वं वाचः शास्त्रसिद्धक्रमप्रवृत्तसूत्रशिक्षितपदवर्णक्रमोपेतत्वम्। तथा च क्रमशास्त्रं **तैत्तिरीयप्रातिशाख्ये**—तत्पूर्वं पूर्वं प्रथममिति। तस्य व्याख्यानम्—तत्र संहिताविधाने पूर्वं पूर्वं पदं सूत्रं च प्रथमं कर्तव्यं यथा 'भक्ष आ इहि' इत्यत्र दीर्घं समानाक्षरे सवर्णपर इति दीर्घे, भक्षा इहीति स्थिते इवर्णपर एकारमिति एकारे कृते भक्षेहीति भवति। अन्यथा एहीति कृत्वा भक्षशब्देन सन्धीयमाने भक्षैहीति स्यात्। तच्चानिष्टं। पूर्वपदकर्तव्यत्वे एतदुदाहरणम्। पूर्वसूत्रकर्तव्यत्वेऽपि वदामः। यथा 'षट्ग्रामनिष्पूर्व' इति नकारस्य णत्वे कृते उत्तमपर उत्तमं सवर्गीयमित्यनेन टकारस्य णत्वे सति **षण्णवत्या** इति भवति। अन्यथा उत्तमपर उत्तममिति सूत्रे प्रथमं प्रवृत्ते सति षन्नवत्या इति स्यात्तच्चानिष्टम्। यथावा, वषट्स्वयमभिगूर्तायेत्यत्र टनकारपूर्वश्च वकारः प्रथम ऊष्मपरो द्वितीयमिति सूत्रद्वयं प्रसक्तम्। तत्र पूर्वत्वाट्टनकारपूर्व इत्येतदेव कर्तव्यं, अन्यथा वटस्वयमिति स्यात्तच्चानिष्टम्। अथवा इमं भविष्यामीत्यत्र उपसर्गनिष्पूर्वोनुदात्ते पदे स्वरपूर्वं व्यञ्जनमित्यादिसूत्रं च प्रसक्तम्। तत्र द्वित्वसूत्रप्राथम्ये विषस्यामिति स्यात्तन्माभूदिति षत्वमेव प्रथमं कर्तव्यम्। पूर्वं पूर्वमिति वीप्सा सर्वत्रैतमर्थं समर्थयते। एवं 'परनित्यान्तरङ्गापवादानामुत्तरमुत्तरं बलीयः' 'पूर्वत्रासिद्धं' 'विप्रतिषेधे परं कार्यं' इत्यादिव्याकरणशास्त्रबोधितक्रमप्रवृत्तसूत्रशिक्षितत्वमपि द्रष्टव्यम्।

**प्रातिशाख्येऽपि —**

क्रमविक्रमसंपन्नामद्रुतामविलम्बिताम् ।
नीचोच्चस्वारसंपन्ना वदेद्धृतवतीं समाम् ॥ इति ।

अस्यार्थः — क्रमविक्रमाभ्यां संपन्नां, क्रमो द्वित्वं, विक्रमस्तु स्वरितयोर्मध्ये यत्र नीचं स्यादित्युक्तलक्षणः । अद्रुतामत्वरिताम् । अविलम्बिताममन्दाम् । नीचोच्चस्वारसंपन्नां, अनुदात्तोदात्तस्वरितसहिताम् । धृतवतीं, प्रचयवतीम् । समामुदात्तादिन्यूनातिरेकरहितां, वदेद्ब्रूयाद्वृत्तिमित्यर्थः ।

**अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया ।**
**कस्य नाराध्यते चित्तमुद्यतासेररेरपि ॥**

अनेन पूर्वोदाहृतगुणसमष्टिविशिष्टशब्दोच्चारणेन श्रोतृचित्तवशीकरणमैहिकफलमुक्तम् । आमुष्मिकमपि सम्यगुच्चारणानुच्चारणयोः समीचीनतद्विपरीतलक्षणं फलमुक्तं शीक्षासु । सम्यगनुच्चारणे विपरीतफलं तावत् —

उदात्तो ब्रह्मजातिः स्यान्नीचो राजन्य उच्यते । स्वरितो वैश्यजातिः स्यात्प्रचयः शूद्र ईरितः ॥
वर्गाणां प्रथमा वर्णाः स्वराश्च ब्रह्मजातयः । द्वितीयाश्च तृतीयाश्च चतुर्थाः क्षत्रजातयः ॥
अन्तस्थाश्चोत्तमाश्चैव वैश्याः खलु समीरिताः । अनुस्वारो विसर्गश्च ह्यूष्माणश्शूद्रजातयः ॥
यज्जातिवर्णस्खलनं तज्जातिहननं भवेत् । गोकर्णाकृतिहस्ते तु निर्दिशेद्दक्षिणे स्वरम् ॥
अंगुलीषु च सर्वासु नयेदङ्गुष्ठमेव च । तर्जन्यादि कनिष्ठादि तथैवानामिकान्त्यकम् ॥
मध्यमांगुलिमध्यं स्यादुदात्तादिस्वरास्पदम् । उच्चारणे हि वर्णानां सामग्री या समीरिता ।
अन्यूनाधिकमीतस्सन्नुच्चरेद्ब्रह्म भक्तितः । व्याघ्री यथा हरेत्पुत्रं दंष्ट्राभ्यां न च पीडयेत् ॥
भीता पतनभेदाभ्या तद्वद्वर्णान् प्रयोजयेत् । नातिव्यक्तं नचाव्यक्तं एवं वर्णानुदीरयेत् ।
पयःपूर्णमिवामत्रं हरन्धीरो यथामति । उच्चरेत्परया भक्त्या सर्वकालमतन्द्रितः ॥
विश्रमः पदमध्ये च नेम्यमध्ये विधीयते । वाक्यान्ते च पदान्ते च विश्रमस्तु विधीयते ॥
पदान्तस्थ नकारस्य यवहेषु परेषु च । तयोर्नकारयाद्योश्च संयुतत्वं न विद्यते ॥
हस्ताद्भ्रष्टः स्वराद्भ्रष्टो वर्णात्कालात्तथार्थतः । प्रयोगाच्च परिभ्रष्टो न वेदफलमश्नुते ॥
हस्तहीनं तु योधीते स्वरवर्णार्थवर्जितः । ऋग्यजुस्सामभिर्दग्धो वियोनिमधिगच्छति ॥ इति ।

सम्यगुच्चारणे तु समीचीनं फलम्—

हस्तेन वेदं योधीते स्वरवर्णार्थसंयुत.। ऋग्यजुस्सामभिः पूतो ब्रह्मलोके महीयते ॥
स्वरवर्णान् स्फुटं मत्वा सम्यग्यश्च समुच्चरेत्। अत्युत्कृष्टफलं तस्य तत्र तत्र समीरितम् ॥
गुरुत्वं लघुता साम्यं ह्रस्वदीर्घप्लुतानि च। लोपागमविकाराश्च प्रकृतिर्विक्रमः क्रमः ॥
स्वरितोदात्तनीचत्वं श्वासो नादोङ्गमेव च। एतत्सर्वं तु विज्ञेयं छन्दोभाषामधीयता ॥
पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः। स्वरमात्राविभागज्ञो गच्छेदाचार्यसंसदम् ॥ इति।

**एवंविधो यस्य दूतो न भवेत्पार्थिवस्य तु।**
**सिध्यन्ति हि कथं तस्य कार्याणां गतयोऽनघ ॥**

**एवंगुणगणैर्युक्तो यस्य स्यात्कार्यसाधकः।**
**तस्य सिध्यन्ति सर्वार्था दूतवाक्यप्रचोदिताः ॥ इति।**

अनेन गुणाढ्यो दूतः कार्यसाधक इत्युक्तम्। दूतश्च सन्देशहरः, 'स्यात्सन्देशहरो दूतः', **इत्यमरकोशात्। पुराणसारेऽपि**—

मेधावी वाक्पटुः प्राज्ञः परचित्तपरीक्षकः।
धीरो यथोक्तवादी च दूत इत्यभिधीयते ॥ इति।

सच त्रिविधः—उक्तार्थपरित्यागी यथोक्तकारी, सामर्थ्यवशेनोक्तस्यानुक्तस्यापि राजहितस्य साधक इति। तथा च **कामन्दके**—

विशिष्टार्थो विष्य तथा राजशासनवाहकः।
[निसृष्टार्थो मितार्थश्च तथा शासनवाहकः।]

सामर्थ्योत्पादिता [सामर्थ्यात्पादतो] हीनो दूतस्तु त्रिविधः स्मृतः ॥ इति।

एवंविधोऽपि पुनर्द्विविधः प्रच्छन्नप्रकाशभेदात्।

**तथा च कामन्दके—**

'प्रकाशश्चाप्रकाशश्च चारस्तु द्विविधः स्मृतः।
अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूत उच्यते ॥'

तद्गुणाश्चोद्योगे —

'अस्तब्धमक्लीबमदीर्घसूत्रं सानुक्रोशं श्लक्ष्णमहार्यमन्यैः ।
अरोगजातीयमुदारवाक्यं दूतं वदन्त्यष्टगुणोपपन्नम् ॥' इति ।

**राजधर्मेऽपि** —

'कुलीनः शीलसम्पन्नो वाग्मी दक्षः प्रियंवदः ।
यथोक्तवादी द्युतिमान् दूतः स्यात्सप्तभिर्गुणैः ॥' इति ।

पुनरपि प्रशस्ताप्रशस्तभेदेन द्विविधः । तत्र प्रशस्तो **मनुना** दर्शितः —

अनुरक्तश्शुचिर्दक्षः स्मृतिमान्देशकालवित् ।
वपुष्मान्वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥ इति ।

अप्रशस्तः **पुराणसारे** —

यो धूल्यक्षरवीक्षणं न कृतवान् स्वप्नेऽपि नाधीतवान्
वेदे कंचन किंच शास्त्रपदवीगन्धं च न घ्रातवान् ।
विस्मृत्यापि च काव्यनाटकपदं न स्पृष्टवान् नष्टधी-
र्हा कष्टं विधिचेष्टितं क्षितिपते कोऽप्येष दूताधमः ॥ इति ।

अग्रे विनीतः परुषी परोक्षे क्रूराभिसन्धौ कुरुतेऽभिलाषम् ।
वस्तुष्वशेषेष्वपहर्तुकामो दूताधमः पापफलेन लभ्यः ॥

**नृसिंहपुराणेऽपि** —

दूतास्सत्यपराङ्मुखाः कपटिनस्सन्त्यक्तसन्ध्याजपाः
क्षुद्रापध्वनिनीतिपाठनिरता रन्ध्रानुसन्धायिकाः ।
उत्कोचप्रवणाः स्वभावपिशुनाः साधुप्रजाबाधकाः
स्वाम्यर्थापहराः प्रतारणपराः कुर्युर्नृपं कुत्सितम् ॥ इति ।

प्रशस्तश्च राज्ञा संपादनीयः, तथाच **मनुः** —

दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् । इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥ इति

दूतस्य स्वरूपं, कर्तव्यं, ज्ञातव्यं च दर्शितं **कामन्दके**—

'प्रगल्भः स्मृतिमान् वाग्मी शस्त्रे शास्त्रे च निष्ठितः । अभ्यस्तकर्मा नृपतेर्दूतो भवितुमर्हति ॥
संभक्तः शासनाद्गच्छेत् गन्तव्यं तूत्तरोत्तरम् । स्वराष्ट्रपरराष्ट्राणामिति चेति च चिन्तयन् ॥
अन्तपालांस्तु कुर्वीत मित्राण्याटविकास्तथा । जलस्थानानि मार्गांश्च विद्यात्स्वबलसिद्धये ॥
नाविज्ञातः परं शत्रोः प्रविशेच्च न संसदि । कालमीक्षेत कार्यार्थमनुज्ञातश्च निष्पतेत् ॥
सारवत्तां च राष्ट्रस्य दुष्कृतिं तृप्तिमेव च । छिद्रं शत्रोर्विजानीयात् कोशमित्रबलानि च ॥
उद्यतेष्वपि शस्त्रेषु यथोक्तं शासनं वदेत् । रागापरागौ जानीयात्प्रकृतीनां च भर्तरि ॥
द्यूतपक्षोपजापं च कुर्यादनभिलक्षितः । पृच्छ्यमानोऽपि न ब्रूयात्स्वस्वामिप्रकृतिच्युतिम् ॥
विद्याशिल्पोपदेशेन सश्लाघ्योभयवेतने । अनूद्य पश्चाज्जानीयात्तद्भर्तुश्चैव चेष्टितम् ॥
तीर्थ आश्रमवासे च शास्त्रविज्ञानहेतुना । तपस्विव्यञ्जनोपेतः सुचरो सह संवसेत् ॥
संतानं कुलमैश्वर्यं त्यागकत्थानसौष्ठवम् । स्वपक्षाभ्युदयाकाङ्क्षी देशकालावुदीक्षते ॥
कार्यं कालव्यपेतं च व्यक्तं तान्वा विनिष्पतेत् । तिष्ठन्नत्र विशेषेण भर्तुः सर्वं निवेदयेत् ॥
शिरोः शत्रुपरिच्छेदः सुहृद्बन्धुविभेदनम् । दुर्गकोशबलज्ञानं दूतपक्षोपसंग्रहः ॥
राज्यस्य पालनार्थाय स्वात्मसत्कारणं तथा । युद्धे सारचमूज्ञानं दूतकर्मेति कथ्यते ॥
दूतेनैव नरेन्द्रस्तु कुर्वीतारिविकर्षणम् । स्वपक्षे च विजानीयात्परदूतविचेष्टितम् ॥
तर्केङ्गितज्ञः श्रुतिमान् दुर्लङ्घ्यानुपरिक्रमः । क्लेशायाससहो दक्षः चरः स्यात्प्रतिपत्तिमान् ॥
निर्गच्छेयुर्विशेयुश्च सर्ववार्ताविदो खलम् ।' इति ।

**मनुरपि**—

'अमात्ये दण्ड आयत्तो दण्डो वैनयिकी क्रिया ।
नृपतौ कोशराष्ट्रे तु दूते सन्धिविपर्ययौ ॥

दूत एवाभिसन्धत्ते संभिनत्ति च संहतान् ।
दूतस्तु कुरुते कर्म येन भिद्येत मानवः' ॥ इति ।

एवं चोक्तसर्वगुणोपपन्नो हनूमान्सर्वकार्यसाधक इति युक्तमेव । अत एव च **सुन्दरकाण्डे** स्वामिहितमनुक्तमपि साधितवानिति प्रतिपादितम्—

भूताश्चार्था विपद्यन्ते देशकालविरोधिताः । विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥

अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते । यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने ॥
घातयन्ति हि कार्याणि दूताः पण्डितमानिनः । कार्ये कर्मणि निर्दिष्टो यो बहून्यपि साधयेत् ॥
पूर्वकार्याविरोधेन स कार्यं कर्तुमर्हति । न ह्येकस्साधको हेतुः स्वल्पस्यापीह कर्मणः ॥
यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने ।

इहैव तावत्कृतनिश्चयो ह्यहं यदि व्रजेयं प्लवगेश्वरालयम् ।
परात्मसम्मर्दविशेषतत्ववित् ततः कृतं स्यान्मम भर्तृशासनम् ॥

कथं नु खल्वद्य भवेत्सुखागतं प्रसह्य युद्धं मम राक्षसैस्सह ।
तथैव खल्वात्मबलं च सारवत् संमानयेन्मां च रणे दशाननः ॥

ततः समासाद्य रणे दशाननं समन्त्रिवर्गं सबलं प्रयायिनम् ।
हृदि स्थितं तस्य मतं बलं च वै सुखेन मत्वाहमितः पुनर्व्रजे ॥ इति ।

**युद्धकाण्डेऽपि** रामः उत्तममध्यमाधमदूतलक्षणकथनपूर्वकं उत्तमदूतो हनुमानित्याह —

यो हि भृत्यो नियुक्तस्सन् भर्त्रा कर्मणि दुष्करे । कुर्यात्तदनुरागेण तमाहुः पुरुषोत्तमम् ॥
नियुक्तो यः परं कार्यं न कुर्यान्नृपतेः प्रियम् । भृत्यो युक्तः समर्थश्च तमाहुर्मध्यमं नरम् ॥
नियुक्तो नृपतेः कार्यं न कुर्याद्यः समाहितः । भृत्यो युक्तः समर्थश्च तमाहुः पुरुषाधमम् ॥
तन्नियोगे नियुक्तेन कृतं कृत्यं हनूमता । न चात्मा लघुतां नीतः सुग्रीवश्चापि तोषितः ॥
अहं च रघुवंशश्च लक्ष्मणश्च महाबलः । वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः ॥ इति ।

**तमभ्यभाष सौमित्रे सुग्रीवसचिवं कपिम् ।**
**वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्तमरिन्दम ॥**

ततः —

**यथा ब्रवीषि हनुमन् सुग्रीववचनादिह ।**
**तत्तथा हि करिष्यावो वचनात्तव सत्तम ॥**

इति सौमित्रिणाभिहितो हनुमान् —

**मनस्समाधाय जयोपपत्तौ सख्यं तदा कर्तुमियेष ताभ्याम् ।**

**चतुर्थे —**

**भव्यो राज्यागमस्तस्य सुग्रीवस्य महात्मनः।**
**यदयं कृत्यवान्प्राप्तः कृत्यं चैतदुपागतम्॥**

अनेन समीचीनसहायलाभः कार्यसाधक इति सूचितम्। तथा च **उद्योगे** विदुरः—

संगृह्णीयादनुरूपान् सहायान् सहायसाध्यानि हि दुष्कराणि।

सहायबन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः।
अन्योन्यबन्धनौ चोभौ विनान्योन्यं न सिध्यतः॥ इति।

इति मनसि निश्चित्यैव युवयोर्महाप्रभावयोः कण्टकपाषाणादिदन्तुरितपंपाकानने सञ्चारः किमर्थ इति पृच्छन्तं आञ्जनेयं रामसञ्चोदितः सौमित्रिर्निखिलमुदन्तमित्थमाचचक्षे—

निखिलजनानन्दकरस्य यजनदानजपहोमादिभिस्सन्तर्पितनिखिलदेवादिगणस्य दशरथस्य राज्ञस्तनयेषु चतुर्षु अग्रजो महानुभावो रामाभिधः भार्यया सह वैदेह्या पित्राज्ञापरिपालनाय गहनं वनं प्रविष्टश्चोरेण रक्षसापहृतां भार्यां विचिन्वन् सुग्रीवेण तव कार्यसिद्धिर्भवितेति दनुवचनेन निखिलजगतीसंरक्षणविचक्षणोऽपि —

**गुरुर्मे राघवस्सोऽयं सुग्रीवं शरणं गतः।**
**यस्य प्रसादे सततं प्रसीदेयुरिमाः प्रजाः॥**
**स रामो वानरेन्द्रस्य प्रसादमभिकांक्षति।**

अनेन महद्भिः कार्यसमये निकृष्टानामपि प्रियवचनं वक्तव्यमिति सूचितम्। तथा च **कामन्दके —**

कार्यस्य हि गरीयस्त्वान्नीचानामपि कालवित्।
सतोऽपि दोषान् प्रच्छाद्य गुणानप्यसतो वदेत्॥ इति।

**द्रोणपर्वण्यपि** सात्यकिं प्रति महाराजस्य युधिष्ठिरस्य वचनम् —

यथा च केशवो नित्यं पाण्डवानां परायणम्। तथा त्वमपि वार्ष्णेय कृष्णतुल्यपराक्रमः॥
सोहं भारं समाधास्ये त्वयि तं वोढुमर्हसि। स त्वं भ्रातुर्वयस्यस्य गुरोरपि च संयुगे॥
कुरु कृच्छ्रे सहायार्थमर्जुनस्य नरर्षभ। त्वं हि सत्यव्रतश्शूरो मित्राणामभयंकरः॥

लोके विख्यायसे वीर कर्मभिस्सत्यवादिभिः । यो हि सैनेय मित्रार्थे युध्यमानस्त्यजेत्तनुम् ॥
पृथिवीं च द्विजातिभ्यो यो दद्यात्संगमो भवेत् । एवं त्वमपि धर्मात्मन्प्रयाचेऽहं कृताञ्जलिः ॥
पृथिवीदानतुल्यं स्यादधिकं वा फलं विभो । इति ।

तत्रैव स्थलान्तरे घटोत्कचं प्रति कृष्णप्रार्थनम् —

प्राप्तो विक्रमकालोऽयं तव नान्यस्य कस्यचित् । स त्वं निमज्जतां युद्धे पाण्डवानां प्लवो भव ॥
निशीथे सूतपुत्रेण शरवर्षेण पीडिताः । एते द्रवन्ति पाञ्चालाः सिंहेनेवार्दिता मृगाः ॥
एतस्यैवं प्रवृत्तस्य सूतपुत्रस्य संयुगे । निषेद्धा विद्यते नान्यस्त्वामृते भीमविक्रम ॥
संग्रामे युध्यमानस्य समस्तव न विद्यते । पाण्डवाना प्रभग्नानां कर्णेन निशि सायकैः ॥
मज्जतां धार्तराष्ट्रेषु भव पारं परतप । इति ।

ततस्सुग्रीवोऽपि सीतागवेषणे साहाय्यमाचरिष्यतीति हनुमताभिहितस्सन्तुष्ट-हृदयस्सौमित्रिरित्थमकथयत् —

**कपिः कथयते हृष्टो यथायं मारुतात्मजः ।**
**कृत्यवान्सोऽपि सन्ततः कृतकृत्योऽसि राघव ॥**

**प्रसन्नमुखवर्णश्च व्यक्तं हृष्टश्च भाषते ।**
**नानृतं वक्ष्यते वीरो हनुमान्मारुतात्मजः ॥**

अत्र मुखप्रसादादिना अनृताभावप्रतिपादनेन असत्यवक्तुर्नैतानि चिह्नानि भवन्ति किन्तु विपरीतान्येव भवन्तीति सूचितम् । तथा च **याज्ञवल्क्यः** —
देशाद्देशान्तरं याति सृक्किणी परिलेढि च । ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते । वाक्चक्षू कूजयति च तथोष्ठौ निर्मृजत्यपि ॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः । अभियोगेऽथ साक्ष्ये वा दुष्टस्स परिकीर्तितः ॥
इति । ततश्च रामेण कृताभ्यनुज्ञो हनुमान् परित्यज्य भिक्षुवेषं परिगृहीतनिजवेषः सानुजं रामचन्द्रं स्वस्कन्धमारोप्य सुग्रीवसमीपमानिनाय ॥

**पञ्चमप्रभृतिसप्तमपर्यन्तेषु—**

**ततो विविधमखसन्तर्पितहुतवहस्य दशरथस्यात्मजो रामभद्रोऽयं पितृवाक्यपरि-पालनाय परित्यज्य राज्यश्रियं सीतालक्ष्मणाभ्यां प्रविष्टदण्डकारण्यः दुरात्मना रक्षसा**

छद्मना हृतदारस्तत्प्राप्तये प्लवगराजं त्वा सहायमिच्छति। तत्सख्यलाभेन त्वमपि संप्राप्त-मनोरथो भविष्यसीति हनुमद्वचनाकर्णनेन सन्तुष्टस्सुग्रीवो राममिदमाह —

**रोचते यदि वा सख्यं बाहुरेष प्रसारितः।**
**गृह्यतां पाणिना पाणिः मर्यादा बध्यतां ध्रुवा॥**

ततो रामोऽपि —

**एतत्तु वचनं श्रुत्वा सुग्रीवेण सुभाषितम्।**
**संप्रहृष्टमना हस्तं पीडयामास पाणिना॥**

**हृद्यं सौहृदमालम्ब्य पर्यष्वजत पीडितम्।**
**ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम्॥**

**सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ।**

अनेन पाणिग्रहणालिङ्गनादिपूर्वकमग्निसाक्षिकं सख्यं कर्तव्यमिति सूचितम्। अत **एवोत्तररामायणे** बालिरावणयोः अग्निसाक्षिकमेव सख्यकरणं प्रतिपादितम् —
ततः प्रज्वालयित्वाग्निं तावुभौ हरिराक्षसौ। भ्रातृत्वमुपसंप्राप्तौ परिष्वज्य परस्परम्॥

अन्योन्यालम्बितकरौ ततस्तौ हरिराक्षसौ।
किष्किन्धा विशतो हृष्टौ सिंहौ गिरिगुहामिव॥ इति।

**त्वं वयस्योऽसि मे हृद्यो ह्येकं दुःखं सुखं च नौ।**
**सुग्रीवं राघवो वाक्यमिदमाह प्रहृष्टवत्॥**

अनेन समानसुखदुःखित्वरूपो मित्रगुण उक्तः। तथाच **कामन्दके** —

शुचिता त्यागिता शौर्यं समानसुखदुःखता।
अनुरागश्च दाक्ष्यं च सत्यता च सुहृद्गुणाः॥ इति।

**ततः प्रहृष्टः सुग्रीवः श्लक्ष्णं मधुरया गिरा।**
**प्रत्युवाच तदा रामं बाष्पव्याकुललोचनः॥**

**अहं विनिकृतो राम चरामीह भयार्दितः।**
**हृतभार्यो वने त्रस्तो दुर्गमेतदुपाश्रितः॥**

**सोऽहं त्रस्तो वने भीतो वसाम्युद्भ्रान्तचेतनः।**

**वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ॥**

**वालिनो मे महाभाग भयार्तस्याभयं कुरु ।**
**कर्तुमर्हसि काकुत्स्थ भयं मे न भवेद्यथा ॥**

इत्यभयं प्रार्थयमानस्य सुग्रीवस्य वचनमाकर्ण्य धर्मज्ञो रामभद्रस्तद्भयनिरसनाय प्रतिज्ञामकरोत् —

**उपकारफलं मित्रं विदितं ते महाकपे ।**
**वालिनं तं वधिष्यामि तव भार्यापहारिणम् ॥ इति ।**

तथा अष्टमेऽपि प्रतिज्ञा दृश्यते —

उपकारफलं मित्रमपकारोऽरिलक्षणम् ।
शरैर्विनिहतं पश्य विकीर्णमिव पर्वतम् ॥ इति ।

अन्यत्रापि —

तमद्य वालिनं पश्य क्रूरैराशीविषोपमैः । शरैर्विनिहतं भूमौ विकीर्णमिव पर्वतम् ॥ इति ॥

सुग्रीवप्रतिज्ञापि —

रसातलं वा वर्तन्ती वर्तन्तीं नभसस्स्थले । अहमानायिष्यामि तव भार्यामरिन्दम ॥ इति ॥

रामशपथोऽपि —

**मया च यदिदं वाक्यमभिमानात्समीरितम् ।**
**तत्त्वया हरिशार्दूल सत्यमित्यवधार्यताम् ॥**
**एतत्ते प्रतिजानामि सत्येनैव शपामि ते ॥ इति ।**

अत्र च उपकारेणैव मित्रत्वम्, मित्रं प्रति च स्वदुःखं निवेदनीयं, येन तल्लघु भवति, तत्र च शक्तेन तद्दुःखनिरसनं करोमीति प्रतिज्ञा कर्तव्या, तत्र च प्रत्ययोत्पादनाय शपथोऽपि कर्तव्य इत्युक्तम् । उपकारेणैव मित्रत्वमित्येतत् **वामनपुराणे**—

परोऽपि हितकृद्बन्धुर्बन्धुरप्यहितः परः ।
अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥

अन्यत्रापि —

हस्ताविव शरीरस्य नेत्रयोरिव पक्ष्मणी।
अनिवेद्य हितं कुर्यात्तन्मित्रं मित्रमुच्यते॥ इति।

**कामन्दकेऽपि**—

स्वबन्धुर्योऽनुबध्नाति हेतिष्वत्यादरात्सदा।
अनुरक्तं विरक्तं वा तन्मित्रमुपकारि यत्॥ इति।

सुहृदे दुःखनिवेदनं कर्तव्यमित्यत्र **वनपर्वणि** द्रौपदी—

सा तेऽहं दुःखमाख्यास्ये प्रणयान्मधुसूदन॥ इति।

निवेदिते लघु भवतीत्येतत्पाद्मे—

मित्रे निवेदिते दुःखे दुःखं तज्जायते लघु।
भारो भारवहस्येव स्कन्धयोः परिवर्तने॥ इति।

सुहृद्दुःखापनोदनाय प्रतिज्ञाप्यर्जुनेन कृतेत्यवगतं **कर्णपर्वणि**—

एवमुक्तः प्रत्युवाच विजयो भरतर्षभ। सत्येन ते शपे राजन् त्वत्पादेन तथैव च॥
भीमेन च नरव्याघ्र यमाभ्यां च महीपते। यथाद्य समरे कर्णं हनिष्यामि हतोऽपि वा॥
महीतले पतिष्यामि सत्येनैव तु ते शपे। इति।

**अनुमानात्तु जानामि मैथिली सा न संशयः।**
**ह्रियमाणा मया दृष्टा रक्षसा क्रूरकर्मणा॥**

इदं च तया प्रक्षिप्तमाभरणजातमिति सुग्रीवनिवेदितं तत्परिगृह्यावस्थाप्य च हृदये नयनयोर्बाष्पसन्दूषितलोचनः कथञ्चिद्धैर्यमालम्ब्य क्व वा तद्रक्षो निवसति; येन मत्प्राणतोऽपि प्रियतमा ह्यपहृता सीतेत्यपृच्छत्। सुग्रीवोऽपि नाहं तस्य दुरात्मनो रक्षसो निलयं जानामि। अथापि कथंचित्ससहायोऽहं भवत्समीहितं निर्वर्तयिष्यामि। परिहर वैक्लब्यं, महतः शोकस्यापि वशं मागाः—

**ये शोकमनुवर्तन्ते न तेषां विद्यते सुखम्।**
**तेजश्च क्षीयते तेषां न त्वं शोचितुमर्हसि॥**

शोकेनाभिप्रपन्नस्य जीविते चापि संशयः ।
स शोकं त्यज राजेन्द्र धैर्यमाश्रय केवलम् ॥

अनेन परित्यक्तशोकानां धीराणामेव कार्यसिद्धिरिति सूचितम् । तथा च **द्रोणपर्वणि** —

शोचतो हि महाराज दुःखमेवाभिवर्धते । तस्माच्छोकं परित्यज्य श्रेयसे प्रयतेद्बुधः ॥
एवं ज्ञात्वा स्थिरो भूत्वा जह्यरीन्धैर्यमाप्नुहि ॥ इति ।

**मोक्षधर्मे** युधिष्ठिरं प्रति भीष्मः —

पुत्रदारैस्सुखैश्चैव वियुक्तस्य धनेन वा । मग्नस्य व्यसने कृच्छ्रे धृतिः श्रेयस्करी नृप ॥
धैर्येण युक्तं सततं शरीरं न विशीर्यते । विशोकता सुखं धत्ते सुखं चारोग्यमव्ययम् ॥
आरोग्याच्च शरीरस्य स पुनर्विन्दते श्रियम् ॥ इति ।

ततः परिष्वज्य सुग्रीवं परिमृज्य च बाष्पमित्थमकथयत् —

एष च प्रकृतिस्थोऽहमनुनीतस्त्वया सखे ।
दुर्लभो हीदृशो बन्धुरस्मिन् काले विशेषतः ॥

अनेन आपदि सहायकृन्मित्रं सर्वबन्ध्वपेक्षया अतिशयितमिति सूचितम् । तथा च **कामन्दकः** —

न तत्र तिष्ठति भ्राता न पिताऽन्योऽपि वा जनः ।
पुंसामापत्प्रतीकारे सन्मित्रं यत्र तिष्ठति ॥ इति ।

**उद्योगपर्वणि** —

तिष्ठते हि सुहृत्तत्र न बन्धुस्तत्र तिष्ठति ॥ इति ।

**अष्टमे** — ततो रामवचनेन समुदितानन्दः सुग्रीव एवमवोचत् —

शक्यं खलु भवेद्राम सहायेन त्वयाऽनघ ।
सुरराज्यमपि प्राप्तुं स्वराज्यं किं पुनः प्रभो ॥

**सोऽहं सभाज्यो बन्धूनां सुहृदां चैव राघव।**
**यस्याग्निसाक्षिकं मित्रं लब्धं राघववंशजम्॥**

अनेन महापुरुषेण लब्धसख्यस्य अलभ्यमपि लभ्यते, स्वबन्धुषु पूज्यत्वं भवतीति सूचितम्। अत एव पाण्डवानां कृष्णद्रुपदादिमहापुरुषसहायप्रयुक्ततया राज्यं बन्धुपूज्यत्वं च विदुरेण धृतराष्ट्रं प्रति उक्तमिति प्रतिपादित**मादिपर्वणि**—

को हि द्रुपदमासाद्य मित्रं क्षत्रं सबान्धवम्। न बुभूषेद्भवेनार्थो गतश्रीरपि पार्थिव॥
येषां पक्षधरो रामो येषां मन्त्री जनार्दनः। किन्नु तैरजितं संघे येषां पक्षे तु सात्यकिः॥
द्रुपदः श्वशुरो येषां येषां स्यालाश्च पार्षताः। धृष्टद्युम्नमुखा वीराः पार्षताः द्रुपदात्मजाः॥
अशक्यतां च विज्ञाय तेषामग्रेण भारत। दायाद्यतां च धर्मेण सम्यक्तेषु समाचर॥ इति।

**कामन्दकेऽपि**—

अनेकयुद्धविजयी सन्धानं यस्य गच्छति।
तत्प्रतापेन तस्याशु वशं गच्छन्ति शत्रवः॥ इति।

**रजतं वा सुवर्णं वा वस्त्राण्याभरणानि वा।**
**अविभक्तानि साधूनामवगच्छन्ति साधवः॥**

अनेन साधूनां द्रव्यं साधारणमित्युक्तम्। तथा च **प्राचीनाः**—'सतां धनं साधुभिरेव भुज्यते' इति।

**धनत्यागस्सुखत्यागः देहत्यागोऽपि वा पुनः।**
**वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम्॥**

अनेन प्राणादिपरित्यागेनापि मित्रं संरक्षणीयमिति सूचितम्। तथा च **कामन्दकः**—

आत्मवन्मित्रवर्गे तु प्राणानपि परित्यजेत्॥ इति।

**नवमदशमयोः**—ततो भ्रातृवैरनिमित्तं किमिति रामभद्रेण पृष्टस्सुग्रीवः तां कथामित्थमकथयत्। पुरा खलु मायाविनाम्ना दुन्दुभिसुतेन महासुरेण युद्धाय समाहूतो भ्राता, तदाह्वानसमुत्थितरोषावेशदुराधर्षो, मया बन्धुभिरन्तःपुरैश्च बहुधा निवार्य-

माणोऽपि, अविगणय्य चास्मान्, अग्रतस्त्वरया प्रधावन्तं भूविवरं प्रविष्टमसुरमनुधावन् यावन्मदागमनं इह बिलद्वारि तिष्ठेति मामनुशास्य स्वयमपि प्रविश्य भूविवरं, युद्धेन संवत्सरान्ते कथञ्चित्तमाजघान। अहमपि यथानिदेशं तदागमनमेव प्रतीक्षमाणः बिलमुखनिस्सृतफेनिलशोणितप्रवाहेण भ्रातरमेव निहतं मन्वानः, पुनरसुरनिर्गमनाशङ्कया, महत्या शिलया तद्रन्ध्रमाच्छाद्य क्लेशेन स्वभवनमागतः निर्वर्त्य तदौर्ध्वदैहिकं, बन्धुभिरमात्यैश्च निर्बन्धेनाभिषिक्तो वानरराज्यमकरवम्।

ततश्चिराय समागतो वाली, मदज्ञानविलसितमिदमिति बहुधा मुहुर्मुहुर्मे प्रार्थ्यमानोऽपि, परिभूय च मां, एकवस्त्रमालेग राज्यादुत्सारयामास॥

**एकादशे— वालिनः पौरुषं यत्तद्यच्च वीर्यं धृतिश्च या।**
**मतमेकमना श्रुत्वा विधत्स्व तदनन्तरम्॥**

अनेन परबलाबलं विचिन्त्यैव तदुत्सादनाय यत्नकरणे कार्यसिद्धिः अन्यथा कार्यहानिर्भवतीति सूचितम्। तथाच **कामन्दके**—

शक्याशक्यपरिज्ञानं कुर्याद्बुद्ध्या विचक्षणः।
केवलं दन्तभङ्गाय दन्तिनः शैलताडनम्॥

अशक्यारम्भवृत्तीनां नहि क्लेशादृते फलम्।
भवन्ति परितापिन्यो व्यक्तं कर्मविपत्तयः॥

बुद्ध्या बोद्धयानुगतया परया सम्पदः पदम्।
सुविशुद्धपदन्यास पर्वताग्रमिवोदितम्॥ इति।

पुरा खलु दुन्दुभिनाम्ना महासुरेण दर्पवशाद्युद्धाय समाहूतः समुद्रराजः 'न मे युद्धशक्तिः, समर्थं हिमवन्तं गच्छे'त्यवोचत्। हिमवतापि तथैव वालिनं गच्छेत्यभिहितो दुन्दुभिस्समागत्य किष्किन्धां निरुध्य च नगरद्वारं नर्दन्नवस्थितो बहिर्निर्गतेन वालिना च 'निवर्तनमेव ते क्षमं; यदि प्राणेष्वाशा भवे'दित्यभिहितो विषयोपभोगापकृतमदिरापानादिना उन्मत्तं घूर्णनयनं वालिनमेवमवोचत्— 'प्रमत्ते त्वयि युद्धमस्माकमनुचितम्।

**यो हि मत्तं प्रमत्तं वा सुप्तं वा रहितं भृशम्।**
**हन्यात्स भ्रूणहा लोके त्वद्विधं मदमोहितम्॥ इति।**

अनेन मत्तादिहननेन भ्रूणहन्तृत्वमुक्तम् । तथाच **द्रोणपर्वणि** भूरिश्रवसो वाक्यम्—

न प्रमत्ताय भीताय विरथाय प्रयाचते । व्यसने वर्तमानाय प्रहरन्ति मनस्विनः ॥

इदं तु नीचाचरितमसत्पुरुषसेवितम् । कथमाचरितं पार्थ पापं कर्म सुदुष्करम् ॥ इति ।

ततस्तद्वचनमसहमानो वाली कश्चित्कालं प्रकटितविक्रमं महासुरं संयुगे निहत्य तच्छरीरं योजनमात्रदूरे मतङ्गाश्रमप्रदेशे चिक्षेप । ततस्तत्कायपतनसञ्जातं तपोवनभङ्गं निखिलसत्वकदनं च वालिकृतमिति तपःप्रभावेन निश्चित्य कुपितो मतङ्गमुनिः 'अद्य-प्रभृति यदि वाली मदाश्रमस्याभितो योजनमात्रे प्रवेक्ष्यति, स विनशिष्यति । तदीयाश्च यद्यत्र निवसेयुः ते च शिलाभूता भवेयु'रिति शशाप । तच्छापभीतस्य वालिनो दुष्प्रवेश-मिममाश्रमं मत्वा निर्भयमहं वसामि । तदधुना एकैकशो निष्पत्तितसप्तमहासालस्य उषःकाल एव समाक्रान्तचतुस्समुद्रस्य अतिबलशालिनो वालिनो वधः कथं भवितेति बहुधा शंकते मे हृदयमिति । ततः स्ववीर्यजिज्ञासोः सुग्रीवस्य प्रभावदर्शनाय—

**राघवो दुन्दुभेः कायं पादांगुष्ठेन लीलया ।**
**तोलयित्वा महाबाहुश्चिक्षेप दशयोजनम् ॥**

ततः शुष्कास्थिनिरसनं नाश्वासहेतुः । सालेषु सप्तसु विक्रमो दर्शनीय इति सुग्रीवेण भूयः संप्रार्थितो रामः सकृत्प्रयुक्तैकेषुणा निर्भिन्नसप्तसालगिरिमहीनिदर्शनेन सञ्जातविश्वासं अग्रतः प्रणतं सुग्रीवमुत्थाप्य त्वरया वयं किष्किन्धां गच्छामः । त्वमग्रतो गत्वा वालिनमाहूय नियुद्धं प्रवर्तयेत्यभिधाय स्वयमपि गहनवनप्रदेशे वृक्षैरात्मानमावृ-त्यातिष्ठत् । ततस्सुग्रीवगर्जनाकर्णनेन जनितामर्षो वाली—

**निष्पपात सुसंरब्धो भास्करोऽस्ततटादिव ।**

ततश्च वज्रकल्पैर्मुष्टितलप्रहारैः नियुध्यमानयोः वालिसुग्रीवयोर्गतिविप्रेक्षणभाषणा-दिभिरतिसादृश्यादयं वालीति निर्णयमलभमानो रामः अन्तकरं शरं न मुमोच । ततः क्रमेण प्रवृद्धतरवालिकरतलप्रहारेण जीवनसंशयमापन्नः सहायभूतं रामं चापश्यन् यथा-पुरं मतङ्गाश्रममेवाजगाम । ततस्तत्समीपमागतः सलक्ष्मणो रामभद्रः वालिसन्ताडनदुःख-वेगपरिम्लानमुखेन सुग्रीवेण मद्वैरिनिधनयत्नो मन्निधनायैव सञ्जात इति सकरुणमभि-हितः तमेवमवादीत्—

**नोत्सृजामि महावेगं शरं शत्रुनिबर्हणम् ।**
**जीवितान्तकरं घोरं सादृश्यात्तु विशङ्कितः ॥**

**त्वयि वीरे विपन्ने हि अज्ञानाल्लाघवान्मया ।**
**मौर्ख्यं च मम बाल्यं च स्थापितं स्यात्कपीश्वर ॥**

**दत्ताभयवधो नाम पातकं महदुच्यते ॥**

अनेन दत्ताभयवधो महापातकमित्युक्तम् । तथा च **द्रोणपर्वणि** अर्जुनः —

**ये लोका मातृहन्तॄणां ये चापि पितृघातिनाम् । साधूनसूयता ये च ये चापि परिवादिनाम् ॥**
**ये च निक्षेपहन्तॄणां ये च विश्वासघातिनाम् । तानह्नैवाधिगच्छेयं नचेद्धन्यां जयद्रथम् ॥**

इति तं समाश्वास्य गिरितटाधिरूढया गजपुष्पीलतया अभिज्ञानाय समलङ्कृतं ससचिवं सुग्रीवं पुरस्कृत्यैव किष्किन्धाभिमुखं प्रस्थितो मध्येमार्गं कुसुमभरविनत-तरुवरविविधविहगगणनिबिडितः विमलसलिलः समलङ्कृतः मनोनयनविनोदनः कस्याय-माश्रमप्रदेश इत्यपृच्छत् ।

**त्रयोदशे** -सुग्रीवोऽपि सलिलस्यैवान्तरधःशीर्षतया सप्तरात्रकृताहारा महानुभावाः सत्यजना नामर्षयः सप्तवर्षशतपर्यन्तं स्वकृततपःप्रभावेन सकलेबरं दिवं याताः । तत्तपःप्रभावनिर्मितो हेमप्राकारमण्डितो दुरवापोऽन्यजनैरयमाश्रमप्रदेशः ।

**चतुर्दशे— कुरु प्रणामं धर्मात्मन् तांस्त्वमुद्दिश्य राघव ।**
**लक्ष्मणेन सह भ्रात्रा प्रयतस्संयताञ्जलिः ॥**

**प्रणमन्ति हि ये तेषां ऋषीणां भावितात्मनाम् ।**
**न तेषामशुभं किञ्चिच्छरीरे राम दृश्यते ॥**

इत्यभिधाय कृतप्रणामेन रामेण सह किष्किन्धोपकण्ठमाजगाम ।

ततो रामः अग्निसाक्षिकतया कृतां प्रतिज्ञामविस्मृत्यैव रिपुवशगं मां पुनरेव नोपेक्षितुमर्हति भवानिति वदन्तं हरिराजमित्थमाचचक्षे । दत्ताभयवधदोषभीत्या स्थितं मां नैवं वक्तुमर्हसि । तदधुना रिपुनगरगोपुरद्वारमुपरुध्य व्युत्थाय बहिरागच्छेति समुद्घोषय । तदसहमानो वाली युद्धसन्नद्धो बहिर्निर्गच्छेदेव —

रिपूणां धर्षणं शूरा मर्षयन्ति न संयुगे।
जानन्तस्तु स्वकं वीर्यं स्त्रीसमक्षं विशेषतः॥

अनेन शूरा रिपुकृतधर्षणं न सहन्त इत्युक्तम्। तथा च **गदापर्वणि**—

उत्तिष्ठोत्तिष्ठ गान्धारे मां योधय सुयोधन। एकयैकेन संगम्य संयुगे गदया बली॥
पुरुषो भव गान्धारे युध्यस्व सुसमाहितः। अद्य ते जीवितं नास्ति यदीन्द्रोपि तवाश्रयः॥

संजयः—

एतत्समरशार्दूलो नामृष्यत तवात्मजः। तथासौ वाक्प्रतोदेन तुद्यमानः पुनःपुनः॥
वाचं न ममृषे धीमान् उत्तमाश्वः कशामिव। इति।

ततो रामवचनाकर्णनेन सञ्जातविश्वासः सुग्रीवः स्वाट्टहासेन कम्पिताशामकरोत्—

तस्य शब्देन वित्रस्ता गावो यान्ति हतप्रभाः।
राजदोषपरामृष्टाः कुलस्त्रिय इवाकुलाः॥

अनेन राजपरामृष्टाः स्त्रियः क्लिश्नन्तीति।

**पञ्चदशे**—ततस्सर्वभूतप्रकम्पनं भ्रातुराक्रन्दनमाकर्ण्य रोषावेशवशेन अनल्पकल्पानलकल्पं मेदिनीं चरणन्यासैर्दारयन्तमिव युद्धाय पुनः प्रस्थितं वालिनं परिष्वज्य दर्शितसौहृदा तारा एवमकथयत्। प्रबलतरावष्टम्भमन्तरेण नैवंविधो युद्धसंरंभः सुग्रीवस्येति वितर्कयामि। अवगतश्चायं अङ्गदमुखात्तत्कृजन्तः। इक्ष्वाकुकुलसम्भूतौ रामलक्ष्मणाख्यौ राजकुमारौ सुग्रीवसाहाय्याचरणाय सम्प्राप्तौ। तयोश्च—

रामः परबलामर्दी युगान्ताग्निरिवोत्थितः।
निवासवृक्षस्साधूनामापन्नानां परा गतिः॥

आर्तानां संश्रयश्चैव यशसश्चैकभाजनम्।
ज्ञानविज्ञानसम्पन्नो निदेशे निरतः पितुः॥

धातूनामिव शैलेन्द्रो गुणानामाकरो महान्॥ इति।

तदधुना समुत्सृज्य वैरं सबन्धुं सुग्रीवमानीयाभिषिच्य यौवराज्ये—

दानमानादिसत्कारैः कुरुष्व प्रत्यनन्तरम्।

**नहि तेन समं बन्धुं भुवि पश्यामि कञ्चन ॥**

अनेन भ्राता दानमानादिभिर्नित्यं लालनीयः, न हिंस्य इति सूचितम् । **तथा च दक्षः —**

पितुश्शतगुणं दानं सहस्रं मातुरुच्यते । भगिन्यां शतसाहस्रं सोदरे दत्तमक्षयम् ॥

दाने फलविशेषस्स्याद्धिंसायामेवमेव हि । इति ।

विशेषस्तु ज्ञातिविषये 'विशेषेण तु सुग्रीवो हनुमत्यर्थमुक्तवान्' इत्यत्र प्रपञ्चयिष्यते ।

**प्रसीद पथ्यं शृणु जल्पितं हि मे न रोषमेवानुविधातुमर्हसि ।**
**क्षमो हि ते कोसलराजसूनुना न विग्रहः शक्रसमानतेजसा ॥**

अनेन बलवद्विरोधो न कर्तव्य इति सूचितम् । तथा च **विष्णुपुराणे —**

विरोधं नोत्तमैर्गच्छेत् अधमैश्च तथा बुध इति ।

इति हितकरतारासमुदीरितवचनमाकर्णयतोऽपि —

**न रोचते तद्वचनं हि तस्य कालाभिपन्नस्य विनाशकाले ।**

अनेन मुमूर्षोर्हिता बुद्धिर्न भवतीत्येतत्प्राक् प्रपञ्चितम् ।

**षोडशे** — ततश्शक्रसमानविक्रमश्शक्रकुमारः हितोपदेशतत्परामपि तारां निर्भर्त्स्येद-माचचक्षे । हीनग्रीवस्य सुग्रीवस्य युद्धसरंभगर्जनमिदं न मर्षयामि —

**अधर्षितानां शूराणां समरेष्वनिवर्तिनाम् ।**
**धर्षणामर्षणं भीरु मरणादतिरिच्यते ॥**

राघवोऽपि धर्मज्ञोऽनपराधिनि मयि पापं न कुर्यादेव । अहमपि वृक्षपाषाणमुष्टि-प्रहारैः —

**दर्पं चास्यापनेष्यामि न च प्राणैर्विमोक्ष्यते ॥**

तवाप्यनुचितमतिदूरगमनं निवर्तस्व निर्विचारमिति ।

ततः स्वस्त्ययनपूर्वकं प्रदक्षिणीकृत्य भर्तारं अन्तःपुरं प्रविष्टायां तारायां वाली निर्गत्य नगरात्पुरःस्थितं युद्धसन्नद्धं भ्रातरमवलोक्य रोषारुणितलोचनः सालविटपिन-मुत्पाट्य तेन सुग्रीवं ताडयामास । ततः परस्परं वृक्षगिरिशिखरनखमुष्टिजानुपाद-पाणिप्रहरणैः परस्परं युध्यमानयोस्तयोः हीयमानं स्वाभिमुखतया मुहुर्मुहुरवलोकयन्तं

तपनतनयमभिवीक्ष्य रामभद्रो नातः परमुपेक्षणमस्माकमुचितमिति विचिन्त्य प्रदीप्ताशनिसन्निभं शरवरं शरासने सन्धाय वालिवक्षो विक्षोभयितुं चिक्षेप।

सप्तदशे—ततश्शरेणाभिहतो रामेण रणकर्कशः।
पपात सहसा वाली निकृत्त इव पादपः॥

स भूमौ व्यस्तसर्वांगस्तप्तकाञ्चनभूषणः।
अपतद्देवराजस्य मुक्तरश्मिरिव ध्वजः॥

तस्मिन्निपतिते भूमौ वानराणां गणेश्वरे।
नष्टचन्द्रमिव व्योम न व्यराजत भूतलम्॥

भूमौ निपतितस्यापि तस्य देहं महात्मनः।
न श्रीर्जहाति न प्राणा न तेजो न पराक्रमः॥

शक्रदत्ता वरा माला काञ्चनी शतपुष्करा।
दधार हरिमुख्यस्य प्राणांस्तेजः श्रियं च सा॥

स तया मालया वीरो हैमया हरियूथपः।
सन्ध्यानुगतपर्यन्तः पयोधर इवाभवत्॥

तस्य माला च देहश्च मर्मघाती च यश्शरः।
त्रिधेव रचिता लक्ष्मीः पतितस्यापि शोभते॥

तदस्त्रं तस्य वीरस्य स्वर्गमार्गप्रधावनम्।
रामबाणासनक्षिप्तमावहत्परमां गतिम्॥

तं तथा पतितं संख्ये गतार्चिषमिवानलम्।
बहुमान्यं च तं वीरं वीक्षमाणं शनैरिव॥

ययातिमिव पुण्यान्ते देवलोकात्परिच्युतम्।
आदित्यमिव कालेन युगान्ते भुवि पातितम्॥

महेन्द्रपुत्रं पतितं वालिनं हेममालिनम्।
सिंहोरस्कं महाबाहुं दीप्तास्यं हरिलोचनम्॥

लक्ष्मणानुचरो रामो ददर्शोपससर्प च।
स दृष्ट्वा राघवं वाली लक्ष्मणं च महाबलम्।
अब्रवीत्प्रश्रितं वाक्यं परुषं धर्मसंहितम्॥

पराङ्मुखवधं कृत्वा को नु प्राप्तस्त्वया गुणः।

यदहं युद्धसंरब्धः शरेणोरसि ताडितः ॥

त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः ।
कुलीनस्सत्वसम्पन्नः तेजस्वी चरितव्रतः ॥

रामः करुणवेदी च प्रजानां च हिते रतः ।
सानुक्रोशो जितक्रोधस्समयशो दृढव्रतः ॥

इति ते सर्वभूतानि कथयन्ति यशो भुवि ।
दमश्शमः क्षमा धर्मो धृतिस्सत्यपराक्रमः ॥

पार्थिवानां गुणा राजन् दण्डश्चाप्यपकारिषु ।
तान् गुणान्संप्रधार्याहं अग्र्यं चाभिजनं तव ॥

तारया प्रतिषिद्धोऽपि सुग्रीवेण समागतः ।
न मामन्येन संरब्धं प्रमत्तं योद्धुमर्हसि ॥

इति मे बुद्धिरुत्पन्ना बभूवादर्शने तव ।
न त्वां विनिहतात्मानं धर्मध्वजमधार्मिकम् ।
जाने पापसमाचारं तृणैः कूपमिवावृतम् ॥

सतां वेषधरं पापं प्रच्छन्नमिव पावकम् ।
नाहं त्वामभिजानामि धर्मछद्माभिसंवृतम् ॥

विषये वा पुरे वापि यदा नापकरोम्यहम् ।
न च त्वां प्रतियोत्स्यामि कस्मात्त्वं हंस्यकिल्बिषम् ॥

फलमूलाशनं नित्यं वानरं वनगोचरम् ।
मामिहाप्रतियुध्यन्तमन्येन च समागतम् ॥

त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः ।
लिंगमप्यस्ति ते राजन् दृश्यते धर्मसंहितम् ।
कः क्षत्रियकुले जातः श्रुतवान्नष्टसंशयः ॥

धर्मलिंगप्रतिच्छन्नः क्रूरकर्म समाचरेत् ।
राम राजकुले जातो धर्मवानिति विश्रुतः ।
अभव्यो भव्यरूपेण किमर्थं परिधावसि ॥

साम दानं क्षमा धर्मः सत्यं धृतिपराक्रमौ ।
पार्थिवानां गुणा राजन् दण्डश्चाप्यपकारिषु ॥

वयं वनचरा राम मृगा मूलफलाशनाः ।

एषा प्रकृतिरस्माकं पुरुषस्त्वं नरेश्वरः ॥

भूमिर्हिरण्यं रूप्यं च विग्रहे कारणानि च ।
अत्र कस्ते वने लाभो मदीयेषु वनेषु वा ॥

नयश्च विनयश्चोभौ निग्रहानुग्रहावपि ।
राजवृत्तिरसंकीर्णा न नृपाः कामवृत्तयः ॥

त्वं तु कामप्रधानश्च कोपनश्चानवस्थितः ।
राजवृत्तैश्च संकीर्णः शरासनपरायणः ॥

न तेऽस्त्यपचितिर्धर्मे नार्थे बुद्धिरवस्थिता ।
इन्द्रियैः कामवृत्तः सन् कृष्यसे मनुजेश्वर ॥

हत्वा बाणेन काकुत्स्थ मामिहानपराधिनम् ।
किं वक्ष्यसि सतां मध्ये कर्म कृत्वा जुगुप्सितम् ॥

राजहा ब्रह्महा गोघ्नश्चोरः प्राणिवधे रतः ।
नास्तिकः परिवेत्ता च सर्वे निरयगामिनः ॥

सूचकश्च कदर्यश्च मित्रघ्नो गुरुतल्पगः ।
लोकं पापात्मनामेते गच्छन्ते नात्र संशयः ॥

अधार्यं चर्म मे सद्भिः रोमाण्यस्थि च वर्जितम् ।
अभक्ष्याणि च मांसानि त्वद्विधैर्धर्मचारिभिः ॥

पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव ।
शल्यकः श्वाविडो गोधा शशः कूर्मश्च पञ्चमः ॥

चर्म चास्थि च मे राजन् न स्पृशन्ति मनीषिणः ।
अभक्ष्याणि च मांसानि सोऽहं पञ्चनखो हतः ॥

तारया वाक्यमुक्तोऽहं सत्यं सर्वज्ञया हितम् ।
तदतिक्रम्य मोहेन कालस्य वशमागतः ॥

त्वया नाथेन काकुत्स्थ न सनाथा वसुन्धरा ।
प्रमदा शीलसम्पन्ना धूर्तेन पतिना यथा ॥

शठो नैकृतिकः क्षुद्रो मिथ्याप्रश्रितमानसः ।
कथं दशरथेन त्वं जातः पापो महात्मना ॥

छिन्नचारित्र्यकक्ष्येण सतां धर्मातिवर्तिना ।
त्यक्तधर्माङ्कुशेनाहं निहतो रामहस्तिना ॥

अशुभं चाप्ययुक्तं च सतां चैव विगर्हितम् ।
वक्ष्यसे चेदृशं कृत्वा सद्भिस्सह समागतः ॥

उदासीनेषु योऽस्मासु विक्रमस्ते प्रकाशितः ।
अपकारिषु तें राजन् नहि पश्यामि विक्रमम् ॥

दृश्यमानस्तु युध्येथा मया यदि नृपात्मज ।
अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया ॥

त्वयाऽदृश्येन तु रणे निहतोऽहं दुरासदः ।
प्रसुप्तः पन्नगेनेव नरः पानवशं गतः ॥

मामेव यदि पूर्वं त्वमेतमर्थमचोदयः ।
मैथिलीमहमेकाह्ना तव चानीतवान्भवे ॥

राक्षसं च दुरात्मानं तव भार्यापहारिणम् ।
सुग्रीवप्रियकामेन यदहं निहतस्त्वया ॥

कण्ठे बध्वा प्रदद्यां ते निहतं रावणं रणे ।
न्यस्तां सागरतोये वा पाताले वापि मैथिलीम् ॥

आनयेयं तवादेशाच्छ्वेतामश्वतरीमिव ।
युक्त यत्प्राप्नुयाद्राज्यं सुग्रीव स्वर्गते मयि ॥

अयुक्तं यदधर्मेण त्वयाह निहतो रणे ।
काममेवंविधो लोकः कालेन विनियुज्यते ।
क्षमं चेद्भवता प्रातमुत्तरं साधु चिन्त्यताम् ॥

इत्येवमुक्त्वा परिशुष्कवक्त्रः शराभिघाताद्व्यथितो महात्मा ।
समीक्ष्य रामं रविसंनिकाशं तूष्णीं बभूवामरराजसूनुः ॥

## अष्टादशस्सर्गः ॥

इत्युक्तः प्रश्रितं वाक्यं धर्मार्थसहितं हितम् ।
परुषं वालिना रामो निहतेन विचेतसा ॥

तं निष्प्रभमिवादित्यं मुक्ततोयमिवांबुदम् ।
उक्तवाक्यं हरिश्रेष्ठमुपशान्तमिवानलम् ॥

धर्मार्थगुणसंपन्नं हरीश्वरमनुत्तमम् ।
अधिक्षिप्तस्तदा रामः पश्चाद्वालिनमब्रवीत् ॥

धर्ममर्थं च कामं च समयं चापि लौकिकम् ।
अवज्ञाय कथं बाल्यान्मामिहाद्य विगर्हसे ॥

अपृष्ट्वा बुद्धिसंपन्नान्वृद्धानाचार्यसंमतान् ।
सौम्य वानर चापल्यात्किं मां वक्तुमिहेच्छसि ॥

इक्ष्वाकूणामियं भूमिः सशैलवनकानना ।
मृगपक्षिमनुष्याणां निग्रहप्रग्रहावपि ॥

तां पालयति धर्मात्मा भरतस्सत्यवागृजुः ।
धर्मकामार्थतत्वज्ञो निग्रहानुग्रहे रतः ॥

नयश्च विनयश्चोभौ यस्मिन्सत्यं च सुस्थितम् ।
विक्रमश्च यथा दृष्टः स राजा देशकालवित् ॥

तस्य धर्मकृतादेशाः वयमन्ये च पार्थिवाः ।
चरामो वसुधां कृत्स्नां धर्मसन्तानमिच्छवः ॥

तस्मिन्नृपतिशार्दूले भरते धर्मवत्सले ।
पालयत्यखिलां भूमिं कश्चरेद्धर्मनिग्रहम् ॥

ते वयं धर्मविभ्रष्टं स्वधर्मे परमे स्थिताः ।
भरताज्ञां पुरस्कृत्य निगृह्णीम यथाविधि ॥

त्वं तु संक्लिष्टधर्मात्मा कर्मणा च विगर्हितः ।
कामतन्त्रप्रधानश्च न स्थितो राजवर्त्मनि ॥

ज्येष्ठो भ्राता पिता चैव यश्च विद्यां प्रयच्छति ।
त्रयस्ते पितरो ज्ञेयाः धर्म्ये पथि हि वर्ततः ॥

यवीयानात्मनः पुत्रः शिष्यश्चापि गुणोदितः ।
पुत्रवत्ते त्रयश्चिन्त्या धर्मश्चेत्तत्र कारणम् ॥

सूक्ष्मः परमदुर्ज्ञेयः सतां धर्मः प्लवङ्गम ।
हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभे ॥

चपलश्चपलैस्सार्धं वानरैरकृतात्मभिः ।
जात्यन्ध इव जात्यन्धैर्मन्त्रयन्द्रक्ष्यसे नु किम् ॥

अहं तु व्यक्ततामस्य वचनस्य ब्रवीमि ते ।
न हि मां केवलं रोषात्त्वं विगर्हितुमर्हसि ॥

तदेतत्कारणं पश्य यदर्थं त्वं मया हतः ।
भ्रातुर्वर्तसि भार्यायां त्यक्त्वा धर्मं सनातनम् ॥

अस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः ।
रुमायां वर्तसे कामात्स्नुषायां पापकर्मकृत् ॥

तद्व्यतीतस्य ते धर्मात्कामवृत्तस्य वानर ।
भ्रातुर्भार्याविमर्शेऽस्मिन् दण्डोऽयं प्रतिपादितः ॥

नहि धर्मविरुद्धस्य लोकवृत्तादपेयुषः ।
दण्डादन्यत्र पश्यामि निग्रहं हरियूथप ।
न च ते मर्षये पापं क्षत्रियोऽहं कुलोद्भवः ॥

औरसीं भगिनीं चापि भार्यां चाप्यनुजस्य यः ।
प्रचरेत नरः कामात्तस्य दण्डो वधः स्मृतः ॥

भरतस्तु महीपालो वयं चादेशवर्तिनः ।
त्वं तु धर्मादतिक्रान्तः कथं शक्य उपेक्षितुम् ॥

गुरुधर्मव्यतिक्रान्तं प्राज्ञो धर्मेण पालयन् ।
भरतः कामवृत्तानां निग्रहे पर्यवस्थितः ॥

वयं तु भरतादेशं विधिं कृत्वा हरीश्वर ।
त्वद्विधान्भिन्नमर्यादान्नियन्तुं पर्यवस्थिताः ॥

सुग्रीवेण च मे सख्यं लक्ष्मणेन यथा तथा ।
दारराज्यनिमित्तं च निःश्रेयसि रतस्स मे ॥

प्रतिज्ञा च मया दत्ता तदा वानरसन्निधौ ।
प्रतिज्ञातं कथ शक्यं मद्विधेनानपेक्षितुम् ॥

तदेभिः कारणैस्सर्वैर्महद्भिर्धर्मसंहितैः ।
शासनं तव यद्युक्तं तद्भवाननुमन्यताम् ॥

सर्वथा धर्म इत्येव द्रष्टव्यस्तव निग्रहः ।
वयस्यस्यापि कर्तव्यं धर्ममेवानुपश्यतः ॥

शक्यं त्वयापि तत्कार्यं धर्ममेवानुपश्यता ।
श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ ॥

गृहीतौ धर्मकुशलौ तत्तथाचरितं भुवि ।

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ॥

निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ।
शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते ॥

राजा त्वशासन्न्यायस्य तदेवाप्नोति किल्बिषम् ।
आर्येण मम मान्धात्रा व्यसनं घोरमीप्सितम् ॥

श्रमणेन कृते पापे यथा पापं त्वया कृतम् ।
अन्यैरपि कृतं पापं प्रमत्तैर्वसुधाधिपैः ॥

प्रायश्चित्तं प्रकुर्वन्ति तेन तच्छाम्यते रजः ।
तदलं परितापेन धर्मतः परिकल्पितः ।
वधो वानरशार्दूल न वयं स्ववशे स्थिताः ॥

शृणु चाप्यपरं भूयः कारणं हरिपुङ्गव ।
यच्छ्रुत्वा हेतुमद्वीर न मन्युं कर्तुमर्हसि ॥

न मे तत्र मनस्तापो न मन्युर्हरियूथप ।
वागुराभिश्च पाशैश्च कूटैश्च विविधैर्नराः ॥

प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून्मृगान् ।
प्रधावितान्वा वित्रस्तान् विस्रब्धांश्चातिनिष्ठितान् ॥

प्रमत्तानप्रमत्तान्वा नरा मांसार्थिनो भृशम् ।
विध्यन्ति विमुखांश्चापि न च दोषोत्र विद्यते ॥

यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः ।
तस्मात्त्वं निहतो युद्धे मया बाणेन वानर ॥

अयुध्यन्प्रतियुध्यन्वा यस्माच्छाखामृगो ह्यसि ।
दुर्लभस्य च धर्मस्य जीवितस्य शुभस्य च ॥

राजानो वानरश्रेष्ठ प्रदातारो न संशयः ।
तान्न हिंस्यान्न चाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत् ॥

देवा मानुषरूपेण चरन्त्येते महीतले ।
त्वं तु धर्ममविज्ञाय केवलं रोषमास्थितः ॥
प्रदूषयसि मां धर्मे पितृपैतामहे स्थितम् ॥ इति ॥

नन्वत्र पूर्वसर्गे — 'पराङ्मुखवधं कृत्वा को नु प्राप्तस्त्वया गुणः', 'दण्ड्य-श्चाप्यपकारिषु' 'न मामन्येन संरब्धं प्रमत्तं वेद्धुमर्हसि', 'विषये वा पुरे वापि यदा नापकरोम्यहं', 'कस्मात्त्वं हंस्यकिल्बिषं' 'फलमूलाशिनं नित्यं' 'भूमिर्हिरण्यं रूप्यं च विग्रहे कारणानि च', 'त्वं तु कामप्रधानश्च', 'हत्वा बाणेन काकुत्स्थ मामिहानपराधिनम्, किं वक्ष्यसि सतां मध्ये' 'चोरः प्राणिवधे रतः। नास्तिकः परिवेत्ता च सर्वे निरयगामिनः', अधार्यं चर्म मे सद्भिः रोमाण्यस्थि च वर्जितम्। अभक्ष्याणि च मांसानि', 'पञ्च पञ्चनखा भक्ष्याः' 'मैथिलीमहमेकाह्ना तव चानीतवान्भवे' इत्यादिवाक्यैर्वालिनेत्थमाक्षिप्तम्।

अहेतुकप्राणिवधस्तावदयुक्तः, 'न हिंस्यात्सर्वा भूतानि' इति श्रुतेः ॥ 'न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कदाचन' इति मनुवचनाच्च। हेतुरपि अत्र विचार्यमाणे न दृश्यते। स किं रिपुत्वं वा? कण्टकत्वं वा? एनस्वत्वं वा? उपयुक्त-मांसचर्मविषाणादिमत्वं वा? हनने प्रत्यवायाभावो वा? सीतागवेषणरूपकार्यं वा? नाद्यः वालिकृतापराधाभावेन रिपुत्वासिद्धेः। न द्वितीयः 'रोमाञ्चे क्षुद्रशत्रौ च तरोरंगे च कण्टकः' इति निघण्टुपर्यालोचनया क्षुद्रशत्रोः कण्टकत्वेन अशत्रोः वालिनः क्षुद्रशत्रुत्वस्य दूरापेतत्वात्। नापि तृतीयः पापमात्रस्य वधनिमित्तत्वासिद्धेः। वधनिमित्तभूतसुवर्णस्तेयादि-पापानां च वालिनोऽदर्शनात्। नापि चतुर्थः 'श्वाविडं शल्यकं गोधा खड्गकूर्मशशांस्तथा। भक्ष्यान्पञ्चनखेष्वाहुः' इति मनुवचनेन पञ्चनखेषु श्वाविडादीनामेव भक्ष्यत्वावगमेन वानर-मांसस्याभक्ष्यत्वात्। अतो न मांसस्योपयोगः। वानररोमादीनामपि लौकिके उपयोगो वैदिके वा। न तावदाद्यः अव्युष्ट्रवृकरोम्णां उत्कृष्टवस्त्रोपयोगवत् गजदन्तशार्दूलनखादीना आन्दोलिकाबालालंकरणाद्युपयोगवत् गोमहिष्यादिचर्मणां पादत्राणाद्युपयोगवच्च वानर-रोमास्थिनखादीनां क्वचिदपि लौकिके उपयोगादर्शनात्। नापि वैदिके कर्मण्युपयोगः संभवति, कृष्णाजिनकृष्णविषाण अनडुद्वराहादिचर्म ऊर्णास्तुकाशलल्यादीनां यज्ञोपवीत-कण्डूयन आसन उपानत्पिण्डपितृयज्ञचातुर्मास्यादिषु 'अजिनं वासो वा दक्षिणत उपवीय' 'कृष्णविषाणया कण्डूयते' 'पश्चादग्नेर्लोहितं चर्म आनडुहं उत्तरलोम प्राग्ग्रीवमास्तीर्य वाराहीभ्यां इत उपानद्भ्यां व्रजेत्।' 'ऊर्णास्तुका वा पूर्वे वयसि उत्तर आयुषि स्वलोम' 'त्रिश्वेतया च शलल्या' इत्यादिशास्त्रैर्विनियोगवत्।

तस्य खड्गस्य यत्पात्रं तद्दौहित्रमुदाहृतम्।
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ॥

इति शास्त्रेण खड्गपात्रादीनां पितृकार्ये विधानवच्च वानरचर्मरोमादीनां क्वचिदपि वैदिके कर्मणि विनियोगादर्शनात् । नापि पञ्चमः; कपिवधे प्रायश्चित्तविधानेन प्रत्यवायावश्यंभावात् । तथाच मनुः —

हत्वा हंसं बलाकं च बकं बर्हिणमेव च । वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम् ॥

स्पर्शनं दानमिति ।

नापि षष्ठः वधं विनैव वालिप्रार्थनया सीतायाः प्राप्तुं शक्यत्वेन तदर्थतया वधकरणासंभवादिति । अस्य च वालिकृताक्षेपस्य प्रत्युत्तरमुत्तरसर्गेऽभिहितं श्रीरामेण —

धर्ममर्थं च कामं च समयं चापि लौकिकम् । अविज्ञाय कथं बाल्यान्मामिहाद्य विगर्हसे ॥
यवीयान् सोदरः पुत्रः शिष्यश्चापि गुणोदितः । पुत्रवत्ते त्रयश्चिन्त्या धर्मश्चेत्तत्र कारणम् ॥
रुमायां वर्तसे कामात्स्नुषायां पापकर्मकृत् । भ्रातृभार्याविमर्शेऽस्मिन् दण्डोऽयं विनिपातितः ॥
सुग्रीवेण च मे सख्यं लक्ष्मणेन यथा तथा । दारराज्यनिमित्तं च निश्रेयसि रतस्स मे ॥
प्रतिज्ञा च मया दत्ता तदा वानरसन्निधौ । प्रतिज्ञातं कथं शक्यं मद्विधेनानवेक्षितुम् ॥

'वागुराभिश्च पाशैश्च' 'अयुध्यन्प्रतियुध्यन्वा' 'विध्यन्ति विमुखाश्चापि न च दोषोत्र विद्यते' इति श्लोकैः । भ्रातृभार्यापरिग्रहरूपाद्धर्मातिक्रमात् प्रतिज्ञातार्थस्य निर्वहणीयत्वात् मृगयायां मृगवधस्य राज्ञां धर्मत्वाच्च युक्त एव वध इति परिहार उक्तः । स चानुपपन्नः । भ्रातृभार्याग्रहणस्य सुग्रीवसाधारणत्वेन तमुपेक्ष्य वालिनो वधकरणे हेत्वभावात् । प्रतिज्ञातार्थनिर्वहणवत् अहिंसाया अपि धर्मत्वेन हिंसां परित्यज्य प्रतिज्ञाया एवोपेक्षणसंभवात् । मृगयाधर्मेण रामस्य प्रवृत्त्यभावेन मृगयायां वध इत्येतस्य अयुक्तत्वाच्च । अतो रामसमुदीरितः परिहारोऽनुपपन्न एवेति चेत् उच्यते — तत्राद्यपरिहारस्यायमेवाभिप्रायः — वाली तावत्स्वराज्ये स्थित्वा धर्मातिक्रमं कृतवान् । धर्मदूषकश्च राज्ञाऽवश्यं दण्डनीयः । तथाच राजधर्मे —

पापमाचरतो यत्र कर्मणा व्याहृतेन च । प्रियस्यापि न मृष्येत स राज्ञो धर्म उच्यते ॥ इति ।

मानवेऽपि —

अधार्मिकांस्त्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः । निरोधनेन दण्डेन विविधेन वधेन च ॥ इति ।

अदण्डने बाधकमपि तत्रैव —

साहसे वर्तमानं तु यो मर्षयति पार्थिवः । स विनाशं व्रजत्याशु विद्वेषं वा नियच्छति ॥

दण्ड्यानां दण्डनाद्राज्ञः दण्ड्यस्य च विशुद्धिः अन्यथा उभयोरपि प्रत्यवायः । तथाच **राजधर्मे शंखलिखितोपाख्याने** —

शङ्खश्च लिखितश्चास्तां भ्रातरौ शंसितव्रतौ । तयोरावसथौ चास्तां रमणीयौ पृथक् पृथक् ॥

अथ कदाचिदाश्रमाद्विनिष्क्रान्ते ज्येष्ठभ्रातरि लिखितस्तमाश्रमं प्रविश्य तत्रत्यानि परिणतफलान्यादायाभक्षयत् । तस्मिंश्च भक्षयत्येव शङ्खोऽप्याश्रममागमत् ।

तमब्रवीत्तदा शङ्खस्तीव्ररोषसमन्वितः । स्तेयं त्वया कृतमिदं फलान्याददता स्वयम् ॥

गच्छ राजानमासाद्य स्वकर्म कथयस्व वै ॥ इति ।

एवं भ्रातुर्वचनात्सुद्युम्नं राजानमभिगम्येत्थमाह —

अनिसृष्टानि गुरुणा फलानि मनुजर्षभ । भक्षितानि मया राजन् तत्र मां शाधि मा चिरम् ॥इति
ततस्स पृथिवीपालो लिखितस्य महात्मनः । करौ प्रच्छेदयामास कृतदण्डो जगाम सः ॥
स गत्वा भ्रातरं शंखं आर्तरूपोऽब्रवीदिदम् । कृतदण्डस्य दुर्बुद्धेर्भगवन्क्षन्तुमर्हसि ॥

शंख उवाच —

न कुप्ये तव धर्मज्ञ न संदूषयसे मम । धर्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता ॥

स त्वमिदानीं बाहुदां नदीमवगाह्य पितॄन्सन्तर्पयेत्याज्ञप्तो लिखित —

अवगाह्यापगां पुण्यामुदकार्थं प्रचक्रमे । प्रादुरास्तां ततस्तस्य करौ जलजसन्निभौ ॥

ततोऽतिविस्मितो लिखितो भ्रातरमभ्येत्य करद्वयमदर्शयत् । सोऽपि मयेदं तपसा कृतमित्यवदत् ।

ततो लिखितः —

किन्तु नाहं त्वया पूतः पूर्वमेव महाद्युते । यस्य ते तपसो वीर्यमीदृशं द्विजसत्तम ॥

शंख उवाच —

एवमेतन्मया कार्यं नाहं दण्डधरस्तव । स च पूतो नरपतिः त्वं चापि पितृभिस्सह ॥

व्यास उवाच —

स राजा पाण्डवश्रेष्ठ श्रेयान्वै तेन कर्मणा । प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा ॥ इति

अयं च वाली भ्रातृभार्यागमनरूपाधर्माचरणात् 'अबुद्धिपूर्वमलंकृतो युवा परदारमनुप्रविशन् कुमारीं वा वाचा बाध्यः, बुद्धिपूर्वं तु दुष्टभावो दण्ड्यः। सन्निपाते वृत्ते शिश्नच्छेदनं सवृषणस्येति **आपस्तंबसूत्रेण** —

माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा। पितृव्यसखि शिष्यस्त्री भगिनी तत्सखी स्नुषा॥
दुहिता चार्यभार्या च सगोत्रा शरणागता। राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या॥
आसामन्यतमां गच्छन् गुरुतल्पग उच्यते। शिश्नस्योत्कृन्तनात्तत्र नान्यो दण्डो विधीयते॥

इति **नारद**वचनेन च राजकृतसवृषणशिश्नच्छेदनरूपदण्डार्हः। स च वाली —

दृश्यमानस्तु युध्येथा मया यदि नृपात्मज। अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया॥

इति वचनेन दृप्तत्वावगमात् स्वकृतं तादृशं दण्डं नाङ्गीकरिष्यति। अत एतस्य विशुद्ध्यर्थं—

महाराज मनुष्येषु निन्द्यं यः सर्वमाचरेत्। स वध्यस्सर्वलोकस्य निन्दितानि समाचरन्॥

इति **भारत**वचनानुसारेण वध एव कृत इति प्रथमपरिहाराभिप्रायः। अत एवात्रैव रामवाक्यम् —

श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ। गृहीतौ धर्मकुशलैः तत्तथाचरितं मया॥
राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः। निर्मलास्स्वर्गमायान्ति सन्तः सुकृतिनो यथा॥

शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते।
राजा त्वशासन्नयायस्य तदेवाप्नोति किल्बिषम्॥ इति॥

न चेदं भ्रातृभार्यागमनरूपधर्मातिक्रमणं सुग्रीवसाधारणमित्युक्तमिति वाच्यं,

नष्टे मृते प्रव्रजिते क्लीबे च पतिते तथा। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥

इति धर्मशास्त्रपर्यालोचनया वालिमरणानन्तरं ताराग्रहणस्य अदोषत्वेन तत्साधारण्यासंभवात्। एतच्चाग्रे विस्तरेण प्रतिपादयिष्यामः। यदपि, अहिंसाया अपि धर्मत्वेन तदनुसरणाय प्रतिज्ञापरिपालनस्य परित्याग एव किं न स्यादिति तदपि न। राज्ञां सर्वधर्मापेक्षया प्रतिज्ञापरिपालनप्राबल्यस्यायोध्याकाण्डे 'क्षात्रं धर्ममहं वक्ष्ये' इत्येतद्व्याख्यानावसरे बहुधा प्रपञ्चितत्वेन तदनुसारेण अहिंसापरित्यागस्यैव न्याय्यत्वात्। एवं च,

प्रतिप्रदानं शरणागतस्य स्त्रिया वधो ब्राह्मणस्वापहारः।
मित्रद्रोहस्तानि चत्वारि शक्र भक्तत्यागश्चैव समं मतो मे॥

इति **महाप्रस्थानिके** शक्रं प्रतिधर्मपुत्रवचनपर्यालोचनया भक्तपरित्यागस्यात्यन्तं पापाधायकत्वावगमेऽपि क्षत्रियाणामितरधर्मापेक्षया प्रतिज्ञातपरिपालनमेव परमो धर्म इति जानता भगवता श्रीरामेण स्वकृतप्रतिज्ञानिर्वहणाय यावज्जीवमाज्ञापरिपालनपूर्वकं सेवां कृतवतः अत्यन्तभक्तस्यापि भ्रातुर्लक्ष्मणस्यापि परित्यागः कृत इति प्रतिपादितमुत्तरकाण्डे —

शृणु राम महाबाहो यदर्थमहमागतः। पितामहेन देवेन प्रेषितोऽस्मि महाबल ॥
द्वन्द्वमेतत्प्रयोक्तव्यं नच चक्षुर्गतं वचः। यः शृणोति निरीक्षेद्वा स वध्यः खलु राघव ॥
भवेद्वै मुनिमुख्यस्य वचनं यद्यवेक्षसे। तथेति च प्रतिज्ञाय रामो लक्ष्मणमब्रवीत् ॥
द्वारि तिष्ठ महाबाहो प्रतिहारं विसर्जय। स मे वध्यः खलु भवेत्कथां द्वन्द्वसमीरिताम् ॥
ऋषेर्मम च सौमित्रे पश्येद्वा शृणुयाच्च यः। ततो निक्षिप्य काकुत्स्थो लक्ष्मणं द्वारि संग्रहे॥
तमुवाच मुनिं वाक्यं कथयस्वेति राघवः। शृणु राम महाबाहो यदर्थमहमागतः ॥
पितामहश्च भगवानाह लोकपतिः प्रभुः। समयस्तु महाबाहो स्वाँल्लोकान्परिरक्षितुम् ॥
श्रुत्वा पितामहेनोक्तं वाक्यं कालसमीरितम्। राघवः प्रहसन्वाक्यमुवाच परमाद्भुतम् ॥
त्रयाणां चैव लोकानां कार्यार्थं मम संभवः। भद्रं तेऽस्तु गमिष्यामि यत एवाहमागतः ॥
तयोरेवं कथयतोर्दुर्वासा भगवानृषिः। रामस्य दर्शनाकांक्षी राजद्वारमुपागमत् ॥
सोऽभिगम्य तु सौमित्रिमुवाच ऋषिसत्तमः। रामं दर्शय मे शीघ्रं पुरा मेऽर्थोऽतिवर्तते ॥
मुनेस्तु वचनं श्रुत्वा लक्ष्मणः परवीरहा। अभिवाद्य महात्मानं वाक्यमेतदुवाच ह ॥

किं कार्यं भगवन् ब्रह्मन् कोवार्थः किं करोम्यहम्।
व्यग्रो हि राघवो ब्रह्मन् मुहूर्तं वा प्रतीक्ष्यताम् ॥

तच्छ्रुत्वा ऋषिशार्दूलः क्रोधेन कलुषीकृतः। उवाच लक्ष्मणं वाक्यं निर्दहन्निव चक्षुषा ॥
अस्मिन् क्षणे मां सौमित्रे रामाय प्रतिवेदय। विषयं च पुरं चैव शपिष्ये राघवं तथा ॥
भरतं चैव सौमित्रे युष्माकं या च संततिः। नहि शक्ष्याम्यहं भूयो मन्युं धारयितुं ततः ॥

तच्छ्रुत्वा घोरसंकाशं वाक्यं तस्य महात्मनः।
चिन्तयामास मनसा तस्य वाक्यस्य निश्चयम् ॥

एकस्य मरणं मेऽस्तु मा भूत्सर्वविनाशनम्। इति बुध्या विनिश्चित्य राघवाय न्यवेदयत् ॥

ततः अवाङ्मुखमुखं दीनं दृष्ट्वा सोममिव प्लुतम्।

राघवं लक्ष्मणो वाक्यं हृष्टो मधुरमब्रवीत् ॥

मनु तापं महाबाहो मदर्थं कर्तुमर्हसि। पूर्वं निर्माणबद्धा हि कालस्य गतिरीदृशी ॥

जहि मां सौम्य विस्रब्धः प्रतिज्ञां परिपालय।

हीनप्रतिज्ञाः काकुत्स्थ प्रयान्ति नरकं नराः ॥

यदि प्रीतिर्महाबाहो यद्यनुग्राह्यता मयि। जहि मां निर्विशङ्कस्त्वं धर्मं वर्धय राघव ॥

लक्ष्मणेन तथोक्तस्तु रामः प्रचलितेन्द्रियः। मन्त्रिणस्समुपानीय तथैव च पुरोधसः ॥

अब्रवीच्च यथावृत्तं तेषां मध्ये स राघवः। दुर्वासाभिगमं चैव प्रतिज्ञां तापसस्य च ॥

तच्छ्रुत्वा मन्त्रिणस्सर्वे सोपाध्यायास्सहानुगाः।

वसिष्ठस्तु महातेजा वाक्यमेतदुवाच ह।

त्यजैनं बलवान्कालो मा प्रतिज्ञां वृथा कृथाः ॥

विनष्टायां प्रतिज्ञायां धर्मोऽपि विलयं व्रजेत्।

ततो धर्मे विनष्टे तु त्रैलोक्यं सचराचरम् ॥

सदेवर्षिगणं सर्वं विनश्येत न संशयः। स त्वं पुरुषशार्दूल त्रैलोक्यस्यापि पालनात् ॥

लक्ष्मणस्य वधेनाद्य जगत्स्वस्थं कुरुष्व ह। तेषां तत्समवेतानां वाक्यं धर्माभिसंहितम् ॥

श्रुत्वा परिषदो मध्ये रामो लक्ष्मणमब्रवीत्। विसर्जये त्वां सौमित्रे माभूद्धर्मविपर्ययः ॥

त्यागो वधो वा विहितस्साधूनामुभयं मतम् ॥ इति।

मृगयायां वधे दोषो नास्तीति तृतीयपरिहारोऽपि क्षत्रियाणां मृगवधे दोषो नास्तीत्यभिप्रायकः। मृगवधे दोषो नास्तीति पाण्डुवचनं ऋषिरप्यंगीकृतवानिति प्रतिपादितमादिपर्वणि :—

शत्रूणां या वधे वृत्तिः सा मृगाणां वधे स्मृता। राज्ञां मृग न मां मोहात्त्वं विगर्हितुमर्हसि ॥

अच्छद्मना मायया वा मृगाणां वध इष्यते। स एव धर्मो राज्ञां तु तद्धित्वं किन्नु गर्हसे ॥

अगस्त्यस्सत्रमासीनः चकार मृगयामृषिः। आरण्यान्सर्वदैवत्यान्मृगान्प्रेक्ष्य महावने ॥

प्रमाणमिष्टधर्मेण कथमस्मान्विगर्हसे। अगस्त्यस्याभिचारेण युष्माकं चैव पाण्डुना ॥

प्रमत्तमप्रमत्तं वा विवृतं घ्नन्ति चौजसा। उपायैर्विविधैस्तीक्ष्णैः कस्मान्मृग विगर्हसे॥

ऋषिः — नाहं घ्नन्तं मृगान्राजन् विगर्हे चात्मकारणात्।

मैथुनं तु प्रतीक्ष्यं मे त्वयेहाद्यानृशंस्यतः ॥ इति।

तस्माद्धर्मातिक्रमणकर्तुः शिक्षणीयत्वात्, प्रतिज्ञायाश्चावश्यपरिपालनीयत्वात् मृगवधे दोषाभावाच्च वधो युक्त एवेति।

किञ्च स्वमित्रसुग्रीवशत्रुत्वात् स्वशत्रुरावणमित्रत्वाच्च वाली हन्तव्यः। तथाच **गदापर्वणि** भगवद्वचनम् —

आत्मवृद्धिर्मित्रवृद्धिर्मित्रमित्रोदयस्तथा। विपरीतं द्विषत्स्वेतत् षड्विधा वृद्धिरात्मनः॥

आत्मन्यपि च मित्रेषु विपरीतं यदा भवेत्।
तदा विद्यान्मनोग्लानिं तासु शान्तिकरो भवेत्॥ इति।

अत एव द्रोणपर्वणि अर्जुनशत्रुहननेन अर्जुनसुहृदं मां जानन्तु इत्याह कृष्णः —

अहं विजित्य तान्सर्वान्सहसा सहयद्विपान्। अर्जुनार्थे हनिष्यामि सकर्णान् ससुयोधनान्॥
श्वो निरीक्षन्तु मे वीर्यं त्रयो लोका महाहवे। धनञ्जयार्थं समरे पराक्रान्तस्य दारुक॥
श्वस्तां चक्रप्रमथितां द्रक्ष्यसे नृपवाहिनीम्। मया क्रुद्धेन समरे पाण्डवार्थे निपातिताम्॥

श्वस्सदेवास्सगन्धर्वाः पिशाचोरगराक्षसाः।
ज्ञास्यन्ति लोकास्सर्वे मां सुहृदं सव्यसाचिनः॥ इति॥

किंच स्वशत्रुत्वादपि हन्तव्यः। स्वशत्रुत्वं च मित्रशत्रुत्वात्। अत एव मित्रद्वेषिणमेव स्वद्वेषिणमाह उद्योगे भगवान् —

एकात्मतां गतं विद्धि पाण्डवैर्धर्मचारिभिः।
यस्तान्द्वेष्टि स मां द्वेष्टि यस्ताननु स मामनु॥ इति॥

तस्मान्मित्रशत्रोः स्वशत्रुत्वादपि तद्धननं युक्तमेव। किंच स्वकीयस्यापन्नस्य रक्षणाय अन्यायेनापि तच्छत्रोर्वधो न दोषाय। अत एवार्जुनेन अत्यन्तापन्नं स्वशिष्यं सात्यकिं हन्तुं प्रवृत्तस्य भूरिश्रवसः सखड्गो बाहौ छिन्ने तेन चान्यसंगतस्य मम बाहुच्छेदनं तव पापावहमिति भूरिश्रवसा दूषितः स्वकीयस्यापत्समये रक्षणाय, अन्यायेनापि शत्रुवधोऽवश्यं कर्तव्यः अन्यथा पापं भवतीति भूरिश्रवसं प्रत्युक्तवानिति प्रतिपादितं **द्रोणपर्वणि** —

संग्रामाणां हि धर्मज्ञः सर्वशास्त्रार्थपारगः। न चाधर्ममहं कुर्यां जानंश्चैव हि मन्यसे॥
नचात्मा रक्षितव्यो वै राजन्रणगतेन हि। यो यस्य युज्यतेऽर्थेषु स वै रक्ष्यो नराधिप॥
संरक्ष्यमाणैः स नृपो रक्षितव्यो महामृधे। कथहं सात्यकिं पश्ये वध्यमानं महारणे॥

ततस्तस्य वियोगेन पापं मेनर्थतो भवेत् । रक्षितस्य मया यस्मात्तस्मात्क्रुध्यसि किं मयि ॥

यदीच्छसि शिरश्चास्य असिना हन्तुमाहवे ।
तथा कृच्छ्रगतं चैव सात्यकिं कः क्षमिष्यति ॥ इति ॥

तस्माद्वालिना हन्यमानस्य स्वकीयस्य सुग्रीवस्य संरक्षणार्थं छद्मना कृतो वालिवधो न दोषाय इति ॥

ननूक्तैर्हेतुभिर्वालिनो वध्यत्वे सुग्रीवपुरस्कारो व्यर्थः । स्वयमेव युद्धं कृत्वा वधकरणसंभवात् इति चेन्न, भ्रात्रोः परस्परं कलहप्रसक्तौ सहायार्थमानीतैस्तद्ग्लानिसमये तत्प्रार्थितैरेव सहायस्य कर्तव्यत्वात् । अयमर्थो भीष्मपर्वणि धृतराष्ट्रं प्रति जनमेजयेनोक्तः—

महान्त्यनीकानि महासमुच्छ्रये समागमे पाण्डवधार्तराष्ट्रयोः ।
चकम्पिरे शंखमृदङ्गनिस्वनैः प्रकंपितानीव वनानि वायुना ॥

भीमसेनो महाबाहुः प्रणदन्गोवृषो यथा । शंखदुन्दुभिनिर्घोषान्वारणानां च बृंहितम् ॥
सिंहनादं च सैन्यानां भीमसेनरवोऽभ्यभूत् । तमायान्तं महेष्वासं सोदर्याः पर्यवारयन् ॥
छादयन्तः शरव्रातैः मेघा इव दिवाकरम् । दुर्योधनश्च पुत्रस्ते दुर्मुखो दुस्सहस्सहः ॥
दुश्शासनश्चातिरथस्तथा दुर्मर्षणो नृप । विविंशतिश्चित्रसेनो विकर्णश्च महारथः ॥
पुरुमित्रो महाभोजः सौमदत्तिश्च वीर्यवान् । महाचापानि धुन्वन्तो जलदा इव विद्युतः ॥
आददानाश्च नाराचान्निर्मुक्ताशीविषोपमान् । विनिश्चेरुश्शरादीप्ता ज्योतींषि च नभस्थलात् ॥
सर्वे त्वन्ये महीपालाः प्रेक्षका इव भारत । ददृशुर्दर्शनीयं तं भीमा ज्ञातिसमागमम् ॥
कुरुपाण्डवसेने ते हस्त्यश्वरथसंकुले । शुशुभाते रणेतीव पटे चित्रगते इव ॥
ततस्ते पार्थिवास्सर्वे प्रगृहीतशरासनाः । सहसैन्यास्समापेतुः पुत्रस्य तव शासनात् ॥
युधिष्ठिरेण चादिष्टाः पार्थिवास्ते सहस्रशः । विनदन्तः समापेतुः पुत्रस्य तव वाहिनीम् ॥
इति । अत एव—वालिना भग्नदर्पस्स सुग्रीवो मन्दविक्रमः ।
वालिनं प्रति सामर्षो दर्शयामास राघवम् । ततो रामो महातेजा आर्तं दृष्ट्वा हरीश्वरम् ॥
स शरं वीक्षते वीरो वालिनो वधकारणात्, इति वचनेन सुग्रीवग्लानिसमये तदा तदभिप्रायेणैव वालिवधे यत्नः कृत इत्युक्तम् । तस्माद्वालिवधे सुग्रीवपुरस्कारो युक्तः ।

नन्वेवं धर्मातिक्रमादिहेतुभिः वध्यत्वमास्तां वालिनः, तथापि धार्मिकस्य रामस्य छद्मना वधकरणमयुक्तं, तस्य निषिद्धत्वात्। तथा च **मनुः** —

न च हन्यात्स्थलारूढं न क्लीबं न कृताञ्जलिम्। न भीतं न परावृत्तं न परेण समागतम्॥इति

**गौतमोऽपि** — "न दोषो हिंसायामाहवेऽन्यत्र व्यश्वसारथ्यायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढदूतगोब्राह्मणवादिभ्यः" इति। तथा **द्रोणपर्वणि** सात्यकिना सह युद्धवेलायां छद्मना स्वबाहुच्छेदिनमर्जुनं प्रति भूरिश्रवसो वाक्यम् —

ननु नामास्त्रधर्मज्ञः त्वं लोकेभ्यधिकः परैः। सोऽयुध्यमानस्य कथं रणे प्रहृतवानसि॥
न प्रमत्ताय भीताय विरथाय प्रयाचते। व्यसने वर्तमानाय प्रहरन्ति मनस्विनः॥
को हि नाम प्रमत्ताय परेण सह युध्यते। ईदृशं व्यसनं दद्याद्यो न कृष्णसखो भवेत्॥इति

न च नायं वालिवधः छद्मना कृतः किंतु —

जीवपुत्रे निवर्तस्व पुत्रं रक्षस्व चाङ्गदम्। अन्तको रामरूपेण हत्वा नयति वालिनम्॥
क्षिप्तान्वृक्षान्समाविध्य विपुलाश्च शिलास्तथा। वाली वज्रसमैर्बाणैः वज्रेणेव निपातितः।

इति वचनेन वालिप्रहितवृक्षपाषाणनिरसनपूर्वकं रामेण वाली हत इति प्रतिपादनेन सम्मुखवध एवेति वाच्यं, "दृश्यमानस्तु युध्येथाः, पराङ्मुखवधं कृत्वेत्यादिबहुवचनैः प्रच्छन्नवधस्यैवावगमात्। क्षिप्तान् वृक्षानिति वचनं तु सुग्रीवं प्रति वालिना प्रहितवृक्षपाषाणवृष्टिं समाहृत्य वाली हत इत्येतदभिप्रायकम्। अतः अन्यसंगतवालिवधः रामेण कथं कृत इति चेन्न, आपदि छद्मना वधस्य अदोषत्वात्। तथाचापद्धर्मे —

सुविदीर्णं सुविक्रान्तं सुयुद्धं सुपलायिनम्। आपद्यापदि काले च कुर्वीत न विचारयेत्॥
अन्धः स्यादन्धवेलायां बाधिर्यमपि चाश्रयेत्। कुर्यात्तृणमयं चापं शयीत मृगशायिकाम्॥
सामादिभिरुपायैश्च हन्याच्छत्रून्वशे स्थितान्। दया तस्मिन्न कर्तव्या शरणागत इत्युत॥
निरुद्विग्नो हि भवति न हताज्जायते भयम्। हन्यादमित्रं दानेन तथा पूर्वापकारिणम्॥
अग्न्याधानेन यज्ञेन काषायेन जटाजिनैः। लोकान्विश्वासयित्वा च ततो लुम्पेद्यथा वृकः॥
आनम्य फलिनीं शाखां यथा पक्वं प्रशातयेत्। फलार्थोऽयं समारंभो लोके पुंसां विपश्चिताम्॥
वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः। ततः पर्यागते काले भिन्द्याद्घटमिवाश्मनि॥
अमित्रो न विमोक्तव्यः कृपणं बह्वपि ब्रुवन्। कृपा तस्मिन्न कर्तव्या हन्यादेवापकारिणम्॥

हन्यादमित्रं सान्त्वेन तथा दानेन वा पुनः । तथैव भेददण्डाभ्यां सर्वोपायैः प्रसाधयेत् ॥इति

एवं च रामस्यापि दारराज्यापहरणेन सहायालाभेन शत्रुप्राबल्येन च प्राप्तापायत्वेन आपद्धर्ममनुसृत्य रामकृतः पराङ्मुखवालिवधो न दोषायेति वक्तुं शक्यम् ।

वस्तुतस्तु मुख्यधर्मानुसारेणैव वालिहननम् । तथाहि — रामस्तावदग्निसाक्षिकं सुग्रीवेण सख्यं कृतवान् । सुग्रीवेण च —

अहं विनिकृतो भ्रात्रा चराम्येष भयार्दितः । ऋष्यमूकं गिरिवरं हृतभार्यः सुदुःखितः ॥
सोऽहं त्रस्तो भये मग्नो वसाम्युद्भ्रान्तचेतनः । वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ॥
वालिनो मे भयार्तस्य सर्वलोकभयंकर । ममापि त्वमनाथस्य प्रसादं कर्तुमर्हसि ॥

इत्यादिवचनैर्दैन्यं प्रकटितम् । दीनस्य सुग्रीवस्य रक्षणं रामस्य धर्मः । राज्ञां दीनजनरक्षणस्य परमधर्मत्वात् । तथा च **कामन्दकः** —

वाक् सूनृता दया दानं दीनोपगतरक्षणम् । इति संगः सतां साधुहितं तत्पुरुषव्रतम् ॥
आविष्ट इव दुःखेन तद्गतेन गरीयसा । समन्वितः करुणया परया दीनमुद्धरेत् ॥
न तेभ्योऽभ्यधिकास्सन्ति सतस्सत्पुरुषव्रतम् । दुःखपंकार्णवे मग्नं दीनमभ्युद्धरन्ति ये ॥
दयामास्थाय परमां धर्मादविचलन्नृपः । पीडितानामनाथाना कुर्यादश्रुप्रमार्जनम् ॥
आनृशंस्यं परो धर्मः सर्वप्राणिभृतां व्रतम् । तस्माद्राजानृशंस्येन पालयेत्कृपणं जनम् ॥ इति ।

**कर्णपर्वण्यपि** —

आपद्गतं कंचन यो विमोक्षेत् स बान्धवस्नेहयुतः सुहृच्च ।
एवं पुराणे ऋषयो वदन्ति धर्मस्सदा सद्भिरनुष्ठितश्च ॥ इति ॥

सति सामर्थ्ये आर्तसंरक्षणाकरणे प्रत्यवायमाह गौतमः — "ब्राह्मणाभिशंसने दोषस्तावान्" "द्विरनेनसि" "दुर्बलहिंसायां चाविमोचने शक्तश्चेत्" इति ।

**आदिपर्वण्योर्वेऽपि** —

जानन्नपि च यः पापं शक्तिमान्न नियच्छति । ईशस्सन् सोऽपि तेनैव कर्मणा सम्प्रयुज्यते ॥ इति

**हरिवंशे** ब्रह्मदत्तपूजनीयसंवादे–

ननु नूनं श्रुता तेभूदियमांगीरसी श्रुतिः । शरणागतः क्षुधार्तश्च शत्रुभिश्चाप्युपद्रुतः ॥
चिरोषितश्च स्वगृहे पातव्यः सर्वतो भयात् । अपालयन्नरो याति कुंभीपाकमसंशयम् ॥

कथमस्य हविर्देवा गृह्णन्ति पितरः स्वधाम्, इति। अतस्तद्दैन्यापनोदनाय —

अद्यैव तं हनिष्यामि तव भार्यापहारिणम्। भ्रातृसंज्ञममित्रं ते वालिनं कृतकिल्बिषम्॥
शरैर्विनिहतं पश्य विशीर्णमिव पर्वतम्। यावत्तं नहि पश्यामि तव भार्यापहारिणम्॥
तावत्स जीवेत्पापात्मा वाली चारित्रदूषकः। आत्मानुमानात्पश्यामि मग्नं त्वा शोकसागरे॥
त्वामहं तारयिष्यामि कामं प्राप्स्यसि पुष्कलम्,

इति प्रतिज्ञामकरोत्। प्रतिज्ञातार्थपरिपालनं च राजधर्मः। तथा च **गदापर्वणि** — प्रतिज्ञापालनं धर्मः क्षत्रियस्येति वेत्थ ह, इति। **आरण्यकाण्डे**ऽपि सीतां प्रति रामः—

अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्। नतु प्रतिज्ञां संश्रुत्य ब्राह्मणेषु विशेषतः॥

इति। **किष्किन्धाकाण्डे**ऽपि —

शुभं वा यदि वा पापं यो हि वाक्यमुदीरितम्। सत्येन परिगृह्णाति स वीरः पुरुषोत्तम॥ इति

**युद्धकाण्डे**ऽपि —

लक्षणं हि महत्वस्य प्रतिज्ञापरिपालनम्, इति।

यस्य च यदवश्यकर्तव्यत्वेन विहितं तदर्थतया प्रसक्तमपि प्रतिषिद्धाचरणं प्रत्यवायकरं न भवति। तथाच **सुरेश्वरवार्तिके** —

समाप्तिं न समायाति प्रधानं यदसम्भवे। निषिद्धमपि तत्कार्यं तत्समाप्तिप्रयुक्तितः॥ इति।

एवं च इतरधर्मविरोधेऽपि तदेव परिपालनीयम्। अत एव **गदापर्वणि** भीमेन गदया ऊर्वोः प्रहृतं दुर्योधनमवलोक्य —

नैतद्दृष्टं गदायुद्धं कृतवान्यद्वृकोदरः। अधो नाभेर्न हन्तव्यमिति शास्त्रविनिश्चयः॥

इति प्रतिषेधात् अयुक्तमिदमिति कुपितं बलरामं प्रति प्रतिज्ञातार्थपरिपालनाय किञ्चिन्निषिद्धाचरणमपि दोषाधायकं न भवति, अपि तु धर्माधायकमेवेति प्रतिपादितं भगवता कृष्णेन

प्रतिज्ञापालनं धर्मः क्षत्रियस्येति वेत्थ ह। सुयोधनस्य गदया भङ्क्तास्म्यूरू महाहवे॥
इति पूर्वं प्रतिज्ञातं भीमेन हि सभातले। आनृण्यं यातु वैरस्य प्रतिज्ञायाश्च पाण्डवः॥
अतो दोषं न पश्यामि मा क्रुधस्त्वं प्रलम्बहन्। इति।

अत एव गाण्डीवमन्यस्मै प्रयच्छेति वक्तु. शिरश्छेदं करिष्यामोति कृतप्रतिज्ञस्त्वद्ध-स्तात्कर्णवधो न भविष्यति गाण्डीवं कृष्णाय देहीति कर्णेनोक्तः पूर्वप्रतिज्ञातार्थनिर्वहणाय धर्मिष्ठस्य राज्ञः अयुध्यमानस्य गुरोर्वधार्थमुद्युक्तवानिति प्रतिपादनं **कर्णपर्वणि**—

स गाण्डीवं केशवाय प्रदाय यन्ता भवेस्त्वं यदि केशवस्य।
ततस्तरेत्केशवः कर्णमुग्रं मरुत्सखो वृत्रमिवात्तवज्रः॥

इति धर्मपुत्रेणोक्ते अर्जुनः—

अन्यस्मै देहि गाण्डीवमिति मां यः प्रचोदयेत्। छिन्द्यामहं शिरस्तस्य इत्युपांशु व्रतं मम॥
यदुक्तोहमदीनार्थं राज्ञानेन यशस्विना। समक्षमिह गोविन्द तन्न क्षन्तुमिहोत्सहे॥
तस्मादेनं वधिष्यामि राजानं धर्मचारिणम्। प्रतिज्ञा पालयिष्यामि हत्वैतन्नरसत्तमम्॥
एतदर्थं मया खड्गो गृहीतो यदुनन्दन। सोहं युधिष्ठिरं हत्वा सत्यस्यानृण्यतां गतः॥
विशोको विज्वरश्चैव भविष्यामि जनार्दन इति॥

एवं च अद्यैव तं हनिष्यामीति प्रतिज्ञापरिपालनं तदा भवेत् यदा प्रच्छन्नतया हननमिति। प्रकाशतया युद्धायाहूतस्तु भयान्नागच्छेत्, रुमां गृहीत्वा देशान्तरं वा गच्छेत्, रावणं वा समाश्रयेत्, शरणं वा समागच्छेत्, ससहायं सुग्रीवमवलोक्य सकलवानरसेनया युद्धार्थं समागच्छेद्वा। तत्राद्यपक्षत्रये तद्धननस्य चिरकालसाध्यत्वेन अद्यैव तं हनिष्यामि रुमां राज्यं च तव दास्यामीति पूर्व-प्रतिज्ञातकालातिपातः स्यात्। प्रतिज्ञाकालातिपाते च दोषः श्रूयते **महाप्रस्थानिके**—
एकाह्ना निर्दहेयं वै शत्रूनित्यर्जुनोऽब्रवीत्। नचैतत्कृतवानेषु शूरमानी ततोऽपतत्॥ इति॥

शरणागमनपक्षे च शरणागतो वाली हन्येत वा नवा, नाद्यः, शरणागतहननस्य निषिद्धत्वात्। तथाच तैत्तिरीयश्रुतौ— तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति इति **अनुशासनिकेऽपि**—

भवेत्स गुरुतल्पी च भ्रूणहा च स वै भवेत्। सुरापानं स कुर्याच्च यो हन्याच्छरणागतम्, इति।
विभीषणो वा सुग्रीव यदि वा रावणः स्वयम्। आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया॥
सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम॥ इति
कृतप्रतिज्ञावतः अन्तःपुरद्रोहिणं जयन्तं शरणागत इति विसृष्टवतः रामभद्रस्य शरणागत-

वालिवधे प्रवृत्त्यनुपपत्तिश्च । यदि न हन्यते तदा अद्यैव तं हनिष्यामीत्यादिप्रतिज्ञा-विरोध इति ।

सुसन्नद्धः कवचिना योद्धव्यः क्षत्रियो रणे । स चेत्ससैन्य आयाति ससैन्यस्तं तथाह्वयेत् ॥

इति राजधर्मवचनपर्यालोचनया ससहायेन शत्रुणा सह युद्धस्य सहायसहितेनैव कर्तव्यत्वात्, रामेण ससहायं सुग्रीवं प्रति सकलवानरसेनया सह युद्धायागच्छेदिति पक्षे "वन्यानामहमपि राजराण्मृगाणामित्यनेन मृगराजत्वेन भरतं प्रति कृतप्रतिज्ञस्य रामभद्रस्य स्वप्रजा एव वानरा हन्तव्या भवेयुः । तच्चाधर्म्यं राज्ञां स्वशरीररक्षणापेक्षया प्रजासंरक्षणस्यावश्यकर्तव्यत्वात् । तथाच **कामन्दके**—

लोके वेदे च कुशलः कुशलैः परिवारितः । आद्दतश्चिन्तयेद्राज्यं सबाह्याभ्यन्तरं नृपः ॥
आभ्यन्तरं शरीरं स्वं बाह्यं राष्ट्रमुदाहृतम् । अन्योन्याधारसंबन्धादेकमेवेदमुच्यते ॥
राज्यांगाना तु सर्वेषां राष्ट्राद्भवति संभवः । तस्मात्सर्वप्रयत्नेन राजा राष्ट्रं समुन्नयेत् ॥
लोकानुग्रहमन्विच्छन् शरीरमनुपालयेत् । राज्ञः सरक्षणं धर्मः शरीरं धर्मसाधनम् ॥ इति ॥

प्रजापालने फलमाह मनुः—नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः, इति । प्रजापीडनं च राज्ञा नरकप्रदम् । तथा च राजधर्मे—

दण्डनीतिं समुत्सृज्य यदा कार्त्स्न्येन भूमिपः । प्रजाः क्लिश्नात्ययोगेन प्रवर्तेत तदा कलिः ॥
कलेः प्रवर्तनाद्राजा पापमत्यन्तमश्नुते । ततो वसति दुष्कर्मा निरये शाश्वतीः समा इति ॥

एवमवश्यरक्षणीयानां प्रजानां येनोपद्रवः शंकितो निर्णीतो वा तादृशस्य छद्मना वधोऽपि धर्म्य एव । तदुक्तं **कामन्दके**--

धर्म्यामारेभिरे हिंसामृषिकल्पा महीभुजः । तस्मादसाधून् धर्माय निघ्नन्दोषैर्न लिप्यते ॥
धर्मसंरक्षणपरो धर्मायार्थं विवर्धयेत् । ये ये प्रजाः प्रबाधेरन् तांस्तान्हन्यान्महीपतिः ॥
यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः । स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते ॥
धर्माधर्मौ विजानन्हि शासने निरतस्सताम् । प्रजा रक्षेन्नृपस्साधु हन्याच्च परिपन्थिनम् ॥
धर्माभिचारा ये पापाः चोराः लोकस्य कण्डकाः । समागच्छन्ति तान्बुध्वा नियच्छेच्छमयीत वा ॥
प्रकाशश्चाप्रकाशश्च दण्डो द्विविध इष्यते । प्रकाशदण्डान्कुर्वीत लोकद्विष्टांस्तथा रिपून् ॥

विषेणोपनिषद्योगैः शस्त्रेणोद्वर्तनेन वा। तथोपांशु नयेद्दण्डं यथान्यो न विभावयेत् ॥
राज्योपघातं कुर्वीरन् ये पापाः राजवल्लभाः। एकैकशस्सहतान्वा दूष्यांस्तान्परिचक्षते ॥
दूष्यानुपांशुदण्डेन हन्याद्राजाविलंबितम्। प्रदूष्य वा प्रकाशं हि लोकविद्वेषमागतान् ॥
राजा रहसि दूष्यं हि दर्शनायोपमन्त्रयेत्। गूढशस्त्रा विशेयुस्तं पश्चादासंजिता नराः ॥
विश्वस्तान्हि विचिन्वीयुः द्वाःस्थाः कक्षांतरं गतान्। तेशस्त्रग्राहिणो ब्रूयुः प्रयुक्ताः स्म इति स्फुटम्
इत्यादिदूष्यान्सन्दूष्य प्रजानामभिवृद्धये। निनीषुः श्रियमुत्कर्षं राजा शल्यं समुद्धरेत् ॥ इति

**भारतेऽपि —**

तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम्। अर्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते ॥ इति

अत्र हि तुल्यसामर्थ्यादियुक्तस्य अर्धराज्यं हरिष्यतीति शंकया तद्धननं प्रतिपादितम्। रामश्च यत्र प्रजोपरोधस्तत्र न प्रवर्तते। अत एव प्रजोपरोधकत्वादुत्कृष्टधर्ममपि राजसूयं परिहृतवानित्यवगतमुत्तररामायणे—

अक्षयश्चाव्ययश्चैव धर्मसेतुर्मतो मम। धर्मप्रसवनं त्वेतत्सर्वपापप्रणाशनम् ॥
युवाभ्यामात्मभूताभ्यां राजसूयमनुत्तमम्। सहितो यष्टुमिच्छामि यत्र धर्मो हि शाश्वतः ॥

इति रामवाक्यं निशम्य भरतः —

त्वयि धर्मः परस्साधो त्वयि सर्वा वसुन्धरा। प्रतिष्ठिता महाबाहो वयं चामितविक्रम ॥
महीपालाश्च सर्वे त्वां प्रजापतिमिवामराः। निरीक्षन्ते महात्मानो लोकनाथ यथा वयम् ॥
प्रजाश्च पितृवद्राजन् पश्यन्ति त्वां महाबल। पृथिव्यां गतिभूतोऽसि प्राणिनामपि राघव ॥
स त्वमेवंविधं यज्ञमाहर्तासि कथं नृप। पृथिव्यां राजवंश्यानां विनाशो यत्र दृश्यते ॥
पृथिव्यां ये च पुरुषाः राजन्पौरुषमागताः। सर्वेषां भविता तत्र क्षयः सर्वान्तको यतः ॥
स त्वं पुरुषशार्दूल गुणैरमितविक्रमः। पृथिवीं नार्हसे हन्तुं वशे हि तव वर्तते ॥

ततो रामः —

प्रीतोऽस्मि परितुष्टोस्मि तवाद्य वचनेन हि। इदं वचनमक्लीबं त्वया धर्मसमाहितम् ॥
व्याहृतं पुरुषव्याघ्र पृथिव्याः परिपालनम्। एष तस्मादभिप्रायाद्राजसूयात्क्रतूत्तमात् ॥
निवर्तामि महाबाहो तव सुव्याहृतेन वै, इति।

अन्तर्हितेन्द्रजिद्वधार्थतया सकलराक्षसहननाय प्रवृत्तं लक्ष्मणं प्रति—

नैकस्य हेतो रक्षांसि पृथिव्यां हन्तुमर्हसि, इति वदतो रामभद्रस्य वालिवधनिमित्तं सकलवानरहनने प्रवृत्तिश्चासंभावितैव। एवंच प्रकारेण युद्धारंभे उक्तरीत्या अद्यैव तं हनिष्यामीति रुमां राज्यं च तव दास्यामीति च प्रतिज्ञापालनं न भवेत् बहुप्रजोपरोधो वा भवेत्, इति मनसि विचिन्त्य धर्म्यमित्येव प्रच्छन्नवधं कृतवानिति युक्तमेव। यः कश्चिद्धर्मसमयात्प्रच्युतो धर्मसाधनः। दम्भेनैव स हन्तव्यस्तं पन्थानं समाश्रितः, इति भारतवचनपर्यालोचनया धर्मच्युतश्छद्मनापि हन्तव्यः, नच हन्यात्स्थलारूढमिति निषेधवचनं च प्रतिज्ञापरिपालनाद्यविरुद्धहननविषयमित्यखिलमपि समञ्जसम् ॥

ननूक्तरीत्या छद्मना वालिवधस्य धर्म्यत्वेऽपि रामः वालिवधमधर्मेण कृतवानिति लोकापवादेन — चिरं स्थास्यति चाकीर्तिस्त्रैलोक्ये सचराचरे। रामे वालिवधाद्यद्वदेवं द्रोणे निपातिते, इति **द्रोणपर्वणि** धर्मपुत्रं प्रति अर्जुनवचनेन चापकीर्त्यवगमात् —

अकीर्तिर्यस्य जायेत लोके भूतस्य कस्यचित्। पतत्येवाधमान् लोकान्यावच्छब्दस्तु कीर्त्यते ॥

**इत्युत्तरकाण्डे** रामवचनेन च—

अकीर्तिः कीर्त्यते लोके यस्य भूतस्य कस्यचित्। स पतत्यधमाँल्लोकान् यावच्छब्दः प्रकीर्त्यते ॥

इति वनपर्ववचनेन च पुरुषस्य यावदपयशस्तिष्ठति तावदस्वर्ग्यत्वावगमात् अयशःप्रयुक्तप्रत्यवायः अपरिहार्य एवेति चेन्न। प्रतिज्ञातार्थनिर्वहणे क्रियमाणे प्रसक्तापकीर्तेः प्रत्यवायकरत्वाभावेन तद्व्यतिरिक्तस्थल एव तस्याः प्रत्यवायकरत्वात्। तथाहि, अकीर्तिस्तावद्द्विविधा कामक्रोधलोभादिमूलकप्रतिषिद्धाचरणप्रयुक्ता एका, धर्मसंरक्षणार्थतया शास्त्रान्तरप्रतिषिद्धाचरणप्रयुक्ता अपरा। तत्राद्यैव प्रत्यवायहेतुः। तद्विषयाण्येव 'अकीर्तिः कीर्त्यते, इत्यादि निन्दावचनानि। अत एव राज्यलोभाद्धर्मपुत्रस्य अश्वत्थामा हत इत्यनृतवचनप्रयुक्तापकीर्तिवशात्प्रत्यवायः इह लोके उपरि चरतो रथस्य सद्य एवाधः पतनं, परत्र च नरकदर्शनमुक्तं भारते। तत्र प्रत्यवायो **द्रोणपर्वणि**—

उपचीर्णो गुरुर्मिथ्या भवता राज्यकारणात्। धर्मज्ञेन सता नाम सोधर्मः सुमहान्कृतः ॥ इति ॥

रथपतनमपि तत्रैव —

तमतथ्यभये मग्ने जये सक्तो युधिष्ठिरः। अव्यक्तमब्रवीद्वाक्यं हतः कुञ्जर इत्युत ॥

तस्य पूर्वं रथः पृथ्व्यां चतुरंगुलमुन्नतः। बभूव चैव तेनोक्ते तस्य वाहास्पृशन्महीम्॥ इति

नरकदर्शनं च **स्वर्गारोहणिके**—

व्याजेन हि त्वया द्रोणः उपचीर्णः सुतं प्रति। व्याजेनैव ततो राजन् दर्शितो नरकस्तव॥ इति

द्वितीया तु प्रत्यवायाय न भवति—अत एव "सुयोधनस्य गदया भङ्क्तास्यूरू महाहवे" इति प्रतिज्ञातार्थनिर्वहणाय निषिद्धोऽपि सुयोधनोरुभङ्गः भीमस्य प्रत्यवायाधायको न भवतीत्युक्तं **गदापर्वणि**—

आनृण्यं यातु वैरस्य प्रतिज्ञायाश्च पाण्डवः। अतो दोषं न पश्यामि मा क्रुधस्त्वं प्रलंबहन्,

इति। प्रतिज्ञातार्थपरिपालनं च धर्मान्तरोपमर्देनापि कर्तव्यमित्येतच्च प्राक् प्रपञ्चितम्। एवं प्रतिज्ञातरक्षणस्य प्रबलधर्मत्वेन—

यथाप्रतिज्ञं त्वं पार्थ तीर्त्वा कीर्तिमवाप्स्यसि, इति भगवद्वचनेन तज्जन्यत्वेनावगतायाः कीर्तेरपि प्रबलत्वात् तदपेक्षया प्रच्छन्नवधजनिता दुर्बलापकीर्तिरकिञ्चित्करी। यदि चैवं दुर्बलाप्यपकीर्तिः प्रत्यवायाय भवेत्तदा—

यदि प्रव्राजितो रामो लोभकारणकारितम्। वरदाननिमित्तं वा सर्वथा दुष्कृतं कृतम्॥
असमीक्ष्य समारब्धं विरुद्धं बुद्धिलाघवात्। नयिष्यत्यतिसंक्रोशं राघवस्य विवासनम्॥

इति लक्ष्मणवचनावगता दशरथस्यापकीर्तिः प्रत्यवायाय भवेत्, नचैवं दृश्यते, प्रत्युत—

सदानृणमिमं रामं वयमिच्छामहे पितुः। अनृणत्वाच्च कैकेय्याः स्वर्गं दशरथो गतः॥

इत्ययोध्याकाण्डे ऋषिवचने—

एष राजा विमानस्थः पिता दशरथस्तव। इन्द्रलोकं गतः श्रीमान् त्वया पुत्रेण तारितः॥

इति **युद्धकाण्डे** रामं प्रति महेश्वरवचनेन "इन्द्रलोकं विमानेन पिता दशरथो ज्वलन्" इति वचनेन च प्रबलतरया प्रतिज्ञापरिपालनजन्यकीर्त्या दशरथस्य स्वर्ग एवावगम्यते। अतः युधिष्ठिरस्य राज्यलोभप्रयुक्तानृतवचनजनितापकीर्तेः प्रत्यवायकरत्वेऽपि रामस्य प्रतिज्ञापरिपालनार्थतया क्रियमाणवालिवधजनितापकीर्तेर्न प्रत्यवायकरत्वम्। एवं रामस्य प्रतिज्ञातार्थनिर्वहणे प्रसक्तो वालिवधो न दोषाय॥

ननु रामकृतवालिवधोऽपि प्रत्यवायकर एव सीताप्राप्तिलोभेन हनूमदुपदिष्टप्रकारेण सुग्रीवेण सख्यं विधाय कृतत्वात् इति चेन्न। सुग्रीवसख्याचरणे तस्य हेतुत्वेऽपि वालिवधे लोभस्यानिमित्तत्वात्। तथाहि – सीतापहरणेन सन्तप्तहृदयस्तल्लाभोपायमलभमानो रामस्सुग्रीवसहायेन सीताप्राप्तिं दनुजवचनादवगत्य तदानीं प्रत्युपकारमप्रार्थितवता सुग्रीवेण स्वयमेव शरणं गत्वा सख्यं कृतवान्। ततश्च मित्रेण सुग्रीवेण दैन्यपूर्वकं स्वदुःखे निवेदिते दीनोद्धरणस्य मित्रसंरक्षणस्य च धर्मत्वात्तदर्थं सशपथं अद्यैव तं हनिष्यामीति प्रतिज्ञातम्। तन्निर्वाहाय प्रवृत्तो वालिवधः। न चात्र सीताप्राप्तिलोभो मूलम्। यदि च वालिवधे लोभ एव मूलं स्यात् तदा सख्यकरणवेलायां अहं वालिनं हनिष्यामि त्वया सीतान्विष्य देयेति समयबन्ध. स्यात्। न च तथा दृश्यते। प्रत्युत मैत्रीकरणदशायां स्वकृतोपकारनिरपेक्षोऽयं सुग्रीवः मैत्रीं करिष्यति नवेति सन्देहेन "सुग्रीवं वानरेन्द्रं तु रामश्शरणमागतः" इत्यादिश्लोकैः शरणागमनपूर्वकं सख्यं कृतवानित्यवगम्यते। प्रत्युपकारसापेक्षत्वे सुग्रीवं प्रति शरणगमनवैय्यर्थ्यात्। तस्मात्सख्यकरण एव लोभो निमित्तं न वालिवधे। वस्तुतस्तु सुग्रीवसख्यकरणे वालिरावणवधे च न सीताप्राप्तिलोभो निमित्तं, किंतु स्वस्य कुलस्य च न्यङ्गतापरिहार एव निमित्तम्। तथा च युद्धकाण्डे वचनम् —

अब्रवीत्परुषं सीतां मध्ये वानररक्षसाम्। यत्कर्तव्यं मनुष्येण धर्षणं परिमार्जता ॥
तत्कृतं सकलं सीते शत्रुहस्तादमर्षिणा। निर्जिता जीवलोकस्य तपसा भावितात्मना ॥
अगस्त्येन दुराधर्षा मुनिना दक्षिणेव दिक्। विदितश्चास्तु भद्रं ते योयं रणपरिश्रमः ॥
तीर्णः स सुहृदां वीर्यान्न त्वदर्थं मया कृतः। रक्षता तु मया वृत्तमपवादं च सर्वशः ॥
प्रख्यातस्यात्मवंशस्य न्यङ्गत्वं परिरक्षता। निर्जितासि मया सीते शत्रुं जित्वा महारणे ॥
प्राप्तचारित्रसन्देहा मम प्रतिमुखे स्थिता। दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढम् ॥
तद्गच्छ ह्यभ्यनुज्ञाता यथेष्टं जनकात्मजे। एता दश दिशो भद्रे कार्यमस्ति न मे त्वया ॥
कः पुमान्हि कुले जातः स्त्रियं परगृहोषिताम्। तेजस्वी पुनरादद्यात् सुहृल्लेखेन चेतसा ॥
रावणाङ्कपरिभ्रष्टां दृष्टां दुष्टेन चक्षुषा। कथं त्वां पुनरादद्यां कुलं व्यपदिशन् महत् ॥
तदर्थं निर्जिता मे त्वं यशः प्रत्याहृतं मया। नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यतामिति ॥

अत एव रावणवधादिप्रयासेन प्राप्तां अग्न्यादिभिर्देवैः स्वात्मना च शुद्धत्वेन

निश्चितामपि सीतां लोकापवादभीत्या परित्यक्तवान् रामभद्र इति प्रतिपादित-मुत्तरकाण्डे —

पौरापवादस्सुमहान् तथा जनपदस्य च। वर्तते मयि बीभत्सा मम मर्माणि कृन्तति ॥
अहं किल कुले जात इक्ष्वाकूणां महात्मनाम्। सीता पापसमाचारामानयेयं कथं पुनः ॥
प्रीत्यर्थं तव सौमित्रे देवानां हव्यवाहनः। अपापां मैथिलीं प्राह वायुश्चाकाशगोचरः ॥
एवं शुद्धसमाचारां देवगन्धर्वसन्निधौ। लङ्काद्वीपे महेन्द्रेण मम हस्ते निवेशिता ॥
अन्तरात्मा च मे वेत्ति सीतां शुद्धां यशस्विनीम्। अतो गृहीत्वा वैदेहीमयोध्यामहमागतः ॥
अयं च वादस्सुमहान् शोकश्च हृदि वर्तते। पौरापवादस्सुमहान् तथा जनपदस्य च ॥
अकीर्तिर्यस्य जायेत लोके भूतस्य कस्यचित्। पतत्येवाधमाल्लोकान्यावच्छब्दस्तु कीर्त्यते ॥
अप्यहं जीवितं जह्यां युष्मान्वा पुरुषर्षभाः। अपवादभयाद्भीतः किंपुनर्जनकात्मजाम् ॥
श्वस्त्वं प्रभाते सौमित्रे सुमन्त्राधिष्ठितं रथम्। आरुह्य सीतामारोप्य विषयान्ते समुत्सृज ॥

इति। एवमपवादभीत्यापि सीतां परित्यक्तवतो रामस्य सीताप्राप्तिलोभेन अन्यसंगतवालि-वधप्रयुक्तदोषोपपादनं अयुक्तमेव।

एवंच यथा युधिष्ठिरस्य राज्यैकलुब्धस्य छद्मना गुरुवधप्रयुक्तापकीर्तिः प्रत्यवायाय न तथा रामस्य प्रतिज्ञापरिपालनरूपप्रबलतरधर्मसंरक्षणाय कृतवालिवध-प्रयुक्तापकीर्तिः प्रत्यवायाय। अतो "रामे वालिवधाद्यद्वदिति वचने अपकीर्तिमात्रे वालिवधो दृष्टान्तः, नतु प्रत्यवायकरत्वांशेऽपि। अत एव तत्रैव **द्रोणपर्वणि** षोडश-राजकीये सर्वप्रजाभिः सह रामः अप्रतिबन्धेन स्वर्गं गत इत्युक्तं — चतुर्विधाः प्रजा रामः स्वर्गं नीत्वा दिवं गतः, इति।

**उत्तरकाण्डेऽपि-**

गत्वा तु सरयूतोयं स्थावराणि चराणि च। प्राप्य तत्तोयविक्लेदं देवलोकमुपागमन् ॥
तथा स्वर्गगतं सर्वं कृत्वा लोकगुरुर्दिवम्। जगाम त्रिदशैस्सार्धं हृष्टो हृष्टैर्महामति,रिति।

एवं च प्रतिज्ञातार्थपरिपालनस्य उत्कृष्टधर्मत्वेन अवश्यकर्तव्यत्वात् बहुप्रजोपरोधस्य परिहर्तव्यत्वात् मन्वादिनिषेधवचनानां अन्यविषयत्वेनोपपन्नत्वात् 'रामे वालिवधाद्यद्वदिति भारतवचनस्य अकीर्त्योपपन्नत्वाच्च रामकृतो वालिवधः अधर्मापादको न भवति,

किंतु धर्म एव। अत एव वालिना सकलधर्माभिज्ञेन "भवता अनभिज्ञोऽहं न प्रतिवक्तु-मर्हामि, प्रमादान्मया, 'अयुक्तं सोढव्यं, भवता यत्कृतं तद्धर्म्यमेवेत्यर्थकैः—

यत्त्वमात्थ नरश्रेष्ठ तदेवं नात्र संशयः। प्रतिवक्तुं प्रकृष्टो हि नापकृष्टस्तु शक्नुयात् ॥
यदयुक्तं मया पूर्वं प्रमादादुक्तमप्रियम्। तत्रापि खलु मे दोषं वक्तुं नार्हसि राघव ॥
ममाप्यपगतं धर्माद्व्यतिक्रान्तपुरस्कृतम्। धर्मसंहितया वाचा धर्मज्ञ परिपालय ॥

शराभितप्तेन विचेतसा मया प्रदूषितस्त्वं यदजानता प्रभो।
इदं महेन्द्रोपमभीमविक्रम प्रसादितस्त्वं क्षम मे महेश्वर ॥

इत्येवमादिभिः श्लोकैः धर्म्यत्वमेव ज्ञापितम्। अत्र च वालिनो वाक्यमखिलमपि स्वमरणानन्तरं भार्यापुत्रादीनां रक्षणमनेनैव भवितव्यमिति बुध्या प्रवृत्तत्वादौपचारिकं नतु धर्म्यत्वाभिप्रायकं। अत एव च तारांगदादीनां रक्षणप्रार्थनं कृतं--

बालश्चाकृतबुद्धिश्च एकपुत्रश्च मे प्रियः। तारेयो राम भवता रक्षणीयो महाबलः ॥
सुग्रीवे चांगदे चैव विधत्स्व मतिमुत्तमाम्। मद्दोषकृतदोषां तां यथा तारां तपस्विनीम् ॥
सुग्रीवो नावमन्येत तथावस्थातुमर्हसि, इति। अतो वालिनः धर्म्यत्वेन न सम्मतमिदमिति प्रसक्तामाशंकां निराकरोति भगवान्वाल्मीकिः—

**एवमुक्तस्तु रामेण वाली प्रव्यथितो भृशम्।**
**न दोषं राघवे दध्यौ धर्मेऽधिगतनिश्चयः ॥ इति।**

अत्रच धर्मेऽधिगतनिश्चय इति विशेषणेन पूर्वकृतमखिलमपि रामदूषणमज्ञानप्रवृत्तमेव। इतः परं वक्ष्यमाणमखिलं धर्म्यमेव वदतीत्यवगतम्। भार्यापुत्रादीनां संरक्षणप्रार्थनमपि चरमकाले धर्म्यमित्येव कृतम्।

अत एव **आदिपर्वणि** कुन्तीं प्रति माद्रीवचनं--

दारकेष्वप्रमत्ता च भवेथाश्च हिता मम। अतोऽन्यन्नहि पश्यामि संदेष्टव्यं हि किंचन ॥इति

**महाप्रस्थानिकेऽपि—**

कृपमभ्यर्च्य च गुरुं अथ पौरपुरस्कृतम्। शिष्यं परीक्षितं तस्मै ददौ भरतसत्तम, इति ॥

**एकोनविंशविंशयोः**-- ततः समाकर्ण्य भर्तृवधं व्यथितहृदया तारा झटिति विनिष्क्रम्यान्तःपुराद्राज्यसंरक्षणायांगदमभिषेचयेति वदतो वानरानपि किमङ्गदेन? किंवा

राज्येन? आत्मना वा किं अन्ततः? इति वदन्तीं हा मम प्रियेति पतिपादमूले निपपात। ततः कथंचिद्वानरैः समाश्वासिता तारा रणधरणीतलशयितं निजदयितं परिष्वज्य —

उत्तिष्ठ हरिशार्दूल भजस्व शयनोत्तमम्। नैवंविधाश्शेरते हि भूमौ नृपतिसत्तमाः॥

गतासुरपि भवान्यामिमां वसुन्धरां परिष्वज्य निषेवते सेयं वसुन्धरा मत्तः प्रियतरेति वितर्कयामि, महायूथपयूथपे त्वयि कालपरवशेऽपि हृदयं यन्मदीयं शतधा न विदीर्यते तदिदमयोमयं मन्ये,

**सुग्रीवस्य त्वया भार्या हृता स च विवासितः।**
**यत्तु तस्य त्वया व्युष्टिः प्राप्तेयं प्लवगाधिप॥**

अनेन परदाराभिमर्शनमायुःक्षयकरं, स्वजनविरोधश्च प्राणैश्वर्यनाशक इति सूचितम्। तथा च **मनुः** —

नहीदृशमनायुष्यं त्रिषु लोकेषु विद्यते। यादृशं पुरुषस्येह परदाराभिमर्शनम्॥ इति॥

प्राचीना अपि —

अनुचितकर्मारम्भस्स्वजनविरोधो बलीयसि स्पर्धा। प्रमदाजनविश्वासो मृत्योर्द्वाराणि चत्वारि॥

वृद्धा यत्र न पूज्यन्ते वध्वा यत्राप्यगौरवम्। तत्र गच्छ दरिद्र त्वं यत्र वैरं सहोदरे, इति॥

तदिदं दुष्टदिष्टसञ्चेष्टितं यन्मदीयं हितकरमपि वचनं अनादृत्य सुग्रीववशंगतो भवति भवान्। सदा सुखसंवर्धिता मामवलोक्य कुमारमङ्गदं च समागतमाश्वासयेति बहुविधं विललाप॥

**एकविंशे** — ततो हनुमान् पतिनिधनजनितक्लेशजलनिधिनिमग्नां विलपन्तीं तारामित्थमाश्वासयामास —

**गुणदोषकृतं जन्तुः स्वकर्मफलहेतुकम्।**
**अव्यग्रस्तदवाप्नोति सर्वं प्रेत्य शुभाशुभम्॥**

अत्र च स्वकर्मफलहेतुकमिति विशेषणेन अनादिभवपरम्परासादितधर्माधर्मवासनावशेन शुभमशुभं वा कर्मानुष्ठाय तदनुरूपं सुखं दुःखं वा फलमवाप्नोतीत्युक्तम्। **तथाचापस्तंबः** —

**सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखम्। ततः परिवृत्तौ कर्मफलशेषेण**

जातिं रूपं, वर्णं, बलं, मेधा प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यते। तद्वद्वु-वदुभयोर्लोकयोस्सुख एव वर्तते। यथौषधिवनस्पतीनां बीजस्य क्षेत्रकर्मविशेषे फल-परिवृद्धिः एवम्। एतेन दोषफलपरिवृद्धिरुक्तेति **मोक्षधर्मे**ऽपि—

आत्मनानर्थयुक्तेन पापे निविशते मनः। स कर्म कलुषं कृत्वा क्लेशे महति धीयते॥
दुर्भिक्षादेव दुर्भिक्षं क्लेशात्क्लेशं भयाद्भयम्। मृतेभ्यः प्रमृता यान्ति दरिद्राः पापकर्मिणः॥
उत्सवादुत्सवं यान्ति स्वर्गात्स्वर्गं सुखात्सुखम्।
श्रद्दधानाश्च दान्ताश्च धनस्थाः शुभकारिणः॥ इति।

**शोच्या शोचसि कं शोच्यं दीनं दीनानुकम्पसे।**
**कश्च कस्यानुशोच्योस्ति देहेऽस्मिन्बुद्बुदोपमे॥**

अनेन बुद्बुदवदत्यन्तास्थिरदेहपातप्रयुक्तशोको न कर्तव्य इति सूचितम्। तथा च **स्त्रीपर्वणि** विदुरः—

वैचित्रवीर्य साध्यं हि दुःखं वा यदि वा सुखम्। प्राप्नुवन्तीह भूतानि स्वकृतेनैव कर्मणा॥
कर्मणा प्राप्यते स्वर्गः सुखं दुःखं च भारत। ततो वहति तं भारमवशः स्ववशोऽपि वा॥
यथा च मृन्मयं भाण्डं चक्रारूढं विपद्यते। किञ्चित्प्रक्रियमाणं वा कृतमात्रमथापि वा॥
छिन्नं वाप्यवरोप्यन्तं अवतीर्णमथापिवा। आर्द्रं वाप्यथवा शुष्कं पच्यमानमथापि वा॥
अवतीर्यमाणमापाकादुद्धृतं चापि भारत। अथवा परिभुज्यन्तमेवं देहाश्शरीरिणाम्॥
गर्भस्थो वा प्रवृत्तो वाप्यथवा दिवसान्तरः। अर्धमासगतो वापि मासमात्रगतोऽपि वा॥
संवत्सरगतो वापि द्विसंवत्सर एव वा। यौवनस्थोऽथ मध्यस्थो वृद्धो वापि विपद्यते॥
प्राक्कर्मभिस्तु भूतानि भवन्ति न भवन्ति च। एवं सांसिद्धिके लोके किमर्थमनुतप्यसे॥
यथा तु सलिले राजन् क्रीडार्थमनुसंसरत्। उन्मज्जत्वनिमज्जत्वे किंचित्सत्वं नराधिप॥
एवं संसारगहने उन्मज्जननिमज्जने। कर्मभागेन बाध्यन्ते क्लिश्यन्ते स्वल्पबुद्धयः॥
ये तु प्राज्ञाः स्थितास्सत्ये संसारान्तगवेषिणः।
समागमं सभूतानां ते यान्ति परमां गतिम्, इति॥

**ज्ञानास्वनिषतामेवं भूतानामागतिं गतिम्।**
**तस्माच्छुभं हि कर्तव्यं पण्डितेनेह लौकिकम्॥**

**संस्कार्यो हरिराजश्च अंगदश्चाभिषिच्यताम्।**
**सिंहासनगतं पुत्रं पश्यन्ती शान्तिमेष्यसि॥**

इति परिसान्त्विता तारा एवमवोचत्—

**अंगदप्रतिरूपाणां पुत्राणामेकतः शतम्।**
**हतस्याप्यस्य वीरस्य गात्रसंश्लेषणं वरम्॥**

अनेन पुत्रं परित्यज्यापि भर्तृसहगमनं श्रेय इति सूचितम्। तथाचादिपर्वणि—अन्वेष्यामीह भर्तारमहं प्रेतवशं गतम्। उत्तिष्ठ त्वं विसृज्यैनमिमान्पालय दारकान्॥ इति।

**नचाहं हरिराज्यस्य प्रभवाम्यंगदस्य वा।**
**पितृव्यस्तस्य सुग्रीवः सर्वकार्येष्वनन्तरः॥**

**पिता हि बन्धुः पुत्रस्य न माता हरिसत्तम।**

अहं तु हरिराजसंश्रयाद्धितमन्यं न पश्यामीति। अनेन भर्तृपुत्रादिशासने स्त्रीणां स्वातन्त्र्यं नास्तीत्युक्तम्। एतच्च प्रागेव प्रपञ्चितम्॥

**द्वाविंशे**—ततो रामेण निषूदितो वाली सम्प्राप्तविजयं सुग्रीवमवलोक्य मन्दमुच्छ्वसन्नित्थमाह—

**मम प्राणैः प्रियतरं पुत्रं पुत्रमिवौरसम्।**
**मया हीनं विहीनार्थं सर्वतः परिपालय॥**

**त्वमप्यस्य हि दाता च परित्राता च सर्वशः।**
**भयेष्वभयदश्चैव यथाहं प्लवगेश्वर॥**

अनेन पितुरनन्तरं पितृव्य एव पितृस्थानीयः। तेन च स्वपुत्रवद्भ्रातृपुत्राः संरक्षणीयाः। तैरपि पितृव्ये पितृवद्वृत्तिः कर्तव्येति सूचितम्। अत एव पूर्वतनं तारावाक्यम्—

नचाहं हरिराज्यस्य प्रभवाम्यङ्गदस्य वा। पितृव्यस्तस्य सुग्रीवस्सर्वकार्येष्वनन्तरः॥
पिता हि बन्धुः सर्वस्य न माता हरिसत्तम, इति॥

**भारतेऽपि**—

यथैव पाण्डोस्ते वीराः कुन्तीपुत्रा महारथाः। तथैव धर्मतस्सर्वे मम पुत्रा न संशयः॥
यथैव मम पुत्राणामिदं राज्यमसंशयम्। तथैव पाण्डुपुत्राणामिदं राज्यमसंशयम् इति॥

**वनपर्वण्यपि** धृतराष्ट्रः —

असंशयं तेऽपि ममैव पुत्रा दुर्योधनो मम देहात्प्रसूत इति ।

**उद्योगेऽपि** —

पितृवत्त्वयि वर्तन्ते तेषु वर्तस्व पुत्रवत् । आर्जवं प्रतिपद्यस्व पुत्रेषु सततं विभो ॥ इति ।

त्वत्तुल्यपराक्रमोऽयं तारेयः तव रक्षोभिः समितौ पुरतः प्रभविष्यन्नितरासुकराणि कर्माणि विक्रम्य करिष्यति । इयमपि सुषेणदुहिता विविधौत्पातिके सूक्ष्मार्थविनिर्णये च अतीव निपुणा समयोचितं यद्ब्रूते निर्विचिकित्स तन्निर्वाह्यम् ।

**राघवस्य च ते कार्यं कर्तव्यमविशंकया ।**
**स्यादधर्मो ह्यकरणे त्वां च हिंस्याद्विमानितः ॥**

अनेन — प्रत्युपकारः कर्तव्य इति सूचितम् ।

तथा च **कालिदासः** —

सम्मोचितस्सत्ववता त्वयाहं शापाच्चिरप्रार्थितदर्शनेन ।
प्रतिप्रियं चेद्भवतो न कुर्यां व्यर्था हि मे स्यात्स्वपदोपलब्धिः ॥ इति ॥

इत्यभिधाय उदारश्रियं मालमेना गृहाणेति संचोदितस्सुग्रीवः गतहर्षस्तां मालां प्रतिजग्राह । ततो वाली स्वमरणं निश्चित्य पुत्राय चरमसन्देशमित्थमाचचक्षे —

**संसिद्धः प्रेत्यभावाय स्नेहादङ्गदमब्रवीत् ।**
**देशकालौ भजस्वाद्य क्षममाणः प्रियाप्रिये ॥**

**सुखदुःखसह काले सुग्रीववशगो भव ।**
**न चातिप्रणयः कार्यः कर्तव्योऽप्रणयश्च ते ॥**

**उभयं हि महादोषः तस्मादन्तरदृग्भव ।**

अनेन राजपुत्राणां पितरि वर्तितव्या धर्मा उक्ताः । तथा च **नीतिसारे** —

पितृसेवारतस्तिष्ठेत्कायवाङ्मनसैः सदा । तत्कर्म कुर्यान्नियतं येन तुष्टो भवेत्पिता ॥
तन्न कुर्याद्येन पिता मनागपि न तुष्यति । यस्मिन् पितुर्भवेत्प्रीतिः स्वयं तस्मिन्प्रियं चरेत् ॥
यस्मिन्द्वेषं पिता कुर्यात्स्वस्यापि द्वेष्य एव सः । असम्मतं विरुद्धं च पितुर्नैव समाचरेत् ॥
प्राप्यापि युवराजत्वं प्राप्नुयाद्विकृतिं न च । स्वसम्पत्तिमदान्नैव मातरं पितरं तथा ॥

भ्रातरं भगिनीं चापि अन्यान्वा राजवल्लभान् । महाजनांस्तथा राष्ट्रे नावमन्येन्न पीडयेत् ॥
प्राप्यापि महतीं वृद्धिं वर्तेत पितुराज्ञया । पुत्रस्य पितुराज्ञा हि परमं भूषणं स्मृतम् ॥
सोदरेषु च सर्वेषु नाधिक्यं संप्रदर्शयेत् । भ्रातॄणामवमानेन बहवो हि विनाशिताः ॥
पितुराज्ञोल्लंघनेन प्राप्यापि मदमुत्तमम् । तस्माद्भ्रष्टा भवंतीह दासवद्राजपुत्रकाः ॥
एवम्महाविरोधेन राजपुत्रो वसन्गृहे । त्यागी च सत्वसम्पन्नः सर्वान्कुर्यात्स्वके वशे ॥
शनैः शनैः प्रवर्धेत शुक्लपक्षमृगांकवत् । एवंवृत्तो राजपुत्रो राज्यं प्राप्याप्यकण्टकम् ॥

सहायवान्महामात्यश्चिरं भुङ्क्ते वसुन्धराम् ।

इत्यनुशास्य विवृतनयनदशनो वाली दिष्टां गतिमवाप ।

ततो गतासुं तमवलोक्य नीलतारप्रमुखाः शाखामृगास्तारामुखा वानर्यश्च 'त्वत्सनाथा वयमनाथाः । अद्य सेयं राजधानी निरुत्सवा संजाता' इति बहुविधं परिदेवयमानाः प्रकाममायस्ता बभूवुः ॥

त्रयोविंशचतुर्विंशयोः — ततः सुषेणदुहिता तारा नीलेन समुद्धृतशल्यं भर्तारमालिङ्ग्य सकरुणं विललाप, मामिहानाथां कथं विहाय गतोऽसि ।

"शूराय न प्रदातव्या कन्या खलु विपश्चिता ।
शूरभार्यां हतां पश्य सद्यो मां विधवां कृताम् ॥

अनेन शूराय कन्या न दातव्येत्युक्तम् । तथा च कात्यायनः —

दूरस्थानामविद्यानां मोक्षमार्गानुसारिणाम् ।
शूराणां निर्धनानां च न देया कन्यका बुधैः ॥ इति ॥

पतिहीना तु या नारी कामं भवतु पुत्रिणी ।
धनधान्यैः सुपूर्णापि विधवेत्युच्यते जनैः ॥

क गच्छामि, किं करिष्यामीति विलपन्तीं तारां रामशरनिकृत्तदेहं वालिनं चावलोक्य व्यथितहृदयस्सुग्रीवो राममित्याचचक्षे-महानुभावेन भवता प्रतिज्ञेयं निर्वर्तिता, तदधुना मत्प्राणरक्षकं महानुभावं भ्रातरं निहत्य राज्यमहं कथं भोक्ष्ये ॥

न त्वां जिघांसामि चरेति यन्मामयं महात्मा मतिमानुवाच ।
तस्यैव तद्राम वचोनुरूपं इदं पुनः कर्म च मेऽननुरूपम् ॥

द्रुमशाखावभग्नोऽहं मुहूर्तं परिनिश्वसन् ।
सान्त्वयित्वा त्वनेनोक्तो न पुनः कर्तुमर्हसि ॥

भ्रातृत्वमार्यभावश्च धर्मश्चानेन रक्षितः ।
मया कोपश्च कामश्च कपित्वं च प्रदर्शितम् ॥

अचिन्तनीयं परिवर्जनीयं अनीप्सनीयं त्वनपेक्षणीयम् ।
प्राप्तास्मि पाप्मानमिमं वयस्य भ्रातुर्वधात्त्वाष्ट्रवधादिवेन्द्रः ॥

अधर्मयुक्तं कुलनाशयुक्तं एवंविधं राघव कर्म कृत्वा ।
पापस्य कर्तास्मि विगर्हितस्य क्षुद्रस्य लोकावमतस्य चैव ॥

अनेन भ्रातृवधः पापाधायक इत्युक्तम् — तथा च कर्णपर्वण्यर्जुनं प्रति भगवान् —

स भवान्धर्मभीरुत्वाद्ध्रुवं यायान्महत्तमः ।
नरकं घोररूपं च ध्रुवं ज्येष्ठस्य ते वधात्, इति ॥

त्वाष्ट्रवधसंभूतमहेन्द्रणपपरिग्रहीतारो महीस्त्रीजलवृक्षा इव को नाम कपेर्मम पाप्मानं भजेत । पापदूषितो वा कथमहं महत्सु सम्माननमर्हामि । कथं वा भ्रातुर्महात्मनो वालिनो वियोगमङ्गदस्य परिदेवनं च सोढ्वा जीवामि —

सुतस्सुलभ्यस्सुजनस्सुवश्यः कुतस्तु पुत्रस्सदृशोऽङ्गदेन ।
स चापि विद्येत न वीर देशो यस्मिन्भवेत्सोदरसन्निकर्षः ॥

अनेन सुगुणः पुत्रो दुर्लभः सोदरसन्निकर्षोऽप्यलभ्यः इत्युक्तम् । तथा च रुक्मिणीं प्रति कृष्णः —

नापुत्री विन्दते लोकान् कुपुत्राद्भन्ध्यता वरा । कुपुत्रो नरको यस्मात्सुपुत्रः स्वर्ग एव हि ॥

तस्माद्विहीनं यत्पुत्रं श्रुतवन्तं दयापरम् ।
विद्या च विनयो यस्मात्तस्मात्पुत्रं सुधार्मिकम् ।
इच्छेत्पुत्रं पुत्रकामः पुरुषो यत्नवान् भवेत् ॥ इति ॥

एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः ॥ इति ॥

सोदरसन्निकर्षविषये युद्धकाण्डे —

देशे देशे कलत्राणि देशे देशे च बान्धवाः। तं तु देशं न पश्यामि यत्र भ्राता सहोदरः॥ इति रामवाक्यस्य व्याख्यानावसरे प्रपञ्चयिष्ये। तदधुना प्रवेक्ष्यामि दीप्तमग्निं जलं वा। सीतागवेषणमपि भवदाज्ञाकिंकरा हनुमत्प्रमुखास्साधयिष्यन्ति। तद्भवदाज्ञामाकांक्षमाणं मामनुजानीहीति। ततस्तदवस्थमित्रदर्शनेन संजातबाष्पलोचनं कपिप्रधानैस्समाश्वासिता तारैवमाह — सीताविश्लेषदुःखगौरवं जानता भवता येन शरेण दिव्यां गतिं प्रापितो मत्प्रियस्तेनैव शरेणाहमपि तत्समीपं प्रापणीया। भर्त्रात्मभूताया मम वधात् स्त्रीवधदोषस्तव न भविष्यति, यतः —

**शास्त्रप्रयोगाद्विविधाच्च वेदादात्मा ह्यनन्यः पुरुषस्य दाराः।**

अनेन स्त्रियः पुरुषस्यात्मभूता इत्युक्तम्। तथा च श्रुतिः — अर्धो वा एष आत्मनो यत्पत्नीति। आदिपर्वण्यपि —

अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमस्सखा इति।

**पञ्चविंशे** — ततो रामस्त्वादृशीनां वीरभार्याणां नियतिनियमितसुखदुःखप्राप्तौ अतिहर्षो विषादो वा नोचितः।

**न कालादुत्तरं किञ्चित्कर्म शक्यमुपासितुम्।**
**नियतिः कारणं लोके नियतिः कर्मसाधनम्॥**

**नियतिस्सर्वभूतानां नियोगेष्विह कारणम्।**
**न कर्ता कस्यचित्कश्चिन्नियोगे चापि गोचरः॥**

**स्वभावे वर्तते लोकः तस्य कालः परायणम्।**
**न कालः कालमत्येति न कालः परिहीयते॥**

**स्वभावं च समासाद्य न कश्चिदतिवर्तते।**
**न कालस्यास्ति बन्धुत्वं न हेतुर्न पराक्रमः॥**

**न मित्रज्ञातिसंबन्धः कारणं नात्मनो वशम्।**
**किन्तु कालपरीणामो द्रष्टव्यस्साधु पश्यता॥**

**धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः।**
**इतः स्वां प्रकृतिं वाली गतः प्राप्तः क्रियाफलम्॥**

धर्मार्थकामसंयोगैः पवित्रं प्लवगेश्वरः ।
स्वधर्मस्य च संयोगाज्जितस्तेन महात्मना ॥

स्वर्गः परिगृहीतश्च प्राणानपरिरक्षता ।
एषा वै नियतिः श्रेष्ठा यां गतो हरियूथपः ॥

तदलं परितापेन प्राप्तकालमपास्यताम् ॥

अत्र नियतिशब्दापरपर्यायं जन्मान्तरकृतं कर्म कालमपेक्ष्य फलति, कालोऽपि पूर्वकृतकर्मसापेक्ष एव, न स्वतन्त्रः । एवं कालकर्मपराधीनः पुरुषोऽपि न कर्मणि स्वतन्त्रः । अतः स्वभावपरम्परासादितकर्मपरिपाककालानुरोधेन युद्धे मृतो वाली स्वकर्मवशेन जितस्वर्गो न शोच्य इत्युक्त्या परप्रयुक्तमपि दुःखं स्वकृतपूर्वकर्मवशादेव प्राप्तमिति मत्वा परस्मिन् दोषबुद्धिश्शोको वा न कर्तव्य इति सूचितम् ॥

तथा चानुशासनिके :—

सोऽहं तव ह्यन्तकरः सुहृद्वधकरस्तथा । न शान्तिमधिगच्छामि पश्यंस्त्वां दुःखितं क्षितौ ॥

इति परितप्यमानं धर्मपुत्रं प्रति भीष्मः—

परतन्त्रं कथं हेतुमात्मानमनुपश्यसि । कर्मणां हि महाभाग सूक्ष्मं ह्येतदतीन्द्रियम् ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् । संवादं मृत्युगौतम्योः काललुब्धकपन्नगैः ॥
गौतमी नाम कौन्तेय स्थविरा शमसंयुता । सर्पेण दष्टं स्वं पुत्रमपश्यद्गतचेतनम् ॥
अथ तं स्नायुपाशेन बद्ध्वा सर्पममर्षितः । लुब्धकोर्जुनको नाम गौतम्यास्समुपानयत् ॥
स चाब्रवीदयं तेऽद्य पुत्रहा पन्नगाधमः । ब्रूहि क्षिप्रं महाभागे वध्यतां केन हेतुना ॥
अग्नौ प्रक्षिप्यतामेष छिद्यतां खण्डशोऽपि वा । न ह्ययं बालहा पापः चिरं जीवितुमर्हति ॥

गौतम्युवाच :—

विसृजैनमबुद्धिस्त्वं अवध्योर्जुनक त्वया । को ह्यात्मानं गुरुं कुर्यात्प्राप्तव्यमविचिन्तयन् ॥
प्लवन्ते धर्मलघवो लोकेंभासि यथा प्लवाः । मज्जन्ति पापगुरवः शस्त्रं स्कन्नमिवोदके ॥

हत्वा चैनं नामृतस्स्यादयं मे जीवत्यस्मिन् कौऽत्ययः स्यादवध्ये ते ।
अस्योत्सर्गे प्राणयुक्तस्य जन्तोर्मृत्योर्लोकं कोनु गच्छेदनन्तम् ॥

लुब्धकः— जानाम्यहं देवि गुणागुणज्ञे सर्वार्तियुक्ता गुरवो भवन्ति ।
स्वस्थस्यैते तूपदेशा भवन्ति तस्मात्क्षुद्रं सर्पमेनं हनिष्ये ॥

शमार्थिनः कालगतिं वदन्ति सत्यच्युतं त्वर्थविदस्त्यजन्ति।
श्रेयःक्षयं शोचति नित्यमोहात्तस्माच्छिशुं मुञ्च हते भुजङ्गे॥

**गौतमी** :— आर्तिर्नैवं विद्यतेऽस्मद्विधानां धर्मात्मानस्सर्वदा सज्जना हि।
नित्ययस्तो बालकोऽप्यस्य तस्मादीशो नाहं पन्नगस्य प्रमाथे॥

न ब्राह्मणानां कोपोस्ति कुतः कोपाच्च यातना। मार्द्दवात्क्षम्यतां साधो मुच्यतामेष पन्नगः॥

**लुब्धकः** —

हत्वा लाभः श्रेय एवाव्ययः स्याल्लभ्यो लाभः स्याद्बलिभ्यः प्रशस्तः।
कालाल्लाभो यस्तु सत्यो भवेत श्रेयोलाभः कुत्सिते‌ऽस्मिन्हते स्यात्॥

**गौतमी** —

कानु प्राप्तिः गृह्य शत्रुं निहत्य का कामाप्तिः प्राप्य शत्रुं न मुक्त्वा।
तस्मात्सौम्याहं न क्षमे नो भुजङ्गे मोक्षार्थं वा कस्य हेतोर्न कुर्याम्॥

**लुब्धकः** —

अस्मादेकाद्बहवो रक्षितव्या नैको बहुभ्यो गौतमि रक्षितव्यः।
कृतागसं धर्मविदस्त्यजन्ति सरीसृपं पापमिमं जहि त्वम्॥

**गौतम्युवाच** —

नास्मिन् हते पन्नगे पुत्रको मे संप्राप्स्यते लुब्धक जीवितं वै।
गुणं चान्यन्नास्य वधे प्रपश्ये तस्मात्सर्पं लुब्धक मुञ्च जीवम्॥

**लुब्धकः** —

वृत्रं हत्वा देवराट् श्रैष्ठ्यभाग्वै यज्ञं हत्वा भागमवाप चैव।
शूली देवो देववृत्तं चर त्वं क्षिप्रं सर्पं जहि माभूत्ते विशङ्का॥

**भीष्मः** —

असकृत्प्रोच्यमानापि गौतमी भुजगं प्रति। लुब्धकेन महाभागा पापे नैवाकरोन्मतिम्॥
ईषदुत्स्मयमानस्तु कृच्छ्रात्संस्तभ्य पन्नगः। उत्ससर्ज गिरं मन्दां मानुषीं पाशपीडितः॥

**सर्पः** —

कोन्वर्जुनक दोषोऽत्र विद्यते मम बालिश। अस्वतन्त्रं हि मां मृत्युरवशं यदचूचुदत्॥

तस्यायं वचनाद्दृष्टो न कोपेन न काम्यया ।
तस्य तत्किल्बिषं लुब्ध विद्यते यद्यकिल्बिषम् ॥

**लुब्धकः** —

यदन्यवशगेनेदं कृतं ते पन्नगाशुभम् । कारणं वै त्वमप्यत्र तस्मात्त्वमपि किल्बिषी ॥
मृत्पात्रस्य क्रियायां हि दण्डचक्रादयो यथा । कारणत्वे प्रकल्पन्ते तथा त्वमपि पन्नग ॥

किल्बिषी चापि मे वध्यः किल्बिषी चापि पन्नग ।
आत्मानं कारणं ह्यत्र त्वमाख्यासि भुजङ्गम ॥

**सर्पः** —

सर्व एते ह्यस्ववशा दण्डचक्रादयो यथा । तथाहमपि तस्मान्मे नैष दोषो मतस्तव ॥
अथवा मतमेतत्ते तेऽप्यन्योन्यप्रयोजकाः । कार्यकारणसन्देहो भवत्यन्योन्यचोदनात् ॥

एवं सति न दोषो मे नास्मि वध्यो न किल्बिषी ।
किल्बिषं समवाये स्यान्मन्यसे यदि किल्बिषम् ॥

**लुब्धकः** —

कारणं यदि न स्याद्वै न कर्तासि त्वमप्युत । विनाशकारणं त्वं च तस्माद्वध्योसि मे मतः ॥
असत्यपि कृते कार्ये नेह पन्नग लिप्यते । तस्मान्नात्रैव हेतुः स्याद्वध्यः किं बहुमन्यसे ॥

**सर्पः** — कार्याभावे क्रिया न स्यात्सत्यसत्यपि कारणे ।
तस्मात्समेस्मिन् हेतौ मे वाच्यो हेतुर्विशेषतः ॥

यद्यहं कारणत्वेन मतो लुब्धक तत्वतः । अन्यः प्रयोगो स्यादत्र किल्बिषी जन्तुनाशने ॥

**लुब्धकः** —

वध्यस्त्वं मम दुर्बुद्धे बालघाती नृशंसकृत् । भाषसे किं बहु पुनः वध्यस्सन्पन्नगाधम ॥

**सर्पः** — यथा हवींषि जुह्वाना मुखे वै लुब्धकर्त्विजः ।
न फलं प्राप्नुवन्त्यत्र फलयोगे तथाह्यहम् ॥

**भीष्मः** —

तथा ब्रुवति तस्मिंस्तु पन्नगे मृत्युचोदिते । आजगाम तथा मृत्युः पन्नगं चाब्रवीदिदम् ॥

मृत्युः —

प्रचोदितोऽहं कालेन पन्नग त्वामचूचुदम्। तद्वज्जलदवत्सर्प कालस्याहं वशानुगः॥
सात्विका राजसाश्चैव तामसा ये च केचन। भावाः कालात्मकास्सर्वे प्रवर्तन्तेह जन्तुषु॥
जंगमाः स्थावराश्चैव दिवि वा यदि वा भुवि। आदित्यश्चन्द्रमा विष्णुरापो वायुर्दिशस्तथा॥
सर्वे कालात्मकास्सर्प कालात्मकमिदं जगत्। प्रवृत्तयश्च लोकेस्मिंस्तथैव च निवृत्तयः॥
तासां विकृतयो याश्च सर्वं कालात्मकं स्मृतम्। आदित्यश्चन्द्रमा विष्णुरापो वायुश्शतक्रतुः॥
अग्निः खं पृथिवी मित्रः पर्जन्यो वसवो दितिः। सरितस्सागराश्चैव भावाभावौ च पन्नग॥
सर्वे कालेन सृज्यन्ते ह्रियन्ते च पुनः पुनः। एवं ज्ञात्वा कथं मां त्वं सदोषं सर्प मन्यसे॥

अथ चैवंगते दोषे मयि त्वमपि दोषवान्।
**सर्पः**– निर्दोषं दोषवन्तं वा न त्वा मृत्यो ब्रवीम्यहम्॥

त्वयाहं चोदित इति ब्रवीम्येतावदेव तु। यदि कालेऽपि दोषोस्ति यदि तत्रापि नेष्यते॥

दोषो नैव परीक्ष्यो मे नह्यत्राधिकृता वयम्।
निर्मोक्षस्तस्य दोषस्य मया कार्यो यथा तथा॥

मृत्योरपि न दोषः स्यादिति मेत्र प्रयोजनम्।

भीष्मः —

सर्पोथार्जुनकं प्राह श्रुतं ते मृत्युभाषितम्। नानागसं मां पाशेन सन्तापयितुमर्हसि॥

लुब्धकः —

मृत्योः श्रुतं मे वचनं तव चैव भुजङ्गम। नैव तावददोषत्वं भवति त्वयि पन्नग॥
मृत्युस्त्वं चैव हेतुर्हि बालस्यास्य विनाशने। उभयं कारणं मन्ये न कारणमकारणम्॥
धिङ्मृत्युं च दुरात्मानं क्रूरं दुःखतरं सताम्। त्वां चैवाहं वधिष्यामि पापं पापस्य कारणम्॥

मृत्युः —

विवशौ कालवशगावावां निर्दिष्टकारणौ। नावां दोषेण गन्तव्यौ यदि सम्यक्प्रपश्यसि॥

लुब्धकः —

युवामुभौ कालवशौ यदि मे मृत्युपन्नगौ। हर्षक्रोधौ यथा स्यातां एतदिच्छामि वेदितुम्॥

मृत्युः —

या काचिदेव चेष्टा स्यात्सर्वा कालप्रचोदिता। पूर्वमेवैतदुक्तं हि मया लुब्धक कालतः ॥

तस्मादुभौ कालवशावावां निर्दिष्टकारिणौ ।
नावां दोषेण गन्तव्यौ त्वया लुब्धक कर्हिचित् ॥

भीष्मः —

अथोपगम्य कालस्तु तस्मिन्धर्मार्थसंशये। अब्रवीत्पन्नगं मृत्युं लुब्धकं चार्जुनं तथा ॥

कालः — न ह्यहं नाप्ययं मृत्युः नायं लुब्धक पन्नगः ॥

किल्बिषी जन्तुमरणे न वयं हि प्रयोजकाः। अकरोद्यदयं कर्म तन्नोर्जुनक चोदकम् ॥

विनाशहेतुर्नान्योस्य वध्यतेयं स्वकर्मणा। यदनेन कृतं कर्म तेनायं निधनं गतः ॥

विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम्। कर्मदायादवान् लोकः कर्मसंबन्धलक्षणः ॥

कर्माणि चोदयन्तीह यथान्योन्यं तथा वयम्। यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति ॥

एवमात्मकृतं कर्म मानवः प्रतिपद्यते। यथा छायातपौ नित्यं सुसंबद्धौ निरन्तरम् ॥

तथा कर्म च कर्ता च संबद्धावात्मकर्मभिः ।
एवं नाहं न वै मृत्युः न सर्पो न तथा भवान् ॥

नचेयं ब्राह्मणी वृद्धा शिशुरेवात्र कारणम्। तस्मिंस्तथा ब्रुवाणे तु ब्राह्मणी गौतमी नृप ॥

स्वकर्मप्रत्ययान् लोकान्मत्वार्जुनकमब्रवीत् ।

गौतम्युवाच —

नैवं कालो न भुजगो न मृत्युरिह कारणम्। स्वकर्मभिरयं बालो निधनं कालतो गतः ॥

मया च तत्कृतं कर्म येनायं मे मृतस्सुतः। यातु कालस्तथा मृत्युर्गच्छार्जुनक पन्नग ॥

भीष्मः —

ततो यथागतं जग्मुर्मृत्युः कालोऽथ पन्नगः। अभूद्विशोकोर्जुनको विशोका चैव गौतमी ॥

एतच्छ्रुत्वा शमं गच्छ माभूच्छोकपरो नृप ।
स्वकर्मप्रत्ययान् लोकान् सर्वे गच्छन्ति वै नृप ॥

नैतत्त्वया कृतं कर्म नापि दुर्योधनेन वै । कालेन तत्कृतं विद्धि निहता येन पार्थिवाः ॥

**वैशम्पायनः** --

इत्येतद्वचनं श्रुत्वा बभूव विगतज्वरः । इति ।

**राजधर्मे** व्यासोऽपि --

सर्वानिवैष पर्यायो मर्त्यान्स्पृशति दुस्तरः । कालेन परिपक्वा हि म्रियन्ते सर्वमानवाः ॥

घ्नन्ति चान्यान्नरा राजन् तानप्यन्ये तथा नराः ।
संज्ञैषा लौकिकी राजन् न हिनस्ति न हन्यते ॥

हन्तीति मन्यते कश्चिन्न हन्तीत्यपि चापरः । स्वभावतस्तु नियतौ भूतानां प्रभवाप्ययौ ॥

नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
अहो दुःखमिति ध्यायन्दुःखस्यापचितिं चरेत् ॥ इति ।

सुखं च दुःखं च भवाभवौ च लाभालाभौ मरणं जीवितं च ।
पर्यायतः सर्वमिहाप्नुवन्ति तस्माद्धीरो नैव हृष्येन्न शोचेत् ॥ इति च ।

युद्धधर्मेण प्राप्तस्वर्गो न शोच्य इत्यत्र **राजधर्मे** भगवान्—

सर्वे त्यक्त्वात्मनः प्राणान् युध्वा वीरा महामृधे ।
शस्त्रपूता दिवं प्राप्ता न ताञ्छोचितुमर्हसि ॥

क्षत्रधर्मरताः शूराः वेदवेदाङ्गपारगाः । प्राप्ता वीरगतिं पुण्यां न तान् शोचितुमर्हसि ॥

आहवे तु हतं शूरं न शोचेत कदाचन । अशोच्यो हि हतश्शूरः स्वर्गे लोके महीयते ॥

इति परिसान्त्व्य झटिति संस्कारकर्म निर्वर्त्यतामिति सुग्रीवमाज्ञापयामास । ततस्समलंकृतायां शिबिकाया वालिनमारोप्य —

**आज्ञापयत्तदा राजा सुग्रीवः प्लवगेश्वरः ।**
**और्ध्वदेहिकमार्यस्य क्रियतामनुकूलतः ॥**

**विश्राणयन्तो रत्नानि विविधानि बहूनि च ।**
**अग्रतः प्लवगा यान्तु शिबिका समनन्तरम् ॥**

**राज्ञामृद्धिविशेषा हि दृश्यन्ते भुवि यादृशाः ।**
**तादृशान्वालिनः क्षिप्रं प्रकुर्वन्नौर्ध्वदेहिकम् ॥**

कृतौर्ध्वदेहिकाः सुग्रीवप्रमुखास्तारामुखाभिस्स्त्रीभिः सह रामनिकटमाजग्मुः ॥

**षड्विंशे** — ततो मन्त्रिश्रेष्ठेन हनुमता भवत्प्रसादलब्धराज्यश्रीः सुग्रीवो भवन्तमर्चितुमिच्छति, तन्मनोरथपरिपूरणाय वानरराजधानीं प्रविशतु भवानिति प्रार्थितो रामः पितुर्वचनपरिपालनाय चतुर्दश समा वने वत्स्यामीति कृतप्रतिज्ञस्य मम ग्राम-नगरप्रवेशोनुचितः, प्लवगेश्वरोऽयं झटिति सचिवैर्भवद्भिरभिषिच्यतामिति हनूमन्त-मभिधाय सुग्रीवमेवमुवाच —

**इममप्यङ्गदं वीर यौवराज्येऽभिषेचय ।**
**ज्येष्ठस्य हि सुतो ज्येष्ठस्सदृशो विक्रमेण ते ॥**

अनेन ज्येष्ठो गुणवान् ज्येष्ठभ्रातृपुत्रोपि यौवराज्येऽभिषेचनीय इत्युक्तम् । अत एवादिपर्वणि —

ततस्संवत्सरस्यान्ते यौवराज्याय पार्थिव । स्थापितो धृतराष्ट्रेण पाण्डुपुत्रो युधिष्ठिरः ॥

धृतिस्थैर्यसहिष्णुत्वादानृशंस्यात्तथार्जवात् ।
भृत्यानामनुकम्पार्थं तथैव स्थिरसौहृदात् ॥ इति ।

**पूर्वोऽयं वार्षिको मासः श्रावणः सलिलागमः ।**
**प्रवृत्ताः सौम्य चत्वारो मासा वार्षिकसंज्ञिकाः ॥**

**नायमुद्योगसमयः प्रविश त्वं पुरीं शुभाम् ।**
**अस्मिन्वत्स्याम्यहं सौम्य पर्वते सहलक्ष्मणः ॥**

**कार्तिके समनुप्राप्ते त्वं रावणवधे यत ।**

अनेन वर्षाकाले जलकर्दमादिदोषाद्राजभिर्यात्रा न कर्तव्या, शरदि यात्रोद्योगः कर्तव्य इत्युक्तम् । अत एवाग्रे अष्टाविंशे **रामवाक्यं** —

स्थिता हि यात्रा वसुधाधिपानां प्रवासिनो यान्ति नराः स्वदेशान् ।
वृत्ता यात्रा नरेन्द्राणां सेना प्रतिनिवर्तते । वैराणि चैव मार्गाश्च सलिलेन समीकृताः ॥ इति ।

**एकोनत्रिंशेऽपि** —

सूर्यातपक्रामणनष्टपङ्का भूमिस्समुत्पादितसान्द्ररेणुः ।
अन्योन्यवैरेण समावृतानामुद्योगकालोद्य नराधिपानाम् ॥

अन्योन्यं बद्धवैराणां जिगीषूणां नृपात्मज ।
उद्योगसमयस्सौम्य पार्थिवानामुपस्थितः ॥ इति ॥

रघुवंशेऽपि —

सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् ।
यात्रायै प्रेरयामास तं शक्तेः प्रथमं शरत् ॥ इति ।

तदधुना झटिति प्रविश स्वमालयं, भवदुदयमाकाक्षतः सुहृज्जनानपि सहर्षयेति श्रीरामवचनेन स्वपुरीं प्रविष्टः सुग्रीवः प्रमुदितानि वानरसहस्राणि सप्रहर्षं विलोकयन् विविधविनोदास्पदं स्वभ्रातृभवनं प्रविवेश । ततस्तत्सुहृदो हनुमत्प्रमुखाः सचिवाः संभृत्य सकलसभारान् नदीनदसागरजलानि समाहृत्य शातकुंभमयैः कुम्भैः—

**शास्त्रदृष्टेन विधिना महर्षिविहितेन च ।**
**अभ्यषिंचन्त सुग्रीवं प्रसन्नेन सुगन्धिना ॥**

**रामस्य तु वचः कुर्वन् सुग्रीवो हरिपुङ्गवः ।**
**अंगदं सम्परिष्वज्य यौवराज्येऽभ्यषेचयत् ॥**

**अंगदे चाभिषिक्ते तु सानुक्रोशाः प्लवंगमाः ।**
**साधुसाध्विति सुग्रीवं महात्मानोऽभ्यपूजयन् ॥**

**रामं चैव महात्मानं लक्ष्मणं च पुनः पुनः ।**
**प्रीताश्च तुष्टुवुस्सर्वे तादृशे तत्र वर्तिनि ॥**

अनेन उचितं समीचीनं कर्म यः करोति तस्य सकलजनश्लाघ्यता भवतीति सूचितम् ॥

तथा च **भीष्मपर्वणि** युद्धसमये गुरुजननमस्कारपूर्वकं युद्धायाभ्यनुज्ञाग्रहणानन्तरं सैनिकाः —

गौरवं पाण्डुपुत्राणां मान्यान्मानयतश्च तान् । दृष्ट्वा महीक्षितस्तत्र पूजयांचक्रिरे भृशम् ॥
सौहृदं च कृपां चैव प्राप्तकालं महात्मनाम् । दयां च ज्ञातिषु परां कथयाञ्चक्रिरे नृपाः ॥
साधु साध्विति सर्वत्र निश्चेरुः स्तुतिसंहिताः । वाचः पुण्याः कीर्तिमतां मनोहृदयहर्षणाः ॥

म्लेच्छाश्चार्याश्च ये तत्र ददृशुरशुश्रुवुस्तदा ।
वृत्तं तत्पाण्डुपुत्राणां रुरुदुस्ते सगद्गदाः ॥ इति ।

**निवेद्य रामाय तदा महात्मने महाभिषेकं कपिवाहिनीपतिः ।**
**रुमां च भार्यां प्रतिलभ्य वीर्यवान् अवाप राज्यं त्रिदशाधिपो यथा ॥**

**सप्तविंशे** — ततस्सलक्ष्मणो रामभद्रः गुहां प्रविष्टं सुग्रीवमवलोक्य नानाविध-वृक्षलतागुल्मसकुलं सिंहशार्दूलवृकादिसत्वैरतिभयंकरं प्रस्रवणं गिरिमभ्येत्य तस्य गिरेर्महतीं गुहामवलोकयन् लक्ष्मणमिदमाह —

इयं गिरिगुहा रम्या विशाला युक्तमारुता।
अस्यां वत्स्यामि सौमित्रे वर्षरात्रमरिन्दम॥

अस्याश्च गुहायास्समीपे पङ्कजसमलंकृता नलिनी —

अहो सुरमणीयोऽयं देशः शत्रुनिषूदन।
इहं रंस्याव सौमित्रे साध्वत्र निवसावहै॥

इत्युक्त्वा न्यवसत्तत्र राघवः सहलक्ष्मणः।

ततश्चातिमनोहरेऽपि प्रस्रवणशिखरे भार्याहरणजनितेन खेदेन कलानिधिदर्शनेन निशास्वपगतनिद्रं शोचन्तं रामभद्रं —

अलं वीर व्यथां गत्वा न त्वं शोचितुमर्हसि।
शोचतो व्यवसीदन्ति सर्वार्था विदितं हि ते॥

शरत्कालं प्रतीक्षस्व प्रावृट्कालोऽयमागतः।
ततस्सराष्ट्रं सगणं त्वं वधिष्यसि रावणम्॥

इत्यादिवचनैर्लक्ष्मणः पर्यसान्त्वयत् —

**अष्टाविंशे** —

स तथा वालिनं हत्वा सुग्रीवमभिषिच्य च।
वसन्माल्यवतः पृष्ठे रामो लक्ष्मणमब्रवीत्॥

अयं स कालस्संप्राप्तः समयोद्य जलागमः।
संपश्य त्वं नभो मेघैस्संवृतं गिरिसन्निभैः॥

शक्यमम्बरमारुह्य मेघसोपानपङ्क्तिभिः।
कुटजार्जुनमालाभिरलंकर्तुं दिवाकरम्॥

सन्ध्यारागोत्थितैस्ताम्रैरन्तेष्वधिकपाण्डरैः।
स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवांबरम्॥

क्वचित्प्रकाशं क्वचिदप्रकाशं नभः प्रकीर्णाम्बुधरं विभाति।
क्वचित्क्वचित्पर्वतसन्निरुद्धं रूपं यथा शान्तमहार्णवस्य॥

विद्युत्पताकास्सबलाकमालाः शैलेन्द्रकूटाकृतिसन्निकाशाः।
गर्जन्ति मेघाः समुदीर्णनादा मत्ता मृगेन्द्रा इव संयुगस्थाः॥

नीलेषु नीला नववारिपूर्णा मेघेषु मेघाः प्रतिभान्ति सक्ताः।
दवाग्निदग्धेषु दवाग्निदग्धाः शैलेषु शैला इव बद्धमालाः॥

मेघास्समुद्भूतसमुद्रनादा महाजलौघैर्गगनावलंबाः।
घनोपगूढं गगनं सतारं न भास्करो दर्शनमभ्युपैति॥

इत्यादिश्लोकैर्मेघाना सोपानाकारत्व सन्ध्यारक्तत्व पर्यन्तपाण्डरत्व सविद्युत्व गर्जनवत्वादीनि सद्योवृष्टिचिह्नान्युक्तानि। तथाच ज्योतिःशास्त्रे **तोडरानन्दे**ः—

पर्यन्तेषु सुधाशशाङ्कधवला मध्येञ्जनालित्विषः
स्निग्धानेकपुटाः क्षरज्जलकणास्सोपानविच्छेदिनः।
माहेन्द्रीप्रभवाः प्रयान्ति परतः प्राग्वांबुपाशोद्भवा
एते वारिमुचः सृजन्ति नचिरादंभः प्रभूतं भुवि॥

मयूरशुकचाषचातकसमानवर्णा यदा जपाकुसुमपङ्कजद्युतिमुषश्च सन्ध्याघनाः।
जलोर्मिनगनक्रकच्छपवराहमीनोपमाः प्रभूतपुटसचया नतु चिरेण यच्छन्त्यपः॥

स्तनितं निशि विद्युतो दिवा रुचिरनिभा यदि दण्डवत्स्थिताः।
पवनश्च पुरस्सुशीतलो यदि सलिलस्य तदागमो भवेत्॥ इति।

अन्यान्यपि वृष्टिचिह्नानि तत्रैव—

उदयशिखरसंस्थो दुर्निरीक्ष्योतिदीप्तो द्रुतकनकनिकाशः स्निग्धवैडूर्यकान्तिः।
तदहनि कुरुतेंभस्तोयकाले विवस्वान् प्रतपति यदि चोच्चैः खं गतोतीव तीक्ष्णम्॥

विरसमुदकं गोनेत्राभं वियद्विमला दिशो लवणविकृतिः काकाण्डाभं यदा च भवेन्नभः।
पवनविगमः पोप्लूयन्ते झषाः स्थलकामिनो रसितमसकृन्मण्डूकानां जलागमहेतवः॥

मार्जारा भृशमवनिं नखैर्लिखन्तो लोहानां मलनिचयः सविस्रगन्धः।
रथ्यायां शिशुरचिताश्च सेतुबन्धाः संप्राप्तं जलमचिरान्निवेदयन्ति॥

गिरयोंजनचूर्णसन्निभा यदि वा बाष्पनिरुद्धकन्दराः।
कृकवाकुविलोचनोपमाः परिवेषाश्शशिनश्च वृष्टिदाः॥

विनोपघातेन पिपीलिकानामण्डोपसंक्रान्तिरहिव्यवायः ।
द्रुमाधिरोहश्च भुजङ्गमानां वृष्टेर्निमित्तानि गवां प्लुतं च ॥

शुककपोतविलोचनसन्निभो मधुनिभश्च यदा हिमदीधितिः ।
प्रतिशशी च यदा दिवि जायते पतति वारि तदप्यचिरान्नवम् ॥

वल्लीनां गगनतलोन्मुखाः प्ररोहाः स्नायन्ते यदि जलपांसुभिर्विहङ्गाः ।
सेवन्ते यदि च सरीसृपास्तृणाग्राण्यासन्नो भवति तदा जलस्य पातः ॥

यदि तित्तिरिपत्रनिभं गगनं मुदिताः प्रवदन्ति च पक्षिगणाः ।
उदयास्तमये सवितुः द्युनिशं त्वचिरेण घना विसृजन्ति जलम् ॥

यद्यमोघकिरणास्सहस्रगोरस्तभूधरकरा इवोच्छ्रिताः ।
भूसमं च रसते यदांबुदस्तन्महद्भवति वृष्टिलक्षणम् ॥

अस्तभूधरस्य करा हस्ता इव किरणा यस्य; उदयसमये एतद्द्रष्टव्यम् । अमोघत्वं च कराणां पारिभाषिकम् । तद्यथा —

शुक्लाः करा दिनकृतो दिवादिमध्यान्तगामिनः स्निग्धाः ।
अव्युच्छिन्ना ऋजवो वृष्टिकरास्त्वमोघाख्याः ।
उदयास्तमये भानोर्ये दीर्घा रश्मयस्त्वमोघास्ते ॥ इति ।

**नवमासधृतं गर्भं भास्करस्य गभस्तिभिः ।**
**पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम् ॥**

अत्र मेघाः सूर्यरश्मिमरुदादिभिः सामुद्रमुदकं गृहीत्वा गर्भवत्कार्तिकमासप्रभृति नवमासधृतं सस्यानां षड्रससम्पत्तिहेतुभूतं शुद्धमुदकं श्रावणे मासि मुञ्चन्तीति सूचितम् । तथा च रश्मिमरुद्भ्यां सामुद्रोदकग्रहणे **तैत्तिरीयश्रुतिः** — 'याभि-रादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति, पर्जन्येनौषधिवनस्पतयः प्रजायन्ते' इति । 'उदीरयथा मरुतस्समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिण' इति च । **कार्तिकमासप्रभृति** गर्भधारणं **तोडरानन्दे** प्रतिपादितम् —

शुक्लपक्षमतिक्रम्य कार्तिकस्य विचारयेत् ।
गर्भाणां सम्भवं सम्यक् सस्यसम्पत्तिकारणम् ॥ इति ।

**हरिवंशेऽपि —**

दुदोह स विभुर्गा वै शक्रो दिव्याः पयस्वलाः ।
ताः क्षरन्ति नवं क्षीरं मेध्यं मेघौघधारितम् ॥
तज्जलं वज्रनिर्घोषं विमुञ्चन्ति नभोगताः । एवमेतत्पयो दुग्धं गोभिः सूर्यस्य शाश्वतम् ॥
पर्जन्यः सर्वभूतानां भवाय भुवि वर्षति ॥ इति ।

सूर्यकिरणैर्जलग्रहणं **वनपर्वणि:** —

नत्वोत्तरायणं तेजो रसानुद्धृत्य रश्मिभिः ।
दक्षिणायनमावृत्तो महीं निविशते रविः ॥ इति ।

**कालिदासोऽपि** —

सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ इति ।

मेघानां गर्भसंभवचिह्नानि च उदगैशानैन्द्रीदिक्षु आह्लादकरो मृदुर्वातः आकाशनैर्मल्यं, चन्द्रसूर्ययोः स्निग्धसितस्थूलपरिवेषः, स्थूलतरस्निग्धबहुलसूचीक्षुराकारा लोहिता मेघाः, वियद्विशुद्धेन्दुनक्षत्रं, नभोनीलता, इन्द्रधनुर्मन्द्रगर्जितविद्युत्प्रतिसूर्ययुक्ता सन्ध्या, उदगैशानैन्द्रीदिक्षु पक्षिमृगादिशब्दराहित्यं, कुजबुधशुक्रशनिगुरूणां स्वाधिष्ठान-नक्षत्रादुदक्संचाररूपप्रादक्षिण्यं, स्थौल्यस्निग्धमयूखतोपसर्गराहित्यं च, तरूणामनुप-सृष्टाङ्कुरता, नरचतुष्पदामतिहर्ष इत्येतानि । तथा च ज्योतिश्शास्त्रे **तोडरानन्दः**—

ह्लादिमृदूदक्शिवशक्रदिग्भवो मारुतो वियद्विमलम् ।
स्निग्धसितबहुलपरिवेषपरिवृतौ हिममयूखार्कौ ॥
पृथुबहुलस्निग्धघनं सूचीक्षुरलोहिताभ्रयुतम् । काकाण्डमेचकाभं वियद्विशुद्धेन्दुनक्षत्रम् ॥
सुरचापमन्द्रगर्जितविद्युत्प्रतिसूर्यकैः प्रतियुता शुभा सन्ध्या ।
शशिशिवशक्राशास्थाः शांतरवाः पक्षिमृगसंघाः ॥
विपुलाः प्रदक्षिणचराः स्निग्धमयूखा ग्रहा निरुपसर्गाः ।
तरवश्च निरुपसृष्टांकुरा नरचतुष्पदा हृष्टाः ॥ इति ।

तत्रापि माघे मासि मेघाडम्बरहिमवातचन्द्रसूर्यपरिवेषणानि श्रावणमास-वृष्टिप्रदगर्भचिह्नानि । फाल्गुनमासि अभ्रसंघातवृष्टिस्तनितपुरोवाताः भाद्रपदवृष्टिगर्भ-चिह्नानि । चैत्रमासि वृक्षाणां बहुपुष्पफलससिकतवातहिमवर्षाभ्राणि आश्वयुजे मासि वृष्टिचिह्नानि । वैशाखे मासि प्रदक्षिणावर्तवायुः स्वल्पा वृष्टिश्च कार्तिकमास-गर्भमासचिह्नानि । तथा च **तोडरानन्दे** —

सितमभ्रं तथा वायुः चन्द्रार्कपरिवेषणम् । माघे मासि परीक्षेत श्रावणे वृष्टिमादिशेत् ॥
फाल्गुने चाभ्रसंघानो वृष्टिस्तनितमेव च । पुरोवाताश्च ये प्रोक्ताः मासि भाद्रपदे शुभाः ॥
बहुपुष्पफला वृक्षा वाताः शर्करवर्षिणः । शीतवर्षं तथाभ्राणि चैत्रे चाश्वयुजे वदेत् ॥
वहन्ति मृदवो वाताः स्वल्पं वर्षं प्रदक्षिणाः । वैशाखे तानि रूपाणि कार्तिके मासि वर्षति ॥
इति । येषु नक्षत्रेषु संभूतो गर्भः बहुतोयदो भवति तानि **तोडरानन्दे**—
भाद्रपदाद्वयविश्वांबुदैवतैतामहेष्वथर्क्षेषु । सर्वेष्वृतुषु विवृद्धो गर्भो बहुतोयदो भवति ॥

एतच्चोक्तेषु नक्षत्रेषु दोषाभावविषयं, सति तु दोषे उपघात एव । तथा च **गर्गः**—
प्राजापत्यं मृगाश्लेषा रौद्रं चानिलवारुणम् । आषाढाद्वितयं चैव तथा भाद्रपदाद्वयम् ॥
नक्षत्रदशकं चैतद्यदि स्याद्ग्रहदूषितम् । न गर्भाः सम्पदं यान्ति योगक्षेमो न कल्पयेत् ॥
उल्कयाभिहतं वापि केतुना वाप्यधिष्ठितम् । न गर्भास्संपदं यान्ति वासवश्च न वर्षति ॥

गर्भचिह्नानि च —

मुक्तारजतनिकाशास्तमालनीलोत्पलांजनाभासाः ।
जलचरसत्वाकारा गर्भेषु घनाः प्रभूतजलाः ॥
तीव्रदिनकरकिरणाभितापिता मन्दमारुता जलदाः ।
रूषिता इव धाराभिः विसृजन्त्यंभः प्रसवकाले ॥

गर्भधारणलक्षणं च —

सविद्युतः सपृषतः सपांसूत्करमारुताः । सार्कचन्द्रपरिच्छिन्ना धारणाः शुभधारणाः ॥ इति ।

तत्रापि ज्येष्ठशुक्लाष्टमीप्रभृति एकादशीपर्यन्तं पूर्वफल्गुनीप्रभृति नक्षत्रचतुष्टये मृदुर्वायुः श्रवणादिमासचतुष्टयगर्भपोषणचिह्नं । तदुक्तम् —
ज्येष्ठस्य शुक्लाष्टम्यां तु नक्षत्रे भगदैवते । चतस्रो धारणाः प्रोक्ताः मृदुवातसमीरिताः ॥
ततः स्वात्यादिनक्षत्रैश्चतुर्भिः श्रावणादयः । परिपूर्णाश्शुभास्तास्स्युस्सर्वाश्शिवसुभिक्षदाः ॥

अथ गर्भोपघातलक्षणानि —

गर्भोपघातलिङ्गान्युक्ताश्शशिपांसुपातदिग्दाहाः ।
क्षितिकम्पखपुरकीलककेतुग्रहयुद्धनिर्घाताः ॥
रुधिरादिवृष्टिवैकृतपरिहेन्द्रधनुषि दर्शनं राहोः ।
इत्युत्पातैरेतैस्त्रिविधैश्चान्यैर्हतो गर्भः ॥

अयमर्थः—गर्भे दृष्टे यदि पश्चादिमे उत्पाता दृश्यन्ते तदा गर्भो निहत इति ज्ञेयम्। यस्तूत्पातानन्तरं गर्भो जायते न तस्य विनाश इति। तत्र ज्येष्ठशुक्लद्वादश्यादिदिनचतुष्टये स्वात्यादिनक्षत्रचतुष्टये वृष्टिः श्रावणादिमासचतुष्टयगर्भसूचिका। तदुक्तं तत्रैव—

स्वातौ तु श्रवणं विद्या वृष्टे त्वैन्द्राग्नदैवते। भाद्रपदे त्वनावृष्टिर्मैत्रे चाश्वयुजे स्मृता।
ऐन्द्रे तु कार्तिकेत्येव वृष्टे वृष्टिं निहन्ति च। एतेषु यदि नो वृष्टिस्तदा सौभिक्ष्यलक्षणम्॥

एतच्च ग्रहोदयास्तमयादिनिमित्तरहितवृष्टिविषयम्। गर्भसमयेतिवृष्टिर्गर्भाभावाय। निमित्तानि—'प्रायो ग्रहाणामुदयास्तकाले समागमे मण्डलसंक्रमे च' त्यादीनि।

निरुद्धो गर्भः आगामिगर्भात्पूर्वं करकारूपेण पतति।

गर्भः पुष्टः प्रसवे ग्रहोपघातादिभिर्यदि न वृष्टिः।
आत्मीये गर्भसमये करकामिश्रं ददात्यम्भः॥

काठिन्यं याति यदा चिरकालधृतं पयः पयस्विन्याः।
कालातीतं तद्वत्सलिलं काठिन्यमुपयाति॥

वर्षाकालीनसद्यःसुवृष्टिप्रदमेघलक्षणानि। तत्र आषाढे रोहिणीयोगे वृष्टिसूचकमेघलक्षणं—चित्रैर्मधुकरकिंशुककुसुमावदातैः,

अथवाञ्जनशैलशिलानिचयप्रतिरूपधरैः स्थगितं गगनम्।
हिममौक्तिकशङ्खशशाङ्ककरद्युतिहारिभिरंबुधरैरथवा॥

तटिद्धेमपक्षैर्बलाकाग्रदन्तैः स्रवद्वारिदानैश्चलत्प्रान्तहस्तैः।
विचित्रेन्दुचापध्वजोच्छ्रायशोभैस्तमालालिनीलैर्वृतं चाब्दनागैः॥

सन्ध्यानुरक्ते नभसि स्थितानां इन्दीवरश्यामरुचां घनानाम्।
बृन्दानि पीतांबरवेष्टितस्य कान्तिं हरेश्चोरयतां यदा वा॥

निगदितरूपैर्जलधरजालैस्त्र्यहमवरुद्धं द्व्यहमथवापि।
यदि वियदेवं भवति सुभिक्षं मुदितजनश्च प्रचुरजला भूः॥ इति॥

**शक्यमम्बरमारुह्य मेघसोपानपंक्तिभिः।**
**कुटजार्जुनमालाभिरलंकर्तुं दिवाकरम्॥**

**सन्ध्यारागोत्थितैस्ताम्रैरन्तेष्वधिकपाण्डरैः।**
**स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवांबरम्॥**

मन्दमारुतनिःश्वासं सन्ध्याचन्दनरञ्जितम् ।
आपाण्डुजलदं भाति कामातुरमिवाम्बरम् ॥

एषा घर्मपरिक्लिष्टा नववारिपरिप्लुता ।
सीतेव शोकसंतप्ता मही बाष्पं विमुञ्चति ॥

मेघोदरविनिर्मुक्ताः कल्हारसुखशीतलाः ।
शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिनः ॥

एष फुल्लार्जुनश्शैलः केतकैरधिवासितः ।
सुग्रीव इव शान्तारिर्धाराभिरभिषिच्यते ॥

मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः ।
मारुतापूरितगुहाः प्रथिता इव पर्वताः ॥

अत्र पर्वतानां कृष्णाजिनयज्ञोपवीतादिधर्मकल्पनेन अध्येतृसादृश्यप्रतिपादनात् अध्येतॄणां ब्रह्मचारिणां कृष्णाजिनोपवीतादिधारणं धर्म इत्युक्तम् । तथा **मनुः** —

कार्ष्णरौरवबस्तानि चर्माणि ब्रह्मचारिणः । वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥

**गौतमोऽपि**—क्रमेण कृष्णरुरुबस्ताजिनानि वासांसीति । यज्ञोपवीतधारणे **मनुः** —

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्वकृतं त्रिवृत् ।
शाणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रकम् ।

**खादिरगृह्येपि**—यज्ञोपवीतं सौत्रं कौशं वा ग्रीवायां प्रतिमुच्य दक्षिणं बाहुमुद्धृत्य यज्ञोपवीती भवति, इति । मेखलाधारणे **मनुः** —

मौञ्जी त्रिवृत्कृता श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौञ्जी ज्या वैश्यस्य कुशतान्तवी ॥ इति ।

**गौतमोऽपि** — मौञ्जीज्यामौर्वीसौत्र्यो मेखलाः । इति । दण्डधारणे **मनुः** —

ब्राह्मणो बैल्वपालाशौ क्षत्रियो वटखादिरौ ।
पैप्पलौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः ॥ इति ।

तत्परिमाणमाह स एव —

केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।
ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः ॥
ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।

अनुद्वेगकरा नृणां सत्वचोऽनभिदूषिताः ॥ इति ।

गौतमोऽपि — मूर्धललाटनासाग्रप्रमाणा इति ।

कशाभिरिव हैमीभिर्विद्युद्भिरिव ताडितम्।
अन्तःस्तनितनिर्घोषं सवेदनमिवांबरम्॥

नीलमेघाश्रिता विद्युत्स्फुरन्ती प्रतिभाति मा।
स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी॥

इमास्ता मन्मथवतां हिताः प्रतिहिता दिशः।
अनुलिप्ता इव घनैर्नष्टग्रहनिशाकराः॥

क्वचिद्बाष्पाभिसंरुद्धान् वर्षागमसमुत्सुकान्।
कुटजान्पश्य सौमित्रे पुष्पितान् गिरिसानुषु॥

मम शोकाभिभूतस्य कामसन्दीपनान्स्थितान्।

रजः प्रशान्तं सहिमोद्य वायुर्निदाघदोषप्रसराः प्रशान्ताः।
स्थिता हि यात्रा वसुधाधिपानां प्रवासिनो यान्ति नराः स्वदेशान्॥

संप्रस्थिता मानसवासलुब्धाः प्रियान्वितास्सम्प्रति चक्रवाकाः।
अभीक्ष्णवर्षोदकविक्षतेषु यानानि वर्त्मेषु न सम्पतन्ति॥

क्वचित्प्रकाशं क्वचि दप्रकाशं नभः प्रकीर्णांबुधरं विभाति।
क्वचित्क्वचित्पर्वतसन्निरुद्धं रूपं यथा शान्तमहार्णवस्य॥

व्यामिश्रितं सर्जकदम्बपुष्पैर्नवं जलं पर्वतधातुताम्रम्।
मयूरकेकाभिरनुप्रयातं शैलापगाश्शीघ्रतरं वहन्ति॥

रसाकुलं षट्पदसन्निकाशं प्रभुज्यते जम्बुफलं प्रकामम्।
अनेकवर्णं पवनावधूतं भूमौ पतत्याम्रफलं विपक्वम्॥

विद्युत्पताकास्सबलाकमालाश्शैलेन्द्रकूटाकृतिसन्निकाशाः।
गर्जन्ति मेघास्समुदीर्णनादा मत्ता गजेन्द्रा इव संयुगस्थाः॥

वर्षोदकाप्यायितशाद्वलानि प्रवृत्तनृत्तोत्सवबर्हिणानि।
वनानि निर्विष्टबलाहकानि पश्यापराह्णेष्वधिकं विभान्ति॥

समुद्वहन्तः सलिलातिभारं बलाकिनो वारिधरा नदन्तः।
महत्सु शृङ्गेषु महीधराणां विश्रम्य विश्रम्य पुनः प्रयान्ति॥

मेघाभिकामा परिसंपतन्ती संमोदिता भाति बलाकपङ्क्तिः।

वातावधूता वरपौण्डरीकी लंबेव माला रचितांबरस्य ॥

बालेन्द्रगोपान्तरचित्रितेन विभाति भूमिर्नवशाद्वलेन ।
गात्रानुवृत्तेन शुकप्रभेण नारीव लाक्षोक्षितकंबलेन ॥

अत्रोक्तवर्षाकालवैचित्र्यं **विष्णुपुराणेऽपि**—

प्रावृट्कालस्ततोतीव मेघौघस्तनितांबरः । बभूव वारिधाराभिरैक्यं कुर्वन्दिशामिव ॥

प्ररूढनवशष्पाढ्या शक्रगोपास्तृता मही । तदा मरतकेवासीत्पद्मरागविभूषिता ॥

ऊहुरुन्मार्गगामीनि निम्नगांभासि सर्वतः । मनांसि दुर्विनीतानां प्राप्य लक्ष्मीं नवामिव ॥

न रेजेन्तर्हितश्चन्द्रो निर्मलो मलिनैर्घनैः । सद्वादिवादो मूर्खाणां प्रगल्भाभिरिवोक्तिभिः ॥

निर्गुणेनापि चापेन शक्रस्य गगने पदम् । अवाप्यताविवेकस्य नृपस्येव परिग्रहे ॥

मेघपृष्ठे बलाकानां रराज विमलावलिः । दुर्वृत्ते वृत्तचेष्टेव कुलीनस्यातिशोभना ॥

न बबन्धाम्बरे स्थैर्यं विद्युदत्यंतचञ्चला । मैत्रीव प्रवरे पुंसि दुर्जनेन प्रयोजिता ॥

मार्गा बभूवुरस्पष्टा नवशष्पसमावृताः । अर्थान्तरमिव प्राप्ताः प्रबलानामिवोक्तयः ॥

उद्वृत्तशिखिसारंगे तस्मिन् काले महावने । रामकृष्णौ मुदा युक्तौ गोपालैश्चेरतुस्सह ॥

निद्रा शनैः केशवमभ्युपैति द्रुतं नदी सागरमभ्युपैति ।
हृष्टा बलाका घनमभ्युपैति कान्ता सकामा प्रियमभ्युपैति ॥

अनेन हरेर्निद्राकाल उक्तः । तथा च **यमः**—

क्षीराब्धौ भोगपर्यङ्के आषाढ्यां सविशेद्धरिः । निद्रां त्यजति कार्तिक्यां तयोस्तं पूजयेत्सदा ॥
ब्रह्महत्यादिकं पापं क्षिप्रमेव विनश्यति ।

तोडरानन्दे **स्कान्दे** तु—

आषाढशुक्लैकादश्यां कुर्यात्स्वप्नमहोत्सवम् । आभाकासितपक्षे तु मैत्रश्रवणरेवती ॥
आदिमध्यावसानेषु प्रस्वापावर्तनोत्सवाः ।
निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्तनम् ॥ इति ।

**वाराहे** तु—

द्वादश्यां सन्धिसमये नक्षत्राणामसंभवे । आभाकासितपक्षेषु शयनावर्तनादिकम् ॥

आषाढशुद्धद्वादश्यां पौर्णमास्यामथापि वा । चातुर्मास्यव्रतारंभं कुर्याद्वा कर्कसंक्रमे ॥ इति ।

अत्र च परमेश्वरस्य स्वापादिप्रबोधपर्यन्तं सर्वैः किञ्चिद्व्रतं कर्तव्यम्। तथा च **निर्णयसिन्धौ** —

आषाढे तु सिते पक्षे एकादश्यामुपोषितः।
चातुर्मास्यव्रतं कुर्याद्यत्किञ्चिन्नियतो नरः॥ इति॥

तत्रापि अवश्यकर्तव्यान्युत्कृष्टव्रतान्याह **देवलः** —

ब्रह्मचर्यं तथा सत्यं शौचमामिषवर्जनम्।
व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चयः॥ इति।

आमिषाणि च **पाद्मे** —

प्राण्यङ्गचूर्णचर्मांबु जम्बीरं बीजपूरकम्। अयज्ञशिष्टं माषादि यद्विष्णोरनिवेदितम्॥
दग्धमन्नं मसूरं च मांसं चेत्यष्टधामिषम्। रुच्यं तत्तद्देशलभ्यं सुप्ते देवे विवर्जयेत्॥

गोछागीमाहिषीभूतादन्यदुग्धादि चामिषम्।
धान्ये मसूरिका प्रोक्ता अन्नं पर्युषितं तथा॥

द्विजक्रीतरसास्सर्वे लवणं भूमिजं तथा। ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थितम्॥

आत्मार्थं पाचितं सर्वमामिषं तत्स्मृतं बुधैः।
निष्पावान्राजमाषांश्च मसूरान् संधितानि च॥
वृन्ताकं च कलिङ्गं च सुप्ते देवे विवर्जयेत्।

संधितानि लवणशाकादीनि इति। समाप्तिस्तु कार्तिकशुद्धद्वादश्यामेव कार्या। तदुक्तं **हेमाद्रौ-भारते** —

चतुर्धा गृह्य वै चीर्णं चातुर्मास्यव्रतं नरः।
कार्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत्॥ इति।

इदं च शिवभक्तादिभिरपि कार्यम्। तदुक्तं **ब्रह्मकैवर्ते** —

शिवे वा भक्तिसंयुक्तो भानौ वा गणनायके। कृत्वा व्रतस्य नियमं यथोक्तफलभाग्भवेत्॥

व्रतग्रहणप्रकारस्तु **हेमाद्रौ, भविष्ये** —

महापूजां ततः कुर्याद्देवदेवस्य चक्रिणः। जातीकुसुममालाभिर्मन्त्रेणानेन पूजयेत्॥
सुप्ते त्वयि जगन्नाथ जगत्सुप्तं भवेदिदम्। प्रबुद्धे च विबुध्येत प्रसन्नो मे भवाच्युत॥
एवं तां प्रतिमां विष्णोः पूजयित्वा स्वयं नरः। प्रभाषेताग्रतो विष्णोः कृताञ्जलिपुटस्तदा॥

चतुरो वार्षिकान् मासान्देवस्योत्थापनावधि । इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत ॥

**हरिवंशेऽपि** —

नूनं त्रिदशभूयिष्ठं मेघकालसुखोषितम् । पतत्रिकेतनं देवं बोधयन्ति दिवौकसः ॥ इति ।

"द्रुतं नदी सागरमभ्युपैति" इत्यनेन वृष्ट्यादीनां पूर्णप्रवाहेन समुद्रं प्रति द्रुततरगमनं प्रत्यक्षसिद्धमेव । 'हृष्टा बलाका घनमभ्युपैति' इत्यनेन बलाकानां गर्भधारणार्थं सजलं घनं प्रति गमनमुक्तम् । तथा च कालिदासो **मेघसन्देशे** —

गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ इति ॥

**प्रतापमार्तण्डेऽपि** — "गर्भं बलाका दधतेऽब्दयोगा"दिति । 'कान्ता सकामा प्रियमभ्युपैती'त्यनेन वर्षाकाले स्त्रीणां कामोद्रेक उक्तः । तथा च **रसमञ्जर्याम्** —

एते वारिकणान् किरन्ति पुरुषान् वर्षन्ति नाम्भोधराः
शैलाश्शाद्वलमुद्वमन्ति न सृजन्त्येते पुनर्नायकान् ।
त्रैलोक्ये तरवः फलानि सुवते नैवारभंते जनान्
धातः कातरमालयामिकुलटाहेतोस्त्वया किं कृतम् ॥

अत्र चतुर्ष्वपि पादेषु निद्रानदीबलाकाकान्ताना स्वस्वप्रियतमान् केशवसमुद्रघनपतीन् प्रति स्वत एवाभिसरणकथनात् पतिं प्रत्यभिसरणशीला अभिसारिका सूचिता । तथा **चामरकोशे** — 'कान्तार्थिनी तु या नारीति' । सा च त्रिविधा—स्वीया, परकीया सामान्या चेति । तत्र स्वामिन्येवानुरक्ता स्वीया । तस्याश्चेष्टा, भर्तृशुश्रूषा, शीलसंरक्षणं, आर्जवं, क्षमा चेति । तद्यथा —

गतागतकुतूहलं नयनयोरपाङ्गावधि स्मितं कुलनतभ्रुवामधर एव विश्राम्यति ।
वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥ इति ।

अप्रकटितपरपुरुषानुरागा परकीया । तद्यथा —

अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः समीरोऽयं वेलानवविदलदेलापरिमलः ।
इयं प्रावृट् धन्या नवजलदविन्यासचतुरा पराधीनं चेतः सखि किमपि कर्तुं मृगयते ॥ इति ।

वित्तमात्रोपाधिकतया परपुरुषाभिलाषिणी सामान्या । तद्यथा—

दृष्ट्वापाङ्गगणसन्निधौ बहुधनं दातारमभ्यागतं
वक्षोजौ तनुतः परस्परमिवाश्लेषं कुरङ्गीदृशः ।

आनन्दाश्रुपयांसि मुञ्चति मुहुर्मालामिषात्कुन्तलो
दृष्टिः किंच घनागमं कथयितुं कर्णान्तिकं गाहते ॥ इति ।

स्वीयापि त्रिविधा, मुग्धा, मध्या, प्रौढा चेति । तासां लक्षणानि प्रतापरुद्रीये—
उदयद्यौवना मुग्धा लज्जाविजितमन्मथा । लज्जामन्मथमध्यस्था मध्यमोदितयौवना ॥
स्मरमन्दीकृतव्रीडा प्रौढा सम्पूर्णयौवना । इति ।

तत्र मुग्धाभिसारिका यथा —

दूतीविद्युदुपागता सहचरी रात्रिस्सहस्थायिनी
दैवज्ञो दिशति स्वनेन जलदः प्रस्थानवेलां शुभाम् ।
वाचं मांगलिकीं तनोति तिमिरस्तोमोऽपि झिल्लीरवैः
जातोऽयं दयिताभिसारसमयो मुग्धे विमुञ्च त्रपाम् ॥

मध्यमाभिसारिका यथा —

भीतासि नैव भुजगात्पथि मद्भुजस्य सङ्गे पुनः किमपि कम्पमुरीकरोषि ।
अम्भोधरध्वनिभिरक्षुभितासि तन्वी मद्वाचि साचिवदनासि किमाचरामि ॥

प्रगल्भाभिसारिका यथा —

स्फुरदुरसिजभारभंगुराङ्गी किसलयकोमलकान्तिना पदेन ।
अथ कथय कथं सहेत गन्तुं यदि न निशासु मनोरथो रथः स्यात् ॥

समयानुरूपभूषणशंकाप्रज्ञानैपुण्यप्रकटप्रहासादिचेष्टायुक्ता परकीयाभिसारिका। यथा—

रभसादभिसर्तुमुद्यतानां वनितानां सखि वारिदो विवस्वान् ।
रजनी दिवसोऽन्धकारमर्चिर्विपिनं वेश्म विमार्ग एव मार्गः ॥

सामान्यवनिताभिसारिका यथा —

चन्द्रोदये चन्दनमंगकेषु विलिप्य विन्यस्य विनिर्गतायाः ।
मनो निहन्तुं मदनोऽपि बाणान् करेण कौन्दान्बिभरांबभूव ॥

उक्तास्सर्वविधा अपि पुनस्त्रिविधाः । दिवाभिसारिका, श्वेताभिसारिका, कृष्णाभिसारिका चेति । दिवाभिसारिका यथा —

पल्लीनाथनिदेशतः पशुजनैः सर्वोत्सवामन्त्रणे
जाते सद्मजना मिथः कृतमहोत्साहाः पुरं प्रस्थिताः ।

सव्याजस्थितयोर्विहस्य गतयोः शुद्धान्तमत्रान्तरं
यूनोः स्विन्नकपोलयोर्विजयते कोऽप्येष कण्ठग्रहः ॥

श्वेताभिसारिकालक्षणं "न चन्द्रोदय" इत्यनेन श्लोकेनोक्तं प्राक् प्रपञ्चितम्। कृष्णाभिसारिका यथा —

गन्तुं यदि व्यवसितासि घने निशीथे नीलांशुकेन तनुमावृणु मुग्धशीले।
सौदामिनी यदि पथि प्रतिरोधिनी स्यादप्रावृतैव कनकद्रवगौरि गच्छेः ॥ इति।

इतोऽप्यभिसारिकाणां बहवो भेदास्तल्लक्षणोदाहरणभेदाश्च सन्ति, विस्तरभिया न लिख्यन्ते।

**सुरतामर्दविच्छिन्नास्स्वर्गस्त्रीहारमौक्तिकाः।**
**पतन्तीवाकुला दिक्षु तोयधारास्समन्ततः ॥**

इत्यनेन सुरसुन्दरीणां पुरुषायितं सूचितम्। तथा च प्राचीनाः —

मुक्ताः पतन्ति भूमौ बालाः कलयन्ति केवलं मुक्तिम्।
चुम्बत्यंबरमवनिर्विपरीते किन्नु विपरीतम् ॥

**षट्पादतन्त्रीमधुराभिधानं प्लवङ्गमोदीरितकण्ठतालम्।**
**आविष्कृतं मेघमृदङ्गनादैः वनेषु सङ्गीतमिव प्रवृत्तम् ॥**

अस्यार्थः — षट्पादा भ्रमरा एव तन्त्र्यः तदुत्थः श्रोत्रचित्तानुरञ्जनसंपादनसमर्थगान्धर्वशास्त्रसिद्धमधुरादिगुणोपेतो ध्वनिविशेषो यस्मिन् तत्सङ्गीतम्। प्लवङ्गमोदीरितकण्ठतालं, प्लवङ्गमा मण्डूकास्तदुदीरिततालज्ञसमयप्रसिद्धकण्ठाभरणादितालोपेतम्। मेघमृदङ्गनादैः। मेघा एव मृदङ्गास्तेषां नादैराविष्कृतं प्रकटीकृतं तत्संगीतं प्रस्तुतमिवेति। अत्र वीणातालमृदङ्गवाद्यमात्रं प्रतिपाद्य सङ्गीतं प्रवृत्तमित्युक्त्या वक्ष्यमाणं नृत्तगीतमप्यभिप्रेतम्, तस्य त्रितयात्मकत्वात्। तदुक्तं **शार्ङ्गदेवेन** —

'गीतं वाद्यं तथा नृत्तं त्रयं सङ्गीतमुच्यते' इति। षट्पादतन्त्रीत्यत्र षट्पदानां तन्त्रीत्वनिरूपणात् तद्युक्ता वीणा द्योत्यते। सा द्विविधा गात्रवीणा, दारुवीणा चेति। तदुक्तं **नारदेन** —

'दारवी गात्रवीणा च द्वे वीणे नरजातिषु' इति।

तथा बह्वृचारण्यके दारुवीणागात्रवीणयोः सम्यक्प्रतिपादनेन वीणाद्वयं प्रतिपादितम्। "अथ खल्वियं दैवी वीणा भवति, तदनुकृतिरसौ मानुषी वीणा भवति यथास्याः

शिर एवममुष्याः शिरो, यथास्या उदरमेवममुष्या अम्भणं, यथास्या जिह्वैवममुष्या वादनम्, यथास्यास्तन्त्रय एवममुष्या अंगुल्यो, यथास्याः स्वरा एवममुष्याः स्वराः, यथास्याः स्पर्शा एवममुष्याः स्पर्शाः, यथाह्येवेयं शब्दवती, एवमसौ शब्दवती, चर्मवती यथा ह्येवेयं लोमशेन चर्मणा पिहिता भवति एवमसौ लोमशेन चर्मणापिहिता, लोमशेन ह वै स्म चर्मणा पुरा वीणा अपिदधति, स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति भूमिप्रास्य कीर्तिर्भवति यत्र क्वचार्या वाचो भाषन्ते विदुरेनं तत्रेति। तथा दारुवीणापि द्विविधा श्रुतिवीणा स्वरवीणा चेति। तत्र महाव्रतादौ माहेन्द्रस्तोत्रोपाकरणानन्तरं आहतदुन्दुभीन् प्रवदन्तु वीणा इति श्रुत्या विनियुक्ता वीणा श्रुतिवीणा। सा अनेकविधा। वाणः अलाबुवीणा, वक्त्रा, कपिशीर्ष्णी महावीणा, पिशीलवीणा, काण्डवीणा, पिछोलवीणा चेति। स्वरवीणाप्यनेकविधा, एकतन्त्री नकुला, त्रितन्त्रिका, चित्रा, विपञ्ची, मत्तकोकिला आलापिनी, पिनाकी, निश्शंकादिभेदात्। तदुक्तं **संगीतरत्नाकरे** —

तद्भेदास्त्वेकतन्त्री स्यान्नकुलश्च त्रितन्त्रिका। चित्रा वीणा विपञ्ची च ततः स्यान्मत्तकोकिला॥
आलापिनी किन्नरी च पिनाकीसंज्ञिकापरा। निश्शङ्कवीणेत्याद्याश्च शार्ङ्गदेवेन कीर्तिताः॥इति।

तस्याश्चैकतन्त्र्याख्यवीणाया वादने त्रिविधाः करव्यापाराः घातपातादिरूपाः। तत्र नव दक्षिणकरव्यापाराः, द्वावितरस्य करस्य, तद्व्यतिरिक्ताश्च हस्तद्वयसाधारणास्त्रयोदश व्यापाराः। तदुक्तं **शार्ङ्गदेवेन** —

घातः पातश्च संलेखः तथोल्लेखावलेखकौ। भ्रमरः संरुधिश्छिन्नौ नवमी नखकर्तरी॥
व्यापारा दक्षिणस्यैते पाणेर्वामस्य तु द्वयम्। स्फुरितः खसितश्चेति करयोरुभयोस्त्वमी॥
घोषो रेफोथ बिन्दुः स्यात्कर्तरी चार्धकर्तरी। निष्कोटितास्यः स्खलितः शुकवक्त्रश्च मूर्छना॥
तालहस्तोर्धचन्द्रश्च प्रसारः कुहरोऽपरः। त्रयोदशैते सर्वेऽमी स्युश्चतुर्विंशतिर्युताः॥
करनामान्यपीमानि मन्वते वाद्यवेदिनः। इति।

तत्र घातो नाम मध्यमांगुल्याक्रान्ततर्जन्या तन्त्रिकाताडनम्। केवलतर्जन्या तन्त्रीघातः पातः। अन्तःस्थिततर्जन्या तन्त्रीस्फालनं संलेखः। अन्तःस्थितमध्यमया तन्त्र्यास्फालनमुल्लेखः। मध्यमया बहिस्तन्त्रीताडनं संरुधिः। तर्जनीपार्श्वलग्नायास्तन्त्र्या अनामिकया ताडनं छिन्नः। त्वरितगत्या नखैश्चतुर्भिस्तन्त्रीताडनं नखकर्तरी इति दक्षिणकरव्यापाराः। अथ सव्यकरव्यापारौ, पार्श्वभागसंबद्धाद्वामकरात्प्रसारिताद्यः कम्पजनको व्यापारः स स्फुरितः। वीणादण्डोपरि स्थितया सोपानरूपया पुनस्तन्त्रीघर्षणं खसितः इति।

एवमन्येऽपि घोषादयः अन्तःस्थितानामिकादिभिस्तन्त्रीताडनरूपाः। तदुक्तं **संगीतरत्नाकरे**—

घातः स्यान्मध्यमाक्रान्ततर्जन्या तन्त्रिकाहरिः। हरिर्हरणम्।

पातः केवलया घातः सलेखोन्तस्थया हरिः। अन्तर्मध्यमया घातमुल्लेखं संप्रचक्षिरे ॥

अवलेखो मध्यमया स्यात्तन्त्रीताडनं बहिः। अंगुल्यान्येन्यथाप्याहुः संलेखश्चावलेखनम् ॥

सर्वाभिस्तिसृभिर्द्वाभ्यामथवेति च ते जगुः। मध्यमानामिकाभ्यां तु बहिर्घातोऽर्धसंघितः ॥

तर्जनीपार्श्वलग्नायास्तन्त्र्या बहिरनामया। हननं छिन्नमाचष्ट श्रीमत्सोड्ढलनन्दनः ॥

क्रमाद्द्रुतं नखैर्घातश्चतुर्भिर्नखकर्तरी। स्फुरितः कम्पितस्तन्त्रीपार्श्वलग्ने प्रसारणात् ॥

मुहुस्सारणया तन्त्रीघर्षणं खसितो मतः।

इति। एवमन्येषां लक्षणानि विस्तरभयान्न लिख्यन्ते। इयमेकतन्त्री। नकुलादयोपि तत्रैव निरूपिताः। तथाहि—

तन्त्रीद्वयेन नकुलः स्यादन्वर्था बितन्त्रिका। तन्त्रीभिस्सप्तभिश्चित्रा विपञ्ची नवभिर्मता ॥

तन्त्रीणामेकविंशत्या कीर्तिता मत्तकोकिला। मुख्येयं सर्ववीणानां त्रिस्थानैस्सप्तभिः स्वरैः ॥

संभिन्नत्वात्तदन्यास्तु तस्याः प्रत्यंगमीरिताः। करणैश्चिलयन्त्यस्तास्तस्यारुपरंजितकाः॥ इति।

एवं वीणायां घातुसंज्ञिकाः केचन रागा निस्तुलरागसंपादकाः अदृष्टसंपादकाश्च प्रहारविशेषजनिता विस्तारकरणादिरूपाः विस्तरभयान्नेह प्रतिपाद्यन्ते।

मधुराभिधानमित्यनेन रक्तादयो गुणा उपलक्ष्यन्ते। ते च **नारदेन** प्रतिपादिताः—

रक्तं पूर्णमलंकृतं प्रसन्नं व्यक्तं विक्रुतं श्लक्ष्णं समं सुकुमारं मधुरमिति गुणा गानस्य दशेति। एतादृशवीणायास्सर्वदेवतामयत्वेन दर्शनस्पर्शनादिकं महाफल-मित्युक्तम्—

दर्शनस्पर्शने चास्या भोगस्वर्गापवर्गदे। पुनाति विप्रहत्यादिपातकैः पतितं जनम् ॥

दण्डश्शंभुरुमा तन्त्रिः ककुभः कमलापतिः। इन्दिरा पत्रिका ब्रह्मा तुंबं नाभिस्सरस्वती ॥

दोरको वासुकिर्जीवा सुधांशुस्सारिका रविः। सर्वदेवमयी तस्माद्वीणेयं सर्वमङ्गला ॥

इति संगीतनिपुणैर्मुनिभिर्भरतादिभिः। वीणा प्रशंसिता तस्माच्छ्लाघनीयतमा मता ॥

धर्मार्थकाममोक्षाणामियमेव हि साधनम्। गायतो ब्राह्मणौ वीणागाथिनाविति च श्रुतौ ॥

अश्वमेधप्रकरणे वीणोक्ता धर्मसाधनम् । वीणानादानुरक्तेभ्यो राजभ्यो वैणिका जनाः ॥
लभन्ते काङ्क्षितानर्थान् तस्माद्वीणार्थसाधनम् । कामयन्तेह गायन्तं स्त्रिय इत्युदितं श्रुतौ ॥
गानस्य कामहेतुत्वं गानोत्पत्तिस्तु वीणया । वीणावादनतत्वज्ञः श्रुतिजातिविशारदः ॥
तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति । इत्येवं याज्ञवल्क्येन वीणा मोक्षाय शंसिता ॥

सा च रुद्रप्रियत्वेन रुद्रवीणेति गीयते ॥ इति ॥

**याज्ञवल्क्य**वचनस्यार्थः — महत्यादयो नानाविधा वीणाः । तदुक्तम् —
विश्वावसोस्तु बृहती तुंबुरोस्तु कलावती । महती नारदस्य स्यात्सरस्वत्यास्तु कच्छपी ॥
इत्यादि । एतासां वीणानां मध्ये यस्याः कस्याश्चिद्वीणायाः भरतशास्त्रोक्तप्रकारेण यद्वादनं तन्त्रीषु ध्वनिविशेषकरणं तद्वीणावादनं, तस्य यत्तत्वं तानात्मकसगीतप्रणवोच्चारणपूर्वकं तत्स्वरूपानुगुण्यसंपादनं तज्ज्ञ इत्यर्थः । सगीतप्रणवस्य तानरूपत्वं प्रतिपादितं **संगीत-चिन्तामणौ** –

शृणुध्वं गीतशास्त्रस्य वच्मि प्रणवमादितः । यदज्ञानान्नष्टकुला नष्टश्रीका गतायुषः ॥
क्लेशपाशशतं प्राप्ता नष्टबुद्धीन्द्रियप्रजा. । शोकदावाग्निसन्तप्ता लोकनिन्द्याः पुनःपुनः ॥
पापेषु निरताः क्रूराः पुण्यदूरा हतव्रताः । अभ्यासो विफलं याति तस्य वीणासमुद्भवः ॥
यज्ञदानफलं पुण्यं शीलं सौभाग्यमेव च । प्रयाति वैणिकस्साक्षात्पूर्णचन्द्र इवापरः ॥
संगीतप्रणवं ज्ञात्वा महाविष्णुसमो भवेत् । संगीतप्रणवो ज्ञेयः महासौभाग्यवर्धनः ॥

तकारश्च नकारश्चेत्युक्तं, तज्ज्ञः, श्रुतिजातिविशारदः निपुणः तालज्ञः मार्गताल-देशिकतालसंपन्नः विनैवायासं मोक्षं प्राप्नोति इति ॥

प्लवङ्गमोदीरितकण्ठतालमित्यत्र नामैकदेशग्रहणे नामग्रहणमिति न्यायेन भीमो भीमसेन इतिवत् कण्ठतालशब्देन कण्ठाभरणाख्यतालप्रतिपादनद्वारा सर्वे तालाः प्रतिपाद्यन्ते । तत्र नृत्तगीतवाद्यप्रतिष्ठाभूमिः लघ्वक्षरोच्चारणादिक्रियापरिमितः तालः तल-प्रतिष्ठायामिति धातोर्घञि[ङि]स्मृतः ।

गीतं नृत्यं तथा वाद्यं भाति ताले प्रतिष्ठितम् ॥
संयोगे च वियोगे च तलयोरुभयोर्यदा ।
वर्तते यस्मिन्मान् कालः स कालस्तालसंज्ञितः ॥ इति ।

उक्ततालस्याङ्गभूताश्च दश प्राणा:, प्राणा इव प्राणास्तालनिर्वर्तका इति यावत्। ते च दश। तदुक्तं **सङ्गीतरत्नाकरे**—

कालो मार्गः क्रियाङ्गानि ग्रहजातिकलालयाः। यतिः प्रस्तारकश्चेति तालप्राणा दश स्मृताः॥

तत्र कालः प्रसिद्धः। स च द्वादशविध., क्षण, लव, निमेष, काष्ठा, कला, चतुर्भागानुद्रुत, बिन्दु, लघु, गुरु, प्लुत, पताक, भेदात्। तत्र शतपत्रपत्रशतस्य मध्ये सूच्या संभेदे क्रियमाणे यावान् कालः तावान् कालः क्षण इत्युच्यते। तादृशक्षणाष्टात्मकः कालो लव इत्युच्यते, तादृशलवाष्टात्मकः कालः काष्ठा, अष्टौ काष्ठा निमेष., अष्टौ निमेषाः कला, कलाद्वयं चतुर्भागः, चतुर्भागद्वयं अनुद्रुतं, अनुद्रुतद्वयं च बिन्दु', बिन्दुद्वयं च लघुः, लघुद्वयं च गुरुः, लघुत्रयं च प्लुतः, प्लुतचतुष्कं पताकमिति। तदुक्तमाकरे—

उपर्युपरि विन्यस्य पद्मपत्रशतं सकृत्। यः कालः सूचिसभेदे स क्षणः परिकीर्तितः॥
लवः क्षणैरष्टभिः स्यात् काष्ठा ह्यष्टौ लवात्मिका। अष्टौ काष्ठा निमेषः स्यान्निमेषैरष्टभिः कला॥
कलाभ्या तु चतुर्भागश्चतुर्भागावनुद्रुतम्। अनुद्रुताभ्यां बिन्दुः स्याद्बिन्दुभ्या तु लघुर्भवेत्॥
लघुद्वयं गुरुश्चैव त्रिलघुः प्लुत उच्यते। लघुचतुष्कं निश्शब्दमेतत्काकपदाभिधम्॥ इति।

एवं मार्गोऽपि षड्विधः—दक्षिण, वार्तिक, चित्र, चित्रतर, चित्रतम, अतिचित्रतमभेदात्। तत्र दक्षिणे मार्गे अष्टौ मात्राः कला इत्यादिलक्षणं विस्तरभयान्नेह प्रतिपाद्यते। तादृशमार्गगतत्वेन कर्णाट लाट गौड आन्ध्रादिदेशगतत्वेन च तालो द्विविधः। तत्र मार्गतालः चतुरश्रत्र्यश्रषट्पितापुत्रादिभेदेनानेकविधः। देशतालश्च आदितालप्रभृतिशार्ङ्गदेवसंज्ञकतालान्ताः विंशत्यभ्यधिकं शतं तालाः। तत्र कण्ठाभरणाख्यतालोऽपि प्रतिपादितः, गौरी सरस्वती कण्ठाभरणो लग्नसंज्ञक इति। तेषां लक्षणं विस्तरभयान्नेह प्रतिपाद्यते। अन्ये सप्ततालाः ध्रुव, मध्य, रूपक, जम्पा, त्रिकुट, अड्डुताल्येकताळरूपाः सप्त प्रसिद्धास्तालाः। तदुक्तं **संगीतशास्त्रे**—

ध्रुवो मध्यो रूपकं च जम्पा त्रिकुटमेव च। अड्डुताल्येकताली च सप्त तालाः प्रकीर्तिताः॥

इति। तत्र ध्रुवः षोडशविधः। तदुक्तं **संगीतरत्नाकरे**—

जयन्तश्शेखरोत्साहौ ततो मधुरनिर्मलौ। कुन्तलः केरलश्चारो नन्दनश्चन्द्रशेखरः॥
कामदो विजयाख्यश्च कन्दर्पजयमङ्गलौ। तिलको ललितश्चेति संज्ञास्तेषां क्रमादिमाः॥ इति

एवमन्येषां भेदास्तल्लक्षणानि च विस्तरभयान्नेह प्रतिपाद्यन्ते। एतादृशतालस्य फलमाह **शार्ङ्गदेवः** —

तकारश्शंकरः प्रोक्तः लकारश्शक्तिरुच्यते। शिवशक्त्यात्मकं तालं यो जानाति स तत्ववित्॥

आदितालेन श्रृङ्गारे जयन्तो गीयते बुधैः। स नेतृश्रोतृगातॄणामायुःश्रीवर्धनो मतः॥

इति तालनिरूपणम्।

"आविष्कृतं मेघमृदङ्गनादैः" इत्यनेन मुरजवाद्यमुत्प्रेक्षितम्। तच्चानेकविधं, पटः, मद्दलः, हुडुक्का, करटं, घण्टा, सोडवसः, ढक्का, कुडुक्का, रुंवः, डमरुः, डक्का, मड्डुः, डक्कुली, सल्लकः झल्लरी, घोणा त्रिवली, दुन्दुभिः भेरीनिस्सारणं इत्येवमादिरूपम्। तत्र हस्तद्वयसम्मितायामं षष्ट्यंगुलमूलमध्यदेशं एकादशांगुलसम्मितदक्षिणमुखं दशांगुलसम्मितवाममुखम्। तदुक्तं **संगीतरत्नाकरे** —

सार्धहस्तद्वयं तस्य दैर्घ्यं स्यात्परिधिः पुनः। षष्ट्यंगुलो मध्यदेशः पृथुलो दक्षिणं मुखम्॥

कर्तव्यं सम्मितं सार्धैरेकादशभिरंगुलैः। वामं तु दशभिस्सार्धैः समितं दक्षिणं मुखम्॥ इति।

**क्वचित्प्रनृत्तैः क्वचिदुन्नदद्भिः क्वचिच्च वृक्षाग्रनिषण्णकायैः।**
**व्यालम्बबर्हाभरणैर्मयूरैर्वनेषु सङ्गीतमिव प्रवृत्तम्॥**

अत्र नृत्यन्तो मयूरा नर्तका इव भवन्ति। उन्नदन्तो मयूराः गायका वादका इव च भवन्ति। वृक्षाग्रनिषण्णकायाश्च मयूराः उच्चस्थानस्थितसभानायका इव भवन्ति। व्यालम्बबर्हाभरणैरित्यनेन सभानायकेन नर्तकादिभिश्चालंकृतैर्भवितव्यमिति सूचितम्। अत्र क्वचित्प्रनृत्तैरित्यनेन नर्तनं सूचितम्। तच्च गात्रविक्षेपादिरूपम्। तत्त्रिविधं, नाट्यं, नृत्यं, नर्तनं चेति। तदुक्तं **भावप्रकाशे** —

तदपि त्रिविधं नाट्यनृत्यनृत्तप्रभेदतः। आंगिकाद्यैरभिनयैर्वाक्यार्थाभिनयात्मकम्॥

रसभावसमायुक्तं तन्नाट्यं परिचक्षते। भावाविर्भावसुभगं पदार्थाभिनयात्मकम्॥

गात्रविक्षेपणं यत्र तन्नृत्यमिति गीयते। तन्नृत्तं स्याद्गीतवाद्यमिलत्ताललयाश्रयम्॥

उदाराभिनयं यत्र गात्रविक्षेपणं यदि। इति।

एतत्त्रयं द्विधा भिन्नं लास्यताण्डवसंज्ञया। सुकुमारं तयोर्लास्यमुद्धतं ताण्डवं विदुः॥

चतुर्विधं तच्च लास्यं कुण्डलीदण्डरासकम्। करणांश्चैव तत्रापि तत्तद्देशानुसारतः॥

शार्ङ्गदेवस्तु नाट्यं, नृत्यं, नृत्तमिति भेदत्रयमङ्गीकृत्य नाट्य, नृत्य, नृत्तानां

प्रकारान्तरेण लक्षणमाह । तत्र वाक्यार्थपदार्थाभिनयात्मकं आंगिकाभिनयमात्रोपेतं गात्रचलनं नाट्यम् । आंगिक, वाचिकाहार्थं सात्विक, चतुष्टयात्मकं गात्रचलनं नृत्यम् । गात्रचलन-मात्रं नृत्तम् । तत्रैकैकं द्विविधं लास्यताण्डवभेदात् । तत्र कोमलकरणाङ्गविक्षेपकैशिक-वृत्तिप्रधानं मकरध्वजवर्धनं स्त्रीकर्तृकं गात्रचलनं लास्यम् । उद्धतकरणाङ्गविक्षेपारभटी-वृत्तिप्रधानं ताण्डवम् । आगिकः अंगैर्विनिर्मितो व्यापारविशेषः । नायकादिगततत्त्व-द्व्यापारसूचकशब्दविशेषो वाचिकः । अनुकार्यतत्नायकादिगतहारकेयूरकिरीटालङ्कारादि-भूषणमाहार्यः । सात्विकैरन्तःकरणव्यापारविशेषैर्विरचितः सात्विकः । तदुक्तं **संगीतरत्नाकरे-**

नाट्यं, नृत्यं, तथा नृत्तं त्रेधा तु परिकीर्तितम् । चतुर्धाभिनयोपेतं लक्षणावृत्तितो बुधैः ॥
नाटकस्थितवाक्यार्थपदार्थाभिनयात्मकम् । नाट्यं तन्नाटकेष्वेव प्रयुक्तं तद्गतार्थवत् ॥
विहाय त्रीनभिनयानाॅगिकोत्र विधीयते । आगिको वाचिकस्तद्वत् आहार्यः सात्विकोऽपरः ॥
चतुर्धाभिनयस्तत्र ह्यागिकोंगैर्विनिर्मितः । वाचा विरचितः काव्यनाटकादिषु वाचकः ॥
आहार्यो हारकेयूरकिरीटादिविभूषणम् । सात्विकः सात्विकैर्भावैर्भावुकेन विभावितः ॥
लास्यं तु सुकुमाराङ्गं मकरध्वजवर्धनम् । तद्रिक्तमुद्धतं प्रायः प्रयोगं ताण्डवं विदुः ॥ इति ।

नर्तनारंभवेलायां पात्राणां प्रवेशो विशेषमाह **नन्दिकेश्वरः—**

नायकाभिमुखं पात्रं प्रविशेद्रङ्गमन्दिरम् । प्रवेशो दक्षिणे भागे मार्दलीकः प्रतिष्ठितः ॥
वामपार्श्वे मार्दलीकः वंशशंखे तु दक्षिणे । तद्दक्षिणे करटिका तत्पृष्ठे गायकाः स्मृताः ॥
गायकानां ततः पश्चात्काहलीक्रमतालकः ॥ इति ।

एतादृशनृत्तस्य फलमुक्तं **नन्दिकेश्वरेण—**

द्रष्टव्ये नाट्यनृत्ये ते सर्वकाले विशेषतः । नृत्तं त्वत्र नरेन्द्राणामभिषेके महोत्सवे ॥
श्रुतार्थिभिः प्रयोक्तव्यं माङ्गल्यं सर्वकर्मसु ॥ इति ।

क्वचिदुन्नदद्भिरित्यनेन शारीरं गानं सूचितम् । तच्च गानं नादोत्पत्तिक्रमेणोत्पद्यते । प्रथमं विवक्षमाणेनात्मना प्रेरितं मनः जाठरं वह्निमाहन्ति, स च वायुं प्रेरयति । स च वायुर्मूलाधारे स्थितः क्रमादूर्ध्वस्थाने सचरन् नाभिहृदयकण्ठमूर्धास्यरूपेषु स्थानेषु ध्वनिमाविर्भावयति । स एव ध्वनिर्नाद इत्युच्यते । स चातिसूक्ष्म, सूक्ष्म पुष्टापुष्ट, कृत्रिमभेदेन क्रमान्नाभ्यादिस्थानेषु स्थितः पञ्च संज्ञा धत्ते । एवं व्यवहारकाले नादस्त्रिविधः । मन्द्रो मध्यस्तारश्चेति । हृदि मन्द्रः, मध्यः कण्ठे, मूर्ध्नि तारः । स च पूर्वपूर्वध्वन्यपेक्षया उत्तरोत्तरो द्विगुणध्वनिः । तदुक्तं **भरतशास्त्रे—**

आत्मा विवक्षमाणो हि मनः प्रेरयते मनः । देहस्थं वह्निमाहन्ति स प्रेरयति मारुतम् ।
ब्रह्मग्रन्थिगतस्सोथ क्रमादूर्ध्वपदे चरन् । नाभिहृत्कण्ठमूर्धास्ये त्वाविर्भावयति ध्वनिम् ॥
नादोतिसूक्ष्मस्सूक्ष्मश्च पुष्टोपुष्टश्च कृत्रिमः । इति पञ्चाभिधा धत्ते पञ्चस्थानस्थितः क्रमात् ॥
व्यवहारे त्वसौ त्रेधा हृदि मन्द्रोऽभिधीयते । कण्ठे मध्यो मूर्ध्नि तारः द्विगुणश्चोत्तरोत्तरः ॥

तस्य नादस्य द्वाविंशतिश्रुतयो हृदयस्योपरिप्रदेशे विद्यमानासु नाडीषु द्वाविंशतिसंख्यासु वायुनाभिहतासु श्रुतय उत्तरोत्तरोच्चतरा जायन्ते । तदुक्तं **संगीतरत्नाकरे**—
तस्य द्वाविंशतिर्भेदाः श्रवणाच्छ्रुतयो मताः । हृद्यूर्ध्वनाडीसंलग्नाः नाड्यो द्वाविंशतिर्मताः ॥
तिर्यञ्चस्तासु तावत्यः श्रुतयो मारुताहते । उच्चोच्चतरतायुक्ताः प्रभवन्त्युत्तरोत्तरम् ॥
एवं कण्ठे तथा शीर्षे श्रुतिर्द्वाविंशतिर्मता ।

तासां श्रुतीनां पञ्च जातयः । दीप्ता आयता करुणा मृदुर्मध्येति । तत्र दीप्ता चतुर्विधा—तीव्रा, रौद्री, वज्रिका उग्रा चेति । एवमायता पञ्चविधा— कुमुद्वती, क्रोधा, प्रसारिणी, सन्दीपिनी, रोहिणी इति । करुणापि त्रिविधा—दयावती, आलापिनी, मदंतिका चेति । मृदुश्चतुर्विधा, मन्दा चरतिका प्रीतिः—क्षितिरिति । मध्या षड्विधा—छन्दोवती रंजनी, रक्तिका, मार्जनी, रम्या, क्षोभिणी इति । तदुक्तं **संगीतरत्नाकरे**—

दीक्षा[प्ता]यता च करुणा मृदुर्मध्येति जातयः ।
तीव्रा रौद्री वज्रिकोग्रेत्युक्ता दीप्ता चतुर्विधा ॥
कुमुद्वत्यापताख्या च क्रोधा चापि प्रसारिणी । सन्दीपिनी रोहिणी च भेदाः पञ्चेति कीर्तिताः ॥
दयावती तथालापिन्यथ प्रोक्ता मदन्तिका । त्रयस्ते करुणाभेदा मृदोर्भेदचतुष्टयम् ॥
मन्दा चरतिका प्रीतिः क्षितिर्मध्या तु षड्विधा । छन्दोवती रंजिनी च रक्तिका मार्जनी तथा ॥
रम्या च क्षोभिणीत्यासामथ ब्रूमः स्वरस्थितिम् ॥ इति ।

एतासु श्रुतिषु षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाख्याः सप्त स्वराः समुत्पद्यन्ते । तत्र तीव्रा कुमुद्वती छन्दोवती संज्ञकासु श्रुतिषु चतसृषु षड्जः समुत्पद्यते, दयावतीरक्तिकारञ्जन्याख्यासु तिसृषु श्रुतिषु ऋषभः संजायते । रौद्रीक्रोधाख्ययोः श्रुत्योः गान्धारः समुपद्यते । वज्रिकाप्रसारिणीप्रीतिमार्जनाख्यासु चतसृषु श्रुतिषु धैवतः, उग्राक्षोभिण्योः द्वयोः श्रुत्योः निषादः सञ्जायते । तदुक्तं **सङ्गीतरत्नाकरे**—

दीप्तायता ऋजुर्मध्या षड्जा स्यादृषभे पुनः । सस्थिता करुणा मध्या मृदुर्गान्धारके पुनः ॥

दीप्तायते मध्यमे ते मृदुमध्ये च संस्थिताः। मृदुर्मध्यायताख्या च करुणा पञ्चमे स्थिताः॥
करुणा चायता मध्या धैवते सप्तमे पुनः। दीप्ता मध्येति तासां च जातीनां ब्रूमहे भिदाम्॥
तीव्रा कुमुद्वती मन्दा छन्दोवत्यस्तु षड्जगाः। दयावती रंजिनी च रक्तिका ऋषभे स्थिताः॥
रौद्री क्रोधा च गान्धारे वज्रिकाथ प्रसारिणी। प्रीतिश्च मार्जनीत्येताः श्रुतयो मध्यमाश्रिताः॥

मध्यमस्वरमाश्रिता इत्यर्थः।

क्षिती रक्ता च सन्दीपिन्यालापिन्यथ पञ्चमे। मदंती रोहिणी रम्येत्येतास्तिस्रस्तु धैवते॥

उग्रा च क्षोभिणीति द्वे निषादे भवतः श्रुती।

तत्र षड्भ्यो जायत इति षड्जः। तदुक्तं **नारदेन** —

नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संस्पृशन्।
षड्भिः सञ्जायते यस्मात्तस्मात् षड्ज इति स्मृतः॥

ऋषति हृदयं गच्छति प्राप्नोतीति ऋषभः, ऋषभस्वरसम्पादितत्वाद्वा ऋषभः। तदुक्तम् —

गावो रंगन्ति चार्षभम्।

गां वाचं धरतीति गान्धारः। गान्धाराः जनपदाः, तदधिष्ठितैर्जनैर्गीयत इति गान्धारः। स्वराणां मध्यमे स्थाने स्थितत्वान्मध्यमः, पञ्चस्थानस्थितत्वात्पञ्चमः। धीमद्भिर्गीयत इति धैवतः। निषीदन्ति स्वरास्सर्वे अस्मिन्निति निषादः। तदुक्तं **नारदेन** —

वायुस्समुत्थितो नाभेः कण्ठं शीर्षसमाहतः। नादो ऋषभवद्यस्मात्तस्मादृषभ उच्यते॥
वायुस्समुत्थितो नाभेः कण्ठशीर्षसमावृतः। नासागन्धवहः पुण्यः गांधारस्तेन हेतुना॥
वायुस्समुत्थितो नाभेरुरोहृदि समाहतः। नाभिं प्राप्तो महानादः मध्यमत्वं समश्नुते॥
वायुस्समुत्थितो नाभेरुरोहृत्कण्ठरोहतः। पञ्चस्थानोत्थितस्तस्मात्पञ्चमत्वं विधीयते॥
धैवतं च निषादं च वर्जयित्वा स्वरद्वयम्। शेषान्पञ्चस्वरांस्त्वन्यान्पञ्चस्थानोत्थितान्विदुः॥

इति। ते च स्वरा द्विविधाः शुद्धा विकृताश्चेति। तत्र शुद्धषड्जः, शुद्धऋषभः, शुद्धगान्धारः, शुद्धमध्यमः, शुद्धपञ्चमः, शुद्धधैवतः, शुद्धनिषाद, इति। विकृतषड्जः द्विविधः च्युतोच्युतः। मध्यमोपि द्विविधः च्युतोऽच्युतश्चेति। पञ्चमोपि द्विविधः च्युतोऽच्युतश्चेति। गान्धारोऽपि द्विविधः, साधारणगान्धारः, अंतरगान्धारश्चेति॥

निषादोऽपि द्विविधः, काकलिनिषादः कैशिकनिषादश्चेति । ऋषभश्चतुःश्रुतिरेक एव विकृतः । धैवतोऽपि चतुःश्रुतिरेको विकृतः । तत्र तीव्रा कुमुद्वती मन्दा छन्दोवतीरूपस्वाधारश्रुतिचतुष्टयापेक्षया अधिकर्षभस्वराधारभूतदयावतीरंजनीरूपश्रुतिद्वयाश्रितः अच्युतषड्जः । कुमुद्वतीतीव्रारूपश्रुतिद्वयं परित्यज्य मन्दाछन्दोवतीरूपस्वाधारश्रुतिद्वयं ऋषभाधारभूतं दयावतीरंजनीरूपश्रुतिद्वयं चाश्रितः च्युतषड्जः । ऋषभः स्वाश्रयीभूतदयावतीरंजनीरक्तिकारूपश्रुतित्रयापेक्षया षड्जाधारभूतस्वसमीपवर्तिछन्दोवतीसंज्ञकश्रुत्याश्रितः ऋषभश्चतुःश्रुतिः । एको विकृतः गान्धारः रौद्रीक्रोधरूपस्वाधारश्रुतिद्वयापेक्षया वज्रिकारूपमध्यमाधारभूतश्रुतिमाश्रितः साधारणगान्धारः । गान्धार एव वज्रिकाप्रसारिणीरूपमध्यमाधारभूतश्रुतिद्वयाश्रितः अंतरगान्धारः । मध्यमः स्वाविकरणीभूतवज्रिकाप्रसारिणीप्रतिमार्जनीरूप श्रुतिचतुष्टयापेक्षया स्वसमीप वर्ति पञ्चमस्वराधारभूत क्षितिरक्तारूपश्रुतिद्वयाश्रितोऽच्युतमध्यमः । स एव वज्रिकाप्रसारिणीरूपस्वाधारभूतश्रुतिद्वयं परित्यज्य क्षितिरक्तारूपपंचमस्वराधारभूतश्रुतिद्वयमाश्रितः च्युतमध्यमः । पंचमस्वरः, स्वाधारभूतक्षितिरक्तासन्दीपिन्यालापिन्याख्यश्रुतिषु मध्ये आलापिन्याख्यश्रुत्या हीनः मध्यमग्रामसमाश्रितः त्रिश्रुतिरेको विकृतः, कैशिकाश्रितश्च । मध्यमस्वराधारभूतस्वानन्तरमार्जन्याख्यश्रुत्याश्रितः चतुःश्रुतिरेकः मध्यमग्रामसमाश्रितः धैवतः । स्वाधारभूतमन्दतीव्रारोहिणीरम्यारूपश्रुत्यपेक्षयाधिकमध्यमग्रामाश्रित आलापिन्याख्यश्रुत्या समाहितः चतुःश्रुतिरेकः । निषाद उग्राक्षोभिणीरूप स्वाधार श्रुतिद्वयापेक्षया षड्जाधारभूत तीव्राख्यश्रुतिमाश्रितः कैशिकनिषादः त्रिश्रुतिरेकः । स एव पूर्वोक्तश्रुतित्रयाधिक कुमुद्वतीरूप षड्जाधारश्रुतिमाश्रितश्चतुःश्रुतिरेकः काकलिनिषाद इति । तदुक्तं **सङ्गीतरत्नाकरे** षड्जादिस्वरानधिकृत्य —

त एव विकृतावस्था द्वादश प्रतिपादिताः । च्युतोऽच्युतो द्विधा षड्जो द्विश्रुतिर्विकृतो भवेत् ॥
साधारणे काकलित्वे निषादस्य च दृश्यते । साधारणे श्रुतिं षड्जमृषभः संश्रितो यदा ॥
चतुःश्रुतित्वमायाति तदैको विकृतो भवेत् । साधारणे त्रिश्रुतिः स्यादंतरित्वे चतुःश्रुतिः ॥
गान्धार इति तद्भेदौ द्वौ निश्शङ्केन वर्तितौ । मध्यमः षड्जवद्द्वेधान्तरे साधारणाश्रयात् ॥
पञ्चमो मध्यमग्रामे त्रिश्रुतिः कैशिकी पुनः । मध्यमस्य श्रुतिं प्राप्य चतुःश्रुतिरिति द्विधा ॥
धैवतो मध्यमग्रामे विकृतः स्याच्चतुःश्रुतिः । कैशिके काकलित्वे च निषादस्त्रिचतुःश्रुतिः ॥

ते शुद्धैस्सप्तभिस्सार्धं भवन्त्येकोनविंशतिरिति ।

ननु चतुर्थ्यां श्रुतौ षड्जः, सप्तम्यामृषभः, नवम्यां गान्धारः, त्रयोदश्यां मध्यमः, सप्तदश्यां पञ्चमः विंश्यां धैवतः, द्वाविंश्यां श्रुतौ निषाद इत्युक्तमभिनव-भरताचार्येण —

तत्र तुर्यश्रुतौ षड्जः सप्तम्यामृषभो मतः। ततो नवम्यां गान्धारस्त्रयोदश्यां तु मध्यमः ॥
पञ्चमस्सप्तदश्यां तु विंश्यां स्थाप्यस्तु धैवतः।
द्वाविंश्यां तु श्रुतौ स्थाप्यो निषादः कथ्यते स्वरः, ॥ इति।

तथाचैकैकस्य स्वरस्य अनेकश्रुत्याधारत्वप्रतिपादनमनुपपन्नमिति चेन्न, "तत्र तुर्यश्रुतौ षड्ज" इति पूर्वोदाहृतवचनानां पूर्वश्रुतिमपेक्ष्यैव षड्जादिस्वराणां चतुर्थ्यादि-श्रुत्याधारत्वप्रतिपादनेन विरोधाभावात्, अन्यथा तुर्यश्रुतौ षड्ज इत्यादौ संख्यापूरणार्थक-प्रत्ययानुपपत्तेः। प्रत्युत अभिनवभरताचार्येणैव —

द्वाभ्या निषादगान्धारौ तिसृभ्यो धैवतर्षभौ।
चतसृभ्यः श्रुतिभ्यः स्युः षड्जपञ्चममध्यमाः ॥

इति वचनेन षड्जादिनिषादान्ताना सप्तानां स्वराणामनेकश्रुत्याश्रितत्वप्रतिपादनेन पूर्वोक्त-वचनानामपि पूर्वपूर्वश्रुतिमपेक्ष्यैव चतुर्थ्यादिश्रुत्याश्रयत्वप्रतिपादनपरत्वमिति न किंचि-दनुपपन्नम्। एवं प्रतिपादितेषु सप्तसु स्वरेषु त्रयो ग्रामा, षड्जग्रामो मध्यमग्रामो, गान्धार-ग्रामश्चेति। ग्रामो नाम षड्जादिनिषादान्ताना सप्ताना स्वराणां समूहः, मूर्छना, शुद्धतान, कूटतानादीनामाश्रय। तदुक्तं **शार्ङ्गदेवेन** ––

'ग्राम' स्वरसमूह. स्यान्मूर्छनादेस्समाश्रय, इति। तत्र षड्जग्रामो नाम पञ्चमः स्वरः आलापिन्याख्यस्वाधारभूतचतुर्थश्रुतौ वर्तते तदा षड्जग्राम। पञ्चमस्वर एव सन्दी-पिन्याख्याया स्वाधारभूताया तृतीयस्या श्रुतौ यदा वर्तते तदा मध्यमग्रामः। यदा गान्धारः स्वपूर्वभाविऋषभस्वराधारभूता रक्तिकाख्यां श्रुतिमधिष्ठितस्सन् स्वोत्तरभावि-मध्यमस्वराधारभूतां वज्रिकाख्यां श्रुतिमाश्रयते तदा गान्धारग्रामः। **तदुक्तमाकरे** —

ग्रामः स्वरसमूह' स्यान्मूर्छनादे' समाश्रयः। षड्जग्रामः पञ्चमे स्वचतुर्थश्रुतिसंस्थिते ॥
स्वोपान्त्यश्रुतिसंस्थेऽस्मिन् मध्यमग्राम इष्यते। रिमयोः श्रुतिमेकैकां गान्धारश्चेत्समाश्रितः ॥
पश्रुतिं धोनिषादस्तु धश्रुतिं सश्रुतिं श्रित'। गान्धारग्राममाचष्टे तदा तन्नारदो मुनिः ॥
तौ द्वौ धरातले तत्र स्यात्षड्जग्राम आदितः। द्वितीयो मध्यमग्रामस्तयोर्लक्षणमुच्यते ॥
प्रवर्तते स्वर्गलोके ग्रामोसौ न महीतले ॥ इति।

असौ गान्धारग्राम इत्यर्थः। एतेषां ग्रामाणां ब्रह्मविष्णुमहेश्वरास्त्रयो देवाः हेमन्तग्रीष्मवर्षाश्च कालाः। तत्रापि पूर्वाह्णमध्याह्नापराह्णरूपा विशेषकालाः। तदुक्तं **सङ्गीतरत्नाकरे—**

क्रमाद्ग्रामत्रये देवा ब्रह्मविष्णुमहेश्वराः। हैमन्तग्रीष्मवर्षासु गातव्यास्ते यथाक्रमम् ॥
पूर्वाह्णकाले मध्याह्ने पराह्णेऽभ्युदयार्थिभिः ॥ इति।

तत्र ग्रामाश्रिता मूर्छना नाम षड्जादिनिषादान्तानां स्वराणामारोहावरोहरूपा। सा च मूर्छना एकैकस्मिन् ग्रामे सप्तविधा। तत्र षड्जग्रामे, रजनी उत्तरायता शुद्धा, षड्जा, मत्सरीकृत् अश्वक्रान्ता अभिरुद्गता इति सप्त मूर्छना। मध्यमग्रामेऽपि सौवीरी, हरिणाश्वा, कलोपनता, शुद्धा, मध्या मार्गा, पौरवी, हृष्यकेति सप्त मूर्छनाः। गान्धारग्रामेऽपि नन्दा, विशाला, सुमुखी, चित्रा, चित्रवसुखा, आलापा इति सप्त मूर्छनाः। षड्जग्राममूर्छना मध्यमग्राममूर्छनाश्च भूलोके प्रयोक्तव्याः। तत्र षड्जग्राममूर्छनाना प्रत्येकमेकैकस्याश्चातुर्विध्ये सति षट्पञ्चाशन्मूर्छनाः सम्पद्यन्ते। तासा च प्रत्येकं साप्तविध्ये सति द्वानवत्यधिकं त्रिशतं मूर्छनाः सम्पद्यन्ते। तासामपि काश्चन मूर्छनाः शुद्धतानसंज्ञकाः कूटतानसंज्ञकाश्चेति द्विविधा। तदुक्तम्—

क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम्। मूर्छनेत्युच्यते ग्रामद्वये तास्सप्त सप्त च ॥
षड्जे तूत्तरमन्द्रादौ रजनी चोत्तरायता। शुद्धा षड्जा, मत्सरीकृत् अश्वक्रान्ताभिरुद्गता ॥
मध्यमे स्यात्तु सौवीरी हरिणाश्वा ततः परा ॥
स्यात्कलोपनता शुद्धा मध्या मार्गा च पौरवी। हृष्यकेत्यथ तासा तु लक्षणं प्रतिपाद्यते ॥
मध्यस्थानस्थषड्जेन मूर्छना लभ्यतेऽग्रिमा। अधस्तनैर्निषादाद्यैः षडन्या मूर्छनाः क्रमात् ॥
मध्यमध्यममारभ्य सौवीरी मूर्छना भवेत्। षडन्यास्तदधोधस्थस्वरानारभ्य तु क्रमात् ॥
षड्जस्थानस्थितैन्याद्यैरजन्याद्याः परे जगुः। हरिणाश्वादिकागानैर्मध्यमस्थानसश्रितैः ॥
षड्जादीन्मध्यमादींश्च तदूर्ध्वं सारयेत्क्रमात्।
चतुर्धा ताः क्रमाच्छुद्धाः काकलीकलितास्तथा ॥
सान्तरास्तद्द्वयोपेताः षट्पञ्चाशदितीरिताः। प्रथमादिस्वरारंभादेकैका सप्तधा भवेत् ॥
तासूच्चार्यान्त्यस्वरान्तान् पूर्वांतुच्चारयेत्क्रमात्। ते क्रमास्तेषु संख्या स्याद्द्वानवत्या शतत्रयम् ॥
नन्दा विशाला सुमुखी चित्रा चित्रवती सुखा।
आलापा चेति गान्धारे ग्रामे स्युः सप्त मूर्छनाः ॥

ताश्च स्वर्गे प्रयोक्तव्या विशेषास्तेन नोदिताः ॥ इति ।

**चतुर्दण्डिप्रकाशिकायां** तु प्रकारान्तरेण मूर्छनास्वरूपं प्रतिपादितम् --

क्रमात्स्वराणा सप्तानामारोहश्चावरोहणम् । मूर्छनेत्युच्यते तास्तु प्रतिमेलं च सप्तधा ॥
तथाहि षड्जमारभ्य निषादान्ताधिरोहणात् । निषादादिषु षड्जान्तावरोहान्मूर्छनादिमाः ॥
एवं ऋषभमारभ्य षड्जान्तमधिरोहणात् । षड्जादि ऋषभान्तं चावरोहेण द्वितीयका ॥
एवमेव समुन्नेया गान्धारादिस्वरेष्वपि । अतः प्रतिस्वरं तावदेकैका मूर्छना भवेत् ॥
आहत्य वक्ष्यमाणेषु द्विसप्ततिविधेष्वपि । सप्तस्वरसमूहात्मा मेलेषु प्रतिमेलकम् ॥
मूर्छनास्सप्तसप्तेति, इति ।

एवं मूर्छनास्वरूपमुक्तम् । गमकस्वरूपं च तत्रैवोक्तम्–श्रोतृचित्तसुखसंपादनैकतानः स्वरस्य यः कम्पः स गमकः, स च पञ्चदशविधः – निरूप, स्फुरित, कंपित, लीन, आन्दोलित, वलि, त्रिभिन्न, कुरल, आहत, उल्लसित, प्लावित हुंभित, मुद्रित, नामित मिश्रित भेदात् । तदुक्तं **चतुर्दण्डिप्रकाशिकायाम्** —

स्वरस्य कम्पो गमकः श्रोतृचित्तसुखावहः । स्वीयस्थानश्रुतिगतछायामन्याश्रयामपि ॥
छायां गमयतीत्येष गमकः परिकीर्तितः । ते च पञ्चदश प्रोक्ता गमका भरतादिभिः ॥
निरूपः स्फुरितश्चैव कम्पितो लीन इत्यपि । आन्दोलितो वलिश्चाथ त्रिभिन्नकुरलाहतौ ॥
उल्लासितः प्लावितश्च कुंभितो मुद्रितस्तथा ।
नामितो मिश्रितश्चेति भेदाः पञ्चदश स्मृताः ॥ इति ।

तेषां लक्षणानि विस्तरभिया नेह प्रतिपादितानि । एवं स्थाय्यादीनां स्वरूपमपि विस्तरभयान्नेह प्रतिपादितम् । एतादृशगीतिः पञ्चविधा शुद्धा भिन्ना गौडी वेसरा साधारण-भेदात् । तदुक्तं **शार्ङ्गदेवेन** —

गीतयः पञ्चधा शुद्धा भिन्ना गौडी च वेसरा । साधारणीति शुद्धा स्यादवक्रैर्ललितैः स्वरैः ॥
भिन्ना सूक्ष्मैः स्वरैर्वक्रैर्मधुरैर्गमकैर्युता । गौडी त्रिस्थानगमकैरोहटी ललितैः स्वरैः ॥
वेगवद्भिः स्वरैर्वर्णचतुष्केप्यतिरक्तितः । वेगस्वरान्विता गीतिर्वेसरा चोच्यते बुधैः ॥
चतुर्गीतिगतं लक्ष्म श्रिता साधारणी मता ॥ इति ।

एवमुक्तानां गीतिसन्दर्भरूपाणां सप्तानां स्वराणां समूहो रागः श्रोतृचित्तानु-रंजनसम्पादनसमर्थानुपूर्वीविशेषनिष्पाद्यो नानाप्रकारः सम्भवति । ग्रामरागा, उपरागा,

भाषारागाः वैभाषिका अंतरभाषाख्याश्चेति शुद्धादिगीतियोगेन पञ्चधा भवन्ति। तदाह **शार्ङ्गदेवः**—

शुद्धादिगीतियोगेन रागाश्शुद्धादयो मताः, ॥ इति।

तत्र ग्रामरागस्त्रिंशद्विधः। शुद्धाख्याः सप्त, भिन्नपदसञ्ज्ञाश्च पञ्च, त्रयो गौडाख्याः, अष्टौ वेसराख्याः। सप्त साधारणाः आहत्य त्रिंशद्रागाः सम्पद्यन्ते। एवमन्येषामपि रागाणां भेदा विस्तरभयान्नेह प्रतिपाद्यन्ते। एतादृशरागगानकर्ता चतुर्विधः वाग्गेयकारः स्वरादिः गान्धर्वः, गायनश्चेति। तेषां लक्षणान्युक्तानि **संगीतरत्नाकरे**—

वाङ्मात्रं रुच्यते गेयं धातुरित्यभिधीयते। वाचं गेयं च कुरुते यस्स वाग्गेयकारकः॥
शब्दानुशासनज्ञानमभिधानप्रवीणता। लयतालतलाज्ञानं विवेकोनेककाकुषु॥
देशिरागेष्वभिज्ञत्वं वाक्पटुत्वं सभाजयः। परचित्तपरिज्ञानं प्रबन्धेषु प्रगल्भता॥
त्रिस्थानगमकप्रौढिर्विविधालप्तिनैपुणम्। अवधानं गुणैरेभिर्वरवाग्गेयकारकः॥

अथ गान्धर्वः—मार्गं देशं च यो वेत्ति स गान्धर्वोऽभिधीयते।

अथ स्वरादिः — यो वेत्ति केवलं मार्गं स्वरादिस्स निगद्यते।

अथ गायनः—हृद्यशब्दस्सुशारीरो ग्रहमोक्षविचक्षणः।
राग रागाङ्ग भाषाङ्ग क्रियाङ्गोपाङ्ग कोविदः॥

इत्येवमादिभिर्गुणैर्लक्षितो गायनः पञ्चविधः। तदुक्तं **सङ्गीतरत्नाकरे**—

शिक्षाकारोनुकारश्च रसिको रञ्जकस्तथा। भावकश्चेति गीतज्ञाः पञ्चधा गायनं जगुः॥

भावको नाम गीतस्य अतिशयपोषणं स्वमनसापि भावयतीति गीतिपोषकः। तच्च पोषणं शारीरेणापि प्रसाध्यम्। तच्च शारीरमुक्तं **शार्ङ्गसूरिणा**—

रागाभिव्यक्तिशक्तत्वमनभ्यासेऽपि यद्ध्वनेः। तच्छारीरमिति प्रोक्तं शरीरेण सहोद्भवात्॥
तारानुध्वनिमाधुर्यव्यक्तिगाम्भीर्यमार्दवैः। घनता स्निग्धता कान्तिप्राचुर्यादिगुणैर्युतम्॥ इति।

एतच्च शारीरं पुण्यवतः पुंसः स्वत एव भवतीत्युक्तं **निश्शङ्कदेवेन**—

विद्यादानेन तपसा भक्त्या वा पार्वतीपतेः। प्राग्जन्मभाग्यविभवैस्सुशारीरमवाप्यते॥ इति।

एवं च सङ्गीतसाहित्योभयधारको वाग्गेयकारकः, मार्गदेशोभयप्रस्थानवेदी गान्धर्वः, मार्गप्रमाणमात्रनिरतः स्वरादिः, श्रोतृचित्तरंजनैकतानशेमुषीसमुद्दीपकशारीरसम्पन्नो गायनश्चतुर्थ इति विवेकः॥

"व्यालम्बवर्हाभरणैर्मयूरै" रित्यनेन सभानायकेन नर्तकादिभिश्च अलंकृतै-र्भवितव्यमिति सूचितम्। तदुक्तं **सङ्गीतरत्नाकरे —**

शृङ्गारी भूरिदो मानी सर्वालङ्कारभूषितः। श्रीमान्गुणालयश्चापि ग्राहकः कौतुके रतः॥
वाग्मी निर्मत्सरो नर्मनिर्माणनिपुणस्सुधीः। गम्भीरभावः कुशलः सकलासु कलासु च॥
समस्तशास्त्रविज्ञानसम्पन्नः कीर्तिलोलुपः। प्रियवाक्यरतस्तज्ज्ञो मेधावी धारणान्वितः॥
तुर्यलयविशेषज्ञः पारितोषिकदानवित्। सर्वोपकरणोपेतो देशिमार्गविभागवित्॥
हीनाधिकविभागज्ञः प्राज्ञो मध्यस्थ धीरधीः। स्वाधीनपरिवारश्च भावको रसनिर्भरः॥
सत्यवादी कुलीनश्च प्रसन्नवदनोऽत्वरः। स्थिरप्रेमा कृतज्ञश्च करुणावरुणालयः॥
धर्मिष्ठः पापभीरुश्च विद्वद्बन्धुः सभापतिः। वाग्मी सुरूपवेषोसौ गुरुषु स्तुतिकोविदः॥
सभासु परिहासज्ञो भवेद्वादनवाद्यवित्॥ इति॥

"वृक्षाग्रनिषण्ण" इत्यनेन उच्चस्थानस्थिता सभा सूचिता। सभास्वरूपं चोक्तं **सङ्गीतरत्नाकरे —**

विचित्रनृत्तशाला स्यात्पुष्पप्रकरशोभिता। नानावितानसंपन्ना रत्नस्तम्भविभूषिता॥
तस्यां सिंहासनं रम्यमध्यासीत सभापतिः। वामतोन्तःपुराणि स्युः प्रधानं दक्षिणेन तु॥
पृष्ठभागे प्रधानानां कोशश्रीकरणाधिपः। तत्सन्निधौ तु विद्वांसो लोकवेदविशारदाः॥
रसिकाः कवयोऽप्यत्र चतुराः सर्वरीतिषु। मान्यान्ज्योतिर्विदो वैद्यान्विद्वन्मध्ये निवेशयेत्॥
स्याद्वामेतराभागे तु मन्त्रिणां पुरमण्डलम्। तत्रैव सैन्यमान्यानामन्येषामुपवेशनम्॥
विलासिनो विलासिन्यः परितोंतःपुरस्य च। पुरतोऽपि नृपस्य स्युः पृष्ठभागे तु भूपतिः॥
चारुचामरधारिण्यो रूपयौवनसंभृताः। स्वकङ्कणरणत्कारनिर्वाणजनमानसाः॥
अग्रिमा वामभागे स्युः अग्रे वाग्गेयकारकाः।
कथका वन्दिनश्चात्र विद्यावन्तः प्रियंवदाः॥
प्रशंसाकुशलाश्चान्ये विचराः सर्वदा नृषु। ततः परंतु परितः परिवारोपसेवनम्॥
अधिष्ठितं सदः कार्यं दक्षैर्वेत्रधरैर्वरैः। असंरक्षास्तु तिष्ठेयुः सर्वतः शस्त्रपाणयः॥
सन्निवेश्य सभामेनां नेता सङ्गीतवीक्षणे॥ इति।

अत्रापरिमितगायकवादकादिसमुदायनिष्पाद्यत्वप्रतिपादनात् वृन्दगानं सूचितम्॥
**वृन्दगानलक्षणं चोक्तं शार्ङ्गदेवेन —**

गात्रवादकसंघातो वृन्दमित्यभिधीयते ॥ इति ।

तच्च वृन्दं पञ्चविधं, उत्तमं, मध्यं, कनिष्ठं, हीनं कोलाहलं चेति । तल्लक्षणमुक्तं **सङ्गीतरत्नाकरे —**

उत्तमं मध्यममथो कनिष्ठमिति तत्त्रिधा । चत्वारो मुख्यगातारो द्विगुणास्समगायनाः ॥
गायिन्यो द्वादश प्रोक्ता वंशिकानां चतुष्टयम् । मार्दंगिकास्तु चत्वारो यत्र तद्वृन्दमुत्तमम् ॥
मध्यम स्यात्तदर्धेन कनिष्ठमितरद्भवेत् । इतो न्यूनं तु हीनं स्याद्यथेष्टमथवा भवेत् ॥
उत्तमाभ्यधिकं वृन्दं कोलाहलमितीरितम् ॥ इति ।

अन्ये तु प्रकारान्तरेण वृन्दलक्षणमुक्तवन्तः —

आह वृन्दविशेषं तु कुतुपं भरतो मुनिः । ततस्य चावनद्धस्य नाट्यस्येति त्रिधा च सः ॥
ततस्स कुतुपो ज्ञेयो गायनः सपरिग्रहः । वीणा घोषवती चित्रा विपञ्ची परिवादिनी ॥
वल्लकी कुब्जिका ज्येष्ठा नकुलोष्ठी च किन्नरी ।
जया कुर्मी पिनाकी च हस्तिका शततन्त्रिका ॥
औदुम्बरी च षड्वर्णः पौर्णो रावणहस्तकः । वाद्यानामेवमादीनां पृथग्वादकसचयः ॥
नाट्यस्य कुतुपः पात्रैरुत्तमाधममध्यमैः । कुतुपानाममीषां तु समूहो वृन्दमुच्यते ॥

तच्च वृन्दगानं द्विविधं निबद्धमनिबद्धं चेति ।

तदुक्तं—बद्धं धातुभिरंगैश्च निबद्धमभिधीयते । आलप्तिबन्धहीनत्वादनिबद्धमितीरिता ॥

अत्रानिबद्धगानमेव प्रबन्धगानमित्याख्यायते । प्रबन्धलक्षणं चोक्तं **संगीतचूडामणौ —**

चतुर्भिर्धातुभिष्षड्भिश्चाङ्गैर्यस्मात्प्रयुज्यते । तस्मात्प्रबन्धः कथितः प्रतापपृथिवीभुजा ॥

तत्र चत्वारो धातवः, उद्ग्राहः,मेलापकः, ध्रुवः, आभोगश्चेति । तत्रोद्ग्राहो नाम पादचतुष्टयात्मकस्य श्लोकस्य प्रथमे पादे कामवत्पदघटितं, मघवत्पदघटितं चेति यत्खण्डद्वयं तद्द्वयाभिव्यञ्जकगीतिभागः। तथा कान्तवत्पदघटितश्लोकखण्डाधारात्मकाक्षराभिव्यञ्जकगीत्यंशः ध्रुवः । उद्ग्राहध्रुवयोर्मेलसम्पादको गीत्यंशो मेलापकः । आभोगः अन्तिमो भागः, 'आभोगः परिपूर्णते'त्युक्तेः । अङ्गानि, सरिगमपधनीत्येवंरूपाः स्वराः षड्जादयः । विरुदं नायकगतशौर्यौदार्यादिगुणप्रतिपादकं पदं, नायकवाचकं पदं मङ्गलार्थं च तत्पदं, तोदिगदांदांधिमिधिमीत्यादिवाद्याक्षराणि पाठः । ध्रुवमध्यादिरूपास्तालाः । तदुक्तं **सङ्गीतरत्नाकरे —**

प्रबन्धावयवो धातुः स चतुर्धा निरूपितः। उद्ग्राहः प्रथमो भागः ततो मेलापकः स्मृतः ॥

ध्रुवत्वात्स्याद्ध्रुवः पश्चादाभोगस्त्वन्तिमो मतः ।

तत्र मेलापकाभोगौ न भवेतां क्वचित्क्वचित् ॥

स द्विधातुस्त्रिधातुश्च चतुर्धातुरिति त्रिधा। प्रबन्धाङ्गानि षट् तस्य स्वरश्च बिरुदं पदम् ॥

तेनकः पाठतालौ च प्रबन्धपुरुषाकृतेः। भवन्त्यङ्गपदाङ्गानि मङ्गलार्थं प्रकाशिते ॥

तत्र तेन्नपदे नेत्रे स्तः पाठविरुदौ करौ। प्रबन्धगतिहेतुत्वात्पादौ तालस्वरौ मतौ ॥

स्वराः षड्जादयस्तेषां वाचकाः सरिगादयः। विरुदं गुणनाम स्यात्ततोन्यद्वाचकं पदम् ॥

तेन्नेति शब्दस्तेन स्यान्मङ्गलस्य प्रकाशकः। ओंतत्सदिति निर्देशतत्वमस्यादिवाक्यवत् ॥

तदिति ब्रह्म तेनायं ब्रह्मणा मङ्गलात्मना। लक्षितस्तेन तेनेति पाठो वाद्याक्षरात्मकः ॥

निरूपयिष्यते तालो ध्रुवमध्यादिरूपतः ॥ इति ।

एवमुक्तं प्रबन्धाख्यनिबन्धगानं द्विविधं निर्युक्तमनिर्युक्तंचेति। तत्र नियतच्छन्दस्तालादियुक्तं गानं निर्युक्तमित्युच्यते, तन्नियमरहितं तु अनिर्युक्तम्। तदुक्तं **शार्ङ्गसूरिणा**—

अनिर्युक्तश्च निर्युक्तः प्रबन्धो द्विविधो मतः ।

छन्दस्तालाद्यनियमात् आद्यस्तन्नियमात्परः ॥ इति ।

एतदपि पुनस्त्रिविधं, सूडः, आलिकुलक्रमसंश्रयः विप्रकीर्णश्चेति। तत्र सूडो द्विविधः, शुद्धस्तालकश्चेति। तत्र शुद्धश्चतुर्विधेला अष्टविधकरण, ठेंकिकाचतुष्टय, एकविधवर्तनि, द्विविधजोंड, अष्टविधलम्भक, एकविधरास, एकविधैकतालीरूपाष्टांगोपेतः। सालकस्तु ध्रुव, मध्य, प्रतिमध्य, निरासक, अड्डुताल, रास, एकतालीरूप सप्ततालोपेतः। तत्र एला बहुविधाः, तेषां मध्ये वर्णेला गणेला, मात्रेला, देशेलेति चतसृणामेव प्राधान्यं प्रतिपादितम्। तदुक्तं **सङ्गीतरत्नाकरे** —

एलादिश्शुद्ध इत्युक्तो ध्रुवादिस्सालतो मतः। एलाकरणढेंकीभिः वर्तन्या जोंबडेन च ॥

लम्भरासैकतालीभिः अष्टभिस्सूड उच्यते। तत्र वर्णगणैर्जाता गणैला परिकीर्तिता ॥

सा भद्रे(वे)त्रिविधा शुद्धा संकीर्णा विकृता तथा ।

शुद्धा चतुर्विधा नादावती हंसावती तथा ॥

नन्दावती च भद्रावत्यथासां लक्ष्म कथ्यते। गणादिनियमस्त्वासां अंघ्रिखण्डद्वयाश्रयः ॥

गणस्समूहः स द्वेधा वर्णमात्राविशेषणात्। गुरुर्लघुरिति द्वेधा वर्णोनुस्वारसंयुतः ॥

सविसर्गो व्यञ्जनान्तो दीर्घो युक्तपरो गुरुः । वा पादान्तो गुरुर्वक्रो द्विमात्रो मात्रिको लघुः ॥
एवं पदे पदान्ते वा प्रकृते लघवो मताः । तच्च वर्णगणो वर्णैः त्रिभिरष्टविधश्च सः ॥

मस्त्रिगुः पूर्वलो यः स्यान्मध्यलो रोन्तगुस्तु सः ।
तोंतलो मध्यगो जः स्याद्भादिभः त्रिलघुस्तु नः ॥ इति ।

एवमन्येषां भेदास्तल्लक्षणानि च विस्तरभयान्नेह प्रतिपाद्यन्ते, इति ।

इत्थं वीणातालमृदङ्गनृत्तगीतादिविशिष्टं कोलाहलाख्यवृन्दगानोपेतं संगीतमुत्प्रेक्षितम् ।

ननु भगवता वाल्मीकिना वनेषु संगीतमिव प्रवृत्तमिति संगीतमुत्प्रेक्षितम् । तथान्यत्रापि 'पाठ्ये गेये च मधुरमिति' रामायणस्य गानयोग्यत्वं प्रतिपादितम् । **एवमुत्तरकाण्डेऽपि** —

ऋषीणामुपविष्टानां ततो गेयं प्रवर्त्यताम् ।

इति गानार्थतया वाल्मीकिमहर्षिप्रेषणं च कुशलवयोरवगम्यते । एवं **बालकाण्डेऽपि** — "काव्यमेतदगायेता"मिति कुशलवकर्तृकगानं प्रतिपादितं, एतत्सर्वमसंगतम् । सकलशास्त्रप्रतिषिद्धगीतप्रतिपादनस्य धर्मैदम्पर्येण प्रवृत्ते रामायणे अयुक्तत्वात् । तत्प्रतिषेधश्च **मानवे** —

न नृत्येदथवा गायेन्न वादित्राणि वादयेत् ।
न चास्फोटेन्न च क्ष्वेलेत्संरक्तोऽपि न रावयेदिति ॥

श्रुतावपि गायकस्यापपात्रत्वाप्रतिग्राह्यत्वादिप्रतिपादनादपि गानविषेधोऽवगम्यते । तथाचापपात्रत्वे **तैत्तिरीयत्वश्रुतिः** — 'तस्माद्गायते न देयं, गाथा हि तद्वृङ्क्त' इति । अप्रतिग्राह्यत्वमपि **पारक्षुद्रशाखायां** तत्रैव, 'देवा वै ब्रह्मणश्चान्नस्य च शमलमपाघ्नन्ती'त्युपक्रम्य 'तस्माद्गायतश्च मत्तस्य च न प्रतिगृह्यं, यत्प्रतिगृह्णीयाच्छमलं प्रतिगृह्णीयात्' इति । गायकस्य हव्यकव्ययोर्वर्जितत्वप्रतिपादनेनापि, निषेधो **मानवे** वर्ज्याः स्युर्हव्यकव्ययोरित्यधिकृत्य —

कुशीलवोऽवकीर्णी च वृषलीपतिरेव च । स्तेयगायकयोर्वान्नं तक्ष्णो वार्धुषिकस्य च ॥इति।

तथा चेत्थं श्रुतिस्मृतिप्रतिषिद्धं संगीतं कथं रामायणे महर्षिणा प्रतिपादितम् । किंच नृत्तदर्शनसंगीतश्रवणादिकमपि विशिष्य गृहस्थानामेवाभिहितम् । **मोक्षधर्मे** — चातुराश्रम्ये गृहस्थाश्रममधिकृत्य—अपिचात्र माल्याभरणवस्त्राभ्यङ्गनित्योपभोगनृत्तगीतवादित्रश्रुतिसुखनयनाभिरामदर्शनानां प्राप्तिः भक्ष्यभोज्यपेयचोष्याणां विविधानामुपभोगः

सन्तोषकामसुखावाप्तिरिति। तथाच सर्वाश्रमसाधारण्येन संगीतनृत्तवाद्याचरणस्य प्रतिषिद्धत्वात् नृत्तदर्शनसंगीतश्रवणादेः विशिष्य गृहस्थानामेव विधानबलेन इतराश्रमिणां प्रतिषिद्धत्वाच्च वाल्मीकिः कथं गीतियोग्यप्रबन्धं रचयित्वा कुशलवयोर्गीतिशिक्षणं कृतवान्? कथं वा ब्रह्मचारिणौ कुशलवौ प्रबन्धमगायेतामिति चेत्, न तावद्गानमात्रं प्रतिषिद्धमिति वक्तुं शक्यं, कर्मांगतया गानमात्रस्य तत्र तत्रोपलम्भात्। तथा च **महाव्रते** श्रुतिः— 'उदकुम्भानधिनिधाय दास्यो मार्जालीयं परिनृत्यन्ति पदो निघ्नतीरिदं मधुं गायन्त्यो मधु वै देवानां परममन्नाद्यं परममेवान्नाद्यमवरुन्धते' इति।

**अश्वमेधेऽपि**— 'ब्राह्मणौ वीणागाथिनौ गायतः श्रिया वा एतद्रूपं यद्वीणा श्रियमेवास्मिन् धत्ते' इति। तथा 'ब्राह्मणोन्यो गायेद्राजन्योन्यः ब्रह्म वै ब्राह्मणः क्षत्रं राजन्यः तथाहास्य ब्रह्मणा क्षत्रेण चोभयतः श्रीः परिगृहीता भवती'ति। तथा 'दिवा ब्राह्मणो गायन्नक्तं राजन्यः ब्रह्मणो वै रूपमहः क्षत्रस्य रात्रिः तथाहास्य ब्रह्मणा च क्षत्रेण चोभयतो राष्ट्रं परिगृहीतं भवतीति' च। तथा 'इत्यददा, इत्ययजथा, इत्यपच इति ब्राह्मणो गायेत्। इष्टापूर्तं वै ब्राह्मणस्य इष्टापूर्तेनैवैनं स समर्धयतीति'। तथा 'इत्यजिना इत्ययुध्यथाः अमुं संग्रामं अहन्निति राजन्यः युद्धं वै राजन्यस्य युद्धेनैवैनं स समर्धयति' इति।

तद्भाष्यं च 'इत्यददा इति दानादिप्रकारविशेषे इतिशब्दः इत्यददाः एवं ब्राह्मणेभ्यो गोभूहिरण्यादि दत्तवानसि। इत्ययजथाः एवं वाजपेयराजसूयद्वादशादिभिरिष्टवानसि, इत्यपचः एवं कुल्यासशाकसूपपायसादीनि ब्राह्मणेभ्योन्नानि पक्वानसि, एवमीदृशार्थप्रतिपादिकाभिर्लौकिकगाथाभिः संस्कृतैः पदैः ब्राह्मणो गायेत्। इष्टापूर्तयोः ब्राह्मणसंबन्धित्वात् ताभ्यामेनं यजमानं समर्धयति। इत्यजिना इत्यादि सायं धृतिषु हूयमानासु राजन्यो वीणागाथी गायति। इत्यजिनाः एवं पृथुभरतभागीरथयुधिष्ठिरादिभिः सुकृतकर्मभिः समानं शत्रून् क्षपितवानसि, इत्ययुध्यथाः, एवं करिरथतुरगपदातिसमेतः शरचापतोमरकरवाळादिभीषणमहाशूरपरिवृतोरिभिः सह युद्धं कृतवानसि, इत्यमुं संग्राममहन् एवं दुष्यन्तयुधिष्ठिरादिवन्महावीरपुरुषसिंहसहस्रसमधिष्ठितं संग्राममभुं काश्मीरं मागधं पौण्ड्रमित्यादिं निशितासिमात्रसहायस्त्वं हतवानसि। इत्थं राजन्यसंबन्धिना युद्धेन समृद्धमेनं करोति। तथा च श्लोकाः—

दानस्य—

सौवर्णीर्निष्ककोटीः प्रतिदिनमददाः सादरं ब्राह्मणेभ्यो
ब्रह्मभ्यो वेदविद्भ्यो, दिशि दिशि विहिता अग्रहाराः समग्राः।
कुण्डोध्नीनां गवामप्यविरतमयुतं ब्राह्मणेभ्यो वितीर्णं
वासोरत्नादिदाने नहि तव गणना भूपचूडामणेऽभूत् ॥

यागस्य —

मखैरयजथा महीशतमख स्फुरद्दक्षिणैरविक्षतविधिक्रमैरहरहीनभेदैस्सदा।
सवैः पशुभिरिष्टिभिर्विविधनित्यकाम्यात्मभिर्महाक्रतुभिरुज्वलैरपि च राजसूयादिभिः ॥

पाकस्य यथा — खण्डजीरकघृताम्लसैन्धवस्वादुसूपमरिचादिसंस्कृतैः।
व्यञ्जनैस्सह बहूपदंशकैः ब्राह्मणार्थमपचस्त्वमोदनान् ॥

ज्यानेः — विषयान्प्रविलुप्य गोधनानामुपहर्ता त्वमुदारदामहारी।
विनिवार्य च मङ्गलोपचारानजिनाविद्विषतां महाकुलानि ॥

युद्धस्य यथा —

आकर्षन्मददुर्दिना गजघटां सिन्दूरसन्ध्याकुला-
मुद्वृत्तोत्प्लुतवाजिलोकपिहितव्योमावकाशो भृशम्।
पादातैर्निशितासिभीषणकरैर्दिङ्मण्डलग्राहिभि-
र्विक्रान्तस्त्वमयुध्यथाः परबलैस्सार्धं महीवासवः ॥

वधस्य — विक्रान्तान् रथगजवाजिलोकजुष्टानक्षोभ्यान्धृतविविधायुधप्रधानान्।
संग्रामे मगधकलिंगवङ्गपूगान् शक्रस्त्वं प्रसभमहन्महीमहेन्द्र ॥ इति ॥

इत्थं कर्माङ्गतया श्रौतं गानं विहितम्। तथा लौकिकमपि गानं कर्माङ्गतया विहितम्। तथा चाग्न्याधेये **आपस्तम्बः** — वीणातूणवेनैनमेतां रात्रिं जागरयन्तीति। तत्र भाष्यं-तूणवो वंशः वीणा च तूणवश्च वीणातूणवं, 'द्वन्द्वश्च प्राणितूर्यसेनांगाना-मित्येकवद्भाव इति। स्मार्तकर्मण्यपि सीमन्ते स एव — 'गायतमिति वीणागाथिनौ संशास्तीति'। **आश्वलायनोऽपि** – वीणागाथिनौ संशास्ति सोमं राजानं संगायेतामिति। तथा च इत्थं कर्माङ्गतया गानं विहितम् ॥

इत्थं कर्माङ्गत्ववदुभयविधस्य गानस्य मोक्षोपयोगोऽपि भवतीति मत्वा वैदिक-गीतेस्तदुपासनाप्रतीकत्वमाह **याज्ञवल्क्यः** —

यथाविधानेन पठन् सामगायमविच्युतम् । सावधानस्तदभ्यासात्परं ब्रह्माधिगच्छति, इति ।

तद्व्याख्या च — यस्य पुनश्चित्तवृत्तिर्निराकारालम्बनतया समाधौ नाभिरमते तेन शब्दब्रह्मोपासनं कार्यमित्याह—यथाविधानेनेति—स्वाध्यायावगतमार्गानतिक्रमेण सामगायं सामगानं, साम्नो गानात्मकत्वेऽपि गायमिति विशेषणमप्रगीतमन्त्रव्युदासार्थम् । अविच्युत-मस्त्रावितं, सावधानः सामध्वन्यनुस्यूतात्मैकाग्रचित्तवृत्तिः, पठन् तदभ्यासवशात् तत्र निष्णातः शब्दाकारशून्योपासनेन परं ब्रह्माधिगच्छति । तदुक्तम् — 'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति' इति । इत्थं च वैदिकगीतेः ब्रह्मोपासनाप्रतीकत्वमुक्तम् । यस्य पुनर्वैदिक्यां गीतौ चित्तवृत्तिर्न रमते यस्य वा तत्रानधिकारः तेन निषिद्ध-लौकिकगीतानुस्यूतब्रह्मोपासनं कार्यं प्रधानसिद्ध्यर्थं निषिद्धस्यापि ग्राह्यत्वात् । तथा च **सुरेश्वराचार्यः** —

समाप्तिं न समायाति प्रधानं यदसंभवे ।
निषिद्धमपि तत्कार्यं तत्समाप्तिप्रयुक्तितः ॥ इति ।

युक्तं चैतत् —

शिशु(शुचि)र्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणी । लुब्धकाद्गीतिलोभेन मृगो मृगयते वधम् ॥

इत्यादिलोकप्रवादानुरोधेन अनुभवेन च शिशुसर्पमृगादीनामप्यैकाग्र्यस्यायत्नसिद्धत्वावगमेन तत्र ब्रह्मदृष्टिमात्रकरणस्य सुलभत्वादित्याहापरान्तकमित्यादित्रिभिः श्लोकैः —

अपरान्तकमुल्लोप्यं मुद्रकं प्रकरी तथा । औवेणकं सगोविन्दं अन्तरं गीतकानि च ॥
ऋग्गाथा पणिका दक्षविहिता ब्रह्मगीतिका । गेयमेतत्तदभ्यासकरणान्मोक्षसंज्ञितम् ॥
वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः । तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति ॥ इति ।

अत्र विज्ञानेश्वरः—अपरान्तकं उल्लोप्यं, मुद्रकं, प्रकरी, औवेणकं गोविन्दं, अन्तर-मित्येतानि प्रकरणाख्यानि, सप्तगीतकानि । तानि च शब्दादासादितवर्धमानकादि महागीत-कानि गृह्यन्ते । ऋग्गाथाद्याश्चतस्रो गीतका इत्येतदपरान्तकादि गीतजातं अध्यारोपि-तात्मभावं मोक्षसंज्ञितं गातव्यम् । तदभ्यासस्यैकाग्र्यतापादनद्वारेणात्मैकाग्रतापत्तिकार-कत्वात् । तथा भरतादि मुनिप्रतिपादित वीणावादन तत्त्ववेदी वीणावादनतत्त्वज्ञः । श्रूयत इति श्रुतिः । द्वाविंशतिधा, सप्तस्वरेषु । तथाहि — षड्जमध्यमपञ्चमाः प्रत्येकं चतुःश्रुतयः, ऋषभधैवतौ प्रत्येकं त्रिश्रुती, गान्धारनिषादौ प्रत्येकं द्विश्रुती इति । जातयः

षड्जादयः सप्त शुद्धाः, संकरजातयस्त्वेकादश इत्येवमष्टादशजातयः, तासु विशारदः प्रवीणः, ताल इति गीतेः परिमाणं कथ्यते, तत्स्वरूपज्ञश्च तदनुविध ब्रह्मोपासनया तालादिभङ्गभयाच्चित्तवृत्तेरात्मैकाग्रतायाः सुकरत्वादल्पायासेनैव मुक्तिपथं नियच्छति प्राप्नोति। चित्तविक्षेपाद्यन्तरायेण हतस्य गीतज्ञस्य फलान्तरमाह —

गीतज्ञो यदि योगेन न प्राप्नोति परं पदम्। रुद्रस्यानुचरो भूत्वा सह तेनैव मोदते ॥

गीतियोगी यदि कथंचिद्योगेन तद्गीत्यनुविद्धब्रह्मानुसन्धानात्मकपरमं पदं न प्राप्नोति, तर्हि रुद्रस्य सचिवो भूत्वा तेनैव सह मोदते, क्रीडति, तथा च ब्रह्मज्ञानोपयोगः अविशेषेण लौकिकवैदिकगीत्योः प्रतिपादितः।

ननु उक्तरीत्या वैदिकगीत्युपासनवल्लौकिकगीत्युपासनमपि ब्रह्मज्ञानसम्पादकमित्युक्तं, तत्कथं लौकिकवैदिकगीत्योः साम्यमिति चेन्न, वैदिकगानसबन्धिप्रथमादिस्वराणां लौकिकगानसंबन्धि षड्जादिस्वराणा च परस्पराभेदप्रतिपादनद्वारा साम्यस्य प्रतिपादितत्वात्। तथा च नारदः —

यस्सामगानां प्रथमः सवर्णो मध्यमः स्वरः। यो द्वितीयः स गान्धारः तृतीयस्त्वृषभः स्मृतः॥

चतुर्थं षड्ज इत्याहुः पञ्चमो धैवतो भवेत्। षष्ठो निषादो विज्ञेयः पञ्चमः सप्तमः स्मृतः॥

अंगुष्ठस्योत्तमे क्रुष्टो ह्यंगुष्ठे प्रथमः स्वरः। प्रादेशिन्यां तु गान्धारो ऋषभस्तदनन्तरः॥

अनामिकाया षड्जस्तु कनिष्ठायां तु धैवतः।
तस्याधस्तात्तदन्यं तु निषादं तत्र निर्दिशेत् ॥ इति।

अतश्च शीक्षोक्तरीत्या लौकिकवैदिकगीत्योः परस्पराभेदं ज्ञात्वा लौकिक्यां गीतौ ब्रह्मोपासकस्यापि मोक्षो भवतीति। एवमेव लौकिके वैदिके वा अप्रतिषिद्धे प्रतीके उपासनात् ज्ञानसिद्धिरुक्ता योगशास्त्रे-यथाभिमतध्यानाद्वा। तस्य चायमर्थः—यद्यदनिषिद्धं लौकिकं वैदिकं वा स्वाभिमतं वस्तु तत्र ब्रह्मदृष्टिकरणेन ज्ञानद्वारा मोक्षो भवतीति। अत्र च ब्रह्मज्ञानमुपासनासाध्यं, उपासनं च निराकारस्य ब्रह्मणो न भवतीति किंचिदालम्बनं वक्तव्यम्। तत्रानभिमते वस्तुनि बुद्धिप्रवृत्तिरेव न भविष्यतीति ध्यानमशक्यं, अभिमते वस्तुनि स्वत एव मनःप्रवृत्तेः सत्वात् ब्रह्मदृष्टिमात्रकरणं लघु इत्यभिप्रायेणैवाभिमतध्यानाद्वेत्याह। इत्थं धर्मोपयुक्तत्वं मोक्षोपयुक्तत्वं च। तथार्थकामार्थत्वमपि गानस्य "तद्य इमे वीणायां गायन्ति एतं ते गायन्ति तस्मात्ते धनसनय" इति।

"तस्माद्गायन्तं स्त्रियः कामयन्ते" इति श्रुतिभ्यां अनुभवेन चावगम्यते। अतस्तादृशगानविषयाणि निषेधवचनानि। अत एव गानेन धनग्रहणं प्रतिषेधति **भगवान्वाल्मीकिः—**

ऋषीणामुपविष्टानां ततो गेयं प्रवर्त्यताम्।
लोभश्चापि न कर्तव्यः स्वल्पोऽपि धनकांक्षया ॥ इति।

तथैव कुशलवाभ्यां रामदत्तं धनं न गृहीतम्। तदपि तत्रैव—

अष्टादशसहस्राणि सुवर्णस्य महात्मनोः। ददस्व शीघ्रं काकुत्स्थ बालयोर्मा वृथाश्रयः ॥
दीयमानं सुवर्णं तन्न गृहीतां कुशीलवाविति।

इत्थं संगीतस्य पुरुषार्थचतुष्टयसाधनत्वं परमेश्वरोपासनाय प्रवृत्तस्य मोक्षफलकत्वं च। **सङ्गीतरत्नाकरेऽपि**— तत्र पुरुषार्थ चतुष्टय साधनत्वं श्रुतिस्मृतिप्रसिद्धमित्यत्र—

धर्मार्थकाममोक्षाणामिदमेव हि साधनम्। गायतौ ब्राह्मणौ वीणागाथिनाविति च श्रुतौ ॥
अश्वमेधप्रकरणे वीणोक्ता धर्मसाधनम्। वीणानादानुरक्तेभ्यो राजभ्यो वैणिका जनाः ॥
लभन्ते कांक्षितानर्थांस्तस्माद्वीणार्थसाधनम्। कामयन्ते ह गायन्तं स्त्रिय इत्युदितं श्रुतौ ॥
गानस्य कामहेतुत्वं गानोत्पत्तिस्तु वीणया। वीणावादनतत्वज्ञः श्रुतिजातिविशारदः ॥
तालज्ञश्चाप्रयासेन मोक्षमार्गं स विन्दति। इत्येवं याज्ञवल्क्येय वीणा मोक्षाय शंसिता ॥

तथान्यत्रापि—

एतैः प्रकरणाख्यानि गीतकानि जगुर्बुधाः। तानि वक्ष्यामहे सम्यक् तेषामाद्यं तु मुद्रकम् ॥
अपरान्तकमुल्लोप्यं प्रकर्यौ वेणकं तथा। गोविदकान्तरे सप्त गीतकानीत्यवादिषुः ॥

अथोत्तरसप्तकम्—

छन्दकासरितं वर्धमानकं पाणिकं तथा। ऋचो यजूंषि सामानि गीतकानि चतुर्दश ॥
शिवस्तुतौ प्रयोज्यानि मोक्षाय विदधे विधिः।

तथाच भगवता वाल्मीकिमहर्षिणा स्वस्य परमपुरुषाभिध्यानार्थतया गीतिरूपं रामचरितं वर्णितम्। गानार्थतया रामनिकटे कुशलवयोः प्रेषणं तु "इत्यददाः इत्ययजथाः इत्यपच, इति ब्राह्मणो गायेत्, अमुं संग्राममहन्निति राजन्य इति श्रुतिविहितयजमानस्तुति पाठं गानार्थतैव। तथाचोत्प्रेक्षणं गेयत्वप्रतिपादनं गानाय प्रेषणादिकमखिलमपि अप्रतिषिद्धकर्मब्रह्मज्ञानार्थतया प्रवृत्तगानविषयतयैवोपपन्नमिति महर्षिकृतं संगीतत्वोत्प्रेक्षणादिकमखिलमपि युक्तमेव।

मासि भाद्रपदे ब्रह्म ब्राह्मणानां विवक्षताम्।
अयमध्यायसमयः सामगानामुपस्थितः॥

अत्र ब्रह्म वेदः तद्विवक्षतां सामगानां ब्राह्मणानां भाद्रपदे मासि अध्ययनारंभसमय इत्युक्तम्। तस्मिन् मासि कालविशेष उक्तः खादिरगृह्ये —

प्रौष्ठपदीहस्तेनाध्यायानुपाकुर्युरिति। तद्भाष्यं च प्रोष्ठपदे मासि हस्तेन युक्ते काले अध्यायान्वेदभागान् तदङ्गानि च उपविष्टाः संहिता अधीयीरन्। वक्ष्यमाणेन प्रकारेण प्रौष्ठपदहस्त इति वक्तव्ये बह्वन्यथोक्तम्। अन्यदपि बहुस्मृतिसदाचारसिद्धमत्र कर्तव्यमिति। तत्र गृह्यपरिशिष्टे-अथ नदीं महोदका वा सह शिष्यैर्गत्वेत्यादिना, महानदीस्नान, पञ्चगव्य-प्राशन, ऋषिपूजनहोमादिरूपमित्युक्तम्। गौतमोऽपि— श्रवणादिवार्षिकं प्रौष्ठपदीं वोपाकृत्याधीयीत, छन्दांस्यर्धपञ्चमान् मासान् पञ्च दक्षिणायनं वेति। सामगानामय-मुपस्थित इत्युक्त्या बह्वृचानां तैत्तिरीयाणां च अन्य एवोपाकर्मकाल इत्युक्तं भवति। तथाचाश्वलायनः— अथातोऽध्यायोपाकरणं, ओषधीनां प्रादुर्भावे श्रवणेन श्रवणस्य पञ्चम्यां हस्तेन वा, इति। आपस्तम्बोऽपि— श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत। तैष्यां पौर्णमास्या तत्पूर्वस्यां रोहिण्यां वा विरमेत्, उत्सृजेदिति। बोधायनोऽपि—श्रावण्यां पौर्णमास्यामुपाकर्मापि वाषाढ्यां, तैष्यां माघ्यां वोत्सृजेदिति।

मनुरपि—

श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि। उक्तछन्दांस्यधीयीत मासान् विप्रोधिपञ्चमान्॥
पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः। माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि॥ इति।

इदं चोपाकरणं सिंहस्थे सवितरि कर्तव्यम्। तथाच कालादर्शे—

विदधीरन् उपाकर्म श्रावण्यां तैत्तिरीयकाः। बह्वृचाः श्रवणे कुर्युः सिंहस्थोर्को भवेद्यदेति॥

यदा सिंहस्थितोर्को न भवति तदा तैत्तिरीयकाः प्रोष्ठपद्यां श्रवणे च व्यवस्थया, इति। सिंहस्थे सवितरि कर्तव्यं, एतन्नर्मदोत्तरदेशविषयं, नर्मदादक्षिणे तु कर्कटराशिस्थे सवितरि कर्तव्यम्। तथा च स्मृतिः —

नर्मदोत्तरदेशे तु कर्तव्यं सिंहयुक्तके। कुलीरे रविसंयुक्ते उपाकुर्यात्तु दक्षिणे॥ इति।

व्याघ्रोऽपि —

रवौ कर्कटराशिस्थेप्याषाढे श्रावणेऽपि वा। उपाकर्म च कर्तव्यं निषेधो नास्ति दक्षिणे, इति।

उक्तकाले तु श्रावणस्य शुक्रमौढ्यादिना दुष्टत्वे प्रौष्ठपद्यां कर्तव्यं, तस्यापि दुष्टत्वे आषाढ्यां, मासत्रयस्यापि दुष्टत्वे श्रावण्यामेव कर्तव्यम्। तथाच **वसिष्ठः**—

मलमासे निपतिते सूतके मृतकेऽपि वा। ग्रहणे संक्रमे चैव मौढ्येऽपि गुरुशुक्रयोः॥

प्रौष्ठपद्यामथाषाढ्यामुपाकरणमिष्यते। प्रौष्ठपद्यामुपाकुर्याच्छ्रावणं दूषितं यदि॥

आषाढे वापि कर्तव्यं प्रौष्ठपद्याश्च दूषणे। मासत्रयेऽपि दोषश्चेच्छ्रावण्यामेव कारयेत्॥

इति। **व्यासोऽपि**—

श्रावण्यामथवाषाढ्यां प्रौष्ठपद्यामथापि वा। दुष्टायां पूर्वपूर्वस्यामुत्तरस्यां विधीयते॥

कालत्रयेऽपि दोषश्चेच्छ्रावण्यामेव कारयेत्॥ इति।

**संवर्तस्तु**—आषाढ्याद्याश्च चत्वारो मासाः शस्ता ह्युपाकृतौ।

यो यो हि दोषयुक्तः स्यात्तं तं हित्वा परे विदुः॥ इति।

शुक्रमौढ्यादिदोषे न कर्तव्यमित्येतत् प्रथमोपाकृतिविषयम्। तथाच **गर्गः**—

गुरुभार्गवयोर्मौढ्ये मलमासे तथैव च। प्रथमोपाकृतिर्न स्यात्कुर्याच्चेत्स विनश्यति॥ इति।

उक्तकालस्य सर्वस्यापि शुक्रमौढ्यादिदोषे तत्तद्ग्रहशान्तिं कृत्वैव प्रथमोपाकृतिः कर्तव्या। तथा च **बृहस्पतिः**—

शान्तिं कृत्वा तयोर्वापि शुक्रदेवेन्द्रमन्त्रिणोः। होमैर्दानैर्जपैर्वापि तयोरुदितमन्त्रकैः॥

कर्तव्यं श्रावणं विप्रैरिति जीवेन भाषितम्। इति।

ग्रहसंक्रान्त्यादिदोषे विशेषः गर्गेण प्रदर्शितः—

अर्धरात्रादधस्ताच्चेत्संक्रान्तिर्ग्रहणं तथा। उपाकर्म न कर्तव्यं परतश्चेन्न दोषभागिति॥

उक्तमासेषु पौर्णमासीश्रवणहस्ताः शाखाभेदेन व्यवस्थिताः। तथाच गोभिलः—

पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः। बह्वृचाः श्रवणे कुर्युः हस्तर्क्षे सामवेदिनः॥

तत्रौदयिकत्वमुदयव्यापित्वं पर्वश्रवणहस्तेषु त्रिष्वपि संबध्यते। पर्वण औदयिकत्वे विशेषो गोभिलेन दर्शितः—

श्रावणी पौर्णमासी तु संगवात्परतो यदि। तदा त्वौदयिकी ग्राह्या नान्यथौदयिकी भवेत्॥

इति। श्रवणस्यापि उदयव्यापित्वे सफलत्वं तदभावे दुष्टफलत्वं अन्वयव्यतिरेकाभ्यां व्यासेन प्रतिपादितम्—

धनिष्ठासंयुते कुर्याच्छ्रावणं कर्म यद्भवेत् । तत्कर्म सफलं ज्ञेयमुपाकरणसंज्ञितम् ॥
श्रवणेन तु यत्कर्म ह्युत्तराषाढसंज्ञिते । संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥ इति ।

तथा चायं निष्कर्षः —श्रावण्यां पौर्णमास्यां याजुषाः कुर्युः, श्रावणे मासि श्रवणनक्षत्रे बह्वृचाः, प्रौष्ठपदे मासि हस्तनक्षत्रे सामशाखिन उपाकुर्युः, तेषां च मलमासदोषे निजमासि कुर्युः निजमासस्यापि शुक्रमौढ्यादिदोषे अदुष्टे मासि कुर्युः, मासत्रयस्यापि दुष्टत्वे तत्तद्ग्रहशान्तिपूर्वकं श्रावण्यादावेव कुर्युः । एतत्सर्वं प्रथमोपाकृतिविषयं, द्वितीयोपाकृतिस्तु दुष्टायामपि श्रावण्यां पौर्णमास्यां दुष्टेऽपि हस्तनक्षत्रे तत्रैव कर्तव्यम् । नन्विदमुपाकरणं गृहस्थादिभिः क्रियते, तदनुपपन्नं, तथाहि—उपाकरणं ब्रह्मचारिणां धर्मः, उपाकृत्याधीयीतेति ग्रहणाध्ययनाङ्गत्वप्रतीतेः, ग्रहणाध्ययनस्य च अष्टमे वर्षे ब्राह्मणमुपनयीत तमध्यापयीत इत्यादिवचनपर्यालोचनया उपनीतब्रह्मचारिकर्तृकत्वावगमात्, विवाहस्य वेदाध्ययनोत्तरकालिकत्वेन तत्पूर्वकालीनस्य वेदाध्ययनस्य ब्रह्मचारिकर्तृकत्वाच्च । तथा च **कूर्मपुराणे —**

वेदं वेदौ तथा वेदान् वेदान्वा चतुरो द्विजः ।
अधीत्य चाविगम्यार्थं तदा स्नायाद्द्विजोत्तमः ॥ इति ।

**आपस्तम्बोऽपि** — वेदमधीत्य स्नास्यन्निति । न च "द्वितीयमायुषो भागं कृतदारो गृहे वसेत्' इत्युपक्रम्य श्रावण्यां प्रौष्ठपद्यां वेत्युपाकर्मणः गृहस्थधर्मप्रकरणपाठात् गृहस्थधर्मत्वमपीति वाच्यं, 'वेदानधीत्य वेदौ वा' इत्यादिपर्यालोचनया ब्रह्मचारिधर्मत्वे निर्णीते गार्हस्थ्यप्रकरणपठितस्य उपाकरणस्य पूषानुमन्त्रणमन्त्रवत् उत्कर्षस्य संभवात् । अतः कथं ब्रह्मचारिगृहस्थसाधारण्येन उपाकर्मविधानमिति चेन्न, गृहस्थानामप्यध्ययनसंभवात् । तथाचाश्वलायनः — 'अधीयीत स्वाध्यायं समावृत्तो ब्रह्मचारिकल्पेन, यथान्यायमितरे जायोपेयेत्येके प्राजापत्यं हि तत्' इति । अस्यार्थो **नारायणीयवृत्तौ** — समावृत्तो ब्रह्मचारिकल्पेन ब्रह्मचारिधर्मैरित्यर्थः, स्वाध्यायकाले विहिता ये धर्माः मधुमांसस्त्रीगमनखट्वाशयनादिवर्जनादयः तैर्युक्तो अधीयीत समावृत्तः । मेखलादयस्तु न भवन्ति, अस्वाध्यायधर्मत्वात् यथान्यायमितरे ब्रह्मचारिण इत्यर्थः । अस्मिन्नध्ययने ब्रह्मचारिणामपि प्रवृत्त्यर्थमिदं, इतरथा समावृत्तानामेवेति शंका स्यात् । जायोपेयेत्येके । समावृत्तो जायां गच्छेदित्येक आहुः । ऋतावेव गच्छेन्नानृतावित्याह प्राजापत्यं हि तत्, प्रजोत्पत्त्यर्थमित्यर्थः । ऋतुगमनं सर्वथा कार्यमिति तेषामभिप्रायः, अगमने दोषश्रवणात् —

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥

इति । अत्रोपाकृत्याध्ययने स्त्र्युपगमनस्य विकल्पेन विधानात् समावृत्तगृहस्थसाधारणं अध्ययनम् । अत एव गृहस्थस्यापि इदमध्ययनमाह **गोभिलः** —

उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते । धारणाध्ययनांगत्वाद्गृहिणां ब्रह्मचारिणाम् ॥
उत्सर्जनं च वेदानामुपाकरणकर्म च । अकृत्वा वेदजप्येन फलं नाप्नोति मानवः ॥ इति ।

यदुक्तं पूषानुमन्त्रणमन्त्रवदुत्कर्ष इति तन्न, उदाहृतसूत्रस्मृत्यादिपर्यालोचनया गृहस्थब्रह्मचारिसाधारण्येन उपाकर्मविधानावगमेन गार्हस्थ्यप्रकरणादुत्कर्षस्यायुक्तत्वात् । तस्माद्गृहस्थानामप्युपाकरणं धर्मः । अतः सर्वेऽप्युक्तकालेषु उपाकर्म कृत्वाधीयीरन्निति ।

**वृत्ता यात्रा नरेन्द्राणां सेनापतिनिवर्तने ।**
**वैराणि चैव मार्गाश्च सलिलेन समीकृताः ॥**

**निवृत्तकर्मायतनो नूनं संचितसंचयः ।**
**आषाढीमभ्युपगतो भरतः कोसलाधिपः ॥**

अनेन वार्षिकेषु चतुर्ष्वपि मासेषु यैः पदार्थैः सुखं वसेत्तान् पदार्थानष्टसु मासेषु पूर्वमेव संपादयेदिति सूचितम् । तथाच **भारते** —

अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत् । पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् ॥
दिवैव कर्म तत्कुर्याद्येन रात्रौ सुखं वसेत् । इह जन्मनि तत्कुर्याद्येन प्रेत्य सुखं वसेत् ॥ इति ।

**अपिचातिपरिक्लिष्टं चिराद्दारैः समागतम् ।**
**आत्मकार्यगरीयस्त्वाद्वक्तुं नेच्छामि वानरम् ॥**

अनेन महापुरुषाः स्वकार्यविरोधे सत्यपि परहितमेवाचरन्तीति सूचितम् । तथाच **प्राचीनाः** —

एते सत्पुरुषाः परार्थघटकाः स्वार्थान्परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं के ते न जानीमहे ॥ इति ।

**एकोनत्रिंशे** — ततः प्रविश्य गुहां अनवरतक्रीडासक्तमानसं मन्त्रिषु न्यस्तराज्यतन्त्रं हरिराजं, निर्मलं गगनं चावलोक्य राममहिषीगवेषणासमयातिक्रमशंकया —

**प्रसाद्य वाक्यैर्मधुरैर्हेतुमद्भिर्मनोरमैः ।**
**हितं तत्वं च पथ्यं च सामधर्मार्थनीतिमत् ॥**

**प्रणयप्रीतिसंयुक्तं विश्वासकृतनिश्चयम् ।**
**हरीश्वरमुपागम्य हनुमान्वाक्यमब्रवीत् ॥**

अनेन कामवृत्तो राजा समये न्यायोपबृंहितैः वचनैः सचिवैः प्रबोधनीय इति सूचितम् । तथाच **कामन्दके**—

कृतविद्यो हि बलिना व्यक्तं रागेण रंज्यते । रागानुरक्तचित्तस्सन् किन्न कुर्यादसाप्रतम् ॥
पश्यन्नपि भवत्यन्धः पुमान्रागावृतेक्षणः । सुहृद्वैद्याश्चिकित्सन्ति निर्मलैर्विनयांजनैः ॥
रागमानमदान्धस्य स्खलतः पृथिवीपतेः । हस्तावलम्बो भवति सुहृत्सचिवचेष्टितम् ॥ इति

**प्राप्तं राज्यं यशश्चैव कौली श्रीरभिवर्धिता ।**
**मित्राणां संग्रहः शेषः तद्भवान् कर्तुमर्हति ॥**

**कर्तुं दाशरथेः प्रीतिमाज्ञायां किं न सज्जसे ।**
**यो हि मित्रेषु कालज्ञः सततं साधु वर्तते ॥**

**तस्य राज्यं च कीर्तिश्च प्रतापश्चाभिवर्धते ।**

अत्र मित्रसंग्रह इत्यनेन नूतनमित्रसंग्रहो न प्रतिपाद्यते, अपि तर्हि संपादितमैत्रीरक्षणाय तत्प्रीत्याचरणमेव कर्तव्यमित्युक्तम् । तथा च **कामन्दकः** —

दूरादेवानुगमनं स्पष्टार्थहृदयानुगा । वाक् संहृत्पदानं च त्रिविधो मित्रसंग्रहः ॥ इति ।

**यस्य कोशश्च दण्डश्च मित्राण्यात्मा च भूमिप ।**
**समवेतानि सर्वाणि स राज्यं महदश्नुते ॥**

अत्र कोशदण्डमित्रात्मनां संहतानामेव राज्यहेतुत्वमुक्त्वा पुनस्सर्वाणीत्युक्त्या अनुक्तममात्यादिकमपि गृह्यते, तेन विना महाराज्यश्रेयोनवाप्तेः । तथा च **कामन्दके**—
**परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते । एकाङ्गेनापि विकलमेतत्साधु न वर्तते ॥**

तस्य सामर्थ्यमन्विच्छन् कुर्वीताशु परीक्षणम् ।

इति स्म राज्यं सकलं समीरितं परा प्रतिष्ठास्य धनं सुसाधनम् ।
गृहीतमेतन्निपुणेन मन्त्रिणा त्रिवर्गनिष्पत्तिमुपैति शाश्वतीम् ॥

यथान्तरात्मा प्रकृतीरधिष्ठितश्चराचरं विश्वमिदं समश्नुते ।

तथा नरेन्द्रः प्रकृतीरधिष्ठितश्चराचरं विश्वमिदं समश्नुते ॥
प्रकृतिभिरतिसम्यगन्वितो जनपदमादरवास्तु पालयेत् ।
जनपदपरिपालनाच्चिरं स्पृशति नर. परमं श्रियः पदम् ॥ इति ।

तानि च राज्याङ्गानि **मनुराह**—

स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा । सप्त प्रकृतयो ह्येतास्सप्तांगं राज्यमुच्यते ॥इति

**तद्भवान्वृत्तसंपन्नः स्थितः पथि निरत्यये ।**
**मित्रार्थमभिनीतार्थं यथावत्कर्तुमर्हति ॥**

**सन्त्यज्य सर्वकार्याणि मित्रार्थे योऽनुवर्तते ।**
**संभ्रमादिकृतोत्साहः सोनर्थैर्नावरुध्यते ॥**

**यस्तु कालव्यतीतेषु मित्रकार्येषु वर्तते ।**
**स कृत्वा महतोऽप्यर्थान्मित्रार्थेन युज्यते ॥**

**यदिदं वीर कार्यं नो मित्रकार्यमरिन्दम ।**
**क्रियतां राघवस्यैतद्वैदेह्याः परिमार्गणम् ॥**

**तदिदं वीर कार्यं ते कालातीतमरिन्दम ।**
**न च कालमतीतं ते निवेदयति कालवित् ॥**

अनेन कार्यकालातिपाते महाननर्थ उचितकालकरणे श्रेयश्च भवतीति सूचितम् । तथा च **कामन्दकः**—

नातीयात्कार्यकालं हि कृत्वा मन्त्रविनिश्चयम् । अतिक्रान्तं तु संभूयो यथायोगं प्रकल्पयेत् ।
न कार्यकालं मतिमानतिक्रामेत्कदाचन । कथंचिदेव भवति कार्ययोगस्सुदुर्लभः ॥
सतां मार्गेण मतिमान् काले कर्म समाचरेत् । काले समाचरन् साधू रसवत्फलमश्नुते ॥इति ।

**त्वरमाणोऽपि सन् प्राज्ञः तव राजन्वशानुगः ।**
**कुलस्य हेतुः स्फीतस्य दीर्घबन्धुश्च राघवः ॥**

**अप्रमेयप्रभावश्च स्वयं चाप्रतिमो गुणैः ।**
**तस्य त्वं कुरु वै कार्यं पूर्वं तेन कृतं तव ॥**

**हरीश्वर हरिश्रेष्ठानाज्ञापयितुमर्हसि ।**
**अकर्तुरपि कार्यस्य भवान्कर्ता हरीश्वर ॥**

किं पुनः प्रतिकर्तुस्ते राज्येन च धनेन च ।
कामं खलु शरैः शक्तः सुरासुरमहोरगान् ॥

वशे दाशरथिः कर्तुं त्वत्प्रतिज्ञां तु कांक्षते ।
प्राणत्यागाविशंकेन कृतं तेन तव प्रियम् ॥

तस्य मार्गाम वैदेहीं पृथिव्यामपि चांबरे ॥ इति ।

अनेन कृतोपकारस्य गुणाढ्यस्य कार्यं कालानतिक्रमेण सर्वप्रकारेणापि साधनीयम् । अधर्मिष्ठस्य तु मित्रकार्यमुपेक्षणीयमिति सूचितम् । तथाच **कामन्दके**—

अधर्मद्रोहसंयुक्ते मित्रजात उपेक्षणम् । आत्मवन्मित्रवर्गे तु प्राणानपि परित्यजेत् ॥ इति ।

प्राणैरप्युपकारित्वं मित्रायाव्यभिचारिणे । गृहागते परिष्वङ्गः शक्त्या दानं सहिष्णुता ॥

परार्थं देशकालज्ञो देशे काले च साधयेत् । इति च । **राजधर्मेऽपि**—

न हि राज्ञा प्रमादो वै कर्तव्यो मित्ररक्षणे । प्रमादिनं हि राजानं लोकाः परिभवन्त्युत ॥इति ।

सुग्रीवोऽपि हनुमद्वचनमाकर्ण्य सकलवानरानयनाय नीलप्रमुखान् सेनानायकानादिश्य स्वयमपि गुहां प्रविवेश ।

**त्रिंशे**—

गुहां प्रविष्टे सुग्रीवे विमुक्ते गगने घनैः ।
वर्षरात्रोषितो रामः कामशोकाभिपीडितः ॥

पाण्डुरं गगनं दृष्ट्वा विमलं चन्द्रमण्डलम् ।
शारदीं रजनीं चैव दृष्ट्वा ज्योत्स्नानुलेपनाम् ॥

कामवृत्तं च सुग्रीवं नष्टां च जनकात्मजाम् ।
बुध्वा कालमतीतं च मुमोह परमातुरः ॥

सतु संज्ञामुपागम्य मुहूर्तं मतिमान् पुनः ।
मनस्स्थामपि वैदेहीं चिन्तयामास राघवः ॥

आसीनः पर्वतस्याग्रे हेमधातुविभूषिते ।
शारदं गगनं दृष्ट्वा जगाम मनसा प्रियाम् ॥

दृष्ट्वा च विमलं व्योम गतविद्युद्वलाहकम् ।
सारसालापसंघुष्टं विललापार्तया गिरा ॥

सारसारवसन्नादैः सारसारावनादिनी ।
याऽऽश्रमे रमते बाला साद्य मे रमते कथम् ॥

पुष्पितांश्चासनान्दृष्ट्वा कांचनानिव निर्मलान् ।
कथं सा रमते बाला पश्यन्ती मामपश्यती ॥

या पुरा कलहंसानां स्वरेण कलभाषिणी ।
बुध्यते चारु सर्वांगी साद्य मे बुध्यते कथम् ॥

निस्वनं चक्रवाकानां निशम्य सहचारिणाम् ।
पुण्डरीकविशालाक्षी कथमेषा भविष्यति ॥

सरांसि सरितो वापि काननानि वनानि च ।
तां विना मृगशावाक्षीं चरन्नाद्य सुखं लभे ॥

अपि तां मद्वियोगाच्च सौकुमार्याच्च भामिनीम् ।
न दूरं पीडयेत्कामः शरद्गुणनिरन्तरः ॥

एवमादि नरश्रेष्ठो विललाप नृपात्मजः ।
विहंग इव सारंगः सलिलं त्रिदशेश्वरात् ॥

ततस्संचार्य रम्येषु फलार्थी गिरिसानुषु ।
ददर्श पर्युपावृत्तो लक्ष्मीवाँल्लक्ष्मणोऽग्रजम् ॥

तं चिन्तया दुःसहया परीतं निःसंज्ञमेकं विजने मनस्वी ।
भ्रातुर्विषादात्परितापदीनः समीक्ष्य सौमित्रिरुवाच रामम् ॥

किमार्य कामस्य वशं गतेन किमात्मपौरुष्यपराभवेन ।
अयं यदा संह्रियते समाधिः किमत्र योगेन निवर्तितेन ॥

क्रियाभियोगं मनसः प्रसादं समाधियोगानुगतं च कालम् ।
सहायसामर्थ्यमदीनसत्व स्वकर्महेतुं च कुरुष्व हेतुम् ॥

न जानकी मानववंशनाथ त्वया सनाथा सुलभा परेण ।
नचाग्निचूडां ज्वलितामुपेत्य न दह्यते वीरवरार्ह कश्चित् ॥

सुलक्षणं लक्ष्मणमप्रधृष्यं स्वभावजं वाक्यमुवाच रामः ।
हितं च पथ्यं च नयप्रसक्तं ससाम धर्मार्थसमाहितं च ॥

निस्संशयं कार्यमवेक्षितव्यं क्रियाविशेषो ह्यनुवर्तितव्यः ।

**ननु प्रवृत्तस्य दुरासदस्य कुमार कार्यस्य फलं न चिन्त्यम् ॥**

**अथ पद्मपलाशाक्षीं मैथिलीमनुचिन्तयन् ।**
**उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ॥**

**तर्पयित्वा सहस्राक्षस्सलिलेन वसुन्धराम् ।**
**निवर्तयित्वा सस्यानि कृतकर्मा व्यवस्थितः ॥**

अनेन इन्द्रप्रेरिता मेघाः वर्षन्तीति सूचितम् । तथाच **हरिवंशे** —

दुदोह स विभुर्गा वै शक्रो दिव्याः पयस्वलाः ।
ताः क्षरन्ति नवं क्षीरं मेध्यं मेघौघधारितम् ॥ इति ।

**स्निग्धगम्भीरनिर्घोषा शैलद्रुमपुरोगमाः ।**
**विसृज्य सलिलं मेघाः परिश्रान्ता नृपात्मज ॥**

**नीलोत्पलदलश्यामाः श्यामीकृत्वा दिशो दश ।**
**विमदा इव मातङ्गाः शान्तवेगाः पयोधराः ॥**

**जलगर्भा महावेगाः कुटजार्जुनगन्धिनः ।**
**चरित्वा विरतास्सौम्य वृष्टिवातास्समुद्यताः ॥**

**घनानां वारणानां च मयूराणां च लक्ष्मण ।**
**नादः प्रस्रवणानां च प्रशान्तस्सहसानघ ॥**

**अभिवृष्टा महामेघैर्निर्मलाश्चित्रसानवः ।**
**अनुलिप्ता इवाभान्ति गिरयश्चन्द्ररश्मिभिः ॥**

**दर्शयन्ति शरन्नद्यः पुलिनानि शनैश्शनैः ।**
**नवसंगमसव्रीडा जघनानीव योषितः ॥**

अत्र प्रियेण सह वने संगमसमयसमुदितया लज्जया शनैश्शनैर्जघनमिव कामिनी शरन्नद्यः पुलिनानि दर्शयन्तीत्युक्तम् । अत्र नवोढाविशेषः उपमानम् । तथाहि — नवोढास्तिस्रः केवलनवोढा, विस्रब्धनवोढा, अतिविस्रब्धनवोढा चेति । तत्र केवल-नवोढा यथा —

हस्ते धृतापि शयने विनिवेशितापि क्रोडीकृतापि यतते बहिरेव गन्तुम् ।
जानीमहे नववधूरथ तस्य वश्या यः पारदं स्थिरयितुं क्षमते करेण ॥इति ।

विस्रब्धनवोढा यथा —

दरमुकुलितनेत्रपालिनीवीनियमितबाहुकृतोरुयुग्मबन्धम् ।
करकलितकुचस्थलं नवोढा स्वपिति समीपमुपेत्य कस्य यूनः ॥ इति ।

अतिविस्रब्धनवोढा यथा —

स्वप्ने प्रियाननविलोकनहानिरेव स्वापच्युतौ प्रियकरग्रहणप्रसंगः ।
इत्थं सरोरुहमुखी परिचिन्तयन्ती स्वापं विधातुमपि हातुमपि प्रपेदे ॥ इति ।

अत्रातिविस्रब्धनवोढैवोपमानम् ।

शाखासु सप्तच्छदपादपानां प्रभासु तारार्कनिशाकराणाम् ।
लीलासु चैवोत्तमवारणानां श्रियं विभज्याद्य शरत्प्रवृत्ता ॥

संप्रत्यनेकाश्रयचित्रशोभा लक्ष्मीः शरत्कालगुणोपनीता ।
सूर्याग्रहस्तप्रतिबोधितेषु पद्माकरेष्वभ्यधिकं विभाति ॥

अभ्यागतैश्चारुविशालपक्षैः सरःप्रियैः पद्मरजोवकीर्णैः ।
महानदीनां पुलिनोपयातैः क्रीडन्ति हंसाः सह चक्रवाकैः ॥

मदप्रगल्भेष्वपि वारणेषु गवां समूहेषु च दर्पितेषु ।
प्रसन्नतोयासु च निम्नगासु विभाति लक्ष्मीर्बहुधा विभक्ता ॥

नभः समीक्ष्यांबुधरैर्विमुक्तं विमुक्तबर्हाभरणा वनेषु ।
प्रियास्वरक्ता विनिवृत्तशोभा गतोत्सवा ध्यानपरा मयूराः ॥

मनोज्ञगन्धैः प्रियकैरनल्पैः पुष्पातिभारावनताग्रशाखैः ।
सुवर्णगौरैर्नयनाभिरामैरुद्योतितानीव वनान्तराणि ॥

प्रियान्वितानां नलिनीप्रियाणां वने रतानां कुसुमोद्धतानाम् ।
मदोत्कटानां मदलालसाना गजोत्तमानां गतयोद्य मन्दाः ॥

अनेन शरदि गजानां मदोद्रेकः सूचितः । तथाच कालिदासः—

प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः । असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥ इति ।

व्यभ्रं नभः शस्त्रविधौतवर्णं कृशप्रवाहानि नदीजलानि ।
कल्हारशीताः पवनाः प्रवान्ति तमोविमुक्ताश्च दिशः प्रकाशाः ॥

सूर्यातपक्रामणनष्टपङ्का भूमिस्समुत्पादितसान्द्ररेणुः ।

अन्योन्यवैरेण समायुतानामुद्योगकालोऽद्य नराधिपानाम् ॥

शरद्गुणाप्यायितरूपशोभाः प्रहर्षिताः पांसुसमुक्षितांगाः।
मदोत्कटास्संप्रति युद्धलुब्धा वृषा गवां मध्यगता नदन्ति ॥

अनेन शरदि गवां मदोद्रेको भवतीति सूचितम्। तथाच शरद्वर्णनावसरे कालिदासः —

मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजः। लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥ इति।

समन्मथं तीव्रतरानुरागाः कुलान्विता मन्दगतिं करेण्वः।
मदान्वितं सम्परिवार्य यान्तं वनेषु भर्तारमनुप्रयान्ति ॥

त्यक्त्वा वराण्यात्मविभूषणानि बर्हाणि तीरोपगता नदीनाम्।
निर्भर्त्स्यमाना इव सारसौघैः प्रयान्ति दीना विमदा मयूराः ॥

चित्रास्यकारण्डवचक्रवाका महारवैर्भिन्नघटा गजेन्द्राः।
सरस्सु बद्धांबुजभूषणेषु विक्षोभ्य विक्षोभ्य जलं पिबन्ति ॥

व्यपेतपङ्कासु सवालुकासु प्रसन्नतोयासु सगोकुलासु।
ससारसारावविनादितासु नदीषु हृष्टा निपतन्ति हंसाः ॥

नदीघनप्रस्रवणोदकानां अतिप्रवृद्धानिलबर्हिणानाम्।
प्लवङ्गमानां च गतोत्सवानां द्रुतं रवाः संप्रति संप्रनष्टाः ॥

अनेकवर्णासु विमृष्टकायाः नवोदितेष्वंबुधरेषु नष्टाः।
क्षुधार्दिता घोरविषा बिलेभ्यश्चिरोदिता विप्रसरन्ति सर्पाः ॥

रात्रिः शशांकोदितसौम्यवक्त्रा तारागणोन्मीलितचारुनेत्रा।
ज्योत्स्नांशुकप्रावरणा विभाति नारीव शुक्लांशुकसंवृतांगी ॥

विपक्वशालिप्रसवानि भुक्त्वा प्रहर्षिता सारसचारुपंक्तिः।
नभस्समाक्रामति शीघ्रवेगा वातावधूतग्रथितेव माला ॥

सुप्तैकहंसं कुमुदैरुपेतं महाह्रदस्थं सलिलं विभाति।
घनैर्विमुक्तं निशि पूर्णचन्द्रं तारागणाकीर्णमिवान्तरिक्षम् ॥

प्रकीर्णहंसाकुलमेखलानां प्रबुद्धपद्मोत्पलमालिनीनाम्।
वाप्युत्तमानामधिकाद्य लक्ष्मीर्वरांगनानामिव भूषितानाम् ॥

वेणुस्वनव्यञ्जिततूर्यमिश्रः प्रत्यूषकालेऽनिलसंप्रवृत्तः।

संमूर्च्छितो घर्घरगोवृषाणामन्योन्यमापूरयतीव शब्दः ॥

नवैर्नदीनां कुसुमप्रहासैः व्याधूयमानैर्मृदुमारुतेन ।
धौतामलक्षौमपटप्रकाशैः कूलानि काशैरुपशोभितानि ॥

वनप्रचण्डा मधुपानशौण्डाः प्रियान्विताः षट्चरणाः प्रहृष्टाः ।
वनेषु मत्ताः पवनानुयात्रां कुर्वन्ति पद्माननरेणुगौराः ॥

जलं प्रसन्नं कुमुदं प्रभासं क्रौञ्चस्वनच्छालिवनं विपक्वम् ।
मृदुश्च वायुर्विमलश्च चन्द्रः शंसन्ति वर्षाव्यपनीतकालम् ॥

मीनोपसंदर्शितमेखलानां नदीवधूनां गतयोऽद्य मन्दाः ।
कान्तोपभुक्तालसगामिनीनां प्रभातकालेष्विव कामिनीनाम् ॥

अनेककान्तोपभुक्तानां कामिनीनां अलसभावेन मन्दगमनमिव शरन्नदीनामपि कार्श्येन मन्दगमनं शोभावहमिति गम्यते । तथाच **प्राचीनाः** —

मणिश्शाणोल्लीढः समरविजयी हेतिदलितः मदक्षीणो नागः शरदि सरिदाश्यानपुलिना ।
कलाशेषश्चन्द्रस्सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥ इति

सचक्रवाकानि सशैवलानि काशैर्दुकूलैरिव संवृतानि ।
सपत्रलेखानि सरोचनानि वधूमुखानीव नदीमुखानि ॥

प्रफुल्लबाणासनचित्रितेषु प्रहृष्टषट्पादनिकूजितेषु ।
गृहीतचापोद्यतचण्डदण्डः प्रचण्डचारोऽद्य वनेषु कामः ॥

लोकं सुवृष्ट्या परितोषयित्वा नदीस्तटाकानि च पूरयित्वा ।
निष्पन्नसस्यां वसुधां च कृत्वा त्यक्त्वा नभस्तोयधराः प्रनष्टाः ॥

प्रसन्नसलिलाः सौम्य कुररीभिर्विनादिताः ।
चक्रवाकगणाकीर्णाः विभाति सलिलाशयाः ॥

शरच्चन्द्रकरस्पर्शाद्धर्षोन्मीलिततारका ।
अहो रागवती सन्ध्या जहाति स्वयमम्बरम् ॥

अत्र प्रियस्य दर्शनजनितानन्देन अनुरागिणी सन्ध्या स्वयमंबरं जहातीति कथनात्प्रगल्भा नायिका सूचिता । तल्लक्षणं च **रससञ्जर्याम्** — पतिमात्रविषयकेलिकलापकोविदात्वं, सा च द्विविधा—रतिप्रीतिमती, आनन्दात्सम्मोहवती चेति—तत्र प्रथमा यथा—

संस्पृश्य स्तनमाकलय्य वदनं संश्लिष्य कण्ठस्थलं
निष्पीड्याधरबिंबमम्बरमपाकृष्य व्युदस्यालकम् ।
देवस्याबुजिनीपतेः समुदयं जिज्ञासमाने प्रिये
वामाक्षी वसनाञ्चलैः श्रवणयोर्नीलोत्पलं निह्नुते ॥

द्वितीया यथा —

नखक्षतमुरःस्थलेऽधरदले रदस्य व्रणं
च्युता वकुलमालिका विगलिता च मुक्तावलिः ।
रतान्तसमये मया सकलमेतदालोकितं
स्मृतिः क्व च रतिः क्व च क्व च तवालि शिक्षविधिः ॥ इति ।

उभयविधाप्येकेन पद्येन प्रतिपादितामरुकविना —

कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धना-
द्वासो विश्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम् ।
एतावत्सखि वेद्मि साप्रतमहं तस्यांगसगे पुनः
कोऽसौ कासि रतं तु कीदृशमभूत्स्वल्पापि मे न स्मृतिः ॥ इति ।

**सूर्यातपक्रामणनष्टपङ्का भूमिस्समुत्पादितसान्द्ररेणुः ।**
**अन्योन्यवैरेण समायुतानामुद्योगकालोऽद्य नराधिपानाम् ॥**

**अन्योन्यं बद्धवैराणां जिगीषुणां नृपात्मज ।**
**नच पश्यामि सुग्रीवमुद्योगं वा तथाविधम् ॥**

अनेन राज्ञां जयार्थमुद्योगकालः शरत्काल इत्युक्तम् । तथाच शरत्कालमधिकृत्य
**हरिवंशे —**

नीराजयित्वा सैन्यानि प्रयान्ति विजिगीषवः ।
अन्योन्ययात्राभिमुखाः प्रयान्ति पृथिवीक्षितः ॥ इति ।

**चत्वारो वार्षिका मासा गता वर्षशतोपमाः ।**
**मम शोकाभितप्तस्य सौम्य सीतामपश्यतः ॥**

**चक्रवाकीव भर्तारं पृष्ठतोनुगता वनम् ।**

विषमं दण्डकारण्यमुद्यानमिव चांगना ॥

प्रियाविहीने दुःखार्ते वने सौम्य विवासिते ।
कृपां न कुरुते राजा सुग्रीवो मयि लक्ष्मण ॥

अनाथो हृतराज्योऽयं रावणेन च धर्षितः ।
दीनो दूरगृहः कामी मां चैवा शरणं गतः ॥

इत्येतैः कारणैस्सौम्य सुग्रीवस्य दुरात्मनः ।
अहं वानरराजस्य परिभूतः परंतप ॥

अनेन दुरात्मा पुरुषः समर्थमपि नरमेतैः कारणैः परिभूतं मन्यत इति प्रतिपादितम् । तथाच प्राचीनाः —

तुल्येऽपराधे स्वर्भानुः भानुमन्तं चिरेण तु । हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥

स कालं परिसंख्याय सीतायाः परिमार्गणे ।
कृतार्थः समयं कृत्वा दुर्मतिर्नावबुध्यते ॥

त्वं प्रविश्य च किष्किन्धां ब्रूहि वानरपुङ्गवम् ।
मूर्खं ग्राम्यसुखे सक्तं सुग्रीवं वचनान्मम ॥

अर्थिनामुपपन्नानां पूर्वं चाप्युपकारिणाम् ।
आशां संश्रुत्य यो हन्ति स लोके पुरुषाधमः ॥

शुभं वा यदि वा पापं यो हि वाक्यमुदीरितम् ।
सत्येन परिगृह्णाति स वीरः पुरुषोत्तमः ॥

कृतार्था ह्यकृतार्थानां मित्राणां न भवन्ति ये ।
तान्मृतानपि क्रव्यादः कृतघ्नान्नोपभुञ्जते ॥

नूनं काञ्चनपृष्ठस्य विकृष्टस्य मया रणे ।
द्रष्टुमिच्छति चापस्य रूपं विद्युद्गणोपमम् ॥

घोरं ज्यातलनिर्घोषं क्रुद्धस्य मम संयुगे ।
निर्घोषमिव वज्रस्य पुनस्संश्रोतुमिच्छति ॥

काममेवंगतेऽप्यस्य परिज्ञाते पराक्रमे ।
त्वत्सहायस्य मे वीर नचिंता स्यान्नृपात्मज ॥

समयं नाभिजानाति कृतार्थः प्लवगेश्वरः ।
वर्षासमयकालं तु प्रतिज्ञाय हरीश्वरः ॥

व्यतीतांश्चतुरो मासान् विहरन्नावबुध्यते ।
सामात्यपरिषत्क्रीडन्मौनमेवोपसेवते ॥

शोकदीनेषु नास्मासु सुग्रीवः कुरुते दयाम् ।
उच्यतां गच्छ सुग्रीवस्त्वया वत्स महाबलः ॥

मम रोषस्य यद्रूपं ब्रूयाश्चैनमिदं वचः ।
न च संकुचितः पन्था येन वाली हतो गतः ।
समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥

एक एव रणे वाली शरेण निहतो मया ।
त्वां तु सत्यादतिक्रान्तं हनिष्यामि सबान्धवम् ॥

तदेवं विहिते कार्ये यद्धितं पुरुषर्षभ ।
तत्तद्ब्रूहि नरश्रेष्ठ त्वर कालव्यतिक्रमः ॥

कुरुष्व सत्यं मम वानरेश्वर प्रतिश्रुतं धर्ममवेक्ष्य शाश्वतम् ।
मा वालिनं प्रेतगतो यमक्षयं त्वमद्य पश्येः मम चोदितैः शरैः ॥

स पूर्वजं तीव्रविवृद्धकोपं लालप्यमानं प्रसमीक्ष्य दीनम् ।
चकार तीव्रां मतिमुग्रतेजा हरीश्वरे मानववंशवर्धनः ॥ इति ।

**एकत्रिंशस्सर्गः**—तदनु भ्रातृक्लेशमसहमानो लक्ष्मणः तं रामभद्रमित्थमवोचत् — पानमदेन ग्राम्यसुखासक्तो दुर्वृत्तस्सुग्रीवः —

हतोऽग्रजं पश्यतु वीर वालिनं न राज्यमेवं विगुणस्य देयम् ।

अनेन गुणरहितस्य राज्यं न देयमिति सूचितम् । पुत्रश्चापि गुणरहितो राज्यानर्ह इत्ययमर्थ **अयोध्याकाण्डे** प्रतिपादितः ॥

तमसत्यसन्धं वानरेन्द्रं मच्छरनिकृत्तशिरस अग्रजनिकटं प्रेषयिष्यामि, अभिषिक्तेन वालितनयेन जनकतनयान्वेषणं अचिरादेवास्माकं भवितेति कोपेन वदन्तं लक्ष्मणं श्रीरामभद्र इत्थमवोचत् —

नहि वै त्वद्विधो लोके पापमेवं समाचरेत् ।

**पापमार्येण यो हंति स वीरः पुरुषोत्तमः ॥**

अनेन महापुरुषैः पापाधायकः क्रोधः परिहर्तव्य इति सूचितम्। तथाचा-**नुशासनिके** —

यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते। तेजस्विनं तं विद्वांसं मन्यन्ते तद्विदो जनाः ॥

यश्च नित्यं जितक्रोधो विद्वानुत्तमपूरुषः। प्रभाववानपि नरस्तस्य लोकास्सनातनाः ॥

इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम्।
तं क्रोधं वर्जितं धीरैः कथमस्मद्विधश्चरेत् ॥ इति।

अत एव पञ्चत्रिंशे रोषः परिहर्तव्य इति लक्ष्मणं प्रति रामवचनम् —

नच रोषवशं तात गन्तुमर्हसि लक्ष्मण। तां प्रीतिमनुवर्तस्व पूर्ववृत्तं च संगतम् ॥

अनेनाविचार्य मित्रपरित्यागो दण्डपातनं वा न कर्तव्यमिति सूचितम्। तथा च **कामन्दके** —

मित्रं विचार्य बहुशो ज्ञातदोषं विवर्जयेत्। त्यजन्नभूतदोषं हि धर्मार्थावुपहंति सः ॥

स्वयं ज्ञातेषु दण्डेषु शस्यते दण्डपातनम्। नह्यविज्ञाततत्वस्सन् कोपं कुर्यात्कथञ्चन ॥

भुजङ्गमिव मन्यन्ते निर्दोषक्रोधिनं जनाः। इति।

**सामोपहितया वाचा रूक्षाणि परिवर्जयन्।**
**वक्तुमर्हसि सुग्रीवं व्यतीतं कालपर्यये ॥**

अनेनानर्थमूलभूतं परुषवचनं परिहृत्य साम्नैव व्यवहर्तव्यमिति सूचितम्। तथा-**चोद्योगे** विदुरः —

अभ्यावहति कल्याणं विविधा वाक् सुभाषिता। सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ इति

**कामन्दकेऽपि** —

वाक्पारुष्यं परं लोके उद्वेजनमनर्थकम्। न कुर्यात्प्रियया वाचा प्रकुर्याज्जगदात्मसात् ॥

हृदये वागसिस्तीक्ष्णो मर्मछेदी पतन्मुहुः। तेजस्विनो दीपयति स दीप्तो याति वैरताम् ॥

नोद्वेजयेज्जगद्वाचा रूक्षया प्रियवाग्भवेत्। प्रायेण प्रियवाक्कर्मा कृपणोऽपि हि सेव्यते ॥

ह्लादिनी सर्वसत्वानां सम्यग्जनजिहीर्षया। भावयन्परमां मैत्री विसृजेल्लौकिकीं गिरम् ॥

नित्यं मनोऽपहारिण्या वाचा प्रह्लादयेज्जगत्। उद्वेजनीयो भवति क्रूरवाग्धनदोऽपि सन् ॥

हृदि विद्ध इवात्यर्थं यया सन्तप्यते जनः । पीडितोऽपि हि मेधावी न तां वाचमुदीरयेत् ॥
तीव्राण्युद्वेगकारीणि विमृष्टान्यशमात्मकैः । कृन्तन्ति देहिना मर्म शस्त्राणि च वचांसि च ॥
प्रियमेवाभिधातव्यं नित्यं सत्सु द्विषत्सु च । शिखीव केकामधुरः प्रियवाक्कस्य न प्रियः ॥ इति ।

इति रामसमाज्ञप्तो लक्ष्मणः परिगृह्य शरासनं किष्किन्धां गच्छन्नेव मध्येमार्गं स्वावलोकनेन करधृतशैलशृङ्गान् युद्धसन्नद्धावस्थितान् वानरानवलोक्य प्रवृद्धतरकोपेन अनल्पकल्पानलकल्पो निखिलमपि लोकं निर्दहन्निव वानरनिवासभूता किष्किन्धा प्रविवेश। ततश्च वानराः

**क्रोधमागमनं चैव लक्ष्मणस्य न्यवेदयन् ।**
**तारया सहितः कामे सक्तः कपिवरो रहः ॥**

**न तेषां कपिवीराणां शुश्राव वचनं तदा । इति ।**

नन्वत्र सुग्रीवस्तारया सङ्गत इति प्रतीयते, तथा —

रामप्रसादात्कीर्तिं च कपिराज्यं च शाश्वतम् । प्राप्तवानेष सुग्रीवो रुमां मां च परंतप ॥

इति लक्ष्मणं प्रति तारावाक्येन, 'राज्यं च सुमहत्प्राप्तं तारा च रुमया सह' इति रामं प्रति सुग्रीववाक्येन च तथैव प्रतीयते। तदेतदयुक्तं, परपुरुषगमनस्य स्त्रीणा निषिद्धत्वाद्भर्त्रनतिक्रमणे महाफलश्रवणाश्च । तथा च परपुरुषगमनस्य निषिद्धत्वे **मनुः** —

कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । नच नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ॥
यस्मै दद्यात्पिता त्वेनां भ्राता वानुमते पितुः । तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत् ॥

व्यभिचारात्तु भर्तुः स्याल्लोके प्राप्नोति निन्द्यताम् ।
शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥ इति ।

स्त्रीणां भर्त्रनतिक्रमणस्य महाफलत्वेऽपि **मनुः** —

पतिं या नाभिचरति मनोवाग्देहसंयता । सा भर्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते ॥
आसीतामरणात्क्षान्ता नियता ब्रह्मचारिणी । यो धर्म एकपत्नीनां कांक्षन्ती तमनुत्तमम् ॥
मृते भर्तरि साध्वी स्त्री ब्रह्मचर्यव्रते स्थिता । स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥
अनेन नारीवृत्तेन मनोवाग्देहसंयता । इहाग्र्यां कीर्तिमाप्नोति परलोकं परत्र च ॥ इति ।

तस्मात्ताराकृतं परपुरुषगमनमयुक्तमेव ॥

तथा सुग्रीवस्यापि तारया सहोपभोगो न युक्तः, तथाहि— स चोपभोगः केवलो

वा विवाहपूर्वको वा, तत्र नतावदाद्य. परदारोपभोगस्य निषिद्धत्वात् । तथा च **विष्णुपुराणे** —

परदारान्न गच्छेत मनसापि कदाचन । किमु वाचाक्षिबन्धोपि न तेष्वस्ति व्यवायिनाम् ॥
मृतो नरकमभ्येति हीयतेत्रापि चायुषः । परदाररतिः पुंसामुभयत्रापि भीतिदा ॥ इति ॥

तथा **चापस्तम्बोऽपि** — सवर्णायामन्यपूर्वायां सकृन्निपाते पादः पततीत्युपदिशन्तीत्येवमभ्यासे पादः पादश्चतुर्थे सर्वमिति ॥

न द्वितीयः अन्यपूर्वायास्तारायाः पुनर्भूत्वेन तद्विवाहस्य निन्दितत्वात् । तथाच **काश्यपः** —

सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः । वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ॥
उदकस्पर्शिता या च या च पाणीगृहीतिका । अग्निं परिगता या च पुनर्भूप्रसवा च या ॥
इत्येताः काश्यपेनोक्ताः दहन्ति कुलमग्निवत् । इति ।

**बौधायनमपि** — वाग्दत्ता च मनोदत्ता दत्ताग्नि च परीगता सप्तमं वा पदं नीता भुक्ता गृहीतभर्तृका चेति सप्तविधा पुनर्भूः तां गृहीत्वा न धर्मं विन्देदिति ॥

**याज्ञवल्क्योपि** अन्यपरिगृहीताविवाहं पुनर्भूविवाहत्वेन निन्दितवान्—'अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनरिति । **नारदोऽपि** —

कन्यैवाक्षतयोनिर्या पाणिग्रहणपूर्विका । पुनर्भूप्रतिमा ज्ञेया पुनस्संस्कारकर्मणि ॥ इति ।

तस्मात्पुनर्विवाहपूर्वकोपभोगोऽपि न युक्तः । किंच ज्येष्ठभ्रातृभार्यायाः तारायाः मातृतुल्यत्वेन तद्गमने गुरुतल्पगमनदोषप्रसङ्गः । तथा च **संवर्तः**—

पितृव्यदारगमने भ्रातृभार्यागमे तथा । गुरुतल्पव्रतं कुर्यान्निष्कृतिर्नान्यथा भवेत् ॥ इति ।

**मनुरपि** —

अगम्यागमनं यस्तु व्रतैरेभिरपानुदेत् । गुरुतल्पव्रतं कुर्याद्रेतःसिक्त्वान्ययोनिषु ॥
सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च । पैतृष्वसेयभगिनीं स्वस्त्रीयां मातुरेव च ॥
भ्रातुश्च भ्रातुरास्तां च गत्वा चान्द्रायणं चरेत् ।
एताः स्त्रियस्तु भार्यार्थे नोपयच्छेत बुद्धिमान् ॥ इति ।

**आपस्तम्बोऽपि** अथ पतनीयानीत्युपक्रम्याह — 'गुर्वीं सखीं गुरुसखीं च गत्वा अन्यांश्च गुरुतल्पानीति । **नारदोऽपि** —

माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसापि । तुल्यसखिशिष्यस्त्री भ्रातुस्सख्युश्च हि स्नुषा ॥
दुहिता चार्यभार्या च स्वगोत्रशरणागता । राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥
आसामन्यतमां गत्वा गुरुतल्पग उच्यते ॥ इति ।

तस्मान्मातृतुल्यायास्ताराया: विवाहपूर्वको वा केवलो वा सुग्रीवकृत उपभोगः ताराकृतपरपुरुषसङ्गमश्च अयुक्त इति चेत्, अत्रोच्यते — न तावत्ताराया: पुरुषान्तरपरिग्रहो दोषाय भर्तृमरणादिनिमित्ते सति स्त्रीणां पुरुषान्तरपरिग्रहस्य शास्त्रानुमतत्वात् । तथा च **मनुः**—

नष्टे मृते प्रव्रजिते क्लीबे च पतिते तथा । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ इति

**आनुशासनिकेऽपि** —

नारी तु पत्यभावे हि देवरं कुरुते पतिम् ॥ इति ।

**नारदोऽपि** —

स तु यद्यन्यजातीयः पतितः क्लीब एव वा । विकर्मस्थस्सगोत्रो वा दासो दीर्घामयोऽपि वा ॥
ऊढापि देया सान्यस्मै वराय वरभूषणा । इति ।

नचोदाहृतवचनविरोध इति वाच्यम्, उदाहृत**मनुनारद**वचनयोः भर्तृमरणादिनिमित्ते सति भर्त्रन्तरपरिग्रहविधानावगमेनोदाहृतनिषेधवचनानां भर्तृमरणादिनिमित्तरहितस्त्रीविषयत्वात् भिन्नविषयत्वेन विरोधाभावात्, कलियुगविषयत्वाच्च । कलियुगविषयत्वे **पुराणम्** —

ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा । कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥इति

एवं च निषेधवचनानां कलियुगविषयत्वात् आसीतामरणात्क्षान्तेत्यादिफलप्रतिपादकवचनानां ब्रह्मलोकादिमानवद्विषयत्वात् त्रेतायुगादिषु भर्तृमरणादिनिमित्ते सति सत्यां भोगेच्छायां पुनर्विवाहस्य शास्त्रानुमतत्वात् तारासुग्रीवसंगमो युक्त एव । अत एवोक्तनिमित्ताभावात् जीवतः सुग्रीवस्य भार्यायां वालिनः सगं दोषत्वेनोद्भावितवान् रामः —

तस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः । रुमायां वर्तसे कामात् स्नुषायां पापकर्मकृत् ॥इति

धरमाणस्य प्राणान्धारयत इत्यर्थः ।

नन्वेवमपि दुन्दुभेर्हननाय वालिनो बिलप्रवेशानन्तरं सुग्रीवः तारया कथं संगतः?, वालिनो विद्यमानत्वेन उक्तनिमित्ताभावात् । तथाचांगदवाक्यम् —

भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम्। धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः॥

इति। अत एतदयुक्तमिति चेन्न, वालिमरणं निश्चित्यैव सुग्रीवेण तारासंपर्कस्य कृतत्वात्। तथा च रामं प्रति सुग्रीवः —

अहं त्ववगतो बुध्या चिह्नैस्तैर्भ्रातरं हतम्। पिधाय च बिलद्वारं शिलया गिरिमात्रया॥

शोकार्तश्चोदकं दत्वा किष्किन्धामागतस्सखे॥ इति।

अतः पूर्वं वालिमरणनिश्चयेन कृतत्वान्न दोषः। अत एव जीवतः सुग्रीवस्य भार्यायां रुमायां वर्तमानं वालिनं हत्वा तमेव दोषं ख्यापितवान्रामः। सुग्रीवं च तादृशदोषाभावात् राज्याभिषेकादिना अनुगृहीतवान्। तस्मात्तारया सहित' कामे इत्यादिवचनं युक्तमेव॥

ततो लक्ष्मणेन मदागमनवृत्तान्तं सुग्रीवाय कथयेति समाज्ञप्तोऽगदः प्रविश्यान्तःपुरं, अभिवाद्य च राजानं निखिलमप्युदन्तमाचचक्षे॥

**स निद्राक्लान्तिसंवीतो वानरो नावबुद्धवान्।**
**बभूव मदमत्तश्च मदनेन च मोहितः॥**

**ततः किलकिलां चक्रुः लक्ष्मणं प्रेक्ष्य वानराः।**
**तेन शब्देन महता प्रत्यबुध्यत वानरः॥**

**मन्त्रिणौ वानरेन्द्रस्य संमतोदारदर्शिनौ।**
**प्लक्षश्चैव प्रभावश्च मन्त्रिणावर्थधर्मयोः॥**

**वक्तुमुच्चावचं प्राप्तं मन्त्रिणौ तौ शशंसतुः।**

यत्प्रसादेन वानरराज्यमेतत्सम्प्राप्य रुमया सुखमनुभवति भवान् तदनुजो लक्ष्मणः कोपानलेनैव पुरीमिमा निर्दग्धुकाम इव दुराधर्षस्समागत्यास्ते द्वारि, तदधुनैव तमभिप्रसाद्य —

**यदाह रामो धर्मात्मा तत्कुरुष्व समाहितः।**
**राजंस्तिष्ठस्व समये भव सत्यप्रतिश्रवः॥ इति।**

अनेन व्यसनेषु प्रवृत्तस्य राज्ञस्तदुपजीविभिर्नानाविधोपायैरकार्यप्रवृत्तिनिरसनपूर्वकं सत्कार्ये प्रवृत्तिः कारयितव्येति सूचितम्॥

तथा च **कामन्दके** —

अकार्यात्प्रतिषेधं च कार्ये चैव प्रवर्तनम्। सक्षेपादिति सद्वृत्तं बन्धुमित्रादिजीविनाम्॥

पानस्त्रीद्यूतगोष्ठीषु राजानमभितश्चराः। बोधयेयु प्रमाद्यन्तमुपायैर्नाडिकादिभि॥ इति।

**द्वात्रिंशे** — ततस्सुग्रीवस्ससम्भ्रमं परित्यज्य शय्या समीपस्थितान्सचिवानित्थमाह— रामे लक्ष्मणे वा मत्कृतापराधं कोपकारणं किञ्चिन्न पश्यामि,

**असुहृद्भिर्ममामित्रैर्नित्यमन्तरदर्शिभिः।**
**मम दोषानसंभूतान् श्रावितो राघवानुजः॥**

अनेन खलाः मिथ्योपजापादिना मित्रभेदं कुर्वन्तीति सूचितम्। तथा च **राजधर्मे** पुत्रं प्रति व्याघ्री —

नोच्छ्रयं सहते कश्चित्प्रक्रिया वैरकारिका। शुचेरपीह युक्तस्य दोष एव निपात्यते॥

मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वत। उत्पद्यन्ते त्रय पक्षाः मित्रोदासीनशत्रवः॥

लुब्धाना शुचयो द्वेष्याः कातराणां तरस्विनः। मूर्खाणा पण्डिता द्वेष्या दरिद्राणा महाधनाः॥

अधार्मिकाणा धर्मिष्ठा विरूपाणा सुरूपिण। बहवः पण्डिता मूर्खा लुब्धा मायोपजीविनः॥

कुर्युर्दोषमदोषस्य बृहस्पतिमतेरपि॥ इति।

**मित्रं त्वस्थानकुपितं जनयत्येव संभ्रमम्।**
**सर्वथा सुकरं मित्रं दुष्करं परिपालनम्॥**

**अनित्यत्वात्तु चित्तानां प्रीतिरल्पेऽपि भिद्यते।**

अनेन मनश्चापल्यात् अल्पेनापि हेतुना मित्रं भिद्यत इत्युक्तम्। मनश्चापल्यं च **गीतायाम्** —

'चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।' इति।

प्राचीना अपि —

स्तोकेनानन्दमायाति स्तोकेनायाति खेदताम्।
नास्ति चित्तसमश्शोच्यो नीचो गुणविवर्जितः॥ इति।

अथवा प्रत्युपकारानाचरणप्रभवो वायं कोपो विचार्यतामिति वदति सुग्रीवे मंत्रिप्रवरो हनुमांस्तत्कालोचितमित्थमवोचत्। शत्रुनिबर्हणो रामभद्रो दिक्प्रसादगगननैर्मल्यादिभिः प्रवृत्तामुद्योगयोग्यां शरदं पानमदेन विस्मृतप्रतिज्ञं अनारब्धकार्यं भवन्तं चाभिवीक्ष्य प्रणयकोपेन स्वानुजं लक्ष्मणं प्रेषितवान्, तदिदानीं —

**आर्तस्य हृतदारस्य परुषं पुरुषान्तरात् ।**
**वचनं मर्षणीयं ते राघवस्य महात्मनः ॥**

**कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम् ।**

अनेन सापराधः पुरुषः निर्दुष्टस्य स्वविषये कुपितस्य आप्तजनस्योपालम्भमपि सोढ्वा प्रसादयेदिति सूचितं । तथा च भारते --

यः कोपयति निर्दोषं सदोषोऽभ्यन्तरं जनम् । येषु दुष्टेषु दोषस्स्याद्योगक्षेमस्य भारत ॥

सदा प्रसादनं तेषां देवतानामिवाचरेत् ॥ इति ।

अत एवाग्रे **पञ्चत्रिंशे** सुग्रीववाक्यम् —

यदा किञ्चिदतिक्रान्तं विश्वासात्प्रणयेन वा ।
प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति ॥ इति ।

तथा च परुषं पुरुषान्तरादित्यनेन जने निष्ठुरभाषणप्रसक्तौ पुरुषान्तरमुखादेव भाषेतेति सूचितम् ॥

**नियुक्तैर्मन्त्रिभिर्वाच्यो ह्यवश्यं पार्थिवो हितम् ।**
**अतएव भयं त्यक्त्वा ब्रवीम्यवधृतं वचः ॥**

अनेन मन्त्रिभिर्निर्भयं राजा समये अवश्यं प्रबोधनीय इति सूचितम् । तथा च **कामन्दके** —

नरेश्वरे जगत्सर्वं निमीलति निमीलति । सूर्योदये यथा पद्मं तत्प्रबोधे प्रबुध्यते ॥
तद्बोधयेज्जगन्नाथं सबुध्येत यथा तथा । धीसत्वोद्योगसम्पन्नैस्तत्कार्यं तदुपाश्रितैरिति ॥

**स न क्षमः कोपयितुं यः प्रसाद्यः पुनर्भवेत् ।**
**पूर्वोपकारं स्मरता कृतज्ञेन विशेषतः ॥**

अनेन पूर्वोपकारिणा कृतः क्रोधः सोढव्य इति सूचितम् । तथा च **वनपर्वणि द्रौपदी** —

पूर्वोपकारी यस्ते स्यादपराधे गरीयसि । उपकारेण तत्तस्य क्षन्तव्यमपराधिनः ॥ इति ।

तदधुना विज्ञातपराक्रमेण भवता दुरतिक्रमं रामशासनं शिरसा परिगृह्य पादप्रणामादिपूर्वकं प्रसाद्यो राघवः —

**राजंस्तिष्ठस्व समये भर्तुर्भार्येव तद्वशे, इति ।**

अनेन भार्याया भर्त्रधीनत्वं सूचितम् । तच्चायोध्याकाण्डे प्रपञ्चितम् ॥

**त्रयस्त्रिंशे**-अत्रान्तरे लक्ष्मण अंगदहनुमद्दधिमुखमैन्दद्विविदप्रमुखानां वानरयूथमुख्यानां शारदाभ्रशुभ्राणि रम्याणि तत्र तत्र हर्म्याणि पश्यन्नेव कनकगिरिसन्निभं कपिराजभवनं प्रविश्य समतीत्य च विचित्रतरविनोदाः सप्त कक्ष्याः,

**स्त्रियस्सुग्रीवभवने ददर्श स महाबलः ।**
**कूजितं नूपुराणां च काञ्चीनां निनदं तथा ॥**

**सन्निशम्य ततः श्रीमान् सौमित्रिर्लज्जितोऽभवत् ।**
**ततः— रोषवेगप्रकुपितः श्रुत्वा चाभरणस्वनम् ।**
**चकार ज्यास्वनं वीरो दिशः शब्देन पूरयन् ॥**

**चारित्रेण महाबाहुरप्रकृष्टस्स लक्ष्मणः ।**
**तस्थावेकान्तमाश्रित्य रामकोपसमन्वितः ॥**

अनेन परस्यान्तःपुरे सहसा न प्रवेष्टव्यमिति सूचितम् । तथाचोद्योगे संजयः—

संप्राप्य हस्तिनपुरं शीघ्रमेव प्रविश्य च । अन्तःपुरं समास्थाय द्वास्थं वचनमब्रवीत् ॥

जागर्ति चेदभिवदेस्त्वं हि द्वास्थ प्रवेशय ।
निवेद्यमत्रात्ययिकं ममास्ति द्वास्थोऽथ श्रुत्वा नृपति जगाद ॥ इति ।

ततो निर्घातसन्निभज्याघोषेण अतिक्रुद्धं सन्निहितं लक्ष्मणं निश्चित्य ससंभ्रमं परित्यज्यासनं विकीर्णवसनमाल्याभरणः सुग्रीवस्तारामित्थमवोचत् —

**त्वद्दर्शनविशुद्धात्मा न स कोपं करिष्यति ।**
**नहि स्त्रीषु महात्मानः क्वचित्कुर्वन्ति दारुणम् ॥**

अनेन महापुरुषाः स्त्रीषु कोपं न कुर्वन्तीति सूचितम् । तथा च **राजधर्मे** —

दैवतेषु विशेषेण राजसु ब्राह्मणेषु च । नियन्तव्यः सदा क्रोधो वृद्धस्त्रीबालरोगिषु ॥ इति ।

**उद्योगेऽपि** विदुरः —

ब्राह्मणेषु च ये शूराः स्त्रीषु गोषु तपस्विषु । वृन्तादिव फलं पक्वं धृतराष्ट्र पतन्ति ते ॥

अवध्या ब्राह्मणा गावः ज्ञातयः शिशवः स्त्रियः ।
येषां चान्नानि भुञ्जीत येच स्युः शरणं गताः ॥ इति ।

अत एवाग्रेऽपि — 'स्त्रीसन्निकर्षाद्विनिवृत्तकोपः' इति ।

**त्वया सान्त्वैरुपक्रान्तं प्रसन्नेन्द्रियमानसम् ।**
**ततः कमलपत्राक्षं द्रक्ष्याम्यहमरिन्दमम् ,** ॥ इति

**सा प्रस्खलन्ती मदविह्वलाक्षी प्रलंबकाञ्चीगुणहेमसूत्रा ।**
**सलक्षणा लक्ष्मणसन्निधानं जगाम तारा नमिताङ्गयष्टिः ॥**

**स तां समीक्ष्यैव हरीशपत्नीं तस्थावुदासीनतया महात्मा ।**
**अवाङ्मुखोऽभून्मनुजेन्द्रपुत्रः स्त्रीसन्निकर्षाद्विनिवृत्तकोपः ॥**

अनेन परात.पुरेऽवाङ्मुखस्तिष्ठेत् , न परस्त्रियो द्रष्टव्या इति सूचितम् । तथा चावाङ्मुखविषये **उद्योगे** धृतराष्ट्रेण दौत्यार्थं प्रेषितः सञ्जयः —

पादांगुलीरभिप्रेक्ष्य प्रयातोऽहं कृताञ्जलि. । शुद्धान्तं प्राविशं राजन्नाख्यातुं नरदेवयोः ॥ इति ।

परस्त्रीविषये **भारते** —

उदर्कफलमिच्छद्भिस्सद्भिर्नच विलोक्यते । चतुर्थीचन्द्रलेखेव परस्त्रीफालपट्टिका ॥ इति ।

ततः कोऽयं सभ्रम ? किं वा कोपनिदानमस्मासु परिपालयेष्विति तयाभिहितो लक्ष्मणः इत्थमकथयत् — अस्माभिरुपलब्धमनोरथं परित्यक्तमित्रकार्यं, अविगणय्य शोकपरायणानस्मानहर्निशं मधुपानमेव सेवमानं त्वत्प्राणेश्वरं किं न जानीषे ?

**नहि धर्मार्थसिध्यर्थं पानमेवं प्रशस्यते ।**
**पानादर्थश्च धर्मश्च कामश्च परिहीयते ॥**

अनेन सर्वानर्थकरं पानं परिहर्तव्यमिति सूचितम् । तथा च **कामन्दके** —

वमनं निर्गुणत्वं च सज्ञानाशो विवस्त्रता । असंबद्धप्रलापित्वमकस्माद्व्यसनं मुहुः ॥
प्राणग्लानिः सुहृन्नाशः प्रज्ञाश्रुतिमतिभ्रमः । सद्भिर्वियोगोऽसद्भिश्च संयोगोऽनर्थसंगमः ॥
लेखनं वेपथुस्तन्द्रा नितान्तं स्त्रीनिषेवणम् । इत्यादि पानव्यसनमत्यन्तं सद्भिर्गर्हितम् ॥
श्रुतिशीलबलोपेताः पानदोषेण भूयसा । क्षयमक्षीणनामानो जग्मुरन्धकवृष्णयः ॥
योगीश्वरश्च भगवान्भार्गवो भृगुतल्पधीः । शुक्रः पानमदात्तीव्रं बुभुजे शिष्यमौरसम् ॥
पानाक्षिप्तो हि पुरुषो यत्र यत्र प्रवर्तते । यात्यसंव्यवहार्यत्वं तत्र तत्र प्रवर्तनात् ॥ इति ।

**धर्मलोपो महांस्तावत्कृते ह्यप्रतिकुर्वतः ।**

**अर्थलोपो हि मित्रस्य नाशे गुणवतो महान् ॥**

अनेन प्रत्युपकाराकरणे महान्प्रत्यवायो भवतीति सूचितम्। तथाच **रघुवंशे**—

सम्मोचितस्सत्त्ववता त्वयाहं शापाच्चिरप्रार्थितदर्शनेन।
प्रतिप्रियं चेद्भवतो न कुर्यां व्यर्था हि मे स्यात्स्वपदोपलब्धिः॥ इति।

**मित्रं ह्यर्थगुणं श्रेष्ठं सत्यधर्मपरायणम्।**
**तद्द्वयं तु परित्यक्तं नतु धर्मे व्यवस्थितः॥**

इत्यभिहिता तारा—

**न कोपकालः क्षितिपालपुत्र नचापि कोपः स्वजने विधेयः।**
**त्वदर्थकामस्य नृपस्य तस्य प्रमादमप्यर्हसि वीर सोढुम्॥ इति।**

अनेन स्वजनकृतापराधः सोढव्यः, तस्मिंश्च कोपो न कर्तव्य इति सूचितम्। तथा च **वनपर्वणि**—

अबुद्धिमाश्रितानां तु क्षन्तव्यमपराधिनाम्। सर्वस्यैकापराधस्ते क्षन्तव्यः प्राणिनो भवेत्॥
द्वितीये सति वध्यस्तु स्वल्पेऽप्यपकृतो भवेत्। अजानता भवेत्कश्चिदपराधः कृतो यदि॥
क्षन्तव्यमेव तस्याहुः सुपरीक्ष्य परीक्षया। तथा लोकभयाच्चैव क्षन्तव्यमपराधिनः॥
एत एवंविधाः कालाः क्षमायाः परिकीर्तिताः॥ इति।

**कोपं कथं नाम गुणप्रकृष्टः कुमार कुर्यादपकृष्टसत्वे।**
**कस्त्वद्विधः कोपवशं हि गच्छेत् सत्वावरुद्धस्तपसः प्रसूतिः॥**

अनेनाल्पसत्वे कोपो न कर्तव्य इति सूचितं, तथा च **राजधर्मे** गृध्रगोमायुसंवादे—
न दुष्करमिदं पुत्र यः प्रभुर्घातयेत्कृशम्। श्लाघनीया यशस्या च लोके प्रभवतां क्षमा॥ इति।

**न देशकालौ हि न चार्थधर्मावपेक्षते कामरतिर्मनुष्यः।**
**तं कामवृत्तं मम सन्निकृष्टं कामाभियोगाच्च निवृत्तलज्जम्॥**

**क्षमस्व तावत्परवीरहन्तस्त्वद्भ्रातरं वानरवंशनाथम्॥**

अनेनात्यन्तस्त्रीकामुको धर्मविभ्रष्टो भवतीति सूचितम्। तथा च **कामन्दके**—
कालातिपातः कार्याणां धर्मार्थपरिपीडनम्। नित्याभ्यन्तरवर्तित्वात्साधुप्रकृतिकोपनम्॥

रहस्यभेदतत्पक्षादकार्येषु प्रवर्तनम् । ईर्ष्यामर्षस्तथा क्रोधो ह्यनुरोधश्च साहसम् ॥
इत्यादि च स्त्रीव्यसनं पूर्वं यच्च प्रकीर्तितम् । तस्मात्स्त्रीव्यसनं राजा राज्यकामः परित्यजेत् ॥
स्त्रीमुखालोकनतया व्यग्राणामल्पचेतसाम् । ईहितानीह गच्छन्ति यौवनेन सह क्षयम् ॥ इति ।

**महर्षयो धर्मतपोभिकामाः कामानुकामाः प्रतिबुद्धमोहाः ।**
**अयं प्रकृत्या चपलः कपिस्तु कथं न सज्जेत सुखेषु राजा ॥**

अनेन महर्षिभिरप्यपरिहार्यः कामः प्राकृतैः कथं परिहर्तुं शक्य इत्युक्तम् । तथा च **प्राचीनाः** ॥

विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
शाल्यन्नं सघृतं पयोदधियुतं ये भुञ्जते मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यः प्लवेत्सागरे ॥ इति ।

इत्यभिधाय कामपरवशेनापि कपीश्वरेण भवत्कृते तत्तद्देशवर्तिवानरानयनाय पूर्वमेव समाज्ञप्ताः वानरयूथपाः ॥

**तदागच्छ महाबाहो चारित्रं रक्षितं त्वया ।**
**अच्छलं मित्रभावेन सतां दारावलोकनम् ॥**

अनेन दुष्टबुध्या परदारावलोकनं वर्जयेदिति सूचितं । तथा च **गौतमः** — वर्जयेदित्युपक्रम्य 'स्त्रीप्रेक्षणालम्भने मैथुनशङ्कायामिति' । अत एव रावणान्तःपुरे निखिलतद्दारानवलोकितवतो हनूमतो वाक्यं **सुन्दरकाण्डे** —

परदारावरोधस्य प्रसुप्तस्य निरीक्षणम् । इदं खलु ममात्यर्थं धर्मलोपं करिष्यति ॥
नहि मे परदाराणां दृष्टिर्विषयवर्तिनी । अयं चात्र मया दृष्टः परदारपरिग्रहः ॥
कामं दृष्टा मया सर्वा विश्वस्ता रावणस्त्रियः । नहि मे मनसः किंचिद्वैकृत्यमुपपद्यते ॥
मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने । शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ॥इति

एवं तारया सादरं प्रसाद्यमानो लक्ष्मणः प्रविश्य च कपिराजगृहाभ्यन्तरं कांचनासनासीनं वानरेन्द्रं ददर्श –

**चतुस्त्रिंशे** — ततः स्वदर्शनसञ्जातभयेन परिकंपितसर्वावयवं प्रमदाजनपरिवृतं वानरराजमवलोक्य —

अब्रवील्लक्ष्मणः क्रुद्धं भ्रातारं शशिनं यथा ।
सत्त्वाभिजनसम्पन्नः सानुक्रोशो जितेन्द्रियः ॥

कृतज्ञः सत्यवादी च राजा लोके महीयते ।

अनेन सत्यवादी राजा श्रेष्ठ इत्युक्तम् । तथा च मनुः —

यस्य प्रियान्हि वदतः क्षेत्रज्ञो नातिशंकते ।
तस्मान्न देवाः श्रेयांसं लोकेऽन्यं पुरुषं विदुः ॥ इति ।

यस्तु राजा स्थितोऽधर्मे मित्राणामुपकारिणाम् ।
मिथ्याप्रतिज्ञां कुरुते को नृशंसतरस्ततः ॥

शतमश्वानृते हन्ति सहस्रं च गवानृते ।
आत्मानं पुरुषं हन्ति पुरुषः पुरुषानृते ॥

अत्राश्वविषयेऽनृतं वक्ता स्वपूर्वपुरुषाणां शतं हन्ति, स्वर्गात्प्रच्याव्य नरकं तिर्यग्योनिं वा प्रापयति । गवानृते सहस्रं स्वपूर्वपुरुषांस्तथा करोति । पुरुषविषयानृते सबान्धवः स्वयमेव तथा नरकं तिर्यग्योनिं वा प्राप्नोतीत्युक्तम् । मानवे तु —

यावतो बान्धवान्यस्मिन्हन्ति साक्ष्येऽनृतं वदन् । तावतः संख्यया तस्मिन् शृणु सौम्यानुपूर्वशः ॥

पञ्च पश्वनृते हन्ति दश हन्ति गवानृते । शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥

हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् । सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदीः ॥

पशुवत्क्षीरघृतयोर्यज्ञान्यत्पशुसंभवम् । गोवद्वसुहिरण्येषु धान्यपुष्पफलेषु च ॥

अश्ववत्सर्वयानेषु खराश्वाश्वतरादिषु । अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने ॥

अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च । एतान्सर्वानवेक्ष्याथ दोषाननृतभाषणे ॥

यथाश्रुतं यथादृष्टं सत्यमेवांजसा वदेत् ॥ इति ।

उद्योगे च —

अथ यो नैव प्रब्रूयात्सत्यं वा यदि वानृतम् । एतत्सुधन्वन्पृच्छामि दुर्विवक्तास्य कां वसेत् ॥

इति प्रह्लादेन पृष्टस्सुधन्वा —

यां रात्रिमधिविन्ना स्त्री यां चैवाक्षैः पराजितः ।
यां च भाराभितप्ताङ्गो दुर्विवक्ता स्म तां वसेत् ॥

नगरे प्रतिरुद्धस्सन् बहिर्द्वारं बुभुक्षितः । अमित्रीभूय सर्वस्य दुर्विवक्ता स्म तां वसेत् ॥

पञ्च पश्वनृते हन्ति दश हन्ति गवानृते । शतमश्वानृते हंति सहस्रं पुरुषानृते ॥
हंति जातानजातांश्च हिरण्यार्थेऽनृतं वदेत् ॥ इति ।

पूर्वं कृतार्थो मित्राणां न तत्प्रतिकरोति यः ।
कृतघ्नस्सर्वभूतानां स वध्यः प्लवगेश्वर ॥

गीतोऽयं ब्रह्मणा श्लोकः सर्वभूतनमस्कृतः ।
दृष्ट्वा कृतघ्नं क्रुद्धेन तन्निबोध प्लवङ्गम ॥

गोघ्ने चैव सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥

अनार्यस्त्वं कृतघ्नश्च मिथ्यावादी च वानर ।
पूर्वं कृतार्थो रामस्य न तत्प्रतिकरोषि यत् ॥

**रामवाक्यमपि** —

कृतार्था ह्यकृतार्थानां मित्राणां न भवन्ति ये । तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ इति

अनेन कृतघ्नतादोषस्सर्वदोषादप्यधिक इत्युक्तम् । तथाच **द्रोणपर्वणि** कृष्णं प्रति युधिष्ठिरवचनम् —

विदिता मे महाबाहो धर्माणां परमा गतिः । ब्रह्महत्या फलं तस्य यः कृतं नावबुध्यते ॥ इति

**उद्योगेऽपि** — सत्कृताश्च कृतार्थाश्च मित्राणा न भवन्ति ये ।
तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ इति ।

**आपद्धर्मे** कृतघ्नोपाख्यानेऽपि - गौतमो नाम मध्यदेशीयो ब्रह्मबन्धुर्वृत्त्यलाभेन शबरालये भिक्षामटन् तत्रत्येन केनचिद्व्याधेन वृत्तिकन्याप्रदानादिभिरतिसत्कृतस्तल्लोभेन तत्रैव वसन् तत्सहवासेन च स्वयमपि निखिलवनचरसत्वहननक्रौर्यादिभिर्व्याधतामगमत् । अथ कदाचित् वनोद्देशे निहत्य बहुपक्षिमृगगणान् तन्मांसभारावनतस्कन्धः स्वगृहद्वारमुपागतो गौतमो द्रागेव निशानिवासाय स्वगृहमुपागतेन परिचितस्वाभिजनेन विप्रवर्येण गौतम किमिदं क्रूरतरं कार्यमारब्धं यद्ब्राह्मणजातेरननुरूपं तदधुना परित्यज्य शबरालयं स्वदेशमेव झटिति गच्छेत्यभिहितो वृत्त्यलाभकृतोऽयं मम पङ्कप्रवेशः, श्वस्तथैव निजदेशं गन्तास्मि । त्वमप्यद्य रात्रावस्मद्गृह एव मत्कृतसपर्यां परिगृह्य सुखं वसेति ब्राह्मणोत्तममवदत् ।

स तत्र न्यवसद्विप्रो घृणी किंचिदसंस्पृशन् । क्षुधितः छन्द्यमानोऽपि भोजनं नाभ्यनन्दत ॥

ततः प्रभाते यथागतं गते विप्रवर्ये स्वयमपि समुद्रयानेन धनसंपादनाय प्रस्थितो मध्येमार्गं क्षुत्पिपासापरिपीडितः सुशीतलच्छायं श्रमापनोदनं न्यग्रोधवृक्षमासाद्य क्षुत्प्रतिक्षेपणाय पक्षिहननबद्धदृष्टिर्गौतमो ब्रह्मसभातः सन्ध्यासमयसमुपागतेन एतन्न्यग्रोधनिलयेन राजधर्माभिधेन बकेन स्वागतार्घ्यमधुपर्कस्वर्धुनीनीरसञ्चारिमीनाद्यामिषप्रदानेन सन्तर्पणपूर्वकं किं कारणं निर्जने वने भवदागमनमिति पृष्टः समुद्रयानेन धनार्जनाय प्रस्थितो वनमिदं प्राप्तोऽस्मीत्यवदत् । ततो दयार्द्रहृदयेन राजधर्मनाम्ना बकेन –

चतुर्विधा ह्यर्थसिद्धिर्बृहस्पतिमतं यथा । पारंपर्यं तथा दैवं कामं मैत्रमिति प्रभो ॥

प्रादुर्भूतोस्मि ते मित्रं सुहृत्त्वं च मम त्वयि । सोऽहं तथा यतिष्यामि भविष्यसि यथार्थवान् ॥

तदिदानीं मत्प्रियसखं व्रजपुरीनिलयं अर्थिजनाभीष्टदायिनं विरूपाक्षाभिधं राक्षसं गच्छ, तेन च भवदभीष्टसिद्धिर्भवितेति । गौतमस्तथैव बकसखं राक्षसमासाद्य तेन च पृष्टगोत्रचरणाभिजनः —

मध्यदेशप्रसूतोऽहं वासो मे शबरालये । शूद्रा पुनर्भूर्भार्या मे सत्यमेतद्ब्रवीमि ते ॥

इत्यभिहितवान् । ततो निर्णीतनिखिलनिगमसारो राक्षसः परित्यक्तशौचाचारायानाघ्रातविद्यागन्धायापात्रभूतायान्नवसुवासोदानमूषरप्रदेशे बीजारोपवन्निरर्थकं शास्त्रासम्मतं च; अथापि –

अयं हि जन्मना विप्रः सुहृत्तस्य महात्मनः । संप्रेषितश्च तेनायं काश्यपेन ममान्तिकम् ॥

तस्य प्रियं करिष्यामि स हि मामाश्रितस्सदा । भ्राता मे बान्धवश्चासौ सखा च हृदयंगमः ॥

कार्तिक्यामद्य भोक्तारः सहस्रं मे द्विजोत्तमाः । तत्रायमपि भोक्ता च देयमस्मै च मे धनम् ॥

स चाद्य दिवसः पुण्यो ह्यतिथिश्चायमागतः ।

तस्मादस्मै देयमेव धनजातमिति निश्चयमकरोत् –

ततः सहस्रं विप्राणां विदुषां समलंकृतम् । स्नातानामनुसंप्राप्तं सुमहत्क्षौमवाससाम् ॥

बृस्यस्तेषां तु सन्यस्ताः राक्षसेन्द्रस्य शासनात् । भूमौ वरकुशास्तीर्णाः प्रेष्यैर्भरतसत्तम ॥

तासु ते पूजिता राज्ञा निषण्णा द्विजसत्तमाः । तिलदर्भोदकेनाथ अर्चिता विधिवद्द्विजाः ॥

विश्वेदेवास्सपितरः साग्नयश्चोपकल्पिताः । विलिप्तपुष्पवन्तश्च सुप्रचाराः सुपूजिताः ॥

ततो जांबूनदीः पात्रीः वज्रांका विमलाश्शुभाः । वरान्नपूर्णा विप्रेभ्यः प्रादान्मधुघृताप्लुताः ॥

तस्य नित्यं सदाभाव्यां माध्यां च बहवो द्विजाः । ईप्सितं भोजनवरं लभन्ते सत्कृतं सदा ॥
विशेषतस्तु कार्तिक्यां भोजनं संप्रयच्छति । शरद्व्यपाये रत्नानि पौर्णमास्यामिति श्रुतः ॥
सुवर्णं रजतं चैव मणीनथ च मौक्तिकान् । वज्रान्महाधनांश्चैव वैडूर्याजिनराङ्कवान् ॥
रत्नराशीन्विनिक्षिप्य दक्षिणार्थे स भारत । ततः प्राह द्विजश्रेष्ठान्विरूपाक्षो महामनाः ॥
गृह्णीत रत्नान्येतानि यथोत्साहं यथेष्टतः । येषु येषु च भाण्डेषु भुक्तं वो द्विजसत्तमाः ॥
तान्येवादाय गच्छध्वं स्ववेश्मानीव भारत । इत्युक्तवचने तस्मिन् राक्षसेन्द्रे महात्मनि ॥
यथेष्टं तानि रत्नानि जगृहुर्ब्राह्मणर्षभाः । ततो महार्हास्ते सर्वे रत्नैरभ्यर्चिताः शुभैः ॥
ब्राह्मणा मृष्टवसनाः सुप्रीताः स्म ततोऽभवन् ।

गौतमोऽपि बकसखः राक्षसात्संप्राप्तबहुधनः तद्वहनजनितश्रमेण पुनरपि तमेव न्यग्रोधमासाद्य मित्रवत्सलेन तेनैव बकेन निरस्तसमस्तश्रमः गुरुतरभारवयनं पथ्यशनं विना न शक्यं विचिन्त्य पार्श्वत एव विस्रब्धं शयानं मित्रवत्सलं तमेव बकं निहत्य तदीयमांसेन कृतपथ्यशनो धनमादाय स्वदेशाभिमुखः प्रतस्थे । तदनु सन्ध्यासमये स्वसन्दर्शनायानागतं बकं मांसार्थिना दुरात्मना गौतमेन निहतं निश्चित्य विरूपाक्षस्तद्विचारणाय रक्षोगणपरिवृतं स्वतनयं प्रेषयामास । ततः स्वपुत्रेण मध्येमार्गं निरुध्य समानीतं सधनं सामिषं बकहन्तारमभिवीक्ष्य —

अथाब्रवीन्नृपः पुत्रं पापोऽयं वध्यतामिति । अस्य मांसैरिमे सर्वे विहरन्तु यथेष्टतः ॥
पापाचारः पापकर्मा पापात्मा पापसाधनः । हन्तव्योऽयं ममारातिर्भवद्भिरिति राक्षसाः ॥
इत्युक्ता राक्षसेन्द्रेण राक्षसा घोरविक्रमाः । नैच्छन्त तं भक्षयितुं पापकर्माणमित्युत ॥
दस्यूनां दीयतामेष साध्वद्य पुरुषाधमः । इत्यूचुस्ते महाराज राक्षसेन्द्रं निशाचराः ॥
शिरोभिः प्रणतास्सर्वे व्याहरन्राक्षसाधिपम् । न दातुमर्हसि त्वन्नो भक्षणायास्य किल्बिषम् ॥
एवमस्त्विति तानाह राक्षसेन्द्रो निशाचरान् । दस्यूनां दीयतामेष कृतघ्नोऽद्यैव राक्षसाः ॥
कृत्वा तं खण्डशः पापं दस्युभ्यः प्रददुस्तदा । दस्यवश्चापि नैच्छन्त तमत्तुं पापकारिणम् ॥
क्रव्यादा अपि राजेन्द्र कृतघ्नं नोपभुञ्जते । गोघ्ने चैव सुरापे च चोरे भग्नव्रते तथा ॥
निष्कृतिर्विहिता राजन् कृतघ्ने नास्ति निष्कृतिः ।
मित्रद्रोही कृतघ्नश्च नृशंसश्च नराधमः ॥
क्रव्यादैः कृमिभिश्चान्यैर्न भुज्यन्ते हि तादृशाः । इति ।

तत्समये गगनतलसंचारिण्याः कामधेन्वाः मुखान्निर्गतफेनसेकवशाल्लब्धजीवनो बको यथापुरं राक्षसपार्श्वमाजगाम। तत्कालमुपागतेन देवराजेन ब्रह्मशापकृतो भवद्वधस्तत्प्रसादादेव जीवनं च, तदिदानीं निवृत्तशापो यथेष्टं विहरेत्यभिहितो बकः—

यदि तेऽनुग्रहकृता मयि बुद्धिस्सुरेश्वर। सखायं मे सुदयितं गौतमं जीवयेत्युत ॥

इत्यवदत्। तदनु पाकशासनकृतामृतवर्षेण संजीवितं गौतमम्—

सभाण्डोपस्करं राजन् तमासाद्य बकाधिपः। संपरिष्वज्य सुहृदं प्रीत्या परमया युतः ॥

अथ तं पापकर्माणं राजधर्मा बकाधिपः। विसर्जयित्वा सधनं प्रविवेश स्वमालयम् ॥

यथोचितं च स बको ययौ ब्रह्मसदस्तदा। ब्रह्मा चैनं महात्मानमातिथ्येनाभ्यपूजयत् ॥

गौतमोऽपि निजगृहमागत्य शूद्रायां स भार्यायां पुत्रान्बहूनुत्पाद्य सुरशापाभिहतो निरयं प्राप ॥

कुतः कृतघ्नस्य सुखं कुतः स्वस्ति कुतो धनम्।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ॥

मित्रद्रोहो न कर्तव्य पुरुषेण विजानता। मित्रध्रुङ्नरकं घोरं पापकर्मा नराधमः ॥

एष धर्मभृतां श्रेष्ठ प्रोक्तः पापो मयानघ। इति।

तदधुना रामेण संप्राप्तमनोरथः सन्दृष्टतदीयविक्रमोऽपि श्रीरामभार्यागवेषणमविचिन्तयन्नेव राज्यसंभोगमदमत्तः कालानलोपमैः श्रीरामबाणैरभिहतो वालिपथं मा गाः इति ॥

## पञ्चत्रिंशप्रभृति एकोनचत्वारिंशपर्यन्तेषु—

ततस्तारा स्वभर्तृनिन्दनं सुमित्रानन्दनं परिसान्त्वयन्ती तमित्थमाचचक्षे—वालिना हृतराज्यो बहुधा दुःखमनुभवन् रघुनन्दनप्रसादेन लब्धराज्यश्रीः मित्रकार्यसिध्यै इतस्ततो विप्रकीर्णवानरयूथपमेलनाय प्रस्थाप्य वानरान्वानरचापल्येन महर्षीणामप्यपरिहार्यया कामासक्त्या च प्राप्तकालमपि मित्रकार्यं विस्मृतवानित्येतावतैवाविचार्य तदभिप्रायं कोपवशं मा गाः—

**तथ्ययुक्ता हि पुरुषास्त्वद्विधाः पुरुषर्षभ।**
**अविमृश्य न रोषस्य सहसा यान्ति वश्यताम् ॥**

अनेन महद्भिरविचार्य कोपो न कर्तव्य इति सूचितं। तच्च प्राक् प्रपञ्चितम्। तदनु परिगलितमदवेगस्सुग्रीवः परिहृत्य माल्यजातं उदारतारावचसा सान्त्वितं लक्ष्मणमिदमवदत्—लीलयैव सकृत्प्रयुक्तैकेषुनिर्भिण्णसप्तसालशैलरसातलस्य महाबलस्य रामस्य शत्रुनिरसनेऽप्यनपेक्षितसहायस्य किमस्माभिरल्पसत्त्वैर्वानरैस्साहाय्यमाचरणीयमस्ति। अथापि रावणवधाय प्रस्थितं राघवं निखिलबलपरिवृतोऽहमनुयास्यामि —

**यदि किञ्चिदतिक्रान्तं विश्वासात्प्रणयेन वा।**
**प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति॥**

अत्र स्वजनकृतापराधः सोढव्य इत्युक्तं। अयमर्थः प्राङ्निरूपितः। इति सुग्रीववचसा समाश्वासितस्सौमित्रिः सदृशविक्रममित्रलाभेन नूनं शत्रुजयो रामस्य, तदधुना कोपावेशेनाननुरूपमस्मद्भाषितमपि सोढ्वा भार्याहरणकर्शितं प्रियसखं रामभद्रं झटिति संप्रहर्षयेत्यवदत्। ततः सुग्रीवेण गिरिनदीसमुद्रनिलयवानरानयनाय प्राक् प्रेषितान्वानरांस्त्वरयितुं प्रेषिता दूताः नानादिग्देशवर्तिनो वानरांस्तथैव त्वरयित्वा हिमवत्प्रदेशे महेश्वरयज्ञीयान्नरससंभूतं सकृदास्वादनमात्रेण मासमात्रतृप्तिकरं दिव्यं फलमूलपुष्पौषधिजातं समानीय सुग्रीवाय राज्ञे निवेद्य —

**सर्वे परिगताश्शैलास्समुद्राश्च वनानि च।**
**पृथिव्यां वानरास्सर्वे शासनादुपयान्ति ते॥**

इत्यवोचन्। ततस्तादृशदूतवचनाकर्णनेन सन्तुष्टहृदयस्सुग्रीवो विसृत्यान्तःपुरं दिव्योपबर्हणास्तरणाद्युपेतं समलंकृतं चतुरन्तयानं सौमित्रिणा सह समास्थाय शंखदुन्दुभिभेरीपटहादिशब्दपरिपूरितदिङ्मण्डलः वानरयूथपैश्च परिवृतस्समागत्य रामभद्रनिकटमवरुह्य चतुरन्तयानाद्राघवस्य पादयोः प्रणनाम। ततः श्रीरामः पारावारसमानया वानरसेनया समागतं तमवनौ प्रणतमुत्थाप्य परिष्वङ्गपूर्वकं निर्दिश्यासनमित्थमाचचक्षे —

**धर्ममर्थं च कामं च यस्तु काले निषेवते।**
**विभज्य सततं वीर स राजा हरिसत्तम॥**

**हित्वा धर्मं तथार्थं च कामं यस्तु निषेवते।**
**स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते॥**

अनेन यथाकालं त्रिवर्गसेवी सुखमनुभवतीत्युक्तम्। तथाच **भारते** —

न धर्मपर एव स्यान्न चार्थपरमो नरः। न कामपरमो वा स्यात्सर्वान्सेवेत सर्वदा॥

धर्मं पूर्वं धनं मध्ये जघन्ये धर्ममाचरेत् । वयस्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥
धर्मं चार्थं च कामं च यथावद्वदतां वर । विभज्य काले कालज्ञ सर्वान्सेवेत पण्डितः ॥ इति ॥

**अमित्राणां वधे युक्तो मित्राणां संग्रहे रतः ।**
**त्रिवर्गफलभोक्ता तु राजा धर्मेण युज्यते ॥**

अनेनामित्रनिग्रहः मित्रसंग्रहश्च राज्ञां धर्मः विपरीतं दोषाधायकमिति सूचितं । तथाच **राजधर्मे** —
विवर्धयति मित्राणि तथारींश्चापकर्षति । संपूजयति साधूंश्च स राज्ञां धर्म उच्यते ॥ इति ॥

वैपरीत्ये दोषमाह **उद्योगे** विदुरः —
अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च । कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ इति

तथाच संकेतितकाले अवश्यकर्तव्यकार्यविस्मरणेन प्रत्यक्षतो निन्द्यस्यापि सुग्रीवस्य रामेण धर्ममर्थं च कामं चेत्यादि धर्मोपदेशव्याजेनोपालम्भकरणात् स्वयमार्तेनापि महापुरुषेण परस्योद्वेगकरं वाक्यं न कर्तव्यमिति सूचितम् । तथाच **मनुः**—
नारुन्तुदः स्यादार्तोऽपि न परद्रोहकर्मधीः । यया चोद्विजते वाचा नालोक्यां तामुदीरयेत् ॥ इति । **उद्योगेऽपि** —

मर्माण्यस्थीनि हृदयं तथासून् घोरा वाचो निर्दहन्तीव पुंसाम् ।
तस्माद्वाचं रुशतीं तीक्ष्णरूपां धर्मारामो नित्यशो वर्जयीत ॥ इति ।

तदिदानीं कालोऽयमुद्योगानुकूलः सचिवैस्सह विचिन्त्यतामित्युवाच । ततो रामसमुदीरितवचनाकर्णनेन सन्तुष्टस्सुग्रीवो रामभद्रमित्थमाचचक्षे — भवदनुग्रहेण राज्यश्रीः कीर्तिश्च संप्राप्ता । चिरप्राप्तमस्मदर्थं साधितवतो भवतः किमहं प्रत्युपकुर्यामिति । ततः —

**शतैश्शतसहस्रैश्च कोटिभिश्च प्लवङ्गमाः ।**
**अयुतैश्चावृता वीरा शंकुभिश्च परंतपः ॥**

**अर्बुदैरर्बुदशतैर्मध्यैश्चान्त्यैश्च वानराः ।**
**समुद्रैश्च परार्धैश्च हरयो हरियूथपाः ॥**

अनेन संख्या एकत्वादिपरार्धपर्यन्तेत्युक्तम् । तथा च **तैत्तिरीयश्रुतिः** —
एका च दशशतं च सहस्रं चायुतं च प्रयुतं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च परार्धश्चेति । लीलावत्यां **सिद्धान्तशिरोमणावपि** —

एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः ।
अर्बुदमब्दं खर्वनिखर्वं महापद्मशङ्खवस्तस्मात् ॥
निधिश्चान्तं मध्यं परार्धमिति दशगुणोत्तरं संज्ञाः ।
संख्यायाः स्थानानां व्यवहारार्थकृताः पूर्वैरिति ॥

विशेषेण शतबलिसुषेणकेसरिविनतगजगवाक्षगवयगन्धमादनाः नीलदधिमुखमैन्द-द्विविदांगदजांबवद्धनूमद्रुमण्वन्मुखप्रमुखदधिमुखमुखा वानरप्रमुखा महाप्रभावाः दशसहस्र-कोटिबृन्दखर्वनिखर्वान्तमध्यपरार्धानेकपरार्धसंख्याकैः अप्रमेयपराक्रमैर्वानरैः परिवृतास्समागताः सुग्रीवेण च यथासुखं विनिवेशिताश्च ॥

चत्वारिंशे —

अथ राजा समृद्धार्थः सुग्रीवः प्लवगेश्वरः ।
उवाच नरशार्दूलं रामं परबलार्दनम् ॥

आगता विनिविष्टाश्च बलिनः कामरूपिणः ।
वानरा वारणेन्द्राभा ये मद्विषयवासिनः ॥

त इमे बहुविक्रान्तैर्हरिभिर्भीमविक्रमैः ।
आगता वानरा घोरा दैत्यदानवसन्निभाः ॥

ख्यातकर्मापदानाश्च बलवन्तो जितक्लमाः ।
पृथिव्यंबुचरा राम नानानगनिवासिनः ॥

कोट्यग्रश इमे प्राप्ताः वानरास्तव किंकराः ।
निदेशवर्तिनस्सर्वे सर्वे गुरुहिते रताः ॥

अभिप्रेतमनुष्ठातुं तव शक्यमरिन्दम ।
त इमे बहुसाहस्रैरनीकैर्भीमविक्रमैः ॥

यन्मन्यसे नरव्याघ्र प्राप्तकालं तदुच्यताम् ।
त्वत्सैन्यं त्वद्वशे युक्तमाज्ञापयितुमर्हसि ॥

काममेषामिदं कार्यं विदितं वीर तत्वतः ।
तथापि तु यथातत्वमाज्ञापयितुमर्हति ॥

अनेन प्रभुसन्निधौ स्वेन स्वातन्त्र्यं नावलंबनीयम् । किंतु तदुक्तमेव श्रोतव्यमिति सूचितम् । तथाच विराटपर्वणि धर्मपुत्रं प्रति धौम्यः —

यद्यद्भर्तानुयुंजीत तदेवास्यानुवर्तयेत् । समर्थनासु सर्वासु हितं च प्रियमेव च ॥ इति ॥

**कामन्दकेऽपि —**

आज्ञामस्य प्रतीच्छन्तो भृत्या कुर्युरुपासनम् ।
भर्तृचित्तानुवृत्तित्वं सद्वृत्तमनुजीविनाम् ॥ इति ।

**इति ब्रुवाणं सुग्रीवं रामो दशरथात्मजः ।
बाहुभ्यां संपरिष्वज्य इदं वचनमब्रवीत् ॥**

**ज्ञायतां सौम्य वैदेही यदि जीवति वा नवा ।
स च देशो महाप्राज्ञ यस्मिन्वसति रावणः ॥**

**अधिगम्य तु वैदेहीं निलयं रावणस्य च ।
प्राप्तकालं विधास्यामि तस्मिन् काले सह त्वया ॥**

अनेन चारमुखेन शत्रोः स्थित्यादिकं विचार्यैव कर्म आरंभणीयमिति सूचितम् ॥

तथाच **कामन्दके —**

सर्वसंपत्समुदयं सर्वावस्थाविचेष्टितम् । चारेण द्विषतां विद्यात् इति ।

**आश्रमवासिकेऽपि —**

आत्मनश्चैव शत्रोश्च शक्तिं शास्त्रविशारदः ।
उत्साहप्रभुशक्तिभ्या मन्त्रशक्त्या च भारत ॥
उपलभ्य नृपो यायाद्विपरीतं च वर्जयेत् ॥ इति च ।

**नाहमस्मिन्प्रभुः कार्ये वानरेश न लक्ष्मणः ।
त्वमस्य हेतुः कार्यस्य प्रभुश्च प्लवगेश्वर ॥**

**त्वमेवाज्ञापय विभो मम कार्यविनिश्चयम् ।
त्वं हि जानासि यत्कार्यं मम वीर न संशयः ॥**

**सुहृद्द्वितीयो विक्रान्तः प्राज्ञः कालविशेषवित् ।
भवानस्मद्धिते युक्तः सदाप्तोर्थार्थवित्तमः ॥**

अनेन प्रभुणापि आप्ततमे अभिज्ञे अर्थसाधके स्वातन्त्र्यमाधाय कार्यं साधनीयमिति सूचितम् । अत एव दुर्योधनेन कार्यसाधनाय कर्णे सर्वोऽपि भारः प्रक्षिप्त इत्युक्त**मादिपर्वणि—**

अहं च कुरुराज्यं च यथेष्टमुपभुज्यताम् । भुंक्ष्व भोगान्मया सार्धं बन्धूनां प्रियकृद्भव ।

दुर्हृदां कुरु सर्वेषां मूर्ध्नि पादमरिन्दम इति ।

**वनपर्वण्यपि** कर्णं प्रति दुर्योधनः –

धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे त्वं महाबलः । हितेषु वर्तसे नित्यं सफलं जन्म चाद्य मे ॥
यदा च मन्यसे वीर सर्वशत्रुनिबर्हण । तदा निर्गच्छ भद्रं ते अनुशाधि च मामिति ॥
न किंचिद्दुर्लभं तस्य यस्य त्वं पुरुषर्षभ । सहायश्चानुरक्तश्च मदर्थं च समुद्यतः ॥ इति ।

एवमुक्तस्तु सुग्रीवो विनतं नाम यूथपम् ।
अब्रवीद्रामसान्निध्ये लक्ष्मणस्य च धीमतः ॥

शैलाभं मेघनिर्घोषमूर्जितं प्लवगेश्वरः ।
सोमसूर्यात्मजैस्सार्धं वानरैर्वानरोत्तमम् ॥

देशकालनयैर्युक्तः कार्याकार्यविनिश्चये ।
वृतश्शतसहस्रेण वानराणां तरस्विनाम् ॥

अधिगच्छ दिशं पूर्वां सशैलवनकाननाम् ।
तत्र सीतां च वैदेहीं निलयं रावणस्य च ॥

मार्गध्वं गिरिदुर्गेषु वनेषु च नदीषु च ।
नदीं भागीरथीं रम्यां सरयूं कैशिकीं तथा ॥

कालिन्दीं यमुनां रम्यां यामुनं च महागिरिम् ।
सरस्वतीं च सिन्धुं च शोणं मणिनिभोदकम् ॥

महीं कालमहीं चापि शैलकाननशोभिताम् ।
ब्रह्ममालान्विदेहांश्च मालकान्काशिकोसलान् ॥

मागधांश्च महाग्रामान् पुण्ड्रान्वंकांस्तथैव च ।
पत्तनं कोशकाराणां भूमिं च रजताकरम् ॥

सर्वमेतद्विचेतव्यं मृगयद्भिस्ततस्ततः ।
रामस्य दयितां भार्यां सीतां दशरथस्नुषाम् ॥

समुद्रमवगाढांश्च पर्वतान्पत्तनानि च ।
मन्दरस्य च ये कोटिं संश्रिताः केचिदायताः ॥

कर्णप्रावरणाश्चैव तथा चाप्योष्ठकर्णिकाः ।

घोरा लोहमुखाश्चैव यवनाश्चैव पावकाः ॥

अक्षया बलवन्तश्च पुरुषाः पुरुषादकाः ।
किराताः कर्णचूलाश्च हेमांगाः प्रियदर्शनाः ॥

आममीनाशनास्तत्र किराता द्वीपवासिनः ।
अन्तर्जलचरा घोरा नरव्याघ्रा इति श्रुताः ॥

एतेषामालयास्सर्वे विचेष्टाः कामरूपिणः ।
गिरिभिर्येन गम्यन्ते प्लवनेन प्लवेन च ॥

रत्नवन्तं यवद्वीपं सप्तराज्योपशोभितम् ।
सुवर्णं रूप्यकं चैव सुवर्णाकरमण्डितम् ॥

यवद्वीपमतिक्रम्य शिशिरो नाम पर्वतः ।
दिवं स्पृशति शृंगेण देवदानवसेवितः ॥

एतेषां गिरिदुर्गेषु प्रपातेषु वनेषु च ।
मार्गध्वं सहितास्सर्वे रामपत्नीं यशस्विनीम् ॥

ततो रक्तजलं भीममगाधं शीघ्रगामिनम् ।
गत्वा पारं समुद्रस्य सिद्धचारणसेवितम् ॥

तस्य तीर्थेषु रम्येषु विचित्रेषु वनेषु च ।
रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ॥

पर्वतप्रभवा नद्यः सुरम्या बहुनिष्कुटाः ।
मार्गितव्या दरीमन्तः पर्वताश्च वनानि च ॥

ततस्समुद्रं द्वीपांश्च सुभीमान्द्रष्टुमर्हथ ।
ऊर्मिमन्तं महारौद्रं क्रोशन्तमनिलोद्धतम् ॥

तत्रासुरा महाकायाः छायां गृह्णन्ति नित्यशः ।
ब्रह्मणा समनुज्ञाता दीर्घकालं बुभुक्षिताः ॥

तं कालमेघप्रतिमं महोरगनिषेवितम् ।
अधिगम्य महानादं तीर्थेनैव महोदधिम् ॥

ततो रक्तजलं भीमं लोहितं नाम सागरम् ।
गत्वा द्रक्ष्यथ तां चैव बृहतीं कूटशाल्मलीम् ॥

गृहं च वैनतेयस्य नानारत्नविभूषितम् ।

तत्र कैलाससंकाशं विहितं विश्वकर्मणा ॥

तत्र शैलनिभा भीमा मन्देहा नाम राक्षसाः ।
शैलशृङ्गेषु लंबन्ते नानारूपा भयावहाः ॥

ते पतन्ति जले नित्यं सूर्यस्योदयनं प्रति ।
निहता ब्रह्मतेजोभिरहन्यहनि राक्षसाः ॥

अभितप्ताश्च सूर्येण लंबन्ते स्म पुनः पुनः ।

अत्र ब्रह्मदत्तवराः सूर्येण योद्धुमुद्युक्ता मन्देहा राक्षसाः गायत्र्यभिमंत्रिताभिरद्भिः सूर्यतेजसा च निहताः पुनः पुनः लंबन्ते इत्युक्तम् । तथा च तैत्तिरीयश्रुतिः—'रक्षाँसि ह वा पुरोनुवाके तपोग्रमतिष्ठंत तान्प्रजापतिर्वरेणोपामन्त्रयत, तानि वरमवृणीतादित्यो नो योद्धा इति, तान्प्रजापतिरब्रवीत् योधयध्वमिति, तस्मादुत्तिष्ठन्तं ह वा तानि रक्षांस्यादित्यं योधयन्ति यावदस्तमन्वगात्तानि ह वा एतानि रक्षांसि गायत्र्याभिमन्त्रितेनांभसा शाम्यन्ति, तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखास्सन्ध्यायां गायत्रिया अभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति, ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति' इति।

ततः पाण्डरमेघाभं क्षीरोदं नाम सागरम् ।
गत्वा द्रक्ष्यथ दुर्धर्षा मुक्ताहारमिवोर्मिभिः ॥

तस्य मध्ये महान् श्वेतः ऋषभो नाम पर्वतः ।
दिव्यगन्धैः कुसुमितै राजतैश्च नगैर्वृतः ॥

सरश्च राजतैः पद्मैः ज्वलितैर्हेमकेसरैः ।
नाम्ना सुदर्शनं नाम राजहंसैः समाकुलम् ॥

विबुधाश्चारणा यक्षाः किन्नरास्साप्सरोगणाः ।
हृष्टास्समभिगच्छन्ति नलिनीं तां रिरंसवः ॥

क्षीरोदं समतिक्रम्य ततो द्रक्ष्यथ वानराः ।
जलोदं सागरं श्रेष्ठं सर्वभूतभयावहम् ॥

तत्र तत्कोपजं तेजः कृतं हयमुखं महत् ।
अथाद्भुतं महावेगं रोदनं सचराचरम् ॥

तत्र विक्रोशतां नादो भूतानां सागरौकसाम् ।
श्रूयते च समर्थानां दृष्ट्वा तद्वडबामुखम् ॥

अनेन और्वाभिधस्य महर्षेः निमित्तविशेषजनितः कोपाग्निरेव हयशिरो भूत्वा सर्वसत्वसहितं समुद्रं दहतीत्युक्तम्। तथाचादिपर्वाणि—

पुरा किल हेहयवंशप्रभवः यायजूकः कार्तवीर्यो नाम राजा सोमावसानसमयसन्तुष्टः स्वयाजकान् भार्गवान् अदभ्रधनधान्यरत्ननिचयैः सन्तर्प्य त्रिदिवं जगाम। ततः कार्यविशेषाय तत्कुलीनैः याचितधनाः भार्गवाः निधिनिधानादिना धनं गुप्तं विधाय नास्माकं धनमिति वञ्चयामासुः। ततस्तद्गृहेष्वेव प्रसह्य खननाद्युपायेन लब्धधना राजानः शरणागतानपि भार्गवान् समूलघातमागर्भं निघ्नन्तः कयाचिद्भृगुपत्न्या कुलसंरक्षणाय वर्षशतमूरुधृतं गर्भं कस्याश्चित्स्त्रियो वचनादवगत्य तद्धननाय प्रवृत्ताः स्वत एवोरुभेदनपूर्वकं बहिरागतेनौर्वाभिधेन दुस्सहतेजसा महर्षिणा परिमुषितलोचना जात्यन्धाः इव बभूवुः। ततो नष्टदृष्टयस्ते राजानः तामेव भृगुपत्नीं शरणं गताः, तया च और्वो बालक एव भवता शरण्यः, तमेव शरणं गच्छतेत्यभिहिताः तमेवौर्वं शरणं प्राप्य तत्प्रसादेन लब्धलोचनाः स्वभवनमाजग्मुः। ततः स्वपूर्वपुरुषहननमुपेक्षितवतामखिललोकानां हननाय प्रवृत्तमौर्वमवलोक्य स्वर्गादभ्येत्य तत्पितर इत्थमवोचन्॥

और्व दृष्टः प्रभावस्ते तपसोग्रस्य पुत्रक। प्रसादं कुरु लोकानां नियच्छ क्रोधमात्मनः॥
आयुषा विप्रकृष्टेन यदा नः खेद आविशत्। तदास्माभिर्वधस्तात क्षत्रियैरीप्सितः स्वयम्॥
आत्महा पुरुषस्तात न लोकाल्लँभते शुभान्। ततोऽस्माभिस्समीक्ष्यैव नात्मनात्मा निपातितः॥
न चैव नः प्रियं तात यदिदं कर्तुमिच्छसि। नियच्छेदं मनः पापात् सर्वलोकपराभवात्॥ इति।

और्वोऽपि स्वपितृवचनेन सर्वलोकसहरणान्निवृत्तबुद्धिस्तानिदमभाषत—

उक्तवानस्मि यत्क्रोधात्प्रतिज्ञां पितरस्तदा। सर्वलोकविनाशाय न सा मे वितथा भवेत्॥
वृथा रोषप्रतिज्ञो वै नाहं भवितुमुत्सहे। अनिस्तीर्णो हि मां रोषो दहेदग्निरिवारणिम्॥
यो हि कारणतः क्रोधं सञ्जातं क्षन्तुमर्हति। नालं समभुजस्सम्यक्त्रिवर्गं परिरक्षितुम्॥

समर्थेन च मया पापिष्ठाः पितृहन्तारः कथमुपेक्षणीयाः,

प्रतिषेद्धा हि पापस्य यदा लोकेषु विद्यते। तदा सर्वेषु लोकेषु पापकृन्नोपपद्यते॥
यदा तु प्रतिषेद्धारं पापो न लभते क्वचित्। तिष्ठन्ति बहवो लोके तदा पापेषु कर्मसु॥

जानन्नपि च यः पापं शक्तिमान्न नियच्छति । ईशः सन्सोऽपि तेनैव कर्मणा संप्रयुज्यते ॥
राजभिश्चेश्वरैश्चैव यदि वै पितरो मम । शक्तैर्न शकितास्त्रातुमिष्टं मत्वेह जीवितम् ॥
अत एवमहं क्रुद्धो लोकानामीश्वरोह्यहम् । भवतां च वचो नालमहं समतिवर्तितुम् ॥

तदिदानीं अखिललोकसंहरणाय संभूतोऽयं कोपाग्निः क वा विमोक्तव्य इति । ततः—
य एष मन्युजस्तेऽग्निर्लोकानादातुमिच्छति । अप्सु तम्मुञ्च भद्रं ते लोका ह्यप्सु प्रतिष्ठिताः ॥
आपोमयास्सर्वरसाः सर्वमापोमयं जगत् । तस्मादप्सु विमुञ्चेमं क्रोधाग्नि द्विजसत्तम ॥
एवं प्रतिज्ञा सत्यैव तवानघ भविष्यति । नचैवं सामरा लोका गमिष्यन्ति पराभवम् ॥
इति पितृभिरभिहितः —
ततस्तं क्रोधजं तात और्वोऽग्नि वरुणालये । उत्ससर्ज सचैवायमुपयुक्तो महोदधौ ॥
महद्धयशिरो भूत्वा यं तं वेदविदो विदु. । तमग्निमुद्वमन्वक्त्रात्पिबत्यम्भो महोदधौ ॥ इति ।

स्वादूदस्योत्तरे तीरे योजनानि त्रयोदश ।
जातरूपशिलो नाम महान्कनकपर्वतः ॥

तत्र चन्द्रप्रतीकाशं पन्नगं धरणीधरम् ।
पद्मपत्रविशालाक्षं ततो द्रक्ष्यथ वानराः ॥

आसीनं पर्वतस्याग्रे सर्वभूतनमस्कृतम् ।
सहस्रशिरसं देवमनन्तं नीलवाससम् ॥

त्रिशिराः काञ्चनः केतुस्तालस्तस्य महात्मनः ।
स्थापितः पर्वतस्याग्रे विराजति सवेदिकः ॥

पूर्वस्यां दिशि निर्माणं कृतं तत्रिदशेश्वरैः ।
ततः परं हेममयः श्रीमानुदयपर्वतः ॥

तस्य कोटिर्दिवं स्पृष्ट्वा शतयोजनमायता ।
जातरूपमया दिव्या विराजति सवेदिका ॥

सालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः ।
जातरूपमयैर्दिव्यैश्शोभते सूर्यसन्निभैः ॥

तत्र योजनविस्तारमुच्छ्रितं शतयोजनम् ।
शृंगं सौमनसं नाम जातरूपमयं ध्रुवम् ॥

तत्र पूर्वं पदं कृत्वा पुरा विष्णुस्त्रिविक्रमे ।
द्वितीयं शिखरं मेरोश्चकार पुरुषोत्तमः ॥

उत्तरेण परिक्रम्य जम्बूद्वीपे दिवाकरः ।
दृश्यो भवति भूयिष्ठशिखरं तन्महोच्छ्रितम् ॥

तत्र वैखानसा नाम वालखिल्या महर्षयः ।
प्रकाशमाना दृश्यन्ते सूर्यवर्णास्तपस्विनः ॥

अयं सुदर्शनो द्वीपः पुरो यस्य प्रकाशते ।
यस्मिंस्तेजश्च चक्षुश्च सर्वप्राणभृतामपि ॥

तस्य शैलस्य कुंजेषु कन्दरेषु वनेषु च ।
रावणस्स हि वैदेह्या मार्गितव्यस्ततस्ततः ॥

काञ्चनस्य च शैलस्य सूर्यस्य च महात्मनः ।
आविष्टा तेजसा सन्ध्या पूर्वा रक्ता प्रकाशते ॥

पूर्वमेतत्कृतं द्वीपं पृथिव्या भुवनस्य च ।
सूर्यस्योदयनं चैव पूर्वा ह्येषा दिगुच्यते ॥

अनेन पूर्वनिर्मितद्वीपयोगाद्वा पूर्वं सूर्यस्य तत्र दर्शनाद्वा इयं दिक् पूर्वेत्युच्यत इत्युक्तम् । इत्थं च पूर्वस्या दिशः इतरासां च दिशां निर्वचनमुद्योगे—

यस्मात्पूर्वतरे काले पूर्वमेषा वृता सुरैः । अत एव च पूर्वेषा पूर्वामाशां प्रचक्षते ॥
पूर्वकार्याणि कार्याणि दैवानि सुखमीप्सता । यस्यामुदयते पूर्वं सर्वलोकप्रदीपकः ॥
सविता यत्र साध्यानां प्रथमं वर्तते तपः । यस्यां पूर्वमतिर्जाता यया व्याप्तमिदं जगत् ॥
चक्षुषी यत्र धर्मश्च यत्र चैव प्रतिष्ठित, इति ।
इयं विवस्वता पूर्वं स्रौवेण विधिना किल ।
गुरवे दक्षिणा दत्ता दक्षिणेत्युच्यते च दिक् ॥ इति ।
अत्र पश्चादहः सूर्यो विसर्जयति गाः स्वयम् । पश्चिमेत्यभिविख्याता दिगियं द्विजसत्तमैः ॥
यस्मादुत्तीर्यते पापाद्यस्मान्निश्श्रेयसोऽश्नुते । तस्मादुत्तारणबलादुत्तरेत्युच्यते द्विज ॥ इति ।

तस्य पर्वतपृष्ठेषु निर्झरेषु गुहासु च ।
रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ॥

ततः परमगम्या स्यत्पूर्वा दिक् त्रिदशावृता ।
रहिता चन्द्रसूर्याभ्यामदृश्या तिमिरावृता ॥

शैलेषु तेषु रम्येषु कन्दरेषु वनेषु च ।
ये च देशा मया नोक्ता विचेया तत्र जानकी ॥

एतावद्वानरैः शक्यं गन्तुं वानरपुंगवाः ।
अभास्करममर्यादं न जानीमस्ततः परम् ॥

अधिगम्य तु वैदेहीं निलयं रावणस्य च ।
मासे पूर्णे निवर्तध्वमुदयं प्राप्य पर्वतम् ॥

ऊर्ध्वं मासान्न वस्तव्यं वसन्वध्यो भवेन्मम ।
सिद्धार्थास्सन्निवर्तध्वमधिगम्य च मैथिलीम् ॥

महेन्द्रकान्तां वनषण्डमण्डितां दिशं चरित्वा निपुणेन वानराः ।
अवाप्य सीतां रघुवंशजप्रियां ततो निवृत्तास्सुखिनो भविष्यथ ॥

## एकचत्वारिंशे

ततः प्रस्थाप्य सुग्रीवस्तन्महद्वानरं बलम् ।
दक्षिणां प्रेषयामास वानरानभिलक्षितान् ॥

नीलमग्निसुतं चैव हनूमन्तं च वानरम् ।
पितामहसुतं चैव जाम्बवन्तं महाकपिम् ॥

सुहोत्रं च शरारिं च शरगुल्मं तथैव च ।
गजं गवाक्षं गवयं सुषेणं वृषभं तथा ॥

मैन्दं च द्विविदं चैव विजयं गन्धमादनम् ।
उल्कामुखमसंगं च हुताशनसुतावुभौ ॥

अंगदप्रमुखान्वीरान्वीरः कपिगणेश्वरः ।
वेगविक्रमसम्पन्नान् सन्दिदेश विशेषवित् ॥

तेषामग्रेसरं चैव महाबलमथांगदम्।
विधाय हरिवीराणामादिशद्दक्षिणां दिशम्।

ये केचन समुद्देशाः तस्यां दिशि सुदुर्गमाः।
कपीशः कपिमुख्यानां स तेषां तानुदाहरत्॥

सहस्रशिरसं विन्ध्यं नानाद्रुमलतायुतम्।
नर्मदां च नदीं दुर्गां महोरगनिषेविताम्॥

ततो भोगवतीं रम्यां कृष्णवेणीं महानदीम्।
वरदां च महाभागां महोरगनिषेविताम्॥

मेखलामुल्कलां चैव दशार्णनगराण्यपि।
अब्रवन्तीं ब्रवन्तीं च सर्वमेवानुपश्यत॥

विदर्भान्पृषिकांश्चैव रम्यान्महिषकानपि।
तथा वत्सकलिङ्गांश्च काशिकांश्च समन्ततः॥

अन्विष्य दण्डकारण्यं सपर्वतनदीगुहम्।
नदीं गोदावरीं चैव सर्वमेवानुपश्यत॥

तथैवान्ध्रांश्च पुण्ड्रांश्च चोलान्पाण्ड्यान्सकेरलान्।
अयोमुखश्च गन्तव्यः पर्वतो धातुमण्डितः॥

विचित्रशिखरश्श्रीमान् चित्रपुष्पितकाननः।
सचन्दनवनोद्देशो मार्गितव्यो महागिरिः॥

ततस्तामापगां दिव्यां प्रसन्नसलिलां शिवाम्।
तत्र द्रक्ष्यथ कावेरीं विहृतामप्सरोगणैः॥

तस्यासीनं नगस्याग्रे मलयस्य महौजसम्।
द्रक्ष्यथादित्यसंकाशमगस्त्यमृषिसत्तमम्॥

ततस्तेनाभ्यनुज्ञाताः प्रसन्नेन महात्मना।
ताम्रपर्णीं ग्राहजुष्टां तरिष्यथ महानदीम्॥

सा चन्दनवनैर्दिव्यैः प्रच्छन्ना द्वीपशालिनी।

कान्तेव युवतिः कान्तं समुद्रमवगाहते ॥

ततो हेममयं दिव्यं मुक्तामणिविभूषितम् ।
युक्तं कवाटं पाण्ड्यानां गता द्रक्ष्यथ वानराः ॥

ततस्समुद्रमासाद्य संप्रधार्यार्थनिश्चयम् ।
अगस्त्येनान्तरे तत्र समुद्रे विनिवेशितः ॥

चित्रसानुर्गतः श्रीमान् महेन्द्रः पर्वतोत्तमः ।
जातरूपमयः श्रीमानवगाढो महार्णवम् ॥

नानाविधैर्नगैः फुल्लैर्लताभिश्चोपशोभितम् ।
देवर्षियक्षप्रवरैरप्सरोभिश्च सेवितम् ॥

सिद्धचारणसंघैश्च प्रकीर्णं सुमनोहरम् ।
तमुपैति सहस्राक्षः सदा पर्वसु पर्वसु ॥

द्वीपस्तस्यापरे पारे शतयोजनमायतः ।
अगम्यो मानुषैर्दीप्तः तं मार्गध्वं समन्ततः ॥

तत्र सर्वात्मना सीता मार्गितव्या विशेषतः ।
स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः ॥

राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः ।
दक्षिणस्य समुद्रस्य मध्ये तस्य तु राक्षसी ॥

अंगारकेति विख्याता छायामाक्षिप्य भोजनी ।
एवं निस्संशयान्कृत्वा संशयान्नष्टसंशयाः ॥

मृगयध्वं नरेन्द्रस्य पत्नीममिततेजसः ।
तमतिक्रम्य लक्ष्मीवान् समुद्रे शतयोजने ॥

गिरिः पुष्पितको नाम सिद्धचारणसेवितः ।
चन्द्रसूर्यांशुसंकाशः सागरांबुसमावृतः ॥

भ्राजते विपुलैश्शृङ्गैरंबरं विलिखन्निव ।
तस्यैकं काञ्चनं शृङ्गं सेवते यं दिवाकरः ॥

श्वेतं रजतमेकं च सेवते यं निशाकरः।
तमतिक्रम्य दुर्धर्षः सूर्यवान्नाम पर्वतः॥

अध्वना दुर्विगाहेन योजनानि चतुर्दश।
ततस्तमप्यतिक्रम्य वैद्युतो नाम पर्वतः॥

सर्वकामफलैर्वृक्षैः सर्वकालमनोहरैः।
तत्र भुक्त्वा महार्हाणि मूलानि च फलानि च॥

मधूनि पीत्वा मुख्यानि परं गच्छत वानराः।
तत्र नेत्रमनःकान्तः कुञ्जरो नाम पर्वतः॥

अगस्त्यभवनं यत्र निर्मितं विश्वकर्मणा।
तत्र योजनविस्तारमुच्छ्रितं दशयोजनम्॥

शरणं काञ्चनं दिव्यं नानारत्नविभूषितम्।
तत्र भोगवती नाम सर्पाणामालयः पुरी॥

विशालकक्ष्या दुर्धर्षा सर्वतः परिरक्षिता।
रक्षिता पन्नगैर्घोरैस्तीक्ष्णदंष्ट्रैर्महाविषैः॥

सर्पराजो महाघोरो यस्यां वसति वासुकिः।
निर्याय मार्गितव्या च सा च भोगवती पुरी॥

तत्र चानन्तरं देशा ये केचन सुसंवृताः।
तं च देशमतिक्रम्य महानृषभसंस्थितः॥

सर्वरत्नमयः श्रीमानृषभो नाम पर्वतः।
गोशीर्षकं च पद्मं च हरिश्यामं च चन्दनम्॥

दिव्यमुत्पद्यते यत्र तच्चैवाग्निसमप्रभम्।
न तु तच्चन्दनं दृष्ट्वा स्प्रष्टव्यं वै कदाचन॥

रोहिता नाम गन्धर्वा घोरा रक्षन्ति तद्वनम्।
तत्र गन्धर्वपतयः पञ्च सूर्यसमप्रभाः॥

शैलूषो ग्रामणीर्भिक्षुः शुको बभ्रुस्तथैव च।

रविसोमाग्निवपुषां निवासः पुण्यकर्मणाम् ॥

अन्ते पृथिव्या दुर्धर्षास्तत्र स्वर्गजितः स्थिताः ।
ततः परं न गन्तव्यः पितृलोकस्सुदारुणः ॥

राजधानी यमस्यैषा कष्टेन तमसा वृता ।

अनेन अतिपीडाकरः यमलोक उक्तः । तथाच **विष्णुपुराणे** —

यमस्य विषये घोराः शस्त्राग्निविषदायिनः । पतन्ति येषु पुरुषाः पापकर्मरतास्तु ये ॥
कूटसाक्षी तथा साक्ष्यपक्षपातेन यो वदेत् । यश्चान्यदनृतं वक्ति स नरो याति रौरवम् ॥
भ्रूणहा गुरुहन्ता च गोघ्नश्च मुनिसत्तम । यान्ति ते नरकं योघं यश्चोच्छ्वासनिरोधकः ॥
सुरापो ब्रह्महा हर्ता सुवर्णस्य च सूकरे । प्रयाति नरके यश्च तैस्संसर्गमुपैति वै ॥
राजन्यवैश्यहन्ता च तथैव गुरुतल्पगः । तप्तकुम्भे स्वसागामी हन्ति राजभटं च यः ॥
माध्वीविक्रयकृद्बन्धपालः केसरिविक्रयी । तप्तलोहे पतन्त्येते यश्च भक्तं परित्यजेत् ॥
स्नुषां सुतां वापि गत्वा महाज्वाले निपात्यते । अवमन्ता गुरूणां यो पश्चाक्रोष्टा नराधमः ॥
वेददूषयिता यश्च वेदविक्रयिकश्च यः । अगम्यगामी यश्च स्यात्ते यान्ति लवनं द्विज ॥
घोरे विमोहे पतति मर्यादादूषकस्तथा । देवद्विजपितृद्वेष्टा रत्नदूषयिता च यः ॥
स याति कृमिभक्ष्ये वै कृमिशे च दुरिष्टकृत् । पितृदेवातिथीन्यस्तु पर्यश्नाति नराधमः ॥
लालाभक्षेऽथ यात्युग्रे शरकर्ता च वेधके । करोति कर्णिनो यश्च यश्च खड्गादिकृन्नरः ॥
प्रयान्त्येते विशसने नरके भृशदारुणे । असत्प्रतिग्रहीता तु नरके यात्यधोमुखे ॥
अयाज्ययाजकस्तत्र तथा नक्षत्रसूचकः । वेगी पूयवहे चैको यतिमृष्टान्नभुङ्नरः ॥
लाक्षामांसरसानां च तिलानां लवणस्य च । विक्रेता ब्राह्मणो याति तमेव नरकं द्विज ॥
मार्जारकुक्कुटछागश्ववराहविहंगमान् । लालयन्नरकं याति तमेव द्विजसत्तम ॥
रंगोपजीवी कैवर्तः कुण्डाशी गरलस्तथा । सूची माहिषगश्चैव पर्वगामी च यो द्विज ॥
अंगारदाही मित्रघ्नः शंकुभिर्ग्रामयाजकः । रुधिरांभसि यान्त्येते सोमं विक्रीणते च ये ॥
मखहा ग्रामहन्ता च याति वैतरणीं नरः । धनयौवनमत्तास्तु मर्यादाभेदिनोऽपि ये ॥
ते कृष्णे यान्त्यशौचाश्च कुहकाजीविनश्च ये । असिपत्रवनं याति वनच्छेदी वृथैव यः ॥
औरभ्रका मृगव्याधा वह्निज्वाले पतन्ति वै । यान्त्येते द्विज तत्रैव ये च पाकेषु वह्निदाः ॥

व्रतेषु लोपको यश्च स्वश्रमात्प्रच्युतश्च यः। सन्दंशयातनामध्ये पततस्तावुभावपि ॥
दिवा स्वप्नेषु स्कन्दन्ति ये नरा ब्रह्मचारिणः। पुत्रैरध्यापिता यश्च ते पतन्ति श्वभोजने ॥
एते चान्ये च नरकाः शतशोऽथ सहस्रशः। येषु दुष्कृतकर्माणः पात्यन्ते यातनागताः ॥
तथैव पापान्येतानि तथान्यानि सहस्रशः। भुज्यन्ते यानि पुरुषैर्नरकान्तरगोचरैः ॥
वर्णाश्रमविरुद्धं च कर्म कुर्वन्ति ये नराः। कर्मणा मनसा वाचा निरयेषु पतन्ति ते ॥ इति।

एतावदेव युष्माभिर्वीरा वानरपुङ्गवाः।
शक्यं विचेतुं गन्तुं वा नातो गतिमतां गतिः ॥

सर्वमेतत्समालोक्य यच्चान्यदपि दृश्यते।
गतिं विदित्वा वैदेह्याः सन्निवर्तितुमर्हथ ॥

यस्तु मासान्निवृत्तोऽग्रे दृष्टा सीतेति वक्ष्यति।
मत्तुल्यविभवो भोगैस्सुखं स विहरिष्यति ॥

ततः प्रियतमो नास्ति मम प्राणाद्विशेषतः।
कृतापराधो बहुशो मम बन्धुर्भविष्यति ॥

अमितबलपराक्रमा भवन्तो विपुलगुणेषु कुलेषु च प्रसूताः।
मनुजपतिसुतां यथा लभध्वं तदधिगुणं पुरुषार्थमारभध्वम् ॥

## द्विचत्वारिंशे

अथ प्रस्थाप्य सुग्रीवस्तान् हरीन्दक्षिणां दिशम्।
अब्रवीन्मेघसंकाशं सुषेणं नाम यूथपम् ॥

तारायाः पितरं राजा श्वशुरं भीमविक्रमम्।
अब्रवीत्प्राञ्जलिर्वाक्यं अभिगम्य प्रणम्य च ॥

अनेन राज्ञा सेवकोऽपि गुरुजनः प्रार्थनयैव कार्येषु नियोजनीय इति सूचितम्। अत एव **शल्यपर्वणि**—

ततो दुर्योधनः शल्यं भूमौ स्थित्वा रथे स्थितम्। उवाच प्राञ्जलिर्भूत्वा रामभीष्मसमं रणे ॥
स भवानस्तु नश्शूरः प्रणेता वाहिनीमुख ॥ इति।

महर्षिपुत्रं मारीचमर्चिष्मन्तं महाकपिम्।

वृतं कपिवरैः शूरैः महेन्द्रसदृशद्युतिम् ॥

मरीचपुत्रान्मारीचानर्चिर्मालान्महाबलान् ।
ऋषिपुत्रांश्च तान्सर्वान्प्रतीचीमादिशद्दिशम् ॥

द्वाभ्यां शतसहस्राभ्यां कपीनां कपिसत्तमाः ।
सुषेणप्रमुखा यूयं वैदेहीं परिमार्गथ ॥

सुराष्ट्रान्सह बल्हीकान् शूरान्भीमांस्तथैव च ।
स्फीताञ्जनपदान्रम्यान् विपुलानि पुराणि च ॥

पुन्नागगहनं कुक्षिं बकुलोद्दालकाकुलम् ।
तथा केतकषण्डांश्च मार्गध्वं हरियूथपाः ॥

प्रत्यक्स्रोतोद्यताश्चैव नद्यश्शीतजलाश्शिवाः ।
तापसानामरण्यानि कान्तारगिरयश्च ये ॥

ततः स्थलीं मरुप्रायामत्युच्चशिरसश्शिलाः ।
गिरिजालावृतां दुर्गां मार्गित्वा पश्चिमां दिशम् ॥

ततः पश्चिममासाद्य समुद्रं द्रष्टुमर्हथ ।
तिमिनक्रायुतजलमक्षोभ्यमथ वानराः ॥

ततः केतकषण्डेषु तमालगहनेषु च ।
कपयो विहरिष्यन्ति नारिकेलवनेषु च ॥

तत्र सीतां च मार्गध्वं निलयं रावणस्य च ।
वेलातटनिविष्टेषु पर्वतेषु वनेषु च ॥

मुरलीपत्तणं चैव रम्यं चैव जटीपुरम् ।
आवन्तीमंगलोपां च तथा चालक्षितं वनम् ॥

राष्ट्राणि च विशालानि पत्तनानि ततस्ततः ।
सिन्धुसागरयोश्चैव संगमे तत्र पर्वतः ॥

महान्हेमगिरिर्नाम शतशृंगो महाद्युतिः ।
तत्र प्रस्थेषु रम्येषु सिंहाः पक्षिमृगाः स्थिताः ॥

तिमिमत्स्यगजाश्चैव नीडान्यारोपयन्ति ते ।
तारा निनादास्सिंहानां गिरिशृंगगताश्च ये ॥

दृप्तास्तृप्ताश्च मातंगास्तोयदस्वननिस्वनाः ।
निवसन्ति विशालेऽस्मिन् तोयपूर्णे समन्ततः ॥

तस्य शृंगं दिवस्पर्शं कांचनं चित्रपादपम् ।
सर्वमाशु विचेतव्यं कपिभिः कामरूपिभिः ॥

कोटिं तत्र समुद्रेऽथ कांचनीं शतयोजनाम् ।
दुर्दर्शां पारियात्रस्य गता द्रक्ष्यथ वानराः ॥

कोट्यस्तत्र चतुर्विंशद्गन्धर्वाणां तरस्विनाम् ।
वसन्त्यग्निनिकाशानां घोराणा कामरूपिणाम् ॥

पावकार्चिःप्रतीकाशाः समवेतास्सहस्रशः ।
नात्यासादयितव्यास्ते वानरैर्भीमविक्रमैः ॥

नादेयं च फलं तस्माद्देशात्किंचित्प्लवंगमैः ।
दुरासदा हि ते वीरास्सत्वन्तो महाबलाः ॥

फलमूलानि ते तत्र रक्षन्ते भीमविक्रमाः ।
तत्र यत्नश्च कर्तव्यो मार्गितव्या च जानकी ॥

नहि तेभ्यो भयं किंचित्कपित्वमनुवर्तताम् ।
तत्र वैडूर्यवर्णाभो वज्रसंस्थानसंस्थितः ॥

नानाद्रुमलताकीर्णो वज्रो नाम महागिरिः ।
श्रीमान्समुदितस्तत्र योजनानां शतं समम् ॥

गुहास्तत्र विचेतव्याः प्रयत्नेन प्लवंगमाः ।
चतुर्भागे समुद्रस्य चक्रवान्नाम पर्वतः ॥

तत्र चक्रं सहस्रारं निर्मितं विश्वकर्मणा ।
तत्र पंचजनं हत्वा हयग्रीवं च दानवम् ॥

आजहार ततश्चक्रं शंखं च पुरुषोत्तमः ।

अनेन विष्णोश्शंखचक्रस्थानमुक्तम्। तत्र शंखलाभस्थानमुक्तं **हरिवंशे** —

गत्वा समुद्रं तेजस्वी विवेशान्तर्जलं हरिः। स तु पञ्चजनं हत्वा शंखं लेभे जनार्दनः॥

यस्स देवमनुष्येषु पाञ्चजन्य इति श्रुतः॥ इति।

**विष्णुपुराणेऽपि** —

सान्दीपिनेरधिगतविद्यः बलभद्रसहितः कृष्णः तेन गुरुणा समुद्रं प्रविष्टं मत्पुत्रं दक्षिणात्वेन देहीत्युक्तोन्तर्जलं गत्वा पञ्चजनं च तम् —

कृष्णो जग्राह तस्यास्थिप्रभवं शंखमुत्तमम्। यस्य नादेन दैत्यानां बलहानिरजायत॥

देवानां ववृधे तेजो यात्यधर्मश्च संक्षयम्॥ इति।

तत्र सानुषु चित्रेषु विशालासु गुहासु च।
रावणस्सहि वैदेह्या मार्गितव्यस्ततस्ततः॥

योजनानि चतुष्षष्टिर्वराहो नाम पर्वतः।
सुवर्णशृङ्गस्सुश्रीमान् अगाधे वरुणालये॥

तत्र प्राग्ज्योतिषं नाम जातरूपमयं पुरम्।
तस्मिन्वसति दुष्टात्मा नरको नाम दानवः॥

तत्र सानुषु चित्रेषु विशालासु गुहासु च।
रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः॥

तमतिक्रम्य शैलेन्द्रं काञ्चनान्तरनिर्दरः।
पर्वतस्सर्वसौवर्णो नानाप्रस्रवणायुतः॥

तं गजाश्च वराहाश्च सिंहव्याघ्राश्च सर्वतः।
अभिगर्जन्ति सततं तेन शब्देन दर्पिताः॥

तस्मिन्हरिहयश्श्रीमान् महेन्द्रः पाकशासनः।
अभिषिक्तः सुरै राजा मेघवान्नाम पर्वतः॥

तमतिक्रम्य शैलेन्द्रं महेन्द्रपरिपालितम्।
षष्टिं गिरिसहस्राणि काञ्चनानि गमिष्यथ॥

तरुणादित्यवर्णानि भ्राजमानानि सर्वशः।

जातरूपमयैर्वृक्षैः शोभितानि सुपुष्पितैः ॥

तेषां मध्ये स्थितो राजा मेरुरुत्तरपर्वतः ।
आदित्येन प्रसन्नेन शैलो दत्तवरः पुरा ॥

तेनैवमुक्तश्शैलेन्द्रः सर्व एव त्वदाश्रयाः ।
मत्प्रसादाद्भविष्यन्ति दिवा रात्रौ च काञ्चनाः ॥

त्वयि ये चापि वत्स्यन्ति देवगन्धर्वदानवाः ।
ते भविष्यन्ति रक्ताश्च प्रभया काञ्चनप्रभाः ॥

विश्वेदेवाश्च वसवो मरुतश्च दिवौकसः ।
आगम्य पश्चिमां सन्ध्यां मेरुमुत्तरपर्वतम् ॥

आदित्यमुपतिष्ठन्ति तैश्च सूर्योऽभिपूजितः ।
अदृश्यस्सर्वभूतानामस्तं गच्छति पर्वतम् ॥

योजनानां सहस्राणि दश तानि दिवाकरः ।
मुहूर्तार्धेन तं शीघ्रमभियाति शिलोच्चयम् ॥

शृङ्गे तस्य महद्दिव्यं भवनं सूर्यसन्निभम् ।
प्रासादगणसंबाधं विहितं विश्वकर्मणा ॥

शोभितं तरुभिश्चित्रैः नानापक्षिसमाकुलैः ।
निकेतः पाशहस्तस्य वरुणस्य महात्मनः ॥

अन्तरा मेरुमस्तं च तालो दशशिरो महान् ।
जातरूपमयश्श्रीमान् भ्राजते चित्रवेदिकः ।
तेषु सर्वेषु दुर्गेषु सरस्सु च सरित्सु च ॥

रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ।
यत्र तिष्ठति धर्मज्ञः तपसा स्वेन भावितः ॥

मेरुसावर्णिरित्येवं ख्यातो वै ब्रह्मणा समः ।
प्रष्टव्यो मेरुसावर्णिर्महर्षिः सूर्यसन्निभः ॥

प्रणम्य शिरसा भूमौ प्रवृत्तिं मैथिलीं प्रति ।

एतावज्जीवलोकस्य भास्करो रजनीक्षये ॥

कृत्वा वितिमिरं सर्वमस्तं गच्छति पर्वतम् ।
एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ॥

अभास्करममर्यादं न जानीमस्ततः परम् ।
अधिगम्य तु वैदेहीं निलयं रावणस्य च ॥

अस्तपर्वतमासाद्य पूर्णे मासे निवर्तत ।
ऊर्ध्वं मासन्न वस्तव्यं वसन्वध्यो भवेन्मम ॥

सहैव शूरो युष्माभिः श्वशुरो मे गमिष्यति ।
श्रोतव्यं सर्वमेतस्य भवद्भिर्दिष्टकारिभिः ॥

गुरुरेष महाबाहुः श्वशुरो मे महाबलः ।
भवन्तश्चापि विक्रान्ताः प्रमाणं सर्वकर्मसु ॥

प्रमाणमेनं संस्थाप्य पश्यध्वं दक्षिणां दिशम् ।
भवन्तः परिपश्यन्तु यथा दृश्येत जानकी ॥

दृष्टायां तु नरेन्द्रस्य पत्न्याममिततेजसः ।
कृतकृत्या भविष्यामः कृतस्य प्रतिकर्मणा ॥

अतोऽन्यदपि यत्किञ्चित्कार्यस्यास्य हितं भवेत् ।
संप्रधार्य भवद्भिश्च देशकालार्थसंहितम् ॥

ततस्सुषेणप्रमुखाः प्लवङ्गमाः सुग्रीववाक्यं निपुणं निशम्य ।
आमन्त्र्य सर्वे प्लवगाधिपास्ते जग्मुर्दिशं तां वरुणाभिगुप्ताम् ॥

## त्रिचत्वारिंशे

ततः सन्दिश्य सुग्रीवः श्वशुरं पश्चिमां दिशम् ।
वीरं शतबलिं नाम वानरं वानराधिपः ॥

उवाच राजा सर्वज्ञः सर्ववानरसत्तमः ।
वाक्यमात्महितं चैव रामस्य च हितं तथा ॥

वृतश्शतसहस्रेण त्वद्विधानां वनौकसाम् ।

वैवस्वतसुतैः सार्धं प्रतिष्ठस्व स्वमन्त्रिभिः ॥

दिशं ह्युदीचीं विक्रान्तां हेमशैलवतंसकाम् ।
सर्वतः परिमार्गध्वं रामपत्नीमनिन्दिताम् ॥

अस्मिन्कार्ये विनिर्वृत्ते कृते दाशरथेः प्रिये ।
एकां बुद्धिं समास्थाय दृश्यते जानकी यथा ॥

तथा भवद्भिः कर्तव्यमस्मत्प्रियहितैषिभिः ।
अयं हि सर्वभूतानामाप्तस्तु नरसत्तमः ॥

अस्मासु चागतप्रीती रामः परपुरंजयः ।
इमानि वनदुर्गाणि नद्यः शैलान्तराणि च ॥

भवन्तः परिमार्गन्तु बुद्धिविक्रमसंपदा ।
तत्र म्लेच्छान्पुलिन्दांश्च शूरसेनांस्तथैव च ॥

प्रस्थलान्भरतांश्चैव कुरूंश्च सह मण्डलैः ।
कांबोजान्यवनांश्चैव शकानारट्टकानपि ॥

बाल्हीकानृषिकांश्चैव पौरवानथ कङ्कणान् ।
चीनान्परमचीनांश्च नीहारांश्च पुनः पुनः ॥

अन्विष्य दण्डकांश्चैव हिमवन्तं तथैव च ।
लोध्रपद्मकषण्डेषु देवदारुवनेषु च ॥

रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ।
ततः सोमाश्रमं गत्वा देवगन्धर्वसेवितम् ॥

कालं नाम महासानुं पर्वतं तं गमिष्यथ ।
ततो देवसखो नाम पर्वतः पतगालयम् ॥

नानापक्षिगणाकीर्णो विविधद्रुमभूषितः ।
तस्य कांचनषण्डेषु निर्झरेषु गुहासु च ॥

रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ।
तमतिक्रम्य चाकाशं सर्वतः शतयोजनम् ॥

अपर्वतनदीवृक्षं सर्वसत्त्वविवर्जितम् ।
तं तु शीघ्रमतिक्रम्य कान्तारं रोमहर्षणम् ॥

कैलासं पाण्डरं शैलं प्राप्य हृष्टा भविष्यथ ।
तत्र पाण्डरमेघाभं जांबूनदपरिष्कृतम् ॥

कुबेरभवनं रम्यं निर्मितं विश्वकर्मणा ।
विशाला नलिनी यत्र प्रभूतकमलोत्पला ॥

हंसकारण्डवाकीर्णा ह्यप्सरोगणसेविता ।
तत्र वैश्रवणो राजा सर्वभूतनमस्कृतः ॥

धनदो नाम रमते गुह्यकैस्सह यक्षराट् ।
तत्र चन्द्रनिकाशेषु पर्वतेषु गुहासु च ॥

रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ।
क्रौञ्चं तु गिरिमासाद्य बिलं तस्य सुदुर्गमम् ॥

अप्रमत्तैः प्रवेष्टव्यं दुष्प्रवेशं हि तत्स्मृतम् ।
वसन्ति हि महात्मानस्तत्र सूर्यसमप्रभाः ॥

देवैरप्यर्चितास्सम्यक् देवरूपा महर्षयः ।
क्रौञ्चस्यास्य गुहाश्चान्या सानूनि शिखराणि च ॥

निर्दशाश्च नितम्बाश्च विचेतव्यास्ततस्ततः ।
क्रौञ्चस्य शिखरं चापि निरीक्ष्य च ततस्ततः ।
अवृक्षं कामशैलं च मानसं विहगालयम् ॥

न गतिस्तत्र भूतानां देवदानवरक्षसाम् ।
स च सर्वैर्विचेतव्यः पर्वतो बहुकन्दरः ॥

क्रौञ्चं गिरिमतिक्रम्य मैनाको नाम पर्वतः ।
मयस्य भवनं तत्र दानवस्य स्वयं कृतम् ॥

मैनाकस्तु विचेतव्यः ससानुप्रस्थभूतलः ।
स्त्रीणामश्वमुखीनां तु निकेतास्तत्र तत्र तु ॥

तं देशं समतिक्रम्य आश्रमं सिद्धसेवितम् ।
सिद्धा वैखानसास्तत्र वालखिल्याश्च तापसाः ॥

वन्द्यास्तु ते तपस्सिद्धाः तपसा वीतकल्मषाः ।
प्रष्टव्याश्चैव सीतायाः प्रवृत्तिं विनयान्वितैः ॥

हेमपुष्करसंछन्नं तत्र वैखानसं सरः ।
तरुणादित्यसंकाशैर्हंसैर्विचरितं शुभैः ॥

औपवाह्यः कुबेरस्य सार्वभौम इति स्मृतः ।
गजः पर्येति तं देशं सदा सह करेणुभिः ॥

तत्सरस्समतिक्रम्य नष्टचन्द्रदिवाकरम् ।
अनक्षत्रगणव्योम निष्पयोदमनादिमत् ॥

गभस्तिभिरिवार्कस्य स तु देशः प्रकाशते ।
विश्राम्यद्भिस्तपस्सिद्धैर्देवकल्पैस्स्वयंप्रभैः ॥

तं तु देशमतिक्रम्य शैलोदा नाम निम्नगा ।
उभयोस्तीरयोस्तस्याः कीचका नाम वेणवः ॥

तेन यान्ति परं तीरं सिद्धान्प्रत्यानयन्ति च ।
उत्तराः कुरवस्तत्र कृतपुण्यप्रतिश्रयाः ॥

ते च काञ्चनपद्माभिः पद्मिनीभिः कृतोदकाः ।
नीलवैडूर्यपत्राढ्या नद्यस्तत्र सहस्रशः ॥

रक्तोत्पलवनैश्चारुमण्डिताश्च हिरण्मयैः ।
तरुणादित्यसंकाशैः भान्ति तत्र जलाशयाः ॥

महार्हमणिपत्रैश्च कांचनप्रभकेसरैः ।
नीलोत्पलवनैश्चित्रैः स देशस्सर्वतो वृतः ॥

निस्तुलाभिश्च मुक्ताभिर्मणिभिश्च महाधनैः ।
उद्धूतपुलिनास्तत्र जातरूपैश्च निम्नगाः ॥

सर्वरत्नमयैश्चित्रैरवगाढा नगोत्तमैः ।

जातरूपमयैश्चापि हुताशनसमप्रभैः ॥

नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः ।
दिव्यगन्धरसस्पर्शाः सर्वान्कामान्स्रवन्ति च ॥

नानाकाराणि वासांसि फलन्त्यन्ये नगोत्तमाः ।
मुक्तावैडूर्यचित्राणि भूषणानि तथैव च ॥

स्त्रीणां चाप्यनुरूपाणि पुरुषाणां तथैव च ।
महार्हाणि विचित्राणि हैमान्यन्ये नगोत्तमाः ॥

फलन्ति शयनीयानि चित्रास्तरणवन्ति च ।
मनःकान्तानि माल्यानि फलन्त्यत्र परे द्रुमाः ॥

पानानि च महार्हाणि भक्ष्याणि विविधानि च ।
स्त्रियश्च गुणसंपन्ना रूपयौवनलक्षिताः ॥

गन्धर्वाः किन्नरास्सिद्धा नानाविद्याधरास्तथा ।
रमन्ते सहितास्तत्र नारीभिर्भास्करप्रभाः ॥

सर्वे सुकृतकर्माणः सर्वे रतिपरायणाः ।
सर्वे कामार्थसहिताः वसन्ति सहयोषितः ॥

गीतवादित्रनिर्घोषः सोद्घुष्टहसितस्वनः ।
श्रूयते सततं तत्र सर्वभूतमनोहरः ॥

तत्र नामुदितः कश्चिन्नास्ति कश्चिदसत्प्रियः ।
अहन्यहनि वर्धन्ते गुणास्तत्र मनोरमाः ॥

अनेन उत्तरकुरुमाहात्म्यमुक्तम् । एतन्माहात्म्यं च **भीष्मपर्वणि** धृतराष्ट्रं प्रति संजयेन विस्तरेण प्रतिपादितम् । धृतराष्ट्रः—

मनोरथोत्तरं पार्श्वं पूर्वं चाचक्ष्व सञ्जय । निखिलेन महाबुद्धे माल्यवन्तं च पर्वतम् ॥

दक्षिणेन तु नीलस्य मेरोः पार्श्वे तथोत्तरे । उत्तराः कुरवो राजन्पुण्यास्सिद्धनिषेविताः ॥

तत्र वृक्षा मधुफलाः नित्यपुष्पफलोपगाः । पुष्पाणि च सुगन्धीनि रसवन्ति फलानि च ॥

सर्वकामफलास्तत्र केचिद्वृक्षा निषेवताम् । अपरे क्षीरिणो नाम वृक्षास्तत्र नराधिप ॥

ये क्षरन्ति सदा क्षीरं षड्रस चामृतोपमम् । वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च ॥
सर्वा मणिमयी भूमिः सूक्ष्मकाञ्चनवालुका । सर्वर्तुसुखसस्पर्शा निष्पङ्का च नराधिप ॥
देवलोकच्युतास्सर्वे जायन्ते तत्र मानवाः । शुक्लाभिजनसपन्नास्सर्वे सुप्रियदर्शनाः ॥
मिथुनानि च जायन्ते स्त्रियश्चाप्सरसोपमाः । तेषा ते क्षीरिणां क्षीरं पिबन्त्यमृतसन्निभम् ॥
मिथुनं जायते काले समं तच्च प्रवर्धते । तुल्यरूपगुणोपेतं समवेशं तथैव च ॥
एवमेवानुरूपं च चक्रवाकसमं विभो । निरामयाश्च ते लोका नित्यं मुदितमानसाः ॥
दशवर्षसहस्राणि दशवर्षशतानि च । जीवन्ति ते महाराज न चान्योन्यं जहत्युत ॥
भारुण्डा नाम शकुनास्तीक्ष्णतुण्डा महाबलाः । तान्निर्हरन्तीह मृतान्दरीषु प्रक्षिपन्ति च ॥
उत्तराः कुरवो राजन्व्याख्यातास्ते समासतः ॥ इति ।

समतिक्रम्य तं देशमुत्तरं तोयसन्निधिम् ।
तत्र हेमगिरिर्नाम मध्ये हेममयो महान् ॥

इन्द्रलोकगता ये च ब्रह्मलोकगताश्च ये ।
देवास्तं समवेक्षन्ते गिरिराजं दिवंगतम् ॥

स तु देशो विसूर्योऽपि तस्य भासा प्रकाशते ।
सूर्यलक्ष्म्याभिविज्ञेयस्तपतेव विवस्वता ॥

भगवानपि विश्वात्मा शंभुरेकादशात्मकः ।
ब्रह्मा वसति देवेशो ब्रह्मर्षिपरिवारितः ॥

कथंचन न गन्तव्यं कुरूणामुत्तरेण वः ।
अन्येषामपि भूतानां नातिक्रामति वै गतिः ॥

स हि हेमगिरिर्नाम देवानामपि दुर्गमः ।
तमालोक्य ततः क्षिप्रमुपावर्तितुमर्हथ ॥

एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ।
अभास्करममर्यादं न जानीमस्ततः परम् ॥

सर्वमेतद्विचेतव्यं यन्मया परिकीर्तितम् ।
यदन्यदपि नोक्तं च तत्रापि क्रियतां मतिः ॥

ततः कृतं दाशरथेर्महत्प्रियं महत्तरं चापि ततो मम प्रियम् ।
कृतं भविष्यत्यनिलानलोपमा विदेहजादर्शनजेन कर्मणा ॥

ततः कृतार्थास्सहितास्सबान्धवा मयार्चितास्सर्वगुणैर्मनोरमैः ।
चरिष्यथोर्वीं प्रतिशान्तशत्रवः सह प्रियाभिर्मुदिताः प्लवंगमाः ॥

चतुश्चत्वारिंशे

विशेषेण तु सुग्रीवो हनूमत्यर्थमुक्तवान् ।
स हि तस्मिन्हरिश्रेष्ठे निश्चितार्थोऽर्थसाधने ॥

अब्रवीच्च हनूमन्तं विक्रान्तमनिलात्मजम् ।
सुग्रीवः परमप्रीतः प्रभुः सर्ववनौकसाम् ॥

न भूमौ नान्तरिक्षे वा नांबरे नामरालये ।
नाप्सु वा गतिसंगं ते पश्यामि हरिपुंगव ॥

सासुरास्सहगन्धर्वास्सनागनरदेवताः ।
विदितास्सर्वलोकास्ते ससागरधराधराः ॥

गतिर्वेगश्च तेजश्च लाघवं च महाकपे ।
पितुस्ते सदृशं वीर मारुतस्य महौजसः ॥

तेजसा वापि ते भूतं समं भुवि न विद्यते ।
तद्यथा लभ्यते सीता तत्त्वमेवोपपादय ॥

त्वय्येव हनुमन्नस्ति बलं बुद्धिः पराक्रमः ।
देशकालानुवृत्तिश्च नयश्च नयपण्डित ॥

अनेन राज्ञा प्रबलतरकार्यसाधनाय भृत्यानां नियोजनावसरे सम्माननादिभिः प्रोत्साहनं कर्तव्यमिति सूचितम् । अत एव सैनापत्ये दुर्योधनेन प्रार्थनापूर्वकं नियोजितो भीष्म इति प्रतिपादितमुद्योगे —

भवानुशनसा तुल्यो हितैषी च सदा मम ॥ असंहार्यः स्थितो धर्मे स नस्सेनापतिर्भव ॥
रश्मिवतामिवादित्यो वीरुधामिव चन्द्रमाः । कुबेर इव यक्षाणां मरुतामिव वासवः ॥
पर्वतानां यथा मेरुः सुपर्णः पततामिव । कुमार इव भूतानां वसूनामिव हव्यवाट् ॥

भवता हि वयं गुप्ताः शक्रेण त्रिदिवौकसः । अनाधृष्या भविष्यामः त्रिदशानामपि ध्रुवम् ॥
प्रयातु वो भवानग्रे देवानामिव पावकिः । वयं त्वामनुयास्यामः सौरभेया इवर्षभम् ॥ इति ।

ततः कार्यसमारम्भमवगत्य हनूमति ।
विदित्वा हनुमन्तं च चिन्तयामास राघवः ॥

सर्वथा निश्चितार्थोऽयं हनूमति हरीश्वरः ।
निश्चितार्थकरश्चापि हनूमान्कार्यसाधने ॥

तदेवं प्रस्थितस्यास्य परिज्ञातस्य कर्मभिः ।
भर्त्रा परिगृहीतस्य ध्रुवः कार्यफलोदयः ॥

अनेन गुणाढ्योऽपि भर्त्रा परिगृहीतश्चेत्कार्यसाधको भवतीति सूचितम् । तथाच प्राचीनाः 'न तत्र हेतुर्न कलिर्न चाप्यहं प्रभुप्रसादो हि तनोति पौरुषम्' । इति ।

यस्मिन् सर्वाधिकं चक्षुरारोपयति पार्थिवः ।
सुते वा स्वकुलीने वा स लक्ष्म्या हरते मनः ॥ इति च ।

परिगृहीतोऽपि गुणाढ्य इति विशेषणेन निर्गुणः कार्यसाधको न भवतीति सूचितम् । तथाच प्राचीनाः —

'अवस्तु वस्तु न भवेत्स्तुतमप्यतिगौरवात् । फलन्त्यमृतसेकेन न भद्राणि विषद्रुमाः ॥ इति ।

तं समीक्ष्य महातेजाः व्यवसायोत्तरं हरिम् ।
कृतार्थ इव संवृत्तः प्रहृष्टेन्द्रियमानसः ॥

ददौ तस्य ततः प्रीतः स्वनामांकोपशोभितम् ।
अंगुलीयमभिज्ञानं राजपुत्र्याः परंतपः ॥

अनेन त्वां हरिश्रेष्ठ चिह्नेन जनकात्मजा ।
मत्सकाशादनुप्राप्तमनुद्विग्नानुपश्यति ॥

व्यवसायश्च ते वीर सत्वयुक्तिश्च विक्रमः ।
सुग्रीवस्य च सन्देशः सिद्धिं कथयतीव मे ॥

स तं गृह्य हरिश्रेष्ठः स्थाप्य मूर्ध्नि कृताञ्जलिः ।
वन्दित्वा चरणौ चैव प्रस्थितः प्लवगोत्तमः ॥

स तत्प्रकर्षन् हरिणां बलं महत् बभूव वीरः पवनात्मजः कपिः ।
गताम्बुदे व्योम्नि विशुद्धमण्डलः शशीव नक्षत्रगणोपशोभितः ॥

अतिबल बलमाश्रितस्तवाहं हरिवरविक्रम विक्रमैरनल्पैः ।
पवनसुत यथाधिगम्यते सा जनकसुता हनुमंस्तथा कुरुष्व ॥

नन्वत्र युवराजे बलाध्यक्षे अंगदे सति हनुमतः स्वतन्त्रतया पुरस्कारः अभिज्ञान-प्रदानादिकं चानुचितं । तथाहि अंगदस्तावद्युवराजः प्रागेव रामाज्ञया यौवराज्येऽभिषेचनात्, दक्षिणस्यां दिशि प्रस्थापितानामधिपतिश्चायं "जांबवान्यत्र नेता स्यादंगदश्च महाबल", अंगदप्रमुखा वीरा, इति बहुधा तत्र तत्र अधिपतित्वव्यवहारात् । राज्ञा च यो यदाधिपत्ये नियुक्तस्तन्मुखेनैव तत्कार्ये साधकानां प्रेषणबहुमत्यादिकं कर्तव्यं । स्वतन्त्रतया बहुमतिनियोजनादिकरणे, तत्प्राधान्यभङ्गापत्तेः । अनेकप्रधानकत्वे च अनेक-ग्रामण्यधिष्ठितग्रामवत्कार्यस्यापि विनाशप्रसंगात् । एतद्दोषपरिजिहीर्षयैव सर्वतान्त्रिकैरपि ज्ञानकर्मेन्द्रियसमुदायो नात्मेत्युक्तम् । अत एवानेकप्रधानकत्वे सति कार्यहानिः एकप्रधानकत्वे च कार्यसिद्धिरिति प्रतिपादितं **उद्योगेऽपि** —

श्रूयन्ते हि महाप्राज्ञ हेहयानमितौजसः । अभ्ययुर्ब्राह्मणास्सर्वे समुच्छ्रितकुशायुधाः ॥
तानन्वयुस्तदा वैश्याश्शूद्राश्चैव पितामह । एकतस्तु त्रयो वर्णाः एकतः क्षत्रियर्षभाः ॥
ते तु युद्धेष्वभज्यन्त त्रयो वर्णाः पुनः पुनः । क्षत्रियास्तु जयन्ते वै बहुलं चैकतो बलम् ॥
ततस्ते क्षत्रियानेव पप्रच्छुर्द्विजसत्तमाः । तेभ्यश्शशंसुर्धर्मज्ञा याथातथ्यं पितामह ॥
वयमेकस्य शृणुमो महाबुद्धिमतो वचः । भवन्तस्तु पृथक् सर्वे स्वबुद्धिवशवर्तिनः ॥
ततस्ते ब्राह्मणाश्चक्रुरेकं सेनापतिं द्विजम् । नयेषु कुशलं शूरमजयन् क्षत्रियांस्तदेति ॥

अत एव च सुग्रीवेण —

प्रमाणमेनं संस्थाप्य पश्यध्वं पश्चिमां दिशम् । श्रोतव्यं सर्वमेतस्य भवद्भिर्दृष्टकारिभिः ॥इति

प्रतीच्यां दिशि वानराणां प्रस्थापनसमये सुषेणाधीनास्सर्वे वानराः कृताः । नच प्रधानत्वेऽप्यसमर्थत्वमङ्गदस्येति वाच्यं, असमर्थत्वे यौवराज्याभिषेकानुपपत्तेः । समर्थस्यैव राज्यार्हत्वात्सुग्रीवहनुमद्वचनाभ्यां समर्थत्वावगमेनासामर्थ्यासिद्धेश्च । तथा च **सुग्रीव-वाक्यम्** —

'सुतस्सुलभ्यस्सुजनस्सुवश्यः कुतस्तु पुत्रस्सदृशोऽङ्गदेन ॥ इति ।

हनुमद्वचनमपि —

बुध्या ह्यष्टाङ्गया युक्तं चतुर्बलसमन्वितम् । चतुर्दशगुणं मेने हनुमान्वालिनस्सुतम् ॥
आपूर्यमाणं शश्वच्च तेजोबलपराक्रमैः । शशिनं शुक्लपक्षादौ वर्धमानमिव श्रिया ॥
बृहस्पतिसमं बुध्या विक्रमैस्सदृशं पितुः ॥ इति ।

तथा च समर्थतरमखिलगुणाढ्यमाधिपत्ये नियुक्तमङ्गदमपहाय स्वतन्त्रतया हनुमत्पुरस्करणांगुलीयकप्रदानादिकमनुचितमिति चेन्न । ज्ञातित्वेनांगदस्याविश्वसनीयतया, आप्तमन्त्रित्वेन हनुमतो विश्वसनीयतया च तं प्रति विशिष्य कार्यकथनं युक्तमेव । तथाहि— राज्ञां सर्वत्राविश्वास अत्यन्तविश्वासो वा न कर्तव्यः । उभयोर्हानिकरत्वात्, तथा च **राजधर्मे** —

एकान्तेन हि विश्वासः कृत्स्नो धर्मार्थनाशकः । अविश्वासश्च सर्वत्र मृत्युनापि विशिष्यते ॥
अकालमृत्युर्विश्वासः विश्वसन्हि विपद्यते । यस्मिंकरोति विश्वासं इच्छतस्तस्य जीवति ॥
तस्माद्विश्वसितव्यं च शंकितव्यं च केषुचित् । एषा नीतिगतिस्तात लक्ष्म्याश्चैव सनातनी ॥ इति

अविश्वसनीयाश्च स्वानन्तरराजार्हाः पुत्रभ्रात्रादयो ज्ञातयश्च । तथाच **राजधर्मे**—

यं मन्येत ममाभावादिममर्थागमः स्पृशेत् ।
नित्यं तस्माच्छंकितव्यममित्रं तं विदुर्बुधाः ॥ इति ।

ज्ञातिभ्यश्चैव बुध्येथा मृत्योरिव भयं सदा । उपराजेव राजर्धिं ज्ञातिर्न सहते सदा ॥
ऋजोर्मृदोर्वदान्यस्य धीमतस्सत्यवादिनः । नान्यो ज्ञातेर्महाभागो विनाशमभिनन्दति ॥
विश्वस्तवदविश्वस्तस्तेषु वर्तेत सर्वदा ॥ इति ।

**कामन्दकेऽपि** —

लोलुप्यमानास्तेऽर्थेषु हन्युरेनमरक्षिताः । राजपुत्रा मदोन्मत्ता गजा इव निरंकुशाः ॥
भ्रातरं वा विनिघ्नन्ति पितरं वाभिमानिनः । राजपुत्रैर्मदोन्मत्तैः प्रार्थ्यमानमितस्ततः ॥
दुःखेन रक्ष्यते राज्यं व्याघ्राघ्रातमिवामिषम् । रक्ष्यमाणा यदि छिद्रं कथंचित्प्राप्नुवन्ति हि ॥
सिंहशाबा इव घ्नन्ति रक्षितारमसंशयम् ॥ इति ।

विश्वासश्च समर्थेषु मन्त्रिषु कर्तव्यः । तथाच **राजधर्मे** —

यं मन्येत ममाभावादस्याभावो भवेदिति । तस्मिन्कुर्वीत विश्वासं यथा पितरि वै तथा ॥
तं शक्त्या वर्धमानश्च सर्वतः परिबृंहयेत् । व्यसनान्नित्यभीतो यः समृध्या यो न तप्यते ॥

यस्त्वादेवंविधं मित्रं तदात्मसममुच्यते । रूपवर्णस्वरोपेतस्तितिक्षुरनसूयकः ॥

कुलीनश्शीलसम्पन्नस्स तस्मात्प्रत्यनन्तरः । मेधावी स्मृतिमान्दक्षः प्रकृत्या चानृशंसवान् ॥

यो मानितोऽमानितो वा न च रुष्येत्कदाचन । गृहे वसेदमात्यस्ते सः स्यात्परमपूजितः ॥

स ते विद्यात्परं मित्रं प्रकृतिं चार्थधर्मयोः । विश्वासस्ते भवेत्तत्र यथा पितरि वै तथा ॥

कीर्तिप्रधानो यश्च स्याद्यश्च स्यात्समये स्थितः । समार्थान्यश्च न द्वेष्टि नानर्थान्कुरुते च यः ॥

यो न कामाद्भयाल्लोभात्क्रोधाद्वा धर्ममुत्सृजेत् । दक्षः पर्याप्तवचनः स ते स्यात्प्रत्यनन्तरः ॥

कुलीनस्सत्वसम्पन्नस्तितिक्षुरविकत्थनः । शूरश्चार्यश्च विद्वांश्च प्रतिपत्तिविशारदः ॥

एते ह्यमात्याः कर्तव्याः सर्वकर्मस्ववस्थिताः । पूजितास्संविभक्ताश्च सुसहायास्स्वनुष्ठिताः ॥

कृत्स्नमेते विनिक्षिप्ताः प्रतिरूपेषु कर्मसु । युक्ता महत्सु कार्येषु श्रेयांस्युत्पादयन्ति च ॥ इति ।

**कामन्दकेऽपि —**

न तत्र तिष्ठति भ्राता न पितान्योऽपि वा जनः ।
पुंसामापत्प्रतीकारे सन्मित्रं यत्र तिष्ठति ॥ इति ।

अत एव बिलान्निर्गमनानन्तरं सुग्रीवदुष्प्रवेशेऽस्मिन्नेव बिलप्रदेशे वसाम इति तारेयवचनमादरेण शृण्वतोऽगदस्य राज्यापहरणाभिप्रायमवगत्य हनुमान्वानराणां परस्परं भेदनेन सुग्रीवराज्यं स्थापितवान्, तदसहमानेनाङ्गदेन सुग्रीवो निन्दितश्चेति प्रतिपादितमग्रे—

इदं हि मायाविहितं सुदुर्गमं प्रभूतवृक्षोदकभोज्यपेयम् ।
इहाद्य नो नैव भयं पुरन्दरात् न राघवाद्वानरराजतोऽपि वा ॥

श्रुत्वाङ्गदस्यापि वचोनुकूलं ऊचुश्च सर्वे हरयः प्रतीताः ।
यथा न हन्येत तथा विधानमसक्तमद्यैव विधीयतां मनः ॥

तथा ब्रुवति तारे तु ताराधिपतिवर्चसि । अथ मेने हृतं राज्यं हनुमानङ्गदेन तत् ॥

अभिसन्धातुमारेभे हनुमानङ्गदं ततः । स चतुर्णामुपायाना तृतीयमुपवर्णयन् ॥

भेदयामास तान्सर्वान्वानरान् वाक्यसंपदा ॥ इति ।

श्रुत्वा हनुमतो वाक्यं प्रश्रितं धर्मसंहितम् । स्वामिसत्कारसंयुक्तमङ्गदो वाक्यमब्रवीत् ॥

स्थैर्यं सर्वात्मना शौचमानृशंस्यमनार्जवम् । विक्रमश्चैव सुग्रीवे सौजन्यं नोपपद्यते ॥

भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् । धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥

कथं स धर्मं जानीते येन भ्रात्रा दुरात्मना । युद्धायाभिनियुक्तेन बिलस्यापिहितं मुखम् ॥

सत्यात्पाणिगृहीतश्च कृतकर्मा महायशाः । विस्मृतो राघवो येन स कस्य तु कृतं स्मरेत् ॥
लक्ष्मणस्य भयाद्येन नाधर्मभयभीरुणा । आदिष्टा मार्गितुं सीतां धर्मस्तस्मिन् कथं भवेत् ॥
तस्मिन् पापे कृतघ्ने तु स्मृतिहीने चलात्मनि । आर्य. को विश्वसेज्जातु तत्कुलीनो जिजीविषु ॥
राज्ये पुत्रः प्रतिष्ठाप्यस्सगुणो निर्गुणोऽपि वा । कथं शत्रुकुलीनं मा सुग्रीवो जीवयिष्यति ॥
भिन्नमन्त्रोऽपराद्धश्च हीनशक्तिः कथं ह्यहम् । किष्किन्धां प्राप्य जीवेयं अनाथ इव दुर्बलः ॥
उपांशुदण्डेन हि मां बन्धनेनोपपादयेत् । शठः क्रूरो नृशंसश्च सुग्रीवो राज्यकारणात् ॥ इति ।

एवंचाविश्वसनीयमङ्गदमपहाय विश्वसनीये हनुमति विशिष्य पुरस्कारादिकं युक्तमेव । न चैवमङ्गदस्याविश्वसनीयत्वेन वधपरित्यागादिकं किमिति न कृतवानिति वाच्यं, अविश्वसनीयानामपि ज्ञातीनां वधपरित्यागादेरयुक्तत्वात्, अवश्यरक्षणीयत्वाच्च । तथा चावध्यत्वे **उद्योगे** विदुरः—

'अवध्या ब्राह्मणा गावो ज्ञातयश्शिशवः स्त्रियः ।
येषां चान्नानि भुञ्जीत ये च स्युश्शरणागताः ॥' इति ।

परित्यागोऽप्ययुक्तः रावणवालिसुयोधनप्रभृतीना विभीषणसुग्रीवधर्मपुत्रादिभ्रातृ-परित्यागेन राज्यप्राणनाशादिदर्शनात् । एवं भेदादिकमप्ययुक्तं, तथाच **राजधर्मे** —

भेदाद्विनाशस्संघानां संघमुख्योऽसि केशव ।
यथा त्वा प्राप्य नोत्सीदेदयं संघस्तथा कुरु ॥ इति ।

**उद्योगे** विदुरोऽपि —

स्वास्तीर्णानि शयनानि प्रपन्ना न वै भिन्ना जातु निद्रां लभन्ते ।
न स्त्रीषु राजन्रतिमाप्नुवन्ति न वै भिन्नाः प्रशमं रोचयन्ति ॥

न वै तेषां स्वदते पथ्ययुक्तं योगक्षेमं कल्पते नैव तेषाम् ।
भिन्नानां वै मनुजेन्द्र परायणं न विद्यते किंचिदन्यद्विनाशात् ॥ इति ।

**राजधर्मे** —

ज्ञातिभिर्विग्रहस्तात न कर्तव्यश्शुभार्थिना । सुखानि सह भोज्यानि भ्रातृभिर्भरतर्षभ ॥

संभोजनं सकथनं संप्रीतिश्च परस्परम् ।
ज्ञातिभिस्सह कार्याणि न विरोधः कदाचन ॥ इति ।

**प्रबोधचन्द्रोदयेऽपि —**

निर्दहति कुलमशेषं ज्ञातीनां वैरसम्भवः क्रोधः ।
वनमिव घनपवनाहततरुसङ्घट्टसंभवो दहनः ॥ इति ।

तस्मात् ज्ञातयो न द्वेष्याः, विगुणाः सगुणा वा तेऽवश्यं संरक्षणीयाश्च । तथा **चोद्योगे** —

'विगुणा ह्यपि संरक्ष्या ज्ञातयो भरतर्षभ । किं पुनर्गुणवन्तस्ते त्वत्प्रसादाभिकांक्षिणः ॥ इति ।

तेषामरक्षणे दोषोऽपि **तत्रैव** —

'श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ।
दिग्धहस्तं मृग इव स पापं तस्य विन्दति इति ॥

तद्रक्षणे फलमपि **तत्रैव** —

'यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरम् । स पुत्रपशुभिर्वृद्धिं श्रेयश्चानन्तमश्नुते ॥
ज्ञातयो वर्धनीयास्तैर्य इच्छन्त्यात्मनः सुखम् । कुलवृद्धिं च राजेन्द्र तस्मात्साधु समाचर ॥
श्रेयसा योक्ष्यसे राजन् कुर्वाणो ज्ञातिसत्क्रियाम् । एवं लोके यशः प्राप्तं भविष्यति नराधिप ।
अधर्षणीयः शत्रूणां तैर्वृतस्त्वं भविष्यसि ॥ इति ।

**राजधर्मेऽपि** —

धन्यं यशस्यमायुष्यं स्वपक्षोद्भावनं शुभम् । अज्ञातिनोऽपि न सुखं नावज्ञातस्त्वतः परम् ॥
अज्ञातिमन्तं पुरुषं परे चाभिभवन्त्युत । तान्मानयेत्पूजयेच्च वाचा नित्यं च कर्मणा ॥
कुर्याच्च प्रियमेतेभ्यो नाप्रियं किंचिदाचरेत् ॥ इति ।

ज्ञातिभिरुपेतः परेषामप्रधर्षणीयश्च । तथा**चोद्योगे** —

'महानप्येकको वृक्षः बलवान्सुप्रतिष्ठितः । प्रसह्य चैव वातेन सुस्कन्धो मर्दितुं क्षणात् ॥
अथ ये सहिता वृक्षाः संघशस्तु प्रतिष्ठिताः । अपि शीघ्रसमायातान्सहन्तेऽन्योन्यसंश्रयात् ॥
एवं मनुष्यमप्येकं गुणैरपि समन्वितम् । शक्यं द्विषन्तो मन्यन्ते वायुर्द्रुममिवैकजम् ॥
अन्योन्यं समुपष्टम्भादन्योन्यापाश्रयेण च । ज्ञातयस्संप्रवर्धन्ते सरसीवोत्पलानि च ॥
तन्तवोऽप्यायता नित्यं तन्तवो बहुलास्समाः । बहून्बहुत्वादायासान् सहन्तेत्युपमा सताम् ॥
धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च । धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ इति ।

**कामन्दकेऽपि —**

संघातवान्यथा वेणुः निबद्धः कण्टकैर्वृतः । न शक्यते समुद्धर्तुं भ्रातृसंघातवांस्तथा ॥ इति च ।

परैरुपद्रुतस्यापि ज्ञातिरेव गतिः । तथाच **राजधर्मे —**

निकृतस्य परैरन्यैर्ज्ञातिरेव परायणम् । नान्यातिकारं सहते ज्ञातेर्ज्ञातिः कथंचन ॥ इति ।

अत एव गन्धर्वगृहीताः शत्रुभूता अपि दुर्योधनादयः स्वकुलरक्षणं धर्म इति बुध्या पाण्डवैर्निवर्तिता इति प्रतिपादितं **वनपर्वणि —**

'भवन्ति भेदाः ज्ञातीनां कलहाश्च वृकोदर । प्रसक्तानि च वैराणि कुलधर्मो न नश्यति ॥

यदा तु कश्चित् ज्ञातीनां बाह्यः प्रार्थयते कुलम् ।
न मर्षयन्ति तत्सन्तो बाह्येनापि प्रधर्षणम् ॥

दुर्योधनस्य ग्रहणात् गन्धर्वेण बलात्प्रभोः । स्त्रीणा बाह्याभिमर्शाच्च हतं भवति नः कुलम् ॥

मोक्षयध्वं नरव्याघ्राः ह्रियमाणं सुयोधनम्' ।

इति धर्मराजेन प्रेषितो गन्धर्वानभिगम्य,

ततस्तान्युधि दुर्धर्षान्सव्यसाची परन्तपः । सान्त्वपूर्वमिदं वाक्यमुवाच खचरान्रणे ॥

विसर्जयत राजानं भ्रातरं मे सुयोधनम् । उत्सृजध्वं महावीर्या धृतराष्ट्रसुतानिमान् ॥

दारांश्चैषां विमुञ्चध्वं धर्मराजस्य शासनात् ।

इत्यभिधाय युद्धे विजित्य, दुर्योधनादिभिस्सह धर्मपुत्रं प्रति गन्धर्वानानिनाय । ततो धर्मपुत्रः —

मोचयामास तान्सर्वान् गन्धर्वान्प्रशशंस च । उपकारो महांस्तात कृतो धर्मेण खेचरैः ॥

कुलं नः परिभूतं मे मोक्षेणास्य दुरात्मनः । ततो दुर्योधनं मुक्तं भ्रातृभिस्सहितं तदा ॥

युधिष्ठिरस्तु प्रणयादिदं वचनमब्रवीत् । मा स्म तात पुनः कार्षीरीदृशं साहसं क्वचित् ॥

नहि साहसकर्तारस्सुखमेधन्ति भारत । स्वस्तिमान्सहितस्सर्वैर्भ्रातृभिः कुरुनन्दन ॥

गृहान्व्रज यथाकामं वैमनस्यं च मा कृथाः । इति ।

ज्ञातिकृतमपराधमपि सोढ्वा उपायेन ते वशीकर्तव्या इत्युक्तं **राजधर्मे** कृष्ण-नारदसंवादे —

दास्यमैश्वर्यवादेन ज्ञातीनां वै करोम्यहम् । अर्धं भोक्तास्मि भोगाय वाग्दुरुक्तानि च क्षमे ॥

अरणीमग्निकामीव मथ्नाति हृदयं मम । वाचा दुरुक्तं देवर्षे तन्मे दहति नित्यदा ॥

बलं संकर्षणे नित्यं सौकुमार्यं पुनर्गदे । रूपेण मत्तः प्रद्युम्नः सोऽसहायोस्मि नारद ॥
अन्ये हि सुमहाभागाः बलवन्तो दुरुत्सहाः । नित्योत्थानेन सपन्ना नारदान्धकवृष्णयः ॥

यस्य ते स्युर्न वै स स्याद्यस्य स्यु' कृत्स्न एव सः ।
द्वाभ्यां हि वारितो नित्यं वृणोम्येकतरं न च ॥

स्यातां यस्याहुकाक्रूरौ किन्नु दु खतरं ततः । सोऽहं कितवमातेव द्वयोरपि महामते ॥
एकस्य जयमाशंसन्द्वितीयस्य पराजयम् । तस्यैवं क्लिश्यमानस्य नारदोभयतस्सदा ॥

वक्तुमर्हति यच्छ्रेयो ज्ञातीनामातुरस्तथा ।

**नारदः**—

आपदो द्विविधाः कृष्ण बाह्याश्चाभ्यन्तरास्तथा । प्रादुर्भवन्ति वार्ष्णेय सुकृताद्यदिवान्यतः ॥
सेयमाभ्यन्तरात्तुभ्यं आपत्कृच्छ्रात्स्वकर्मजा । अक्रूरभोजप्रवरास्सर्वे ह्येते त्वदाश्रयाः ॥
अर्थहेतोर्हि कामाद्वा वाचा बीभत्सयापि वा । आत्मना प्राप्तमैश्वर्यमन्यत्र प्रतिपादितम् ॥
कृतमूलमिदानीं तु ज्ञातिशब्दसहायवान् । न शक्यं पुनरादातुं वान्तमन्नमिव त्वया ॥
बभ्रूग्रसेनयो राज्यं नाप्तुं शक्यं कथञ्चन । ज्ञातिभेदभयात्कृष्ण त्वया वापि विशेषतः ॥

तस्य सिध्येत्प्रयत्नेन कृत्वा कर्म सुदुष्करम् ।
महाक्षयो व्ययो वा स्याद्विनाशो वा पुनर्भवेत् ॥

अनायासेन शस्त्रेण मृदुना हृदयच्छिदा । जिह्वामुद्धर सर्वेषां प्रविमृज्यानुमृज्य च ॥
शक्त्यान्नदानं सततं तितिक्षार्जवमार्दवम् । यथार्हप्रतिपूजा च शस्त्रमेतदनायसम् ॥
ज्ञातीनां वक्तुकामानां कटुकानि लघूनि च । गिरा त्वं हृदयं वाचं शमयस्व मनांसि च ॥

नान्यत्र बुद्धिक्षान्तिभ्या नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र धनसंयोगाद्गुणः प्रत्यवतिष्ठते ॥ इति ।

पुत्रविषये ज्ञात्यपेक्षया विशेषमाह **कामन्दकः**—

राजपुत्रः परित्यागं सुदुर्वृत्तोऽपि नार्हति ।
क्लिश्यमानस्तु पितरं परानाश्रित्य हन्ति हि ॥ इति ।

**नीतिसारेऽपि**—

'लालनीयः पूजनीयो भूषणीयस्तथैव च ।
अर्थशास्त्रं शिक्षणीयो यथा स्याद्विनयी तु सः ॥" इति ।

'प्रजात्मश्रेयसे राजन् कुर्वीतात्माभिरक्षणमिति च ॥

**कामन्दकेपि —**

'विनयोपग्रहान्भृत्यैः कुर्वीत नृपतिः सुतान्। अविनीतकुमारं हि कुलमाशु विशीर्यते ॥
विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत्। दुष्टं गजमिवोन्मत्तं कुर्वीत सुखबन्धनम् ॥
व्यसने सज्जमानं हि क्लेशयेद्व्यसनाश्रयैः। तथाच क्लेशयेदेनं यथा स्यात्पितृगोचरः ॥' इति।

तथाचाङ्गदस्य ज्ञातित्वेनाविश्वसनीयत्वादपरित्यागेन रक्षणीयत्वाद्विनीतं विधाय यौवराज्येऽभिषेचनीयत्वाच्च रक्षणयौवराज्याभिषेचनकार्यनियोजनादिकं, मन्त्रिणश्च हनुमतः सकलकार्येषु विश्वसनीयस्य स्वातन्त्र्येण पुरस्करणादिकं युक्तमेव ॥

**पञ्चचत्वारिंशषट्चत्वारिंशयोः** — ततो यथानिदेशं प्रस्थितेषु वानरयूथपेषु

**कथं भवान्विजानीते सर्वं वै मण्डलं भुवः।**

इति रामभद्रेण पृष्टो हरीशः मायावियुद्धसमये मत्कृतबिलमुखपिधान, मत्कृत-राज्याभिषेकादिकुपितेन मद्भ्रात्रा विद्रावितो निखिलमपि भूमण्डलं परिधावन् क्वचिदपि शरणमलभमानो हनुमदुपदेशेन मतङ्गनिलयं भ्रातृदुष्प्रवेशं प्रविष्टोऽस्मि।

**एवं मया तथा राजन् प्रत्यक्षमपि लक्षितम्।**
**पृथिवीमण्डलं कृत्स्नं गुहामस्म्यागतस्ततः ॥**

नन्वत्र जनकतनयागवेषणाय प्रस्थितान्वानरान्प्रति प्राच्यादिदिक्षु गवेषणीयप्रदेश-विशेषाणां विशिष्य कथनं न प्रयोजनवत्। 'विन्ध्यमन्दरोदयास्तमयाचलनिलयाः क्षीरसागरवेलानिलया वानरा आनेया' इति सामान्यतः कथनवत् दिक्चतुष्टयेऽपि यावन्तो भवतां गम्याः प्रदेशाः तत्र विचेतव्या जानकीति सामान्योक्त्या प्रेषणसंभवादिति चेदुच्यते। प्रबलतरशत्रुवधादिमहाकार्यं साधयता प्रथमतस्तत्सामर्थ्याधायकं तपश्चरणपुण्यतीर्थ-क्षेत्रदेवब्रह्मराजर्षिसंकीर्तनश्रवणदर्शनस्मरणादिषु पुण्यतमेषु यत्किञ्चित्कर्तव्यम्। तपश्चरणस्य शत्रुवधहेतुत्वे मन्त्रवर्णः, "तपसा देवा देवतामग्र आयन् तपसर्षयः स्वरन्वविन्दन् तपसा सपत्नान्प्रणुदामारातीः' रिति। जगदीश्वरोऽपि वामनः प्रबलतरतपश्चरणेनैव बलिनियमनं कृतवानिति प्रतिपादितम् —

"बलिनियमनहेतोर्वामनः काननेऽस्मिन्
बलिनियमपरः सन् ब्रह्मचारी चचार ॥ इति।

एवं पाण्डवान् जेतुकामो जयद्रथः तपसा परमेश्वरमाराधितवानिति प्रतिपादितं **वनपर्वणि —**

जगाम राजन्दुःखार्तो गङ्गाद्वाराय भारत । स देवं शरणं गत्वा विरूपाक्षमुमापतिम् ॥
तपश्चचार विपुलं तस्य प्रीतो वृषध्वजः । वरं चास्मै ददौ देवः तं जग्राह च तच्छृणु ॥
समस्तान्सरथान्पञ्च जयेयं युधि पाण्डवान् । इति राजाब्रवीद्देवं नेति देवस्तमब्रवीत् ॥
अजेयाश्चाप्यवध्याश्च वारयिष्यसि तान्युधि । ऋतेर्जुनं महाबाहुं नरं नाम सुरेश्वरम् ॥
तमेकं वर्जयित्वा तु सर्वं यौधिष्ठिरं बलम् ।
चतुरः पाण्डवान्राजन् विनैकं जेष्यसे रिपून् ॥' इति ।

तथाच भीष्म अंबांबिकांबालिकाख्याः काशिराजतनयाः स्वयंवरे विजित्य भ्रातुर्विचित्रवीर्यस्य विवाहार्थमानयामास । तत्राम्बा पूर्वमेव मया साल्वो मनसा वृत इति विचित्रवीर्यपाणिग्रहणमनिच्छन्ती भीष्मेण परित्यक्ता साल्वमाजगाम । तेनाप्यन्य-जितां त्वा नाभिगृह्णामीति परित्यक्ता सती भीष्ममूलेयमनर्थपरम्परेति मत्वा तमेव हन्तुमुग्रं तपश्चचारेति प्रतिपादित**मुद्योगे** अंबोपाख्याने —

'सा तु कन्या महाराज प्रविश्याश्रममण्डलम् । यमुनातीरमाश्रित्य तपस्तेपेऽतिमानुषम् ॥
निराहारा कृशा रूक्षा जटिला मलपंकिनी । षण्मासान्वायुभक्षासीत्स्थाणुभूता तपस्विनी ॥
यमुनाजलमाश्रित्य संवत्सरमथापरम् । उपवासान्निराहारा धारयामास भामिनी ॥
शीर्णपर्णेन चैकेन पालयामास चापरम् । संवत्सरं तीव्रकोपा पादांगुष्ठेन सुस्थिता ॥
एवं द्वादशवर्षाणि तापयामास रोदसी । आश्रमं पुण्यशीलाना तापसानां महात्मनाम् ॥
तत्र पुण्येषु देशेषु साप्लुतांगी दिवानिशम् । व्यचरत्काशिकन्या सा यथाकामविचारिणी ॥
नन्दाश्रमे महाराज तथोलूकाश्रमे शुभे । च्यवनस्याश्रमे चैव ब्रह्मणः स्थान एव च ॥
प्रयागे देवयजने देवारण्येषु चैव हि । भोगवत्यां महाराज कौशिकस्याश्रमे तथा ॥
महाह्रदे च कौरव्य पैलगार्ग्यस्य चाश्रमे । एतेष्वन्येषु तीर्थेषु काशिकन्या विशां पते ॥
आप्लावयत गात्राणि तीव्रमास्थाय वै व्रतम् । ततस्ते तापसास्तात तपसे कृतनिश्चयाम् ॥
न्यवर्तयंस्तदा तात किं कार्यमिति चाब्रुवन् । तानुवाच ततः कन्या तपोवृद्धानृषींस्तदा ॥
साहं भीष्मविनाशाय तपस्तप्स्ये सुदारुणम् । विचरामि महीं देवीं यथा हन्यामहं नृपम् ॥
यत्कृते दुःखवसतिमिमां प्राप्तास्मि शाश्वतीम् । पतिलोकविहीना च नैव स्त्री न पुमानहम् ॥
नाहत्वा युधि गांगेयं निवर्तेयं तपोधनाः । एष मे हृदि सङ्कल्पो यदिदं कथितं मया ॥

तदेना दर्शयामास शूलपाणिरुमापतिः । मध्ये तेषां महर्षीणा स्वेन रूपेण भामिनीम् ॥
छन्द्यमाना वरेणाथ सा वव्रे मत्पराजयम् । हनिष्यसीति ता देवः प्रत्युवाच मनस्विनीम् ॥
ततस्सा पुनरेवाथ कन्या रुद्रमुवाच ह । उपपद्येत्कथं देव स्त्रिया युधि जयो मम ॥
स्त्रीभावेन च मे गाढं मनश्शान्तमुमापते । प्रतिश्रुतश्च भूतेश त्वया भीष्मपराजयः ॥
यथा स सत्यो भवति तथा कुरु वृषध्वज । यथा हन्या समागम्य भीष्मं शान्तनवं युधि ॥
तामुवाच महादेवः कन्यां गोवृषभध्वजः । न मे वागनृतं भद्रे प्राह सत्यं भविष्यति ॥
हनिष्यसि रणे भीष्मं पुरुषत्वं च लप्स्यसे । स्मरिष्यसि च तत्सर्वं देहमन्यं गता सती ॥
द्रुपदस्य कुले जाता भविष्यसि महारथः । शीघ्रास्त्रचित्रयोधी च भवितासि सुसम्मतः ॥
यथोक्तमेतत्कल्याणि सर्वमेतद्भविष्यति । भविष्यसि पुमान्पश्चात्कस्माच्चित्कालपर्ययात् ॥
एवमुक्त्वा महाबाहु कपर्दी वृषभध्वजः । पश्यतामेव विप्राणां तत्रैवान्तरधीयत ॥

अतः प्रबलतररावणहननाय प्रवृत्तेन रामेण तत्सहायभूतसुग्रीवेणापि किंचित्पुण्यं कर्म कर्तव्यम् । पुण्यदेशतीर्थमहर्षीणां तदुपेतभूगोलस्य च संकीर्तनश्रवणादिकं प्रशस्तम् । पुण्यदेशतीर्थादीनां दर्शनश्रवणादिकं महाफलमित्येतद्वनपर्वणि धौम्यतीर्थयात्रायाम् —

तान्सर्वानुत्सुकान्दृष्ट्वा पाण्डवान् दीनचेतसः । आश्वासयंस्तदा धौम्यो बृहस्पतिसमोऽब्रवीत् ॥
ब्राह्मणानुगतान्पुण्यानाश्रमान्भरतर्षभ । दिशस्तीर्थानि शैलांश्च शृणु मे गदतो नृप ॥

यान् श्रुत्वा गदतो राजन् विशोको भवितासि ह ।
द्रौपद्या चानया सार्धं भ्रातृभिश्च नरेश्वर ॥

श्रवणाच्चैव तेषां त्वं पुण्यमाप्नोषि पाण्डव । गत्वा शतगुणं चैव तेभ्य एव नरोत्तम ॥

**मार्कण्डेयपुराणेऽपि —**

'वैन्यं पृथुं हैहयमर्जुनं च शाकुन्तलेयं भरतं नलं च ।
रामं च यो वै स्मरति प्रयाणे तस्यार्थलाभो विजयश्च हस्ते ॥' इति ।

**श्रीहर्षोऽपि —**

प्रवसते भरतार्जुनवैन्यवत् स्मृतिधृतोऽपि नल स्त्वमभीष्टदः ।
स्वगमनाफलतां यदि शंकसे तदफलं निखिलं खलु मङ्गलम् ॥ इति ॥

**आनुशासनिके** श्रेयोध्याये भीष्मः —

अयं दैवतवंशो वै ऋषिवंशसमन्वितः । त्रिसन्ध्यं पठितः पुत्र कल्मषापहरः परः ॥
यदह्ना कुरुते पापमिन्द्रियैः पुरुषश्चरन् । बुद्धिपूर्वमबुद्धेर्वा रात्रौ यच्चापि सन्ध्ययोः ॥

मुच्यते सर्वपापेभ्यः कीर्तयन्वै शुचिस्सदा । नान्धो न बधिर. काले कुरुते स्वस्तिमान्सदा ॥
तिर्यग्योनिं न गच्छेच्च नरकं सङ्कराणि च । न च दु.खभयं तस्य मरणे न स मुह्यति ॥
देवासुरगुरुर्देवः सर्वभूतनमस्कृतः । अचिन्त्योथाप्यनिर्देश्यः सर्वप्राणो ह्ययोनिजः ॥
पितामहो जगन्नाथस्सावित्री ब्रह्मणस्सती । वेदभूरर्थकर्ता च विष्णुर्नारायण. प्रभुः ॥
उमापतिर्विरूपाक्षः स्कन्दः सेनापतिस्तथा । विशाखो हुतभुग्वायुश्चन्द्रादित्यौ प्रभाकरौ ॥
शक्रश्शचीपतिर्देवो यमो धूमोर्णया सह । वरुणस्सह गौर्या च सह पत्न्या धनेश्वरः ॥
सौम्या गौस्सुरभिर्देवी विश्रवाश्च महानृषिः । संकल्पस्सगरो गङ्गा स्रवन्त्योथ मरुद्गणाः ॥
वालखिल्यास्तपस्सिद्धाः कृष्णद्वैपायनस्तथा । नारदः पर्वतश्चैव विश्वावसुहहाहुहूः ॥
तुंबुरुश्चित्रसेनश्च देवसेनश्च विश्रुतः । देवकन्या महाभाग दिव्याश्चाप्सरसा गणाः ॥
ऊर्वशी मेनका रंभा मिश्रकेशीरलंबुसा । विश्वाची च घृताची च पञ्चचूडा तिलोत्तमा ॥
आदित्या वसवो रुद्राः साश्विनः पितरोऽपि च । धर्मः श्रुतं तपो दीक्षा व्यवसायः पितामहः ॥
शर्वर्यो दिवसाश्चैव मारीचः काश्यपस्तथा । शतद्रुश्च विपाशा च चन्द्रभागा सरस्वती ॥
सिन्धुश्च देविका चैव प्रभास पुष्कराणि च । गङ्गा महानदी वेणी कावेरी नर्मदा तथा ॥
कुलंपुना विशल्या च करतोयांबुवाहिनी । सरयू गंडकी चैव लोहित्यश्च महानदः ॥

ताम्रारुणा चित्रवती पर्णाशा गोमती तथा ।
गोदावरी च वेणा च कृष्णवेणी तथा प्रिया ॥

दृषद्वती च कावेरी चक्षुर्मन्दाकिनी तथा । प्रयागं च प्रभास च पुण्यं नैमिशमेव च ॥
तच्च विश्वेश्वरं स्थानं यत्र तद्विमलं सरः । पुण्यतीर्थं च सलिलं कुरुक्षेत्रं प्रकीर्तितम् ॥
सिन्धूत्तमं तपोदानं जंबूमार्गमथापि च । हिरण्वती बितस्ता च तथा प्लक्षवती नदी ॥
वेदस्मृतिर्वेदवती मलवाथाश्मनद्यपि । भूमिभागास्तथा पुण्याः गङ्गाद्वारमथापि च ॥
ऋषिकुल्यास्तथा मेध्या नद्यस्सिन्धुवहास्तथा । चर्मण्वती नदी पुण्या कैशिकी यमुना तथा ।

नदी भीमरथी चैव बाहुदा च महानदी ॥

माहेन्द्रवाणी त्रिदिवा नीलिका च सरस्वती । नन्दा चापरनन्दा च तीर्थातीर्थमहाहृदः ॥
गया च फल्गुतीर्थं च धर्मारण्यं सुरैर्वृतम् । तथा देवनदी पुण्या सरश्च ब्रह्मनिर्मितम् ॥
पुण्यं त्रिलोकविख्यातं सर्वपापहरं शिवम् । हिमवान्पर्वतश्चैव दिव्यौषधिसमन्वितः ॥

मेरुर्महेन्द्रो मलयः श्वेतश्च रजताचलः । शृङ्गवान्मन्दरो नीलो निषधो दर्दुरस्तथा ॥
विन्ध्यो धातुविचित्राङ्गस्तीर्थवानौषधान्वितः । चित्रकूटोञ्जनाद्रिश्च पर्वतो गन्धमादनः ॥
पुण्यस्सोमगिरिश्चैव तथैवान्ये महीधराः । दिशश्च विदिशश्चैव क्षितिस्सर्वे महीधराः ॥
विश्वे देवा नभश्चैव नक्षत्राणि ग्रहास्तथा । पातु वस्सततं देवाः कीर्त्तिताः कीर्तिता मया ॥
कीर्तयानो नरो ह्येतान्मुच्यते सर्वकिल्बिषैः । स्तुवंश्च प्रतिनन्दंश्च मुच्यते सर्वतो भयात् ॥
सर्वसंकरपापेभ्यो देवतास्तवनन्दकः । देवतानन्तरं विप्रास्तपस्सिद्धास्तपोधिकान् ॥
कीर्तितान् कीर्तयिष्यामि सर्वपापप्रमोचनान् । यवक्रीतोऽथ रैभ्यश्च कक्षीवानौशिजस्तथा ॥
भृग्वङ्गिरास्तथा कण्वो मेधातिथिरथ प्रभुः । बर्ही च गुणसपन्नः प्राचीं दिशमुपाश्रिताः ॥
भद्रादिशं महाभागा उन्मुचुः प्रमुचुस्तथा । मुमुचुश्चमहाभागास्स्वस्त्यात्रेयश्च वीर्यवान् ॥
मित्रावरुणयोः पुत्रस्तथागस्त्यः प्रतापवान् । दृढायुश्चोर्ध्वबाहुश्च विश्रुतावृषिसत्तमौ ॥
पश्चिमा दिशमाश्रित्य य एधन्ते निबोध तान् । उषद्गुः सह सोदर्यैः परिव्याधश्च वीर्यवान् ॥
ऋषिर्दीर्घतमाश्चैव गौतमः काश्यपस्तथा । एकतश्च द्वितश्चैव तृतश्चैव महानृषिः ॥

अत्रेः पुत्रस्तु धर्मात्मा तथा सारस्वतः प्रभुः ।
उत्तरां दिशमाश्रित्य य एधन्ते निबोध तान् ॥

अत्रिर्वसिष्ठश्शक्तिश्च पाराशर्यश्च वीर्यवान् । विश्वामित्रो भरद्वाजो जमदग्निस्तथैव च ॥
ऋचीकपुत्रो रामश्च ऋषिरौद्दालकिस्तथा । श्वेतकेतुः कोहलश्च विपुलो देवलस्तथा ॥
देवशर्मा च धौम्यश्च हस्तिकाश्यप एव च । लोमशो नाचिकेतश्च लोमहर्षणिरेव च ॥
ऋषिरुग्रश्रवाश्चैव भार्गवश्च्यवनस्तथा । एष वै समवायस्ते ऋषिदेवसमन्वितः ॥
आद्यः प्रकीर्तितो राजन् सर्वपापप्रमोचनः । नृगो ययातिर्नहुषो यदुः पूरुश्च वीर्यवान् ॥
धुन्धुमारो दिलीपश्च सगरश्च प्रतापवान् । कृशाश्वो यौवनाश्वश्च चित्राश्वस्सत्यवांस्तथा ॥
दुष्यन्तो भरतश्चैव चक्रवर्ती महायशाः । यवनो जनकश्चैव तथा दृष्टरथो नृपः ॥
रघुर्नरवरश्चैव तथा दशरथो नृपः । रामो राक्षसहा वीरः शशिबिन्दुर्भगीरथः ॥
हरिश्चन्द्रो मरुत्तश्च तथा दृढरथो नृपः । महोदरो ह्यलर्कश्च ऐलश्चैव नराधिपः ॥
करंधमो नरश्रेष्ठः कम्मोरश्च नराधिपः । दक्षोऽम्बरीषः ककुत्स्थो रैवतश्च महारथः ॥
कुरुसंवरणश्चैव मान्धाता सत्यविक्रमः । मुचुकुन्दश्च राजर्षिः जह्नुर्जाह्नविसेवितः ॥

आदिराजः पृथुर्वैन्यो मित्रभानुः प्रियङ्करः । त्रसदस्युस्तथा राजा श्वेतो राजर्षिसत्तमः ॥
महाभिषश्च विख्यातो निमी राजा तथाष्टकः । आयुः क्षुपश्च राजर्षिः कक्षेयुश्च नराधिपः ॥
प्रतर्दनो दिवोदासः सुदासः कोसलेश्वरः । एलो नलश्च राजर्षि. मनुश्चैव प्रजापतिः ॥
हविध्रश्च पृषध्रश्च प्रतीपश्शान्तनुस्तथा । अजः प्राचीनबर्हिश्च तथेक्ष्वाकुर्महायशाः ॥
अनरण्यो नरपतिः जानुजङ्घस्तथैव च । कक्षसेनश्च राजर्षिः ये चान्ये चानुकीर्तिताः ॥
काल्यमुत्थाय यो नित्यं सन्ध्ये द्वे ऽस्तमनोदये । पठेच्छुचिरनावृत्तिः स धर्मफलभाग्भवेत् ॥
देवा देवर्षयश्चैव स्तुता राजर्षयस्तथा । पुष्टिमायुर्यशस्स्वर्गं विधास्यन्ति नरेश्वराः ॥

मा विघ्नं मा च मे पापं मा च मे परिपन्थिनः ।
ध्रुवो जयो मे नित्यं स्यात्परत्र च शुभा गतिः' ॥ इति ।

अत एव समुद्रलंघनादिमहाकार्याय प्रवृत्तो हनुमान् देवादीनां स्मरणं कृतवानिति प्रतिपादितं **सुन्दरकाण्डे**—

'स सूर्याय महेन्द्राय वरुणाय स्वयंभुवे ।
भूतेभ्यश्चाञ्जलिं कृत्वा चकार गमने मतिम्' ॥ इति ।

'नमोस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
'नमोस्तु रुद्रेन्द्रयमानिलेभ्यः नमोस्तु चन्द्रार्कमरुद्गणेभ्यः' ॥ इति ।

भूगोलश्रवणादेः महाफलत्वं च **भीष्मपर्वणि**—

'श्रुत्वेदं भरतश्रेष्ठ भूमिपर्व मनोनुगम् ।
श्रीमान्भवति राजन्यः सिद्धार्थः साधुसम्मतः' ॥ इति ।

एवं च प्रबलतररावणहननरूपमहाकार्याय प्रवृत्तस्य रामभद्रस्याभीष्टसाधकं भूगोलं श्रावयितुम्—

'नाहमस्मिन्प्रभुः कार्ये वानरेश न लक्ष्मणः । त्वमस्य हेतुः कार्यस्य प्रभुश्च प्लवगेश्वर ॥
त्वमेवाज्ञापय विभो मम कार्यविनिश्चयम् ।'

इति वचनेन रामेण स्वकार्यनिर्वाहकत्वेनोक्तस्य स्वस्यापि तत्कीर्तनेन सामर्थ्यं सपादयितुं भूगोलनिरूपणाभिप्रायेण गवेषणीयदेशविशेषाणां विशिष्य संकीर्तनं प्रयोजनवदेव ।

भूगोलश्च विस्तरेण प्रतिपादितो विष्णुपुराणे । **मैत्रेयः**—

'कथितो भवता ब्रह्मन् स्वर्गः स्वायंभुवस्य मे।
श्रोतुमिच्छाम्यहं त्वत्तः सकलं मण्डलं भुवः॥

यावंत सागरा द्वीपाः तथा वर्षाणि पर्वताः। वनानि सरित. पुर्यो देवादीनां तथा मुने।
यत्प्रमाणमिदं सर्वं यदाधारं यदात्मकम्॥
संस्थानमस्य च मुने यथावद्वक्तुमर्हसि।

**श्रीपराशरः** — मैत्रेय श्रूयतामेतत्संक्षेपाद्वदतो मम॥

नास्य वर्षशतेनापि वक्तुं शक्नोमि विस्तरात्। जम्बुप्लक्षाह्वयौ द्वीपौ शाल्मलश्चापरो द्विज॥
कुश॰ क्रौञ्चस्तथा काशः पुष्करश्चैव सप्तमः। एते द्वीपास्समुद्रैस्तु सप्त सप्तभिरावृताः॥
लवणेक्षुसुरासर्पिर्दधिदुग्धजलैस्समम्। जम्बूद्वीपस्समस्तानामेतेषां मध्यमास्थितः॥
तथापि मेरुर्मैत्रेय मध्ये कनकपर्वतः। चतुराशीतिसाहस्रैर्योजनैरस्य चोच्छ्रयः॥
प्रविष्टः षोडशाधस्ताद्द्वात्रिंशन्मूर्ध्नि विस्तृत॰। मूले षोडशसाहस्रो विस्तारस्तस्य सर्वतः॥
भूपद्मस्यास्य शैलोसौ कर्णिकाकारसंस्थितः। हिमवान्हेमकूटश्च निषधश्चास्य दक्षिणे॥
नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः। लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथा परे॥
सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते। भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम्।
हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज॥

रम्यकं चोत्तरं वर्षं तस्यैवानुहिरण्मयम्। उत्तराः कुरवश्चैव यथा वै भारतं तथा॥
नवसाहस्रमेकैकमेतेषां द्विजसत्तम। इलावृतं च तन्मध्ये तन्मध्ये मेरुरुच्छ्रितः॥
मेरोश्चतुर्दिशं तत्त नवसाहस्रविस्तरम्। इलावृतं महाभाग चत्वारश्चाल पर्वताः॥
विष्कंभा रचिता मेरोर्योजनायतमुच्छ्रिताः। पूर्वेण मन्दरो नाम दक्षिणो गन्धमादनः॥
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः। कदंबस्तेषु जम्बुश्च पिप्पलो वट एव च॥
एकादशशतायामाः पादपाः गिरिकेतवः। जंबूद्वीपस्य सा जंबूर्नामहेतुर्महामुने॥
महागजप्रमाणानि जंब्वास्तस्या फलानि वै। पतंति भूभृतः पृष्ठे शीर्यमाणानि सर्वतः॥
रसेन तेषां प्रख्याता तत्र जंबूनदीति वै। सरित्प्रवहते सापि पीयते तन्निवासिभिः॥
न स्वेदो नच दौर्गन्ध्यं न जरा नेन्द्रियक्षयः। तत्पानस्वस्थमनसां जनाना तत्र जायते॥
तीरमृत्तद्रसं प्राप्य सुखवायुविशोषिता। जांबूनदाख्यं भवति सुवर्णं सिद्धभूषणम्॥

भद्राश्वः पूर्वतो मेरोः केतुमालश्च पश्चिमे । वर्षे द्वे तु मुनिश्रेष्ठ तयोर्मध्यमिलाव्रतम् ॥
वनं चैत्ररथं पूर्वं दक्षिणं गन्धमादनम् । वैभ्राजं पश्चिमे तद्वत् उत्तरे नन्दनं स्मृतम् ॥
अरुणोदं महाभद्रमसिनोदं च मानसम् । सरांस्येतानि चत्वारि देवभोग्यानि सर्वदा ॥
शीतांभश्च कुमुद्वाश्च कुररी माल्यवांस्तथा । वैकंकप्रमुखा मेरोः पर्वतः केसराचलः ॥
त्रिकूटश्शिशिरश्चैव पतंगो रुचकस्तथा । निषधाद्या दक्षिणतस्तस्य केसरपर्वताः ॥
शिखिवासाः सवैडूर्यः कपिलो गन्धमादनः । जारुधिप्रमुखास्तद्वत्पश्चिमे केसराचलाः ॥
मेरोरनन्तरांगेषु जठरादिष्ववस्थिताः । शंकुकूपोऽथ ऋषभो हंसो नागस्तथापरः ॥
कलांजनाद्याश्च परे उत्तरे केसराचलाः । केसरास्तु शतोच्छ्रायास्तेऽशीतिपृथुलायताः ॥
चतुर्दशसहस्राणि योजनानि महापुरी । मेरोरुपरि मैत्रेय ब्रह्मणः प्रथिता दिवि ॥
तस्यास्समन्ततश्चाष्टौ दिशासु विदिशासु च । इन्द्रादिलोकपालानां प्रख्याताः प्रवराः पुरः ॥
विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् । समन्ताद्ब्रह्मणः पुर्यां गंग पतति वै दिवः ॥
सा तत्र पतिता दिक्षु चतुर्धा प्रतिपद्यते । सीता चालकनन्दा च चक्षुर्भद्रा च वै क्रमात् ॥
पूर्वेण शैलाच्छैलाश्च सिता यात्यन्तरिक्षगा । ततः पूर्वेण वर्षेण भद्राश्वेनैति सार्णवम् ॥
तथैवालकनन्दापि दक्षिणेनैत्य भारतम् । प्रयाति सागरं श्रुत्वा सत्यभेदा महामुने ॥
सुचक्षुः पश्चिमगिरीनतीत्य सकलांस्ततः । पश्चिमं केतुमालाख्यं वर्षं गत्वैति चार्णवम् ॥
भद्रा तथोत्तरगिरीनुत्तरांश्च तथा कुरून् । अतीत्योत्तरमंभोधिं समभ्येति महामुने ॥
आनीलनिषधायामौ माल्यवद्गन्धमादनौ । तयोर्मध्यगतो मेरुः कर्णिकाकारसंस्थितः ॥
भारतः केतुमालश्च भद्राश्वः कुरवस्तथा । पत्राणि लोकपद्मस्य मर्यादाशैलबाह्यतः ॥
जठरो देवकूटश्च मर्यादापर्वतावुभौ । तौ दक्षिणोत्तरायामा वानीलनिषधायतौ ॥
गन्धमादनकैलासौ पूर्ववच्चायतावुभौ । अशीतियोजनायामावर्णवान्तर्व्यवस्थितौ ॥
निषधः पारियात्रश्च मर्यादापर्वतावुभौ । मेरोः पश्चिमदिग्भागे यथापूर्वं तथा स्थितौ ॥
त्रिशृंगो जारुधिश्चैव उत्तरौ वर्षपर्वतौ । पूर्ववच्चायतावेतौ अर्णवान्तर्व्यवस्थितौ ॥
इत्येते मुनिवर्योक्ता मर्यादापर्वतास्तव । जठराद्यास्स्थिता मेरोरेषां द्वौ द्वौ चतुर्दिशम् ॥
मेरोश्चतुर्दिशं ये तु प्रोक्ताः केसरपर्वताः । शिताद्याश्च मुने तेषामतीव हि मनोहराः ॥
शैलानामन्तरद्रोण्यः सिद्धचारणसेविताः । सुरम्याणि तथा तासु काननानि पुराणि च ॥

लक्ष्मीर्विष्णवग्निसूर्यादिदेवानां मुनिसत्तम । तास्वायतनवर्याणि जुष्टानि वरकिन्नरैः ॥
गन्धर्वयक्षरक्षांसि तथा दैतेयदानवाः । क्रीडन्ति तासु रम्यासु शैलद्रोणीष्वहर्निशम् ॥
भौमा ह्येते स्मृताः स्वर्गाः धर्मिणामालया मुने । न तेषु पापकर्तारो यान्ति जन्मशतैरपि ॥
भद्राश्वे भगवान्विष्णुरास्ते हयशिरा द्विज । वराहः केतुमाले तु भारते कूर्मरूपधृत् ॥
मत्स्यरूपस्तु गोविन्दः कुरुष्वास्ते सनातनः । विश्वरूपेण सर्वत्र सर्वस्सर्वेश्वरो हरिः ॥
सर्वस्याधारभूतोऽसौ मैत्रेयास्तेऽखिलात्मकः । यानि किंपुरुषाद्यानि वर्षाण्यष्टौ महामुने ॥

न तेषु शोको नायासो नोद्वेगः क्षुद्भयादिकम् ।
स्वस्थाः प्रजा निरातङ्काः सर्वदुःखविवर्जिताः ॥

दशद्वादशवर्षाणां सहस्राणि स्थिरायुषः । न तेषु वर्षते देवो भौमान्यम्भांसि तेषु वै ॥
कृतत्रेतादिकानेव तेषु स्थानेषु कल्पना । सर्वेष्वेतेषु सर्वेषु सप्त सप्त कुलाचलाः ॥

नद्यश्च शतशस्तेभ्यः प्रसूता या द्विजोत्तम ।

### इत्यध्यायः

श्रीपराशरः —

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥
नवयोजनसाहस्रो विस्तारोऽस्य महामुने । कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम् ॥
महेन्द्रो मलयस्सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः ॥
अतस्संप्राप्यते स्वर्गो मुक्तिमस्मात्प्रयान्ति च । तिर्यक्त्वं नरकं चापि यान्त्यतः पुरुषा मुने ॥
इतस्स्वर्गश्च मोक्षश्च मध्यं चान्तश्च गम्यते । न खल्वन्यत्र मर्त्यानां कर्मभूमौ विधीयते ॥
भारतस्यास्य वर्षस्य नव भेदान्निशामय । इन्द्रद्वीपः कशेरुश्च ताम्रपर्णो गभस्तिमान् ॥

नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणः ।

अयं तु नवमस्तेषां द्वीपस्सागरसंवृतः । योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरः ॥

पूर्वे किराता यस्यान्ते पश्चिमे यवनाः स्थिताः ।
ब्राह्मणाः क्षत्रिया वैश्याः मध्ये शूद्राश्च भागशः ॥

इज्यायुद्धवणिज्याद्यैर्वर्तयन्तो व्यवस्थिताः । शतद्रूचन्द्रभागाद्याः हिमवत्पादनिस्सृताः ॥
वेदस्मृतिमुखाश्चान्याः पारियात्रोद्भवा मुने । नर्मदा सुरसाद्याश्च नद्यो विन्ध्याद्रिनिस्सृताः ॥
तापी पयोष्णी निर्विन्ध्याप्रमुखा ऋक्षसम्भवाः । गोदावरी भीमरथीकृष्णवेण्यादिकास्तथा ॥

सह्यपादोद्भवा नद्यः स्मृताः पापभयापहाः । कृतमाला ताम्रपर्णीप्रमुखा मलयोद्भवाः ॥
त्रिधामा ऋषिकुल्याद्या महेन्द्रप्रभवास्स्मृताः । ऋषिकुल्याकुमाराद्याः शुक्तिमत्पादसंभवाः ॥
आसां नद्युपनद्यश्च सन्त्यन्याश्च सहस्रशः । तास्विमे कुरुपाञ्चाला मध्यदेशादयो जनाः ॥
पूर्वदेशादिकाश्चैव कामरूपनिवासिनः । आन्ध्राः कलिङ्गा मगधा दाक्षिणात्याश्च कृत्स्नशः ॥
तथा परांताः सौराष्ट्राः शूद्राभीरास्तथार्बुदाः । मारुका मालवाश्चैव पारियात्रनिवासिनः ॥
सौवीरास्सैन्धवा हूणाः साल्वाः शाकलवासिनः । मद्रारामास्तथांबष्ठाः पारसीकादयस्तथा ॥
आसां पिबन्तः सलिलं वसन्ति सरितां सदा । चत्वारि भारते वर्षे युगान्यत्र महामुने ॥
कृतं त्रेता द्वापरं च कलिश्चान्यत्र न क्वचित् । तपस्तप्यन्ति यतयो जुह्वते चात्र यज्वनः ॥
दानानि चात्र दीयन्ते परलोकार्थमादरात् । पुरुषैर्यज्ञपुरुषो जम्बूद्वीपे सदेज्यते ॥
यज्ञैर्यज्ञमयो विष्णुरन्यद्वीपेषु चान्यथा । अत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ॥
यदा हि कर्मभूरेषा अतोन्या भोगभूमयः । अत्र जन्मसहस्राणां सहस्रैरपि सत्तम ॥

कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसंचयात् ।
गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषासुरत्वात् ॥

कर्माण्यसंकल्पिततत्फलानि सन्यस्य विष्णौ परमात्मरूपे ।
अवाप्य तां कर्ममहीमनन्ते तस्मिन् लयं ये त्वमलाः प्रयान्ति ॥

जानीम नैतत्क्व यन्ति नीले स्वर्गप्रदे कर्मणि देहबन्धम् ।
प्राप्स्याम धन्याः खलु ते मनुष्याः ये भारते नेन्द्रियशक्तिहीनाः ॥

नववर्षं तु मैत्रेय जम्बूद्वीपमिदं मया । लक्षयोजनविस्तारं संक्षेपात्कथितं तव ॥
जम्बूद्वीपं समावृत्य लक्षयोजनविस्तरः । मैत्रेय वलयाकारः स्थितः क्षारोदधिर्बहिः ॥

श्रीपराशर उवाच—

क्षारोदेन यथा द्वीपो जम्बुसंज्ञोऽभिवेष्टितः । संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः ॥
जम्बूद्वीपस्य विस्तार. शतसाहस्रसंमितः । स एव द्विगुणो ब्रह्मन् प्लक्षद्वीपोऽप्युदाहृतः ॥
सप्त मेधातिथेः पुत्रा प्लक्षद्वीपेश्वरस्य वै । ज्येष्ठश्शान्तभयो नाम शिशिरस्तदनन्तरः ॥
सुखोदयस्तथानन्दः शिवः क्षेमक एव च । ध्रुवश्च सप्तमस्तेषां प्लक्षद्वीपेश्वरा हि ते ॥

पूर्वं शान्तभयं वर्षं शिशिरं सुखदं तथा। क्षेमकं च शिवं चैव नन्दं च ध्रुवमेव च ॥
मर्यादाकारकास्तेषां तथान्ये वर्षपर्वताः। सप्तैव तेषां नामानि शृणुष्व मुनिसत्तम ॥
गोमदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा। सोमकः सुमनाश्शैलो वैभ्राजश्चैव सत्तमः ॥
वर्षाचलेषु रम्येषु वर्षेष्वेतेषु चान्यथा। वसन्ति देवगन्धर्वसहिताः सततं प्रजाः ॥
तेषु पुण्या जनपदाश्चिराच्च म्रियते जनः। नाधयो व्याधयो वापि सर्वकालसुखा हि ताः ॥
तेषां नद्यस्तु सप्तैव वर्षाणां तु समुद्रगाः। नामतस्ताः प्रवक्ष्यामि श्रुताः पापं हरन्ति याः ॥
अनुतप्ता शिखी चैव विपापा त्रिदिवा क्रमा। अमृता सुकृता चैव सप्तैतास्तत्र निम्नगाः ॥
एते शैलास्तथा नद्यः प्रधानाः कथितास्तव। क्षुद्रनद्यस्तथा शैलास्तत्र सन्ति सहस्रशः ॥
ताः पिबन्ति सदा हृष्टाः नदीर्जनपदास्तु ते। अपसर्पणं न तेषां वै न चैवोत्सर्पणं द्विज ॥
न त्वेवास्ति युगावस्था तेषु स्थानेषु सप्तसु। त्रेतायुगसमः कालः सर्वदैव महामुने ॥
प्लक्षद्वीपादिषु ब्रह्मन् शाकद्वीपान्तरेषु च। पञ्चवर्षसहस्राणि जना जीवन्त्यनामयाः ॥
धर्मः पञ्चस्वथैतेषु वर्णाश्रमविभागशः। वर्णास्तु तत्र चत्वारस्तान्निबोध महामुने ॥
आर्यकाः कुरकाश्चैव विदग्धा भाविनश्च ये। विप्रक्षत्रियवैश्यास्ते शूद्राश्च मुनिसत्तम ॥
जम्बूवृक्षप्रमाणस्तु तन्मध्ये सुमहांस्तरुः। प्लक्षस्तन्नामसंज्ञोऽयं प्लक्षद्वीपो द्विजोत्तम ॥
इज्यते तत्र भगवान् तैर्वर्णैरार्यकादिभिः। सोमरूपी जगत्स्रष्टा सर्वस्सर्वेश्वरो हरिः ॥
प्लक्षद्वीपप्रमाणेन प्लक्षद्वीपसमावृतः। तथैवेक्षुरसोदेन परिवेषानुकारिणा ॥
इत्येतत्तव मैत्रेय प्लक्षद्वीपमुदाहृतम्। संक्षेपेण मया भूयश्शाल्मलं मे निशामय ॥
शाल्मलस्येश्वरो वीरो वपुष्मांस्तत्सुतान् शृणु। एषां तु नामसंज्ञानि सप्तवर्षाणि तानि वै ॥
श्वेतोऽथ हरितश्चैव जीमूतो रोहितस्तथा। वैद्युतो मानसश्चैव सुप्रभाश्च महामुने ॥
शाल्मलेन समुद्रोऽसौ द्वीपेनेक्षुरसोदकः। विस्ताराद्द्विगुणेनाथ सर्वतस्संवृतः स्थितः ॥
तत्रापि पर्वतास्सप्त विज्ञेया रत्नयोनयः। वर्षाभिव्यञ्जकास्ते तु तथा सप्तैव निम्नगाः ॥
कुमुदश्चोन्नतश्चैव तृतीयश्च बलाहकः। द्रोणो यत्र महौषध्यस्स चतुर्थो महीधरः ॥
कङ्कस्तु पञ्चमष्षष्ठो महिषस्सप्तमस्तथा। ककुद्मान् पर्वतवरः सरिन्नामानि मे शृणु ॥

या निस्तोया वितृष्णा च वज्रा शुक्लावमोचनी।
निवृत्तिस्सप्तमी तासां स्मृतास्ताः पापशान्तिदाः ॥

श्वेतं च लोहितं चैव जीमूतं हारितं तथा । वैद्युतं मानसं चैव सुप्रभं चातिशोभनम् ॥
सप्तैतानि तु वर्षाणि चातुर्वर्ण्ययुतानि वै । शाल्मले ये तु वर्णाश्च वसन्त्येते महामुने ॥

कपिलाश्चारुणाः पीताः कृष्णाश्चैव पृथक् पृथक् ।
ब्राह्मणाः क्षत्रिया वैश्याश्शूद्राश्चैव यजन्ति तम् ॥

भगवन्तं समस्तस्य विष्णुमात्मानमव्ययम् । वायुभूतं मखश्रेष्ठैः यज्वानो यज्ञसंस्थितम् ॥
देवानामत्र सान्निध्यमतीव सुमनोरमे । शाल्मलश्च महावृक्षो नाम निर्वृतिकारकः ॥
एवं द्वीपस्समुद्रेण सुरोदेन समावृतः । विस्ताराच्छाल्मलस्यैव समेन तु समन्ततः ॥
सुरोदकः परिवृतः कुशद्वीपेन संवृतः । शाल्मलस्य तु विस्ताराद्द्विगुणेन समन्ततः ॥
ज्योतिष्मतः कुशद्वीपे सप्त पुत्रान् शृणुष्व तान् । उद्भिदो वेणुमाश्चैव स्वैरथो लंबनोद्धृतिः ॥
प्रभाकरोऽथ कपिलस्तन्नामा वर्षपद्धतिः । तस्यां वसन्ति मनुजैः सह दैतेयदानवाः ॥
तथैव देवगन्धर्वयक्षकिंपुरुषादयः । वर्णास्तत्रापि चत्वारो निजानुष्ठानतत्पराः ॥
दमिनश्शुष्मिगस्नेहान्मन्देहाश्च महामुने । ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चानुक्रमोदिताः ॥
यथोक्तकर्मकर्तृत्वात्स्वाधिकारक्षयाय च । तत्र ते तु कुशद्वीपे ब्रह्मरूपं जनार्दनम् ॥
यजन्तः क्षपयन्त्युग्रमाधिकारफलप्रदम् । विद्रुमो हेमशैलश्च द्युतिमान्पुष्पवास्तथा ॥
कुशेशयो हरिश्चैव सप्तमो मन्दराचल. । वर्षाचलाश्च सप्तैते तत्र द्वीपे महामुने ॥
नद्यश्च सप्त तासां तु नामानीमान्यनुक्रमात् । धूतपापा शिवा चैव पवित्रा संमिता तथा ॥
विद्युदम्भा मही यान्या सर्वपापहरास्त्विमाः । अन्याः सहस्रशस्तत्र क्षुद्रा नद्यस्तथाचलाः ॥
कुशद्वीपे कुशस्तम्बः संज्ञया तस्य तत्स्मृतम् । तत्प्रमाणेन स द्वीपो घृतोदेन समावृतः ॥
घृतोदश्च समुद्रो वै क्रौञ्चद्वीपेन सवृतः । क्रौञ्चद्वीपो महाभागः श्रूयतां चापरो महान् ॥
कुशद्वीपस्य विस्ताराद्द्विगुणो यस्य विस्तरः । क्रौञ्चद्वीपे द्युतिमतः पुत्राः सप्त महात्मनः ॥
तन्नामानि वर्षाणि तेषां चक्रे महीपतिः । कुशलो मानुषश्चोष्णः पीवरोथान्धकारकः ॥
मुनिश्च दुन्दुभिश्चैव सप्तैते तत्सुता मुने । तत्रापि देवगन्धर्वसेवितास्सुमनोरमाः ॥
वर्षाचला महाबुद्धे तेषां नामानि मे शृणु । क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः ॥
चतुर्थो रत्नशैलश्च स्वभाभिर्भासयन्नभः । दिवाधृक्पञ्चमश्चैव तथान्यः पुण्डरीकवान् ॥
दुन्दुभिश्च महाशैलो द्विगुणास्ते परस्परम् । द्वीपाद्द्वीपेषु ये शैला यथा द्वीपेषु ते तथा ॥
वर्षेष्वेतेषु रम्येषु वर्षशैलवरेषु च । निवसन्ति निरातङ्काः सह देवगणैः प्रजाः ॥

पुष्कराः पुष्कला धन्यास्तिष्याख्याश्च महामुने।
ब्राह्मणाः क्षत्रिया वैश्याश्शूद्राश्चानुक्रमोदिताः॥
ते तत्र नद्यो मैत्रेय याः पिबन्ति शृणुष्व ताः। सप्त प्रधानाश्शतशस्तत्रान्याः क्षुद्रनिम्नगाः॥
गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा।
ज्योतिश्च पुण्डरीका च सप्तैता वर्षनिम्नगाः॥
अत्रापि वर्णैर्भगवान्पुष्कराद्यैर्जनार्दनः। यागै रुद्रस्वरूपस्थ इज्यते यज्ञसन्निधौ॥
क्रौञ्चद्वीपस्समुद्रेण दधिमन्थोदकेन तु। आवृतस्सर्वतः क्रौञ्चो द्वीपतुल्येन मानतः॥
दधिमन्थोदकश्चैव शाकद्वीपेन संवृतः। क्रौञ्चद्वीपस्य विस्ताराद्द्विगुणेन महामुने॥
शाकद्वीपेश्वरस्यापि हर्यश्वस्य महात्मनः। सप्तैव तनयास्तेषां ददौ वर्षाणि सप्त सः॥
जलदश्च कुमारश्च सुकुमारो मणीचकः। कुसुमत्तस्समीकश्च सप्तमश्च महाद्रुमः॥
तत्संज्ञान्येव तत्रापि सप्तवर्षाण्यनुक्रमात्। तत्रापि पर्वतास्सप्त वर्षविच्छेदकारिणः॥
पूर्वस्तत्रोदयगिरिर्जलधारस्तथापरः। तथा रैवतकश्श्यामस्तथैवाम्भोगिरिर्द्विज॥
अम्बिकेयस्तथा रम्यः केसरी पर्वतोत्तमः। शाकस्तत्र महावृक्षः सिद्धगन्धर्वसेवितः॥
यत्पत्रवातसंस्पर्शादाह्लादो जायते परः। तत्र पुण्या जनपदाश्चातुर्वर्ण्यसमन्विताः॥
नद्यश्चात्र महापुण्याः सप्त पापभयापहाः। सुकुमारी कुमारी च नलिनी वेणुका च या॥
इक्षुश्च धेनुका चैव गभस्तिस्सप्तमी तथा। अन्यास्त्वयुतशस्तत्र क्षुद्रनद्यो महामुने॥
महीधरास्तथा सन्ति शतशोथ सहस्रशः। ताः पिबन्ति मुदा युक्ता जलदादिषु ये स्थिताः॥
वर्षेषु ते जनपदाः स्वर्गादभ्येत्य मेदिनीम्। धर्महानिर्न तेष्वस्ति न संघर्षः परस्परम्॥
मर्यादाव्युत्क्रमो वापि तेषु देशेषु सप्तसु। मगाश्च मगधाश्चैव मानसा मन्दगास्तथा॥
मगाः ब्राह्मणभूयिष्ठा मगधाः क्षत्रियास्तथा। वैश्यास्तु मानसास्तेषां शूद्रास्तेषां तु मन्दगाः॥
शाकद्वीपेषु तैर्विष्णुः सूर्यरूपधरो मुने। याज्ञिकैरिज्यते सम्यक् कर्मभिर्नियतात्मभिः॥
शाकद्वीपस्तु मैत्रेय क्षीरोदेन समन्ततः। शाकद्वीपप्रमाणेन वलयेनेव वेष्टितः॥
क्षीराब्धिः सर्वतो ब्रह्मन् पुष्कराख्येन वेष्टितः। द्वीपेन शाकद्वीपात्तु द्विगुणेन समन्ततः॥
पुष्करे सवनस्यापि महावीतोऽभवत्सुतः। धातकिश्च तयोस्तत्र द्वे वर्षे नामचिह्निते॥
महावीतं तथा चान्यद्धातकीषण्डसंज्ञितम्। एकश्चात्र महाभाग प्रख्यातो वर्षपर्वतः॥
मानसोत्तरसंज्ञो वै मध्यतो वलयाकृतिः। योजनानां सहस्राणि ऊर्ध्वं पञ्चाशदुच्छ्रितः॥

तावदेव च विस्तीर्णः सर्वतः परिमण्डलः। पुष्करद्वीपवलयं मध्येन विभजन्निव ॥
स्थितोऽसौ तेन विच्छिन्नं जातं वर्षद्वयं मुने। वलयाकारमेकैकं तयोर्वर्षं तथा गिरिः ॥
दश वर्षसहस्राणि तत्र जीवन्ति मानवाः। निरामया विशोकाश्च रागद्वेषविवर्जिताः ॥
अधमोत्तमौ न तेष्वास्तां न वध्यवधकौ द्विज। नेर्ष्यासूयाभयं रोषो दोषो लोभादिकञ्च ॥
महावीतं बहिर्वर्षं धातकीसंज्ञमन्ततः। मानसोत्तरशैलस्य देवदैत्यादिसेवितम् ॥
सत्यानृते न तत्रास्तां द्वीपे पुष्करसंज्ञिके। न तत्र नद्यश्शैला वा द्वीपे वर्षद्वयान्विते ॥
तुल्यवेषास्तु मनुजा देवैस्तत्रैकरूपिणः। वर्णाश्रमाचारहीनं धर्माधर्मविवर्जितम् ॥
त्रयीवार्तादण्डनीतिशुश्रूषारहितं च तत्। वर्षद्वयं तु मैत्रेय भौमस्स्वर्गोयमुत्तमः ॥
सर्वर्तुसुखदः कालो जरारोगविवर्जितः। पुष्करे धातकीषण्डे महावीते च वै मुने ॥
न्यग्रोधः पुष्करे द्वीपे ब्रह्मस्थानमनुत्तमम्। तस्मिन्निवसते ब्रह्मा पूज्यमानस्सुरासुरैः ॥
स्वादूदकेनोदधिना पुष्करः परिवेष्टितः। समेन पुष्करस्यैव विस्तारान्मण्डलात्तथा ॥
एवं द्वीपास्समुद्रैस्तु सप्त सप्तभिरावृताः। द्वीपाश्चैव समुद्राश्च समाना द्विगुणाः परे ॥
पयांसि सर्वदा सर्वसमुद्रेषु समानि वै। न्यूनातिरिक्तता तेषां कदाचिन्नैव जायते ॥
स्थालीस्थमग्निसंयोगादुद्रेकि सलिलं यथा। तथेन्दुवृद्धौ सलिलमम्भोधौ मुनिसत्तम ॥
अन्यूनानतिरिक्ताश्च वर्धन्त्यापो ह्रसन्ति च। उदयास्तमये त्विन्दोः पक्षयोश्शुक्लकृष्णयोः ॥
दशोत्तराणि पञ्चैव अंगुलानां शतानि वै। अपां वृद्धिक्षयो दृष्टस्समुद्राणां महामुने ॥
भोजनं पुष्करद्वीपे तत्र स्वयमुपस्थितम्। षड्रसं भुञ्जते विप्र प्रजास्सर्वास्तथैव हि ॥
स्वादूदकस्य पुरतो दृश्यते लोकसंस्थितिः। द्विगुणाप्यम्मयी भूमिः सर्वजन्तुविवर्जिता ॥
लोकालोकस्ततश्शैलो योजनायुतविस्तृतः। उच्छ्रूयेण च तावन्ति योजनान्यचलो हि सः ॥
ततस्तमस्समावृत्य तं शैलं सर्वतः स्थितम्। तमश्चाण्डकटाहेन समन्तात्परिवारितम् ॥
पञ्चाशत्कोटिविस्तारा सेयमुर्वी महामुने। सहैवाण्डकटाहेन सद्वीपाब्धिमहीधरा ॥

सेयं धात्री विधात्री च सर्वभूतगुणाधिका।
आधारभूता सर्वेषां मैत्रेय जगतामिति ॥ इति।

ज्योतिश्शास्त्रे तु भूगोलविस्तारः सिद्धान्तशिरोमणौ प्रश्नप्रतिप्रश्नरूपेणाभिहितः —

तथा च भूगोलविषये प्रश्नः —

भ्रमद्भचक्रचक्रान्तर्गगने गगनेचरैः । वृता धृता धरा केन येन नेयमियादधः ॥

किमाकारा कियन्माना नानाशास्त्रविचारणात् ।

कीदृग्द्वीपकुलाद्रीन्द्रसमुद्रैर्मुद्रितोच्यताम् ॥ (सि. सि. गो श्लो. १–२)

अस्योत्तरम् —

भूमेः पिण्डशशाङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्ष्या-
वृत्तैर्वृतोवृतस्सन्मृदनिलसलिलव्योमतेजोमयोऽयम् ।
नान्याधारस्स्वशक्त्या वियति च नियतं तिष्ठतीहास्यपृष्ठे
निष्ठं विश्वं च शश्वत्सदनुजमनुजादित्यदैत्यं समन्तात् ॥

भूवृत्तविषये सम्मतिः । आर्यभटः —

वृत्तभपञ्जरमध्ये कक्ष्यापरिवेष्टिनः खमापस्थः ।
मृज्जलशिखिवायुमयो भूगोलः सर्वतोवृत्तः ॥ (आर्यभटी. गो. श्लो. ७)

नभस्ययस्कान्त महामणीनां मध्ये स्थितो लोहगुडो यथास्ते ।
आधारशून्योऽपि तथैव सर्वाधारो धरित्र्याः स्थित एष गोलः ॥

सर्वतः पर्वतारामग्रामचैत्यचयैः श्रितः ।
कदम्बकुसुमग्रन्थिः केसरप्रकरैरिव ॥ (सि. सि. भूगो श्लो. ३)

पुराणेषु भूमेराधारपरम्परोक्ता, तान्निराकरोति —

मूर्तो धर्ता चेद्धरित्र्यास्तदन्यस्तस्याप्यन्योस्यैवमत्रानवस्था ।
अन्ते कल्प्या चेत्स्वशक्तिः किमाद्ये किन्नो भूमेः साष्टमूर्तेश्च मूर्तिः ॥
(सि. सि. भूगो श्लो. ४)

यथोष्णतार्कानलयोश्च शीतता विधौ द्रुतिः के कठिनत्वमश्मनि ।
मरुच्चलो भूरचला स्वभावतो यतो विचित्रा बत वस्तुशक्तयः ॥ (श्लो. ५)

प्रत्यक्षतया समा दृश्यते तद्दोषं निराकुर्वन्नाह —

समो यतः स्यात्परिधेः शतांशः पृथ्वी च पृथ्वी नितरां तनीयान् ।
नरश्च तत्पृष्ठगतस्य कृत्स्ना समेव तस्य प्रतिभात्यतस्सा ॥
(सि. सि. भूगो श्लो. १३)

इदानीं भूगोले पुरां निवेशमाह —

लङ्का कुमध्ये यवकोटिरस्याः प्राक् पश्चिमे रोमकपट्टणं च ।
अतस्ततस्सिद्धपुरं सुमेरुः सौम्योथ याम्ये बडवानलश्च ॥

कुवृत्तपादान्तरितानि तानि स्थानानि षट्कोणविदो वदन्ति ।
वसन्ति मेरौ सुरसिद्धसङ्घाः और्वे च सर्वे नरकास्सदैत्याः ॥

यो यत्र तिष्ठत्यवनीतलस्थमात्मानमस्या उपरिस्थितं च ।
स मन्यतेतः कुचतुर्थसंस्था मिथश्च ते तिर्यगिवामनन्ति ॥

अधःशिरस्काः कुदलान्तरस्थाः छायामनुष्या इव नीरतीरे ।
अनाकुलास्तिर्यगधःस्थिताश्च तिष्ठन्ति ते तत्र वयं यथात्र ॥

इदानीं द्वीपानां समुद्राणां च संस्थानमाह —

भूमेरर्धं क्षारसिन्धोरधस्थं जम्बूद्वीपं प्राहुराचार्यवर्याः ।
अर्धेन्यस्मिन्द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः ॥
( सि. सि. भूगो श्लो. २१ )

लवणजलधिरादौ दुग्धसिन्धुश्च तस्मात् अमृतममृतराशिश्श्रीश्च यस्माद्बभूव ।
महितचरणपद्मः पद्मजन्मादिदेवैः वसति सकलवासो वासुदेवश्च यत्र ॥

दध्नो घृतस्येक्षुरसस्य तस्मान्मद्यस्य च स्वादुजलस्य चान्त्यः ।
स्वादूदकान्तर्बडवानलोऽसौ पातालल्लोकाः पृथिवीपुटानि ॥ ( श्लो. २३ )

चञ्चत्फणामणिगणांशुकृतप्रकाशा एतेषु सासुरगणाः फणिनो वसन्ति ।
दीप्यन्ति .. दिव्यरमणीयदेहैः सिद्धाश्च तत्र च लसत्कनकावभासैः ॥

शाकं ततः शाल्मलमत्र कौशं क्रौञ्चञ्च गोमेदकपुष्करे च ।
द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति ॥

इदानीं जम्बूद्वीपमध्ये गिरिसन्निवेशवशेन नवखण्डान्याह —

लङ्कादेशाद्धिमगिरिरुदग्घेमकूटोऽथ तस्मात्तस्माच्चान्यो निषध इति ते सिन्धुपर्यन्तदीर्घाः ।
एवं सिद्धादुदक्पि च पुराच्छृङ्गवच्छुक्लनीलाः वर्षाण्येषां जगुरिह बुधा अन्तरद्रोणिदेशान् ॥

भारतवर्षमिदं ह्युदगस्मात् किन्नरवर्षमतो हरिवर्षम् ।
सिद्धपुराच्च तथा कुरु तस्मात् हिरण्मयरम्यकवर्षे ॥
माल्यवांश्च यवकोटिपत्तनात् रोमकश्च किल गन्धमादनः ॥
नीलशैलनिषधावधी च तावन्तरालमनयोरिलावृतम् ।
माल्यवज्जलधिमध्यवर्तियत्तत्तु भद्रतुरगं जगुर्बुधाः ॥
गन्धशैलजलराशिमध्यगं केतुमालकमिलाकलाविदः ।
निषधनीलसुगन्धकमाल्यकैरलमिलावृतमावृतमाबभौ ॥
अमरकेलिकुलायसमाकुलं रुचिरकाञ्चनचित्रमहीतलम् ।
इह हि मेरुगिरिः किल मध्यगः कनकरत्नमयस्त्रिदशालयः ॥
द्रुहिणजन्म कुपद्म च कर्णिकेति च पुराणविदोमुमवर्णयन् ॥
विष्कम्भशैलाः किल मन्दरोऽस्य सुगन्धिशैलो विपुल. सुपार्श्वः ।
तेषु क्रमात्सन्ति च केतुवृक्षाः कदम्बजम्बूवटपिप्पलाख्याः ॥
जम्बूफलामलगलद्रसतः प्रवृत्तजम्बूनदीरसयुतं मृदुशुक्लवर्णम् ।
जंबूनदं हि तदतः सुरसिद्धसंघाः शश्वत्पिबन्त्यमृतपानपराङ्मुखास्तम् ॥
वनं तथा चैत्ररथं विचित्रं तेष्वक्षरो नन्दननन्दनं च ।
धृत्याह्वयं यद्रतिकृत्सुराणा भ्राजिष्णु वैभ्राजमिति प्रसिद्धम् ॥
सरांस्यथैतेष्वरुणं च मानस महाह्रदं श्वेतजलं यथाक्रमात् ।
सरस्सुरामारमणश्रमालसाः सुरा रमन्ते जलकेलिलालसाः ॥
सद्रत्नकाञ्चनमयं शिखरत्रयं च मेरौ मुरारिक पुरारि पुराणि तेषु ।
तेषामध.शतमखज्वलनान्तकाख्यरक्षोंबुपानिलशशीशपुराणि चाष्टौ ॥
विष्णुपदी विष्णुपदात्पतिता मेरौ चतुर्धासात् । विष्कम्भाचलमस्तकशस्तसरस्संगता वियतः ॥
शीताख्या भद्राश्वं सालकनन्दा च भारतं वर्षम् ।
चक्षुश्च केतुमालं भद्राख्या चोत्तरान् कुरून् याता ॥
याकर्णितामिलषिता दृष्टा स्पृष्टावगाहिता पीता ।
उक्ता स्मृता स्तुता वा पुनाति बहुधापि पापिनः पुरुषान् ॥
यां चलिते दलिताखिलबन्धो गच्छति वल्गति तत्पितृसंघः ।
प्राप्ततटे विजितान्तकदूतः स्नाति नरो निरयात्सुरलोकम् ॥

इदानीं भारतवर्षमध्ये नवखण्डानि सप्तकुलाचलांश्चाह—

ऐन्द्रं कशेरुशकलं किल ताम्रपर्णमन्यद्गभस्तिमदतश्च कुमारिकाख्यम् ।
नागं च सौम्यमिह वारुणमन्त्यखण्डं गान्धर्वसंज्ञमिति भारतवर्षमध्ये ॥
वर्णव्यवस्थितिरिहैव कुमारिकाख्ये शेषेषु चान्त्यजजना निवसन्ति सर्वे ।
माहेन्द्रशुक्तिमलयर्क्षकपारियात्राः सह्यस्सविन्ध्य इह सप्त कुलाचलाख्याः ॥

इदानीं लोकव्यवस्थितिमाह—

भूर्लोकाख्यो दक्षिणे व्यक्षदेशात्तस्मात्सौम्योयं भुवः खश्च मेरुः ।
लभ्यः पुण्यैः खेमहस्याज्जनोतोनल्पानल्पैः स्वैस्तपस्सत्यमन्त्यः ॥
लङ्कापुरेर्कस्य यदोदयः स्यात्तदा दिनार्धं यवकोटिपुर्याम् ।
अधस्तदा सिद्धपुरेऽस्तकालः स्याद्रोमके रात्रिदलं तदैव ॥
यत्रोदितोर्कः किल तत्र पूर्वा तत्रापरा यत्र गतः प्रदिष्टम् ।
तन्मत्स्यतान्येच ततोखिलानां उदक्स्थितो मेरुरिति प्रसिद्धम् ॥

इदानीं भचक्रभ्रमणव्यवस्थामाह—

निरक्षदेशे क्षितिमण्डलोपगौ ध्रुवौ नरः पश्यति दक्षिणोत्तरौ ।
तदाश्रितं खे जलयन्त्रवत्तथा भ्रमद्भचक्रं निजमस्तकोपरि ॥
सौम्यं ध्रुवं मेरुमताः खमध्ये याम्यं च दैत्या निजमस्तकोर्ध्वे ।
सव्यापसव्यभ्रमदृक्षचक्रं विलोकयन्ति क्षितिजप्रसक्तम् ॥

इदानीं भूपरिधिमानमाह सूर्यसिद्धान्ते—

'योजनानि शतान्यष्टौ भूकर्णो द्विगुणानि तु । तद्वर्गतो दशगुणात्पदं भूपरिधिः स्मृतः ॥
प्रोक्तो योजनसंख्यया कुपरिधिस्सप्ताङ्गनन्दाब्धय-
स्तद्व्यासः कुभुजङ्गसायकभुवस्सिद्धांशकेनाधिकः ।
पृष्ठक्षेत्रफलं तथा युगगुणत्रिंशच्छराष्टादयो
भूमेः कन्दुकजालवत्कुपरिधिव्यासाहतेः प्रस्फुटम् ॥'

अथ ब्रह्माण्डगोलमाह—

'भूभूधरत्रिदशदानवमानवाद्याः ये याश्च धिष्ण्यगगनेचरचक्रकक्षाः ।
लोकव्यवस्थितिरुपर्युपरि प्रतिष्ठा ब्रह्माण्डभाण्डजठरे तदिदं समस्तम् ॥

कोटिघ्नैर्नखनन्दषट्कनखभूभूभृद्भुजङ्गेन्दुभि-
ज्योतिश्शास्त्रविदो वदन्ति नभसः कक्षामिमां योजनैः ।
तद्ब्रह्माण्डकटाहसंपुटतटे केचिज्जगुर्वेष्टनं
केचित्प्रोचुरदृश्यदृश्यकगिरिं पौराणिकाः सूरयः ॥
करतलकलितामलकवदमलं सकलं वदन्ति ये गोलम् ।
दिनकरनिकरनिहततमसो नभसः परिधिरुदितस्तैः ॥'

भूगोलज्ञाने फलमाह— सूर्यसिद्धान्ते —

'ग्रहनक्षत्रचरितं ज्ञात्वा गोलं च तत्वतः । ग्रहलोकमवाप्नोति पर्यायेणात्मवान्नरः ॥'

तत्रैव — 'इत्येतदखिलं प्रोक्तं देवानामपि दुर्लभम् ।
विदित्वैतदशेषेण परं ब्रह्माधिगच्छति ॥' इति ।

**भीष्मपर्वण्यपि —**

'श्रुत्वेदं भरत श्रेष्ठं भूमिपर्व मनोनुगम् । श्रीमान्भवति राजन्यः सिद्धार्थः साधुसम्मतः ॥
आयुर्बलं च कीर्तिश्च तस्य तेजश्च वर्धते । यश्शृणोति महीपाल पर्वणीदं यतव्रतः ॥
प्रीयन्ते पितरस्तस्य तथैव च पितामहाः' इति ॥

इत्थं रामः शत्रुविजयप्रदभूगोलश्रवणमिव मधुमांसवर्जनरूपं तपश्चरणमपि सीता-वियोगजनितदुःखव्याजेन कृतवानिति प्रतिपादितं **सुन्दरकाण्डे —**

न मांसं राघवो भुङ्क्ते न चापि मधु सेवते । वन्यं सुविहितं नित्यं भक्तमश्नाति पञ्चमम् ॥
नैव दंशान्न मशकान्न कीटान्न सरीसृपान् । राघवोपनयेद्गात्रात्त्वद्गतेनान्तरात्मना' इति ॥

तस्माच्छत्रुवधे सामर्थ्यसम्पादनाय विजयप्रदभूगोलश्रवणाय विशिष्य संकीर्तनमुपपन्नमेव ।

**सप्तचत्वारिंशाष्टचत्वारिंशयोः —** ततो विनतशतबलिसुषेणप्रमुखाः प्राच्यादिदिक्षु यथाराजसन्देशं अन्विष्य तत्र तत्र सीतां अपरिज्ञाततद्वृत्तान्ताः संकेतितसमयानतिक्रमेण सुग्रीवनिकटमागत्य न दृष्टा जानकीत्यवोचन् । दक्षिणाशाभिमुखास्त्वंगदप्रमुखा गिरिकन्दरकाननदीपुलिनानि सर्वतो विचित्य अलब्धमनोरथाः परिश्रान्ताः कचिद्वृक्षमूले निषेदुः ॥

**एकोनपञ्चाशपञ्चाशयोः —**

ततो विषण्णमानसान्वानरांस्तांस्तारकेयस्तत्कालोचितमित्थमाचचक्षे —

**अनिर्वेदं च दाक्ष्यं च मनसश्चापराजयम् ।**
**कार्यसिद्धिकराण्याहुस्तस्मादेतद्ब्रवीम्यहम् ॥**

अनेनानिर्वेदादयः कार्यसिद्धिकरा इत्युक्तम् । तथा **चोद्योगे** विदुरः —

अनिर्वेदः श्रियो मूलं धर्मस्य च सुखस्य च । महान्भवत्यनिर्विण्णो भयं न महदृच्छति ॥

नातश्श्रीमत्तरं किंचिद्दृष्टं पथ्यतमं तथा । इति ।

**सुग्रीवः कोपनो राजा तीक्ष्णदण्डश्च वानरः ।**
**भेतव्यं तस्य सततं रामस्य च महात्मनः ॥**

अनेन तीक्ष्णदण्डात्प्रभोः सर्वे बिभ्यतीति सूचितम् । तथाच **कामन्दकः** —

प्रतापयुक्तात्त्रस्यन्ति परे सिंहान्मृगा इव, इति ।

प्राचीना अपि 'सर्वे चण्डस्य बिभ्यतीति'। अतोऽस्माभिरविगणय्य क्षुत्पिपासादिपरिश्रमं भूयोपि विचेतव्या दरीकन्दरवनेषु सीतेति विचिन्त्य पुनः पुनर्नदीगिरिकन्दरान्विचिन्वन्तः अधिरुह्य रजतगिरिं तत्र सप्तपर्णलोध्रवनानि दरीश्चावलोक्य अलब्धमनोरथाः विंध्यभूधरोपत्यकायां क्वचित्क्षुत्पिपासापरिश्रान्ताः भूविवरनिर्गतैः सलिलक्लिन्नपक्षैः सारसचक्रवाकक्रौञ्चगणैरनुमितजलाशयाः परस्परपरिगृहीतबाहवः गाढान्धकारसमावृतं तद्बिलं प्रविश्य भृशं परितप्यमानाः कथमपि योजनमात्रमतिक्रम्य तत्रत्यविचित्रतरजांबूनदमयगोपुरप्राकारसौधजालसमलंकृतां सौवर्णवनगिरिमृगविहगोपशोभितां पुरीमदूरतः चीरकृष्णाजिनधरां नियताहारां काञ्चित्तापसीं चाभिवीक्ष्य विस्मयाविष्टमानसाः तामेव तापसीमुपतस्थुः ॥

**एकपञ्चाशे —**

**ततश्च** प्रणामपूर्वकं कस्येयं सौवर्णमृगनगविहगोपशोभिता पुरी? त्वं वा **कस्य?** **कासीति** हनुमता पृष्टा तापसी तपश्चर्याप्रसादितपितामहवरलब्धौशनसधनो मयाभिधो दानवो गीर्वाणविस्मयास्पदं हर्म्यप्रासादपरिष्कृतामिमां पुरीं निर्माय सुखमत्रैव भोगान् भुञ्जानः कदाचन हेमाभिधस्वर्वेश्यासक्तिकुपितेन पुरन्दरेण अशनिनिहतो बभूव । ततो हेमायै ब्रह्मदत्तां तया च सख्या मद्वशे स्थापितां इमां पुरीं तथैव लब्धवरा मेरुसावर्णिदुहिता स्वयंप्रभाभिधाहं तदाज्ञया रक्षामि । भवतामप्यत्र किं कार्यं ? किमर्थश्चैतद्बिलप्रवेशः? तदखिलमपि ज्ञातुमिच्छामि —

**इमान्यभ्यवहाराणि मूलानि च फलानि च ।**
**भुक्त्वा पीत्वा च पानीयं सर्वं मे वक्तुमर्हथ ॥**

अनेन समागतमतिथिमन्नपानादिभिरभिपूज्य परिहृतश्रममेव वृत्तान्तं पृच्छेदिति सूचितम्। अत एव **मोक्षधर्मे** उञ्छवृत्त्युपाख्याने—

कदाचिदतिथिः प्राप्तो ब्राह्मणस्सुसमाहितः। स तस्मै सत्क्रियां चक्रे क्रियायुक्तेन हेतुना ॥
विश्रान्तं सुसमासीनमिदं वचनमब्रवीत्। इति।

**पराशरोपि** भोजनानन्तरमेव प्रश्नमुक्तवान्—

अतिथिं तत्र संप्राप्तं पूजयेत्स्वागतादिना। तथासनप्रदानेन पादप्रक्षालनेन च ॥
श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च। गच्छतश्चानुयातेन प्रीतिमुत्पादयेद्गृही। इति।
इत्यभिधाय संपूज्य चान्नपानादिभिः—

**अथ तानब्रवीत्सर्वान्विश्रान्तान्हरियूथपान्।**
**वानरा यदि वः खेदः प्रणष्टः फलभक्षणात् ॥**

**यदि चैतन्मया श्राव्यं श्रोतुमिच्छामि कथ्यताम्, इति।**

अनेन पररहस्यं निर्बन्धेन न पृच्छेदिति सूचितम्। तथा**चोत्तरकाण्डे** अगस्त्यं प्रति रामः—

केन वा कारणेनैष रावणादतिरिच्यते। शक्यं यदि मया श्रोतुं न खल्वाज्ञापयामि वः ॥
यदि गुह्यं न चेद्वक्तुं श्रोतुमिच्छामि कथ्यताम्, इति ॥

**द्विपञ्चाशत्रिपञ्चाशयोः**—

ततस्तत्कृतसपर्यया परिहृतश्रमेषु वानरेषु हनूमता स्वागमनवृत्तान्तमखिलमपि यथावदावेद्य शरणागतानस्माननभिज्ञातनिर्गमनोपायान्पाहीति प्रार्थितया स्वयंप्रभया तत्प्रदेशात्समुत्तारितविन्ध्यदेशपर्यन्तमागता वानराः प्रफुल्लतरवासन्तिकलतादिभिस्संप्राप्तान् वासन्तिकवासरानभिज्ञाय पराजितसंकेतितकालोऽस्माकमतिक्रान्त इति भीताः—

**अदृष्टायां च वैदेह्यां दृष्ट्वास्मांश्च समागतान्।**
**राघवप्रियकामाय घातयिष्यत्यसंशयम् ॥**

अनेन राजाज्ञप्तकार्यमकृत्वा तत्पार्श्वगमनमनुचितमिति सूचितम्। तथा च **कालिदासः**—

भवानपीदं परवानवैति महान्हि यत्नस्तव देवदारौ ।
स्थातुं नियोक्तुर्नहि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ॥ इति ।

**न क्षमं त्वपराद्धानां गमनं स्वामिपार्श्वतः ।**

अनेन राजशासनभंगकर्तुर्दण्ड इति सूचितम् । तथाच **राजधर्मे—**

'हन्तव्या एव ते राजन्राजशासनदूषकाः' इति ।

**तस्मिन्नतीते काले तु सुग्रीवेण कृते स्वयम् ।**
**अप्रवृत्तौ च सीताया पापमेव करिष्यति ॥**

अत्रापराधिनामकृतकार्यत्वं दोष इत्युक्त्या कृतकार्याणामपराधो न दोष इति सूचितम् । तथाच **सुन्दरकाण्डे** दधिमुखं प्रति सुग्रीवः—

प्रीतोऽस्मि सौम्य यद्भुक्तं वानरैः कृतकर्मभिः ।
मर्षितं मर्षणीयं च चेष्टितं कृतकर्मणाम् ॥ इति ।

**इहैव सीतामन्विष्य प्रवृत्तिमुपलभ्य वा ।**
**नो चेद्गच्छाम तं वीरं गमिष्यामो यमक्षयम् ॥**

इत्यवोचत् । तदनु—

**प्लवङ्गमानां तु भयार्दितानां श्रुत्वा वचस्तार इदं बभाषे ।**
**अलं विषादेन बिलं प्रविश्य वसाम सर्वे यदि रोचते वः ॥**

**इदं हि मायाविहितं सुदुर्गमं प्रभूतवृक्षोदकभोज्यपेयम् ।**
**इहास्ति नो नैव भयं पुरन्दरात् न राघवाद्वानरराजतोऽपि वा ॥**

**श्रुत्वाङ्गदस्यापि वचोनुकूलं ऊचुश्च सर्वे हरयः प्रतीताः ।**
**यथा न हन्येम तथा विधानं असक्तमद्यैव विधीयतान्नः ॥' इति ।**

**चतुःपञ्चाशे—**

**तथा ब्रुवति तारे तु ताराधिपतिवर्चसि ।**
**अथ मेने हृतं राज्यं हनुमानङ्गदेन तत् ॥**

**बुद्ध्या ह्यष्टाङ्गया युक्तं चतुर्बलसमन्वितम् ।**
**चतुर्दशगुणं मेने हनुमान्वालिनस्सुतम् ॥**

अत्राष्टाङ्गबुध्या उपेत इत्युक्तं । बुध्यङ्गानि च श्रवणार्हस्य श्रोतुमिच्छा, अनन्तरं तच्छ्रवणं, ततस्तदर्थग्रहणं. गृहीतस्यार्थस्याविस्मरणं, अविस्मृतस्य चार्थस्य विविधसाध्यसाधनस्वरूपविज्ञानं, ज्ञातस्य चोपपत्तिभिर्विचारः, अनुपपन्नस्य त्यागः, ततो वस्तुस्वभावनिर्णयः इत्यष्टौ । त दुक्तं कौटिल्येन— 'शुश्रूषा श्रवण ग्रहण धारण ऊहापोह तत्वाभिनिवेशाः प्रज्ञागुणा' इति ।

कामन्दकेऽपि —

'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।
ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः' ॥ इति ।

अत्रार्थक्रमाद्धारणानन्तरमेव वक्तव्यमप्यर्थविज्ञानं श्लोकसौकर्यायोहापोहानन्तरं पठितम् । अथवा बुध्या अष्टाङ्गया सेनया च युक्तमित्यर्थः । सेनाङ्गानि च, गजाः, अश्वाः, शतघ्न्यः, प्राकारः, खड्गाद्यायुधानि, रथाः, पदातयो, धनानीति । तदुक्तं नीतिशास्त्रे —

हस्त्यश्वयन्त्रावरणायुधानि रथाः पदातिर्द्रविणं तथापि ।
एतानि सम्यक् समवाप्य राजा शक्तस्समस्तां पृथिवीं विजेतुम् ।। इति ।

चतुर्बलसमन्वितम् — मौलश्रेण्याटविकभृत्यरूपम् । अथवा, बाहुबल, मनोबल, उपायबल, बन्धुबलानि । अथवा राज्ञामावश्यकेषु बाहुबलामात्यबल, धनबल, पितृपैतामहप्रसिद्धिबल, प्रज्ञाबलात्मकेषु पञ्चसु चतुर्विधबलोपेतमिति वा । पञ्चबलानि च विदुरप्रज्ञाकरे —

बलं पञ्चविधं नित्यं पुरुषाणां निबोध मे । यत्तद्बाहुबलं नाम प्रथमं बलमुच्यते ॥
अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते । धनलाभात्तृतीयं तु बलमाहुर्जिगीषवः ॥
यत्तस्य सहजं राजन्पितृपैतामहं बलम् । अभिजातं बलं नाम चतुर्थं बलमुच्यते ॥
येन त्वेतानि सर्वाणि संगृहीतानि भारत । यद्बलानां बलं श्रेष्ठं प्रज्ञानं बलमुच्यते' ॥ इति ।

चतुर्दश गुणाश्च —

देशकालज्ञता दार्ढ्यं सर्वक्लेशसहिष्णुता । सर्वविज्ञानता दाक्ष्यं ऊर्जस्संवृतमन्त्रता ॥
अविसंवादिता शौर्यं शक्तिज्ञत्वं कृतज्ञता । शरणागतवात्सल्यममर्षित्वमचापलम् ॥' इति ।

आपूर्यमाणं शश्वच्च तेजोबलपराक्रमैः ।

शशिनं शुक्लपक्षादौ वर्धमानमिव श्रिया ॥

बृहस्पतिसमं बुध्या विक्रमैस्सदृशं पितुः ।
शुश्रूषमाणं तारस्य शुक्रस्येव पुरन्दरम् ॥

भर्तुरर्थे परिश्रान्तं सर्वशास्त्रविशारदम् ।
अभिसन्धातुमारेभे हनुमानङ्गदं ततः ॥

स चतुर्णामुपायानां तृतीयमुपवर्णयन् ।
भेदयामास तान्सर्वान्वानरान्वाक्यसम्पदा ॥

अत्र सामदानभेददण्डाश्चत्वार उपायाः । तेषु तृतीयेन भेदाभिधेनोपायेन हनुमान्वानरान्भेदयामासेत्युक्तम् । चत्वारश्चोपायाः प्रसिद्धा **अमरकोशे**—

'सामदाने भेददण्डावित्युपायचतुष्टयमिति' ।

**कामन्दके** तु सप्तोपाया उक्ताः—

'साम दानं च भेदश्च दण्डश्चेति चतुष्टयम् ।
मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः' इति ।

'परानुद्वेगकारिणी वाक्सामेत्युच्यते बुधैः ।'

तथाच **कामन्दके**—

वागनुद्वेगजननी सामेति परिकीर्तिता ।' इति ।

तच्च साम परस्परोपकारकीर्तन, गुणकीर्तन, संबन्धकथनायतिप्रकाशन, स्वकीयत्वप्रतिपादनभेदेन पञ्चविधम् । तथाच **कामन्दकः**—

'परस्परोपकाराणां कीर्तनं गुणकर्मणाम् । संबन्धस्य समाख्यानमायत्याः संप्रकाशनम् ॥
वाचा पेशलया साधु तवाहमितिचार्पणम् ।
इति सामप्रयोगज्ञैः साम पञ्चविधं स्मृतम् ॥' इति ।

इदं च सामावश्यं प्रयोक्तव्यं, अप्रयोगे अनिष्टप्रसंगात् प्रयोगेऽभ्युदयाच्च । तथाच **कामन्दकः**—

प्रविशन्निव चेतांसि नृणां साधु पिबन्निव । स्रवन्निवामृतं सोम आयुञ्जीत प्रियं वचः ॥
निजघ्निरे धार्तराष्ट्राः सामप्रद्वेषिणोचिरात् ।
क्षीरोदो मथितस्साम्ना फलायामरदानवैः ॥ इति ।

अलस परिश्रान्त व्याधिष्ठ भीत मूर्ख स्त्री बाल धार्मिक दुर्जन मैत्रीप्रधान कल्याणबुद्धयः सान्त्वनीयाः। तथा च **कामन्दकः**—

अलसं विक्रमश्रान्तं विहितोपायचेष्टितम्। क्षुतव्याधाप्रसारैस्तु सन्तप्तं परिविह्वलम्॥

भीतं मूर्खं स्त्रियं बालं धार्मिकं दुर्जनं पशुम्।
मैत्रीप्रधानं कल्याणबुद्धिं सान्त्वेन सन्नयेत्॥ इति।

दानमपि द्रव्यदातुः तद्द्रव्यानुरूपद्रव्यदानं, परेण बलाद्गृहीतस्यार्थस्यानुमोदनं, अपूर्वद्रव्यदानं, परस्य द्रव्यप्राप्त्यनुकूलव्यापारोपदेशादि, परेण देयस्य ऋणादेः परित्याग इति पञ्चविधम्। तदुक्तं **कामन्दके**—

यत्सम्प्राप्तधनोत्सर्ग उत्तमाधममध्यमः। प्रतिमानं तथा तस्य गृहीतस्यानुमोदनम्॥
द्रव्यदानमपूर्वं च स्वयंग्राहप्रवर्तनम्। देयस्य प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम्॥ इति।

तच्च दानं विग्रहे सति तत्प्रशमनाय कर्तव्यं, करणे अभ्युदयादकरणेऽनिष्टप्रसङ्गाच्च। तथा च **कामन्दकः**—

शत्रूणां विग्रहं विद्वान् दानेन प्रशमं नयेत्। इन्द्रापचारः शुक्रस्य दानेन शममीयिवान्॥
अपराधेन दुहितुः कुपिते भृगुनन्दने। वृषपर्वा प्रदानेन दानवेन्द्रोऽभवत्सुखी॥

उद्गच्छतापि दातव्यं बलिने शान्तिमिच्छता।
समूल एव गान्धारिरप्रयच्छन् गतः क्षयम्॥ इति।

भेदोऽपि, स्नेहरागविघातः कलहोत्पादनं, भीतिजननं चेति त्रिविधः। तदुक्तं **कामन्दके**—

स्नेहरागापनयनं संघर्षोत्पादनं तथा। सन्तर्जनं च भेदज्ञैर्भेदस्तु त्रिविधः स्मृतः॥ इति।

स च भेदः प्रच्छन्नत्वेषेण पुरुषेण उभयपक्षवेतनग्राहिणा यथाभिलषितप्रदानपरिलोभनपूर्वकं धनरहिते, लुब्धे, अवमानिते, मानिनि, कोपिते, कोपशालिनि, स्वयंभीते, भीषिते च कर्तव्यः। तदुक्तं **कामन्दके**—

'किञ्चित्प्रच्छन्नभृतः स्यात्तृष्णया परिलोभयन्। भिन्द्याच्चतुर्विधान्भेद्यान्प्रविश्योभयवेतनः॥

अलब्धविषयो लुब्धो मानी चाप्यवमानितः।
क्रुद्धश्च कोपितोऽकस्मात् तथा भीतश्च भीषितः॥
यथाभिलषितैः कामैर्भिन्द्यादेतांश्चतुर्विधान्।' इति।

अयं च भेदः मन्त्र्यमात्यपुरोधसां प्रथमतः कर्तव्यः, अनन्तरं युवराजस्य, तदनु तत्कुलीनस्य, अथवा तत्परिसरवर्तिनोऽत्यन्तावश्यकस्य भेदः कर्तव्यः। तदुक्तं **कामन्दके**—

'भेदं कुर्वीत यत्नेन मन्त्र्यमात्यपुरोधसाम्। तेषु भिन्नेषु भेदो हि युवराजे तथोर्जिते ॥
अमात्यो युवराजश्च भुजावेतौ महीपतेः। मन्त्री नेत्रं हि भिन्नेऽस्मिन्नेति कस्मान्न तद्विदाम् ॥
सर्वावस्थं हि मेधावी तत्कुलीनं विकारयेत्। विकृतस्तत्कुलीनस्तु स्वयोनिं गृह्यतेग्निवत् ॥
तत्कुलीनेन तुल्यस्तु पुमानभ्यन्तरोषितः। तस्मादेतौ परौ भिन्द्याच्छमं चात्मनि साधयेत् ॥
तत्नोपजापः कर्तव्यो यः कोपानुग्रहक्षमः।' इति।

भेद्यानाह **कामन्दकः**—

पूर्वं सम्मानितो नीचः कालयापनमाश्रितः। मिथ्याभिशप्तः श्रीकामः आहूयाप्रतिमानितः ॥
राजद्वेषी तत्कुलीनो द्विष्यते यश्च भूभुजा। अहितव्यवसायश्च तथाकारनिषेविता ॥
रणप्रियस्साहसिक आत्मसम्भावितस्तथा। विच्छिन्नधर्मकामार्थः क्रुद्धो मानी विमानितः ॥
भीतः स्वदोषवित्रस्तः कृतवैरोऽभिमान्वितः। अतुल्येन सहायस्तु तुल्यमाननिराकृतः ॥
अकारणान्निरुद्धश्च कारणाच्च विशेषतः। अकारणात्परित्रस्तः पूजार्होऽप्रतिपूजितः ॥
हृतद्रव्यकलत्रश्च महाभोगाभिकाङ्क्षिता। परिक्षीणो बहिर्बन्धुर्बहिर्द्रव्याम्बराश्रयः ॥
इति भेद्यास्समाख्याताः भिन्द्यादेतान्पुरे स्थितान् ॥ इति।

भेदेन समानीतान् अभीष्टदानादिना सम्यक् पूजयेत्। तथा च **कामन्दकः**—

आगतान्पूजयेत्कामैः निजांश्च परिसान्त्वयेत् ॥ इति ॥

अयं च भेदो बलवद्विरोधे सति कर्तव्यः। तथा च **कामन्दकः**—

भेदं कुर्वीत मतिमान् विगृहीतो बलीयसा।
शण्डामर्कौ सुरैर्भित्वा बलवन्तौ पराजितौ ॥ इति।

सामभेदावुभावपि दानपुरस्सरौ कर्तव्यौ। तदाह **कामन्दकः**—

सामदानौ च कर्तव्यौ साधुद्दानपुरस्सरौ। दानेन हि समायुक्तावेतावर्थस्य सिद्धये ॥
दानरिक्तेन सर्वत्र साम्ना कृत्यं भृशेन वा।
निर्दानसाम नाप्नाति कलत्रेष्वपि संस्थितिम् ॥ इति।

दण्डोऽपि द्विविधः, प्रकाशाप्रकाशभेदात्। तथा च **कामन्दके** —

प्रकाशश्चाप्रकाशश्च दण्डो द्विविध इष्यते। प्रकाशदण्डान्कुर्वीत लोकद्विष्टांस्तथा रिपून्॥

उद्विजेतेह यैर्लोको ये वश्या राजवल्लभाः।
बाधन्तेऽभ्यधिकं चापि तेषूपांशु प्रवर्तते॥ इति।

अयं च दण्डः परिसरभेदनानन्तरमेव शत्रुषु प्रयुक्तः फलति। तथा च **कामन्दकः** —

दण्डेन हि समाहन्याद्भित्वा परिसरं बलात्। भिन्ने हि तत्काष्ठमिव घुणजग्धं विशीर्यते॥
उत्साहदेशकालैस्तु संयुक्तस्तु सहायवान्। युधिष्ठिर इवात्यर्थं दण्डेनास्तम्भयेदरीन्॥

आत्मानं शक्तमुद्वीक्ष्य दण्डमस्याधिकल्पयेत्।
एकाकी सत्वसम्पन्नो रामः क्षत्रं पुरावधीत्॥ इति।

उपेक्षा च, अन्याये व्यसने युद्धे वा प्रवृत्तस्यानिवारणमुपेक्षा। तथा च **कामन्दकः** —

अन्याये व्यसने युद्धे प्रवृत्तस्यानिवारणम्। इत्युपेक्षार्थकुशलैरुपेक्षा त्रिविधा स्मृता॥
अकार्यसज्जमानस्तु विषयान्धीकृतेक्षणः। कीचकस्तु विराटेन हन्यतामित्युपेक्षितः॥
संसक्तया भीमसेने स्वार्थविच्छेदभीतया। हिडिम्बया निजो भ्राता हन्यतामित्युपेक्षितः॥इति

माया च वञ्चना। सा च द्विविधा, मानुषी दैवी चेति। तदुभयमाह **कामन्दकः** —

देवताप्रतिमास्तम्भसुषिरान्तर्गतिर्नृणाम्। पुंसः स्त्रीवस्त्रसंवीतता शिवाद्भुतदर्शिता॥
वेतालोल्कापिशाचानां देवानां च सरूपता। इत्यादि माया विज्ञेया मानुषी मानुषेश्वरैः॥
कामतो रूपधारित्वं शस्त्रान्यश्मामिवर्षणम्। तमोनिलो मेघ इति दुक्ता माया ह्यमानुषीः॥
जघान कीचकं भीम आश्रितः स्त्रीसरूपताम्। चिरं प्रच्छन्नरूपोभूद्दिव्यया माययानलः इति॥

इन्द्रजालमप्याह **कामन्दकः** —

मेघान्धकारवृष्ट्यग्निपर्वताद्भुतदर्शनम्। इतीन्द्रजालं द्विषतां भीत्यर्थमुपकल्पयेत्॥

यथोचितमुक्तसप्तविधोपायप्रयोक्तुः फलं, अप्रयोक्तुरपायं चाह **कामन्दकः** —

इत्याद्युपायान्निपुणं नयज्ञो विनिक्षिपेत् शत्रुकुले विजेता।
निरस्त्युपायो नियतं प्रपातं विवेष्टमानोन्ध इवाभ्युपैति॥

अवश्यमायांति भृशं विपश्चितां उपायसन्दर्शनतो हि सम्पदः ।
भवत्युदारं विधिवत्प्रयोज्यते फलं हि राज्ञा क्वचिदर्थसिद्धये ॥ इति ।

एषूपायेषु तृतीयेनैव सर्वान्वानरान् हनूमान्भेदयामास ।

**तेषु सर्वेषु भीतेषु ततोऽभीषयदङ्गदम् ।**
**भीषणैर्बहुभिर्वाक्यैः कोपोपायसमन्वितैः ॥**

अनेन परिवाराणां भेदनानन्तरमेव प्रधानभेदनं कर्तव्यमिति सूचितम् । तथाच **कामन्दके**—

भेदं कुर्वीत सततं मन्त्र्यमात्यपुरोधसाम् । तेषु भिन्नेषु सर्वेषु युवराजे तथोर्जिते ॥ इति ।

**त्वं समर्थतरः पित्रा युद्धे तारेय वै ध्रुवम् ।**
***दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥**

**नित्यमस्थिरचित्ता हि कपयो हरिपुङ्गव ।**
**नाज्ञाप्यं विषहिष्यन्ति पुत्रदारं विना त्वया ॥**

अनेनास्थिरचित्ताः कार्यसाधका न भवन्तीति सूचितम् । तथाच **कामन्दके**—

चपलस्सहसैव सम्पतन् विनिपत्यैव ततः प्रबुध्यते ॥ इति ।

**त्वां वै ते ह्यनियुञ्जेयुः प्रत्यक्षं प्रवदामि ते ।**
**यथायं जाम्बवान्नीलः सुहोत्रश्च महाकपिः ॥**

**न ह्यहं न इमे सर्वे सामदानादिभिर्गुणैः ।**
**न दण्डेन त्वया शक्याः सुग्रीवादपकर्षितुम् ॥**

अनेन भर्तरि दृढभक्तियुक्तस्सुजनस्सामादिभिरुपायैर्भेत्तुमशक्य इति सूचितम् । तथाच **प्राचीनाः**—

मृद्घटवत्सुखभेद्यो दुस्सन्धानश्च दुर्जनो भवति ।
सुजनस्तु कनकघटवद्दुर्भेद्योऽकृच्छ्रसन्धानः, इति ।

**मुद्राराक्षसेऽपि**—

अप्राज्ञेन च कातरेण च गुणः स्याद्भक्तियुक्तेन कः
प्रज्ञाविक्रमशालिनो यदि भवेत्किं भक्तिहीनात्फलम् ।

प्रज्ञाविक्रमभक्तयस्समुदिता येषां गुणा भूतये
ते भृत्या नृपतेः कलत्रमितरे संपत्सु चापत्सु च ॥ इति ।

**विगृह्यासनमप्याहुर्दुर्बलेन बलीयसः ।**
**आत्मरक्षाकरस्तस्मान्न विगृह्णीत दुर्बलः ॥**

अनेन प्रबलशत्रुं प्रति दुर्बलेन विगृह्यासनं कर्तुं न शक्यं इति सूचितम् । अत एव समानबले न्यूनबले वा शत्रौ विगृह्यासनमाह **कामन्दकः**—
अन्योन्याक्रान्तिकरणं विगृह्यासनमुच्यते । अरिं विगृह्य वा स्थानं विगृह्यासनमुच्यते ॥ इति

**यां चेमां मन्यसे धात्रीमेतद्बिलमिति श्रुतम् ।**
**एतल्लक्ष्मणबाणानामीषत्कार्यं विदारणे ॥**

**स्वल्पं हि कृतमिन्द्रेण क्षिपता ह्यशनिं पुरा ।**
**लक्ष्मणो निशितैर्बाणैर्भिन्द्यात्पत्रपुटं यथा ॥**

**लक्ष्मणस्य तु नाराचा बहवस्सन्ति तद्विधाः ।**
**वज्राशनिसमस्पर्शा गिरीणामपि दारणाः ॥**

**अवस्थाने यथैव त्वमासिष्यसि परन्तप ।**
**तथैव हरयस्सर्वे त्यक्ष्यन्ति कृतनिश्चयाः ॥**

**स्मरन्तः पुत्रदाराणां नित्योद्विग्ना बुभुक्षिताः ।**
**खेदिताः दुःखशय्याभिस्त्वां करिष्यन्ति पृष्ठतः ॥**

अत्र 'स्मरन्तः पुत्रदाराणां त्वां करिष्यन्ति पृष्ठतः' इत्युक्त्या सकुटुम्बो विश्वास्य इति सूचितम् । तथा च **शाकुन्तले**—

'यस्सदारस्स विश्वास्यः' ॥ इति ।

**स त्वं हीनस्सुहृद्भिश्च हितकामैश्च बन्धुभिः ।**
**तृणादपि भृशोद्विग्नः स्पन्दमानाद्भविष्यसि ॥**

अनेन परिजनैः परित्यक्तः तृणादपि लघुतरो भवतीति सूचितम् ।

नच जातु न हिंस्युस्त्वां घोरा लक्ष्मणसायकाः ।
अपवृत्तं जिघांसन्तो महावेगा दुरासदाः ॥

अस्माभिस्तु गतं सार्धं विनीतवदुपस्थितम् ।
आनुपूर्व्यात्तु सुग्रीवो राज्ये त्वां स्थापयिष्यति ॥

धर्मकामः पितृव्यस्ते प्रीतिकामो दृढव्रतः ।
शुचिस्सत्यप्रतिज्ञश्च न त्वां जातु जिघांसति ॥

प्रियकामश्च ते मातुस्तदर्थं चास्य जीवितम् ।
तस्यापत्यं च नास्त्यन्यत्तस्मादङ्गद गम्यताम् ॥ इति ।

अत्र त्वं समर्थतर इत्यनेन सामोक्तं, नित्यमस्थिरचित्ता इत्यनेन भेद उक्तः, न च जात्वित्यनेन दण्ड उक्तः, अस्माभिस्त्वित्यनेन दानमुक्तम् । एवं भेदोऽपि हनुमता सामदानदण्डपूर्वक एव कृतः । तेन भेदेनाङ्गदोऽपि बिभीषितः ।

**पञ्चपञ्चाशे** — ततः हनुमद्वचनाकर्णनसंतप्तहृदयोऽङ्गदः त्रिभुवनमहनीयशासनस्य रामभद्रस्य निजभ्रातृभार्यासक्तेन, विस्मृतमित्रकार्येण परित्यक्तसत्यशौचेन, अनाघ्रातधर्मपथेन, पितृव्येन सख्याचरणं मत्पितुरस्माकं च निधनायैव सञ्जातं, तदधुना कृतापराधस्य मम चण्डशासनसुग्रीवोपसर्पणात् मृतिरेव भविष्यति, ततो वरमिह प्रायोपवेशनमिति तर्कयामि, किष्किन्धागतैश्च भवद्भिः भगवतो रामलक्ष्मणयोः, पितुस्सुग्रीवस्य, मातॄणां च ताराप्रमुखानां कुशलप्रश्नपूर्वकं प्रणामो वक्तव्य इति वानरानभिधायोपस्पृश्योदकं दक्षिणकूलेषु दर्भेषु प्रायमुपविवेश । तदनु सर्वेऽपि वानराः तदवस्थं दीनतरमङ्गदमवलोक्य क्रूरतरं सुग्रीवं विनिन्दन्तः स्वयमपि तथैव प्रायमुपविश्य, रामविवासन, सीतापहरण, जटायुमरण, सुग्रीवाभिषेचन, वानरप्रस्थापनादिपूर्ववृत्तमखिलमपि कथयन्तश्चुक्रुशुः ।

**षट्पञ्चाशे** — ततः प्रायोपविष्टवानरवचनश्रवणसमनन्तरमेव गिरिकन्दरान्निष्क्रम्य चिरबुभुक्षितस्य मम दैवादयमाहारो लब्ध इति वदन्तं संपातिमवलोक्य विषण्णहृदयोऽङ्गदस्तमवोचत् । रावणेन नीयमानायाः सीतायाः संरक्षणाय प्रियतमान्प्राणान् परित्यज्य जटायुषा रामस्य प्रियमाचरितम् —

तथा सर्वाणि भूतानि तिर्यग्योनिगतान्यपि ।

**प्रियं कुर्वन्ति रामस्य त्यक्त्वा प्राणान्यथा वयम् ॥**

अनेन न्यायमार्गवर्तिन. धार्मिकस्य तिर्यञ्चोऽप्युपकुर्वन्तीत्युक्तम् । तथा च प्राचीनाः —

'यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्, इति ।

वयं तु दाशरथेर्निर्देशमकृत्वैव विपन्नास्स्म इति ॥

अथ निजानुजं निहतवान्निशाचर इत्यङ्गदवचनश्रवणजनितामर्षः संपातिः दिनकर-खरतरकरदग्धपक्षतया भ्रातरं जटायुषं निहतवतो रावणस्य वैरविमोक्षणे न प्रभवामि, अथापि तद्वधोद्यतस्य —

**वाङ्मात्रेण तु रामस्य करिष्ये साह्यमुत्तमम् ।**

रामेति क्रोशन्ती रावणेन नीयमाना जानकी मया व्यलोकि । तां च इतः शतयोजने समुद्रे महति द्वीपे कनकमणिवैडूर्यादिरत्नैर्विश्वकर्मनिर्मितविचित्रगोपुराट्टालकाद्युपेत-विविधगृहालंकृतलङ्कापुरीमध्यगतरावणान्त.पुरे —

**इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा ।**
**अस्माकमपि सौपर्णं दिव्यं चक्षुर्बलं तथा ॥**

**तस्मादाहारवीर्येण निसर्गेण च वानराः ।**
**आयोजनशतात्साग्राद्वयं पश्याम नित्यशः ॥**

अत्राहारवीर्येणेत्युक्त्या मांसविशेषभक्षणशीलानां गृध्राणां चक्षुष्यमांसभक्षणेन दूरदर्शन-सामर्थ्यमुक्तम् । तत्र सर्पमयूरादिमांसभक्षणस्य चक्षुष्यत्वं वाहटे —

सर्पाणां बर्हिणां मांसं विपाके स्वादु लेखनम् ।
चक्षुष्यं स्नेहनं वृष्यं श्रमार्शोनिलनाशनम् ॥

मयूरो लवणस्स्वादुः कषायोष्णोनिलापहः ।
आयुष्यो बर्हिणः केश्यः शोषघ्नः श्रोत्रियो हितः ॥

शुक्लवृक्स्वरमेधाग्निरुचिमद इति श्रुतः । चक्षुष्यं बर्हणं बल्यमायुष्यं लघुदीपनमिति ॥

निसर्गेणेति विशेषणेन च जातिस्वाभाव्यादपि दूरदर्शित्वमुक्तम् । तदपि वैद्यनिघण्टौ —

दाक्षाय्यो दूरदृग्गृध्रो वज्रचञ्चुः सुदृष्टिकः। इति।

चकारेण च अनिरोधेन वातविण्मूत्रादि उत्सर्गादिकं चक्षुष्यमित्युक्तम्। तथा च **वाहटे** —

वेगान्न धारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम्। निद्राकामश्रमश्वासजृम्भास्रक्छर्दिरेतसाम्॥
अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्रमाः। वातमूत्रशकृत्सङ्गदृष्ट्यग्निवधहृद्गदाः॥
शकृतः पिण्डकोद्वेष्टाप्रतिश्यायशिरोरुजः। मुखेन विट्प्रवृत्तिश्च पूर्वोक्ताश्चामयाः स्मृताः॥

पिण्डकोद्वेष्टनं नाम जङ्घाकाण्डपश्चिमभागवर्तिकठिनतरमांसविशेषपरिवर्तनम्।
अङ्गभङ्गाश्मरीवस्तिमेढ्रवङ्क्षगवेदनाः। मूत्रस्य रोधात्पूर्वे च प्रायो रोगास्तदौषधमिति॥

तदधुना सागरोल्लङ्घने विचिन्त्यतामुपायः। अहमपि भ्रातुरुदकार्थं समुद्रं भवद्भिर्नेतुमिच्छामीत्यङ्गदमवदत्। ततः कृतोदकः सम्पातिः रावणेन नीयमाना सीता केन वा दृष्टेति पृच्छन्तं जाम्बवन्तमेवमवोचत्।

**तीक्ष्णकामास्तु गन्धर्वास्तीक्ष्णकोपा भुजङ्गमाः।**
**मृगाणां तु भयं तीक्ष्णं ततस्तीक्ष्णक्षुधा वयम्॥**

तीक्ष्णकामा गन्धर्वा इति 'स्त्रीकामा वै गन्धर्वा' इति श्रुतिः। तीक्ष्णकोपा भुजङ्गमा इत्यत्रादि**पर्वणि** —

बहवः पन्नगा घोरास्तीक्ष्णकोपा विषोल्बणाः इति।

इत्थमतिक्षुधितस्यापरिक्रमणस्य मम सुपार्श्वनामा कुमारः आहाराहरणाय महेन्द्रगिरिकन्दरे सागरचरसत्वमार्गमवरुन्धन् काञ्चनसन्निभां काञ्चन स्त्रियमादाय गच्छन्तं निशाचरमवरुरोध॥

**तेन साम्ना विनीतेन पन्थानमभियाचितः।**
**नहि साम्नोपपन्नानां प्रहर्ता विद्यते क्वचित्॥**

**नीचेष्वपि जनः कश्चित्किमङ्ग बत मद्विधः।**

अनेन सामवक्ता सर्वेषामवध्यो भवतीति सूचितम्। तथाच **विदुरनीतौ** —
अभ्यावहति कल्याणं वागंग प्रियभाषिता। सैव दुर्भाषिता राजन् अनर्थायोपपद्यते॥ इति।
**प्राचीना अपि** —

वाङ्माधुर्यात्सर्वलोकप्रियत्वं वाक्पारुष्यात्सर्वलोकाप्रियत्वम् ।
किं तद्द्रव्यं कोकिलेनोपनीतं को वा लोके गर्दभस्यापराधः ॥

इति विचिन्त्य विसृज्य राक्षसं सर्वमिदं वृत्तं मामकथयत् ।

**अपक्षोऽहं कथं पक्षी कर्म किञ्चिदुपक्रमे ।**
**यत्तु शक्यं मया कर्तुं वाग्बुद्धिगुणकर्मणा ॥**

**श्रूयतां तत्प्रवक्ष्यामि भवतां पौरुषाश्रयम् ।**
**वाङ्मतिभ्यां तु सर्वेषां करिष्यामि प्रियं हि वः ॥**

अनेन मनोवाक्कायकर्मभिर्यथाशक्ति परेषामुपकर्तव्यमिति सूचितम् । भवद्भिरपि सीतागवेषणमारभ्यताम् ।

**नहि कर्मसु सज्जन्ते बुद्धिमन्तो भवद्विधाः ।**

अनेन बुद्धिमतां कार्येषु कुण्ठनं न भवतीति सूचितम् । तथाच **सभापर्वणि** —

पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं महदिति ।

**षष्टितमे** — तदनु निशाकरमुनिकथितपूर्वकथास्मरणेन जनितोत्साहस्सम्पातिः तां कथां पुनरित्थमुवाच । पुरा किल सूर्यकिरणप्रतप्तपक्षतया विन्ध्यभूधरे निपतितः षड्रात्रात्कथञ्चिल्लब्धसंज्ञोऽहं अविदूरे निशाकरमुनेराश्रमप्रदेशः स एवास्माकं शरणमिति विचिन्त्य तमृषिमभिवादयितुकामो विन्ध्यभूधरात्कथञ्चिदवतीर्य प्रविश्य तदाश्रमं स्नानाय गतस्य महर्षेः आगमनप्रतीक्षया तदाश्रमवृक्षमूले निविष्टोऽस्मि । ततः,

**कृताभिषेकं दुर्धर्षमुपावृत्तमुदङ्मुखम् ।**
**तमृक्षाः सृमरा व्याघ्रास्सिंहा नागास्सरीसृपाः ॥**

**परिवार्योपगच्छन्ति दातारं प्राणिनो यथा ।**

अनेन दाता सर्वजनोपसेव्यो भवतीति सूचितम् । तथाच **श्रुतिः** — 'लोके दातारं सर्वभूतान्युपजीवन्तीति' ।

**ततः प्राप्तमृषिं ज्ञात्वा तानि भूतानि वै ययुः ।**
**प्रविष्टे राजनि यथा सर्वं सामात्यकं बलम् ॥**

अनेन राज्ञा सह प्रस्थितैरमात्यादिपरिजनैः राजा गृहप्रवेशपर्यन्तमनुसर्तव्य इति सूचितम् । अत एव दुर्योधनेन भीष्मसकाशादागत्य स्वगृहप्रवेशसमये अमात्यादीनामभ्यनुज्ञा कृतेति प्रतिपादितं भीष्मपर्वणि -

आगम्य तु महाराजा विसृज्य च महाजनम् । प्रविवेश ततस्तूर्णं क्षयं शत्रुक्षयंकरः ॥इति।

ततो निर्दग्धपक्षत्वचं मामवलोक्य पक्षोपपक्षपरिहीनकलेबरस्य तव व्याधिकृतो दण्डकृतो वा विकार इति महर्षिणा पृष्टस्तमेवमवोचम् । कदाचिद्बालभावेन परस्परबलपरीक्षणाय 'रविः स्यादनुयातव्यो यावदस्तमयं गिरि,मिति मुनिजनसन्निधौ पणमाबध्य भ्रात्रा जटायुषा सह समुत्पत्य मार्ताण्डरथपथमास्थितेन दुःसहरविकिरणसन्तापात्प्राप्ततीव्रतरखेदस्वेदविषादेन मया -

**यत्नेन महता भूयो रविस्समवलोकितः ।**
**तुल्यः पृथ्वीप्रमाणेन भास्करः प्रतिभाति नः ॥**

ततस्तत्किरणसन्तापजडीकृतं भ्रातरं रक्षितुं पक्षौ प्रसार्य निर्दग्धपक्षोऽहं विन्ध्यभूधरे निपतितोऽस्मि । तं जटायुषमपि जनस्थाने निपतितमाशंके इति ।

**द्विषष्टितमे**-ततश्च महर्षिर्मम पक्षोद्गमे पौराणिकीं गाथामित्थमुदाजहार। दशरथनन्दनो रामाभिधो राजा पितृनिदेशपरिपालनाय ससीतो दण्डकाननुप्रवेक्ष्यति, तस्य भार्या जानकी दशाननहृता विपुलतरसंपत्प्रदर्शनेन भक्ष्यभोज्यादिभिश्च प्रलोभितापि न भुंक्ते न वा निद्राति ।

**परमान्नं तु वैदेह्या ज्ञात्वा दास्यति वासवः ।**
**यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ॥**

**तदन्नं मैथिली प्राप्य विज्ञायेन्द्रादिदं त्विति ।**
**अग्रमुद्धृत्य रामाय भूतले निवपिष्यति ॥**

**यदि जीवति मे भर्ता लक्ष्मणेन सह प्रभुः ।**
**देवत्वं गतयोर्वापि तयोरन्नमिदं त्विति ॥**

अनेन भार्याभिर्लब्धं यत्किञ्चिद्भर्तुरादौ निवेद्यैव भोक्तव्यमिति सूचितम् । इत्युदाहृत्य गाथाम् —

**पश्यन्त्यन्वेषकास्तस्य रामदूताः प्लवङ्गमाः ।**
**आख्येया रामभार्या हि त्वया भार्या प्लवङ्गम ॥**

**देशकालौ प्रतीक्षस्व पक्षौ त्वं प्रतिपत्स्यसे ।**
**नोत्सहेयमहं कर्तुं अद्यैव त्वां सपक्षकम् ॥**

**इहस्थस्त्वं तु लोकानामिदं कार्यं करिष्यसि ।**

**त्रिषष्टितमे** — इति समाश्वास्य सान्त्ववचनैः स्वमाश्रमं जगाम। तदाप्रभृति पक्षोद्गमाय शरच्छतं प्रतीक्षमाणस्य मम भवदभिभाषणमात्रेण पक्षोपपक्षचक्षुर्बलविक्रमास्संजाताः। तदधुना सीताधिगमाय सर्वथापि यत्नः संविधीयताम् —

**पक्षलाभो ममाप्येष सिद्धिप्रत्ययकारकः ।**

इत्युदीर्य सहर्षं नभस्तलमुत्पपात। ततस्तत्कथितवृत्तश्रवणेन पक्षोद्गमादिनिदर्शनेन जनितप्रत्ययाः —

**अथ पवनसमानविक्रमाः प्लवगवराः प्रतिबुद्धपौरुषाः ।**
**अभिजिदभिमुखा दिशं ययुः जनकसुतापरिमार्गणोत्सुकाः ॥ इति ।**

**चतुष्षष्टितमे** —

ततश्च वानरैस्सह समुद्रतीरमागतोऽङ्गदो नागनक्रकच्छपादिसत्वनिमज्जनोन्मज्जनसमुपेतं तुङ्गतरतरङ्गपरम्परोपेतमतिरोमहर्षणमशक्यलङ्घनं दक्षिणसमुद्रमवलोक्य विषण्णवदनान्वानरानित्थमाचचक्षे —

**न विषादे मनः कार्यं विषादो दोषवत्तमः ।**
**विषादो हन्ति पुरुषं बालं क्रुद्ध इवोरगः ॥**

**यो विषादः प्रसहते विक्रमे पर्युपस्थिते ।**
**तेजसा तस्य हीनस्य पुरुषार्थो न सिद्ध्यति ॥**

अनेन विक्रमकाले विषादो न कर्तव्य इति सूचितम्। अत एवाविषादे जय उक्त उद्योगे —

प्राप्यापदं न व्यथते कदाचित् उद्योगमन्विच्छति चाप्रमत्तः ।
दुःखं च काले सहते जितात्मा धुरन्धरस्तस्य जितास्सपत्नाः ॥ इति ।

सा वानराणां ध्वजिनी परिवार्यांगदं बभौ ।
कोऽन्यस्तां वानरीं सेनां शक्तः स्तंभयितुं भवेत् ॥

अन्यत्र वालितनयादन्यत्र च हनूमतः ।

अनेन सेनापतिः प्रबलः कर्तव्य इति सूचितम् । तथाचोद्योगे भीष्मं प्रति दुर्योधनः —

भवानुशनसा तुल्यो हितैषी च सदा मम । असंहार्यः स्थितो धर्मे स नः सेनापतिर्भव ॥
रश्मिवतामिवादित्यो वीरुधामिव चन्द्रमाः । कुबेर इव यक्षाणां मरुतामिव वासवः ॥
पर्वतानां यथा मेरुः सुपर्णः पततामिव । कुमार इव भूतानां वसूनामिव हव्यवाट् ॥
भवता हि वयं गुप्ताः शक्रेणेव दिवौकसः । अनाधृष्या भविष्यामस्त्रिदशानामपि ध्रुवम् ॥
प्रयातु नो भवानग्रे देवानामिव पावकिः । वयं त्वामनुयास्यामस्सौरभेया इवर्षभम् ॥ इति ।

ततस्तान्हरिवृद्धांश्च तच्च सैन्यमरिन्दमः ।
अनुमान्यांगदः श्रीमान्वाक्यमर्थविदब्रवीत् ॥

अनेन वृद्धानुमत्यैव कार्यजातं वक्तव्यमिति सूचितम् । अत एवार्जुनः वृद्धसम्मत्यैवोक्तवानिति प्रतिपादितमुद्योगे —

भवद्भिस्समनुज्ञातो वाक्यमस्य यदुत्तरम् । उलूके प्रापयिष्यामि यद्वक्ष्यामि सुयोधनम् ॥
ततस्ते पार्थिवास्सर्वे प्रशशंसुर्धनञ्जयम् । तेन वाक्योपचारेण विस्मिता राजसत्तम ॥ इति ।

युधिष्ठिरोऽपि —

अनुमान्य च तान्सर्वान्यथामान्यं यथावयः । जनार्दनमभिप्रेक्ष्य भ्रातॄंश्चैवेदमब्रवीत् इति ॥

मनुः —

अभयस्य हि यो दाता स पूज्यस्सततं नृपः । सत्रं हि वर्तते तस्य सदैवाभयदक्षिणम् ॥

प्राचीना अपि —

न गोप्रदानं न महीप्रदानं न चान्नदानं न तथात्मदानम् ।
यथा वदन्तीह महाप्रदानं सर्वप्रदानेष्वभयप्रदानम् ॥

क इदानीं महातेजा लङ्घयिष्यति सागरम् ।
कः करिष्यति सुग्रीवं सत्यसन्धमरिन्दमम् ॥

को वीरो योजनशतं लंघयेत प्लवङ्गमः ।
इमांश्च यूथपान्सर्वान्मोक्षयेत्को महाभयात् ॥

कस्य प्रसादाद्दारांश्च पुत्रांश्चैव गृहाणि च ।
इतो निवृत्ताः पश्यामः सिद्धार्थाः सुखिनो वयम् ॥

कस्य प्रसादाद्रामं च लक्ष्मणं च महाबलम् ।
अभिगच्छेम संहृष्टाः सुग्रीवं च महाबलम् ॥

यदि कश्चित्समर्थो वः सागरप्लवने हरिः ।
स ददात्विह नश्शीघ्रं पुण्यामभयदक्षिणाम् ॥ इति ।

अनेनाभयप्रदानं श्रेष्ठमिति सूचितम् ।

सर्वे बलवतां श्रेष्ठा भवन्तो दृढविक्रमाः ।
व्यपदेशकुले जाताः पूजिताश्चाप्यभीक्ष्णशः ॥

अनेन समर्थाः कुलीनास्सम्पादनीयास्समये उचिततया बहुमान्याश्चेति सूचितम् । तथाच राजधर्मे —

सर्वशास्त्रेषु कुशलास्सत्ववन्तो मनस्विनः । पुरस्कार्यास्सदा कार्ये हन्यन्ते घ्नन्ति वापि ते ॥

तेषां सान्त्वं क्रूरमिश्रं प्रयोक्तव्यं पुनःपुनः ।

नहि वो गमने संगः कदाचिदपि कस्यचित् ।
ब्रुवध्वं गमने यस्य या शक्तिः प्लवगर्षभाः ॥

अनेन सेनापतिना सैन्यमुख्यानां प्रोत्साहनं कर्तव्यमिति सूचितम् । तथाच द्रोणपर्वण्यश्वत्थामानं प्रति दुर्योधनः —

को हि शस्त्रभृतां श्रेष्ठो महेश्वरसमो युधि । शत्रून्‌ः क्षपयेच्छक्तो यो न स्याद्गौतमीसुतः ॥
अश्वत्थामन्प्रसीदस्व नाशयैतान्ममाहितान् । नचास्य गोचरे शक्ताः स्थातुं देवा न दानवाः ॥
पाञ्चालान्सोमकांश्चैव जहि द्रोण सहानुगान् । वयं शेषान्हनिष्यामः त्वयैव परिरक्षिताः ॥इति

पञ्चषष्टिषट्षष्टितमयोः — ततः गजगवाक्षगवयशरभगन्धमादनमैन्दद्विविदसुषेण-जाम्बवद्भिः यथाक्रमं दशयोजनप्रभृति नवतियोजनपर्यन्तं प्रभवाम इत्यभिहितमाकर्ण्याङ्गदः ॥

अहमेतद्गमिष्यामि योजनानां शतं महत् ।

निवर्तने तु मे शक्तिः स्यान्न वेति न निश्चितः ॥

इति वदन्तमङ्गदं जांबवानेवमुवाच—

नहि प्रेषयिता तात स्वामी प्रेष्यः कथञ्चन ।
भवतोऽयं जनास्सर्वे प्रेष्यः प्लवगसत्तम ॥

भवान् कलत्रमस्माकं स्वामिभावे व्यवस्थितः ।
स्वामी कलत्रं सैन्यस्य गतिरेषा परंतप ॥

तस्मात्कलत्रवत्तत्र प्रतिपाल्यस्सदा भवान् ।
अपि चैतस्य कार्यस्य भवान्मूलमरिन्दम ॥

मूलमर्थस्य संरक्ष्यमिति कार्यविदां नयः ।
मूले हि सति सिध्यन्ति गुणाः पुष्पफलोदयाः ।
तद्भवानस्य कार्यस्य साधने सत्यविक्रम ॥

बुद्धिविक्रमसंपन्नो हेतुरत्र परन्तप ।
गुरुश्च गुरुपुत्रश्च त्वं हि नः कपिसत्तम ॥
भवन्तमाश्रित्य वयं समर्था ह्यर्थसाधने । इति ।

अनेन स्वामी कार्यार्थतया न प्रेषणीयः किंतु स एव सर्वैरपि रक्षणीय इति सूचितम् । अत एव **द्रोणपर्वणि** युद्धार्थं प्रस्थितं दुर्योधनं प्रेक्ष्य अस्मदादिषु भृत्येषु सत्सु स्वामिनो युद्धाय गमनमयुक्तमित्यश्वत्थामानं प्रत्याह कृपः—
अयुक्तमिव पश्यामि तिष्ठत्स्वस्मासु मानद। स्वयं युद्धाय यद्राजा रणं यात्यसहायवान् ॥इति

ततः—

यदि नाहं गमिष्यामि नान्यो वानरपुङ्गव ।
पुनः खल्विदमस्माभिः कार्यं प्रायोपवेशनम् ॥

इत्यङ्गदोदीरितवचनमाकर्ण्य जांबवानेकान्तमाश्रित्य निवसन्तं हनुमन्तमेवमुवाच—

हनुमन्हरिराजस्य सुग्रीवस्य समो ह्यसि ।
रामलक्ष्मणयोश्चापि तेजसा विक्रमेण च ॥

अरिष्टनेमिनः पुत्रो वैनतेयो महाबलः ।
पक्षयोर्यद्बलं तस्य तावद्भुजबलं तव ॥

विक्रमश्चापि वेगश्च तेन तें नावहीयते ।
बलं बुद्धिश्च तेजश्च सत्वं च हरिसत्तम ॥

विशिष्टं सर्वभूतेषु किमात्मानं न बुध्यसे ।

अनेन उत्साहबलबुध्यादिगुणयुक्तस्यापि पुरुषस्य कार्यकाले प्रोत्साहनेनैव बलाभिवृद्धिर्भवतीति सूचितम् । अत एवोद्योगे बृहस्पतिप्रोत्साहनेन इन्द्रस्य बलाभिवृद्धिः प्रतिपादिता । नहुषबलात्पलाय्य कचिद्बिसकाण्डबिलान्तर्लीनं बलभिदं प्रति बृहस्पतिः—
गत्वा देवर्षिगन्धर्वैस्सहितोऽथ बृहस्पतिः । पुराणैः कर्मभिर्देवं तुष्टाव बलसूदनम् ॥
महासुरो हतश्शक्र नमुचिर्दानवस्त्वया । शंबरश्च बलश्चैव तथोभौ घोरविक्रमौ ॥
शतक्रतो विवर्धस्व सर्वान् शत्रून्निबर्हय । उत्तिष्ठ शक्र संपश्य देवर्षींश्च समागतान् ॥
महेन्द्र दानवान् हत्वा लोकास्त्रातास्त्वया विभो। अपां फेनं समासाद्य विष्णुतेजोपबृंहितम् ॥
त्वया वृत्रो हतः पूर्वं देवराज जगत्पते ॥
त्वं सर्वभूतेषु शरण्य ईड्यस्त्वया समं विद्यते नेह भूतम् ।
त्वया धार्यन्ते सर्वभूतानि शक्र त्वं देवानां महिमानं चकर्थ ॥
पाहि सर्वांश्च लोकांश्च माहेन्द्रं बलमाप्नुहि । एवं संस्तूयमानश्च सोवर्धत शनैश्शनैः ॥
स्वं चैव वपुरास्थाय बभूव स बलान्वितः ॥ इति ।

कर्णपर्वण्यपि—

को हि शक्तो रणे जेतुं कौरवान् पार्थ संगतान्। अन्यत्र पाण्डवाद्युद्धे श्वेताश्वाद्वानरध्वजात् ॥
त्वं हि शक्तो रणे जेतुं ससुरासुरमानुषम्। लोकत्रयसमुद्युक्तं किंपुनः कौरवं बलम् ॥
त्वं हि शक्तो रणे कर्णं विजेतुं सह पार्थिवैः । नान्यो युधि युधां श्रेष्ठ सत्यमेतद्ब्रवीमि ते ॥
इति भगवता कृष्णेन बहुधा प्रोत्साहितोऽर्जुनः
विशोकश्च प्रहृष्टश्च क्षणेन समपद्यत । ततो ज्यामनुमृज्याशु गाण्डीवं व्याक्षिपद्धनुः ॥
दध्रे कर्णविनाशाय केशवे चाभ्यभाषत ।

अपिच रूपयौवनोपेता पुंजिकस्थला शापदोषेण कुंजराभिधस्य वानरस्य दुहिता अञ्जनाभिधा कामरूपिणी सञ्जाता । सा च केसरिपरीगृहीता ।

मानुषं विग्रहं कृत्वा रूपयौवनशालिनी ।
अचरत्पर्वतस्याग्रे प्रावृडंबुदसन्निभे ॥

ततो मारुतस्तदुत्तरीयापहरणेन प्रकाशिततद्वक्षोजसन्दर्शनसञ्जातमनोभवविकारः गाढ-मालिंग्य तया च संभ्रान्तया "एकपत्नीव्रतमिदं को नाशयितुमिच्छती" त्यभिहितः इत्थं प्रत्यभाषत —

**न त्वां हिंसामि सुश्रोणि माभूत्ते मनसो भयम् ।**
**मनसास्मि गतोऽहं त्वां परिष्वज्य मनस्विनीम् ॥**

**वीर्यवान्बुद्धिसंपन्नः पुत्रस्तव भविष्यति ।**
**महासत्वो महातेजा महाबलपराक्रमः ॥**

**लङ्घने प्लवने चैव भविष्यति च मत्समः ।**

इत्यभिधाय यथागतं गते सदागतौ गुहायामञ्जना प्लवगर्षभं त्वां जनयामास । ततस्समुत्पन्नमात्रस्त्वं अभ्युदितं मार्ताण्डमण्डलं फलमिति बुध्या जिघृक्षुस्त्रिशतयोजनानि समुत्पत्य, अविगणय्य मार्ताण्डकिरणसन्तापं, अश्रमेणैव तत्समीपं गच्छन् पुरन्दरप्रयुक्ताशनिताडनेन पर्वतशिखराभिहतः भग्नहनुस्तत्कृतां हनूमानित्यभिख्यां प्राप्तवानसि ।

ततः इन्द्रकृतस्वपुत्रताडनकुपितेन वायुनासंचरणेन स्तंभितायां जगत्यां संभ्रान्तमानसैस्सुरगणैस्संप्रार्थितः पितामहः प्रसाद्य प्रभञ्जनमशस्त्रवध्यतां तव प्रादात् । इन्द्रोऽपि स्वच्छन्दमरणं बालकायास्त्वित्यवदत् । एवं निखिलदेवतानुग्रहेणावाप्तमहाप्रभावः

**स त्वं केसरिणः पुत्रः क्षेत्रजो भीमविक्रमः ।**
**मारुतस्यौरसः पुत्रस्तेजसा चापि तत्समः ॥**

अत्र च मारुतौरसत्वं मारुतवीर्योत्पन्नत्वमात्रेण गौणं बोध्यम् । संस्कृते स्वक्षेत्रे स्ववीर्यादुत्पन्नस्यैवौरसशब्दमुख्यार्थत्वात् । तथाचौरसादिविभागप्रतिपादनपुरस्सरं तल्लक्षणानि दर्शितानि **मनुना** —

औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । स्वयंदत्तश्च शूद्रश्च षडदायादबान्धवाः ॥ इति

तेषां लक्षणान्यपि स एवाह —

स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादितश्च यः । तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम् ॥
यस्तल्पजप्रमीतस्य क्लीबस्य व्याधितस्य वा । स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥
माता पिता वा दद्यातां यमद्भिः पुत्रमापदि । सदृशं प्रीतिसंयुक्तं स ज्ञेयः कृत्रिमस्सुतः ॥

सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम्। पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः॥
उत्पद्येत गृहे यस्य नच ज्ञायेत कस्यचित्। स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः॥
मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा। यं पुत्रं परिगृह्णीयादपविद्धस्स उच्यते॥
पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः। तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम्॥
या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती। वोढुः स गर्भो भवति सहोढ इति चोच्यते॥
क्रीणीयाद्यस्त्वपत्यार्थे मातापित्रोर्यमन्तिकात्। स क्रीतकस्सुतस्तस्य सदृशोऽसदृशोऽपि वा॥
या पत्या वा परित्यक्ता विधवा चेच्छयात्मनः। उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते॥
सा चेदक्षतयोनिस्स्याद्गतप्रत्यागतापि वा। पौनर्भवेन भर्त्रा सा पुनस्संस्कारमर्हति॥
मातापितृविहीनो यस्त्यक्तो वा दोषकारणात्। आत्मानं स्पर्शयेद्यस्मै स्वयंदत्तस्तु स स्मृतः॥
यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम्। स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः॥ इति।

पुत्रिकापुत्रोऽपि **मनुना** प्रदर्शितः—

अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्। यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम्॥
अनेन च विधानेन पुरा चक्रे सुपुत्रिकाम्। विवृध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः॥ इति।

एतेषु दत्तौरसव्यतिरिक्तानां पुत्रत्वेन परिग्रहः कलौ निषिद्धः। "दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः" इति चन्द्रिकास्मृत्यर्थसारादौ कलियुगधर्ममध्ये परिगणनात्॥ इति।

**सप्तषष्टितमे—**

ततो जांबवत्प्रबोधनेन प्रवृद्धतरमोदः प्रभञ्जनसुतः भृशदुःखितां वानरवाहिनीं प्रहर्षयन् जांबवदादीनभिवाद्येत्थमाचचक्षे। मारुतवैनतेयसमविक्रमोऽहं मारुतिः इतो गमिष्यामि दशग्रीवनिकेतनं, ऊरुबाहुवेगनिपातितपादपवीरुत्प्रसूननिकरैश्च भविष्यति मे पन्थाः स्वातेर्यथा, अंबरे गच्छंश्चाहं विधमिष्यन् जीमूतान् कम्पयंश्च महीधरान् आक्रम्य विहायसं अचिरनिर्वृत्तमनोरथः पुनरागमिष्यामीति॥

**बुध्या चाहं प्रपश्यामि मनश्चेष्टा च मे तथा।**
**अहं द्रक्ष्यामि वैदेहीं प्रमोदध्वं प्लवङ्गमाः॥**

अनेन प्रयोजनार्थं गच्छतः मनःप्रसादादिकं कार्यसाधकमित्युक्तं भवति। **तथाच कामन्दकः—**

मनःप्रसादः श्रद्धा च तथा करणपाटवम्। सत्वायोत्थानसंपच्च कर्मणां सिद्धिलक्षणम्॥इति

**उद्योगेऽपि** शाकुनिकेन शकुनिग्रहणदशायां—

ये स काले सुमनसस्सर्वे वृद्धानुपासते। सिंहगुप्तमिवारण्यं अप्रधृष्या भवन्ति ते ॥
येऽर्थं सततमासाद्य दीना इव समासते। श्रियं ते संप्रयच्छन्ति द्विषद्भ्यो भरतर्षभ ॥ इति।

ईदृशस्य हि ते तात वर्णयामः कथं बलम्।
त्वं हि वायुसुतो वत्स प्लवने चापि तत्समः ॥

वयमद्यागतप्राणा भवानस्मासु सांप्रतम्।
वीर्यं भजस्व विक्रान्तं प्लवतामुत्तमो ह्यसि ॥

ततस्तु वै जांबवताभिचोदितः प्रतीतवेगः पवनात्मजः कपिः।
प्रहर्षयंस्तां हरिवीरवाहिनीं चकार रूपं महदात्मनस्तदा ॥

अनेन प्रोत्साहजननेन बलाभिवृद्धिर्भवतीति सूचितम्। एतच्च प्राक्प्रपञ्चितम्।

मारुतस्य समो वेगे गरुडस्य समो जवे।
अयुतं योजनानां तु गमिष्यामीति मे मतिः ॥

वासवस्य सवज्रस्य ब्रह्मणो वा स्वयंभुवः।
विक्रम्य सहसा हस्तादमृतं तदिहानये ॥

लङ्कां वापि समुत्क्षिप्य गच्छेयमिति मे मतिः।

नन्वत्र हनुमता आत्मस्तुतिः कृतेति प्रतिपादितम्। तच्चानुपपन्नं, "आत्मप्रशंसां परगर्हामिति वर्जयेदिति" आपस्तम्बसूत्रेण आत्मस्तुतेर्निषिद्धतया महापुरुषेण हनुमता तत्करणासंभवादिति चेन्न, आत्मस्तुतेर्वीरवादत्वेनादोषत्वात्, वीरवादरूपाया आत्मस्तुतेरदोषत्वं प्राक् प्रपञ्चितम् ॥

इति वानरान् प्रोत्साहयन् बलिमर्दनो जनार्दन इव प्रवृद्धतरकलेवरो हनुमान् अथ जांबवदभ्यनुज्ञया रावणमन्दिरदर्शनकुतूहलेन महेन्द्रगिरिवरमारुरोह ॥

स वेगवान्वेगसमाहितात्मा हरिप्रवीरः परवीरहन्ता।
मनस्समाधाय महानुभावो जगाम लङ्कां मनसा मनस्वी ॥

ये धर्मैकनिसर्गसिद्धरुचयो ये वेदवेद्ये परे पुंसि ब्रह्मणि मैथिलीसहचरे भक्ता रघूणां वरे।
ये वा कौतुकिनो रघूद्वहकथाशैलीसमाकर्णने ये चामर्मविदस्त एवमुररीकुर्वन्तु तैस्तैर्गुणैः ॥

प्रतिदिनमपि श्रीयज्ञेशप्रसादमुपेयुषा गुरुवरकृपाधाम्ना श्रीमत्त्रियंबकयज्वना।
मुनिरचितकिष्किन्धाकाण्डे चतुर्थ इहोज्वले प्रकटितमिदं धर्माकूतं यथामति गृह्यताम् ॥

॥ श्रीरस्तु ॥

# किष्किन्धाकाण्डपद्यार्धानुक्रमणिका ॥

# धर्माकूतोदाहृतपद्यार्धानुक्रमणिका



D. K-36

| पद्यार्ध | पृष्ठ-संख्या | मूलग्रन्थनाम |
|---|---|---|
| आत्मनश्चैव | ,, | आश्रमवासिक |
| आत्मनानर्थ | ७८ | मोक्षधर्म |
| आत्मना प्राप्तं | १९२ | राजधर्म |
| आत्मन्यपि च | ६४ | गदापर्व |
| आत्मवन्मन्त्रि | ४५ | कामन्दक |
| ,, | १३३ | ,, |
| आत्मवृद्धिः | ६४ | गदापर्व |
| आत्महा पुरुषः | १६५ | आदिपर्व |
| आत्मानुमान | ६८ | रामायण |
| आत्मानं कारणं | ८६ | आनुशासनिक |
| अत्मानं शक्तं | २१९ | कामन्दक |
| आत्मानं स्पर्श | २३३ | मनुः |
| आत्मा बुद्ध्या | ३१ | शीक्षा |
| आत्मार्थं पाचितं | १०१ | पाद्म |
| आत्मा विवक्षनाण | १११ | भरतशास्त्र |
| ,, | ३० | वाग्गेयकार |
| आत्मीये गर्भे | ९७ | गर्गः |
| आददानाश्च | ६५ | भीष्मपर्व |
| आदितालेन | १०९ | शार्ङ्गदेव |
| आदित्यश्चन्द्रमा | ८७ | आनुशासनिक |
| आदित्या वसवो | १९१ | ,, |
| आदिमध्यावसान | ८ | कामन्दक |
| आदिमध्यावसानेषु | १०० | स्कान्द |
| आदिराजः पृथुः | १९८ | आनुशासनिक |

| पद्यार्ध | पुट-संख्या | मूलग्रन्थनाम |
|---|---|---|
| प्रतिषेद्धा हि | १६५ | आदिपर्व |
| प्रतिष्ठिता | ७१ | रामायण |
| प्रथमादिस्वर | ११५ | सगीतरत्नाकर |
| प्रथमोपाकृतिः | १२८ | गर्गः |
| प्रदूष्य वा | ७१ | कामन्दक |
| प्रबन्धगति | १२० | संगीतरत्नाकर |
| प्रबन्धाङ्गानि षट् | १२० | सगीतरत्नाकर |
| प्रबन्धावयवो | ,, | ,, |
| प्रबुद्धे च | १०१ | भविष्ये |
| प्रभाववानपि | १४२ | आनुशासनिक |
| प्रभाषेताग्रतो | १०१ | भविष्ये |
| प्रमत्तमप्रमत्तं | ६३ | आदिपर्व |
| प्रमदाजन | ७७ | प्राचीनाः |
| प्रमाणमिष्ट | ६३ | आदिपर्व |
| प्रमाणमेनं | १८६ | रामायण |
| प्रमादिनं | १३३ | राजधर्म |
| प्रयागं च | १९६ | आनुशासनिक |
| प्रयागे देव | १९४ | उद्योगपर्व |
| प्रयाति नरके | १७२ | विष्णुपुराण |
| प्रयाति वैणिकः | १०७ | संगीतरत्नाकर |
| प्रयाति सागरं | २०० | विष्णुपुराण |
| प्रयातु नो | २२८ | उद्योगपर्व |
| प्रयातु वो | १८५ | उद्योगपर्व |
| प्रयान्त्येते | १७२ | विष्णुपुराण |

| पद्यार्धं | पुट-संख्या | मूलग्रन्थनाम |
| --- | --- | --- |
| वन्यं सुविहितं | २११ | रामायण |
| वपुष्मान् वीतभीः | ३६ | मनुः |
| वमनं निर्गुणत्वं | १५० | कामन्दक |
| वयमेकस्य | १८६ | उद्योगपर्व |
| वयस्यनुचरेत् | १५५ | आपद्धर्म |
| वयं त्वामनु | २२८ | उद्योगपर्व |
| ,, | १८५ | ,, |
| वयं शेषान् | २२९ | द्रोणपर्व |
| वरदानानि | ७३ | रामायण |
| वरं चास्मै | १९८ | वनपर्व |
| वरान्नपूर्णा | १५५ | आपद्धर्म |
| वराहः केतुमाले | २०१ | विष्णुपुराण |
| वरुणस्सह | १९६ | आनुशासनिक |
| वर्गाणा प्रथमाः | ३४ | शीक्षा |
| वर्णव्यवस्थितिः | २१० | सिद्धान्तशिरोमणि |
| वर्णान् जनयते | ३१ | ? |
| वर्णाश्रमविरु | १७३ | विष्णुपुराण |
| वर्तते मयि | ७५ | रामायण |
| वर्तते व्याप्ति | १०७ | संगीतरत्नाकर |
| वर्षं तद्भारतं | २०१ | विष्णुपुराण |
| वर्षे द्वे तु | २०० | ,, |
| वलिवज्र | ६६ | रामायण |
| वल्लकी कुब्जिका | ११९ | भरत |
| वल्लीनां गगनो | ९४ | तोडरानन्द |

| पद्यार्धं | पुट-संख्या | मूलग्रन्थनाम |
| --- | --- | --- |
| वीरो यथोक्त | ३५ | पुराणसार |
| वृता धृता | २०७ | सिद्धान्तशिरोमणि |
| वृत्तभपञ्जर | ,, | आर्यभटीय |
| वृत्तं तत्पाण्डु | ९१ | भीष्मपर्व |
| वृत्ता यात्रा | ९० | रामायण |
| वृत्रं हत्वा | ८५ | आनुशासनिक |
| वृद्धा यत्र | ७७ | प्राचीनाः |
| वृद्धौ प्रसन्नो | ९ | कामन्दक |
| वृथा रोष | १६५ | आदिपर्व |
| वृन्ताकं च | २०१ | पाद्म |
| वृन्तादिव | १४९ | उद्योगपर्व |
| वृषपर्वा | २१७ | कामन्दक |
| वेगवद्भिः | ११६ | शार्ङ्गदेव |
| वेगस्वरान्विता | ,, | ,, |
| वेगान्न धार | २२४ | वाहट |
| वेगी पूय | १७२ | विष्णुपुराण |
| वेतालोत्का | २१९ | कामन्दक |
| वेददूषयिता | १५ | विष्णुपुराण |
| वेदभूरर्थ | १९६ | आनुशासनिक |
| वेदस्मृति | ,, | ,, |
| वेदं वेदौ | १२९ | कूर्मपुराण |
| वेदाङ्गानि | १२ | मनुः |
| वैकङ्कप्रमुखाः | २०० | विष्णुपुराण |
| वैचित्रवीर्य | ७७ | स्त्रीपर्व |

| पद्यार्ध | पुट-संख्या | मूलग्रन्थनाम |
|---|---|---|
| सुयोधनस्य | ६४ | गदापर्व |
| सुरचापमन्द्र | ९५ | तोडरानन्द |
| सुरम्याणि | २०० | विष्णुपुराण |
| सुरापानं च | ६९ | आनुशासनिक |
| सुरापो ब्रह्महा | १७२ | विष्णुपुराण |
| सुवर्णं रजतं | १५६ | आपद्धर्म |
| सुविदीर्णं | ६६ | ,, |
| सुविशुद्धपद | ४६ | कामन्दक |
| सुसन्नद्धः | ७० | राजधर्म |
| सुस्वरेण सुवक्रेण | २१ | ? |
| सुहृद्वैद्याः | १३१ | कामन्दक |
| सूची माहिषगः | १७२ | विष्णुपुराण |
| सूर्यातपक्रान्त | ९० | रामायण |
| सूर्योदये यथा | १४८ | कामन्दक |
| सेयमभ्यन्तरात् | १९२ | राजधर्म |
| सेवन्ते यदि | ९९ | तोडरानन्द |
| सैव दुर्भाषिता | २४२ | उद्योगपर्व |
| ,, | २२४ | विदुरप्रजागर |
| सोदरेषु च | ८१ | नीतिसार |
| सोदीर्णो मूर्ध्नि | ३१ | ? |
| सोनन्तमाप्नोति | २० | कात्यायन |
| सोऽभिगम्य | ६२ | रामायण |
| सोऽयुध्यत | ६६ | द्रोणपर्व |
| सोऽहं कितव | १९२ | राजधर्म |

| पद्यार्धं | पुट-संख्या | मूलग्रन्थनाम |
|---|---|---|
| सोऽहं तथा | १५५ | आपद्धर्म |
| सोऽहं तव हिं | ८४ | आनुशासनिक |
| सोऽहं त्रस्तो | ६७ | रामायण |
| सोऽहं भारं | ३९ | द्रोणपर्व |
| सोऽहं युधि | ६९ | कर्णपर्व |
| सौदामिनी | १०४ | रसमञ्जरी |
| सौम्यं ध्रुवं | २१० | सिद्धान्तशिरोमणिः |
| सौम्या गौः | १९६ | आनुशासनिक |
| सौवर्णनिष्क | १२३ | ? |
| सौहृदं च | ९१ | भीष्मपर्व |
| संकल्पस्सगरो | १९६ | आनुशासनिक |
| संक्षेपादिति | १४७ | कामन्दक |
| संख्यायाः स्थाना | १६० | सिद्धान्तशिरोमणि |
| संगीतप्रणवो | २०७ | सगीतचिन्तामणिः |
| संगीतप्रणवं | १०७ | संगीतचिन्तामणि |
| संगृह्णीयात् | ३७ | उद्योगपर्व |
| संग्रामाणां | ६४ | द्रोणपर्व |
| संग्रामे मगध | १२३ | ? |
| संग्रामे युध्य | ४० | द्रोणपर्व |
| संघातवान् | १९१ | कामन्दक |
| संज्ञैषा लौकि | ८९ | राजधर्म |
| संपरिष्वज्य | १५७ | आपद्धर्म |
| संपूजयति | १५९ | राजधर्म |
| संप्राप्य हस्तिन | १४९ , | उद्योगपर्व |

| पद्यार्ध | पुट-संख्या | मूलग्रन्थनाम |
|---|---|---|
| सम्प्रेषितश्च | १५५ | आपद्धर्म |
| सभक्तः शासनात् | ३७ | कामन्दक |
| संभावयति | ९ | ,, |
| संभिन्नत्वात् | १०६ | संगीतरत्नाकर |
| संभोजनं | १७५ | राजधर्म |
| संयोगे च | १०७ | संगीतरत्नाकर |
| संरक्ष्यमाणैः | ६४ | द्रोणपर्व |
| संवत्सर | १२९ | व्यासः |
| ,, | ७८ | स्त्रीपर्व |
| संवत्सर | १९४ | उद्योगपर्व |
| संवादं मृत्यु | ८४ | आनुशासनिक |
| संविद्यादस्य | ९ | मनुः |
| संसक्तया भीम | २१९ | कामन्दक |
| संस्थानमस्य | १९९ | विष्णुपुराण |
| संस्थिता करुणा | १२१ | संगीतरत्नाकर |
| सस्पृश्य स्तनं | १३९ | रसमञ्जरी |
| संहृष्टमेणीकृतं | २९ | ? |
| स्तनितं निशि | ९३ | तोडरानन्द |
| स्तुवंश्च प्रति | १९७ | आनुशासनिक |
| स्तेयगायक | १२१ | मानव |
| स्तेयं त्वया | ६० | राजधर्म |
| स्तोकेनानन्दं | १४७ | प्राचीनाः |
| स्त्रीणां बाह्याभि | १९१ | वनपर्व |
| स्त्रीभावेन च | .१९५ | उद्योगपर्व |

# धर्माकूतानुस्मृतानां प्रमाणग्रन्थानां ग्रन्थकर्तॄणां च नामानुक्रमणिका ॥

ग्रन्थनाम

शीक्षा

संगीतचिन्तामणिः

संगीतचूडामणिः

संगीतरत्नाकरः

संगीतशास्त्रम्

ग्रन्थनाम

सिद्धान्तशिरोमणिः

सूर्यसिद्धान्तः

स्कान्दम्

हरिकारिका

हरिवंश

---

ग्रन्थकर्तृनाम

कालिदासः

काश्यपः

गर्गः

गोभिलः

गौतमः

देवलः

नन्दिकेश्वरः

नारदः

निश्शंकदेवः

पराशरः

पाणिनिः

प्राचीनाः

भरतः

ग्रन्थकर्तृनाम

भर्तृहरिः

बृहस्पतिः

मनुः

यमः

याज्ञवल्क्यः

वसिष्ठः

वाग्गेयकारः

व्याघ्रः

व्यासः

शार्ङ्गदेवः

शार्ङ्गसूरी

श्रीहर्षः

संवर्तः

---

MADRAS GOVERNMENT ORIENTAL SERIES

PUBLISHED UNDER THE AUTHORITY
OF THE
GOVERNMENT OF MADRAS

GENERAL EDITOR :
T. CHANDRASEKHARAN, M. A., L. T.,
*Curator, Government Oriental Manuscripts Library, Madras*

No. LXIII

# ॥ धर्माकूतम् ॥

## (सुन्दरकाण्डः)

TANJORE SARASWATI MAHAL SERIES NO. 29.

# DHARMĀKŪTAM

AN ENCYCLOPÆDIC COMMENTARY ON
SRIMAD RAMAYANA

## (SUNDARAKĀṆḌA)

BY
TRYAMBAKA MAKHIN

*Critically Edited with Introduction*

BY
T. CHANDRASEKHARAN, M. A., L. T.,
*Curator, Government Oriental Manuscripts Library,*
*Madras.*

PUBLISHED BY
SRI. S. GOPALAN, B. A., B. L.,
*Hony, Secretary for the Administrative Committee*
*T. M. S. S. Mahal Library, Tanjore.*
1951

# INTRODUCTION.

The Government of Madras took up for consideration the question of publication of the various manuscripts in different languages on subjects like Philosophy, Medicine, Scienee, etc., early in May, 1948. Important Manuscripts Libraries in the Madras Presidency were requested to send a list of unpublished manuscripts with them for favour of being considered by the Government for publication. The Honorary Secretary of the Tanjore Maharaja Serfoji's Sarasvathi Mahal Library, Tanjore, alone complied with this request. This list as well as a similar list of unpublished manuscripts in the Government Oriental Manuscripts Library, Madras, were carefully examined and a tentative selection of manuscripts suitable for publication was made. The Government in their Memorandum No. 34918/48-10. Education, dated 4-4-1949, constituted an Expert Committee with the Curator of the Government Oriental Manuscripts Library, Madras, as the Secretary, for the final selection of manuscripts suitable for printing and for estimating the cost of publication.

The following are the members of the Committee:—

1. Sri T. M. Narayanaswami Pillai, M.A., B.L.
2. ,, R. P. Sethu Pillai, B.A., B.L.
3. ,, C. M. Ramachandra Chettiar, B.A., B.L.
4. ,, R. Krishnamoorthy, (Kalki).
5. Dr. N. Venkataramanayya, M.A., Ph. D.
6. Sri M. Ramanuja Rao Naidu, M. A.
7. ,, V. Prabhakara Sastri.
8. ,, N. Venkata Rao.
9. ,, H. Sesha Ayyangar.
10. ,, Masthi Venkatesa Ayyangar.
11. ,, M. Mariappa Bhat, M.A., L.T.
12. Dr. C. Achyuta Menon, B.A., Ph. D.

13. Sri C. Kunhan Raja, M.A., D. Phil.
14. " A. Sankaran, M.A., Ph.D., L.T.
15. " P. Rama Sastri
16. " S. K. Ramanatha Sastri.
17. Dr. M. Abdul Haq M.A., D.Phil., (Oxon.)
18. Afzul-ul-Ulama Hakim Khader Ahamed.
19. Sri P. D. Joshi.
20. " S. Gopalan, B.A., B.L.
21. " T. Chandrasekharan, M.A., L.T.

The members of the Committee formed into Sub-Committees for the various languages, Sanskrit, Tamil, Telugu, Kannada, Malayalam, Mahrathi and Islamic languages. They met during the month of May 1949, at Madras and at Tanjore to examine the manuscripts and make a selection. The recommendations of the Committee were accepted by the Government in G. O. No. Mis. 2745 Education, dated 31-8-1949. and they decided to call these publications the "MADRAS GOVERNMENT ORIENTAL SERIES," and appointed the Curator, Government Oriental Manuscripts Library, Madras, as the General Editor of the publications.

The following manuscripts have been taken up for publication during the year 1949—50 :—

## "A" From the Government Oriental Manuscripts Library, Madras.

### TAMIL

1. KAPPAL SATTIRAM.
2. ANUBHAVA VAIDYA MURAI.
3. ATTANAKOLAHALAM.
4. UPADESA KANDAM.
5. COLAN PURVA PATTAYAM.

6. KONGA DESA RAJAKKAL.
7. SIVAJNANA DIPAM.
8. SADASIVA RUPAM, with commentary.

TELUGU

1. SANGITARATNAKARAMU.
2. AUSADA YOGAMULU.
3. VAIDYA NIGHANTU.
4. DHANURVIDYA VILASAMU.
5. YOGA DARSANAVISAYAMU.
6. KHADGA LAKSANA SIROMANI.

SANSKRIT

1. VISANARAYANIYAM.
2 BHARGAVA NADIKA.
3. HARIHARACATURANGAM.
4. BRAHMASUTRAVRTTI MITAKSARE.
5. NYAYASIDDHANTA TATVAMRTAM.

MALAYALAM

1. GARBHA CIKITSA.
2. a. VASTULAKSANAM
   b. SILPASASTRAM.
   c. SILPAVISAYAM.
3. MAHASARAM.
4. KANAKKUSARA
5. KRIYAKRAMAM.

KANNADA

I. LOKOPAKARA.
2. RATTAMATA.
3. DIKSABODHE.
4. ASVASASTRAM.
5. ÂUSADAGALU,
   b. VAIDYAVIṢAYA.

6. SANGITARATNAKARA.
7. SUPASASTRA,

## ISLAMIC LANGUAGES

1. JÂMIL—ALASHYA
2. TIBBE—FARIDI
3. TÂHQIQ—AL—BURHAN.
4. SAFINAT—AL—NAJAT.

# "B" From the Tanjore Maharaja Serfoji's Sarasvathi Mahal Library, Tanjore.

## TAMIL

1. SARABENDRAVAIDYA MURAI. (Diabetes,)
2. Do. (E, N & T)
3. AGASTIYAR
4. KONKANASARAKKU VAIPPU.
5. TIRUCHITRAMBALAKKOVAIYAR (with Padavurai)
6. KALACAKRAM
7. TALASAMUDRAM
8. BHARATANATYAM.
9. a. PANDIKELI VILASA NATAKAM
   b. PURURAVACAKRAVARTI. NATAKAM
   c. MADANA SUNDARA VILASA NATAKAM.
   d. PERCY MACQUEEN'S COLLECTION in the Madras University Library, on Folklore.
10. RAMAIYAN AMMANAI.
11. TAMIL PADALKAL including Pattinathar Venba and Vannankal

## TELUGU

1. KAMANDAKANITISARAMU.
2. TALADASAPRANAPRADIPIKA.

▼

3. a. RAGHUNATHA NAYAKA ABHYUDAYAMU.
   b. RAJAGOPALAVILASAMU.
4. RAMAYANAMU by Katta Varadaraju.

## MAHRATHI

1. NATYASASTRA SANGRAHA.
2. a. BOOK OF KNOWLEDGE.
   b. FOLK SONGS.
   c. DORA DARUN VENI PADDHATI.
   d. ASVASA CATULA DUMANI.
3. a. PRATAPASIMHENDRA VIJAYA PRABANDHA.
   b. SARABHENDRA TIRTHAVALI.
   c. LAVANI.
4. DEVENDRA KURAVANJI.
5. BHAKTA VILASA.
6. SLOKA BADDHA RAMAYANA.

## SANSKRIT

1. ASVASASTRA with Tricolour illustrations.
2. RAJAMRGANKA.
3. CIKITSAMRTASAGARA
4. AYURVEDAMAHODADHI.
5. GITA GOVINDA ABHINAYA.
6. a. COLACAMPU.
   b. SAHENDRA VILASA
7. DHARMAKUTAM—Sundara Kanda.
8. JATAKASARA.
9. VISNUTATVANIRNAYA VYAKHYA.
10. SANGITA DARPANA.
11. BIJAPALLAVA.

It is hoped that the publication of most of the important manuscripts will be completed within the next four years.

Some of the manuscripts taken up for publication are represented by single copies in the Library and consequently the mistakes that are found in them could not be corrected by comparing them with other copies. The editors have, however, tried their best to suggest correct readings. The wrong readings are given in round brackets and correct readings have been suggested in square brackets. When different readings are found, they have been given in the footnotes except in the case of a few books in which the correct readings have been given in the footnote or incorporated in the text itself.

The Government of Madras have to be thanked for financing the entire scheme of publication although there is a drive for economy in all the departments. My thanks are due to the members of the Expert Committee who spared no pains in selecting the manuscripts for publication. I have also to thank the various editors, who are experts in their own field, for readily consenting to edit the manuscripts and see them through the Press. The various Presses that have co-operated in printing the manuscripts in the best manner possible also deserve my thanks for the patience exhibited by them in carrying out the corrections made in the proofs.

Govt. Oriental
Manuscripts Library,
Madras.

**T. CHANDRASEKHARAN,**
*General Editor,*
*Madras Govt. Oriental Series.*

# PREFACE.

"DHARMAKUTAM" is a commentary on SRIMAD RAMAYANA of VALMIKI. Although there are numerous commentaries on the Epic, this commentary is quite a unique production in as much as it deals exhaustively with all questions that may possibly arise from a study of the great Poem. It is more in the nature of an Encyclopaedia than a mere commentary on the Epic, and it is one of the many rich legacies of learning left by the Maharatta regime in Tanjore.

It was written about the year 1719 A. D., at the instance of Raja Serfoji I (1711–1728), by TRIAMBAKA MAKHIN, the Minister of his court. Triambaka was the second son of Gangadhara Adhwari, the Minister of Ekoji Rajah (1667–1683), the founder of the Maharatta dynasty of Tanjore. The King had 3 sons, Shahji, Serfoji and Tulajaji who ruled after him in succession. The Minister also had 3 sons Narasimha, Triambaka and Bhagavanta, of whom the first two succeeded their father, one after the other as Minister of the state. During the last days of Ekoji, our author Triambaka was appointed minister of Shahji, which office he filled under him, and under his successor Serfoji I. The extraordinary munificence of Shahji to learned men, which earned for

him the name of BHOJA OF TANJORE, must be ascribed in part to the wholesome influence of his Minister, TRIAMBAKA.

This commentary is called "DHARMAKUTAM", which means that it is a commentary elucidating the express and implied references to Dharma or 'Righteous Conduct', in the Ramayana. The author has rightly pointed out that though there have been several commentaries on the Ramayana, most of them have confined themselves to the explanation of difficult passages in general, while a few others have sought to find support for particular religious cults in the great epic ; but none has dealt with the ethical aspect of this work, which after all appeals most to the general reader.

The author has therefore discussed every question relating to Dharma that occurs directly or indirectly throughout the epic. It must be borne in mind that though the word "Dharma" can be loosely translated as "ethics", still its proper significance includes "all means which are ordained by Scriptures and Seers for the attainment of real happiness here and hereafter". This interpretation has brought within the commentator's province many questions of religious ritual and philosophy, nay, every subject pertaining to our culture, that happens to be referred to expressly or even by remote implication in the Epic. And it is a noteworthy feature of this commentary that every subject taken up for discussion is dealt with fully and thoroughly, supported by quotations from all available sources. In the result the author has

actually produced a remarkable encyclopaedia dealing with all subjects pertaining to our national culture; and the work is thus an extraordinary production by a versatile genius deeply learned in all arts and sciences.

The only manuscripts of the work are to be found in the Saraswathi Mahal Library. The Publication of this work from the Mss. of this library was taken up by Sri Vani Vilas Press, Srirangam some 30 years ago. But it stopped with BALAKANDA, AYODHYAKANDA, and a portion of ARANYAKANDA The present publication is of the SUNDARAKANDA.

The name SUNDARAKANDA, has been variously interpreted. The more widely accepted interpretation is that 'SUNDARA' is one of the names of HANUMAN and the Kanda mainly dealing with his exploits is called SUNDARAKANDA. The author of the present commentary however gives another interpretation and justifies it by his commentary. According to him, the Kanda is called Sundara because it is beautiful, and many of the most beautiful descriptions of Ramayana are to be found in this Kanda. Following this view, the author has dealt exhaustively with ALANKARA SASTRA, or the Science of Literary Beauty in his commentary. Other subjects are not left out and are dealt with as exhaustively in their proper places. We hope to publish the other Kandas also in course of time.

The work has been ably edited with an introduction by Sri T. Chandrasekharan, M.A., L.T., Curator, Govern-

ment Oriental Manuscripts Library, Madras, who is the General Editor of this series. Our thanks are due to him for his valuable services.

We are thankful to the Government of Madras for their liberal grants which have enabled us to publish this and other valuable manuscripts of this Library.

Saraswati Mahal, Library
TANJORE.
February 1951

S. GOPALAN,
*Honorary Secretary.*

# முன்னுரை

இவ்வெளியீட்டில் தஞ்சை மஹாராஷ்டிர மன்னர்களாகிய சாஹுஜி (1684-1711) சரபோஜி I (1711 to 1728) இவ்விருவரிடமும் மந்திரியாக இருந்த ஸகலகலா பண்டிதராகிய த்ர்யம்பகமக் என்பவரால் எழுதப்பட்ட ஸ்ரீமத் ராமாயண வ்யாக்யானமாகிய தர்மாகூதம் என்ற நூலின் ஸுந்தரகாண்டப்பகுதி அடங்கியுள்ளது. இதன் ஆசிரியர் தனது விரிவுரையில் இராமாயணத்திலுள்ள தர்மஸம்பந்தமான சர்ச்சைகளை ஐயந்திரிபற விளக்க வேண்டும், என்பதையே தமது நோக்கமாகக்கொண்டு இந்நூலுக்கு தர்மாகூதம் என்கிற பெயரை இட்டுள்ளார். தர்மாகூதம் என்னும் தொகைநிலைத்தொடருக்குத் 'தர்மத்திலேயே இராமாயணத்துக்கு முக்கியமான தாத்பர்யம் என்பதை விளக்கும் நூல்' என்பது பொருள். தர்மம் என்றால் தமக்கும் பிறருக்கும், இம்மையிலும் மறுமையிலும் உயர்வைக் கொடுக்கும் ஒழுக்கமுறை என்று பொருள் கூறலாம். இப்பொருளைத்தழுவி எழுதப் பட்ட இந்நூலில் வைதிக லௌகிக கர்மாக்கள் யாவும் விசாரிக்கப்படுகின்றன. நமது வாழ்க்கைக்கு இன்றியமையாத கலைகளும் ஏனைய விஞ்ஞானம் முதலிய சாஸ்திரங்களும், தார்மிகமான வாழ்க்கை முறையின் ஓர் பகுதியாகையால் அவைகளும் இதில் செவ்வனே விளக்கப்படுகின்றன. இந்நூலில் ஓர் தனிப்பெருமை என்னவெனில், எடுத்துக்கொள்ளப்படும் ஒவ்வொரு விஷயமும் ஸாங்கோபாங்கமாக மேற்கோள்களுடன் விரித்துரைக்கப்

படுகிறது என்பதாகும். முடிவில் இந்நூலாசிரியர் இந்நூலில் ஓர் கலைக் களஞ்சியத்தையே உருவாக்கியிருக்கிறார்.

ஸுந்தரகாண்டம் என்னும் பெயருக்குப்பலர் பல விதமாகப் பொருள் கூறுகின்றனர். இராமாயணக் கதைக்குள் மிகவும் அழகியதான ' அங்குளீயக (கணையாழி) வ்ருத்தாந்தம் ' இந்தக்காண்டத்தில் வர்ணிக்கப் படுவதால் இதற்கு ஸுந்தர (அழகிய) காண்டம் என்று பெயர் இடப்பட்டது என்பர் ஒருசாரார். இந்நூலாசிரியர் ஸுந்தரகாண்டம் என்ற சொற்றொடருக்கு அழகிய காண்டம் என்று பொருள் கூறி, மிகவும் அழகிய வர்ணனைகள் நிறைந்திருப்பதால் இக்காண்டத்திற்கு இப்பெயர் இடப்பட்டது என்று தீர்மானம் செய்திருக்கிறார். அதை அனுசரித்தே இவருடைய விரிவுரையில் அலங்கார சாஸ்திரத்தை நன்றாய் விளக்கியுள்ளார்.

தர்மாகூதத்தின் பிரதிகள் ஸரஸ்வதிமஹால் நூல் நிலயத்தில் உள்ளவைகளைத்தவிர, வேறு எங்கும் கிடைக்கவில்லை. இவ்விரிவுரையை அச்சிடுவதென ஸ்ரீரங்கம் ஸ்ரீ வாணீ விலாஸ அச்சகத்தார் சுமார் 30 ஆண்டுகட்கு முன்பே தொடங்கினர். ஆனால் பாலகாண்டம் அயோத்யா காண்டம், இவற்றோடு அப்பதிப்பு நின்றுவிட்டது. இப்போது அச்சிடப்பட்டிருப்பது சுந்தரகாண்டம். மற்ற காண்டங்களும் நாளடைவில் பிரசுரிக்கப்படும்.

இந்நூலை ஓர் அரிய முகவுரையுடன் பதிப்பித்துக் கொடுத்த சென்னைக் கீழ்த்திசை நூல் நிலயத்தின் நிர்வாஹகரும், இந்நூல் உள்பட சென்னை அரசாங்கக் கீழ்த்திசைக்கலை வெளியீடுகளின் பொதுப்பதிப்பாசிரியருமாகிய ஸ்ரீ. டி. சந்திரசேகரன் எம். ஏ. எல். டி. அவர்களுக்கு எங்கள் நன்றி எப்பொழுதும் உரித்தாகும்.

இந்நூலையும், இது போன்ற பல அரிய நூல்களையும் ஸரஸ்வதிமஹால் நூல்நிலயத்திலிருந்து வெளியிடுவதற்குத் தாராளமாக நிதி உதவி செய்துவரும் சென்னை அரசாங்கத்தார் அவர்களுக்கு நாங்கள் எப்பொழுதும் கடமைப்பட்டுள்ளோம்.

ஸரஸ்வதிமஹால்
நூல் நிலயம்
தஞ்சை 1951

எஸ். கோபாலன்
கௌரவ காரியதரிசி.

# INTRODUCTION

It is well known that the Ramayanam was composed by the venerable sage Valmiki describing in 24,000 verses the life history of Sri Ramachandra. This majestic poem has been commented upon by a number of scholars mainly for the purpose of explaining the words and ideas, making clear what has been suggested, reconciling the apparently contradictory statements and interpreting the Kavya as extolling Siva or Vishnu. But till now no one has attempted to explain the work from the standpoint of Dharma. To satisfy this long-felt need, at the instance of the scholarly king Sarabhoji of Tanjore, Tryambaka Makhi wrote the commentary called Dharmakutam, selecting only a few important verses of the Ramayana. The author himself says :

'रामस्यास्य चरित्रवर्णनपरं रामायणाख्यं महा-
काव्यं यत्प्रथमः कविर्व्यरचयत्पुण्यं पुमर्थप्रदम् ।
तस्यैतस्य चिरन्तनास्वपि महाव्याख्यास्वनुद्भावितं
भावं कंचिदसूचयाद्विमलधीः श्रीत्र्यम्बकाख्यो मखी ॥'[1]

'प्राचीनैः कविभिर्न धर्मपरता रामायणस्येरिता
सेयं सम्प्रति वर्ण्यतामिति मुहुः सम्प्रेरितेनादरात् ।

1. **Tanjore** Descriptive Catalogue, Page 6683 **verse 4**

विद्वद्भिस्तदनुग्रहेण शरभक्ष्माभृत्कटाक्षेण च
व्याख्या त्र्यम्बकयज्वना विरचिता विस्पष्टधर्माशया ॥ '2

It may be argued that the Ramayana is intended only to describe the achievements of Sri Ramachandra, and it is far fetched to weave the ideas of Dharma into the work. But when various statements in the Ramayana itself are carefully examined, it will not be difficult to come to the conclusion that the Ramayana is intended mainly to illustrate the practice of Dharma as observed by Sri Ramachandra.

'धर्मज्ञश्च कृतज्ञश्च '3 'रक्षिता स्वस्य धर्मस्य '4 'रामो विग्रहवान्धर्मः '5 'यस्मिन्न चलते धर्मो यो धर्मान्नातिवर्तते ।'6 'चातुर्वर्ण्यं च लोकेऽस्मिन्स्वे स्वे धर्मे नियोक्ष्यति ।'7 'विद्धि मामृषिभिस्तुल्यं केवलं धर्ममास्थितम् ।'8 'धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि ।'9 'लोकानां त्वं परो धर्मः '10 etc,

Sri Krishna proclaims in the Bhagavadgita

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥

---

2. *Ibid* Verse 7
3. Ramayana (M. L. J. Press Edition) I—i—2
4. *Ibid* I—i—14
5. *Ibid* III—xxxvii—13
6. *Ibid* VI—xxviii—19
7. *Ibid* I—i—96
8. *Ibid* II—xix—20
9. *Ibid* VI—xci—73
10. *Ibid* VI—cxx—15

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।। ' 11

From this, does it not become clear that Vishnu's Avatara as Sri Rama is for the establishment of Dharma by the removal of the wicked and the protection of the good? We all know that what was observed by Rama is Dharma and Adharma is what was practised by Ravana and that Rama is himself a Dharmatma and acting as a guide for others to follow the path of Dharma.

The Ramayana is regarded as a restatement of the Veda itself and is also intended to amplify the ideas of the Veda through illustrations.

'वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ।' 12

'पुण्यं वेदैश्च संमितम् ।' 13

'वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ।' 14

Veda is the root cause of Dharma and it is itself rooted in Dharma.

'वेदोऽखिलो धर्ममूलम् ।' 15

'वेदो धर्ममूलम् ।' 16

---

11. Bhagavad Gita—IV—7 & 8
12. Ramayana—Page 4, Verse 12
13. *Ibid* I—i—98
14. *Ibid* I—iv—6
15. Manu Smriti (Nirnayasagar Edition) II—6
16. Gautama Dharma Sutra (Mysore Edition) I—1

The same idea is given by Sri Jaimini in the Mimamsa Sutras

'चोदनालक्षणोऽर्थो धर्मः ।' 17

'तस्य ज्ञानमुपदेशः ।' 18

Hence it can be stated without any fear of contradiction that the main purpose of the Ramayana is to give a clear exposition of the Dharma.

The nature of Dharma itself is given differently by different authorities.

'चोदनालक्षणोऽर्थो धर्मः ।' "अलौकिकश्रेयस्साधनं धर्मः," 19 etc.

But all these different statements lay emphasis upon Dharma being the cause of the attainment of Moksha.

What are the Pramanas for Dharma? They are 4 in number. The Vedas, the Law codes, the Practice and Mental satisfaction.

'वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥' 20

'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥' 21

---

17. Purva Mimamsa Sutra I—i—2
18. *Ibid* I—i—5
19. *Ibid* I—i—2
20. Manu Smriti II—12
21. *Ibid* II—6

'वेदो धर्ममूलं' 'तद्विदां च स्मृतिशीले।' 22
'धर्मज्ञसमयः प्रमाणम्' 'वेदाश्च।' 23

Of these four Pramanas, the Veda does not derive its authority from any other source i.e., it is auto-authoritative.

'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः।' 24
'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।' 25

['अर्थो हि नैकः कृतयोऽप्यनन्ता
नैका स्मृतिर्यद्वचनं प्रमाणम्।
धर्मस्य तत्त्वं निहितं गुहायां
तस्माच्छ्रुतिर्नः परमं प्रमाणम्॥']

The next in order of authority is Smriti whose authority is based upon the Veda. When there is contradiction between two statements in the Smriti, then both must be regarded as authoritative and the contradictory statements should be regarded as giving an option to the people

'श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ।' 26
'तुल्यबलविरोधे विकल्पः।' 27

---

22. Gautama Dharma Sutra (Mysore Edn. I-1 & 2
23. Apastamba Dharma Sutra (Mysore Edition) I—i—2 & 3
24. Manu Smriti II—13
25. Bhagavad Gita XVI—24
26. Manu Smriti II—14
27. Gautama Dharma Sutra I—6

But when there is contradiction between Sruti and Smriti, the former will prevail as it is अपौरुषेय

'श्रुतिस्मृत्योर्विरोधे तु श्रुतिरेव गरीयसी ।
अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सदा ॥' 28

'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ।' 29

'विप्रतिषेधे श्रुतिलक्षणं बलीयः ।' 30

The Dharmas as expounded in the Vedas, appear to be different in different places and much is made about this apparent lack of uniformity to refute the authoritative nature of the Vedas. The following are some of the instances about which there is no hard and fast rule. Eating in the company of a woman or a person who is not a Upanita or what is left after being eaten by others, marriage alliance with the children of uncle, the sale of wool, the drink of liquor, the profession of a soldier, eating fish, travel over the seas etc., are regarded as Dharma by some and as Adharma by others. Again there is discrepancy in the duration of the performance of certain religious acts, Brahmacharya, penance etc, ranging from 10 years to a few days. Similarly there is difference in respect of the Adhikaris, Avastha, Varna and Ashramam. But it must be understood that the ancient seers have given their own interpretation of the Dharma as found in the Vedas to suit to the various climes, times, persons

---

28. Kullukabhatta's commentary on Manusmriti II–13
29. Purva Mimamsa Sutra I—iii— 3
30. Apastamba Dharma Sutra I—xxx—9

वानरोऽयं स्वरूपेण नान्यः' इत्यत्र वानरीयो हनूमति वैधर्म्यतत्त्वा-
रोपात् वानरत्वापह्नवाच्छुद्धापह्नवालङ्कारः इति । धर्मा-
न्तरारोपार्थं निह्नवनमापह्नवत्वं शुद्धापह्नवालङ्कारलक्षणत्वमुक्तं
चन्द्रालोके— 'शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः' इति ।
उदाहृतं च तत्रैव—'नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम्' इति ॥

स गन्धस्तं महात्मानं बन्धुर्बन्धुमिवोत्तमम् ।
इत एहीत्युवाचेव तत्र यत्र स रावणः ॥

पुप्लुवे कपिशार्दूलो विकर्षन्निव रोदसी ।
फलतीवास्य घोषेण गगनं सार्कमण्डलम् ॥

इत्यादौ वस्तूत्प्रेक्षालङ्कारः । तथा हि— अन्यधर्म-
निमित्तेनान्यस्याभिन्नत्वतादात्म्यसंभावनमुत्प्रेक्षेत्युच्यते । सा च
त्रिविधा— वस्तूत्प्रेक्षा, हेतूत्प्रेक्षा, फलोत्प्रेक्षा चेति । तत्र
कस्यचिद्वस्तुनः वस्त्वन्तरतादात्म्यसंभावना वस्तूत्प्रेक्षा । अहेतो-
र्हेतुत्वसंभावना हेतूत्प्रेक्षा । अफलस्य फलत्वसंभावना फलोत्प्रेक्षा ।
तत्र वस्तूत्प्रेक्षा द्विविधा— उक्तविषया अनुक्तविषया चेति ।
हेतुफलोत्प्रेक्षे अपि प्रत्येकं द्विविधे— सिद्धविषये असिद्धविषये
चेति । तथा च षड्विधा उत्प्रेक्षा । तदुक्तम्— 'संभावना
स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना । उक्तानुक्तास्पदाद्या तु सिद्धा-
सिद्धास्पदे परे ॥' इति । उदाहृतं च— 'धूमस्तोमं तमः शङ्के
कोकीविरहशुष्मणाम् । लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
रक्तौ तवाङ्घ्री मृदुलौ भुवि विक्षेपणाद्ध्रुवम् । त्वन्मुखाभेच्छया

1 स्यापवाद्या 2 बन्धुं व. 3 स्युः

फलोत्प्रेक्षा इति । प्रकृतोदाहरणेऽपि 'स गन्धस्तं महासत्वम्' इत्यत्र रावणावस्थानदेशसंभूतवातसमानीतविविधभक्ष्यपेयद्रव्यगतगन्धे, आघ्राना[1]कर्तरि आघ्रानकर्तृनिष्ठेन संबोध्यगततद्देशगमनानुकूलव्यापारवत्त्वेन निमित्तेन तत्तादात्म्याध्यवसानाद्वस्तूत्प्रेक्षा । 'पुप्लुवे कपिशार्दूलः' इत्यत्रापि हनूमत्कर्तृकाकाशगमनरूपप्लवनस्य द्यावापृथिवीकर्षणभिन्नस्य सतः वेगातिशयवन्निष्ठत्वेन निमित्तेन तदभेदसंभावनात् वस्तूत्प्रेक्षा इति ॥

त्रयाणामेव भूतानां सागरस्येह लङ्घने ।
शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥

इत्यादौ वेगादिरूपगुणोत्कृष्टाभ्यां मारुतवैनतेयाभ्यां तुल्यतया हनूमतो वर्णनात् तुल्ययोगिता । गुणोत्कृष्टैः तुल्यतां विधाय वर्णनस्य तुल्ययोगितात्वम् । उक्तं च चन्द्रालोके— 'गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिता' इति । उदाहृतं च— 'लोकपालो यमः पाशी श्रीदः शक्रो भवानपि' इति । अत्र वर्णनीयो राजा शक्रादिभिर्लोकपालत्वेन समीकृतः ॥

समुद्रमध्ये सुरसा बिभ्रती राक्षसं वपुः ।
विकृतं च विरूपं च सर्वस्य च भयावहम् ॥

इत्यत्र,

घातयेत्परमामर्षी सर्वैः सार्धं हि राक्षसैः ।
रावणं राघवो घोरे भार्याहर्तारमाहवे ॥

---

1 नक

इत्यादौ ‘ अतृप्तं ’ इत्यंशेन स्त्रीप्रकारेषु संतोषाभावप्रतिपादनेन ‘ धर्षितं ’ ‘ चपलेन्द्रियं ’ इति विशेषणद्वयेन विषयलोलुपत्वावशीकृतेन्द्रियत्वप्रतिपादनेन च परदाराभिरक्तत्वेनावगतस्य पुंसः परदारकर्तृकपराभवप्रतिपादनात् स्वाभिमतकार्यानिष्पत्तिपूर्वकानिष्टावाप्तिरूपो **विषमालङ्कारः** । इष्टानवाप्तिपूर्वकानिष्टप्राप्तेश्च विषमालङ्कारत्वं उक्तं चन्द्रालोके— ‘अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात्’ इति । उदाहृतं च तत्रैव— ‘ भक्ष्याशयाऽहिमञ्जूषां दष्ट्वाखुस्तेन भक्षितः ’ इति ॥

**अहमौपयिकी भार्या तस्यैव वसुधापतेः ।**
**व्रतस्नातस्य धीरस्य विद्येव विदितात्मनः ॥**
**राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा ।**

इत्यादौ अनुरूपयोः सीतारामयोर्वर्णनादनुरूपवस्तुद्वयवर्णनात्मकः समालंकारः । उक्तं च चन्द्रालोके अनुरूपवस्तुद्वयवर्णनस्य समालंकारत्वम्— ‘समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः’ इति । उदाहृतं च तत्रैव— ‘स्वानुरूपं कृतं सद्म हारेण कुचमण्डलम्’ इति ॥

**ततापन हि तं सूर्यः प्लवन्तं वानरेश्वरम् ।**
**सिषेवे च तदा वायू रामकार्यार्थसिद्धये ॥**

इत्यत्र तपन[1] कृतातपाभावे[2] पवनकृतसेवने च आनुकूल्याचरणप्रयुक्तकार्यसौकर्यागमात् कारणान्तरसंनिधिप्रयुक्तकार्य-

---

1. तपनवनकृता 2. भावे आनु

सौकर्यरूपः समाधिः। उक्तं च कारणान्तरसन्निधिप्रयुक्तकार्यसौकर्यस्य समाधित्वं चन्द्रालोके— 'समाधिः कार्यसौकर्यं कारणान्तरसन्निधेः' इति। उदाहृतं च तत्रैव— 'उत्कण्ठिता च तरुणी जगामास्तं च भानुमान्' इति ॥

न हि शक्यं कश्चित्स्थातुमविज्ञातेन राक्षसैः।
अपि राक्षसरूपेण किमुतान्येन केनचित् ॥
अपकुर्वन् हि रामस्य साक्षादपि पुरन्दरः।
न सुखं प्राप्नुयादन्यः किं पुनस्त्वादृशो जनः ॥

इत्यत्र लङ्कायां स्वरूपं तिरोधाय राक्षसरूपेणापि केनचिन्निशाचरैरविज्ञातेन स्थातुं न शक्यते ; किमु वक्तव्यं अन्येनाराक्षसरूपेण इति स्थातुमशक्यत्वस्यार्थस्य कैमुतिकन्यायसिद्धत्वप्रतिपादनात्, तथा येन त्वं जितो यश्च श्रीरामस्य देवभावेन पूजनीयः सोऽपि देवेन्द्रः श्रीरामापकारी चेन्न सुखं प्राप्नुयात् ; किं पुनस्त्वादृश इति रावणं प्रति प्रतिपादनेन रामापकारकारिरावणसुखाप्राप्तिरूपस्य अर्थस्य कैमुतिकन्यायसिद्धत्वप्रतिपादनाच्च कैमुत्येनार्थसंसिद्धिरूपा काव्यार्थापत्तिः। उक्तं च कैमुत्येन अर्थसंसिद्धेः काव्यार्थापत्तित्वम्— 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते' इति। उदाहृतं च— 'स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम्' इति। अत्र 'स' इत्यनेन येन पद्मानि जितानि इति विवक्षितम्। तथा च सोऽपि येन जितः तेन पद्मानि जितानि इति किमु वक्तव्यं इति दण्डापूपिकान्यायेन पद्मजयरूपस्यार्थस्य संसिद्धिः काव्यार्थापत्तिः ॥

युक्तरूपं त्वया देवि भाषितं शुभदर्शने ।
सदृशं स्त्रीस्वभावस्य साध्वीनां विनयस्य च ॥

त्वं च न समर्थं हि सागरं व्यतिवर्तितुम् ।

कथं च धर्मार्थविनीतबुद्धिः
परावरप्रत्ययनिश्चितार्थः ।
भवद्विधः कोपवशे हि तिष्ठे-
त्कोपं नियच्छन्ति हि सत्त्ववन्तः ॥

इत्यत्र सीतोक्तस्य स्वकर्तृकसागरलङ्घनानुचितत्वस्य विशेषस्य स्त्रीसामान्यनिष्ठसागरलङ्घनासामर्थ्यरूपसामान्यस्य, रावणं प्रति कोपनिषेधरूपविशेषस्य सत्पुरुषकर्तृक[1]कोपनियमनलक्षणसामान्यस्य चोपादानात् सामान्यविशेषयोरुक्तिरूपोऽर्थान्तरन्यासः । उक्तं च सामान्यविशेषयोरुक्तेरर्थान्तरन्यासत्वम्— 'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः ' इति । उदाहृतं च— 'हनूमानब्धिमतरद्दुष्करं किं महात्मनाम् ' इति ॥

शरैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः ।
आनयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥

इत्यत्र सीतया राघवकर्तृकलङ्काशरनिबिडीकरणपूर्वकस्वीयानयनस्य राघवोचितकर्मसिद्ध्यर्थत्वेनोहितत्वात्, यदीत्थं स्यात् इत्यन्यसिद्ध्यर्थोहरूपः संभावनालङ्कारः । उक्तं च एतादृशोहस्य संभावनात्वम्— 'संभावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ' इति । उदाहृतं च— 'यदि शेषो भवेद्वक्ता कथिताः

---

1. कोपानङ्गीकार

स्युर्गुणाकरः' इति ॥

पुच्छमेवाभिजानीत योऽयं मया करिष्यति ।
अहिरेव अहेः पादान् विजानाति न संशयः ॥

[illegible] 'अतिरेक' [illegible] इत्यादिष्वेव रूपं [illegible] लोकोक्तिः ।
उक्तं च लोकप्रवादानुकारस्य लोकोक्तित्वम्— 'लोकप्रवादानुकृति-
र्लोकोक्तिरिति गद्यते' इति । [illegible] च— '[illegible]
[illegible] इति । अत्र [illegible] इति
लोकप्रवादानुकारः । यथा वा— '[illegible]
[illegible] न [illegible] । [illegible]-
[illegible] न हि सम्यगपेक्ष्यम ॥' इति ॥ अत्र
उत्तरार्धे लोकप्रवादानुकारः ॥

दुधुवे च स रोमाणि चकम्पे चानलोपमः ।
ननाद सुमहानादं सुमहानिव तोयदः ॥

आनुपूर्व्याच्च वृत्तं च लाङ्गूलं लोमभिश्चितम् ।
उत्पतिष्यन् विचिक्षेप पक्षिराज इवोरगम् ॥

पद्भ्यां दृढमवस्थानं कृत्वा स कपिकुञ्जरः ।
निकुञ्च्य कर्णौ हनुमानुत्पतिष्यन्महाबलः ॥

आस्फोटयामास चुचुम्ब पुच्छं
ननन्द चिक्रीड जगौ जगाम ।
स्तम्भानरोहन्निपपात भूमौ
[1]निदर्शयानः प्रकृतिं कपीनाम् ॥

1. निदर्शयन् स्या

इत्यादौ कपिजातिस्वभाववर्णनात् जात्यादिस्वभाववर्णनरूपः स्वभावोक्तिरलङ्कारः। उक्तं च [जात्यादिस्वभाववर्णनस्य स्वभावोक्तित्वम्]— 'स्वभावोक्तिरलङ्कारः जात्यादिस्थस्य वर्णनम्' इति। उदाहृतं च— 'कुरङ्गैरुत्तरङ्गाक्षैः स्तब्धकर्णैरुदीक्षितम्' इति॥

यदि वा त्रिदिवे सीतां न द्रक्ष्यामि कृतश्रमः।
बद्ध्वा राक्षसराजानमानयिष्यामि रावणम्॥
आनयिष्यामि वा लङ्कां समुत्पाट्य सतोरणाम्॥

इत्यत्र रावणसतोरणलङ्कानयनवर्णनात् अद्भुतानल्पशौर्यवर्णनरूपात्युक्तिः। उक्तं च अद्भुतानल्पशौर्यवर्णनस्यात्युक्तित्वम्— 'अत्युक्तिरद्भुतानल्पशौर्यौदार्यादिवर्णनम्।' इति। उदाहृतं च— 'त्वयि दातरि राजेन्द्र याचकाः कल्पशाखिनः। राजन् सप्ताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः॥' इति॥

स्वप्ने चाद्य मया दृष्टा सीता शुक्लाम्बरावृता।
रामेण संगता सीता भास्करेण प्रभा यथा॥

ततो ह्यत्र मया दृष्टो रामः सत्यपराक्रमः।
लक्ष्मणेन सह भ्रात्रा सीतया सह वीर्यवान्॥

आरुह्य पुष्पकं दिव्यं विमानं सूर्यसन्निभम्।
उत्तरां दिशमालोक्य जगाम पुरुषोत्तमः॥

इत्यादौ भाव्यर्थसाक्षात्कारवर्णनाद्भाविकालङ्कारः। उक्तं च

स्युर्गुणास्तव ' इति ॥

यूयमेवाभिजानीत योऽयं यद्वा करिष्यति ।
अहिरेव ह्यहेः पादान् विजानाति न संशयः ॥

इत्यादौ ' अहिरेव ' इत्यादिलोकप्रवादानुकारो लोकोक्तिः । उक्तं च लोकप्रवादानुकारस्य लोकोक्तित्वम्— ' लोकप्रवादानुकृतिर्लोकोक्तिरिति गद्यते ' इति । यथोक्तं च— ' सहस्व कतिचिन्मासान् मीलयित्वा विलोचने ' इति । अत्र मीलयित्वा इति लोकप्रवादानुकारः । यथा वा— ' नास्मिन् ते वरद नाकिञ्चन-दात्मभावं व्याख्यात्यतो न वहन्ते वरदानमुद्राम । विशेषणतद्विशेष्य-तरविप्रकुलप्रसूतेर्यज्ञोपवीतवहनं न हि सत्यपेक्ष्यम ॥' इति ॥ अत्र उत्तरार्धे लोकप्रवादानुकारः ॥

दुधुवे च स रोमाणि चकम्पे चाचलोपमः ।
ननाद सुमहानादं सुमहानिव तोयदः ॥

आनुपूर्व्याच्च वृत्तं च लाङ्गूलं लोमभिश्चितम् ।
उत्पतिष्यन् विचिक्षेप पक्षिराज इवोरगम् ॥

पद्भ्यां दृढमवस्थानं कृत्वा स कपिकुञ्जरः ।
निकुञ्च्य कर्णौ हनुमानुत्पतिष्यन्महाबलः ॥

आस्फोटयामास चुचुम्ब पुच्छं
ननन्द चिक्रीड जगौ जगाम ।
स्तम्भानरोहन्निपपात भूमौ
[1]निदर्शयानः प्रकृतिं कपीनाम् ॥

---

1. निदर्शयन् स्वां

इत्यादौ कपिजातिस्वभाववर्णनात् जात्यादिस्वभाववर्णनरूपः स्वभावोक्तिरलङ्कारः। उक्तं च [जात्यादिस्वभाववर्णनस्य स्वभावोक्तित्वम्]— 'स्वभावोक्तिरलङ्कारः जात्यादिस्थस्य वर्णनम्' इति। उदाहृतं च— 'कुरङ्गैरुत्तरङ्गाक्षैः स्तब्धकर्णैरुदीक्षितम्' इति॥

यदि वा त्रिदिवे सीतां न द्रक्ष्यामि कृतश्रमः।
बद्ध्वा राक्षसराजानमानयिष्यामि रावणम्॥
आनयिष्यामि वा लङ्कां समुत्पाट्य सतोरणाम्॥

इत्यत्र रावणसतोरणलङ्कानयनवर्णनात् अद्भुतात्यशौर्यवर्णनरूपात्युक्तिः। उक्तं च अद्भुतात्यशौर्यवर्णनस्यात्युक्तित्वम्— 'अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम्।' इति। उदाहृतं च— 'त्वयि दातरि राजेन्द्र याचकाः कल्पशाखिनः। राजन् सम्प्राप्यकूपारास्त्वत्प्रतापाग्निशोषिताः॥' इति॥

स्वप्ने चाद्य मया दृष्टा सीता शुक्लाम्बरावृता।
रामेण संगता सीता भास्करेण प्रभा यथा॥

ततो ह्यद्य मया दृष्टो रामः सत्यपराक्रमः।
लक्ष्मणेन सह भ्राता सीतया सह वीर्यवान्॥

आरुह्य पुष्पकं दिव्यं विमानं सूर्यसन्निभम्।
उत्तरां दिशमालोक्य जगाम पुरुषोत्तमः॥

इत्यादौ भाव्यर्थसाक्षात्कारवर्णनाद्भाविकालङ्कारः। उक्तं च

भूतभाव्यर्थान्यतरवर्णनस्य भाविकत्वम्— 'भाविकं भूतभाव्यर्थ-साक्षात्कारस्य वर्णनम्।' इति। उदाहृतं च— 'अहं विलोकयेऽद्यापि युध्यन्तेऽत्र सुरासुराः' इति। एवमलङ्कारान्तराण्यपि तत्र तत्र द्रष्टव्यानि, विस्तरभयात् इह नोदाहृतानि॥

अथ रसभरितत्वं निरूप्यते। तथा हि— विभावैरनुभावैः सात्विकैर्व्यभिचारिभिश्च स्वादिमानमानीयमानः स्थायीभावो (रति?) रस इत्युच्यते। तदुक्तं दशरूपके— 'विभावैरनुभावैश्च सात्विकैर्व्यभिचारिभिः। आनीयमानः स्वाद्यत्वं स्थायी भावो रसः स्मृतः॥' इति। विभावादयश्च प्रतिपादिताः काव्यदर्पणे— 'कारणान्यथ कार्याणि सहकारीणि यानि च। रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥ विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः॥' इति। तद्व्याख्या हि तत्रैव— लोके हि यौवनोद्भिन्नचित्तयोर्यूनोरन्योन्यसंदर्शनादिना प्रीतिरुत्पद्यते। सा च तदीयलावण्यालङ्करणादिभिस्तटस्थैरुद्यानमन्दसमीरणचन्द्रादिभिश्च, उद्दीपितोत्कण्ठापरनामधेया अभिलाषाकारेण परिणमते। तथाविधां च प्रीतिं रतिमाचक्षते। ततश्च मिथः संगत्युपायं जिज्ञासमानयोर्यूनोश्चिन्ताग्लानिशंकाविषादादयः प्रादुर्भवन्ति। तदनु च प्रीत्या चिन्तादिभिश्च तदुभयव्यञ्जिकाः चेष्टा जायन्ते। तदनन्तरं स्वयं दूतीप्रेषणेन वा संगमे जाते सा प्रीतिरुत्तरोत्तरं उज्जृम्भते। चिन्तादयः पुनः अपगच्छन्तीति स्थितिः। एवं रसान्तरेष्वप्युन्नेयम्। तथा च लोके काव्यनाट्यव्यतिरिक्तनायिकानायकव्यवहारस्थले स्थायी यो रत्यादिस्तस्य यानि कारणानि नायिकानायकरूपाणि तदीयलावण्यालङ्करणोद्यान-

मन्दसमीरणादीनि च, यानि च रत्यादेश्चिन्तादेश्च कार्याणि कटाक्षभुजाक्षेपस्तम्भरोमाञ्चादीनि, यानि च रत्यादेः सहकारीणि परिपोषहेतुभूतानि निर्वेदचिन्तादीनि तानीमानि कारणादीनि नाट्येऽभिनयप्रधाने (न?) नटव्यापारे साक्षात्कार-योग्ये, काव्ये गुणालङ्कारादिविशिष्टे श्राव्ये, सन्दर्भविशेषे च यदि स्युः, तदा कारणानि विभावा इति कथ्यन्ते— विशेषेण रत्यादयोऽमीभिर्भाव्यन्ते इति व्युत्पत्तेः । यानि च कार्याणि, तानि च अनुभावा इत्युच्यन्ते, रत्यादिकं चिन्तादिकं च अनु-भावयन्ति अनुभावयन्ति इति व्युत्पत्तेः । यानि च सहकारिकार-णानि तानि व्यभिचारिण इति कथ्यन्ते, विविधं आभिमुख्येन चरन्ति इति व्युत्पत्तेः ॥

तत्र द्विविधो विभावः— आलम्बनविभावः उद्दीपन-विभावश्चेति । यानालम्ब्य विषयीकृत्य रत्यादयो जायन्ते, ते नायिकानायकादयः आलम्बनविभावाः । तदीयलावण्यादयः चन्द्रमन्दसमीरणादयश्च उद्दीपनविभावाः, जातं रत्यादिकं उद्दीपयन्ति अभिलाषाद्याकारेण परिणमयन्तीति व्युत्पत्तेः इति भट्टलोल्लटप्रभृतयः । यद्यपि उद्दीपनानां न रत्यादिजनकत्वम्, तथापि विशेषाकारपरिणामजनकत्वात् कारणत्वं इति ध्येयम् । व्यभिचारिणस्तु त्रयस्त्रिंशद्भेदाः । तदुक्तम्— 'निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः । आलस्यं चैव दैन्यं च चिन्ता मोहो धृतिः स्मृतिः ॥ व्रीडा चपलता हर्ष आवेगो जडता तथा । गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता । मतिर्व्याधि-

स्तथोन्मादस्तथा मरणमेव च ॥ त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः । त्रयस्त्रिंशदमी भावाः समाख्याता-स्तु नामतः ॥' इति । सात्त्विका अपि तत्रैव प्रतिपादिताः 'स्तम्भः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू । अश्रु वैस्वर्य-मित्यष्टौ सात्त्विकाः परिकीर्तिताः ॥' इति । तथा च नायिका-नायकादिभिः आलम्बनविभावैस्तदीयलावण्यालङ्कारचन्द्रचन्दन-समीरणादिभिश्चोद्दीपनविभावैः कटाक्षभुजाक्षेपादिभिरनुभावैः स्तम्भादिभिः सात्त्विकैर्निर्वेदादिभिर्व्यभिचारिभिश्च स्वादुभावमापा-द्यमानः स्थायी भावो रस इति रसविदां स्थितिः । विरुद्धैः स्थाय्य-न्तरैरविरुद्धैर्व्यभिचार्यादिभिर्यो न विच्छिद्यते, अथ च अन्यान्विभावादीनात्मना सह स्वादुविषयतां नयति, स स्थायी इत्युच्यते । तदुक्तम्— 'विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः । आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥' इति । यद्वा वासनया ये चिरं चित्तेऽवतिष्ठन्ते, विभावादिभिः अनुबन्धि-भिः संबध्यन्ते, ततः प्रवृद्धाः सन्तः रसत्वं प्रतिपद्यन्ते, ते स्थायिन इत्युच्यन्ते । तदुक्तम्—'चिरं चित्तेऽवतिष्ठन्ते संबध्यन्ते-ऽनुबन्धिभिः । रसत्वं प्रतिपद्यन्ते प्रवृद्धाः स्थायिनस्तु ते ॥' इति । तदेवमुक्तलक्षणलक्षितः स्थायी भावो विभावादिभिः स्वादुतां नीयमानो रस इति निर्गलितार्थः ॥

स च रसः शृङ्गारादिभेदेन नवविधः । तदुक्तम् 'शृङ्गार-हास्यकरुणा रौद्रवीरभयानकाः । बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥' इति । अत्र नाट्यग्रहणात् काव्येष्वेत-दतिरिक्तः शान्तिर्नाम रसोऽस्तीति तद्व्याख्यायाम् । शृङ्गारादीनां

लक्षणम्, शृङ्गाररसविभागाश्च उदाहरणावसरे एव प्रदर्शयिष्यन्ते इति नेह प्रदर्श्यन्ते ॥

तत्र,

ततो वराङ्गाः सुविशुद्धभावाः
तेषां स्त्रियस्तत्र महानुभावाः ।
प्रियेषु पानेषु च सक्तभावा
ददर्श तारा इव सुप्रभावाः ॥

श्रिया ज्वलन्तीस्त्रपयोपगूढा
निशीथकाले रमणोपगूढाः ।
अन्याः पुनर्हर्म्यतलोपविष्टा-
स्तत्र प्रियाङ्केषु सुखोपविष्टाः ॥

इत्यादौ शृङ्गाररसः । नायिकानायकरूपेष्टवस्तुविषयकप्रीत्यात्मकरतेः नायिकादिभिरालम्बनविभावैः, तदीयलावण्यादिभिरुद्दीपनविभावैः, नायिकानायकपरिरम्भणादिरूपानुभावैः, व्रीडादिभिर्व्यभिचारिभिश्चापादितस्वादिम्नः (रसस्य ?) स्थाय्यन्तरैरविच्छेदेन स्थायित्वात् । उक्तं च इष्टवस्तुविषयकप्रीतेः रतित्वं, रतेश्च स्थायित्वे शृङ्गाररसत्वम्— 'मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं रतिः ।' 'स्थायी रतिर्यत्र मतः स शृङ्गाररसः स्मृतः ।' इति । अयं च संभोगरूपत्वात् संभोगशृङ्गारः । तत्रापि 'रमणोपगूढाः' इत्यन्ते नायकारब्धः, 'अन्याः पुनः' इत्यत्र तु नायिकारब्धः इति विवेकः । प्रदर्शितश्चायं भेदः काव्यदर्पणे— 'संभोगोऽत्रालोकनादिभेदाद्बहुधाप्यनेकधा । तथापि कामिनीकान्तारब्धभेदा-

द्विधा मतः ॥' इति । उदाहृतं च— 'शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनैर्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् । विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥' इति । अत्र वासगृहं शून्यं विलोक्य शयनाच्छनैः किंचिदुत्थाय प्रेयस्या अनुरागशोधनाय कपटनिद्रामुपागतस्य पत्युर्मुखं सुचिरं निरीक्ष्य विस्रब्धं परिचुम्ब्य जातपुलकां पत्युर्गण्डस्थलीमालोक्य नम्रमुखी बाला हसता प्रियेण चिरं चुम्बितेति वाच्यार्थकक्ष्या शब्दार्थानुशासनमात्रविदां गोचरः । शून्यवासगृहविलोकनमुत्थानस्य, तदुत्थानं मुखनिर्वर्णनस्य, तच्च परिचुम्बनस्य, तच्च पुलकोद्गमस्य, तदवलोकनं च लज्जायाः, सा च मुखावनतेः, सा च प्रियचुम्बनस्य कारणभावमालम्बते । इत्थं वैचित्र्यकक्ष्या स्वालङ्कारिकाणां गोचरः । ध्वन्यध्व[1]नीनानां तु संभोगशृङ्गारश्रवणैकपथमभ्यासे । तथा हि— शून्यमिति विजनतया चुम्बनयोग्यता, वासगृहमिति स्रक्चन्दनादिसामग्रीसमग्रतयोद्दीपकता, [2]विलोक्येति [[3]विलोकनस्य पौनःपुन्यलक्षणो न विशेषः, तेन च न मौग्ध्यातिशयः, किंचिदुत्थायेति पूर्वकायमात्रेण शय्यापरित्यागः, तेन च नायकोरुसन्दानितोरुकाण्डता, शनैरिति मिथः सन्दानितोरुसंक्षोभेण] पत्युरुत्थानभीरुता, उपागतस्येति व्याजनिद्रायास्तदानीमेव प्राप्तिः, तथा च व्याजनिद्रोपक्रमसमय एव तया चुम्बितमुपक्रान्तमिति तस्या अनुरागातिशयः, सुचिरमिति सुचिरं निर्वर्णनेऽपि व्याजनिद्रा-

---

1 नीतानां 2. विलोरूक्षन॰ 3. स्थलान्तरे (P. 24) विपर्यस्य लिखितमौचित्यादत्र संयोजितम् ।

निश्चयाभावात् तस्या औत्सुक्यातिशयः, तस्य व्याजनिद्रागोपने नैपुण्यम्, पत्युरिति वोढृत्वमात्रम्, न तु पूर्वमुपभोक्तृत्वम्, विस्रब्धमित्यनेन निःशङ्कत्वकारितायाः परा काष्ठा, परिचुम्ब्येति चुम्बनस्य परितः स्थानकर्तृत्वेन प्रवृत्तिः, जातपुलकामिति पुलकानामवशादाविर्भावः, आलोक्येति ईषदवलोकनमात्रेणे[1]त्ययमर्थः । नम्रमुखीति; न तु नाभिमुखीत्ययमर्थः । तेन च लज्जातिशयादस्या मुखानमनेऽपि न स्वातन्त्र्यम्, नत्तु लज्जयैव स्वयं नतामित्यर्थः । पत्युरिति प्राङ्निर्दिश्य प्रियेणेति प्रतिनिर्देशात्, तदानीं तस्य अभिकप्रेमविषयत्वम्, हसतेति तदनुरागपरिज्ञानेन तस्य हर्षातिशयः, बालेति तीर्थ[2]चुम्बनाचातुर्यम्, चिरमिति यावता समयेन लज्जामपभूय संभोगप्रस्तावाङ्गीकारः, तावत्कालं चुम्बितेति व्यज्यते । अत्र विस्रब्धपरिचुम्बनान्तशृङ्गारस्य नायिकाकर्तृकत्वम् । 'प्रियेण हसते'त्यादौ नायककर्तृकत्वं च । तेन संभोगशृङ्गारद्वयमपीहाभिव्यज्यते । अत्र नायकविषयरतेः नायक एवालम्बनविभावः । शून्यवासगृहादिकमुद्दीपनविभावः । किञ्चिदुत्थानादिकमनुभावः । तदनुमितौत्सुक्यादयो व्यभिचारिणः । नायिकाविषयरतेः नायिकैवालम्बनविभावः । हासोऽनुभावः । तदनुमितहर्षादयो व्यभिचारिण इति ध्येयम् । अत्र संभोगस्य द्व्याश्रयत्वेऽपि[3] प्राधान्येन नायिकाकर्तृकत्वात् नायिकाकर्तृकस्यैवेदमुदाहरणमिति नायककर्तृकस्य उदाहरणान्तरं तत्रैव प्रदर्शितम्— 'त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि । शय्यो-

1 ण इत्ययमर्थः 2 चुम्बनचातु 3 रूपत्वेऽपि

पान्तनिविष्टसस्मितवधूनेत्रोत्सवानन्दितो निर्यातः शनकैरलीक-वचनोपन्यासमालीजनः' ॥ हे मुग्धाक्षि त्वं कञ्चुलिकया निचोलेन विनैव मनोहारिणीं लक्ष्मीं धत्से इत्यभिधायिनि प्रियतमे तद्वाणिकां निचोलबन्धनग्रन्थिं संस्पृशति सति रिरंसाविर्भावे तच्छय्योपान्ते निविष्टा सस्मिता च या नायिका तस्या नेत्रोत्सवेन नेत्रोल्लासेन आनन्दितः (आनन्दयतेति विशेषणस्य पौनः-पुन्यलक्षणो न विशेषः, तेन च न मौग्ध्यातिशयः। किंचिदुत्था-येति पूर्वकायमात्रेण शय्यापरित्यागः। तेन च नायिकायाः संदानि-तोरुकाण्डता। शनैरिति मिथः सन्दानितोरुसंश्लेषेण पङ्गुना) आलीजनः अलीकवचनोपन्यासं 'दशत्यसौ परभृतः सहकारस्य मञ्जरीम्। तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥' इत्यादि रलीको मिथ्याभूतो वचनोपन्यासो यत्र क्रियायां यथा भवति तथा। शनकैरेकैकशः, युगपदपगमस्य शङ्कावहत्वात्। निर्यात इत्यत्र नायिकाविषयकरतेर्नायिकालम्बनम्। तद्वाणिकासंस्प-र्शनादिकमनुभावः। 'अभिधायिनि' 'संस्पृशति' इत्यभिधानसंस्प-र्शयोरेककालत्वप्रतीतेस्तदनुमितकालाक्षमत्वलक्षणमौत्सुक्यं व्यभि-चारीति संभोगो व्यज्यते ॥

हा तात हा पुत्रक कान्त मित्र
हा जीवितं भोगयुतं सुरम्यम्।
रक्षोभिरेवं बहुधा ब्रुवद्भिः
शब्दः कृतो घोरतमः सुभीमः ॥

इत्यत्र तात[1]पुत्रकान्तादिभिः [आलम्बनविभावैः] व्यभिचारिभिश्च स्वादिमानमानीयमानस्य शोकस्य स्थायित्वात् करुणो रसः। उक्तं च शोकस्य स्थायित्वे [2]करुणरसत्वम् 'शोकः स्थायी भवेद्यत्र तमाहुः करुणं रसम्' इति। उदाहृतं च– 'हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषो धिक् प्राणान्पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ। इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिरश्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि॥' इति। प्रमीतां मातरं प्रत्यनुशोचन्तीः पौराङ्गनाः प्रेक्ष्य शोचतः कस्यचिदुक्तिरियम्। हा मातः, कुत्र त्वरितासि? हा देवताः, किमिदं कृतम्? ब्राह्मणानामाशिषः क्व गताः? प्राणान् धिक्, ये मातरि गतायामपि तिष्ठन्ति। अकाण्ड एवाशनिः पतितः। दुःखमेवाशनित्वेनाध्यवसीयते। हे मातः यतस्तवाङ्गेषु हुतवहः प्रज्वलति। दृशौ च ते दग्धे। इत्थं घर्घरं गद्गदं यथा भवति तथा, अत एव अर्धे एव रुद्धाः अत एव करुणाः शोकावहाः पौरस्त्रीणां प्रलापाः चित्रगतानपि जनान् रोदयन्ति। चित्रभित्तीरपि शतधा कुर्वन्ति इति श्लोकार्थः। अत्र मृता मातालम्बनविभावः। हुतवहप्रज्वलनादिकमुद्दीपनम्। प्रलापनादिकमनुभावः। तद्व्यञ्जिता दैन्यचिन्तादयो व्यभिचारिणः। शोकः स्थायी। एभिः काव्यनिबद्धैः अभिनीतैर्वा संवलिततया सहृदयैः करुणो रसश्चर्व्यते॥

**राक्षसीनां वचः श्रुत्वा रावणो राक्षसेश्वरः।**
**हुताग्निरिव जज्वाल कोपसंवर्तितेक्षणः॥**

---

1 माता 2 करुणो रस इति

तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नास्रबिन्दवः ।
दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिन्दवः ॥

आत्मनः सदृशान् शूरान् किङ्करान्नाम राक्षसान् ।
व्यादिदेश महातेजा निग्रहार्थं हनूमतः ॥

इत्यत्र हनूमदालम्बनरावणनिष्ठक्रोधस्य स्थायित्वात् रौद्रो रसः । उक्तं च क्रोधस्य स्थायित्वं रौद्ररसत्वं 'क्रोधः स्थायी भवेद्यत्र तत्र रौद्रो रसः स्मृतः ।' इति । उदाहृतं च 'कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः । नरकरिपुणा सार्धं तेषां सभीमकिरीटिनामयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥' इति । इदं हि द्रोणवध-कुपितस्याश्वत्थाम्नो वचनम् । इदं द्रोणवधरूपं गुरु महत्पातकं मनुजपशुभिः पशुप्रायैर्धृष्टद्युम्नादिभिः कृतम् । पशुसदृशविवेका न चेत्, को वा सन्यस्तशस्त्रमाचार्यं हन्यादिति भावः । यैर्निर्म-र्यादैरतिक्रान्तधर्मसेतुभिर्नरकरिपुप्रभृतिभिरनुमतं वा यैर्भवद्भिः क्षत्रियैर्दृष्टं वा । नन्वस्माकं धृष्टद्युम्ननिवारणे असामर्थ्यात्तूष्णीं दृष्टमिति नास्मास्वपराध इत्यत उक्तम्— उदायुधैरिति । तेन तन्निवारणसामर्थ्येऽपि उपेक्षितमिति व्यज्यते । तेषां भीमार्जुन-सहितानां नरकरिपुणा सार्धं भवतामसृङ्मेदोमांसैर्दिशां बलिं करोमीति श्लोकार्थः । अत्र धृष्टद्युम्नाद्यालम्बनस्य गुरुवधजनि-ताश्वत्थामकोपस्य स्थायित्वम् ॥

न खल्वयं नाभिभवेदुपेक्षितः
पराक्रमो ह्यस्य रणे विवर्धते ।

प्रमापणं त्वेव ममास्य रोचते
न वर्धमानोऽग्निरुपेक्षितुं क्षमः ॥

इत्यत्र हनूमन्निष्ठाक्षकुमारवधोत्साहस्य स्थायित्वात् वीरो रसः । उक्तं च उत्साहस्य स्थायित्वे [1]वीररसत्वम् 'स्थाय्युत्साहो भवेद्यस्य स वीरो रस इष्यते' इति । उदाहृतं च — 'क्षुद्राः संत्रासमेनं विजहित हरयो भिन्नशक्रेभकुम्भा युष्मद्गात्रेषु लज्जां दधति परममी सायकाः संपतन्तः । सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥' इति । वानरान् लक्ष्मणं च प्रति इन्द्रजिद्वाक्यमिदम् । हे क्षुद्राः पराक्रमगन्धानभिज्ञाः कपयः एनं संत्रासं मुञ्चत । कुतः ? भिन्नैरावतकुम्भा मदीयाः शरा भवदङ्गेषु संपतन्तो लज्जां दधति । सौमित्रे सुमित्रापुत्र निर्भयमास्स्व । यतो मम रुषां त्वं पात्रं नासि ; यतोऽहं मेघनादः । नन्विति प्रसिद्धौ । तर्हि कस्ते शौर्यस्य विषय इत्यत आह— भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि इति श्लोकार्थः । अत्र इन्द्रजितो युद्धार्थं रामगवेषणोत्साहस्य स्थायित्वाद्वीरो रसः ॥

ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपम् ।
प्रावेपत वरारोहा प्रवाते कदली यथा ॥

[2] आच्छाद्योदरमूरुभ्यां बाहुभ्यां च पयोधरौ ।
उपविष्टा विशालाक्षी रुदती वरवर्णिनी ॥

---

1 वीरो रस इति 2 ऊरुभ्यामुदरं छाद्य

इत्यत्र दशवदनदर्शनजनितजनकतनयानिष्ठभयस्य स्थायित्वात् **भयानकरसः**। उक्तं च भयस्य स्थायित्वे [1]भयानकरसत्वम्—'स्थायी भावो भयं यस्य भयानकरसस्तु सः'। उदाहृतं च— 'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् । दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥' इति। अत्र दुष्यन्तस्यन्दनात्कम्पमानहरिणगभयस्य स्थायित्वम् ॥

**सा तु तेन प्रहारेण विह्वलाङ्गा निशाचरी ।**
**पपात सहसा भूमौ विकृताननदर्शना ॥**

इत्यत्र लङ्काविषयकहनुमज्जुगुप्सायाः स्थायित्वात् **बीभत्सरसः**। उक्तं च जुगुप्सायाः स्थायित्वे बीभत्सरसत्वम्— 'स्थायी जुगुप्सा यत्र स्यात् स बीभत्सरसः स्मृतः' इति। उदाहृतं च— 'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसान्यंसस्फिक्पृष्ठपीठाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा। आत्तस्नाय्वान्त्रनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्कादङ्कस्थादस्थिसन्धिस्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥' इति। गजादीनां निहतानां चर्म प्रथममुत्कृत्योत्कृत्य, पृथूत्सेधभूयांसि उपचयभूयिष्ठानि अंसयोः, ऊरुसन्धिप्रदेशयोः पृष्ठपीठावयवेषु च सुलभानि दुःसहदुर्गन्धानि मांसानि जग्ध्वा स्नायूनि अस्थिबन्धनसिराः आन्त्राणि सिरान्तराणि नेत्राणि च तानि भक्षितानि येन स तथा। प्रेतरङ्कः प्रेतपिशाचविशेषेषु दरिद्रः

1 भयानकरस इति

अङ्कस्थात् करङ्कात् शवशरीरात् अस्थिसन्धिषु स्थपुटगतं निम्नोन्नततया स्थितं मांसं अव्यग्रं अत्तीति श्लोकार्थः । अत्र प्रेतालम्बनमाधवगतजुगुप्सायाः स्थायित्वम् ॥

[1]हारनूपुरकेयूरपारिहार्यधराः स्त्रियः ।
विस्मिताः सस्मितास्तस्थुराकाशे रमणैः सह ॥
दर्शयन्तो महाविद्यां विद्याधरमहर्षयः ।
सहितास्तस्थुराकाशे वीक्षांचक्रुश्च पर्वतम् ॥

इत्यत्र विद्याधरादिनिष्ठविस्मयस्य स्थायित्वात् अद्भुतरसः। उक्तं च विस्मयस्य स्थायित्वेऽद्भुतरसत्वम्[2]— 'यत्र स्थायी विस्मयः स्याददद्भुताख्यो रसः स्मृतः' इति। उदाहृतं च—'अनादिकिटिदंष्ट्राभ्यामप्यदृष्टाङ्घ्रिशेखरम् । अहो महो महदहं महयाम्यधिमानसम् ॥' इति । अत्र भक्तविस्मयस्य स्थायित्वम् । शृङ्गारादिरसा उदाहृताः । एवं रसान्तरमपि यथासंभवं द्रष्टव्यम् । तदेतत्काण्डस्य रसालङ्कारभरितत्वलक्षणं सुन्दरत्वं सिद्धम् ॥

---

ततो रावणनीतायाः सीतायाः शत्रुकर्शनः ।
इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥

अथ महतामप्यचिन्त्यरचनं दुष्करं कर्म कर्तुकामो मारुतिः समुद्रमभीतो गवां पतिरिव समुद्रतीरपरिसरसमुद्गतेषु वैडूर्यसमानवर्णेषु शाड्वलेषु धीरतरं संचरन्, चटुलतरचरण-

1 हारनूपुरकेयूरपारिहार्यैरलङ्कृताः ।
विस्मितास्तस्थुराकाशे वीक्षांचक्रुश्च पर्वतम् ॥

2 रस इति ।

विन्यासैर्वित्रासयन्मृगगणानूरुवेगेन तरुनिकरमुरगान् [illegible]सिद्ध-गन्धर्वविद्याधरोरगनिषेवितमखिलधातुभूषितं रम्यं गिरिवरमारुह्य,

स सूर्याय महेन्द्राय वरुणाय स्वयंभुवे ।
भूतेभ्यश्चाञ्जलिं कृत्वा चकार गमने मतिम् ।
अञ्जलिं प्राङ्मुखः कुर्वन्पवनायात्मयोनये ॥

अत्र हनूमता दुस्तरसमुद्रोल्लङ्घनरूपमहाकार्यसिद्ध्यै इष्ट-देवतानमस्कारमङ्गलाचरणात् इतरैरपि 'अभीष्टसिद्ध्यै कार्यारम्भे मङ्गलं कर्तव्यमिति सूचितम् । तत्र प्रमाणं शिष्टाचार एव । न च तस्य अन्धपरंपरादूषितत्वमिति वाच्यम्, श्रुत्यनुमानेन अन्ध-परम्परानिराससंभवात् । न च तादृशश्रुतौ मानाभावः, पठ्यमान-शाखासु अनुपलम्भादिति वाच्यम् । प्रत्यक्षतोऽनुपलम्भेऽपि 'स्मृ-तिः स्मृत्यर्थानुभवजनकवेदमूला, अविगीतमहाजनपरिगृही-तस्मृतित्वात्' (?) इत्यनुमानात् स्मृतिमूलभूतश्रुतिसिद्धिवत् अत्रापि 'मङ्गलं वेदबोधितकर्तव्यताकम्, अविगीतशिष्टाचारविषयत्वात्'[1] इत्यनुमानेन आचारमूलश्रुतिसिद्धिसंभवात् । न चानुमितापि श्रुतिरानुपूर्वीविशेषनिश्चयाभावात् कथं तत्कर्तव्यतां बोधये-दिति वाच्यम्, स्मृत्याचारयोरेव[2] कर्तव्यताबोधकत्वेनाङ्गीका-रात् । न चैवं श्रुत्यनुमानमनर्थकम्, तत्कर्तव्यस्य कर्तव्यताबोध-स्यान्यत एव सिद्धेरिति वाच्यम् । पौरुषेयस्मृत्याचारयोरन्धपरं-पराप्रवृत्तत्वशङ्कया तत्कृतकर्तव्यताबोधस्यापि अप्रामाण्यशङ्का-कलङ्किततया मङ्गलाचरणे न कस्यापि निःशङ्कं प्रवृत्तिर्भवेत्

1 चारत्वात् 2 रेक

इति तत्परिहाराय तत्तन्मूलभूतश्रुत्यनुमानस्यावश्यकर्तव्यत्वात् । अनुमितायां च श्रुतौ नान्धपरम्परा, निरस्तसमस्तदोषेण परमेश्वरेण प्रणीतत्वेन, नित्यत्वेन वा श्रुतेर्निष्कलङ्कप्रमाणत्वात् ॥

वेदस्य परमेश्वरप्रणीतत्वे बादरायणं सूत्रम्— 'शास्त्रयोनित्वात्' इति । व्याख्यातं च भाष्ये— 'महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्वा[र्था-]वद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म' इति । नित्यत्वे[1] च— 'अत एव च नित्यत्वम्' इति व्याससूत्रम् । तत्रापि भाष्यम्— 'अत एव च नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वाद्वेदशब्दनित्यत्वमपि प्रत्येतव्यम् । तथा च मन्त्रवर्णः 'यज्ञेन वाचः पदवीयमायन् । तामन्वविन्दन् ऋषिषु प्रविष्टाम् ।' इति स्थितामेव वाचमनुविन्नां दर्शयति । वेदव्यासश्चैवमेव स्मरति— 'युगान्तेऽन्तर्हितान्वेदान् सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥' इति । परमेश्वरप्रणीतत्वनित्यत्वयोः परस्परविरोधः प्रवाहनित्यतामादाय परिहर्तव्यः । तथा च श्रुतेर्निर्दुष्टपुरुषप्रणीतत्वेन नित्यत्वेन वा निरस्तसमस्तदोषाशंकतया तन्मूलकाचारस्मृतिजनितकर्तव्यताबोधे निष्कलङ्का प्रवृत्तिर्भवेदेवेति नान्धपरम्परा । तथा चोक्तमभियुक्तैः 'स्मृतेरेव कर्तव्यताबोधः । श्रुत्यनुमानं तु अन्धपरम्परानिरासार्थम्' इति । न च हेतौ शिष्टत्वं वेदोक्तकर्मकर्तृत्वं वेदप्रामाण्याभ्युपगन्तृत्वं वा, यत्किंचिद्वावद्विशेषणत्वोपलक्षणत्वादिविकल्पग्रस्तत्वान्न वक्तुं शक्यम् । अन्यच्च दुर्वचमिति वाक्यम् । अस्मद्बुद्धिपरिकल्पितशिष्टत्वस्य

1 त्वेन

यत्किञ्चिद्दूषणग्रस्तत्वेऽपि हेतुवादमात्रेणाशक्यनिरसनस्य श्रुतिस्मृतिसिद्धशिष्टत्वस्य हेतुघटकत्वसंभवात् । तथा च बौधायनः— 'शिष्टाः खलु वीतमत्सराः निरहंकाराः कुम्भीधान्याः अलोलुपाः दम्भमोहक्रोधविवर्जिताः(?)। धर्मेणाधिगतो येषां वेदः सपरिबृंहणः । शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः ॥' इति । एतादृशशिष्टत्वघटितहेतुना श्रुत्यनुमानं निर्दुष्टमेव ॥

मङ्गलस्य फलं कार्यसिद्धिरेव, शिष्टाचारविषयत्वेन सफलस्य मङ्गलस्य फलान्तराभावे सति परिशेषात्तस्यैव फलत्वौचित्यात् । न च सर्वपुरुषाभिलषितस्वर्गफलत्वमेव विश्वजिन्न्यायाद्भविष्यतीति परिशेषोऽसिद्ध इति वाच्यम् । फलान्तरबोधकप्रमाणाभावे हि विश्वजिन्न्यायः । अन्यथा दृष्टफलान्तरवतामपि स्वर्गफलवत्त्वं स्यात् । इह च अभीष्टसिद्धिरेव फलमिति, अत्रापि तत्कामनया शिष्टानां मङ्गलाचार एव प्रमाणम् । अतः अभीष्टसिद्धिरेव फलम् । तत्र न साक्षादिति विघ्नध्वंसो द्वारम् ॥

ननु अकृते कृतेऽपि वा मङ्गले आरब्धकार्यसमाप्त्यसमाप्त्योर्दर्शनेन व्यभिचारान्न मङ्गलं समाप्तौ हेतुरिति चेत्, न, जन्मान्तरीयमङ्गलेन व्यतिरेकव्यभिचारस्य वैगुण्यकल्पनेन अन्वयव्यभिचारस्य च परिहर्तुं शक्यत्वात् । अन्यथा केवलदृष्टवृष्टिफलककारीरीष्ट्याद्यनुष्ठानेऽपि वृष्ट्यदर्शनान्न कारीरीष्ट्यादिर्वृष्ट्यादिहेतुर्भवेत् । यदि च 'वृष्टिकामः कारीर्या यजेत' इत्यादिश्रुत्या साधनत्वेनावगतस्य प्रतिबन्धादिकल्पनया व्यभिचारपरिहारः, तदा प्रकृतेऽपि शिष्टाचारात्समाप्तिसाधनत्वेनावगतस्य प्रतिबन्धा-

दिकल्पनया व्यभिचारपरिहारः निर्णीते मङ्गलेऽपि तुल्यः । वस्तुतस्तु मङ्गलस्य विघ्नध्वंस एव फलम्, समाप्तिः स्वकारणादेव । एवं च सति विघ्नसंशयस्य फलसंशयत्वेनाप्रतिबन्धकत्वात् संदेहेऽपि मङ्गलानुष्ठानं निरवद्यम् ॥

इदं च मङ्गलं देवतानतिस्तुतिस्मरणादिरूपम् । तत्रानुष्ठेयलौकिकवैदिककार्येषु सर्वत्र मङ्गलस्यानुष्ठानमात्रम् । ग्रन्थादिरूपकार्येषु कृतस्य मङ्गलस्य ग्रन्थतोऽपि निबन्धनं कार्यम् । तदुक्तम् 'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ग्रन्थादौ ते प्रयोक्तव्या यतस्ते मङ्गलार्थकाः ॥' इति, 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ।' इति च । इत्थं ग्रन्थतो मङ्गलनिबन्धनस्य प्रयोजनं ग्रन्थस्य सकलशिष्टसंग्राह्यत्वमेव । अन्यथा हि मङ्गलाननुष्ठानेन निर्विघ्नपरिसमाप्तस्यापि ग्रन्थस्य प्रमत्तकृतत्वशङ्कया महाजनपरिग्रहो न भवेदेव । तथा च सर्वोऽपि प्रयासः अनर्थको भवेत । [1]एवं ग्रन्थसमाप्त्यर्थं कृतं मङ्गलं प्रमाणवशेन प्रयोजनवशेन च ग्रन्थादौ निबन्धनीयम् ॥

नन्वेवं सति बादरायणजैमिनिप्रभृतिभिः ब्रह्मधर्मविचारसूत्रकृद्भिः, भगवत्पादप्रभृतिभिः भाष्यकृद्भिः, कल्पसूत्रप्रणेतृभिः बोधायनापस्तम्बाचार्यप्रभृतिभिः, भगवता वाल्मीकिना च मङ्गलाननुष्ठानात् ग्रन्थतः अनिबन्धनात् भद्रादिवाचकशब्दप्रयोगाभावाच्च तत्कृतग्रन्थसमाप्तिः महाजनपरिग्रहादिकं च कथं स्यादिति चेत्; न, बहिः कृताज्जन्मान्तरानुष्ठिताद्वा मङ्गलात् ग्रन्थसमा-

---

1. एतत

प्त्यादेः संभवात् । वस्तुतस्तु तैरपि अस्मिन् जन्मनि मङ्गलाचरणं निबन्धनादिकं च कृतमेव । तथा हि— सूत्रेषु तावत्सर्वत्र अथशब्दः प्रयुक्तः । स च मङ्गलार्थकः । तदुक्तम्— 'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥' इति । अथशब्देऽपि प्राथमिकोऽकारः विष्णु(शब्द)वाचकः, 'अकारो ब्रह्मविष्ण्वीशकमठेष्वङ्कणे रणे' इति रत्नमालावचनात् । थशब्दोऽपि चन्द्रवाचकः, 'थः पुंस्यूर्मिगिरीन्दुषु' इति रत्नमालावचनात् । सौत्रश्च अविभक्तिको निर्देशः । तथा च 'अर्थं बुद्ध्वा शब्दरचना' इति न्यायात् आदौ विष्ण्वादिस्मरणम् , तत्तच्छब्दरचनम् , तस्य ग्रन्थतो निबन्धनम् । इत्थमेव मङ्गलस्मरणं तद्वाचकाथशब्दरचनं ग्रन्थतो निबन्धनमित्यखिलमपि अथशब्दपूर्वकेषु ग्रन्थेषु सुलभमेव ॥

नन्वेवमपि कर्मब्रह्मविचारसूत्रेषु तद्विचारहेतुभूताध्ययनाद्यानन्तर्यबोधकोऽथशब्दः कथं मङ्गलं बोधयेत् , 'अन्याय्यं च [एकस्य शब्दस्य] अनेकार्थत्वम्' इति न्यायादिति चेत् ; न, अनेकार्थसङ्ग्रहाय प्रवृत्ते विश्वतोमुखे सूत्रे नानार्थत्वस्यालङ्कारत्वात् । अन्यथा 'अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥' इति सूत्रलक्षणाभावात्सूत्रत्वमेव न स्यात् । अत एव 'हलन्त्यम्' 'घा सुप्यापिशलेः' इत्यादिसूत्रेषु तत्र तत्रानेकार्थत्वमङ्गीकुर्वन्ति वैयाकरणाः । अतो मङ्गलार्थकोऽ[प्य]थशब्दः । वस्तुतस्तु न पदार्थं विधाय मङ्गलं ब्रूते, येनानेकार्थत्वं भवेत् ; किं तु दर्शनधारणादिना सुवर्णादीनां मङ्गलत्ववदुच्चारणमात्रेण मङ्गलत्वसंभवात् । [उक्तं च]दर्शनादिना सुवर्णादि

मङ्गलमित्येतत्स्मृतिषु—'सुवर्णं चन्दनं रत्नं पञ्चगव्यानि रोचनम्। प्रियङ्गु सर्षपं क्षौद्रं मङ्गलानि प्रचक्षते ॥' 'विप्राग्न्यर्काम्बुगोहेमनृपाज्यं मङ्गलं स्मृतम्', 'दूर्वा च सर्पिर्दधि चोदकुम्भं धेनुं सवत्सां वृषभं सुवर्णम्। मृद्गोमयं स्वस्तिकमक्षतांश्च तैलं मधु ब्राह्मणकन्यकां च ॥' इति। ततश्चानन्तर्यार्थक एवाथशब्दः उच्चारणमात्रेण मङ्गलमपि भवति इति मङ्गलप्रयोजनकोऽपि। एतदभिप्रायेणैवानन्तर्यार्थकशब्दान्तरवर्जनेनाथशब्दप्रयोगोऽप्यर्थवान् भवति। अन्योऽपि अथशब्दपूर्वकः सर्वोऽपि ग्रन्थः कृतमङ्गल एव। भगवत्पादैरपि वैयासिकसूत्रभाष्ये सर्वानर्थ(क)प्रत्यनीकचिदानन्दात्मकप्रत्यगभिन्नात्मप्रतिपादकास्मच्छब्दप्रयोगरूपं मङ्गलं कृतमेव 'युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोः' इत्यत्र। आपस्तम्बाचार्यैरपि 'यज्ञं व्याख्यास्यामः' इत्यारम्भे 'यज्ञो वै विष्णुः' इति श्रुतिसिद्धविष्ण्वर्थकयज्ञशब्दप्रयोगान्मङ्गलं कृतमिति बोध्यम्। रामायणेऽपि भगवान्वाल्मीकिर्मङ्गलाभिप्रायेणैव तपःशब्दमादौ प्रयुक्तवान् ॥

इदं मङ्गलं कार्यस्यादिमध्यान्तेषु कर्तव्यम्। तथा च भाष्यकारः—'मङ्गलादीनि मङ्गलमध्यानि मङ्गलावसानानि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति आयुष्मत्पुरुषाणि चाध्येतारश्च वृद्धियुक्ताः यथा स्युः' इति। तदभिप्रायेणैव महर्षिः पाणिनिः वृद्धिशब्दं शास्त्रादौ, 'भूवादयो धातवः' 'वासुदेवार्जुनाभ्यां वुन्' इति शास्त्रमध्ये अमृतबीजं वकारम्, परमात्मवाचकं वासुदेवशब्दं च, 'अ अ' इत्यन्तिमे सूत्रे विष्णुवाचकं अकारं च प्रयुक्तवान्। भाष्यकारोऽपि वृद्धिशब्दो मङ्गलार्थ

इत्याह— 'इदमेकमाचार्यस्य मङ्गलार्थं मृष्यताम् । माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते' इति । इत्थं भूवादिसूत्रे वकारागमस्य मङ्गलार्थत्वमपि भाष्ये— 'माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वकारागमं प्रायुङ्क्त' इति ॥

इत्थं मङ्गलानाचरणे कार्याभावं तदाचरणे कार्यसिद्धिं च निश्चित्यैव व्याकरणादिनिखिलशास्त्राभिज्ञः हनुमान चिकीर्षितकार्यस्य आदिमध्यान्तेषु अवश्यकर्तव्यमङ्गलेषु इदमादिमङ्गलं कृतवान् । इत्थमेव कार्यमध्ये कर्तव्यं मङ्गलं कृतमित्यवगम्यते त्रयोदशे सर्गे—

नमोऽस्तु रामाय सलक्ष्मणाय
देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो
नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥

सिद्धिं मे संविधास्यन्ति देवाः सर्षिगणास्त्विह ।
ब्रह्मा स्वयम्भूर्भगवान् देवाश्चैव दिशन्तु मे ॥

सिद्धिमग्निश्च वायुश्च पुरुहूतश्च वज्रधृक् ।
वरुणः पाशहस्तश्च सोमादित्यौ तथैव च ॥

अश्विनौ च महात्मानौ मरुतः शर्व एव च ।
सिद्धिं सर्वाणि भूतानि भूतानां चैव यः प्रभुः ।
दास्यन्ति मम ये चान्ये ह्यदृष्टाः पथि गोचराः ॥ इति ।

सीतादर्शनानन्तरमपि कार्यसिद्ध्यनन्तरकर्तव्यं मङ्गलं कृतमित्यवगम्यते सप्तदशे—

**नमस्कृत्वा स रामाय लक्ष्मणाय च वीर्यवान् ।**
**सीतादर्शनसंहृष्टो हनुमान् संवृतोऽभवत् ॥ इति ।**

अत एव च आदिमध्यान्तेषु मङ्गलाचरणेन निर्विघ्नतया अलङ्घनीयसमुद्रलङ्घनादिपूर्वकं दुष्प्रवेशलङ्कामध्यवर्तिनीं सीतामपि दृष्ट्वा सिद्धार्थः पुनराजगाम । एवमेव सर्वैरपि कार्यसिद्ध्यर्थिभिरादिमध्यान्तेषु मङ्गलमाचरणीयमेवेति ॥

'अञ्जलिं प्राङ्मुखः कुर्वन्' इति दक्षिणां दिशं प्रति प्रस्थितेन हनूमता प्राङ्मुखतया मङ्गलाचरणादितरैरपि शुभकरं कर्म प्राङ्मुखतया (उदङ्मुखतया) आरम्भणीयं इति सूचितम् । तथा च बोधायनः 'प्राङ्मुखः प्रदक्षिणं यज्ञोपवीती दैवानि कार्याणि कुर्वीत' इति ॥

**प्लवङ्गप्रवरैर्दृष्टः प्लवने कृतनिश्चयः ।**
**ववृधे रामवृद्ध्यर्थं समुद्र इव पर्वसु ॥**

नन्वत्र समुद्रस्याभिवृद्धिर्दृष्टान्तत्वेनोक्ता ; सा नोपपद्यते, पर्वकाले चन्द्रोदये विशिष्य जलान्तरागमाभावादिति चेत्, न, जलान्तरागमाभावेऽपि समुद्रवृद्धेः पुराणसिद्धत्वात् । तथा च **विष्णुपुराणे**— 'पयांसि सर्वदा सर्वसमुद्रेषु समानि वै । न्यूनातिरिक्तता तेषां कदाचिन्नैव जायते ॥ स्थालिस्थमग्निसंयोगादुद्रेकि सलिलं यथा । तथेन्दुवृद्धौ सलिलमम्भोधौ

मुनिसत्तम ॥ अन्यूनानतिरिक्ताश्च वर्धन्त्यापो ह्रसन्ति च । उदयास्तमये त्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥ दशोत्तराणि पञ्चैव ह्यङ्गुलीनां शतानि वै । अपां वृद्धिक्षयौ दृष्टौ समुद्राणां महामुने ॥' इति ॥

**तेजः सत्वं तथा वीर्यमाविवेश स वीर्यवान् ।**
**मार्गमालोकयन्दूरादूर्ध्वं प्रणिहितेक्षणः ॥**

अनेन कार्यारम्भे बलाभिवृद्धिः कार्यसिद्धिसूचिका, विपरीते विपरीतमिति सूचितम् । तथा च उद्योगे— 'विपाप्मा वृद्धतेजास्तु पुरुषो विन्दते महत् । हीनतेजोऽपि संसृष्टो नैव जातु व्यवस्यति ॥ अवश्यं जनयत्येव सर्वकर्मसु संशयान् ॥' इति ॥

तदनु उदन्वदुल्लङ्घनाय परिगृहीतातिमात्रशरीरस्य बाहुभ्यां चरणाभ्यां च दृढतरमापीडितो महेन्द्राचलश्चिरतरं चचाल । ततो द्रुततरनिहितचरणतलानिपीडनं सोढुमक्षमः क्ष्माभृदेष निष्पतन्निर्झरौघतया निरन्तरनिपतद्बाष्पपूर इव इतस्ततो निपातिततरुप्रसूनतया विगलितधम्मिल्ल इव निबिडनिपीडननिर्वर्तितानेकधातुतया क्षरितशोणित इव साध्वसधावमाननानाविधसत्वशब्दसञ्जातप्रतिध्वनितया विनदन्निव सुचिरं वचसामगोचरं दशाविशेषमभजत । ततस्तत्क्षणसमुत्पन्नसाध्वसेन पानभूमिगतान् काञ्चनकरकानुच्चावचानि भक्ष्यभोज्यानि विविधानि च मांसान्यार्षभाणि चर्माण्यपहाय विस्मयस्तिमितवधूजनैः सह सहसोत्पत्य गगनमार्गे मायेन्द्रजालादिविधिं दर्शयन्तो विद्याधरा ऋषयः सिद्धचारणाश्च श्रीरामकार्याय पारावारस्य परं पारं दुष्प्रापं प्राप्तुमिच्छति

पवनतनय इति वचनमाकर्ण्य सर्वतो दिक्षु चक्षुर्विक्षिपन्तः पर्वता-
दुत्पतन्तं वानरर्षभं अहर्षमालोकयामासुः ॥

तस्य लाङ्गूलमाविद्धमतिवेगस्य पृष्ठतः ।
ददृशे गरुडेनेव ह्रियमाणो महोरगः ॥

रुरोध हृदये प्राणानाकाशमवलोकयन् ।
पद्भ्यां दृढमवस्थानं कृत्वाथ कपिकुञ्जरः ॥

निकुञ्च्य कर्णौ हनुमानुत्पतिष्यन्महाबलः ।
वानरान्वानरश्रेष्ठ इदं वचनमब्रवीत् ॥

यथा राघवनिर्मुक्तः शरः श्वसनविक्रमः ।
गच्छेत्तद्वद्गमिष्यामि लङ्कां रावणपालिताम् ॥

न हि द्रक्ष्यामि यदि तां लङ्कायां जनकात्मजाम् ।
अनेनैव हि वेगेन गमिष्यामि सुरालयम् ॥

यदि वा त्रिदिवे सीतां न द्रक्ष्यामि कृतश्रमः ।
बद्ध्वा राक्षसराजं तमानयिष्यामि रावणम् ॥

सर्वथा कृतकार्योऽहमेष्यामि सह सीतया ।
आनयिष्यामि वा लङ्कां समुत्पाट्य सरावणाम् ॥

इत्यभिधाय सवेगं उत्पतति वायुसुते,

ऊरुवेगोत्थिता[1] वृक्षा मुहूर्तं कपिमन्वयुः ।
प्रस्थितं दीर्घमध्वानं स्वबन्धुमिव बान्धवाः ॥

---

1 द्धता

अनेन प्रियो बन्धुः किञ्चिद्दूरमनुसर्तव्य इति सूचितम् । तथा चाश्वमेधिके— 'विनिर्ययौ नागपुराद्गदाग्रजो रथेन दिव्येन चतुर्भुजा प्रभुः । तमन्वगाद्वानरवर्यकेतनः ससात्यकिर्माद्रवतीसुतावपि । अगाधबुद्धिर्विदुरश्च माधवं स्वयं च भीमो गजराजविक्रमः ॥' इति ॥

**तमूरुवेगोन्मथिताः सालाश्चान्ये नगोत्तमाः ।**
**अनुजग्मुर्हनूमन्तं सैन्या इव महीपतिम् ॥**

अनेन बहिः प्रस्थितो राजा सेनया अनुसर्तव्य इति सूचितम् । तथा च **भीष्मपर्वणि** भीष्मं प्रति गच्छन्तं दुर्योधनम्, 'अनुजग्मुर्महेष्वासाः सर्वलोकस्य धन्विनः । हयानन्ये समारुह्य गजानन्ये च भारत ॥ रथानन्ये नरश्रेष्ठं परिवव्रुः समन्ततः । पदातयश्च त्वरिता नखरप्रासयोधिनः ॥ आत्तशस्त्राश्च सुहृदो रक्षणार्थं महीपतेः ।' इति प्रतिपादितम् ॥

**विमुक्तास्तस्य वेगेन मुक्त्वा पुष्पाणि ते द्रुमाः ।**
**अवशीर्यन्त सलिले निवृत्ताः सुहृदो यथा ॥**

अनेन प्रस्थितमिष्टजनमनुव्रज्य निवृत्ता बान्धवाः शोचन्तीति सूचितम् । तथा **चाश्रमवासिके**— निवृत्तांश्च कुरुश्रेष्ठान् दृष्ट्वा प्ररुरुदुस्तदा । उपावृत्तेषु पार्थेषु सर्वास्वेव वधूषु च ॥ ययौ राजा महाप्राज्ञो धृतराष्ट्रो वनं तदा । पाण्डवाश्चातिदीनास्ते दुःखशोकपरायणाः । यानैः स्त्रीसहिताः सर्वे पुरं प्रविविशुस्तदा ॥' इति । **आपद्धर्मेऽपि**—'दुःखं जरा ब्रह्मदत्त दुःखमर्थविपर्ययः । दुःखं चानिष्टसंवासो दुःखमिष्टवियोजनम् ॥' इति ॥

तदनु समुत्पतनसमयोदितोरुवेगसमाकृष्टतरुविटपकोटिपाटितजलदबृन्दस्यन्दमानशीकरदूरीकृताध्वश्रमं प्लवमानं पवमानसूनुमवलोक्य—

ववर्षुः पुष्पवर्षाणि देवगन्धर्व[1]चारणाः ॥

ततापन हि तं सूर्यः प्लवन्तं वानरेश्वरम् ।
सिषेवे च तदा वायू रामकार्यार्थसिद्धये ॥

ऋषयस्तुष्टुवुश्चैनं प्लवमानं विहायसा ।
जगुश्च देवगन्धर्वाः प्रशंसन्तो महौजसम् ॥

नागाश्च तुष्टुवुर्यक्षा रक्षांसि विबुधाः खगाः ।
प्रेक्ष्या[2]काशे कपिवरं सहसा विगतक्लमम् ॥

तदनु सगरान्ववायकृतावतारस्य रघुवीरस्य साचिव्याय खोपरि समुत्पतन्तं हनूमन्तमवलोक्य,

इक्ष्वाकुकुलमानार्थी चिन्तयामास सागरः ।
साहाय्यं वानरेन्द्रस्य यदि नाहं हनूमतः ॥

करिष्यामि भविष्यामि सर्ववाच्यो विवक्षताम् ।

अत्र पूर्वोपकर्तुः प्रत्युपकारमकुर्वतो दोष उक्तः । तदुक्तमभियुक्तैः—'सुहृदां हि धनं भुक्त्वा कृत्वा प्रणयमीप्सितम् । प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ॥' इति । इति विचिन्त्य निजोदरलीनं मैनाकमेवमवोचत्—

1 दानवाः 2 क्ष्य सर्वे

स एष कपिशार्दूलस्त्वामुपर्येति वीर्यवान् ।
हनूमान् रामकार्यार्थं भीमकर्मा खमाप्लुतः ॥

अस्य साह्यं मया कार्यमिक्ष्वाकुकुलवर्तिनः ।
मम हीक्ष्वाकवः पूज्याः परं पूज्यतमास्तव ॥

कुरु साचिव्यमस्माकं न नः कार्यमतिक्रमेत् । इति ॥

अनेन उपकारककुलोत्पन्नोऽपि प्रत्युपकर्तव्य इति सूचितम् । तथा चाभियुक्ताः— 'प्रथमवयसि पीतं तोयमल्पं स्मरन्तः शिरसि निहितभारा नालिकेरा नराणाम् । सलिलममृतकल्पं दद्युरापुत्रपौत्रं न हि कृतमुपकारं साधवो विस्मरन्ति ॥' इति ॥

तद्वचः समाकर्ण्य तूर्णमेव सागरजलान्निर्गत्य समुत्पतन्तं महीधरमवलोक्य अयमत्र यात्राप्रत्यूहः प्रत्युद्भूत इति वक्षसा तमधः पातयित्वा प्रयान्तं हनूमन्तं प्रहृष्टमना मैनाकः समभाषत— पर्वतपक्षच्छेदनाय प्रवृत्तं शतक्रतुमवलोक्य गम्भीरे सागराम्भसि प्रक्षिप्तवतो नभस्वतो मित्रभूतं मां कृतज्ञेन सागरेण तवाध्वश्रमापनयनाय प्रेषितं सपक्षमेवावगत्य मत्कृतां पूजामभिनन्द्य सुचिरं विश्रम्य गन्तासि ॥

अतिथिः किल पूजार्हः प्राकृतोऽपि विजानता ।
धर्मं जिज्ञासमानेन किं [1]पुनर्यादृशो भवान् ॥

अनेन निर्गुणः सगुणो वा अतिथिरवश्यं पूजनीय इत्युक्तम् । तथा च हारीतः—'अतिथीनागतान् शक्त्या पूजयेदविचा-

1 पुनस्त्वादृशो महान्

रतः' इति। एवं प्रार्थयमानं हिरण्यनाभं संमान्य कार्यगौरवेण निरालम्बे अम्बरे प्लवमानस्य पवमानसूनोः,

तद्‌द्वितीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ।
प्रशशंसुः सुराः सर्वे सिद्धाश्च परमर्षयः ॥

अथ [1]यथापुरं लङ्कापुरं प्रति धावतो हनूमतो बलपराक्रमजिज्ञासया देवगन्धर्वैः सत्कृत्य प्रहिता सुरसा भीषणं वपुरालम्ब्य विदार्य वदनमरुणसारथेः सरणिं विन्ध्य इव पवनतनयसरणिमवरुद्ध्य तमेवमवादीत्—

मम भक्षः प्रदिष्टस्त्वमीश्वरैर्वानरर्षभ ।
अहं त्वां भक्षयिष्यामि प्रविशेदं ममाननम् ॥

इति तद्वाक्यं निशम्य, 'दाशरथिना रामचन्द्रेण राक्षसापहृतभार्यागवेषणाय प्रेषितस्य मम साहाय्यं कर्तुमर्हसि। न चेत्सीतामवलोक्य प्रतिनिवृत्तस्त्वद्वदनं प्रविशामि' इति वदन्तं हनूमन्तं सुरसा,

प्रविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम ।
वर एष पुरा दत्तो मम धात्रेति सत्वरा ॥

इत्यभिधाय,

व्यादाय वक्त्रं विपुलं स्थिता सा मारुतेः पुरः ॥

तदनु दशयोजनप्रभृत्याशतयोजनं पर्यायतो विवृतास्यायाः

1 यथापूर्वं

सुरसायाः पुरतः स्वयमपि तथैवोच्छ्रितः सहसैवाङ्गुष्ठमात्रः तद्वक्त्रं प्रविश्य निष्पत्त्य चाकाशम्,

प्रविष्टोऽस्मि हि ते वक्त्रं दाक्षायणि नमोऽस्तु ते ।
गमिष्ये यत्र वैदेही सत्यं चासीद्वरस्तव ॥

इति सप्रश्रयं पवनतनयेनाभिहिता सुरसा तमेवमवादीत्-

अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ।
समानयस्व वैदेहीं राघवेण महात्मना ॥ इति ॥

ततः कुञ्जरहरिशार्दूलपन्नगोरगवाहनविमानैः सिद्धगन्धर्वतपोधनादिभिः समलंकृतमम्बरमालम्ब्य प्रावृडिन्दुमिव महाभ्रजालानि प्रविश्य निष्पतन्तं हनूमन्तमवलोक्य सिंहिका नाम राक्षसी क्षुदुपशमनाय छायाग्रहणेन तं समाक्षिपत् । समाक्षिप्तच्छायतया च पङ्गूकृतपराक्रमो मारुतिः विचिन्त्य तिर्यगूर्ध्वमधश्च चक्षुर्विक्षिपन्विवृतवदनायाः सिंहिकाया मुखमाविश्य तीक्ष्णतरैर्नखरैर्मर्माण्युत्कृत्य सहर्षमुत्पपात । तत्कर्मजनितविस्मयस्तिमितानि भूतानि तमेवं प्रशशंसुः ॥

यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव ।
धृति[1]र्हृष्टिर्मतिर्दाक्ष्यं स कर्मसु न सीदति ॥

अनेन धैर्यादिकं कार्यसाधकमित्युक्तम् । तच्च प्राक् प्रपञ्चितम् । इति देवगणसंस्तुतो मारुतिः अनेन प्रवृद्धतरेण कायेन लङ्काप्रवेशोऽनुचित इति मनसि विचिन्त्य,

1 दृष्टि

ततः शरीरं संक्षिप्य तन्महीधरसन्निभम् ।
पुनः प्रकृतिमापेदे वीतमोह इवात्मवान् ॥

अत्र आत्मवान् आत्मसाक्षात्कारवान् वीतमोहः निवृत्ताज्ञानतत्कार्यः प्रकृतिं अशनायाद्यतीतब्रह्मात्मस्वरूपं यथा प्राप्नोति तथा हनूमानपि पूर्वरूपं प्राप्तवान् इति ॥

नन्वत्र ज्ञानवान् वीतमोह इत्युक्त्या ज्ञानेनाज्ञानं निवर्तेत इत्युक्तम् । तत्राज्ञानं ज्ञानाभावो वा भावरूपाज्ञानं वा? नाद्यः, ज्ञानात्यन्ताभावध्वंसयोः अनन्तत्वेन ज्ञानानिवर्त्यत्वात्, प्रागभावे प्रमाणाभावात् । भावे वा ज्ञानस्य स्वप्रागभावरूपाज्ञाननिवृत्तित्वेन तन्निवर्तकत्वानुपपत्तेः । न च प्रागभावातिरिक्तं भावरूपाज्ञानं संभाव्यते, लक्षणप्रमाणानिरूपणात् । तथा हि—

न तावदनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वं तल्लक्षणम्, अविद्यासंबन्धेऽतिव्याप्तेः । न हि साक्षात् ज्ञाननिवर्त्यं तत् । अनादिपदवैयर्थ्यात्, कल्पितस्य दोषजन्यत्वानियमेनानादित्वासंभवात् । अनादिभावस्यात्मवत् ज्ञाननिवर्त्यत्वासंभवाच्च । नापि भ्रमोपादानत्वमज्ञानलक्षणम्, अनुत्पादितभ्रमेऽज्ञानेऽव्याप्तेः । मायावच्छिन्नं ब्रह्मैव उपादानमिति मते असंभवाच्च । द्वितन्तुकरज्जौ सूत्रद्वयस्येव मायाब्रह्मणोरुपादानत्वमते ब्रह्मण्यतिव्याप्तेश्च ॥

प्रमाणमपि प्रत्यक्षमनुमानं वा? आद्येऽपि 'अहमज्ञः' इत्यनुभवो वा, 'त्वदुक्तमर्थं न जानामि' इति वा? नाद्यः, अहमर्थस्य भावरूपाज्ञानानाश्रयत्वेन सुखं न जानामि इति प्रत्यक्षवत्तस्य ज्ञानाभावविषयत्वात् । अन्यथा परोक्षज्ञानादज्ञान-

निवृत्त्या परोक्षज्ञानदशायां वह्निं न जानामि इत्यनुभवापाताच्च। नापि 'त्वदुक्तमर्थं न जानामी'त्याद्यनुभवः, तस्यापि जडविषयकाज्ञानाभावेन ज्ञानाभावविषयत्वस्यैव वक्तव्यत्वात्। नापि 'देवदत्तप्रमा देवदत्तगतप्रमाप्रागभावातिरिक्तानादिनिवर्तिका, प्रमात्वात्, यज्ञदत्तप्रमावत्' इत्यनुमानं प्रमाणम्; देवदत्तसुखादिप्रमायां बाधात्। किं च, साध्ये देवदत्तगतत्वं प्रमातत्प्रागभावान्यतरविशेषणम्, तदतिरिक्तानादेर्वा? नाद्यः, वृत्तेस्तत्प्रतिबिम्बितचैतन्यस्य वा अन्तःकरणाश्रितत्वेनात्मगतत्वाभावात्। प्रागभावस्य प्रतियोगिदेशनियतत्वेनात्मावृत्त्या तद्घटितसाध्याप्रसिद्धेः। न द्वितीयः, यज्ञदत्तगतप्रमाप्रागभावस्य देवदत्तगतत्वाभावेन दृष्टान्ते साध्यवैकल्यादिति चेत्, उच्यते—

अनादित्वे सति ज्ञाननिवर्त्यत्वमज्ञानत्वम्। न च प्रागभावेऽतिव्याप्तिः, तस्यैवाभावात्। तत्सत्त्वे प्रागभावाः परिमिता अपरिमिता वा? आद्ये ज्ञानोत्पत्त्या स्वतस्तन्नाशसंभवेन श्रवणादिविधिवैयर्थ्यप्रसङ्गात्। द्वितीये, अपरिमितप्रागभावक्षयायोगेनानिर्मोक्षप्रसङ्गः। न च अविद्यासंबन्धेऽतिव्याप्तिः, साक्षात् ज्ञाननिवर्त्यत्वस्यैव विवक्षितत्वात्। अविद्यासंबन्धस्याविद्यानिवृत्तिद्वारा ज्ञाननिवर्त्यत्वात्। न चानादिपदवैयर्थ्यम्, प्रत्यभिज्ञाननाश्यसंस्कारेऽतिव्याप्तिवारकत्वात्। न च कल्पितस्यानादित्वासंभवः, स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वलक्षणकल्पितत्वस्यानादित्वेनाविरोधात्। न च कल्पितस्य दोषजन्यत्वनियमः, अप्रयोजकत्वात्। अन्यथा परमार्थस्यापि गुणजन्यत्वं नियतमिति नित्यमात्रविलोपप्रसङ्गः। वस्तुतस्तु कल्पितत्वे जडत्वं प्रयोजकम्।

तच्च दोषाजन्यत्वेऽपि अज्ञानादेरक्षतम् । न च कल्पितत्वे चैतन्यं प्रयोजकमिति वैपरीत्यम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादि-श्रुतिभिः सत्यज्ञानात्मनावगतस्यात्मनः कल्पितत्वे जगदान्ध्य-प्रसङ्गात्, आत्मनो जगदवभासस्वरूपत्वात् । तथा च श्रुतिः—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति । कल्पितस्याज्ञानस्यानादित्वं तु (ब्रह्मविषयमज्ञानं अनादि) सर्गाद्य-कालीनकार्योत्पादकत्वम् (सम्भवात्) । भ्रान्तिपरिणा(म्यज्ञान)मित्वं (मिति) वा (लक्षणम्)। न च ब्रह्मैव जगदुपादानमिति मतेऽसम्भवः, मायाब्रह्मणी उपादानमिति मते (च) ब्रह्मण्यतिव्याप्तिश्च; अज्ञान-स्यैव परिणामित्वात् । ब्रह्मणः कार्यसत्तात्मतया विवर्तोपादानत्वे-ऽपि परिणामित्वासंभवात् । अज्ञानस्यैकत्वेनानुत्पादितभ्रमाज्ञाना-भावात् नाज्ञाने अव्याप्तिः ॥

तत्र 'अहमज्ञः,' 'अहं न जानामि' इत्यनुभवः प्रमाणम् । तथा हि— नास्य प्रागभावो विषयः, तत्सद्भावे प्रमाणाभावात् । नापि ध्वंसः, विशेषज्ञानस्यैतत्पूर्वमनुदयेन तत्प्रतियोगिकध्वंस-विषयत्वासंभवात् । ज्ञानसामान्यस्य ध्वंसाप्रतियोगित्वाच्च । अहम-र्थस्य चिज्जडसंवलितत्वेन भावरूपाज्ञानाश्रयत्वसंभवान्न तदा-श्रयत्वानुपपत्तिः । यदुक्तम्— अज्ञानानिवर्तकपरोक्षज्ञाने सति 'वह्निं न जानामि' इत्यनुभवापत्तिरिति, तन्न, ज्ञानसामान्य-स्याज्ञानानुभवविरोधित्वात् । 'जन्यसविकल्पकाजन्यदेवदत्त-घटचाक्षुषप्रमा देवदत्तगतप्रमाप्रागभावातिरिक्तानादिनिवर्तिका प्रमात्वात्, यज्ञदत्तघटचाक्षुषप्रमावत्' इत्यनुमानमपि तत्र प्रमाणम् । न च सुखादिप्रमायां बाधः, तद्व्यावृत्त्यर्थं घटादि-

पदोपादानात्। किंचेत्याद्यपि न, देवदत्तगतत्वस्य प्रमाप्रागभाव-विशेषणत्वात्। उक्तप्रमाया देवदत्तपदार्थान्तःकरणनिष्ठतया प्रतियोगिसमानदेशस्य प्रागभावस्यापि तन्निष्ठत्वात्॥

**श्रुतिरपि मानम्**— 'अविद्यायामन्तरे वर्तमानाः' 'नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति' 'एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः' 'न तं विदाथ य इदं जजानान्यद्युष्माकमन्तरं बभूव' 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादि। न चानादित्वे अज्ञानस्य ज्ञाननिवर्त्यत्वानुपपत्तिः, अनादिभावस्यान्यत्र निवृत्त्यदर्शनादिति वाच्यम्। तर्हि त्वदभिमतप्रागभावस्यापि अभावान्तरे निवृत्तेरदर्शनेनानिवृत्तिरेव स्यात्। प्रमाणबलादन्यत्रादृष्टस्यापि कल्पनमज्ञानेऽपि तुल्यम्। न चाज्ञानस्य ज्ञाननिवर्त्यत्वे प्रमाणाभावः। ज्ञाने सत्यज्ञानाननुभवात्। तदसत्त्वे च नियमेन 'न जानामि' इत्यनुभवात् ज्ञानेनाज्ञानं निवृत्तमित्यनुभवाच्चेति ज्ञाननिवर्त्यं तत्। 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः।' 'आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ज्ञाननिर्मथनाभ्यासादाशां दहति पण्डितः॥' 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥' इत्यादिश्रुतिरपि अत्र मानम्॥ स्मृतिरपि—

'तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते।
योगी मायाममेयाय तस्मै योगात्मने नमः'॥ इति॥

**गीतायां च**— 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः। ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनि॥' इति॥

सूतसंहितायां च—'वर्णाश्रमसमाचारात्प्रसन्ने परमेश्वरे। साक्षात्तद्विषयं ज्ञानमचिरादेव जायते॥ ज्ञानादज्ञानविध्वस्तिर्न कर्मभ्यः कदाचन। अज्ञाने सति संसारो ज्ञाने सति विमुच्यते। तस्मात् ज्ञानेन मुक्तिः स्यादज्ञानस्य क्षयान्मुने॥' इति॥

तत्रैव—'ज्ञानेनैव निवृत्तिः स्यादज्ञानस्य न कर्मणा। भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि दृष्टे ह्यात्मनि सुव्रत॥' इति॥

तत्रैवान्यत्र—'अशरीरं शरीरेषु महान्तं विभुमीश्वरम्। आनन्दमक्षरं साक्षान्मत्वा धीरो न शोचति॥ विभेदजनकेऽज्ञाने नष्टे ज्ञानबलान्मुने। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥ आत्मा शुद्धः सदा नित्यः सुखरूपः स्वयं प्रभुः। अज्ञानान्मलिनो भाति ज्ञानाच्छुद्धो विभात्ययम्॥ अज्ञानमलपङ्कं यः क्षालयेत् ज्ञानतोयतः। स एव सर्वदा शुद्धो नान्यः कर्मरतो हि सः॥' इति॥

तत्रैव योगखण्डे—'विरक्तस्य तु संसारात् ज्ञानं कैवल्यसाधनम्। तेन पाशापहानिः स्यात् ज्ञात्वा देवमिति श्रुतिः॥' 'अहो ज्ञानामृतं मुक्त्वा मायया परिमोहिताः। परिभ्रमन्ति संसारे सदासारे नराधमाः॥ ज्ञानामृतरसो येन सकृदास्वादितो भवेत्। स सर्वकार्यमुत्सृज्य तत्रैव परिधावति॥ आत्मैवेदं जगत्सर्वमिति जानन्ति पण्डिताः। अज्ञानेनावृता मर्त्या न विजानन्ति शङ्करम्॥ अज्ञानपाशबद्धत्वादमुक्तः पुरुषः स्मृतः। ज्ञानादस्य निवृत्तिः स्यात्प्रकाशात्तमसो यथा॥ आत्मस्वरूपविज्ञानादज्ञानस्य परिक्षयः। क्षीणेऽज्ञाने महाप्राज्ञ रागादीनां

परिक्षयः ॥ तस्मादज्ञानमूलानि सर्वदुःखानि देहिनाम् । ज्ञानेनैव निवृत्तिः स्यादज्ञानस्य न कर्मणा ॥' इति [च] ॥

तत्रैव ध्यानप्रकरणे—

'ज्ञानादज्ञानविध्वस्तिः सैव तस्य विमुक्तिदा ।' इति ॥

तत्रैव मुक्तिसाधनप्रकरणे— 'आत्मनः परमा मुक्तिर्ज्ञानादेव न कर्मणा । ज्ञानं वेदान्तवाक्यानां महातात्पर्यनिर्णयात् ॥ अनेनैवात्मनोऽज्ञानमात्मन्ये[1]व विलीयते । विलीने चात्मनोऽज्ञाने द्वैतवस्त्वादि नश्यति ॥ घटाज्ञानं घटज्ञानाद्यथा लोके विनश्यति । तथात्माज्ञाननाशेन संसारश्च विनश्यति ॥ तस्मादज्ञानमूलस्य संसारस्य क्षयो भवेत् । आत्मनस्तत्त्वविज्ञानात्तत्त्वं ब्रह्मैव केवलम् ॥' इति ॥

पराशरपुराणेऽपि— 'जीवब्रह्मैक्यविज्ञानाद्यदज्ञानं विनश्यति । तन्न भिन्नं न चाभिन्नं नापि सत्सद्विलक्षणम् ॥ भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि ब्रह्मज्ञानोदये सति ॥' इति ॥

तत्रैव प्रायश्चित्ते— 'या वृत्तिर्मानसी शुद्धा जायते वेदवाक्यतः । तस्यां सा चिदभिव्यक्ता स्वतः सिद्धा च शाङ्करी ॥ तदेव(तद्)ब्रह्मविज्ञानं तदेवाज्ञाननाशनम् । ब्रह्मज्ञाने च संजाते ब्रह्माज्ञानं निवर्तते ॥ घटज्ञाने च सञ्जाते घटाज्ञानं यथा तथा । अतः परमविज्ञानमज्ञानं ग्रसते सदा ॥ सम्यग् ज्ञाने समुत्पन्ने तेनाज्ञानं निवर्तते । तन्निवृत्तौ च तन्मूलं समस्तं प्रविनश्यति ॥ आत्मा-

1 नैव

नात्मविवेकाख्याविवेकादित्यसान्निधौ । कथं नामाभिमानाख्यं तमस्तिष्ठति सत्तम ॥ तस्माद्ब्रह्मात्मविज्ञानं असत्यज्ञानमात्मनः । अज्ञानजनितं कर्म तत्फलं च न संशयः ॥' इति ॥

(तत्रैव— 'सम्यग्ज्ञाने समुत्पन्ने तेनाज्ञानं निवर्तते । तन्निवृत्तौ च तन्मूलं समस्तं प्रविनश्यति ॥' [इति च] ॥)

**शास्त्रार्थप्रकरणे**— 'स्वात्मालाभनिमित्तं यद्बन्धनं पुरुषस्य तत् । स्वात्मलाभेन नष्टं स्यात्स्वात्ममात्रतयैव तु ॥' स्वात्मलाभेन— आत्मज्ञानेन ॥

तथा **लिङ्गपुराणेऽपि** - 'अज्ञानपाशबद्धत्वादमुक्तः पुरुषः सदा । ज्ञानात्तस्य निवृत्तिः स्याज्ज्ञानं वेदान्तवाक्यजम् ॥ यथाग्निस्तृणकाष्ठादिनिर्मिते मन्दिरे स्थितः । मन्दिरं दहति ज्ञानं तद्वदज्ञानमन्दिरम् ॥' इति ॥

**तत्रैव**— 'ऐश्वरं परमज्ञानं लब्ध्वा वेदान्तवाक्यजम् । छित्त्वा मायां महानन्दं भजध्वं मोक्षसंज्ञितम् ॥' इति ॥

**तत्रैव दशमाध्याये**— 'ज्ञानादज्ञानविच्छित्तिर्लोके सिद्धा श्रुतावपि ।' इति । तस्मादज्ञानं ज्ञानान्निवर्तत इति युक्तम् ॥

'वीतमोहः प्रकृतिमापेदे' इत्यनेनाज्ञाने निवृत्ते अशनायाद्यतीतब्रह्मात्मभावेनावातिष्ठत इत्युक्तम् । नन्वेतदसङ्गतम्, स्वाभाविककर्तृत्वादिमत अशनायाद्यतीतब्रह्मात्मभावेनावस्थानानुपपत्तेः । तथा हि—

तत्त्वतः जीवः कर्ता भोक्ताभ्युपगन्तव्यः, 'अहं करोमि, अहं भुञ्जे' इत्यनुभवात् । न चायं भ्रमः, शुक्तौ रजतभ्रम-

क्षस्य 'नेदं रजतं' इतिव 'अहं करोमि नाहं भुञ्जे' इति बाधका-नुभवाभावात् । न च जीवस्यानुभूयमानमपि कर्तृत्वादिकमपारमा-र्थिकमिति वाच्यम् । तथा सति 'यजेत स्वर्गकामः' इत्यादि-कर्मकाण्डजातं निराधिकारिकं स्यात् ॥

'मुक्तयाश्रय आत्मा, कर्ता आत्मत्वात्, व्यतिरेकेण घटवदि'-त्यनुमानादप्यात्मनः स्वाभाविककर्तृत्वसिद्धिः । न चाप्रयोजक-त्वम्; बन्धमोक्षयोर्वैयधिकरण्यापत्तेः । श्रवणादिसाध्यज्ञान-निवर्त्यकर्तृत्वादिबन्धस्यात्मन्यभावात श्रवणादिविधयोऽप्यनर्थका भवेयुः ॥

श्रुतिरप्यात्मानं कर्तारमाह— 'स हि कर्ता' 'एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' 'विज्ञानं यज्ञं तनुते' इत्यादि[का] । नन्वत्र विज्ञानस्य कर्तृत्वं व्यपदिश्यते । विज्ञानशब्दश्च बुद्धौ समधिगतः । कथमनेन जीवस्य कर्तृ-त्वमुच्यत इति चेत्, न । बुद्धेरेष[न]निर्देशः; किं तु जीवस्य । अन्यथा विज्ञानेनेति क[रणतया]निर्देशः स्यात् । दृष्टश्च करण-त्वेन निर्देशो बुद्धिविवक्षायाम्— 'तदेषां प्राणानां विज्ञानेन विज्ञान-मादाय' इति । तस्मादनेन जीवस्यैव कर्तृत्वं व्यपदिश्यत इति । किं च, 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' 'स तत्र पर्येति जक्षत्क्रीडन् रममाणः' इति च स्वरूपाविर्भावलक्षणमुक्तावपि कर्तृत्वश्रवणाज्जीवस्य कर्तृत्वादिकं पारमार्थिकमिति गम्यते । अतः प्रत्यक्षादिभिरवगम्यमानं कर्तृ-त्वादिकं पारमार्थिकमिति चेत्, उच्यते—

अहंकारस्यैव कर्तृत्वम्, 'विज्ञानं यज्ञं तनुते' इति श्रुत्या विज्ञानमयकोशस्यान्तःकरणस्यैव कर्तृत्वप्रतिपादनात। न च बुद्धिविवक्षायां विज्ञानेनेति करणत्वेन निर्देशापत्तिः। योधाः युध्यन्ते, काष्ठानि पचन्ति इतिवत् कर्तृत्वेन निर्देशसंभवात्। तथा च तादृशान्तःकरणधर्माध्यासेनात्मनः कर्तृत्वाद्यनुभवः, न स्वरूपेण, 'असङ्गो ह्ययं पुरुषः' इति श्रुत्या तस्य सङ्गराहित्यावगमात्। कर्तृत्वादेर्वास्तवत्वे 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिभिः श्रुतिभिः कर्तृत्वाद्युपाधिराहितसत्यज्ञानात्मकब्रह्मणा सह कर्तृत्वादिविशिष्टस्यैक्यप्रतिपादनमनुपपन्नं स्यात्। एतेनानुमानमपि प्रत्युक्तम्, अप्रयोजकत्वात्। न च श्रवणादिविध्यानर्थक्यम्, अध्यस्तकर्तृत्वादिबन्धविमोकार्थत्वात्तेषाम्। 'यजेत' इत्यादिविधयोऽपि औपाधिकं कर्तारमाधिकारिणमासाद्य निर्वृता[1] भवेयुः। तदुक्तं पुराणे— 'केवलात्मानमालम्ब्य मुने शास्त्रं न किञ्चन। प्रवर्तते ततो देहाद्यन्यो ज्ञो भ्रान्तिमाश्रितः॥ आत्मा शास्त्राधिकारी स्यात् स हि संसरति भ्रमात्। तस्मिन्नात्मनि मोहेन बन्धमोक्षौ हि कल्पितौ॥' इति॥

'परं ज्योतिरुपसंपद्य' इत्यादिश्रुतिरपि न मुक्तिकालीनं कर्तारमाह। तथा हि— अस्माच्छरीरात्समुत्थाय स्थूलसूक्ष्मशरीरविविक्तमात्मानं ज्ञात्वा स्वेन रूपेणाभिनिष्पद्यते; अहं ब्रह्मास्मीत्यखण्डाकारवृत्त्या साक्षात्करोति। तत्कर्तृत्वं चाविद्याकालीनमिति श्रवणादि कर्तुरन्तःकरणस्यैव। परं ज्योतिरुपसंपद्येत्यत्र उपसंपद्येश्च

---

1 निवृत्ता

केवलानन्दब्रह्मरूपेणावस्थानम् । 'न तस्य प्राणा उत्क्रामन्ति' इति श्रुत्यानुत्क्रान्तप्राणस्य विदुषः स्वस्वरूपब्रह्मगमनानुपपत्तेः । क्त्वाप्रत्ययश्च स्वरूपेणाभिनिष्पद्य ततः परं ज्योतिरुपसंपद्यत इति संपद्यते, मुखं व्यादाय स्वपितीतिवत । स तत्र पर्येति परितः सर्वत्र एति सर्वात्मप्राप्तः स्वयं सर्वात्मा भवति । जक्षत्क्रीडन् रममाण इति[च] ब्रह्मस्वरूपं प्राप्तस्यानवाप्तकामाभावा-न्निखिलानन्दप्राप्तिपरेति न मुक्तिकालीनं कर्तारं प्रतिपादयति । अत एवान्तःकरणस्यैव कर्तृत्वे सुषुप्त्यादावन्तःकरणविनाशात्कृतहाना-दिदोषमाशङ्क्य 'यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्' इति सूत्रेण आ मुक्तेरन्तःकरणानुवृत्त्या उक्तदोषः परिहृत आचार्यैः—

स्यादेतत् । यदि बुद्धिगुणसारत्वादात्मनः संसारित्वं कल्प्येत, ततो बुद्धिवियोगे सति आत्मनो विभक्तस्यालक्ष्य-त्वात् असत्त्वमसंसारित्वं वा प्रसज्येतेत्यत उत्तरं पठति— **याव-दात्मभावित्वाच्च न दोषस्तद्दर्शनात्** इति । नेयमाशङ्का । कस्मात्? यावदात्मभावित्वाद्बुद्धिसंयोगस्य । यावदात्मा संसारी भवति, यावदस्य सम्यग्दर्शने[न]संसारित्वं न निवर्तते, ताव-दस्य बुद्ध्या संयोगो न शाम्यति । यावदेव चायं बुद्ध्युपाधि-संबद्धस्तावदेवास्य जीवत्वं संसारित्वं च । परमार्थतस्तु जीवो नाम बुद्ध्युपाधिसम्बन्धपरिकल्पितस्वरूपव्यतिरेकेण नास्ति, 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतेः । कथं पुनरवगम्यते यावदात्मभावी बुद्धिसंयोग इति? तद्दर्शनादित्याह । तथा हि शास्त्रं दर्शयति— 'योऽयं विज्ञानमयः प्राणेषु हृद्य-न्तर्ज्योतिः पुरुषः [स] समानः सन्नुभौ लोकावनुसंच-

रति ध्यायतीव लेलायतीव ' इत्यादि । तत्र विज्ञानमयो बुद्धि-गुणप्रधानः । यथा स्त्रीमयोऽसौ देवदत्त इति स्त्रीरागादिप्रधानो-ऽवगम्यते, तद्वत् । समानः सन्नुभौ लोकावनुसंचरति इति च लोकान्तरगमनेऽपि अवियोगं बुद्ध्या दर्शयति । केन समानः ? तयैव बुद्ध्येति गम्यते, सन्निधानात् । तच्च दर्शयति— 'ध्यायतीव लेलायतीव ' इति । एतदुक्तं भवति—नायं स्वतो ध्यायति चलति वा ध्यायन्त्यां तु बुद्धौ ध्यायतीव, चलन्त्यां तु चलतीवेति । अपि च मिथ्याज्ञानपुरस्सरोऽयमात्मनो बुद्ध्युपाधिसम्बन्धः । न च मिथ्याज्ञानस्य सम्यग्ज्ञानादन्यत्र निवृत्तिरस्ति । अतो यावद्ब्रह्मात्मतानवबोधस्तावदयं बुद्ध्युपाधिसंबन्धो न शाम्यति । दर्शयति च— 'तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ' इति ॥

ननु सुषुप्तिप्रलययोर्न बुद्धिसम्बन्धोऽवगन्तुं शक्यते, 'सता सोम्य तदा संपन्नो भवति ' इति (च) वचनात् । कृत्स्नविकार-प्रलयाभ्युपगमाच्च ।[तत्]कथं यावदात्मभावित्वं बुद्धिसम्बन्धस्येति, अत्रोच्यते— **पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगात्** । यथा बाल्यादिषु विद्यमानान्येव पुंस्त्वादीनि यौवने आविर्भवन्ति, एवं बुद्धिसम्बन्धोऽपि शक्त्यात्मना सुषुप्तिप्रलययोर्विद्यमान एव पुन; प्रबोधप्रसवयोराविर्भवति । दर्शयति च— 'त इह व्याघ्रो वा सिंहो वा ' इत्यादिना । तस्माद्यावदात्मभावी बुद्धिसम्बन्ध इति ॥

**कर्ता शास्त्रार्थवत्त्वात्** [इति च] बुद्ध्युपाधिकमेव कर्तृत्वं जीवस्य । अत एव 'यजेत स्वर्गकामः ' इत्यादिश्रुतिप्रतिपन्नं

कर्तृत्वादिकं पारमार्थिकमिति पूर्वपक्षं कृत्वा औपाधिकमेवेति सिद्धान्तितम् । तथाहि—

कर्ता जीवः स्यात् । कस्मात्? शास्त्रार्थवत्त्वात् । एवं सति 'यजेत' इत्यादिशास्त्रमर्थवद्भवेत् । अन्यथानर्थकं स्यात् । तद्धि कर्तुः सतः कर्तव्यविशेषमुपस्थापयति । न चासति कर्तृत्वे तदुपपद्यते । तथेदमपि शास्त्रमर्थवद्भवति । 'एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इति ॥

**विहारोपदेशात्**। इतश्च जीवस्य कर्तृत्वम्, यज्जीवप्रक्रियायां स्वप्ने विहार उपदिश्यते— 'स ईयतेऽमृतो यत्र कामम्' इति ॥

**उपादानात्**। जीवप्रक्रियायां उपादानश्रवणादपि कर्तृत्वम्, 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति, 'प्राणान् गृहीत्वा' इति च ॥

**व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः** ।

'विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च' इति लौकिकवैदिकक्रियाकर्तृत्वव्यपदेशाच्च कर्तृत्वम् । ननु विज्ञानशब्दो बुद्धौ समधिगतः । कथमनेन जीवस्य कर्तृत्वमुच्यत इति चेत्— न, जीवस्यैव एष निर्देशो न बुद्धेः । न चेज्जीवस्य स्यात् विज्ञानेनेति निर्देशविपर्ययः स्यात् । दृश्यते ह्यन्यत्र बुद्धिविवक्षायां करणत्वेन निर्देशो विज्ञानशब्दस्य 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति । अतो बुद्धिव्यतिरिक्तात्मनः कर्तृत्वमिति ॥

ननु यद्यात्मा स्वतन्त्रः कर्ता स्यात्, तर्हि इष्टमेव संपादयेन्नानिष्टम् । न च तथोपलभ्यते । अतोऽकर्तृत्वमत उत्तरं पठति—

**उपलब्धिवदनियमः** । कारकान्तराप्रयोज्यत्वे सति करणादिकारकप्रयोक्तृत्वं स्वातन्त्र्यं, न सहकार्यन्तरानपेक्षत्वम् । तथा सति ईश्वरोऽपि स्वतन्त्रो न भवेत् । देश[1]कालादिनिमित्तविशेषापेक्षि(त)त्वात् । लोकेऽपि पक्तुः पाके स्वातन्त्र्यं न स्यात्, उदकाद्यपेक्षत्वात् । एवं च यथोपलब्धौ स्वतन्त्रोऽप्यात्मा इष्टमनिष्टं चोपलभते सहकारिविशेषात्, तथा इष्टानिष्टक्रियायां सहकारिवैचित्र्यादनियमेन प्रवर्तत इत्यविरोधः ॥

**शक्तिविपर्ययात्** । यदि बुद्धिः [2]कर्त्री स्यात्, तदा शक्तिविपर्ययः स्यात् । करणशक्तिर्बुद्धेर्हीयेत; कर्तृशक्तिरापद्येतेत्यर्थः । एवं च तस्याः सर्वार्थकारिकरणमन्यत्कल्पयितव्यम् । ततश्च करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात् संज्ञामात्रविवादो न वस्तुभेद इति । अतोऽपि जीवस्य कर्तृत्वम् ॥

**समाध्यभावाच्च** । योऽयमात्मनो ज्ञानप्रयोजनकः समाधिरुपदिष्टः 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' 'ओमित्येवं ध्यायथ आत्मानम्' इत्यादिभिः, सोऽप्यसत्यात्मनः कर्तृत्वादिबन्धे नोपपद्यते । तस्मादप्यस्य पारमार्थिककर्तृत्वादिसिद्धिः ॥

**यथा च तक्षोभयथा** । न स्वाभाविकं कर्तृत्वमात्मनः संभवति, अनिर्मोक्षप्रसङ्गात्, स्वभावानपायात् ॥

ननु मुक्तौ कर्तव्याभावेऽपि कर्तृस्वभावोऽनुवर्तताम् । यथा ज्ञेयाभावेऽपि ज्ञानस्वभावोऽनुवर्तते, तद्वदिति चेत्-- न,

1. काल 2. कर्ता

'विज्ञानमानन्दं ब्रह्म' इति ज्ञानस्वभाववत् कर्तृत्वस्वभावस्याश्रवणात्। तस्मादुपाधिधर्माध्यासेनैवात्मनः कर्तृत्वम्, न स्वाभाविकम्। तथा च श्रुतिः— 'ध्यायतीव लेलायतीव' इति। न हि परस्मादन्यो जीवो नाम कर्ता भोक्ता वा विद्यते, 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुत्या निषेधात्। न च पर एव तर्हि संसारी स्यात्, अन्यस्य निषेधादिति वाच्यम्, अविद्याप्रत्युपस्थापितत्वात्कर्तृत्वभोक्तृत्वयोः। तथा च श्रुतिः 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति— 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इति ॥

तदेतदाहाचार्यः— 'यथा च तक्षोभयथा' इति। त्वर्थे चायं चः पठितः। न स्वाभाविकमात्मनः कर्तृत्वमग्नेरिवौष्ण्यम्। यथा लोके वास्यादिकरणहस्तः कर्ता दुःखी भवति। स एव स्वगृहप्राप्तौ विमुक्तवास्यादिकरणो निर्व्यापारः सुखी भवति। एवमविद्याप्रत्युपस्थापितद्वैतसंपृक्त आत्मा स्वप्नजागरितयोः कर्ता दुःखी भवति। स एव तच्छ्रमापनुत्तये स्वात्मानं परं ब्रह्म प्रविश्य [वि]मुक्तकार्य[1]करणसङ्घातोऽकर्ता सुखी भवति सम्प्रसादावस्थायाम्। तथा मुक्तावस्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूयात्मैव केवलः सुखी भवति ॥

यत्तूक्तं शास्त्रार्थवत्त्वादिभिः स्वाभाविकमात्मनः कर्तृत्वमिति; तत्र विधिशास्त्रं तावद्यथाप्राप्तं कर्तृत्वमुपादाय कर्तव्य-

1. कारण

विशेषमुपदिशति, नात्मनः कर्तृत्वं प्रतिपादयति । न चास्य स्वाभाविकं कर्तृत्वम्, ब्रह्मात्म(त)त्वोपदेशादित्यवोचाम । तस्मादविद्याकृतं कर्तृत्वमुपादाय विधिशास्त्रं प्रवर्तिष्यते । 'कर्ता विज्ञानात्मा पुरुषः' इत्येवंजातीयकमपि शास्त्रमनुवादरूपत्वाद्यथाप्राप्तमेव कर्तृत्वमनुवदिष्यति । एतेन विहारोपादाने परिहृते, तयोरप्यनुवादरूपत्वात् । यस्त्वयं व्यपदेशो दर्शितः 'विज्ञानं यज्ञं तनुते' इति, स बुद्धेरेव कर्तृत्वं प्रतिपादयति, विज्ञानशब्दस्य [तत्र]प्रसिद्धत्वात्, मनोऽनन्तरपाठाच्च । न च बुद्धेः करणत्वेन तृतीयान्तनिर्देशापत्तिः । उभयथापि निर्देशदर्शनात् लोके— योधा युध्यन्ते, योधैर्युध्यते राजा इति । न च बुद्धेः शक्तिविपर्ययः करणानां कर्तृत्वाभ्युपगमे भवति, सर्वकारकाणां स्वस्वव्यापारेषु कर्तृत्वस्यावश्यम्भावित्वात् । उपलब्ध्यपेक्षं तु तेषां करणानां करणत्वम् । सा चात्मनः । न च तस्यामप्यात्मनः कर्तृत्वमस्ति, नित्योपलब्धिस्वरूपत्वात् । न चैवं सति करणान्तरकल्पनाप्रसङ्गः, बुद्धेः करणत्वाभ्युपगमात् । समाध्यभावस्तु शास्त्रार्थवत्त्वेनैव परिहृतः, यथाप्राप्तं कर्तृत्वमुपादाय समाधिविधानात् । तस्मादुपाधिनिबन्धनमात्मनः कर्तृत्वादिकमिति ॥

पुराणेष्वपि औपाधिकमेव कर्तृत्वं व्यपदिश्यते । तथा हि ।

सूतसंहितायाम्— 'कर्तृत्वं वास्तवं नैव जीवस्य
सत्तम । भोक्तृत्वं वाक्रियस्यास्य ब्रह्मभूतात्मन
कर्तृत्वं चैव भोक्तृत्वं यदि स्वाभाविकं भवेत्
निवर्तेत केनचित्साधनेन च ॥ एको
ऽवभासते । घटाकाशमठाकाशवि

योऽपि स्वतन्त्रात्मा भ्रान्त्या सर्वविकारवान् । जलस्य चलनादेव यथा चलति भास्करः ॥ अतीव धवलो रक्तो विभाति स्फटिको यथा । रक्तोपाधिवशादात्मा संसारी चान्यसङ्क्रमात् ॥ वर्णाश्रमवयोऽवस्थाविशेषो यस्य भासते । तस्यैव हि निषेधाश्च विधयः सकला अपि ॥ सर्वोपाधिविनिर्मुक्तं चैतन्यं सर्वसाक्षिणम् । स्वात्मना पश्यतः कर्म कथं ब्रूहि शुभाशुभम् ॥ सर्वसाक्षिणमीशानं सर्वसंबन्धवर्जितम् । [1]साक्षादात्मतया पश्यन्कथं बध्येत कर्मणा ॥' इति ॥

तत्रैव क्षेत्रप्रशंसायाम्— 'वेदवेदान्तसारस्य प्रणवाख्यस्य पार्वति । ब्रह्मणस्त्वर्थभूतोऽहं संसारद्रावकोऽचिरात्[2] ॥ कृपया मामकं रूपं परिपूर्णं परामृतम् । आनन्दसत्यचिद्रूपं तारकं तमसः परम् ॥ स्वयंभान्तं निराधारं दास्यामि प्रत्यगात्मना ॥ येनैवाशु महादुःखं प्राणेशोऽयं महेश्वरि । परित्यज्य स्वसंसारं परानन्दो भवेत्स्वयम् ॥' इति ॥

तत्त्वप्रकरणेऽपि— 'शिवस्य परतत्वस्य स्वभावः सकलं शुक । तदधी[3]नस्ततोऽन्येषामिति तत्वविदां स्थितिः ? ॥ साक्षात्परतरं तत्वं स्वभावादेव निर्मलम् । उत्पत्त्यादिविनिर्मुक्तं स्वतन्त्रं पूर्णमद्वयम् ॥ प्रकृतिप्राकृतातीतं लक्ष्यलक्षणवर्जितम् । ... मोक्षविनिर्मुक्तं बन्धमोक्षविधायकम् ॥ कालातीतं कलातीतं विधूयात... र्जितम् । अनन्तमखिलाधारमपरिच्छिन्नवैभवम् ॥ यत्तूक्तं ... परशक्तिसमन्वितम् । वेद्यावेद्याखिलोल्लासमिति; तत्र विधिशं... विदित्वा विमुच्यन्ते देशिकानुग्रहेण च ।

1. कारण 3. नं तद

प्रसादेन च रुद्रस्य भवानीसहितस्य तु ॥ अतः सकलजन्तूनां तदेव परमं पदम् । वेदितव्यं विशेषेण विद्यया हि परा गतिः ॥' इति ॥

तथा लिङ्गपुराणेऽपि— 'न कर्ता न च भोक्ताहं न च कारयिता तथा । धर्माधर्मौ न मे विप्राः सर्वदा परमार्थतः ॥' इति ॥

सूतसंहितायामपि— 'यद्यात्मा मलिनः कर्ता भोक्ता च स्यात्स्वभावतः । नास्ति तस्य विनिर्मोक्षः संसाराज्जन्मकोटिभिः ॥ आत्मायं केवलं स्वच्छः शान्तः सूक्ष्मः सनातनः । अस्ति सर्वान्तरः साक्षी चिन्मात्रसुखविग्रहः ॥ अयं स भगवानीशः स्वयंज्योतिः स्वभावतः । अस्माद्विजायते विश्वमत्रैव प्रविलीयते ॥' इति ॥

तत्रैव समाधिप्रकरणे— 'नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः । एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः ॥ तस्मादद्वैतमेवास्ति न प्रपञ्चो न संसृतिः । यथाकाशो घटाकाशो महाकाश इतीरितः । तथा भ्रान्तैर्द्विधा प्रोक्तो ह्यात्मा जीवेश्वरात्मना ॥' इति ॥

मुक्तिखण्डेऽपि— 'न देहो नेन्द्रियं प्राणो न मनो बुद्ध्यहंकृती । न चित्तं नैव माया च न च व्योमादिकं जगत् ॥ न कर्ता न च भोक्ता च न च भोजयिता तथा । केवलं चित्सदानन्दब्रह्मैवात्मा यथार्थतः ॥' इति ॥

ज्ञानवाचकपदान्तरपरिवर्जनेन आत्मवानित्यात्मपदप्रयोगात् आत्मविषयकज्ञानमेव मुक्तिसाधकं इति सूचितम् ॥

नन्वात्मनः कर्तृत्वेन कर्मशेषत्वात् तज्ज्ञानमपि कर्तृद्वारा कर्माङ्गमेव । न च ज्ञानस्याङ्गत्वे 'तरति शोकमात्मवित्' इत्यादिफलश्रवणानुपपत्तिः । 'यस्य पर्णमयी जुहूर्भवति न स पापश्लोकं शृणोति' 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' 'यत्प्रयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानाय' इत्यादिषु कर्माङ्गपर्णतादिफलप्रतिपादकानाम् 'न स पापश्लोकं शृणोति' इत्यादीनामिवार्थवादत्वसंभवात् । न च पर्णताया अव्यभिचरितजुहूद्वारा विनियोगवत् द्वारभूतात्मनो लौकिकवैदिकक्रियाकर्तृत्वने व्यभिचरिततया विनियोगासंभवात्कथं कर्माङ्गत्वमिति वाच्यम् । देहादिव्यतिरिक्तात्मज्ञानस्य लौकिके कर्मण्यनुपयुक्तत्वेन वैदिके कर्मणि देहपातोत्तरभाविफले तेन विना प्रवृत्त्यनुपपत्त्या विनियोगात्, तस्य क्रत्वव्यभिचारित्वात् । तस्मात्पर्णतादिवदात्मज्ञानं कर्माङ्गमिति चेत् ।

उच्यते— न हि देहातिरिक्तात्मा कर्ता भोक्ता शारीरो जीव एव वेदान्तेषु प्रतिपाद्यते । किं तु, 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इत्यादिभिः अशनायाद्यतीतं सत्यज्ञानानन्दाद्वितीयब्रह्माभिन्नमेवात्मस्वरूपमुपादिश्यते । न चैतादृशात्मज्ञानं कर्मण्युपयुज्यते । प्रत्युत औपनिषदात्मज्ञानं कर्तृत्वोच्छेदकमेव । तथा च क्रियाकारकभावतत्कारणोच्छेदकत्वमामनन्ति माध्यन्दिनाः— 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिना । एवं च कर्मविरोध्यौपनिषदात्मज्ञानस्य फलाकाङ्क्षायां स्वप्रकरणा-

धीतफलवाक्यानां 'तरति शोकमात्मवित्' इत्यादीनां फलसमर्पकत्वे सम्भवति नार्थवादत्वं कल्पयितुमुचितम्। तस्मादौपनिषदात्मज्ञानं स्वतन्त्रफलवत्, न कर्माङ्गम्। अयमर्थः 'पुरुषार्थोऽतः शब्दादिति बादरायणः' इत्यादिभिः 'उपमर्दं च' इत्यन्तैः सूत्रैः भाष्ये भगवत्पादैः प्रतिपादितः ॥

**'वीतमोहः पुनः प्रकृतिमापेदे'** इत्यनेनाज्ञाने निवृत्ते स्वरूपप्राप्तिप्रतिपादनादविद्याकार्यस्य कर्तृत्वादेर्निवृत्तिमन्तरा निर्विशेषस्वरूपप्राप्त्यनुपपत्तेः अर्थादविद्योपादानकार्यस्य कर्तृत्वादेः प्रपञ्चस्य निवृत्तिरुक्ता ॥

ननु नाज्ञानमुपादानं कार्यस्य। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥' 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' 'सोऽकामयत बहु स्यां प्रजायेयेति' इत्युपक्रम्य 'इदं सर्वमसृजत यदिदं किं च' इत्यादिभिः श्रुतिभिः ब्रह्मणो व्यावहारिकसर्वप्रपञ्चोपादानत्वप्रतिपादनादिति चेत्— सत्यं ब्रह्मोपादानम्। 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादिश्रुत्या, मायागतजाड्यस्य घटादिष्वनुगमाच्च मायापि जगदुपादानम्। तत्र व्यावहारिकप्रपञ्चस्य समानस्वभावत्वादविद्या परिणाम्युपादानम्। सच्चिद्रूपं ब्रह्म तु विलक्षणत्वाद्विवर्तोपादानम्। न च विवर्ताधिष्ठानस्योपादानत्वं पारिभाषिकमिति वाच्यम्। स्वनिष्ठकार्यजनकत्वस्य स्वाभिन्नकार्यजनकत्वस्य वा उपादानलक्षणस्य तत्रापि सत्वात्। तस्मादज्ञानमेव परिणाम्युपादानम्। ब्रह्म [तु] विवर्तमेव ॥

अत एव 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' इति सूत्रेण ब्रह्मणो जगदुपादानत्वे तस्य कार्त्स्न्येन जगदाकारेण परिणामे विकारातिरेकेण ब्रह्माभावो वा, एकदेशेन परिणामे निरवयवत्वश्रुतिविरोधो वा प्रसज्येत इति पूर्वपक्षे कृते 'आत्मनि चैवं विचित्राश्च हि' इति सूत्रेण [1]विवर्तवादाभिप्रायेण स्वप्नद्रष्टरि जीवात्मनि स्वरूपानुपमर्देनानेकाकारस्वप्नप्रपञ्चसृष्टिवद्ब्रह्मणि वियदादिप्रपञ्चसृष्टिरुपपद्यत इति सिद्धान्तितं भगवत्पादैः ॥

देहादेरज्ञानविकारत्वं पुराणेषु प्रतिपादितम् । तत्र पराशरपुराणे— 'अज्ञानस्यैव कार्याणि कारकाण्यखिलानि च । अज्ञाननाशतो नाशमायान्त्येव न संशयः ॥' इत्युपक्रम्य अध्यायपरिसमाप्तिपर्यन्तं कार्यमात्रस्याज्ञानविकारत्वं प्रतिपादितम् ॥

तत्रैव प्रायश्चित्ते— 'अज्ञाने सति कर्तृत्वं तत्रैव तु शुभाशुभम् । तथा सति कृतं कर्म बाधते ज्ञानमात्मनः ॥ मूलभूते स्थितेऽज्ञाने ततो द्वैतं विजायते । शोभनाशोभनभ्रान्तिस्तत्र पुंसः प्रजायते ॥ रागद्वेषौ च जायेते शोभनाशोभनभ्रमात् । प्रवर्तते पुनर्देही धर्माधर्मौ प्रवृत्तितः ॥ धर्माधर्मोपभोगाय शरीरं जायते द्विज ॥' इति ॥

लैङ्गेऽपि— 'कोशमन्नमयं भान्तमात्मवन्माययैव तम् । स्वदेहमिति चासत्यमिति विद्धि विचक्षण ॥ प्राणापानादिभेदेन विभिन्नो भाति यो यतः । योऽयं प्राणमयः कोशः सोऽयं मायाविजृम्भितः ॥' इति ॥

1. मानता

'पुनः प्रकृतिमापेदे' इति प्रकृतिप्राप्तिः [विस्मृत]कण्ठचामीकरन्यायेन प्राप्तस्यैवाप्राप्तत्वभ्रमनिवृत्तिरूपा प्राप्तिरुक्ता। तथा च पराशरपुराणे—'आत्मलाभात्परं नास्ति किञ्चिन्मात्रमपि द्विज। अतः स्वात्मानमीशानं लभते स्वात्मना स्वयम्॥ लब्धस्य लाभोऽलब्धस्य लब्धव्यस्य तथैव हि। द्विधा लाभः स्वकं रूपं तत्र लब्धं हि संततम्॥ लब्धस्यालब्धताज्ञानाल्लाभस्तस्यैव वेदनात्। आत्मलाभस्त्वतः स्वात्मवेदनोत्पत्तिरेव हि॥' इति॥

सूतसंहितायां—'सायुज्यरूपा परमा मुक्तिर्जीवपरात्मनोः। पारमार्थिकतादात्म्यस्वरूपाज्ञाननाशतः॥ मुमुक्षोर्जायते सम्यगिति वेदान्तनिर्णयः। यस्य स्वभावभूतेयं मुक्तिः साक्षात्परा हरे। अभिव्यक्ता स एवाहमिति मे निश्चिता मतिः॥' इति॥

पाराशर्येऽपि— 'स्वस्वरूपस्य लाभेन स्वात्मानन्दो महत्तरः। अपरोक्षतया भाति सा परा मुक्तिरात्मनः॥' इति॥

'पुनः' इति विशेषणाच्च कण्ठचामीकरन्यायेन नित्यप्राप्तस्यैवात्मनः अप्राप्तत्वभ्रमनिरासपूर्विका स्फूर्तिः सूचिता। तथा च श्रुतिः— 'एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम्। समस्तसाक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम्॥' इति॥

ततः—

स सागरं दानवपन्नगायुतं
बलेन विक्रम्य महोर्मिमालिनम्।

निपत्य तीरे च महोदधेस्तदा
दद‍र्श लङ्काममरावतीमिव ॥

इति प्रथमः सर्गः ।

---

## अथ द्वितीयः सर्गः ॥

द्वितीये— तदनु हनूमानर्णवलङ्घनजनितां ग्लानिमविगणय्य लङ्कावलोकने कृतत्वरस्तत्क्षणमेव वनकरिकुलमदजलसेकसंवर्धितैर्विकचधवलकुसुमनिकरमत्युच्चतया तारागणमिव शिखरदेशलग्नमुद्वहद्भिः पादपैरुपशोभितान्भूमिभागानवलोकयन् लङ्कापुरपरिसरवर्तिनं शैलमारुह्य सरलप्रियाल(क्र)तमालहिन्तालनागपुन्नागकेतकीकरवीरादिविविधतरुषण्डमण्डितपर्यन्तभूमिभागामनवरतासिच्यमानसलिलतया हरितोपवनान्धकारैः केतकीधूलिधूसरैरुपशल्यकैर्विभूषितां विकचकुवलयदलकान्तैरुत्फुल्लकुमुदधवलोदरैः सहस्रसंख्यैः सरोभिरुद्भासितामुत्पलपङ्कजपरागपिञ्जरितजलेन रसातलगम्भीरेण जलनिधिनेव परिखावलयेन परिवृतां गगनतलोल्लेखिशिखरमालेन काञ्चनमयेन प्राकारमण्डलेन परिगतां कनकमयामलकलशशिखरैरनिलदोलायितध्वजैः शारदाम्बुदपाण्डरैरमरमन्दिरैरिव निशाचरमन्दिरैर्विराजितशृङ्गाटकां खड्गशूलगदाशक्तितोमरादिनानायुधधरैर्निशाचरैः सर्वतो रक्ष्यमाणामुन्नतरशिखरतयाम्बरमिवालिखन्तीमापिबन्तीमिवाकाशं स्पृशन्तीमिव विधुमण्डलं विश्वकर्मनिर्मितामपरामिवामरावतीं लङ्कामवलोक्य तदुत्तरद्वारमासाद्य मारुतिः,

दंष्ट्रिभिर्बहुभिः शूरैः शूलपट्टसपाणिभिः ।
रक्षितां राक्षसैर्घोरैर्गुहामाशीविषैरिव ॥

तस्याश्च महतीं गुप्तिं सागरं च निरीक्ष्य सः ।
रावणं च रिपुं घोरं चिन्तयामास वानरः ॥

अत्र हनूमता बहुविचारकरणादन्यैरपि कार्यार्थं प्रवृत्तैः स्वपरबलसाधकबाधकादिकमखिलमपि विचारणीयमिति सूचितम् ॥

तथा च कामन्दके— 'स्वराष्ट्रपरराष्ट्राणामिति चेति च चिन्तयन् । अन्तपालांस्तु कुर्वीत मित्राण्याटविकांस्तथा । जलस्थानानि मार्गांश्च विद्यात्स्वबलासिद्धये ॥ सारवत्तां च राष्ट्रस्य दुष्टतां गुप्तिमेव च । छिद्रं शत्रोर्विजानीयात्कोशमित्रबलानि च ॥' इति ॥

आगत्यापीह हरयो भविष्यन्ति निरर्थकाः ।
न हि युद्धेन वै लङ्का शक्या जेतुं सुरैरपि ॥

इमां तु विषमां दुर्गां लङ्कां रावणपालिताम् ।
प्राप्यापीह महाबाहुः किं करिष्यति राघवः ॥

अत्र त्रिकूटगिरिशिखराग्रनिर्मिततया दुर्गमा लङ्कापुरी युद्धादिभिर्जेतुमशक्या इत्युक्त्या निखिलदुर्गापेक्षया गिरिदुर्गं जेतुमशक्यं इति सूचितम् ॥

तत्र दुर्गाणि षट्— धन्वदुर्गं, महीदुर्गं, अब्दुर्गं, वार्क्षंदुर्गं नृदुर्गं, गिरिदुर्गं, चेति । तत्र यथा धन्वदुर्गमाश्रिता मृगाः, महीदुर्गमाश्रिता मूषिकादयः, अब्दुर्गमाश्रिता झषादयः, वार्क्षदुर्गमा-

श्रिताः प्लवङ्गमादयः, नृदुर्गमाश्रिता नराः, गिरिदुर्गमाश्रिता देवाश्च तत्तच्छत्रुभिः सिंहमार्जारश्येनश्वा[नरा]सुरैरजेया भवन्ति । एवमेतेषु दुर्गेषु यं कंचन दुर्गमाश्रितो नृपनिरजेयो भवति । गिरिदुर्गं तु सर्वदुर्गापेक्षया श्रेष्ठतममित्युक्तम् । तथा च **मनुः**—

'धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव च । नृदुर्गं गिरिदुर्गं च समाश्रित्य वसेत्पुरम् ॥ सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् । एषां हि बाहुगुण्येन गिरिदुर्गं विशिष्यते ॥ त्रीण्याद्यान्याश्रितास्त्वेषां मृगा गर्ताश्रया झषाः । त्रीण्युत्तराणि (च) क्रमशः प्लवङ्गमनरामराः ॥ यथा दुर्गाश्रितानेतान्नोपहिंसन्ति शत्रवः । तथारयो न हिंसन्ति नृपं दुर्गसमाश्रयम् ॥ एकः शतं योधयति प्राकारस्थो धनुर्धरः । शतं दशसहस्राणि तस्माद्दुर्गं विशिष्यते ॥' इति ॥

**राजधर्मेऽपि**—'षड्विधं दुर्गमास्थाय पुराण्यथ निवेशयेत् । सर्वसंपत्प्रधानं यद्बाहुल्यं चापि सम्भवेत् ॥ धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च । मनुष्यद्रुमदुर्गं च जलदुर्गं च तानि षट् ॥' इति ॥

**कामन्दके तु**—

'पृथुसीम महाखातमुच्चप्राकारगोपुरम् । समावसेच्छैलसरिन्मरुत्स्थलवनाश्रयम् ॥ जलवद्धान्यधनवद्दुर्गं कालसहं महत् । दुर्गहीनो नृपतिर्वाताभ्रावयवैः समः ॥ औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा । प्रशस्तं शस्तमतिभिर्दुर्गं दुर्गोपचिन्तकैः ॥ जलान्नायुधयन्त्राढ्यं वीरयोधैरधिष्ठितम् । गुप्तिप्रधानमाचार्या दुर्गं

समनुमेनिरे ॥ सापसाराणि दुर्गाणि भुवः सानूपजाङ्गलाः । निवासाय प्रशस्यन्ते भूभुजां भूतिमिच्छताम् ॥ बह्वादानोऽल्पानिस्रावः ख्यातः पूजितदैवतः । ईप्सितद्रव्यसंपन्नो हृद्यैः स्वाप्तैरधिष्ठितः ॥' इति । जाङ्गलदेशश्च—'अल्पोदकतृणो यस्तु प्रयतः प्रचुरातपः । स ज्ञेयो जाङ्गलो देश उक्तलक्षणलक्षितः ॥' एवमेकैकमपि दुर्गं दुस्साधं, किमु अनेकदुर्गसमुदायात्मकं लङ्कानगरम् इति ॥

तदिदानीं जीवति वा न वेति सीतामवगत्य ततः समीहितं चिन्तयामि । न चानेन रूपेणात्युग्रनिशाचरपरिपालिता पुरी प्रवेष्टुं शक्यते इत्यतः—

**लक्ष्यालक्ष्येण रूपेण रात्रौ लङ्कापुरी मया ।**
**प्रवेष्टुं प्राप्तकालं मे कृत्यं साधयितुं महत् ॥**

**भूताश्चार्था विपद्यन्ते देशकालविरोधिताः ।**
**विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥**

**अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते ।**
**घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥**

एवं विचिन्त्य प्लवगवरस्तत्रभवन्तीं सीतामधिजिगमिषुः प्रच्छन्नसंचारहेतोर्गभस्तिमालिनोऽस्तमयमभिललाष । तदनु प्रतीचीं दिशं प्रविशति भगवति सहस्रदीधितौ अपरार्णवतटाभ्यर्णसमुदीर्णायां विद्रुमलताश्रियामिव पाटलितायां संध्यायां पृषदंशकमात्राकृतिरलंकृतां पुरीं प्रविवेश । तदनु त्रिभुवनमहनीयशौर्य-

राशेरार्यस्य रामभद्रस्य आज्ञया दौत्येन संप्रस्थितायानिलसुताय लङ्कालयानखिलान्प्रकाशयितुमिव सिन्दुवारकुसुमपाण्डरैः किरणोत्करैर्दश दिशोऽपि प्रकाशयन्नाविर्बभूव भगवान्कुमुदबान्धवः ॥

इति द्वितीयः सर्गः ।

---

## अथ तृतीयः सर्गः ॥

तृतीये---ततो हनुमाननवरतमारक्षकराक्षसगणसंरक्ष्यमाणं काञ्चनमयं प्राकारमासाद्य समुत्तुङ्गसौधोत्सङ्गसङ्गिनीनामङ्गनानामाभरणरवोन्मिश्रेणातिमधुरवेणुगीतिरवेण मन्दरगिरिमथ्यमानजलधिगम्भीरदुन्दुभिनादपुरःसरेण तूर्यनिनादेन निर्दयसंमर्दितमृदङ्गशङ्खरवनिर्भर्त्सितक्रौञ्चबर्हिणनिनदेन च सर्वतः प्रतिनादिताम् , अतप्तकनकमयद्वारैर्वैदूर्यमयवेदिकैर्मणिमयसोपानैः स्फाटिकमणिकुट्टिमैः राजतामलपाण्डरैर्गृहैरुपशोभितामनुत्तमामनुपमां तामवलोक्य विस्मयस्तिमितमानसः, कुमुदाङ्गदमैन्दद्विविदसुग्रीवसुषेणकेतुमालवानरयूथप्रमुखानन्तरेणान्यैर्नेयं पुरी प्रवेष्टुं शक्यते । तत्कथमखिलवानरसमूहो दुस्तरमर्णवं विलङ्घ्य मध्येसमुद्रं सर्वतः सुभद्रं लङ्कापुरमायास्यति । अथ वा, अधरीकृताधि[illegible]पराक्रमशक्रविक्रमयोः रामलक्ष्मणयोर्बाणानामाकिञ्चित्करमिदमिति संचिन्त्य लङ्कां प्रविवेश । प्रविशन्तं हनूमन्तमभियोद्धुं लङ्काधिदेवता परिगृहीतक्रूरवेषा तदभिमुखमाजगाम ॥

तदनु लङ्काधिदेवतामात्मना सह योद्धुं समागतां केनकार-

णेन दुर्गममिमं प्रदेशं प्राप्तवानसि, कस्य वानुचरस्त्वमिति भूयसा वचसा तर्जयन्तीं तामवलोक्य हनुमानहमिममर्थं यथावत्कथयामि । त्वं पुनः किंनिमित्तं मार्गस्यार्गलीभूतासि इत्यपृच्छत् । ततो रावणाज्ञया लङ्कापुरीरक्षणाय समाबद्धकक्ष्या लङ्कास्मि । मामवज्ञाय भवता न पुरं प्रवेष्टुं शक्यमिति वदन्तीं लङ्कां मारुतिरेवमवादीत्—

द्रक्ष्यामि नगरीं लङ्कां साट्टप्राकारतोरणाम् ।
इत्यर्थमिह सम्प्राप्तः परं कौतूहलं हि मे ॥

वनान्युपवनानीह लङ्कायाः काननानि च ।
सर्वतो गृहमुख्यानि द्रष्टुमागमनं हि मे ॥

दृष्ट्वा पुरीमिमां भद्रे पुनर्यास्ये यथागतम् ।

अत्र सीतागवेषणरूपकार्यमाच्छाद्य कुतूहलार्थनया लंकां द्रष्टुकाम इति कथनात् शत्रुपक्षे कार्यार्थिना स्वकार्यं गोपनीयमिति सूचितम् ॥

तथा च सभापर्वणि— 'के यूयं पुष्पवन्तश्च भुजैर्ज्याकृतलक्षणैः । बिभ्रतः क्षात्रमोजश्च ब्राह्मण्यं प्रतिजानथ ॥ एवं विरागवसना बहिर्माल्यानुलेपनाः । सत्यं वदत के यूयं मनुष्यं राजसु शोभते ॥' इति जरासन्धेन पृष्टाः कृष्णभीमार्जुनाः, 'स्नातकान्ब्राह्मणान् राजन् विद्ध्यस्मांस्त्वं नराधिप' इति क्षत्रियत्वच्छादनेन ब्राह्मणत्वमेवोक्तवन्तः ॥

इति तद्वचनश्रवणसञ्जातकोपया लङ्काधिदेवतया सवेगं

मुष्टिना ताडितो हनुमान् तं देशं भृशमभिनादयन्वामहस्ताङ्गुलीः संवर्त्य,

> मुष्टिनाभिजघानैनां हनूमान्क्रोधमूर्च्छितः ।
> स्त्री चेति मन्यमानेन नातिक्रोधः स्वयं कृतः ॥

अनेन स्त्रीभिः कृतेऽप्यपराधे तासां प्राणान्तिको दण्डो न कर्तव्य इति सूचितम् । तथा च आदिपर्वणि एकचक्रनगरे ब्राह्मणी— 'अवध्याः स्त्रिय इत्याहुर्धर्मज्ञा धर्मनिश्चये' इति ॥

तत्प्रहारेण विह्वलावयवा तथैव भूमौ निपपात । ततः सा चिराय चेतनामवाप्य सगद्गदपदमिदमवादीत्— पुरा खलु मत्प्रार्थितेन स्वयंभुवा वानरपराक्रमपराजितायां त्वयि लङ्कानिलयानां पिशिताशनानां भयमागतमवगम्यते इत्यभिहिता समयं समनुपालयन्ती भवता विक्रम्य निर्जितास्मि । तदधुना निश्शङ्कं प्रविश्य यथाभिलषितं साधयेति ॥

इति तृतीयः सर्गः ।

---

## अथ चतुर्थः सर्गः ॥

चतुर्थे—

> स निर्जित्य पुरीं श्रेष्ठां लङ्कां तां कामरूपिणीम् ।
> विक्रमेण महातेजा हनूमान्कपिसत्तमः ॥
> अद्वारेण महाबाहुः प्राकारमभिपुप्लुवे ।

नन्वत्र हनुमता कृतः अद्वारप्रवेशोऽसङ्गतः, अद्वारेण

कुद्वारेण वा प्रवेशस्य निषिद्धत्वात् । तथा च मनुः— 'अद्वारेण तु नातीयाद्ग्रामं वा वेश्म वावृतम्' इति ॥

गौतमोऽपि—'कुद्वारप्रवेशनपादपादधावनासन्दीस्थभोजननदीबाहुतरणवृक्षविषमारोहणप्राणव्यायच्छनानि च वर्जयेत् ।' इति ॥

आपस्तम्बोऽपि— 'न कुसृत्या ग्रामं प्रविशेत् यदि प्रविशेन्नमो रुद्राय वास्तोष्पतय इत्येतामृचं जपेदन्यां वा रौद्रीम्' इतीति चेन्न । शत्रुगृहप्रवेशादिव्यतिरिक्तविषयत्वात् । शत्रुगृहे त्वद्वारेणैव प्रवेशः । तथा च स्मृतिः— 'अद्वारेण विशेच्छत्रोः पुरं ग्रामं गृहं तथा' इति ॥

सभापर्वण्यपि जरासन्धं प्रति कृष्णः—

'अद्वारेण रिपोर्गेहं द्वारेण सुहृदो गृहम् । प्रविशन्ति नरा वीरा नीतिशास्त्रविशारदाः ॥' इति ॥

**प्रविश्य नगरीं लङ्कां कपिराजहितङ्करः ।**
**चक्रेऽथ सव्यं पादं च शत्रूणां स तु मूर्धनि ॥**

अनेन शत्रुपुर्यादौ प्रवेशे सव्यचरणविन्यासपूर्वकमेव प्रवेष्टव्यमिति सूचितम् । तथा च स्मृतिः— 'प्रयाणकाले च गृहप्रवेशे विवाहकालेऽपि च दक्षिणाङ्घ्रिम् । कुर्यात्पुरः शत्रुपुरप्रवेशे वामं निदध्याच्चरणं नृपाल ॥' इति ॥

ततः स्फुरदुडुबिम्बाडम्बरविडम्बिमुक्तामणिमयमालिकासमलङ्कृतं महापथमास्थाय मङ्गलविधिपटुपटहतूर्यनिनादपुरःसरेण

सरभसमितस्ततः प्रधावितकौणपगणचरणसंक्षोभचलितेन हसित-संभ्रमघोषेण च विनादितां वज्राङ्कुशनिकाशरत्नचयखचितविवि-धसालभञ्जिकोपेतैर्गृहसङ्घैरतिशोभमानां सन्तप्तकनकमयभित्तिख-चितमाणिक्यकान्तिभिः प्रज्वलितामिव लक्ष्यमाणां तां सहर्षमव-लोक्य सीतावलोकनाय प्रतिभवनमटन्मर्कटवद्धर्हिमकर[बि]म्बा-वलम्बिसौधोपान्तविहारिणीनां [स्त्रीणां]अतिमधुरगी[त]रवं त्रिदिध-सोपानसमारोहणसमयसञ्जातमणिनूपुरकिङ्किणीरवोन्मिश्रं सामोद-मितस्ततः संचरद्रामाजनमेखलाकलापकिङ्किणीघणात्कारमुखरं प्रम-दाजनसम्भाषणं चाकर्णयन्कुत्रचिद्विचित्रमन्त्रजपपरान्स्वाध्याय-निरतान्यातुधानानप्यवलोकयन्

राजमार्गं समावृत्य स्थितं रक्षोबलं महत् ।
ददर्श मध्यमे गुल्मे रावणस्य चरान्बहून् ॥

अन्यत्रापि रावणेन भवनसंरक्षणाय व्यवस्थापितांश्चारान्दी-क्षितमुण्डिजटिलप्रायान्परशुमुद्गरकूटपाशपरिघाद्यायुधधरानेकानेक-कर्णनेत्रपादतयातिविरूपान्सुरूपानपि मध्यमे गुल्मे समवस्थितान-नेकसहस्रसंख्यानवलोकयन्

सहेमजाम्बूनदचक्रवालं महार्हमुक्तामणिभूषितान्तम् ।
परार्ध्यकालागरुचन्दनाक्तं स रावणान्तःपुरमाविवेश ॥

अनेन पुरगृहरक्षणाय राज्ञा गुल्माः स्थापनीया इति सू-चितम् । तथा च राजधर्मे— 'न्यसेत गुल्मान् दुर्गेषु सन्धौ च कुरुनन्दन । नगरोपवने चैव पुरोद्याने तथैव च ॥ संस्थानेषु

च सर्वेषु पुरेषु नगरस्य च । मध्ये च नरशार्दूल तथा राजनिवेशने ॥' इति ॥

इति चतुर्थः सर्गः ।

---

## अथ पञ्चमः सर्गः ॥

पञ्चमे—

ततः स मध्यं गतमंशुमन्तं
ज्योत्स्नावितानं महदुद्वमन्तम् ।
ददर्श धीमान् दिवि भानुमन्तं
गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥

लोकस्य पापानि विनाशयन्तं
महोदधिं चापि समेधयन्तम् ।
भूतानि सर्वाणि विराजयन्तं
ददर्श शीतांशुमथाभियान्तम् ॥

या भाति लक्ष्मीर्भुवि मन्दरस्था
तथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था
रराज सा चारुनिशाकरस्था ॥

हंसो यथा राजतपञ्जरस्थः
सिंहो यथा मन्दरकन्दरस्थः ।
वीरो यथा गर्वितकुञ्जरस्थ-
श्चन्द्रोऽपि बभ्राज तथाम्बरस्थः ।

स्थितः ककुद्मानिव तीक्ष्णशृङ्गो
महाचलः श्वेत इवोच्चशृङ्गः ।
हस्तीव जाम्बूनदबद्धशृङ्गो
रराज चन्द्रः परिपूर्णशृङ्गः ॥

विनष्टशीताम्बुतुषारपङ्को
महाग्रहग्राहविनष्टपङ्कः ।
प्रकाशलक्ष्म्याश्रयनिर्मलाङ्को
रराज चन्द्रो भगवान् शशाङ्कः ॥

शिलातलं प्राप्य यथा मृगेन्द्रो
महारणं प्राप्य यथा गजेन्द्रः ।
राज्यं समासाद्य यथा नरेन्द्र-
स्तथा प्रकाशो विरराज चन्द्रः ॥

प्रकाशचन्द्रोदयनष्टदोषः
प्रवृद्धरक्षःपिशिताशदोषः ।
रामाभिरामेरितचित्तदोषः
स्वर्गप्रकाशो भगवान्प्रदोषः ॥

तन्त्रीस्वनाः कर्णसुखाः प्रवृत्ताः
स्वपन्ति नार्यः पतिभिः सुवृत्ताः ।
नक्तंचराश्चापि तथा प्रवृत्ता
विहर्तुमत्यद्भुतरौद्रवृत्ताः ॥

मत्तप्रमत्तानि समाकुलानि
रथाश्वभद्रासनसंकुलानि ।

वीरश्रिया चापि समाकुलानि
   ददर्श धीमान्स कपिः कुलानि ॥

परस्परं चाधिकमाक्षिपन्ति
   भुजांश्च पीनानधिनिक्षिपन्ति ।
मत्तप्रलापानधिविक्षिपन्ति
   मत्तानि चान्योन्यमधिक्षिपन्ति ॥

रक्षांसि वक्षांसि च विक्षिपन्ति
   गात्राणि कान्तासु च विक्षिपन्ति ।
रूपाणि चित्राणि च विक्षिपन्ति
   दृढानि चापानि च विक्षिपन्ति ॥

ददर्श कान्ताश्च समालपन्त्य-
   स्तथापरास्तत्र पुनः स्वपन्त्यः ।
सुरूपवक्त्राश्च तथा हसन्त्यः
   क्रुद्धाः पराश्चापि विनिःश्वसन्त्यः ॥

महागजैश्चापि तथा नदद्भिः
   सुपूजितैश्चापि तथा सुसद्भिः ।
रराज वीरैश्च विनिःश्वसद्भिः
   ह्रदो भुजङ्गैरिव निःश्वसद्भिः ॥

बुद्धिप्रधानान् रुचिराभिधानान्
   संश्रद्दधानान् जगतः प्रधानान् ।
नानाविधानान् रुचिराभिधानान्
   ददर्श तस्यां पुरि यातुधानान् ॥

ननन्द दृष्ट्वा च स तान्सुरूपा-
नानागुणानात्मगुणानुरूपान् ।
विद्योतमानान् स तदानुरूपान्
ददर्श कांश्चिच्च पुनर्विरूपान् ॥

ततो वरार्हाः सुविशुद्धभावा-
स्तेषां स्त्रियस्तत्र महानुभावाः ।
प्रियेषु पानेषु च सक्तभावा
ददर्श तारा इव सुप्रभावाः ॥

श्रिया ज्वलन्तीस्त्रपयोपगूढा
निशीथकाले रमणोपगूढाः ।
ददर्श काश्चित्प्रमदोपगूढा
यथा विहङ्गाः कुसुमोपगूढाः ॥

अन्याः पुनर्हर्म्यतलोपविष्टा-
स्तत्र प्रियाङ्केषु सुखोपविष्टाः ।
भर्तुः प्रिया धर्मपरा निविष्टा
ददर्श धीमान्मदनाभिविष्टाः ॥

अप्रावृताः काञ्चनराजिवर्णाः
काश्चित्परार्घ्यास्तपनीयवर्णाः ।
पुनश्च काश्चिच्छशलक्ष्मवर्णाः
कान्तप्रहीणा रुचिराङ्गवर्णाः ॥

ततः प्रियान्प्राप्य मनोऽभिरामा-
न्सुप्रीतियुक्ताः प्रसमीक्ष्य रामाः ।

गृहेषु हृष्टाः परमाभिरामा
हरिप्रवीरः स ददर्श रामाः ॥

चन्द्रप्रकाशाश्च हि वक्त्रमाला
वक्राक्षिपक्ष्माश्च सुनेत्रमालाः ।
विभूषणानां च ददर्श मालाः
शतह्रदानामिव चारुमालाः ॥

न त्वेव सीतां परमाभिजातां
पथि स्थितां राजकुले प्रजाताम् ।
लतां प्रफुल्लामिव साधुजातां
ददर्श तन्वीं मनसाभिजाताम् ॥

सनातने वर्त्मनि सन्निविष्टां
रामेक्षणां तां [illegible]नाभिविद्धाम् ।
भर्तुर्मनः श्रीमदनुप्रविष्टां
स्त्रीभ्यो वराभ्यश्च सदा विशिष्टाम् ॥

उष्णार्दितां सानुसृतास्रकण्ठीं
पुरा वरार्होत्तमनिष्ककण्ठीम् ।
सुजातपक्ष्मामभिरक्तकण्ठीं
वने प्रनृत्तामिव नीलकण्ठीम् ॥

अव्यक्तरेखामिव चन्द्ररेखां
पांसुप्रदिग्धामिव हेमरेखाम् ।
क्षतप्ररूढामिव बाणरेखां
वायुप्रभिन्नामिव मेघरेखाम् ॥

सीतामपश्यन्मनुजेश्वरस्य
रामस्य पत्नीं वदतां वरस्य ।
बभूव दुःखाभिहतश्चिरस्य
प्लवङ्गमो मन्द इवाचिरस्य ॥

इति पञ्चमः सर्गः ।

---

## अथ षष्ठः सर्गः ॥

षष्ठे—अथ प्रतप्तचामीकरभास्वरेण रजनीचरसंरक्षितेन प्राकारमण्डलेन विकचकमलकुमुदकुवलयामोदवासितविमलसलिलाशयपरिखावलयेन विचित्रतोरणभूषिताभिः कक्ष्याभिरुभयपार्श्वावस्थिताधोरणाधिष्ठितदुर्मदवरवारणैरनेकशूरसमारूढतुरगशताक्रान्तप्रदेशैर्विद्रुतचामीकरकलितमणिगणभूषिताविचित्ररथसहस्रैः सर्वतः समावृतम्, सेवासमायातविनीतान्तपालवलयितम्, त्रिभुवनस्त्रैणमेकीकृत्यावलोकितुं जनितमतिना ब्रह्मणा संमि[मे]लितेनेव दिव्याङ्गनासमूहेन परिपूर्णम्, वीणावेणुमृदङ्गपणवादिविविधवाद्यसङ्घर्षसमुद्भूतेन तारतरकाहलीकलकलकलितेन ससम्भ्रममितस्ततः प्रधावितनक्तञ्चरगणसंचारणसंमर्दितसमुदितेन मदमुदितप्रमदाशतसङ्गीतानुविधायिमेखलाकलापमञ्जुलशिञ्जितेन सर्वतः सन्नादिततयापरमिव समुद्रम्,

भेरीमृदङ्गाभिरुतं शङ्खघोषनिनादितम् ।

नित्यार्चितं पर्वहुतं पूजितं राक्षसैः सदा ॥
महारत्नसमाकीर्णं ददर्श स महाकपिः ।

अत्र रावणगृहे पर्वणि होमः प्रतिपादितः । स च [न] दर्शपूर्णमासयागात्मकः, तस्य होमत्वाभावात् । नापि नैमित्तिकं होमान्तरं सम्भवति, तादृशस्य प्रतिपर्वनियततया विहितस्यादर्शनात् । अतोऽयमग्निहोत्रहोम एव भवति । न च तत्र रावणस्याधिकारः संभवति, सकलवर्णबहिर्भूतस्य अनुलोमबहिर्भूतस्य च होमाधिकारासंभवात् । तथा हि—

तत्र ब्राह्मणादिवर्णास्तावन्मनुना दर्शिताः— 'सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु । आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते ॥' इति । देवलोऽपि— 'ब्राह्मण्यां ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत् । एवं क्षत्रियविट्शूद्रा ज्ञेयाः स्वेभ्यः स्वयोनिजाः ॥' इति । मनुरपि— 'स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान्सुतान् । सदृशानेव तानाहुर्मातृदोषैर्विगर्हितान् ॥' इति । अस्य चायमर्थः— क्षत्रियायां ब्राह्मणादुत्पन्नो ब्राह्मणसदृशः । न तु मुख्यब्राह्मणः, हीनजातिमातृसम्बन्धादिति ॥

ते चानुलोमा मूर्धावसिक्तादिभेदेन षड्विधाः । तथा च याज्ञवल्क्यः—'विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् । अम्बष्ठः शूद्र्यां निषादः जातः पारशवोऽपि वा ॥ वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ । वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ॥' इति । विन्नासु ऊढासु । गौतमोऽपि— 'अनुलोमा अनन्तरैकान्तरद्व्यन्तरासु जाताः सव-

र्णाम्बष्ठोग्रनिषाददौष्यन्तपारशवाः' इति । अत्र मिताक्षरा— 'ब्राह्मणस्यानन्तरा क्षत्रिया । तस्यां ब्राह्मणाज्जातः सवर्णः मूर्धावसिक्तापरनामा । क्षत्रियस्यानन्तरा वैश्या । तस्यां तस्मादुत्पन्नोऽम्बष्ठः । वैश्यस्यानन्तरा शूद्रा । तस्यां तस्मादुत्पन्नः उग्रः । ब्राह्मणस्यैकान्तरा वैश्या । तस्यां तस्मादुत्पन्नो निषादः । क्षत्रियस्यैकान्तरा शूद्रा । तस्यां तस्मादुत्पन्नो दौष्यन्तः । ब्राह्मणस्य व्यन्तरा शूद्रा । तस्यां तस्मादुत्पन्नः पारशवः । अयमेव याज्ञवल्क्येन निषाद इत्यभिहितः ॥

प्रतिलोमानाह मनुः— 'क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः । वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥ शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम् । वैश्यराजन्यविप्रासु जायन्ते वर्णसंकराः ॥' इति । गौतमोऽपि— 'प्रतिलोमाः सूतमागधायोगवक्षत्तृवैदेहकचण्डालाः' इति । अत्र मिताक्षरा— 'अनन्तरैकान्तरव्यन्तरासु जाता इत्यनुवर्तते । क्षत्रियस्यानन्तरा ब्राह्मणी । तस्यां तस्माज्जातः सूतः । वैश्यस्यानन्तरा क्षत्रिया । तस्यां तस्मादुत्पन्नो मागधः । शूद्रस्यानन्तरा वैश्या । तस्यां तस्माज्जातः आयोगवः । वैश्यस्य एकान्तरा ब्राह्मणी । तस्यां तस्माज्जातः क्षत्ता । शूद्रस्यैकान्तरा क्षत्रिया । तस्यां तस्माज्जातः वैदेहकः । शूद्रस्य व्यन्तरा ब्राह्मणी । तस्यां तस्माज्जातश्चण्डालः' इति । उक्तानां वर्णानां तारतम्यमाह देवलः— 'तेषां सवर्णजाः श्रेष्ठास्तेभ्योऽन्वगनुलोमजाः । अन्तराला बहिर्वर्णाः पतिताः प्रतिलोमजाः ॥' इति ॥

अयमर्थः— विजातीयान्मिथुनादुत्पन्ना अन्तरालाः । ते च द्विविधाः— अनुलोमजाः, प्रतिलोमजाश्च । तत्र अनुलो-

मजाः सवर्णजेभ्यो हीना अपि वर्णाश्रमधर्मा(न)धिकारिणः मातृजातिधर्म[ध]त्वात् । प्रतिलोमजास्तु वर्णाश्रमधर्माधिकारात्पतिता अधमा इति । गौतमोऽपि—'प्रतिलोमास्तु धर्महीनाः' इति ॥

ननु मूर्धावसिक्तादीनां वर्णबहिर्भूतत्वेन जात्यन्तरत्वमुक्तम्; तदसङ्गतम्, अनुलोमजातानां मातृजातीयत्वात् । तदाह विष्णुः—'समानवर्णासु पुत्राः समानवर्णाः भवन्ति । अनुलोमास्तु मातृवर्णाः । प्रतिलोमास्त्वार्यविगर्हिताः' इति । शङ्खोऽपि—'क्षत्रियायां ब्राह्मणादुत्पन्नः क्षत्रिय एव भवति । क्षत्रियेण वैश्यायामुत्पन्नो वैश्य एव । वैश्येन शूद्रायां शूद्र एव भवति' इति— नै(व)[ष]दोषः । अनयोर्वचनयोर्मातृजात्युचितधर्मप्राप्त्यर्थत्वात् । अन्यथा द्विजोत्कर्षवैयर्थ्यापत्तेः । यथा क्षेत्रापकर्ष उत्कृष्टजातिनिवारकः, एवं बीजोत्कर्षोऽपि निकृष्टजातिं कुतो न निवारयेत् । तथा च अन्तराला बहिर्वर्णा इति जात्यन्तरम् ॥

एतेषां वृत्तिं धर्मांश्चाह मनुः— 'ब्राह्मणा ब्रह्मयोनिस्था ये स्वकर्मण्यवस्थिताः । ते सम्यगुपजीवेयुः षट्कर्माणि यथाक्रमम् ॥' इति । ब्राह्मणाः ब्रह्म बुभूषवः । ब्रह्मयोनिस्थाः ब्राह्मणात् ब्राह्मण्यामुत्पन्नाः । 'अध्यापनमध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः ॥ षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥' इति । क्षत्रियविशोरप्याह— शस्त्रास्त्रभृ-

त्वं क्षत्रस्य वणिक्पशुकृषिर्विशः। आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः ॥' वणिक् वाणिज्यम्। पशुः पशुपाल्यम ॥

त्रयाणां वर्णानां विशिष्टकर्माण्याह स एव— 'वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य तु रक्षणम्। वार्ताकर्म च वैश्यस्य विशिष्टानि स्वकर्मसु ॥' इति। शूद्रस्यापि विशिष्टां वृत्तिमाह स एव— 'स्वर्गार्थमुभयार्थं वा विप्रानाराधयेत्तु सः। जातब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता ॥' इति। जातब्राह्मणशब्दः अस्य ब्राह्मणस्य अयं शुश्रूषक इति शब्दः ॥

एवं शुश्रूषकशूद्रस्त्रिविधः— आगन्तुकः क्रीतो गर्भदासश्चेति। एतेषां त्रयाणां ग्रहस्थितिविशेषेण उत्पत्तिमाह बृहज्जातके— 'एभ्योऽल्पमध्यबहुभिः क्रमशः प्रसूता ज्ञेयाः स्युरभ्युपगमक्रयगर्भदासाः' इति। तत्र अभ्युपगमभृत्यस्य भृतिदानेनैव भरणम्, न तूच्छिष्टदानम्, 'न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम्' इति मनुनैव स्थलान्तरे प्रतिषिद्धत्वात्। क्रीतगर्भदासयोस्तु उच्छिष्टान्नजीर्णवसनादिकमपि देयमित्यभिप्रायेण स्थलान्तरे मनुरेवाह— 'प्रकल्प्या तस्य वै वृत्तिः स्वकुटुम्बाद्यथार्हतः। शक्तिं चावेक्ष्य भक्तिं च भृत्यानां च परिग्रहम् ॥ उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च। पुलकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः ॥' इति। भृत्यानां परिग्रहस्तदीयः संसारः। पुलकाः असारधान्यानि। अत एव 'भोजनं तु न निश्शेषं कुर्यात्प्राज्ञः कथंचन। अन्यत्र दधिसक्त्वाज्यलाजक्षीराद्व मध्वपः ॥' इति पुलस्त्योक्तरीत्यावशेषितान्नस्य भृत्यादिभ्यः प्रदानं प्रतिपत्तिरित्याह वृद्धमनुः— 'पीत्वापोशनमश्नीयात्पात्रदत्तमगर्हितम्। भार्या-

भृतकदासेभ्य उच्छिष्टं शेषयेत्ततः ॥' इति । अनुमतमपीदमुच्छिष्टदानमाहिताग्निना पर्वणि न कर्तव्यमित्याह **बोधायनः**— 'नैतदहः शूद्रायोच्छिष्टं दद्यात् । स्त्रिया एवैतदहरुच्छिष्टं दद्यात्' इति ॥

उक्तवर्णानां वृत्तिर्द्विविधा—स्वकीया परकीया चेति । स्वकीयापि द्विविधा—सगुणा विगुणा चेति । तत्र ब्राह्मणानां सगुणा वृत्तिर्याज्ययाजनाध्याप्याध्यापनप्रतिग्राह्यप्रतिग्रहरूपा । तस्याः सगुणत्वं च प्रशस्तत्वात् । प्रशंसा च **स्मृतिरत्ने**— 'याजनाध्यापने शुद्धे तथा पूतः प्रतिग्रहः । एषा सम्यक् समाख्याता त्रितयं तस्य जीविका ॥' इति । तत्र याज्यानाह **द्राह्यायणः**— 'आर्षेयोऽनूचानः साधुचरणः' इति ऋत्विक्लक्षणमभिधाय 'याज्यश्च प्रथमैस्त्रिभिर्गुणैर्व्याख्यातः' इति । प्रतिग्राह्यं तु **गौतमेनोक्तम्**— 'प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुंजीत प्रतिगृह्णीयाच्च' इति । **व्यासोऽपि**—'द्विजातिभ्यो धनं लिप्सेत्प्रशस्तेभ्यो द्विजोत्तमः' इति । अध्याप्याश्च **छन्दोगब्राह्मणे विद्यावाक्ये**— 'ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियो विद्यया वा विद्यां यः प्राह तानि तीर्थानि षण्मम' इति ॥

विगुणा वृत्तिरयाज्ययाजनानध्याप्याध्यापनाप्रतिग्राह्यप्रतिग्रहरूपा । तत्र अयाज्ययाजनादीनां विगुणत्वं च प्रतिषेधात् । प्रतिषेधश्च **बोधायनसूत्रे** – 'ना[न]नूचानं प्रयाजयेत्' इत्यादि । **सुमन्तुरपि** – 'अभिशस्तपतितपौनर्भवभ्रूणहापुंश्चल्यशुचिशस्त्रकारतैलिकचाक्रिकध्वजिसुवर्णकारलेख्यकभण्डकबाध[ वर्ध ]किश्वगणिकसौनिकव्याधनिषादरजकबुरुडचर्मकरा अभोज्यान्ना अप्रीतग्राह्या

अयाज्याश्च ' इति । इदं चाप्रतिग्राह्यत्वमेधोदकादिव्यतिरिक्तविषयम् । एधोदकादिकं तु सर्वतः प्रतिग्राह्यमेव । तदाह गौतमः— 'एधोदकयवसमूलफलमध्वभयाभ्युद्यतशय्यासनावसथयानपयोदधिधानाशफरीप्रियङ्गुस्रङ्मार्गशाकान्यप्रणोद्यानि सर्वेषाम्' इति । अनध्याप्याश्च छन्दोगब्राह्मणे— '...नर्हते मानिने नैव मादाः ' इति ॥

सगुणालाभे विगुणापि वृत्तिरादर्तव्या । ' पवित्रं दुष्यतीत्येतद्धर्मतो नोपपद्यते ॥ नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात् । दोषो भवति विप्राणां ज्वलनार्कसमा हि ते ॥ जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाशमिव पङ्केन न स दोषेण लिप्यते ॥ अजीगर्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः । न चालिप्यत दोषेण क्षुत्प्रतीकारमाचरन् ॥ श्वमांसमिच्छन्नार्तोऽत्तुं धर्माधर्मविचक्षणः । प्राणानां रक्षणार्थाय वामदेवो न लिप्तवान् ॥ भारद्वाजः क्षुधार्तस्तु सपुत्रो निर्जने वने । बह्वीर्गाः प्रतिजग्राह ब्रह्मतीक्ष्णो महातपाः ॥ क्षुधार्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम् । चण्डालहस्तादादाय धर्माधर्मविचक्षणः ॥ ' इति । गौतमोऽपि— 'पितृदेवगुरुभृत्यभरणे चान्यत्' इति । अत्र मिताक्षरा— 'पितृभरणं अविच्छेदेन ...नम । देवभरणमग्निहोत्रादि । गुरवः पित्रादयः । भृत्याः पुत्रादयः । तेषां भरणं भक्तादिना रक्षणम् । एतेषु निमित्तेषु अन्यदपि अन्नादिकं सर्वतः प्रतिग्राह्यम्' इति ॥

मनुस्तु— ' गुरून् भृत्यांश्चोद्धरिष्यन्नर्चिष्यन्देवतातिथीन् । सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः ॥ ' इति ।

शूद्रप्रतिग्रहमन्तरेण जीवनं न लभ्यते चेत्, शूद्रादपि प्रतिग्राह्यम्। तदप्याह **गौतमः**—'वृत्तिलोपान्तरेण शूद्रात्' इति। **भगवान्बादरायणोऽपि**— 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' इति ॥

स्ववृत्तिभूतानामपि याजनादीनां पूर्वं पूर्वं निन्दितम्। तदाह **गौतमः**— 'याजनाध्यापनप्रतिग्रहाः सर्वेषाम्। पूर्वः पूर्वो गुरुः' इति। **मनुस्तु**— 'प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि। प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः ॥' इति। उक्तस्ववृत्त्यलाभे एव परवृत्त्यादरः। तथा च **गौतमः**— 'तदलाभे क्षत्रवृत्तिः, तदलाभे वैश्यवृत्तिः' इति। **मनुरपि**— 'अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा। जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः ॥ उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्। कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम् ॥' इति ॥

वैश्यवृत्त्या जीवन्ब्राह्मण उद्धृतोद्धारं विक्रीणीयात्। तदाह **मनुः**—'विट्पण्यमुद्धृतोद्धारं विक्रेयं वित्तवर्धनम् ॥ सर्वान् रसानपोहेत कृतान्नं च तिलैस्सह। अश्मनो लवणं चैव पशवो ये च मानुषाः ॥ सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च। अपि चेत्स्युररक्तानि फलमूले तथौषधीः ॥ अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः। क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान् ॥ आरण्यांश्च पशून्सर्वान् दंष्ट्रिणश्च वयांसि च। मद्यं नीलिं च लाक्षां च सर्वांश्चैकशफान्पशून् ॥ (त्रपुसीसे तथा लोहं तैजसानि च सर्वशः। पाशां[वालां]श्चर्म तथास्थीनि वा स्नायूनि रोचनाम् ॥)' इति। **आपस्तम्बोऽपि**— 'अविहिता ब्राह्मणस्य वणिज्या। आपदि व्यवहरेत पण्यानामपण्यानि व्युदस्यन्।

मनुष्यान् रसान् रागान् गन्धान् अन्नं चर्म गवां वशां श्लेष्मोदके तो[क्म]क्नकिण्वे पिप्पलीमरीचे धान्यं मांसमायुधं सुकृताशां च तिलतण्डुलांस्त्वेव धान्यस्य विशेषेण न विक्रीणीयात्' इति । गौतमोऽपि-- 'तस्यापण्यं गन्धरसकृतान्नतिलशाणक्षौमाजिनानि रक्तनिर्णिक्ते वाससी क्षीरं च सविकारम् मूलफलपुष्पौषधमधुमांसतृणोदकापथ्यानि पशवश्च हिंसासंयोगे । पुरुषवशाकुमारीवेहतश्च नित्यम् । भूमिव्रीहियवाजाव्यश्वधेन्वनडुहश्चैके ।' इति ॥

अपण्यानामेतेषां च विनिमयेन व्यवहारः । तथा च गौतमः-- 'विनिमयस्तु रसानां रसैः पशूनां च[न]लवणकृतान्नयोस्तिलानां च समेना(स)मेन तु पक्वस्य' इति । विनिमयेऽपि द्रव्यनियममाहापस्तम्बः-- 'अन्नेन चान्नस्य मनुष्याणां च मनुष्यैः रसानां च रसैः गन्धानां च गन्धैः विद्यया च विद्यानाम् । अक्रीतपण्यैर्व्यवहरेत मुञ्जबल्वजैर्मूलफलैस्तृणकाष्ठैरविकृतैः' इति । अविक्रेयद्रव्यविशेषाणां विक्रेयकालविशेषेण पातित्यमाह मनुः-- 'सद्यः पतति मांसेन लाक्षया लवणेन च । त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयी ॥' इति । इतरेषामविक्रेयाणां विक्रयी सप्तरात्रेण वैश्यो भवति । तथा च मनुः-- 'इतरेषां तु पण्यानां विक्रयादिह कामतः । ब्राह्मणः सप्तरात्रेण वैश्यो भवति जातितः'॥ इति ॥ कृष्युत्पन्नानां तिलानां विक्रेयत्वमनुजानाति मनुः-- 'काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः । विक्रीणीत तिलान् शुद्धान् धर्मार्थमचिरस्थितान् ॥ भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः । कृमीभूतः श्वविष्ठायां पितृभिः सह

मज्जति ॥' इति । धर्मोर्थं यज्ञार्थम् । शुद्धान् अन्यद्रव्यामिश्रितान् । अचिरस्थितान् लाभाद्यर्थमचिरस्थापितान् ॥

अत्यन्तापदि च सर्वप्रकारेण आजीवनमाह **गौतमः**— '(सम्प्रत्यर्थे) सर्वथा तु वृत्तिरशक्तौ अशौद्रेण । तदप्येके प्राणसंशये तद्वर्णसंकराभक्ष्यनियमस्तु' इति । क्षत्रियस्त्वापद्गतः सर्वविक्रयेणापि वैश्यवृत्तिमवलम्ब्य जीवेत्, न तु ब्राह्मणवृत्तिम् । 'जीवेदेतेन राजन्यः सर्वेणाप्यत्ययं गतः । न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हिचित् ॥' इति । सर्वेण निषिद्धविक्रयेणापि । वैश्योऽपि आपदि शूद्रवृत्त्या जीवेत् । तथा च मनुः— 'वैश्योऽजीवन्स्वधर्मेण शूद्रवृत्त्यापि वर्तयेत् । अनाचरन्नकार्याणि निवर्तेत च शक्तिमान् ॥' इति । ब्राह्मणशुश्रूषणेन वृत्त्यलाभे **मनुः**— 'शूद्रस्तु वृत्तिमाकाङ्क्षन्क्षत्रमाराधयेदपि । धनिनं वाप्युपाराध्य वैश्यं शूद्रो जिजीविषेत् ॥' इति । त्रैवर्णिकशुश्रूषणालाभे मनुः— 'अशक्नुवंस्तु शुश्रूषां शूद्रः कर्तुं द्विजन्मनाम् । पुत्रदारात्ययं प्राप्तो जीवेत्कारुककर्मभिः ॥' इति । कारुककर्माण्यपि द्विजात्यपेक्षितान्येव कर्तव्यानि । तदपि **मनुराह**— 'यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः । तानि कारुककर्माणि शिल्पानि विविधानि च ॥' इति । 'शूद्रस्य द्विजशुश्रूषा तथाजीवन्वणिग्भवेत् । शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन् ॥' इति च । शूद्रः शक्तोऽपि बहुद्रव्यं नार्जयेत् । तथा च **मनुः**— 'शक्तेनापि हि शूद्रेण न कार्यो धनसंचयः । शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते ॥' इति । अनसूयया स्ववृत्तिस्थस्य उत्तमलोकप्राप्तिमाह मनुः— 'यथा यथा हि सद्वृत्तिमातिष्ठत्यनसूयकः । तथा तथेमं चामुं च लोकं प्राप्नोत्यनिन्दितः ॥' इति ॥

अनुलोमानां च वृत्तिः। तत्र मूर्धावसिक्तस्य क्षत्रवृत्तिरेव। तथा च माधवीये— समानवर्णासु पुत्राः समानवर्णा भवन्ति। 'अनुलोमास्तु मातृसवर्णतः' इत्यत्र मातृसवर्णग्रहणं मातृधर्मप्राप्त्यर्थमिति व्याख्यातत्वेन मूर्धावसिक्तस्य क्षत्रियायामुत्पन्नस्य क्षत्रधर्मप्राप्तेः। अन्यत्रापि— 'वैश्यतः शूद्रकन्यायामुग्रको नाम जायते। मेषादिविक्रयस्तस्य वृत्तिः कम्बलविक्रयः॥ अन्तःपुराणि वा रक्षेन्नृपाणामाज्ञया सदा॥ चौर्येण कटकारः स्यात्कटविक्रयकर्मकृत्। क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान्॥ क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते। ब्राह्मणाद्वैश्यकन्यायां निषादो नाम जायते॥ मन्त्रौषधक्रियां कुर्यान्नित्यं शाल्यन्नकर्म च। चौर्येण कटकारः स्यादूर्ध्वं नापित एव सः॥ नाभ्यूर्ध्ववपनं वृत्तिः कुम्भानां करणं मृदा। ब्राह्मणाच्छूद्रकन्यायां जातः पारशवस्तथा। भद्रकाल्यर्चनं तस्य नृत्तं वाद्यं च वृत्तये॥ अस्यां वै चोरसङ्गत्या निषादो जायते सुतः॥ जीवेद्दम्भेन गानेन मृगाणां हिंसयापि वा॥ वनौकसां सङ्ग्रहणं मत्स्यानां ग्रहणं तथा। [क्षत्रियाच्छूद्रकन्यायां जातो दौष्यन्त उच्यते।] खड्गादिशस्त्रकरणं दौष्यन्तस्य तदुच्यते। अस्यामनेन चौर्येण शूलिको नाम जायते॥ नित्यं शूलधरश्चैव राज्ञां दण्ड्यांस्तु दण्डयेत्। माहिष्यात्करणायां तु रथकारस्तु जायते। अथ पर्यायनामानि तक्षा शिल्पी च वर्धकी॥ लोहकारः कर्मकारः विद्यते यजनं तथा। उपवीतं विधानेन कुर्यादाधानमप्यसौ। वास्तुशास्त्रमधीयानः प्रासादप्रतिमादिकाम्॥ यज्ञपात्रं द्विजातीनां हैमान्याभरणानि च। कृष्युपस्करणं लेख्यं कर्माण्यश्वादितानि च॥'

इति । शङ्खोऽपि— 'रथकारस्त[स्ये]न्याधानोपनयनसंस्काराः क्रियाश्च प्रतिसारथसूत्रवा्नुर्वेदाध्ययनवृत्तिता च' इति ॥

प्रतिलोमानां च वृत्तिमाह मनुः— 'क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः । प्रतिलोमेषु च श्रेष्ठो विष्णोरभ्यर्चनं तथा ॥ धर्माद्बोधनं तस्य सारथ्यं कटविक्रयः । नित्यं द्विजवदाचार इति सूतस्य वृत्तयः ॥ नृपायां वैश्यतो जातः कथितो मागधश्च सः । नृपप्रशंसनं कुर्यात्तन्त्रीवीणाश्च वादयेत् ॥ अस्यामनेन चौर्येण पुलिन्दो नाम जायते । हिंसया दुष्टसत्वानामरण्ये वर्तयेदयम् ॥ तैलपिण्याकलवणविक्रयेणापि वर्तयेत् । अभोज्यान्नस्त्वयं शूद्रैरस्पृश्योऽपि भवत्युत ॥ ग्रामादिष्वपराह्णेषु प्रविशन्दण्डमर्हति । उग्रात्तु क्षत्रकन्यायां श्वपाक इति कीर्त्यते ॥ चण्डालश्वपचानां तु बहिर्ग्रामात्प्रतिश्रयः । चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च ॥ वसेयुरेते विज्ञाता वार्तया च स्वकर्मभिः । वासांसि मृतचेलानि भिन्नभाण्डे च भोजनम् ॥ कार्ष्णायसस्त्वलङ्कारः परिव्रज्या च नित्यशः । न तैः समयमन्विच्छेत्पुरुषो धर्ममाचरन् ॥

उक्तानां सर्वेषामापद्यपि उत्कृष्टवृत्तिर्नाश्रयणीया । तथा च मनुः— 'न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हिचित् । यो मोहादधमो जात्या जीवेदुत्कृष्टकर्मभिः ॥ तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ।' इति ॥

उक्तवृत्तिषु परवृत्तिः सगुणापि परित्याज्या । विगुणापि स्ववृत्तिरेव चादर्तव्या । तथा च 'वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः । परधर्मेण जीवन्हि सद्यः पतति जातितः ॥

इति । **गीतायामपि**— 'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्' इति ॥

इत्थं परवृत्त्या जीवन्नपि स्ववृत्तिलाभानन्तरं परवृत्तिं परित्यज्य प्रायश्चित्तेन संशोध्यात्मानं स्ववृत्त्यैव जीवेत् । तथा च **याज्ञवल्क्यः**— 'क्षात्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः । निस्तीर्य तामथात्मानं पावयित्वा न्यसेत्पथि ॥' इति । आपन्निस्तरणानन्तरमात्मानं संशोध्य स्वमार्गे स्थापयेदित्यर्थः । एवमापद्वृत्त्या जीवतां स्ववृत्तिलाभे सति तत्परित्यजेत् । तथा **चापस्तम्बः**—'नात्यन्तमन्ववस्येद्वृत्तिं प्राप्य विरमेत्' इति ॥

उक्तानामनुलोमानां मूर्धावसिक्तादीनां पुनर्ब्राह्मण्यादिप्राप्तिः सप्तमे षष्ठे पञ्चमे वा । तदाह **याज्ञवल्क्यः**— 'जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा । व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥' इति । मूर्धावसिक्तादीनां ब्राह्मणत्वादिजातिप्राप्तिरुत्कर्षः । अपकर्षः शूद्रत्वादिजातिप्राप्तिः । युगे जन्मनि सप्तमे पञ्चमेऽपि वा । अपिशब्दात्तु षष्ठे । व्यवस्थितश्चायं विकल्पः । व्यवस्था च ब्राह्मणेन शूद्रायामुत्पादिता निषादी । सा ब्राह्मणेन ऊढा दुहितरं काञ्चिज्जनयति । सा ब्राह्मणेन, साऽन्येन ब्राह्मणेन इति प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति । ब्राह्मणेन वैश्यायामुत्पादिताम्बष्ठा । सा ह्यनेन प्रकारेण पञ्चमी षष्ठं ब्राह्मणं जनयति । ब्राह्मणेन क्षत्रियायामुत्पादिता मूर्धावसिक्ता । साप्यनेन प्रकारेण चतुर्थी पञ्चमं ब्राह्मणं जनयति । उग्रा तु क्षत्रियोढा माहिष्या च यथाक्रमं षष्ठं पञ्चमं च क्षत्रियं जनयति । तथा करणी वैश्योढा पञ्चमं वैश्यं जनयति ।

जीवनार्थं नां कर्मणां व्यत्यये विपर्यासे । यथा ब्राह्मणो मुख्य-वृत्त्याजीवन्क्षात्रेण कर्मणा जीवेदित्यनुकल्पः । तेनाप्यजीवन्वैश्य-वृत्त्या । तथाप्यजीवन् शूद्रवृत्त्या । क्षत्रियोऽपि स्वकर्मणा जीवनार्थे-नाजीवन्वैश्यवृत्त्या । तथाप्यजीवन् शूद्रवृत्त्या । वैश्योऽपि स्ववृत्त्या अजीवन् शूद्रवृत्त्येति कर्मणां व्यत्ययः । तस्मिन् व्यत्यये सति यथा-पद्विमोक्षेऽपि तां वृत्तिं न परित्यजति, तदा सप्तमे षष्ठे वा पञ्चमे वा जन्मनि साम्यम् । ऋम हीनवर्णस्य कर्मणा जीवति, तत्समा-नजातिर्भवति तद्यथा— ब्राह्मणः शूद्रवृत्त्या जीवन् सप्तमे शूद्रं जन-यति । वैश्यवृत्त्या जीवन् षष्ठे वैश्यम् । क्षत्रियवृत्त्या जीवन्पञ्चमे क्षत्रियम् । क्षत्रियोऽपि शूद्रवृत्त्या षष्ठे शूद्रम् । वैश्यवृत्त्या जीव-न्पञ्चमे वैश्यम् । वैश्योऽपि शूद्रवृत्त्या जीवन् तामपरित्य-जन्पुत्रपरम्परया पञ्चमे जन्मनि शूद्रं जनयति इति । पूर्ववच्चा-धरोत्तरमिति । अस्यार्थः— अधरे च उत्तरे च अधरोत्तरम् । यथा मूर्धावसिक्तायां क्षत्रियवैश्यशूद्रैरुत्पादितास्तथा अम्बष्ठायां वैश्यशू-द्राभ्यामुत्पादिताः, निषाद्यां शूद्रेण उत्पादिता अधरे प्रतिलोमाः । तथा मूर्धावसिक्ताम्बष्ठानिषादीषु ब्राह्मणेनोत्पादिताः, माहिष्यो-ग्रयोर्ब्राह्मणेन क्षत्रियेण चोत्पादिताः, करण्यां ब्राह्मणेन क्षत्रियेण वैश्येन चोत्पादिताः उत्तरे अनुलोमाः । एवमन्यत्रापि ऊह्यम् । **गौतमोऽपि**— 'वर्णान्तरगमनमुत्कर्षापकर्षाभ्यां सप्तमेन' इति । अस्यार्थः— तेषामेव सवर्णादीनामनुलोमादीनां उत्कर्षापकर्षाभ्यां उत्कर्षेणापकर्षेण च वर्णान्तरगमनं वर्णान्तरप्राप्तिर्भवति । पितुरु-त्कृष्टो वर्णो मातुरपकृष्टः, स्वयं मध्ये जात्यन्तरं पितुरुत्कृष्टवर्गं मातुरपकृष्टवर्णं गच्छति तज्जातीयो भवति, कथितेन परिवर्त-

नेन सप्तमेन । यदि सप्तपरिवर्तनानि उत्कर्षेणैव भवन्ति, ततः पित्रा सजातिर्भवति । अथापकर्षेण ततो मात्रा । ब्राह्मणेनोढायां क्षत्रियायामुत्पादिता सवर्णा स्त्री ब्राह्मणेनोढा, तस्या अपि दुहितेत्येवमा [सप्तमात्] सप्तमी तु ब्राह्मणेनोढा यदपत्यं सूते, तद्ब्राह्मणसजातीयमेव भवति । एवं ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रियामूढ्वा पुत्रमुत्पादयति, सोऽपि क्षत्रियामेवेत्या सप्तमात् । सप्तमस्तु क्षत्रियायां यदपत्यमुत्पादयति, तत् क्षत्रियजातीयमेव भवति । एवं क्षत्रियस्य वैश्यायां, वैश्यस्य च शूद्रायामिति द्रष्टव्यम् । 'पञ्चमेनाचार्याः ।' पञ्चमेन च परिवर्तनेन वर्णान्तरगमनं भवतीत्याचार्याः मन्यन्ते । वृत्तस्वाध्यायापेक्षित[क्ष]मिदं सूत्रम् । 'सृष्ट्यन्तरजानां च'। द्वयोः सृष्ट्यन्तरे जाताः सृष्ट्यन्तरजाः सवर्णादयोऽनुलोमाः । तेषां चोत्कर्षापकर्षाभ्यां वर्णान्तरगमनं भवति सप्तमेन पञ्चमेन वा परिवर्तनेन । सवर्णेनोढायां अम्बष्ठ्यां उत्पादिता दुहिता पुनः सवर्णेनोदूह्यते । तस्या अपीत्येवमा सप्तम्याः । सप्तमी तु सवर्णोढा यदपत्यमुत्पादयति तत्सवर्ण एव भवति । एवं अम्बष्ठोग्रयोरपि द्रष्टव्यमिति ॥

उक्तप्रकारेण असवर्णाविवाहादिकं कलिनिषिद्धम् । तथा च स्मृत्यन्तरे— 'कन्यानामसवर्णानां विवाहश्च द्विजन्मनः । द्विजस्याब्धौ तु निर्याणं शोधितस्यापि संग्रहः ॥ सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम् । महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे ॥ सौत्रामण्यामपि सुराग्रहणस्य च सङ्ग्रहः । अग्निहोत्रहवण्याश्च लेहलीढापरिग्रहः ॥ वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः । वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा ॥ प्रायश्चित्तविधानं च

विप्राणां मरणान्तिकम् । संसर्गदोषस्तेनान्यमहापातकनिष्कृतिः ॥ वरातिथिपितृभ्यश्च पशूपाकरणक्रिया । दत्तौरसेतराणां तु पुत्रत्वेन परिग्रहः ॥ सवर्णानां तथा दुष्टैः संसर्गः शोधितैरपि । अयोनौ सङ्ग्रहे वृत्ते परित्यागो गुरोः स्त्रियाः ॥ अस्थिसंचयनादूर्ध्वमङ्गस्पर्शनमेव च । शामित्रं चैव विप्राणां सोमविक्रयणं तथा ॥ शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम् । भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः ॥ शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिशीलता । आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तानिकता तथा ॥ प्रजार्थं तु द्विजाग्र्याणां प्रदारपरिग्रहः । ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया ॥ बलात्कारादिदुष्टस्त्रीसङ्ग्रहो विधिचोदितः । यतेस्तु सर्ववर्णेभ्यो भैक्षचर्या विधानतः । नवोदकदशाहं च दक्षिणा गुरुचोदिता ॥ ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च । भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा ॥ गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया । पितापुत्रविरोधेषु साक्षिणां दण्डकल्पनम् ॥ यतेः सायं गृहस्थत्वं सूरिभिस्तत्त्वतत्परैः । एतानि लोके गुप्त्यर्थं कलेरादौ महात्मभिः ॥ निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः ॥' इति । इत्थं कलियुगे निषिद्धा अपि जातयः पुरायुगे सन्त्येव ॥

इत्थं प्रतिपादितेषु जातिषु नायं रावणो ब्राह्मणः, ब्राह्मण्यामुत्पन्नत्वाभावात् । नापि क्षत्रियो वैश्यः शूद्रो वा, ब्राह्मणाद्विश्रवस उत्पन्नत्वात् । नापि अनुलोममूर्धावसिक्ता(क्ता)दिः, राक्षस्यामुत्पन्नस्य क्षत्रियादिक्षेत्रोत्पत्त्यभावात् । राक्षस्यामुत्पत्तिश्च उत्तररामायणे— 'तत्र हेतिः प्रहेतिश्च भ्रातरौ

राक्षसर्षभौ । मधुकैटभसङ्काशौ ब(भू)वतुरिन्दमौ ॥ प्रहेतिर्धार्मिकस्तत्र तपोवनगतस्तदा । हेतिर्दारक्रियार्थं तु यत्नं परमथाकरोत् ॥ स कालभगिनीं कन्यां भयां नाम भयावहाम् ॥ उदावहदमेयात्मा स्वयमेव महामतिः । स तस्यां जनयामास हेती राक्षसपुङ्गवः ॥' पुत्रं विद्युत्केशं (जनयामास) । सोऽपि सन्ध्यातनयायां सालकटंकटायां मालिसुमालिमाल्यवन्नामकान्पुत्रानजीजनत् । तत्रापि सुमालितनयायां कैकस्यां विश्रवसो रावण उत्पन्न इति । तथा च ब्राह्मणादिबहिर्भूतस्य कथं वैदिके कर्मण्यधिकार इति चेत्— न ॥

राक्षससामान्यस्य क्षत्रियजातित्वेन राक्षस्यां विश्रवस उत्पन्नस्यापि मूर्धावसिक्तत्वेन कर्माधिकारसम्भवात् । [अथवा] रक्षणार्थं सृष्टा जातिस्तावत्क्षत्रियजातिरेव । तथा च बृहदारण्यके 'तच्छ्रेयोरूपमत्यसृजत क्षत्रम्' इति । अस्यार्थो भाष्ये— 'तद्ब्रह्म श्रेयोरूपं प्रशस्तरूपं क्षत्रं क्षत्रियजातिमत्यसृजत' इति । भारतेऽपि 'अराजके हि लोकेऽस्मिन्सर्वतो विद्रुते भयात् । रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥' इति। तथा च रक्षणोद्देशेन सृष्टत्वरूपक्षत्रियधर्मयोगात्क्षत्रिय एव राक्षसः । राक्षसानां रक्षणोद्देशेन सृष्टत्वं चोत्तररामायणे— 'प्रजापतिः पुरा सृष्ट्वा ह्यपः सलिलसम्भवः । तासां गोपायने सत्वानसृजत्पद्मसम्भवः ॥ ते सत्वाः सत्वकर्तारं विनीतवदुपस्थिताः । किं कुर्म इति भाषन्तः क्षुत्पिपासाभयार्दिताः ॥ प्रजापतिस्तु तान्याह सत्वानि प्रहसन्निव । आभाष्य वाचा यत्नेन रक्षध्वमिति मानद ॥ रक्षामेति च तत्रान्यैर्जक्षामेति तथापरैः । भुक्षिताभुक्षिता-

भुङ्क्षितैरुक्तस्ततस्तानाः भूतकृत् । रक्षामेति च यैरुक्तं राक्षसास्ते भवन्तु वः। जक्षामेति च यैरुक्तं ते वै यक्षा भवन्तु वः॥' इति। एवं क्षत्रियसाधारणरक्षणधर्मयोगेन राक्षसजातेः क्षत्रजातित्वेन तद्वंश्यायां कैकस्यां विश्रवसो ब्राह्मणस्य सकाशात् प्रसूतत्वात् रावणस्य मूर्धावसिक्तत्वमेव ॥

नन्वेवं विश्रवसोऽपि ब्राह्मण्यं न स्यात्। मूर्धावसिक्तत्वमेव स्यात्। तृणबिन्दोः[कन्यायां] कन्यायां ब्राह्मणादुत्पन्नत्वात्। तथा चोत्तररामायणे— 'पुरा कृतयुगे राम प्रजापतिसुतः प्रभुः। पुलस्त्यो नाम ब्रह्मर्षिः साक्षादिव पितामहः॥ तृणबिन्दुस्तु राजर्षिस्तपसा द्योतितप्रभः। गृहीत्वा तनयां गत्वा पुलस्त्यमिदमब्रवीत्। भगवंस्तनयां मे त्वं गुणैः स्वैरेव भूषिताम्। भिक्षां प्रतिगृहाणेमां मयेह स्वयमुद्यताम्॥' इत्थमभिहितः अङ्गीकृत्य राजतनयां तया च कृतशुश्रूषः 'परितुष्टोऽस्मि सुश्रोणि गुणानां संपदा भृशम्। तस्मात्तु वितराम्यद्य पुत्रं त्वात्मसमं तव। उभयोर्वंशकर्तारं पौलस्त्य इति विश्रुतम्॥ यस्मात्तु विश्रुतो वेदस्त्वयेहाभ्यस्यतो मम। तस्मात्तु विश्रवा नाम भविष्यति न संशयः'॥ इत्यभिहितवान्। सापि— 'अचिरेणैव कालेनासूत विश्रवसं सुतम्। पितेव तपसा युक्तो विश्रवाश्चाभवन्मुनिः॥' इति। तथा च क्षत्रियायामुत्पन्नस्य कथं ब्राह्मण्यम्? न च मास्तु ब्राह्मण्यं, को दोष इति वाच्यम्। तथा सति 'ब्रह्मर्षेस्तं सुतं ज्ञात्वा मयो हर्षमुपागतः। दातुं दुहितरं तस्मै रोचयामास तव वै॥' इत्यत्र, 'किन्तु विद्धि हि मां ब्रह्मन् शासनात्पितुरागताम्' इति कैकसीवाक्ये च **उत्तरकाण्डे**

ब्राह्मणत्वव्यवहारविरोधप्रसङ्गादिति चेत्– न, ब्राह्मणात्क्षत्रियाया-मुत्पन्नानामपि ब्राह्मणत्वसम्भवात् । [तथा हि— ब्राह्मणात् क्षत्रि-यायामुत्पन्नाः] त्रिविधाः– ब्राह्मणो मूर्धावसिक्तः क्षत्रियश्चेति । तत्र 'ब्राह्मणकन्यकाया अलाभे स्नातकव्रतं चरेत् । क्षत्रियायां वा पुत्रमुत्पादयीत वैश्यायां वा' इति पैठीनसिवचनेन क्षत्रिया-विवाहस्यानुमतत्वात्, तस्यां ब्राह्मविवाहोढायां धर्मान्वयवत्यां क्षत्रियायां ब्राह्मणादुत्पन्नो ब्राह्मण एव । एतदभिप्रायेणैव क्षत्रि-यायामुत्पन्नस्य ब्राह्मणत्वमुक्तं **मनुना**— 'यथा त्रयाणां वर्णानां द्वयोरात्मा प्रजायते । आनन्तर्यात्स्वयोन्यां च तथा बाह्येष्वपि क्रमः ॥' इति ॥

**आनुशासनिकेऽपि**— 'क्षत्रियायास्तु यः पुत्रो ब्राह्मणः सोऽप्यसंशयः । त्रिषु वर्णेषु जातो हि ब्राह्मणाद्ब्राह्मणो भवेत् ॥ भार्याश्चतस्रो विप्रस्य द्वयोरात्मा प्रजायते । आनुपूर्व्या द्वयोर्हीनो मातृजात्या प्रसूयते ॥' इति । अत्र वैश्यशूद्रयोनिजातयोर्मातृजा-तीयत्वोक्त्यापि पूर्वयोः ब्राह्मणत्वं सिद्धम् ॥

इत्थं भारतेऽप्यादिपर्वणि— उपरिचरवसुनाम्नो राज्ञ-स्तनयायां सत्यवत्यां पराशराद्व्यासो ब्राह्मणोऽभूदिति प्रतिपादि-तम्— 'दिव्यां तां वासवीं कन्यां रम्भोरूं मुनिपुङ्गवः । दृष्ट्वैव च स तां धीमांश्चकमे चारुहासिनीम् ॥' इति । वासवीं उपरिच-रवसोः सुताम् । 'पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा । जज्ञे च यमुनाद्वीपे पाराशर्यश्च वीर्यवान् । एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात् ॥' इति ॥

अत एव च अगस्त्यो विदर्भराजतनयायां लोपामुद्रायां दृढस्युं ब्राह्मणमजीजनदिति प्रतिपादितम् वनपर्वणि— 'वरये तां महीपाल लोपामुद्रां प्रयच्छ मे ।' इत्यगस्त्यप्रार्थितो वैदर्भः— 'लोपामुद्रां ततः प्रादाद्विधिपूर्वं विशांपते । तत आधाय गर्भं तमगमद्वनमेव सः ॥ सप्तमेऽब्दे गते चापि प्राच्यवत स महाकविः । ज्वलन्निव प्रभावेन दृढस्युर्नाम भारत ॥ तस्य पुत्रोऽभवदृषे स तेजस्वी महाद्विजः ।' स एव 'इध्मानां भारमाजह्रे इध्मवाहस्ततोऽभवत् ' । इति । एवं ऋचीकात् गाधितनयायां जमदग्निर्ब्राह्मणोऽभवदिति प्रतिपादितं वनपर्वणि— 'गाधीति विश्रुतो लोके वनवासं जगाम ह । वने तु वसतस्तस्य कन्या जज्ञेऽप्सरःसमा ॥ ऋचीको भार्गवस्तां च वरयामास भारत । गङ्गायां कान्यकुब्जे वै ददौ सत्यवतीं तदा । ततो गाधिः सुतां चास्मै ज[ध]न्याश्चासन्सुरास्तदा ॥ धर्मेण लब्ध्वा तां भार्यां ऋचीको द्विजसत्तमः । जमदग्निं ततः पुत्रं जज्ञे सा काल आगते ॥ तेजसा वर्चसा चैव युक्तं भार्गवनन्दनम् ॥' इति । एवमेव जमदग्नेरपि प्रसेनजितो राज्ञस्तनयायां रेणुकायां परशुरामपञ्चमाः पुत्रा ब्राह्मणाः अभवन्नित्यपि तत्रैव— 'स वेदाध्ययनोद्युक्तो जमदग्निर्महातपाः । तपस्तेपे ततो वेदान्नियमाद्वशमानयत् ॥ स प्रसेनजितं राजन्नधिगम्य नराधिपम् । रेणुकां वरयामास स च तस्मै ददौ नृपः । रेणुकां त्वथ सम्प्राप्तो भार्यां भार्गवनन्दनः ॥ तस्यां कुमाराश्चत्वारो जज्ञिरे रामपञ्चमाः ॥' इति । एवं शर्यातेः क्षत्रियस्य कन्यायां सुकन्याभिधायां प्रमतिं ब्रह्मर्षिं च्यवनोऽजीजनत् । प्रमतिरपि घृताच्यां रुरुम् । रुरुरपि

प्रमद्वरायां शुनकमित्यादि वनपर्वणि— 'ऋषेर्वचनमाज्ञाय शर्यातिरविच.ःयन् । ददौ दुहितरं तस्मै च्यवनाय महात्मने ॥ सुकन्यापि पतिं लब्ध्वा तपस्विनमनि...ता । नित्यं पर्यचर. प्रीत्या तपसा नियमेन च ॥ अग्नीनामतिथीनां च शुश्रूषुरनसूयिका । समाराधयति क्षिप्रं च्यवनं सा शुभानना ॥ स चापि च्यवनो ब्रह्मन् भार्गवोऽजनयत्सुतम् । सुकन्यायां महात्मानं प्रमतिं दीप्ततेजसम् ॥ प्रमतिस्तु रुरुं नाम घृताच्यां समजीजन.् । रुरुः प्रमद्वरायां तु शुनकं समजीजनत् ॥' इति ॥

तथा च क्षत्रियायां धर्मान्वयवत्यां ब्राह्मणादुत्पन्नो ब्राह्मण एव । यस्तु ध र्मान्वयिन्यां ब्राह्मण्यां सत्यां रत्यर्थोढायां क्षत्रियायां ब्राह्मणादुत्पन्नः स मूर्धावसिक्तः । तथाहि— ब्राह्मण्यां सत्यां क्षत्रियायाः विवाहो रत्यर्थ एव[न]धर्मार्थः । तथा च म.ु:— 'सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि । कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः ॥' 'चतस्रोऽभिहिता भार्या ब्राह्मणस्य पि.ामह । ब्राह्मणी क्षत्रिया वैश्या शूद्रा च रतिमिच्छतः ॥' इति । सवर्णयैव धर्माः कर्तव्याः । न तस्यां सत्यामसवर्णया । तदपि मनुनोक्तम् — 'यदि स्वाश्चापराश्चापि विन्देरन्योषितो द्विजाः । तासां वर्ण-क्रमेण स्याज्ज्यैष्ठ्यं पूजा च वेश्मनि ॥ भर्तुः शरीरशुश्रूषां धर्मकार्यं च नैत्यकम् । स्वा स्वैव कु.ीत् सर्वेषां नासवर्णा कथंचन ॥ यस्तु तत्कारयेन्मोहात्स्व[वि]जात्यां स्थितयान्यया । यथा ब्राह्मणचण्डालः पूर्वदृष्टस्तथैव सः ॥' इति । आनुशासनिकेऽपि— 'तिस्रः कृत्वा पुरो भार्याः पश्चाद्विन्देत ब्राह्मणीम् । सा ज्येष्ठा सा च पूज्या स्यात्सा च भार्या गरीयसी ॥ स्नानं

प्रसाधनं भर्तुर्दन्तधावनमञ्जनम् । हव्यं कव्यं च यच्चान्यद्धर्मयुक्तं गृहे भवेत् ॥ न तस्यां जातु तिष्ठन्त्यामन्या तत्कर्तुमर्हति । ब्राह्मणी त्वेव कुर्याच्च ब्राह्मणस्य युधिष्ठिर ॥ अन्नं पानं च माल्यं च वासांस्याभरणानि च । ब्राह्मण्यैतानि देयानि भर्तुः सा तु गरीयसी ॥ अथ चेदन्यथा कुर्याद्यदि कामाद्युधिष्ठिर । स वै ब्राह्मणचण्डालः पूर्वदृष्टस्तथैव सः' ॥ इति ॥

इत्थं धर्मान्वयरहितायां रत्यर्थोढायां तस्यामुत्पन्नो मूर्धावसिक्त एव । एतदभिप्रायमेव याज्ञवल्क्यवचनमपि— 'विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम्' इति । ब्राह्मणेन रत्यर्थमूढायां क्षत्रियायामुत्पन्नस्य क्षत्रियधर्म एव उक्त आनुशासनिके-- 'यथा न सदृशी जातु ब्राह्मण्याः क्षत्रिया भवेत् । क्षत्रियायास्तथा वैश्या न जातु सदृशी भवेत् । श्रीश्च राज्यं च कोशश्च क्षत्रियाणां युधिष्ठिर । विहितं दृश्यते राजन् रक्षा नान्यस्य क्षत्रियात् ॥ ब्राह्मणा हि महाभागा देवानामपि देवताः । तेषु राजन्प्रवर्तेत पूजायां विधिपूर्वकम् । प्रणीतमृषिभिर्ज्ञात्वा धर्मं शाश्वतमव्ययम् । लुप्यमानं स्वधर्मेण क्षत्रियो ह्येव रक्षति ॥ दस्युभिर्ह्रियमाणं च धनं दारांश्च सर्वशः । सर्वेषामेव वर्णानां त्राता भवति पार्थिवः ॥ भूयान् स्यात्क्षत्रियापुत्रो वैश्यापुत्रान्न संशयः । भूयस्तेनाभिहर्तव्यं पितृवित्ताद्युधिष्ठिरः ॥' इति । अत एव माधवीयेऽपि— 'समानवर्णासु पुत्राः समानवर्णाः भवन्ति अनुलोमास्तु मातृवर्णाः' इति विष्णुवचने मातृसवर्णत्वप्रतिपादनं मातृजात्युचितधर्मप्राप्त्यर्थमिति प्रतिपादितम् । तस्मात्

धर्मान्वयरहितायां क्षत्रियायां ब्राह्मणादुत्पन्नो मूर्धावसिक्त एव ॥

क्षत्रियेण पुत्रार्थतया प्रेषितायां क्षत्रियभार्यायां ब्राह्मणादुत्पन्नः क्षत्रिय एव । तथा चादिपर्वणि कुन्तीं प्रति पाण्डुः— 'सौदासेन च रम्भोरु नियुक्तापत्यजन्मनि । मदयन्ती जगामर्षिं वसिष्ठमिति नः श्रुतम् ॥ तस्माल्लेभे च सा पुत्रमश्मकं नाम भामिनि । अस्माकमपि ते जन्म विदितं कमलेक्षणे ॥ कृष्णद्वैपायनाद्भीरु कुरुवंशविवृद्धये ॥' इति । तत्रैवान्यत्र— 'बलिः सुदेष्णां भार्यां स्वां तस्मै स प्राहिणोत्पुनः । तां स दीर्घतमाङ्गेषु स्पृष्ट्वा देवीमथाब्रवीत् । अङ्गो वङ्गः कलिङ्गश्च पुण्ड्रः सुह्मश्च ते सुताः ॥ भविष्यन्ति कुमारास्ते तेजसादित्यवर्चसः । ' इति । तत्रैव च स्थलान्तरे— एवमुच्चावचैरस्त्रैर्भार्गवेण महात्मना । त्रिःसप्तकृत्वः पृथिवी? निकृत्ताः क्षत्रियाः पुरा ॥ ततः सम्भूय सर्वाभिः क्षत्रियाभिः समन्ततः । उत्पादितान्यपत्यानि ब्राह्मणैर्वेदपारगैः ॥ पाणिग्राहस्य तनय इति वेदेषु निश्चितम् । धर्मं मनसि संस्थाप्य ब्राह्मणांस्ताः समभ्ययुः ॥ ततः पुनः समुदितं क्षत्रं समभवत्तदा । ' इति । तत्रैवान्यत्र—'शृणु कुन्ति कथामेतां शारदण्डायनीं प्रति । सा वीरपत्नी गुरुणा नियुक्ता पुत्रजन्मनि ॥ पुण्येन प्रयता स्नाता निशि कुन्ति चतुष्पथे ॥ वरयित्वा द्विजं सिद्धं हुत्वा पुंसवनेऽनलम् । कर्मण्यवसिते तस्मिन्सा तेनैव सहावसत् ॥ तत्र त्रीन् जनयामास दुर्जयादीन्महारथान् । तथा त्वमपि कल्याणि ब्राह्मणात्तपसाधिकात् ॥ मन्नियोगाद्यत क्षिप्रमपत्योत्पादनं प्रति । ' इति ॥

एवं पुलस्त्येन धर्मार्थतया ऊढायां तृणबिन्दुकन्यायां धर्मे-

पत्न्यामुत्पन्नत्वेन विश्रवसः ब्राह्मणत्वं न तु मूर्धावसिक्तत्वमेव। तस्य विश्रवसः भरद्वाजकन्या ब्राह्मणी ज्येष्ठा धर्मपत्नी। तया चाग्निहोत्रादिकमनुष्ठाय स्थितस्य विश्रवसः समीपे स्वयं पुत्रार्थतया कैकसी समागतेति प्रतिपादितमुत्तरकाण्डे— 'अथ पुत्रः पुलस्त्यस्य विश्रवा मुनिपुङ्गवः। अचिरेणैव कालेन पितेव तपसि स्थितः॥ सत्यवान् शीलवान् दान्तः स्वाध्यायनियतः शुचिः। सर्वभोगेष्वसंसक्तो नित्यं धर्मपरायणः॥ ज्ञात्वा तस्य तु तद्वृत्तं भारद्वाजो महानृषिः। ददौ विश्रवसे भार्यां स्वसुतां [illegible]वर्णिनीम॥ स तस्यां वीर्यसम्पन्नं पुत्रं परमधार्मिकम्। जनयामास धर्मात्मा सर्वैर्ब्रह्मगुणैर्वृतम्। तस्मिन् जाते तु संहृष्टः स बभूव पितामहः॥ नाम चास्याकरोत्प्रीतः सार्धं देवर्षिभिस्तदा। यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव॥ तस्माद्वैश्रवणो नाम भविष्यत्येष विश्रुतः। अथ तत्रावसत्प्रीतो धर्मात्मा नैर्ऋताधिपः॥ समुद्रपरिधानायां लङ्कायां विश्रवात्मजः। काले काले विनीतात्मा पुष्पकेण धनेश्वरः॥ अभ्यगच्छत्सुसंहृष्टः पितरं मातरं च सः।' ततः पुष्पकमधिरुह्य काले काले पितृदर्शनाय गच्छन्तं वैश्रवणमवलोक्य सुमाली स्वपुत्रीं कैकसीमित्थमवोचत्— 'गच्छ विश्रवसं पुत्रि पौलस्त्यं वरय स्वयम्। ईदृशास्ते भविष्यन्ति पुत्राः पुत्रि न संशयः॥ तेज[illegible] भास्करसमा यादृशोऽयं धनेश्वरः। सा तु तद्वचनं श्रुत्वा कन्यका पितृगौरवात्॥ तत्रोपगम्य सा तस्थौ विश्रवा यत्र तप्यते। एतस्मिन्नन्तरे राम पुलस्त्यतनयो द्विजः॥ अग्निहोत्रमुपासीनश्चतुर्थ इव पावकः।' एवं विश्रवसः ब्राह्मण्यां ज्येष्ठायां धर्मपत्न्यां सत्यामेव पुत्रार्थतया समागतायां कैकस्यामुत्पन्नत्वात् रावणः क्षत्रियधर्मा मूर्धावसिक्त एव॥

तथा इन्द्रजितो राजसूयाश्वमेधादिराजयज्ञावगमादपि तत्पितू रावणस्य क्षत्रियत्वम् । तथा **चोत्तररामायणे** रावणं प्रत्युशनाः—'उशना त्वब्रवीत्तत्र गुरुर्यज्ञसमृद्धये । रावणं राक्षसश्रेष्ठमुवाच च महातपाः ॥ अहमाख्यामि ते राजन् श्रूयतां सर्वमेव च । यज्ञास्ते सप्त पुत्रेण प्राप्ताः सुबहुविस्तराः ॥ अग्निष्टोमोऽश्वमेधश्च यज्ञो बहुसुवर्णकः । राजसूयस्तथा यज्ञो गोमेधो वैष्णवस्तथा ॥ माहेश्वरप्रवृत्ते तु यज्ञे पुंभिः सुदुर्लभे । वरांस्ते लब्धवान्पुत्रः साक्षात्पशुपतेरिह ॥ कामगं स्यन्दनं दिव्यमन्तरिक्षचरं ध्रुवम् । मायां च तामसीं नाम यया संपद्यते तमः ॥' इति । उक्तानां राजयज्ञत्वं **बोधायनसूत्रे**—'अथ राजयज्ञाः । राजसूयोऽश्वमेधः सर्वमेधः सोमसवः पृथिवीसवो मृत्युसवः कानान्धयज्ञः शुनस्कर्णयज्ञः' इति । तथा याजनाध्यापनप्रतिग्रहादिब्राह्मणधर्मादर्शनात् 'राक्षसेन्द्रोऽभिषिक्तस्तु भ्रातृभिस्सहितस्तदा' इत्यादिभिः श्लोकैः राज्याभिषेकावगमाच्च ॥

किं च राज्यकरणस्वप्रजासंरक्षणत्रैलोक्यविजययुद्धमरणादिक्षत्रियधर्मदर्शनादपि क्षत्रियः । अत एव इन्द्रस्य विशुद्धमातापितृजन्यत्वात् ब्राह्मणत्वे सिद्धेऽपि कर्मणा क्षत्रियत्वं प्रतिपादितं **राजधर्मे**—'इन्द्रो वै ब्राह्मणः पुत्रः कर्मणा क्षत्रियोऽभवत्' इति । सुन्दरकाण्डे हनुमता सह युद्धार्थं इन्द्रजित्प्रेषणदशायाम्—'न खल्वियं मतिः श्रेष्ठा यत्त्वां सम्प्रेषयाम्यहम् । इयं च राजधर्माणां क्षत्रस्य च मतिर्मता ॥' इति रावणेन स्वस्य क्षत्रियत्वोक्तेः ॥

तथा विभीषणं प्रति रामवचनेऽपि— 'नैवं विनष्टाः शोच्यन्ते क्षत्रधर्मे व्यवस्थिताः। वृद्धिमाशंसमानाश्च निपतन्ति रणाजिरे ॥ येन सेन्द्राः त्रयो लोकाः त्रासिता युधि धीमता। अस्मिन्कालसमायुक्ते न कालः परिशोचितुम् ॥ नैकान्तविजयो युद्धे भूतपूर्वः कदाचन। परैर्वा हन्यते वीरः परान्वा हन्ति संयुगे ॥ इयं हि पूर्वैः सन्दिष्टा गतिः क्षत्रियसम्मता। क्षत्रियो निहतः सङ्ख्ये न शोच्य इति निश्चयः ॥ तमेव निश्चयं दृष्ट्वा सत्वमास्थाय विज्वरः। यदिहानन्तरं कार्यं कल्पं समनुचिन्तय ॥' इति। **संस्कारदशायां च**— 'वर्तते वेदविहितो राज्ञो वै पश्चिमः क्रतुः। अनुस्तरणिकां राज्ञो वृतात्कां समवेशयन ॥' इति राजत्वेन व्यवहाराच्च क्षत्रधर्मा मूर्धावसिक्तो रावणः ॥

क्षत्रियाणां चासाधारण्येन पर्वण्येव होमः। तथा **चाश्वलायनः**— 'पौर्णमासेनेष्टिपशुसोमा उपदिष्टाः। तैरमावास्यायां पौर्णमास्यां वा यजेत राजन्यश्चाग्निहोत्रं जुहुयात्। तपस्विने ब्राह्मणायेतरं कालं भक्तमुपहरेत्' इति। **आपस्तम्बस्तु**— 'न राजन्यस्य जुहुयात् होमकाले गृहेभ्यो ब्राह्मणायान्नं प्रहिणुयात्तेनैवास्य हुतं भवति नित्यमग्न्युपस्थानं वाचयितव्यम्' इति। अतश्च क्षत्रियधर्मानुष्ठातुर्दशग्रीवस्य पर्वण्येवाग्निहोत्रहोम उपपन्नः। न च सोमयाजित्वान्नित्यहोमः किं न स्यादिति वाच्यम्। ऋतसत्यशीलस्य सतः सोमयाजिन एव नित्यहोमविधानात्। तथा च **आश्वलायनः**— 'ऋतसत्यशीलः सोमसुत्सदा जुहुयात्' इति। **आपस्तम्बोऽपि**— 'यो वा सोमयाजी सत्यवादी तस्य जुहु-

यात्' इति ।। व्याख्यातं धूर्तस्वामिना— 'उभयगुणस्य हूयते' इति। उभयगुणस्य ऋतसत्यशीलित्वं सोमयाजित्वं चेत्युभयमपि यस्य तस्य क्षत्रियस्य नित्यं होमः' इति। न चायं रावणो ऋतसत्यशीलः, मायावित्वात्, गान्धर्वविवाहोत्पन्नत्वाच्च। विवाहानुरूपतया सत्यवचनत्वं अनृतत्वं चाह मनुः— 'ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः। ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः ॥ रूपसत्वगुणोपेता धनवन्तो यशस्विनः। पर्याप्तभोगा धर्मिष्ठाः जीवन्ति च शतं समाः ॥ अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा। इतरेष्ववशिष्टेषु नृशंसानृतवादिनः ॥ जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः।' इति। आपस्तम्बोऽपि— 'यथायुक्तो विवाहस्तथायुक्ता प्रजा भवति' इति। तथा चानृतवादिनो रावणस्य ऋतसत्यशीलत्व-सोमयाजित्वयोरनयोर्गुणयोरभावेन आपस्तम्बोक्तरीत्या नित्य-होमप्राप्त्यभावादुक्तरीत्या मूर्धावसिक्तस्य पर्वण्यसाधारण्ये-नाग्निहोत्रहोमप्रतिपादनं भगवता महर्षिणा वाल्मीकिना कृतं युक्तमेव ॥

ततः प्रहस्तमहापार्श्वसुपार्श्वक्रतुमालसुमालकुम्भकर्णविभीषण-प्रमुखानां भवनान्यवप्लुत्य अपरमिवेन्द्रिरामन्दिरं रावणमन्दि-रमासाद्य

दृदर्श विविधान् गुल्मांस्तत्र रक्षःपतेर्गृहे।

अनेन राजगृहसंरक्षणाय गजवाजिपदातिभिः सन्नद्धतया परितः सर्वदा स्थेयम्। तथा च राजधर्मे— 'न्यसेत गुल्मान्

दुर्गेषु सन्धौ च कुरुनन्दन । मध्ये च नरशार्दूल तथा राजनिवेशने ॥' इति ॥

इति षष्ठः सर्गः ।

---

## अथ सप्तमः सर्गः ॥

सप्तमे—

स वेश्मजालं बलवान्ददर्श व्यासक्तवैडूर्यसुवर्णजालम् ।
यथा महत्प्रावृषि मेघजालं विद्युत्पिनद्धं सविहङ्गजालम् ॥

निवेशनानां विविधाश्च शालाः प्रधानशङ्खायुधचापशालाः ।
मनोहराश्चापि पुनर्विशाला ददर्श वेश्माद्रिषु चन्द्रशालाः ॥

गृहाणि नानावसुराजितानि देवासुरैश्चापि सुपूजितानि ।
सर्वैश्च दोषैः परिवर्जितानि कपिर्ददर्श स्वबलार्जितानि ॥

तानि प्रयत्नाभिसमाहितानि मयेन साक्षादिव निर्मितानि ।
महीतले सर्वगुणोत्तराणि ददर्श लङ्काधिपतेर्गृहाणि ॥

ततो ददर्शोच्छ्रितमेघरूपं मनोहरं कांचनचारुरूपम् ।
रक्षोधिपस्यात्मबलानुरूपं गृहोत्तमं ह्यप्रतिरूपरूपम् ॥

महीतले स्वर्गमिव प्रकीर्णं श्रिया ज्वलन्तं बहुरत्नकीर्णम् ।
नानातरूणां कुसुमावकीर्णं गिरेरिवाग्रं रजसावकीर्णम् ॥

नारीप्रवेकैरिव दीप्यमानं तडिद्भिरम्भोदवदर्च्यमानम् ।
हंसप्रवेकैरिव वाह्यमानं श्रिया युतं खे सुकृतां विमानम् ॥

यथा नगाग्रं बहुधातुचित्रं यथा नभश्च ग्रहचन्द्रचित्रम् ।
ददर्श युक्तीकृतमेघचित्रं विमानरत्नं बहुरत्नचित्रम् ॥

मही कृता पर्वतराजिपूर्णा शैलाः कृता वृक्षवितानपूर्णाः ।
वृक्षाः कृताः पुष्पवितानपूर्णाः पुष्पं कृतं केसरपत्रपूर्णम् ॥

कृतानि वेश्मानि च पाण्डराणि तथा सुपुष्पाण्यपि पुष्कराणि ।
पुनश्च पद्मानि सकेसराणि धन्यानि चित्राणि तथा वनानि ॥

पुष्पाह्वयं नाम विराजमानं रत्नप्रभाभिश्च विवर्धमानम् ।
वेश्मोत्तमानामपि चोच्चमानं महाकपिस्तत्र महाविमानम् ॥

कृताश्च वैडूर्यमया विहङ्गा रूप्यप्रवालैश्च तथा विहङ्गाः ।
चित्राश्च नानावसुभिर्भुजङ्गा जात्यानुरूपास्तुरगाः शुभाङ्गाः ॥

प्रवालजाम्बूनदपुष्पपक्षाः
सलीलमावर्जितजिह्मपक्षाः ।
कामस्य साक्षादिव भान्ति पक्षाः
कृता विहंगाः सुमुखाः सुपक्षाः ॥

नियुज्यमानाश्च गजाः सुहस्ताः
सकेसराश्चोत्पलपत्रहस्ताः ।
बभूव देवी च कृता सुहस्ता
लक्ष्मीस्तथा पद्मिनि पद्महस्ता ॥

अत्र गृहद्वारि महालक्ष्म्याः प्रतिमा स्थापनीयेति सूचितम् ।

तत्प्रकारश्चागमशास्त्रे—

'तयोर्मध्ये महालक्ष्मीं हेमवर्णां विभूषिताम् । श्रीफला-

ब्जधरां दक्षे वामे पद्माभयान्विताम् ॥ भृङ्गाराम्रुतधाराभिर्गज-
तुण्डाभिषेचनीम् । वामदक्षिणहस्ताभ्यां दधति[तीं] श्रीफलाम्बुजे ।
हेमाभां सघटेभाभ्यां प्लाव्यमानां महाश्रियम् ॥ ' इति ॥

इतीव तद्गृहमभिगम्य शोभनं
सविस्मयो नगमिव चारुशोभनम् ।
पुनश्च तत्परमसुगन्धि सुन्दरं
हिमात्यये नगमिव चारुकन्दरम् ॥

ततः स तां कपिरभिपत्य पूजितां
चरन्पुरीं दशमुखबाहुपालिताम् ।
अदृश्य तां जनकसुतां सुपूजितां
सुदुःखितः पतिगुणवेगनिर्जिताम् ॥

ततस्तथा बहुविधभावितात्मनः
कृतात्मनो जनकसुतां सुवर्त्मनः ।
अपश्यतोऽभवदतिदुःखितं मनः
सुचक्षुषः प्रविचरतो महात्मनः ॥

इति सप्तमः सर्गः ।

---

## अथ अष्टमः सर्गः ॥

अष्टमे— ततो वातात्मजस्त्रिभुवनमहनीयतमानुपमनिर्माण-
धुरीणगीर्वाणशिल्पिनूतनसर्वयत्ननिर्माणं सद्यः समुदिततरुणारु-
णसारथिमण्डलदण्डनाविधिप्रचण्डमलप्रक्षिताहिमकराकिरणावलीन्दु-

कान्तनिष्यन्दमानशिशिरनीरशीकरसंप्लाव्यमानपरिसरं रंहोनिह्नुतपवनमन्तःप्रवेगसर्वस्वं स्वस्तरुतलसुस्थितनिस्तुलदिव्याङ्गनापाङ्गपेपीयमानं मणिमयशिखरोज्जृम्भितबहुविधरश्मिपरम्परानितान्तविध्वंसितध्वान्तं भवनमधिवसन्तम्

वसन्तपुष्पोत्करचारुदर्शनं
वसन्तमासादपि कान्तदर्शनम् ।
स पुष्पकं तत्र विमानमुत्तमं
ददर्श तद्वानरवीरसत्तमः ॥

वहन्ति यं कुण्डलशोभितानना
महाशना व्योमचरा निशाचराः ।
विवृत्तविध्वस्तविशाललोचना
महाजवा भूतगणाः सहस्रशः ॥

अत्र सभायां विमानस्य भूतै राक्षसैश्चोह्यमानत्वं प्रतिपादितम् । तथा च सभापर्वणि— 'तां तु तत्र मयेनोक्ताः किङ्करा नाम राक्षसाः । सभामष्टौ सहस्राणि रक्षन्ति च वहन्ति च ॥ अन्तरिक्षचरा घोरा महाकाया महाबलाः । रक्ताक्षाः पिङ्गलाक्षाश्च शङ्कुकर्णाः प्रहारिणः ॥' इति ॥

इति अष्टमः सर्गः ।

---

## अथ नवमः सर्गः ॥

नवमे— सीतागवेषणाय निशाचरभवनान्यवलोकयन्ननिलात्मजस्तन्मध्यगमर्धयोजनविस्तृतं योजनायाममनवरतमात्तायुध-

यातुधानानीकैः संरक्ष्यमाणं द्वित्रिचतुर्विषाणैः अतप्रकातैस्वरकृतबाण-वज्राङ्कुशविभूषणैर्लोकविद्रावणैर्मदवारणैर्निबिडितपर्यन्तकान्तम्

राक्षसीभिश्च पत्नीभी रावणस्य निवेशनम् ।
आहृताभिश्च विक्रम्य राजकन्याभिरावृतम् ॥

तन्नक्रमकराकीर्णं तिमिङ्गिलझषाकुलम् ।
वायुवेगसमाधूतं पन्नगैरिव सागरम् ॥

तस्य हर्म्यस्य मध्यमभूमिभागे विधातुरुपभोगायापूर्वमिव विश्वकर्मनिर्मितं तपःसमाधिसमाराधितपितामहवरप्रसादलब्धं कुबेरस्य तत्पुष्पकाभिधानं नाम विविधवैडूर्यनिर्व्यूहसङ्कीर्णमभूतपूर्वोपमं महद्विमानमधिरुह्य मधुरतररसभक्ष्यभोज्यपानसौरभ्यादिविषयैर्नासारसनादीन्द्रियाणि सन्तर्पयन् ज्वलदहिमकरांशुभिरानीलविमलोपलखचितसोपानपरम्परां मणिमयवेदिवितानवातायनशातकुम्भस्तम्भगन्धोत्करसौगन्धिकगन्धफलिमाकलिकागन्धिगन्धवहस्तनन्धयबन्धुरां रावणपरमविहारास्पदीभूतां काञ्चनमयीं विशालां शालामवलोक्य—

या हि वैश्रवणे लक्ष्मीर्या चेन्द्रे हरिवाहने ।
सा रावणगृहे सर्वा नित्यमेवानपायिनी ॥

या च राज्ञः कुबेरस्य यमस्य वरुणस्य च ।
तादृशी तद्विशिष्टा वा ऋद्धी रक्षोगृहेष्विह ॥

स्वर्गोऽयं देवलोकोऽयमिन्द्रस्येयं पुरी भवेत् ।
सिद्धिर्वेयं परा हि स्यादित्यमन्यत मारुतिः ॥

परा सिद्धिः उत्कृष्टतपःफलभूतो ब्रह्मलोक इत्यर्थः। अन्त्यैः श्लोकैर्विविधान्नपानभक्ष्यभोज्यगीतवादित्रस्त्रीसौख्यादिप्रतिपादकैरग्निसर्गस्थितश्लोकैश्च इन्द्रादिलोकपालानां ब्रह्मणश्च यादृशमैश्वर्यं तादृशमैश्वर्यं रावणगृहे तिष्ठतीत्युक्तम्। तेषामैश्वर्यं च भारतादौ। तत्राग्निलोकैश्वर्यं (तादृशमैश्वर्यं च) काशीखण्डे—

'इमामर्चिष्मतीं पश्य वीतिहोत्रपुरीं शुभाम्। जातवेदसि ये भक्तास्ते वसन्त्यत्र सुव्रताः॥ अग्निहोत्ररता विप्राः तथाग्निब्रह्मचारिणः। पञ्चाग्निव्रतिनो ये वै तेऽग्निलोकेऽग्नितेजसः॥ जाठराग्निविवृद्ध्यै यो दद्यादाग्नेयमौषधम्। मन्दाग्नये स पुण्यात्मा वह्निलोके वसेच्चिरम्॥ यज्ञोपस्करवस्तूनि यज्ञार्थं द्रविणं तु वा। यथाशक्ति प्रदद्याद्यः सोऽर्चिष्मत्यां वसेच्चिरम्॥ अग्निरेको द्विजातीनां निश्रेयसकरः परः। गुरुर्देवो व्रतं तीर्थं सर्वमग्निर्विनिश्चितम्। अपि वेदं विदित्वा यस्त्यक्त्वा वै जातवेदसम्॥ अन्यत्र बध्नाति रतिं ब्राह्मणो न स वेदवित्।' इति। यमैश्वर्यमपि भारते— तेजस्विनी सभा राजन् बभूव शतयोजना। विस्तारायामसम्पन्ना भूयस्यपि च पाण्डव॥ अर्कप्रभाभा भ्राजिष्णुः सर्वतः कामचारिणी। नैवातिशीता नात्युष्णा मनसश्च प्रहर्षिणी॥ न शोको न जरा तस्यां क्षुत्पिपासे न चाप्रियम्। न च दैन्यं क्लमो वापि प्रतिकूलं न चाप्युत॥ सर्वे कामाः स्थितास्तस्यां ये दिव्या ये च मानुषाः॥ रसवच्च प्रभूतं च भक्ष्यं भोज्यमरिन्दम। लेह्यं चोष्यं च पेयं च हृद्यं स्वादु मनोहरम्॥ पुण्यगन्धाः स्रजश्चात्र नित्यं कामफलद्रुमाः। शीतलानि च तोयानि सुखोष्णानि च भारत॥ सर्वे भास्वरदेहाश्च सर्वे च

विरजोऽम्बराः । चित्राङ्गदाश्चित्रमाल्याः सर्वे ज्वलितकुण्डलाः ॥ स्वकृतैः कर्मभिर्दिव्यैः परिबर्हैश्च भूषिताः । गन्धर्वाश्च महात्मानः सङ्घशश्चाप्सरोगणाः ॥ वादित्रनृत्यगीतं च हास्यं लास्यं च सर्वशः । पुण्याश्च गन्धाः शब्दाश्च तस्यां पार्थ समन्ततः ॥ दिव्यानि माल्यानि च तामुपतिष्ठन्ति सर्वशः । ईदृशी सा सभा राजन्पितृराज्ञो महात्मनः ॥' इति ॥

**निर्ऋतिलोकैश्वर्यमपि** तत्रैव— 'दिक्पतेर्नैर्ऋतस्यासौ पुण्यापुण्यजनोषिता । राक्षसा निवसन्त्यस्यामपरद्रोहिणः सदा ॥ जातिमात्रेण रक्षांसि वृत्तैः पुण्यजना इमे ॥' इति । **काशीखण्डेऽपि**— 'अत्यन्तश्रुतिवर्त्मानो जाता वर्णान्तरेष्वपि । नाद्रियन्तेऽन्नपानानामस्मृत्युक्तं कदाचन ॥ परदारपरद्रव्यपरद्रोहपराङ्मुखाः । जाता जातौ निकृष्टायामपि पुण्यानुरागिणः । द्विजातिभक्त्युत्पन्नार्थैरात्मानं पोषयन्ति ये ॥ सदा सङ्कुचिताङ्गाश्च द्विजसम्भाषणादिषु । आहूता वस्त्रवदना वदन्ति द्विजसन्निधौ ॥ जय जीव भगो नाथ स्वामिन्निति हि वादिनः । तीर्थस्नानपरा नित्यं नित्यं देवपरायणाः ॥ द्विजेषु नित्यं प्रणताः स्वनामाख्यानपूर्वकम् । अस्तेयसत्याहिंसा[श्च]सर्वेषां धर्महेतवः ॥ अवश्येषु सदोद्युक्ता ये जाता यत्र कुत्रचित् । सर्वभोगसमृद्धास्ते वसन्त्यत्र पुरोत्तमे ॥' इति ॥

**वरुणलोकैश्वर्यं च उद्योगे**— 'भवनं पश्य वारुण्यं यदेतत्सर्वकाञ्चनम् । यत्प्राप्य सुरतां प्राप्ताः सुराः सुरपतेः सखे ॥' इति ॥

**काशीखण्डेऽपि**— 'एतस्योत्तरतो लोको वरुणस्यायमद्भुतः । अभ्यषिञ्चत तं तत्र वारुणे परमे पदे ॥ रत्नानामब्धिजातानामब्धीनां सरितामपि । सरसां पल्वलानां च वाप्यम्बुस्रोतसां पुनः ॥ जलाशयानां सर्वेषां प्रतीच्याश्चापि वै दिशः । अधीश्वरः पाशपाणिर्भवेत्सर्वामरप्रियः ॥ इत्थं वरुणलोकस्य स्वरूपं ते निरूपितम् ।' इति ॥

**सभापर्वण्यपि**— 'दिव्यरत्नमयैर्वृक्षैः फलपुष्पप्रदैर्युता । नीलपीतासितश्यामैः सितैर्लोहितकैरपि ॥ अवदातैस्तथा गुल्मैः पुष्पमञ्जरिधारिभिः । तस्यां तथा शकुनयो नानारूपा मृदुस्वनाः ॥ सा सभा सुखसंस्पर्शा न शीता न च घर्मदा । वेश्मासनवती रम्या सिता वरुणपालिता ॥ यस्यामास्ते स वरुणो वारुण्या सह भारत । दिव्यरत्नाम्बरधरो भूषणैरुपशोभितः ॥ स्रग्विणो भूषिताश्चापि दिव्यमाल्यप्रकर्षिणः ।' इति ॥

**वायुलोकैश्वर्यमपि काशीखण्डे**— 'इमां गन्धवतीं रम्यां पुरीं वायोर्विलोकय । वारुण्या उत्तरे भागे महाभाग्यनिधेर्द्विज ॥ अस्यां प्रभञ्जनो नाम जगत्प्राणो दिगीश्वरः । आराध्य श्रीमहादेवं दिक्पालत्वमवाप्तवान् ॥ इति गन्धवतीपुर्याः स्वरूपं ते निरूपितम् ।' इति ॥

**कुबेरैश्वर्यं सभापर्वणि**— 'दिव्यहेममयैरभ्रैर्विद्युद्भिरिव चित्रिता । तस्यां वैश्रवणो राजा विचित्राभरणाम्बरः ॥ स्त्रीसहस्रैर्वृतः श्रीमानास्ते ज्वलितकुण्डलः । दिवाकरनिभे पुण्ये दिव्यास्तरणसंवृते । दिव्यपादोपधाने च निषण्णः परमासने ॥ मन्दारा-

णामुदाराणां वनानि परिलोडयन् । सौगन्धिकानां चादाय गन्धान् गन्धवहः शुभः ॥ अनिशं गीतवादित्रैर्नृत्यैर्दिव्यैश्च सा सभा । अशून्या रुचिरा भाति गन्धर्वाप्सरसां गणैः ॥ निधिप्रवरमुख्यौ च शङ्खपद्मौ धनेश्वरौ । सर्वान्निधीन्पुरस्कृत्य उपास्तां वै धनेश्वरम् ॥' इति ॥

ईशानैश्वर्यं च काशीखण्डे— 'अलकायाः पुरोभागे पूरैशानी महोदया । अस्यां वसन्ति सततं रुद्रभक्तास्तपोधनाः ॥ असङ्ख्याताः सहस्राणि ये रुद्रा अधिभूतलम् । तेऽस्यां पुर्यां वसन्त्यैश्यां सर्वभोगसमृद्धयः ॥' इति ॥

इन्द्रलोकैश्वर्यं वनपर्वणि— धर्मपुत्रं प्रत्यर्जुनः— 'ततः शक्रस्य भवनमपश्यममरावतीम् । दिव्यैः कामफलैर्वृक्षै रत्नैश्च समलङ्कृताम् ॥ न तत्र सूर्यस्तपति न शीतोष्णे न च क्लमः । न बाधते तत्र रजस्तत्रास्ति न जरा नृप ॥ न तत्र शोको दैन्यं वा दौर्बल्यं चोपलक्ष्यते । दिवौकसां महाराज न ग्लानिररिमर्दन ॥ न क्रोधलोभौ तत्रास्तां शुभर्धीनां [सुरादीनां] विशांपते । नित्यं तुष्टाश्च ते राजन् प्राणिनः सुरवेश्मनि । नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः ॥ पुष्करिण्यश्च विविधाः पद्मसौगन्धिकायुताः । शीतलश्च सुखो वायुः सुगन्धो जीवनः शुचिः । सर्वरत्नविचित्रा च भूमिः पुष्पविभूषिता । मृगद्विजाश्च बहवो रुचिरा मधुरस्वनाः ॥ विमानगामिनश्चात्र दृश्यन्ते बहवोऽम्बरे । ततोऽपश्यं वसून् रुद्रान्साध्यांश्च समरुद्गणान् ॥ आदित्यानश्विनौ चैव तान्सर्वान्प्रत्यपूजयम् ॥' इति ॥

आनुशासनिकेऽपि— ‘ततो ददर्श नृपतिः प्रासादं सर्वकाञ्चनम् । मणिस्तम्भसहस्राढ्यं गन्धर्वनगरोपमम् ॥ विमानप्रतिमांश्चापि प्रासादान् शैलसन्निभान् । शीतलानि च तोयानि क्वचिदुष्णानि भारत ॥ आसनानि विचित्राणि शयनप्रवराणि च । पर्यङ्कान् रत्नसौवर्णान् परार्घ्यास्तरणानि च ॥ भक्ष्यं भोज्यमनन्तं च तत्र तत्रोपकल्पितम् । पर्वतान् रत्नसानूंश्च नलिनीश्च सपङ्कजाः ॥ क्वचिदप्सरसां सङ्घान् गन्धर्वाणां च भारत । कान्ताभिरपरांस्तत्र परिष्वक्तान्ददर्श ह ॥’ इति ॥

काशीखण्डेऽपि— ‘अश्वमेधसहस्रस्य लभ्यं विनिमयेन यत् । किं तेन तुल्यमन्यत्स्यात् पवित्रमथवा महत् ॥ अर्चिष्मती संयमनी पुण्यवत्यमलावती । गन्धवत्यलकैशी च नैतत्तुल्या महर्द्धिभिः ॥ अयमेव सहस्राक्षस्त्वयमेव दिवस्पतिः । शतमन्युरयं देवो नामान्येतानि नान्यतः ॥ सप्तापि लोकपाला ये त एनं समुपासते । नारदाद्यैर्मुनिवरैरयमाशीर्भिरीड्यते ॥ निष्प्रत्यूहं क्रतुशतं यः कश्चित्कुरुतेऽवनौ । जितेन्द्रियोऽमरावत्यां स प्राप्नोति पुलोमजाम् । असमाप्तक्रतुशता वसन्त्यत्र महीभुजः ॥ ज्योतिष्टोमादिभिर्यज्ञैर्ये यजन्त्यपि ते द्विजाः ॥’ इति ॥

ब्रह्मलोकैश्वर्यं सभापर्वणि— ‘सुसुखा सा सभा राजन्न शीता न च घर्मदा । न क्षुत्पिपासे न ग्लानिं प्राप्य तां प्राप्नुवन्त्युत ॥ नानारूपैः कृता वर्णैः सुविचित्रैः सुभास्वरैः । स्तम्भैर्न च धृता सा तु शाश्वती न च सा क्षरा ॥ दिव्यैर्नानाविधैर्भावैर्भासद्भिरमितप्रभैः । अति चन्द्रं च सूर्यं च शिखिनं च

स्वयंप्रभा ॥ दीप्यते नाकपृष्ठस्था भर्त्सयन्ती च भास्करम् । यस्यां स भगवानास्ते विभ्रद्देहममानुषम् । स्वयमेकोऽनिशं राजन् सर्वलोकपितामहः ॥ उपतिष्ठन्ति चाप्येनं प्रजानां पतयः प्रभुम् । दक्षः प्रचेताः पुलहो मरीचिः कश्यपस्तथा । एते चान्ये च बहवो ब्रह्माणं समुपस्थिताः । अर्थो धर्मश्च कामश्च हर्षो द्वेषस्त[पो]मो दमः ॥ आयान्ति तस्यां सहसा गन्धर्वाप्सरसां गणाः । विशान्ति[विंशतिः]सप्त चैवान्ये लोकपालाश्च सर्वशः । शुक्रो बृहस्पतिश्चैव बुधोऽङ्गारक एव च ॥ शनैश्चरश्च राहुश्च ग्रहास्सर्वे तथैव च । मन्त्रो रथन्तरं चैव हरिमान्वसुमानपि । आदित्याः साधिराजानो नामद्वन्द्वैरुदाहृताः । मरुतो विश्वकर्मा च वसवश्चैव भारत ॥ यच्च किंच त्रिलोकेऽस्मिन्दृश्यते स्थाणु जङ्गमम् । सर्वं तस्यां मया दृष्टमिति विद्धि नराधिप । सर्वतेजोमयी दिव्या ब्रह्मर्षिगणसेविता । ब्राह्मया श्रिया दीप्यमाना शुशुभे विगतक्लमा ॥ सा सभा तादृशी दृष्टा मया लोकेषु दुर्लभा । सभेयं राजशार्दूल मनुष्येषु यथा तव ॥' इति ॥

इत्थमत्युत्कृष्टं लोकपालैश्वर्यम्, ततोऽप्यधिकं ब्रह्मण ऐश्वर्यम्, पुष्पकम्, ऐहिकामुष्मिकं सुखं च 'तपस्समाराधनपराक्रमार्जितम्' इति श्लोकोक्तरीत्या रावणस्तपोमहिम्ना अत्रैवोपभुङ्क्ते इत्युक्त्या तपसो दुर्लभं न किञ्चिदपि इति सूचितम् । तथा च मनुः— 'यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम् । तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥' इति ॥

ततो मदिरासमास्वादनविवशं रतिपतिसमितिपरिश्रमोप-

शान्तस्वभावं निश्शब्दमरालालिपटलं काञ्चनपङ्कजवनमिव तदङ्ग-नासमूहमवलोक्य—

तासां संवृतदन्तानि मीलिताक्षाणि मारुतिः ।
अपश्यत्पद्मगन्धीनि वदनानि सुयोषिताम् ॥

प्रबुद्धानीव पद्मानि तासां भूत्वा क्षपाक्षये ।
पुनः संवृतपत्राणि रात्राविव बभुस्तदा ॥

इमानि मुखपद्मानि नियतं मत्तषट्पदाः ।
अम्बुजानीव फुल्लानि प्रार्थयन्ते पुनः पुनः ॥

अत्र आसां मुखानि पद्मगन्धीनि, अत एव एतानि भ्रमराः प्रार्थयन्ते इत्युक्तया तासां स्त्रीणां पद्मिनी-चित्रिणी-शङ्खिनी-हस्तिनीति जातिचतुष्टयमध्ये पद्मिनीजातित्वं सूचितम् । तज्जातिचतुष्टयं, पद्मिन्याः सर्वोत्कृष्टत्वं तल्लक्षणं चानङ्गरङ्गादौ । तत्र— 'पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा । पूर्वपूर्वतरास्तासु श्रेष्ठास्तल्लक्ष्म चक्ष्महे ॥'

तत्र पद्मिनी— पद्मगन्धवदना सुकपोला मन्दगा तनुषडङ्गुलगुह्या । दानधर्मनिरता कृतपुण्या पद्मिनी विबुधभाषणलोला ॥ कुमुदविमलनेत्रा कुन्ददन्ताभिरामा वलियुततनुमध्या वक्रदीर्घोरुकेशा । अतिमृदुतरनासावक्त्रहस्ताङ्घ्रियुग्मा घनकुचसुनितम्बा पद्मिनी कामिनी स्यात् ॥ शुभ्रवस्तुप्रिया धीरा मुक्ताभरणभूषिता । श्वेतवस्त्रप्रिया रम्या मधुराहारसेविनी ॥' इत्यादि ॥

स्मरदीपिकायामपि— 'शशिवदना बिम्बोष्ठी तन्वी

ताम्रनखी तथा । मृद्वङ्गी लज्जिता श्यामा रक्तोपान्तविलोचना ॥ गायनी सुरताढ्या च पारावतकलस्वना । स्वल्पाहारा सुकेशी च पद्मगन्धा च पद्मिनी ॥' इति ॥

अनङ्गरङ्गे— 'कान्तारक्तकुरङ्गशावनयना पूर्णेन्दुतुल्यानना पीनोत्तुङ्गकुचा शिरीषमृदुला स्वल्पाशना दक्षिणा । फुल्लाम्भोजसुगन्धिकामसलिला लज्जावती मानिनी श्यामा कापि सुवर्णपङ्कजनिभा देवादिपूजारता ॥ उन्निद्राम्बुजकोशतुल्यमदनच्छत्रा मरालस्वना तन्वी हंसवधूगतिः सुललितं वेषं सदा बिभ्रती । मध्यं चारुवलित्रयाङ्कितमसौ शुक्लाम्बराकाङ्क्षिणी सुग्रीवा शुभनासिकेति गदिता नार्युत्तमा पद्मिनी ॥' इति ॥

चित्रिणी चानङ्गरङ्गे— 'तन्वङ्गी गजगामिनी चपलदृक् सङ्गीतशिल्पान्विता नो ह्रस्वा न बृहत्तराथ सुकृशा मध्ये मयूरस्वना । पीनश्रोणिपयोधरा सुललिते जङ्घे वहन्ती कृशे कामांभो मधुगन्धि कोष्णमधुरा तुच्छोन्नता वत्सला ॥ कामागारमसान्द्रलोमसहितं मध्ये मृदु प्रायशो बिभ्रत्फुल्लसितं च वर्तुलमथो रत्यम्बुनाढ्यं सदा । भृङ्गश्यामलकुन्तलाथ जलजग्रीवोपभोगे रता चित्रा शक्तिमती रतेऽल्परुचिका ज्ञेयाङ्गना चित्रिणी ॥' इति ॥

शङ्खिनी चानङ्गरङ्गे– 'दीर्घं बाहुशिरस्तथा कृशमथो देहं वहन्ती सदा पादौ दीर्घतरौ कटी च बृहती स्वल्पस्तनी कोपिनी । गुह्यं क्षारविगन्धिना स्मरजलेनाल्पेन सांद्रैः कचैरानिम्ना कुटिलेक्षणा द्रुतगतिः सन्तप्तगात्रा भृशम् ॥ सम्भोगे करजक्षतानि

बहुशो यच्छत्यनङ्गाकुला न स्तोकं न च भूरि भक्षति सदा प्रायो भवेत्पित्तला ।' इति ॥

हस्तिनीलक्षणं चानङ्गरङ्गे— 'स्थूला पिङ्गलकुन्तला च बहुभुक् क्रूरा त्रपावर्जिता गौराङ्गी कुटिलाङ्गुली कुचरणा ह्रस्वा महाकन्धरा। बिभ्रत्यैभमदाम्बुगन्धि रतिजं तोयं भृशं मन्दगा दुस्साध्या सुरतेऽतिगद्गदरवा स्थूलोष्ठिका हस्तिनी ॥' इति। एतासां परस्परसाङ्कर्यप्रयुक्ततया बहवो भेदा दृश्यन्ते। तथापि विस्तरभियोपरम्यते। एवं च रावणस्त्रियः पद्मगन्धित्वात्पद्मिन्य एव ॥

एवमेव कालिदासेनापि व्यङ्ग्यमर्यादया शकुन्तलायाः पद्मिनीत्वमुक्तम्। यथा—

'चलापाङ्गं दृष्टिः स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करौ व्याधून्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥' इति ॥

ननु धर्मनिरूपणाय प्रवृत्ते रामायणे कामपुरुषार्थोपयुक्तपद्मिन्यादिजातिनिरूपणमसङ्गतमिति चेन्न। स्वभावतो दुष्टानां स्त्रीणां संरक्षणेन विना धर्मानवाप्तेस्तत्संरक्षणस्य च वधबन्धादिभिः कर्तुमयुक्तत्वात् तच्चित्तसमाधानेनैव कर्तव्यत्वात् चित्तसमाधानोपायस्य च पद्मिन्यादिजातिभेदेन भिन्नत्वादस्ति पद्मिन्यादिजातिभेदनिरूपणस्य पारम्पर्येण धर्मोपयोगः। तथाहि। तत्र स्त्रीषु दोषस्तावद्भारते— 'आहारो द्विगुणः स्त्रीणां लज्जा तासां चतुर्गुणा। षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥

चलस्वभावा दुस्सेव्या दुर्ग्राह्या भावतस्तथा । प्राज्ञस्य पुरुषस्येह यथा वाचस्तथा स्त्रियः ॥ स्थानं नास्ति क्षणं नास्ति नास्ति प्रार्थयिता नरः । तेन नारद नारीणां सतीत्वमुपजायते ॥ शम्बरस्य च या माया या माया नमुचेरपि । बलेः कुम्भीनसेश्चैव सर्वास्ता योषितो विदुः ॥ न हि स्त्रीभ्यः परं तात पापीयः किञ्चिदस्ति हि । अग्निर्हि प्रमदा दीप्तो मायाश्च मयजा विभो ॥ क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः ।' इति ॥

**मनुरपि**— 'नैता रूपं परीक्षन्ते नासां वयसि निश्चयः । विरूपं वा सुरूपं वा पुमानित्येव भुञ्जते ॥ पौंश्चल्याच्चलचित्ताच्च नैःस्नेह्याच्च स्वभावतः । रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥' इति । ननु तर्हि दुष्टत्वे परित्याज्या एव स्युः, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायादिति चेन्न । तासां परित्यागे प्रत्यवायश्रवणात्, धर्मावाप्तेः प्रत्यवायपरिहारस्य च तदधीनत्वाच्चापरिहार्या एव ताः । प्रत्यवायस्तावत्स्मृतौ— 'अदुष्टां विनतां भार्यां यौवने यः परित्यजेत् । सप्तजन्म भवेत्स्त्रीत्वं वैधव्यं च पुनः पुनः ॥' इति ॥

धर्मसाधनत्वं च **मानवे**—

'प्रजनार्थे महाभागाः पूजार्हा गृहदीप्तयः । स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥ उत्पादनमपत्यस्य जातस्य परिपालनम् । प्रत्यहं लोकयात्रा च प्रत्यक्षं स्त्रीनिबन्धनम् । अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा । दाराधीनस्तथा स्वर्गः पितृणामात्मनश्च ह ॥' इति । प्रत्यवायपरिहारस्य भार्याधीनत्वं च—

'नापुत्रस्य लोकोऽस्ति' 'प्रजया पितृभ्यः' इति शास्त्रावगतापुत्रत्व-प्रयुक्तप्रत्यवायपरिहारस्य भार्याधीनत्वात्। तथा च **भारते** जरत्कारूपाख्याने— 'लोकात्पुण्यादिह भ्रष्टाः सन्तानप्रक्षया-द्विभो। प्रणष्टं नस्तपःपुण्यं न हि नस्तन्तुरस्ति वै॥ जरत्कारु-रिति ख्यातो वेदवेदाङ्गपारगः। न तस्य भार्या पुत्रो वा बान्धवो वाऽस्ति कश्चन॥ तस्माल्लम्बामहे गर्ते नष्टसंज्ञा ह्यनाथवत्। सन्तानप्रक्षयात्त्वस्मिन्पतामो नरकेऽशुचौ॥' इति। अतः अप-रित्यागेन रक्षणीया एव, अरक्षणे दोषश्रवणात्। तथा च **मनुः**—

'द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः।' इति।

रक्षणे च गुणमाह **मनुः**— 'सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः। इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम्। यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि॥ स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च। स्वं च धर्मं प्रजां चैव जायां रक्षन्हि रक्षति॥' इति। **आपस्तम्बोऽपि**— 'इदानीमेवाहं जनकः स्त्रीणा-मीर्ष्यामि नो पुरा। यदा यमस्य सादने जनयितुः पुत्रमब्रुवन्॥ रेतोधाः पुत्रं नयति परेत्य यमसादने। तस्माद्भार्यां रक्षन्ति बिभ्यन्तः पररेतसः॥' इति। **याज्ञवल्क्योऽपि**— 'याथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्। स्वदारनिरतश्चैव स्त्रियो रक्ष्या विशेषतः॥' इति। तद्रक्षणं च वधबन्धादिभिरशक्यं न कर्तव्यम्। तथा **चानुशासनिके**— 'न भयान्नाप्यनुक्रोशान्नार्थ-हेतोः कथंचन। न ज्ञातिकुलसम्बन्धात्स्त्रियस्तिष्ठन्ति भर्तृषु॥ बाचा वा वधबन्धैर्वा क्लेशैर्वा विविधैस्तथा। न शक्या रक्षितुं नार्यस्ता हि नित्यमतन्द्रिताः॥' इति॥

निर्बन्धने स्वस्यानर्थमाह **मनुः**—

'पौंश्चल्याच्चलचित्ताच्च नैःस्नेह्याच्च स्वभावतः। रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥' अस्यार्थः– पौंश्चल्यात् पुंमात्रदर्शनेन मैथुनेच्छावत्त्वात् स्वभावतो निःस्नेहत्वाच्च भर्त्रादिभिर्यत्नतो रक्षिता अपि पुरुषेच्छया भर्तृषु विकुर्वते मरणादिविक्रियां कुर्वते इति। वधबन्धनादि न कर्तव्यमित्यत्रापि **मनुः**— 'शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम्। न शोचन्ति तु यत्रैता वर्धते तद्धि सर्वदा ॥ जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः। तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥' इति। अतस्तासां समाधानेन रक्षणं कर्तव्यम्। तदपि **मानवे**— 'तस्मादेताः सदाभ्यर्च्या भूषणाच्छादनाशनैः। भूतिकामैर्नरैर्नित्यं सत्कारेणोत्सवेन च ॥ पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा। पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥ यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः। यत्रैतास्तु न पूज्यन्ते सर्वास्ता निष्फलाः क्रियाः ॥' इति। **स्मरदीपिकायामपि**— 'सत्सम्प्रदानैर्मधुरैर्वचोभिस्सा रक्षितव्या तरुणी सदैव। अरक्षिता ह्यात्मपतेस्त्रिवर्गं नष्टं करोत्यन्यजनानुरागात् ॥' इति। प्रीतिरपि न केवलं भूषणाच्छादनादिभिः, अपि तर्हि रत्यैव। तथा **चानुशासनिके**—

'न कामभोगान्विपुलान्नालङ्कारान्न संश्रयान्। तथैव बहुमन्यन्ते यथा रत्यामनुग्रहम् ॥' इति। तादृशरतिकरणं न दिवा निषिद्धम्, 'प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते' इति श्रुतेः। 'अहन्यसंवेशनम्' इति स्मृतेश्च।

अतो रतिं विना प्रकारान्तरेण दिवा सन्तोषजननोपायमाह मनुः— 'अर्थस्य सङ्ग्रहे चैनां व्यये चैव नियोजयेत् । शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य चेक्षणे ॥' इति । रात्रौ प्रीत्युत्पादनप्रकारमाह(तच्छेषे)बोधायनः—'तस्य सह पत्न्या पूर्वरात्रावुपसंवेशनम्, अर्धरात्रादधः शयनमा ब्राह्ममुहूर्तात्' इति ॥

इत्थमलङ्करणसहशयनादिमात्रेण पुरुषापेक्षया अष्टगुणितकामयुक्तायाः स्त्रियाः न तृप्तिः कर्तुं शक्या । किन्तु शुक्लकृष्णपक्षभेदेन प्रथमादितिथिभेदेन पद्मिन्यादिजातिभेदेन च चन्द्रकलास्थानं शास्त्रतो निश्चित्य तत्तत्स्थानेषूचितक्रियया कलाद्रावणेन सन्तोषणीया । तदुक्तम्— 'प्रागेव पुंसः सुरते न यावन्नारी द्रवेद्भोगफलं न तावत् । अतो बुधैः कामकलाविदग्धैः कार्यः प्रयत्नो वनिताद्रवत्वे ॥ कामशास्त्रस्य तत्वज्ञा जायन्ते सुन्दरीप्रियाः । एतच्छास्त्रमजानन्तो रमन्ते पशुवत्स्त्रियम् ॥' इति । जातिभेदेन तिथिभेदेन च चन्द्रकला अनङ्गरङ्गे— तत्रादौ पद्मिन्याश्चन्द्रकलोच्यते— 'कण्ठे संश्लिष्य गाढं मृदुकरजचयं गण्डपाल्यां नितम्बे पृष्ठे पार्श्वोदरे वै विदधदथ रदैः खण्डयन्दन्तवासः । प्रेम्णा चुम्बन्ललाटं वपुषि च जनयन् रोमहर्षं नितान्तं सीत्कारप्रायवक्त्रां प्रतिपदि नलिनीं द्रावयेत्तां विदग्धः ॥' [अथ चित्रिण्याश्चन्द्रकला—] 'कण्ठे संपरिरभ्य बाहुलतया नाभिं लिखन्पाणिजैर्दष्ट्वा चापि रदच्छदं सपुलकं गृह्णन्नुरोजद्वयम् । कुर्वन्मन्मथमन्दिरे करिकरक्रीडायितं बुद्धिमानष्टम्यां स्मरवारिनिर्झरवतीं कुर्वीत चित्रप्रियाम् ॥' इति ॥

अथ शङ्खिन्याश्चन्द्रकला— 'बाहुभ्यां परिरभ्य गाढमधरं दन्तैर्दशन्निर्दयं दोर्मूले खरपाणिजक्षतचयं यच्छन्यथेष्टं भृशम्। सङ्कुर्वंश्छुरितं कुचद्वयतटे नूनं तृतीयास्वलं मुक्तानङ्गजलां स्वकीयवशगां कुर्यान्नरः शङ्खिनीम्॥' इति। अथ हस्तिन्याश्चन्द्रकला— 'नयने परिचुम्ब्य कक्षयोर्नखराघातरतः स्मरालये। रचयन्करिकेलिमानयेत्स्ववशं शम्भुतिथौ द्विपाङ्गनाम्॥' इति॥

पक्षभेदेन पद्मिन्यादीनां साधारण्येन चन्द्रकलास्थानं तद्द्रावणप्रकारश्चानङ्गरङ्गे— 'सीमन्ताक्ष्यधरे कपोलगलके कक्षे कुचोरस्स्थले नाभिश्रोणिवरांगजानुविषये गुल्फे पदेऽङ्गुष्ठके। शुक्लाशुक्लविभागतो मनसिजस्तिष्ठेत्क्रमाद्योषितां वामाङ्गेष्वध ऊर्ध्वतोऽभिगमनान्मासस्य पक्षद्वये॥ सीमन्ते करजक्षतं च नयने गण्डे च संचुम्बनं दन्तेनाधरखण्डनं च नखरैः कक्षांसकण्ठान् लिखेत्। श्रोणिं चापि कचं करेण सुदृढं गृह्णीत नाभौ पुनः संदद्यात्तु चपेटकं स्मरगृहे मातङ्गलीलायितम्॥ कुर्याद्वक्षसि ताडनं च शनकैर्मुष्ट्यासकृद्बुद्धिमान् जान्वङ्गुष्ठपदेषु गुल्फविषये दौरात्म्यतो घातनम्। इत्थं चन्द्रकलाप्रदीपनपरा रागान्वितां भोगिनीं नीत्वा स्वीयवशं कुरङ्गनयनां विन्दन्ति सौख्यं परम्॥' इति। 'इति प्रसिद्धाः कतिचित्प्रदिष्टाः क्रमान्मया बाह्यरतप्रचाराः। प्रसिद्धभावा बहुशः परत्र न दर्शिता विस्तरशङ्कयैव॥' तथा च सन्निधानेऽलङ्करणाभिमतरत्याचरणादिभिः प्रीतिजननेन संरक्षणीयाः। असन्निधाने रक्षणप्रकारमाहापस्तम्बः— 'असम्भवेप्सुः परेषां स्थूलाढारिकाजीवचूर्णानि कारयित्वा उत्तरया सुप्तायाः संबाधे उपवपेत्।

सिद्ध्यर्थे बभ्रूमूत्रेण प्रक्षालयीत' इति। तत्रानाकुला—" सम्भवो मैथुनम्। दृश्यते च 'काममाविजनितोः सम्भवाम' इति। तद्भावेप्सुरसम्भवेप्सुः परेषां पुरुषाणामसम्भवमिच्छन् स्थूलाढारिकायाः सरीसृपविशेषायाः शतचरणाभिधायाः जीवन्त्याश्चूर्णानि कर्मकरैः कारयित्वा तानि चूर्णानि संबाधे उपस्थे स्वपन्त्या भार्याया उपवपेत् उत्तरया ऋचा 'अवज्यामिव धन्वने' इत्येतया। एवं सति संबाध उपभोगयोग्यो न भवति। 'सिद्ध्यर्थे बभ्रूमूत्रेण प्रक्षालयीत'। सिद्ध्यर्थे कार्यसिद्ध्यर्थे उपभोगयोग्यतायामपेक्षितायां योषित इत्यर्थः। तदा बभ्रूमूत्रेण संबाधस्य प्रक्षालनं कर्तव्यम्। इदमत्र भेषजमित्यर्थः। बभ्रूः कपिलवर्णा गौः ॥'

इत्थमहनि रात्रौ प्रवासे च प्रीतिजननपूर्वकतया कृते संरक्षणे च परस्परसन्तोषात्त्रिवर्गाभिवृद्धिर्भवति। तथा च मनुः—'सन्तुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च। यस्मिन्नेतत्कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥' इति। 'यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र एधते।' इति च। एवं च उत्कृष्टधर्मभूतस्त्रीरक्षणायाभिमतरत्या प्रीतिजननं तत्तज्जात्युचितचेष्टा-[परिज्ञान]मन्तरा नेति तदर्थतया तज्जातिनिरूपणं धर्मोपयुक्तं भवत्येवेति। एवंतात्पर्येण महर्षिणा कृतं पद्मिन्यादिजातिनिरूपणं धर्मोपयुक्तं भवत्येवेति युक्तमेव ॥

सा तस्य शुशुभे शाला ताभिः स्त्रीभिर्विराजिता।
शारदीव प्रसन्ना द्यौस्ताराभिरभिशोभिता ॥

स च ताभिः परिवृतः शुशुभे राक्षसाधिप ।
यथा ह्युडुपतिः श्रीमांस्ताराभिरभिसंवृतः ॥

प्रध्याश्चत इवापश्यत्प्रदीपांस्तत्र काञ्चनान् ।
धूर्तानिव महाधूर्तैर्देवनेन पराजितान् ॥

अत्र काञ्चनस्तम्भान्निश्चलत्वेन प्रध्यायत इव स्थितान्महाधूर्तैर्द्यूते वंचितान् कृत्याकृत्यविवेकविधुरान्निश्चेष्टान्धूर्तानिव दीपानपश्यदित्युक्तथा द्यूतस्य सकलानर्थहेतुत्वमुक्तम् । तथा च **कामन्दके**—

'महतोऽपि क्षणान्नाशो धनस्य ह्रीविमुक्तता । निःसत्यता निष्ठुरता क्रोधो वाक्छलखण्डनम् । लोभो धर्मक्रियालोपः कर्मणामप्रवर्तनम् ॥ सत्समागमविच्छित्तिरसाद्भिः सह वर्तनम् । अर्थनाशक्रियावश्यं नित्यं वैरानुबन्धिता ॥ सत्यप्यर्थे निराशत्वमसत्यपि च साशता । प्रतिक्षणं क्रोधहर्षौ सन्तापश्च प्रतिक्षणम् ॥ प्रतिक्षणं च संक्लेशः साक्षिप्रश्नः प्रतिक्षणम् । स्नानादिगात्रसंशुद्धिपरिभोगेष्वनादरः ॥ अव्यायामोऽङ्गदौर्बल्यं शास्त्रस्याप्रत्यवेक्षणम् । गूहनं मूत्रशकृतोः क्षुत्पिपासोपपीडनम् ॥ इत्यादींस्तत्र निपुणा द्यूतदोषान्प्रचक्षते । पाण्डवो धर्मराजस्तु लोकपाल इवापरः ॥ द्यूतेन व्यसता दीव्यन्कलत्रापहारितः । नलश्च राजा द्यूतेन हृते राज्ये महोदये ॥ धर्मदारान्वने त्यक्त्वा परकर्माकरोत्प्रभुः । तुल्यो भुवीन्द्रतुल्यस्य यस्य नास्ति धनुर्धरः ॥ स रुक्मी रुक्मशैलाभो द्यूतदोषाद्गतः क्षयम् । राजा काशिकरूशानां दन्तवक्त्रोऽपि मन्दधीः ॥ तीव्रा-

द्यूतकृताद्दोषाद्दन्तभङ्गमवाप्तवान् । द्यूतादनर्थसंरम्भो द्यूतात्स्नेहक्षयो महान् ॥ पक्षाणां संहतानां च द्यूताद्भेदः प्रवर्तते । इति केवलदोषं हि द्यूतं राजा परित्यजेत् ॥' इति ॥

काञ्चनप्रदीपवरनार्याभरणरावणवारवाणप्रभाभिः प्रदीप्तामिव तां मन्वानस्तत्र विचित्रतरकुथासमासीनं निशाकरं ताराप्रकरमिव रावणमभितः समुज्ज्वलद्वरनारीसहस्रमवलोक्य—

**याश्च्यवन्तेऽम्बरात्ताराः पुण्यशेषसमावृताः ।**
**इमास्ताः सङ्गताः कृत्स्ना इति मेने हरिस्तदा ॥**

अनेन पुण्यवतां नक्षत्रलोके नक्षत्ररूपेणावस्थानम् , क्षीणे पुण्ये भूलोके सम्भवश्चोक्तः । तथा च **तैत्तिरीयश्रुतौ**— 'सुकृतां वा एतानि ज्योतीँषि यन्नक्षत्राणि' इति ॥

**मोक्षधर्मेऽपि**— 'व्यस्तमेकं चतुर्धा हि ब्राह्मणा आश्रमं विदुः । तं सन्तो विधिवत्प्राप्य गच्छन्ति परमां गतिम् ॥ गृहेभ्य एव निष्क्रम्य वनमन्ये समाश्रिताः । गृहमेवाभिसंश्रित्य ततोऽन्ये ब्रह्मचारिणः ॥ त एते भुवि(दिवि)दृश्यन्ते ज्योतिर्भूत्वा द्विजातयः । नक्षत्राणीव धिष्ण्येषु बहवस्तारकागणाः ॥ आनन्त्यमुपसम्प्राप्ताः सन्तोषादिति वैदिकम् । यद्यागच्छन्ति संसारं पुनर्योनिषु तादृशाः । न लिप्यन्ते पापकृत्यैः कदाचित्कर्मयोनितः ॥' इति ॥

**वनपर्वण्यर्जुनं प्रति मातलिः**—'(एते सुकृतिनः पार्थ स्वेषु धिष्ण्येष्ववस्थिताः । यान्दृष्टवानसि विभो तारारूपाणि भूतले ॥)

ऊर्ध्वमाचक्रमे धीमान्प्रहृष्टः कुरुनन्दनः । सोऽदर्शनपथं यातो मर्त्यानां भूमिचारिणाम ॥ ददर्शाद्भूतरूपाणि विमानानि सहस्रशः ॥ न तत्र सूर्यः सोमो वा द्योतते न च पावकः । स्वयैव प्रभया तत्र द्योतन्ते पुण्यलब्धया ॥ तारारूपाणि यानीह दृश्यन्ते द्युतिमन्ति वै । दीपवद्विप्रकृष्टत्वात्तनूनि सुमहान्त्यपि ॥ तानि तत्र प्रभास्वन्ति रूपवन्ति च पाण्डवः। ददर्श स्वेषु धिष्ण्येषु दीपयन्ति स्वयार्चिषा ॥ तत्र राजर्षयः सिद्धा वीराश्च निहता युधि । तपसा च जितस्वर्गाः संपेतुः शतसङ्घशः ॥ गन्धर्वाणां सहस्राणि सूर्यज्वलनतेजसाम् । गुह्यकानामृषीणां च तथैवाप्सरसां गणाः ॥ लोकानात्मप्रभान्पश्यन्फाल्गुनो विस्मयान्वितः । पप्रच्छ मातलिं प्रीत्या स चाप्येनमुवाच ह । एते सुकृतिनः पार्थ स्वेषु धिष्ण्येष्ववस्थिताः ॥ यान्दृष्टवानसि विभो तारारूपाणि भूतले । ' इति ॥

तारणामिव सुव्यक्तं महतीनां शुभार्चिषाम् ।
प्रभा वर्णप्रसादाश्च विरेजुस्तत्र योषिताम् ॥

व्यावृत्तकचपीनस्रक्प्रकीर्णवरभूषणाः ।
पानव्यायामकालेषु निद्रापहृतचेतसः ॥

व्यावृत्ततिलकाः काश्चित्काश्चिदुद्भ्रान्तनूपुराः ।
पार्श्वे गलितहाराश्च काश्चित्परमयोषितः ॥

अकुण्डलधराश्चान्या विच्छिन्नमृदितस्रजः ।
गजेन्द्रमृदिताः फुल्ला लता इव महावने ॥

चन्द्रांशुकिरणाभाश्च हाराः कासांचिदुत्कटाः ।
हंसा इव बभुः सुप्ताः स्तनमध्येषु योषिताम् ॥

अपरासां च वैडूर्याः कादम्बा इव पक्षिणः ।
हेमसूत्राणि चान्यासां चक्रवाका इवाभवन् ॥

हंसकारण्डवाकीर्णाश्चक्रवाकोपशोभिताः ।
आपगा इव ता रेजुर्जघनैः पुलिनैरिव ॥

किङ्किणीजालसङ्काशास्ता हेमविपुलाम्बुजाः ।
भावग्राहा यशस्तीराः सुप्ता नद्य इवाबभुः ॥

मृदुष्वङ्गेषु कासांचित्कुचाग्रेषु च सुस्थिताः ।
बभूवुर्भूषणानीव शुभा भूषणराजयः ॥

अंशुकान्ताश्च कासांचिन्मुखमारुतकम्पिताः ।
उपर्युपरि वक्त्राणां व्याधूयन्ते पुनः पुनः ॥

ताः पताका इवोद्धूताः पत्नीनां रुचिरप्रभाः ।
नानावर्णाः सुवर्णानां वक्त्रमूलेषु रेजिरे ॥

ववल्गुश्चात्र कासांचित्कुण्डलानि शुभार्चिषाम् ।
मुखमारुतसंसर्गान्मन्दं मन्दं सुयोषिताम् ॥

शर्करासवगन्धैश्च प्रकृत्या सुरभिः सुखः ।
तासां वदननिश्वासः सिषेवे रावणं तदा ॥

रावणाननशङ्काश्च काश्चिद्रावणयोषितः ।
मुखानि स्म सपत्नीनामुपाजिघ्रन् पुनः पुनः ॥

अत्यर्थं सक्तमनसो रावणे ता वरस्त्रियः ।
अस्वतन्त्राः सपत्नीनां प्रियमेवाचरंस्तदा ॥

बाहूनुपनिधायान्याः पारिहार्यविभूषितान् ।
अंशुकानि च रम्याणि प्रमदास्तत्र शिश्यिरे ॥

अन्या वक्षसि चान्यस्यास्तस्याः काश्चित्पुनर्भुजम् ।
अपरा त्वङ्कमन्यस्यास्तस्याश्चाप्यपरा भुजौ ॥

ऊरुपार्श्वकटीपृष्ठमन्योन्यस्याः समाश्रिताः ।
परस्परनिविष्टाङ्ग्यो मदस्नेहवशानुगाः ॥

अन्योन्यस्याङ्गसंस्पर्शात्प्रीयमाणाः सुमध्यमाः ।
एकीकृतभुजाः सर्वाः सुषुपुस्तत्र योषितः ॥

अन्योन्यभुजसूत्रेण स्त्रीमाला ग्रथिता हि सा ।
मालेव ग्रथिता सूत्रे शुशुभे मत्तषट्पदा ॥

लतानां माधवे मासि फुल्लानां वायुसेवनात् ।
अन्योन्यमालाग्रथितं संसक्तकुसुमोच्चयम् ॥

व्यतिवेष्टितसुस्कन्धमन्योन्यभ्रमराकुलम् ।
आसीद्वनमिवोद्धूतं स्त्रीवनं रावणस्य तत् ॥

अत्र रावणे अत्यन्तासक्तमनसः स्त्रियो मदपारवश्यात्परस्परं रावणं मन्यमाना अन्योन्यालिङ्गनादिभिर्द्विष्यमा(णमपि) [णा अपि]सपत्नीनां हितमेवाचरितवत्य इत्युक्तम् ॥

तच्चालिङ्गनं सुरतारम्भे कर्तव्यम् । तथा चानङ्गरङ्गे —

'मतिमानुपभोगपूर्वकं सुरतं संविदधीत कान्तया । परिरम्भणमेव पण्डितैः प्रथमं[तेषु]तच्च निगद्यतेऽष्टधा ॥' तद्भेदाश्च तत्रैव–'वृक्षाधिरूढं तिलतण्डुलाख्यं लालाटिकं जाघनविद्धके च। ऊरूपगूढाह्वयदुग्धनीरे तच्चाष्टमं वल्लरिवेष्टितं स्यात्॥' इति॥

तत्र एकेन पदेन भर्तुः पदं पदान्तरेण तदूरुं चाधिरुह्य यत्परिरम्भणं तद्वृक्षाधिरूढमित्युच्यते । तथा चानङ्गरङ्गे–'चरणकमलमेकेनाङ्घ्रिणाक्रम्य भर्तुः अपरपदसरोजेनाश्रयन्ती तदूरुम्। तरुमिव भुजवल्ल्यापीड्य चुम्बेन्नताङ्गी कथितमिह मुनीन्द्रैस्तद्धि वृक्षाधिरूढम् ॥' इति ॥

अन्योन्यविपर्यासेन भुजाभ्यां गुह्यप्रदेशे परिरम्भणं तिलतण्डुलमित्युच्यते । तदुक्तं तत्रैव— 'भुजगुह्यविपर्ययं मिथो घटयेद्यन्मिथुनं सुनिश्चलम् । तिलतण्डुलसंज्ञितं तदा परिरम्भं कथयन्ति सूरयः ॥' इति ॥

परस्परं ललाटाक्षिकपोलवक्त्रहृद्बाह्वादीनामवयवानां घट्टनेनालिङ्गनं लालाटिकमित्युच्यते। तदपि तत्रैव–'मिथो ललाटाक्षिकपोलवक्त्रहृद्बाहुवल्लीर्मिथुनं घटेत । रसातिरेकाद्यदि निस्तरंगं लालाटिकं तत्प्रवदन्ति सन्तः ॥' इति ॥

भार्यया भर्तुः श्रोणीदेशपरिरम्भणं जाघनमित्युच्यते । तदपि तत्रैव— 'जघनपरिसरस्थं श्रोणिदेशं स्वभर्तुर्निजभुजलतिकाभ्यां गाढमालिङ्ग्य रागात् । लुलितवसनकेशा चुम्बनं यत्र कुर्यात्स्फुटमिह परिरम्भं जाघनं तं वदन्ति ॥' इति ॥

पराङ्मुखस्य भर्तुः पृष्ठप्रदेशं कुचाभ्यामाविद्धय आलिङ्गन्त्या नायिकाया भर्तृकृतं परावृत्ताभ्यां भुजाभ्यामालिङ्गनं विद्धकमित्युच्यते । तदपि तत्रैव— 'स्थितं पतिं मीलितनेत्रयुग्मं पश्चात्प्रविद्धयेद्वनिता कुचाभ्याम् । गृह्णात्यसौ तामपि विद्धकाख्यमालिङ्गनं तन्मुनिभिः प्रदिष्टम् ॥' इति ॥

नायिकाया ऊरुद्वयस्य नायकोरुकृतपीडनमूरूपगूढमित्युच्यते । तदुक्तं तत्रैव—'उद्दामकामोन्नमिताङ्गनाया ऊरुद्वयं स्वोरुयुगेन यत्र । आपीडयेत्कान्त उदीरितं तदूरूपगूढं परिरम्भणं हि ॥' इति ॥

समानतल्पस्थिता नायिका स्वाभिमुखं नायकं परस्पराङ्गैकतापादनाय दृढमालिङ्गति यत्तन्नीरक्षीरमित्युच्यते । तदुक्तं चानङ्गरङ्गे— 'अथैकतल्पे पतिसंमुखस्था कान्तं समालिङ्गति यत्र गाढम् । मिथः प्रवेशं कुरुतो निजाङ्गैः स्यात्क्षीरनीरं परिरम्भणं हि ॥' इति ॥

ऋजुतया स्थितस्य पत्युर्नायिकया संवेष्टयालिङ्गनं वल्लरीवेष्टितमित्युच्यते । [तदपि] तत्रैव — 'वल्लीव वृक्षं सरलाङ्गयष्टिं पतिं समालिङ्गति यत्र कान्ता । चुम्बेत रागात्कृतमन्दसीत्का प्रोक्तं बुधैर्वल्लरिवेष्टितं तत् ॥' इति ॥

**उदितेष्वपि सुव्यक्तं न तासां योषितां तदा ।**
**विवेकः शक्य आधातुं भूषणाङ्गाम्बरस्रजाम् ॥**
**युद्धकामेन ताः सर्वा रावणेन हृताः स्त्रियः ।**
**समदा मदनेनैव मोहिताः काश्चिदागताः ॥**

न तत्र काश्चित्प्रमदाः प्रसह्य
वीर्योपपन्नेन गुणेन लब्धाः ।
न चान्यकामापि न चान्यपूर्वा
विना वरार्हां जनकात्मजां ताम् ॥

न चाकुलीना न च हीनरूपा
नादक्षिणा नानुपचारयुक्ता ।
भार्याऽभवत्तस्य न हीनसत्वा
न चापि कान्तस्य न कामनीया ॥

बभूव बुद्धिस्तु हरीश्वरस्य
यदीदृशी राघवधर्मपत्नी ।
इमा यथा राक्षसराजभार्याः
सुजातमस्येति हि साधुबुद्धेः ॥

पुनश्च सोऽचिन्तयदार्तरूपो
ध्रुवं विशिष्टा गुणतो हि सीता ।
अथायमस्यां कृतवान्महात्मा
लङ्केश्वरः कष्टमनार्यकर्म ॥

इति नवमः सर्गः ।

---

## अथ दशमः सर्गः ।

---

**दशमे**— तत्र सीतामनवेक्षमाणो हनुमान् हाटकस्फटिक-
निर्मलवैडूर्यादिविविधमणिगणकिरणोत्करदेदीप्यमाने समुपस्थित-

कुमुदबान्धवबन्धुदिव्यश्वेतातपत्रे उभयपार्श्वसमवस्थितबृन्दारकसुन्दरीकरपल्लवविलसच्चामरद्वयसंवीज्यमाने विलसदशोककुसुमदामसंवीते दशाङ्गगुग्गुलुकालागरुमुखगन्धबन्धुरधूपसंचारे मृगमदघनसारसौरभनिर्भरपाटीरद्रवपूरितमणिचषकपरम्परापर्यन्ते प्रफुल्लमल्लिकामाधवीकुसुमपरिकल्पितकोमलास्तरणे शयने शयानम्—

**लोहिताक्षं महाबाहुं महारजतवाससम् ।**
**लोहितेनानुलिप्ताङ्गं चन्दनेन सुगन्धिना ॥**

**क्रीडित्वोपरतं रात्रौ वराभरणभूषितम् ।**
**प्रियं राक्षसकन्यानां राक्षसानां सुखावहम् ॥**

**आसाद्य परमोद्विग्नः सोऽपासर्पत भीतवत् ।**

अनेन राज्ञां तेज इतराभिभावकं भवतीति सूचितम । तथा च **कालिदासः**— 'द्वारे नियुक्तपुरुषानुमतप्रवेशः सिंहासनान्तिकचरेण सहोपसर्पन् । तेजोभिरस्य विनिवर्तितदृष्टिपातैर्वाक्यादृते पुनरिव प्रतिवारितोऽस्मि ॥' इति ॥

**राजधर्मेऽपि**— 'यस्मादेषां सुरेन्द्राणां सम्भवत्यंशको नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ तपत्यादित्यवत्त्वेष चक्षूंषि च मनांसि च । न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥' इति ॥

ततो वेदिकान्तरमास्थाय तदीयविक्रमसंचितां भूतिम्,

**ऐरावतविषाणाग्रैरापीडितकृतव्रणौ ।**
**वज्रोल्लिखितपीनांसौ विष्णुचक्रपरिक्षतौ ॥**

संहतौ परिघाकारौ वृत्तौ करिकरोपमौ ।
यक्षपन्नगगन्धर्वदेवदानवराविणौ ॥

भुजौ चालोक्य विस्मितमानसस्तद्गृहमुखान्निष्क्रम्य तत्र—

मद्व्यायामखिन्नास्ता राक्षसेन्द्रस्य योषितः ।
तेषु तेष्ववकाशेषु प्रसुप्तास्तनुमध्यमाः ॥

अङ्गहारैस्तथैवान्या कोमलैर्नृत्तशालिनी ।
विन्यस्तशुभसर्वाङ्गी प्रसुप्ता वरवर्णिनी ॥

काचिद्वीणां परिष्वज्य प्रसुप्ता सम्प्रकाशते ।
महानदीप्रकीर्णेव नलिनी पोतमाश्रिता ॥

अन्या कक्षगतेनैव मड्डुकेनासितेक्षणा ।
प्रसुप्ता भामिनी भाति बालपुत्रेव वत्सला ॥

पटहं चारुसर्वाङ्गी पीड्य शेते शुभस्तनी ।
चिरस्य रमणं लब्ध्वा परिष्वज्येव भामिनी ॥

काचिद्वंशं परिष्वज्य सुप्ता कमललोचना ।
रहः प्रियतमं गृह्य सकामेव च कामिनी ॥

विपञ्चीं परिगृह्यान्या नियता नृत्तशालिनी ।
निद्रावशमनुप्राप्ता सहकान्तेव भामिनी ॥

अन्या कनकसङ्काशैर्मृदुपीनैर्मनोरमैः ।
मृदङ्गं परिपीड्याङ्गैः प्रसुप्ता मत्तलोचना ॥

भुजपार्श्वान्तरस्थेन कक्षगेन कृशोदरी ।
पणवेन सहानिन्द्या सुप्ता मदकृतश्रमा ॥

डिण्डिमं परिगृह्यान्या तथैवासक्तडिण्डिमा ।
प्रसुप्ता तरुणं वत्समुपगूह्येव भामिनी ॥

काचिदाडम्बरं नारी भुजसंयोगपीडितम् ।
कृत्वा कमलपत्राक्षी प्रसुप्ता मदमोहिता ॥

कलशीमपविध्यान्या प्रसुप्ता भाति भामिनी ।
वसन्ते पुष्पशबला मालेव परिमार्जिता ॥

पाणिभ्यां च कुचौ काचित्सुवर्णकलशोपमौ ।
उपगूह्याबला सुप्ता निद्राबलपराजिता ॥

अन्या कमलपत्राक्षी पूर्णेन्दुसदृशानना ।
अन्यामालिङ्ग्य सुश्रोणीं प्रसुप्ता मदविह्वला ॥

आतोद्यानि विचित्राणि परिष्वज्यापराः स्त्रियः ।
निपीड्य च कुचैः सुप्ताः कामिन्यः कामुकानिव ॥

तासामेकान्तविन्यस्ते शयानां शयने शुभे ।
ददर्श रूपसम्पन्नामपरां स कपिः स्त्रियम् ॥

मुक्तामणिसमायुक्तैर्भूषणैः सुविभूषिताम् ।
विभूषयन्तीमिव तत्स्वश्रिया भवनोत्तमम् ॥

गौरीं कनकवर्णाभामिष्टामन्तःपुरेश्वरीम् ।
कपिर्मन्दोदरीं तत्र शयानां चारुरूपिणीम् ॥

स तां दृष्ट्वा महाबाहुर्भूषितां मारुतात्मजः ।
तर्कयामास सीतेति रूपयौवनसंपदा ॥

हर्षेण महता युक्तो ननन्द हरियूथपः ।

आस्फोटयामास चुचुम्ब पुच्छं
ननन्द चिक्रीड जगौ जगाम ।
स्तम्भानरोहन्निपपात भूमौ
निदर्शयन् स्वां प्रकृतिं कपीनाम् ॥

इति दशमः सर्गः ।

---

## अथ एकादशः सर्गः ॥

---

एकादशे— ततो हनूमान परित्यज्य तादृशीं बुद्धिम्—

न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी ।
न भोक्तुं नाप्यलङ्कर्तुं न पानमुपसेवितुम् ॥

नान्यं नरमुपस्थातुं सुराणामपि चेश्वरम् ।
न हि रामसमः कश्चिद्विद्यते त्रिदशेष्वपि ॥

अन्येयमिति निश्चित्य पानभूमौ चचार सः ।

ततस्तत्रत्यमयूरकुक्कुटवराहवार्ध्राणसहरिणशल्यकचकोर-मांसानि, उच्चावचानि पेयानि, विविधानि भक्ष्याणि, शर्करासव-माध्वीकपुष्पासवफलासवान्, विकचकुसुमवासितानि जलानि,

अर्धभक्षितानि पक्वानि फलानि च पश्यन् मदपारवश्याच्च परस्पर-माश्लिष्य सुप्तानां स्तोकविस्रस्तवस्त्राभरणानां सुरभिचन्दनानुलिप्त-कुचकलशानां नारीणां मुखपङ्कजान्यप्यवलोकयन्—

जगाम महतीं चिन्तां धर्मसाध्वसशङ्कया ।
परदारावरोधस्य प्रसुप्तस्य निरीक्षणम् ॥

इदं खलु ममात्यर्थं धर्मलोपं करिष्यति ।
न हि मे परदाराणां दृष्टिर्विषयवर्तिनी ॥
अयं चात्र मया दृष्टः परदारपरिग्रहः ।

अनेन परदारावलोकनं धर्मलोपकरमित्युक्तम् । तथा च प्राचीनाः — ‘उदर्कफलमिच्छद्भिः सद्भिर्नासौ विलोक्यते । चतुर्थीचन्द्रलेखेव परस्त्रीफालपट्टिका ॥’ इति ॥

इति चिन्तयतो धर्मैकतानमानसस्य आञ्जनेयस्य कार्यनि-श्चयदर्शिनी पुनश्चिन्ता समजायत—

कामं दृष्टा मया सर्वा विश्वस्ता रावणस्त्रियः ।
न हि मे मनसः किञ्चिद्वैकृत्यमुपपद्यते ॥

अनेन उपभोग्यत्वबुद्ध्या परस्त्र्यवलोकनमेव दोषावहं कमित्युक्तम् । तथा च गौतमः — ‘स्त्रीप्रेक्षणालम्भने मैथुन-शङ्कायाम्’ इति । वर्जयेदिति शेषः । तदिदानीं सीतां प्रमदासु शुद्धया बुद्ध्या मार्गमाणेन मया युक्ततरमेव कृतमिति तर्कयामि ॥

मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने ।
शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ॥

अनेन सर्वेन्द्रियाणां मन एव प्रेरकमित्युक्तम । तथा च कामन्दके— 'विषयामिषलोभेन मनः प्रेरयतीन्द्रियम् । तन्निरुन्ध्या प्रयत्नेन जिते तस्मिन् जितेन्द्रियः ॥' इति । ज्ञानवासिष्ठेऽपि— 'मनःकृतं कृतं राम न शरीरकृतं कृतम् । येनैवालिङ्ग्यते कान्ता तेनैवालिङ्ग्यते सुता ॥' इति ॥

यस्य सत्त्वस्य या योनिस्तस्यां तत्परिमार्ग्यते ।
न शक्यं प्रमदा नष्टा मृगीषु परिमार्गितुम् ॥

इत्यभिधाय तामपश्यन्नेव ततोऽपक्रम्यान्यत्र विचेतुं प्राक्रमत ॥

इति एकादशः सर्गः ।

---

## अथ द्वादशः सर्गः ॥

द्वादशे— अपक्रम्य तस्माद्देशाल्लतागृहाच्चित्रगृहनिशागृहेषु सीतामपश्यन् पुनरेवं चिन्तयामास । नूनमियं शीलरक्षणतत्परा मैथिली निहताशेन रावणेन निहता भवेत् । यतः सुनिपुणं विचिन्वतोऽपि मम दर्शनपथं नावतरति । अथवा, अतिविकृतनिशाचरीदर्शनजनितभयेन विनष्टा भवेत् । अहमिह सर्वथा विफलपरिश्रमोऽस्मि । तदिदानीमनवलोक्य जनकतनयाम्, अनवाप्य च पौरुषम्, अङ्गदजाम्बवत्प्रमुखवलीमुखयूथपमुखावलोकनात्सुतीक्ष्णकोपस्य सुग्रीवस्य समीपगमनाच्चातिक्रान्तकालस्य मम वरं प्रायोपवेशनम । अथवावशिष्टप्रदेशानुत्साहमवलम्ब्य विचिनोमि ॥

अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् ।
अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः ॥

इति द्वादशः सर्गः ।

---

## अथ त्रयोदशः सर्गः ॥

**त्रयोदशे**—ततो हनूमानपनुद्य विषादम, अवरुह्य विमानाद्भूयोऽपि लङ्कानिलयानखिलानालयानवलोकयन् सीतामनवलोक्य पुनश्चिन्तां ततान । सम्पातिवचनादुल्लङ्घ्य जलधिमुपगतेन सर्वशः सुनिपुणं विचिन्वता क्वचिदपि नालोक्यते सीता । अतो मन्ये सत्वरमुदन्वदुल्लङ्घनमाचरतो रावणस्याङ्कतो मध्येसमुद्रं निपतिता । अथवा, निरालम्बेऽम्बरे निशाचरेण नीयमानया तत्कृतभुजनिपीडनमसहमानया तया जीवितं परित्यक्तं भवेत् । तदधुना कथमिममुदन्तं रघुनन्दनाय निवेदयामि ॥

**निवेद्यमाने दोषः स्याद्दोषः स्यादनिवेदने ।**
**कथं नु खलु कर्तव्यं विषमं प्रतिभाति मे ॥**

अत्र निवेदने दोषः समनन्तरं वक्ष्यमाणः सर्वविनाशरूपः, स्वामिकार्यस्य वृत्तस्यानिवेदने पापं भवतीति सूचितम् । तथा **चानुशासनिके**— 'कृत्वानाचक्षतः कर्म कर्म यच्च त्वया कृतम् । (?) तेनैव हि भवेयुस्ते लोकाः पापकृतो यथा ॥' इति ॥

कथं वा व्यर्थीकृतार्णवोल्लङ्घनश्रमस्य पुनः प्रतिनिवृत्तस्य मम मुखादिमं वृत्तमाकर्ण्य सुकुमारौ राजकुमारौ जीवितं न

हास्यतः। तदाकर्ण्य भरतशत्रुघ्नसुमित्राकौसल्यादयो नागरिकाः सुग्रीवप्रमुखाश्च वानरास्ताराऽऽरुमादिमा वानरनायिकाश्च ॥

कुमारोऽप्यङ्गदः कस्माद्धारयिष्यति जीवितम्।
भर्तृजेन तु दुःखेन ह्यभिभूता वनौकसः।
शिरांस्यभिहनिष्यन्ति तलैर्मुष्टिभिरेव च ॥

सान्त्वेनानुप्रदानेन मानेन च यशस्विना।
लालिताः कपिराजेन प्राणांस्त्यक्ष्यन्ति वानराः ॥

अनेन प्रभुणा पालितैः सेवकैः स्वाम्यर्थे प्राणत्यागपर्यन्तं यतितव्यमिति सूचितम्। तथा च मन्त्रवर्णः— 'क स्या वो मरुतः स्वधासीत्। यन्मामेकं समधत्ताहिहत्ये।' इति। अस्यार्थः— वः युष्मभ्यं दत्ता स्या सा स्वधा अन्नं कासीत्। यद्यस्मात् मामेकं अहिहत्ये वृत्रवधार्थे सङ्ग्रामे समधत्त सङ्कल्पितवन्त इति। अत्र तात्पर्यमत्या उक्तार्थो बोध्यः। वनपर्वण्यपि— 'अवश्यं राजपिण्डस्तैर्निर्वेश्य इति मे मतिः। यस्मात्त्यक्ष्यन्ति सङ्ग्रामे प्राणानपि सुदुस्त्यजान् ॥' इति। अतः प्रतिनिवृत्ते मयि काकुत्स्थवानरकुलनाशो निस्संशयं भविता। सोऽहमिहैव परिमितकन्दमूलफलाहारः प्राणान् संधार्य सुचिरं तिष्ठामि ॥

विनाशे बहवो दोषा जीवन् भद्राणि पश्यति।
तस्मात्प्राणान्धरिष्यामि ध्रुवो जीवति संगमः ॥

अत्र बुद्धिपूर्वं प्राणत्यागे प्रत्यवायः। जीवतश्च श्रेयो भवतीत्युक्तम्। तथा चादिपर्वणि और्वे— 'आत्महा च पुमांस्तात न लोकांल्लभते शुभान्। ततोऽस्माभिः समीक्ष्यैव नात्म-

नात्मा निपातितः ॥' इति। जीवतः श्रेयो भवति इत्येतदापद्धर्मे मार्जारं प्रति मूषिकः— 'द्रव्याणि सन्ततिश्चैव सर्वं भवति जीवतः।' इति। तत्रैव विश्वामित्रोपाख्याने— 'सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत्। एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत् ॥' इति ॥

इति दुरन्ताचिन्तार्णवावगाहनेन व्याकुलमतिर्मारुतिः सकलश्रमापनोदनचतुरायामशोकवनिकायां निर्विघ्नं सीतां विचेतुमिष्टदेवतानमस्कारमकरोत्—

नमोऽस्तु रामाय सलक्ष्मणाय
देव्यै च तस्यै जनकात्मजायै।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो
नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥

ब्रह्मा स्वयम्भूर्भगवान्देवाश्चैव दिशन्तु मे।
सिद्धिमग्निश्च वायुश्च पुरुहूतश्च वज्रधृक् ॥

वरुणः पाशहस्तश्च सोमादित्यौ तथैव च।
अश्विनौ च महात्मानौ मरुतः शर्व एव च ॥

सिद्धिं सर्वाणि भूतानि भूतानां चैव यः प्रभुः।
दास्यन्ति मम ये चान्ये ह्यदृष्टाः पथि गोचराः ॥

इति त्रयोदशः सर्गः।

---

## अथ चतुर्दशः सर्गः ॥

**चतुर्दशे**—इत्यभिसन्धाय मुहूर्तमभीष्टदेवतां सीतां च मनसा संस्मरन्सकलजीवलोकहृदयानन्दकरेण वसन्तसमयेन विजृम्भमाणतरुणारुणप्रवालकुसुमप्रकरैरुन्मदकोकिलकुलवाचालितैश्चम्पकपरागपुञ्जपिञ्जरितप्रान्तैः पादपैरुपशोभिताम् , अशोकचम्पकसालोद्दालकचूतनागपुन्नागैश्च समावृतां निष्टप्तकनकमयतरुनिकरप्रभाप्रकाशिततया समुदयदरुणकिरणारुणितामिव शोभमानां विहङ्गकुरङ्गमृगसङ्घसमाकुलतया विचित्रितामिव संलक्ष्यमाणां तामनुप्राविशत् । स्वानुप्रवेशसंक्षुभितसुप्तोत्थितशुकपिकादिखगोत्पतनसमयसमाहततरुशिखरविसृत्वराविकचकुसुमनिरन्तरशरीरम् —

**दृष्ट्वा सर्वाणि भूतानि वसन्त इति मेनिरे ।**

तेन च पवनसमानवेगेन कम्पिताः—

**निर्धूतपत्रशिखराः शीर्णपुष्पफला द्रुमाः ।**
**निक्षिप्तवस्त्राभरणा धूर्ता इव पराजिताः ॥**

अनेन अक्षद्यूतासक्तस्य सर्वस्वापहारो भवति इति सूचितम् । अत एव महात्मनोऽपि धर्मपुत्रस्य सर्वैश्वर्यविनाशः । **सभापर्वणि**— 'यच्चैषां द्रविणं किंचिद्या चैषां ये च पाण्डवाः । सौबलेन ह तत्सर्वं धर्मेण विजितं वसु ॥ पाण्डवानां च वासांसि द्रौपद्याश्चाप्युपाहर । तच्छ्रुत्वा पाण्डवास्सर्वे स्वानि वासांसि भारत । अवकीर्योत्तरीयाणि सभायां समुपाविशन् ॥' इति ॥

वनपर्वण्यपि— 'ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः । पुष्करेण हृतं राज्यं यच्चान्यद्वसु किंचन ॥ शिष्टा ते दमयन्त्येका सर्वमन्यज्जितं मया । उत्सृज्य सर्वगात्रेभ्यो भूषणानि महायशाः ॥ एकवासा ह्यसंवीतः सुहृच्छोकविवर्धनः । निश्चक्राम ततो राजा त्यक्त्वा सुविपुलां श्रियम् ॥' इति ॥

सभापर्वण्यपि धर्मपुत्रं प्रति शकुनिः— 'गवाश्वं बहुधेनूकमपर्यन्तमजाविकम् । गजाः कोशो हिरण्यं च दासीदासाश्च [सं च] सर्वशः ॥ एष नो ग्लह एवैको वनवासाय पाण्डवाः । यूयं वयं वा विजिता वसेम वनमाश्रिताः ॥ त्रयोदशं च वै वर्षमज्ञाताः स्वजनैस्तथा । अनेन व्यवसायेन दीव्याम पुरुषर्षभ ॥ प्रतिजग्राह तं पार्थः ग्लहं जग्राह सौबलः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ अजिनान्युत्तरीयाणि जगृहुश्च यथाक्रमम् । अजिनैः संवृतान् दृष्ट्वा हृतराज्यानरिन्दमान् । प्रस्थितान्वनवासाय ततो दुःशासनोऽब्रवीत् ॥' इति ॥

निर्धूतकेशी युवतिर्यथा मृदितवर्णिका ।
निष्पीतशुभदन्तोष्ठी नखैर्दन्तैश्च विक्षता ॥
तथा लांगूलहस्तैश्च चरणाभ्यां च मर्दिता ।
बभूवाशोकवनिका प्रभग्नवरपादपा ॥

अत्र हनूमत्संचरणेन मर्दिताया अशोकवनिकाया वर्णनार्थतया दृष्टान्तत्वेनोपात्ताया उपभुक्तनायिकाया लुलितकेशत्वादिप्रतिपादनादुपभोगसमये नायिकानायकयोः परस्परा-

नुरागसिद्धयै केशग्रहणालिङ्गनचुम्बननखक्षतदन्तक्षतादिकं कर्तव्य-मिति सूचितम् ॥

तत्र केशग्रहणमुक्तमनङ्गरङ्गे— 'स्निग्धा घनाः कुंचित-नीलवर्णाः केशाः प्रशस्तास्तरुणीजनानाम् । रागप्रवृद्धयै विधिनैव मन्दं ग्राह्या नरैश्चुम्बनदानकाले ॥' इति । केशग्रहणविधिश्च चतुर्विधः, समहस्तकरताङ्गवज्रकभुजङ्गवल्लिकाकामावतंसभेदात् । तत्र नायिकाचुम्बनार्थं कराभ्यां नायककृतं चिकुरग्रहणं समहस्तकम् । तदेव एकहस्तेन कृतं रताङ्गवज्रकमित्युच्यते । तथा चानङ्गरङ्गे- 'चिकुरान्परिकृष्य चुम्बते करयुग्मेन पतिः प्रियां यदि । समहस्त-कमित्यथैकतो यदि हस्तेन रताङ्गवज्रकम् ॥' इति । रतिसमये संवेष्ट्य केशग्रहणं भुजङ्गवल्लिकेत्युच्यते । तदप्यनङ्गरङ्गे— 'परिवेष्ट्य करेण कुन्तलान्मदनार्तो यदि धारयेत्प्रियाम् । रतिकेलिकलापको-विदाः कथयन्तीह भुजङ्गवल्लिकाम् ॥' इति । रतिप्रारम्भे परस्पर-चुम्बनाय परस्परालकग्रहणं कामावतंस इत्युच्यते । तथा चानङ्गरङ्गे— 'कर्णप्रदेशस्थकचान्निगृह्य परस्परं चुम्बति यत्र नारी । पतिश्च रागात्सुरतावतारे कामावतंसस्स कचग्रहः स्यात् ॥' इति ॥

रत्यर्थतया परिरम्भानन्तरकर्तव्यचुम्बनप्रदेशानाह अन-ङ्गरङ्गे— 'अधराक्षिकपोलमस्तकं वदनान्तःस्तनयुग्मकन्धरम् । विहितानि पदानि पण्डितैः परिरम्भादनु चुम्बनस्य हि ॥' इति ॥

तच्च चुम्बनं नवविधम्—निमितम्, स्फुरितम्, घण्टिकम्, तिर्यक्, उत्तरोष्ठम्, पीडितम्, अनुवक्त्रम्, संपुटम्, प्रतिबोधम्,

समोष्ठं चेति । तत्र कोपाच्चुम्बनमनङ्गीकुर्वत्याः कान्ताया बलात्कृतं चुम्बनं निमितमित्युच्यते । तथा चानङ्गरङ्गे—'नारीमुखान्ते वदनं स्वकीयं समानयेद्यत्र बलेन कान्तः । सा नैव चुम्बेदतिकोपयुक्ता स्याच्चुम्बनं तन्निमिताभिधानम् ॥' इति। कान्तपरिचुम्बिताधरा नायिका कान्तस्य मुखे स्वमुखं निवेशयति, स्वयं न चुम्बति, तत्स्फुरितमित्युच्यते । तदपि तत्रैव— 'दयितस्य निवेश्य वक्त्रके निजवक्त्रं परिचुम्बिताधरम् । न पिबेदबला तदाननं स्फुरिताख्यं परिचुम्बनं तदा ॥' इति । यत्र कान्ता स्वकरपल्लवेन दयितलोचनयुगलमाच्छाद्य स्वजिह्वां कान्तानने प्रवेश्य चुम्बति, तत् घण्टिकमित्युच्यते । तदपि तत्रैव— 'करेण कान्तस्य निमील्य नेत्रे जिह्वां मुखान्तर्विनिधाय यत्र । चुम्बेद्विलोला तरलायताक्षी तद्घण्टिकाख्यं कवयो वदन्ति ॥' इति । पश्चादवस्थितो नायकः कान्ताचुबुकं करेण परिगृह्य साचीकृतवदनो यत्र चुम्बति, तत्तिर्यगित्युच्यते । तदपि तत्रैव—'करेण कान्ताचुबुकं गृहीत्वा दशेत्पतिः पश्चिमभागवर्ती । प्रियाधरं यत्र तु तिर्यगाख्यं प्रोक्तं कवीन्द्रैः खलु चुम्बनं तत् ॥' इति । यत्र कान्ता मदनार्त्या कान्तस्याधरं चुम्बति, तदानीं कान्तकृततदीयोत्तरोष्ठचुम्बनं उत्तरोष्ठमित्युच्यते । तदपि तत्रैव— 'दन्तैर्गृहीत्वा मदनार्तिलोलाधरं विचुम्ब्याशु दशेत्स्वभर्तुः । कान्तस्तदीयं कथितं मुनीन्द्रैरित्युत्तरोष्ठं परिचुम्बनं हि ॥' इति । कान्ता यत्र कान्तस्याधरं संपुटितकराङ्गुलीभिर्गृहीत्वा चुम्बति, तत्पीडितमित्युच्यते । तदपि तत्रैव— 'आदाय दन्तच्छदमाशु पत्युः कराङ्गुलीसंपुटकेन नारी । जिह्वाग्रदेशेन धयेद्दशेच्च तच्चुम्बनं पीडितसंज्ञितं स्यात् ॥' इति । पुटिताधरेण कान्तेन चुम्बिताधरा कान्ता स्वाधरसंपुटेन तमपि

यत्र चुम्बति, तदनुवक्त्रम्, संपुटम्, केलिजिह्वाननजं चोच्यते। तच्च तत्रैव— 'प्रियाधरं स्वाधरसंपुटेन पिबेत्पतिः सापि तथैव भर्तुः। तत्संपुटाख्यं त्वनुवक्त्रसंज्ञं स्यात्केलिजिह्वाननजं तदेव ॥' इति। चिरं सम्प्राप्तनिद्रां कान्तां प्रतिबोधयितुं गतः कान्तो यत्र चिरं चुम्बति तत्प्रतिबोधमित्युच्यते। तच्च तत्रैव— 'सम्प्राप्तनिद्रां रहसि स्वकान्तां चिरं गतश्चुम्बति यत्र भर्ता। प्रोक्तं कवीन्द्रैः प्रतिबोधसंज्ञं तच्चुम्बनं सर्वरसातिरेकम् ॥' इति। कान्तस्य ओष्ठयोर्जिह्वायां च स्वकीयोष्ठौ जिह्वां च निवेश्य यत्र चुम्बति तत्समोष्ठमित्युच्यते। तच्च तत्रैव— 'अधरोष्ठयुगेन कामिनी पतिवक्त्रोष्ठयुगं स्वजिह्वया। परिपीड्य विचुम्ब्य नृत्यती कथितं तद्धि समोष्ठसंज्ञितम् ॥' इति ॥

कामिनीनामतिसौख्यावहं नखक्षतं सुरतसमये कर्तव्यमित्युक्तमनङ्गरङ्गे— 'नखं प्रयुक्तं प्रणयाद्रसज्ञैर्यदेतदेवास्ति मनोभवस्य। सर्वस्वमन्यत्तु सुखस्य हेतुर्नातोऽस्ति किञ्चिद्वरकामिनीनाम् ॥' इति ॥

तच्च सप्तविधम्— क्षुरितम्, अर्धचन्द्रम्, मण्डलकम्, तरुणम्, मयूरपादम्, शशपादम्, उत्पलपत्रं चेति। तत्र गण्डकुचान्तरेषु संपूर्णनखविलेखनं क्षुरितमित्युच्यते। तथा चानङ्गरङ्गे— 'अव्यक्तरेखं कृतरोमहर्षं समर्पितं गण्डकुचान्तरेषु। यत्कर्म संपूर्णनखप्रभूतं विज्ञास्तदेव क्षुरितं वदन्ति ॥' इति। ग्रीवाकुचे वक्रनखक्षतं अर्धचन्द्रम्। पुनस्तदभिमुखप्रयुक्तं मण्डलकमित्युच्यते। तथा च तत्रैव— 'ग्रीवाकुचे वक्रनखप्रहारो दत्तोऽर्धचन्द्राख्य

उदीरितोऽसौ । यद्येतदेवाभिमुखं प्रयुञ्ज्यात्तदा बुधा मण्डलकं वदन्ति ॥' इति । मूर्धोरुगुह्यकुचदेशेषु द्वित्र्यंगुलादधिकपरिमाणं रेखाद्वयं तरुणमित्युच्यते । तदपि तत्रैव— 'द्वित्र्यङ्गुलादधिक एव नखप्रहारो मूर्धोरुगुह्यकुचदेशसमर्पितो यः । रेखाद्वयं मदनकेलिकलाविदग्धाः प्राहुस्तदेव तरुणं हि नवत्रपाहम ॥' इति । चूचुकाग्रे अङ्गुष्ठमाधाय अधःप्रदेशे सर्वनखैः कृतं क्षतं मयूरपादम । सर्वनखैः कुचाग्रे क्रियमाणं शाशमित्युच्यते । तथा चानङ्गरङ्गे— 'रेखा कृता सर्वनखैरधस्तादङ्गुष्ठमाधाय तु चूचुके या । मयूरपादं किल तां वदन्ति शाशं तु तां सर्वनखैः कुचाग्रे ॥' इति । कुचगुह्यपृष्ठेषूत्पलपत्राकृतितया क्रियमाणं रेखात्रयं उत्पलपत्र-मित्युच्यते । तच्च तत्रैव— 'रेखात्रयं पृष्ठकुचेऽथ गुह्ये कृतं भवे-दुत्पलपत्रवद्यत् । अन्वर्थसंज्ञं प्रवदन्ति तद्धि भर्तुः[स्मर्तुं] प्रवासा-वसरे दिशन्ति ॥' इति ॥

नखक्षतस्य देशकालावुक्तावनङ्गरङ्गे— 'ग्रीवाकरोरुजघ-नस्तनपृष्ठकक्षहृत्पार्श्वगण्डविषये नखराः खराः स्युः । माने नवीनसुरते विरहे प्रवासे द्रव्यक्षये च विरतौ च सदा प्रयोज्याः ॥' इति । नखलक्षणमपि तत्रैव— 'नीरस्यता निर्मलतोज्ज्वलत्वं वर्धिष्णुता च स्फुरितत्वमेव । अमार्दवं चेति गुणा नखानां बुधैः षडुक्ताः सुरतप्रसङ्गे ॥' इति ॥

परस्परानुरागाय दन्तक्षतस्य स्थलविशेषे कर्तव्यतां दर्शयति स एव— 'चुम्बप्रदेशेषु रदा विधेयाः पृष्ठाननान्तर्जघनानि हित्वा ।' इति । क्षते प्रशस्तान्दन्तांश्चाह स एव— 'दन्ताः प्रशस्ता अतिखर्वरूक्षाः करालबाह्या मलिनाश्च निन्द्याः ।' इति ॥

तच्च दन्तक्षतं सप्तविधम्— गूढकम्, उत्सूनकम्, प्रवालमणिः, [बिन्दुः]तिलबिन्दुः, उन्मण्डनम्, क्रोडचक्रं चेति। तत्र व्रणं विनैव लौहित्यमात्रापादकं दन्तक्षतं गूढकम्। गण्डाधरयोर्व्यक्तरेखं दन्तपीडनमुत्सूनकमित्युच्यते। (तथा)चानङ्गरङ्गे— 'अधरस्थितरागमात्रकं रद[लेख्यं]रेखं किल गूढकं विदुः। रदनच्छदगण्डपीडनादिदमुत्सूनकमुच्यते बुधैः॥' इति। क्षतपीडनादिकं विनैव दन्तोष्ठसंयोगः प्रवाळमणिरित्युच्यते। तथा चानङ्गरङ्गे— 'दन्तोष्ठयोर्योगविशेषसाध्यः प्रवाळपूर्वो मणिरेवमुक्तः। अभ्यासयोगेन च दंपतिभ्यां संसाध्यते नान्यविनोदतस्तु॥' इति। ललाटाधरयोः कामिनीदन्तद्वयकृतं क्षतं बिन्दुः। सर्वदन्तैः कृतं तिलबिन्दुरित्युच्यते। तथा चानङ्गरङ्गे— 'अधरे तिलके च कामिनीरदयुग्मेन विडम्बने [विखण्डने] कृते। रति [इति] बिन्दुरुदीरितोऽखिलैर्दशनैः स्यात्तिलबिन्दुनामकः॥' इति। कपोलवक्षोगलफालदेशेषु दशनाग्रलेख्यमुन्मण्डनमित्युच्यते। तथा चानङ्गरङ्गे— 'कपोलवक्षोगलफालदेशे गण्डस्थले स्याद्दशनाग्रलेख्यम्। उन्मण्डनं स्याद्धि तदङ्गनानामङ्गेषु शोभां लभते नितान्तम्॥' इति। भर्त्रा स्वप्रस्थानसमये स्वस्मृत्यर्थतया कान्ताशरीरे कृतमखर्वसान्द्रदशनक्षतं क्रोडचक्रमित्युच्यते। तदुक्तमनङ्गरङ्गे— 'अखर्वसान्द्रा दशनावली या कान्ताशरीरे क्रियते स्वभर्त्रा। प्रस्थानकाले स्मृतिहेतु पश्चात्तत्क्रोडचक्रं प्रवदन्ति तज्ज्ञाः॥' इति। अत्यन्तमधुरशर्कराविकारे फाणिताभिधे कटुमरीचिचूर्णप्रक्षेपवत्, इतरकाले क्लेशकरमपि नखदन्तक्षतादिकं रतिकाले प्रयुक्तं सुखकरमित्युक्तं श्रीहर्षेण-

'अस्तभावमधिगच्छतोस्तयोः संमदेषु करजव्रणार्पणा । फाणितेषु मरिचावचूर्णना सा स्फुटं कटुरपि स्पृहावहा ॥' इति ॥

ततः कृत्रिमदीर्घिकाः सौवर्णवितर्दिवेदिकाः फलभरनमितान्वृक्षविशेषांश्चावलोकयन्—

दर्दश हरिशार्दूलो रम्यं जगति पर्वतम् ।
ददर्श च नगात्तस्मान्नदीं निपतितां कपिः ॥

अङ्कादिव समुत्पत्य प्रियस्य पतितां प्रियाम् ।
जले निपतिताग्रैश्च पादपैरुपशोभिताम् ॥

वार्यमाणामिव क्रुद्धां प्रमदां प्रियबन्धुभिः ।
पुनरावृत्ततोयां च ददर्श स महाकपिः ॥

प्रसन्नामिव कान्तस्य कान्तां पुनरुपस्थिताम् ।

अत्र कोपेन नायकं परित्यज्य गच्छन्ती बन्धुकृतप्रसादनेन प्रसन्ना कलहान्तरितैव नायिका दृष्टान्तत्वेनोक्ता । तल्लक्षणं च **प्रतापरुद्रीये**— 'कोपात्कान्तं पराणुद्य पश्चात्तापसमन्विता । कलहान्तरिता ज्ञेया सदा सुलभकोपना ॥' इति ॥

सा च त्रिविधा— स्वीया परकीया सामान्या चेति । तत्र स्वीयापि त्रिविधा—मुग्धा, मध्यमा, प्रगल्भा, चेति । तल्लक्षणमपि **प्रतापरुद्रीये**— 'उदयद्यौवना मुग्धा लज्जाविजितमन्मथा । लज्जामन्मथमध्यस्था मध्यमोदितयौवना ॥ स्मरमन्दीकृतव्रीडा प्रौढा संपूर्णयौवना ।' इति । मुग्धायाः कलहान्तरितायाश्चेष्टा **रसमञ्जर्याम्**— 'अनुनयति पतिं न

लज्जमाना कथयति नापि सखीजनाय किंचित् । प्रसरति मलयानिलेन वोढा वहति परं तु चिराय शून्यमन्तः ॥' इति । मध्यमायाः कलहान्तरितायाश्चेष्टा च— 'विरमति कथनं विना न खेदः सति कथने समुपैति कापि लज्जा । इति कलहमधोमुखी सखीभ्यो लपितुमनालपितुं समाचकांक्ष ॥' इति । प्रगल्भायाः कलहान्तरितायाश्चेष्टापि— 'अकरोः किमु नेत्रशोणिमानं किमकार्षीः करपल्लवावरोधम् । कलहं किमधाः क्रुधा रसज्ञे हितमर्थं न विदन्ति दैवदुष्टाः ॥' इति ॥

परकीया कलहान्तरिता यथा— 'भर्ता यस्य कृते गुरुर्लघुरभूद्द्रोष्ठी कनिष्ठीकृता धैर्यं कोशगृहं गतं सहचरी नीतिः कृता दूरतः । निर्मुक्ता तृणवत्त्रपा परिचिता स्रोतस्विनी बिन्दुवत्स क्रोधादवधीरितो हतधिया मातर्बलीयान्विधिः ॥' इति ॥

सामान्या कलहान्तरिता यथा— 'यत्पंकेरुहलक्ष्म पाणिकमले भाग्यालये यद्गुरुर्न्यस्त(?) वा मम यल्ललाटफलके भाग्याक्षरं वेधसा । तत्सर्वं सखि यो यथार्थमकरोत्तस्मिन्प्रकोपः कृतो धिक्मां धिङ्मम जीवितं धिगतनुं धिक् चेष्टितं धिग्वयः ॥' इति । समाधानप्रकारश्च रघुवंशे— 'त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः । परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः ॥' इति । रसतरंगिण्यामपि— 'ग्रामेऽस्मिन्मदनाधिकोज्ज्वलतनुर्वाग्मी वलद्भूषणोदारो मन्मथशास्त्रतन्त्रविभवज्ञानी स्थितः कः पुमान् । इत्येवं स्वसखीजनेन कथनात्संबोधिता कामिनी तं पश्यामि कदेति तत्परवशा मार्गे पुनर्वर्तते ॥' इति ॥

अथ ससम्भ्रममितस्ततः परिभ्रमन्नभ्रंकषविटपनिबिडितगहनप्रपञ्चां मन्दमारुतान्दोलितस्कन्धावबद्धकाञ्चनकिङ्किणीशतसन्नादिततया अशोकतरुताडनरणितरमणीयतररमणीमणिमणिनूपुरप्रकरसहस्रमुखरितामिव शोभमानां विकसन्मुकुलपरिमलपुञ्जितालिजालझंकारसुभगामविरलकुसुमधूलिवालुकापुलिनधवलितधरातलां विकचकुसुमपुञ्जपातसूचितवनदेवतालताप्रेंखोलनां विसृत्वरप्रभापिञ्जरितप्रान्ततया काञ्चनमहीमिव तत्प्रदेशान्कुर्वतीं काञ्चन काञ्चनमयीं शिंशुपामवलोकयामास। आरुह्य च तामितस्ततो दत्तदृष्टिः पुनरप्येवं चिन्तां ततान पवनतनयः—नूनं प्रियवियोगमसहमाना जानकी मनोविनोदनाय चम्पकचन्दन[वकुल]वनभूषितामशोकवनिकां कारण्डवचक्रवाकसहस्रसमाकुलां विकचकमलकुवलयामोदमेदुरितजलां नलिनीम्—

सन्ध्याकालमनाः श्यामा ध्रुवमेष्यति जानकी।
नदीं चैनां शिवजलां सन्ध्यार्थे वरवर्णिनी॥

नन्वत्र सीता सन्ध्योपासनायागमिष्यतीत्युक्तम्; तदसङ्गतम्। सन्ध्या तावदर्घ्यप्रदानगायत्रीजपादित्योपस्थानात्मिका। गायत्र्यादिसन्ध्यामन्त्राश्च अधीता एव कर्मणि विनियोक्तव्याः। अध्ययनं च उपनीतेन माणवकेन गुरुकुलवासभिक्षाचरणादिनियमपूर्वकमेव कर्तव्यम्। उपनयनादिकं च 'अष्टवर्षं ब्राह्मणमुपनयीत' 'वसन्ते ब्राह्मणमुपनयीत' इत्यादिशास्त्रात् पुंसामेवावगम्यते। सन्ध्योपासनादिकमपि, 'सन्ध्योश्च बहिर्ग्रामादासनं वाग्यतश्च' 'अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम्। सन्ध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः॥' इत्यादिसन्ध्योपासनादिविधिषु,

'उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः । आचारमग्निकार्यं च सन्ध्योपासनमेव च ॥' इत्याचार्यकर्तृकशिक्षणविधिषु[च] पुल्लिङ्गनिर्देशेन पुंसामेवावगम्यते न तु स्त्रीणाम् । किं च 'न स्त्रीशूद्रौ वेदमधीयाताम्' इति स्त्रीणामध्ययनं साक्षादेव प्रतिषिद्धम् । एवं च उपनयनाध्ययनसंध्योपासनरहितानां स्त्रीणामधिकाराभावेन सीतायाः कथं सन्ध्योपासनमुक्तमिति चेत्— न।

पूर्वोदाहृतोपनयनसन्ध्योपासनमन्त्राध्ययनविधिभिः पुल्लिङ्गनिर्देशेन स्त्रीणां प्राप्त्यभावेऽपि युगभेदेन सन्ध्योपासनप्रापकप्रमाणान्तरेण सन्ध्योपासनादेः प्राप्तिसम्भवात् । तथा च यमः— 'पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवचनं तथा ॥ पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः । स्वगृहे चैव कन्यायाः भैक्षचर्यं विधीयते ॥ वर्जयेदजिनं चीरं जटाधारणमेव च ॥' इति ॥

न केवलं स्त्रीणामध्ययनम्, अपि तर्हि, अपूर्वमन्त्रद्रष्टृत्वरूपं ऋषित्वमपि । [तच्च]शाकलसंहितानुक्रमणिकापरिभाषायाम्— 'अथर्षयः शतर्चिन आद्ये मण्डले' इत्याधिकृत्य, 'गोधा घोषा विश्ववारा अपालोपनिषन्निषत् । ब्रह्मजाया जुहूर्नाम अगस्त्यस्य स्वसादितिः । इन्द्राणी चेन्द्रमाता च सरमा रोमशोर्वशी ॥ लोपामुद्रा च नद्यश्च यमी नारी च शाश्वती । श्रीर्लाक्षा सार्पराज्ञी वाक् श्रद्धा मेधा च दक्षिणा ॥ रात्री सूर्या च सावित्री ब्रह्मवादिन्य ईरिताः ।' इति गोधाघोषादीनां ब्रह्मवादिनीनां

ऋषित्वेन परिगणनात्। ऋषित्वं च मन्त्रोच्चारयितृत्वमेवेति तत्रैव प्रतिपादितम्— 'यस्य वाक्यं स ऋषिः। या तेनोच्यते सा देवता' इति। उदाहृतं च— 'अथ ऋग्वेदाम्नाये शाकलके सूक्तप्रतीकऋक्सङ्ख्याऋषिदैवतच्छन्दांस्यनुक्रमिष्यामः' इत्युपक्रम्य 'सत्येन सप्तचत्वारिंशत्सावित्री सूर्यात्मदैवतं आनुष्टुभम्। पञ्चभिः सोममस्तौत्पराभिः स्वविवाहं सप्तदश्या देवान्परया सोमार्कौ परया चन्द्रमसं परया नृणां विवाहं मन्त्रा आशीःप्राया उदीर्ष्वेति द्वाभ्यां देवगन्धर्वविश्वावसून् -तुष्टाव' इत्यादि। अत्र सत्येनेति सूक्तप्रतीकम्। सप्तचत्वारिंशदिति ऋक्सङ्ख्या। सावित्रीति ऋषिः। सूर्यात्मदैवतमिति देवता। आनुष्टुभमिति छन्दः। तत्र च ऋषिः सावित्री पञ्चभिः सोमं पराभिः ऋग्भिः स्वविवाहम् इति अपूर्वतया स्वदृष्टैर्मन्त्रैः विभज्य सोमादीनां स्तुतिं कृतवतीति प्रतिपादनादपूर्वमन्त्रद्रष्टृत्वरूपं ऋषित्वमुक्तम्। न चैतत्स्त्रीणां मन्त्रानधिकारे सूर्यासावित्र्योर्युज्यते। तथा **छन्दोगानामार्षेयब्राह्मणेऽपि**— 'इन्द्राण्याः साम इन्द्राण्याश्चैव साम' इति स्त्रिया इन्द्राण्या ऋषित्वं प्रतिपादितम्। अत एव स्त्रीणां ब्रह्मवादिनीनां ब्रह्मविद्याग्रहणोपदेशसंवादादिकं **बृहदारण्यके** अवगम्यते— 'अथ ह गार्गी वाचक्नवी पप्रच्छ' इत्यादौ। न चैवं सति पूर्वोदाहृतोपनयनाध्ययनादिप्रतिषेधपर्यवसायिवचनानां का गतिरिति वाच्यम्। तेषां वचनानां सद्योवधूविषयत्वात्। तथाहि—

स्त्रियो द्विविधाः— ब्रह्मवादिन्यः सद्योवध्वश्चेति। तत्र ब्रह्मवादिनीनामुपनयनवेदाध्ययनादिकमस्त्येव। सद्योवधूनां तु अध्ययनाद्यभावः। तथा च **हारीतः**— 'द्विविधाः स्त्रियो

ब्रह्मवादिन्यः सद्योवध्वश्चेति । तत्र ब्रह्मवादिनीनामुपनयन-मग्नीन्धनं वेदाध्ययनं स्वगृहे च भिक्षाचर्येति । सद्योवधूना-मुपनते विवाहे कथंचिदुपनयनमात्रं कृत्वा विवाहः कार्यः' इति । एतदभिप्रायेणैव याज्ञवल्क्यभार्याद्वैविध्यमुक्तं बृहदारण्यके-'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च । तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव । स्त्रीप्रज्ञैव तर्हि कात्या-यनी ।' इति ॥

सद्योवधूनामपि अध्ययननिषेधः न सर्वमन्त्राध्ययन-विषयः । किं तु कर्मानुपयुक्तमन्त्राध्ययनविषयः । अन्यथा 'अथ जघनेन गार्हपत्यमुपसीदति सुप्रजसस्त्वा वयमिति निनीय मुखं विमृज्योत्तिष्ठति । पुष्टिमती पशुमती प्रजावती गृहमेधिनी भूयास-मिति उदकमुदुक्ष(न्तुदुक्ष)न्ती वाचयति' इत्यादिविधिबाधापत्तेः । अत एव तालवृन्तनिवासिना कर्मोपयुक्तमन्त्राध्ययनमुक्तम्—'प्रागग्न्याधेयात् कर्माङ्गमन्त्राध्ययनम्' इति ॥

एतदप्यध्ययनमुपनयनसापे(क्षित)[क्ष]मिति कृत्वैव उपनय-नस्थानापन्नो विवाह इत्युक्तं मनुना— 'वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः ।' इति । हारीतस्त्वाह— 'सद्योव-धूनामुपनते विवाहे कथंचिदुपनयनमात्रं कृत्वा विवाहः कार्यः' इति । अत्र कथंचिदित्यनेन विवाहप्राक्कालीनमुपनयनममन्त्रकमि-त्यवगम्यते । विवाहप्राक्कालीनसंस्काराणाममन्त्रकत्वं मनुराह— 'अमन्त्रका तु कार्येयं स्त्रीणामावृदशेषतः । संस्कारार्थं[र्थं शरीरस्य] मशेषस्य यथाकालं यथाक्रमम् ॥ वैवाहिको विधिः स्त्रीणां संस्कारो

वैदिकः स्मृतः । पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥' इति । तथा च सद्योवधूनां स्वकर्तव्यकर्माङ्गमन्त्राध्ययनमस्त्येव ॥

अत्र चैवं व्यवस्था— कलियुगे सद्योवध्व एव । इतरयुगत्रये सद्योवध्वो ब्रह्मवादिन्यश्च, 'पुराकल्पेषु' इति यमवचनात् । तथा च त्रेतायुगवर्तिन्याः सीतायाः सन्ध्योपासनाद्यधिकारः सम्भवतीति महर्षिणा वाल्मीकिना प्रतिपादितं सन्ध्योपासनादिकं युक्तमेवेति ॥

इति चतुर्दशः सर्गः ।

---

## अथ पञ्चदशः सर्गः ।

---

पञ्चदशे— तत्र स्थितः पवनतनयः सन्तानकल्पलतापादपैर्नन्दनवनश्रियमिवानुकुर्वन्तीं कोकिलकलहंसकारण्डवचक्रवाकोपेताभिर्विकचकाञ्चनमयोत्पलाभिः पद्मिनीभिरुपशोभितां मधुकरभरसुभगगर्भकेसररजःकुसुमोपहाररमणीयविविधतरुलतां क्वचिदुन्मदमयूरकेकारवभीतभुजङ्गमुक्तसुरभिचन्दनवनां बकुलैलालवङ्गलवलीलताकुसुमसौरभलोभविभ्रमदलिकुलमुखरितदिङ्मुखां कुसुमितकर्णिकारपरिगतप्रान्ततया उद्यदर्ककिरणगणैरिव प्रकाशितां विकचधवलकुसुमनिकरकरम्बिततया सतारामिव नभःस्थलीमनेकवर्णकुसुमविचित्रतया स्फुरदुरुरत्ननिकरस्य जलनिधेः श्रियमिवादधानामशोकवनिकां परितो विचिन्वन्नविदूरे सहस्रस्तम्भमण्डपमतिधवलतया दर्पणमिव त्रैलोक्यलक्ष्म्याः स्फटिकभूमि-

गृहमिव वसुन्धरादेव्याः कैलासगिरिमिवापरमवतीर्णमूर्जितं प्रासादमवलोकयामास ॥

ततो मलिनसंवीतां राक्षसीभिः समावृताम् ।
उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः ॥

ददर्श शुक्लपक्षादौ चन्द्रलेखामिवामलाम् ।
मन्दं प्रख्यायमानेन रूपेण रुचिरप्रभाम् ॥

पिनद्धां धूमजालेन शिखामिव विभावसोः ।
पीतेनैकेन संवीतां क्लिष्टेनोत्तमवाससा ॥

सपङ्कामनलङ्कारां विपद्मामिव पद्मिनीम् ।
व्रीडितां दुःखसंतप्तां परिम्लानां तपस्विनीम् ॥

ग्रहेणाङ्गारकेणेव पीडितामिव रोहिणीम् ।
अश्रुपूर्णमुखीं दीनां कृशामनशनेन च ॥

शोकध्यानपरां दीनां नित्यं दुःखपरायणाम् ।
प्रियं जनमपश्यन्तीं पश्यन्तीं राक्षसीगणम् ।
स्वगणेन मृगीं हीनां श्वगणाभिवृतामिव ॥

नीलनागाभया वेण्या जघनं गतयैकया ।
नीलया नीरदापाये वनराज्या महीमिव ॥

सुखार्हां दुःखसंतप्तां व्यसनानामकोविदाम् ।
तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ॥

तर्कयामास सीतेति कारणैरुपपादिभिः ।

पूर्णचन्द्राननां सुभ्रूं चारुवृत्तपयोधराम् ॥

कुर्वतीं प्रभया देवीं सर्वा वितिमिरा दिशः ।
तां नीलकेशीं बिम्बोष्ठीं सुमध्यां सुप्रतिष्ठिताम् ॥

सीतां पद्मपलाशाक्षीं मन्मथस्य रतिं यथा ।
इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव ॥

भूमौ सुतनुमासीनां नियतामिव तापसीम् ।
निःश्वासबहुलां भीरुं भुजगेन्द्रवधूमिव ॥

शोकजालेन महता विततेन न राजतीम् ।
संसक्तां धूमजालेन शिखामिव विभावसोः ॥

तां स्मृतीमिव संदिग्धां ऋद्धिं निपतितामिव ।
विहतामिव च श्रद्धामाशां प्रतिहतामिव ॥

सोपसर्गां यथा सिद्धिं बुद्धिं सकलुषामिव ।
अभूतेनापवादेन कीर्तिं निपतितामिव ॥

रामोपरोधव्यथितां रक्षोहरणकर्शिताम् ।
अबलां मृगशावाक्षीं वीक्षमाणां समन्ततः ॥

बाष्पाम्बुप्रतिपूर्णेन कृष्णवक्राक्षिपक्ष्मणा ।
वदनेनाप्रसन्नेन निःश्वसन्तीं पुनः पुनः ॥

मलपङ्कधरां दीनां मण्डनार्हाममण्डिताम् ।
प्रभां नक्षत्रराजस्य कालमेघैरिवावृताम् ॥

तस्य संदिदिहे बुद्धिर्मुहुः सीतां निरीक्ष्य तु ।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥

दुःखेन बुबुधे सीतां हनूमाननलङ्कृताम् ।
संस्कारेण यथा हीनां वाचमर्थान्तरं गताम् ॥

तां समीक्ष्य विशालाक्षीं राजपुत्रीमनिन्दिताम् ।
तर्कयामास सीतेति कारणैरुपपादिभिः ॥

अत्र 'तां स्मृतीमिव संदिग्धाम' इत्यनेन, पूर्वानुभूतपदार्थे संस्कारोद्बोधकाभावे झटिति स्पष्टतरा स्मृतिर्न भवतीत्युक्तम्। तदुक्तं प्राचीनैः—— 'पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां विपर्यासं यातो घनविरलभावः क्षितिरुहाम् । बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥' इति । स्मृतिवाक्यमिवेति वा । अत एव पुरुषदोषवर्जितेन परमेश्वरेण प्रणीतत्वादेव कार्त्स्न्येन वेदः प्रमाणम् । लौकिकं तु किंचिदेवेति । तथा स्मृतेः श्रुतिमूलकत्वालोभमूलकत्वादिनिर्णयाभावे स्मृतिवाक्यात् नार्थसत्ता निश्चयरूपा जायत इत्युक्तम् ॥

'ऋद्धिं निपतितामिव' इत्यनेन, अनयादधर्माच्च महत्यपि ऋद्धिर्गच्छतीति सूचितम् । तथा चोद्योगे नहुषोपाख्याने -- 'विमाने योजयित्वा च ऋषीन्नियममास्थितान् । तेनाभूद्धततेजाश्च निःश्रीकश्च महीपतिः ॥' इति । कामन्दकेऽपि—'धर्माद्वैजवनो राजा चिराय बुभुजे भुवम् । अधर्मादेव नहुषः प्रतिपेदे रसातलम् ॥' इति । उद्योगेऽपि—— 'न भेतव्यं त्वया देवि नहुषाद्दुष्टचेतसः । न ह्येष

स्थास्यति चिरं गत एष नराधमः ॥ अधर्मतो महर्षीणां बाह्-नाच्च हतः शुभे ।' इति । प्राचीना अपि— 'दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालनाद्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् । ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयान्मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥' इति ॥

'विहतामिव श्रद्धाम्' इत्यनेन, नास्तिक्यबुद्ध्या धर्मेषु श्रद्धा विहता भवतीत्युक्तम् । तथा च विष्णुपुराणे— 'मायामोहः स तान् दैत्यान्धर्ममत्याजयद्द्विज । नानाप्रकारं वचनं स तेषां युक्तियोजितम् । तथा तथावदद्धर्मं तत्यजुस्ते यथा यथा ॥ मायामोहेन ते दैत्याः प्रकारैर्बहुभिस्तथा । व्युत्थापिता यथा नैषां त्रयीं कश्चिदरोचयत् ॥' इति ॥

'आशां प्रतिहताम्' इत्यनेन विषयालाभेन, विहताशा कृशा भवतीति सूचितम् । तथा च राजधर्मे— 'सत्कृत्य नोपकुरुते परं शक्त्या यथार्हतः । सक्ता या सर्वभूतेषु साशा कृशतरी मया ॥ एकपुत्रः पिता पुत्रे नष्टे वा प्रोषितेऽपि वा । प्रवृत्तिं यो न जानाति साशा कृशतरी मया ॥ प्रसवे चैव नारीणां वृद्धानां पुत्रकारिता । तथा नरेन्द्र धनिनां साशा कृशतरी मया ॥ प्रदानकांक्षिणीनां च कन्यानां वयसि स्थिते । श्रुत्वा कथां तथायुक्तां साशा कृशतरी मया ॥' इति ॥

'सोपसर्गां यथा सिद्धिम्' इत्यनेन सिद्धोऽपि योगी प्रसक्तमुपसर्गं निरस्यैव मोक्षभाग्भवतीत्युक्तम् । तथा च

पातञ्जलसूत्रम् 'स्थान्युपमन्त्रणे संगस्मयाकरणं पुनरनिष्टप्रसङ्गात्।' इति। चत्वारः खल्वमी योगिनः— प्रथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति। तत्राद्यः संयमे प्रवृत्तमात्रः न किंचिज्जानाति। संयमेन भूतेन्द्रियाणि साक्षात्कृत्य तज्जिगीषुर्द्वितीयः। भूतेन्द्रियजयी पुरुषमाचिख्यासुस्तृतीयः। संप्राप्तपुरुषख्यातौ परवैराग्यसंपन्नश्चतुर्थः। सोऽसौ भगवान्महानुभावो जीवन्मुक्तो विघ्नशंकाकलङ्कशून्यः। तृतीयः जितभूतेन्द्रियत्वात् महेन्द्रादिभिरक्षोभ्यः। आद्यस्तु देवनिमन्त्रणायोग्यः। अतः परिशेषाद्द्वितीयः स्थानिभिः शक्रादिभिः शक्यते प्रार्थयितुम्— 'भो योगिन् इहास्यताम्। स्वर्गादिस्थाने रम्यताम्। कमनीयेयं कन्यका, दिव्योऽयं भोगः, रसायनमिदं जरामृत्युनिवारणम्, इदं कामगं यानम्' इति। एवं प्रार्थने संग आसक्तिः, 'अहो मम योगप्रभावः' इति स्मयश्च न कर्तव्यः। किं तु इत्थं दोषं तत्र भावयेत्— 'घोरेषु संसाराङ्गारेषु अहं पापच्यमानः कथंचित्क्लेशादिध्वान्तध्वंसकं योगप्रदीपमवापम्। तस्यैते तृष्णायोनयो विषयवायवः प्रतिपक्षाः। स खल्वहं लब्धालोकः कथमेतैर्वञ्चितः पुनः पुनः प्रदीप्तस्य संसारहुतभुजः स्वात्मानमिन्धनीकुर्याम्। अतः स्वस्ति वः स्वप्नसमेभ्यः कृपणजनप्रार्थनीयेभ्यो विषयेभ्यः। [इति]। एवं निश्चितमतिः पुरुषधौरेयः समाधिं भावयेत्। यदि तत्र संगस्मयौ भवेतां तदास्य योगभ्रष्टस्य पुनरनिष्टं प्रसज्येत। अतः संगस्मययोरकरणं कैवल्यान्तरायानिवारणकारणमित्यर्थः। अन्यत्रापि सूत्रे अन्तराया उक्ताः—'ते समाधावुपसर्गा व्युत्थाने सिद्धयः' इति। ते प्रातिभादयः समाधावपवर्गफले उपसर्गाः

विघ्ना भवन्ति । अतो मोक्षमाकाङ्क्षता ते उपेक्षणीयाः । यदि तत्रापेक्षा स्यात्, तदा मोक्षात् भ्रष्टः कथं कृतकृत्यतामियात् । न ह्यात्मप्रत्ययमन्तरेण कृतकृत्यता समस्ति । न चैते स्वात्मज्ञाने उपकुर्वन्ति । अपि तु व्युत्थाने सिद्धयो भवन्ति । एतदेवाभिप्रेत्योक्तम्— 'द्रव्यमन्त्रक्रियाकालशक्तयः साधु सिद्धिदाः । परमात्मपदप्राप्तौ नोपकुर्वन्ति काश्चन ॥ सर्वेच्छालाभसंशान्तावात्मलाभोदयो हि यः । स कथं सिद्धिवांछायां मग्नचित्तेन लभ्यते ॥' इति । [अतो] निरस्तसमस्तप्रतिबन्धस्यैव मोक्षप्राप्तिः ॥

'बुद्धिं सकलुषामिव' इत्यनेन, कामक्रोधादिना कालुष्ये सति पुरुषोऽनयप्रवृत्त्या विनष्टो भवति इति सूचितम् । तथा **चोद्योगे—** 'बुद्धौ कलुषभूतायां विनाशे समुपस्थिते । अनयो नयसंकाशो हृदयान्नापसर्पति ॥' इति ॥

'अभूतेनापवादेन कीर्तिं निपतितामिव' इत्यनेन, मिथ्यापवादोऽपि अपकीर्तिकरः । अतः कीर्तिनाशद्वारा पातित्यहेतुः सर्वयत्नेनापि अपवादोऽवश्यं परिहर्तव्य इति ॥

अत **एवोत्तररामायणे—** अभूतापवादपरिहाराय प्राणसमापि सीता परित्यक्तेति प्रतिपादितम्—'पौरापवादः सुमहांस्तथा जनपदस्य च । वर्तते मयि बीभत्सा सा मे मर्माणि कृन्तति ॥ एवं शुद्धसमाचारा देवगन्धर्वसंनिधौ । लंकाद्वीपे महेन्द्रेण मम हस्ते निवेशिता ॥ अन्तरात्मा च मे वेत्ति सीतां शुद्धां यशस्विनीम् । अतो गृहीत्वा वैदेहीमयोध्यामहमागतः ॥ अयं च मे महान्वादः शोकश्च परिवर्तते । पौरापवादः सुमहांस्तथा जनपदस्य

च ॥ अकीर्तिर्यस्य जायेत लोके भूतस्य कस्यचित् । पतत्येवाधमान्लोकान् यावच्छब्दस्तु कीर्त्यते ॥ अकीर्तिर्निन्द्यते देवैः कीर्तिर्देवेषु पूज्यते । कीर्त्यर्थं च समारम्भः सर्व एव महात्मनाम ॥ न हि पश्याम्यहं भूतं किंचिद्दुःखमतोऽधिकम् । श्वस्त्वं प्रभाते सौमित्रे विषयान्ते समुत्सृज ॥' इति ॥

'आम्नायानामयोगेन विद्यां प्रशिथिलामिव'। आम्नायः पुनः पुनरभ्यासः । तदभावे विद्या शिथिला भवतीति सूचितम् । तथा चोद्योगे विदुरः— 'अनाम्नायमला वेदाः' इति । तथा— 'शास्त्रं सुनिश्चितधिया परिचिन्तनीयमाराधितोऽपि नृपतिः परिसेवनीयः । अंकागतापि युवतिः परिरक्षणीया शास्त्रे नृपे च युवतौ च कुतो वशित्वम् ॥' इति च ॥

'संस्कारेण यथा हीनाम्' इत्यनेन व्याकरणाद्य[न]नुशिष्टः स्वरहीनः शब्दः विवक्षितार्थप्रतिपादनासमर्थ इति सूचितम् । तथा च शीक्षायाम— 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥' इति ॥

इत्थं सीतया स्नानप्रसाधनादिकं विना नियमेन क्लेशेन च स्थितमिति कृत्स्नप्रकरणेन प्रतिपादनात्, अग्रे—

तत्र निष्प्रभां शोकसंतप्तां मलसंकुलमूर्धजाम् ।
क्षीणपुण्यां च्युतां भूमौ तारां निपतितामिव ॥

चारित्रव्यपदेशाढ्यां भर्तृदर्शनदुर्गताम् ।
भूषणैरुत्तमैर्हीनां भर्तृवात्सल्यभूषिताम् ॥

राक्षसाधिपसंरुद्धां बन्धुभिश्च विनाकृताम् ।
वियूथां सिंहसंरुद्धां बद्धां गजवधूमिव ॥

चन्द्रलेखां पयोदान्ते शारदाभ्रैरिवावृताम् ।
क्लिष्टरूपामसंस्पर्शादयुक्तामिव वल्लकीम् ॥

सीतां भर्तृवशे युक्तामयुक्तां राक्षसीवशे ।
अशोकवनिकामध्ये शोकसागरमाप्लुताम् ।
ददर्श हनुमान्देवीं लतामकुसुमामिव ॥

सा मलेन च दिग्धाङ्गी वपुषा चाप्यलङ्कृता ।
मृणाली पङ्कदिग्धेव विभाति न विभाति च ॥

[सुन्दर० स०१७]

इति नियमतोऽवस्थानप्रतिपादनाच्च, प्रवासादिना असन्निहित-भर्तृकया पुनर्भर्तृदर्शनपर्यन्तमनेन व्रतेनास्थेयमिति सूचितम् । तथा च याज्ञवल्क्यः— 'क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥ गते देशान्तरं पत्यौ गन्धमाल्याञ्जनान्यपि । दन्तकाष्ठं च ताम्बूलं वर्जयेद्वनिता सती ॥' इति । संग्रहेऽपि— 'मुदिता मुदितेऽत्यन्तं प्रोषिते मलिनाम्बरा । कार्यार्थं प्रोषिते क्वापि सर्वमण्डनवर्जिता ॥' इति । भारते लुब्धकपोतीयेऽपि— 'प्रोषिते दीनवदना क्रुद्धे च प्रियवादिनी' इति । आनुशासनिकेऽपि— 'प्रवासं यदि मे याति भर्ता कार्येण केनचित् । सुमनोवर्णकापेता भवामि व्रतचा-रिणी ॥' इति ॥

अत एव नलेन भर्त्रा वियुक्ता दमयन्ती अनेन व्रतेनैव स्थितवतीति प्रतिपादितम् वनपर्वणि नलोपाख्याने— 'मलपंकाभिलिप्तांगीं मृणालीमिव तां भृशम् । पौर्णमासीमिव निशां राहुग्रस्तनिशाकराम् ॥ पतिशोकाकुलां बालां शुष्कस्रोतां नदीमिव । विध्वस्तपर्णकमलां वित्रासितविहंगमाम् । हस्तिहस्तपरिक्षिप्तां व्याकुलामिव पद्मिनीम् ॥ सुकुमारीं सुजातांगीं रत्नगर्भगृहोचिताम् ॥ दह्यमानामिवोष्णेन मृणालीमिव चो[मचिरो]द्धृताम् । रूपौदार्यगुणोपेतां मण्डनार्हाममण्डिताम् ॥ चन्द्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृताम् । कामभोगैः प्रियैर्हीनां हीनां बन्धुजनेन च ॥ देहं धारयतीं दीनां भर्तृदर्शनकाङ्क्षया । भर्ता नाम परं नार्या भूषणं भूषणैर्विना । एषा विरहिता तेन शोभनापि न शोभते ॥ दुष्करं कुरुतेऽत्यर्थं हीनो यदनया नलः । धारयत्यात्मनो देहं न शोकेनावसीदति ॥ इमामसितकेशान्तां शतपत्रायतेक्षणाम् । सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथितं मनः ॥' इति ॥

**इयं सा यत्कृते रामश्चतुर्भिः परितप्यते ।**
**कारुण्येनानृशंस्येन शोकेन मदनेन च ॥**

**स्त्री प्रणष्टेति कारुण्यादाश्रितेत्यानृशंस्यतः ।**
**पत्नी नष्टेति शोकेन प्रियेति मदनेन च ॥**

अत्र 'स्त्री प्रणष्टेति कारुण्यात्' इति प्रतिपादनात्, दीने स्त्रीजातिमात्रे दया कर्तव्येति सूचितम् । अत एव क्रूरहृदयोऽपि व्याधः कलिदोषेण भर्तृवियुक्तां वने चरन्तीमजगरग्रस्तां दमयन्तीमवलोक्य करुणया रक्षितवानिति प्रतिपादितं वनपर्वणि—

'आक्रन्दितमभिश्रुत्य जवेनाभिससार ह । तां स दृष्ट्वा तथा ग्रस्तामुरगेणायतेक्षणाम् ॥ मोक्षयित्वा स तां व्याधः प्रक्षाल्य सलिलेन ह । समाश्वास्य कृताहारामथ पप्रच्छ भारत ॥' इति ॥

'आश्रितेत्यानृशंस्यतः' इत्यनेन आश्रितासंरक्षणे प्रत्यवाय उक्तः। तथा च **महाप्रस्थानिके**— 'भक्तत्यागं प्राहुरत्यन्तपापं तुल्यं लोके ब्रह्महत्याकृतेन' इति। प्रतिप्रदानं शरणागतस्य स्त्रियो वधो ब्राह्मणस्वापहारः । मित्रद्रोहस्तानि चत्वारि शक्र भक्तत्यागश्चैव समं मतं मे॥' इति ॥

'पत्नी नष्टेति शोकेन' इत्यत्र धर्मसहायभूताया: भार्याया नाशः शोकहेतुत्वेन प्रतिपादितः, 'पत्युर्नो यज्ञसंयोगे' इति पतिशब्दाद्यज्ञसंयोगे गम्यमाने नकारविधानेन पत्नीशब्दस्य धर्मसहायभूतस्त्रीवाचकत्वात् । भार्याया धर्मसहायत्वं **चापद्धर्मे**— 'धर्मार्थकामकालेषु भार्या पुंसः सहायिनी । तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च ॥ नास्ति भार्यासमो लोके सहायो धर्मसंग्रहे ।' इति ॥

'प्रियेति मदनेन च' इत्यनेन प्रियावियोगे प्रियस्य प्रियवियोगे प्रियायाश्च मदनकृता विविधा अवस्था भवन्तीति सूचितम् । प्रतिपादिताश्च सीताविप्रयुक्तरामस्य विविधावस्थाः— 'धावन्त्यपि मया दृष्टा तिष्ठ यद्यस्ति सौहृदम् ॥ नैव सा नूनमथवा हिंसिता चारुहासिनी । कृच्छ्रं प्राप्तं न मां नूनं यथोपेक्षितुमर्हति ॥ क्वचिदुद्भ्रमते वेगात्क्वचिद्विभ्रमते बलात् । क्वचिन्मत्त इवाभाति कान्तान्वेषणतत्परः॥' [अरण्य० स० ६०]

'न मांसं राघवो भुङ्क्ते न चापि मधु सेवते। वन्यं सुविहितं नित्यं भक्तमश्नाति पंचमम्॥ नैव दंशान्न मशकान्न कीटान्न सरीसृपान्। राघवोऽपनयेद्गात्रात्त्वद्गतेनान्तरात्मना॥ नित्यं ध्यानपरो रामो नित्यं शोकपरायणः। नान्यच्चिन्तयते देवि स तु कामवशं गतः॥ अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः। सीतेति मधुरां वाणीं व्याहरन्प्रतिबुध्यते॥ दृष्ट्वा फलं वा पुष्पं वा यच्चान्यत्सुमनोहरम्। बहुशो हा प्रियेत्येवं श्वसंस्त्वामभिभाषते॥ स देवि नित्यं परितप्यमानस्त्वामेव सीतेत्यभिभाषमाणः। दृढव्रतो राजसुतो महात्मा तवैव लाभाय कृतप्रयत्नः॥ तवादर्शनजेनार्ये शोकेन समभिप्लुतः। न शर्म लभते रामः सिंहार्दित इव द्विपः॥' [सुन्दर० स ३६] क्व गच्छसि वरारोहे मामुत्सृज्य सुमध्यमे। त्वया विरहितश्चाहं त्यक्ष्ये जीवितमात्मनः॥' [अरण्य० स० ६१] इत्यादिभिः॥

तथा प्रियविरहात् सीताया अपि अवस्थाः प्रतिपादिताः— 'सा रामसंकीर्तनवीतशोका रामस्य शोकेन समानशोका॥' [सुन्दर० स० ३६] 'रामेति रामेति विचिन्त्य बुद्ध्या तथैव वाचा ब्रुवती तमेव। तस्यानुरूपां च कथां तमर्थं तथैव पश्यामि तथा शृणोमि॥ अहं हि तस्याद्य मनोभवेन संपीडिता तद्गतसर्वभावा। विचिन्तयन्ती सततं तमेव तथैव पश्यामि तथा शृणोमि॥' [सुन्दर० स०३२] समीपं राजसिंहस्य रामस्य विदितात्मनः। संकल्पहयसंयुक्तैर्यान्तीमिव मनोरथैः॥ शुष्यन्तीं रुदतीमेकां ध्यानशोकपरायणाम्। दुःखस्यान्तमपश्यन्तीं रामां राममनुव्रताम्॥' [सुन्दर० स०१९] स्वप्नो न चायं न च मेऽस्ति निद्रा शोकेन दुःखेन

च पीडितायाः । सुखं हि मे नास्ति यतोऽस्मि हीना तेनेन्दुपूर्ण-प्रतिमाननेन ॥' [सुन्दर० स० ३२] 'ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा । भृशं चुक्रोश मत्तेव भ्रान्तचित्ता यथातुरा ॥ आमन्त्रये जनस्थाने कर्णिकारान्सुपुष्पितान् । क्षिप्रं रामाय शंसध्वं सीतां हरति रावणः ॥ यानि कानिचिदप्यत्र सत्वानि निवसन्त्युत । सर्वाणि शरणं यामि मृगपक्षिगणानपि ॥ ह्रियमाणां प्रियां भर्तुः प्राणेभ्योऽपि गरीयसीम् । विवशापहृता सीता रावणेनेति शंसत ॥' [अरण्य० स० ४९] 'सर्वथा तेन हीनाया रामेण विदितात्मना । तीक्ष्णं विषमिवास्वाद्य दुर्लभं मम जीवितम् ॥ जीवितं त्यक्तुमिच्छामि शोकेन महतावृता ।' [सुन्दर० स० २५] 'उन्मत्तेव प्रमत्तेव भ्रान्तचित्तेव शोचती ।' [सुन्दर० स० २६] 'विपमाना परिशुष्कवक्त्रा नगोत्तमं पुष्पितमाससाद ॥ उद्बध्य वेण्युद्ग्रथितेन शीघ्रमहं गमिष्यामि यमस्य मूलम् ।' [सुन्दर० स० २८] इति ॥

इत्थं परस्परवियोगप्रयुक्ता बह्वयोऽवस्था नायिकानायकयोः सन्ति । ताश्च संक्षेपतो दशविधा इत्युक्तं लक्षणकारैः— 'चक्षुः-प्रीतिर्मनःसङ्गः संकल्पोऽथ प्रजागरः । अरतिः संज्वरः कार्श्यं लज्जात्यागो भ्रमो मृतिः । दशावस्था भवन्त्येता विप्रलम्भेऽभिलाषजे ॥' इति ॥

तासां लक्षणमुदाहरणं च काव्यदर्पणे— 'चक्षुःप्रीतिस्तु कथिता तदेकालोकने रतिः । पश्यन्त्यनिमिषं कान्तमासीच्चित्रार्पितेव सा ॥' इति । यथा वा नैषधे— 'लिपिं दृशा भित्तिविभूषणं त्वां नृपः पिबन्नादरनिर्निमेषः । चक्षुर्जलैरार्जितमात्म-

चक्षूरागं स धत्ते रचितं त्वया नु ॥' इति। आदरनिर्निमेषो नृपः साश्रुपातमालेख्यसमर्पितां त्वां पश्यन्नात्मनि चक्षुषोश्च रागं धत्ते। स चक्षुर्जलकृतो वा त्वत्कृतो वेति संदेहः। अत्र यद्यपि आत्मगतो रागस्त्वद्धेतुकः, चक्षुर्गतश्च जलहेतुक इति व्यवस्थितमेव; तथापि श्लिष्टरागशब्दमहिम्ना एकीकृत्य तव हेतुद्वयसंभावनया संदेहाभिधानम् ॥

यथा वा— 'पातुर्दशालेख्यमयीं नृपस्य त्वामादरादस्तनिमीलयास्ते। ममेदमित्यश्रुणि नेत्रवृत्तेः प्रीतेर्निमेषच्छिदया विवादः ॥' अत्रापि निर्निमेषया दृशा आलेख्यमयीं त्वां द्रष्टुर्नेत्रगतेन निमेषाभावेन (च) अश्रुणि विषये ममेदं ममेदमिति कलहोऽस्तीत्यर्थः। आभ्यां चक्षुःप्रीतिरुक्ता ॥

इदं च श्रवणप्रीतेरप्युपलक्षणम। यथा— 'सखीजनानां सरसोक्तिगुंफेष्वनुत्तराया हरिणेक्षणायाः। त्वद्वर्णनाकर्णनसौमनस्यमकुण्ठतायां श्रवसः प्रमाणम ॥' अत्रापि सखीजनानां सरसोक्तिषु उत्तरमनुक्त्वा बाधिर्यमभिनयन्त्या नायिकायाः श्रवसः अकुण्ठितत्वं नायकस्य तव वर्णनाकर्णनजनितसौमनस्येन निर्णीयते ॥

अथ मनःसङ्गः— 'मनःसङ्गस्तु मनसस्तदेकायत्तता सदा। नपुंसकमिति ज्ञात्वा तां प्रति प्रेरितं मनः। तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥' यथा वा— 'त्वं हृद्गता भैमि बहिर्गतापि प्राणायिता नासिकयास्यगत्या। न चित्रमाक्रामति तत्र चित्रमेतन्मनो यद्भवदेकवृत्ति ॥' त्वं बहिर्गतापि हृद्गता। अस्य

नलस्य त्वं कया गत्या केन प्रकारेण प्राणायिता नासि । सर्वप्रकारेणापि प्राणायितैव । अतः नासाद्वारेण आस्यगत्या मुखद्वारेणान्तर्बहिः संचरता प्राणेन तुल्यत्वादन्तर्बहिरवस्थानमुचितमित्यर्थः । तत्र भवत्याः प्राणतुल्यत्वे चित्रं आश्चर्यो रसः चित्तं नाक्रामति । 'कथमियं प्राणायिता' इति चित्तस्य आश्चर्यकरं न भवतीत्यर्थः । यतः एतस्य नलस्य मनो भवदेकवृत्ति भवदेकजीवनम् । जीवितभूतस्य प्राणायितत्वे किं चित्रमित्यर्थः ॥

अथ सङ्कल्पः— 'सततं तद्गतां चिन्तां सङ्कल्पं संप्रचक्षते । दुर्लभा वल्लभा नूनं रागोऽपि मम कोऽप्यसौ । नेक्षे च दूतीं निपुणां न जाने भवितव्यताम् ॥' इति । यथा वा— 'अजस्रमारोहसि दूरदीर्घां संकल्पसोपानततिं तदीयाम् । श्वासान्स वर्षत्यधिकं पुनर्यद्ध्यानात्तव त्वन्मयतामवाप्य ॥' दूरदीर्घां नलस्य संकल्पसोपानततिं त्वमजस्रमारोहसि । नलश्च अधिकश्वासं मुंचतीति यत् तत् तव ध्यानात् त्वन्मयतामवाप्य त्वदभेदं प्राप्यैव । कथमन्यथा अन्यस्यायासेनान्यस्य श्वासदोषो भवेत् इति ॥

यथा वा— 'हृत्तस्य यां मन्त्रयते रहस्त्वां तां व्यक्तमामन्त्रयते मुखं यत् । तद्वैरिपुष्पायुधमित्रचन्द्रसख्यौचिती सा खलु तन्मुखस्य ॥' नलः गूढतया मनसा यां त्वां चिन्तयति तामेव तदीयं मुखं व्यक्तभाषणेन प्रकाशयतीति यत् सा[तन्मुखस्य] रहस्यार्थप्रकाशकस्य नलमुखस्य नलशत्रुमदनमित्रचन्द्रसदृशत्वेन तत्सख्यौचिती नलमुखस्य नलशत्रुमदनमित्रचन्द्रसदृशत्वेन नलशत्रुत्वात्तदीयरहस्यार्थभेदनं युक्तमेव ॥

अथ प्रजागरः— 'प्रजागरस्तच्चिन्ताभिर्निद्राक्षतिरहर्निशम् । निमेषसंकथाशून्यं निशि नीलोत्पलश्रियम् । अपनिद्रं दिवाम्भोजशोभामेति तदीक्षणम् ॥' इति । यथा वा— 'स्थितस्य रात्रावधिशय्य शय्यां मोहे मनस्तस्य निमज्जयन्ती । आलिङ्ग्य या चुम्बति लोचने सा निद्राधुना न त्वदृतेऽङ्गना वा ॥' अत्र च शय्यायां शयित्वा स्थितस्य नलस्य मनो मोहे निमज्य मोहयित्वा निद्रा त्वदन्याङ्गना वालिङ्ग्य लोचने न चुम्बतीति प्रतिपादनान्निद्रात्याग उक्तः ॥

अथारतिः— 'अरतिस्तु भवेद्द्वेषो हृद्येष्वपि च वस्तुषु । चन्द्रं कलयते तन्वी चक्रवाकीव पावकम् ॥' इति ॥

अथ संज्वरः— 'संज्वरस्तनुसंतापभरः स्मरशरोद्भवः । तापस्तस्या यदि रविश्चन्दनादपि शीतलः ॥' इति ॥

अथ कार्श्यम्— 'कार्श्यं तु स्मरसंतापविहिता तनुता तनोः । ऊर्मिकां कंकणं तच्च तनुतेऽङ्गदमद्य सा ॥' यथा वा— 'स्मरेण निस्तक्ष्य वृथैव बाणैर्लावण्यशेषां कृशतामनायि । अनङ्गतामप्ययमाप्यमानः स्पर्धां न सार्धं विजहाति तेन ॥' स्मरेण स वृथैव निस्तक्ष्य लावण्यशेषां कृशतामनायि । सोऽपि यतः अनङ्गतामवाप्यापि स्पर्धां न विजहाति इति प्रतिपादनात् कार्श्यमुक्तम् । अतः तत्कृततक्षणप्रयासो व्यर्थ इति ॥

अथ लज्जात्यागः— 'लज्जात्यागस्तु कन्दर्पसंतापेन त्रपाक्षतिः । स्वप्नेऽद्य तेन पृष्टापि भूयो नावोचमुत्तरम् । किन्नु कुप्येत मय्येष इति पृच्छति सा सखीम् ॥' इति । यथा

वा— 'त्वत्प्रापकात्त्रस्यति नैनसोऽपि त्वय्येव दास्येऽपि न लज्जते यत् । स्मरेण बाणैरतितक्ष्य तीक्ष्णैर्लूनः स्वभावोऽपि कियान् किमस्य ॥' धार्मिको नलः त्वत्प्राप्त्युपायभूतं पातकं दास्यमपि वा लज्जां विनैवाङ्गीकरोति इति यतः तस्मात् धार्मिकस्य कियान्स्वभावोऽपि बाणैरतितक्ष्य लूनो भवेदित्युक्तया लज्जा-परित्याग उक्तः । यथा वा— 'स्मारं ज्वरं घोरमपत्रपिष्णोः सिद्धागदंकारचये चिकित्सौ । निदानमौनादविशद्विशाला साङ्क्रामिकी तस्य रुजेव लज्जा ॥' अपत्रपिष्णोः लज्जाशीलस्य नलस्य स्मारं ज्वरं मन्मथसंतापं चिकित्सौ प्रतिकर्तुमिच्छौ सिद्धवैद्यसंघे निदानमौनात् रोगनिदानाकथनात् सांक्रामिकी क्षयादिवद्विशाला लज्जा आविशत् इति लज्जात्याग उक्तः ॥

अथ भ्रमः— 'भ्रमः स्यादयथाज्ञानं त्वन्मयं वेत्ति सा जगत् ।' यथा वा— 'संगमविरहविकल्पे वरमिह विरहो न सङ्गमस्तस्याः ॥ सङ्गे सा पुनरेका त्रिभुवनमपि तन्मयं विरहे ॥' यथा वा— 'प्रासादे सा दिशि दिशि च सा पृष्ठतः सा पुरः सा पर्यङ्के सा पथि पथि च सा तद्वियोगातुरस्य । हंहो चेतः प्रकृतिरपरा नास्ति मे कापि सा सा सा सा सा सा जगति सकले कोऽयमद्वैतवादः ॥' इति ॥

मरणावस्था तु— 'मृतिस्तु मरणोद्योगः पश्यतीन्दुं ससा-हसा ।' इति । यथा वा— 'सव्यापसव्यत्यजनाद्द्विरुक्तैः पञ्चे-षुबाणैः पृथगर्पितासु । दशासु शेषा खलु तद्दशा या तया नभः पुष्प्यतु कोरकेण ॥' वामदक्षिणहस्ताभ्यां प्रयोगेण द्विगुणीभूतै-र्मन्मथबाणैरर्पितासु संपादितासु दशसु दशासु अवशिष्टा या

दशमी मरणावस्था तया कोरकभूतया नभः पुष्प्यतु । गगनकुसुमायमाना दशमी अवस्था भवतु । कदापि माभूदित्यर्थ इति ॥

केचित्तु उन्मादावस्था मूर्च्छावस्थेति द्वयमाहुः— 'उन्मादस्तुल्यवृत्तित्वं चेतनाचेतनेष्वपि ।' इति । तद्यथा— 'बिभेति रुष्टासि किलेत्यकस्मात्स त्वां किलोपेत्य हसत्यकाण्डे । यान्तीमिव त्वामनुयात्यहेतोरुक्तस्त्वयेव प्रतिवक्ति मोघम् ॥' 'मूर्च्छा त्वभ्यन्तरे वृत्तिर्बाह्येन्द्रियनिमीलनात् ।' 'भवद्वियोगाच्छिदुरार्तिधारायमस्वसुर्मज्जति निःशरण्यः । मूर्च्छामयद्वीपमहान्ध्यपङ्के हा हा महीभृद्भटकुञ्जरोऽयम् ॥' भवद्वियोगे सति अविच्छिन्ना आर्तिधारा दुःखपरंपरा या सा एव यमस्वसा यमुना तस्या मूर्च्छामयद्वीपमहान्ध्यपंके निःशरण्यः महीभृद्भटकुञ्जरो मज्जतीत्यर्थः । तथा च प्रियविरहो विविधावस्थासंपादक इति युक्तमेव ॥

तस्मादत्यन्तासक्तिः क्वापि विषये न निधेया । तथा च विष्णुपुराणे— 'यावतः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान् । तावन्तोऽस्य निखन्यन्ते हृदये शोकशंकवः ॥' इति ॥

**अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् ।**
**एवं सीतां तदा दृष्ट्वा हृष्टः पवनसंभवः ।**
**जगाम मनसा रामं प्रशशंस च तं प्रभुम् ॥**

इति पञ्चदशः सर्गः ।

## अथ षोडशः सर्गः ॥

**षोडशे**— ततो हनूमान् प्रशस्य रामभद्रमित्थमचिन्तयत्— अहो विधेरनतिलंघनीयता । यदियं लोकनाथस्य रामभद्रस्य महिष्यपि सीता दुःखार्णवनिमग्ना इति ॥

**सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथितं मनः ।**

अनेन परकीयव्यसनावलोकनेन महतां व्यथा भवतीति सूचितम् । अत एव अयोध्याकाण्डे रामभद्रस्य गुणप्रतिपादनावसरे उक्तम्— 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः । उत्सवेषु च सर्वेषु पितेव परितुष्यति ॥' इति ॥

समानाभिजनवयोरूपायाः पतिव्रतायाः जानक्याः कृते रामकृतं खरदूषणप्रमुखरक्षोनिषूदनं वालिनिग्रहणेन सुग्रीवाभिषेचनं अस्या गवेषणाय वानरप्रेषणं च युक्तमेवेति तर्कयामि ॥

**यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत् ।**
**अस्याः कृते जगच्चापि युक्तमित्येव मे मतिः ॥**

**राज्यं वा त्रिषु लोकेषु सीता वा जनकात्मजा ।**
**त्रैलोक्यराज्यं सकलं सीताया नाप्नुयात्कलाम् ॥**

अनेन रूपवती पतिव्रता स्त्री दुर्लभेति सूचितम् । तदुक्तं प्राचीनैः—'रूपसौभाग्यसंपन्नं प्रेमपात्रं प्रियंवदम् । कुलीनमनुकूलं च कलत्रं कुत्र लभ्यते ॥' इति ॥

**अस्या नूनं पुनर्लाभाद्राघवः प्रीतिमेष्यति ।**
**राजा राज्यात्परिभ्रष्टः पुनः प्राप्येव मेदिनीम् ॥**

अनेनापूर्वधनलाभापेक्षया प्रणष्टवस्तुलाभेन संतोषातिशय उक्तः। तथा च बालकाण्डे— 'यथामृतस्य सम्प्राप्तिर्यथा वर्षमनूदके। यथा सदृशदारेषु पुत्रजन्माप्रजस्य च॥ प्रणष्टस्य यथा लाभो यथा हर्षो महोदये।' इति॥

इत्येवमर्थं कपिरन्ववेक्ष्य सीतेयमित्येव निविष्टबुद्धिः।
संश्रित्य तस्मिन्निषसाद वृक्षे बली हरीणां प्रवरस्तपस्वी॥

इति षोडशः सर्गः।

---

## अथ सप्तदशः सर्गः॥

**सप्तदशे**— अथ (सीतागवेषणव्यग्रस्य हनूमतः) निखिलवस्तुप्रकाशनेन साचिव्यमाचरता विधुमण्डलेन दूरीकृतमहार्णवलङ्घनश्रमो हनूमान्—

स ददर्शाविदूरस्था राक्षसीर्घोरदर्शनाः।
एकाक्षीमेककर्णां च कर्णप्रावरणां तथा॥

अकर्णां शंकुकर्णां च मस्तकोच्छ्वासनासिकाम्।
अतिकायोत्तमाङ्गीं च तनुदीर्घशिरोधराम्॥

ध्वस्तकेशीं तथाकेशीं केशकम्बलधारिणीम्।
लम्बकर्णललाटां च लम्बोदरपयोधराम्॥

लंबोष्ठीं चुबुकोष्ठीं च लम्बास्यां लम्बजानुकाम्।
ह्रस्वां दीर्घां तथा कुब्जां विकटां वामनां तथा॥

करालां भुग्नवक्त्रां च पिङ्गाक्षीं विकृताननाम् ।
विकृताः पिङ्गलाः काळीः क्रोधनाः कलहप्रियाः ॥
कालायसमहाशूलकूटमुद्गरधारिणीः ।
वराहमृगशार्दूलमहिषाजशिवामुखीः ॥
गजोष्ट्रहयपादाश्च निखातशिरसोऽपराः ।
एकहस्तैकपादाश्च खरकर्ण्यश्वकर्णिकाः ॥
गोकर्णीर्हस्तिकर्णीश्च हरिकर्णीस्तथापराः ।
अनासा अतिनासाश्च तिर्यङ्नासा विनासिकाः ॥
गजसंनिभनासाश्च ललाटोच्छ्वासनासिकाः ।
हस्तिपादा महापादा गोपादाः पादचूलिकाः ॥
अतिमात्रशिरोग्रीवा अतिमात्रकुचोदरीः ।
अतिमात्रास्यनेत्राश्च दीर्घजिह्वानखास्तथा ॥
अजामुखीर्हस्तिमुखीर्गोमुखीः सूकरीमुखीः ।
हयोष्ट्रखरवक्त्राश्च राक्षसीर्घोरदर्शनाः ॥
शूलमुद्गरहस्ताश्च क्रोधनाः कलहप्रियाः ।
करालधूम्रकेशीश्च राक्षसीर्विकृताननाः ॥
पिबन्तीः सततं पानं सदा मांससुराप्रियाः ।
मांसशोणितदिग्धांगीर्मांसशोणितभोजनाः ॥

अत्र प्राग्भवेष्वेकैकश्येन सामस्त्येन वा सकृदनुष्ठितानां पापानां फलभूताङ्गवैरूप्यादिप्रतिपादनात् भवान्तरे राक्षस्योऽतिप्रापिष्ठा इति सूचितम् ॥

अङ्गवैरूप्यादीनां पापफलत्वं मानवे— 'इह दुश्चरितैः केचित्केचित्पूर्वकृतैस्तथा । प्राप्नुवन्ति दुरात्मानो नानारूपविपर्ययम् ॥ एवं कर्मविशेषेण जायन्ते सद्विगर्हिताः । जडान्धमूकबाधिरा विकृताकृतयस्तथा ॥ हिंस्रा भवन्ति क्रव्यादाः कृमयोऽभक्ष्यभक्षिणः । परस्परादिनः स्तेनाः प्रेतान्त्यस्त्रीनिषेवकाः ॥ संयोगं पतितैर्गत्वा परस्यैव च योषितः । अपहृत्य च विप्रस्वं भवन्ति ब्रह्मराक्षसाः ॥ स्वेभ्यः स्वेभ्यश्च कर्मभ्यश्च्युता वर्णा अनापदि । पापान्संसृत्य संसारान् प्रेष्यतां यान्ति दस्युषु ॥ बहून्वर्षगणान्घोरान् नरकान् प्राप्य तत्क्षयात् । संसारान्प्रतिपद्यन्ते महापातकिनस्त्विमान् ॥ श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम् । चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति ॥ मणिमुक्ताप्रवाळांश्च हृत्वा लोभेन मानवाः । विविधानि च रत्नानि जायन्ते हेमकर्तृषु ॥ धान्यं हृत्वा भवत्याखुः कांस्यं हंसो जलं प्लवः । मधु दंशः पयः काको रसं श्वा नकुलो घृतम् ॥ मांसं गृध्रो रसान्मद्गुस्तैलं तैलपकः खगः । चिरीवाकस्तु लवणं बलाका शकुनिर्दधि ॥ कौशेयं तित्तिरिर्हृत्वा क्षौमं हृत्वा तु दर्दुरः । कार्पासं तान्तवं क्रौञ्चो गोधा गां मद्गुको गुडम् ॥ चुच्छुन्दरी शुभान् गन्धान् पत्रशाकं च बर्हिणः । श्वावित् कृतान्नं विविधमकृतान्नं तु शल्यकः ॥ बको भवति हृत्वाग्निं गृहकारी ह्युपस्करम् । रक्तानि हृत्वा वासांसि जायन्ते जीवजीविकाः ॥ वृको मृगेभं व्याघ्रोऽश्वं फलं पुष्पं तु मर्कटः । स्त्रीमृक्षश्चातको वारि यानान्युष्ट्रः पशूनजः ॥ यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः ।

अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः ॥ स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः । एतेषामेव जन्तूनां पत्नीत्वमुपयान्ति ताः ॥ वान्ताश्युल्कामुखः प्रेतो विप्रो भवति विच्युतः । अमेध्यकुणपाशी च क्षत्रियः कटपूतनः ॥ मैत्राक्षज्योतिकः प्रेतो वैश्यो भवति पूयभुक् । चैलाशकस्तु भवति शूद्रो धर्मात्स्वकाच्च्युतः ॥ यथा यथा निषेवन्ते विषयान्विषयात्मकाः । तथा तथा कुशलता तेषु तेषूपजायते ॥ तेऽभ्यासात्कर्मणां तेषां पापानामल्पबुद्धयः । संप्राप्नुवन्ति दुःखानि तासु तास्विह योनिषु ॥ तामिस्रादिषु चोग्रेषु नरकेषु विवर्तनम् । असिपत्रवनादीनि बन्धनच्छेदनानि च ॥ विविधांश्चोपसंबन्धान् काकोलूकैश्च भक्षणम् । संभवांश्च वियोनीषु दुःखप्रायासु नित्यशः ॥ शीतातपाभिघातांश्च विविधानि भयानि च । असकृद्गर्भवासेषु वासं जन्म च दारुणम् ॥ बन्धनानि च कष्टानि परप्रेष्यत्वमेव च । बन्धुप्रियवियोगांश्च संवासं चाप्रियैर्जनैः ॥ द्रव्यार्जनं च नाशं च मित्रामित्रस्य चार्जनम् । जरां चैवाप्रतीकारां व्याधिभिश्चोपपीडनम् । क्लेशांश्च विविधांस्तांस्तान्मृत्युमेव च दुर्जयम् ॥ यादृशेन तु भावेन यद्यत्कर्म निषेवते । तादृशेन शरीरेण तत्तत्फलमुपाश्नुते ॥' इति ॥

स्मृत्यन्तरेऽपि— 'कृमिकीटपतङ्गानां विड्भुजां चैव पक्षिणाम् । हिंस्राणां चैव सत्वानां सुरापो ब्राह्मणो व्रजेत् ॥ लूताहिसरटानां च तिरश्चां चाम्बुचारिणाम् । हिंस्राणां च पिशाचानां स्तेनो विप्रः सहस्रशः ॥ तृणगुल्मलतानां च क्रव्यादां दंष्ट्रिणामपि । क्रूरकर्मरतानां च क्रमशो गुरुतल्पगः ॥' इति ॥

इत्थं स्वकर्मभिः कुत्सितरूपतया जननवत् राजदोषादपि विरूपाः प्रजायन्ते इति प्रतिपादितं वनपर्वणि— 'अभिचाराश्नरेन्द्राणां धर्मः संकीर्यते महान् । अधर्मो वर्धते वापि संकीर्यन्ते ततः प्रजाः ॥ उरूण्डा वामनाः कुब्जाः स्थलशीर्षाक्षिकर्णिकाः । क्लीबाश्चान्धाश्च बधिरा जायन्ते स्तब्धलोचनाः । पार्थिवानामधर्मित्वात्प्रजानामभवः सदा ॥' इति । तस्मात्स्वयमपि पापं न कुर्यात् , पापिष्ठराष्ट्रवासमपि न कुर्यात् ॥

तादृशीभिश्च शूलमुद्गरपरिघादिविविधायुधहस्ताभिः राक्षसीभिः संनिरुद्धाम्—

**इमां तु शीलसंपन्नां द्रष्टुमिच्छति राघवः ।**
**रावणेन प्रमथितां प्रपामिव पिपासितः ॥**

अत्र च पिपासितो दृष्टान्तत्वेनोपात्तः जलालाभेन प्रपासापन्न एव विवक्षितः । आपदि तदनुज्ञानं लघुतया प्रायश्चित्तं च माधवीये— 'प्रपास्वरण्ये कटके च कूपे द्रोण्या जलं केशविनिस्सुतं च । श्वपाकचण्डालपरिग्रहेषु पीत्वा जलं पंचगव्येन शुध्येत् ॥' इति ॥

सेयं सीता मयेदानीं दृष्टा इति विचिन्त्य—

**नमस्कृत्वाथ रामाय लक्ष्मणाय च वीर्यवान् ।**
**सीतादर्शनसंहृष्टो हनूमान् संवृतोऽभवत् ॥**

इति सप्तदशः सर्गः ।

## अथ अष्टादशः सर्गः ।

अष्टादशे— इति विचिन्तयति हनूमति चरमगिरिशिखरोपकण्ठं प्राप्तुमुत्कण्ठिते निशीथिनीनाथे—

षडङ्गवेदविदुषां क्रतुप्रवरयाजिनाम् ।
शुश्राव ब्रह्मघोषांश्च विरात्रे ब्रह्मरक्षसाम् ॥

अनेनापररात्रे अध्ययनं कर्तव्यमिति सूचितम् । तथा च रात्र्यां विभागेन अध्ययनानध्ययनकालं दर्शयता आपस्तम्बाचार्येणापररात्रे अध्येतव्यमिति सूचितम्— 'आ निशाया जागरणम् । अनध्यायो निशायामन्यत्र धर्मोपदेशाच्छिष्येभ्यः । मनसा वा स्वयम् । ऊर्ध्वमर्धरात्रादध्यापनम् । नापररात्रमुत्थायानध्याय इति संविशेत् । काममपशयीत । मनसा वाधीयीत ।' इति । दक्षोऽपि— 'प्रदोषपश्चिमौ यामौ वेदाभ्यासेन यो नयेत । यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥' इति ॥

अथ मङ्गळवादित्रशब्दैः श्रोत्रमनोहरैः ।
प्राबुध्यत महाबाहुर्दशग्रीवो महाबलः ॥

अनेन मङ्गलध्वनिभिः राजा प्रबोधनीय इत्युक्तम् । तच्च प्रागयोध्याकाण्डे प्रपंचितम् ॥

ततः प्रबुद्धो दशवदनः स्रस्तमाल्याम्बरधरः कुसुमशरशरप्रहारेण कलुषितसमस्तेन्द्रियः सीतामवलोकयितुमशोकवानिकामेव प्रविवेश । अथ काञ्चनदीपिकावालव्यजनतालवृन्तादिधारमण्डला-

प्रछत्रचामरपानपात्रखड्गखेटादिविविधोपकरणकलितकरतलाः सरभसचलनेन निद्रामदपारवश्येन च व्यावृत्तहारकेयूराः मृदितवर्णकविगलितधम्मिल्लपरिमृष्टविशेषकैर्विश्लिष्टकुसुममालिकाभिश्च प्रकटितविविधरतिभेदाः सीताममासक्तमनसं मन्दं मन्दं प्रयान्तं पौलस्त्यमनुजग्मुः ॥

अथ हनुमानतिबलपराक्रममागच्छन्तम्—

दीपिकाभिरनेकाभिः समन्तादवभासितम् ।
गन्धतैलावसिक्ताभिर्ध्रियमाणाभिरग्रतः ॥
कामदर्पमदैर्युक्तं जिह्मताम्रायतेक्षणम् ।

रावणमवलोक्य शिंशुपापत्रसंछन्नगात्रो बभूव ॥

अत्र गन्धतैलावसिक्ताभिरित्युक्तथा राजभिर्गन्धतैलावसिक्तदीपिकाः कर्तव्या इति सूचितम् । तथा भीष्मपर्वणि दुर्योधनम्— 'प्रदीपैः कांचनैस्तत्र गन्धतैलावसेचितैः । परिवव्रुर्महात्मानं प्रज्वलद्भिः समन्ततः ॥' इति ॥

इति अष्टादशः सर्गः ।

---

## अथ एकोनविंशः सर्गः ॥

एकोनविंशे—

ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपम् ।
आच्छाद्योदरमूरुभ्यां बाहुभ्यां च पयोधरौ ॥
उपविष्टा विशालाक्षी रुदती वरवर्णिनी ।

अनेन स्त्रीभिः परपुरुषसन्निधौ स्वशरीरं गोपनीयमिति सूचितम् । तथा च श्रुतिः— 'अधः पश्यस्व मोपरिसंतरां पादकौ हरमातेकशल्पकौ दृशन् स्त्री हि ब्रह्मा बभूविथ' इति ॥

शंखोऽपि— 'न नाभिं दर्शयेदागुल्फाद्वासः परिदध्यान्न स्तनौ विवृतौ कुर्यान्न हसेदपावृतम्' इति ॥

दुःखस्यान्तमपश्यन्तीं रामां राममनुव्रताम् ।
वेष्टमानामथाविष्टां पन्नगेन्द्रवधूमिव ॥

धूप्यमानां ग्रहेणेव रोहिणीं धूमकेतुना ।
वृत्तशीलकुले जातामाचारवति धार्मिके ॥

पुनः संस्कारमापन्नां जातामिव च दुष्कुले ।
अभूतेनापवादेन कीर्तिं निपतितामिव ॥

आम्नायानामयोगेन विद्यां प्रशिथिलामिव ।
सन्नामिव महाकीर्तिं श्रद्धामिव विमानिताम् ॥

प्रज्ञामिव परिक्षीणामाशां प्रतिहतामिव ।
आयतीमिव विध्वस्तामाज्ञां प्रतिहतामिव ॥
दीप्तामिव दिशं काले पूजामपहृतामिव ॥

इति एकोनविंशः सर्गः ।

---

## अथ विंशः सर्गः ॥

विंशे—

स तां पतिव्रतां दीनां निरानन्दां तपस्विनीम् ।
साकारैर्मधुरैर्वाक्यैर्न्यदर्शयत रावणः ॥

अये जनकनन्दिनि, त्वयि समासक्तमानसं त्वदेकशरणं मामवलोक्य भीत्या किमित्यस्थाने लज्जया वक्षोजयुगलमूरुभ्यामाच्छादयितुमिच्छसि । तदलमनेन निरर्थकसमारम्भेण ॥

स्वधर्मो रक्षसां भीरु सर्वथैव न संशयः ।
गमनं वा परस्त्रीणां हरणं संप्रमथ्य वा ॥

नन्वत्र राक्षसानां परस्त्रीहरणगमनक्रौर्यादिकं धर्म इत्युक्तम् । तदसंगतम् । 'न परदारान् गच्छेत्' इत्यादिशास्त्रगणप्रतिषिद्धस्याधर्मस्य धर्मत्वासिद्धेः । न खलु विहितो धर्मोऽश्वमेधादिरधर्मो भवति । अधर्मो वा [प्रतिषिद्धो] ब्रह्महत्यादिको धर्मः । न वा राक्षसानामयं धर्म इति किंचिच्छास्त्रमुपलभामहे । प्रत्युत क्रौर्यपरदाराभिमर्शनादिकं राक्षसानामप्यधर्म इत्यवगम्यते । तत्र स्त्रीहरणविषये रावणं प्रति मारीचवाक्यम्— 'परदाराभिमर्शात्तु नान्यत्पापतरं महत्' [अरण्य० स० ३८] इति ॥

तथा उत्तरकाण्डे राक्षसस्य विभीषणस्य वचनम्— 'तत्र पन्नगयक्षाणां मानुषाणां च रक्षसाम् । दैत्यानां दानवानां

च कन्या जग्राह रावणः ॥ विभीषणस्तु तां नारीर्दृष्ट्वा शोकसमाकुलाः । तस्य तां च मतिं श्रुत्वा धर्मात्मा वाक्यमब्रवीत् ॥ क्रूरैस्तैस्तैः समाचारैर्यशोऽर्थकुलनाशनैः । धर्षणं प्राणिनां कृत्वा स्वमतेन विचेष्टसे ॥ प्राणिनो धर्षयित्वैतास्त्वयानीता वराङ्गनाः । त्वामतिक्रम्य मधुना राजन् कुम्भीनसी हृता ॥ तदेतत्कर्मणो ह्यस्य फलं पापस्य दुर्मते । अस्मिन्नेवाभिसंप्राप्तं कुले विदितमस्तु ते ॥' इति ॥

युद्धकाण्डे रावणं प्रति विभीषणवाक्येऽपि— 'अयशस्यमनायुष्यं परदाराभिमर्शनम् । अर्थक्षयकरं घोरं पापस्य च पुनर्भवम् ॥' [स. ९] इति । तत्रैव मन्दोदरीप्रलापेऽपि— 'पतिव्रतायास्तपसा नूनं दग्धोऽसि मे प्रभो । तदैव यन्न दग्धस्तु धर्षयंस्तनुमध्यमाम् ॥ अवश्यमेव लभते फलं पापस्य कर्मणः । घोरं पर्यागते काले कर्ता नास्त्यत्र संशयः ॥ शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते । विभीषणः सुखं प्राप्तस्त्वं प्राप्तः पापमीदृशम् ॥' [स० ११४] इति ॥

देवब्राह्मणहननादिकमपि राक्षसानामधर्म इति रावणं प्रति कुबेरसंदेशे— 'अहं तु हिमवत्पृष्ठं गतो धर्ममुपासितुम् । आगम्य च श्रुतोऽधर्मस्तव पापविनिश्चयः ॥' इति । तथा रावणहितोपदेशाय प्रेषणीयं दूतं प्रति कुबेरवचनम्— 'तदधर्मिष्ठसंयोगान्निवर्त कुलदूषणात् । साधुधर्मे व्यवस्थानं क्रियतां यदि शक्यते ॥ दृष्टं मे नन्दनं भग्नं ऋषयो मे हताः श्रुताः । देवानां च समुद्योगस्त्वत्तो राजन् श्रुतश्च मे ॥ साधु पर्याप्तमेतावत्कृतश्चारिबसंग्रहः ॥' इति ॥

युद्धकाण्डेऽपि— 'यद्यधर्मो न बलवान् स्यादयं राक्षसेश्वरः। स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता॥ त्रैलोक्याधिपतिर्ह्येष यदि न स्याद्विकर्मकृत्।' इति। तत्रैव— 'त्यक्तधर्मव्रतं क्रूरं नृशंसमनृतं तथा। नाहमर्होऽस्मि संस्कर्तुं परदाराभिमर्शिनम्॥' [स० ११४] इति विभीषणेनाभिहितो रामः— 'अधर्मानृतसंयुक्तः काममेष निशाचरः।' इत्यादिना तस्य पापिष्ठत्वमङ्गीकृत्यैव, तवैव यशोऽर्थं संस्कारं कुर्वित्युक्तवान्। तत्रैव सुपार्श्ववचनेऽपि— 'कथं नाम दशग्रीव साक्षाद्वैश्रवणानुज। हन्तुमिच्छसि वैदेहीं क्रोधाद्धर्ममपास्य हि। वेदविद्याव्रतस्नातः स्वकर्मनिरतस्सदा॥ स्त्रियाः कस्माद्वधं वीर मन्यसे राक्षसेश्वर।' [सर्ग० ९५] इति॥

तथा च सर्वेषामपि धर्मो धर्म एव, अधर्मोऽप्यधर्म एव इति स्थिते परदाराभिगमनं कथं स्वधर्म इति रावणेनोक्तमिति चेत्— न।

'स्वधर्मो रक्षसाम्' इत्यत्र धर्मशब्दस्य ऐहिकमात्रसौख्यसंपादकपरदारहरणं क्रौर्यादिकं च स्वभाव इत्येतदभिप्रायत्वात्। शरीरपोषणेन सौख्यसंपादनमेव राक्षसानां स्वभाव इत्येतत् छान्दोग्ये— 'तौ ह शान्तहृदयौ प्रवव्रजतुः। तौ हान्वीक्ष्य प्रजापतिरुवाच— अनुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वा असुरा वा ते पराभविष्यन्तीति। स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम। तेभ्यो हैतामुपनिषदं प्रोवाच— आत्मैवेह महय्य आत्मा परिचर्य आत्मानमेव [इह] महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोति इमं चामुं

चेति । तस्मादप्यद्येह अददानमश्रद्दधानं अयजमानमाहुः— आसुरो बतेत्यसुराणां ह्येषोपनिषत् । प्रेतस्य शरीरं भिक्षया वसनेनालंकारेणेति संस्कुर्वन्त्येतेन हि अमुं लोकं जेष्यन्तो मन्यन्ते ।' [अ० ८. ख० ८] इति ॥

व्याख्यानं[च]भगवत्पादैः— '(पितुः प्रजापतेरुपदेशं श्रुत्वा) संशान्तहृदय एव सन्विरोचनोऽसुरान् जगाम । गत्वा च तेभ्योऽसुरेभ्यः शरीरात्मबुद्धिर्योपनिषत्तामेतामुपनिषदं प्रोवाच उक्तवान्— देहमात्रमेव आत्मा पित्रोक्त इति। तस्मादात्मैव देहः इह लोके महय्यः पूजनीयः । तथा परिचर्यः परिचरणीयः । तथा आत्मानमेव इह लोके[देहं]महयन परिचरंश्च उभौ लोकाववाप्नोति इमं चामुं च । इहलोकपरलोकयोरेव सर्वे लोकाः कामाश्चान्तर्भवन्ति इति राज्ञोऽभिप्रायः । तस्मात्तत्सम्प्रदायोऽद्याप्यनुवर्तते इहलोके । अददानमदानशीलम् । अश्रद्दधानं [पारलौकिकेषु] सत्कार्येषु श्रद्धारहितम् । यथाशक्त्ययजमानमयजनस्वभावं चाहुः । आसुरः खल्वयं यत एवंस्वभावो बतेति खिद्यमाना आहुः शिष्टाः । असुराणां हि यस्माच्च अश्रद्दधानतादिलक्षणैषोपनिषत्। तया उपनिषदा संस्कृताः सन्तः प्रेतस्य शरीरं कुणपं भिक्षया गन्धमाल्या[न्ना]दिलक्षणया वसनेन वस्त्राच्छादनादि(ना) प्रकारेणालङ्कारेण ध्वजपताकादिकरणेनेत्येवं संस्कुर्वन्ति । एतेन कुणपसंस्कारेणामुं प्रेत्य प्रतिपत्तव्यं लोकं जेष्यन्तो मन्यन्ते ।' इति। ततस्तेषां शरीरसौख्यसंपादनं स्वभाव इति सिद्धमेव ॥

राक्षसानां क्रौर्यं स्वाभाविकमित्येतद्बृहदारण्यके— 'त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्याः

असुराः। उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदक्षरमुवाच द इति। व्यज्ञासिष्टा ३ इति। व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेति ओमिति होवाच व्यज्ञासिष्टेति। अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदेवाक्षरमुवाच द इति। व्यज्ञासिष्टा ३ इति। व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेति। ओमिति होवाच व्यज्ञासिष्टेति। अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदेवाक्षरमुवाच द इति। व्यज्ञासिष्टा ३ इति। व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेति। ओमिति होवाच व्यज्ञासिष्टेति। तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति तदेतत्त्रयं शिक्षेत् दमं दानं दयामिति॥ [अ. ५. ब्रा. २] इति॥

तद्भाष्यम्— 'अधुना दमादिसाधनत्रयविधानार्थोऽयमारम्भः। त्रयास्त्रिसंख्याकाः प्राजापत्याः प्रजापतेरपत्यानि प्राजापत्याः। ते किम्? प्रजापतौ पितरि ब्रह्मचर्यं शिष्यत्वेन ब्रह्मचर्यस्य प्राधान्यात् शिष्याः सन्तः ब्रह्मचर्यमूषुः उषितवन्तः। के ते? विशेषतो देवा मनुष्याः असुराश्च। ते चोषित्वा ब्रह्मचर्यं किमकुर्वन्नित्युच्यते— तेषां देवा ऊचुः पितरं प्रजापतिम्। किमिति? ब्रवीतु कथयतु नः अस्मभ्यं[यत्] अनुशासनं भवानिति। तेभ्य एवमर्थिभ्यो ह एतदक्षरं वर्णमात्रमुवाच— द इति। उक्त्वा च तान् पप्रच्छ पिता किं व्यज्ञासिष्टा ३ इति। मयोपदेशार्थमभिहितस्या[क्षरस्या]र्थं विज्ञातवन्त आहोस्विन्नेति। देवा ऊचुः—व्यज्ञासिष्मेति विज्ञातवन्तो वयम्।

यद्येवमुच्यतां किं मयोक्तमिति । देवा ऊचुः— दाम्यत अदान्ता यूयं स्वभावतः । अतो दान्ता भवतेति नः अस्मानात्थ कथयसि । इतर आह— ओमिति सम्यक् व्यज्ञासिष्टेति । समानमन्यत । स्वभावतो लुब्धा यूयम्, अतो यथाशक्ति संविभजत दत्तेति नोऽस्मानात्थ । किमन्यद्ब्रूयान्नो हितमिति मनुष्याः । तथासुरा दयध्वमिति । क्रूरा यूयं हिंसादिपराः, अतो दयध्वं प्राणिषु दयां कुरुतेति । तदेतत्प्रजापतेरनुशासनमद्याप्यनुवर्तत एव । यः पूर्वं प्रजापतिः देवादीननुशशास, सः अद्याप्यनुशास्त्येव दैव्या स्तनयित्नुलक्षणया वाचा । कथमेषा श्रूयते दैवी वाक् ? कासौ स्तनयित्नुः ? द द द इति, दाम्यत दत्त दयध्वमिति । एषां वाक्यानां उपलक्षणाय त्रिर्दकार उच्चार्यतेऽनुकृतिर्न तु स्तनयित्नुशब्दः त्रिरेव, संख्यानियमस्य लोके अप्रसिद्धत्वात् । यस्मादद्यापि प्रजापतिर्दाम्यत दत्त दयध्वमित्यनुशास्त्येव, तस्मात्कारणादेतत्त्रयम् । किं तत्त्रयमित्युच्यते— दमं दानं दयामिति शिक्षेदुपाददीत प्रजापतेरनुशासनमस्माभिः कर्तव्यमित्येवं मतिं कुर्यात् । तथा च स्मृतिः— 'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥' इति । अस्य हि विधेः शेषः पूर्वः । तथापि देवादीनुद्दिश्य किमर्थं दकारत्रयमुच्चारितवान्प्रजापतिः पृथगनुशासनार्थिभ्यः । ते वा कथं विवेकेन प्रतिपन्नाः प्रजापतेर्मनोगतं समानेनैव दकारमात्रेणेति पराभिप्रायज्ञा विकल्पयन्ति । अत्रैक आहुः— अदान्तत्वाददानात्वादयालुत्वैरपराधित्वमात्मनो मन्यमानाः शंकिता एव प्रजापतावूषुः, किं नो वक्ष्यतीति । तेषां च दकारश्रवणमात्रादेवात्मा-

शंकावशेन तदर्थप्रतिपत्तिरभूत् । लोकेऽपि हि प्रसिद्धम्—पुत्राः शिष्याश्चानुशास्याः सन्तो दोषान्निवर्तयितव्या इति । अतो युक्तं प्रजापतेर्दकारमात्रोच्चारणम् । दमादित्रये च दकारान्वयात् आत्मनो दोषानुरूपेण देवादीनां विवेकेन प्रतिपत्तुं चेति । फलं त्वेतदात्मदोषज्ञाने सति दोषान्निवर्तयितुं शक्यते (व्युत्पन्नाः) अल्पेनाप्युपदेशेन, यथा देवादयो दकारमात्रेणेति । नन्वेतत्त्र-याणां देवादीनामनुशासनं देवादिभिरपि एकैकमेवोपादेयम् ! अद्यत्वेऽपि न तु त्रयं मनुष्यैः शिक्षितव्यम् ।' इत्यादि ॥

परदारहरणाद्यधर्माचरणं राक्षसानां स्वाभाविकमित्येतदपि युद्धकाण्डे रामवाक्ये— 'येन मे मरणान्ताय हृता भार्या दुरा-त्मना । तेन धर्मो न विज्ञातो न वृत्तं न कुलं तथा ॥ राक्षस्या नीचया बुद्ध्या येनैतद्गर्हितं कृतम् ।' इति ॥

अन्यत्रापि— 'असृजद्भगवान्पक्षौ द्वावेव हि पितामहः । सुराणामसुराणां च धर्माधर्मौ तदाश्रयौ ॥ धर्मो हि श्रूयते पक्षो ह्यमराणां महात्मनाम् । अधर्मो रक्षसां पक्षो ह्यसुराणां च रावण ॥ तत्त्वया चरता लोकान् धर्मो विनिहतो महान् । अधर्मः प्रगृहीतश्च तेनास्मद्बलिनः परे ॥ स प्रमादात्प्रवृद्धस्ते ह्यधर्मो ग्रसते हि नः । विवर्धयति पक्षं च सुराणां सुरभावनः ॥ विष-येषु प्रसक्तेन यत्किंचित्कारिणा त्वया । ऋषीणामग्निकल्पानामुद्वेगो जनितो महान् ॥ तेषां प्रभावो दुर्धर्षः प्रदीप्त इव पावकः । तपसा भावितात्मानो धर्मस्यानुग्रहे रताः । मुख्यैर्यज्ञैर्यजन्त्येते नित्यं तैस्तैर्द्विजातयः । जुह्वत्यग्नींश्च विधिवद्वेदांश्चोच्चैरधीयते ॥ अभिभूय च रक्षांसि ब्रह्मघोषानुदैरयन् । दिशो विप्रद्रुतास्सर्वे स्तनयित्नु-

रिवोष्णगे ॥ ऋषीणामग्निकल्पानामग्निहोत्रसमुत्थितः । आदत्ते रक्षसां तेजो धूमो व्याप्य दिशो दश ॥ तेषु तेषु च देशेषु पुण्येष्वेव दृढव्रतैः । चर्यमाणं तपस्तीव्रं संतापयति राक्षसान् ॥' (यु. स. ३५) इति ॥

तथा— 'परमापद्गतस्यापि धर्मे मम मतिर्भवेत् ।' इति विभीषणेन प्रार्थितः प्रजापतिः— 'यस्य राक्षसयोनौ ते जातस्यामित्रकर्शन । नाधर्मे जायते बुद्धिरमरत्वं ददामि ते ॥' [उ. स १०] इति वचनेन स्वभावतोऽधर्मबहुले राक्षसयोनौ संभूतस्यापि विभीषणस्य धर्मबुद्धिमभिवीक्ष्य संतुष्टो वरं दत्तवानिति प्रतिपादनात् विभीषणव्यतिरिक्ताः सर्वेऽपि राक्षसाः स्वभावतोऽधार्मिका इति ब्रह्मवचनेनापि सिद्धम् ॥

ननु राक्षसत्वाविशेषाद्विभीषणस्य कथं वा धार्मिकी बुद्धिरिति चेन्न । तस्य धर्मबुद्धेः पितृवरप्रदानेन जन्मान्तरसुकृतपरिपाकवशेन च (धार्मिकत्व)सम्भवात् । तथा **चोत्तररामायणे** केकसीप्रार्थनेन विश्रवसो वरप्रदानं प्रतिपादितम्— 'दारुणान् दारुणाकारान् दारुणाभिजनप्रियान् । प्रसविष्यसि सुश्रोणि राक्षसान् क्रूरकर्मणः ॥ सा तु तद्वचनं श्रुत्वा प्रणिपत्याब्रवीद्वचः । भगवन्नीदृशाः पुत्रास्त्वत्तो वै ब्रह्मवादिनः ॥ अथाब्रवीन्मुनिस्तत्र पश्चिमोऽयं तवात्मजः । मम वंशानुरूपश्च धर्मात्मा च भविष्यति ॥ तेषां क्रूरो दशग्रीवो लोकोद्वेगकरो भवेत् । विभीषणस्तु धर्मात्मा नित्यं धर्मपथे स्थितः ॥' इति ॥

तस्मात् 'स्वधर्मो रक्षसाम्' इत्यत्र धर्मपदं स्वभावपरमेव ।

एवमन्यत्रापि राक्षसानां शास्त्रप्रतिषिद्धेषु धर्मव्यवहारः स्वाभाविकत्वाभिप्राय एव ॥

एवं चैतदकामां तु न त्वां स्प्रक्ष्यामि मैथिलि ।
कामं कामः शरीरे मे यथाकामं प्रवर्तताम् ॥

अत्र परदारेषु बलात्कारकरणस्य राक्षसानां स्वाभाविकत्वेऽपि त्वयि प्रीत्या स्वशरीरजपीडामपि सोढ्वा बलात्कारं न करोमि इत्युक्तिः प्रलोभनार्थैव, न तु पारमार्थिकी । 'अद्यप्रभृति यामन्यां बलान्नारीं गमिष्यसि । तदा ते शतधा मूर्धा फलिष्यति न संशयः ॥ इत्यहं तस्य शापस्य भीतः प्रसभमेव ताम् । नारोपये बलात्सीतां वैदेहीं शयने शुभे ॥' [यु स. १३] इति युद्धकाण्डे रावणवचनेन शापप्रयुक्तत्वप्रतिपादनात । एवमन्यत्रापि (प्रलोभनपराण्येव) ॥

तदिदानीं परिहृत्योपवासादिनियमं विविधवसनाभरणशयनासनपानीयानि विचित्रकुसुममाल्यानि सुरभिचन्दनानि चानुमान्य मामनुगृह्णातु भवती । इदं च यौवनमतिक्रान्तं न पुनः प्रत्यागच्छति । रामोऽपि वनवासादिनियमैस्त्वद्वियोगेन च न जीवेदेव । जीवन्नपि वा सुरासुरविजेतारमप्रतिद्वन्द्वं मां परिभूय कथं त्वां प्राप्तुमर्हति इति । ततः—

पिब विहर रमस्व भुङ्क्ष्व भोगान्
धननिचयं प्रदिशामि मेदिनीं च ।
मयि लल ललने यथासुखं त्वं
त्वयि च समेत्य ललन्तु बान्धवास्ते ॥

इति विंशः सर्गः ।

## अथ एकविंशः सर्गः ॥

एकविंशे—

तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः ।
आर्ता दीनस्वरा दीनं प्रत्युवाच शनैर्वचः ॥

दुःखार्ता रुदती सीता वेपमाना तपस्विनी ।
चिन्तयन्ती वरारोहा पतिमेव पतिव्रता ॥

तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता ।

अनेन परपुरुषं नाभिभाषेत, अत्यन्तावश्यके कार्ये तृणादिकं किंचिदन्तर्धायैव भाषेतेति सूचितम् । तथा च **शंखः**— 'न परपुरुषमभिभाषेत' इति । **स्कान्देऽपि**—'पुरुषान्तरनामापि न गृह्णीत कदाचन । तृणमन्तरतः कृत्वा कार्ये भाषेत तादृशे ॥' इति ॥

निवर्तय मनो मत्तः स्वजने क्रियतां मनः ।
न मां प्रार्थयितुं युक्तं सुसिद्धिमिव पापकृत् ॥

अत्र पतिव्रता स्त्री परपुरुषेण प्रार्थितापि पापकृतः सुसिद्धिरिव दुर्लभेत्युक्तम् । पापकृतां सुसिद्धिः पुण्यफलभूतस्वर्गादिर्न भविष्यतीत्येतद्बोधायनधर्मे— 'न [वै] देवान् पीवरोऽसंयतात्मा रोरूयमाणः ककुदी समश्नुते । चलत्तुन्दी रभसः कामवादी कृशास इत्यणवस्तत्र यान्ति।' इति । अस्यार्थः— पीवरः स्वशरीरमात्रपोषणपरः । असंयतात्मा अनियमितेन्द्रियः । रोरूयमाणो दुर्भाषणपरः । ककुदी अतिस्थूलककुद्मान् इति ॥

D. 25

अकार्यं न मया कार्यमेकपत्न्या विगर्हितम् ।
कुलं सम्प्राप्तया पुण्यं कुले महति जातया ॥

अनेन महाकुलप्रसूतानां विशेषतोऽकार्यं वर्जनीयमिति सूचितम्— तथा च उद्योगे विदुरः— 'यश्चाभिजातः प्रकरोत्यकार्यं यश्चाबलो बलिनां नित्यवैरी । यश्चैव लब्ध्वा न स्मरामीत्युवाच एतान्नयन्ति निरयं पाशहस्ताः ॥' इति । [विराटेऽपि] 'परदारे न ते बुद्धिर्जातु कार्या कथंचन । विवर्जनं ह्यकार्याणामेतत्सत्पुरुषव्रतम् ॥' [इति]

एवमुक्त्वा तु वैदेही रावणं तं यशस्विनी ।
राक्षसं पृष्ठतः कृत्वा भूयो वचनमब्रवीत् ॥

अत्र रावणं पृष्ठतः कृत्वा इत्यसंमुखत्वप्रतिपादनात् परपुरुषमुखावलोकनं न जातु कर्तव्यमिति सूचितम् । तथा च प्राचीनाः — 'पदन्यासो गेहाद्बहिरहिफणारोपणसमो वचो लोकालभ्यं कृपणधनतुल्यं मृगदृशः । निजावासादन्यद्भवनमपरद्वीपतुलितं पुमानन्यः कान्ताद्विधुरिव चतुर्थीसमुदितः ॥' इति ॥

नाहमौपयिकी भार्या परभार्या सती तव ।
साधु धर्ममवेक्षस्व साधु साधुव्रतं चर ॥

यथा तव तथान्येषां दारा रक्ष्या निशाचर ।
आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम् ॥

अनेन परदारा नोपभोग्या इत्युक्तम् । तथा **विराटपर्वणि** कीचकं प्रति द्रौपदी— 'परदारास्मि भद्रं ते न युक्तं त्वयि

साम्प्रतम् । दयिताः प्राणिनां दारा धर्मं समनुचिन्तय ॥' इति ॥

**अतुष्टं स्वेषु दारेषु चपलं चलितेन्द्रियम् ।**
**नयन्ति निकृतिप्रज्ञं परदाराः पराभवम् ॥**

**अनेन** पापमप्यविगणय्य परदारप्रवृत्तः ऐहिकमामुष्मिकं च निरवधिकमनर्थं प्राप्नोतीति सूचितम् । तथा **चानङ्गरङ्गे**— 'आयुःक्षतिर्विकलता ह्युपहास्यता च निन्दार्थहानिलघुता विगतिः परत्र । लङ्केश्वरो जनकजाहरणेन वाली तारापहारकत-याप्यथ कीचकाख्यः । पाञ्चालिकाहरणतो निधनं जगाम तच्चे-तसापि परदाररतिं न काङ्क्षेत् ॥' इति ॥

**इह सन्तो न वा सन्ति सतो वा नानुवर्तसे ।**
**तथा हि विपरीता ते बुद्धिराचारवर्जिता ॥**

**अनेन** सत्संगतिसदनुवर्तनरहितानां भ्रंशो भवतीति सूचितम् । तथा **चोद्योगे** दुर्योधनं प्रति भगवान्— 'योऽसत्सेवी वृथाचारो न श्रोता सुहृदां तथा । परान्वृणीते स्वान्द्वेष्टि भृशं तपति दुर्मतिः ॥ मुख्यानमात्यानुत्सृज्य यो निहीनान्निषेवते । सुघोरामापदं प्राप्य नोत्तारं सोऽधिगच्छति ॥ सुहृदामर्थकामानां यो न तिष्ठति शासने । प्राज्ञानां कृतविद्यानां स नरः शत्रु-नन्दनः ॥ सतां मतमतिक्रम्य योऽसतां वर्तते मते । शोचन्ते व्यसने तस्य सुहृदो न चिरादिव ॥ श्रुत्वा च सुहृदां शास्त्रं न मर्त्यः प्रतिपद्यते । विपाकान्ते दहत्येनं किंपाकमिव भक्षितम् ॥ योऽर्थकामस्य च वचः प्रातिकूल्यान्न मृष्यते ।

शृणोति प्रतिकूलानि द्विषतां वशमेति सः ॥' इति ॥

**वचो मिथ्याप्रणीतात्मा पथ्यमुक्तं विचक्षणैः ।**
**राक्षसानामभावाय त्वं वा न प्रतिपद्यसे ॥**

अनेन विनाशकाले सुहृद्भिर्हितमुक्तमपि न शृण्वन्तीति सूचितम् । तथा च **युद्धकाण्डे**—'परेतकल्पा हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् ।' इति । **सभापर्वण्यपि**— 'प्रायः समासन्नपराभवानां धियो विपर्यस्ततरा भवन्ति ।' इति ॥

**अकृतात्मानमासाद्य राजानमनये रतम् ।**
**समृद्धानि विनश्यन्ति राष्ट्राणि नगराणि च ॥**

**तथैव त्वां समासाद्य लङ्का रत्नौघसंकुला ।**
**अपराधात्तवैकस्य नचिराद्विनशिष्यति ॥**

**अनेन** अविनयदोषेण समृद्धमपि राज्यं नश्यतीति सूचितम् । तथा **चोद्योगे** दुर्योधनं प्रति विदुरः— 'न राज्यं प्राप्य राज्ञा हि वर्तितव्यमसाम्प्रतम् । श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ यः प्रमाणं न जानाति स्थानवृद्धौ तथा क्षये । कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥ न हि राज्यमशिष्टेन शक्यं धर्मार्थलोभिना । आप्तुमाप्तं तथापीदमविनीतेन सर्वथा ॥ इमां श्रियं प्रज्वलितां भारतीं सर्वराजसु । जीवतो धृतराष्ट्रस्य दौरात्म्याद्भ्रंशयिष्यसि ॥ आत्मानं च सहामात्यं सपुत्रज्ञातिबान्धवम् । सहमित्रमसद्बुद्ध्या जीविताद्भ्रंशयिष्यसि ॥' इति ॥

स्वकृतैर्हन्यमानस्य रावणादीर्घदर्शिनः ।
अभिनन्दन्ति भूतानि विनाशे पापकर्मणः ॥
एवं त्वां पापकर्माणं वक्ष्यन्ति निकृता जनाः ।
दिष्ट्यैतद्व्यसनं प्राप्तो रौद्र इत्येव हर्षिताः ॥

अनेन पापिष्ठस्य विनाशप्राप्तौ सर्वेऽपि सज्जना नन्दन्तीति सूचितम् । तथा चोद्योगे नहुषोपाख्याने— 'एवं भ्रष्टो दुरात्मा स देवराज्यादरिन्दम । दिष्ट्या वर्धामहे शक्र हतो ब्राह्मणकण्टकः ॥ ततो देवा भृशं तुष्टा महर्षिगणसंवृताः । पितरश्चैव यक्षाश्च भुजङ्गा राक्षसास्तथा ॥ गन्धर्वा देवकन्याश्च सर्वे चाप्सरसां गणाः । सरांसि सरितः शैलाः सागराश्च विशांपते ॥' इति ॥

द्रोणपर्वण्यपि घटोत्कचवधे— 'वासुदेवस्तु हर्षेण महताभिपरिप्लुतः । ननाद सिंहनादेन व्यथयन्निव पाण्डवान् ॥ विनद्य तु महानादं पर्यष्वजत पाण्डवम् । स विनद्य महानादमभीशून् सन्नियम्य च ॥ ननर्त हर्षसंवीतो वातोद्धूत इव द्रुमः ।' इति । ततः पार्थेन हर्षकारणं पृष्टो भगवान्— 'एष हि ब्राह्मणद्वेषी यज्ञद्वेषी च राक्षसः । यज्ञहर्ता च पापात्मा तस्मादेवं निपातितः ॥' इत्यवादीत् । अतः पापिष्ठस्य नाशः सत्पुरुषसंतोषकर एव ॥

शक्या लोभयितुं नाहमैश्वर्येण धनेन वा ।
अनन्या राघवेणाहं भास्करेण प्रभा यथा ॥

अनेन दुष्टैः प्रलोभनाय प्रदर्शिते ऐश्वर्ये धने वा पतिव्रता स्त्री अन्तःकरणं न प्रयच्छतीति सूचितम् । तथा च पारिजाते आश्वलायनः— 'पुरुषं सेवते नान्यं मनोवाक्कायकर्मभिः। लोभितापि परेणार्थैः सा सती लोकभूषणा ॥ अन्येन प्रार्थिता वापि बलेन विधृतापि वा । वस्त्राद्यैर्वासिता वापि नैवान्यं भजते सती ॥' इति ॥

उपधाय भुजं तस्य लोककान्तस्य सत्कृतम् ।
कथं नामोपधास्यामि भुजमन्यस्य कस्यचित् ॥

अनेन पतिव्रता स्त्री परपुरुषस्पर्शमपि न संमन्यत इति सूचितम् । तथा चात्रैव 'भर्तृभक्तिं पुरस्कृत्य रामादन्यस्य वानर। न स्पृशामि शरीरं तु पुंसो वानरपुङ्गव ॥' इति सीतावचनमुपश्लाघमानस्य हनूमतो वचनम्— 'रामादन्यस्य नार्हामि संस्पर्शमिति जानकि । एतत्ते देवि सदृशं पत्न्यास्तस्य महात्मनः । का ह्यन्या त्वामृते देवि ब्रूयाद्वचनमीदृशम् ॥' [स० ३८] इति॥

वनपर्वण्यपि द्रौपदीप्रमाथे— 'साताननुप्रेक्ष्य विशालनेत्रा जिघृक्षमाणानवभर्त्सयन्ती । प्रोवाच मा[मा]स्पृशतेति भीता धौम्यं प्रचुक्रोश पुरोहितं सा ॥' इति । आरण्यकाण्डेऽपि— 'परस्पर्शात्तु वैदेह्या न दुःखतरमस्ति वै । पितुर्वियोगात्सौमित्रे स्वराज्यहरणात्तथा ॥' [स० २] इति ॥

अहमौपयिकी भार्या तस्यैव वसुधापतेः ।
व्रतस्नातस्य विप्रस्य विद्येव विदितात्मनः ॥

अनेन व्रतपूर्वकतया आचार्यमुखाद्गृहीता मन्त्राः कर्माणि प्रयुक्ताः सफला भवन्ति । अन्यथा प्रत्यवायकरा इति सूचितम् ।

तथा च छान्दोग्ये— 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' इति ॥

आपस्तम्बोऽपि— 'नियमेषु तपःशब्दः । तदतिक्रमे विद्याकर्म निस्रवति ब्रह्म सहापत्यादेतस्मात् । कर्तपत्यमनायुष्यं च । तस्मादृषयोऽवरेषु न जायन्ते नियमातिक्रमात् । श्रुतर्षयस्तु भवन्ति केचित्कर्मफलशेषेण पुनःसम्भवे । यथा श्वेतकेतुः । यत्किंच समाहितोऽब्रह्मप्याचार्यादुपयुङ्क्ते ब्रह्मवदेव तस्मिन् फलं भवति । अथो यत्किंच मनसा वाचा चक्षुषा वा सङ्कल्पयन्ध्यायत्याहाभिविपश्यति वा तथैव तद्भवतीत्युपदिशन्ति ।' इति ॥

तत्रोज्ज्वला— 'नियमेषु तपःशब्दः । 'आचार्याधीनः स्यात्' इत्यादयो ये नियमाः अस्मिन् ब्रह्मचारिप्रकरणे, तपःशब्दस्तेषु द्रष्टव्यः, न कृच्छ्रादिषु । **तदतिक्रमे विद्याकर्म निस्रवति ब्रह्म सहापत्यादेतस्मात्** । एतेषां नियमानामतिक्रमे विद्याकर्म विद्याग्रहणं ब्रह्म निस्रवति गृहीतं वेदं निस्सारयति एतस्मान्नियमातिक्रमेणाध्येतुः पुरुषात् । न केवलादेतस्मात् । किं तर्हि, सहापत्यात् । अपत्येन सह वर्तत इति सहापत्यः । 'वोपसर्जनस्य' इति सहभावेन रूपम् । अपत्यादपि ब्रह्म निस्सारयति । यद्यप्यपत्यं नियमातिक्रमकारि न भवति, तथापि पितृदोषादेव ब्रह्म निस्सारयति । नियमातिक्रमेण विद्याग्रहणं कुर्वतः पुरुषात्सहापत्यात् गृहीतं ब्रह्म निःसारयति इति ब्रह्मयज्ञादिषूपयुज्यमानमपि अकिंचित्करं भवतीत्ययमर्थो विवक्षितः । स्रवतेस्तु सकर्मकप्रयोगो भाष्ये द्रष्टव्यः— 'स्रवत्युदकं कुंडिका'

इति । न केवलमकिंचित्करं नियमातिक्रमे विद्याग्रहणम्, प्रत्युत अनर्थकारीत्याह— **कर्तपत्यमनायुष्यं च**। कर्त इति श्वभ्राभिधो नरक उपलक्ष्यते । पतत्यनेनेति पत्यम् । एवंभूतं विद्याग्रहणं नरकपातहेतुर्भवतीति । अनायुष्यं च अनायुष्करं च । **तस्मादृषयोऽवरेषु न जायन्ते नियमातिक्रमात्** । अत एव अवरेषु अर्वाचीनेषु कलियुगवर्तिषु ऋषयो न जायन्ते मन्त्रदृशो न भवन्ति, इदानीं नियमातिक्रमस्यावर्जनीयत्वात् । कथं तर्ह्यद्यत्वेऽतिक्रामन्तोऽपि नियमानल्पेनैव कालेनायत्नेन चतुरो वेदान् गृह्णन्ति? युगान्तरे सम्यगनुष्ठितस्य नियमकर्मणः फलविशेषेणेत्याह— **श्रुतर्षयस्तु भवन्ति केचित्कर्मफलशेषेण पुनःसंभवे**। पुनःसंभवः पुनर्जन्म । अत्रोदाहरणम्— **यथा श्वेतकेतुः**। श्वेतकेतुर्ह्यल्पेनैव कालेन चतुरो वेदानन्वगृह्णात् । तच्च छान्दोग्ये 'श्वेतकेतुर्हारुणेय आस' इत्यादिना प्रतिपादितम् । एवं नियमातिक्रमे दोषमुक्त्वा तदनुष्ठाने सिद्धिमाह— **यत्किंच समाहितोऽब्रह्मप्याचार्यादुपयुङ्क्ते ब्रह्मवदेव तस्मिन्फलं भवति**। अब्रह्मपि अब्रह्मापि । पररूपम् । अपेर्वा अकारलोपः पिहितपिनद्धादिवत् । वेदव्यतिरिक्तमपि यत्किंचिद्विष(यं)-मन्त्रादिकं समाहितो नियमवान् आचार्यादुपयुङ्क्ते गृह्णाति । तस्मात् । [तस्मिन्] ब्रह्मवदेव फलं भवति । निग्रहानुग्रहशक्ति-रपि अस्य भवतीत्याह— **अथो यत्किंच मनसा वाचा चक्षुषा वा सङ्कल्पयन्ध्यायत्याहाभिविपश्यति वा तथैव तद्भ-वतीत्युपदिशन्ति**। अथो अपि च यत्किंचिदनुग्रहात्मकं निग्रहात्मकं वा संकल्पयन् चिकीर्षन् (ध्यायन्) मनसा निर्दयेन सदयेन वा

ध्यायति इत्थमिदमस्यास्त्विति, तत्तथैव भवति । तथा यत्किंचित्संकल्पयन् वाचा घोरया मधुरया वा आह— इत्थमिदमस्यास्त्विति, तत्तथैव भवति । तथा यत्किंचित्संकल्पयन् चक्षुषा घोरेण मैत्रेण वा अभिपश्यति, तत्तथैव भवतीत्युपदिशन्ति धर्मज्ञाः । अतोऽवश्यं धर्मयुक्तेनैवाध्येतव्यम् ' इति ॥

साधु रावण रामेण मां समानय दुःखिताम् ।
वने वाशितया सार्धं करेण्वेव गजाधिपम् ॥

मित्रमौपयिकं कर्तुं रामः स्थानं परीप्सता ।
वधं चानिच्छता घोरं त्वयासौ पुरुषर्षभः ॥

अनेन भर्तृवियुक्तायाः पतिव्रतायाः भर्ता[र्तृ]प्रापणेन इष्टप्राप्तिरनिष्टपरिहारश्च भवतीति सूचितम् । तथा च किष्किन्धाकाण्डे तारा— 'शास्त्रप्रयोगाद्विविधाच्च वेदादात्मा ह्यनन्यः पुरुषस्य दाराः । दारप्रदानाद्धि न दानमन्यत्प्रदृश्यते ज्ञानवतां हि लोके ॥ त्वं चापि मां तस्य मम प्रियस्य प्रदास्यसे धर्ममवेक्ष्य वीर । अनेन दानेन न लप्स्यसे त्वमधर्मयोगं मम वीर घातात् ॥ ' इति ॥

विदितः स हि धर्मज्ञः शरणागतवत्सलः ।
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥

प्रसादयस्व त्वं चैनं शरणागतवत्सलम् ।
मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि ॥

अनेन सत्पुरुषाः शरणागतं द्रोहिणमपि परिपालयन्तीति सूचितम् । तथा च द्रोणपर्वण्यर्जुनः — ' न चास्मान् शरणं

गच्छेत् कृष्णं वा पुरुषोत्तमम् । भवन्तं वा महाराज श्वोऽस्मि हन्ता जयद्रथम् ॥' इति ॥

**युद्धकाण्डेऽपि** सुग्रीवं प्रति रामः— 'श्रूयते हि कपोतेन शत्रुः शरणमागतः । अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ स हि तं प्रतिजग्राह भार्याहर्तारमागतम् । कपोतो वानरश्रेष्ठ किं पुनर्मद्विधो जनः ॥ ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा । शृणु गाथां पुरा गीतां धर्मिष्ठां सत्यवादिना ॥ बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् । न हन्यादानृशंस्यार्थमपि शत्रुं परन्तप ॥ आर्तो वा यदि वा दृप्तः परेषां शरणागतः । अपि प्राणान्परित्यज्य रक्षितव्यः कृतात्मना ॥' इति ॥

**एवं हि ते भवेत्स्वस्ति सम्प्रदाय रघूत्तमे ।**
**अन्यथा त्वं हि कुर्वाणो वधं प्राप्स्यसि रावण ॥**

अनेन महापुरुषापराधनिमित्तं परित्यज्य तमेव शरणं गतश्चेत् जीवनं प्राप्नोति, न चेत्समूलं नश्यतीति सूचितम् । तथा च **द्रोणपर्वणि शतरुद्रीये**— 'असूयतश्च शक्रस्य वज्रेण प्रहरिष्यतः । बाहुं सवज्रं तं तस्य क्रुद्धस्यास्तंभयत्प्रभुः ॥ ततः संस्तम्भितभुजः शक्रो देवगणैर्वृतः । जगाम ससुरस्तूर्णं ब्रह्माणं प्रभुमव्ययम् ॥ ते मया सहिता यूयं प्रयाचध्वं तमेव हि । अथाभ्येत्य ततो ब्रह्मा दृष्ट्वा च स महेश्वरम् ॥ अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तं पितामहः । ततः प्रसादयामासुरुमां चन्द्रं च ते सुराः ॥ अभवच्च पुनर्बाहुः प्रकृतिस्थो हि वज्रिणः । तेषां प्रसन्नो भगवान् सपत्नीको वृषध्वजः ॥' इति ॥

वर्जयेद्वज्रमुत्सृष्टं वर्जयेदन्तकाश्चिरम् ।
त्वद्विधं तु न संक्रुद्धो लोकनाथः स राघवः ॥

अनेन अमोघक्रोधहर्षत्वं राज्ञो धर्म इति सूचितम् । तथा च मानवे— 'यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे । मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥' इति । अतथाभूतस्य निन्दा उद्योगे— 'प्रसादो वितथो यस्य कोपश्चापि निरर्थकः । न तं राजानमिच्छन्ति षण्डं पतिमिव स्त्रियः ॥' इति ॥

रामस्य धनुषः शब्दं श्रोष्यसि त्वं महास्वनम् ।
शतक्रतुविसृष्टस्य निर्घोषमशनेरिव ॥

इह शीघ्रं सुपर्वाणो ज्वलितास्या इवोरगाः ।
इषवो निपतिष्यन्ति रामलक्ष्मणलक्षणाः ॥

रक्षांसि परिनिघ्नन्तः पुर्यामस्यां समन्ततः ।
असंबाधं करिष्यन्ति पतन्तः कङ्कवाससः ॥

अत्र रामकार्मुकशब्दस्याशनिशब्दवदतिभयङ्करत्वप्रतिपादनान्महापुरुषप्रयुक्तं स्वल्पमपि साधनं महत्तरं कार्यं साधयतीति सूचितम् । तथा च विष्णुपुराणे— 'तेषामक्षीणि कर्णांश्च नासिकाश्चैव मायया । निमित्तवेधी स मुनिरैषीकाभिः समार्पयत् ॥ स दृष्ट्वा श्वेतमाकाशमैषीकाभिः समाचितम् । पादयोर्न्यपतद्राजा स्वस्ति मेऽस्त्विति चाब्रवीत् ॥' इति । अत्रैवाग्रे— 'ततस्तं वायसं दर्भः सोऽम्बरेऽनुजगाम ह । अनुद्रुतस्तदा काको जगाम विविधां गतिम् ॥' इति । प्राचीना अपि— 'रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा निरालम्बो मार्गश्चरणरहितः सार-

थिरपि। रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः क्रियासिद्धिः सत्वे वसति महतां नो१करणे ॥ विजेतव्या लङ्का चरणतरणीयो जलनिधिर्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः। तथाप्येको रामः सकलमवधीद्राक्षसकुलं क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥' इति ॥

राक्षसेन्द्रमहासर्पान् स रामगरुडो महान्।
उद्धरिष्यति वेगेन वैनतेय इवोरगान् ॥

अनेन एकोऽपि महापुरुषो बहूनपि शत्रून् समूलमुद्धरिष्यतीति सूचितम्। तथा चोद्योगे सञ्जययाने— 'एकेन पाण्डुपुत्रेण विराटनगरे तदा। भग्ना पलायत दिशः पर्याप्तं तन्निदर्शनम् ॥' इति। तत्रैव— 'भस्म कुर्याज्जगदिदं मनसैव जनार्दनः। न तु कृत्स्नं जगच्छक्तं किंचित् कर्तुं जनार्दने ॥' इति ॥

अपनेष्यति मां भर्ता त्वत्तः शीघ्रमरिन्दमः।
असुरेभ्यः श्रियं दीप्तां विष्णुस्त्रिभिरिव क्रमैः ॥

अनेन पुण्यपुरुषस्य बलात (द्यस्य ?) द्रव्यमन्येनापहृतं चेदपि न गच्छति, किं तु स एव पुनः प्राप्नोतीति सूचितम्। तथा चोद्योगे विदुरः— 'युधिष्ठिरो राजपुत्रो महात्मा न्याय्यागतं राज्यमिदं च तस्य। स कौरवस्यास्य जनस्य भर्ता प्रशासिता चैव महानुभावः ॥ स सत्यसंधः सततात्रमत्तः शास्त्रे स्थितो बन्धुजनस्य भर्ता। प्रियः प्रजानां सततानुकम्पी जितेन्द्रियः साधुजनस्य भर्ता ॥ क्षमा तितिक्षा दम आर्जवं च सत्यव्रतत्वं

श्रुतमप्रमादः । भूतानुकम्पा ह्यनुशासनं च युधिष्ठिरे राजगुणाः समस्ताः ॥ क्रमागतं राज्यमिदं हि तेषां हर्तुं कथं शक्ष्यति दुर्विनीतः ॥' इति ॥

जनस्थाने हतस्थाने निहते रक्षसां बले ।
अशक्तेन त्वया रक्षः कृतमेतदसाधु वै ॥

आश्रमं तु तयोः शून्यं प्रविश्य नरसिंहयोः ।
गोचरं गतयोर्भ्रात्रोरपनीता त्वयाधम ॥

न हि गन्धमुपाघ्राय रामलक्ष्मणयोस्त्वया ।
शक्यं संदर्शने स्थातुं शुना शार्दूलयोरिव ॥

तस्य ते विग्रहे ताभ्यां युगग्रहणमस्थिरम् ।
वृत्रस्येवेन्द्रबाहुभ्यां बाहोरेकस्य निग्रहः ॥

क्षिप्रं तव स नाथो मे रामः सौमित्रिणा सह ।
तोयमल्पमिवादित्यः प्राणानादास्यते शरैः ॥

अनेन बलवद्विरोधिनः समूलनाशो भवतीति सूचितम् । तथा च प्राचीनाः— 'अनुचितकर्मारम्भः स्वजनविरोधो बलीयसि स्पर्धा । प्रमदाजनविश्वासो मृत्योर्द्वाराणि चत्वारि ॥' इति ॥

गिरिं कुबेरस्य गतोऽथवालयं
सभां गतो वा वरुणस्य राज्ञः ।
असंशयं दाशरथेर्न मोक्ष्यसे
महाद्रुमः कालहतोऽशनेरिव ॥

अनेन बलवद्विरोधिनोऽन्यः कोऽपि रक्षको न भविष्यतीति सूचितम् । तथा च विराटपर्वणि— 'अन्तर्महीं वा यदि वोर्ध्वमुत्पतेः समुद्रपारं यदि वा प्रधावसि । तथापि तेभ्यो न विमोक्षमर्हसि प्रमाथिनो देवसुता हि खेचराः ॥ तेषां प्रियां प्रार्थयतो न ते भुवि गत्वा दिवं वा शरणं भविष्यति । न वर्तते कीचक ते दृशा शुभं या तेन संजीवनमर्थयेत ॥' इति ॥

इति एकविंशः सर्गः ।

---

## अथ द्वाविंशः सर्गः ।

द्वाविंशे— इति जनकदुहितुरनवधिमवधीरणाफणितिमाकर्ण्य कोपसंरक्तलोचनो दशाननः परुषतरमेवमभाषत—

यथा यथा सान्त्वयिता वश्यः स्त्रीणां तथा तथा ।
यथा यथा प्रियं वक्ता परिभूतस्तथा तथा ॥

सन्नियच्छति मे क्रोधं त्वयि कामः समुत्थितः ।
द्रवतोऽमार्गमासाद्य हयानिव सुसारथिः ॥

वामः कामो मनुष्याणां यस्मिन्किल निबध्यते ।
जने तस्मिंस्त्वनुक्रोशः स्नेहश्च किल जायते ॥

एतस्मात्कारणान्न त्वां घातयामि वरानने ।
वधार्हामवमानार्हां मिथ्याप्रव्रजिते रताम् ॥

परुषाणीह वाक्यानि यानि यानि ब्रवीषि माम् ।
तेषु तेषु वधो युक्तस्तव मैथिलि दारुणः ॥

अत्र यावद्यावत्कुपितां सान्त्वयति तथा तथा स्त्रीवश्यो भवति । यथा यथा अभिनवप्रीतिं संपादयति, तथा तथा परिभूयते च । अतो निग्रह एव कर्तव्यतया प्राप्तः । तत्र कामपुरुषार्थः प्रतिबन्धको भवति । कामस्यायं स्वभावः— सदोषेऽपि वस्तुनि प्रीतिं पुनः पुनरुत्पादयतीति । ततस्त्वदधीनं कामपुरुषार्थं मत्वा प्रतिपरुषभाषणं चित्रवधार्हामपि त्वां न निगृह्णामि इत्युक्त्या स्त्रीषु अत्यासक्तेरवमानादिसंपादकत्वादतिशयतिरस्कारस्य च कामपुरुषार्थहानिकरत्वादत्यन्तमनासक्त एव मध्यमया वृत्त्या कामपुरुषार्थं सेवेत इति सूचितम् । तथा चानुशासनिके— 'संपूज्यमानाः पुरुषैर्विकुर्वन्ति मनो नृषु । अपास्ताश्च तथा राजन् विकुर्वन्ति मनः स्त्रियः ॥ सत्कृतासत्कृताश्चापि विकुर्वन्ति मनः सदा । नासां स्नेहो नरैः कार्यस्तथैवेर्ष्या जनेश्वर ॥ खेदमास्थाय भुंजीत धर्ममास्थाय चैव ह । निहन्येतान्यथा कुर्वन्नरः कौरवनन्दन ॥' इति ॥

ततश्च मत्संगममनिच्छन्तीं त्वां मासद्वयानन्तरं प्रातरशनाय कल्पयिष्यन्ति सूदा इति बहुविधमभितर्जिता जानकी रावणेन सहागताभिर्देवगन्धर्वकन्यकाभिर्नेत्रभ्रूवलनादिभिः परिसान्त्व्यमाना रावणं साधिक्षेपमित्थमाचचक्षे— धर्मैकनिष्ठस्य महानुभावस्य रामस्य भार्यां दशरथस्नुषां च मां दुष्टेन चक्षुषा पश्यतः साभिलाषं वचनं चेदमुदाहरतस्तव नयनस्फोटनं रसनाविदारणं चाचिरादेव भविष्यति। अहं तु निखिलमपि जगत् स्वतेजसा भस्मसात्कर्तुं समर्थापि—

असन्देशात्तु रामस्य तपसश्चानुपालनात् ।
न त्वां कुर्मि दशग्रीव भस्म भस्मार्हतेजसा ॥

अनेन भर्तुराज्ञां विना स्त्रीभिः किंचिदपि न कर्तव्यमिति सूचितम् । एतच्च प्राक् प्रपञ्चितम् ॥

ततस्तद्वचनाकर्णनजनितक्रोधसंरक्तलोचनः—

उवाच रावणः सीतां भुजङ्ग इव निःश्वसन् ।
यथा मद्वशगा सीता क्षिप्रं भवति जानकी ॥
तथा कुरुत राक्षस्यः सर्वाः क्षिप्रं समेत्य च ।

तत इत्थं वदन्तं रावणमालिङ्ग्य धान्यमालिनी—

अकामां कामयानस्य शरीरमुपतप्यते ।
इच्छन्तीं कामयानस्य प्रीतिर्भवति शोभना ॥

अनेन परस्परानुराग उभयोः सौख्यप्रदः । अन्यतरानुरागस्तु अन्यतरसन्तापकर इति सूचितम् । तथा च मनुः— 'सन्तुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च । यस्मिन्नेतत्कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥' इति । स्मृत्यन्तरेऽपि— 'स्वर्गेऽपि दुर्लभं ह्येतदनुरागः परस्परम्' इति । ततश्च वितथप्रयत्नो दशग्रीवो विहाय सीतां भास्वरं स्वं वेश्म प्रविवेश ॥

इति द्वाविंशः सर्गः ।

---

## अथ त्रयोविंशचतुर्विंशौ सर्गौ ॥

त्रयोविंशचतुर्विंशयोः— अथ यथागतं गतवति दशानने रोषभीषणपरुषभाषणवीक्षणानामेकजटाविकटादुर्मुखीप्रभृतीनां राक्ष-

सीतामसदृशवचनजातमाकर्ण्य विदीर्णहृदया हृदयदयितं ध्यायन्ती जनकनन्दिनी एवमवादीत्—

**यदिदं लोकविद्विष्टमुदाहरथ संगताः ।**
**नैतन्मनसि वाक्यं मे किल्बिषं प्रतिभाति वः ॥**

अनेन लोकविद्विष्टं पापाधायकं वर्जनीयमिति सूचितम् । तथा च **मनुः**— 'अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ।' इति ॥

**न मानुषी राक्षसस्य भार्या भवितुमर्हति ।**
**कामं खादत मां सर्वा न करिष्यामि वो वचः ॥**

अनेन परमापद्यपि स्वधर्मं न त्यजेदिति सूचितम् । तथा च **मनुः**— 'न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत् ।' इति । **भारतेऽपि**— 'न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः ।' इति ॥

**दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः ।**
**तं नित्यमनुरक्तास्मि यथा सूर्यं सुवर्चला ॥**

अनेन दुर्गतोऽपि भर्ता आदरेण सेव्यो न परित्याज्य इति सूचितम् । तथा च **हरिवंशे**— 'व्याधितः पतितो वापि दीनो वापि कथंचन । न त्यक्तव्यः स्त्रिया भर्ता धर्म एष सनातनः ॥' इति ॥

**यथा शची महाभागा शक्रं समुपतिष्ठति ।**
**अरुन्धती वसिष्ठं च रोहिणी शशिनं यथा ॥**

लोपामुद्रा यथागस्त्यं सुकन्या च्यवनं यथा ।
सावित्री सत्यवन्तं च कपिलं श्रीमती यथा ॥
सौदासं मदयन्तीव केशिनी सगरं यथा ।
नैषधं दमयन्तीव भैमी पतिमनुव्रता ॥
तथाहमिक्ष्वाकुवरं रामं पतिमनुव्रता ।

अत्र दृष्टान्तकथनव्याजेनापि पतिव्रतासंकीर्तनादव्यवधानेन श्रेयसः सीतया प्राप्तत्वात् पतिव्रतासंकीर्तनं श्रेयःप्रदमिति सूचितम ॥

तथा च **विराटपर्वणि** द्रौपदीं प्रति भीमः— 'पुरा सुकन्या भार्या च भार्गवं च्यवनं वने । वल्मीकभूतं शाम्यन्तमन्वपद्यत भामिनी ॥ नारायणी चेन्द्रसेना रूपेण यदि ते श्रुता । पतिमन्वचरद्वृद्धं पुरा वर्षसहस्रिणम् ॥ दुहिता जनकस्यापि वैदेही यदि ते श्रुता । पतिमन्वचरत्सीता महारण्यनिवासिनम् ॥ रक्षसा निग्रहं प्राप्य रामस्य महिषी प्रिया । क्लिश्यमानापि सुश्रोणी राममेवान्वपद्यत ॥ लोपामुद्रा तथा भीरु वयोरूपसमन्विता । अगस्त्यमन्वयाद्धित्वा कामान्सर्वानमानुषान् ॥ द्युमत्सेनसुतं वीरं सत्यवन्तमनिन्दिता । सावित्र्यनुचचारैका यमलोकं मनस्विनी ॥ अथैताः कीर्तिता नार्यः पापहाराः पतिव्रताः । तथा त्वमपि कल्याणि सर्वैस्समुदिता गुणैः ॥' इति ॥

**स्कान्देऽपि** बृहस्पतिः— 'पतिव्रतेयं कल्याणि लोपामुद्रा सुधर्मिणी । तवाङ्गच्छायया तुल्या यत्कथा पुण्यकारिणी ॥' इति । **कौस्तुभमयूखयोरपि**— 'अहल्या द्रौपदी सीता तारा

मन्दोदरी तथा । पञ्च कन्याः स्मरेन्नित्यं महापातकनाशनम् ॥' इति ॥

तदनु निशाचरीकृतसंतर्जनभयेन वेपमानतनुलतामश्रुमुखीं शिंशुपामूलमागतां विनताभिधा निशाचरी—

सीते पर्याप्तमेतावद्भर्तृस्नेहो निदर्शितः ।
सर्वत्रातिकृतं भद्रे व्यसनायोपकल्पते ॥

इत्यवादीत् । अनेन अतिकारः सर्वत्र गर्हित इत्युक्तम् । तदुक्तम्— 'अति सर्वत्र गर्हितः' इति ॥

इति त्रयोविंशचतुर्विंशौ सर्गौ ।

---

## अथ पंचविंशः सर्गः ॥

पञ्चविंशे— ततः प्रसन्नमानसा रावणं भर्तारमासाद्य भुङ्क्ष्व भोगान् यथेप्सितान् । न चेदद्यैव त्वां व्यापाद्य यथेप्सितं साधयाम इति सर्वाभिर्भर्त्स्यमाना सीता परित्यज्य धैर्यं सुचिरमश्रूणि मुञ्चन्ती तामेवाशोकशाखामालम्ब्य विक्लबहृदया रामलक्ष्मणौ संस्मृत्य सगद्गदमेवमवादीत्—

लोकप्रवादः सत्योऽयं पण्डितैः समुदाहृतः ।
अकाले दुर्लभो मृत्युः स्त्रिया वा पुरुषस्य वा ॥

अनेन मृत्युर्यस्मिन्काले विहितस्तस्मिन्नेव काले जायते, नाकाले इति सूचितम् । तथा च वनपर्वणि नलोपाख्याने

दमयन्ती— 'नाकाले विहितो मृत्युर्मर्त्यानां पुरुषर्षभ । यत्र कान्ता त्वयोत्सृष्टा मुहूर्तमपि जीवति ॥ नाप्राप्तकालो म्रियते श्रुतं वृद्धानुशासनम् ।' इति ॥

कीदृशं तु मया पापं पुरा देहान्तरे कृतम् ।
येनेदं प्राप्यते दुःखं मया घोरं सुदारुणम् ॥

अनेन पूर्वजन्मकृतदुष्कृतानुरूपमेव दुःखमिहजन्मनि प्राप्यत इति सूचितम् । तथा च स्मृतिः— 'यथा गवां सहस्रेषु वत्सो विन्दति मातरम् । एवं पूर्वकृतं कर्म कर्तारमनुविन्दति ॥' इति । मोक्षधर्मेऽपि— 'निरन्तरं च मिश्रं च फलते कर्म पार्थिव । कल्याणं यदि वा पापं न तु नाशोऽस्य विद्यते ॥ कदाचित्सुकृतं तावत्कूटस्थमिव तिष्ठति । मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते ॥ ततो दुःखक्षयं कृत्वा सुकृतं कर्म सेवते । सुकृतक्षयाद्दुष्कृतं च तद्विद्धि मनुजाधिप ॥' इति ॥

धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् ।
न शक्यं यत्परित्यक्तुमात्मच्छन्देन जीवितम् ॥

अनेन मनुष्यजन्म क्लेशकरम्, तत्रापि परवश्यत्वमतिक्लेशाधायकमित्युक्तम् । अत एव मानुषा भवतेति वसूनां वसिष्ठशापः, वसूनां च मनुष्यजनिजुगुप्सा, उत्पत्तिश्चेदपि अवस्थानपरिहारायोत्पन्नमात्राणामेव जले प्रक्षेपप्रार्थनं च गङ्गां प्रति प्रतिपादितमादिपर्वणि— 'सन्ध्यां वसिष्ठमासीनं समेत्याभिसृताः पुरा । तेन कोपाद्वयं शप्ता योनौ संभवतेति ह ॥ त्वमस्मान्मानुषी भूत्वा सूष्व पुत्रान् वसून् भुवि । न मानुषीणां

जठरं प्रविशेम वयं शुभे ॥ जातान् कुमारान् स्वानप्सु प्रक्षेप्तुं वै त्वमर्हसि । यथा न चिरकालं नो निष्कृतिस्स्यात्त्रिलोकगे ॥' इति ॥

परवश्यत्वं क्लेशकरमित्येतदपि भारते भीमं प्रति द्रौपदी-वचने— 'पार्थिवाः पृथिवीपाल यस्यासन्वशवर्तिनः । स वशे विवशो राजा परेषामद्य वर्तते ॥ सूपकारं विराटस्य वल्लवं त्वां विदुर्जनाः । प्रेष्यत्वं समनुप्राप्तं ततो दुःखतरं नु किम् ॥' इति ॥

इति पञ्चविंश सर्गः ।

---

## अथ षड्विंशः सर्गः ॥

**षड्विंशे—** अथ बाष्पदूषितलोचना दीर्घमुष्णं विनिश्व स्याधोमुखी सुचिरं विललाप । सकलजीवलोकशरण्यस्य ससागरमहीमहेन्द्रस्य रामभद्रस्य पार्श्ववर्तिन्यपि अशरणेव रावणेन बलादानीय सुदारुणं निर्भर्त्सितास्मि । हा प्रियंवद रामभद्र प्रसीद । दर्शयात्मनो भक्तवत्सलताम् । परिपूरय मनोरथम् । कथय किमपराद्धं मया, यदहमनाथेव त्वया नावलोकिता । धिङ्मामनार्या-मसदृशकारिणीम् , याहं रामचन्द्रेण विनाकृता दुरात्मना निशा-चरेणेमामवस्थां प्रापितापि जीवामि । प्रियतमविहीनायाः किमनेन मम जीवितेन ॥

**कामं खादत मां सर्वा न करिष्यामि वो वचः ।**

राक्षसाधमं रावणं वामचरणेनापि न स्पृशामि । यदि नाम रामभद्रो मामिहस्थां जानीयादद्यैव रुक्मपुंखैर्विशिखै-

विंशीर्य प्राकारमवमथ्य च रक्षःकुलं रावणस्य च नीचस्य कीर्तिं नाम च नाशयेत् ॥

ततो निहतनाथानां राक्षसीनां गृहे गृहे ।
यथाहमेवं रुदती तथा भूयान्न संशयः ॥

चिताधूमाकुलपथा गृध्रमण्डलसंकुला ।
अचिरेण तु लङ्केयं श्मशानसदृशी भवेत् ।
अचिरेणैव कालेन प्राप्स्याम्येवं मनोरथम् ॥

अत्रावश्यं लंका भस्मीभाविष्यतीति सीतया शापः कृतः। तदनुरूपतया चाचिराल्लंका तथा जाता । अतोऽन्यासामपि पतिव्रतानां शापो दुष्परिहर इति सूचितम् । अत एव पार्वत्याः शापो देवानाममोघ इत्युक्तं बालकाण्डे— 'अपत्यं स्वेषु दारेषु नोत्पादयितुमर्हथ। अद्यप्रभृति युष्माकमप्रजाः सन्तु पत्नयः ॥ एवमुक्त्वा सुरान् सर्वान् शशाप पृथिवीमपि । अवने नैकरूपा त्वं बहुभार्या भविष्यसि ॥ न च पुत्रकृतां प्रीतिं मत्क्रोधकलुषीकृता। प्राप्स्यसि त्वं सुदुर्मेधे मम पुत्रमनिच्छती ॥ शैलपुत्र्या यदुक्तं तत्र प्रजाः स्वासु पत्निषु । तस्या वचनमक्लिष्टं सत्यमेव न संशयः ॥' इति ॥

अकार्यं ये न जानन्ति नैर्ऋताः पापकारिणः ।
अधर्मात्तु महोत्पातो भविष्यति हि साम्प्रतम् ॥

अनेनाधर्मातिशयेनोत्कटपातलक्षणो विनाशः सद्य एव भवतीति सूचितम् । तथा चोद्योगपर्वणि नहुषं प्रति अगस्त्यः— 'अधर्मे संप्रवृत्तस्त्वं धर्मं न प्रतिपद्यसे । अदुष्टं दूषयसि मे

यच्च मूर्ध्न्यस्पृशः पदा ॥ यच्चापि त्वमृषीन् मूढ ब्रह्मकल्पान् दुरासदान् । वाहान् कृत्वा वाहयासि तेन स्वर्गाद्धतप्रभः ॥ ध्वंस पाप परिभ्रष्टः क्षीणपुण्यो महीतले । एवं भ्रष्टो दुरात्मा स देवराज्यादरिन्दम ॥ हतश्च नहुषः पापो दिष्ट्यागस्त्येन धीमता । दिष्ट्या पापसमाचारः कृतः सर्पो महीतले ॥' इति । **कामन्दकेऽपि**— 'अधर्माच्चैव नहुषः प्रतिपेदे रसातलम्' इति ॥

तदिदानीमधर्मपरेण निशाचरेण प्रतिज्ञातम्— मासद्वयातिक्रमे प्रातराशायोपकल्पनीयेति । मया किमत्र प्रतिविधातव्यम् । नूनं स रामभद्रो जीवन्तीं मां न जानाति । यदि जानीयात्, मामविचिन्त्य न स्थास्यति । अथवा, मदीयशोकानलदह्यमानमानसः परित्यज्य कळेबरं देवलोकं प्रतियातो भवेत् । अथवा लोकनायकस्य तस्य भार्यया मया न किंचिदपि प्रयोजनमस्ति इति तर्कयामि ॥

**दृश्यमाने भवेत्प्रीतिः सौहृदं नास्त्यपश्यतः ।**
**नाशयन्ति कृतघ्नास्तु न रामो नाशयिष्यति ॥**

अनेन मध्यमाः पुरुषाः प्रत्यक्षे प्रीतिं कुर्वन्ति, न परोक्षे । तथा चोक्तम्— 'स्नेहः प्रवासाश्रयात्' इति । अधमाः कृतघ्नास्तु परोक्षापरोक्षयोरहितकारिण एव भवन्ति। सन्तस्तु परोक्षापरोक्षयोर्हितकारिण एव भवन्तीति सूचितम् । तथा च **राजधर्मे**— 'कानि लिंगानि दुष्टस्य भवन्ति द्विजसत्तम । कथं दुष्टं विजानीयामेतत्पृष्टो वदस्व मे ॥' इतीन्द्रपृष्टो बृहस्पतिः— 'परोक्षमगुणानाह सद्गुणानवमन्यते । अदृष्टितो विकुरुते दृष्टो नैवाभि-

भाषते ॥ परैर्वा कीर्त्यमानेषु तूष्णीमास्ते पराङ्मुखः । सत्त्वेतद्वि-परीतं हि बुध्येथास्त्रिदशेश्वर ॥' इति ॥

नूनं लंका हते पापे रावणे राक्षसाधमे ।
शोषं यास्यति दुर्धर्षा प्रमदा विधवा यथा ॥

अनेन विधवाभिरामरणं शरीरशोषणं कर्तव्यमिति सूचितम् । तथा च मनुः— 'कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ॥ एकाहारः सदा कार्यो न द्वितीयः कदाचन । त्रिरात्रं पञ्चरात्रं वा पक्षव्रतमथापि वा ॥ यवान्नैर्वा फलाहारैः शाकाहारैः पयोव्रतैः । प्राणयात्रां प्रकुर्वीत यावत्प्राणः स्वयं व्रजेत् ॥' इति ॥ तदिदानीमपारशोकसागरनिमग्नापि मर्तुं नेच्छामि ।

धन्याः खलु महात्मानो मुनयः सत्यसंमताः ।
जितात्मानो महाभागा येषां न स्तः प्रियाप्रिये ॥

प्रियाच्च संभवेद्दुःखमप्रियादधिकं भयम् ।
ताभ्यां हि ये वियुज्यन्ते नमस्तेषां महात्मनाम् ॥

अनेन शीतोष्णसुखदुःखादिद्वंद्वेषु समबुद्धीनामिह दुःखं न जायते । परमपुरुषार्थप्राप्तिश्च भवतीति सूचितम् । तथा च गीतासु— 'यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ । समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् । स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् । स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ शक्नोतीहैव यः सोढुं

प्राक् शरीरविमोक्षणात् । कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥' इति ॥

इति षड्विंशः सर्गः ।

## अथ सप्तविंशः सर्गः ॥

**सप्तविंशे—** ततस्तत्रैव शयाना त्रिजटा निशाचरी जानकीतर्जनप्रवृत्ता राक्षसीरवलोक्य ससम्भ्रममिदमाह—अलमनेन जनकनन्दिनीभर्त्सनेन । रामो ह्यतिधवलगजदन्तमयीं शिबिकामास्थाय विरजोऽम्बरधारिणा सौमित्रिणा विमलक्षौमसंवीतया जानक्या च सह सकलसुरासुरसिद्धगन्धर्वैश्च संस्तूयमानो लंकां प्रविष्टो मया स्वप्ने दृष्टः । रावणस्तु नीलाम्बरपरिवृतो रक्तमाल्यानुलेपनो मुण्डितशिराः पुष्पकान्निपतितः खरयानमधिरुह्य विगतवसनः पंकविलिप्तगात्रो वराहशिंशुमारादिवाहनमास्थितैस्तैलपानप्रवृत्तैरिन्द्रजित्कुम्भकर्णप्रमुखैः सह सागरं प्रविष्टः । तेष्वेको विभीषणश्चतुर्भिस्सहामात्यैः परित्यज्य लंकामाधिरुह्य च दिव्यं गजं श्वेतच्छत्रावृताननः शुक्लमाल्याम्बरधरो मया विलोकितः । अतो रामः सीतामवाप्स्यति, रावणं च हनिष्यति । सीतायाश्च मुखप्रसादवामाङ्गस्फुरणादिभिः पक्षिस्वनैश्च पुरःस्थितं रामभद्रमवगच्छामि । तदिदानीं सीतामेव शरणं गतानामस्माकं जीवनं भवेदिति तर्कयामि—

**प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ।**
**अलमेषा परित्रातुं राक्षसीर्महतो भयात् ॥**

इति सप्तविंशः सर्गः

## अथ अष्टाविंशः सर्गः ॥

**अष्टाविंशे**— ततः सीता त्रिजटावचनमपि मायोदीरितमिति शंकया रावणकृतसंतर्जनक्लेशेन च देहपरित्याग एव कृतनिश्चया बहुधा विललाप—

**नैवास्ति दोषो मम नूनमत्र वध्याहमस्याप्रियदर्शनस्य ।**
**भावं न चास्याहमनुप्रदातुमलं द्विजो मन्त्रमिवाद्विजाय ॥**

अत्र 'नैवास्ति दोषो मम नूनमत्र' इति परपुरुषांगीकरणापेक्षया आत्महत्यापि न दोषायेत्युक्तत्वात् जीवितादपि धर्मरक्षणमाधिकमिति सूचितम् । तथा च **भारते**– 'न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः ।' इति । 'मन्त्रमिवाद्विजाय' इत्यनेन, ब्राह्मणो मन्त्रमद्विजाय शूद्राय प्राणात्ययेऽपि न दद्यादिति सूचितम् । तथा च **श्रुतिः**— 'न शूद्राय मतिं दद्यात्' इति । **स्मृतिरपि**— 'उपदेशो न कर्तव्यो जातिहीनस्य कस्यचित् । उपदेशे महान् दोष उपाध्यायस्य भाष्यते ॥ महान् क्लेशो हि भवति तस्मान्नोपदिशेदिह ।' इति । **मनुरपि**— 'न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् । न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥ यो ह्यस्य धर्ममाचष्टे यश्चैवादिशति व्रतम् । सोऽसंवृतं नाम तमः सह तेनैव मज्जति ॥' इति ॥

नूनमयं निशाचरेन्द्रः शल्यकृन्त इव ममाङ्गानि छेत्स्यति ।

**दुःखं बतेदं मम दुःखितायाः मासौ चिरायाधिगमिष्यतो द्वौ ।**
**बद्धस्य वध्यस्य यथा निशान्ते राजापराधादिव तस्करस्य ॥**

अनेन दिवा लब्धस्य वध्यस्य चोरस्य सद्य एव वधः, रात्रौ लब्धस्य दोषपरिज्ञानाय प्रख्यापनाय च बन्धनादिना उदयपर्यन्तं रक्षितस्य उदयानन्तरं वधः कर्तव्य इति सूचितम् । तथा च मनुः—'तेषां दोषानभिख्याप्य स्वे स्वे कर्मणि तत्वतः । कुर्वीत शासनं राजा सम्यक् सारापराधतः ॥ सन्धिं छित्त्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः । तेषां छित्त्वा नृपो हस्तं तीक्ष्णशूले निवेशयेत् ॥ अङ्गुळी ग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे । द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥' इति । अस्यार्थः—सन्धिच्छेदं भित्तिच्छेदम् । निवेशयेत् आरोपयेत् । ग्रन्थिभेदस्य ग्रन्थिमोक्षणेन पटादौ बद्धं सुवर्णादिद्रव्यमपहरतः पुरुषस्य अंगुळी अंगुष्ठतर्जन्यौ छेदयेत् । इदं सकृदपहरतः । द्वितीयवारमपहरतो हस्तचरणौ छिन्द्यात् । तृतीये वध एव इति ॥

**अनन्यदेवत्वमियं क्षमा च भूमौ च शय्या नियमश्च धर्मे ।**
**पतिव्रतात्वं विफलं ममेदं कृतं कृतघ्नेष्विव मानुषाणाम् ॥**

अत्र सीतया पातिव्रत्यं व्यर्थमिति प्रतिपादनं निर्वेदवशात् । वस्तुतस्तु तत्सफलमित्येव सीताया अभिप्रायः । अत एव 'यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः । यदि चास्त्येकपत्नीत्वं शीतो भव हनूमतः ॥' इत्यग्रेतनं सीताप्रतिज्ञावचनम्, 'दह्यमाने च लाङ्गूले चिन्तयामास वानरः । प्रदीप्तोऽग्निरयं कस्मान्न मां दहति सर्वतः ॥ दृश्यते च महाज्वालो न करोति च मे रुजम् । शिशिरस्येव संपातो लाङ्गूलाग्रे प्रतिष्ठितः ॥' इति हनूमल्लांगूलदाहाभावरूपफलप्रतिपादनं च संगच्छते इति ॥

पितुर्निदेशं नियमेन कृत्वा
वनान्निवृत्तश्चरितव्रतश्च ।
स्त्रीभिश्च मन्ये विपुलेक्षणाभि-
स्त्वं रंस्यसे वीतभयः कृतार्थः ॥

अहं तु राम त्वयि जातकामा
चिरं विनाशाय निबद्धभावा ।
मोघं चरित्वाथ तपो व्रतं च
त्यक्ष्यामि धिक् जीवितमल्पभाग्या ॥

अनेन पुरुषस्य भार्यान्तरमस्ति, स्त्रीणां तु भर्त्रन्तरं नास्तीति सूचितम । तथा च तैत्तिरीयश्रुतिः— 'यदेकस्मिन्यूपे द्वे रशने परिव्ययति । तस्माद्वे जाये विन्दते । यन्नैकाँ रशनां द्वयोर्यूपयोः परिव्ययति । तस्मान्नैका द्वौ पती विन्दते ।' इति । मनुरपि— 'न द्वितीयश्च साध्वीनां कचिद्भर्तोपदिश्यते ।' इति ॥

इति अष्टाविंशः सर्गः ।

---

## अथ एकोनत्रिंशः सर्गः ॥

एकोनत्रिंशे—

तथागतां तां व्यथितामनिन्दितां
व्यपेतहर्षां परिदीनमानसाम्
शोकानिमित्तानि शुभानि भेजिरे
नरं श्रिया जुष्टमिवोपजीविनः ॥

अनेन श्रीमन्तमुपजीविन. स्वत एव समायान्तीत्युक्तम् । तथा च कामन्दके!— 'लक्ष्मीरेवान्वयो लोके न लक्ष्म्याः परतोऽन्वयः । यस्मिन्कोशो बलं चैव तस्मिन्लोकोऽनुगच्छति ॥' इति ॥

तस्याः शुभं वाममरालपक्ष्मराजीवृतं कृष्णविशालशुक्लम् ।
प्रास्पन्दतैकं नयनं सुकेश्या मीनाहतं पद्ममिवाभिताम्रम् ॥

अत्र उत्तमनायिकायाः सीताया नेत्रे वक्रघनपक्ष्मराजियुक्तत्वकनीनिकामात्र कृष्णत्वतद्व्यतिरिक्तभागविशालशुक्लत्वादिलक्षणप्रतिपादनात् एतादृशलक्षणयुक्ता उत्तमस्त्री इति सूचितम् । तथा च काशीखण्डे— 'पक्ष्मभिः सुघनैः स्निग्धैः कृष्णैः सूक्ष्मैः सुभाग्यभाक् । ललनालोचने शस्ते रक्तान्ते कृष्णतारके ॥ गोक्षीरवर्णविशदे सुस्निग्धे कृष्णपक्ष्मणी ।' इति । वाहटेऽपि— 'नेत्रे व्यक्तासितसिते सुबद्धे घनपक्ष्मणी' इति । नयनयोः प्रान्तरक्तत्वात् जात्या पद्मिनीत्यपि सूचितम् , 'प्रान्तारक्तकुरङ्गशावनयना' इति लक्षणात् इति ॥

भुजश्च चार्वञ्चितपीनवृत्तः परार्ध्यकालागरुचन्दनार्हः ।
अनुत्तमेनाध्युषितः प्रियेण चिरेण वामः समवेपताशु ॥

अनेन भुजस्य वृत्तपीनत्वादिकमुत्तमस्त्रीणां लक्षणं सूचितम् । तथा च काशीखण्डे— 'स्यातां दोषौ सुनिर्दोषौ गूढास्थिग्रंथिकोमलौ । विसिरौ च विरोमाणौ सरलौ हरिणीदृशाम् ॥' इति ॥

गजेन्द्रहस्तप्रतिमश्च पीनस्तयोर्द्वयोः संहतयोः सुजातः ।
प्रस्पन्दमानः पुनरूरुरस्या रामं पुरस्तात्स्थितमाचचक्षे ॥

अनेन उत्तमस्त्रीणामूर्वोर्वृत्तपीनस्निग्धत्वादिकं लक्षणं सूचितम् । तथा च काशीखण्डे— 'विसिरैः करभाकारैरूरुभिर्मसृणैर्घनैः । सुवृत्तै रोमरहितैर्भवेयुर्भूपवल्लभाः ॥' इति ॥

शुभं पुनर्हेमसमानवर्णमीषद्रजोध्वस्तामिवामलाक्ष्याः ।
वासः स्थितायाः शिखराग्रदत्याः किंचित्परिस्रंसत चारुगात्र्याः॥

अनेन स्त्रीणां सूक्ष्माग्रदन्ताः शुभफलप्रदा इति सूचितम् । तथा च सामुद्रिके— 'यस्याः शिखरिणो दंता दीर्घं जीवति तत्पतिः' इति । 'स्निग्धाः समानरूपाः सुपङ्क्तयः शिखरिणः श्लिष्टाः । दन्ता भवन्ति यासां तासां पादे जगत्सर्वम् ॥' अनङ्गरङ्गेऽपि— 'रागस्पृशः स्निग्धतराः समाना घनाश्च सूक्ष्माः सशिखाः सुभासः । दन्ताः प्रशस्ता अतिखर्वरूक्षाः कराळबाह्या मलिनाश्च निन्द्याः ॥' इति ॥

तस्याः पुनर्बिम्बफलाधरोष्ठं स्वक्षिभ्रुकेशान्तमराळपक्ष्म ।
वक्त्रं बभासे स्मितशुक्लदंष्ट्रं राहोर्मुखाच्चन्द्र इव प्रमुक्तः ॥

अनेन बिम्बफलसन्निभाधरवत्त्वं स्निग्धासंहतभ्रूमत्त्वं नीलस्निग्धकुटिलकेशवत्त्वं नीरन्ध्रशुक्लदन्तवत्त्वं च उत्तमस्त्रीलक्षणमुक्तम् । तथा च काशीखण्डे— 'पाटलो वर्तुलास्निग्धरेखाभूषितमध्यभूः । सीमन्तिनीनामधरो धराजानिप्रियो भवेत् ॥ भ्रुवौ सुवर्तुले तन्व्यौ स्निग्धे कृष्णे असंगते ।

प्रशस्ते मृदुरोमाणौ सुभ्रुवः कार्मुकाकृती ॥ केशा अलिकुलच्छायाः सूक्ष्माः स्निग्धाः सुकोमलाः । किंचिदाकुंचिताग्राश्च कुटिलाश्चातिशोभनाः ॥ गोक्षीरसन्निभाः स्निग्धा द्वात्रिंशद्दशनाः शुभाः । अधस्तादुपरिष्टाच्च समाः स्तोकसमुन्नताः ॥' इति ॥

एवं त्रयस्त्रिंशे सर्गे सीतां प्रति हनूमद्वाक्ये उत्तमस्त्रीलक्षणान्युक्तानि ॥ 'व्यञ्जनानि च ते यानि लक्षणानि च लक्षये । महिषी भूमिपालस्य राजकन्यासि मे मता ॥' इति ॥

तान्येव लक्षणानि युद्धकाण्डे सीतावाक्ये—

इमानि खलु पद्मानि पादयोर्यैः कुलस्त्रियः ।
अधिराज्येऽभिषिच्यन्ते नरेन्द्रैः पतिभिः सह ॥ इति ॥

अनेन स्त्रीणां पादयोः पद्मादिरेखा राजमहिषीत्वज्ञापिका इत्युक्तम् । तथा च स्कान्दे— 'चक्रस्वस्तिकशंखाब्जध्वजमीनातपत्रवत् । यस्याः पादतले रेखाः सा भवेत् क्षितिपाङ्गना ॥' इति ॥

केशाः सूक्ष्माः समा नीला भ्रुवौ चासंगते मम ।
वृत्ते चारोमशे जंघे दन्ताश्चाविरला मम ॥

अत्र सूक्ष्मसमनीलकेशत्वमसंगतभ्रूमत्त्वं वृत्तारोमशजंघत्वमविरलदन्तत्वं चोत्तमस्त्रीणां लक्षणमित्युक्तम् । तत्र वृत्तारोमशजंघत्वविषये स्कान्दे— 'रोमहीने समे स्निग्धे यज्जंघे क्रमवर्तुले । सा राजपत्नी भवति विसिरे सुमनोहरे ॥' इति । केशादीनां समत्वे च प्रागुक्तम् ॥

शंखे नेत्रे करौ पादौ गुल्फावूरू च मेचितौ ।
अनुवृत्तनखाः स्निग्धाः समाश्चांगुळ्यो मम ॥

अत्र ललाटास्थिनेत्रकरचरणगुल्फोरूणां मांसलत्वं च नखानां स्निग्धत्वं वृत्तत्वं चांगुलीनां समत्वं चोत्तमस्त्रीणां लक्षणमुक्तम् । तथा च **स्कान्दे**— 'फालः सिराविरहितो निर्लोमार्धेन्दुसन्निभः । अनिम्नस्त्र्यंगुळो नार्याः सौभाग्यारोग्यकारणम् ॥' इति । **बाहटेऽपि**— 'ललाटमुन्नतं श्लिष्टशंखमर्धेन्दुसन्निभम् ।' इति । नेत्रलक्षणं च प्रागुक्तम् । करादीनां मांसलत्वं **स्कान्दे**— 'अम्भोजमुकुलाकारं स्वंगुष्ठांगुळि सन्नखम् । हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते ॥ विरोम विसिरं श्लस्तं पाणिपृष्ठं समुन्नतम् । स्त्रीणां पादतलं स्निग्धं मांसलं मृदुलं समम् । अस्वेदमुष्णमरुणं बहुभोगोचितं स्मृतम् । गूढौ गुल्फौ शुभायोक्तावसिरालौ सुवर्तुलौ ॥ विसिरैः करभाकारैरूरुभिर्मसृणैर्घनैः । सुवृत्तै रोमरहितैर्भवेयुर्भूपवल्लभाः ।' इति । 'स्निग्धाः समुन्नतास्ताम्रा वृत्ताः पादनखाः शुभाः । शुभदः सरलोंगुष्ठो वृत्तो वृत्तनखो मृदुः ॥ अंगुल्यश्च सुपर्वाणो दीर्घा वृत्ताः क्रमात्कृशाः ॥' इति च ॥

स्तनौ चाविरळौ पीनौ समेमौ मग्नचूचुकौ ।
मग्ना चोत्संगिनी नाभिः पार्श्वोरस्काश्च मे चिताः ॥

अत्र स्तनयोरविरळपीनसमग्नचूचुकत्वं नाभेः प्रान्तोन्नतमध्यनिम्नत्वं उरःपार्श्वयोर्मांसलत्वं च उत्तमस्त्रीलक्षणमुक्तम् । तथा च **स्कान्दे**— 'घनौ वृत्तौ दृढौ पीनौ समौ शस्तौ पयोधरौ ।

सुदृशां चूचुकयुगं शस्तं श्यामं सुवर्तुलम् ॥ गम्भीरा दक्षिणावर्ता नाभिः स्यात्सुखसंपदे। अष्टादशांगुळततमूरु पीवरमुन्नतम् ॥ सुखाय दुःखाय भवेद्रोमशं विषमं पृथु ॥' इति ॥

मम वर्णो मणिनिभो मृदून्यंगरुहाणि च ।
प्रतिष्ठितां द्वादशभिर्मामूचुः शुभलक्षणाम् ॥

अत्र पादतलद्वयं तद्दशांगुळयश्च यस्याः समतलं तिष्ठति सा द्वादशभिः प्रतिष्ठितेत्युक्तम् । तथा च **सामुद्रिके**— ' यस्याः समतलौ पादौ समहीनांगुळी क्रमात् । सर्वं प्रतिष्ठितं भूमौ सा नारी सुखमेधते ॥ ' इति ॥

समग्रयवमच्छिद्रं पाणिपादं च वर्णवत् ।
मन्दस्मितेत्येव च मां कन्यालक्षणिनो विदुः ॥

समग्रयवाकृतिरेखायुक्तत्वमच्छिद्रांगुलियुक्तत्वादिकमुत्तमस्त्रीणां लक्षणमुक्तम् । तथा च **सामुद्रिके**— 'शंखपद्मयवच्छत्रमालामत्स्यध्वजादयः । पाणिपादे भवन्त्येव राज्ञां तद्योषितां तथा ॥ ' इति । **स्कान्देऽपि**—' मृदु मध्योन्नतं रक्तं तलं पाण्योररन्ध्रकम् ।' इति । **वाहटेऽपि**— ' तनुरक्तोन्नतनखं स्निग्धमाताम्रमांसलम् । दीर्घाच्छिद्राङ्गुलि महत्पाणिपादं प्रतिष्ठितम् ॥ ' इति। मन्दस्मितत्वं च **स्कान्दे**— 'अलक्षितद्विजं किंचित्किंचित्फुल्लकपोलकम् । स्मितं प्रशस्तं सुदृशामनिमीलितलोचनम् ॥ ' इत्युत्तमस्त्रीलक्षणान्युक्तानि ॥

इत्थमुत्तमस्त्रीलक्षणयुक्तत्वादेव सीता कफप्रकृतिर्देवसत्वा च भवति । तथा च प्राचीनाः— ' सुस्निग्धदन्तनखलोचनपद्मभ्रु-

म्मा मानोन्नता प्रियतमे सुदृढानुरागा । श्यामाथ शीतमृदुमांसलगुप्तगात्रा प्रोक्ता कफप्रकृतिरेव वरा पुरन्ध्री ॥ प्रसन्नवक्त्राम्बुजसौरभाङ्गी सन्तोषयुक्ता शुचिकर्मदक्षा । प्रियंवदा भूरिधना जनाढ्या नारीयमुक्ता खलु देवसत्वा ॥ ' इति ॥

रेखालक्षणान्यपि सामुद्रिके— ' रेखाभिरंगुष्ठतलेंगनानां पुंस्त्रीप्रसूतिर्विपुलाल्पिकाभिः । अच्छिन्नभिन्नाभिरखण्डमायुः खंडं तदन्याभिरमूभिरस्याः ॥ एका तिर्यक् तर्जनीं याति रेखा तर्जन्यंगुष्ठान्तरालं तदन्या । ते द्वे स्यातामायुरैश्वर्यरेखे तत्सौन्दर्ये सुन्दरत्वं तदा स्यात ॥ ' इति ॥

इत्थमन्यत्रापि सीतायाः मृदुभाषणं मनस औन्नत्यं नयनानन्दकरावयवयुक्तता पापपराङ्मुखबुद्धित्वं चेति प्रतिपादितानि लक्षणानि तत्र तत्र । अर्चितवचनवत्त्वं चात्रैव काण्डे— ' युक्तरूपं त्वया देवि भाषितं प्रियदर्शने । सदृशं स्त्रीस्वभावस्य साध्वीनां विनयस्य च ॥' इति । तथा मनस औन्नत्यमपि—'उवाचात्महितं वाक्यं वृत्तशौण्डीर्यगर्वितम । राक्षसाधम रामस्य भार्याममिततेजसः ॥ उक्तवानसि यत्पापं क गतस्तस्य मोक्ष्यसे । यथा हस्ती मातंगः शशश्च सहितौ वने ॥ तथा द्विरदवद्रामस्त्वं नीच शशवत्स्मृतः ।' इति ॥ दर्शनीयावयवसंस्थानवत्त्वमपि—'त्वां कृत्वोपरतो मन्ये रूपकर्ता स विश्वकृत । न हि रूपोपमाप्यन्या तवास्ति शुभदर्शने ॥ यद्यत्पश्यामि ते गात्रं शीतांशुसदृशानने । तस्मिंस्तस्मिन् पृथुश्रोणि चक्षुर्मम निबध्यते ॥ ' इति ॥

पापपराङ्मुखत्वमपि— ' यदिदं लोकविद्विष्टमुदाहरथ सं-

गताः । नैतन्मनसि वाक्यं मे किल्बिषं प्रतिभाति च ॥ न मानुषी राक्षसस्य भार्या भवितुमर्हति । कामं खादत मां सर्वा न करिष्यामि वो वचः ॥' इति । युद्धकाण्डेऽपि—' आज्ञप्ता रावणेनैता राक्षस्यो मामतर्जयन् । हते तस्मिन्न कुर्युर्हि तर्जनं वानरोत्तम ॥ न परः पापमादत्ते परेषां पापकर्मणाम् । समयो रक्षितव्यो हि सन्तश्चारित्रभूषणाः ॥ युक्ता रामस्य भवती धर्मपत्नी यशस्विनी ।' इति । एतेषां च उत्तमस्त्रीलक्षणत्वं सामुद्रिके—' अर्चितं वचनमुन्नतं मनो निर्विशेषसुखदं दृशां वपुः । अस्ति चेदपराङ्मुखी मतिर्लक्षणैः किमपरैर्नृयोषिताम् ॥' इति ॥

सा वीतशोका व्यपनीततन्द्री
शान्तज्वरा हर्षविवृद्धसत्वा ।
अशोभतार्या वदनेन शुक्ले
शीतांशुना रात्रिरिवोदितेन ॥

अनेन मुखप्रसादो मनःप्रसादश्च शुभसूचक इत्युक्तम् । तथा च ज्योतिर्निबन्धे—'निमित्तराशिरेकतो नृणां मनस्त्वथैकतः' इति ॥

इति एकोनत्रिंशः सर्गः ।

---

## अथ त्रिंशः सर्गः ॥

**त्रिंशे**— ततो हनूमान् निशाचरीगणसंतर्जनेनातिदीनायाः सीतायास्त्रिजटाकृतं समाश्वासनं निशम्य स्वयमपि तत्कालोचितमित्थमचिन्तयत् ॥

अनेन रात्रिशेषेण यदि नाश्वास्यते मया ।
सर्वथा नात्र सन्देहः परित्यक्ष्यति जीवितम् ॥

अनेन स्वामिकार्यहानिप्रसक्तौ तत्कालोचितं कर्म कर्तव्यमिति सूचितम् । तथा च हरिवंशे कृष्णं प्रति नारदप्रेषणावसरे इन्द्रः—'यथा यथा वा तत्कार्यं न विपद्येत कर्हिचित् । तथा तथा त्वया कार्यं मनसः प्रीतिमिच्छता ॥' इति । तत्रैव स्थलान्तरे दूतान् हंसान्प्रति इन्द्रः— 'एतत्सर्वं च कर्तव्यमन्यच्च स्वयमेव हि । प्राप्तकालं विधातव्यमस्माकं हितकाम्यया ॥' इति ॥

सीतासन्देशरहितं मामितस्त्वरया गतम् ।
निर्दहेदपि काकुत्स्थः क्रुद्धस्तीव्रेण चक्षुषा ॥

अनेन यस्मिन्कार्ये नियुक्तस्तत्कार्यं न कृतं चेत्प्रभोः कोपो भविष्यतीत्युक्तम् । तथा च हरिवंशे दूतान्प्रति शक्रवचनम्— 'अकुर्वतां दैवताज्ञामुग्रो दण्डः पतेदथ ।' इति ॥

चारेण तु सुयुक्तेन शत्रोः शक्तिमवेक्षता ।
गूढेन चरता तावदवेक्षितमिदं मया ॥
राक्षसाधिपतेरस्य प्रभावो रावणस्य च ।

अनेन शत्रोः स्थितिः तद्बलं च सुयुक्तेन गूढचारेण विचारणीयमिति सूचितम् । तथा च कामन्दके— 'सारवत्तां च राष्ट्रस्य दुष्कृतं द्दाप्तिमेव च । छिद्रं शत्रोर्विजानीयात्कोशमित्रबलानि च ॥' इति ॥

यदि चेद्योधयिष्यामि हर्तारं रामकारणात् ।
व्यर्थमागमनं तस्य ससैन्यस्य भविष्यति ॥

अनेन दूतस्य मुख्यशत्रुहननपूर्वकं कृत्स्नकार्यनिर्वहणमधर्म इति सूचितम् । तथा चोद्योगे भगवद्याने विदुरवाक्ये शक्तेनापि दूतेन कृत्स्नकार्यनिर्वहणमयुक्तमिति प्रतिपादितम्—'अयमिच्छन् हि तान्सर्वान् युध्यमानान् जनार्दनः । सिंहो मृगानिव क्रुद्धो गमयेद्यमसादनम् ॥ न त्वयं निन्दितं कर्म कुर्यात् कृष्णः कथंचन । न च धर्मादतिक्रामेदच्युतः पुरुषोत्तमः ॥' इति । भगवानपि—'एतान् हि सर्वान् सरथान् निहन्तुमहमुत्सहे । न त्वहं निन्दितं कर्म कुर्यां पापं कथंचन ॥ अद्यैव ह्यहमेतांश्च ये चैताननु भारत । निगृह्य राज्यं पार्थेभ्यो दद्यां किं दुष्करं भवेत् । इदं नाहं प्रवर्तेय निन्दितं कर्म पार्थिव ॥' इति ॥

असत्यानि च युद्धानि संशयो मे न रोचते ।
कश्च निःसंशयं कार्यं प्राज्ञः कुर्यात्ससंशयम् ॥

अनेन निःसंदिग्धतया कार्यसाधनसंभवे संशयिते मार्गे न प्रवर्तितव्यमिति सूचितम् । तथा च कामन्दकः— 'निष्फलं क्लेशबहुलं संदिग्धफलमेव च । न कर्म कुर्यान्मतिमान्सदा वैरानुबन्धि च ॥' इति ॥

भूताश्चार्था विपद्यन्ते देशकालविरोधिताः ।
विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥
अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते ।
यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने ॥

घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ।

अनेन समर्थः कार्यसाधकः असमर्थः कार्यनाशक इत्युक्तम् । अत एव समर्थस्यैव दूतस्य प्रेषणं कर्तव्यम्, नासमर्थस्येत्युक्तं राजधर्मे—'मूढमैन्द्रियकं लुब्धं नार्यकारिणं शठम् । अनतीतो पथं(?) हिंस्रं दुर्बुद्धिमबहुश्रुतम् ॥ त्यक्तोपात्तं मद्यहितं द्यूतस्त्रीमृगयापरम् । कार्ये महति युञ्जानो हीयते स नृपः श्रिया ॥ अप्रकीर्णेन्द्रियं प्राज्ञमत्यन्तानुगतं शुचिम् । शक्तं चैवानुरक्तं च युंज्यान्महति कर्मणि ॥ एवमेतैर्गुणैर्युक्तो योऽनुरज्यति भूमिपम् । भर्तुरर्थेष्वसंतप्तं नियुंज्याद्धर्मकर्माणि ॥' इति ॥

न विनश्येत्कथं कार्यं वैक्लव्यं न कथं भवेत् ।
लंघनं च समुद्रस्य कथं नु न वृथा भवेत् ॥
कथं नु खलु वाक्यं मे शृणुयान्नोद्विजेत वा ।
इति संचिन्त्य हनूमांश्चकार मतिमान् मतिम् ॥
इक्ष्वाकूणां वरिष्ठस्य रामस्य विदितात्मनः ।
शुभानि धर्मयुक्तानि वचनानि समर्थयन् ॥
श्रावयिष्यामि सर्वाणि मधुरां प्रब्रुवन् गिरम् ।
श्रद्धास्यति यथा हीयं तथा सर्वं समादधे ॥

अनेन कर्मणां परिपाकं गुणदोषादिकं च विचार्य कार्यसिद्धिकरं कर्मारभेतेति सूचितम् । तथा चोद्योगे विदुरः—'वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु । परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥ अनुबन्धानवेक्षेत सानुबन्धेषु कर्मसु । संप्रधार्य च कुर्वीत न वेगेन समाचरेत् ॥ अनुबन्धं च संप्रेक्ष्य

विपाकं चैव कर्मणाम् । उत्थानमात्मनश्चैव धीरः कुर्वीत मानव ॥' इति ॥

हरिवंशे इन्द्रं प्रति नारदः— 'हितानुबन्धसहितं कार्यं ज्ञेयं सुरेश्वर। विपरीतं च तद्बुद्ध्वा नित्यं बुद्धिमतां वर ॥ यत्स्यात्तापकरं पश्चादारब्धं कार्यमीदृशम् । आरभेन्नैव तज्ज्ञ्यादेष बुद्धिमतां नयः ॥' इति । अयमभिप्रायः— अनुकूलफलजनकं कर्म कर्तव्यत्वेन जानीयात् । प्रतिकूलं पश्चात्तापकरत्वान्नारभेत । आरब्धमपि त्यजेत् । [तथा चोक्तं] 'सहसैव तु कार्याणामारम्भो न प्रशस्यते ।' इति । प्राचीना अपि— 'उचितमनुचितं वा कुर्वता कार्यजातं परिणतिरवधार्या यत्नतः पण्डितेन । अतिरभसकृतानां कर्मणामा विपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥' इति । 'सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥' इति च ॥ कामन्दकेऽपि— 'तस्मिन् कर्मणि सज्येत तदात्वे कटुकेऽपि च । बुद्ध्वैवोपक्रमः श्रेयान् फलनिष्पत्तये सदा ॥' इति ॥

इति त्रिंशः सर्गः ।

---

## अथ एकत्रिंशद्द्वात्रिंशौ सर्गौ ॥

एकत्रिंशद्द्वात्रिंशयोः— ततो जनकनन्दिनीप्रत्ययोत्पादनाय

राजा दशरथो नाम रथकुञ्जरवाजिमान् ।
पुण्यशीलो महाकीर्तिर्ऋजुरासीन्महायशाः ॥

तस्य पुत्रः प्रियो ज्येष्ठस्ताराधिपनिभाननः ।
रामो नाम विशेषज्ञः श्रेष्ठः सर्वधनुष्मताम् ॥

रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ।
रक्षिता जीवलोकस्य धर्मस्य च परंतपः ॥

सोऽयं पितृवचनपरिपालनाय सानुजः सभार्यो वनं प्रविवेश । ततो मुनिसंत्राणाय खरदूषणप्रमुखान्निशाचरान् निषूदयतो रामभद्रस्य भार्या राक्षसेन मायाविनापहृतासीत् । ततो रामभद्रस्ततस्ततः सीतां विचिन्वन् तदलाभजनितक्लेशेन दूयमानमानसो मित्रं सुग्रीवं संप्राप्य तद्भ्रातुर्वालिनो वधम्, तस्य राज्याभिषेकं च विधाय सीतागवेषणाय वानरान् सर्वतः प्रस्थापयामास । अहमपि दाक्षिणस्यां दिशि गवेषणीयान् देशानाखिलानपि सम्यगवलोक्यालब्धसीतावृत्तान्तः संपातिवचनेन रावणनिलयं लंकामेकाकितया प्रविष्टोऽस्मि । सेयं क्लिष्टवसनाभरणा चारित्रभूषणसमलंकृता क्रूराभी राक्षसीभिस्तर्जिता च राममेव मनसा ध्यायन्ती जनकतनया शिंशुपामूले मया दृष्टेत्येतावदुक्त्वा विरराम ॥

ततस्तथा वदन्तं हनूमन्तं वानररूपमवलोक्य चकितहृदया जनकतनया चिन्तामेवं ततान—

स्वप्ने मयायं विकृतोऽद्य दृष्टः
शाखामृगः शास्त्रगणैर्निषिद्धः ।
स्वस्त्यस्तु रामाय सलक्ष्मणाय
तथा पितुर्मे जनकस्य राज्ञः ॥

अत्र स्वप्ने वानरदर्शनमनिष्टसूचकमित्युक्तम् । तथा च ऐतरेयके—'न चिरमिव जीविष्यति' इत्युपक्रम्य 'इति प्रत्यक्ष-दर्शनानि। अथ स्वप्नः—पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति, वराह एनं हन्ति, मर्कट एनमास्कन्दयति' इति। स्वप्नाध्यायेऽपि 'अभिधावन्ति यं स्वप्ने शृंगिणो दंष्ट्रिणोऽपि वा । वानरो वा वराहो वा भवेद्राजकुलाद्भयम् ॥ इति ॥

**स्वप्नो न चायं न हि मेऽस्ति निद्रा**
**शोकेन दुःखेन च पीडितायाः ।**
**सुखं हि मे नास्ति यतोऽस्मि हीना**
**तेनेन्दुपूर्णप्रतिमाननेन ॥**

अनेन दुःखहेतौ सति निद्रा न भवतीति सूचितम् । तथा च उद्योगे विदुरः—'अभियुक्तं बलवता दुर्बलं हीनसाधनम् । हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥' इति ॥

**रामेति रामेति विचिन्त्य बुद्ध्या**
**सदैव वाचा ब्रुवती तमेव ।**
**तस्यानुरूपां च कथां तमर्थं**
**तमेव पश्यामि तथा शृणोमि ॥**

अनेन वस्तुनो निरन्तरचिन्तासंततिरूपं परिभावनं तत्साक्षात्कारहेतुरित्युक्तम् । तत्र (विष्णुकृत)कामिनीपरिभावनेन कामिनी-साक्षात्कारस्य, निदिध्यासनात्मकस्वरूपानुसन्धानेनात्मसाक्षात्कारस्य, गान्धर्वशास्त्रपरिभावनेन षड्जादिसाक्षात्कारस्य च दर्शनात्सिद्धम् ॥

मनोरथः स्यादिति चिन्तयामि
तथैव बुद्ध्या च वितर्कयामि ।
किं कारणं तस्य हि नास्ति रूपं
सुव्यक्तरूपश्च वदत्ययं माम् ॥

नमोऽस्तु वाचस्पतये सवज्रिणे
स्वयंभुवे चैव हुताशनाय च ।
अनेन चोक्तं यदिदं ममाग्रतो
वनौकसा तत्तु तथास्तु नान्यथा ॥

अनेन दुर्भाषणवर्जनपूर्वकं सर्वदा शुभमेव भाषेतेति सूचितम् । तथा च गौतमः—'अधेनुं धेनुभव्येति ब्रूयात् अभद्रं भद्रमिति' इति । आनुशासनिकेऽपि— 'परिवादं न च ब्रूयात्परेषामात्मनस्तथा । अकुत्सयन्स्वमात्मानं प्रार्थयेच्छुभमन्वहम् ॥' इति ॥

इति एकत्रिंशद्द्वात्रिंशौ सर्गौ ।

---

## अथ त्रयस्त्रिंशः सर्गः ॥

त्रयस्त्रिंशे—इति बहुधा चिन्तयन्तीं सीतां मारुतिस्तरुशिखराद्वतीर्य इत्थमपृच्छत्—

का नु पद्मपलाशाक्षि क्लिष्टकौशेयवासिनि ।
किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम् ॥

रोदनादतिनिःश्वासाद्भूमिसंस्पर्शनादपि ।
न त्वां देवीमहं मन्ये राज्ञः संज्ञावधारणात् ॥

अनेनामर्त्यानां भूस्पर्शादिकं नास्तीत्युक्तम् । तथा च वनपर्वणि—'साऽपश्यद्विबुधान्सर्वानस्वेदांस्तब्धलोचनान् । हृषितस्रग्रजोहीनान् स्थितानस्पृशतः क्षितिम् ॥' इति ॥

पृष्टवन्तं हनूमन्तं स्ववृत्तान्तमभिधाय—

**दद्यान्न प्रतिगृह्णीयान्न ब्रूयात्किंचिदप्रियम् ।**
**अपि जीवितहेतोर्वा रामः सत्यपराक्रमः ॥**

अनेन महापुरुषाणामापद्यपि दानप्रियवचनादिकं स्वभाव इत्युक्तम् । तथा चोद्योगे विदुरः—'स्वर्गच्युतानामिह जीवलोके चत्वारि चिह्नानि भवन्ति राजन् । दानप्रसंगो मधुरा च वाणी देवार्चनं ब्राह्मणतर्पणं च ॥' इति । तादृशस्य रामभद्रस्य भार्यां मां दुरात्मा रावणो हृतवान् ॥

इति त्रयस्त्रिंशः सर्गः ।

---

## अथ चतुस्त्रिंशः सर्गः ॥

**चतुस्त्रिंशे**—ततो हनुमान् रामनिदेशात् समागतं दूतं मां विद्धि ।

**यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः ।**
**स त्वां दाशरथी रामो देवि कौशलमब्रवीत् ॥**

तदनु च सुमित्रापुत्रोऽपि शिरसा प्रणम्य तवाभिवादनमकरोदित्यब्रवीत् । इत्थं कुशलं वदतो हनुमतो निशम्य वचनमानन्दकंदळतरंगीतापांगी प्रीतिसंहृष्टसर्वांगी इत्थमचिन्तयत्—

**कल्याणी बत गाथेयं लौकिकी प्रतिभाति मा ।**
**एति जीवन्तमानन्दो नरं वर्षशतादपि ॥**

अनेन बह्वीष्वप्यापत्सु आत्मानं संरक्ष्य स्थितस्य सुखं पुण्यं च कदाचिद्भविष्यतीति सूचितम् । तथा **चापद्धर्मे** विश्वामित्रः— ‘सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् । एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत् । जीवन्पुण्यमवाप्नोति पुरुषो भद्रमश्नुते ॥’ इति ॥

ततः संभाषणाय समीपमुपसर्पन्तं हनूमन्तं रावणं निश्चित्य जनस्थाने कपटकाषायपटवेषेण मामभिभूतवतो भूयोऽपि मम मनसः सन्तापोत्पादनं न शोभनमिति वदन्तीं भयमोहितां सीताम्-

**अवन्दत महाबाहुस्ततस्तां जनकात्मजाम् ।**
अथ, कृतप्रणामे मारुतौ किमिदानीमुद्भूतं चित्ते—

**किन्नु स्याच्चित्तमोहोऽयं भवेद्वातगतिस्त्वियम् ।**
**उन्मादजो विकारो वा स्यादियं मृगतृष्णिका ॥**

अयं वानरकथितः प्रियतमकथावगमः चित्तमोहप्रयुक्तः वातवैषम्यप्रयुक्तो वा चित्तोन्मादजनितविकार एव वा देशकाल-विशेषकृतमरुमरीच्यादिभ्रमतुल्यो वा । तत्र चित्तमोहो गान्धार्यादिमदकरद्रव्यभक्षणाद्भवति । तथा च **बाहटे**—‘गान्धारी कफवातघ्नी स्वादुतिक्तकषायका । दीपिनी गुल्मशूलघ्नी चित्त-विभ्रमकारिणी ॥’ इति । वातगतेर्भ्रमहेतुत्वं **बाहटे**— ‘वृद्धस्तु कुरुतेऽनिलः । कार्श्यकार्ष्ण्योष्णकामित्वकंपानाहशकृद्ग्रहान् । बल-

निद्रेन्द्रियभ्रंशप्रलापभ्रमदीनताः ॥' इति । विकृतो वायुः कार्श्यादिकं करोति । उष्णकामित्वमुष्णे प्रीतिकारित्वम् । शकृद्ग्रहो मलबन्धः। आनाहः आध्मानम्। उन्मादो धातुवैषम्यकृतो मनसो विकारः । तदुक्तम्—'उन्मादो नाम मनसो दोषैरुन्मार्गगैर्मदः । शारीरमानसैर्दुष्टैरहितादन्नपानतः । विकृतासात्म्य(?)समलाद्विषमादुपयोगतः॥ विषण्णस्याल्पसत्त्वस्य व्याधिवेगसमुद्भवात् । क्षीणस्य चेष्टावैषम्यात्पूज्यपूजाव्यतिक्रमात् । आधिभिश्चित्तविभ्रंशा द्विषेणोपविषेण च । एभिर्विहीनसत्वस्य हृदि दोषाः प्रदूषिताः। धियो विधाय कालुष्यं हत्वा मार्गान्मनोवहान् ॥ उन्मादं कुर्वते तेन धीविज्ञानस्मृतिभ्रमात् । देही दुःखसुखभ्रष्टो भ्रष्टसारथिवद्रथः ॥ भ्रमत्यचिन्तितारम्भः' इति । देशकालकरणविषयदोषप्रयुक्ता मरुमरीच्यादिभ्रमाः लोकप्रसिद्धाः ॥

**अथवा नायमुन्मादो मोहोऽप्युन्मादलक्षणः ।**
**संबुध्ये चाहमात्मानमिमं चापि वनौकसम् ॥**

मोहोन्मादयोर्विवेकहानिकरत्वात् स्वपरविवेकस्य विद्यमानत्वात् स्वपरविवेकहानिकरो मोह उन्मादो वा न भवत्येव । इत्थमतर्कितरामसन्देशश्रवणेऽपि विचार्य निश्चयकरणादतर्कितोपनते इष्टतमेऽपि पदार्थे लोभात् झटिति न प्रवर्तितव्यम्, किं तु विचारयितव्यमिति सूचितम् । तच्च प्रागुक्तम् ॥

**नाहं स्वप्नमिमं मन्ये स्वप्ने दृष्ट्वा हि वानरम् ।**
**न शक्योऽभ्युदयः प्राप्तुं प्राप्तश्चाभ्युदयो मम ॥**

अथवा नैतदेवं हि यन्मया परिशङ्कितम् ।
मनसो हि मम प्रीतिरुत्पन्ना तव दर्शनात् ।

अनेन महतां संशयितेऽर्थे मनःप्रसाद एव प्रमाणमिति सूचितम् । तथा च **कालिदासः**—'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ।' इति ॥

सर्वथा कामरूपी निशाचर एवायमसंभाष्य इति मत्वा तूष्णींभूतां सीतामभिज्ञाय तां हर्षयन् हनूमानेवमुवाच—

अहं सुग्रीवसचिवो हनूमान्नाम वानरः ।
प्रविष्टो नगरीं लंकां लंघयित्वा महोदधिम् ॥
कृत्वा मूर्ध्नि पदन्यासं रावणस्य दुरात्मनः ।
त्वां द्रष्टुमुपयातोऽहं समाश्रित्य पराक्रमम् ॥
नाहमस्मि तथा देवि यथा मामवगच्छसि ।
विशंका त्यज्यतामेषा श्रद्धत्स्व वदतो मम ॥

अत्र च हनूमता सीतासन्दर्शनानन्तरं रामवंशसंकीर्तनपूर्वकं सीतां समाश्वास्यैव रामदूतोऽहमागत इति कथनादपरिचितेन हठात् कार्यं न निवेदनीयम् , किं तु आख्यानकथनादिभिः स्वस्मिन्विश्वासमुत्पाद्य स्वागमनकार्यं निवेदनीयमिति सूचितम् । अत एव **हरिवंशे** इन्द्रेण प्रेषिता हंसी वज्रनाभसुतां प्रभावतीं विस्रंभयित्वैवागमनकार्यं निवेदयामासेति प्रतिपादितम्— 'विस्रम्भयित्वा तां सूक्तैराख्यानकशतैर्वराम् । त्रैलोक्यसुन्दरी वेद्मि त्वामहं हि प्रभावति ॥ रूपशीलगुणैर्देवि किंचित्त्वां वक्तुमुत्सहे ।' इति ॥

इति चतुस्त्रिंशः सर्गः ।

## अथ पंचत्रिंशः सर्गः ॥

पञ्चत्रिंशे—तदनु सीता—

क्व ते रामेण संसर्गः कथं जानासि लक्ष्मणम् ।
वानराणां नराणां च कथमासीत्समागमः ॥

यानि रामस्य लिंगानि लक्ष्मणस्य च वानर ।
तानि भूयस्समाचक्ष्व न मां शोकस्समाविशेत् ॥

कीदृशं तस्य संस्थानं रूपं रामस्य कीदृशम् ॥

इत्यपृच्छत् । अनेन संशयिते विषये सम्यक् पराभिप्रायं निश्चित्यैव स्वाभिप्रायो निवेदनीय इति सूचितम् । अत एव नलोपाख्याने दमयन्ती केशिनीमुखेन स्वयं च नलं सम्यग्विचार्यैव स्वाभिप्राय-मुक्तवतीति प्रतिपादितम् ॥ दमयन्ती—'गच्छ केशिनि भूयस्त्वं परीक्षां कुरु बाहुके । अब्रुवाणा समीपस्था चरितान्यस्य लक्षय ॥ दमयन्त्यैवमुक्ता सा जगामाशु सुकेशिनी । निशाम्य च यथान्यायं दमयन्त्यै न्यवेदयत् ॥ दमयन्त्यपि तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितम् । अमन्यत नलं प्राप्तं कर्मचेष्टाभिसूचितम् ॥ सा वै पित्राभ्यनुज्ञाता मात्रा च भरतर्षभ । नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ॥ इति ॥

ततो हनूमान्—

यानि रामस्य चिह्नानि लक्ष्मणस्य च यानि वै ।
लक्षितानि विशालाक्षि वदतः शृणु तानि मे ॥

रामः कमलपत्राक्षः सर्वभूतमनोहरः ।
रूपदाक्षिण्यसंपन्नः प्रसूतो जनकात्मजे ॥

तेजसादित्यसंकाशः क्षमया पृथिवीसमः ।
रक्षिता जीवलोकस्य स्वजनस्य च रक्षिता ।
रक्षिता स्वस्य वृत्तस्य धर्मस्य च परंतपः ॥

रामो भामिनि लोकेऽस्मिन् चातुर्वर्ण्यस्य रक्षिता ।
मर्यादानां च लोकस्य कर्ता कारयिता च सः ॥

अर्चिष्मानर्चितो नित्यं ब्रह्मचर्यव्रते स्थितः ।
साधूनामुपकारज्ञः प्रकारज्ञश्चैव कर्मणाम् ॥

राजविद्याविनीतश्च ब्राह्मणानामुपासिता ।
श्रुतवान् शीलसंपन्नो विनीतश्च परंतपः ॥

यजुर्वेदविनीतश्च वेदविद्भिस्सुपूजितः ।
धनुर्वेदे च वेदे च वेदाङ्गेषु च निष्ठितः ॥

विपुलांसो महाबाहुः कंबुग्रीवः शुभाननः ।
गूढजत्रुः सुताम्राक्षो देवि रामो जनैः श्रुतः ॥

दुन्दुभिस्वननिर्घोषः स्निग्धवर्णः प्रतापवान् ।
समस्समविभक्ताङ्गो वर्णं श्यामं समाश्रितः ॥

त्रिस्थिरस्त्रिप्रलम्बश्च त्रिसमस्त्रिषु चोन्नतः ।
त्रिताम्रस्त्रिषु च स्निग्धो गम्भीरास्त्रिषु नित्यशः ॥

त्रिवलीमांस्त्र्यवनतश्चतुर्व्यंगस्त्रिशीर्षवान् ।

चतुष्कळश्चतुर्लेखश्चतुष्किष्कुश्चतुस्समः ॥

चतुर्दशसमद्वन्द्वश्चतुर्दंष्ट्रश्चतुर्गतिः ।
महोष्ठहनुनासश्च पञ्चस्निग्धोऽष्टवंशवान् ॥

दशपद्मो दशबृहत्त्रिभिर्व्याप्तो द्विशुक्लवान् ।
षडुन्नतो नवतनुस्त्रिभिर्व्याप्नोति राघवः ॥

सत्यधर्मरतः श्रीमान् संग्रहानुग्रहे रतः ।
देशकालविभागज्ञः सर्वलोकप्रियंवदः ॥

अस्यार्थः— त्रिस्थिरः । [ त्रयः ] उरोमणिबन्धमुष्टयः । तथा च सामुद्रे— 'उरश्च मणिबन्धश्च मुष्टिश्च नृपतेः स्थिराः ।' इति । त्रिप्रलम्बः—[ त्रीणि ] भ्रूबाहुमुष्काणि । तदपि तत्रैव— 'दीर्घभ्रूबाहुमुष्कस्तु चिरजीवी धनी नरः ।' इति । ब्रह्मपुराणेऽपि— 'त्रयश्च यस्य स धनी लम्बा भ्रूमुष्कबाहवः ।' इति । त्रिषु समः— [ तानि ] केशाग्रवृषणजानूनि । तदपि तत्रैव— 'केशाग्रं वृषणं जानु समं यस्य स भूपतिः ।' इति । त्रिषु चोन्नतः । तानि च कुक्षिनाभिपरिमण्डलवक्षांसि । तदुक्तम्— 'नाभ्यन्तकुक्षिवक्षोभिरुन्नतैः क्षितिपो भवेत् ।' इति । वराहमिहिराचार्यास्तु 'उन्नतकुक्षिः क्षितिपः परिमण्डलोन्नतनाभिः क्षितिपः । हृदयं न वेपनं पृथु समुन्नतं मांसलं च नृपतीनाम् ॥' इति । अन्यत्र तु— 'उरो ललाटं वदनं च पुंसां विस्तीर्णमेतत्त्रितयं प्रशस्तम् ।' इति ॥

त्रिताम्रः—'नेत्रान्तनखपाण्यग्रतलैस्ताम्रैस्त्रिभिः सुखी ।' इति ।

यद्वा, हस्तनखाः पादनखा हस्तपादतलरेखाश्च । तदुक्तं सामुद्रिके—'श्लिष्टांगुली ताम्रनखौ पार्ष्णी पादौ करावपि । सुरक्ते नखरेखे च प्रशस्येते हि भूभुजः ॥' इति । रेखाश्च सामुद्रिके—'यवोऽगुंष्ठादरे यस्य स यशस्वी नरो भवेत् । अनामिक्यां मूलजाता रेखा यस्य स पुण्यवान् ॥ शंखपद्मयवच्छत्रमालामत्स्यध्वजादयः । पादे पाणौ भवन्त्येव राज्ञां तद्योपितां तथा ॥ कनिष्ठिकामूलभवा गता या प्रदेशिनीमध्यमिकान्तरालम् । करोति रेखा परमायुषं तं प्रमाणहीनार्थेत ऊह्यमायुः ॥ मत्स्यः करतले यस्य स नरो बहुकोशवान् । भाग्यरेखा सुतीक्ष्णाग्रा शुभा छत्राकृतिस्तथा ॥ सरोजश्रीवृक्षध्वजगजतिमिस्तंभकलशस्रगादर्शच्छत्रांकुशकुलिशभृंगारगिरिभिः । रथाश्वश्रीवत्सव्यजनयवयूपप्रभृतिभिर्नरा नार्यो राज्यं दधति पद्पाणिप्रणयिभिः ॥' इति । त्रिषु स्निग्धः— [त्रयः] पादरेखालिंगमणिकेशाः । तदाहुः—'स्निग्धा भवन्ति वै येषां पादरेखाः शिरोरुहाः । तथा लिंगमणिस्तेषां महाभाग्यं विनिर्दिशेत् ॥' इति । त्रिषु गम्भीरः— स्वरसत्वनाभिषु । तथा च वररुचिः—'स्वरे सत्वे च नाभौ च गम्भीरस्त्रिषु शस्यते ।' इति । सामुद्रिकेऽपि— 'नाभिः स्वरस्सत्वमिति प्रशस्तं गम्भीरमेतत्त्रितयं नराणाम् ।' इति ॥

त्रिवलीवान्—उदरे वलित्रयवान्, कण्ठे वलित्रयवान् वा । कण्ठे वलित्रयवानित्यत्र स्कान्दे—'शस्ता ग्रीवा त्रिरेखांका त्वव्यक्तास्थिसुसंहता ।' इति । त्र्यवनतः । स्तनचूचुकपादरेखाः । तथा च वराहसंहितायाम्—'पीनोपचितनिमग्नैः क्षितिपतयश्चूचुकैः स्तनैः सुखिनः । स्निग्धानिमग्ना रेखा धनिनां तद्व्यत्ययेन निःस्वा-

नाम ॥' इति । चतुर्व्यंगः—चत्वारि व्यंगानि ह्रस्वानि यस्य सः चतुर्व्यंगः । तदाह वररुचिः—'ग्रीवा प्रजननं पृष्ठं ह्रस्वा जंघा च पूजिता ।' इति । अत्र ह्रस्वप्रजननादिकथनात् रामः शशमृगवृषहयाख्यपुरुषजातिषु उत्कृष्टशशजातिरिति सूचितम् । तल्लक्षणमुक्तं स्मरदीपिकायाम् — 'शशो मृगो वृषश्चैव चतुर्थस्तु हयस्तथा । कथयामि क्रमात्पुंसामेतज्जातिचतुष्टयम् ॥ स्त्र्यजितो गायनश्चैव नारीसक्तिपरः सुखी । षडंगुळशरीरश्च श्रीमांस्तु शशको मतः । अल्पायुर्धार्मिकश्चैव सत्यवादी प्रियंवदः । अष्टांगुळशरीरस्तु रूपयुक्तो मृगो मतः । उपकारपरो नित्यं स्त्रीवशः श्लेष्मलस्तथा । स्वदशांगुळमेढ्रस्तु मेदस्वी वृषभो मतः । लुब्धश्च कृपणश्चैव मिथ्यावादी च निर्भयः । द्वादशांगुळमेढ्रस्तु कुशलस्तु हयो मतः ॥' इति । त्रिशीर्षवान् —त्र्यावर्तयुक्तशीर्षवान् । आवर्तत्रयशीर्षवत्त्वं च राजचिह्नम् । तथा चोक्तम् —'आवर्तत्रयरुचिरं यस्य शिरः क्षितिभृतां भवेन्नाथः ।' इति । शरीरे आवर्तरोमवत्त्वमपि प्रशस्तम् । तदुक्तं सामुद्रिके – 'प्रदक्षिणावर्तशरीररोमा वृषस्वनः फेनिळमूत्ररेताः । नात्यल्पपार्ष्णिर्मनसा गभीरो धीरोद्धतारंभरुचिर्यशस्वी ॥' इति ॥

चतुष्कलः— चतस्रः कळाः चतुर्णां वेदानां व्यंजिकाः अंगुष्ठमूलगता रेखा यस्य स चतुष्कलः । अंगुष्ठमूलरेखानां वेदव्यंजकत्वमाह नन्दिकेश्वरः—'मूलेऽङ्गुष्ठस्य वेदानां चतस्रास्तिस्र एव वा । एका द्वे वा यथायोगं रेखा ज्ञेया द्विजन्मनाम् ॥' इति । चतुर्लेखः— ललाटे पादयोः पाण्योर्लेखाश्चतस्रो यस्य सः चतुर्लेखः । ललाटे रेखासंख्यानुगुण्येन आयुस्तारतम्यमाह

**कात्यायनः**—'ललाटे यस्य दृश्यन्ते चतुस्त्रिद्व्येकरेखिकाः। शतद्वयं शतं षष्टिस्तस्यायुर्विंशतिस्तथा ॥' इति। पादगतरेखाविशेषेण फलविशेषमाह **नारदः**—'यस्य पादतले चक्रध्वजशंखाङ्कुशोपमाः। रेखाः सम्यक् प्रकाशन्ते मनुजेन्द्रं तमादिशेत् ॥' इति। चतुष्किष्कुः—चत्वारः किष्कवः यस्य स चतुष्किष्कुः। चतुर्विंशत्यङ्गुलात्मको हस्तः किष्कुः। षण्णवत्यंगुलोत्सेध इत्यर्थः। तदुक्तं **ब्राह्मे**—'षण्णवत्यङ्गुलोत्सेधो यः पुमान् स दिवौकसः' इति। चतुःसमः—चत्वारः समा यस्य स चतुःसमः। ते च बाहुजानूरुगण्डाः। तदुक्तं **ब्रह्माण्डे**—'बाहुजानूरुगंडाश्च चत्वार्याहुः समानि च।' इति ॥

चतुर्दशसमद्वंद्वः—समद्वंद्वानि चोक्तानि **सामुद्रिके**—'भ्रुवौ नासापुटौ नेत्रे कर्णावोष्ठौ च चूचुके। कूर्परौ मणिबन्धौ च जानुनी वृषणौ कटी ॥ करौ पादौ स्फिचौ यस्य समा ज्ञेयस्स भूपतिः।' इति। प्रकारान्तरमपि **ब्राह्मे**—'कर्णाक्षिगण्डभ्रूनासं दन्तोष्ठं स्कन्धजत्रुणी। पादौ करौ स्तनावूरू स्फिचौ द्वंद्वाश्चतुर्दश। समाश्च यस्य विद्यन्ते क्रमेणोपचितिस्तथा ॥' इति। चतुर्दंष्ट्रः—दन्तपङ्क्तिद्वयेऽपि मध्यदन्तचतुष्कपार्श्वद्वयवर्तिदन्तचतुष्टयं दंष्ट्राशब्दार्थः। तत्प्रशंसा च **वराहमिहिरसंहितायाम्**—'स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः समाश्च शुभदाः।' इति। चतुर्गतिः चतुर्णां सिंहशार्दूलगजवृषभानां गतिरिव गतिर्यस्य सः। तथा च **बालकाण्डे**—'गजसिंहगती वीरौ शार्दूलवृषभोपमौ।' इति ॥

महोष्ठहनुनासश्च— अत्र ओष्ठादीनां महत्त्वं आरुण्यादि-

गुणवत्त्वेन मांसलत्वेन च। तदाहुः **संहिताकाराः**— 'बन्धुजीवकुसुमारुणाधरो मांसलो रुचिरबिम्बरूपधृक् । पूर्णमांसलहनुस्तु भूमिपस्तुंगतुण्डरुचिराकृतिस्तथा ॥' इति । तुण्डमिति [अत्र] नासिकोच्यते । नासिकाकृतिविशेषफलं **स्कान्दे** – 'समवृत्तपुटा नासा लघुच्छिद्रा शुभावहा ।' इति । पञ्चस्निग्धः— पञ्चसु स्निग्धः पञ्चस्निग्धः। तानि पञ्च स्निग्धानि उदाहृतानि **स्कान्दे**– 'स्निग्धानि पञ्च वाग्वक्त्रत्वग्लोमनखराणि च ।' इति । **वररुचिस्तु** – 'नेत्रस्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम् । त्वचः स्नेहेन शयनं पादस्नेहेन वाहनम् ॥' इति । 'स्निग्धनीलमृदुकुंचितास्तथा मूर्धजाः सुखकराः' इति **संहितायाम्। सामुद्रिके** तु–'स्निग्धेक्षणत्वङ्नखदन्तकेशाः' इति। अष्टवंशवान्–अष्टौ वंशा आयता यस्य सन्ति स अष्टवंशवान् । आयता अष्टावयवा इत्यर्थः। आयता अष्टावयवा उक्ताः **सामुद्रिके**—'पृष्ठवंशः शरीरं च हस्तपादांगुळी करौ। नासिका चक्षुषी कर्णौ प्रजनो यस्य चायताः ॥' इति । अत्र प्रजननस्यायतत्वमार्जवं न तु दैर्घ्यमिति। **ब्राह्मे तु**— 'बाहू च नळिकावूरू जंघे चेत्यष्टवंशवान् ।' नळिकावंगुळी । अंगुळीनामच्छिद्रत्वमपि लक्षणं **सामुद्रिके**— 'श्लिष्टान्यंगुळिमध्यानि द्रव्यसंचयहेतवे । तानि चेच्छिद्रयुक्तानि त्यागशीलकराणि च ॥' इति ॥

दशपद्मः— दश पद्माकारा अवयवा यस्य सः दशपद्मः । तानि दशपद्मान्युदाहृतानि **ब्राह्मे**— 'मुखनेत्रास्यजिह्वोष्ठताळुस्तननखाः करौ । पादौ च दश पद्मानि पद्माकाराणि यस्य च ॥' इति । दशबृहत् —तदपि **सामुद्रिके** – 'उरः शिरो ललाटं च

ग्रीवाबाहुंसनाभयः । पार्श्वपृष्ठस्वराश्चेति विशालास्ते सुखप्रदाः ॥' इति । ब्राह्मे तु—'शिरो ललाटश्रवणे ग्रीवा वक्षश्च हृत्तथा । उदरं पाणिपादौ च पृष्ठं दश बृहन्ति च ॥' इति । त्रिभिर्व्याप्तः—तत्त्रयं ब्राह्मे—'त्रिभिर्व्याप्तिश्च यस्य स्यात्तेजसा यशसा श्रिया ।' इति । द्विशुक्लवान—द्वौ शुक्लौ शुद्धौ मातृपितृवंशौ यस्य सः द्विशुक्लवान् । त्रिशुक्लवानिति पाठे तु कर्मतः पितृतो मातृतश्चेति ॥

षडुन्नतः—षट्सु अङ्गपून्नतः । तानि चांगानि उक्तानि वररुचिना—'कक्षः कुक्षिः वक्षः घ्राणस्कन्धललाटिकाः । सर्वभूतेषु निर्दिष्टा उन्नताङ्गाः शुभप्रदाः ॥' इति । सामुद्रिके तु-'वक्षोऽथ कक्षद्वयनासिका यं कृकाटिका चेति षडुन्नतानि ।' इति । नवतनुः—नवसु स्थानेषु तनुः सूक्ष्मः । तानि स्थानानि अंगुलिपर्वकेशरोमनखरदच्छेफश्मश्रुदृग्बुद्धयाख्यानि । तथा च सामुद्रिके—'सूक्ष्माण्यंगुलिपर्वाणि केशरोमनखत्वचः । शेफश्च येषां सूक्ष्माणि ते नरा दीर्घजीवनः ॥' इति । अन्यत्रापि—'अस्फुटिताग्रं सूक्ष्मं श्मश्रु शुभं मृदु च सन्ततं स्निग्धम् । सूक्ष्मदृक् सूक्ष्मबुद्धिश्च यो नरः स सुखी भवेत् ॥' इति । अन्यत्र तु—'सूक्ष्माणि पञ्च दशनांगुलिपर्वकेशाः साकं त्वचा कररुहाश्च न दुःखितानाम् ।' इति । त्रिभिर्व्याप्नोति धर्मार्थकामैः प्रातर्मध्याह्नसायंकालान् व्याप्नोति । यथाकालं त्रिवर्गानुष्ठातेत्यर्थः । त्रयाणां कालभेदेनानुष्ठानं ब्राह्मे—'धर्मार्थकामाः कालेषु त्रिषु यस्य स्वनुष्ठिताः '। इति । एतदभिप्रायेणैव गौतमसूत्रमपि—'न पूर्वाह्नमध्यन्दिनापराह्णानफलान् कुर्यात् ' इति ॥

कानिचिदङ्गानि स्त्रीपुरुषसाधारणान्युक्तानि सामुद्रिके- 'नेत्रान्तपादकरतालुनखरोष्ठजिह्वा रक्ता नखाश्च खलु सप्त सुखावहाः स्युः। अङ्गुष्ठांगुलौ या मणिबन्धमध्याद्रेखा गता पाणितले-ऽङ्गनानाम्। ऊर्ध्वं गता पाणितलेऽथ वामे पुंसोऽथवा राज्यसुखाय सा स्यात्॥ अंगुष्ठमूले प्रसवस्य रेखाः पुत्रा बृहत्यः प्रमदाश्च तन्व्यः। अच्छिन्नदीर्घाश्च चिरायुषश्च स्वल्पायुषश्छिन्नलघु-प्रमाणाः॥ कलत्रकान्तयोः सौख्यं जीविताख्यकनिष्ठयोः। मध्ये विचिन्तयेदक्षे वामहस्ते नरः स्त्रियः। अरेखं बहुरेखं वा येषां पाणितलं नृणाम्॥ ते स्युरल्पायुषो निःस्वा दुःखिता नात्र संशयः।' इति॥

इत्थं विशालवक्षस्त्वादिभिर्लक्षणैः रामः कफप्रकृतिरित्यपि सूचितम्। तथाहि—पुरुषास्त्रिविधाः, वातप्रकृतिकाः पित्त-प्रकृतिकाः श्लेष्मप्रकृतिकाश्चेति। तत्र वातप्रकृतिर्बाहटे—'प्रायोऽत एव पवनाध्युषिता मनुष्या दोषात्मकाः स्फुटितधूसरकेश-गात्राः। शीतद्विषश्चलधृतिस्मृतिबुद्धिचेष्टाः सौहार्ददृष्टिगतयोऽति-बहुप्रलापाः॥ अल्पवित्तकफजीवितनिद्राः सन्नसक्तचलझर्झरवाचः। नास्तिका बहुभुजः सविलासा गीतहास्यमृगयाकलिलोलाः॥ मधुराम्लकटुरसात्मिकाः कृशदीर्घाकृतयः सशब्दयाताः। न दृढा न जितेन्द्रिया न चार्या न च कान्तादयिता बहुप्रजा वा॥ नेत्राणि चैषां खरधूसराणि वृत्तान्यचारूणि मृतोपमानि। उन्मीलितानीव भवन्ति सुप्तौ शैलद्रुमांस्ते गगनं च यान्ति॥ अधन्या मत्सराध्माताः स्तेनाः प्रोद्धन्धपिण्डिकाः। श्वसृगालोष्ट्र-गृध्राखुकाकोलूकाश्च (?) वातकाः॥' इति॥

पित्तप्रकृतिश्च–'पित्तं वह्निर्वह्निजं वा यदि स्यात्पित्तोद्रिक्तस्तीव्रतृष्णाबुभुक्षः । गौरोष्णांगस्ताम्रहस्तांघ्रिवक्त्रः शूरो मानी पिंगकेशोऽल्परोमा ॥ दयितमाल्यविलेपनमण्डनः सुचरितश्रुतिराश्रितवत्सलः । विभवसाहसबुद्धिबलान्वितो भवति भीमगतिर्द्विषतामपि । मेधावी प्रशिथिलसन्धिबन्धमांसो नारीणामनभिमतोऽल्पशुक्रकामः । आवासः पलितनरंगनीलिकानां भुङ्क्तेऽन्नं मधुरकषायतिक्तशीतम् ॥ घर्मद्वेषी स्वेदनः पूतिगन्धी भूर्युच्चारक्रोधपानाशनेर्ष्यः । सुप्तः पश्येत्कर्णिकारान्पलाशान् दिग्दाहोल्काविद्युदर्कानलांश्च ॥ तनूनि पिंगानि चलानि चैषां तन्वल्पपक्ष्माणि हिमप्रियाणि । क्रोधेन मद्येन रवेश्च भासा रागं व्रजन्त्याशु विलोचनानि ॥ मध्यायुषो मध्यफलाः पण्डिताः क्लेशभीरवः । व्याघ्रर्क्षकपिमार्जारयक्षानूकाश्च पैत्तिकाः ॥' इति ॥

अथ श्लेष्मप्रकृतिलक्षणम् – 'श्लेष्मा सोमः श्लेष्मलस्तेन सौम्यो गूढश्लिष्टः श्लिष्टसंध्यास्थिमांसः । क्षुत्तृट्दुःखक्लेशघर्मैरतप्तो बुद्ध्या युक्तः सात्त्विकः सत्यसन्धः ॥ प्रियंगुदूर्वाशरकांडशस्त्रगोरोचनापद्मसमानवर्णः । प्रलंबबाहुः पृथुपीनवक्षा महाललाटो घननीलकेशः ॥ मृद्वंगः समसुविभक्तचारुवर्ष्मा बह्वोजोरतिरसशुक्रपुत्रभृत्यः । धर्मात्मा वदति न निष्ठुरं च जातु प्रच्छन्नं वहति दृढं चिरं च वैरम् ॥ समदद्विरदेन्द्रतुल्ययानो जलदाम्भोधिमृदंगतुल्यघोषः । स्मृतिमानभियोगवान्विनीतो न च बाल्येऽप्यतिरोदनो न लोलः ॥ तिक्तं कषायं कटुकोष्णरूक्षमल्पं स भुङ्क्ते बलवांस्तथापि । रक्तान्तसुस्निग्धविशालदीर्घसुव्यक्तशुक्लासितपक्ष्मलाक्षः ॥ अल्पव्याहारक्रोधपानाशनेर्ष्यः प्राज्यायु-

विंत्तो दीर्घदर्शी वदान्यः ॥ श्राद्धो गंभीरः स्थूललक्षः क्षमावानार्यो-ऽनिद्रालुर्दीर्घदर्शी कृतज्ञः । ऋजुर्विपश्चित्सुभगः सुलज्जो भक्तो गुरूणामिह सौहृदीयः । स्वप्ने सपत्नान् सविहंगमालान् तोयाशयान्पश्यति तोयदांश्च ॥ ब्रह्मरुद्रेन्द्रवरुणतार्क्ष्यहंसगजाधिपैः । श्लेष्मप्रकृतयस्तुल्यास्तथा सिंहाश्वगोवृषैः ॥' इति ॥

इत्थं कफप्रकृतेरुदाहृतानि सर्वाणि लक्षणानि रामे तिष्ठन्तीति रामायण एव तत्र तत्रावगम्यते । तथाहि—सौम्यत्वं बालकाण्डे —'सर्वलोकप्रियः साधुः' इति । अयोध्याकाण्डे—'क्षान्तः सान्त्वयिता श्लक्ष्णः', 'स तु नित्यं प्रशान्तात्मा मृदुपूर्वं प्रभाषते' इति च । 'गूढश्लिष्टः श्लिष्टसन्ध्यस्थिमांसः' इत्येतदपि बालकाण्डे— 'गूढजत्रुररिन्दमः' इति। सुन्दरकाण्डेऽपि—'गूढजत्रुः सुताम्राक्षो देवि रामो जनैः श्रुतः।' इति। 'क्षुत्तृड्दुःखक्लेशघर्मैरतप्तः' इत्येतच्च बालकाण्डे—'न श्रमो न ज्वरो वा ते न रूपस्य विपर्ययः । न क्षुत्पिपासे ते राम भविष्येते नरोत्तम ॥' इति । युद्धकाण्डेऽपि—'निहत्य तां राक्षसवाहिनीं तु रामस्तदा शक्रसमो महात्मा । अस्त्रेषु शस्त्रेषु जितक्लमश्च संस्तूयते देवगणैः प्रहृष्टः ॥' इति। बुद्ध्या युक्तत्वं च बालकाण्डे—'बुद्धिमान्नीतिमान् वाग्मी' इति । अयोध्याकाण्डेऽपि—'बुद्धिमान्मधुराभाषी' इति । सात्विकत्वं च किष्किन्धाकाण्डे—'कुलीनः सत्वसंपन्नस्तेजस्वी चरितव्रतः ।' इति । सत्यसन्धत्वं च अयोध्याकाण्डे—'धर्मज्ञः सत्यसन्धश्च' 'सत्यवादी च राघवः' इति। आरण्यकाण्डेऽपि—'अनृतं न हि रामस्य कदाचिदपि संमतम् ।' 'सत्यसन्धं महाबाहुमहं राममनुव्रता ।' इति ॥

'प्रियंगुदूर्वाशरकौण्डशङ्खगोरोचनापद्मसमानवर्णः' इत्ये-तच्चायोध्याकाण्डे— 'राममिन्दीवरश्यामम्' इति । सुन्दर-काण्डेऽपि — 'समः समविभक्ताङ्गो वर्णं श्यामं समाश्रितः ।' इति । प्रलम्बबाहुत्वं च बालकाण्डे— 'आजानुबाहुः सुशिराः' इति । अयोध्याकाण्डेऽपि— 'सिंहस्कन्धो महाभुजः' इति । आरण्य-काण्डेऽपि— 'आजानुबाहुं दीप्तास्यम्' इति । 'दीर्घबाहुर्विशालाक्षो दैवतं हि पतिर्मम ।' इति च । तत्रैवान्यत्र— 'रामो नाम वृषस्कन्धो वृत्तायतमहाभुजः ।' इति । पृथुपीनवक्षस्त्वं च बालकाण्डे— 'महो-रस्को महेष्वासः' 'पीनवक्षा विशालाक्षः' इति । महाललाटत्वं च बालकाण्डे— 'सुललाटः सुविक्रमः' इति । घननीलकेशत्वं चारण्यकाण्डे— 'सुकेशं श्यामूर्धजा' इति । मृदङ्गत्वं चारण्य-काण्डे— 'सुकुमारं महासत्वं पार्थिवव्यञ्जनान्वितम् ।' इति । समसुविभक्तचारुवर्ष्मत्वं च बालकाण्डे— 'समः सम-विभक्तांगः' इति । वह्नोजस्त्वं च आरण्यकाण्डे— 'रामो नाम महातेजाः' इति । 'शत्रुघ्नः प्रतापवान्' इति च । 'रामश्च हि महा-तेजा महासत्वो महाबलः ।' इति च । बहुरतिरसत्वं च युद्धकाण्डे 'कदा नु खलु बिंबोष्ठं तस्याः पद्ममिवाननम् । ईषदुन्नम्य पास्या-मि रसायनमिवातुरः ॥' इति । सुन्दरकाण्डेऽपि— 'नान्य-च्चिन्तयते देवि स तु कामवशं गतः ।' इति । उत्तरकाण्डेऽपि— 'कुशास्तरणसंवीते रामः सन्निषसाद ह । सीतां संगृह्य बाहुभ्यां मधु मैरेयमुत्तमम् ॥ पाययामास काकुत्स्थः शचीमिन्द्रो यथामृतम् । एवं रामो मुदा युक्तः सीतां सुरुचिराननाम् ॥ रमयामास वैदेहीमहन्यहनि देववत् ।' इति । अनिष्ठुरभाषित्वं च

अयोध्याकाण्डे — 'मृदुपूर्वं च भाषते। उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते।' इति च। धर्मात्मत्वं चायोध्याकाण्डे— 'सत्यधर्मपरायणः' 'साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह।' इति। 'ज्येष्ठः श्रेष्ठश्च धर्मात्मा दिलीपनहुषोपमः।' 'धर्मात्मा सत्यसन्धश्च' 'रामो विग्रहवान् धर्मः' इति च। दृढच्छिन्नवैरवत्त्वं चायोध्याकाण्डे—'हन्त्येष नियमाद्वध्यान् अवध्येषु न कुप्यति।' इति॥

मत्तगजगतिश्चायोध्याकाण्डे — 'दीर्घबाहुं महासत्वं मत्तमातंगगामिनम्।' इति। आरण्यकाण्डेऽपि—'गजविक्रान्तगमनं जटामण्डलधारिणम्।' इति। जलदाम्भोधिमृदङ्गतुल्यघोषत्वं च सुन्दरकाण्डे — 'दुन्दुभिस्वननिर्घोषः' इति। आरण्यकाण्डेऽपि—'सुस्वरं भैरवस्वरा' इति। स्मृतिमत्त्वं च बालकाण्डे—'स्मृतिमान् प्रतिभानवान्' इति। अभियोगवानिति। अभियोगोऽनुग्रहः सर्वजनरक्षणम्, 'विग्रहस्तु निरोधः स्यादभियोगस्त्वनुग्रहः' इत्यमरकोशात्। तद्वत्त्वं च बालकाण्डे — 'रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता। रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता॥' इति। विनीतत्वं च अयोध्याकाण्डे— 'वृद्धैरभिविनीतश्च' 'श्रुतवान् शीलसंपन्नो विनीतश्च परन्तपः।' इति। स्वल्पभोजनेऽपि बलवत्त्वं च सीतावियोगसमये स्वल्पाहारस्यापि रावणादिहननादिषु महाबलप्रतिपादनादवगम्यते। तत्र स्वल्पाहारत्वं सुन्दरकाण्डे—'वन्यं सुविहितं नित्यं भक्तमश्नाति पंचमम्।' 'तापसं नियताहारम्' इत्यादि। तदानीमपि महा-

बलवत्त्वं च—'पिशाचान् दानवान्यक्षान् पृथिव्यां ये च राक्षसाः। अंगुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर ॥' इति ॥

युद्धकाण्डे — 'गच्छानुजानामि रणार्दितस्त्वं प्रविश्य रात्रिंचरराज लंकाम्। आश्वास्य निर्याहि रथी च धन्वी तदा बलं द्रक्ष्यसि मे रथस्थः ॥' इति। 'स ददर्श ततो रामः शक्त्या भिन्नं महाहवे। लक्ष्मणं रुधिरादिग्धं सपन्नगमिवाचलम् ॥ तामपि प्रहितां शक्तिं रावणेन बलीयसा। यत्नतस्ते हरिश्रेष्ठा न शेकुरवमर्दितुम् ॥ तां कराभ्यां परामृश्य रामः शक्तिं भयावहाम्। बभञ्ज समरे क्रुद्धो बलवान्विचकर्ष च ॥' इति च ॥

विशालदीर्घनेत्रत्वं चायोध्याकाण्डे—'सुभ्रूरायतताम्राक्षः' 'पुण्डरीकविशालाक्षः', 'रक्ताक्षः प्रियदर्शनः' इत्यादि। प्राज्यायुश्च—'राज्यं दशसहस्राणि प्राप्य वर्षाणि राघवः' 'दश वर्षसहस्राणि दश वर्षशतानि च। भ्रातृभिः सहितः श्रीमान् रामो राज्यमकारयत् ॥' इत्यादि। प्राज्यवित्तत्वं च—'असंख्येयं धनं दत्वा ब्राह्मणेभ्यो महायशाः। राजवंशान् शतगुणान् स्थापयिष्यति राघवः ॥' इति। दीर्घदर्शित्वं च बालकाण्डे—'सर्वज्ञो दीर्घदर्शनः' इति। वदान्यत्वं च—'वदान्यो वल्गुवागपि' इत्यमरकोशात् मनोहरवाग्युक्तता। तदप्ययोध्याकाण्डे—'प्रियवादी च भूतानाम्' 'पूर्वभाषी प्रियंवदः' 'सर्वलोकप्रियंवदः' इति। श्रद्धा दृढभक्तिः, तद्वान् श्राद्धः। तद्वत्त्वं च अयोध्याकाण्डे—'दृढभक्तिः स्थिरप्रज्ञो नासद्ग्राही न दुर्वचाः।' इति। गाम्भीरत्वं च बालकाण्डे—'समुद्र इव गाम्भीर्ये' 'गम्भीर-

स्त्रिषु नित्यशः ' इति । स्थूललक्षत्वं च बालकाण्डे— ' धनदेन समस्त्यागे ' इति ॥

क्षमावत्त्वं च बालकाण्डे– ' क्षमया पृथिवीसमः ' इति। 'संमतस्त्रिषु लोकेषु वसुधायाः क्षमागुणैः ।' इति च। आर्यत्वं च बालकाण्डे— ' आर्यः सर्वसमश्चैव ' इति। अनिद्रत्वं च सुन्दरकाण्डे— ' अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः ।' इति। कृतज्ञत्वं च बालकाण्डे—' धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ।' इति। अयोध्याकाण्डेऽपि— ' कृतज्ञो विजितेन्द्रियः ' ' शास्त्रज्ञश्च कृतज्ञश्च ' इति । ' उत्साहः पौरुषं सत्वमानृशंस्यं कृतज्ञता । विक्रमश्च प्रभावश्च सन्ति वानर राघवे ॥' इति च । ऋजुः सरळः। तथा च अयोध्याकाण्डे— ' अदीनः सत्यवागृजुः ' ' ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे ।' इति । विपश्चित्त्वं च बालकाण्डे– ' सर्वशास्त्रार्थतत्वज्ञः ' ' न चानृतकथो विद्वान् ' इति। सुभगः बहुश्रीकः । तथा च बालकाण्डे– ' श्रीमान् शत्रु-निबर्हणः ' इति । अयोध्याकाण्डेऽपि– ' अनुरूपः स वो नाथो लक्ष्मीवान् लक्ष्मणाग्रजः ।' इति । सुलज्जत्वं च बालकाण्डे– 'ह्रीमन्तः कीर्तिमन्तश्च' इति। गुरुभक्तिश्च बालकाण्डे–'गुरूणां गुरु-कार्याणि काले कालेऽन्ववैक्षत।' अयोध्याकाण्डे—'सत्यवादी महे-ष्वासो वृद्धसेवी जितेन्द्रियः ।' इति । दृढोत्साहत्वं चायोध्या-काण्डे — ' उत्सवेषु च सर्वेषु पितेव परितुष्यति ।' इति । इन्द्रादितुल्यत्वं च अयोध्याकाण्डे -- ' दिव्यैर्गुणैः शक्रसमः ', ' लोकपालोपमं नाथमकामयत मेदिनी ।' इति च। आरण्यकाण्डे-ऽपि — ' राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।' इति ।

इत्थं सर्वोत्कृष्टकफप्रकृतिपुरुषगतानां गुणानां श्रीरामे प्रतिपादनात् रामः कफप्रकृतिः सर्वपुरुषोत्तम इति सिद्धम् ॥

अत्र हनूमता अनन्तकल्याणगुणाकरेऽपि श्रीरामे सीताविश्वासोत्पादनार्थतया सामुद्रिकशास्त्रसिद्धाः 'त्रिस्थिरस्त्रिप्रलम्बश्च' इत्यादिना कतिपयगुणाः संक्षेपेण प्रतिपादिताः । इतोऽपि सारभूता वाङ्मनःकायबुद्धिगताः चत्वारो गुणाः सामुद्रिकशास्त्रे दृश्यन्ते । तथाहि— 'अर्चितं वचनमुन्नतं मनो निर्विशेषसुखदं दृशां वपुः । अस्ति चेदघपराङ्मुखी मतिर्लक्षणैः किमपरैर्नृयोषिताम् ॥' इति । अत्र वचनस्यार्चितत्वं सत्यप्रियहितमृदुमाधुर्यादिगुणशालित्वेन भवति । मनस औन्नत्यं चोत्कृष्टत्वम् । तच्च धैर्यस्थैर्यगाम्भीर्यौदार्यादिगुणयोगेन । वपुषो निर्विशेषसुखदत्वमपि सुकुमारकान्तिमत्त्वप्रियदर्शनत्वादियोगेन । बुद्धेरघपराङ्मुखत्वमपि परधनपरद्रोहपरदाराभिरतिराहित्येन भवति ॥

रामवचनादेश्च सत्यत्वादिगुणशालित्वं भगवता वाल्मीकिना तत्र तत्र प्रदर्शितम् । तथाहि वचनविषये— 'अदीनः सत्यवागृजुः' 'प्रियवादी च भूतानां सत्यवादी च राघवः ।' 'न चानृतकथो विद्वान्' 'बुद्धिमान् मधुराभाषी पूर्वभाषी प्रियंवदः ।' 'वाचा मधुरया रामः सर्वं संमानयन् जनम् ।' 'पौरान् स्वजनवन्नित्यं कुशलं परिपृच्छति ।' इति । 'स तु नित्यं प्रशान्तात्मा मृदुपूर्वं च भाषते ।' 'ते तमूचुर्महात्मानं पौरजानपदा जनाः । काकुत्स्थमभिजानीमः सम्यग्वदति राघवः ॥' 'धर्मे स्थितो धर्म्यमुवाच वाक्यं यथा स एवार्हति तत्र वक्तुम् ।' इति च ॥

मनोविषये च– 'धैर्येण हिमवानिव' 'मृदुश्च स्थिरचित्तश्च' 'कल्याणाभिजनः साधुरदीनात्मा महामतिः' 'न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम्। सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥' 'सर्वो ह्यभिजनः श्रीमान् श्रीमतः सत्यवादिनः। नालक्षयत रामस्य किंचिदाकारमानने ॥ उचितं च महाबाहुर्न जहौ हर्षमात्मनः। शारदः समुदीर्णांशुश्चन्द्रस्तेज इवात्मजम् ॥' 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः॥' उत्सवेषु च सर्वेषु पितेव परितुष्यति।' 'न विरुद्धकथारुचिः। 'उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते॥ कथंचिदुपकारेण कृतेनैकेन तुष्यति। न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥' 'अनुरक्तं च भक्तं च मम चैवोपकारिणम्॥ एष मे परमः कामो यदीमं रावणानुजम्। लंकायां सौम्य पश्येयमभिषिक्तं विभीषणम् ॥' 'वीर्यवान्न तु वीर्येण महता स्वेन विस्मितः।' 'न चापि महतीं लक्ष्मीं राज्यनाशोऽपकर्षति। लोककान्तस्य कान्तत्वं शीतरश्मेरिव क्षपा ॥' 'दृष्ट एव हि नः शोकमपनेष्यति राघवः।' इति ॥

वपुर्विषयेऽपि– 'सोमवत्प्रियदर्शनः' 'आजानुबाहुं दीप्तास्यमतीव प्रियदर्शनम्।' 'अरोगस्तरुणो वाग्मी वपुष्मान् देशकालवित्।' 'सुकुमारं महासत्वं पार्थिवव्यञ्जनान्वितम्' 'राममिन्दीवरश्यामं कन्दर्पसदृशप्रभम्।' 'कन्दर्पसमरूपश्च रामो दशरथात्मजः।' इति ॥

मतिविषयेऽपि–'पितुः सत्यं प्रतिश्रुत्य हत्वा भरतमागतम्।

किं करिष्यामि राज्येन सापवादेन लक्ष्मण ॥ यद्द्रव्यं बान्धवानां वा मित्राणां वा क्षये भवेत् । नाहं तत्प्रतिगृह्णीयां भक्ष्यान् विषकृतान् यथा ॥' 'न कामये ह्यधर्मेण शक्रत्वमपि लक्ष्मण ।' 'कथं नु पुत्राः पितरं हन्युः कस्यांचिदापदि ॥ भ्राता वा भ्रातरं हन्यात् सौमित्रे प्राणमात्मनः ।' 'विदितश्चास्तु भद्रं ते योऽयं रणपरिश्रमः । स तीर्णः सुहृदां वीर्यान्न त्वदर्थं मया कृतः ॥ रक्षता तु मया वृत्तमपवादं च सर्वशः । प्रख्यातस्यात्मवंशस्य न्यंगं च परिरक्षता ॥ निर्जितासि मया सीते शत्रुं जित्वा महारणे । प्राप्तचारित्रसन्देहा मम प्रतिमुखे स्थिता । दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढम् ॥ कः पुमान् हि कुले जातः स्त्रियं परगृहोषिताम् । तेजस्वी पुनरादद्यात्सुहृल्लेख्येन चेतसा ॥ तदर्थं निर्जिता मे त्वं यशः प्रत्याहृतं मया । नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यतामितः ॥ रावणाङ्कपरिभ्रष्टां दृष्टां दुष्टेन चक्षुषा । कथं त्वां पुनरादद्यां कुलं व्यपदिशन्महत् ॥' 'कथं ह्यहं प्रतिज्ञाय वनवासमिमं गुरौ । भरतस्य करिष्यामि वचो हित्वा गुरोर्वचः ॥' इति ॥

अयोध्याकाण्डे—'यशो ह्यहं केवलराज्यकारणान्न पृष्ठतः कर्तुमलं महोदयम् ।' 'उपधिर्न मया कार्यो वनवासे जुगुप्सितः ।' 'अधर्मं धर्मवेषेण यदीमं लोकसंकरम् । अभिपत्स्ये शुभं हित्वा क्रियाविधिविवर्जितम् ॥ कश्चेतयानः पुरुषः कार्याकार्यविचक्षणः । बहुमंस्यति मां लोके दुर्वृत्तं लोकदूषकम् ॥' 'सुसंश्रुत्य पितुर्वाक्यं मातुर्वा ब्राह्मणस्य वा । न कर्तव्यं वृथा वीर धर्ममाश्रित्य तिष्ठता ॥ सोऽहं न शक्ष्यामि पितुर्नियोगमतिवर्तितुम् । तदेनां विसृजानार्यां क्षत्रधर्माश्रितां मतिम् ।' 'गुरुश्च

राजा च पिता च वृद्धः क्रोधात्प्रहर्षाद्यदि वापि कामात् ।
यद्यथादिशेत्कार्यमवेक्ष्य धर्मं कस्तं न कुर्यादनृशंसवृत्तिः ॥' इति ॥

युद्धकाण्डेऽपि—'अवश्यं त्रिषु लोकेषु न सीता पापमर्हति । दीर्घकालोषिता चेयं रावणान्तःपुरे शुभा ॥ बालिशः खलु कामात्मा रामो दशरथात्मजः । इति वक्ष्यन्ति मां सन्तो जानकीमविशोध्य हि ॥ अनन्यहृदयां भक्तां मच्चित्तपरिवर्तिनीम् । अहमप्यवगच्छामि मैथिलीं जनकात्मजाम् ॥ प्रत्ययार्थं तु लोकानां त्रयाणां सत्यसंश्रयः । उपप्रेक्षे स्म वैदेहीं प्रविशन्तीं हुताशनम् ॥' इति । 'नैकस्य हेतो रक्षांसि पृथिव्यां हन्तुमर्हसि ।' 'अयुध्यमानं प्रच्छन्नं प्राञ्जलिं शरणागतम् ॥ पलायन्तं प्रमत्तं वा नैव हन्तुं त्वमर्हसि ॥' 'नैव लोभान्न मोहाद्वा न ह्यज्ञानात्तमोऽन्वितः । सेतुं सत्यस्य भेत्स्यामि गुरोः सत्यप्रतिश्रवः ॥ क्षात्रं धर्ममहं त्यक्ष्ये ह्यधर्मं धर्मसंहितम् । क्षुद्रैर्नृशंसैर्लुब्धैश्च संहितं पापकर्मभिः ॥' इति ॥

अर्चिता वाक्, उन्नतं च मनः, अघपराङ्मुखी मतिश्चोक्ता युद्धकाण्डे । भग्नकिरीटं रावणमभिवीक्ष्य रामः—'तं निर्विषाशीविषसन्निकाशं शान्तार्चिषं सूर्यमिवाप्रकाशम् । गतश्रियं कृत्तकिरीटकूटमुवाच रामो युधि राक्षसेन्द्रम् ॥ कृतं त्वया कर्म महत्सुभीमं हतप्रवीरश्च कृतस्त्वयाहम् । तस्मात्परिश्रान्त इति व्यवस्ये न त्वां शरैर्मृत्युवशं नयामि ॥ गच्छानुजानामि रणार्दितस्त्वं प्रविश्य रात्रिंचरराज लङ्काम् । आश्वास्य निर्याहि रथी च धन्वी तदा बलं द्रक्ष्यसि मे रथस्थः ॥'

इत्थं रामभद्रस्य सकलगुणविशिष्टवचनादिमत्त्वात्सामुद्रिकोक्ता अर्चितवचनादयः चत्वारोऽपि गुणा अत्युत्कृष्टास्तिष्ठन्तीति सकलकल्याणगुणपरिपूर्णः श्रीरामभद्रः पुरुषोत्तम इति सिद्धम् ॥

भ्रातापि तस्य द्वैमात्रः सौमित्रिरपराजितः ।
अनुरागेण रूपेण गुणैरपि तथाविधः ॥

तौ च धनुर्धरौ रामलक्ष्मणौ त्वद्गवेषणाय ऋश्यमूकप्रदेशमुपगतौ भ्रातृनिराकृतेन सुग्रीवेण सख्यमकुरुताम् । ततो वालिनं निहत्य राज्याभिषिक्तः सुग्रीवः त्वद्गवेषणाय महाबलान् वानरान् सर्वतः प्रेषितवान् । तेषु वानरयूथेषु अहमेको महोदधिमुत्तीर्य त्वदवलोकनेन परिपूर्णमनोरथोऽस्मि ॥

इति पञ्चत्रिंशः सर्गः ।

---

## अथ षट्त्रिंशः सर्गः ॥

षट्त्रिंशे—तदनु भूयो विश्वासमुपजनयितुं रामनामाङ्कितमङ्गुळीयकं प्रदर्शितवति हनूमति प्रियकरभूषणावलोकनमात्रेण प्रियमेव सम्प्राप्तं मन्यमाना हर्षनिर्भरमानसा तमेवं प्रशशंस—

विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम ।
येनेदं राक्षसपदं त्वयैकेन प्रधर्षितम् ॥

शतयोजनविस्तीर्णः सागरो मकरालयः ।
विक्रमश्लाघनीयेन क्रमता गोष्पदीकृतः ॥

न हि त्वां प्राकृतं मन्ये वानरं वानरर्षभ ।
यस्य ते नास्ति संत्रासो रावणान्नापि संभ्रमः ॥

अर्हसे च कपिश्रेष्ठ मया समभिभाषणम् ।
यद्यसि प्रेषितस्तेन रामेण विदितात्मना ॥

प्रेषयिष्यति दुर्धर्षो रामो न ह्यपरीक्षितम् ।
पराक्रममविज्ञाय मत्सकाशे विशेषतः ॥

कच्चिन्न व्यथते रामः कच्चिन्न परितप्यते ।
उत्तराणि च कार्याणि कुरुते पुरुषोत्तमः ॥

कच्चिन्न दीनः संभ्रान्तः कार्येषु च न मुह्यति ।
कच्चित्पुरुषकार्याणि कुरुते नृपतेः सुतः ॥

द्विविधं त्रिविधोपायमुपायमपि सेवते ।
विजिगीषुः सुहृत्कच्चिन्मित्रेषु च परन्तपः ॥

अत्र त्रिविधोपायं सामदानभेदरूपम, उपायमपि चतुर्थोपायं दण्डरूपमालोच्य द्विविधं कृत्वा उपसेवते किम् ? । मित्रेषु सामदाने, शत्रुषु भेददण्डौ इति यथोचितं विभज्य सेवते किमित्यर्थः । किं सेवत इति सीतोक्त्या इतरैरपि मित्रवशीकरणाय सामदानप्रयोगः, शत्रुजयाय भेदो दण्डश्च प्रयोक्तव्य इति सूचितम् । तथा च उद्योगे विदुरः—'यस्य दानार्जितं मित्रममित्रा युधि निर्जिताः । अन्नपानजिता दाराः सफलं तस्य जीवितम् ॥' इति । कामन्दकेऽपि—मित्रपरिग्रहोऽमित्रनिग्रहश्च कर्तव्यः । तत्र मित्रसंग्रहे उपेक्षासामदानानि । अमित्रनिग्रहे च

भेददण्डौ प्रयोक्तव्यौ इति प्रतिपादितम्---‘परिग्रहश्च मित्राणाममित्राणां च निग्रहः । उपेक्षा साम दानं च भेदो दण्डश्च साधनम् ॥ उपकार्यपकारित्वमेतद्वृत्तं महीपतेः ॥’ इति ॥

**कच्चिन्मित्राणि लभते मित्रैश्चाप्यभिगम्यते ।**
**कच्चित्कल्याणमित्रश्च मित्रैश्चापि पुरस्कृतः ॥**

अनेन स्वयं प्रयत्नेन मित्रसंपादने अन्यैरपि स्वयं बहुमतो भवेत् इति सूचितम् । अत एव रामोऽपि स्वप्रयत्नेन सुग्रीवं मित्रं संपादितवानिति प्रतिपादितं **किष्किन्धाकाण्डे**—‘भवता सख्यकामौ तौ भ्रातरौ रामलक्ष्मणौ । प्रतिगृह्यार्चयस्वैतौ पूजनीयतमावुभौ ॥’ इति । अन्येनापि मित्रभावेनासादित इत्येतदपि तत्रैव—‘यत्त्वमिच्छसि सौहार्दं वानरेण मया सह । रोचते यदि वा सख्यं बाहुरेष प्रसारितः ॥ गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां त्वया ॥’ इति । **युद्धकाण्डेऽपि** रामः—‘मित्रभावेन सम्प्राप्तं न त्यजेयं कथंचन । दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम् ॥’ इति ॥

मित्रे बहुमतिकरणं च **किष्किन्धाकाण्डे**—‘त्वत्सनाथः सखे संख्ये जेतास्मि सकलान् रिपून् । त्वमेव मे सुहृन्मित्रं साहाय्यं कर्तुमर्हसि ॥’ इति । ‘नाहमस्मि प्रभुः कार्ये वानरेश न लक्ष्मणः ॥ त्वमस्य हेतुः कार्यस्य प्रभुश्च प्लवगेश्वर । त्वमेवाज्ञापय विभो मम कार्यविनिश्चये ॥’ इति च । मित्रेण बहुमन्यमानत्वमपि तत्रैव—‘त्वत्सैन्यं त्वद्वशे युक्तमाज्ञापयितु-

मर्हसि । काममेषामिदं कार्यं विदितं मम तत्वतः ॥ तथापि तु यथातत्वमाज्ञापयितुमर्हसि । ' इति ॥

कच्चिदाशास्ति देवानां प्रसादं पार्थिवात्मजः ।
कच्चित्पुरुषकारं च दैवं च प्रतिपद्यते ॥

अनेन महाकार्यं साधयता पुरुषयत्नदेवताप्रार्थने कर्तव्ये इति सूचितम् । तथा चोद्योगे धर्मं प्रति भगवान्— ' क्षेत्रं हि रसवच्छुद्धं कर्षकेणोपपादितम् । ऋते वर्षं न कौन्तेय जातु निर्वर्णयेत्फलम् ॥ तदिदं निश्चितं बुद्ध्या पूर्वैरपि महात्माभिः । दैवे च मानुषे चैव संयुक्तं लोककारणम् ॥ ' इति ॥

कच्चिन्न विगतस्नेहो विवासान्मयि राघवः ।
कच्चिन्मां व्यसनादस्मान्मोक्षयिष्यति वानर ॥

सुखानामुचितो नित्यमसुखानामनूचितः ।
दुःखमुत्तरमासाद्य कच्चिद्रामो न सीदति ॥

कच्चिन्नान्यमना रामः कच्चिन्मां तारयिष्यति ॥

कच्चिदक्षौहिणीं भीमां भरतो भ्रातृवत्सलः ।
ध्वजिनीं मन्त्रिभिर्गुप्तां प्रेषयिष्यति मत्कृते ॥

वानराधिपतिः श्रीमान्सुग्रीवः कच्चिदेष्यति ।
मत्कृते हरिभिर्वीरैर्वृतो दन्तनखायुधैः ॥

कच्चिच्च लक्ष्मणः शूरः सुमित्रानन्दवर्धनः ।
अस्त्रविच्छरजालेन राक्षसान् विधमिष्यति ॥

कच्चिन्न तद्धेमसमानवर्णं तस्याननं पद्मसमानगन्धि ।
मया विना शुष्यति शोकदीनं जलक्षये पद्ममिवातपेन ॥

अत्र श्यामवर्णे रामे हेमसमानवर्णमुखत्वप्रतिपादनं नागसुवर्णस्य श्यामरूपत्वात्तदभिप्रायेण [इति] बोध्यम् । तथा च **विष्णुधर्मे**— 'जाम्बूनदं तु देवानामिन्द्रकोपेन सन्निभम् । पितॄणां चन्द्ररश्म्याभं दैत्यानां शबलोपमम् । नागानां तच्छुकाभं स्यान्नराणां पीतमुच्यते ॥' इति ॥

धर्मोपदेशात्त्यजतश्च राज्यं
मां चाप्यरण्यं नयतः पदातिम् ।
नासीद्व्यथा यस्य न भीर्न शोकः
कच्चित्स धैर्यं हृदये करोति ॥

न चास्य माता न पिता न चान्यः
स्नेहाद्विशिष्टोऽस्ति मया समो वा ।
तावत्त्वहं दूत जिजीविषेयं
यावत्प्रवृत्तिं शृणुयां प्रियस्य ॥

इति वदन्तीं सीतामाञ्जनेय एवमुवाच—

न त्वामिहस्थां जानीते रामः कमललोचने ।
तेन त्वां नानयत्याशु शचीमिव पुरन्दरः ॥

श्रुत्वैव तु वचो मह्यं क्षिप्रमेष्यति राघवः ।
चमूं प्रकर्षन्महतीं हर्यृक्षगणसंकुलाम् ॥

विष्टम्भयित्वा बाणौघैरक्षोभ्यं वरुणालयम् ।
करिष्यति पुरीं लङ्कां काकुत्स्थः शान्तराक्षसाम् ॥

तत्र यद्यन्तरा मृत्युर्युधि देवाः सहासुराः ।
स्थास्यन्ति पथि रामस्य स तानपि वधिष्यति ।

तवादर्शनजेनार्ये शोकेन स परिप्लुतः ।
न शर्म लभते रामः सिंहार्दित इव द्विपः ॥

दर्दुरेण च ते देवि शपे मूलफलेन च ।
मलयेन च विन्ध्येन मेरुणा मन्दरेण च ॥

अत्र हनूमता स्वेष्टकन्दमूलफलादिभिः दर्दुरादिपर्वतैश्च स्वावासभूतैः शपथकरणात् सर्वैरपि शपथकरणे प्राप्ते विश्वासोत्पादनाय स्वेष्टवस्तुभिरेव शपथः कर्तव्य इति सूचितम । तथा च **कर्णपर्वणि** धर्मं प्रत्यर्जुनः -- 'सत्येन मे शपे राजन् त्वत्पादेन तथैव च । भीमेन च नरव्याघ्र यमाभ्यां च महीपते ॥ अहमेनं नरश्रेष्ठ सामात्यं च महीपते । यद्यहं समरे कर्णं हनिष्यामि हतोऽपि वा ॥ महीतले पतिष्यामि सत्येनैव च ते शपे ।' इति ॥

**अयोध्याकाण्डे**ऽपि कैकेयीं प्रति दशरथः -- 'अवलिप्ते न जानीषे त्वत्तः प्रियतरो मम । मनुजो मनुजव्याघ्राद्रामादन्यो न विद्यते ॥ तेन चारित्रमुख्येन राघवेण महात्मना । शपे ते जीवनार्हेण ब्रूहि यन्मनसेच्छसि ॥ यं मुहूर्तमपश्यंस्तु न जीवेयमहं ध्रुवम् । तेन रामेण कैकेयि शपे ते वचनाक्रियाम् ॥ आत्मना वात्मजैश्चापि वृणे यं मनुजर्षभम् ।' इति ॥

क्षिप्रं द्रक्ष्यसि वैदेहि रामं प्रस्रवणे गिरौ ।
शतक्रतुमिवासीनं नागराजस्य मूर्धनि ॥

न मांसं राघवो भुङ्क्ते न चापि मधु सेवते ।
वन्यं सुविहितं नित्यं भक्तमश्नाति पंचमम् ॥

नैव दंशान्न मशकान्न कीटान्न सरीसृपान् ।
राघवोऽपनयेद्गात्रात्त्वद्गतेनान्तरात्मना ॥

नित्यं ध्यानपरो रामो नित्यं शोकपरायणः ।
नान्यच्चिन्तयते देवि स तु कामवशंगतः ॥

अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः ।
सीतेति मधुरां वाणीं व्याहरन् प्रतिबुध्यते ॥

दृष्ट्वा फलं वा पुष्पं वा यच्चान्यत्सुमनोहरम् ।
बहुशो हा प्रियेत्येवं श्वसंस्त्वामभिभाषते ॥

स देवि नित्यं परितप्यमान-
स्त्वामेव सीतेत्यभिभाषमाणः ।
दृढव्रतो राजसुतो महात्मा
तवैव लाभाय कृतप्रयत्नः ॥

अत्र दंशमशकाद्यनिवारणेन मितेनाहारेण जागरणेन च दृढव्रततया रामभद्रस्यावस्थानप्रतिपादनं महाकार्यस्य प्रबलतर-शत्रुवधस्य सीताप्राप्तेश्चानियतेन साधयितुमशक्यत्वादवश्यकर्तव्य-

तपश्चरणाभिप्रायकं वेदितव्यम् । महाकार्यसाधनाय तपश्चरणं चावश्यकमित्येतत्प्राक् प्रपंचितम् ॥

इति षट्त्रिंशः सर्गः ।

---

## अथ सप्तत्रिंशः सर्गः ।

सप्तत्रिंशे— अथ सीता तद्वचनमाकर्ण्य धर्मादनपेतमिदमुवाच—

अमृतं विषसंसृष्टं त्वया वानर भाषितम् ।
यच्च नान्यमना रामो यच्च शोकपरायणः ॥

ऐश्वर्ये वा सुविस्तीर्णे व्यसने वा सुदारुणे ।
रज्ज्वेव पुरुषं बद्ध्वा कृतान्तः परिकर्षति ॥

विधिर्नूनमसंहार्यः प्राणिनां प्लवगोत्तम ।
सौमित्रिं मां च रामं च व्यसनैः पश्य मोहितान् ॥

अनेन सुखं दुःखं वा स्वकर्मफलं दैववशेन बलात्प्राप्नोति इति सूचितम् । तथा च भारते— 'येन यत्र च भोक्तव्यं सुखं वा दुःखमेव वा । स तत्र रज्ज्वा बद्ध्वेव बलाद्दैवेन नीयते ॥' इति । विष्णुपुराणेऽपि— 'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥' इति ॥

स वाच्यः संत्वरस्वेति यावदेव न पूर्यते ।
अयं संवत्सरः कालस्तावद्धि मम जीवितम् ॥

वर्तते दशमो मासो द्वौ तु शेषौ प्लवंगम ।
रावणेन नृशंसेन समयो यः कृतो मम ॥

विभीषणेन च भ्रात्रा मम निर्यातनं प्रति ।
अनुनीतः प्रयत्नेन न च तत्कुरुते मतिम् ॥

मम प्रतिप्रदानं हि रावणस्य न रोचते ।
रावणं मार्गते संख्ये मृत्युः कालवशंगतम् ॥

ज्येष्ठा कन्यानला नाम विभीषणसुता कपे ।
तया ममेदमाख्यातं मात्रा प्रहितया स्वयम् ॥

आशंसेयं हरिश्रेष्ठ क्षिप्रं मां प्राप्स्यते पतिः ।
अन्तरात्मा हि मे शुद्धस्तस्मिंश्च बहवो गुणाः ॥

उत्साहः पौरुषं सत्वमानृशंस्यं कृतज्ञता ।
विक्रमश्च प्रभावश्च सन्ति वानर राघवे ॥

अनेन उत्साहादिगुणवतो महापुरुषस्यारब्धं कार्यं सिध्यतीति सूचितम् । तथा च **राजधर्मे**— 'न तप्येतार्थकृच्छ्रेषु प्रजाहितमनुस्मरन् । यः प्रियं कुरुते नित्यं गुणतो वसुधाधिपः ॥ तस्य कर्माणि सिध्यन्ति न च संत्यज्यते श्रिया ॥' इति ॥

चतुर्दशसहस्राणि राक्षसानां जघान यः ।
जनस्थाने विना भ्रात्रा शत्रुः कस्तस्य नोद्विजेत् ॥

न स शक्यस्तुलयितुं व्यसनैः पुरुषर्षभः ।
अहं तस्य प्रभावज्ञा शक्रस्येव पुलोमजा ॥

ततो महत्या वानरसेनया क्षिप्रमेवागमिष्यति रामभद्रः। अथवा, सनिशाचरां लंकामिमां वोढुं समर्थस्य मम स्कन्धे समारूढां त्वामुत्तीर्य सागरं रामपार्श्वमचिरादेव प्रापयामीति वदन्तं हनूमन्तं सीता प्रत्याह—

**हनूमन्दूरमध्वानं कथं मां वोढुमिच्छसि।**
**तदेव खलु ते मन्ये कपित्वं हरियूथप॥**

**कथं वाल्पशरीरस्त्वं मामितो नेतुमिच्छसि।**
**सकाशं मानवेन्द्रस्य भर्तुर्मे प्लवगर्षभ॥**

अनेन शौर्यादिगुणयुक्तस्यापि जातिप्रयुक्ता निन्दा भवतीति सूचितम्। अत एव युधिष्ठिरराजसूये श्रीकृष्णस्याग्रपूजायां संक्रुद्धैः शिशुपालादिभिर्जातिनिन्दा प्रतिपादिता **सभापर्वणि**— 'कथं ह्यराजा दाशार्हो मध्ये सर्वमहीक्षिताम्। अर्हणामर्हति तथा यथा युष्माभिरर्चितः॥' इति। तत्रैव कर्णं प्रति भीमवचनम्— 'न त्वमर्हसि पार्थेन सूतपुत्र रणे वधम्। कुलस्य सदृशस्तूर्णं प्रतोदो गृह्यतां त्वया॥ एवमुक्तस्ततः कर्णः किंचित्प्रस्फुरिताधरः। गगनस्थं विनिश्वस्य दिवाकरमुदैक्षत॥' इति॥

**आदिपर्वण्यपि** कर्णं प्रति कृपः— 'अयं पृथायास्तनयः कनीयान् पाण्डुनन्दनः। कौरवो भवता सार्धं द्वन्द्वयुद्धं करिष्यति॥ त्वमप्येवं महाबाहो मातरं पितरं तथा। कथयस्व नरेन्द्राणां येषां त्वं कुलभूषणः॥ ततो विदित्वा पार्थस्त्वां प्रतियोत्स्यति वा न वा। वृथाकुलसमाचारैर्न युध्यन्ते नृपात्मजाः॥ **वैशंपायनः**— एवमुक्तस्य कर्णस्य व्रीडावनतमाननम्। बभौ वर्षाम्बुदक्लिन्नं पद्ममाकुलितं यथा॥' इति॥

ततः—

सीताया वचनं श्रुत्वा हनूमान् मारुतात्मजः ।
चिन्तयामास लक्ष्मीवान्नवं परिभवं कृतम् ॥

अनेन बुद्धिमतो नूतनः परिभवोऽसह्य इति सूचितम् । तथा च कालिदासः—'गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम् । गतो वदान्यान्तरमित्ययं मे मा भूत्परीवादनवावतारः ॥' इति ॥

न मे जानाति सत्त्वं वा प्रभावं वासितेक्षणा ।
तस्मात्पश्यतु वैदेही यद्रूपं मम कामतः ॥

इति संचिन्त्य--

दर्शयामास वैदेह्याः स्वरूपमरिमर्दनः ।
मेरुमन्दरसंकाशो बभौ दीप्तानलप्रभः ॥

ततः सीता मंदरगिरिसन्निभं हनूमन्तमवलोक्य सबहुमानमित्थमाचचक्षे—

तव सत्त्वं बलं चैव विजानामि महाकपे ।
वायोरिव गतिं चापि तेजश्चाग्नेरिवाद्भुतम् ।
प्राकृतोऽन्यः कथं चेमां भूमिमागन्तुमर्हति ॥

अयुक्तं तु हरिश्रेष्ठ मम गन्तुं त्वयानघ ।
वायुवेगसवेगस्य वेगो मां मोहयेत्तव ॥

प्रपतेयं हि ते पृष्ठाद्भयाद्वेगेन गच्छतः ॥

भवेयमाशु विवशा यादसामन्नमुत्तमम् ॥

न च शक्ष्ये त्वया सार्धं गन्तुं शत्रुविनाशन ।
कळत्रवति संदेहस्त्वय्यपि स्यादसंशयः ॥

ह्रियमाणां तु मां दृष्ट्वा राक्षसा भीमविक्रमाः ।
अनुगच्छेयुरादिष्टा रावणेन दुरात्मना ॥

सायुधा बहवो व्योम्नि राक्षसास्त्वं निरायुधः ।
कथं शक्ष्यसि संयातुं मां चैव परिरक्षितुम् ॥

युध्यमानस्य रक्षोभिस्तव तैः क्रूरकर्मभिः ।
प्रपतेयं हि ते पृष्ठाद्भयार्ता कपिसत्तम ॥

कथंचित्सांपराये त्वां जयेयुः कपिसत्तम ।
पतितां च गृहीत्वा मां नयेयुः पापराक्षसाः ॥

मां वा हरेयुस्त्वद्धस्ताद्विशसेयुरथापि वा ।
अव्यवस्थौ हि दृश्येते युद्धे जयपराजयौ ॥

अहं वापि विपद्येय रक्षोभिरभितर्जिता ।
त्वत्प्रयत्नो हरिश्रेष्ठ भवेन्निष्फल एव तु ॥

कामं त्वमसि पर्याप्तो निहन्तुं सर्वराक्षसान् ।
राघवस्य यशो हीयेत्त्वया शस्तैस्तु राक्षसैः ॥

अथवादाय रक्षांसि न्यसेयुः संवृते हि माम् ।
यत्र ते नाभिजानीयुर्हरयो नापि राघवौ ॥

आरम्भस्तु मदर्थोऽयं ततस्तव निरर्थकः ।
त्वया हि सह रामस्य महानागमने गुणः ॥

मयि जीवितमायत्तं राघवस्य महात्मनः ।
भ्रातॄणां च महाबाहो तव राजकुलस्य च ॥

तौ निराशौ मदर्थं तु शोकसन्तापकर्शितौ ।
सह सर्वर्क्षहरिभिस्त्यक्ष्यतः प्राणसंग्रहम् ॥

भर्तृभक्तिं पुरस्कृत्य रामादन्यस्य वानर ।
न स्पृशामि शरीरं तु पुंसो वानरपुंगव ॥

(नाहं स्प्रष्टुं तदा गात्रमिच्छेयं वानरोत्तम ।)
यदहं गात्रसंस्पर्शं रावणस्य बलाद्गता ॥

अनीशा किं करिष्यामि विनाथा विवशा सती ।

अनेन पतिव्रतायाः परपुरुषस्पर्शोऽयुक्त इत्युक्तम् । तच्च प्रागुक्तम् ॥

यदि रामो दशग्रीवमिह हत्वा सबान्धवम् ॥
मामितो गृह्य गच्छेत तत्तस्य सदृशं भवेत् ।

अनेन महान्तो विपत्कालेऽपि क्षुद्रमार्गे न प्रवर्तन्त इति सूचितम् ।

तथा च प्राचीनाः— 'क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशामापन्नोऽपि विपन्न दीधिति[धीधृति]-रपि प्राणेषु नश्यत्स्वपि । मत्तेभेन्द्रविभिन्नकुंभपिशितग्रासैकबद्ध-स्पृहः किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥' इति ॥

स मे हरिश्रेष्ठ सलक्ष्मणं पतिं
सयूथपं क्षिप्रमिहोपपादय ।

चिराय रामं प्रति शोककर्शितां
कुरुष्व मां वानरमुख्य हर्षिताम् ॥

इति सप्तत्रिंशः सर्गः ।

---

## अथ अष्टत्रिंशैकोनचत्वारिंशौ सर्गौ ।

ततः सीतावचनसंश्रवणसंजातहर्षो हनूमान्,

युक्तरूपं त्वया देवि भाषितं शुभदर्शने ।
सदृशं स्त्रीस्वभावस्य साध्वीनां विनयस्य च ॥

रामादन्यस्य नार्हामि संस्पर्शमिति जानकि ।
एतत्ते देवि सदृशं पत्न्यास्तस्य महात्मनः ॥

का ह्यन्या त्वामृते देवि ब्रूयाद्वचनमीदृशम् ।

इत्यभिधाय, अभिज्ञानमसाधारणं प्रार्थितवान् । ततः सीता दीर्घमुष्णं विनिश्वस्य मन्दं मन्दमिदमाह— पुरा किल मन्दाकिन्याः परिसरे सुचिरं विहृत्य समुपविष्टां मां मदङ्कसंसुप्तं रामं चावलोक्य शक्रपुत्रो धराधरा[जयन्ता]भिधो वायसवेषं परिगृह्य खरतरेण नखाग्रेण पयोधरप्रान्ते भृशं विरराद ॥

ततः समुत्थितो रामो मुक्तैः शोणितबिन्दुभिः ।
वायसेन ततस्तेन बलवत्क्लिश्यमानया ॥

स मया बोधितः श्रीमान्सुखसुप्तः परंतपः ।

अत्र 'बलवत् क्लिश्यमानया' इति विशेषणात् सुखसुप्तो न बोधनीयः; सुप्तस्य धर्मलोपप्रसक्तौ तस्यापत्प्रसक्तौ वा सुप्तोऽपि बोधनीय इति सूचितम्। [सुप्तो] न प्रबोधनीय इत्येतत् बृहदारण्यके— 'तं नायतं बोधयेदित्याहुः दुर्भिषज्यँ हास्मै भवति। यमेष न प्रतिपद्यते' इति। मनुरपि— 'न श्रेयांसं प्रबोधयेत्' इति। आनुशासनिके— 'दिवा च न स्वपेज्जातु न च सुप्तं प्रबोधयेत्।' इति॥

धर्मलोपप्रसक्तौ प्रबोधनं आदिपर्वणि जरत्कारूपाख्याने— जरत्कारुमहर्षिः कदाचिच्छ्रमापनोदनाय जरत्कारुनामधेयाया भार्याया उत्संगे शिरो निधाय सुष्वाप। 'तस्मिंश्च सुप्ते विप्रेन्द्रे सवितास्तमयाद्गिरिम्। उत्थापयिष्ये यद्येनं ध्रुवं कोपं करिष्यति॥ धर्मलोपो भवेदस्य सन्ध्यातिक्रमणे ध्रुवम्। कोपो वा धर्मशीलस्य धर्मलोपोऽथवा पुनः॥ धर्मलोपो गरीयान्वै स्यादत्रेत्यकरोन्मनः। उत्तिष्ठ त्वं महाभाग सूर्योऽस्तमुपगच्छति'॥ इति भर्तृकोपमप्यङ्गीकृत्य प्राबोधयदिति प्रतिपादनादवगम्यते। तथा रामायणे विश्वामित्रेण रामप्रबोधनं कृतमित्युक्तम्— 'उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम्।' इत्यादि॥

आपदि सुप्तस्यापि प्रबोधनं च विराटे— 'अभ्यभाषत पाञ्चाली भीमसेनमनिन्दिता। उत्तिष्ठोत्तिष्ठ किं शेषे भीमसेन मृतो यथा॥ बाहुभ्यां परिरभ्यैनं प्राबोधयदनिन्दिता।' इति॥

ततो रामः अपराधिनं वायसमुद्दिश्य संस्तरदर्भमादाय ब्रह्मास्त्रेण संयोज्य क्षिप्तवान्॥

ततस्तं वायसं दर्भः सोऽम्बरेऽनुजगाम ह ।
स च पित्रा परित्यक्तः सुरैः सर्वैर्महर्षिभिः ॥
त्रीन् लोकान् संपरिक्रम्य तमेव शरणं गतः ।

अनेन महापुरुषेषु प्रसक्तः अपराधः तत्प्रणिपातादिनैव समाधातव्य इति सूचितम । तथा च **द्रोणपर्वणि शतरुद्रीये**— 'तं दृष्ट्वा तु सुराः सर्वे प्रणिपत्य महेश्वरम । रुद्रस्य यज्ञभागं च विशिष्टं ते त्वकल्पयन् ॥ भयेन त्रिदशा राजन् शरणं च प्रपेदिरे । तेन चैवातिकोपेन स यज्ञः स्तम्भितस्तदा ॥' इति ॥

**आदिपर्वण्यपि** और्वतेजसा परिमुषितलोचनानां हैहयानां पुनस्तत्प्रसादेनैव चक्षुःप्राप्तिरुक्ता **और्वोपाख्याने**— 'ततस्ते क्षत्रिया जग्मुस्तं गर्भं हन्तुमुद्यताः । ददृशुर्ब्राह्मणीं तेऽथ दुद्रुवुस्तामनिन्दिताम ॥ ततो गर्भः स भित्त्वोरुं ब्राह्मण्या निर्जगाम ह । मुष्णन्दृष्टीः क्षत्रियाणां मध्याह्न इव भास्करः ॥ ततश्चक्षुर्विहीनास्ते गिरिदुर्गेषु बभ्रमुः । ब्राह्मणीं शरणं जग्मुर्दृष्ट्यर्थं तामनिन्दिताम ॥ सपुत्रा त्वं प्रसादं नः कर्तुमर्हसि शोभने ॥

ब्राह्मणी— नाहं गृह्णामि वस्ताता दृष्टीर्नास्मि रुषान्विता । तमिमं याचत क्रुद्धमौर्वं मम सुतोत्तमम् ॥ एवमुक्तास्ततस्सर्वे राजानस्ते तमूरुजम् । ऊचुः प्रसीदेति तदा प्रसादं च चकार सः । चक्षूंषि प्रतिलब्ध्वा च प्रतिजग्मुस्ततो नृपाः ॥' इति ॥

त्रिपुरदाहे—'पुराणि दग्धवन्तं तं देवा याताः प्रवीक्षितुम । बालमङ्कगतं कृत्वा स्वयं पञ्चशिखं पुनः । असूयतश्च शक्रस्य वज्रेण प्रहरिष्यतः ॥ बाहुं सवज्रं तं तस्य क्रुद्धस्यास्तम्भयत्प्रभुः ।

प्रहस्य भगवांस्तूर्णं सर्वलोकेश्वरः प्रभुः ॥ ततः संस्ताम्भितभुजः शक्रो देवगणैर्वृतः । जगाम ससुरस्तूर्णं ब्रह्माणं प्रभुमव्ययम् ॥ ते तं प्रणम्य शिरसा प्रोचुः प्राञ्जलयस्तदा । बालरूपधरं दृष्ट्वा नास्माभिरभिवादितः ॥ तस्मात्त्वां प्रष्टुमिच्छामो निर्जिता येन वै वयम् । अयुध्यता हि बालेन लीलया सपुरन्दराः ॥ तेषां तद्वचनं श्रुत्वा ब्रह्मा ब्रह्मविदां वरः । उवाच भगवान ब्रह्मा शक्रादींश्च सुरोत्तमान् । न संबुबुधिरे चैनं देवास्तं भुवनेश्वरम् ॥ ते मया सहिता यूयं प्रपद्यध्वं तमेव हि । अथाभ्येत्य ततो ब्रह्मा दृष्ट्वा च स महेश्वरम् ॥ अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तं पितामहः ॥'

ब्रह्मोवाच—'भगवन् भूतभव्येश लोकनाथ जगत्पते । प्रसादं कुरु शक्रस्य त्वया क्रोधार्दितस्य वै ॥ पद्मयोनेर्वचः श्रुत्वा ततः प्रीतो महेश्वरः । अभवच्च पुनर्बाहुः प्रकृतिस्थो हि वज्रिणः । तेषां प्रसन्नो भगवान् सपत्नीको वृषध्वजः ॥' इति ॥

स तं निपतितं भूमौ शरण्यः शरणागतम् ॥

वधार्हमपि काकुत्स्थः कृपया पर्यपालयत् ।

अनेन वध्योऽपि शरणागतः संरक्षणीय इत्युक्तम् । तथा च श्रुतिः—'तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति' इति । ततो रामो विषण्णवदनमन्तिके निपतितं जयन्तमवलोक्य,

मोघं कर्तुं न शक्यं हि ब्राह्ममस्त्रं तदुच्यताम् ।

इत्यभिधाय,

ततस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम् ।

तदाप्रभृति काकानामेकमक्षि विधीयते ॥

अनेन एकस्यापराधात्काकजातिमात्रस्य एकाक्षत्वप्रतिपादनादन्येनापि महत्स्वपराधः कृतश्चेत्तज्जातिमात्रस्यानिष्टं भवतीति सूचितम् । अत एव युधिष्ठिरः एकस्याः कुन्त्या अपराधेन स्त्रीजातिमात्रं शशापेत्युक्तं शान्तिपर्वणि— 'भवत्या गूढमन्त्रत्वाद्वंचिताः स्म यदा भृशम् । शशाप च महातेजाः सर्वलोकेषु योषितः ॥ न गुह्यं धारयिष्यन्ति अतिदुःखसमान्विताः ।' इति ॥

मत्कृते काकमात्रे तु ब्रह्मास्त्रं समुदीरितम् ।
कस्माद्यो मां हरेत्त्वत्तः क्षमसे तं महीपते ॥

जानामि त्वां महावीर्यं महाबलपराक्रमम् ।
अपारपारमक्षोभ्यं गाम्भीर्यात्सागरोपमम् ॥
भर्तारं ससमुद्राया धरण्या वासवोपमम् ।
एवमस्त्रविदां श्रेष्ठः सत्यवान् बलवानपि ।
किमर्थमस्त्रं रक्षःसु न योजयसि राघव ॥

इति रहस्यमभिज्ञानं भाषमाणां सीतां बहुशः प्रशस्य सर्वथा दाशरथी रामलक्ष्मणौ अचिरादेव लंकामिमां प्रविश्य सगणं रावणमभिहत्य त्वां पुरीं त्वां प्रतिनेष्यतः । तदनुजानीहि प्रस्थातुमिमं जनं इत्याञ्जनेयेनाञ्जसाभिहिता सीता तमेवमवादीत्—

कौसल्या लोकभर्तारं सुषुवे यं मनस्विनी ।
तं ममार्थे सुखं पृच्छ शिरसा चाभिवादय ॥

स्रजश्च सर्वरत्नानि प्रिया याश्च वराङ्गनाः ।
ऐश्वर्यं च विशालायां पृथिव्यामपि दुर्लभम् ॥

पितरं मातरं चैव संमान्याभिप्रसाद्य च ।
अनुप्रव्राजितो रामं सुमित्रा येन सुप्रजाः ॥

आनुकूल्येन धर्मात्मा त्यक्त्वा सुखमनुत्तमम् ।
अनुगच्छति काकुत्स्थं भ्रातरं पालयन्वने ॥

सिंहस्कन्धो महाबाहुर्मनस्वी प्रियदर्शनः ।
पितृवद्वर्तते रामे मातृवन्मां समाचरन् ॥

अनेन ज्येष्ठभ्रातरि पितृवद्वर्तितव्यम् । तद्भार्यायां च मातृवद्वर्तितव्यमिति सूचितम् । तच्चायोध्याकाण्डे प्रतिपादितम् ॥

ह्रियमाणां तदा वीरो न तु मां वेद लक्ष्मणः ।
वृद्धोपसेवी लक्ष्मीवान् शक्तो न बहुभाषिता ॥

राजपुत्रः प्रियः श्रेष्ठः सदृशः श्वशुरस्य मे ।
मत्तः प्रियतरो नित्यं भ्राता रामस्य लक्ष्मणः ॥

नियुक्तो धुरि यस्यां तु तामुद्वहति वीर्यवान् ।
यं दृष्ट्वा राघवो नैव वृत्तमार्यमनुस्मरेत् ॥

स ममार्थाय कुशलं वक्तव्यो वचनान्मम ।
इदं ब्रूयाश्च मे नाथं शूरं रामं पुनः पुनः ॥

त्वमस्मिन् कार्यनियोगे प्रमाणं हरिसत्तम ।
राघवस्त्वत्समारम्भान्मयि यत्नपरो भवेत् ॥

जीवितं धारयिष्यामि मासं दशरथात्मज ।
ऊर्ध्वं मासान्न जीवेयं सत्येनाहं ब्रवीमि ते ॥

रावणेनोपरुद्धां मां निकृत्या पापकर्मणा ।
त्रातुमर्हसि वीर त्वं पातालादिव कौशिकीम् ॥

इत्यभिधाय वस्त्रगतं चूडामणिं च हनूमते प्रदाय,

अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि ॥

जीवन्तीं मां यथा रामः संभावयति कीर्तिमान् ।
स त्वया हनुमन्वाच्यो वाचा धर्ममवाप्नुहि ॥

अनेन राजकीयानां वाङ्मात्रेण धर्मलाभः उक्तः । तथा चाभियुक्ताः—'अनायासेन राजेन्द्र वाक्येनैकेन सिद्ध्यति । ब्रह्महत्याश्वमेधाभ्यां फलं राजोपसेविनाम् ॥' इति ॥

बलैस्समग्रैर्यदि मां रावणं जित्य संयुगे ।
विजयी स्वपुरीं यायात्तत्तु मे स्याद्यशस्करम् ॥

शरैस्तु संकुलां कृत्वा लंकां परबलार्दनः ।
मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥

(स्वबाहुबलमाश्रित्य यस्तु जीवति मानवः ।
स्वलोके लभते कीर्तिं परत्र च शुभां गतिम् ॥)

अनेन राज्ञां पराक्रमेण सर्वार्थसाधनमुत्कृष्टतरमिति सूचितम् । तथा चोद्योगे विदुरवचनम्-'वृत्तेः कार्पण्यलब्धाया अप्रतिष्ठैव ज्यायसी । विक्रमोपार्जितान् भोगान् वृणीध्वं जीवितादपि ॥ विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः । मनो मनुष्यस्य सदा प्रीणाति पुरुषोत्तमम् ॥ शूरस्यार्जितसत्वस्य सिंहविक्रान्तचारिणः । दिष्टभावं गतस्यापि मोदन्ते यदिह प्रजाः ॥' इति ॥

इति वदन्तीं सीतां हनुमानिदमाचचक्षे— स्कन्धे समारोप्य रामलक्ष्मणौ सानुचरं सुग्रीवंचादायाचिरादेवाहमागच्छामि ॥

मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः ।
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ ॥

अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः ।
न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥

अनेन उत्कृष्टा निकृष्टे कार्ये न प्रेषणीया इत्युक्तम् । तथा च उद्योगे विदुरः— 'उत्तमानुत्तमेष्वेव मध्यमेषु च मध्यमान् । जघन्येषु जघन्यांश्च नियोजयसि पार्थिव ॥' इति ॥

तदलमनेन निरर्थकचिन्ताप्रकारेण ।

नास्मिंश्चिरं वत्स्यसि देवि देशे
रक्षोगणैरध्युषितेऽतिरौद्रे ।
न ते चिरादागमनं प्रियस्य
क्षमस्व मत्संगमकालमात्रम् ॥

इति अष्टात्रिंश-एकोनचत्वारिंशौ सर्गौ ।

---

## अथ चत्वारिंशः सर्गः ॥

चत्वारिंशे—ततः—

त्वां दृष्ट्वा प्रियवक्तारं संप्रहृष्यामि वानर ।
अर्धसंजातसस्येव वृष्टिं प्राप्य वसुन्धरा ॥

यथा तं पुरुषव्याघ्रं गात्रैः शोकाभिकर्शितैः ।
संस्पृशेयं सकामाहं तथा कुरु दयां मयि ॥

काकमात्रशिक्षणाय प्रक्षिप्तामिषीकाम् , गण्डपार्श्वनिवेशितं मनःशिलातिलकं च संस्मार्य वारिसंभवं चूडामणिं च प्रदाय क्षिप्रमेव रामागमनाय संविधत्स्व ॥

एतदेव हि रामस्य दृष्ट्वा मत्केशभूषणम् ।
श्रद्धेयं हनुमन् वाक्यं तव वीर भविष्यति ॥

इमं च तीव्रं मम शोकवेगं
रक्षोभिरेभिः परिभर्त्सनं च ।
ब्रूयास्तु रामस्य गतः समीपं
शिवश्च तेऽध्वास्तु हरिप्रवीर ॥

स राजपुत्र्या प्रतिबोधितार्थः
कपिः कृतार्थः परिहृष्टचेताः ।
अल्पावशेषं प्रसमीक्ष्य कार्यं
दिशं ह्युदीचीं मनसा जगाम ॥

इति चत्वारिंशः सर्गः ।

---

## अथ एकचत्वारिंशः सर्गः ॥

एकचत्वारिंशे—

स च वाग्भिः प्रशस्ताभिर्गमिष्यन्पूजितस्तया ।
तस्माद्देशादपक्रम्य चिन्तयामास वानरः ।

अल्पशेषमिदं कार्यं दृष्टेयमसितेक्षणा ।
त्रीनुपायानतिक्रम्य चतुर्थ इह दृश्यते ॥

न साम रक्षस्सु गुणाय कल्पते
न दानमर्थोपचितेषु युज्यते ।
न भेदसाध्या बलदर्पिता जनाः
पराक्रमस्त्वेव ममेह रोचते ॥

न चास्य कार्यस्य पराक्रमादृते
विनिश्चयः कश्चिदिहोपपद्यते ।
हतप्रवीरास्तु रणे हि राक्षसाः
कथंचिदीयुर्यदिहाद्य मार्दवम् ॥

अत्र राक्षसेषु सामोपायो न संभवतीत्युक्त्या शान्तबुद्धिषु साम प्रयोक्तव्यम् । अर्थोपचितेषु दानं नावकल्पत इत्युक्त्या दरिद्रेषु लुब्धेषु दानं प्रयोक्तव्यम् । बलगर्वितेषु सर्वतो भीतिविवर्जितेषु भेदो न प्रयोक्तव्य इत्युक्त्या भीतेष्वेव भेदः प्रयोक्तव्यः । उपायत्रयेण असाध्ये दण्डः प्रयोक्तव्य इति सूचितम् । तथा च **कामन्दके**— 'मैत्रीप्रधानं कल्याणबुद्धिं सान्त्वेन सन्नयेत् । लुब्धं तीक्ष्णं च दानेन सत्कृत्य वशमानयेत् ॥ भीतः स्वदोषवित्रस्तः कृतवैरोऽभिसान्त्वितः । इति भेद्याः समाख्याता भिन्द्यादेतान् परे स्थितान् ॥ सामादीनामुपायानां त्रयाणां विफले नये । विनयेन्नयसंपन्नो दण्डं दण्ड्येषु दण्डवित् ॥' इति ॥ **राजधर्मेऽपि**— 'सन्निपातो न मन्तव्यः शक्ये सति कथंचन । सान्त्वभेदप्रदानानां युद्धमुत्तरमुच्यते ॥' इति ॥

कार्ये कर्मणि निर्दिष्टे यो बहून्यपि साधयेत् ।
पूर्वकार्याविरोधेन स कार्यं कर्तुमर्हति ॥

न ह्येकः साधको हेतुः स्वल्पस्यापीह कर्मणः ।
यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने ॥

इहैव तावत्कृतनिश्चयो ह्यहं
यदि व्रजेयं प्लवगेश्वरालयम् ।
परात्मसंमर्दविशेषतत्त्ववि-
त्ततः कृतं स्यान्मम भर्तृशासनम् ॥

कथं नु खल्वद्य भवेत्सुखागतं
प्रसह्य युद्धं मम राक्षसैः सह ।
तथैव खल्वात्मबलं च सारव-
त्संमानयेन्मां च रणे दशाननः ॥

ततः समासाद्य रणे दशाननं
समन्त्रिवर्गं सबलप्रयायिनम् ।
हृदि स्थितं तस्य मतं बलं च वै
सुखेन मत्वाहमितः पुनर्व्रजे ॥

अनेन राजनिर्दिष्टे कार्ये बहूपायान् यो वेद, विचार्य च करोति, स एव दूतः कार्यसाधक इति सूचितम् । विचारकेणैव दूतेन कार्यसिद्धिः [इत्युक्तं] कामन्दके— 'स्वराष्ट्रपरराष्ट्राणामिति चेति च चिन्तयन् । अन्तपालांस्तु कुर्वीत मित्राण्याटविकांस्तथा ॥ जलस्थानानि मार्गांश्च विद्यात्स्वबलसिद्धये । नाविज्ञातः पुरं शत्रोः प्रविशेच्च न संसदि ॥ कालमीक्षेत कार्यार्थमनुज्ञातश्च

निष्पतेत् । सारवत्तां च राष्ट्रस्य दुर्गं तद्गुप्तिमेव च ॥ छिद्रं शत्रोर्विजानीयात्कोशमित्रबलानि च । युद्धाभ्यासारभूज्ञानं दूतकर्मेति कथ्यते ॥ दूतेनैव नरेन्द्रस्तु कुर्वीतारिविकर्षणम् ।' इति ॥

[इति] विचिन्त्य दशाननानुचरैः सह युद्धं कर्तुकामो मारुतिस्तरसा जानकीनिवासभूतां शिंशुपामेकां परित्यज्य अशोकवनिकां बभञ्ज ॥

इति एकचत्वारिंशः सर्गः ।

---

## अथ द्विचत्वारिंशः सर्गः ॥

द्विचत्वारिंशे— तदनु भयानकवेषेण मारुतिना प्रभग्नतरपादपं वनमवलोक्य 'कोऽयं कुतो वा अत्र समागतो वानरः, येन कृतसंभाषणासि' इति पृच्छन्तीः राक्षसीः सीता समभाषत—

यूयमेवाभिजानीत योऽयं यद्वा करिष्यति ।
अहिरेव ह्यहेः पादान् विजानाति न संशयः ॥

यथा अहेः पादानहिरेव जानाति, तथा मायाविनां मायां मायाविन एव जानत इत्युक्तं भवति । अत एव द्रोणपर्वणि मायाविनोऽलायुधस्य मायां माययेव ज्ञात्वा हैडिम्बिः माययैव तां मायामवधीदित्युक्तम् —'तां प्रेक्ष्य विहितां मायां राक्षसो राक्षसेन तु । ऊर्ध्वमुत्प्लुत्य हैडिम्बिस्तां मायां माययावधीत् ॥' इति ॥

ततो राक्षसीमुखावगतवनभंगवृत्तान्तेन रावणेन प्रेषितान् अशीतिसहस्रसंख्याकान् निशाचरान् उद्यमुद्गरादिनानाविधायुध-

धरानायसेन परिघेन सलीलमभिहत्य तोरणप्रदेशमाश्रितो मारुति-
रेवमचिन्तयत् ॥

इति द्विचत्वारिंशः सर्गः ।

---

## अथ त्रिचत्वारिंशः सर्गः ॥

त्रिचत्वारिंशे—

वनं भग्नं मया चैत्यप्रासादो न विनाशितः ॥

तस्मात्प्रासादमप्येवमिमं विध्वंसयाम्यहम् ।

इति संचिन्त्य सहर्षमेवमवादीत्—

अस्त्वविजयतां रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥

दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
हनूमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥

न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ।
शिलाभिस्तु प्रहरतः पादपैश्च सहस्रशः ॥

अर्दयित्वा पुरीं लंकामभिवाद्य च मैथिलीम् ।
समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥

अनेन दूतेन प्रभुस्तुतिः कर्तव्येति सूचितम् । तथा च **कामन्दके**— 'संतापं कुलमैश्वर्यं त्यागमुत्थानसौष्ठवम् । अक्षुद्रतां भद्रतां च भर्तुर्भेद्येषु दर्शयेत् ॥ ' इति । '**पृच्छ्यमानोऽपि न ब्रूयात्स्वस्वामिप्रकृतिच्युतिम्** । ' इति च ॥

ततः—

मादृशानां सहस्राणि विसृष्टानि महात्मनाम् ॥

बलिनां वानरेन्द्राणां सुग्रीववशवर्तिनाम् ।
अटन्ति वसुधां कृत्स्नां वयमन्ये च वानराः ॥

दशनागबलाः केचित्केचिद्दशगुणोत्तराः ।
केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ॥

सन्ति चौघबलाः केचित्केचिद्वायुबलोपमाः ।
अप्रमेयबलाश्चान्ये तत्रासन् हरियूथपाः ॥

ईदृग्विधैस्तु हरिभिर्वृतो दन्तनखायुधैः ।
शतैः शतसहस्रैश्च कोटीभिरयुतैरपि ॥

आगमिष्यति सुग्रीवः सर्वेषां वो निषूदनः ।
नेयमस्ति पुरी लंका न यूयं न च रावणः ॥

यस्मादिक्ष्वाकुनाथेन बद्धं वैरं महात्मना ॥

इति गर्जनेन दश दिशः कंपयन् तत्रत्यगुरुतरस्तम्भेना-
[न]न्तचैत्यपालान् महाबलान् निजघान ॥

इति त्रिचत्वारिंशः सर्गः ।

---

## अथ चतुश्चत्वारिंश-
## पंचचत्वारिंशषट्चत्वारिंशाः सर्गाः ॥

चतुश्चत्वारिंशप्रभृति षट्चत्वारिंशपर्यन्तम् —

ततो विदितैतद्वृत्तान्तेन रावणेन प्रहितं जम्बुमालिनं परिघेन,

सप्त मन्त्रिसुतानपि जानूरुकरपादतलमुष्टिप्रहारैः, विरूपाक्षयूपाक्षौ सालेन, प्रघसभासकर्णौ गिरिशृङ्गेण, दुर्धरं उपरि निपतनेन च निहत्य हनुमान् पुनस्तदेव तोरणमाजगाम ॥

इति चतुश्चत्वारिंशपञ्चचत्वारिंशषट्चत्वारिंशाः सर्गाः ।

---

## अथ सप्तचत्वारिंशः सर्गः ॥

सप्तचत्वारिंशे—ततः

निशम्य राजा समरोद्धतोन्मुखं
कुमारमक्षं प्रसमैक्षताग्रतः ॥

स तस्य दृष्टयर्पणसंप्रचोदितः
प्रतापवान्काञ्चनचित्रकार्मुकः ।
समुत्पपाताथ सदस्युदीरितो
द्विजातिमुख्यैर्हविषेव पावकः ॥

अनेन इंगिताकारचेष्टाभी राज्ञोऽभिप्रायं ज्ञात्वा तदनुसारेण भृत्यैर्वर्तितव्यमिति सूचितम् । तथा च कामन्दके—'भर्तुरन्वासने तिष्ठन् दृष्टिं नान्यत्र निक्षिपेत् । ब्रूयात्किमयमित्यस्य तिष्ठेदास्यं विलोकयन् ॥ इङ्गिताकारचेष्टाभ्यामिङ्गिताकारतत्त्ववित् । आज्ञां चावितथां कुर्याद्यथाशक्त्यविलम्बितम् ॥' इति ॥

स तस्य वेगं च कपेर्महात्मनः
पराक्रमं चारिषु रावणात्मजः ।
विचारयन् स्वं च बलं महाबलो
युगक्षये सूर्य इवाभिवर्धते ॥

ततः प्रतप्तचामीकरशोभितध्वजपताकादिभिरलंकृतं रथवरमास्थाय रुक्मपुंखशिखान् विशिखान सर्वाङ्गेषु प्रक्षिपन्तं समरोद्धतमक्षयमवलोक्य हनूमानित्थमचिन्तयत्—

न खल्वयं नाभिभवेदुपेक्षितः
पराक्रमो ह्यस्य रणेऽभिवर्धते ।
प्रमापणं त्वेव ममास्य रोचते
न वर्धमानोऽग्निरुपेक्षितुं क्षमः ॥

अनेन समरे वर्धमानः शत्रुर्नोपेक्षणीय इति सूचितम् । तथा च **आदिपर्वणि** धृतराष्ट्रं प्रति कणिकः— 'तालवत्कुरुते मूलं बालः शत्रुरुपेक्षितः । गहनेऽग्निरिवोत्सृष्टः क्षिप्रं संजायते महान् ॥ अग्निं स्तोकमिवात्मानं संधुक्षयति यो रिपुः । स वर्धमानो ग्रसते महान्तमपि संचयम् ॥' इति ॥

ततः अशनिनिकाशेन करतलप्रहारेण चूर्णिते रथे,

स तं परित्यज्य महारथो रथं
सकार्मुकः खड्गधरः खमुत्पतन् ।
तपोऽभियोगादृषिरुग्रवीर्यवान्
विहाय देहं मरुतामिवालयम् ॥

अनेन ऋषयस्तपसा स्वर्गं प्राप्नुवन्तीति सूचितम् । तथा च **तैत्तिरीयश्रुतिः**— 'तपसा देवा देवतामग्र आयन् । तपसा ऋषयः सुवरन्वविन्दन् ।' इति । तथा च **वनपर्वणि** पुलस्त्यतीर्थयात्रायाम— 'तपसा दग्धपाप्मासौ नाकपृष्ठे विराजति । पुण्ये गिरौ सुराष्ट्रेषु मृगपक्षिनिषेविते ॥ उज्जयन्ते स्म तप्ताङ्गो नाकपृष्ठे महीपते ।' इति ॥

ततः पदातिमक्षं पादयोः परिगृह्य महोरगं पक्षिराडिवास-भ्रमणपूर्वकं भूमाववताडयत् ॥

इति सप्तचत्वारिंशः सर्गः ।

---

## अथ अष्टचत्वारिंशः सर्गः ॥

अष्टचत्वारिंशे—

ततः स रक्षोधिपतिर्महात्मा
हनूमताक्षे निहते कुमारे ।
मनः समाधाय तदेन्द्रकल्पं
समादिदेशेन्द्रजितं सरोषम् ॥

त्वमस्त्रविच्छस्त्रविदां वरिष्ठः
सुरासुराणामपि शोकदाता ।
सुरेषु सेन्द्रेषु च दृष्टकर्मा
पितामहाराधनसंचितास्त्रः ॥

तवास्त्रबलमासाद्य नासुरा न मरुद्गणाः ।
न शेकुः समरे स्थातुं सुरेश्वरसमाश्रिताः ॥

न कश्चित्त्रिषु लोकेषु संयुगे नगतश्रमः ।
भुजवीर्याभिगुप्तस्तु तपसा चाभिरक्षितः ॥

देशकालविभागज्ञस्त्वमेव मतिसत्तमः ॥

न तेऽस्त्यशक्यं समरेषु कर्मणा
न तेऽस्त्यकार्यं मतिपूर्वमन्त्रणे ।

न सोऽस्ति कश्चित्त्रिषु संग्रहेषु वै
न वेद यस्तेऽस्त्रबलं बलं च ते ॥

अत्र कर्मणा पुरुषकारेण कर्तव्ये कार्ये अशक्यं ते नास्ति। मतिपूर्वमन्त्रणे अविज्ञेयं च किंचिन्नास्ति। संगृह्यन्ते भोगार्थं कर्मभिरिति संग्रहास्त्रयो लोकाः। तेषु मन्त्रबलं शरीरबलं च तव यो न वेद, तादृशो नास्ति। सर्वलोकप्रसिद्धशस्त्रास्त्रबलस्त्वमिति भावः ॥

ममानुरूपं तपसो बलं च ते
पराक्रमश्चास्त्रबलं च संयुगे।
न त्वां समासाद्य रणावमर्दिनं
मनः श्रमं गच्छति निश्चितार्थम् ॥

अत्र युद्धाय प्रेषणावसरे इन्द्राजितः स्तुतिकरणात् युद्धादिमहाकार्यप्रेषणावसरे पुत्रस्यापि स्तुतिः कर्तव्येति सूचितम्। अत एव द्रोणपर्वणि स्तुतिपूर्वकमेव पुत्रोऽभिमन्युः धर्मपुत्रेण युद्धाय प्रेषित इति प्रतिपादितम्—'अभिमन्यो वरं तात याचे त्वां दातुमर्हसि। पितृणां मातुलानां च सैन्यानां चैव सर्वशः ॥ भिन्ध्यनीकं युधि श्रेष्ठ द्वारं संजनयस्व नः। धनंजयसमं युद्धे त्वां वयं तात संयुगे ॥ प्रणिधायानुयास्यामः...' इति ॥

इदं हि दृष्ट्वा मतिमान् महाबलं
कपेः प्रभावं च पराक्रमं च।
त्वमात्मनश्चैव समीक्ष्य सारं
कुरुष्व वेगं स्वबलानुरूपम् ॥

बलावमर्दस्त्वयि सन्निकृष्टे
यथा गते शाम्यति शान्तशत्रौ ।
तथा समीक्ष्यात्मबलं परं च
समारभस्वास्त्रविदां वरिष्ठ ॥

अत्र शान्तशत्रौ त्वयि इतो निर्गते हनूमत्समीपं च गते सति बलावमर्दः सेनानाशो यथा [न] भवति, तथा समारभस्वेत्युक्त्या सेनोपद्रवपरिहारपूर्वकं युद्धावगमात् महारथलक्षणं सूचितम् । तथा च भारते—'आत्मानं सारथिं चाश्वान्पालयित्वा स्वकां चमूम् । परान् हिनस्ति यो राजा स महारथ उच्यते ॥' इति ॥

न वीर सेना गणशोच्यवन्ति
न वज्रमादाय विशालसारम् ।
न मारुतस्यास्ति गतिप्रमाणं
न चाग्निकल्पः करणेन हन्तुम् ॥

गणशोचि सकलसेनाहन्तरि शत्रौ सति तस्माच्छत्रोः स्वसेनाः स्वं न रक्षन्ति । कुण्ठितसारमायुधमादाय न प्रविश । मरुतोऽपत्यस्य हनूमतो गतेः प्रमाणं परिच्छेदो नास्ति । अप्रमेयशक्तिश्चायं वायुसूनुः हस्तपादादिभिः करणैः हन्तुमशक्यः । अतो हनूमान् सेनया वा आयुधेन वा हस्तपादादिभिः करणैर्वा [न] हनिष्यते । किं मादृशस्य अत्र इयान् संभ्रम इत्यवज्ञा न कर्तव्या इत्युक्त्या स्वल्पेऽपि शत्रौ अवज्ञा न प्रयोक्तव्येति सूचितम् । तथा चोद्योगे विदुरः— 'नावज्ञेयो रिपुः कश्चिद्दुर्बलोऽपि बलीयसा ।' इति ॥

तमेवमर्थं प्रसमीक्ष्य सम्यक्
स्वकर्मसाम्याच्च समाहितात्मा ।
स्मरंश्च दिव्यं धनुषोऽस्त्रवीर्यं
व्रजाक्षतं कर्म समारभस्व ॥

दिव्यास्त्रमात्रसाध्यो हनूमानिति भावः ॥

**न खल्वियं मतिः श्रेष्ठा यत्त्वां संप्रेषयाम्यहम् ।**

अत्र प्रख्यातवीर्यस्य राजपुत्रस्य तव वानरदूतनिग्रहाय प्रेषणमनुचितमित्युक्त्या क्षत्रियेण स्वसदृशैरेव योद्धव्यमिति सूचितम । तथा **चादिपर्वणि** कृपः— 'वृथाकुलसमाचारैर्न युध्यन्ते नृपात्मजाः ।' इति ॥

**इयं च राजधर्माणां क्षत्रस्य च मतिर्मता ॥**

अत्र क्षत्रियस्य स्वसमेनैव युद्धस्य युक्तत्वेऽपि शत्रोरतिशौर्ये राजधर्मात् क्षत्रियधर्माच्च विजातीयेनापि युद्धं कर्तव्यमिति सूचितम् । तथा **चादिपर्वणि**— 'आचार्ये त्रिविधा योनी राज्ञां शास्त्रविनिश्चये । तत्कुलीनश्च शूरश्च यश्च सेनां प्रकर्षति ॥ क्षत्रियाणां बलं श्रेष्ठं योद्धव्यं क्षत्रबन्धुना । शूराणां च नदीनां च दुर्विदाः प्रभवाः किल ॥' इति ॥

'न खल्वियं मतिः श्रेष्ठा' इत्यनेन अर्थान्तरमपि सूचितम । तथा च क्षत्रधर्मवशात् प्रेषयामीत्युक्त्या प्रियस्यापि पुत्रादेः युद्धप्रेषणं क्षत्रियाणां धर्म इति सूचितम् । अत एवातिप्रेमास्पदस्य पुत्रस्य युद्धप्रेषणं क्षत्रधर्म इति प्रतिपादितं **द्रोणपर्वणि**— 'यो हि भोज्ये पुरस्कार्यो यानेषु शयनेषु च । भूषणेषु च सोऽस्माभिर्बालो युधि पुरस्कृतः ॥' इति ॥

**ततः पितुस्तद्वचनं निशम्य प्रदक्षिणं दक्षसुतप्रभावः ।**
**चकार भर्तारमहीनसत्वो रणाय वीरः प्रतिपन्नबुद्धिः ॥**

अनेन महाकार्याय गमनसमये गुरुजनं प्रभुं च प्रदक्षिणीकृत्य गन्तव्यमिति सूचितम् । तथा च **भीष्मपर्वणि** शरतल्पगतस्य भीष्मस्य अप्राकृतजलाभिलाषिणस्तज्जलदानाय प्रवृत्तोऽर्जुनः भीष्मं प्रदक्षिणीकृतवानिति प्रतिपादितम्— 'ततः प्रदक्षिणं कृत्वा रथेन रथिनां वरः । शयानं भरतश्रेष्ठं सर्वशस्त्रभृतां वरम् ॥ अविध्यत्पृथिवीं पार्थः पार्श्वे भीष्मस्य दक्षिणे । उत्पपात ततो धारा वारिणो विमला शुभा । शीतस्यामृतकल्पस्य दिव्यगन्धरसस्य च ॥ अतर्पयत्ततः पार्थः शीतया जलधारया । भीष्मं कुरूणामृषभं दिव्यकर्मपराक्रमम् ॥' इति ॥

**आदिपर्वण्यपि** भर्त्राज्ञया पुत्रोत्पादनाय प्रस्थिता कुन्ती भर्तारं प्रदक्षिणीकृत्य गतवतीति प्रतिपादितम्— 'सा तथोक्ता तथेत्युक्त्वा तेन भर्त्रा वराङ्गना । अभिवाद्याभ्यनुज्ञाता प्रदक्षिणमवर्तत ॥' इति ॥

तदनु विविधायुधधरैर्यातुधानबलप्रधानैः सह समागतेन महेन्द्रविजयिना मेघनादेन निरन्तरतयाऽभिवृष्टं शरवर्षमवलोक्य सकलजनविस्मापकमुत्तमं संग्रामं वितन्वन्तं हनूमन्तमुपायान्तरासाध्यं विचिन्त्य पैतामहेनास्त्रप्रवरेण मेघनादः परिजग्राह ॥

**स वीर्यमस्त्रस्य कपिर्विचार्य**
**पितामहानुग्रहमात्मनश्च ।**
**विमोक्षशक्तिं परिचिन्तयित्वा**
**पितामहाज्ञामनुवर्तते स्म ॥**

अनेन समर्थेनापि महदाज्ञा नोल्लङ्घनीयेति सूचितम् । तथा च कामन्दके— 'महतां शासने तिष्ठेन्नावमन्येत कंचन ।' इति । मौसलेऽपि— 'गान्धार्या वचनं यत्तदृषीणां च परंतप । तन्नूनमन्यथा कर्तुं नैच्छत्स जगतः प्रभुः ॥' इति ॥

ग्रहणे चापि रक्षोभिर्महन्मे गुणदर्शनम् ।
राक्षसेन्द्रेण संवादस्तस्माद्गृह्णन्तु मां परे ॥

इति विचिन्त्य रक्षःकृतवधबन्धनादिकमखिलमप्यङ्गीचकार ॥

अनेन कार्यार्थिना परकृतावमानोऽपि सोढव्य इति सूचितम् । तथा च कामन्दके— 'समाक्रान्तो बलवता काङ्क्षन्भ्रंशिनीं श्रियम् । कौर्मं संकोचमास्थाय प्रकारमभिमर्षयेत् । काले प्राप्ते तु मतिमानुत्तिष्ठेत्क्रूरसर्पवत् ॥' इति । भगवद्याने-ऽपि— 'यस्तु निःश्रेयसं कृत्वा प्राप्तमेवाभिपद्यते । आत्मनो मानमुत्सृज्य स लोके सुखमेधते ॥' इति ॥

ततो यातुधानाः पितामहास्त्रबद्धमपि हनूमन्तम्,

बबन्धुः शणवल्कैश्च द्रुमचीरैश्च संहतैः ।
स बद्धस्तेन वल्केन विमुक्तोऽस्त्रेण वीर्यवान् ॥

ततो मेघनादः शणवल्कबन्धनेनास्त्रविमुक्तं हनूमन्तमवलोक्यैवमाचिन्तयत्—

अहो महत्कर्म कृतं निरर्थकं
न राक्षसैर्मन्त्रगतिर्विमृष्टा ।
पुनश्च नास्त्रे विहतेऽस्त्रमन्य-
त्प्रवर्तते संशयिताः स्म सर्वे ॥

अनेन एकवारं प्रयुक्तस्य महास्त्रस्य पुनः प्रयोगोऽनर्थाधायक इति सूचितम् ; तथा च **द्रोणपर्वणि अश्वत्थामानं प्रति दुर्योधनः**—'अश्वत्थामन् पुनः शीघ्रमस्त्रमेतत्प्रयोजय । व्यवस्थिता हि पाञ्चाला. पुनरेव जयैषिणः ॥ अश्वत्थामा तथोक्तस्तु तव पुत्रेण मारिष । सुदीनमतिनिःश्वस्य राजानमिदमब्रवीत् ॥ नैतदावर्तते राजन्नस्त्रं द्विर्नोपपद्यते । आवर्तयेद्धि हन्त्येतत्प्रयोक्तारमसंशयम् ॥' इति ॥

अथेन्द्रजित्तं प्रसमीक्ष्य मुक्त-
मस्त्रेण बद्धं द्रुमचीरसूत्रैः ।
व्यदर्शयत्तत्र महाबलं तं
हरिप्रवीरं सगणाय राज्ञे ॥

इति अष्टचत्वारिंशः सर्गः ।

---

## अथ एकोनपञ्चाशः सर्गः ॥

एकोनपंचाशे—

ततः स कर्मणा तस्य विस्मितो भीमविक्रमः ।
हनूमान् रोषताम्राक्षो रक्षोऽधिपमवैक्षत ॥

भ्राजमानं महार्हेण काञ्चनेन विराजता ।
मुक्ताजालावृतेनाथ मकुटेन महाद्युतिम् ॥

वज्रसंयोगसंयुक्तैर्महार्हमणिविग्रहैः ।
हैमैराभरणैश्चित्रैर्मनसेव प्रकल्पितैः ॥

महार्हक्षौमसंवीतं रक्तचन्दनरूषितम् ।
स्वनुलिप्तं विचित्राभिर्विविधाभिश्च भक्तिभिः ॥

विपुलैर्दर्शनीयैश्च रक्ताक्षैर्भीमदर्शनैः ।
दीप्ततीक्ष्णमहादंष्ट्रैः प्रलम्बदशनच्छदैः ॥

शिरोभिर्दशभिर्वीरं भ्राजमानं महौजसम् ।
नानाव्याळसमाकीर्णैः शिखरैरिव मन्दरम् ॥

नीलाञ्जनचयप्रख्यं हारेणोरसि राजता ।
पूर्णचन्द्राभवक्त्रेण सबलाकमिवाम्बुदम् ॥

बाहुभिर्बद्धकेयूरैश्चन्दनोत्तमरूषितैः ।
भ्राजमानाङ्गदैः पीनैः पञ्चशीर्षैरिवोरगैः ।
महति स्फाटिके चित्रे रत्नसंयोगसंस्कृते ।
उत्तमास्तरणास्तीर्णे सूपविष्टं वरासने ॥

अलंकृताभिरत्यर्थं प्रमदाभिस्समन्ततः ।
वालव्यजनहस्ताभिरारात्समुपसेवितम् ॥

दुर्धरेण प्रहस्तेन महापार्श्वेन रक्षसा ।
मन्त्रिभिर्मन्त्रतत्वज्ञैर्निकुम्भेन च मन्त्रिणा ॥

उपोपविष्टं सचिवैश्चतुर्भिर्बलदर्पितैः ।
कृत्स्नं परिवृतं लोकं चतुर्भिरिव सागरैः ॥

मन्त्रिभिर्मन्त्रतत्त्वज्ञैरन्यैश्च शुभबुद्धिभिः ।
अन्वास्यमानं सचिवैः सुरैरिव सुरेश्वरम् ॥

अपश्यद्राक्षसपतिं हनूमानतितेजसम् ।
निविष्टं मेरुशिखरे सतोयमिव तोयदम् ॥

स तैः संपीड्यमानोऽपि रक्षोभिर्भीमविक्रमैः ।
विस्मयं परमं गत्वा रक्षोऽधिपमवैक्षत ॥

भ्राजमानं तदा दृष्ट्वा हनूमान् राक्षसेश्वरम् ।
मनसा चिन्तयामास तेजसा तस्य मोहितः ॥

अहो रूपमहो धैर्यमहो सत्वमहो धृतिः ।
अहो राक्षसराजस्य सर्वलक्षणयुक्तता ॥

यद्यधर्मो न बलवान् स्यादयं राक्षसेश्वरः ।
स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ॥

अनेन सक[illegible]दृष्टसामग्रीसंपन्नमपि अधर्मिष्ठं श्रीः परित्यजतीति सूचितम् । तथा च भारते— 'पापयुक्तो हि पुरुषः समृद्धार्थोऽपि नश्यति ।' इति । मोक्षधर्मे श्रीवचनमपि— 'सत्ये स्थितास्मि दाने च व्रते तपसि चैव हि । पराक्रमे च धर्मे च पराचीनस्ततो बलिः ॥ प्रोवाच लोकान्मूढात्मा मामेव भजतेत्ययम् । अपाक्रान्ता ततः शक्र त्वयि वत्स्यामि वासव ॥ अप्रमत्तेन धार्यास्मि तपसा विक्रमेण च ॥' इति ॥

इति एकोनपञ्चाशः सर्गः ।

---

## अथ पञ्चाशः सर्गः ॥

पञ्चाशे—अथ पिङ्गाक्षमुदीक्ष्य रोषारुणाक्षेण रावणेन कैलासमंचलनसमयसंप्रदत्तशापो नन्दीश्वर एवायमागतो वानरमूर्तिः, किंस्विद्बाणासुरो वा इति शंकाकलंकितान्तःकरणेन,

कोऽयमागतः, कस्य वा दूतो दुरात्मा, किंनिमित्तं च प्रमद-वनभञ्जनमित्यखिलेन विचार्यतामिति प्रचोदितः प्रहस्तो वानर-मेवमुवाच —

समाश्वसिहि भद्रं ते न भीः कार्या त्वया कपे ॥

तत्त्वतः कथयस्वाद्य ततो वानर मोक्ष्यसे ।
अनृतं वदतश्चापि दुर्लभं तव जीवितम् ॥

अनेन पराभिप्रायः समाश्वास्य विपक्षबाधकोपन्यासपूर्वकं ज्ञातव्य इति सूचितम् ॥

इन्द्रोपेन्द्रादिषु केन वा प्रेषितोऽसि इति प्रहस्तेन विहित-विविधानुयोगप्रपंचो मारुतिर्दशवदनमेवमवदत् ॥

इति पञ्चाशः सर्गः ।

---

## अथ एकपञ्चाशः सर्गः ॥

एकपञ्चाशे —

अहं सुग्रीवसन्देशादिह प्राप्तस्त्वदन्तिकम् ।
राक्षसेन्द्र हरीशस्त्वां भ्राता कुशलमब्रवीत् ॥

भ्रातुः शृणु समादेशं सुग्रीवस्य महात्मनः ।
धर्मार्थोपहितं वाक्यमिह चामुत्र च क्षमम् ॥

अत्र इह चामुत्र च क्षममित्युक्त्या ऐहिकामुष्मिकहितो-पदेष्टा जनः सन्मित्रम्, अतः तद्वचनमवश्यं ग्राह्यमिति सूचितम् । तथा चोद्योगे विदुरः— ' व्यसने क्लिश्यमानं च यो

मित्रं नाभिपद्यते । अनर्थज्ञो यथाशक्ति तं नृशंसं विदुर्बुधाः ॥ तत्समर्थं शुभं वाक्यं धर्मार्थसहितं हितम् । धार्तराष्ट्र सहामात्यो ग्रहीतुं त्वमिहार्हसि ॥' इति । प्राचीना अपि– 'पापान्निवारयति योजयते हिताय गुह्यं च गूहति गुणान्प्रकटीकरोति । आपद्गतं च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥' इति । 'धर्ममर्थं च कामं च मित्रात्तु त्रिविधं फलम् ।' इति च ॥

राजा दशरथो नाम रथकुञ्जरवाजिमान् ।
पितेव बन्धुर्लोकस्य सुरेश्वरसमद्युतिः ॥

ज्येष्ठस्तस्य महाबाहुः पुत्रः प्रियकरः प्रभुः ।
पितुर्निदेशान्निष्क्रान्तः प्रवृत्तो दण्डकावनम् ॥

लक्ष्मणेन सह भ्रात्रा सीतया चापि भार्यया ।
रामो नाम महातेजा धर्म्यं पन्थानमाश्रितः ॥

तस्य भार्या वने नष्टा सीता पतिमनुव्रता ।
वैदेहस्य सुता राज्ञो जनकस्य महात्मनः ॥

स मार्गमाणस्तां देवीं राजपुत्रः सहानुजः ।
ऋश्यमूकमनुप्राप्तः सुग्रीवेण च संगतः ॥

तस्य तेन प्रतिज्ञातं सीतायाः परिमार्गणम् ।
सुग्रीवस्यापि रामेण हरिराज्यं निवेदितम् ॥

ततस्तेन मृधे हत्वा राजपुत्रेण वालिनम् ।
रामेण निहतः संख्ये शरेणैकेन वानरः ॥

स सीतामार्गणे व्यग्रः सुग्रीवः सत्यसंगरः ।
हरीन् संप्रेषयामास दिशः सर्वा हरीश्वरः ॥

तां हरीणां सहस्राणि शतानि नियुतानि च ।
दिक्षु सर्वासु मार्गन्ते ह्यधश्चोपरि चाम्बरे ॥
वैनतेयसमाः केचित्केचित्तत्रानिलोपमाः ।
असंगगतयः शीघ्रा हरिवीरा महाबलाः ॥
अहं तु हनुमान्नाम मारुतस्यौरसः सुतः ।
सीतायास्तु कृते तूर्णं शतयोजनमायतम् ॥
समुद्रं लंघयित्वैव तां दिदृक्षुरिहागतः ।
भ्रमता च मया दृष्टा गृहे ते जनकात्मजा ॥
तद्भवान् दृष्टधर्मार्थस्तपःकृतपरिग्रहः ।
परदारान्महाप्राज्ञ नोपरोद्धुं त्वमर्हसि ॥
न हि धर्मविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥
कश्च लक्ष्मणमुक्तानां रामकोपानुवर्तिनाम् ।
शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि ॥
न चापि त्रिषु लोकेषु राजन्विद्येत कश्चन ।
राघवस्य व्यलीकं च कृत्वा सुखमवाप्नुयात् ॥
तत्त्रिकालहितं वाक्यं धर्म्यमर्थानुबन्धि च ।
मन्यस्व नरदेवाय जानकी प्रतिदीयताम् ॥
दृष्टा हीयं मया देवी लब्धं यदिह दुर्लभम् ।
उत्तरं कर्म यच्छेषं निमित्तं तत्र राघवः ॥
लक्षितेयं मया सीता तथा शोकपरायणा ।
गृह्य यां नाभिजानासि पंचास्यामिव पन्नगीम् ॥

नेयं जरयितुं शक्या सासुरैरमरैरपि ।
विषसंसृष्टमत्यर्थं भुक्तमन्नमिवौजसा ॥

अनेन विषसंसृष्टमन्नं भुक्तं चेज्जीरणाय नागच्छतीत्युक्त्या सर्वविधविषान्नं प्राणहानिकरम्, अतः अप्रमादेन परीक्षितमन्नमेव भोक्तव्यमिति सूचितम्। तथा च कामन्दके—'याने शय्यासने पाने भोज्ये वस्त्रे विभूषणे। सर्वत्रैवाप्रमत्तः स्याद्बुध्येत विषदूषितम् ॥ विषघ्नैरुदकैः स्नातो विषघ्नमणिभूषितः। परीक्षितं समश्नीयाज्जाङ्गलीविद्भिषग्वृतः ॥ भृङ्गराजः शुकश्चैव शारिका चेति पक्षिणः। क्रोशन्ति भृशमुद्विग्ना विषपन्नगदर्शनात् ॥ चकोरस्य विरज्येते नयने विषदर्शनात्। सुव्यक्तं माद्यति क्रौञ्चो म्रियते मत्तकोकिलः ॥ जीवंजीवस्य च ग्लानिर्जायते विषदर्शनात्। एषामन्यतमेनापि समश्नीयात्परीक्षितम् ॥ मयूरपृषतोत्सर्गे न भवन्ति भुजङ्गमाः। तस्मान्मयूरपृषतौ भवने नित्यमुत्सृजेत् ॥ भोज्यमन्नं परीक्षार्थं प्रदद्यात्पूर्वमग्नये। वयोभ्यश्च ततो दद्यात्ततो लिङ्गानि लक्षयेत् ॥ धूमार्चिर्नीलता वह्नेः शब्दस्फोटश्च जायते। अन्नेन विषदिग्धेन वयसां मरणं भवेत् ॥ अक्लिन्नता सोदकत्वमाशु शैत्यं विवर्णता। अन्नस्य विषदिग्धस्य तथा स्निग्धत्वमेचके ॥ व्यञ्जनस्याशु शुष्कत्वं क्वथने श्यामफेनता। गन्धस्पर्शरसाश्चैव नश्यन्ति विषदूषणात् ॥ छायातिरिक्ता हीना वा द्रवे च विषदूषिते। दृश्यते राजिरूर्ध्वा च फेनमण्डलमेव च ॥ रसस्य नीला पयसश्च ताम्रा मद्यस्य तोयस्य च कोकिलाभा। श्यामा च दध्नो विषदूषितस्य मध्ये भवत्यूर्ध्वगता च रेखा ॥ आर्द्रस्य सर्वस्य भवेत्तु सद्यः प्रम्लानभावो विषदूषितस्य। उत्पक्वता क्वथिनी-

लता च प्रश्यामता चेति वदन्ति तज्ज्ञाः ॥ शुष्कस्य सर्वस्य विषोपसंगाद्विशीर्णता चाशु विवर्णता च । खरं मृदु स्यान्मृदुनः खरत्वं तदन्तिके चाल्पकजन्तुघातः ॥ प्रावारास्तरणानां च श्याम-मण्डलकीर्णता । तन्तूनां पक्ष्मणां रोम्णां स्याद्भ्रंशश्च विषाश्रयात् ॥ लोहानां च मणीनां च मलपङ्कोपदिग्धता । प्रभावस्नेहगुरुतावर्ण-स्पर्शवधस्तथा ॥ संशुष्कश्यामवक्त्रत्वं वाग्भंगो जृम्भणं मुहुः । स्खलनं वेपथुः स्वेद आवेगो दिग्विलोकनम् ॥ स्वकर्मणि स्वभूमौ स्यादनवस्थानमेव च । लिङ्गान्येतानि निपुणं लक्षयेद्विषदायि-नाम् ॥' इति (इति ह स्माहुरात्रेयाद्यो महर्षयः) ॥

वाहटेऽपि — 'अथातोऽन्नरक्षाध्यायं व्याख्यास्यामः— राजा राजगृहासन्ने प्राणाचार्यं निवेशयेत । सर्वदा स भवत्येवं सर्वत्र प्रतिजागृविः ॥ अन्नपाने विषाद्रक्षेद्विशेषेण महीपतेः । योगक्षेमौ तदायत्तौ धर्माद्या यन्निबन्धनाः ॥ ओदनो विषवान् सान्द्रो यात्यविस्राव्यतामिव । चिरेण पच्यते पक्वो भवेत्प-र्युषितोपमः ॥ मयूरकण्ठतुल्योष्मा मोहमूर्छाप्रसेककृत् । हीयते वर्णगन्धाद्यैः क्लिद्यते चन्द्रकाचितः ॥ व्यञ्जनान्याशु शुष्यन्ति श्याव[ध्याम]क्काथानि तत्र च । हीनातिरिक्ता विकृता छाया दृश्येत नैव वा ॥ फेनोर्ध्वराजीसीमन्ततन्तुबुद्बुद-संभवः । विच्छिन्नविरसा रागाः खाण्डवाः शाकमामिषम् ॥ नीला राजी रसे ताम्रा क्षीरे दधनि दृश्यते । श्यावा पीतासिता तक्रे घृते पानीयसन्निभा ॥ (मस्तुन्यपि कपोताभा राजी कृष्ण-तुषोदके ?) काळी मद्याम्भसोः क्षौद्रे हरितैलेऽरुणोपमा । पाकः फलानामामानां पक्वानां परिकोथनम ॥ द्रव्याणामार्द्रशुष्काणां

स्यातां म्लानिविवर्णते । मृदूनां कठिनानां च भवेत्स्पर्शविपर्ययः ॥ माल्यस्य स्फुटिताग्रत्वं म्लानिर्गन्धान्तरोद्भवः । श्याम[ध्याम]-मण्डलता वस्त्रे शदनं तन्तुपक्ष्मणाम् ॥ धातुमौक्तिककाष्ठाश्म-रत्नादिषु मलाक्तता । स्नेहस्पर्शप्रभाहानिः सप्रभत्वं तु मृण्मये ॥ विषदः श्यावशुष्कास्यो विलक्षो वीक्षते दिशः । स्वेदवेपथुमां-स्तब्धो [त्रस्तो] भीतः स्खलति जृम्भते ॥ प्राप्यान्नं सविषं त्वग्निरेकावर्तः स्फुटत्यति । शिखिकण्ठाभधूमार्चिरनर्चिर्वोग्रगन्ध-वान् ॥ म्रियन्ते मक्षिकाः प्राश्य काकः क्षामस्वरो भवेत् । उत्क्रोशन्ति च दृष्ट्वैतच्छुकदात्यूहशारिकाः ॥ हंसः प्रस्खलति ग्लानिर्जीवंजीवस्य जायते । चकोरस्याक्षिवैराग्यं क्रौञ्चस्य स्यान्म-दोदयः ॥ कपोतपरभृद्दक्षचक्रवाका जहत्यसून् । उद्वेगं याति मार्जारः शकृन्मुञ्चति वानरः ॥ हृष्येन्मयूरस्तद्दृष्ट्वा मन्दतेजो भवेद्विषम् । इत्यन्नं सविषं ज्ञात्वा त्यजेदेवं प्रयत्नतः ॥ यथा तेन विपद्येरन्नपि न क्षुद्रजन्तवः । स्पृष्टे तु कण्डूदाहोषा ज्वरार्ति-स्फोटसुप्तयः ॥ नखरोमच्युतिः शोफः सेकाद्या विषनाशनाः । शस्तास्तत्र प्रलेपाश्च सेव्यचन्दनपद्मकैः ॥ ससोमवल्कतालीस-पत्रकुष्ठामृतानतैः । लाला जिह्वोष्ठयोर्जाड्यमूषा चिमिचिमायनम् ॥ दन्तहर्षो रसाज्ञत्वं हनुस्तम्भश्च वक्त्रगे । सेव्याद्यैस्तत्र गण्डूषाः सर्वं च विषजिद्धितम् ॥ आमाशयगते स्वेदमूर्छाध्मानमदभ्रमाः । रोमहर्षो वमिर्दाहश्चक्षुर्हृदयरोधनम् ॥ विंदुभिश्चाचयोऽङ्गानां पक्वाशयगते पुनः । अनेकवर्णं वमति मूत्रयत्यतिसार्यते ॥ तन्द्रा कृशत्वं पाण्डुत्वमुदरं बलसंक्षयः । तयोर्वान्तविरिक्तस्य हरिद्रे कटभीं गुडम् ॥ सिन्दुवारितनिष्पावबाष्पिकाशतपर्विकाः । तण्डुलीयकमूलानि कुक्कुटाण्डमवल्गुजम् ॥ नावनाञ्जनपानेषु

योजयेद्विषशान्तये । विषपीताय दद्याच्च शुद्धायोर्ध्वमधस्तथा ॥ सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम । शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ॥ न सज्जते हेमपांगे पद्मपत्रेऽम्बुवद्विषम् । जायते विपुलं चायुर्गरेऽप्येष विधिः स्मृतः ॥ विरुद्धमपि चाहारं विद्याद्गरविषोपमम । आनूपमामिषं माषक्षौद्रक्षीरविरूढकैः ॥ विरुद्धयते सह बिसैर्मूलकेन गुडेन वा । विशेषात्पयसा मत्स्या मत्स्येष्वपि चिलीचिमः ॥ विरुद्धमम्लं पयसा सह सर्वं फलं तथा । तद्वत्कुलत्थवरककंगुवल्लमकुष्ठकाः ॥ भक्षयित्वा हरितकं मूलकादि पयस्त्यजेत् । वाराहं श्वाविधा-नाद्यादुदध्ना पृषतकुक्कुटौ ॥ आममांसानि पित्तेन माषसूपेन मूलकम् । अविं कुसुंभशाकेन बिसैः सह विरूढकम ॥ माषसूपगुडक्षीरदध्याज्यैर्लिकुचं फलम । फलं कदल्यास्तक्रेण दध्ना तालफलेन वा ॥ कणोषणाभ्यां मधुना काकमाचीं गुडेन वा । सिद्धां वा मत्स्यपचने पचने नागरस्य वा ॥ सिद्धामन्यत्र वा पात्रे कुर्यात्तामुषितां निशाम । मत्स्यनिस्तलनस्नेहसाधिताः पिप्पलीस्त्यजेत् ॥ कांस्ये दशाहमुषितं सर्पिरुष्णं त्वरुष्करे । भासो विरुध्यते शूल्यः कंपिल्लस्तक्रसाधितः ॥ ऐकध्यं पायससुराकृशराः परिवर्जयेत् । मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः । एकत्र वा समांशानि विरुध्यन्ते परस्परम । भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानतः ॥ मधुपुष्करबीजं च मधुमैरेयशार्करम । मंथानुपानः क्षैरेयो हारिद्रः कटुतैलवान ॥ उपोदकातिसाराय तिलकल्केन साधिता । बलाका वारुणीयुक्ता कुल्माषैश्च विरुध्यते ॥ भृष्टा वराहवसया सैव सद्यो निहन्त्यसून । तद्वत्तित्तिरिमत्राढ्यगोधालावकपिञ्जलाः ॥ ऐरण्डेनाग्निना सिद्धास्त-

त्तैलेन विमूर्छिताः । हारीतमांसं हारिद्रशूलकप्रोतपाचितम् ॥ हारिद्रवह्निना सद्यो व्यापादयति जीवितम् । भस्मपांसुपरिध्वस्तं तदेव च ससाक्षिकम् ॥ यत्किंचिद्दोषमुत्क्लेश्य न हरेत्तत्समासतः । विरुद्धं शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः ॥ द्रव्यैस्तैलेन [रेव] वा पूर्वं शरीरस्याभिसंस्कृतिः । व्यायामस्निग्धदीप्ताग्निवयःस्थ-बलशालिनाम् । विरोध्यपि न पीडायै सात्म्यमल्पं च भोजनम् ॥ ' इति ॥

अथातो [विषप्रतिषेधं] विचिकित्सितं व्याख्यास्यामः- 'मथ्यमाने जलनिधावमृतार्थं सुरासुरैः । जातः प्रागमृतोत्पत्तेः पुरुषो घोरदर्शनः ॥ दीप्ततेजाश्चतुर्दंष्ट्रो हरित्केशोऽनलेक्षणः । जगद्विषण्णं तं दृष्ट्वा तेनासौ विषसंज्ञितः ॥ हुंकृतो ब्रह्मणा मूर्तो ततः स्थावरजंगमे । सोऽध्यतिष्ठन्निजं रूपमुज्झित्वा वंचनात्मकम् ॥ स्थिरमत्युल्बणं वीर्यं यत्कन्देषु प्रतिष्ठितम् । कालकूटेन्द्रवत्साख्य-शृंगीहालाहलादिकम् ॥ सर्पलूतादिदंष्ट्रासु दारुणं जंगमं विषम् । स्थावरं जंगमं चेति विषं प्रोक्तमकृत्रिमम् ॥ कृत्रिमं गरसंज्ञं तु क्रियते विविधौषधैः । हन्ति योगवशेनाशु चिराच्चिरतराच्च तत् ॥ शोफपाण्डूदरोन्माददुर्नामादीन् करोति च । तीक्ष्णोष्णरूक्षविशदं व्यवाय्याशुकरं लघु ॥ विकाशि सूक्ष्ममव्यक्तरसं विषमपाकि च । ओजसो विपरीतं तत्तीक्ष्णाद्यैरन्वितं गुणैः ॥ वातपित्तोल्बणं [त्तरं] नृणां सद्यो हरति जीवितम् । विषं हि देहं संप्राप्य प्राग्दू-षयति शोणितम् ॥ कफपित्तानिलांश्चानु समं दोषान् सहाशयान् । ततो हृदयमास्थाय देहोच्छेदाय कल्पते ॥ स्थावरस्योपयुक्तस्य वेगे पूर्वे प्रजायते । जिह्वायाः श्यावता स्तम्भो मूर्च्छा त्रासः क्लमो

वमिः ॥ द्वितीये वेपथुः स्वेदो दाहः कण्ठे च वेदना । विषं चामाशयं प्राप्तं कुरुते हृदि वेदनाम् ॥ तालुशोषस्तृतीये तु शूलं चामाशये भृशम् । दुर्बले हरिते शूने जायेते चास्य लोचने ॥ पक्वाशयगते तोदहिध्माकासान्त्रकूजनम् । चतुर्थे जायते वेगे शिरसश्चातिगौरवम् । कफप्रसेको वैवर्ण्यं पर्वभेदश्च पञ्चमे । सर्वदोषप्रकोपश्च पक्वाधाने च वेदना ॥ षष्ठे संज्ञाप्रणाशश्च सुभृशं चातिसार्यते । स्कन्धपृष्ठकटीभंगो भवेन्मृत्युश्च सप्तमे ॥ [इत्यादि] ॥

प्राग्वाताजीर्णशीताभ्रदिवास्वप्नाहिताशनैः । दुष्टं दूषयते धातूनतो दूषीविषं स्मृतम् ॥ दूषीविषार्तं सुस्विन्नमूर्ध्वं चाधश्च शोधितम् । दूषीविषारिमगदं लेहयेन्मधुनाप्लुतम् ॥ [इत्यादि] सूयते पच्यते सद्यो गत्वा मांसं [च कृष्णताम्] सवेदनम् । प्रक्लिन्नं शीर्यतेऽभीक्ष्णं सपिच्छिलपरिस्रवम् ॥ कुर्यादमर्मविद्धस्य हृदयावरणं द्रुतम् ॥ [इत्यादि] ॥

सौभाग्यार्थं स्त्रियो भर्त्रे राज्ञे वारातिनोदिताः [चोदिताः]। गरमाहारसंपृक्तं यच्छन्त्यासन्नवर्तिनः ॥ नानाप्राण्यंगशमलविरुद्धौषधिभस्मनाम् । विषाणां चाल्पवीर्याणां योगो गर इति स्मृतः ॥ तेन पाण्डुः कृशोऽल्पाग्निः श्वासकासज्वरार्दितः । वायुना प्रतिलोमेन स्वप्नचिन्तापरायणः ॥ महोदरयकृत्प्लीही दीनवाग्दुर्बलोऽलसः । शोफवान् सतताध्मातः शुष्कपादकरः क्षयी ॥ स्वप्ने गोमायुमार्जारनकुलव्यालवानरान् । प्रायः पश्यति शुष्कांश्च वनस्पतिजलाशयान् ॥ मन्यते कृष्णमात्मानं गौरो गौरं च कालकः । विकर्णनासानयनं [पश्येत्तद्धि] पश्यत्युप-

हतेन्द्रियः ॥ एतैरन्यैश्च बहुभिः क्लिष्टो घोरैरुपद्रवैः । गरार्तो नाशमाप्नोति कश्चित्सद्योऽचिकित्सितः ॥ इत्यादि ॥

'तिलपुष्पफलाघ्राणभूबाष्पघनगर्जनैः । हस्तिमूषिकवादित्र-निस्वनैर्विषसंकटैः ॥ पुरोवातोत्पलामूल[मोद]मदनैर्वर्धते विषम् । वर्षासु चाम्बुयोनित्वात्संक्लेदं गुडवद्गतम् ॥ विसर्पति घनापाये तदगस्त्यो हिनस्ति च । प्रयाति मन्दवीर्यत्वं विषं तस्माद्घना-त्यये ॥ इति प्रकृतिसात्म्यर्तुस्थानवेगबलाबलम् । आलोच्य निपुणं बुद्ध्या कर्मानन्तरमाचरेत् ॥ इत्यादि च ॥

'अथातः सर्प[विष]प्रतिषेधं व्याख्यास्यामः— दर्वीकरा मण्डलिनो राजीमंतश्च पन्नगाः । त्रिधा समासतो भौमा भिद्यन्ते ते त्वनेकधा ॥ व्यासतो योनिभेदेन नोच्यन्तेऽनुपयोगतः । विशेषाद्रूक्षकटुकमम्लोष्णं स्वादु शीतलम् ॥ विषं दर्वीकरादीनां क्रमाद्वातादिकोपनम् । तारुण्यमध्यवृद्धत्ववृष्टिशीतातपेषु च ॥ विषोल्बणा भवन्त्येते व्यन्तरा ऋतुसंधिषु । रथाङ्गलांगलच्छत्र-स्वस्तिकांकुशधारिणः ॥ फणिनः शीघ्रगतयः सर्पा दर्वीकराः स्मृताः । ज्ञेया मण्डलिनोऽभोगा ? मण्डलैर्विविधैश्चिताः ॥ प्रांशवो मन्दगमना राजीमन्तस्तु राजिभिः । स्निग्धा विचित्रवर्णाभि-स्तिर्यगूर्ध्वं च चित्रिताः ॥ गोधाजातस्तु गौधेरो विषे दर्वीकरैः समः । चतुष्पाद्व्यंतरान् विद्यात्तेषामेव तु संकरात् ॥ व्यामिश्र-लक्षणास्ते हि सन्निपातप्रकोपनाः । आहारार्थं भयात्पादस्पर्शादति-विषात्क्रुधः ॥ पापवृत्तितया वैराद्देवर्षियमचोदनात् । दशन्ति सर्पास्तेषूक्तं विषाधिक्यं यथोत्तरम् ॥ आदिष्टात्कारणं ज्ञात्वा प्रतिकुर्याद्यथायथम् । व्यन्तरः पापशीलत्वान्मार्गमावृत्य[श्रित्य]

तिष्ठति ॥ यत्र लालापरिक्लेदमात्रं गात्रे प्रदृश्यते । न तु दंष्ट्राकृतं दंशं तत्तुण्डाहतमादिशेत ॥ एकं दंष्ट्रापदं द्वे वा व्यालीढाख्यमशोणितम । दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं त्रीणि तानि तु ॥ मांसच्छेदादविच्छिन्नरक्तवाहीनि दंष्ट्रकम् । दंष्ट्रापदानि चत्वारि तद्वद्दष्टनिपीडितम ॥ निर्विषं द्वयमत्राद्यमसाध्यं पश्चिमं वदेत् । विषं नाहेयमप्राप्य रक्तं दूषयते वपुः ॥ रक्तमण्वपि तत्प्राप्तं वर्धते तैलमम्बुवत् । भीरोस्तु सर्पसंस्पर्शाद्भयेन कुपितोऽनिलः ॥ कदाचित्कुरुते शोफं सर्पाङ्गाभिहतं तु तत । दुरन्धकारे विद्धस्य केनचिद्दष्टशंकया ॥ विषोद्रेको ज्वरश्छर्दिर्मूर्छा दाहोऽपि वा भवेत् । ग्लानिर्मोहोऽतिसारो वा तच्छंकाविषमुच्यते ॥ तुद्यते सविषो दंशः कंडूशोफरुजान्वितः । दह्यते ग्रथितः किंचिद्विपरीतस्तु निर्विषः ॥ पूर्वे दर्वीकृतां वेगे दुष्टं श्यावीभवत्यसृक् । श्यावता तेन वक्त्रादौ सर्पन्तीव च कीटकाः ॥ द्वितीये ग्रंथयो वेगे तृतीये मूर्ध्नि गौरवम । दृग्रोधो [दुर्गन्धो] दंशाविक्लेदश्चतुर्थे ष्ठीवनं वमिः ॥ संधिविश्लेषणं तन्द्रा पंचमे पर्वभेदनम । दाहो हिध्मा च षष्ठे तु हृत्पीडा गात्रगौरवम ॥ मूर्छा विपाकोऽतीसारः प्राप्य शुक्रं [क्रं] तु सप्तमे । स्कन्धपृष्ठकटीभंगः सर्वचेष्टानिवर्तनम् ॥

'अथ मण्डलिदष्टस्य दुष्टं पीतीभवत्यसृक् । तेन पीताङ्गता दाहो द्वितीये श्वयथूद्भवः ॥ तृतीये दंशविक्लेदः स्वेदस्तृष्णा च जायते । चतुर्थे ज्वर्यते दाहः पञ्चमे सर्वगात्रगः ॥ दष्टस्य राजिलैर्दुष्टं पाण्डुतां याति शोणितम् । पाण्डुता तेन गात्राणां द्वितीये गुरुताति च ॥ तृतीये दंशविक्लेदो नासिकाक्षिमुखस्रवाः ।

चतुर्थे गरिमा मूर्च्छा मन्यास्तंभश्च पंचमे ॥ वाक्यसंगो[गात्रभङ्गो] ज्वरः शीतः शेषयोः पूर्ववद्भवेत् [द्वदेत्] । कुर्यात्पंचसु वेगेषु चिकित्सां न ततः परम् ॥ जलाप्लुता रतिक्षीणा भीता नकुलनिर्जिताः । शीतवातातपव्याधिक्षुत्तृष्णाश्रमपीडिताः ॥ तूर्णं देशान्तरायाता विमुक्तविषकंचुकाः । कुशौषधीकंटकवद्ये चरन्ति च काननम् ॥ देशं च दिव्याध्युषितं सर्पास्तेऽल्पविषाः स्मृताः । स्मशानचितिचैत्यादौ पंचमीपक्षसंधिषु अष्टमीनवमीसंध्यामध्यरात्रदिनेषु च । याम्याग्नेयमघाश्लेषाविशाखापूर्वनैर्ऋते । नैर्ऋताख्ये मुहूर्ते च दष्टं मर्मसु च त्यजेत् । दष्टमात्रः सितास्याक्षः शीर्यमाणतनू [शिरो]रुहः ॥ स्तब्धजिह्वो मुहुर्मूर्छन् शीतोच्छ्वासो न जीवति । (वेपथुर्वेदना तीव्रा ग्रीवाभंगोऽक्षिरक्तता ॥ मूर्च्छा गलग्रहश्छर्दिः प्रेतराजस्य किंकरः ।)[हिध्मा श्वासो वमिः कासो दष्टमात्रस्य देहिनः । जायन्ते युगपद्यस्य स हृच्छूली न जीवति ।] फेनं वमति निःसंज्ञः श्यावपादकराननः । कासा-[नासा]वसादो भंगोऽङ्गे विक्लेदः श्लथसंधिता । विषपीतस्य दष्टस्य दिग्धेनाहि[भि]हतस्य च ॥ भवन्त्येतानि रूपाणि संप्राप्ते जीवितक्षये । न नस्यैश्चेतना तीक्ष्णैर्न क्षतात्क्षतजागमः ॥ दण्डाहतस्य नो राजी प्रयाति स [प्रयातस्य] यमान्तिकम् । अतोऽन्यथा तु त्वरया प्रदीप्तागारवद्भिषक् । रक्षन् कण्ठगतान् प्राणान् विषमाशु शमं नयेत् । मात्राशतं विषं स्थित्वा दंशे दष्टस्य देहिनः ॥ देहं प्रक्रमते धातून् रुधिरादीन्प्रदूषयन् । एतस्मिन्नन्तरे कर्म दंशस्योत्कर्तनादिकम् ॥ कुर्याच्छीघ्रं यथा दोषं [देहे] विषवल्ली न रोहति । दष्टमात्रे दशेदाशु तमेव पवना-

शनम् ॥ लो[हं]ष्टं महीं वा दशनैश्छित्वा चानु ससंभ्रमम् ॥ निष्ठीवेन समालिंपेद्दंशं कर्णमलेन वा ॥ दंशस्योपरि बध्नीयाद-रिष्टां चतुरंगुळे । क्षौमादिभिर्वेणिकया सिद्धैर्मन्त्रैश्च मन्त्रवित् ॥ अंबुवत्सेतुबन्धेन बन्धेन स्तभ्यते विषम् । न वहन्ति सिरास्तस्य विषं बन्धाभिपीडिताः ॥ निष्पीड्यानूद्धरेद्दंशं मर्मसंध्यगतं तथा । न जायते विषावेगो बीजनाशादिवांकुरः ॥ (मर्मगे प्राप्नुया-न्मृत्युं संधिस्थे विकलां गतिम् । ) दंशं मण्डलिनां मुक्त्वा पित्त-ळत्वादथापरम् । प्रतप्तैर्लोहहेमाद्यैर्दहेदाशूल्मुकेन वा ॥ करोति भस्मसात्सद्यो वह्निः किं नाम न क्षणात् । आचूषेत्पूर्णवक्त्रो वा मृद्भस्मागदगोमयैः ॥ प्रच्छायान्तरारिष्टायां मांसलं तु विशेषतः । अंगं सहैव दंशेन लेपयेदगदैर्मुहुः ॥ [इत्यादि] छत्री झर्झ[जर्ज]-रपाणिश्च चरेद्रात्रौ विशेषतः । तच्छायाशब्दवित्रस्ताः प्रणश्यन्ति भुजंगमाः । [इति च] ॥

'अथातः कीटलूतादि[विष]प्रतिषेधं व्याख्यास्यामः—सर्पा-णामेव विण्मूत्रशुक्राण्डशवकोथजाः । दोषैर्व्यस्तैः समस्तैश्च युक्ताः कीटाश्चतुर्विधाः ॥ दष्टस्य कीटैर्वायव्यैर्दंशस्तोदरुजोल्बणः । आग्नेयै-रल्पसंस्रावो दाहरागविसर्पवान् ॥ पक्वपीलुफलप्रख्यः खर्जूरसदृशो-ऽथवा । कफाधिकैर्मन्दरुजः पक्वोदुम्बरसन्निभः ॥ स्रावाढ्यः सर्वलिंगस्तु विवर्ज्यः सान्निपातिकैः । वेगाश्च सर्पवच्छोफो वर्धिष्णु-र्विस्नरक्तता । शिरोऽक्षिगौरवं मूर्छा भ्रमः श्वासोऽतिवेदना । सर्वेषां कर्णिका शोफो ज्वरः कंडूररोचकः ॥ (मात्स्यो दंशः सरुग्दाहः प्रावेगोक्तो जलौकसाम् । प्रायेण मक्षिका नेत्रे दंशन्ति श्वयथूल्बणाः ॥ तद्दंशो दाहकंडूमान् तासां तु स्फाणिकां त्यजेत् ।

तद्दंशे पिटिका रक्ताभा स्राविणी भूर्युपद्रवा ॥ वातिकः पक्षवातेन स्पर्शाद्दशति पैत्तिकः । मुखेन श्लैष्मिकः कीटः सर्वतः सान्निपातिकः ) ॥

'वृश्चिकस्य विषं तीक्ष्णमादौ दहति वह्निवत् । ऊर्ध्वमारोहति क्षिप्रं दंशे पश्चात्तु तिष्ठति ॥ दंशः सद्योऽतिरुक्श्यावस्तुद्यते स्फुटतीव च । ते गवादिशकृत्कोथादिग्ध(काष्ठादिकायतः) [दष्टादिकोथतः] ॥ सर्पकोथाच्च संभूता मन्दमध्यमहाविषाः । मन्दाः पीताः सिताः श्यावा रूक्षकर्बुरमेचकाः ॥ रोमशा बहुपर्वाणो लोहिताः पाण्डुरोदराः । धूम्रोदरास्त्रिपर्वाणो मध्यास्तु कपिलारुणाः ॥ पिंगळाः [पिशङ्गाः] शबलाश्चित्राः शोणिताभा महाविषाः । [अग्न्याभा द्व्येकपर्वाणो रक्तासितसितोदराः] । तैर्दष्टः सूतनयनः [शूनरसनः] स्तब्धगात्रो ज्वरार्दितः ॥ खैर्वमन् शोणितं कृष्णमिन्द्रियार्थानसंविदन् । स्विद्यन् मूर्छन् विशुष्कास्यो विह्वलो वेदनातुरः ॥ विशीर्यमाणमांसश्च प्रायशो विजहात्यसून् । उच्चिटिंगस्तु वक्त्रेण दशत्यभ्यधिकव्यथः ॥ साध्यतो वृश्चिकास्तम्भं शेफसो हृष्टरोमताम् । करोति सेकमंगानां दंशः शीतांबुनेव च ॥ उष्ट्रधूमः स वोक्तारः[एवोक्तो] रात्रिस्वा[चा]राच्च रात्रिकः । वातपित्तोत्तराः कीटाः श्लैष्मिकाः कणभोन्दुराः ॥ [प्रायो वातोल्बणविषा वृश्चिकाः सोष्ट्रधूमकाः ।] यस्य यस्यैव दोषस्य लिंगाधिक्यं प्रतर्कयेत् । तस्य तस्यौषधैः कुर्यात् विपरीतगुणैः क्रियाम् ॥ हृत्पीडोर्ध्वानिलस्तम्भः शिरायामोऽस्थिपर्वरुक् । घूर्णनोद्वेष्टने गात्रश्यावता वातिके विषे ॥ संज्ञानाशोष्णनिश्वासौ हृद्दाहः कटुकास्यता । मांसावदरणं शोफो रक्तपीतश्च पैत्तिके । छर्द्यरोचक-

हृल्लासप्रसेकोत्क्लेशपीनसैः । सशैत्यमुखमाधुर्यैर्विंद्यात श्लेष्माधिकं विषम् ॥ [इत्यादि] ॥

'श्लैष्मिकः कठिनः पाण्डुः परूपकफलाकृतिः । निद्रां शीतज्वरं कासं कण्डूं च कुरुते भृशम ॥ वातिकः परुषः श्यावः पर्वभेदज्वरप्रदः । तद्विभागं यथावस्थं[ स्वं च ] दोषलिंगैर्विभावयेत् ॥ असाध्यायां तु हृन्मोहश्वासहिध्माशिरोग्रहाः [ रुजाः] । श्वेताः पीताः सिता रक्ताः पिटिकाः श्वयथूद्भवाः ॥ वेपथुः श्वयथु-[वमथु]र्दाहस्तृड्डान्ध्यं वक्रनासता । श्यावोष्ण[ष्ठ]दन्तवक्त्रत्वं पृष्ठग्रीवावभंजनम ॥ पक्वजंबूसवर्णं च दंशात्स्रवति शोणितम । सर्वापि सर्वजा प्रायो व्यपदेशस्तु भूयसा ॥ तीक्ष्णमध्यावरत्वेन सा त्रिधा हन्त्युपेक्षिता । [इत्यादि] । श्वासदंष्ट्राशकृन्मूत्रशुक्ल[क्र]-लालानखार्तवैः ॥ अष्टाभिरुद्गमत्येषा विषं वक्त्रैर्विशेषतः । लूता नाभेर्देशात्यूर्ध्वमूर्ध्वं चाधश्च कीटकाः ॥ तद्दूषितं च वस्त्रादि देहे पृक्तं विकारकृत ॥ [इत्यादि] । इति तीक्ष्णं विषं मध्यं हीनं च विभजेदतः ॥ एकविंशतिरात्रेण विषं शाम्यति सर्वथा । अथाशु लूतादष्टस्य शस्त्रेणादंशमुद्धरेत ॥ [इत्यादि च] ॥

'अथातो मूषिकालर्कादि [विष] प्रतिषेधं व्याख्यास्यामः-लालनश्चपलः पुत्रो हसिरः [चिक्किरोजिरः] किसिरोजितः । कषा-यदन्तः कुलकः कोलिकः[कोकिलः] कपिलोऽसितः ॥ अरुणः शबलः श्वेतः कपोतः पलितोन्दुरः । दुण्डुदरो रलोश्वाख्यो [छुच्छुन्दरो रसालाख्यो] दशाष्टौ चेति मूषिकाः ॥ शुक्रं पतति यत्रैषां शुक्ल[क्र] दिग्धैः स्पृशन्ति वा । यदंगमंगैस्तत्रास्रे दूषिते पाण्डुतां गते ॥ ग्रन्थयः श्वयथुः कोथो मण्डलानि क्रमो[भ्रमो]-

ऽरुचिः । शीतज्वरोऽतिरुक्सादो वेपथुः पर्वभेदनम् ॥ रोमहर्षः स्रुतिर्मूर्छा दीर्घकालानुबन्धनम् । श्लेष्मानुविद्धवह्नाखुपोतकच्छर्दनं सतृट् ॥ व्यवाय्याखुविषं कृच्छ्रं भूयो भूयश्च कुप्यति । मूर्छाङ्ग-शोफवैवर्ण्यक्लेदशब्दाधृति [श्रुति] ज्वराः ॥ शिरोगुरुत्वं लालासृक्-छर्दिश्चासाध्यलक्षणम् । शूनबस्तिं विवर्णोष्ठमाखवाभैर्ग्रन्थि-भिश्चितम् ॥ छुच्छुन्दरसगन्धं च वर्जयेदाशु[खु]दूषितम् । शुनः श्लेष्मोल्बणा दोषाः संज्ञां संज्ञावहाश्रिताः ॥ मुष्णन्तः कुर्वते क्षोभं धातूनामतिदारुणम् । लालावानन्धबधिरः सर्वतः सोऽति-[भि]धावति ॥ स्रस्तपुच्छहनुस्कन्धशिरोदुःखी नताननः । दंशस्तेन विदष्टस्य सुप्तः कृष्णं क्षरत्यसृक् ॥ हृच्छिरोरुग्ज्वरस्तम्भस्तृष्णा मूर्छोद्भवोऽनु च । अनेनान्येऽपि बोद्धव्या व्याळा दंष्ट्राप्रहारिणः ॥ ( सृगालाश्वतराश्वर्क्षद्वीपिव्याघ्रवृकादयः । ) कंडूनिस्त्रे[स्तो]दवैवर्ण्य-सुप्तिक्लेदज्वरभ्रमाः ॥ विदाहरागरुक्पाकशोथग्रंथिविकुंचनम् । दंशावदरणं स्फोटाः कर्णिका मंडलानि च ॥ सर्वत्र सविषे लिंगं विपरीतं तु निर्विषे । दष्टो येन तु तच्चेष्टारुतं कुर्वन् विनश्यति ॥ पश्यंस्तमेव चाकस्मादादर्शसलिलादिषु । योऽद्भ्यस्त्रस्येददष्टोऽपि शब्दसंस्पर्शदर्शनैः ॥ जलसंत्रासनामानं दष्टं तमपि वर्जयेत् । आखुना दष्टमात्रस्य दंशं कांडेन दाहयेत् ॥ दर्पणेनाथवा तीव्ररुजा स्यात्कर्णिकान्यथा । दग्ध्वा[ग्धं] विस्रावयेद्दंशं प्रच्छिदं[न्नं] च प्रलेपयेत् ॥' इति च ॥

तपःसन्तापलब्धस्ते योऽयं धर्मपरिग्रहः ।
न स नाशयितुं न्याय्य आत्मप्राणपरिग्रहः ॥

अत्र तपस्संपादितस्य धर्मस्य परिग्रहः फलभूतमैश्वर्यम् , आत्मनः

प्राणपरिग्रहो जीवनं च, श्रीतापहाररूपदौरात्म्यात्, न प्रतिप्रदास्य इत्यसद्बुद्ध्या न नाशयितुं न न्याय्यमित्युक्तम् ॥

अनेन दौरात्म्यादसद्बुद्ध्या च जीवितैश्वर्ययोरुभयोर्हानिर्भवतीति सूचितम्। तथा चोद्योगे भीष्मः— 'इमां श्रियं प्रज्वलितां भारतीं सर्वराजसु। जीवतो धृतराष्ट्रस्य दौरात्म्याद्भ्रंशयिष्यति ॥ आत्मानं च सहामात्यं समित्रज्ञातिबान्धवम्। सहमित्रमसद्बुद्ध्या जीविताद्भ्रंशयिष्यति ॥' इति ॥

अवध्यतां तपोभिर्यां भवान् समनुपश्यति।
आत्मनः सासुरैर्देवैर्हेतुस्तत्राप्ययं महान् ॥

सुग्रीवो न हि देवोऽयं नासुरो न च दानवः।
न राक्षसो न गन्धर्वो न यक्षो न च पन्नगः।
तस्मात्प्राणपरित्राणं कथं राजन् करिष्यसि ॥

न तु धर्मोपसंहारमधर्मफलसंहितम्।
तदेव फलमन्वेति धर्मश्चाधर्मनाशनः ॥

प्राप्तं धर्मफलं तावद्भवता नात्र संशयः।
फलमस्याप्यधर्मस्य क्षिप्रमेव प्रपत्स्यसे ॥

अस्यार्थः— धर्मः उपसंह्रियते समाप्यतेऽस्मिन्निति धर्मोपसंहारं धर्मफलं सुखम्। तच्च अधर्मफलेन दुःखेन सह नोपभुज्यते। किंतु तदेव फलं धर्मफलमेवान्वेति, दुःखासंभिन्नतया पुरुषं प्राप्नोति। ननु कुत एतदित्यत आह— धर्मश्चेति। चकारो ह्यर्थे। यस्मात् धर्मः अधर्मस्य नाशनः अभिभावकः। इदमुपलक्षणम्— अधर्मफलमपि धर्मफलेन सह नोपभुज्यते। अधर्मफलमपि दुःखं

धर्मफलासंभिन्नमेव भवति, अधर्मस्य धर्माभिभावकत्वादित्यपि द्रष्टव्यम्। तथा च यत्र धर्मफलं प्रथमतः प्रवृत्तम्, तत्र तदेवोपभुज्यते। यत्र त्वधर्मफलं प्रथमतः प्रवृत्तम्, तत्र तदेवोपभुज्यते इति द्रष्टव्यम। तथा च परदारापहरणादिजनितपापस्य पूर्वप्रवृत्तेन धर्मेण निरुद्धत्वादेतावन्तमनेहसं धर्मफलं सुखमेव त्वयानुभूतम्, न तु परदारापहरणादिपापजनितं दुःखम्। सम्प्रति तस्य धर्मस्य उपशमादधर्मफलोपभोगः प्राप्तावसर इति। अत्र 'न तु धर्मोपसंहारमधर्मफलसंहितम्' इत्यनेन धर्माधर्मफलयोर्युगपद्भोगो न संभवति इति सूचितम्। तथा च मोक्षधर्मे— 'कदाचित्सुकृतं तात कूटस्थमिव [ह] तिष्ठति। सज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते॥ ततो दुःखक्षयं कृत्वा सुकृतं कर्म सेवते। सुकृतक्षयाद्दुष्कृतस्य तद्विद्धि मनुजाधिप॥' इति। स्वर्गारोहणिकेऽपि— 'अशुभानां शुभानां च द्वौ राशी पुरुषर्षभ। यः पूर्वं सुकृतं भुङ्क्ते पश्चान्नरकमेव सः॥ पूर्वं नरकभाग्यस्तु पश्चात्स्वर्गमुपैति सः॥' इति॥

ननु धर्माधर्मफलयोर्यौगपद्याभावे राज्यरोगयोः धर्माधर्मफलयोः कथमेकदोपभोग इति चेत् — न, कर्मवैचित्र्येण सुखदुःखयोर्युगपदनुभवसंभवात्। तथा हि— धर्मानुष्ठानसमये वैगुण्ये सति तत्फलं सुखमुत्पद्यमानं वैगुण्यप्रयुक्तक्लेशसहितमेव जायते। अत एव विगुणया पुत्रकामेष्ट्या कन्या जातेति प्रतिपादितं विष्णुपुराणे—'इष्टिं च मित्रावरुणयोर्मनुः पुत्रकामश्चकार। तत्रापहुते होतुरपचारादिळा नाम कन्या बभूव।' इति॥

अथवा तद्धेतुभूतसुकृतदुष्कृतयोः सहानुष्ठानेन तयोरपि युगपदनुभवसंभवात् । अत एव सहानुष्ठिततीव्रतपश्चरणस्वशरीरमात्रपोषणरूपधर्माधर्मफलयोर्ब्रह्मलोकावाप्तिक्षुत्पिपासाक्लेशयोर्युगपदुपभोगः प्रतिपादित उत्तरकाण्डे श्वेतोपाख्याने रामं प्रति अगस्त्यवचने—

'अथापश्यं शवं तत्र सुपुष्टमजरं क्वचित् । तिष्ठन्तं परया लक्ष्म्या तस्मिंस्तोयाशये नृप ॥ तमर्थं चिन्तयानोऽहं मुहूर्तं तत्र राघव । उषितोऽस्मि सरस्तीरे किन्विदं स्यादिति प्रभो ॥ तदापश्यं मुहूर्तेन दिव्यमद्भुतदर्शनम् । विमानं परमोदारं हंसयुक्तं मनोजवम् ॥ अत्यर्थं स्वर्गिणं तत्र विमाने रघुनन्दन । उपास्तेऽप्सरसां वीर सहस्रं दिव्यभूषणम् ॥ गायन्ति दिव्यगेयानि वादयन्ति तथापराः ॥ क्ष्वेळयन्ति तथा चान्या नृत्यन्त्यपि तथापराः ॥ अपराश्चन्द्ररश्म्याभैर्हेमदण्डैश्च चामरैः । दुधुवुर्वदनं तस्य पुण्डरीकनिभेक्षणम् ॥ ततः सिंहासनं त्यक्त्वा मेरुकूटमिवांशुमान् । पश्यतो मे तथा राम विमानादवरुह्य च ॥ तं शवं भक्षयामास स स्वर्गी रघुनन्दन । तथा भुक्त्वा यथाकामं मांसं बहु च सुष्ठु च ॥ अवतीर्य सरः स्वर्गी सम्स्प्रष्टुमुपचक्रमे । उपस्पृश्य यथान्यायं स स्वर्गी पुरुषर्षभ ॥ आरोढुमुपचक्राम विमानवरमुत्तमम् । तमहं देवसंकाशमारोहन्तमुदीक्ष्य वै ॥ अहं तदाब्रवं वाक्यं स्वर्गिणं पुरुषर्षभ । को भवान् देवसंकाश आहारश्च विगर्हितः ॥ त्वया संभुज्यते सौम्य किमर्थं वक्तुमर्हसि । आश्चर्यमीदृशो भावो भास्वरो देवसंमतः । आहारो गर्हितः सौम्य श्रोतुमिच्छामि

तत्त्वतः ॥ श्रुत्वा तु भाषितं वाक्यं मम राम शुभाक्षरम् । प्राञ्जलिः प्रत्युवाचेदं स स्वर्गी रघुनन्दन ॥ पुरा विदर्भको राजा पिता मम महायशाः । वसुदेव इति ख्यातस्त्रिषु लोकेषु वीर्यवान् ॥ तस्य पुत्रद्वयं राज्ञो द्वाभ्यां स्त्रीभ्यामजायत । अहं श्वेत इति ख्यातो यवीयान् सुरथोऽभवत् ॥ सोऽहं निमित्ते कस्मिंश्चित् विज्ञातायुर्द्विजोत्तम । कालधर्मं हृदि न्यस्य तपोवनमुपागमम् ॥ सोऽहं वनमिदं दुर्गं मृगपक्षिविवर्जितम् । तपश्चर्तुं प्रविष्टोऽस्मि समीपे सरसः शुभे ॥ सोऽहं वर्षसहस्राणि तपस्त्रीणि महामुने । कृत्वा सुदुष्करं प्राप्तो ब्रह्मलोकमनुत्तमम् ॥ तस्य मे स्वर्गिभूतस्य क्षुत्पिपासे द्विजोत्तम । बाधेते परमोदार ततोऽहं व्यथितेन्द्रियः । गत्वा त्रिभुवनश्रेष्ठं पितामहमुवाच ह ॥ पितामहस्तु मामाह तवाहारः सदैव च । स्वादूनि स्वानि मांसानि तानि भक्षय नित्यशः ॥ स्वशरीरं त्वया पुष्टं कुर्वता तप उत्तमम् । अनुप्तं रोहते श्वेत न कदाचिन्महामते ॥ दत्तं न त्वस्ति सूक्ष्मोऽपि वने सत्वनिषेविते । तेन स्वर्गगतो वत्स बाध्यसे क्षुत्पिपासया ॥ स त्वं सुपुष्टमाहारैः स्वशरीरमनुत्तमम् । भक्षयस्वामृतरसं तेन तृप्तिर्भविष्यति ॥ यदा तु तद्वनं घोर-मगस्त्यस्तु महानृषिः । आश्रयिष्यति दुर्धर्षस्तदा कृच्छ्राद्वि-मोक्ष्यसे ॥ स हि तारयितुं सौम्य शक्तः सुरगणानपि । किं पुनस्त्वां महाबाहो क्षुत्पिपासावशंगतम् ॥ सोऽहं भगवतः श्रुत्वा देवदेवस्य निश्चयम् । आहारं गर्हितं कुर्मि स्वशरीरं द्विजोत्तम ॥ बहुवर्षगणं ब्रह्मन् भक्ष्यमाणमिदं मया । क्षयं नाभ्येति ब्रह्मर्षे प्रसादं कर्तुमर्हसि ॥' इति ॥

एवं सहानुष्ठितधर्माधर्मफलयो राज्यरोगयोर्युगपदनुभवः संभवत्येव । क्वचित्तु धर्माधर्मयोः सत्यपि सहानुष्ठाने तत्फलयोः स्वर्गनरकयोः 'यन्न दुःखेन संभिन्नम्' इत्याद्यर्थवादेन परस्परासंभिन्नत्वावगमेन क्रमेणैवोपभोगः । अतः 'पूर्वं नरकभाग्यस्तु पश्चात्स्वर्गमुपैति सः ।' इत्यादिकं न विरुध्यते ॥

प्रकृते च रावणे तीव्रतपश्चरणपरितोषितब्रह्मप्रसादलब्धस्य चिरकालजीवित्वादिफलस्य परदारापहरणाद्यधर्मफलस्यानायुष्यादिरूपस्य च परस्परविरुद्धत्वात्तद्धेतुभूतयोर्धर्माधर्मयोः क्रमेणानुष्ठानाच्च क्रमेणैवोपभोगो युक्त इति 'प्राप्तं धर्मफलं तावद्भवता नात्र संशयः ।' इत्येतदुपपन्नमेव ॥

'तदेव फलमन्वेति' इत्यनेन आरब्धफलं कर्म संचितं कर्माभिभूय स्वफलं प्रयच्छतीति प्रतिपादनात् प्रारब्धफलस्य कर्मणः संचितकर्मापेक्षया प्राबल्यं सूचितम् । तात्कालिकमपि उत्कटं कर्म प्रारब्धमपि कर्माभिभूय स्वफलमेव प्रयच्छति । तदुक्तं **पराशरपुराणे**— 'अत्युत्कटैरिहत्यैस्तु पुण्यपापैः शरीरभृत् । प्रारब्धं कर्म विच्छिद्य भुङ्क्ते तत्फलमेव हि ॥ इहैव फलदं कर्म प्रारब्धं प्रतिबध्य च । फलं ददाति स्वप्ने वा जाग्रत्कालेऽथ वानघ ॥' इति । उत्कटेन विच्छिन्नफलकमपि कर्म न स्वरूपतो नश्यति, किंतु स्वफलशेषं कालान्तरे प्रयच्छति । तथा च **पराशरपुराणे**— 'प्रारब्धशेषं विच्छिन्नं पुनर्देहान्तरेण तु । युक्तो देही ततो भुङ्क्ते तं लंघयति कः शुक ॥' इति ॥

'धर्मश्चाधर्मनाशनः' इत्यनेन धर्मस्य अधर्मस्वरूपनाशक-

त्वमपि अस्तीति सूचितम् । तथा च **तैत्तिरीयश्रुतिः**— 'धर्मेण पापमपनुदति' इति । **गौतमोऽपि** धर्मस्याधर्मनाशकत्वं पूर्वपक्षसिद्धान्ताभ्यामाह— 'अथ खल्वयं पुरुषो याप्येन कर्मणा लिप्यते । यथैतदयाज्ययाजनमभक्ष्यभक्षणमवद्यवदनं शिष्टस्याक्रिया प्रतिषिद्धसेवनमिति । तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति मीमांसन्ते । न कुर्यादित्याहुः । न हि कर्म क्षीयत इति । कुर्यादित्यपरम् । पुनः सोमेनेष्ट्वा पुनः सवनमायन्तीति विज्ञायते । व्रात्यस्तोमेनेष्ट्वा । तरति सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते । अग्निष्टुताभिशस्यमानं याजयेदिति च' इति ॥

स चाधर्मनाशको धर्मोऽनेकविधः— नित्यकर्मदानप्रायश्चित्तवेदाभ्यासख्यापननामसंकीर्तनब्रह्मज्ञानभेदात् । तत्र नित्यकर्मणः पापनाशकत्वे **तैत्तिरीयश्रुतिः**— 'अग्निहोत्रं सायं प्रातर्गृहाणां निष्कृतिः स्विष्टं सुहुतं यज्ञक्रतूनां प्रायणं सुवर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमं वदन्ति ।' इति । 'अग्निहोत्रं वै देवा गृहाणां निष्कृतिमपश्यन्' इति च । **मानवेऽपि**— 'सन्ध्यामुपासते ये तु सततं संशितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम ॥' इति । तथा 'यदह्ना कुरुते पापं कर्मणा [कायेन] मनसा गिरा । आसीनः पश्चिमां सन्ध्यां प्राणायामैस्तु हन्ति तत् ॥ यद्रात्र्या कुरुते पापं कायेन मनसा गिरा । पूर्वां सन्ध्यामुपासीनः प्राणायामैस्तु हन्ति तत् ॥' इति ॥

दानस्य पापनिवर्तकत्वं च **आपस्तम्बधर्मे**— 'दानेन निर्दोषो भवति' इति । तथा 'अन्नादे भ्रूणहा मार्ष्टि' इति

च । प्रायश्चित्तस्य पापनिवर्तकत्वं तैत्तिरीयश्रुतौ— 'कूश्माण्डै-र्जुहुयाद्योऽपूत इव मन्येत यथा स्तेनो यथा भ्रूणहैवमेष भवति योऽयोनौ रेतः सिंचति यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यते' इति। गौतमोऽपि—'रहस्यं प्रायश्चित्तमविज्ञातदोषस्य' इत्युपक्रम्य 'ब्रह्महत्यासुरापानस्तेयगुरुतल्पेषु प्राणायामैस्तान्तोऽघमर्षणं जपेत् सममश्वमेधावभृथेन। सावित्रीं वा सहस्रकृत्व आवर्तयेत्पुनीते हैवात्मानं सर्वपापेभ्यो ह मुच्यते।' इति ॥

वेदाभ्यासस्य पापनिवर्तकत्वे मनुः— 'वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमा। नाशयन्त्याशु पापानि महापातक-जान्यपि ॥' इति। ख्यापनस्य पापनिवर्तकत्वं च शान्तौ राजधर्मे अर्जुनं प्रति युधिष्ठिरवाक्ये— 'धनंजय कृतं पापं कल्याणेनो-पहन्यते। ख्यापनेनानुतापेन दानेन तपसापि वा। निष्कृत्या तीर्थगमनात् श्रुतिस्मृतिजपेन वा ॥' इति ॥

नामसंकीर्तनात्पापनिवृत्तिश्च विष्णुपुराणे— 'यस्मिन्न्य-स्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने विघ्नो यत्र निवेशिता-त्ममनसो ब्राह्मोऽपि लोकोऽल्पकः। नित्यं चेतसि संस्थितो जड-धियां पुंसां ददात्यव्ययं किं चित्रं यदघं प्रयाति विलयं यत्राच्युते कीर्तिते ॥' इति। तथा 'अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः। पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥' इति ॥

ज्ञानेन पापनिवृत्तिश्च गीतायां प्रतिपादिता— 'यथै-धांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥' इति। मानवेऽपि— 'यथैधस्तेजसा वह्निः

प्राप्तं निर्दहति क्षणात् । तथा ज्ञानाग्निना पापं कृत्स्नं दहति वेदवित् ॥' इति ॥

तथा च उक्तविधया संचितानामनुत्कटानां कर्मणां तात्कालिकाभिभवेन फलोत्पत्तिप्रतिबन्ध एव । उत्कटेन तु कर्मणा प्रारब्धफलस्यापि कर्मणो विच्छेद इति स्थितिः ॥

जनस्थानवधं बुद्ध्वा बुद्ध्वा वालिवधं तथा ।
रामसुग्रीवसख्यं च बुध्यस्व हितमात्मनः ॥

कामं खल्वहमप्येकः सवाजिरथकुञ्जराम् ।
लंकां नाशयितुं शक्तस्तस्यैष तु न निश्चयः ॥

रामेण हि प्रतिज्ञातं हर्यृक्षगणसन्निधौ ।
उत्सादनममित्राणां सीता यैस्तु प्रधर्षिता ॥

अनेन समर्थोऽपि दूतः स्वाम्यनभिप्रेतं न कुर्यादिति सूचितम् । तथा च कामन्दके— 'भर्तृचित्तानुवर्तित्वं सद्वृत्तमनुजीविनाम् । रक्षांस्यपि हि गृह्यन्ते नित्यं छन्दानुवर्तनात् ॥' इति ॥

अपकुर्वन् हि रामस्य साक्षादपि पुरन्दरः ।
न सुखं प्राप्नुयादन्यः किं पुनस्त्वद्विधो जनः ॥

यां सीतेत्यभिजानासि येयं तिष्ठति ते वशे ।
काळरात्रीति तां विद्धि सर्वलंकाविनाशिनीम् ॥

तदलं कालपाशेन सीताविग्रहरूपिणा ।
स्वयं स्कन्धावसक्तेन क्षममात्मनि चिन्त्यताम् ॥

सीतायास्तेजसा दग्धां रामकोपप्रपीडिताम् ।
दह्यमानामिमां पश्य पुरीं साट्टप्रतोळिकाम् ॥

स्वानि मित्राणि मन्त्रींश्च ज्ञातीन् भ्रातॄन् सुतान्हितान् ।
भोगान्दारांश्च लंकां च मा विनाशमुपानय ॥

सत्यं राक्षसराजेन्द्र शृणुष्व वचनं मम ।
रामदासस्य दूतस्य वानरस्य विशेषतः ॥

सर्वान्लोकान् सुसंहृत्य सभूतान्सचराचरान् ।
पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः ॥

देवासुरनरेन्द्रेषु यक्षरक्षोगणेषु च ।
सिद्धेषु किन्नरेन्द्रेषु पतत्रिषु च सर्वशः ॥

सर्वभूतेषु सर्वत्र सर्वकालेषु नास्ति सः ।
यो रामं प्रतियुध्येत विष्णुतुल्यपराक्रमम् ॥

सर्वलोकेश्वरस्येह कृत्वा विप्रियमीदृशम् ।
रामस्य राजसिंहस्य दुर्लभं तव जीवितम् ॥

देवाश्च दैत्याश्च निशाचराश्च
गन्धर्वविद्याधरनागयक्षाः ।
रामस्य लोकत्रयनायकस्य
स्थातुं न शक्ताः समरेषु सर्वे ॥

ब्रह्मा स्वयम्भूश्चतुराननो वा
रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा ।

इन्द्रो महेन्द्रस्सुरनायको वा
त्रातुं न शक्ता युधि रामवध्यम् ॥

अनेन रामवध्यस्य स्वरक्षणमवश्यमित्युक्त्या महापुरुषापराधिनामन्यो रक्षको न भवतीति सूचितम् । तथा च द्रोणपर्वणि जयद्रथवधे अर्जुनः—'असुरसुरमनुष्याः पक्षिणो वोरगा वा पितृरजनिचरा वा ब्रह्मदेवर्षयो वा । चरमचरमपीदं यत्परं चापि तस्मात्तदपि मम रिपुं तं रक्षितुं नैव शक्ताः ॥' इति ॥

अत्र सर्गे प्रथमतः 'राक्षसेन्द्र हरीशस्त्वाम्' इत्यादिना रावणस्तुतिम्, 'राजा दशरथो नाम' इत्यादिना 'त्रातुं न शक्ता युधि रामवध्यम्' इत्यन्तेन राघवस्तुतिं च कृत्वैव कार्यस्य हनूमता निवेदनात् दूतैः पक्षद्वयस्तुत्यैव कार्यं वक्तव्यमिति सूचितम् । तथा च कामन्दके—'कुलेन नाम्ना द्रव्येण कर्मणा च महीयसा । कुर्याच्चतुर्विधं स्तोत्रं पक्षयोरुभयोरपि ॥' इति ॥

इति एकपञ्चाशः सर्गः ।

---

## अथ द्विपञ्चाशः सर्गः ॥

द्विपंचाशे—ततः कोपेन हनूमद्वधमाज्ञप्तवन्तं दशाननमवलोक्य विभीषणस्तात्कालिकोचितमिदमवोचत्—

क्षमस्व रोषं त्यज राक्षसेन्द्र
प्रसीद मद्वाक्यमिदं शृणुष्व ।
वधं न कुर्वन्ति परावरज्ञा
दूतस्य सन्तो वसुधाधिपेन्द्राः ॥

राजधर्मविरुद्धं च लोकवृत्तेश्च गर्हितम् ।
तव चासदृशं वीर कपेरस्य प्रमापणम् ॥

अनेन शास्त्रमविचार्य कामकारेण दण्डं कुर्वतो नरको भवतीति सूचितम् । तथा च राजधर्मे—'कामकारेण दण्डं तु यः कुर्यादविचक्षणः । स इहाकीर्तिसंयुक्तो मृतो नरकमाप्नुयात् ॥' इति ॥

धर्मज्ञश्च कृतज्ञश्च राजधर्मविशारदः ।
परावरज्ञो भूतानां त्वमेव परमार्थवित् ॥

गृह्यन्ते यदि रोषेण त्वादृशोऽपि विपश्चितः ।
ततः शास्त्रविपश्चित्त्वं श्रम एव हि केवलम् ॥

तस्मात्प्रसीद शत्रुघ्न राक्षसेन्द्र दुरासद ।
युक्तायुक्तं विनिश्चित्य दूते दण्डो विधीयताम् ॥

अनेन विचार्य अपराधानुगुणतया दण्डः कर्तव्य इति सूचितम् । तथा च राजधर्मे—'अपराधानुरूपेण दण्डं पापेषु कारयेत् । विनयेच्चापि दुर्वृत्तान प्रहारैरपि पार्थिवः ॥' इति ॥

असंशयं शत्रुरयं प्रवृद्धः
कृतं ह्यनेनाप्रियमप्रमेयम् ।
न दूतवध्यां प्रवदन्ति सन्तो
दूतस्य दृष्टा बहवो हि दण्डाः ॥

वैरूप्यमंगेषु कशाभिघातो
मौण्ड्यं तथा लक्षणसन्निपातः ।
एतान् हि दूते प्रवदन्ति दण्डान्
वधस्तु दूतस्य न नः श्रुतोऽपि ॥

अत्र अयं प्रवृद्धः शत्रुः, अप्रमेयमप्रियं च तेनाचरितम्, तथापि प्रमापणं न युक्तम्, किन्तु कशाभिघाताङ्कनादिकमेव युक्तमित्युक्तथा दूतकृत्यं परित्यज्य यः स्वमत्या किंचिद्वदति, तस्याङ्कनताडनादिकमेव युक्तमिति [सूचितम्]। तथा च **राजधर्मे**— 'दुष्टानां निग्रहो दण्डो हिरण्यं बाह्यतः क्रिया। व्यंगत्वं च शरीरस्य वधो नाल्पस्य कारणात्॥ शरीरपीडास्तास्ताश्च देहत्यागो विवासनम्।' इति॥

**न धर्मवादे न च लोकवृत्ते**
**न शास्त्रबुद्धिग्रहणेषु चापि।**
**विद्येत कश्चित्तव वीर तुल्य-**
**स्त्वं ह्युत्तमः सर्वसुरासुराणाम्॥**

**न चाप्यस्य कपेर्घाते कंचित्पश्याम्यहं गुणम्।**
**तेष्वयं पात्यतां दण्डो यैरयं प्रेषितः कपिः॥**

**साधुर्वा यदि वासाधुः परैरेष समर्पितः।**
**ब्रुवन् परार्थं परवान् न दूतो वधमर्हति॥**

**अस्मिन् हते वानरयूथमुख्ये**
**सर्वेऽपवादं प्रवदन्ति सन्तः।**
**न हि प्रपश्यामि गुणान् यशो वा**
**लोकापवादो भवति प्रसिद्धः॥**

अनेन यथोक्तवादी दूतो न वध्य इति सूचितम्। तथा च **राजधर्मे**—'न तु हन्यान्नृपो जातु दूतं कस्यांचिदापदि। दूतस्य हन्ता निरयानाविशेत्ससचिवैः सह॥

यथोक्तवादिनं दूतं क्षत्रधर्मरतो नृपः । यो हन्यात्पितरस्तस्य भ्रूणहत्यामवाप्नुयुः ॥' इति ॥

युद्धकाण्डे शुकवाक्येऽपि— 'न दूतान् घ्नन्ति काकुत्स्थ वार्यन्तां साधु वानराः । यस्तु हित्वा मतं भर्तुः स्वमतं संप्रभाषते । अनुक्तवादी दूतः सन् स दूतो वधमर्हति ॥ लुप्येते मे बलात्पक्षौ भिद्येते च तथाक्षिणी ॥ यां च रात्रिं मरिष्यामि जाये रात्रिं च यामहम् । एतस्मिन्नन्तरे काले त्वन्मया ह्यशुभं कृतम् ॥ सर्वं तदुपपद्येथा जिजह्यां यदि जीवितम् ॥' इति । कामन्दकेऽपि— 'उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा । ते वै यथार्थवक्तारो न वध्याः पृथिवीभुजाम् ॥' इति ॥

अत्र वधस्ताडनादिकमेव, 'यां च रात्रिं मरिष्यामि' इत्यादिना प्राणवियोगपर्यन्तव्यापारस्य निन्दितत्वात् ॥

तदक्रमेनेन निरर्थकदूतहननेन, तावेव रामलक्ष्मणौ निघ्नाद्याविति ॥

अत्र सर्गे रावणेनाज्ञप्तो हनूमद्वधः । विभीषणश्च तदनुज्ञां विनैव तद्विरुद्धतया च पुनः पुनः न स कर्तव्य इति प्रतिषेधति । तदसंगतम्, सभासद्भिः राजानुज्ञयैव वक्तव्यत्वात् । तथा च कामन्दके—'तन्नियोगेन च ब्रूयादर्थं सुपरिनिश्चितम् ।' इति । अपृष्टमपि राज्ञोऽनुमतं चेदेव कर्तव्यम् । तदपि कामन्दके —'समर्थयंश्च तत्पक्षं साधु भाषेत भाषितम् । विजानन्नपि न ब्रूयाद्भर्तुः क्षिप्त्वोत्तरं वचः । विगृह्य कथनं नैव न कुर्याज्ज्यायसा सह ॥' इति । तथा च राजाभिप्रायविरुद्धं विभी-

षणेन कथमुक्तमिति चेत् — न, 'नापृष्टः कस्यचिद्ब्रूयात्' इत्यादेः सर्वस्यापि विनोदार्थतया प्रवृत्तराजवचनविषयत्वात् ॥

राज्ञो धर्मलोपप्रसक्तौ आपत्प्रसक्तौ वा अपृष्टेनापि वक्तव्यमेव । तथा च कामन्दके— 'सुखप्रबन्धगोष्ठीषु वादे वा वादिनां मतम् । विजानन्नपि न ब्रूयाद्भर्तुः क्षिप्त्वोत्तरं वचः ॥ आपद्युन्मार्गगमने कार्यकालात्ययेषु च । अपृष्टोऽपि हितान्वेषी ब्रूयात्कल्याणभाषितम् ॥' उद्योगेऽपि—शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् । अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥' इति ॥

किं च, अकार्यप्रवृत्तराजविषयोपेक्षणे राज्ञः स्वस्य चानिष्टं भवति । तथा च कामन्दके— 'राजानं ये ह्युपेक्षन्ते सज्जमानं विकर्मसु । ते गच्छन्त्यकृतात्मानः सह तेन पराभवम् ॥ अकार्यात्प्रतिषेधश्च कार्ये चैवानुवर्तनम् । संक्षेपादिति सद्वृत्तं बन्धुमित्रानुजीविनाम् ॥' इति ॥

तथा च विभीषणः सकलनीतिशास्त्राभिज्ञः उपेक्षणे राज्ञोऽधर्ममपकीर्तिं च स्वस्य प्रत्यवायं च बन्धुत्वं भृत्यत्वमखिलमपि विचिन्त्य दूतहननरूपाधर्मवशेन धर्मलोपपरिहाराय अपृष्टोऽपि 'न कर्तव्योऽयं वधः' इत्युक्तवानिति ॥

इति द्विपञ्चाशः सर्गः ।

## अथ त्रिपञ्चाशः सर्गः ॥

**त्रिपंचाशे**— ततो रावणः—

**सम्यगुक्तं हि भवता दूतवध्या विगर्हिता ।**
**अवश्यं तु वधादन्यात्क्रियतामस्य निग्रहे ॥**

**इत्यभिधाय**—

**आज्ञापयद्राक्षसेन्द्रः पुरं सर्वं सचत्वरम् ।**
**लाङ्गूलेन प्रदीप्तेन रक्षोभिः परिणीयताम् ॥**

तदाज्ञप्ता राक्षसाश्च,

**शंखभेरीनिनादैस्ते घोषयन्तः स्वकर्मभिः ।**
**राक्षसाः क्रूरकर्माणश्चारयन्ति स्म तां पुरीम् ॥**

अनेन राजा सम्यक् सारापराधेन दण्ड्यान् दण्डयित्वा जनानामपि प्रत्ययोत्पादनाय सम्यक् दोषान् ख्यापयेदिति सूचितम् । तथा च **मनुः**— 'तेषां दोषानभिख्याप्य स्वे स्वे कर्माणि तत्वतः । कुर्वीत शासनं राजा सम्यक् सारापराधतः ॥ न हि दण्डादृते शक्यः कर्तुं पापस्य निग्रहः ।' इति ॥

तत इतस्ततो राक्षसैः परिकृष्यमाणो हनूमानित्थमचिन्तयत्—

**सर्वेषामेव पर्याप्तो राक्षसानामहं युधि ।**
**रामस्य किं तु प्रीत्यर्थं विषहिष्येऽहमीदृशम् ॥**

अनेन प्रभोः कार्यार्थितया प्राप्तोऽप्युपद्रवः सोढव्य इति सूचितम । तथा च **राजधर्मे**— 'काले धुरि नियुक्तानां वहतां भारमाहितम् । सीदतामपि कौन्तेय न कीर्तिरवसीदति ॥' इति ॥

ततो राक्षसीगणसमुदीरितं हनूमत्पीडनमाकर्ण्य दूयमान-
मानसा,

वैदेही शोकसंतप्ता हुताशनमुपागमत् ।
मंगळाभिमुखी तस्य सा तदासीन्महाकपेः ॥

उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् ।
यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः ॥

यदि वास्त्येकपत्नीत्वं शीतो भव हनूमतः ।
यदि कश्चिदनुक्रोशस्तस्य मय्यस्ति धीमतः ॥

यदि वा भाग्यशेषो मे शीतो भव हनूमतः ।
यदि मां वृत्तसंपन्नां तत्समागमलालसाम् ॥

स विजानाति धर्मात्मा शीतो भव हनूमतः ।
यदि मां तारयेदार्यः सुग्रीवः सत्यसंगरः ॥

अस्माद्दुःखाम्बुसंरोधाच्छीतो भव हनूमतः ॥

अत्र स्वोपकारकस्य हनूमतोऽनिष्टनिवृत्त्यै सीतया अग्नि-प्रार्थनाद्याचरणादन्यैरपि आपन्नः स्वोपकर्ता रक्षणीयः, अन्यथा प्रत्यवायो भवतीति सूचितम् । तथा च द्रोणपर्वणि भूरिश्रवसं प्रत्यर्जुनवाक्यम्—'यो यस्य युध्यतेऽर्थाय स वै रक्ष्यो नराधिप ।' इति । तथा च प्राचीनाः—'वृत्तिच्छेदविधौ द्विजातिमरणे मित्रापदां वारणे सम्प्राप्ते समरे कळत्रहरणे स्वामिग्रहे गोग्रहे । ये शक्ताः पुरुषाः पराङ्मुखतया कुर्वन्त्युदासीनतां तानालोक्य विलोकितुं मृगयते सूर्योऽपि सूर्यान्तरम् ॥' इति ॥

ततस्तीक्ष्णार्चिरव्यग्रः प्रदक्षिणशिखोऽनलः ।
जज्वाल मृगशावाक्ष्याः शंसन्निव शिवं कपेः ॥

अनेन अग्नेः प्रदक्षिणज्वालावत्त्वं कार्यसिद्धिसूचकमित्युक्तम् । तच्च प्रागेव अयोध्याकाण्डे उक्तम् ॥

हनूमज्जनकश्चापि पुच्छानलयुतोऽनिलः ।
ववौ स्वास्थ्यकरो देव्याः प्रालेयानिलशीतलः ॥

दह्यमाने च लांगूले चिन्तयामास वानरः ।
प्रदीप्तोऽग्निरयं कस्मान्न मां दहति सर्वतः ॥

दृश्यते च महाज्वालः करोति च न मे रुजम् ।
शिशिरस्येव संपातो लाङ्गूलाग्रे प्रतिष्ठितः ॥

अनेन महापुरुषमाग्निरपि न दहति इति सूचितम् । अत एव पुत्रवियोगजनितक्लेशेन आग्निं प्रविशन्तं वासिष्ठमग्निर्न ददाहेति प्रतिपादितं आदिपर्वणि— 'तदाग्निमित्थं भगवान् स विवेश महावने । तं तदा सुसमिद्धोऽपि न ददाह हुताशनः ॥ दीप्यमानोऽप्यमित्रघ्नः शीतोऽग्निरभवत्तदा ।' इति ॥

अथवा तदिदं व्यक्तं यद्दृष्टं प्लवता मया ।
रामप्रभावादाश्चर्यं पर्वतः सरितां पतौ ॥

यदि तावत्समुद्रस्य मैनाकस्य च धीमतः ।
रामार्थं संभ्रमस्तादृक् किमग्निर्न करिष्यति ॥

सीतायाश्चानृशंस्येन तेजसा राघवस्य च ।
पितुश्च मम सख्येन न मां दहति पावकः ॥

अनेन महापुरुषाश्रयवतां प्राप्ताप्यापदकिंचित्करी भवतीति सूचितम् । अत एव विष्णुसमाश्रयणात् प्रह्लादस्य सर्वापन्निवृत्तिरुक्ता विष्णुपुराणे— 'प्रह्लादः परमां भक्तिं य उवाच जनार्दने ॥ दैत्येन्द्रदीपितो वह्निः सर्वाङ्गोपचितो द्विज । न ददाह च यं वह्निः [विप्र] वासुदेवे हृदि स्थिते ॥ महार्णवान्तस्सलिले स्थितस्य चलतो मही । चचाल सकला यस्य पाशबद्धस्य धीमतः ॥ न भिन्नं विविधैः शस्त्रैर्यस्य दैत्यनिपातितैः । शरीरमद्रिकठिनैः सर्वत्राच्युतचेतसः ॥ विषानलोज्ज्वलमुखा यस्य दैत्यप्रचोदिताः । नान्ताय सर्पपतयो बभूवुरुरुतेजसः ॥ शैलैराक्रान्तदेहोऽपि यः स्मरन् पुरुषोत्तमम् । तत्याज नात्मनः प्राणान् विष्णुस्मरणदंशितः ॥ पतन्तमुच्चादवनिर्यमुपेत्य महामतिम् । दधार दैत्यपतिना क्षिप्तं स्वर्गनिवासिना ॥ यस्य संशोषणो वायुर्देहे दैत्येन्द्रचोदितः । अवाप संक्षयं सद्यश्चित्तस्थे मधुसूदने ॥ विषाणभङ्गमुन्मत्ता मदहानिं च दिग्गजाः । यस्य वक्षःस्थले प्राप्ता दैत्येन्द्रपरिणामिताः ॥ यस्य चोत्पादिता कृत्या दैत्यराजपुरोहितैः । बभूव नान्ताय पुरो गोविन्दासक्तचेतसः ॥ शम्बरस्य च मायानां सहस्रमतिमायिनः । यस्मिन प्रयुक्तं चक्रेण कृष्णस्य वितथीकृतम् ॥ दैत्येन्द्रसूदोपहृतं यस्य हालाहलं विषम् । जरयामास मतिमानविकारममत्सरी ॥ समचेता जगत्यस्मिन्यः सर्वेष्वेव जन्तुषु । यथात्मनि तथान्येषां परं मैत्रीगुणान्वितः ॥ धर्मात्मा सत्यशौचादिगुणानामाकरस्तथा । उपमानमशेषाणां साधूनां यः सदाभवत् ॥' इति ॥

[इति] संचिन्त्य विभक्तरक्षोगणसंबाधं पुरद्वारमासाद्य

मारुतिस्तोरणाश्रितं कालायसं कंचित् परिघं परिगृह्य,

स तान्निहत्वा रणचण्डविक्रमः
समीक्षमाणः पुनरेव लंकाम् ।
प्रदीप्तलाङ्गूलकृतार्चिमाली
व्यराजतादित्य इवांशुमाली ॥

इति त्रिपञ्चाशः सर्गः ।

अथ चतुःपञ्चाशः सर्गः ॥

चतुःपंचाशे— तदनु पवनात्मजो रजनीचरहननवन-भङ्गाभ्यामप्यपरिपूर्णमानसः,

दुर्गे विनाशिते कर्म भवेत्सुखपरिश्रमम् ।
अल्पयत्नेन कार्येऽस्मिन्मम स्यात्सफलः श्रमः ॥

यो ह्ययं मम लांगूले दीप्यते हव्यवाहनः ।
अस्य सन्तर्पणं न्याय्यं कर्तुमेभिर्गृहोत्तमैः ।

इत्यचिन्तयत् । अनेन प्रदीप्तस्याग्नेः संतर्पणमवश्यं कर्तव्यमिति सूचितम् । तथा चानुशासनिके देवरहस्ये— 'हव्यवाहस्य दीप्तस्य समिधं ये न जुह्वति । अग्निकार्येषु वै तेषां हव्यं नाश्नाति पावकः ॥' इति ॥

वर्जयित्वा महातेजा विभीषणगृहं प्रति ।
क्रममाणः क्रमेणैव ददाह हरियूथपः ॥

अनेन शत्रोः पुरे राष्ट्रे च शस्त्राग्न्यादिभिः पीडा कर्तव्येति सूचितम् । तथा च **राजधर्मे**— 'राष्ट्रं च पीडयेत्तस्य शस्त्राग्निविषपीडनैः ।' इति । **मनुरपि**-- 'उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् ।' इति ॥

अत्र विभीषणगृहं वर्जयित्वा इति विभीषणगृहवर्जनपूर्वकमितरगृहाणां दाहप्रतिपादनेन सुकृतशालिनं पुरुषं तदीयधर्म एव उपद्रवकारिण्यपि पुरुषे समीचीनबुद्ध्युत्पादनेन रक्षतीति सूचितम् । तथा च **प्राचीनाः**— 'वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुराकृतानि ॥' इति । संसर्गदोषो न भवतीत्यत्रापि **प्राचीनाः**—'सत्संगाद्भवति हि साधुता खलानां साधूनां न हि खलसंगमात् खलत्वम् । सौगन्ध्यं कुसुमभवं मृदेव धत्ते मृद्गन्धं न हि कुसुमानि धारयन्ति ॥' इति ॥

**देवाश्च सर्वे मुनिपुंगवाश्च**
**गन्धर्वविद्याधरकिंनराश्च ।**
**भूतानि सर्वाणि महान्ति तत्र**
**जग्मुः परां प्रीतिमतुल्यरूपाम् ॥**

अनेन श्रेयस्करकर्मकर्तरि सर्वभूतानि प्रीयन्त इति सूचितम् । तथा **चानुशासनिके**— 'अप्यदृष्टश्रवा देवाः पुरुषं धर्मचारिणम् । भूतिकर्माणि कुर्वाणं तं जनाः कुर्वते प्रियम् ॥' इति ॥

**इति चतुःपञ्चाशः सर्गः ।**

---

## अथ पञ्चपञ्चाशः सर्गः ॥

पञ्चपंचाशे— अथ लंकाप्रदीपनेन संतर्पितं वालाग्रस्थितं पावकं पयोनिधौ शमयित्वा सीतागतमानसो मारुतिरात्मानमेवमगर्हयत्—

लंकां प्रदहता कर्म किंस्वित्कृतमिदं मया ॥

धन्यास्ते पुरुषश्रेष्ठा ये बुद्ध्या कोपमुत्थितम् ।
निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा ॥

यः समुत्पतितं कोपं क्षमयैव निरस्यति ।
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥

अनेन बुद्ध्या कोपं यः प्रशमयति, स एव पुरुषश्रेष्ठ इत्युक्तम् । एतच्च प्राक्प्रपञ्चितम् ॥

यदि दग्धा त्वियं लंका नूनमार्यापि जानकी ।
दग्धा तेन मया भर्तुर्हितं कार्यमजानता ॥

यदर्थमयमारम्भस्तत्कार्यमवसादितम् ।

अनेन अतिकोपिन आरब्धं कार्यं सर्वं नश्यतीति सूचितम् । तथा च वनपर्वणि —'आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ।' इति ॥

धिगस्तु राजसं भावमनीशमनवस्थितम् ।
ईश्वरेणापि यद्रागान्मया सीता न रक्षिता ॥

अत्र सात्विकराजसतामसगुणानां मध्ये राजसगुणः क्रोध इत्युक्तम् । तथा च गीतायाम् —'सत्वं रजस्तम इति गुणाः

प्रकृतिसंभवाः । निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ तत्र सत्वं निर्मलत्वात्प्रकाशकमनामयम् । सुखसंगेन बध्नाति ज्ञानसंगेन चानघ ॥ रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम् । तन्निबध्नाति कौन्तेय कर्मसंगेन देहिनम् ॥ तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् । प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ सत्वं सुखे संजयति रजः कर्मणि भारत । ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ रजस्तमश्चाभिभूय सत्वं भवति भारत । रजः सत्वं तमश्चैव तमः सत्वं रजस्तथा ॥ सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते । ज्ञानं यदा तदा विद्यात् प्रवृद्धं सत्वमित्युत ॥ लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ॥ रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च । तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ यदा सत्वे प्रवृद्धे तु प्रलयं याति देहभृत् । तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ रजसि प्रलयं गत्वा कर्मसंगिषु जायते । तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ कर्मणः सुकृतस्याहुः सात्विकं निर्मलं फलम् । रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ सत्वात्संजायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ ऊर्ध्वं गच्छन्ति सत्वस्थाः मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति । गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥' इति ॥

**मनुस्मृतावपि**— 'सत्वं रजस्तमश्चैव त्रीन्विद्यादात्मनो गुणान् । यैर्व्याप्येमांस्थितो भावान्महान्सर्वानशेषतः ॥

यो यदैषां गुणो देहे साकल्येनातिरिच्यते । स तदा तद्गुणप्रायं तं करोति शरीरिणम् ॥ सत्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम् । एतद्व्याप्तिमदेतेषां सर्वभूताश्रितं वपुः ॥ तत्र यत्प्रीतिसंयुक्तं किंचिदात्मनि लक्षयेत । प्रशान्तमिव शुद्धाभं सत्त्वं तदुपधारयेत् ॥ यत्तु दुःखसमायुक्तमप्रीतिकरमात्मनः । तद्रजः प्रतिपं विद्यात्सततं हारि देहिनाम ॥ यत्तु स्यान्मोहसंयुक्तमव्यक्तं विषयात्मकम । अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत ॥ त्रयाणामपि चैतेषां गुणानां यः फलोदयः । अग्र्यो मध्यो जघन्यश्च तं प्रवक्ष्याम्यशेषतः ॥ वेदाभ्यासस्तपो ज्ञानं शौचमिन्द्रियनिग्रहः । धर्मक्रियात्मचिन्ता च सात्विकं गुणलक्षणम् । आरम्भरुचिताऽधैर्यमसत्कार्यपरिग्रहः । विषयोपसेवा चाजस्रं राजसं गुणलक्षणम् ॥ लोभः स्वप्नोऽधृतिः क्रौर्यं नास्तिक्यं हीनवृत्तिता । याचिष्णुता प्रमादश्च तामसं गुणलक्षणम ॥ त्रयाणामपि चैतेषां गुणानां त्रिषु तिष्ठताम । इदं सामासिकं ज्ञेयं क्रमशो गुणलक्षणम ॥ यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्चैव लज्जते । तज्ज्ञेयं विदुषा सर्वं तामसं गुणलक्षणम् ॥ येनास्मिन्कर्मणा लोके ख्यातिमिच्छति पुष्कलाम् । न च शोचत्यसंपत्तौ तद्विज्ञेयं तु राजसम् । यत्सर्वेणेच्छति ज्ञातुं यन्न लज्जति चाचरन् । येन तुष्यति चात्मास्य तत्सत्त्वगुणलक्षणम् ॥ तमसो लक्षणं कामो रजसश्चार्थ उच्यते । सत्वस्य लक्षणं धर्मः श्रैष्ठ्यमेषां यथाक्रमं [ यथोत्तरम् ] ॥ येन येन गुणेनेमान् संसारान्प्रतिपद्यते । तान्समासेन वक्ष्यामि सर्वस्यास्य यथाक्रमम् ॥ देवत्वं सात्विका यान्ति मनुष्यत्वं तु राजसाः । तिर्यक्त्वं तामसप्राया

इत्येषा त्रिविधा गतिः ॥ त्रिविधा त्रिविधैषा तु विज्ञेया गौणिकी गतिः । अधमा मध्यमाग्र्या च कर्मविद्याविशेषतः ॥ स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सकच्छपाः । पशवश्च सृगालाश्च जघन्या तामसी गतिः ॥ हस्तिनश्च तुरंगाश्च शूद्रा म्लेच्छाश्च गर्हिताः । सिंहव्याघ्रवराहाश्च मध्यमा तामसी गतिः ॥ चारणाश्च सुपर्णाश्च पुरुषाश्चैव डाम्भिकाः । रक्षांसि च पिशाचाश्च तामसीषूत्तमा गतिः ॥ झल्ला मल्ला नटाश्चैव पुरुषाश्च कुवृत्तयः । द्यूतपानप्रसक्ताश्च प्रथमा तामसी गतिः ॥ राजानः क्षत्रियाश्चैव राज्ञां चैव पुरोहिताः । वादयुद्धप्रधानाश्च मध्यमा राजसी गतिः ॥ गन्धर्वा गुह्यका यक्षा विबुधानुचराश्च ये । तथैवाप्सरसः सर्वा राजसीषूत्तमा गतिः । तापसा यतयो विप्रा ये च वैमानिका गणाः । नक्षत्राणि च दैत्याश्च प्रथमा सात्विकी गतिः ॥ यज्वानो ऋषयो वेदा देवा ज्योतींषि वत्सराः । पितरश्चैव साध्याश्च द्वितीया सात्विकी गतिः । ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च । उत्तमां सात्विकीमेतां गतिमाहुर्मनीषिणः ॥ एष सर्वः समुद्दिष्टस्त्रिप्रकारस्य कर्मणः । त्रिविधस्त्रिविधः कृत्स्नः संसारः सार्वभौतिकः ॥' इति ॥

**इति चिन्तयतस्तस्य निमित्तान्युपपेदिरे ।**
**पूर्वमप्युपलब्धानि साक्षात्पुनरचिन्तयत् ॥**

अनेन सन्निमित्तं कार्यसिद्धिज्ञापकमिति सूचितम । तथा च **कामन्दकः**— 'निमित्तान्येव शंसन्ति शुभाशुभफलोदयम् । तस्मादेतानि शास्त्रज्ञो राजा समुपलक्षयेत् ॥ प्रशस्तेन निमित्तेन विशुद्धेनान्तरात्मना । व्यक्तमारभ्यमाणं हि सिद्धिं याति समीहितम् ॥' इति ॥

ततश्चारणानामपि गिरमेवं शुश्राव—

दग्धेयं नगरी सर्वा साट्टप्राकारतोरणा ।
जानकी न च दग्धेति विस्मयोऽद्भुत एव नः ॥

स निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः ।
ऋषिवाक्यैश्च हनुमानभवत्प्रीतमानसः ॥

इति पञ्चपञ्चाशः सर्गः ।

---

## अथ षट्पञ्चाशसप्तपञ्चाशौ सर्गौ ॥

षट्पंचाशसप्तपंचाशयोः—गत्वा च सीतानिकटम्, प्रणम्य च सानन्दम्, प्रतिगमनाय संप्राप्य सीतानियोगमारुह्य चारिष्टनामानं गिरिमुत्तीर्य च सागरं महेन्द्रशिखरे निपपात । तं च प्रीतमानसा वानरयूथपाः परिवार्य पुनरुपागतमवलोक्य प्रहृष्टवदनाः—

उपायनानि चादाय मूलानि च फलानि च ।
प्रत्यर्चयन् हरिश्रेष्ठं हरयो मारुतात्मजम् ॥

सोऽपि जाम्बवत्प्रमुखान्यथार्हमभिवादनादिना संमान्य तैरनुयुक्तः संक्षेपेण दृष्टा सीतेति समाचख्यौ । तदनु पवनतनयवचनजनितानन्दा वानरयूथपा महानन्दाविर्भावमात्मजातिसमुचितेन चापल्येन प्रकटीकुर्वन्तो विस्तरेण तमुदन्तमाकर्णयितुं महेन्द्रशिखरमारुरुहुः ॥

इति षट्पञ्चाशसप्तपञ्चाशौ सर्गौ ।

## अथ अष्टपञ्चाशः सर्गः ॥

अष्टपंचाशे— तमारुह्य समुपविष्टेषु वानरेषु,

जाम्बवान् कार्यवृत्तान्तमपृच्छदनिलात्मजम् ॥

कथं दृष्टा त्वया देवी कथं वा तत्र वर्तते ।
तस्यां वा स कथंवृत्तः क्रूरकर्मा दशाननः ॥

तत्त्वतः सर्वमेतन्नः प्रब्रूहि त्वं महाकपे ।
श्रुतार्थाश्चिन्तयिष्यामो भूयः कार्यविनिश्चयम् ॥

यश्चार्थस्तत्र वक्तव्यो गतैरस्माभिरात्मवत् ।
रक्षितव्यं च यत्तत्र तद्भवान् व्याकरोतु नः ॥

अनेन सेवकैर्गोपनीयांशमाच्छाद्यैव ऐकमत्येन प्रभुनिकटे वक्तव्यमिति सूचितम् ॥

इति पृच्छन्तं जाम्बवन्तमखिलेनोदन्तमभिधाय हनुमान् स्वगर्वपरिहारायैवमवदत्—

राघवस्य प्रभावेण भवतां चैव तेजसा ।
सुग्रीवस्य च कार्यार्थं मया सर्वमनुष्ठितम् ॥

एतत्सर्वं मया तत्र यथावदुपपादितम् ।
मया यन्न कृतं कर्म तत्सर्वं कर्तुमर्हथ ॥

अनेन कार्यसाधनानन्तरम्, अहो महाप्रभावा वयम्, यदनन्यसाध्यमपि कार्यमस्माभिः साधितमिति गर्विष्ठा भवन्ति खलाः । समीचीनास्तु विशिष्य विनयान्विता भवन्ति इति सूचितम् ॥

इति अष्टपञ्चाशः सर्गः ॥

## अथ एकोनषष्टितमः सर्गः ॥

एकोनषष्टितमे—

सफलो राघवोद्योगः सुग्रीवस्य च संभ्रमः ।
शीलमासाद्य सीताया मम च प्रव्रणं मनः ॥

तपसा धारयेल्लोकान् क्रुद्धो वा निर्दहेदपि ।
सर्वथातिप्रवृद्धोऽसौ रावणो लोकरावणः ॥

तस्य तां स्पृशतो गात्रं तपसा न विनाशितम् ॥

न तदग्निशिखा कुर्यात् संस्पृष्टा पाणिना सती ।
जनकस्यात्मजा कुर्याद्यत्क्रोधकलुषीकृता ॥

सा प्रकृत्यैव तन्वङ्गी तद्वियोगाच्च कर्शिता ।
प्रतिपत्पाठशीलस्य विद्येव तनुतां गता ॥

अनेन प्रतिपदि अधीताया विद्यायाः कार्श्यप्रतिपादनेन प्रतिपदि अध्ययनस्य विद्यानाशकत्वं सूचितम् । तथा च **कालविधाने**— 'अष्टमी तु गुरुं हन्ति शिष्यं हन्ति चतुर्दशी । पर्व तद्द्वितयं हन्ति प्रतिपत्पाठनाशिनी ॥' इति ॥ **हारीतवचनेऽपि**—'नाधीयीत नरो नित्यमादावन्ते च पक्षयोः । आदौ तु हीयते बुद्धिरन्ते ब्रह्म च हीयते ॥' इति । **गार्ग्यवचनेऽपि** — 'प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः । श्वोऽनध्यायेऽद्य शर्वर्यां नाधीयीत कदाचन ॥' इति । **उशना अपि**— 'पर्वणीतिहासवर्जितानां विद्यानामनध्यायः' इति । 'प्रतिपत्सु न चिन्तयेत्' इति च । **स्मृत्यर्थसारेऽपि**— 'चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितेषु तु । वेदाङ्गन्यायमीमांसाधर्मशास्त्राणि चाभ्यसेत् ॥' इति ॥

अन्येऽप्यनध्ययनकाला धर्मशास्त्रेषु निरूपिताः। तत्रापस्तम्बः—'श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत (आप. धर्म. ख. ९. सू. १) निगमेष्वध्ययनं वर्जयेत्' ॥ ४ ॥ निगमेषु चत्वरेषु निर्गमनमार्गेषु वा। 'श्मशाने सर्वतः शम्याप्रासात् ॥ ६ ॥ ग्रामेणाध्यवसिते क्षेत्रेण वा नानध्यायः' ॥ ७ ॥ श्मशानदेशेऽपि यदि ग्रामो निर्मितः स्यात्, सस्यं वा कृतं स्यात्, तत्र त्वधीयीतेत्यर्थः। 'ज्ञायमाने तु तस्मिन्नेव देशे नाधीयीत' ॥ ८ ॥ तत्रापि अयं श्मशानदेश इति ज्ञाने तत्रैव नाधीयीत, न तु शम्याप्रासनिषेध इत्यर्थः। 'श्मशानवच्छूद्रपतितौ ॥ ९ ॥ समानागार इत्येके ॥ १० ॥ शूद्रायां तु प्रेक्षणप्रतिप्रेक्षणयोरेवानध्यायः ॥ ११ ॥ तथान्यस्यां स्त्रियां वर्णव्यतिक्रान्तायां मैथुने' ॥ १२ ॥ त्रैवर्णिकस्त्रीष्वपि नीचवर्णादिचारिषु प्रेक्षणप्रतिप्रेक्षणयोरनध्याय इत्यर्थः। 'अन्तःशवम् ॥ १४ ॥ अन्तश्चाण्डालम्' ॥ १५ ॥ ग्राममध्ये शवश्चण्डालो वा यदि स्यात्, तदा नाधीयीतेत्यर्थः। 'अभिनिर्हृतानां तु सीम्नि अनध्यायः' ॥ १६ ॥ शवनिर्हरणेऽपि तस्मिन् देशे नाधीयीतेत्यर्थः। 'संदर्शने चारण्ये' ॥ १७ ॥ अरण्ये शवश्चण्डालो वा यावति प्रदेशे दृश्यते तावति नाधीयीतेत्यर्थः। 'तदहरागतेषु च ग्रामं बाह्येषु' ॥ १८ ॥ बाह्या उग्रनिषादादयः परिपन्थिनः, तेषु च ग्राममागतेषु तदहरनध्याय इत्यर्थः। 'अपि सत्सु' ॥ १९ ॥ विद्याचारित्रादिभिः ये सन्तस्तेष्वपि ग्राममागतेषु तदहरनध्याय इत्यर्थः। 'संध्यावनुस्तनिते रात्रिम' ॥ २० ॥ सन्ध्याकाले मेघगर्जने सर्वां रात्रिं नाधीयीतेत्यर्थः। वर्षर्ताविदम्। 'स्वप्नपर्यान्तं विद्युति' ॥ २१ ॥ संधौ विद्युति सत्यां पूर्वां रात्रिं

नाधीयीतेत्यर्थः । 'उपव्युषं यावता वा कृष्णां रोहिणीमिति शम्याप्रासाद्विजानीयादेतस्मिन्काले विद्योतमाने सप्रदोषमहरनध्यायः' ॥ २२ ॥ यस्मिन् उषःसमीपे काले शम्याप्रासादर्वाक् स्थिताया गोर्वर्णं अमुक इति ज्ञातुं शक्यते, तस्मिन्काले विद्युति सत्यां सप्रदोषमहरनध्याय इत्यर्थः । 'दहेऽपररात्रे स्तनयित्नुना'। ॥ २३ ॥ रात्रेः पश्चिमे तृतीयांशे मेघगर्जने परस्मिन् दिने सप्रदोषमहरनध्याय इत्यर्थः । 'ऊर्ध्वमर्धरात्रादित्येके ॥ २४ ॥ गवां चावरोधे' ॥ २५ ॥ दस्युप्रभृतिभिः गवां ग्रामाद्बहिर्निर्गमननिरोधे तावन्तं कालं नाधीयीतेत्यर्थः । 'पृष्ठारूढः पशूनां नाधीयीत ॥ २७॥ अहोरात्रावमावास्यासु' ॥ २८ ॥ चतुर्दश्याममावास्यायामिति अहोरात्रद्वयं नाधीयीतेत्यर्थः ॥

'चातुर्मासीषु च' (आप. धर्म. ख. १०. सू. २)। फाल्गुन्याषाढी कार्तिकी इत्येतासु पौर्णमासीषु चतुर्दश्यां पौर्णमास्यां च नाधीयीतेत्यर्थः । 'वैरमणे गुरुष्वष्टाक्य औपाकरण इति त्र्यहाः' ॥ २ ॥ तैष्यां अध्यायोत्सर्जने, श्वशुरादिषु गुरुषु प्रेतेषु, तिसृष्वष्टकासु, अध्यायोपाकरणे च त्रिरात्रमनध्याय इत्यर्थः । 'तथा संबन्धेषु ज्ञातिषु' ॥ ३ ॥ सपिण्डेषु निवृत्तेषु ब्रह्मचारिणोऽपि त्रिरात्रमनध्याय इत्यर्थः । 'मातरि पितर्याचार्य इति द्वादशाहाः॥४॥ आचार्ये त्रीनहोरात्रानित्येके ॥ १० ॥ श्रोत्रियसंस्थायामपरिसंवत्सरायामेकाम् ॥ ११ ॥ सब्रह्मचारिणीत्येके ॥ १२ ॥ श्वगर्दभनादाः सलावृक्येकसृकोलूकशब्दाः सर्वे वादितशब्दा रोदनगीतसामशब्दाश्च' ॥ १९ ॥ एतेषां श्रवणकाले नाधीयीतेत्यर्थः । 'शाखान्तरे च साम्नामनध्यायः' ॥ २० ॥ वेदान्तरेऽधीयमाने न

सामाध्येतव्यमित्यर्थः। 'सर्वेषु च शब्दकर्मसु यत्र संसृज्येरन्'॥२१॥ आक्रोशपरिहासादिशब्दा यत्र अध्ययने संसृज्येरन, तत्र नाध्येतव्यमित्यर्थः। 'छर्दयित्वा स्वप्नान्तम्' ॥ २२ ॥ वमने सति स्वप्नपर्यन्तं नाध्येतव्यमित्यर्थः। 'सर्पिर्वा प्राश्य' ॥ २३ ॥ अध्येतव्यमित्यर्थः। 'भुक्तं[ शुक्तं ]चात्मसंयुक्तम' ॥ २५ ॥ अजीर्णोद्गारयोर्नाध्येतव्यमित्यर्थः। 'प्रदोषे च भुक्त्वा' ॥ २६ ॥ भोजनानन्तरं पूर्वरात्रे नाध्येतव्यमित्यर्थः। 'प्रोदकयोश्च पाण्योः' ॥ २७ ॥ भोजनानन्तरं यावदार्द्रपाणिस्तावन्नाधीयीतेत्यर्थः। 'प्रेतसंक्लप्तं चान्नं भुक्त्वा सप्रदोषमहरनध्यायः' ॥ २८ ॥ सपिण्डीकरणात्पूर्वभाविश्राद्धान्नभोजने सप्रदोषमहरनध्याय इत्यर्थः। 'आ च विपाकात्' ॥ २९ ॥ यदि तावता कालेन तदन्नं न जीर्येत, तदा जरणपर्यन्तं नाधीयीतेत्यर्थः ॥

'काण्डोपाकरणे चामातृकस्य (आप. ध. ख. ११. सू. १)। काण्डसमापने चापितृकस्य' ॥ २ ॥ काण्डारम्भे कृते अमातृकस्य माणवकस्य सप्रदोषमहरनध्याय इत्यर्थः। एवं काण्डसमापनेऽपि अपितृकस्य व्रतसमाप्तावपि सप्रदोषमहरनध्याय इत्यर्थः। 'मनुष्यप्रकृतीनां च देवानां यज्ञे भुक्त्वेत्येके' ॥ ३ ॥ ये मनुष्याः सन्तः कर्मणा देवभावं प्राप्ताः कुबेर [ कुमार ] नन्दीश्वरादयः, तत्प्रीत्यर्थे ब्राह्मणभोजने सप्रदोषमहरनध्याय इत्यर्थः। 'पर्युषितैस्तण्डुलैराममांसेन च नानध्यायः' ॥ ४ ॥ प्रेतसंक्लप्तमामं प्रतिगृह्य यदि श्वोभूते तदामं पक्त्वा भुङ्क्ते, तदा नानध्याय इत्यर्थः। एवमाममांसेऽपि। 'तथौषधिवनस्पतिमूलफलैः' ॥ ५ ॥ श्राद्धे प्रतिगृहीतैरेतैः तदहर्भक्षितैरपि नानध्याय इत्यर्थः। 'यत्काण्डमुपाकुर्वीत

यस्य चानुवाक्यं कुर्वीत न तत्तदहरधीयीत ' ॥ ६ ॥ श्रावण्यामुपाकृत्य प्रशस्ते अहरन्तरे यत्काण्डस्यानुवाकमारभते, तत्काण्डं तदहर्नाधीयीतेत्यर्थः । 'उपाकरणसमापनयोश्च पारायणस्य तां विद्याम्' ॥ ७ ॥ वेदत्रयवित् यस्य वेदस्य पारायणार्थमुपाकरणमुत्सर्जनं वा करोति, तं वेदं तस्मिन्नहनि नाधीयीतेत्यर्थः । 'वायुर्घोषवान् भूमौ वा तृणसंवाहो वर्षति वा यत्र धाराः प्रवहेत्'॥ ८ ॥ यदा सशब्दो वायुर्वाति, तृणानि वा अपकर्षति, वर्षधारा वा विक्षिपति, तावन्तं कालं नाधीयीतेत्यर्थः । 'ग्रामारण्ययोश्च सन्धौ ॥ ९ ॥ महापथे च ॥ १० ॥ विप्रोष्य च समध्ययनं तदहः' ॥ ११ ॥ यदा कारणवशात् प्रवसेयुः, तेषु केचिदाचार्येण संगताः, अध्ययनदेशे वा संगताः स्युः, तदा तदहरनध्याय इत्यर्थः । 'स्वैरिकर्मसु च ॥ १२ ॥ यथा पादप्रक्षाळनोत्सादनानुलेपनानीति ॥ १३ ॥ तावन्तं कालं नाधीयीत अध्यापयेद्वा ॥ १४ ॥ सन्ध्योः ॥ १५ ॥ तथा वृक्षमारूढः ॥ १६ ॥ अप्सु चावगाढः ॥ १७ ॥ नक्तं चावृते ॥ १८ ॥ दिवा चापिहिते' ॥ १९ ॥ स्पष्टम् । 'अविहितमनुवाकाध्ययनमाषाढवासन्तिकयोः' ॥ २० ॥ चैत्रशुद्धत्रयोदश्यां वसन्तोत्सवे आषाढशुद्धत्रयोदश्यामिन्द्रोत्सवे चानुवाकाध्ययनं न कर्तव्यम् । [अनुवाकग्रहणात्] न्यूने तु न दोषः । 'नित्यप्रश्नस्य चाविधिना' ॥ २१ ॥ नित्ये ब्रह्मयज्ञाध्ययने वक्ष्यमाणविधानमन्तरा नाध्येतव्यमित्यर्थः । तेन विस्मृत्य कृते प्रातराशे नित्यकर्मलोपप्रायश्चित्तमुपवासादिकमेव ; न पुनर्ब्रह्मयज्ञाध्ययनमित्यर्थः । 'मनसा चानध्याये' ॥ २४ ॥ अनध्याये ब्रह्मयज्ञाध्ययनमपि मनसैव, न तु वाचा इत्यर्थः । 'विद्युति चाभ्यग्रायां स्तनयित्नावप्रायत्ये प्रेतान्ने नीहारे च मानसं

परिचक्षते ॥ २५ ॥ श्राद्धभोजन एवैके ' ॥ २६ ॥ अभ्यग्रा अविरता इत्यर्थः । ' विद्युत्स्तनयित्नुर्वृष्टिश्चापर्तौ यत्र सन्निपतेयुस्त्र्यहमनध्यायः ॥ २७ ॥ यावद्भूमिर्व्युदकेत्येके ' ॥ २८ ॥ विद्युत्स्तनयित्न्वादयः सर्वे यत्र समुदिताः, तदा त्र्यहमनध्यायः । यावद्वा भूमेः वर्षोदकं च नश्येदित्यर्थः । 'एकेन द्वाभ्यां वैतेषामाकालम' ॥२९। विद्युदादीनां मध्ये एकं द्वयं वा यदि भवेत्, तदा एकस्मिन् दिने नाधीयीतेत्यर्थः । 'सूर्याचन्द्रमसोर्ग्रहणे भूमिचलेऽपस्वाने उल्कायां अग्न्युत्पाते च सर्वासां विद्यानां सार्वकालिकमाकालम्' ॥ ३० ॥ अपस्वानो निर्घातः । एतेषु निमित्तेषु अष्टादशविद्यास्थानानां ऋतावनृतौ चानध्ययनमाकालिकमित्यर्थः । 'अभ्रं चापर्तौ सूर्याचन्द्रमसोः परिवेष इन्द्रधनुः प्रतिसूर्यमत्स्यश्च वाते पूतिगन्धे नीहारे च सर्वेष्वेतेषु तावत्कालम्' ॥ ३१ ॥ अपर्तौ वर्षाकालादन्यत्र । प्रतिसूर्यः सूर्यसमीपे सूर्याकृतिः । मत्स्यः पुच्छवन्नक्षत्रम् । शेषं स्पष्टम् । 'मुहूर्तं विरते वाते' ॥ ३२ ॥ घोषवति वायौ विरतेऽपि ततः परं मुहूर्तं नाधीयीतेत्यर्थः । ' सलावृक्यामेकसृक इति स्वप्नपर्यान्तम्' ॥ ३३ ॥ पूर्वोक्तस्य तावत्कालमित्यस्यापवादोऽयम । 'नक्तं चारण्येऽनग्नावहिरण्ये वा' ॥ ३४ ॥ रात्रौ अग्निरहिते, हिरण्यरहिते वा अरण्ये नाध्येतव्यमित्यर्थः । 'अननूक्तं चापर्तौ छन्दसो नाधीयीत' ॥ ३५ ॥ अपर्तौ उत्सर्जनादूर्ध्वं उपाकरणात्प्राक् अपूर्वाध्ययनं न कार्यमित्यर्थः । तत्र धारणाध्ययने न दोषः । 'प्रदोषे च ॥ ३६ ॥ सार्वकालिकमाम्नातम' ॥ ३७ ॥ अननूक्तं प्रदोषे नाधीयीत । एतच्च सार्वकालिकमित्यर्थः । 'यथोक्तमन्यदतः परिषत्सु' ॥ ३८ ॥ इतोऽप्यन्यदनध्ययननिमित्तं शाखान्तरे द्रष्टव्यमित्यर्थः ॥

**बोधायनोऽपि**—‘[अहोरात्रयोः संध्ययोः] पर्वसु च नाधीयीत। (बोधा. धर्म. १. ११. ३५) न मांसमश्नीयात् न स्त्रियमुपेयात् ॥ ३६॥ पर्वसु हि रक्षःपिशाचा व्यति[भि]-चारवन्तो भवन्तीति विज्ञायते ॥ ३७॥ अन्येषु चाद्भुतोत्पातेष्व-होरात्रमनध्यायोऽन्यत्र मानसात् ॥ ३८॥ मानसेऽपि जननमर-णयोरनध्यायः’ ॥ ३९ ॥ **अथाप्युदाहरन्ति**—‘हन्त्यष्टमी ह्युपाध्यायं हन्ति शिष्यं चतुर्दशी। हन्ति पञ्चदशी विद्यां तस्मात्सर्वाणि वर्जयेत्’॥ ४०॥ इति॥

**गौतमोऽपि**—‘नाधीयीत वायौ दिवा पांसुहरे (गौतम. धर्म. अ. १६. सू. ५.) कर्णश्राविणि नक्तम्’ ॥ ६॥ दिवा पांसुहरे वायौ वाति, नक्तं च महाघोषे वायौ वाति सति नाधी-यीतेत्यर्थः। ‘वाणभेरीमृदङ्गगर्तार्तशब्देषु ॥ ७॥ श्वसृगालगर्द-भसंह्रादे’॥ ८॥ वाणः शततन्तुवीणाविशेषः। गर्तो रथः। आर्ता दुःखिनः। एतेषां शब्देषु नाधीयीतेत्यर्थः। ‘लोहितेन्द्रधनुर्नीहा-रेषु॥ ९॥ अभ्रदर्शने चापर्तौ॥ १०॥ मूत्रित उच्चारितः॥ ११॥ निशासंध्योदकेषु’॥ १२॥ लोहिते आकाशे अपर्तौ वर्षाकाला-दन्यत्र सोदकमेघदर्शने नाधीयीतेत्यर्थः। ‘वर्षति च’॥ १३॥ वर्षति बिन्दुमात्रवर्षणेऽपि नाधीयीतेत्यर्थः। ‘आचार्यपरिवेषणे॥ १५॥ ज्योतिषोश्च’॥ १६॥ आचार्ययोः गुरुशुक्रयोः परिवेषे वा, आचार्यस्य अन्नपरिवेषणवेलायां वा सूर्याचन्द्रमसोः परिवेषे वा नाधीयीतेत्यर्थः। ‘भीतो यानस्थः शयानः प्रौढपादः॥ १७॥ श्मशानग्रामान्त(र)महापथाशौचेषु’॥ १८॥ प्रौढपादः पादे पादान्तराभ्याधायी, पीठाद्यासनाध्यारोपितपादो वा। पूतिगन्धा-

न्तःशवादिवाकीर्त्यशूद्रसांनिधाने ॥ १९ ॥ शूक्तके चोद्गारे'॥ २० ॥ अन्तःशवे अन्तश्चण्डाले च ग्रामे नाधीयीतेत्यर्थः । अजीर्णोद्गारे च वर्तमाने नाधीयीतेत्यर्थः । 'ऋग्यजुषां च सामशब्दो यावत् ॥ २१ ॥ आकालिका निर्घातभूमिकंपराहुदर्शनोल्काः ॥ २२ ॥ स्तनयित्नुवर्षविद्युतश्च प्रादुष्कृताग्निषु' ॥ २३ ॥ मेघगर्जनादौ सति अहोरात्रं नाधीयीतेत्यर्थः । 'अहरृतौ' ॥ २४ ॥ ऋतौ वर्षाकाले, सन्ध्यायां च । प्रातःसन्ध्यायां गर्जनादिसंभवे अहर्मात्रम्, सायंसन्ध्यायां गर्जनादिसंभवे च सर्वरात्रमनध्याय इत्यर्थः । 'विद्युति नक्तं चापररात्रात्'॥ २५ ॥ यदि नक्तं विद्युत् दृश्यते, तदा रात्रेस्तृतीयभागपर्यन्तमनध्याय इत्यर्थः । 'त्रिभागादिप्रवृत्तौ सर्वम्' ॥ २६ ॥ यद्यह्नः पश्चिमतृतीयभागादारभ्य विद्युत् प्रवर्तते, तदा सर्वरात्रमनध्याय इत्यर्थः । 'उल्का विद्युत्समेत्येकेषाम्'॥ २७ ॥ विद्युन्निमित्तानध्यायाः उल्कायामपि समाना इत्येके । 'स्तनयित्नुरपराह्णे ॥२८॥ अपि प्रदोषे' ॥ २९ ॥ अपराह्णे प्रदोषेऽपि वा भवन् स्तनयित्नुः आ अपररात्रादनध्यायहेतुरित्यर्थः । 'सर्वं नक्तमार्धरात्रात् ॥' ३०॥ प्रथमरात्रिभागप्रभृति आ अर्धरात्रात्प्रवृत्तः स्तनयित्नुः सर्वं नक्तमनध्यायहेतुरित्यर्थः । 'अहश्चेत्सज्योतिः' ॥ ३१ ॥ अपराह्णात्प्राक् भवंस्तनयित्नुः आ अस्तमयादनध्यायहेतुरित्यर्थः । 'विषयस्थे च राज्ञि प्रेते' ॥ ३२ ॥ तद्देशस्थितराजमरणे सज्योतिरनध्याय इत्यर्थः । 'विप्रोष्य चान्योन्येन सह' ॥ ३३ ॥ सहाध्यायिनां मध्ये केषांचिद्विप्रवासे आचार्येण संगतानामनध्याय इत्यर्थः । 'संकुलोपाहितवेदसमाप्तिच्छर्दिश्राद्धमनुष्ययज्ञभोजनेष्वहोरात्रम्' ॥ ३४ ॥ संकुलः चोराद्युपद्रवः । उपाहितः अग्निदाहः । वेदसमाप्तिः शाखासमाप्तिः । छर्दिः

वमनम् । श्राद्धभोजने मनुष्ययज्ञभोजनादौ इत्येतेषु निमित्तेष्वहोरात्रमनध्याय इत्यर्थः । 'अमावास्यायां च ॥ ३५ ॥ द्व्यहं वा' ॥३६ ॥ अमावास्यायां तत्पूर्वेद्युश्च अहोरात्रमनध्याय इत्यर्थः । 'कार्तिकी फाल्गुन्याषाढी पौर्णमासी' ॥ ३७ ॥ तिसृष्वपि नाध्येतव्यमित्यर्थः । 'तिस्रोऽष्टकास्त्रिरात्रम्' ॥ ३८ ॥ मार्गशीर्ष्याः पौर्णमास्या उपरि तिस्रः कृष्णाष्टम्य अष्टकाः । तासु पूर्वेद्युः परेद्युश्च नाध्येतव्यमित्यर्थः । 'अन्त्यामेके' ॥ ३९ ॥ स्पष्टम् । 'अभितो वार्षिकम्' ॥ ४० ॥ वार्षिकाध्ययनार्थे उपाकरणे उत्सर्जने च त्र्यहमनध्याय इत्यर्थः । 'सर्वे वर्षविद्युत्स्तनयित्नुसंनिपाते' ॥ ४१ ॥ एतेषां सन्निपाते सर्वे आचार्याः त्रिरात्रमनध्याय[इत्याहुः] इत्यर्थः । 'प्रस्यन्दिनि' ॥ ४२ ॥ प्रकृष्टवर्षणस्यन्दने तावन्तं कालं नाध्येतव्यमित्यर्थः । 'ऊर्ध्वं भोजनादुत्सवे' ॥ ४३ ॥ विवाहादौ भोजनादूर्ध्वं नाध्येतव्यमित्यर्थः । 'प्राधीतस्य च निशायां चतुर्मुहूर्तम्' ॥ ४४ ॥ उपाकृत्याध्येता प्राधीत इत्युच्यते । तस्य पूर्वरात्रे चतुर्मुहूर्तं नाध्येतव्यमित्यर्थः । 'नित्यमेके नगरे' ॥ ४५ ॥ नगरे नित्यमनध्याय इत्येके । शूद्रभूयिष्ठे नाध्येतव्यम्, ब्राह्मणभूयिष्ठे अध्येतव्यमिति गौतममतम् । 'मानसमप्यशुचिः' ॥ ४६ ॥ अप्रयतः सन् मानसमप्यध्ययनं न कुर्यादित्यर्थः । 'श्राद्धिनामाकालिकम्' ॥ ४७ ॥ कर्तुरयं निषेधः । 'अकृतान्नश्राद्धिकसंयोगे च' ॥ ४८ ॥ श्राद्धीयामप्रतिग्रहेऽपि नाध्येतव्यमित्यर्थः । 'प्रतिविद्यं च यान् स्मरन्ति' ॥ ४९ ॥ अन्येष्वपि धर्मशास्त्रेषु उक्ताननध्यायान् वर्जयेदित्यर्थः ॥

मनुरपि— 'यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः ।

विरमेत्पक्षिणीं रात्रिं तदाप्येकमहर्निशम् ॥' इति । तत् वेदाध्ययनम । 'अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत् । वेदाङ्गानि च सर्वाणि कृष्णेषु नियतः पठेत् ॥' इति च ॥

एतदुपाकृत्याध्ययनं स्नातकानां ब्रह्मचारिणामपि समानम । 'इमान्नित्यमनध्यायानधीयानो विवर्जयेत् । अध्यापनं च कुर्वाणः शिष्याणां विधिपूर्वकम ॥' [इति] 'उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम । अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु ॥' इति च ॥

'उपाकर्मणि त्रिरात्रम , उत्सर्गे तु पूर्वोक्तपक्षिण्यहोरात्राभ्यां सह विकल्पः' [इति] विज्ञानेश्वरीये । प्रथमाध्ययने त्र्यहम , इतरत्र पक्षिणी, अहोरात्रं वा, 'उत्सर्गे प्रथमाध्याये त्वनध्यायस्त्र्यहं भवेत । धारणाध्यापनादौ तु पक्षिणी दिनमेव वा ॥' इति मनुस्मरणादित्यन्ये ॥

**याज्ञवल्क्यः**— 'श्वक्रोष्टृगर्दभोलूकसामबाणार्तनिस्वने । अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥ देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे । भुक्त्वार्द्रपाणिरम्भोन्तरर्धरात्रेऽतिमारुते ॥ पांसुवर्षे दिशां दाहे संध्यानीहारभीतिषु । धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥ खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे । सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान विदुः ॥' इति । 'त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु । उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥' तथा प्रेते । 'संध्यागर्जितनिर्घातभूकंपोल्कानिपातिते । समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥' द्युनिश-

महोरात्रमनध्यायः । 'पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके। ऋतुसन्धिषु भुक्त्वा च श्राद्धिकं प्रतिगृह्य च ॥ पशुमण्डूकनकुल-श्वाहिमार्जारमूषिकैः । कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥' इति ॥

यत्पुनर्गौतमेनोक्तम्— 'श्वनकुल[सर्प]मण्डूकमार्जाराणां त्र्यहमुपवासो विप्रवासश्च' इति, तत् प्रथमाध्ययनविषयमिति **विज्ञानेश्वरीये** ॥

**मनुरपि**— 'कर्णश्रवेऽनिले रात्रौ दिवा पांसुसमूहने। एतौ वर्षास्वनध्यायावध्यायज्ञाः प्रचक्षते ॥' इति । **स्मृत्यन्तरेऽपि**— 'एतांस्त्वभ्युदितान् विद्याद्यदा प्रादुष्कृताग्निषु । तदा विद्यादनध्यायमनृतावभ्रदर्शने ॥ निर्घाते भूमिचलने ज्योतिषां चोपसर्जने । एतानाकालिकान् विद्यादनध्यायानृतावपि ॥ उच्छिष्टः श्राद्धभुक् चैव मनसापि न चिन्तयेत् । प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य भोजनम् [केतनम्] । त्र्यहं न कीर्तयेद्ब्रह्म राज्ञो राहोश्च सूतके ॥ रवीन्द्वोर्ग्रहणे चैव नाधीयीत दिवानिशम् । शयानः प्रौढपादश्च बद्ध्वा चैवावसक्थिकाम् । नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च ॥ नीहारे बाणशब्दे च सन्ध्ययोरेव चोभयोः । अमावास्याचतुर्दश्योः पौर्णमास्यष्टकासु च ॥ पांसुवर्षे दिशां दाहे गोमायुविरुते तथा । श्वखरोष्ट्रे च रुवति पङ्क्तौ च न पठेद्द्विजः ॥ नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजे तथा । वसित्वा मैथुनं वासः श्राद्धिकं प्रतिगृह्य च ॥ प्राणि वा यदि वाप्राणि यत्किञ्चिच्छ्राद्धिकं भवेत् । तदालभ्याप्यनध्यायः पाण्यास्यो हि द्विजोत्तमः ॥ न विवादे न कलहे न सेनायां न

संगरे । न भुक्तमात्रे नाजीर्णे न वामित्वः न शुक्तके ॥ अतिथिं चाननुज्ञाप्य मारुते वाति वा यदि । रुधिरे निःसृते गात्राच्छस्त्रेण च परिक्षते ॥ सामध्वनौ ऋग्यजुषी नाधीयीत कदाचन । वेदस्याधीत्य चैवान्तमारण्यकमधीत्य च ॥ पशुमण्डूकमार्जारश्वसर्पनकुलादिषु । अन्तरागमने विद्यादनध्यायमहर्निशम ॥ द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः । स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः ॥' इति ॥ **नारदोऽपि**— 'अयने विषुवे चैव शयने बोधने हरेः । अनध्यायस्तु कर्तव्यो मन्वादिषु युगादिषु ॥' इति ॥

मन्वादयो **मत्स्यपुराणे** दर्शिताः— 'आश्वयुक्छुक्लनवमी कार्तिकी द्वादशी तथा । तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥ फाल्गुनस्याप्यमावास्या पुष्यस्यैकादशी सिता । आषाढस्यापि दशमी माघमासस्य सप्तमी ॥ श्रावणस्याष्टमी कृष्णा [चा] आषाढस्यापि पूर्णिमा । कार्तिकी फाल्गुनी चैत्री ज्यैष्ठी पंचदशी सिता । मन्वन्तरादयश्चैते दत्तस्याक्षयकारकाः ॥' इति ॥

युगादयो **विष्णुपुराणे**— 'वैशाखमासस्य सिता तृतीया नवम्यसौ कार्तिकशुक्लपक्षे । नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पंचदशी च माघे ॥' माघपंचदशी अमावास्येत्यर्थः ॥

**व्यासः**— 'श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य [च] वा । कदाचिदपि नाध्येयं कोविदारकपित्थयोः ॥ **हारीतः**— 'महानवम्यां द्वादश्यां भरण्यामपि पर्वसु । तथाक्षयतृतीयायां शिष्यान्नाध्यापयेद् बुधः [द्विजः] ॥ माघमासे तु सप्तम्यां रथाख्यायां तु वर्जयेत् । अध्यापनं समभ्यक्तः स्नानकाले च वर्जयेत् ॥'

वृद्धगार्ग्यः— 'ऋक्षेषु द्वे च नक्षत्रे स्वाध्याये परिवर्जयेत् । द्वादश्यां श्रवणं भाद्रे भरणी च महालये ॥' इति । (वृद्ध-) गार्ग्यः— 'मैत्रर्क्षात् षोडशर्क्षेषु वर्षेऽनध्ययनं विदुः । अतिवर्षे त्रिरात्रं स्यादल्पवर्षे तु वासरम् ॥' इति । वृद्धगौतमः— 'यावा-द्गजोऽन्तरा व्याघ्रो नैवाधीयीत हायनम् । श्वशोऽपि वा श्वपाको-ऽजः षण्मासानिति सूरयः ॥' इति ॥

स्मृत्यर्थसारेऽपि— 'चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितेषु तु । वेदाङ्गन्यायमीमांसाधर्मशास्त्राणि चाभ्यसेत् ॥ उदयेऽस्तमये वापि मुहूर्तत्रयगामि यत् । तद्दिनं तदहोरात्रमनध्यायं ततो विदुः ॥ केचिदाहुः क्वचिद्देशे यावत्तद्दिननाडिकाः । तावदेव त्वनध्यायो न तन्मिश्रदिनान्तरे ॥ अधिकायां त्रयोदश्यां चतुर्दश्यां दिवा यदि । अमावास्या च दृश्येत तदानध्ययनं भवेत् ॥ प्रणवव्याहृतीनां च गायत्र्याः शिरसस्तथा । नित्ये नैमित्तिके कार्ये व्रते यज्ञे क्रतौ तथा ॥ प्रवृत्ते काम्यकार्ये च नानध्यायास्तथा स्मृताः । देवतार्च-नमन्त्राणां नानध्यायाः सदा स्मृताः ॥' कूर्मे— 'अनध्यायश्च नाङ्गेषु नेतिहासपुराणयोः । न धर्मशास्त्रेष्वन्येषु पर्वण्येतानि वर्जयेत् ॥' इति ॥

कालादर्शे वृद्धगार्ग्यः— 'रात्रौ यामद्वयादर्वाक् सप्तमी स्यात्त्रयोदशी । प्रदोषः स तु विज्ञेयः सर्वविद्याविगर्हितः ॥ रात्रौ नवसु नाडीषु चतुर्थी यदि दृश्यते । प्रदोषः स तु विज्ञेयो वेदाध्यायविगर्हितः ॥ आद्यन्तयोः कलामात्रां यदि पश्येत्त्रयोदशीम् । प्रदोषः स तु विज्ञेयः सर्वशस्त्रविवर्जितः ॥ त्रयोदशी यदा रात्रौ यामस्तत्र निशामुखे । प्रदोषः स तु विज्ञेयो

ज्ञानार्थी मौनमाचरेत् ॥ भोजनं मैथुनं यानमभ्यङ्गं हरिदर्शनम् । अन्यानि शुभकर्माणि प्रदोषे नैव कारयेत् ॥'

बृहन्मनुः — 'त्रयोदश्यां च सप्तम्यां चतुर्थ्यामर्धरात्रतः । नाधीयाध्ययनं कुर्याद्यदीच्छेत्तत्र धारणम् ॥' इति । स्कान्देऽपि 'त्रिमुहूर्तः प्रदोषः स्याद्रवावस्तं गते ततः । भिन्नसंध्यत्रयोदश्यां च स्मरेच्च मनोरथम् । अह्नोऽष्टमांशसंयुक्तं रात्र्यर्धं मौनमाचरेत् ॥' इति । स्मृत्यर्थसारेऽपि — 'चतुर्थ्यां पूर्वरात्रे तु नवनाडीप्रदर्शने । नाध्येयः पूर्वरात्रं स्यात् सप्तमी च त्रयोदशी । अर्धरात्रात्पुरस्ताच्चैवाध्येयं पूर्वरात्रके ॥ अनध्यायेष्वध्ययने प्रज्ञामायुः श्रियं तथा । ब्रह्म वीर्यं च तेजश्च निकृन्तति यमः स्वयम् ॥ मन्त्रवीर्यक्षयादिन्द्रो वज्रेणैनं निहन्ति च । ब्रह्मराक्षसतां यान्ति नरकश्च भवेद्ध्रुवम् ॥' लिखितः— 'छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्तिताः । छिद्रेभ्यः स्रवति ब्रह्म ब्राह्मणेन यदार्जितम् ॥' इति ॥

एते च निषेधा ग्रहणधारणाध्ययन एव, न तु कर्माङ्गतया मन्त्रोच्चारणे । तदाह आपस्तम्बः— 'विद्यां प्रत्यनध्यायः श्रूयते न कर्मयोगे मन्त्राणाम्' इति । 'स्वाध्यायेऽनध्यायो मन्त्राणां न कर्मण्यर्थान्तरत्वात्' इति च । ब्रह्मयज्ञाध्ययने तु नानध्यायदोषः, 'ब्रह्मयज्ञो ह वा एष यत्स्वाध्यायस्तस्यैते वषट्कारा: यत् स्तनयति यद्विद्योतते यदवस्फूर्जति यद्वातो वायति तस्मात् स्तनयति विद्योतमानेऽवस्फूर्जति वाते [वा] वायत्यधीयीतैव वषट्काराणामच्छम्बट्काराय' इति वाजसनेयिश्रुतौ यज्ञत्वेन संस्तुते ब्रह्मयज्ञे स्तनयित्नुशब्दादीनां वषट्कारादिभावेनानुगुणत्व-

निरूपणात्, वषट्कारादिवैयर्थ्यपरिहाराय स्तनयित्नुशब्दादिषु सत्सु अवश्यमध्येतव्यमित्यवगमात्। तथापि यथापूर्वं प्रभूताध्ययनं न कार्यम। 'अथ यदि वातो वा वायात स्तनयेद्वा विद्योतेत वावस्फूर्जेद्वा एकां वा ऋचमेकं वा यजुरेकं वा सामाभिव्याहरेत्। भूर्भुवस्सुवस्सत्यं तपः श्रद्धायां जुहोमीति वैतत्। तेनो हैवास्यैतदहः स्वाध्याय उपात्तो भवति' इति शाखान्तरमुदाहृत्य वाजसनेयिब्राह्मणस्य आपस्तम्बाचार्येण तेन सह एकवाक्यत्वमभिदधता अध्ययनसंकोचविधानात्॥

तद्यथा— 'तस्य शाखान्तरे वाक्यसमाप्तिः (आप. धर्म. प्र. १. ख. १२. सू. ४) एवं सत्यार्यसमयेनाविप्रतिषिद्धम्। (सू. ६) अध्यायानध्यायं ह्युपदिशन्ति। तदनर्थकं स्याद्वाजसनेयिब्राह्मणं चेदवेक्षेत (सू. ७.) आर्यसमयो ह्यगृह्यमाणकारणः (सू. ८)' इति। अस्यार्थः— अनध्यायेष्वपि ब्रह्मयज्ञाध्ययनं कार्यमित्येवमर्थकस्य वाजसनेयिब्राह्मणस्य स्वल्पाध्ययनं कर्तव्यमित्येवमर्थके उदाहृते शाखान्तरे वाक्यसमाप्तिः तयोरेकवाक्यता। एवं सति एकवाक्यताश्रयणे सति आर्यसमयेन शिष्टकृतव्यवस्थया अविप्रतिषिद्धमविरुद्धं भवति। आर्या हि ब्रह्मयज्ञाध्ययनेऽपि अध्यायमनध्यायं चोपदिशन्ति। तत्र यदि केवलवाजसनेयिब्राह्मणानुसारेणानध्यायेष्वपि यथापूर्वं प्रभूताध्ययनमेव कुर्यादार्यसमयोऽध्यायानध्यायविषयो व्यर्थः स्यात्। न च श्रुतिविरुद्धत्वात्तदीयसमयोऽप्रामाणिक इति शंकनीयम्, 'वैसर्जनीयं वासोऽध्वर्युर्गृह्णाति यूपहस्तिनो दानमाचरन्ति' इत्यादिवत् गृह्यमाणलोभादिमूलकत्वाभावेन श्रुतिमूलतया प्रमाणत्वसंभवात्। तस्मादन-

ध्यायेषु ब्रह्मयज्ञाध्ययने उक्तविधया संकोच एव न्याय्य इति। यानि तु—'तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदात्माशुचिर्यद्देशः' 'नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम्।' इत्यादीनि श्रुतिस्मृतिवचनानि, तान्यपि वाजसनेयिश्रुतिसमानार्थतया तद्वदेवोदाहृतशाखान्तरेण सह एकवाक्यतया व्याख्येयानि इति॥

एवमास्ते महाभागा सीता शोकपरायणा।
यदत्र प्रतिकर्तव्यं तत्सर्वमुपपाद्यताम्॥

इति एकोनषष्टितमः सर्गः।

---

## अथ षष्टितम-एकषष्टितमौ सर्गौ॥

षष्टितमैकषष्टितमयोः— तदाकर्ण्य संजातसंभ्रमेणाङ्गदेनाधुनैवानया वानरसेनया सह सागरमवप्लुत्य सगणं रावणमभिहत्य सीतामादाय राघवसमीपगमनमत्युत्तममिति संबोधितो जाम्बवानखिलनीतिशास्त्रविदेवमवादीत्—

न तावदेषा मतिरक्षमा ते
यथा भवान् पश्यति राजपुत्र।
यथा तु रामस्य मतिर्निविष्टा
तथा भवान् पश्यतु कार्यसिद्धिम्॥

ततो जाम्बवद्वचनं परिगृह्याङ्गदप्रमुखा वलीमुखा महेन्द्रगिरिं परित्यज्य, रामलक्ष्मणयोः सुग्रीवस्य च तमानन्दमहावहामिकया वक्तुकामाः, गगनमुत्प्लुत्य प्लवमानाः, कर्मसिद्धाका

समुद्धार्थाः, मध्येमार्गं दधिमुखकृतावनं नन्दनोपमानं मधुवनं कुमारानुमत्याभिभूय यथेच्छमुपभुञ्जानास्तदुद्भवानि नाना-विधानि मधुमूलफलानि, तत्पालकेन दधिमुखेन निवार्यमाणा-स्तमेव नखमुखकरतलाभिहननपादताडनादिनाभिभूय तद्वनमचि-रादेव निर्विषयमाचक्रुः ॥

इति षष्टितम-एकषष्टितमौ सर्गौ ।

---

## अथ द्विषष्टितमः सर्गः ॥

**द्विषष्टितमे**— तदनु तानप्यनुमान्य तथैव मधुवनमभि-भवन्तं हनूमन्तमवलोक्य रोषदूषितलोचनेन दधिमुखेन वलीमुख-वारणाय निवेदितोऽङ्गदस्तमेवमुवाच ॥

अवश्यं कृतकार्यस्य वाक्यं हनुमतो मया ।
अकार्यमपि कर्तव्यं किमङ्ग पुनरीदृशम् ॥

अनेन कृतकार्यस्य वचनादकार्यमपि प्रभुभिः कर्तव्यमिति सूचितम् ॥

तदाकर्ण्य साधुवादान् वदद्भिर्वानरैर्भूयसा प्रधर्षिते मधुवने, दधिमुखः 'सुग्रीवायेममुदन्तमाख्यास्यामि । स चामर्ष-दुराधर्षो वानरानमून् घातयिष्यति ॥

वध्या ह्येते दुरात्मानो नृपाज्ञापरिभाविनः ।

अनेन राजाज्ञोल्लङ्घका हन्तव्या इति सूचितम् । तथा च राजधर्मे—'हन्तव्या एव ते राजन् राजशासनदूषकाः ।' इति ॥

इति स्वमेवकानभिधाय तैः सह मिषतामेषां निमेषमात्रेण सुग्रीवमुपागम्य दीनवदनो भूमौ प्रणनाम ॥

इति द्विषष्टितमः सर्गः ।

---

## अथ त्रिषष्टितमः सर्गः ॥

**त्रिषष्टितमे**— तदनु मधुवनविनाशमादितः कथयति दधिमुखे तदुक्तिमजानता लक्ष्मणेन पृष्टः सुग्रीवः अङ्गदप्रमुखवानरकृतं मधुवनभङ्गमाख्याय,

**नैषामकृतकृत्यानामीदृशः स्यादुपक्रमः ।**
**वनं यथाभिपन्नं तैः साधितं कर्म वानरैः ॥**

**दृष्टा देवी न संदेहो न चान्येन हनूमता ।**
**न ह्यन्यः साधने हेतुः कर्मणोऽस्य हनूमतः ॥**

इत्यवोचत् ॥

श्रवणमधुरेण तद्वचनेन निभृतमानन्दसागरप्लवनदशामनुभवति रामेण सह लक्ष्मणे प्रहृष्टमानसः सुग्रीवो वनपालमेवमवोचत्—

**प्रीतोऽस्मि सौम्य यद्भुक्तं वानरैः कृतकर्मभिः ।**
**मर्षितं मर्षणीयं च चेष्टितं कृतकर्मणाम् ॥**

अनेन कृतकार्याणामतिक्रमो मर्षणीय इत्युक्तम् । तथा च हरिवंशे स्वशत्रुं नरकासुरं निषूदितवतः कृष्णस्य स्वनन्दनोद्यान-

क्षितपारिजातहरणमन्यायकृतमपि कर्म कृतकार्यं इत्यंगीकृतवानिन्द्र इति प्रतिपादितम— 'श्रुत्वा तद्देवराजस्तु कर्म कृष्णस्य वै तदा । अनुमेने महाबाहुः कृतकर्मेति चाब्रवीत् ॥' इति ॥

इच्छामि शीघ्रं हनुमत्प्रधानान्
शाखामृगांस्तान् मृगराजदर्पान् ।
द्रष्टुं कृतार्थान् सह राघवाभ्यां
श्रोतुं च सीताधिगमे प्रयत्नम् ॥

प्रीतिस्फीताक्षौ संप्रहृष्टौ कुमारौ
दृष्ट्वा सिद्धार्थौ वानराणां च राजा ।
अंगैः संहृष्टैः कर्मसिद्धिं विदित्वा
बाह्वोरासन्नां सोऽतिमात्रं ननन्द ॥

इति त्रिषष्टितमः सर्गः ।

---

## अथ चतुःषष्टितमः सर्गः ॥

चतुःषष्टितमे— ततः समागत्य सुग्रीवाज्ञामभिहितवति दधिमुखे—

अब्रवीत्तान् हरिश्रेष्ठो वाक्यं वाक्यविशारदः ॥
सर्वे यथा मां वक्ष्यन्ति समेत्य हरियूथपाः ।
तथास्मि कर्ता कर्तव्ये भवद्भिः परवानहम् ।
नाज्ञापयितुमीशोऽहं युवराजोऽस्मि यद्यपि ॥
ब्रुवतश्चाङ्गदस्यैवं श्रुत्वा वचनमव्ययम् ।
प्रहृष्टमनसो वाक्यमिदमूचुर्वनौकसः ॥

एवं वक्ष्यति को राजन् प्रभुः सन् वानरर्षभ ।
ऐश्वर्यमदमत्तो हि सर्वोऽहमिति मन्यते ॥

अनेन स्वभावतो मदकरमैश्वर्यं प्राप्यापि विनीत एव भवेदिति सूचितम। तथा च कामन्दकः— 'इयं हि लोकोत्तर-वर्त्म[लोकव्यतिरेक] वर्तिनी स्वभावतः पार्थिवता समुद्धता । बलात्तदेनां विनये नियोजयेन्नयस्य सिद्धौ विनयः पुरस्सरः ॥' इति ॥

उद्योगेऽपि विदुरः— 'न राज्यं प्राप्तमित्येव वर्तितव्य-मसाम्प्रतम् । श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥' इति । प्राचीना अपि— 'विद्यामदो धनमदस्तृतीयोऽभिजनो मदः । एते मदावलिप्तानामेत एव सतां दमाः ॥' इति ॥

तव चेदं सुसदृशं वाक्यं नान्यस्य कस्यचित् ।
सन्नतिर्हि तवाख्याति भविष्यच्छुभयोग्यताम् ॥

अतो विनीतः समस्तमप्यैश्वर्यं प्राप्नोति । अविनीतस्तु प्राप्तमप्यैश्वर्यं नाशयतीति सूचितम् । तदुक्तम् [उद्योगे]— 'अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा । विचरत्यसमुन्नद्धो यः स पण्डित उच्यते ॥' [कामन्दकेऽपि]— 'भवति हि विनयोपबृंहितो नृपतिपदाय शमाय च श्रमः ॥ अविनयरतमादरादृते वशमवशं हि नयन्ति विद्विषः । श्रुतविनयविधिं समाश्रित-स्तनुरपि नैति पराभवं क्वचित् ॥ परां विनीतः समुपैति सेव्यतां महीपतीनां विनयो विभूषणम् । प्रवृत्तदानो मृदुसंचरत्करः करीव भद्रो विनयेन शोभते ॥ इति स्म राज्ञा विनयं नयान्वितो निषे-

वमाणो नरदेवसेवितम् । पदं समाक्रामति भास्वरं श्रियः शिरो महारत्नगिरेरिवोन्नतम् ॥' इति ॥

तदाकर्ण्य समुत्पतन्तमङ्गदमनूत्पेतुः सर्वे हरियूथपाः ॥

तदनु सुग्रीवः स्वसमीपमनागतेषु वानरेषु शोकाकुलहृदयं राममेवमवोचत्—

**समाश्वसिहि भद्रं ते दृष्टा देवी न संशयः ।**
**न मत्सकाशमागच्छेत्कृत्ये हि विनिपातिते ।**
**युवराजो महाबाहुः प्लवतां प्रवरोऽङ्गदः ॥**

**यद्यप्यकृतकृत्यानामीदृशः स्यादुपक्रमः ।**
**भवेत्स दीनवदनो भ्रान्तविप्लुतमानसः ॥**

अनेन अकृतकार्या दीनवदनाः सन्तः प्रभोर्निकटं नागच्छन्तीति सूचितम् ॥

**जाम्बवान्यत्र नेता स्यादङ्गदश्च बलेश्वरः ।**
**हनूमानप्यधिष्ठाता न तस्य गतिरन्यथा ॥**

अनेन कार्येषु बुद्धिमानेकोऽधिष्ठाता, प्रभुरन्यः, कर्तव्यकर्ता चापर इति त्रयोऽपि नियोक्तव्या इति सूचितम् । तथा च सभापर्वणि जरासन्धवधे—'कृष्णे नयो मयि बलं जयः पार्थे धनंजये । मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः ॥' इति ॥

**ततः श्रुत्वा निनादं तं कपीनां कपिसत्तमः ।**
**आयताञ्चितलाङ्गूलः सोऽभवद्धृष्टमानसः ॥**

तदनु सुग्रीवमुपागतेषु वानरयूथपेषु,

**हनूमांश्च महाबाहुः प्रणम्य शिरसा सह ।**
**नियतामक्षतां देवीं राघवाय न्यवेदयत् ॥**

इति चतुःषष्टितमः सर्गः ।

---

## अथ पञ्चषष्टितमः सर्गः ॥

**पंचषष्टितमे**— ततः प्रस्रवणशैलमारुह्य, 'सीतावृत्तान्तमादितः कथ्यताम्' इति वदति रामभद्रे जाम्बवत्प्रमुखैर्हरियूथपैः प्रेरितः पवनतनयः,

**प्रणम्य शिरसा देव्यै सीतायै तां दिशं प्रति ।**
**उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं यथा ॥**

अत्र रामस्य सन्निधौ रामस्य नमस्कारमुपेक्ष्य सीतानमस्कारकरणमसंगतम । 'आचार्यप्राचार्यसन्निपाते प्राचार्यायोपसंगृह्य उपसंजिघृक्षेदाचार्यम' इति धर्मशास्त्रेणाचार्यसन्निधानेऽपि तत्पूज्यप्राचार्यस्यैव नमस्कार्यत्वावगमेन तन्न्यायेनात्रापि [सीता]सान्निधानेऽपि रामनमस्कारस्यैव धर्मत्वेन असान्निहितसीतानमस्कार[स्य] धर्मत्वस्य दूरापेनत्वादिति चेत् —न, धर्मशास्त्रपर्यालोचनया अयुक्तत्वेऽपि सीतायाः पातिप्रत्यातिशयज्ञापनेन वक्ष्यमाणजानकीवृत्तान्तेषु रामस्य प्रत्ययोत्पादनार्थतया प्रवृत्तत्वेन युक्तत्वात् । अतो नोक्तदोषावकाश इति ॥

अत्र 'तां दिशं प्रति' इत्युक्त्या चासन्निहितपूज्यदेवता-नमस्कारोपस्थानादिकं तद्दिगाभिमुखतया कुर्यादिति सूचितम् । तथा चापस्तम्बः—'प्रवसन् काले विहाराभिमुखो याजमानं जपति । प्रवसन् काले विहाराभिमुखोऽग्न्युपस्थानं जपति च' इति ॥

ततः समुद्रतरणलंकाप्रवेशादि निखिलं सीतादर्शनवृत्तान्त-मभिधाय सीतादत्तमभिज्ञानमपि रामाय निवेदयामास ॥

इति पञ्चषष्टितमः सर्गः ।

---

## अथ षट्षष्टितमः सर्गः ॥

षट्षष्टितमे— ततः सीतया विनाकृतं मणिमवलोक्याति-तरां संक्लिष्टहृदयेन रामेण पुनः किमाह सीता ? किं वाश्नाति ? कथं वा तिष्ठति? तदखिलमपि श्रोतुमिच्छामि ॥

**एतेन खलु जीविष्ये भेषजेनातुरो यथा ।**

इत्युक्तम् ॥

अनेन अत्यास[प]न्नस्यापि औषधसेवनं जीवनारोग्य-प्रदमिति सूचितम् । तथा च वाहटे— 'चतुष्पाद्गुणसंपन्ने सम्य-गालोच्य योजिते । मा कृथा व्याधिनिर्घाते विचिकित्सां चिकि-त्सिते ॥ एतद्धि मृत्युपाशानामकाण्डे छेदनं परम् । रोगत्रासि-तभीतानां रक्षासूत्रमसूत्रकम् ॥' इति ॥

इति षट्षष्टितमः सर्गः ।

---

अथ सप्तषष्टितमाष्टषष्टितमौ सर्गौ ॥

सप्तषष्टितमाष्टषष्टितमयोः— इति पृच्छन्तं रामभद्रमेवमाह— मदपराधिनि काकमात्रे ब्राह्ममस्त्रं नियोजितवतः, प्रीतिवशेन गण्डपार्श्वयोर्मनःशिलातिलकं च कृतवतो रामभद्रस्य,

तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः ।
भवत्याहवशूरस्य तथा त्वमुपपादय ॥

अहमपि तदागमनमनुपालयन्ती कथमपि मासमात्रं प्राणान् धारयिष्यामि इति वदन्तीं सीतामेवमवोचम्—

देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः ।
सुग्रीवः सत्वसंपन्नस्तवार्थे कृतनिश्चयः ॥

मद्विशिष्टाश्च तुल्याश्च सान्ति तत्र वनौकसः ।
न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥ इति ॥

अनेन कार्यविचारणाय जघन्य एव योजनीय इति सूचितम् । तथा च राजधर्मे— 'संदर्शने च पुरुषं जघन्यमिह चोदयेत् !' इति ॥

तदलं परितापेन देवि मन्युर्व्यपैतु ते ॥

मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ ।
त्वत्सकाशं महाभागौ नृसिंहावागमिष्यतः ॥

निवृत्तवनवासं च त्वया साकमरिन्दमम् ।
अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम् ॥

इति सप्तषष्टितमाष्टषष्टितमौ सर्गौ ।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
चतुर्विंशतिसाहस्रिकायां संहितायां
सुन्दरकाण्डः संपूर्णः ।

---

ये धर्मैकनिसर्गसिद्धरुचयो ये वेदवेद्ये परे
पुंसि ब्रह्मणि मैथिलीसहचरे भक्ता रघूणां वरे ।
ये वा कौतुकिनो रघूद्वहकथाशैलीसमाकर्णने
ये वा मर्मविदस्त एव[न]मुररीकुर्वन्तु तैस्तैर्गुणैः ॥

प्रतिदिनमपि श्रीयज्ञेशप्रसादमुपेयुषा
गुरुतरकृपाधाम्ना श्रीमात्त्रियम्बकयज्वना ।
मुनिविरचिते काण्डे श्रीसुन्दरे किल पंचमे
प्रकटितमिदं धर्माकूतं यथामति गृह्यताम् ॥

इति श्रीमत्त्र्यम्बकरायमखिविरचिते
श्रीमद्रामायणधर्मतात्पर्ये धर्माकूते
सुन्दरकाण्डः संपूर्णः ॥

॥ श्रीरामार्पणमस्तु ॥
कल्याणमस्तु ।



# धर्माकूतसुन्दरकाण्डमूलश्लोकानां अर्धानुक्रमणिका



D. 46

उ



ऊ

पृष्ठम्



द

पृष्ठम्

## न

